॥ श्रीहरिः ॥

# नैषधीयचरितस्य कथासारः ।

अत्र कथासारस्तावत् प्रथमे सर्गे—

लावण्ये मन्मथोऽन्यो महसि च मिहिरः पावकश्चैव दीप्तौ
पुण्यश्लोको नलोऽभूद्विदितगुणगणो भीमपुत्र्यां स्पृहावान् ।
तत्त्वं निह्नोतुकामो वनमुपगतवान्काञ्चनं तत्र हंस-
मादायादानतोऽमुं सपदि सकरुणोऽदूयमानं मुमोच ॥ १ ॥

द्वितीये सर्गे—

इन्द्रादावप्यरक्तां त्वयि निषधपते ! भीमजां गाढरागां
कर्त्तास्मीति प्रतिज्ञामनु स मनुजवाक्कुण्डिनं तूर्णमागात् ।
प्रासादस्योपकण्ठे विहरणविपिने सञ्चरन्तीं यथेच्छं
मध्येस्वालीसमाजं निरुपमसुषमां भामिनीं तां ददर्श ॥ २ ॥

तृतीये सर्गे—

दृष्ट्वा हैमं मरालं मधुरमनुययौ सैकका ऽऽदातुकामा
तां चावादीत्स दूनां यदि मयि सरुचिर्भीमजे ! ब्रह्मवाहे ।
पुण्यश्लोकं दयालुं निषधपतिमुपास्त्वाशु वश्याः स्म तस्य
चेदेवम्मां तदीयां कुरु तदिति नलं सोऽभ्यधात्तद्वचश्च ॥ ३ ॥

चतुर्थे सर्गे—

तस्मिन्सम्राजि कान्ते हरति गुणगणैर्मानसं माननीये
गाढं प्रेमाणमाप्ता मदनशितशरैरर्दिता दुर्बला सा ।
लेभे स्वास्थ्यं न जातु क्वचिदपि च मुहुर्मूर्च्छति स्मेति भीमः
श्रुत्वा ज्ञात्वा च तत्त्वं स्वदयितवृतये मार्गमाचष्ट कर्तुम् ॥ ४ ॥

पञ्चमे सर्गे—

कन्या कान्तं वृणोति स्वयमभिलषितं यत्र चक्रे पदं तद्
भीमः श्रुत्वा सुरेशैर्हरिरपि धरणीमाययौ सानलादिः ।
दूतो भूत्वा नल ! त्वं व्रज, कथय गुणान् भाविनीं नश्च कर्तुं
कामं चेष्टस्व भैमीमिति स च सविधे हन्त तस्या न्ययुङ्क्त ॥ ५ ॥

षष्ठे सर्गे—

तत्रत्यानामलक्ष्यः स समुपगतवान्भीमजां देवताना-
मैश्वर्यस्य प्रभावादकथयत गुणांस्तत्समक्षं च तांस्तान् ।
सावज्ञं सा निरास्थत्स्थिरहृदयतया नैषधे दौत्यवाचो
वैदर्भीं तां च पश्यन् व्यथिततरमनाः सोऽप्यभूद्वैरसेनिः ॥ ६ ॥

सप्तमे सर्गे—

स्वस्मिन् रागं प्रगाढं निजहृदयपदाधिष्ठिताया विदित्वा
प्रत्यङ्गं तां स्तुवानः परिहृतकपटो वैरसेनिर्बभूव ।
वैदर्भी चात्मकान्तं तमवगतवती विस्मिताभिः सखीभि-
र्दृग्भिः सम्पीयमानं किमिह[14] वत भवानित्यपृच्छत्तथाऽपि ॥ ७ ॥

---

१ विदितो गुणगणो यस्य येन वेति तथोक्तः । आद्यपक्षे लोकैरिति कर्तृपदमूह्यम् । परपक्षे वैदर्भ्या इति सम्बन्धबोधकं पदम् । २ स्पृहावत्त्वम् । ३ मनुजस्य वागिव वाग्यस्येति बोध्यवाक्त्वं द्योतयति । तथावक्तृत्वं तु ब्रह्मवाहनत्वात् । ४ ब्रह्मणो वाहन इति भावः । ५ गुणा एव गुणास्तेषां गणैरित्यभेदाध्यवसायः । ६ अर्दिताऽत एव दुर्बलेति भावः । ७ स्वयंवरविधानरूपमुपायमिति तात्पर्यम् । ८ तादृशं स्वयंवरस्थानमित्यर्थः । ९ इन्द्रः । १० प्रेमवतीम् । ११ इन्द्रश्च । १२ वीरसेनस्यापत्यं पुमानिति तथोक्तो नलः । १३ दूरीकृतदूतवेषः । १४ किमर्थमस्मिन्प्रदेशे ।

रागं दर्शयते सैषा वयस्याः सूनृतामृतैः ।
मम त्वमिति वक्तुं मां मौनिनी मानिनी पुनः॥३३॥

रागमिति॥ हे कले, सैषा वयस्या भवादृशीः सूनृतानि प्रियसत्यानि वचनानि तद्रूपैरमृतैः कृत्वा रागं निजां प्रीतिं दर्शयते बोधयते । भवतीष्वतितमां मम प्रीतिरिति ज्ञापयतीत्यर्थः । मां पुनः त्वं ममेत्येतावन्मात्रमपि वक्तुं मौनिनी । तूष्णीं भवतीत्यर्थः । यतो वृथैव मानिनी धृताभिमाना । नहि मया किमप्यपराद्धमित्यर्थः । त्वं मदीय इत्येतावतैव वचनेनाहं सनाथः, परं तावदपि न वदति, मय्यस्याः कृपा नास्त्येवेति सोल्लुण्ठम् । लज्जावशान्न वदतीति व्याजेन स्तुतिर्वा । दर्शयते, 'णिचश्च १ । ३ । ७४' इति तङ् । वयस्याः, दृशेर्बुद्ध्यर्थत्वात् 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता स णौ १ । ४ । ५२' इति अणौ कर्तुर्णौ कर्मत्वम् ॥ ३३ ॥

कां नामन्त्रयते नाम नामग्राहमियं सखीम् ।
कले नलेति नास्माकीं स्पृशत्याह्वां तु जिह्वया॥३४॥

कामिति ॥ हे कले, इयं कां नाम सखीं नामग्राहं नाम गृहीत्वा नामन्त्रयते संबोधनपूर्वं नाह्वयति । अपि तु सर्वामपि । नाम शिरश्चालने । आस्माकीमस्मत्संबन्धिनीं तु पुनर्नलेति संबुद्ध्यन्तामाह्वां संज्ञां जिह्वया न स्पृशति नोच्चारयत्यपि । रहस्यभाषणं तु दूरापास्तमित्यर्थः । स्त्रीणां भर्तृनामग्रहणस्य निषिद्धत्वादनौचित्यारोपेणोपालम्भाद्व्याजस्तुतिः । आह्वानमाह्वा, 'आतश्चोपसर्गे ३ । ३ । १०६' इत्यङ् ॥ ३४ ॥

अस्याः पीनस्तनव्याप्ते हृदयेऽस्मासु निर्दये ।
अवकाशलवोऽप्यस्ति नात्र कुत्र बिभर्तु नः ॥३५॥

अस्या इति ॥ अस्याः परिदृश्यमानेऽत्र हृदये अवकाशलवः स्थानलेशोऽपि नास्ति । तस्मान्नोऽस्मान्कुत्र कस्मिन्स्थाने बिभर्तु धारयतु । अवकाशलेशाभावे हेतुमाह—यस्मात्पीनाभ्यामावाहुमूलप्रसृताभ्यां स्तनाभ्यां व्याप्ते समन्तादावृतेऽतिसंकटे । संकटेऽपि दयया समावेशो भवतीत्याशङ्क्य सापि नास्तीत्याह—अस्मासु निर्दयेऽस्मद्विषये कृपारहिते । एतेन नास्याः कश्चिदपराध इति सोल्लुण्ठम् । उच्चकुचाभ्यामहमुपर्येव ध्रिये, न तु मम हृदयस्पर्शः कदापि दीयत इत्यौचित्येऽप्यनौचित्यारोपाद्वक्रोक्तिर्व्याजस्तुतिर्वा ॥ ३५ ॥

अधिगत्येदृगेतस्या हृदयं मृदुतामुचोः ।
प्रतीम एव वैमुख्यं कुचयोर्युक्तवृत्तयोः ॥३६॥

अधिगत्येति॥ हे कले, वयमीदृगेवं पूर्वोक्तप्रकारेण कठिनमेतस्या हृदयमधिगत्य प्राप्य ज्ञात्वा वा मृदुतामुचोः कठिनाश्रयवशात्काठिन्यं भजतोः। कदाप्यनालिङ्गनान्मयि विषये निर्दययोरिति यावत् । तथा—युक्तमुचितं वृत्तमाचरणं ययोः । कदाचिदप्यालिङ्गनाकरणाद्विरुद्धलक्षणयाऽनाचारशीलयोरिति यावत् । एवंभूतयोरस्याः स्तनयोः कदाचिदप्यालिङ्गनादानाद्वैमुख्यं पराङ्मुखत्वमेव प्रतीमो जानीमः । आलिङ्गने कुचौ संमुखौ भवतः, निर्दयहृदयत्वादेतस्याः पराङ्मुखत्वादेवंभूतावेतत्कुचावपि सदा मम पराङ्मुखावेव जातावित्यर्थः।अथ च—स्त्रीणां हृदयस्यातिमृदुत्वादेतस्या हृदयमीदृगतिमृदु ज्ञात्वापि सर्वस्य तस्यावरणान्निर्दयत्वं भजतोः । अत एव विपरीतलक्षणया युक्तवृत्तयोरनाचारशीलयोः । मृदुं प्रति मृदुनैव भवितव्यम्, विशेषतस्तु स्त्रीं प्रति । तथा च विपरीताचरणादनाचारयोः । अत एव वैमुख्यं पराङ्मुखत्वम् अथ च विरुद्धमुखत्वं जानीम एव । अनाचारशीलो हि कस्मैचिदपि स्वमुखं न दर्शयति मलिनमुखश्च भवति । एतयोरप्युक्तप्रकारेण पराङ्मुखत्वं चूचुकयोः श्यामत्वान्मलिनमुखत्वं जानीम इति सोल्लुण्ठम् । अथ च—एतस्या हृदयं कठिनं ज्ञात्वा 'आर्जवं हि कुटिलेषु न नीतिः' इति न्यायेन निष्ठुरत्वमङ्गीकुर्वतोः। यस्मादुचितं वृत्तं स्थितिर्ययोः । अथ च—युक्ताचारयोः । पराङ्मुखत्वं प्रतीम एव । हृदयस्योपर्यूर्ध्वमुखेन वर्तमानत्वाद्धृदयं प्रति कुचौ सदा पराङ्मुखावेवेत्यर्थः । युक्ताचारो हि कठिनहृदयं प्रति निर्दयो भूत्वा तस्मात्पराङ्मुख एव भवति, तं न पश्यति । अथ च—ईदृक्सुन्दरतरं स्त्र्यन्तरपरित्यागेनास्या हृदयं प्राप्य कठिनतरत्वं गुणं भजतोः, तथा—पीवरत्वादन्योन्यसंश्लिष्टयोर्वर्तुलयोश्च विगतमुखत्वं निमग्नचूचुकत्वं गौरत्वविरुद्धश्याममुखत्वं च जानीम एव । अथ च—ईदृगतिकोमलमेतदीयं हृदयं ज्ञात्वा प्राप्य वा मूढताममुञ्चतोरालिङ्गनादिना मयि विषये

१ अत्रानुप्रासः । २ अत्रानुप्रासः । नामेति यमकं च ।

१ पीनस्तनव्याप्तत्वस्यावकाशाभावे हेतुत्वोक्त्या काव्यलिङ्गम् ।

अष्टमे सर्गे—

देवास्तुभ्यं स्पृहन्ते वरतनु ! वृणु तेष्वेकमिष्टं सरूपं
देवीभिर्मोद्यमाना विहर सुरपुरे नन्दनादौ चिराय ।
कान्तं त्वं रत्नभूता क्वचिदिह च नले[2] मा हता भूर्निपत्ये-
त्येवं त्वां बोधयन्ते सुमहितचरिताः प्रेष्य मां तेऽन्तिके ते ॥ ८ ॥

नवमे सर्गे—

स्वान्तं सक्तं नले मे न तु सुरपतिषु त्वं रुचा कोऽनलो[3]ऽसी-
त्येवं प्रोक्तस्तया तान्वृणु बत न नरं[4] कश्चनेत्याह भूयः ।
इत्युक्तां तामुदश्रुं स पुनरकथयत्तन्वि ! यस्मिन्स्पृहा ते
सोऽसावित्येतदस्मिन्निगदति स खगोऽप्यागमत्स्वागेकस्मात्[5] ॥ ९ ॥

दशमे सर्गे—

देवा भूत्वा नलाभा उपनलमभजन्काञ्चनान्यासनानि
मध्येराजेन्द्रसार्थं सुरपतिहुतभुक्प्रेतराजामृतेशाः[6] ।
वाग्देव्यां त तमद्धा समवगमयितुं संगतायां विदर्भा-
धीशस्तामाजुहावानुपमसुषमया सम्भृतां स्वां तनूजाम् ॥ १० ॥

एकादशे सर्गे—

एते नित्यं युवानस्त्रिदिववसतयः सिद्धविद्याधराद्या
आप्ता विश्वेऽपि विष्वक् सुविदितविभवास्त्वत्प्रसादैककामाः ।
एतेष्वेकं यथेच्छं वृणु कमपि कलाकौशलाढ्येषु कान्ते !
इत्युक्ताऽपि प्रगाढं धृतनलहृदया[9] तं तमौज्झत्तदा सा ॥ ११ ॥

द्वादशे सर्गे—

तन्वि ! त्वां काङ्क्षमाणाः क्षपितरिपुबला विक्रमेण प्रसिद्धा
राजानोऽमी समन्ताद्धव उपगता अत्र राजन्ति सर्वे ।
एष्वेकं काञ्चनाभं सफलय तरुणं स्रङ्निधानेन कण्ठे
इत्युक्ता पश्च दृष्ट्वा सुचकितवदनाऽऽसीन्नलान्सा संरूपान्[10] ॥ १२ ॥

त्रयोदशे सर्गे—

पश्यैवामी महान्तस्सुमुखि ! सुमनसो लोककान्ताः सरूपा
बुद्ध्वैषां कञ्चनैकं वृणु हृदयगतं वीरसेनोदयं[11] त्वम् ।
इत्युक्ताऽसौ तदानीं गिरधिदयितया तान्पुरःस्थाननेकान्
एकाकारान्प्रपद्यावितथमभिमतं लब्धुमीशा न जाता ॥ १३ ॥

चतुर्दशे सर्गे—

स्तोत्रप्रीतान्सुरेशानवगमितनलान्वीक्ष्य हृष्टा प्रणम्य
मालामाधत्त हस्ताद्रुचिरसुममयीं नैषधाधीशकण्ठे ।
प्रीत्या दत्त्वा वरार्थान्सुरपतिषु गतेष्वात्मलोकानमीषु
दिव्या कल्पद्रुमीया सुमततिः[12] रपतन्मूर्ध्नि नाकात्तयोर्द्राक् ॥ १४ ॥

पञ्चदशे सर्गे—

भैम्यार्याभिः सखीभिर्विधिमनु विमलैरम्बुभिः स्नापिता च
शोणैः शुद्धैर्दुकूलादिभिरनुपहतैरंशुकैरावृताङ्गी ।

---

१ प्रेमावेगात्क्रमप्यात्मानं निह्नुवानेनेदमुच्यते । २ तृणविशेषे, रलयोरभेदेन मनुष्ये चेत्यर्थः । ३ किन्नामा किमात्मा वा । अनल इति नल इति च च्छेदः । ४ रलयोः सावर्ण्यमिति नलमित्यप्यर्थः । ५ झटिति । ६ सुरपतिरिन्द्रः, हुतभुक्-अग्निः, प्रेतराजः--यमः, अमृतस्य जलस्येशः वरुणश्च । ७ वस्तुतया । ८ सर्वे । ९ धृतं नले हृदयं यया सा । १० समानं रूपं येषां तान् । ११ वीरसेनादुदयो जन्म यस्य तम् । १२ सुमानां पुष्पाणां ततिः ।

प्रभृत्येवैतौ बहिर्दृश्येते, तस्मात्पूर्वमन्तरेव स्थितत्वाद्बहिर्न दृश्येते । त्वदधिष्ठानानन्तरं तु बहिर्निर्गतौ इति तवैवावकाशोऽभूत् न तु कुचयोः, तस्मादस्मानेव प्रतारयसीति भावः।अन्योऽपि महताऽधिष्ठिते स्थाने स्थातुमशक्तो बहिर्निर्गच्छत्येव । बहिरपि यदादि त्वया हृदयं स्पृष्टं तदादि साटोपं निर्गतावित्यर्थः । अध्यासिते हृद्यन्तरसंमान्ताविति वाऽन्वयः ॥ ४८ ॥

**कुचौ दोषोज्झितावस्याः पीडितौ व्रणितौ त्वया । कथं दर्शयतामास्यं वृहन्तावावृतौ ह्रिया ॥ ४९ ॥**

'अधिगत्य–' ( २० । ३६ ) इत्यादेरुत्तरमाह—

कुचाविति ॥ दोषेणोज्झितौ निर्दोषौ, अथ च—दोषायां रात्र्यां ( अर्थात् ) कूर्पासकेन त्यक्तौ, तथा वृहन्तावतिपीवरौ, अत एव—त्वया पाणिभ्यां पीडितौ मर्दितौ व्रणितौ नखैश्च क्षतयुक्तौ कृतौ अस्याः कुचौ दिने ह्रिया हेतुना आवृतौ वस्त्रेणाच्छादितौ आस्यं चूचुकाग्रं कथं दर्शयताम्, अपि तु न कथंचित् । रात्रौ हि संभोगसमये निर्विघ्नं स्तनदर्शनं भवेत्, दिवा तु नखक्षतादिसंभोगचिह्नदर्शनभिया वस्त्रावृतत्वात्कथं नाम चूचुकाग्रस्यापि दर्शनं स्यात्, न कथंचिदित्यर्थः । दोषया रात्र्या त्यक्तौ रात्रेर्गतत्वाद्दिनप्रकाशसंबद्धौ, अत एव ह्रिया वस्त्रावृतत्वाद्दिवा वैमुख्यमेव तयोर्युक्तमित्यर्थ इति वा । बहिः स्थितं त्वां प्रति वैमुख्यासंभवाद्धृदयस्थितस्य तव स्वमुखं कथं दर्शयतामिति ह्रिया भैम्याः पराङ्मुखत्वाद्वा कुचौ स्वमुखं नलस्य न दर्शयतः।स्वाश्रयभूतस्य भैमीहृदयस्य वा कुचौ स्वमुखं न दर्शयतः । न हि कुचौ हृदयस्य संमुखौ भवतः । अन्योऽपि दोषोज्झितो निरपराधो लब्धप्रतिष्ठो धनादिग्रहणेन पीडितो नासादिकर्तनेन कृतव्रणो लज्जितः कस्याप्यग्रे मुखं न दर्शयति । व्रणितौ, तारकादित्वादितच् ॥ ४९ ॥

**इत्यसौ कलया सूक्तैः सिक्तः पीयूषवर्षिभिः । मुहेगेवेति पप्रच्छ प्रियामुन्नमिताननाम् ॥ ५० ॥**

इतीति ॥ कलया पीयूषवर्षिभिरमृतं क्षरद्भिरतिमधुरैः सूक्तैः शोभनवक्रोक्त्यादिरूपैर्वाक्यैः सिक्तः संजातगाढप्रेमभरोऽसौ नलः उन्नमितं पाणिना चिबुकं धृत्वोर्ध्वीकृतमाननं यस्यास्तां प्रियां भैमि, इदं कलावचनमीदृगेवमेवेति सत्यमिति पप्रच्छ । उन्नमितेति 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इति मित्त्वपक्षे ह्रस्वः ॥ ५० ॥

**बभौ च प्रेयसीवक्त्रं पत्युरुन्नमयन्करः । चिरेण लब्धसन्धानमरविन्दमिवेन्दुना ॥ ५१ ॥**

बभाविति ॥ पत्युः करोऽरविन्दमिव बभौ च । किंभूतः—प्रेयसीवक्त्रमुन्नमयन् । किंभूतमरविन्दम्—चिरेण कालेन वैरं विस्मृत्य निवृत्तवैरतया इन्दुना सह लब्धं संधानं येन । अभूतोपमा । चन्द्रकमलयोः सदा वैरम् ॥ ५१ ॥

**ह्रीणा च स्मयमाना च नमयन्ती पुनर्मुखम् । दमयन्ती मुदे पत्युरुच्चैरप्यभवत्तदा ॥ ५२ ॥**

ह्रीणेति ॥ नलोक्तेः कलोक्तवक्रोक्तिपत्युक्तिपरिहासेन ह्रीणा च स्मयमाना च,अत एव लज्जावशेन स्मितं च।नलेन द्रष्टव्यमिति बुद्ध्याऽत्युच्चैर्नितरामुन्नमितमपि मुखं पुनर्नमयन्ती दमयन्ती सदा तस्मिन्मुखोन्नमनसमये पत्युर्मुदेऽभवत् । अत्युच्चैर्मुदेऽभूदिति वा।तादृशीं तां दृष्ट्वा हृष्टोऽभूदिति भावः ॥ ५२ ॥

**भूयोऽपि भूपतिस्तस्याः सखीमाह स्म सस्मितम् परिहासविलासाय स्पृहयालुः सहप्रियः ॥ ५३ ॥**

भूय इति ॥ सह प्रियया वर्तमानो भूयोऽपि पुनरपि वक्रोक्त्यादिपरिहासविलासाय स्पृहयालुरभिलाषुको भूपतिस्तस्याः सखीं कलां सस्मितं यथा तथा आह स्म । विलासाय 'स्पृहेरीप्सितः १।४।३६' इति संप्रदानत्वम् । सहप्रियः, 'वोपसर्जनस्य ६ । ३ । ८२' इति पाक्षिकत्वात्सादेशाभावः ॥ ५३ ॥

**क्षन्तुं मन्तुं दिनस्यास्य वयस्येयं व्यवस्यतात् । निशीव निशिधात्वर्थं यदाचरति नात्र नः ॥ ५४ ॥**

क्षन्तुमिति ॥ हे कले, इयं तव वयस्यास्य वर्तमानस्य दिनस्य मन्तुमपराधं क्षन्तुं सोढुं व्यवस्यतात्प्रयततात् । कोऽपराधो दिनस्येत्यत आह—यद्यस्मादियं

---

१ अत्राप्यनुप्रास उत्प्रेक्षा च । २ अत्र कुचयोरप्रत्यक्षत्वापादने दोषोज्झितत्ववृहत्त्वादेः हेतुत्वात् विशेषणनिरूपितहेतुकः काव्यलिङ्गविशेषः ।

१ सूक्तानां पीयूषवर्षित्वोक्त्या लोकोत्तरमेघत्वं व्यज्यते, तेन व्यतिरेकोऽपीत्यवधार्यम् । २ इवेत्युत्प्रेक्षा । ३ मयन्तीति यमकम् । ४ अत्रानुप्रासः, स्पृहयालुरिति परिकरः ।

एवं श्रीमान् नलोऽप्याभरणवृततनुः सज्जितस्तां ग्रहीतुं
राज्ञाऽऽहूतः स्वकान्त्या मदनमभिभवन्वेदिकादेशमायात् ॥ १५ ॥

षोडशे सर्गे—

पुण्यश्लोकेन साकं दुहितृपरिणयं साधु सम्पाद्य भीमो
जामातुः सङ्गिवर्गं सुमधुरमसृणैस्तर्पयामास भोज्यैः ।
सम्पन्ने पारिवर्हं कतिचन दिवसान्न्यूष्य तत्रैव राज्ञः
प्रीत्या साकं मृगाक्ष्या निषधजनपदं वैरसेनिः प्रतस्थे ॥ १६ ॥

सप्तदशे सर्गे—

लिप्सुर्भैमीं बलेन त्रिदशपरिवृढैस्तत्र मा गा वृतोऽसौ
भैम्येत्युक्तोऽपि मार्गे तदिति विरहितौ दम्पती तौ विधास्ये ।
इत्येवं च प्रतिज्ञामनु दुरितमयः पर्यटंस्तत्र तत्र
प्रासादे वैरसेनेः कथमपि स कलिः प्राप कष्टं विधातुम् ॥ १७ ॥

अष्टादशे सर्गे—

एवं लावण्यसारां युवतिषु महितां पद्मगन्धां स्फुरन्तीं
वैदर्भीं तामवाप्य प्रमुदितवदनो वैरसेनिर्नरेन्द्रः ।
प्रासादे मेरुजिष्णौ रुचिरमणिमये न्यस्तलज्जां क्रमेण
नक्तं सिन्धुः कलानां मनसिजतरणीम्भावयामास यत्नात् ॥ १८ ॥

एकोनविंशे सर्गे—

प्रातः पीयूषवाग्भिर्बहुविधललितातोद्यवादानुकूलं
गायद्भिर्गानदक्षैरुपवनगृहगैर्बोधितो नैषधेशः ।
स्नात्वा श्रीविष्णुपद्यां रुचिररथगतः सौधमावर्तमानो
दृष्टो हृष्टः प्रहृष्टैर्न तु स बत ततो निर्गतोऽदर्शि पूर्वम् ॥ १९ ॥

विंशे सर्गे—

गाङ्गेयाम्भोजराशीनतिथिजनमनस्तोषहेतोर्वितीर्य
तं तं नीत्वा च पूर्तिं निजनियमविधिं मङ्क्षु सान्निध्यमाप्ते ।
वैदर्भीं मानमीषत् क्षितिपतितिलके प्राणनाथे दधानाऽऽ-
श्लेषार्थं चेष्टमानेऽप्यवमतसहगा सा प्रयाता परत्र ॥ २० ॥

एकविंशे सर्गे—

वैदर्भ्या मोदपूर्वं समितिमुपगतः सङ्गतानां सुदूराद्
गृह्णन्नाज्ञां प्रणामान्प्रतिदिनमखिलामाश्रयञ्च शास्त्रशिक्षाम् ।
स्नात्वा सूर्यार्घ्यदानाद्यनु हवनविधिं शम्भुविष्ण्वोश्च पूजां
प्रातः सायं च स स्माकलयति कलिहा भूपतिर्वैरसेनिः ॥ २१ ॥

द्वाविंशे सर्गे—

सायं सान्ध्यं कदाचिद्विधिमनु कविताकोविदोऽसौ प्रदोष-
मारभ्येन्दूदयान्तं मधुरतरपदैर्वर्णयामास नाना ।
सम्राजी चापि भैमी सहजललितगीरोषधीशं सुभव्यैः
काव्यैर्निर्वर्ण्य विज्ञा सुचकितममसं भावयामास कान्तम् ॥ २२ ॥

इति शम् ।

---

१ एतेनेतिहाससिद्धं वियोगकष्टं सूचितम् । २ एतेनास्याः पद्मिनीत्वं सम्भावितम् । ३ एतेन मनसिजस्य जलधित्वं सूचितम् । ४ गङ्गायाम् । ५ सुवर्णमयानां कमलानां समूहान् । ६ अविलम्बम् । ७ अवमता अपमानिताः सहगाः-सहचारिण्यः सख्य इति यावत्, यया सा । ८ चन्द्रमसम् । ९ चकार, मोदयामास च ।

व्यभिचारलक्षणो दुष्टो नयो यया, एवंविधाऽहमिति च ब्रूते । परस्त्रीत्वभीतिरपि तस्य नास्ति, तस्मादिन्द्र एवायमिति त्वयाऽभ्यर्थना न कार्येति मां प्रति भाषत इति भावः । नैषधस्येव छाया यस्यामिति मायाविशेषणत्वेन पृथग्वा ॥ ७० ॥

**सम्भावयति वैदर्भी कुशाग्राभमतिस्तव ।**
**जम्भारित्वं कराम्भोजाद्दम्भोलिपरिरम्भिणः ।**

समिति ॥ कुशाग्राभा मतिर्यस्याः सा वैदर्भी दम्भोलिः सार्वभौमत्वसूचकं वज्रं तत्परिरम्भिणस्तद्युक्तात्कराम्भोजाद्धेतोस्तव जम्भारित्वमिन्द्रत्वं सम्भावयति तर्कयति । न ह्यनिन्द्रो वज्रहस्तः । रेखारूपादपि वज्रादेवमनुमानात्कुशाग्रबुद्धित्वमस्याः ॥ ७१ ॥

**अनन्यसाक्षिकाः साक्षात्तदाख्याय रहःक्रियाः ।**
**शङ्कातङ्कं तुदैतस्या यदि त्वं तत्त्वनैषधः ॥७२॥**

अनन्येति ॥ तस्माद्धो राजन्, त्वं यदि तत्त्वेन नैषधो भवसि न तु छद्मना तर्हि न विद्यतेऽन्यो भैमीमवद्व्यतिरिक्तः साक्षी यासु । युवाभ्यामेव या ज्ञायन्त इत्यर्थः । तादृशी रहःक्रिया एकान्तक्रीडाः साक्षात् स्वयमेव, अथ च—व्यङ्ग्यवृत्तिं विना आख्याय प्रकटं कथयित्वा एतस्याः शङ्कातङ्कमिन्द्रमायासंशयमयं त्वं तुद निराकुरु । एतत्प्रत्यायिकां क्रीडासमयचेष्टामुक्त्वाऽसाकमेतस्याश्च संदेहमपनुदेत्यर्थः । 'सत्यनैषधः' इति च पाठः ॥ ७२ ॥

**इति तत्सुप्रयुक्तत्वनिह्नुतीकृतकैतवाम् ।**
**वाचमाकर्ण्य तद्भावे संशयालुः शशंस सः ॥७३॥**

इतीति ॥ इत्युक्तप्रकारेण तया कलया सुप्रयुक्तत्वेन कैतवद्योतकहास्यादिविकारव्यतिरेकेण सुवर्णकमलदानादीन्द्रत्वनिश्चायकोपपत्तिमत्तया च सम्यक् प्रत्युक्तत्वेन निह्नुतीकृतमाच्छन्नं कैतवं छद्म यस्यास्तां कलाया वाचमाकर्ण्य तद्भावे मयीन्द्रभ्रान्त्यैवेयं चुम्बनादि न करोति किमिति भैम्याशये संशयालुः संदिहानः स नलो भैमीभ्रान्तिनिरासार्थं शशंस । रहोवृत्तमित्यर्थः ॥ ७३ ॥

**स्मरसि च्छद्मनिद्रालुर्मया नाभौ शयार्पणात् ।**
**यदानन्दोल्लसल्लोमा पद्मनाभीभविष्यसि ॥७४॥**

स्मरसीति ॥ हे भैमि, छद्मना निद्रालुरलीकमेवाङ्गीकृतनिद्रा त्वं मया नाभौ शयस्य कर (कमल)स्यार्पणाद्धेतोरानन्देन सात्त्विकभावेनोल्लसन्ति लोमानि यस्यास्तादृशी मत्करनाभिस्पर्शेन जातरोमाञ्चा सती पद्मयुक्ता नाभिर्यस्यास्तादृशी भविष्यसि संजाताऽऽसीस्तत्स्मरसि पाणिरोमाञ्चसंबन्धात्सकण्टककमलसंबन्धसंभावनया पद्मनाभत्वं तव यज्जातं तत्स्मरेत्यर्थः । नलपाणिः पद्मस्थानीयः, रोमाञ्चश्च तत्कण्टकस्थानीयः । अथ च—विकसितकमलदलतुल्यरोमाञ्चोद्गमात्पद्ममिव नाभिर्यस्यास्तादृशी जाताऽसि तत्स्मर । शयार्पणं रोमाञ्चोद्गमे हेतुः । अथ च—नाभौ शयार्पणादपद्मनाभः पद्मनाभ श्रीविष्णुर्भविष्यसि। पद्मनाभीभविष्यसीति च्विः । तत्स्मरसि, नाभौ करकमलधारणाच्छ्रीविष्णुरूपा जातासि । न हि विष्णुं विनाऽन्यस्य नाभौ कमलमस्तीत्यर्थः । निद्रिताऽसीति बुद्ध्या वसनस्रंसनार्थं नाभिसमीपे मया करेऽर्पिते तत्संस्पर्शाज्जातसात्त्विकरोमाञ्चा जाताऽसि तत्स्मरेति भावः । आनन्दोल्लसल्लोमेति निद्राया अलीकत्वं द्योतितम् । न हि निद्रायाः सत्यत्वे करस्पर्शाद्रोमाञ्चोद्गमो भवति । स्मरतियोगे त्वनद्यतनभूतेऽपि 'अभिज्ञावचने लृट्३।२।११२'इति लृट् ।'तदानन्द—' इति पाठः सम्यः ॥ ७४ ॥

**जानासि ह्रीभयव्यग्रा यन्नवे मन्मथोत्सवे ।**
**सामिभुक्तैव मुक्ताऽसि मृद्वि खेदभयान्मया ॥७५॥**

जानासीति ॥ हे मृद्वि सुकुमाराङ्गि शशिद्राविणि च भैमि, मया नवे मन्मथोत्सवे ह्रीभयाभ्यां व्यग्रा व्याकुलचित्ता त्वम् अतिमृदुत्वात्संपूर्णसम्भोगोपमर्दासहतया तव खेदो भविष्यतीति भयात्सामि अर्धं भुक्तैवाप्राप्तसुरतावसानैव यन्मुक्ताऽसि तज्जानासि स्मरसि । सामिभुक्ता, 'सामि २।१।२१' इति समासः ॥ ७५ ॥

**स्मर जित्वाऽऽजिमेतस्त्वां करे मत्पदधाविनि ।**
**अङ्गुलीयुगयोगेन यदाश्लिक्षं जने घने ॥ ७६॥**

१ अत्रानुप्रासः । २ अत्राप्यनुप्रासः, उपमा । जम्भारित्वे हेतुर्दम्भोलिपरिरम्भित्वमिति काव्यलिङ्गञ्च । ३ अत्राप्यनुप्रासः ।

१ अत्राहुः सुखाववोधकाराः । 'यदानन्देति पाठे यद्योगसत्त्वेन 'न यदि ३ । २ । ११३' इति निषेधेन लृटोऽप्राप्तिमभिप्रेत्येदम् । तथा पाठेपि यदिति स्थाने यदेति पदच्छेदं कृत्वा व्याख्याने यच्छब्दयोगेऽपि व्याजशयनेन लक्षणेन पद्मनाभीभवनस्य लक्ष्यत्वाल्लक्ष्यलक्षणसंबन्धे 'विभाषा साकाङ्क्षे' इति परत्वाल्लृटो विधानेन च न दोषः' इति ।

विश्वस्यापि मूर्ध्नि भूत्वा तपति । क इव—त्वमिव । यथाद्भुतः प्रतापः क्षात्रं तेजो यस्य स त्वं विश्वस्य मूर्ध्नि चरणमारोप्य तपसि राजलक्ष्म्या दीप्यसे तथेत्यर्थः । मध्याह्नसमयो निश्चितो वर्तत इत्यर्थः । अत एव पुरमथनं हरमुपास्याराध्योपार्जितैरिति शेषः । एवंभूतैस्त्वदीयैः पुण्यैर्देवपूजानन्तरं त्वमेनं सूर्यमधरितं मस्तकोपरिभागाच्च्यावितं तिर्यग्गगनभागे वर्तमानमेनं सूर्यं पश्य । देवपूजानन्तरं हि सूर्यो नमस्क्रियत इत्याचारात्त्वमप्यत्रापराह्णे सूर्यं नमस्कुर्विति भावः । अधुना तु त्वत्सदृशः हरपूजाजनितपुण्यैस्त्वया जितोऽधोगतो भविष्यतीत्यर्थः ॥ १६० ॥

**आनन्दं हठमाहरन्निव हरध्यानार्चनादीक्षणस्यासत्तावपि भूपतिः प्रियतमाविच्छेदखेदालसः।पक्षद्वारादिशं प्रति प्रतिमुहुर्द्राङ्निर्गतप्रेयसीप्रत्यासत्तिधिया दिशन् दृशमसौ निर्गन्तुमुत्तस्थिवान् ॥ १६१ ॥**

आनन्दमिति ॥ असौ भूपतिः स्नानाद्यर्थं वहिर्निर्गन्तुं शय्यायाः सकाशादुत्तस्थिवान् । किंभूतः—द्राक् झटिति वहिर्निर्गतायाः प्रेयस्या भैम्याः प्रत्यासत्तिधिया परावृत्त्यागमनस्य बुद्ध्या पुनरप्यागमिष्यति किमिति संभावनया तद्विलोकनार्थं पक्षद्वारादिशं पार्श्वद्वारप्रदेशं प्रति लक्षीकृत्य प्रतिमुहुःपुनः पुनःदृशं दिशन् ददानः,तथा—प्रियतमाया विच्छेदो वियोगस्तज्जन्येन खेदेन दुःखेनालसोऽपि । तथा–हरध्यानार्चनादेः क्षणस्य मध्याह्नस्यासत्तावतिनैकट्ये सत्यामपि हठं यथा स्यादेवं वलात्कारेण गतमप्यानन्दमाहरन्निव परावर्तयन्निव । अर्चनादेरेव क्षण उत्सवस्तदासत्तावपीति वा।विरहखेदायासे सत्यपि नित्याह्निककाललोपभिया शिवभक्त्या च सानन्दं वलाद्वहिर्निर्गत इत्यर्थः ।श्लोकचतुष्टयेनोत्तरसर्गसंगतिः सूचितेति ज्ञेयम् । प्रतिमुहुर्, मुहुर्मुहुरित्यर्थे प्रतेर्मुहुः—शब्देन 'सह सुपा २ ।१ । ४ । इति समासः । मुहुर्मुहुरित्यर्थः ॥ १६१ ॥

**श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरःसुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्। अन्याक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महाकाव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥**

श्रीहर्षमिति अन्यैः श्रीहर्षव्यतिरिक्तैः कविभिरक्षुण्णा रसस्य शृङ्गारादेः प्रमेयस्य समासोक्त्युत्प्रेक्षादेश्च भणितिर्गुम्फना यत्र तादृशेऽपूर्वरसादिमति महाकाव्ये विंशः सर्गो विंशतेः पूरणः व्यगलत्समाप्तिमितः । 'अन्याक्षुण्णेति पूर्वपदं भाषितपुंस्कम्, तस्मात् पुंवद्भावः । पूरणे डाटि 'ति विंशतेर्डिति ६ । ४ । १४२ ।' इति तिलोपः । अन्यत् प्राग्वत् ॥ १६२ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे विंशः सर्गः ॥

# एकविंशः सर्गः।

इदानीं पूर्वसर्गान्तप्रस्तुतमध्याह्नस्नानदेवपूजादिवर्णनार्थमेकविंशं सर्गमारभते—

**तं विदर्भरमणीमणिसौधा-**
**दुज्जिहानमनु दर्शितसेवैः।**
**अर्पणान्निजकरस्य नरेन्द्रै-**
**रात्मनः करदता पुनरूचे ॥ १ ॥**

तमिति ॥ विदर्भरमण्या भैम्या मणिसौधान्मणिवद्गुसुधाधवलितप्रासादादुज्जिहानं वहिर्निर्गच्छन्तं नलमनु लक्षीकृत्य दर्शिता अन्तःपुरद्वारि प्रणामादिना ज्ञापिता सेवा यैरवसरपर्यन्तं वाहिः स्थितैरन्तरङ्गैर्नरेन्द्रैर्नलहस्तावलम्बनार्थं निजकरस्यार्पणाद्धेतोरात्मनः स्वस्य करदता पुनरूचे पुनरुक्ता चक्रे इत्यर्थः । पूर्वं सर्वेऽपि राजानो वलिरूपकरसमर्पणात्करदा अभूवन्, इदानीं तु सोपानमार्गेणावरोहतो नलस्य हस्तावलम्बनार्थं निजपाणिसमर्पणात्करदा जाता इति च्छलेनोत्प्रेक्षा। एतेन नलस्य चक्रवर्तित्वं द्योत्यते ॥ १ ॥

१ अत्रानुप्रासः । त्वमिवेत्युपमा । उपमानोपमेययोः पुरुषभेददोष इत्यन्यत् । २ अत्राप्यनुप्रासः । आहरन्निवेत्युत्प्रेक्षा ।

१ अत्र सर्गे प्रायः समाप्तिं यावत् स्वागताछन्दः । 'स्वागतेति रनभाद् गुरुयुग्मम् ।' इति तल्लक्षणात् । २ अत्रानुप्रासः, मणीति यमकं च ।

नेत्रेति ॥ पुरा पूर्वं यदा यस्मिन्काले मृगाङ्कः पुराणस्य पुंसः श्रीविष्णोर्नेत्रारविन्दत्वं नयनकमलत्वमगात्। तदानीं तस्मिन्काले अयं श्रीविष्णुरस्य चन्द्रस्याङ्के विषमे कनीनिकेन्दिन्दिरसुन्दरत्वमदात् । नेत्रे हि कनीनिकया भाव्यम्, अरविन्दे च भ्रमरेण। तथा चास्य नेत्रारविन्दरूपत्वादङ्कमेवोभयं श्रीविष्णुः कृतवानित्यर्थः। अङ्क एव कनीनिका कर्त्री भ्रमरेण सुन्दरत्वमस्यादादिति वा 'अदात्' इत्यत्र 'अगात्' इति पाठान्तरं कथितपदत्वदुष्टम्। अर्थस्तु तदानीमस्य विष्णुनेत्रारविन्दभूतस्य चन्द्रस्याङ्कः कलङ्क एव कनीनिकेन्दिन्दिरसुन्दरत्वमगादिति । 'इन्दिन्दिरालिषट्चरणचञ्चरीकालिनो द्विरेफाः स्युः' इति हलायुधः ॥ ९० ॥

देवेन तेनैष च काश्यपिश्च
साम्यं समीक्ष्योभयपक्षभाजौ।
द्विजाधिराजौ हरिणाश्रितौ च
युक्तं नियुक्तौ नयनक्रियायाम् ॥ ९१ ॥

देवेनेति ॥ तेन देवेन श्रीविष्णुना एष चन्द्रः काश्यपिर्गरुडश्चैतौ द्वावपि साम्यं समानधर्मतां समीक्ष्य तुल्यायां नयनक्रियायां क्रमेण नेत्रव्यापारे वाहनव्यापारे च यन्नियुक्तौ, तद्युक्तमुचितमित्यर्थः । चावन्योन्यसमुच्चये। साम्यमेवाह—उभयपक्षौ शुक्लपक्षकृष्णपक्षौ भजति चन्द्रः, गरुडस्तु द्वौ छदौ भजति, तादृशौ द्वावपि। तथा—द्विजानां ब्राह्मणानां राजा चन्द्रः, गरुडस्तु पक्षिणां राजा तादृशौ। तथा—हरिणेन कलङ्कमृगेणाश्रितश्चन्द्रः, गरुडस्तु हरिणा विष्णुना वाहनार्थेनाश्रितः, तादृशौ। एवमुभयोः साम्यात्सम एव व्यापारे यन्नियुक्तौ तदुचितं कृतमिति भावः। काश्यपिः वाह्वादित्वादिञ् ॥ ९१ ॥

यैरन्वमायि ज्वलनस्तुषारे
सरोजिनीदाहविकारहेतोः।
तदीयधूमौघतया हिमांशौ
शङ्के कलङ्कोऽपि समर्थितस्तैः ॥ ९२ ॥

यैरिति ॥ यैः पण्डितैः सरोजिन्याः दाहरूपाद्विकाराद्धेतोस्तुषारे ज्वलनोऽग्निरन्वमायि। तुषारः साग्निर्भवितुमर्हति संबन्धे सति दाहकारित्वात्, साग्निभूदेशवत् तप्तोदकवद्वेति हिमे विषये वह्निरनुमित इत्यर्थः । तैः पण्डितैर्हिमांशौ तुषारमये चंद्रे वर्तमानः कलङ्कोऽपि तदीयधूमौघतया हिमाग्निसंबन्धिधूमसमूहरूपत्वेन समर्थित इत्यहं शङ्के। वह्नौ हि धूमेन भाव्यम्, चन्द्रश्च तुषारमयत्वादुक्तरीत्या वह्निमान्, तथा च कलङ्को धूमसमूह एवेति तैः समर्थितमित्यहं सम्भावयामीत्यर्थः ॥ ९२ ॥

स्वेदस्य धाराभिरिवापगाभि-
र्व्याप्ता जगद्भारपरिश्रमार्ता।
छायापदेशाद्वसुधा निमज्ज्य
सुधाम्बुधावुज्झति खेदमत्र ॥ ९३ ॥

स्वेदस्येति ॥ वसुधा छायापदेशात्स्वीयप्रतिबिम्बव्याजेन सुधाम्बुधावत्र चन्द्रे निमज्ज्यान्तः प्रविश्य खेदं जगद्भारपरिश्रमपीडामुज्झतीव । किंभूता—जगद्भारवहननिमित्तः परिश्रमस्तेनार्ता नितरां पीडिता । अत एव—स्वेदस्य धाराभिरिवापगाभिर्व्याप्ता समन्तात्पूरिता। अमृतसमुद्रनिमज्जने हि खेदो गच्छत्येव यस्याश्च तत्तन्नदीरूपः स्वेदः, तस्याः श्रमहरणे सुधासमुद्र एवोचितः । एतेन कलङ्कस्य मृगशशभूच्छायाप्रभृति मतभेदा वर्णिताः ॥ ९३ ॥

ममानुमैवं बहुकालनीली-
निपातनीलः खलु हेमशैलः।
इन्दोर्जगच्छायमये प्रतीके
पीतोऽपि भागः प्रतिबिम्बितः स्यात् ९४

ममेति ॥ हेमशैलो मेरुः खलु निश्चितं सर्गमारभ्याद्ययावदतिक्रान्तेन बहुना कालेन कृत्वा नीलीनिपातः श्यामिकालगनं तेन कृत्वा वा नीलः बहुकालिकत्वान्नीलमलसंबन्धान्नीलवर्णः संजातोऽस्तीति, एवंप्रकारा ममानुमानुमानम्, एवमहं संभावयामीत्यर्थः। अन्यथा यदि स्वर्णाचलः कालभूयस्त्वेन न नीलीभूतः किंतु हेममयत्वात्पीत एव स्यात्, तर्हि इन्दोर्जगच्छायमये जगत्प्रतिबिम्बभूते कलङ्करूपे प्रतीकेऽवयवे मेरोः पीतोऽपि भागः प्रतिबिम्बितः स्यात्पीतोंऽशोऽपि दृश्येत, तस्मात्स्वर्णाचलो नील एव जातः । तथा च सकलाया अपि भूमेर्नीलवर्णत्वात्तत्प्रतिबिम्बरूपः कलङ्कोऽपि नील एव

१ अत्रानुप्रासः, पुरेति यमकं च । उपमोत्प्रेक्षा च। अत्रोत्प्रेक्षा, श्लेषोत्थापितोपमा च।

१ अत्रोत्प्रेक्षा। २ अत्रोत्प्रेक्षा, छायापदेशादित्यपह्नुतिश्च।

| श्लो० | पृ० |
|---|---|
| असितमेकसुरा | १३१ |
| असिस्वदद्यन्मधु | ४७४ |
| असुरहितमप्यादि | ५९९ |
| असेवि यस्त्यक्तादि | २९७ |
| असेविषातां सुप | ४५५ |
| असौ महीमृद्बहुधा | ५०२ |
| असौ मुहुर्जात | ४५१ |
| अस्ताचलेऽसि | ७०४ |
| अस्ताद्रिचूडालय | ७०२ |
| अस्तित्वं कार्यसिद्धेः | ११५ |
| अस्ति द्विचन्द्र | ४१५ |
| अस्ति वाम्यभर | ५७२ |
| अस्तु त्वया साधित | ४३८ |
| अस्मदाद्यविषये | ६८४ |
| अस्मत्किल श्रोत्र | ८८ |
| अस्माकमध्यासित | २५७ |
| अस्माकमस्मान् | २५७ |
| अस्माकमुक्तिभि | ६८९ |
| अस्मिञ्जयन्वि | ३५३ |
| अस्मिञ्शिशौ | ७२२ |
| अस्मिन्दिग्विजयो | ३७० |
| अस्मिन्न विस्माप | ७३० |
| अस्मिन्समाजे मनु | ३२७ |
| अस्मै करं प्रवितरन्तु | ३६६ |
| अस्य क्षोणिपतेः | ३९३ |
| अस्यां मुनीनामपि | २३१ |
| अस्यां वपुर्व्यूह | २०८ |
| अस्याः कचानां | २६१ |
| अस्याः करस्पर्धन | २२५ |
| अस्याः खलु ग्रन्थि | २२९ |
| अस्याः पदौ चारुत | २३२ |
| अस्याः पीनस्तनव्या | ६२७ |
| अस्याः स चारुर्मधु | ३३२ |
| अस्याः सपक्षैक | २१० |
| अस्याः सुराधीश | ७१४ |
| अस्याधिशय्य पुर | ३५३ |
| अस्या भवन्तमनिशं | ६९१ |
| अस्या भुजाभ्यां | ३३० |
| अस्या मुखश्रीप्रति | २२१ |
| अस्या मुखस्यास्तु | २२० |
| अस्या मुखेनैव | २२१ |
| अस्या मुखेन्दावधरः | २१५ |
| अस्या यदष्टादश | २२३ |
| अस्या यदास्येन | २११ |
| अस्यारिप्रकर | ३९१ |
| अस्यासिर्भुजगः | ३९१ |
| अस्यैव सर्गाय | २२५ |
| अस्यैव सेवार्थ | ७२२ |
| अस्योत्कण्ठितकण्ठ | ४६८ |
| अस्योर्वीरमणस्य | २८१ |
| अहर्निशा वेति रता | ४९१ |
| अहह सह मघोना | ४४५ |
| अहो अनौचिती | ६४७ |
| अहो अहोभि— | २० |
| अहो तपःकल्पतरु | १११ |
| अहो नापत्रपाकं | ६४६ |
| अहो मनस्त्वामनु | २७१ |
| अहो मयि रहो | ६३३ |
| अहो महःसहायानां | ५३७ |
| अहो महेन्द्रस्य कथं | २६८ |
| अह्नि भानुभुवि | ५६३ |
| आः स्वभावमधुरैः | १५१ |
| आकर्ण्य तुल्यमखि | ३९९ |
| आकल्पविच्छेद | ३२२ |
| आकस्मिकः पक्ष | ७८ |
| आकीटमाकैटभ | २०३ |
| आकुञ्चिताभ्यां | ७८ |
| आकृष्य सारम | ६८८ |
| आखण्डलो दण्ड | ३०६ |
| आख्यतैष कुरु कोप | ५८९ |
| आख्यातुमक्षिव्रजं | ३३२ |
| आगःशतं विद | ३५३ |
| आगच्छदुर्वीन्द्र | ३०६ |
| आगच्छन् भणता | ६२० |
| आघूर्णितं पक्ष्म | २१३ |
| आचूडाग्रममज्ज | ३७४ |
| आज्ञया च पितु | ६८० |
| आज्ञां तदीयामनु | १९९ |
| आत्थ नेति रतया | ५७५ |
| आत्मनापि हरदार | ५६६ |
| आत्मन्यस्य समु | ३८६ |
| आत्मवित्सहृतया | ५५६ |
| आत्मैव तातस्य | २२३ |
| आदत्त दीप्रं | ७१५ |
| आदधीचि किल | १७१ |
| आदर्शतां स्वच्छ | ९३ |
| आदर्शदृश्यत्व | ७२१ |
| आदाय दण्डं | ७०४ |
| आदेशितामप्यव | ४२८ |
| आदेहदाहं कुसुमा | २४६ |
| ( आद्यं विषोर्जन्म ) | ३१३ |
| आद्यसंगमसमाद | ४७६ |
| आननन्द निरीक्ष्या | ५५२ |
| आननस्य म | ५८८ |
| आनन्दं हठमाह | ६५९ |
| आनन्दजाश्रुभिरनु | ४९ |
| आनन्दयेन्द्रमथ | २६१ |
| आन्तरानपि तदङ्ग | ५८३ |
| आप्तकाम सृजसि | ६८२ |
| आप्यायनाद्वा रुचि | ७२९ |
| आभिर्मृगेन्द्रोदरि | ७३० |
| आभ्यां कुचाभ्यां | २२६ |
| आमन्त्र्य तेन | ६४२ |
| आरोप्यते चेदिह | ७२३ |
| आरोहणाय तव | ३४७ |
| आर्ये विचार्याल | ९९० |
| आलापि कलया | ६४३ |
| आलिख्य सख्याः | १९७ |
| आलिङ्गितः कमल | ३५५ |
| आलिङ्ग्यालिङ्ग्य | ६४९ |
| आलिमात्मसुमगत्व | ११८ |
| आलोकतृप्तीकृत | २४३ |
| आलोकमाना | ३१६ |
| आलोक्य भावि | ३५८ |
| आवाहितां द्विजे | ५४७ |
| आशयस्य विवृतिः | ६६८ |
| आशीविषेण रदन | ३३८ |
| आश्चर्यमस्य | ३५५ |
| आश्लेषलग्नगिरिजा | ३३८ |
| आसते शतमधि | १६८ |
| आसने मणिमयी | ५६५ |
| आसीदथर्वा त्रिवली | ३१९ |
| आसीदसौ तत्र न | ३२७ |
| आसीदासीम | ३६८ |
| आसीद्यथा ज्योतिष | ७२४ |
| आसुत्राममपास | ४७० |
| आस्त भावमधि | ५८५ |
| आस्तां तदप्रस्तुत | ९२ |
| आस्तामनङ्गीकरण | २४५ |
| आस्ते दामोदरीया | ३९० |
| आस्यं शीतमयूख | ७३९ |
| आस्यसौन्दर्य | ६२६ |
| आस्ये या तव भार | ६८५ |
| आह नाथ वदनस्य | ५८१ |
| आह स्म तद्गिरा | ६४६ |
| आह स्मैषा नला | ६२६ |
| इङ्गितेन निजराग | ७२१ |
| इज्येव देव मज | ५१३ |
| इतरनलतुलाभा | ४१६ |
| इतस्त्रसद्विद्रुत | ३७० |
| इति कियद्वचसै | १४० |
| इति तत्सुप्रयुक्तत्व | ६३५ |
| इति तं स विसृज्य | ६६ |
| इति तस्मिन्वदत्येव | ५३८ |
| इति तस्या रहस्यानि | ६३९ |
| इति त्रिलोकीतिलके | २५५ |
| इति द्विकृत्वः शु | ५०० |
| इति धृतसुरसार्थ | २६१ |
| इति पठति शुके | ६९३ |
| इति परिणयमित्थं | ५०४ |
| इति प्रतीत्यैव | २६४ |
| इति प्रियाकाकुभि | २८९ |

| श्लो० | पृ० |
|---|---|
| इति मनसि विक | ४१८ |
| इति मुद्रितकण्ठे | ६२८ |
| इति विधोर्विविधो | १३४ |
| इति व्युत्तिष्ठमाना | ६४३ |
| इति श्रुतिस्वादित | ३६७ |
| इति श्रुतेऽस्या | ४३० |
| इति श्रुत्वा स रो | ५३५ |
| इति सच्चिदा | २३५ |
| इति स विधुमुखी | ६९५ |
| इति सा मोचयांचक्रे | ५४१ |
| इति स्तुवन् हुंकृति | ३१८ |
| इति स्तुवानः स | ३३३ |
| इति स्फुटं तद्वच | २७८ |
| इति स्मरः शीघ्र | ५०० |
| इति स्वयं मोहमहो | २९५ |
| इतीदृशैस्तं विरचय्य | ४७ |
| इतीन्द्रदूत्याः प्रति | २०१ |
| इतीयमक्षिभ्रुव | २६१ |
| इतीयमालेख्यगते | ३०३ |
| इतीरयित्वा विर | २६३ |
| इतीरयित्वा विरराम | ९२ |
| इतीरिणापृच्छय | २९६ |
| इतीरिता तच्चरणा | ३१९ |
| इतीरिता पत्ररथेन | ९६ |
| इतीरिते विश्व | ४२९ |
| इतीरितैर्नैषध | २९८ |
| इतीष्टगन्धा | ४० |
| इतोऽपि किं वीर | ३७० |
| इतो भिया भूप | ३६८ |
| इतो मुखाद्वागिय | ७२८ |
| इत्थं पुन | २०४ |
| इत्थं प्रतीपोक्ति | २०३ |
| इत्थं मधूत्थं रस | २४७ |
| इत्थं यथेह मद | ४१७ |
| इत्थं वितीर्य वर | ४४४ |
| इत्थममुं विलपन्त | ४९ |
| इत्थमाकर्ण्य दुर्वर्ण | ५२६ |
| इत्थमुक्तिमुपहृत्य | ५८९ |
| इत्थं ह्रिया वर्णन | ७०५ |
| इत्यधीरतया यस्य | ६४८ |
| इत्यमी वसुमती | १५३ |
| इत्यलीकरतका | ५७८ |
| इत्यवेत्य मनसात्म | १६२ |
| इत्यवेत्य वसुना | ६६४ |
| इत्यसौ कलया | ६३१ |
| इत्याकर्ण्य क्षितीश | १७८ |
| इत्यालपत्यथ | ११४ |
| इत्यालेपुरनुप्रती | ४७१ |
| इत्युक्तवत्या निहितां | १९७ |
| इत्युक्तवत्या यद | १०५ |
| इत्युक्तिशेषे स | ७१६ |
| इत्युदीर्य मघवा | १५० |
| इत्युदीर्य स ययौ | १५६ |
| इत्युदीर्य स हरिं | ६८५ |
| इत्युपालभत संभु | ५७२ |
| इत्येतस्याः पदा | ६४२ |
| इदं निगद्य क्षिति | २६७ |
| इदं नृपप्रार्थिभि | ३८८ |
| इदं महत्तेऽभि | २८४ |
| इदं यदि क्ष्मापति | १०६ |
| इदंयशांसि द्विष | ३८८ |
| इदमुदीर्य तदेव | १४२ |
| इन्दुं मुखाद्बहुतृणं | ७३५ |
| इन्दोर्भ्रमेणोपगमा | ७२९ |
| इन्द्राग्निदक्षिण | ४१२ |
| इमं परित्यज्य | ३७८ |
| इमां न मृद्वीम | ३३१ |
| इमा गिरस्तस्य | २८४ |
| इयं कियच्चारु | ४९४ |
| इयं न ते नैषध | २८८ |
| इयच्चिरस्यावद | २६६ |
| इयत्कृतं केन मही | २४७ |
| इयमनङ्गशराव | १२४ |
| इयमियमधिरथ्यं | ३३४ |
| इषुत्रयेणैव जगत् | २१२ |
| इष्टदारविरहीवपयो | ६७१ |
| इष्टं नः प्रति ते | १७७ |
| इष्टेन पूर्तेन नलस्य | ८३ |
| इह किमुषसि | ६१८ |
| इह न कतमश्चित्रं | ६१३ |
| इहाविशंकेन पथा | २२२ |
| ईक्षितोपदिशतीव | ५७९ |
| ईदृशं निगदति प्रिये | ५९२ |
| ईदृशानि गदितानि | १७२ |
| ईदृशानि मुनये | १५५ |
| ईदृशीं गिरमुदीर्य | २६३ |
| ईर्ष्यया रक्षितो | ५१४ |
| ईशः कुशेशय | ३४७ |
| ईशाणिमैश्वर्य | ९५ |
| ईशा दिशां नल | ४१७ |
| ईश्वरस्य जगत्कृत्स्नं | ५०८ |
| ईषत्स्मितक्षालित | १९८ |
| उच्चलत्कलरवा | ५६२ |
| उच्चाटनीयः कर | ८० |
| उच्चैस्तरादम्बर | ६४५ |
| उच्चैरूचेऽथ ता राज! | ६४५ |
| उज्जिहानसुकृता | ६५७ |
| उडुपरिवृढः पत्या | ६१३ |
| उडुपरिषदः किं | ६०१ |
| उत्कण्टका विलस | ३९५ |
| उत्कण्ठयन्पृथ | ४१३ |
| उत्तमं स महति | ६६१ |
| उत्तानमेवास्य | ७२२ |
| उत्तुङ्गमङ्गल | ३३५ |
| उत्सर्पिणी न किल | ३५० |
| उत्सृज्य साम्राज्य | ४३४ |
| उदयति स | १२० |
| उदयशिखरिप्रस्था | ५९९ |
| उदयशिखरिप्रस्थाव | ६१० |
| उदरं नतमध्य | ५९ |
| उदरं परिमाति | ६० |
| उदर एव धृतः | ३३१ |
| उदरस्य कुम्भीरथ | ४५१ |
| उदासितेनैव | २९८ |
| उद्देशपर्वण्यपि | ३२१ |
| उद्धूतिस्खलदिला | ६६६ |
| उद्भवाजतनुजादज | ६७० |
| उद्भिद्भिरचितावासः | ५५४ |
| उद्भ्रमामि विरहा | १७१ |
| उद्वर्तयन्त्या हृदये | १८४ |
| उन्मत्तमासाद्य | १०५ |
| उन्मीलद्गुडपाक | ६९७ |
| उन्मीलल्लीलनीलो | ३९२ |
| उन्मूलितालान | २२९ |
| उपचचार चिरं | १४३ |
| उपनतमुडुपुष्प | ७४० |
| उपनम्रमया | ५३ |
| उपहरन्ति न कस्य | १३८ |
| उपहतमधिगङ्ग | ६४९ |
| उपासनामेत्य | १७ |
| उपास्यमानाविव | ४५७ |
| उपास्य सांध्यं | ७०१ |
| उभयी प्रकृतिः | ५२२ |
| उरोभुवा कुम्भ | २३ |
| उर्वशी गुणवशी | १५८ |
| उल्लास्यतां स्पृष्ट | १८६ |
| उल्लास्य धातु | ३३१ |
| उल्लिख्य हंसेन | १८६ |
| उवास वैदर्भ | ५०० |
| उवाह यः सान्द्र | ४७६ |
| ऊचिवानुचित | १७५ |
| ऊचे पुनर्भगवती | ३४२ |
| ऊरुप्रकाण्ड | २३१ |
| ऊर्ध्वं धृतं व्योम | ७०९ |
| ऊर्ध्वदिक्कदलनां | ६८२ |
| ऊर्ध्वस्ते रदनच्छदः | ६८८ |
| ऊर्ध्वार्पितन्युब्ज | ७०९ |
| ऋजुत्वमौनश्रुति | ३७५ |
| ऋजुदृशः कथयन्ति | १३२ |
| ऋणीकृता किं हरि | २१४ |
| ऋद्धसर्वक्रतुवृक्ष | ५५८ |
| ऋषीणां स वृसीः | ५४८ |
| एकं संदिग्धयोस्ताव | ५१८ |

| श्लो० | पृ० | श्लो० | पृ० | श्लो० | पृ० | श्लो० | पृ० |
|---|---|---|---|---|---|---|---|
| एकः पिपासुः प्रव | ७२१ | एतां कुमारनिपु | ३५६ | कथितमपि नरेन्द्रः | ११६ | कस्मादस्माक | ६२५ |
| एकः प्रभावमय | ४०३ | एतां धरामिव | ६९० | कथ्यते न कतमः | १५२ | कस्मिन्नपि मते सत्ये | ५३१ |
| एकः सुधांशुर्न | १११ | एतादृशीमथ | ४०१ | कन्यान्तःपुर | १४३ | कां नामन्त्रयते नाम | ६२७ |
| एककस्य शमने | ५७८ | एतादृशोरम्बुरुहैः | ३३० | कपोलपत्रान्मकर | २२२ | कांशीकृतासीत् | ११२ |
| एकचित्ततितिरद्वय | ६७६ | एतेन ते विरह | ३४४ | कपोलपालीजनि | ४६२ | कानुजे मम निजे | १५४ |
| एकद्विकरणे हेतू | ५१० | एतेन ते स्तन | ३४८ | कमपि स्मरकेलिं | ६३८ | कान्तमूर्ध्नि दधती | ५७७ |
| एकवृत्तिरपि | ५८२ | एतेन संमुख | ३५५ | कमलकुशलाधाने | ६०९ | कान्तिमन्ति विमा | ५०५ |
| एकस्य विश्वपापेन | ५१८ | एतेनोत्कृत्तकण्ठ | ३९१ | कम्रं तत्रोपनम्राया | ५५१ | कापि कामपि | १५८ |
| एकाकिभावेन | ३१७ | एनसानेन तिर्य | ५२३ | कयाचिदालोक्य | २३७ | क्वापि प्रमोदास्फुट | ४३१ |
| एकादशैकादश | ७३० | एनं स विभ्रद्विधु | ७३१ | कयापि क्रीडतु | ५३५ | कामिनं तत्राभिनव | ८९ |
| एकेन पर्यक्षिप | ३१६ | एवं यद्वदता | १४५ | कयापि वीक्षा | ४६६ | कामः कौसुमचाप | ११३ |
| एकैकमद्भुतगुणं | ३४६ | एवमादि स | १६७ | करग्रहे वाम्य | ४८० | कामदेवविशिखैः | ६७१ |
| एकैकमेते परि | २५६ | एवमुक्तवति | १६८ | करपदाननलोचन | १२० | कामनीयकमधः | १६१ |
| एकैकमैक्षत | ४२४ | एवमुक्तवति | १५४ | करस्थताम्बूल | ४६५ | कामानुशासनशते | ३६० |
| एकैकवृत्तेः प्रति | ४२२ | एष नैषध स | ११३ | करः स्रजा सज्जतर | ४२६ | कामिनीवर्गसंसर्गैः | ५१४ |
| एकैव तारा मुनि | ७१३ | एष प्रतापनिधि | ३९९ | कराग्रजाग्रच्छत | २२७ | कारं कारं तथा | ६४५ |
| एको नलः किमय | ४१५ | एषां गिरेः सकल | ३३६ | करिष्यसे यत्र | २७५ | कारिष्यते परिभवः | ४१३ |
| एणः स्मरेणाङ्क | ७०७ | एषां त्वदीक्षण | ३३६ | करिष्येऽवश्य | ५४१ | कार्तवीर्यभिदुरेण | ६६९ |
| एतं नलं तं दम | १९१ | एषामकृत्वा | ४२९ | करेण मीनं निज | ४० | कालः किरातः | ७०३ |
| एतत्कीर्तिवि | ३९३ | एषा रतिः स्फुरति | ६९० | करेण वाञ्छेव | ९५ | काश्चिन्निर्माय चक्षुः | ४६७ |
| एतत्कुचस्पर्धितया | २२६ | एष्यन्ति यावद्गण | २३४ | करे विधृत्येश्वरया | ४२७ | किं घनस्य जलं | १४९ |
| एतत्तरुस्तरुणि | ३५२ | औज्झि प्रियाङ्गे | २१० | करोषि नेमं फलिनं | २६६ | किंच प्रभाव | ४०२ |
| एतत्पुरःपठदप | ३४२ | औदास्यसंविद | ३५५ | कर्णशक्तिमफलां | ६७३ | किंचित्तिरश्चीन | ९२ |
| एतद्गन्धगजस्य | ३८७ | कंदर्प एवेदम | २४३ | कर्णाक्षिदन्तच्छद | २३३ | किं वित्तं दत्त तुष्टे | ५२५ |
| एतद्गुणश्रवण | ३४९ | कः कुलेऽजनि | १७३ | कर्णे कर्णे ततः | ६४३ | किं ते तथा मति | ४०८ |
| एतद्धृतासिघात | ३८३ | कः श्रमः क्रियताम् | ५२२ | कर्णोत्पलेनापि | २१३ | किं ते वृन्तहृता | ५१९ |
| एतद्दन्तिवलैः | ३६९ | कः स्मरः कस्त्वम | ६२९ | कर्णौ पीडयती | ६३९ | किं न द्रुमा जगति | ३६१ |
| एतद्बलैः क्षणिक | ३६६ | कटाक्षकपटारब्ध | ४८३ | कर्तुं शशाकाभि | ३०७ | किं नर्मदाय मम | २२५ |
| एतद्गीतारिनारी | ३६७ | कटाक्षणाजन्य | ६१८ | कलकलः स तदा | १४४ | किं नाक्षिण नोऽपि | ७२७ |
| एतद्भुजारणि | ३५६ | कण्ठः किमस्याः | १९१ | कलशे निजहेतु | ५९ | किं योगिनीयं | ७०७ |
| एतद्यशःक्षीर | ३६६ | कण्ठे वसन्ती | २१९ | कालिं प्रति कालिं | ५२३ | किं वा तनोति | ४१५ |
| एतद्यशो नवनवं | ३४६ | कतिपयदिवसैः | १४४ | कल्पद्रुमान् परिमला | ३९६ | किं विधेयमधुनेति | १६२ |
| एतद्यशोभिरखिले | ३५१ | कथं कथंचिन्निप | ४२७ | कल्प्यमानममुना | ६५२ | किमन्यदद्यापि | २२ |
| एतद्यशोभिरमला | ३५४ | कथं नु तेषां | २६८ | कल्याणि कल्यानि | २४९ | किमसुभिर्ग्लपितैः | १२९ |
| एतद्वरं स्यामिति | ३२५ | कथं विधातर्मयि | ४८ | कल्लोलजाल | ३४३ | किमस्य लोम्नां | १३ |
| एतन्मदीयमति | ४१६ | कथाप्रसङ्गेषु | १७ | कवित्वगानप्रिय | २२४ | किमालियुग्मा | ४५९ |
| एतन्मुखा विबुध | ४०० | कथावशेषं तव | २८८ | कश्मीरजैः रश्मि | ७१६ | किमु तदन्तरुभौ | ११७ |
| एतस्य सावनि | ३५८ | कथासु शिष्टैः | ३०१ | कस्त्वं कुतो वेति | २३७ | किमु भवन्त | १४० |

| श्लो० | पृ० |
| --- | --- |
| क्रियच्चिरं देवत | २३५ |
| कियतापि च कालेन | ५४५ |
| कियत्यजस्रोदन | ४९२ |
| कियदपि कथयन् | ५०३ |
| कियद्बहु व्यञ्जन | ४९७ |
| कियान्यथानेन | ७२० |
| कीर्त्तिं भैमीं वरं | ५३८ |
| कुङ्कुमेणमदपङ्क | ५५८ |
| कुचौ दोषोज्झिता | ६३१ |
| कुण्डिनेन्द्रसुतया | १७२ |
| कुतः कृतेवं वर | ३८० |
| कुत्रचित्कनक | ५१९ |
| कुमुदसुदमुदेष्यती | ६९४ |
| कुरु करे गुरुमेक | १३१ |
| कुरुध्वं कामदेवाज्ञाम् | ५१९ |
| कुरुसैन्यं हरेणेव | ५१२ |
| कुर्वती निचुलितं | ५६९ |
| कुर्वन्निरात्मभव | ३३४ |
| कुलं च शीलं च बलं | ३१९ |
| कुसुमचापजताप | ११७ |
| कुसुममप्याति | १३८ |
| कुसुमानि यदि | ६५ |
| कूजायुजा बहुल | ६८७ |
| कूटकायमपहाय | ४४४ |
| कृच्छ्रं गतस्यापि | ४३८ |
| कृतं तदन्यत्करणो | ४८६ |
| कृतात्र देवी वचना | ३८० |
| कृतापराधः सुतनोः | ४५७ |
| कृतावरोहस्य | ४४ |
| कृतार्यनश्चातुभिः | ४९३ |
| कृतार्थयन्नर्थिजना | ४६३ |
| कृतिः स्मरस्यैव | ३३२ |
| कृत्वा दृशौ ते | २४५ |
| कृपा नृपाणामुपरि | ३७५ |
| कृष्णसारमृग | ५६१ |
| केदारभाजा | २१५ |
| केनापि बोधि | ५१३ |
| केयमर्धभवता भव | ६८१ |
| केवलं न खलु भीम | ५६५ |
| केशान्धकारादथ | २११ |
| कैटभारिपदयोर्नत | ६६३ |
| को हि वेदास्त्यमुष्मि | ५२० |
| कौमारगन्धीनि | १८७ |
| कौमारमारभ्य | २४९ |
| क्रतोः कृते जाग्रति | २८२ |
| क्रतौ महाव्रते पश्य | ५५२ |
| क्रमाद्वीयसां तेषां | ५०६ |
| क्रमाधिकामुत्तर | ४५८ |
| क्रमेलकं निन्दति | २०२ |
| क्रमेण कूरं स्पृशतो | ४९२ |
| क्रमोद्गता पीवर | २३२ |
| क्रियां प्राहितनीं | ६२३ |
| क्रियेत चेत्साधु | ८४ |
| क्रीणीष्व मज्जीवत | १०२ |
| क्रौञ्चदुःखमपि | ६७२ |
| क्लिन्नीकृत्याम्भसा | ६४४ |
| क्वचित्तदालेपन | ४४९ |
| क्व प्रयास्यसि | १६३ |
| क्व प्राप्यते स | ४१४ |
| क्वापि कामशरवृत्त | ५५७ |
| क्वापि नापश्य | ५४७ |
| क्वापि यन्त्रमपि | ६५४ |
| क्वापि यन्निकट | ५५८ |
| क्वापि सर्वैरवैमत्या | ५३१ |
| क्वितावन्नर्ममर्मा | ६२२ |
| क्षणं प्राप्य सद | ६३७ |
| क्षणनीरवया | ७० |
| क्षणविच्छेदका | ६२२ |
| क्षणादथैष क्षणदा | २९ |
| क्षत्रजातिरुदियाय | ६६८ |
| क्षत्राणि रामः | ७३४ |
| क्षन्तुं मन्तुं दिन | ६३१ |
| क्षितिगर्भधरा | ७१ |
| क्षिप्रमस्तु रुजा | ५८८ |
| क्षीणेन मध्येऽपि | २२७ |
| क्षीरार्णवस्तव | ३४३ |
| क्षीरोदन्वदपाः | ३८३ |
| क्षोणिभृतामतु | १९८ |
| खण्डः किमु त्वद्दिर | २५९ |
| खण्डक्षोदमृदि स्थले | ६९६ |
| खण्डितेन्द्रभवना | १४६ |
| खर्वमाख्यदमर | ४५७ |
| गच्छता पथि | १४७ |
| गतचरादिनस्यायु | ६०५ |
| गता यदुत्सङ्ग | ३८ |
| गत्वान्तरा नलं | ५४२ |
| गर्भमेणमदकर्दम | ६५७ |
| गलत्परागं | ३६ |
| गिरः श्रुता एव | २६२ |
| गिरानुकम्पस्व | २९३ |
| गीर्देवतागीतयशः | ३१५ |
| गुच्छालयस्वच्छ | २२६ |
| गुणानामास्थानीं | ४४६ |
| गुणा हरन्तोऽपि | २०२ |
| गुणेन केनापि | ३१३ |
| गुणी पयोधेर्विज | ७२० |
| गुम्फो गिरां श्रम | ४०३ |
| गुरुतल्पगतो पाप | ५१५ |
| गुरुरीढावलीढ | ५३३ |
| गुरोरपीमां भण | ३३२ |
| गोत्रानुकूलत्व | ४३४ |
| गोवर्धनाचल | ३५७ |
| गौरभानुगुरुगोहि | ५६२ |
| गौरीव पत्या | २२८ |
| गौरे प्रिये भाति | ७२६ |
| ग्रन्थग्रन्थिरिह | ७४२ |
| ग्रावोन्मज्जनवद्यज्ञ | ५१३ |
| ग्रीवाद्भुतैवावटु | २२३ |
| घने समास्ताप | ४६४ |
| घनैरमीषां परि | ४९७ |
| घातितार्कसुत | ६७३ |
| घुसृणसुमनःश्रेणी | ६०९ |
| घृतप्लुते भोजन | ४९८ |
| चक्रास्ति बिन्दु | २८९ |
| चकोरनेत्रेण | २१४ |
| चक्रदारविरहे | ५७३ |
| चक्रेण विश्वं युधि | २३० |
| चक्रे शक्रादिने | ५०८ |
| चण्डालस्ते विषम | ३०३ |
| चतुःसमुद्रीपरिखे | ३१० |
| चतुर्दिगन्ती परि | ७११ |
| चतुष्पथे तं विनि | १८४ |
| चन्द्राधिकैतन्मुख | २१७ |
| चन्द्राभमाभ्रं तिलकं | १९१ |
| चमूचरास्तस्य | ३० |
| चरश्चिरं शैशव | २४९ |
| चर्म वर्म किल | १७५ |
| चर्यैव कतमेयं वः | ५३६ |
| चलत्पदस्तत् | ३६४ |
| चलन्नलं कृत्य | २८ |
| चलाचलप्रोथ | २६ |
| चलीकृता यत्र | ४२ |
| चिकुरप्रकराः | ५५ |
| चित्ते तदस्ति | ६३७ |
| चित्रं तदा कुण्डिन | १८० |
| चित्रतत्तदनुकार्य | ५५९ |
| चित्रमत्र विबुधे | १५९ |
| चिरं युवाकृतशतैः | ४५९ |
| चिरादनध्याय | २७८ |
| चिह्निताः कतिचित् | ५१२ |
| चिह्नैरमी त्रिनल | ४२५ |
| चुचुम्ब नोर्वीवलयो | ४९६ |
| चुचुम्बास्यमसौ | ६२५ |
| चुम्बनादिषु बभूव | ५७१ |
| चुम्बनाय कलित | ५८१ |
| चुम्बितं न मुख | ५५४ |
| चुम्ब्यस्वेयमय | ५७८ |
| चुलुकिततमःसिंधोः | ६०८ |
| चूडाग्रचुम्बि | ३४५ |
| चेतोजन्मशरप्रसून | ११४ |
| चेतोभवस्य भवति | ६९१ |
| चेष्टा व्यनेशाति | ४२३ |

| श्लो० | पृ० |
|---|---|
| छदे सदैव च्छविमस्य | ४७९ |
| छद्मतस्त्यवपुषः | ६६५ |
| छद्मैव तच्छम्बरजं | ३३१ |
| छायामयः प्रेक्षि | १८५ |
| छिन्नमप्यतनु हार | ५८२ |
| छुप्तपत्त्रविनिमीलि | ५९१ |
| छेत्तुमिन्द्रो भवद्वक्त्र | ६२४ |
| जगज्जयं तेन | १२ |
| जगति तिमिरं मूर्च्छा | ६१३ |
| जगति मिथुने चक्रा | ६०७ |
| जगत्त्रयीपण्डित | ३१९ |
| जगद्वधूमूर्धसु | २३२ |
| जग्रन्थ सेयं | ४२३ |
| जघनस्तनभार | ७५ |
| जज्वाल ज्वलनः | ५२९ |
| जनुरधत्त सती | १२७ |
| जनेन जानतास्मीति | ५१८ |
| जनैर्विदग्धैर्भवने | १८० |
| जन्यास्ततः फण | ३३७ |
| जपतामक्षमालासु | ५५० |
| जम्बालजाला | २०८ |
| जय जय महाराज | ५९४ |
| जलं ददत्याः कलि | ४८६ |
| जलजभिदुरीभावं | ६१७ |
| जलजे रविसे | ६० |
| जलाधिपस्त्वाम | २६७ |
| जलाननपरीक्षादौ | ५२३ |
| जले जलदजालानां | ५०६ |
| जवाजातेन वातेन | ५०५ |
| जवादवारीकृत | ४७८ |
| जागर्ति तच्छाय | १८९ |
| जागर्ति तत्र संस्कार | ६३६ |
| जागर्ति मर्त्येषु | ३३१ |
| जाग्रतामपि निद्रा | ५१२ |
| जातं शातक्रतव्यां | ७३७ |
| जाती न वित्ते न | ३०७ |
| जात्या च वृत्तेन | ३२० |
| जानासि ह्रीभय | ६३५ |
| जानेऽतिरागादिद | २१६ |
| जाम्बूनदं जगति | ३५२ |
| जाह्नवीजलज | ६८२ |
| जितं जितं तत्खलु | २७४ |
| जितस्तदास्येन | ४५८ |
| जितस्तवास्येन | ३०० |
| जीविताववधि | १६८ |
| जीविताववधि वनी | १६४ |
| जीवितेन कृत | १५७ |
| ज्ञानाधिकासि | ३६० |
| ज्योत्स्नापयःक्ष्मा | ७२० |
| ज्योत्स्नामयं | ७१७ |
| ज्योत्स्नामादयते | ७३८ |
| ज्वलति मन्मथ | १२४ |
| तं कथानुकथन | १४९ |
| तं दुह्यमानैरपि | २५४ |
| तं नासत्ययुगं | ५४० |
| तं पिधाय मुदिता | ५७८ |
| तं विदर्भरमणी | ६५० |
| तच्चित्रदत्तचित्ता | ६४३ |
| तच्चिन्तनान्तर | ३१८ |
| तच्छायसौन्दर्य | १८७ |
| तज्ञः श्रमाम्बु | ३५७ |
| तटतरुखगश्रेणी | ६०५ |
| तटान्तविश्रान्त | ४१ |
| ततः प्रतीच्छ | २९ |
| ततः प्रत्युदगाद्भैमी | ६२१ |
| ततः प्रसूने | ३२ |
| ततः स भैम्या | ३६४ |
| ततस्तदप्रस्तुत | ३६९ |
| ततस्तदुर्वीन्द्रगुणा | ३७२ |
| ततान विद्युता | ५०६ |
| ततोऽनु देव्या | ३७० |
| ततोऽनुवार्ष्णेय | ४६४ |
| तत्करोमि परम | ५७० |
| तत्कर्णौ भारती | ५०७ |
| तत्कालमानन्दमयी | २३९ |
| तत्कालवेद्यैः शकुन | ३२३ |
| तत्कुचे नख | ६४७ |
| तत्क्लमस्तमददी | ५८५ |
| तत्क्षणावहितभाव | ५८४ |
| तत्तज्जनकृतावेशा | ५३२ |
| तत्तदर्थमरहस्य | ६५९ |
| तत्तद्दिग्जैत्रयात्रा | ३८९ |
| तत्तद्विरागमुदितम् | ३३७ |
| तत्पदाखिलनखानु | ५८९ |
| तत्प्रविष्टं सखी | ६३९ |
| तत्प्रसीदत विधत्त | १७२ |
| तत्र ग्रहग्रहणं पश्यन् | ५४९ |
| तत्र मारजयिनि | ६७७ |
| तत्र यामीत्यसज्जा | ५४२ |
| तत्र सौधसुरभू | ५६४ |
| तत्र स्वयंवरेऽलम्भि | ५३६ |
| तत्रागमद्वासुकि | ३०९ |
| तत्राद्रिरस्ति | ३४५ |
| तत्रानुतीरवन | ३५३ |
| तत्रापि तत्रभवती | ४०३ |
| तत्रावनीन्द्रचय | ३३५ |
| तत्रैव मग्ना यद | २३७ |
| तत्रोद्गूर्ण इवाणौं | ५१२ |
| तथा कैमाजन्म | ५०१ |
| तथाधिकुर्याः | ३८७ |
| तथा न तापाय | २४३ |
| तथा पथि त्यागमयं | ४४६ |
| तथापि निर्बध्नति | २६४ |
| तथाभिधात्रीमथ | १०५ |
| तथालिमालपन्तीम् | ६४२ |
| तथावलोक्य लीला | ६३७ |
| तथायनाया निरशे | ४८३ |
| तथैव तत्कालमया | ४६० |
| तथोरिथतं भीमवचः | ४४९ |
| तदक्षरैः सस्मित | ३९४ |
| तदक्षि तत्काल | ४५५ |
| तदखिलमिह | ३०४ |
| तदङ्गभोगावलि | ३२६ |
| तदङ्गमुद्दिश्य | ३६ |
| तदद्य विश्रम्य | २७९ |
| तदधीहि मृषो | ६३७ |
| तदनु स तनु | १४४ |
| तदन्तरन्तः | ४९५ |
| तदर्थमध्याप्य | २९ |
| तदर्पितामश्रुत | २६१ |
| तदहं विदधे | ६२ |
| तदा तदङ्गस्य | ४५२ |
| तदात्तमात्मान | ४५ |
| तदानन्दाय स्वस्परि | ७०० |
| तदा निरस्वान | ४५० |
| तदास्यहसिता | ६३९ |
| तदिदं विशदं | ६३ |
| तदिहानवधौ | ६६ |
| तदेकतानस्य | ५०२ |
| तदेकदासीत्व | १०० |
| तदेकलुब्धे हृदि | १०० |
| तदेव किं नु क्रियते | ३७२ |
| तदोजसस्तद्यशसः | १५ |
| तद्गौरसारस्मित | ३२६ |
| तद्दम्पतिश्रुति | ६८९ |
| तद्दार्ढ्यभिः स्वयवरणे | ३३९ |
| तद्द्वीपलक्षमपृथु | ३४९ |
| तद्भुजादतिवितीर्ण | १४८ |
| तद्यशो हसति कम्बु | ६७१ |
| तद्यातायातरंहं | ५९३ |
| तद्वर्णनासमय | ३६२ |
| तद्विमृज्य मम | १५० |
| तद्विस्फुरत्फण | ३३९ |
| तनुत्विषा यस्य | ४४८ |
| तनुदीधिति | ६८ |
| तनोत्यकीर्तिं | ३२८ |
| तनोषि मानं | २९६ |
| तन्नालीकनले | ३९५ |
| तन्निर्मलावयव | ३३४ |
| तन्नैषधानूढतया | ९० |
| तन्यस्तमाल्य | ४३२ |
| तन्मुहूर्तमपि भीम | ६६० |

| श्लो० | पृ० |
| --- | --- |
| तन्वीमुखं द्रागधिग | १८४ |
| तपःफलत्वेन | १९९ |
| तपःस्वाध्यायवशा | ५५० |
| तपति जगत | ६४९ |
| तपस्यतामम्बुनि | ७३२ |
| तपोनले जुह्वति | २७३ |
| तमर्चितुं मद्वरण | २७९ |
| तमालम्बनमासाद्य | ५५५ |
| तमालिरूचेऽथ | २७९ |
| तमालोक्य प्रिया | ६३९ |
| तमेव लब्धावसरं | २१ |
| तमोमयीकृत्य | २५१ |
| तया प्रतीष्टाहुति | ४८२ |
| तयेरितः प्राणसमः | ७२८ |
| तयोः सौहार्दसान्द्रत्वं | ५५३ |
| तरङ्गिणी भूमिभृतः | २०७ |
| तरङ्गिणीरङ्कजुषः | ४१ |
| तरुणतातराणि | ११८ |
| तरुमूरुयुगेन | ६० |
| तर्कितालित्वमित्यर्ध | ६२३ |
| तर्काप्रतिष्ठयासाम्या | ५२५ |
| तर्का रदा यद्वदनस्य | ३२१ |
| तलं यथेयुर्न तिला | ३०५ |
| तव प्रवेशे सुकृता | २४२ |
| तव रूपमिदं | ६२ |
| तव वर्त्मनि वर्ततां | ४६ |
| तव संमतिमेव | ६३ |
| तवागमनमेवार्हं | ५४३ |
| तवाधराय स्पृह | २९३ |
| तवानने जातचरीं | ७२९ |
| तवापि हाहा विरहात् | ४८ |
| तवास्मि मां धातु | ३०२ |
| तवेत्ययोगस्मर | २९७ |
| तवोपवाराणसि | ४३७ |
| तस्मादिमां नरपते | ३४८ |
| तस्मादियं क्षिति | ३५८ |
| तस्मिन् गुणैरपि | ३४६ |
| तस्मिन्नलोऽसाविति | २३६ |
| तस्मिन्नियं सेति | १९४ |
| तस्मिन्नेतेन यूना | ३९३ |
| तस्मिन्मलिम्लुच | ३४६ |
| तस्मिन्विमृश्यैव | २०० |
| तस्मिन्विषज्यार्ध | १८८ |
| तस्य तापनभिया | १४७ |
| तस्य चीनसिचयै | ६५१ |
| तस्य होमाज्यगन्धेन | ५४६ |
| तस्याः प्रियं चित्त | ४२६ |
| तस्यां मनोबन्ध | ४३५ |
| तस्या दृशो नृपति | ११५ |
| तस्या हृदि व्रीडमनो | ४२६ |
| तस्यैव वा यास्यसि | ९१ |
| तां कुण्डिनाख्यापद | १३९ |
| तां देवतामिव | ३३४ |
| तां दूर्वया श्यामल | ४३१ |
| तां भारती पुनः | ३५० |
| तां मत्स्यलाञ्छन | ३५४ |
| तां मिथोऽभिदधतीं | ५७३ |
| तां विलोक्य विमुख | ५८६ |
| तादृग्दीर्घविरिञ्चि | ३६७ |
| तानधो कुशल | ६५१ |
| तानीव गत्वा | ७१४ |
| ता बहिर्भूय वैद | ६४४ |
| ताभिर्दृश्यत एष | ४६९ |
| ताभ्यामभूद्युग | १४४ |
| तामथैष हृदि | ६४६ |
| तामसीष्वपि तमीषु | ५६० |
| तामन्वगादशित | ६७७ |
| तमिङ्गितैरप्यनु | ७९ |
| तामेव सा यत्र | १९४ |
| ताम्बूलदानमन्य | ६३७ |
| ताम्बूलद्वयमासनं | ७४३ |
| ताम्रपर्णीतटोत्पन्नैः | ६२४ |
| ताराक्षरैर्यामसि | ७१९ |
| तारातततिर्बीजमिवा | ७०५ |
| तारा रदानां वदन | ३२६ |
| ताराविहारभुवि | ७३५ |
| ताराशङ्कुविलोप | ६१५ |
| तारास्थिभूषा | ७३३ |
| तारुण्यपुण्या | १८७ |
| तालं प्रभु स्यादनु | २२५ |
| तावकापरतनोः | ६७४ |
| तावके हृदि निपात्य | ६७७ |
| तावकोरसि लस | ७८० |
| तावद्गतिर्धृताटोपा | ५४६ |
| तासामभासत | ६८७ |
| तिमिरविरहा | ६०६ |
| तिरोवलद्वक्रसरो | ८८६ |
| तिष्ठ भोक्षिष्ठ | ५३० |
| तीर्णः किमर्णो | २४२ |
| तुङ्गप्रासादवासा | ६९३ |
| तुल्यावयोर्मूर्ति | १०६ |
| तुषारनिःशेषित | २३३ |
| तूलेन तस्यास्तु | ४३२ |
| तृणानीव घृणा वा | ५१२ |
| ते तत्र भैम्याश्चरि | ३१२ |
| ते तां ततोऽपि | ३५१ |
| तेन जाग्रदधृतिः | १५४ |
| तेन तेन वचसैव | १६९ |
| तेन स्वर्देश्यसंदेश | ६२१ |
| तेनादृश्यन्त वीरम्राः | ५५१ |
| तेनापि नापस | ६४४ |
| ते निन्यिरे नृपति | ३४६ |
| ते निरीक्ष्य निजा | ६४४ |
| तेभ्यः परान्नः | ३१४ |
| तेऽवज्ञाय तम | ५३४ |
| तेषां तदा लब्धु | ३०८ |
| तेषामिदानीं | २४९ |
| तेषु तद्विधवधू | १६१ |
| ते सख्या वाच | ४५७ |
| ते हरन्तु दुरित | ६७२ |
| तौ मिथो रतिरसाय | ५९० |
| त्यज्यते न जलजेन | ६८० |
| त्यागं महेन्द्रादि | ४२४ |
| त्रातुं पतिं नौषधयः | ७२७ |
| त्रपास्य न स्यात् | ४४७ |
| त्रिदशमिथुन | ५९७ |
| त्रिनेत्रमात्रेण रुषा | २५० |
| त्रिसंध्यं तत्र विप्राणां | ५५० |
| त्र्यम्बकस्य पदयोः | ६६१ |
| त्वं मदीयविरहा | ५९१ |
| त्वं यार्थिनी किल | ४०९ |
| त्वं हृद्गता भैमि | १०७ |
| त्वचः समुत्तार्य | २१४ |
| त्वच्चेतसः स्थैर्य | १७७ |
| त्वत्कान्तिमस्माभिः | २५६ |
| त्वत्कुचार्द्रनखा | ६३६ |
| त्वत्तः श्रुतं नेति | ४२८ |
| त्वत्पापकात्रस्याति | १०९ |
| त्वदग्रसूच्या | ३३ |
| त्वदर्थिनः सन्तु | २५७ |
| त्वदास्यनिर्यन्मद | २७८ |
| त्वदास्यलक्ष्मी | ७१३ |
| त्वदितरोऽपि | १२४ |
| त्वद्गिरःक्षीरपाथोधेः | ६२५ |
| त्वद्गुच्छावलिमौक्तिक | ११३ |
| त्वद्गोचरस्तं खलु | २५२ |
| त्वद्वद्वधुर्दैर्वाहि | १०६ |
| त्वद्रूपसंपदव | ३४३ |
| त्वद्वाचः स्तुतये | ६९९ |
| त्वमभिधेहि | १२८ |
| त्वमिव कोऽपि | १४० |
| त्वमुचितं नयना | १४० |
| त्वया जगत्युचित | २४५ |
| त्वया निधेया न | १०४ |
| त्वयान्याः क्रीडयन् | ६३६ |
| त्वयापि किं शङ्कित | ९८ |
| त्वया विधातर्य | ४९४ |
| त्वयि न्यस्तस्य | ६३० |
| त्वयि वीरविराजते | ६२ |
| त्वयि स्मराधेः | ११० |
| त्वयैकसत्या | २७६ |
| त्वरस्व पञ्चेषु | २८५ |

पूर्जि–' इति कर्मण्यङ् । आद्रियन्त 'इति दृङ् आदरे' इति तौदादिकान्ङित्वात्तङि प्रथमपुरुषे झे परतः शे विकरणे धातोः 'रिङ् शयक्–' इति रिङादेशे यङादेशे च 'अतो गुणे ६।१।९७' इति पररूपे च रूपं सिद्धम् । बुध्यन्त इति बुधाः 'इगुपध–' इति कः । सितच्छत्रितेत्यत्राचारक्विबन्तात्, 'तत्करोति–' इति ण्यन्ताद्वा निष्ठा । 'निष्ठायां सेटि ९।४।५२' इति णेर्लोपः । ज्वल इत्यत्र 'ज्वलितिकसन्तेभ्यो णः ३।१।१४० ' इति णस्य पाक्षिकत्वात्पचाद्यच् । अस्य महाकाव्यत्वम् 'सर्गबन्धो महाकाव्यम्' इति लक्षणात् । नायकश्चात्र धीरललितः 'निश्चितो धीरललितः कलासक्तः सुखी मृदुः' इति । रसश्चात्र शृङ्गारः । स द्विविधः । संभोगशृङ्गारो विप्रलम्भशृङ्गारश्च । तस्यापरे रसा अङ्गभूताः । एवं सर्वत्र । अस्मिन्सर्गे 'इत्थममुम्' इति यावद्वंशस्थं वृत्तम् ॥ १ ॥

**रसैः कथा यस्य सुधावधीरिणी**
**नलः स भूजानिरभूद्गुणाद्भुतः ।**
**सुवर्णदण्डैकसितातपत्रित-**
**ज्वलत्प्रतापावलिकीर्तिमण्डलः ॥ २ ॥**

**रसैरिति** ॥ 'सर्वं वाक्यं सावधारणं भवति' इति न्यायात्स नल एव भूजानिर्महीपतिरभूत् । नान्य इत्यर्थः । भूर्जाया यस्येति 'जायाया निङ् ५।४।१३४' । स कः । यस्य कथा नवभिः शृङ्गारादिभी रसैः षड्रसां सुधामवधीरयति तिरस्करोतीत्येवंशीला सुधावधीरिणी । सुधायाः षड्रसत्वं व्याख्यातृप्रसिद्ध्या व्याख्यातम् मधुररसयुक्तेव वा यस्य कथा रसैः कृत्वा सुधाया अवधिम् उत्कृष्ट सुधामिति यावत् । तामीरयति क्षिपतीत्येवंशीला । 'सुधावधीरणी' इत्यपि पाठः। तत्रापि स एवार्थः । यद्वा–यस्य कथा रसैर्हेतुभिः सुधाया अवधिः । एतत्परममृतं नास्तीत्यर्थः । 'ढ्रलोपे–' इति दीर्घः । एतेनेन्द्रादिपरित्यागेन नले भैम्यनुरागस्यौचित्यम् । यद्वा—शोभनं धावतीति सुधावा पुण्यसंचारिणी धीर्यस्येति मंत्रशक्तिमत्त्वं तस्य द्योत्यते । रणी नित्यं रणोऽस्यास्तीति । अनेनोत्साहशक्तिमत्त्वम् । भूजानिरित्यनेन प्रभुशक्तियुक्तत्वम् । गुणैः शौर्यादिभिः सन्धिविग्रहादिभिर्वाऽद्भुत आश्चर्यरूपः । अतएव कवेरेतस्य वर्णनं युक्तम् । यद्वा—'रसा, एः' इति पदद्वयम् । यस्य कथा एः कामस्य रसा भूः स्थानम् । सर्वाभिलाषजनिकेत्यर्थः । कीदृशो नलः । सुवर्णेत्यादि । सुवर्णस्य दण्डः सुवर्णदण्डः । एकं च तत्सितं च तदातपत्रं चैकसितातपत्रम् । सुवर्णदण्डश्च एकसितातपत्रं च सुवर्णदण्डैकसितातपत्रे । सुवर्णदण्डैकसितातपत्रे कृते तद्वदाचरिते वा सुवर्णदण्डैकसितातपत्रिते । प्रतापस्यावलिः । ज्वलन्ती चासौ प्रतापावलिश्च ज्वलत्प्रतापावलिः । कीर्तेर्मण्डलं कीर्तिमण्डलम् । ज्वलत्प्रतापावलिश्च कीर्तिमण्डलं च ज्वलत्प्रतापावलिकीर्तिमण्डले । सुवर्णदण्डैकसितातपत्रिते ज्वलत्प्रतापावलिकीर्तिमण्डले येन यस्य वा । यथाक्रमं योजना । पूर्वश्लोके सुधासितच्छत्रे अविशेषेणोक्ते । अत्र तु विशेषेणेत्यपौनरुक्त्यम् । एवमन्येष्वपि पद्येषु विशिष्टार्थप्रतिपादनादपौनरुक्त्यं द्रष्टव्यम् । अथवा शोभमानो न्याय्यो वा द्विजातिवर्णानां दण्डः शासनं यथासंभवं करदानं वा यत्र । तथैकं सितातपत्रं यस्मिंस्तादृशं कृतम् । तथा ज्वलन्त्यौ प्रतापावलिकीर्ती यस्मिन् । यद्वा—प्रतापावलियुक्ता कीर्तिर्यस्मिन् । एवम्भूतम् मण्डलं राष्ट्रं यस्य सः । एतेन पूर्वश्लोकेन सहापौनरुक्त्यम् । प्रतापस्य दण्डत्वनि-

---

१ " चिन्तिपूजिकथिकुम्बिचर्चश्च ३ ।३।१०५ " इति समस्तं सूत्रम् । २ " रिङ्शयग्लिङ्क्षु ७ । ४ । २८ " इति समस्तं सूत्रम् । ३ "इगुपधज्ञाप्रीकिरः कः ३।१।१३५" इति । ४ "तत्करोति तदाचष्टे" इति गणसूत्रेणेत्यर्थः । ५ अत्रानेकेषामर्थानां शाब्दः श्लेषः । यकारादेश्चानेकवारं सन्निकर्षेण प्रयोगादनुप्रासः, सूर्यादिभिरभेदेन वर्णनाद्रूपकातिशयोक्तिः । कथाया आधिक्येनादरास्पदत्वोक्तौ तस्यास्सुधापेक्षयाऽतिशयप्रत्ययः । तयोरुपमानोपमेयभावस्यावाच्यत्वेऽपि व्यङ्ग्यत्वाद्व्यतिरेकस्य व्यङ्ग्यत्वम्, प्रबन्धकथायाः समासतः सूचनं च । अलङ्काराणामन्योऽन्यमनुपकारित्वान्मिश्रणे संसृष्टिश्च । ६ नलस्य कथायां सर्वेऽपि रसा यथायथं लभ्यन्त इत्यभिप्रेत्याह–यस्येति । ७ सुधायां तत्तदास्वादलिप्सापूरकत्वमितिव्याख्यातृणामैतिहासिकानां प्रसिद्धयोक्त्येति भावः ।

१ स्वादैरित्यर्थः । २ सुधायां यावान् मधुरिमा, तावता विशिष्टां सुधामित्यर्थ इत्यभिप्रेत्याह–उत्कृष्टामिति ३" ससजुषोरुः ८ । २ । ६६ " इति रेफे, "रोरि ८।३।१४" इति लुप्ते च ढ्रलोपे पूर्वस्य दीर्घोऽणः६ ३ ।१११"इति पूर्वस्वरस्य दीर्घत्वमित्यत आह"ढ्रलोपे" इति । ४ " भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः " इति नयेन " अत इनिठनौ ५ । २ । ११५ " इतीनो नित्ययोगे विधानात् । ५ ' इकारः कामदेवः स्यात् । इत्यभिधानम् ।

रूपणात्सङ्कोचः प्रतीयते, साऽनौचिती प्रतापस्य व्यापकत्वं विना कीर्तेर्व्यापकत्वमनुपपद्यमानं तद्गमयतीति वर्णसाम्यमात्रेण च दण्डत्वनिरूपणात्परिहरणीया । ज्वलदित्युभयविशेषणम् । अन्यथा कीर्तिमण्डलशब्दस्य पूर्वनिपातः स्यात् । यद्वा कीर्तिं प्रति प्रतापस्य हेतुत्वादभ्यर्हितत्वात्पूर्वनिपातः ॥२॥

पवित्रमत्रातनुते जगद्युगे
स्मृता रसक्षालनयेव यत्कथा ।
कथं न सा मद्गिरमाविलामपि
स्वसेविनीमेव पवित्रयिष्यति ॥ ३ ॥

कविरिदानीं स्वमौद्धत्यं परिहरंस्तस्यैव गुणानुवर्णने कारणमाह—

पवित्रमिति ॥ सो इति संबन्धाद्या इति योज्यम् । या यत्कथा यत्संबन्धिनी कथाऽत्र युगेऽस्मिन्कलियुगे स्मृता स्मर्यमाणा सती जगद् भुवनमा सामस्त्येन पवित्रं तनुते करोति । सा यत्कथा आविलां सदोषां मद्गिरमैपि रसैः श्रृङ्गारादिभिः क्षालनयेवोज्ज्वलीकरणेनेव कथं न पवित्रयिष्यति ? अपि तु पवित्रीकरिष्यत्येव । जगदपेक्षया मद्वचसोऽन्तरङ्गत्वात्,तदेवाह—स्वसेविनीमेव । स्वकथैकतत्परामेवेत्यर्थः । 'वैन्यं पृथुम्—' इत्यादिना स्मरणमाहात्म्यात् । 'कर्कोटकस्य—' इत्यादिना कीर्तनस्यापि माहात्म्यात् । या स्मृता पवित्रयति सा स्मरणपूर्वकं कीर्तिता मद्गिरं कथं न पवित्रयिष्यति । यद्येन सेव्यते तत्सदोषमपि तेन पवित्रीक्रियते । अन्यदपि मलिनं वस्त्रादि रसेनोदकेन या क्षालना तया निर्मलीक्रियते । अपिर्यथापाठमेव वा योज्यः । यद्वा—पवित्रीकरणे कारणद्वयम् । आविलत्वम्, अन्यच्च अन्यसेवाराहित्येन स्वसेवित्वम् । अपिरन्यचेत्यर्थे । 'तत्कथा' इत्यपि पाठः साधुः । पवित्रमिति 'पुवः संज्ञायाम् ३।२।१८५' इति कर्तरीत्रः । इह तु 'पवित्रमिव पवित्रम्' इत्युपचारात् । क्षालनयेति क्षालेश्चुरादेः 'ण्यासश्रन्थो युच् ३।३।१०२' इति युच् । योरनः क्षालनयेवेति 'इवेन समासो विभक्त्यलोपश्च' इति द्वौ ॥३॥

अधीतिबोधाचरणप्रचारणै-
र्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान्कुतः स्वयं
न वेद्मि विद्यासु चतुर्दश स्वयम् ॥ ४ ॥

द्वितीयश्लोके तस्य गुणाद्भुतत्वमुक्तं तदेवाह—

अधीतीति ॥ अयं नलः स्वयमात्मना चतुर्दशसु विद्यासु । अधीतिबोधाचरणप्रचारणैः । अधीतिरध्ययनम्, बोधोऽर्थज्ञानम्, आचरणं कर्मानुष्ठानम्, प्रचारणमध्यापनम्, एतैश्चतुर्भिरुपाधिभिः प्रकारैश्चतस्रो दशा अवस्थाः प्रणयन्कुर्वंश्चतुर्दशत्वं कुतः केन हेतुना कृतवान् इत्यहं न वेद्मि न जाने । अत्र हेतुर्नास्तीत्यर्थः । चतुर्दशसु विद्यासु स्वतश्चतुर्दशत्वे सिद्धेऽपि तत्करणं पिष्टपेषणतुल्यत्वादयोग्यम् । चतुर्दशसु चतुर्दशत्वं धर्मः सिद्ध एव । किंचाधीत्यादिभिश्चतुर्भिः प्रकारैरेकैकस्या विद्यायाश्चतुरवस्थत्वेन षट्पञ्चाशता भाव्यमिति चतुर्दशत्वाक्षेपोऽपि । तस्माचतुर्दशत्वमेव स्वयं ज्ञाता सन्कुतः कृतवानित्यहं न वेद्मीति कवेरुक्तिः इत्याशङ्क्य पुनः स्वयं वदति—चतुर्भिरधिका दशेत्ययमर्थो न चतुर्दशत्वस्य, किंतु चतस्रो दशा अवस्था अधीत्यादयो यासां

१ अत्र प्रतापकीर्त्योर्यथासङ्ख्यं सुवर्णदण्डत्वसितातपत्रत्वाभ्यां रूपणाद् यथासङ्ख्यं रूपकातिशयोक्तिश्च । सुवर्णदण्डसितातपत्रयोः प्रतापावलिकीर्त्तिमण्डलत्वोक्त्या नलस्यैकत्र विराजमानस्यापि शत्रूणां दुष्टानां च सन्तापकत्वं मित्राणां साधूनां च प्रमोदकत्वं चाव्याहतमासीदिति ध्वनितम् । नलस्य भूजानित्वोक्त्या सर्वस्या अपि पृथिव्या एकभोक्तृत्वं, विवाहवर्णनापेक्षयाऽस्य वर्णनस्य प्राक् क्रियमाणत्वेन कविना स्ववर्णनसमयापेक्षयाऽर्वाकृतनत्वं सम्भावयता तदवधि तस्यानूढत्वं च सम्भाविते । भूजानिरित्यादीनां विशेषणानां वर्णनीयोत्कर्षकत्वेन प्रकृतोपस्कारकत्वमिति साभिप्रायाणां तेषां निवेशात् परिकरोऽप्यलङ्कार इत्यूह्यम् ।२'यत्तदोर्नित्यमभिसम्बन्धः' इत्यत आह—सेति । ३ सदोषामपि मद्गिरामिति वा योज्यम् ।

१ तस्य प्रकृतस्य प्रसिद्धस्य वा नलस्य कथेत्यर्थः । २ शोधनरूपवाच्यार्थस्य वस्तुतो जलकर्तृकत्व एव सम्भवात् आस्वादविशेषार्थकरसकर्तृकत्वेनासम्भवाच्चाह—इह त्वित्यादि । ३ "युवोरनाकौ ७।१।१०" इति शास्त्रेण । ४ 'इवेन समासो विभक्त्यलोपः पूर्वपदस्य प्रकृतिस्वरत्वं च' इत्यपि पाठः । अत्र 'नित्यसमासः'इति पाठस्त्वसाधुरेव, आकराद्यनादृतत्वात् । क्षालनयेवेत्युत्प्रेक्षा । यत्तूक्तं जीमूतकारैः—'या स्मृतिमात्रेण शोधिनी सा कीर्तनात् किमुत' इति कैमुत्यन्यायेन शोधकत्वोक्तेरर्थापत्तिरलङ्कारः । इति तत्प्रकाशकारादिसिद्धान्तविरुद्धम् ।

ताश्चतुर्दशास्तासां भावस्तत्त्वम् । तदहं न जाने ? अपि तु जाने एवेति काकुः । एतेन पट्पञ्चाशत्त्वं निरस्तम् । चतुर्भिरधिका दशेत्यपि निरस्तम् । यद्यपि क्षत्रियस्याध्यापने नाधिकारः, तथापि धनादि दत्त्वा ब्राह्मणद्वाराध्यापनं युक्तमिति न दोषः । एतेन चतुर्दशापि विद्यास्तस्य स्फुरन्तीत्युक्तम् । "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" इति याज्ञवल्क्यः । "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्यास्त्वेताश्चतुर्दश ॥" इति मनुः । 'उपाधिर्धर्मचिन्तायां कैतवेऽपि विशेषणे' इति विश्वः। बोधशब्दस्योत्तरेण समासं कृत्वाधीतिशब्देन समासः । अन्यथा बोधस्य पूर्वनिपातः स्यात् । यद्वा—अधीतेरभ्यर्हितत्वात्पूर्वनिपातः 'लट्' इत्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येऽपि शता । तद्योगे च 'न लोका—' इति षष्ठीनिषेधाद्दशा इति द्वितीया । एवं सर्वत्र ज्ञेयम् । चतुर्दशत्वमित्यत्र 'त्वतलोर्गुणवचनस्य' इति पुंवत् । गुणग्रहणेन जातिसंज्ञयोर्निवृत्तिः क्रियते, न शुक्लादिगुणविशेषप्रतिपत्तिः । तथा च—'व्रजति हि सफलत्वं वल्लभालोकनेन' इत्यादयः प्रयोगा युज्यन्ते ॥ ४ ॥

अमुष्य विद्या रसनाग्रनर्तकी
त्रयीव नीताऽङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया
नवद्वयद्वीपपृथग्जयश्रियाम् ॥ ५ ॥

उपवेदानामनन्तर्भावमाश्रित्य विद्यान्तरसम्बन्धं वर्णयितुमाह—

अमुष्येति ॥ अमुष्य नलस्य विद्या मुख्यत्वाद्वेदलक्षणैव नवद्वयद्वीपपृथग्जयश्रियां जिगीषयेव । इत्युत्प्रेक्षा । अष्टादशतामष्टादशप्रकारत्वमगाहत प्राप । यद्यपि विद्याया अष्टादशत्वं स्वत एवास्ति, तथापि साष्टादशविधाप्यनेनाभ्यस्तेत्यभिसंधिः । नवानां द्वयमष्टादश । नवद्वयं च ते द्वीपाश्च तेषां पृथग्भिन्ना या जयश्रियो जयसूचिकाः श्रियः । यद्वा—जयन्तीति जयाः सर्वोत्कर्षेण वर्तमाना याः श्रियस्तासां जेतुमिच्छया । एकया विद्ययैका द्वीपश्रीर्जेतव्या, इत्यष्टादशभिर्विद्याभिरष्टादश द्वीपश्रियः सुखेन जेतुं शक्या इत्यर्थः । यद्वा—अमुष्य या विद् बुद्धिः साष्टादशतामगाहतेति पूर्ववदन्वयः । अष्टादशद्वीपाभिन्नजयश्रियां जिगीषयाष्टादश बुद्धिविशेषा जाता इत्यर्थः । अनया बुद्ध्याऽयं द्वीपो जेतव्य इति । अत एवामुष्यैव रसनाग्रे जिह्वाग्रे नर्तकीव नर्तकी स्फुरद्रूपा, नान्यस्येत्यर्थः। अष्टादश विद्या अस्यैव स्फुरन्ति स्मेत्यर्थः। नर्तक्यप्येका शिरोहस्तादिभिः षड्भिरङ्गैः ग्रीवाबाह्वादिभिः षड्भिः प्रत्यङ्गैर्भ्रूनेत्रादिभिः षड्भिरुपाङ्गैः,विस्तरं नीताऽष्टादशधा भवति । तथा विद्या अपि चतुर्दश पूर्वोक्ताः 'आयुर्वेदो धनुर्वेदो गान्धर्वश्चार्थशास्त्रकम्' इति चतस्रः। एवमष्टादश। द्वीपानामष्टादशत्वमवान्तरलङ्कासिंहलकादिभेदेन भागवतोक्तरीत्या 'अष्टादशद्वीपनिखातयूपः' इति कालिदासोक्त्या च ज्ञातव्यम्। यद्वा—नवद्वयद्वीपानां भिन्ना या जयजनिता नलस्य श्रियस्तासां जेतुमिच्छया वेति गम्योत्प्रेक्षा । नलेनाष्टादश द्वीपा जितास्तेन तस्य तावत्यः श्रियो जातास्तासां जेतुमिच्छया विद्याप्यष्टादशतां प्राप्ता । श्रीसरस्वत्योः सहजविरोधात्सपत्न्योरिव । केव । अङ्गगुणेन षट्सङ्ख्यागुणनेन विस्तरं नीता विस्तारं प्राप्ता त्रयी त्रित्वसङ्ख्याष्टादशत्वं प्राप्नोति। ज्योतिःशास्त्रे त्रित्वं षट्सङ्ख्यया गुणितमष्टादशतां लभते तत्राङ्गशब्देन षट्सङ्ख्या गृह्यते । तया गुणनमावृत्तिः । यद्वा—त्रय्युद्धारोऽथर्ववेदः । स एकः, षडङ्गानि व्याकरणादीनि, गुणा अप्रधानानि पुराणन्यायमीमांसाधर्मशास्त्रायुर्वेदधनुर्वेदगा-

१ तस्य गुणाद्भुतत्वं दर्शयितुमेव तथा वचनात् ।२इतः परम् । 'इति नः' इति पाठस्त्वधिक एव काचित्कः । मूले नञ्द्वयस्यानुपलम्भात् काकैव विवक्षितार्थसम्पत्तेश्च । ३ यथोक्तमत्रिणा—' प्रतिग्रहोऽध्यापनं च तथाऽविक्रेयविक्रयः। याज्यं चतुर्भिरप्येतैः क्षत्रविट्पतनं स्मृतम् ॥' इति ।४ "अल्पाच्तरम् २।२।३४" इति शास्त्रात् ।५ 'अभ्यर्हितं च' इति वार्त्तिकाश्रयणात् ।६ "न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९" इति शास्त्रेणेत्यर्थः । ७ स्वयं स्वयमिति परार्द्धे प्रतिपादान्तं यमनात् पादान्त्यं यमकम् । चतुर्दशसु चतुर्णामुपाधीनां योगेऽपि चतुर्दशत्वानिवृत्युक्तया विरोध आभासते, किं तु नेति विरोधाभासोऽपि। उत्प्रेक्षा तु चिन्त्यैव । आयुर्वेद धनुर्वेदौ —

१ लुप्तोत्प्रेक्षेति पाठस्तु चिन्त्य एव, किं तु व्यङ्ग्योत्प्रेक्षेति स्यात् । २ तासामित्यत्र षष्ठी 'श्रियाम्' इति साधुत्वसमर्थनमात्रपरा, न तु जेतुमित्यन्वयमपेक्ष्य, जेतुमिच्छयेत्युक्तेश्च जिगीषयेति पदस्य व्युत्पत्तिनिदर्शनपरत्वात् 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।' इति निषेधशङ्कनमेवात्रायुक्तम्,एवमग्रेऽपि षष्ठी निर्बाधा । एतेन दाधिमथोक्तं प्रमादेव। ३ विद्यानां शब्दमूलत्वेन शब्दरूपत्वमेवेति विस्तरमिति प्रयुक्तम् विस्तारमिति सामान्याभिप्रायेण ।

गान्धर्वश्चेति ते त्रयः। अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादश स्मृता ।८।

न्धर्ववेदार्थशास्त्रलक्षणान्यष्टौ । तैर्विस्तरं नीता वेदत्रयी यथा । अङ्गानि च गुणाश्चेतेषां समाहारोऽङ्गगुणं तेन।अथ च—स्वादुरसोत्पादनप्रकारकथनद्वारा श्रुता सती लोकस्य रसनाऽग्रे जिह्वाग्रं नर्तयतीति रसनाऽग्रनर्तकी । नलः सूपकारविद्याङ्गानामवयवभूतानां मधुराम्ललवणतिक्तकटुकषायाख्यानां षण्णां रसानां न्यूनाधिकसमत्वरूपेण गुणेनाष्टादशतां प्रापे । यथा मधुरद्रव्ये मधुरद्रव्यान्तरस्य न्यूनः प्रक्षेपः तिक्तेऽधिकः, अम्ले समः, इत्यनेन प्रकारेण सर्वेषां रसानां त्रैविध्येऽष्टादशत्वम् । यद्वा—अङ्गानां दुग्धदध्यादीनाम् । तथा च सूपशास्त्रम्—'दुग्धं दधि नवनीतं घोलवने तक्रमस्तुयुगम् । मध्वाटविकहविष्यं विदलान्नं चेति विज्ञेयम् ॥ कन्दो मूलं शाखा पुष्पं पत्रं फलं चेति । अष्टादशांशं मांसं भक्ष्याण्युक्तानि गिरिसुतया ॥' इति । दध्युदकं मस्त्वित्युच्यते, कणिशभवं व्रीह्यादि, शिम्ब्यादिभवं मुद्गादि, घण्टकभवं चणकादि। इदं त्रिविधं धान्यम् । भूचरखेचरजलचरभेदात्त्रिविधं मांसम् । षड्रसाः । कन्दमूलफलनालपत्रपुष्पमयं षड्विधं शाकम् । इत्येवं धान्याद्यङ्गगुणेन विस्तरं नीता इति केचित् । द्यूतावेशेन बहुभाषिणो नलस्य जिह्वाऽग्रनर्तकी विद्याऽक्षविद्याऽङ्गानां द्विकादीनां गुणेन तद्वशेन विस्तरं नीताष्टादशतां प्राप । चतुरङ्गद्यूते हि द्विकात्रिकचतुष्कपञ्चकैर्मिलितैश्चतुर्दश भवन्ति । तथा चोड्डीयकचतुष्टयमेलनादष्टादश भेदा इति केचित् । सूपशास्त्रविदष्टादशद्वीपजिच्चायमित्यर्थः । नर्तकीत्यत्र 'शिल्पिनि ष्वुन् ३।१।१४५' इति ष्वुन् षित्वान्ङीष् । जिगीषयेत्यत्र 'अप्रत्यात् ३।३।१०२ इत्यप्रत्ययः । विस्तरमित्यत्र 'अशब्दे यत्खावन्यतरस्याम् ।४।३।९४' इति घञो निषेधात् 'ऋदोरप्।३।३।५१' इत्यप् । त्रयीत्यत्र त्रित्वसङ्ख्या इति पक्षे विस्तर इव विस्तरः । तैमित्युपचारः ॥ ५ ॥

दिगीशवृन्दांशविभूतिरीशिता
दिशां स कामप्रसरावरोधिनीम् ।
बभार शास्त्राणि दृशं द्वयाधिकां
निजत्रिनेत्रावतरत्वबोधिकाम् ॥ ६ ॥

प्रकारान्तरेण तस्य शास्त्रमार्गगामित्वं वदति—

दिगीशेति ॥ स नलः शास्त्राण्येव द्वयाधिकां दृशं बभार । शास्त्रलक्षणां द्वयाधिकां चक्षुरविषयभूतस्याप्यर्थस्य ग्रहणादप्यत्राव्यवहितत्वात्तृतीयां दृशं बभार । तृतीयनेत्रे सति हि त्रिनेत्रत्वं भवतीति शास्त्राख्यं तृतीयं नेत्रं बभारेत्यर्थः । किम्भूतां दृशम् । कामस्य स्वेच्छाचारस्य यः प्रसारः प्राबल्यं तस्यावरोधिनीं निवारिकाम् । शास्त्रद्रष्टुः पापकर्मण्यप्रवृत्तेः । अत एव निजस्यात्मनस्त्रिनेत्रावतरत्वस्य त्रिनेत्रस्यैवावतर इत्यर्थस्य बोधिकां ज्ञापिकाम् । त्रिनेत्रोऽपि यथा कामप्रसरं रुणाद्धि स्म, तथाऽयमपि शास्त्राभ्यासाल्लोकानां स्वस्य च स्वेच्छाचारित्वं रुणद्धीत्यर्थः।अवतरो नामोत्पत्तिः। यद्वा—निजः स्वसंबन्धी नित्यः सहजो वा त्रिनेत्रावतरो यस्येति बहुव्रीहिः । तस्य भावस्तत्त्वं तस्य ज्ञापिकाम् किम्भूतो नलः । दिगीशा दिगीशवृन्दांशविभूतिः । इन्द्रादयोऽष्टौ तेषां वृन्दानि तेष्वंशेन लेशेन विभूतिर्यस्य सं नलस्य विभूतिलेशो दिगीशवृन्देषु वर्तत इत्यर्थः । एतत्कुतः । यतोऽयं दिशामीशिता सर्वासां दिशां शासिता । ते त्वेकैकस्या एव दिशः । तस्माच्छास्त्रविरुद्धं किमपि न करोतीत्यर्थः । त्रिनेत्रोऽपि दिगीशवृन्दमंशविभूतिर्यस्य ।' 'यद्यद्विभूतिमत्सत्त्वम्—' इति वचनाद्विष्णोरीश्वरस्यैचाभिन्नत्वात्सर्वासां दिशां शासिता त्रैलोक्यस्वामित्वात् । यद्वा—दिगीशवृन्देऽशेन विभूतिरेकदिग्विभागैश्वर्यं यस्य । यद्वा—दिगीशवृन्दमध्येंऽशो यज्ञादिभागो यस्य। विशिष्टा भूतिरणिमाद्यैश्वर्यं च यस्य । ततः कर्मधारयः । यद्वा—दिगीशा इन्द्रादयोऽष्टौ तेषां वृन्दं तस्यांशैर्मात्राभिर्विशिष्टा भूतिर्जन्म यस्य । 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः' इति मनुः । यद्वा—दिगीशवृन्दांशश्चासौ विभूतिश्च विशिष्टैश्वर्यश्च । अत एव दिशामीशिता इति । एषु कतिपयेष्वर्थेषु नलस्य लोकपालांशत्वप्रतीतेस्त्रिनेत्रावतरत्वस्य

१ बुद्धवानित्यर्थः । २ उपदेशप्रसादादिति शेषः । अन्यथा विस्तरशब्दो न युज्येत । एवमग्रेऽपि । ३ त्रयीवेत्युपमा। उत्प्रेक्षा तु व्यङ्ग्यैव ।

१ अत्रैवं समासे व्यधिकरणो बहुव्रीहिः । दिगीशा अंशविभूतयः अंशोपलक्षितविभूतिरूपा यस्य स इति समासे तु न । एतेन चास्य दिगीशान्तरापेक्षयाऽतिशयः सूचितः।२शासितार इति वचनविपरिणामेनपूर्वतोऽन्वेति। ३ राज्ञ इत्यर्थः । महादेवस्य तु 'यद्यद्विभूतिमत्सत्त्वम्' इत्युक्तनयेन न तथा दिशां शासितृत्वं वाच्यम् । ४ अंशेनोपलक्षितेति भावः । शाकपार्थिवादित्वादुपलक्षितपदलोपः। ५ विशिष्टा भूतिः--सम्पत्तिः ऐश्वर्यमिति यावत्, यस्येतिविभूतिरित्यर्थमभिप्रत्येदमुक्तम् ।

गौणत्वप्रतीतेरसामञ्जस्यम् । मुख्यं तु त्रिनेत्रावतरत्वमत्र सम्पाद्यम्। 'स भूभृदष्टावपि लोकपालाः' इति लोकपालांशत्वं वक्ष्यति । त्रिनेत्रशब्देनात्रेशानव्यतिरिक्तः सर्वेश्वर उच्यत इति तात्पर्यम्। शास्त्राणि दृशामितिपदद्वये लिङ्गवचनभेदेऽपि 'वेदाः प्रमाणम्' इतिवद्विभक्तिरेकैव । यदुक्तम्—' लिङ्गसंख्याविभेदेऽपि स्रुपमानोपमेयता । विभक्तिः पुनरेकैव चोपमानोपमेययोः ॥' इति । नलपक्षे—'दिगीश--' इत्यादौ व्यधिकरणोऽपि बहुव्रीहिः 'सप्तमीविशेषणे बहुव्रीहौ २।२।३५' इति ज्ञापकबलादङ्गीकर्तव्यः। ईशिता इति तृच् । प्रसर इति 'पुंसि सञ्ज्ञायां घः प्रायेण ४।३।११८' इति वचनाद्धः। 'प्रसरं न लभन्ते' इति प्रयोगदर्शनात् । अवरोधिनी इति सुब्ग्रहणादुपसर्गनिवृत्तेस्ताच्छील्यणिनेरयोगादावश्यके णिनिः। भाष्यकारमते तु सुम्मात्रत्वात्ताच्छील्येऽपि भवति । एवमेवंजातीयेऽन्यत्रापि ज्ञेयम्। त्रिनेत्र इति क्षुभ्नादित्वाण्णत्वाभावः। अवतरणमवतर इति भावे'ऋदोरप्२।३।५७' इत्यप्। 'कृत्यल्युटो बहुलम् ३।३। ११३' इति सूत्रादुपरि 'भावे ३।३।१८' इत्याधिकारस्य स्थितत्वात्। 'अवे तॄस्त्रोर्घञ् ३।३।१२०' इति घञि अवतार इति स्यात्। तस्य सञ्ज्ञायां करणाधिकरणयोश्च विधानात्प्रकृते तदभावादवेव । यद्वा—अवतरतीत्यवतरः। त्रिनेत्रश्चासाववतरश्चेति पचाद्याचि ज्ञेयम्। अवतरत्वस्य बोधिकेति शेषषष्ठ्याः समासः, न तु कर्मषष्ठ्याः । 'तृजकभ्यां कर्तरि २।२।८४' इति निषेधात्। नचैवं सति निषेधवैयर्थ्यम् । कारकषष्ठ्याः समासे हि कृदुत्तरपदप्रकृतिस्वरप्रसङ्गः। शेषषष्ठ्यास्तु समासे समासान्तोदात्तत्वमिति स्वरविशेषस्य सत्त्वात्। एतेन 'जानिकर्तुः प्रकृतिः १।४।३० 'तत्प्रयोजको हेतुश्च१।४।५४' इति निर्देशो व्याख्यातः।अनित्यःषष्ठीसमासनिषेध इत्यन्ये। यद्वा—बोधयतीति बोधा इति पचाद्याचि पूर्वेण षष्ठीसमासे समासात्स्वार्थिके कनि 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः १।३।४४' इतीत्वम्। अवतरत्वं बोधयतीति' कर्मण्यण् ३।२।१' इत्यणि ङीपि कनि 'केणः १।४।१३' इति ह्रस्वत्वमिति वा समर्थनीयम् ॥ ६ ॥

**पदैश्चतुर्भिः सुकृते स्थिरीकृते**
**कृतेऽमुना के न तपः प्रपेदिरे।**
**भुवं यदेकाङ्घ्रिकनिष्ठया स्पृश-**
**न्दधावधर्मोऽपि कृशस्तपस्विताम् ॥७॥**

पदैरिति ॥ अमुना नलेन चतुर्भिः पदैश्चरणैः सत्यास्तेयशमदमरूपैस्तपोदानयज्ञज्ञानरूपैर्वा सुकृते धर्मे स्थिरीकृते निश्चलीकृते सति कृते सत्ययुगे के जनास्तपो धर्मं न प्रपेदिरे न प्रापुः ? अपि तु सर्वे धर्मपरा बभूवुः। कृते युगे धर्मस्य चतुष्पात्त्वे सिद्धेऽप्यधर्मस्याप्येकस्य पादस्य सत्त्वाशङ्कायामनेनाधर्मस्यातितरां कृशीकरणद्वारा स्थिरकरणाच्चिवप्रत्ययोपपत्तिः। कुतोऽवगतमेतदित्याह—यद्यस्माद्धर्मविरुद्धोऽधर्मोऽपि तपस्वितां धर्मवत्तां दधौ दधार । अन्ये तपश्चक्रुरिति किमाश्चर्यम्। किं कुर्वन्। एकाङ्घ्रिकनिष्ठया भुवं स्पृशन्। एकोऽङ्घ्रिर्यस्यां सा एकाङ्घ्रिका, सा चासौ निष्ठा स्थितिश्च तया, एकचरणकनिष्ठिकया वा भुवं स्पृशन्। अत एव कृशो दुर्बलः क्षीणः। धर्माधर्मौ चतुष्पादौ । धर्मस्य ज्ञानादयश्चत्वारः पादाः, अधर्मस्य तद्विपरीताः। तत्र कृतयुगे धर्मश्चतुष्पात्, अधर्म एकपात्। अतश्चाधर्मन्यूनत्वमेवाधर्मस्य कृशत्वम्। अथ च दीनत्वम्। अन्योऽपि महांस्तपस्वी पूर्वावस्थो भवति। 'नलस्तु कृतयुगे नाभूत्' इति कश्चित्। तच्च सर्वपुराणेषु कृतयुग एव नलसंभवस्योक्तत्वात्'अवश्यम्भाविभावानां प्रतीकारो भवेद्यदि। प्रतिकुर्युर्न किं नूनं नलरामयुधिष्ठिराः ॥' इति युगक्रमनिर्देशाद्विरुद्धमिति ज्ञातव्यम् । तन्मते शोभनाकृतिः सुकृतिस्तस्याः सुकृतेर्धर्मस्य चतुर्भिश्चरणैर्नलेन त्रेतायामपि कृते कृतयुगे स्थिरीकृते सति धर्मस्य बाहुल्यात्त्रेतायुगमपि कृतयुगमेवेति सविसर्गं पाठमङ्गीकृत्य व्याख्येयम्। यद्वा-अनेन त्रेतायां चतुर्भिः पादैर्धर्मे स्थिरीकृते सति तेन च कृते कृतयुगे जाते सति के न तपः प्रपेदिरे ? यत्र

१ यथाऽत्र वेदानुद्दिश्य प्रमाणत्वं विधेयमिति नान्वयविरोधस्तथा प्रकृतेऽपि शास्त्राभिन्नत्वस्य दृशि सम्भाव्यत्वादुद्देशविधेयभावान्नानुपपत्तिरिति भावः। २ गत्यन्तराभाव एव ज्ञापकशास्त्रमाश्रयणीयमिति, चिन्त्यमिदम्। ३ "क्षुभ्नादिषु च ८।४।३९" इति शास्त्रेण।

१ शास्त्राणां दृक्त्वेन रूपेण रूपकम् त्रिनेत्रेण साम्यस्येत्यादिनाऽसमर्थनात्। २ एवं च सुकृतेरित्यत्र "विसर्गस्य खर्परे शरि वा विसर्गलोपः" इति लोप इत्यत एवोक्तं सविसर्गमिति । अङ्गीकारो हि तथा पदच्छेदावधारणादिति।

चतुष्पाद्धर्मस्तदेव कृतयुगम्। 'तपस्वी चानुकम्पार्हे' इति विश्वः। तपस्वीति 'तपःसहस्राभ्यां विनीनी ५।२।१०२' इति विनिः[1] ॥ ७ ॥

यदस्य यात्रासु बलोद्धतं रजः
स्फुरत्प्रतापानलधूममञ्जिम।
तदेव गत्वा पतितं सुधाम्बुधौ
दधाति पङ्कीभवदङ्कतां विधौ ॥ ८ ॥

यदस्येति ॥ अस्य नलस्य यात्रासु दिग्विजयेषु यद्बलेन सैन्येनोद्धतं रजस्तदेव तद्रज एव विधौ चन्द्रेऽङ्कतां कलङ्कत्वमधुनापि दधाति। किम्भूतं रजः—स्फुरन्प्रकाशमानो यः प्रतापः स एवासह्यत्वादनलोऽग्निस्तस्य यो धूमस्तस्य मञ्जिमेव सौन्दर्यमिव मञ्जिमाऽस्य। तथा—इतो गत्वा सुधाम्बुधौ सुधासमुद्रे पतितं सदत एव पङ्कीभवत्कर्दमीभवत् सुधाम्बुधेश्चन्द्र उत्पन्नस्तत्सम्बद्धः पङ्कश्चन्द्रेऽपि लग्नः स एव कलङ्क इत्यर्थः। आसमुद्रं यात्रा सेनाबाहुल्यं चानेन द्योत्यते। सुधाम्बुधिः क्षीरसमुद्रः। सुधाम्बुधावमृतसमुद्रे इति विधुविशेषणं वा रजसः पङ्कीभवनयोग्यत्वार्थमुक्तम्। अथ च यत्पतितं पातित्यहेतुस्तदन्यस्य निर्मलस्यापि स्वसंसर्गान्मालिन्यं करोति, तदेव दधातीति काकुर्व्यङ्ग्योत्प्रेक्षा वा। "वर्णदृढादिभ्यः ष्यञ्च ५।१।१२३।" इति दृढादेराकृतिगणत्वान्मञ्जिमेत्यत्रेमनिच्[2]। 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२४।' इति लिङ्गात्[3] पतितशब्दः साधुः॥८॥

स्फुरद्धनुर्निस्वनतद्घनाशुग-
प्रगल्भवृष्टिव्ययितस्य सङ्गरे।
निजस्य तेजःशिखिनः परश्शता
वितेनुरिङ्गालमिवायशः परे ॥ ९ ॥

स्फुरदिति॥ परश्शताः शतात्परेऽनन्ताः पर[1] शत्रवः सङ्गरे संग्रामे निजस्य स्वकीयस्य तेजःशिखिनः प्रतापाग्नेरिङ्गालमिव दग्धकाष्ठमिवायशो वितेनुर्विस्तारयामासुः। इङ्गाले भाषाशब्दः[2]। कविभिर्यशो धवलम्, अयशः श्यामं वर्ण्यते। कथम्भूतस्य तेजःशिखिनः—स्फुरदिति। स्फुरन्प्रकाशमानो धनुर्निस्वनः कोदण्डशब्दो यस्य एवंविधश्चासौ स नलश्च स्फुरद्धनुर्निस्वनस्तस्य नलस्य घना निविडा ये आशुगा बाणास्तेषां प्रगल्भा प्रौढा सह्या या वृष्टिस्तया व्ययितस्य निर्वापितस्य। स्फुरन्धनुर्निस्वनो यस्यामिति वृष्टिविशेषणं वा। तस्य नलस्य। अन्यत्पूर्ववत्। यद्वा[3]—धनुर्निस्वनं तनोति विस्तारयति, तयते[4] प्राप्नोति वा धनुर्निस्वनतत्। स्फुरन्प्रकाशमानश्चासौ धनुर्निस्वनतच्च। प्रस्तुतत्वादयमेवेति। तस्य अन्यत्पूर्ववत्। यद्वा—स्फुरन्तौ धनुर्निस्वनौ धनुःसिंहनादौ यस्य स चासौ (स प्रसिद्धश्च) स एव घनो मेघस्तस्याशुगा शीघ्रगामिनी प्रौढा च। अन्यत्पूर्ववत्। शिखिपक्षे तु (यद्वा) स्फुरन्ती इन्द्रधनुर्गर्जिते येषु ते च घना मेघास्तेषामाशुगा शीघ्रगामिनी प्रौढा, आशुगेन वायुना वा प्रौढा या वृष्टिस्तया व्ययितस्य विनाशं प्रापितस्य। निस्वनं तन्वन्तीति निस्वनततः स्फुरद्धनुर्युक्ता निस्वनततश्च ये घना मेघा इति वा। तेजःप्रधानस्याग्नेरिङ्गालः श्याम एव भवति। सर्वे राजानस्तेन जिता इत्यर्थः। 'आशुगौ वायुविशिखौ' इत्यमरः। निस्वनं तनोतीति निस्वनतदित्यत्र पक्षे क्वी 'गमः क्वौ ६।१।४०' इत्यत्र 'गमादीनामिति वक्तव्यम्' इति वचनादनुना-

---

१ कृते कृते इति यमकं, न त्वनुप्रासः, वर्णान्तरसाम्येऽपि प्रकृतानुपस्कारकत्वान्न तत्सम्भवः। कलेरपि तपस्वितासम्भावनार्थं यदिति हेतोरुपन्यासे पूर्वेणाभिन्नार्थतेति काव्यलिङ्गम्। यदित्यनेन तपस्वितायाः सम्भावितत्वाद्वाऽनुमानम्। श्लेषोऽत्रोपस्कारकः। २ यद्यपि न दृढादिराकृतिगणस्तथाऽपि साधुत्वार्थं तथा मन्तव्यमित्यन्यत्। एवमेव तरुणिमेत्यादेरपि साधुत्वं चिन्त्यमेव।३ इदमेव लिङ्गं श्रितादौ कर्त्तरि क्तं पतितशब्दे इडागमं च समर्थयते। अत एव "गत्यर्था— ३।४।७२ इति शास्त्रमन्येभ्योऽपि कर्त्तरि क्तं सम्भावयेदिति चोपादानमिति सुपद्मव्याख्यातारः। युज्यते च 'प्रणतोऽस्मि दिवाकरम्' 'मामुपाश्रिताः' इत्यादिप्रयोगदर्शनात्। एवं सति सुधाऽम्बुधौ इति सप्तमी परमधिकरणविवक्षयेति बोध्यम्। अत्र काव्यलिङ्गं 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम्' इति दर्पणोक्तेः। धूममञ्जिमेत्यत्र लुप्तोपमा, तदेवेत्यङ्कताधारणोत्प्रेक्षणादुत्प्रेक्षा।

१इतः परं पुस्तकान्तरे 'दिग्देशकालवाचिनोः परावरशब्दयोस्सर्वनामसञ्ज्ञेति। अत्र कैयटादयः। देशवाचितया व्यवस्थाविषययोरेव परावरशब्दयोरुपचाराच्छत्रौ प्रतिवादिनि प्रयोग इत्याहुः। वस्तुतस्तु परावरशब्दयोर्देशान्तरनिष्ठत्वादिकमेवार्थः। शत्रुत्वादिरूपस्त्वार्थिकोऽर्थः' इत्यपि पाठः। २ 'कोयला' इत्यर्थक इति भावः। अङ्गारशब्दस्तु अप्रशान्तज्वालदहनावलीढकाष्ठांशपरः। ३ एवं क्लिष्टतां सम्भाव्याह—यद्वेति। ४ 'तय गतौ' इत्यस्य रूपमिदम्।

सिकलोपे तुक्। सञ्ज्ञापूर्वकत्वाच्च 'नहिवृति—' इति दीर्घाभावः। तयतेर्वा क्विपि 'लोपो व्योर्वलि ६।१।६६' इति यलोपे तुक्। शतात्परे इति विगृह्य 'पञ्चमी' इति योगविभागाद्बाहुलकाद्वा समासे 'राजदन्तादिषु परम् २।२।३१' इति परनिपाते पारस्करादित्वात्सुटि श्चुत्वे च 'परश्शताः' इति सिद्धम्[1]॥ ९॥

अनलपदग्धारिपुरानलोज्ज्वलै-
र्निजप्रतापैर्वलयञ्ज्वलद्भुवः।
प्रदक्षिणीकृत्य जयाय सृष्टया
रराज नीराजनया स राजघः॥ १०॥

अनल्पेति॥ स राजघो राज्ञो (एव) हन्ति, नतु क्षुद्रान्, राज्ञां हन्ता नलो नीराजनया आरार्तिकेन रराजे शुशुभे। किम्भूतो नलः—जयाय विजयाय भुवो वलयं मण्डलं प्रदक्षिणीकृत्य स्थितः। किम्भूतया नीराजनया सृष्टया कृतया। पुरलोकैरिति शेषः। किम्भूतं वलयम्—निजप्रतापैः स्वकीयैस्तेजोभिर्ज्वलत्प्रकाशमानम्। किंभूतैर्निजप्रतापैः अनल्पानि बहूनि दग्धान्यरिपुराणि वैरिनगराणि यैस्तेऽनल्पदग्धारिपुराः, ते च तेऽनला वह्नयस्तैरुज्ज्वला दीप्यमानास्तैः। भूरितरैरित्यर्थः। तेजसस्तेजोऽन्तरसंयोगे भूयस्त्वं भवति। अनलवदुज्ज्वलैरिति वा। यद्वा—किम्भूतया नीराजनया—उक्तविशेषणैर्निजप्रतापैरेव सृष्टया नलेनैव कृतया। किंभूतं वलयम्—ज्वलन्नलेनैव देदीप्यमानम्। शोभमानमित्यर्थः। अत एव राज्ञामभावो नीराजं, नीराजकरणं नीराजना इत्यत्र 'अव्ययंविभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २।१।६' इत्यभावेऽव्ययीभावः। 'अनश्च' ५।४।१०८' इति टजन्तात् 'तत्करोति तदाचष्टे' इति ण्यन्ताद्युच्। प्रचुरज्वालितवैरिनगराग्निवद्दीप्तैः स्वीयक्षात्त्रतेजोभिर्दीप्तं भूमण्डलं जयाय जेतुं परिभ्रम्य स्वैरेव प्रतापैः सृष्टया नीराजनया राजाभावकरणेन स रेजे इति भावः। जयाय भूमण्डलं परिक्रम्य यद्राजाभावकरणं तेन रेजे इति वा। यद्वा—ज्वलत्प्रकाशमानं जयाय जेतुं प्रदक्षिणीकृत्य स्वीयक्षात्त्रतेजोभिः कृतया नीराजनया आरार्तिकविधानेन स रेजे। प्रतापैर्नीराजनयेति व्यस्तरूपकं वा। अत्र ज्वलद्भूमण्डलं जेतुं प्रदक्षिणीकृत्य सृष्टया, अर्थान्नलेनैवेति व्याख्येयम्। यद्वा—स्वीयतेजोभिः पुरलोकैर्वा जयस्यार्थे आगमने कृतया, जये सत्ययेन शुभावहविधिना हेतुना कृतयेति वा। (गमनागमनयोर्नीराजनं क्रियत इति लोकाचारः) नलस्य जयं प्राप्तुं कृतया इति वा। जयार्थे जयादागमने सृष्टया। अस्मिन्पक्षे पुरा लोकैः कृतया इत्यन्वयः। विजयाय लोकैः सृष्टया नीरस्य शान्त्युदकस्याजनी[1] क्षेपणा तया वा। यद्वा—नलस्योज्ज्वलैः शृङ्गारभूतैर्निजप्रतापैः, अनल्पानि दग्धान्यरिपुराणि यासु ता अनल्पदग्धारिपुराः। अत एव ज्वलन्तीर्देदीप्यमाना भुवो वैरिदेशान् वलयन् स्वाधीनीकुर्वन्। यद्वा—किंभूतं वलयन्—अनल्पा दग्धारयो यस्मिंस्तदनल्पदग्धारि। अस्मिन्पक्षे पुरा सृष्टया कृतया इत्यन्वयः। यद्वा—किंभूतो नलः—अनल्पा दग्धा आ समन्तात् रिपुरायो रिपुद्रव्याणि[2] येन स तथा। 'शृङ्गारः शुचिरुज्ज्वलः' इत्यमरः। वलयञ्ज्वलदित्यत्र पक्षे परसवर्णः। पक्षान्तरे तु श्चुत्वम्। 'राजघ इत्युपसङ्ख्यानम्' इति निपातितः। जयायेति 'तुमर्थाच्च भाववचनात् २।३।१५' इति चतुर्थी। यद्वा—स राज्ञां हन्ता नलः अजया लक्ष्म्या आय विष्णवे सृष्टया नीराजनया रेजे। राज्ञो[4] विष्णुरूपत्वाल्लक्ष्म्या नीराजना क्रियते। यतः कारणात्प्रदक्षिणा प्रकृष्टा दक्षिणा दातृत्वं येषां ते प्रदक्षिणा वदान्यास्ते सन्ति यस्य स प्रदक्षिणी। अतिवदान्या अप्येतस्यानुचराः इत्ययं वदान्यतम इत्यर्थः। यद्वा प्रकृष्टदक्षिणाः[3] ज्योतिष्टोमादयो यस्य सन्तीति प्रदक्षिणी। अत एव कृती कर्मकुशलः॥ १०॥

निवारितास्तेन महीतलेऽखिले
निरीतिभावं गमितेऽतिवृष्टयः।
न तत्यजुर्नूनमनन्यविश्रमाः
प्रतीपभूपालमृगीदृशां दृशः॥ ११॥

निवारिता इति॥ अतिवृष्टय ईतयः प्रतीपभूपालमृ-

---

१ 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६।३।११६' इति प्राप्तस्य दीर्घत्वस्याभाव इत्यर्थः। २ अत्र रूपकोत्प्रेक्षयोः सङ्करः।

---

१ "अज गतौ क्षेपणे च" इत्यर्थमभिसन्धाय 'अजना' इत्युक्तम्। २ 'अर्थरैविभवा अपि' इत्यमरोक्त्या रैशब्दो विभवार्थकः। ३ प्रकृष्टा दक्षिणा यत्र ते प्रदक्षिणास्ते ज्योतिष्टोमादय इत्यभिसन्धायेदमुक्तम्। ४ राजेत्यस्य त्रिरावृत्त्या यमकं शब्दालङ्कारः। नीराजनदीपानां प्रतापाध्यवसायोक्त्या रूपकातिशयोक्तिरर्थालङ्कारः, वस्तुतो वा नीराजनाया असत्त्वेऽपि प्रतापैरेव तथाऽऽराध्यमानत्वं सम्भावयितुं तथोक्तिरित्यपह्नुतिः।

गीदृशां प्रतीपा वैरिणो ये भूपाला राजानस्तेषां मृगीदृशो नायिकास्तासां दृशो नेत्राणि नूनं प्रायेण न तत्यजुर्न मुमुचुः। नूनमुत्प्रेक्षायां वा । ईतयस्तस्य राष्ट्रे न सन्तीत्यर्थः । किम्भूता अतिवृष्टयः—तेन नलेनाखिले महीतले निवारिताः प्रतिषिद्धाः।निष्कासिता इत्यर्थः।किंभूते महीतले निरीतिभावं निर्गता ईतयो यस्मात्तन्निरीति तस्य भावस्तम् । गमिते प्रापिते । अतः अनन्यविश्रमा न विद्यतेऽन्योऽन्यत्र वा विश्रमो विरामस्थानं यासां ताः । अनेन सर्वेऽपि शत्रवो निहता इत्युक्तम्। यच्च येन निष्कास्यते तत्तद्वैरिणमाश्रयति । स्त्रीणां च स्त्रिय एव शरणमित्युक्तिः । 'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥' विश्रम इत्यत्र 'नोदात्तोपदेशस्य मान्तस्यानाचमेः १ । ३ । ३४' इति वृद्धिनिषेधः ॥ ११ ॥

**सितांशुवर्णैर्वयति स्म तद्गुणै-**
**र्महाऽसिवेम्नः सहकृत्वरी बहुम् ।**
**दिगङ्गनाङ्गावरणं रणाङ्गणे**
**यशःपटं तद्भटचातुरीतुरी ॥ १२ ॥**

सितेति ॥ तद्भटचातुरीतुरी तद्गुणै रणाङ्गणे यशःपटं वयति स्म। तस्य नलस्य भटाः । यद्वा—स चासौ भटश्च तेषां तस्य वा चातुरी युद्धनैपुण्यं सैव तुरी निष्पन्नवस्त्रवेष्टनदण्डस्तस्य नलस्य गुणैः, तैः प्रसिद्धैर्वा शौर्यादिगुणैः । अथ च गुणैस्तन्तुभिः सङ्ग्रामाङ्गणे यशोलक्षणपटं विस्तारितवती। निरमासीदित्यर्थः। किम्भूतैर्गुणैः—सितांशुः चन्द्रः तद्वद्वर्णः सारूप्यं येषां तैः । धवलैरित्यर्थः । कीदृशी—महान् योऽसिः खड्गः स एव वेमा वयनकाष्ठं तस्य सहकृत्वरी सहकारिणी । किम्भूतं यशःपटम्—बहुं महापरिमाणम् । अत एव दिश एवाङ्गनाः तासां यान्यङ्गानि तेषामावरणम् आच्छादकम्। सर्वदिग्व्याप्यस्य यश आसीदित्यर्थः। 'परपरिभवि तेजस्तन्वतामाशु कर्तुं प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि' इति न्यायेन भटैरेव नलशौर्यं विनैव वैरिणा हताः। दिग्व्यापि यशो नलस्याकारीति भावः । तन्तुवायतुर्याः सकाशादियं तुरी अन्यादृशी।स प्रत्येकमावरकमनेकं पटं वयति । इयं तु तद्विपरीता इति व्यतिरेकः । वेमा पुंसि । वयति स्म इति 'लट् स्मे ३।२।११८' इति भूते लट् । सहकृत्वरीति 'राजनि युधि कृञः ३ । २ । ९५' इति वर्तमाने 'सहे च ३ । २ । ९६' इति क्वनिपि 'वनो र च ४ । १ । ७' इति ङीप्रौ । चातुर्यमेव चातुरी ष्यञः पित्त्वान्ङीष् ॥ १२ ॥

**प्रतीपभूपैरिव किं ततो भिया**
**विरुद्धधर्मैरपि भेत्तृतोज्झिता ।**
**अमित्रजिन्मित्रजिदोजसा स य-**
**द्विचारदृक्चारदृगप्यवर्तत ॥ १३ ॥**

प्रतीपेति ॥ विरुद्धधर्मैरपि मिथोविरोधिस्वभावैरपि धर्मः स्वभावः ततो नलाद्भिया भयेन भेत्तृता विरुद्धत्वमुज्झिता किम् ? कैरिव—प्रतीपभूपैरिव प्रतिकूलराजभिर्यथा भेत्तृता उपजापकारित्वं त्यक्ता । उपजापोऽन्तर्भेदः । कुत एतज्ज्ञातमत आह—यद्यस्मात्स नल ओजसा अमित्रजित् अमित्रान् वैरिणो जयतीत्यमित्रजित्। तथा ओजसा तेजसा मित्रजित् (सूर्यमपि जयतीति) अवर्तत आसीत् । स चारदृगपि विचारदृगवर्तत । चारा एव दृग्यस्य स चारदृक् । विगता चारा एव दृग्यस्य स विचारदृक् । योऽमित्रजित्स मित्रजित्कथम्, यश्चारदृक्स विचारदृक्कथमिति विरुद्धधर्मास्तैर्भेत्तृतोज्झिता । कथम्—तेजसा मित्रजित्तेजसा मित्रं सूर्यं जयतीति मित्रजित्, तथा विचारः शास्त्रमेव, विवेको वा दृग्यस्य स विचारदृक् । चारा एव दृग् यस्य स चारदृक् । अपिश्चार्थे विरुद्धपक्ष उभयत्रापि योज्यः । अथ च विरुद्धत्वम्—अमित्रजिद्यः स मित्रजित्कथम्, असुहृदं यो जयति स सुहृदं कथं जयति । अथ च यः असूर्यं जयति स सूर्यं कथं जयतीति विरोधः । तत्परिहारः पूर्वव्याख्यानात् । विचारं पश्यतीति विचारदृग्वा । 'चारैः पश्यन्ति राजानः' इति एतेन शत्रुजित्त्वं तेजस्वित्वं शास्त्रमार्गगामित्वं चोररक्षणत्वं च व्यक्तीकृतम् । एतेन विजिगीषुत्वं नलस्य द्योतितम् 'अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथाऽरिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोश्च पृष्ठतः ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ॥' इति द्वादशराजमण्डली ।

---

१ लकारादेरनिशं साम्यादनुप्रासः । प्रतिवृष्ट्युपद्रवस्य शमितत्वेऽपि स्थितत्वोक्त्या विरोधाभासः । प्रतीपाङ्गनाः परं रुरुदुरित्यनभिधाय तथाऽभिधानादपह्नुतिश्च ।

१ अत्र रूपकम्, तेन चैतदीययशसः सर्वत्र व्याप्तत्वं सूचितमिति पर्य्यायोक्तम् ।

तत इति 'भीत्रार्थानां भयहेतुः १।४।२५' इत्यपादानत्वम् ॥ १३ ॥

तदोजसस्तद्यशसः स्थिताविमौ
वृथेति चित्ते कुरुते यदा यदा ।
तनोति भानोः परिवेषकैतवा-
त्तदा विधिः कुण्डलनां विधोरपि ॥ १४ ॥

तदोजस इति ॥ विधिर्ब्रह्मा यदा इति पूर्वोक्तं चित्ते मनसि कुरुते विचारयतीत्यर्थः । तदा तदा भानोः सूर्यस्य विधोरपि चन्द्रस्य च परिवेषकैतवात्परिवेषव्याजात्कुण्डलनां वैयर्थ्यसूचकं रेखामण्डलं करोति । इतीति किम्—तदोजसो नलप्रतापस्य, तद्यशसो नलयशसश्च स्थितौ सत्यामिमौ सूर्याचन्द्रमसौ वृथा निष्प्रयोजनाविति, तदोजसस्तद्यशसश्च हेतोरिमौ वृथा स्थिताविति वा । सूर्याचन्द्राभ्यां यत्करणीयं तन्नलतेजोयशोभ्यामेव क्रियते । सूर्यतुल्यं चन्द्रतुल्यं चास्मिन्द्वयम्।परिवेषस्य कादाचित्कत्वात् 'यदा यदा' इत्युक्तम् । कैतवादितिभावे युवादित्वादण् । वृथा लिखितग्रन्थस्य कुण्डलनया यथा लोपः क्रियते तथेत्यर्थः ॥ १४ ॥

अयं दरिद्रो भवितेति वैधसीं
लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।
मृषा न चक्रेऽल्पितकल्पपादपः
प्रणीय दारिद्र्यदरिद्रतां नृपः ॥ १५ ॥

तस्य वदान्यत्वं वर्णयति—अयमिति ॥ स नृपो नलोऽर्थिजनस्य याचकजनस्य ललाटे जाग्रतीं वैधसीं ब्राह्मीमिति लिपिं मृषा मिथ्या न चक्रे, किंतु षष्ठ्यां ब्रह्मणा लिखितत्वात्सत्यामेव चकार । इतीति किम्—अयं याचकलोको दरिद्रो निर्धनो भविता भावीति वैधसी लिपिः । तर्हि तस्यानौदार्यत्वप्रतीतेः कथं वदान्यत्वमित्याशङ्क्योक्तिभङ्ग्या समाधत्ते—किं कृत्वा—दारिद्र्यदरिद्रतां प्रणीय दारिद्र्यस्यैव दरिद्रता राहित्यमित्यर्थः, तां प्रणीय निर्माय । वैधसीं लिपिं मृषा न चकारेत्यर्थः । यतोऽल्पितोऽल्पीकृतः कल्पपादपः कल्पवृक्षो येन । कथम्—कल्पवृक्षो याचितमेव ददाति, नलस्त्वयाचितमपि । अतो वदान्यतम इत्यर्थः । नलराज्ये कोऽपि दरिद्रो नाभूदित्यर्थः । यद्वा—अकल्पितं धनं दत्त्वा ब्राह्मीं लिपिं मृषा न चक्रे, अपि तु कृतवानेवेति काकुः । अल्पित इति 'तत्करोतितदा चष्टे' इति ण्यन्तान्निष्ठा ॥ १५ ॥

विभज्य मेरुर्न यदर्थिसात्कृतो
न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।
अमानि तत्तेन निजायशोयुगं
द्विफालबद्धाश्चिकुराः शिरःस्थितम् ॥ १६ ॥

प्रकारान्तरेण पुनरपि नितरां वदान्यत्वमाह—विभज्येति॥तेन नलेन तत्तस्मात्कारणाद् द्वाभ्यां बालाभ्यां भागाभ्यां बद्धाः संयमिताश्चिकुराः केशा एव निजं स्वीयमयशसोः अकीर्त्योर्युगममान्यमन्यत । शिरसि सीमन्तस्योभयभागे स्थिताः केशा न भवन्ति, किंत्वकीर्तिद्वयमेव । तत्किम्—यद्यस्मान्मया नलेन मेरुर्हेमाद्रिर्विभज्य खण्डशो विधायार्थिसाद् याचकायत्तः अर्थ्यधीनो देयो वा न कृतः । तथा सिंधुः समुद्र उत्सर्गजलव्ययैर्दाने क्रियमाणे ये जलव्यया जलदानानि तैर्मरुर्निर्जलदेशो न कृतः । दानं हि जलपूर्वकं भवति । यद्वा—मरुरुत्सर्गजलव्ययैः सिंधुर्न कृतः । तदकरणलक्षणापयशःस्थाने द्विफालबद्धाः केशा एव जाता इत्यर्थः । सर्वस्वदानेऽपि यावदेतद्द्वयं न कृतं तावन्नलो न तुतोषेति भावः । एतेनास्यायशोलेशोऽपि नास्तीति सूचितम् । लौकिकोक्तिरपि—'अपकीर्तिः शिरसि स्थिता' इति । अर्थिसादित्यत्र 'तदधीनवचने, ५।४।५४' 'देये त्रा च ५।४।५५' इति सातिः । फालशब्दः पात्रादिः ॥ १६ ॥

---

१ अत्र श्लेषः, मित्रादिशब्दानाभिन्नत्वेऽपि, अभिन्नार्थत्वेनेव गुम्फनात्, तन्मूलो विरोधाभासः, भूपैरिवेत्युपमा, तन्मूलोत्प्रेक्षा च यमकं च शब्दालङ्कारः, न चात्र कथितपदत्वम् । २ तेजःकान्त्योरिति शेषः । ३ अत्र कैतवापह्नुतिः, कैतवपदं प्रयुज्य स्थितस्य परिवेषरूपस्य वस्तुनोऽपह्नवने कवेः संरम्भात् । न चात्र प्रतीपम्, सूर्याचन्द्रमसोरुपमानत्वं कल्पयित्वाऽऽक्षेपाद्यभिधानात् । अनुप्रासश्च शब्दालङ्कारः, स 'ते नो' आदेरनेकत्र सत्त्वात् ।

१ अत्र 'प्रणीयाल्पितकल्पपादपः' इति काव्यलिङ्गम्, अयं महोदारत्वेऽपि याचकानां दारिद्र्यलेखमपरिमार्ज्य विधेर्मानं रक्षितवानिति भङ्ग्या महोदारत्वेन याचकानां दारिद्र्यलेखं परिमार्जितवान्, विधेर्मानं च निराकृतवानित्यर्थस्य बोधितत्वात् प्रतीपं च । २ अत्र फालद्वयेन बद्धयोः केशावल्योरयशोयुगत्वोत्प्रेक्षणादुत्प्रेक्षा,तस्याश्च हेतुहेतुमद्भावेन स्थितेः काव्यलिङ्गं हेतुमान् वा । तथाऽयशस्वित्वोक्त्या महोदारताया एव प्रत्यायनेन यशस्वितां प्रत्याय्य लोकोत्तरदानोत्साहित्वं सूचितमिति व्याजस्तुतिश्च ।

अजस्रमभ्यासमुपेयुषा समं
मुदैव देवः कविना बुधेन च ।
दधौ पटीयान् समयं नयन्नयं
दिनेश्वरश्रीरुदयं दिने दिने ॥ १७ ॥

अजस्रमिति ॥ अयं देवो राजा नलो दिने दिने प्रतिदिनमुदयमधिकामभिवृद्धिं दधौ । किं कुर्वन्—कविना काव्यकर्त्रा बुधेन विदुषा वैयाकरणेन च समं सह मुदैव हर्षेणैव समयं कालं नयन्गमयन् । किम्भूतेन कविना बुधेन च—अजस्रं सर्वदाऽभ्यासं काव्यकवनशास्त्रमननव्यसनमुपेयुषा प्राप्तवता । 'अभ्याशम्' इति पाठे नलसान्निध्यम् । कीदृक् सः—पटीयान् कवित्वाद्यभ्यासवान्, आक्षेपादिसमर्थश्च । पुनः किम्भूतः—दिनेश्वरश्रीः दिनेश्वरः सूर्यः तद्वत् श्रीः शोभा यस्य । अत एव दिनेश्वरोऽपि कविना शुक्रेण बुधेन चन्द्रपुत्रेण सह प्रातरादिसमयं कुर्वन् पटीयांस्तेजस्वी तमोनाशने समर्थः प्रतिदिनमुदयं धत्ते । 'बुधशुक्रौ सदा पूर्वोत्तरराशिस्थौ, एकराशिस्थावेव वा प्रायेण' इति ज्योतिर्विदः । यद्वा—ताभ्यां समं समयं सम्यङ्क्रम् अयं शुभावहविधिं यन्प्राप्नुवन्नयं प्रतिदिनमुदयं न दधौ, अपि तु दधावेव । 'अभ्यासो व्यसनेऽन्तिके' इति विश्वः । अजस्रमिति नञ्पूर्वाज्जसेः 'नमिकम्पिस्म्यजसकमहिंसदीपो रः ३।२।१६७' इति रः । उपेयुषेति 'उपेयिवाननाश्वाननूचानश्च ३।२।१०९' इति साधुः । उपेयुषेत्यादौ सममिति सहार्थयोगे तृतीया ॥ १७ ॥

अधोविधानात्कमलप्रवालयोः
शिरःसु दानादखिलक्षमाभुजाम् ।
पुरेदमूर्ध्वं भवतीति वेधसा
पदं किमस्याङ्कितमूर्ध्वरेखया ॥१८॥

तस्य सामुद्रिकलक्षणवत्त्वमाह—अधोविधानादिति॥ किमिति सम्भावनायाम् । वेधसा ब्रह्मणा अस्य नलस्य पदं चरण इति हेतोरूर्ध्वरेखया लक्षणभूतया अङ्कितं चिह्नितं किम् ? इतीति किम्—इदं नलपदं कमलप्रवालयोः पद्मपल्लवयोः कमलविद्रुमयोर्वा अधोविधानात् अरुणत्वस्निग्धत्वमृदुत्वैरधःकरणाद्धिक्कारात्, तथा—अखिलक्षमाभुजां समस्तभूभृतां शिरःसु दानात्स्थापनाक्रमेणोर्ध्वमुत्कृष्टमुपरि च पुरा भवति भविष्यति । 'यावत्पुरा—' इत्यादिना लट् । राज्ञां शिरःसु दानं नामाक्रम्य वर्तनम् ॥ १८ ॥

जगज्जयं तेन च कोशमक्षयं
प्रणीतवाञ्शैशवशेषवानयम् ।
सखा रतीशस्य ऋतुर्यथा वनं
वपुस्तथाऽऽलिङ्गदथास्य यौवनम्॥१९॥

अस्य वयःसन्धिमाह—जगदिति ॥ अयं नलः शैशवशेषवाञ्शैशवस्य शेषो विद्यते यस्यैवंभूतः षोडशाब्ददेशीयो जगतः समग्रस्य भूमण्डलस्य जयं विजयं प्रणीतवान् कृतवान्।तेन च विजयेन कोशं भाण्डारगृहमक्षयं परिपूर्णं कृतवान् । तेन चेति पदेनानुपङ्क्तिकत्वं लक्षणया द्योत्यते । दानशूरस्य तस्य पूर्वमेवोक्तत्वाद्भाण्डारगृहस्याक्षयत्वमानुषङ्गिकं, न तु मुख्यमिति भावः । नत्वव्ययभावत्वेन राजनीतिश्च । एतेन शत्रुराहित्यं सूचितम् । दमयन्तीलाभस्त्ववशिष्यते । अथ जगज्जयानन्तरं यौवनं तारुण्यमस्य वपुः शरीरं तथा आलिङ्गत् । अयं यौवनं प्रापेत्यर्थः । शरीरं कर्तृ । यौवनं कर्मीभूतं प्राप्नोति वा । अनेन नलवपुरेव यौवनमलंकृतं न तु तत्तेन । यथा रतीशस्य कामस्य सखा मित्रमृतुर्वसन्तो वनमाश्लिष्यति, तथा स्वत एव रमणीयं वनं वसन्त उद्दीपयति तथा यौवनं कर्तृ शरीरं कर्म उद्दीपयति स्म । शरीरमपि सौन्दर्यात्कामस्य मित्रम् । रतीशस्य ऋतुरित्यत्र 'ऋत्यकः ६।१।१२८' इति प्रकृतिभावः ॥ १९॥

अधारि पद्मेषु तदङ्घ्रिणा घृणा
क्व तच्छयच्छायलवोऽपि पल्लवे ।
तदास्यदास्येऽपि गतोऽधिकारितां
न शारदः पार्विकशर्वरीश्वरः ॥ २० ॥

शरीरवर्णनमेव प्रक्रमते—अधारीति ॥ तदङ्घ्रिणा तच्चरणेन पद्मेषु कमलेषु घृणा जुगुप्सा दया वा अधारि अकारि । पद्मो नलचरणात्, नलचरणस्य वा मा

१ 'अयः शुभावहो विधिः' इत्यमरः । २ 'इणू' इत्यतः शतरि कृते तस्यैव रूपम् । ३ अत्र नाञि काकुः । ४ अत्र श्लिष्टोपमा लुप्तोपमा च सहोक्तिस्तु आनुषङ्गिकी ।

१ अयं शुभलक्षणलक्षित आसीदित्यभिधेयमनुक्त्वा भङ्ग्यन्तरेण तत्रैव तात्पर्यमभिसन्धायोक्तत्वात् पर्यायोक्तम् । २ अत्र 'सखा' इत्यतः प्रागेव लेख्यमप्यथेति पदं परत्र लिखितमित्यक्रमत्वं दोषः । उपमाऽलङ्कारस्तु स्पष्ट एव ।

येषाम्, सामुद्रिकलक्षणत्वेन पदि मान्तीति वा । मम शोभालाभेन यानि सलक्ष्मीकानि मामाश्रित्यैव यानि वर्तन्ते तैः सह स्पर्धा मया कथं कार्या । क्रमेण स्वतो निःशोभत्वाज्जुगुप्सा, आश्रितत्वाच्च करुणा । पश्चात्तच्चरणशोभाधिकेत्यर्थः । पल्लवे प्रवाले तच्छयच्छायलवोऽपि तस्य नलस्य शयो हस्तः तस्य च्छाया कान्तिः तच्छयच्छायं तस्य लवो लेशोऽपि क्व ? कुतः—यतः पदो लवः पल्लवः शरीरनिकृष्टावयवचरणशोभालेशो यत्र वर्तते तत्र शरीरोत्कृष्टावयवपाणिशोभालेशोऽपि कथम् । हीनेन सह साम्यायोगादित्यर्थः । एतेन पल्लवात्तत्करशोभाधिकेत्यर्थः । किंच शारदः शरादि भवो निर्मलः पार्विकः पर्वणि पूर्णिमायां भवः सम्पूर्णकलः शर्वरीश्वरो निशानाथश्चन्द्रस्तस्य नलस्यास्यं मुखं तस्य दास्येऽपि सेवकत्वेऽप्यधिकारितां पात्रत्वं न गतो न प्राप्तः किमुत तत्साम्यम् । चन्द्रस्य शरत्पूर्णिमासंयोगाद् रमणीयत्वम्,आस्यस्य तु स्वत एव । शारदत्वादधृष्टत्वादग्रे स्थातुमशक्यत्वात्साम्यं न लेभे इति वा रमणीयनायकस्य रमणीयेनैव दासेन भाव्यम् । न चास्य पूर्वोक्तप्रकारेण तुल्यत्वम् । अतो दासत्वमपि न प्रापेति भावः । निर्मलत्वात्सम्पूर्णत्वात्कलङ्कस्यास्पष्टत्वात्, स्त्रीप्रधानत्वाद्वा । अस्य चतुःषष्टिकलत्वात् । 'शारदः पीतमुद्गे स्याच्छालीनेऽप्रतिभे नवे' । तच्छयच्छाय इति 'विभाषा सेनासुराच्छायाशालानिशानाम् २।४।२५' इति नपुंसकत्वम् । शारद इति भवार्थे 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ४।३।१६' इत्यण् । पार्विक इति भवार्थे 'कालाट्ठञ् ४।३।११' इति ठञ् 'पार्वणः' इति पाठे सम्बन्धेऽणि 'अन् ६।४।१६७' इति प्रकृतिभावः॥२०॥

किमस्य लोम्नां कपटेन कोटिभि-
र्विधिर्न लेखाभिरजीगणद्गुणान् ।
न रोमकूपौघमिषाज्जगत्कृता
कृताश्च किं दूषणशून्यबिन्दवः ॥२१॥

प्रकारान्तरेण सामुद्रिकलक्षणवत्त्वमाह—किमिति ॥ विधिर्ब्रह्मा रोम्णां कपटेन मिषेण सार्धत्रिकोटिभी रेखाभिरस्य नलस्य गुणाञ्शौर्यौदार्यादीन् किं नाजीगणत्?अपि तु गणयामासेति काकुः।गुणगणनया गणकेन ब्रह्मणा लेखा एव लिखिताः, न तु रोमाणि । अनेन सर्वगुणवत्त्वं तस्य द्योतितम् । दोषराहित्यमाह—जगत्कृता ब्रह्मणा रोमकूपौघमिषाद्रोमकूपसमूहव्याजेन दूषणशून्यबिन्दवो दूषणानां शून्यान्यभावास्तज्ज्ञापका बिंदवश्च न कृताः किम् अपि तु कृता एव। यत्र किमपि न तत्र ज्योतिर्विद्भिः शून्यसूचको बिंदुः क्रियते, तथा रोमकूपा अपि वर्तुला बिंदुत्वेनोत्प्रेक्ष्यन्ते। अयं रोमकूपो न, किंतु दोषराहित्यसूचका बिंदव एव लिखिताः । 'तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे' इति तावन्तः कूपा इति 'रोमैकैकं कूपके पार्थिवानाम्' इति सामुद्रिकलक्षणं सूच्यते । अजीगणत्।ण्यन्ताच्चाङि द्वित्वे 'ई च गणः ७४।९७'॥२१॥

अमुष्य दोर्भ्यामरिदुर्गलुण्ठने
ध्रुवं गृहीतार्गलदीर्घपीनता ।
उरःश्रिया तत्र च गोपुरस्फुर-
त्कपाटदुर्धर्षतिरःप्रसारिता ॥ २२ ॥

अमुष्येति ॥ अमुष्य नलस्य दोर्भ्यामरिदुर्गलुण्ठनेऽरीणां दुर्गाणि गिरिप्राकारास्तेषां लुण्ठने बलाद् ग्रहणे क्रियमाणे सति, अर्गलदीर्घपीनतार्गलस्येव दीर्घं च तत्पीनं च, तस्य भावस्तत्ता । कर्मधारयो द्वन्द्वो वा । सा गृहीता ध्रुवं गृहीता ननु ध्रुवं प्रायेण वा । तत्र च तत्रैवारिदुर्गलुण्ठन एवामुष्योरःश्रिया वक्षःस्थलशोभया गोपुरे स्फुरद्दीप्यमानं यत्कपाटं तस्य दुर्धर्षता कठिनता तिरःप्रसारिता विशालता च गृहीता किम् । अनेन तस्याजानुबाहुत्वं व्यूढोरस्कत्वमनाकलनीयत्वं च ध्वनितम् । लुण्ठने समर्थ एवाग्रणीर्भवति पुरोवर्ति सारं वस्तु गृह्णाति। 'तद्विष्कम्भोऽर्गलं न ना' इति,'पुरद्वारं तु गोपुरम्' इति चामरः । उभयत्र कर्मधारयात्तल् ॥ २२ ॥

स्वकेलिलेशस्मितनिन्दितेन्दुनो
निजांशदृक्तर्जितपद्मसम्पदः ।
अतद्वयीजित्वरसुन्दरान्तरे
न तन्मुखस्य प्रतिमा चराचरे ॥ २३ ॥

स्वकेलीति ॥ तन्मुखस्य प्रतिमा स्वरूपमुपमानं चराचरे स्थावरजंगमात्मके जगति नास्ति । चन्द्रपद्मे

१ 'तस्येदम् ४ । ३ । १२० ' इति शास्त्रेण कृते । २ अत्रानुप्रासः प्रथमेऽर्द्धे दुःश्रवत्वग्रस्तएवेति न स्थाने । उत्तरस्मिंस्तु स्यात्।वक्तव्यस्यार्थस्य समर्थनाय विशेषणादिना हेतोः सूचयितव्यत्वेऽप्यसूचनान्निर्हेतुत्वं च दोषः ।

१ अत्र कैतवापह्नुत्यनुप्राणितोत्प्रेक्षा । २ पीनत्वादेरन्यदीयस्य धर्मस्यान्येन ग्रहीतुमशक्यत्वेऽपि तथोक्तावुपमा पर्यवसयित इति निदर्शना । ध्रुवमिति तथोत्प्रेक्षणादुत्प्रेक्षा वा ।

उपमानं चेत्तत्राह—कथम्भूतस्य तन्मुखस्य—स्वेति। स्वा स्वकीया केलिः क्रीडा तस्या लेशो लवभूतं यत् स्मितं तेन निन्दितो निर्जित इन्दुर्येन तत्। तथा निजः स्वकीयोंऽशो भागस्तद्रूपे ये दृशी नेत्रे ताभ्यां तर्जिता निर्भर्त्सिताऽधःकृता पद्मानां संपत्समूहः सौभाग्यं वा येन। चन्द्रपद्मातिरिक्तमन्यदुपमानं भविष्यतीति चेत्तत्राह—अतद्द्वयीति चराचरविशेषणम्। तयोश्चन्द्र-पद्मयोर्द्वयी तद्द्वयी तस्या जित्वरं जयनशीलम्। न विद्यते तद्द्वयीजित्वरं सुन्दरान्तरमन्यत्सुन्दरं वस्तु यस्मिन् जगति मुखस्योपमानं द्वयम्। चन्द्रः, पद्मं च। तदतिरिक्तं वस्त्वन्तरं नास्ति। 'तद्द्वयमेतन्मुखेनांशभूतेन स्मितेन चक्षुर्द्वयेन च निर्जितमिति। समग्रस्य तन्मुखस्योपमानं नास्तीत्यर्थः। 'चराचरं स्याज्जगति' इति विश्वः। जित्वरमिति 'इण्नशजिसर्त्तिभ्यः क्वरप् ३।२।१६३' इति क्वरप्।अन्यत्सुन्दरं सुन्दरान्तरम्। मयूरव्यंसकादित्वात्समासः। चराचरे इति पक्षे 'सर्वो द्वंद्वो—' इत्येकवद्भावः॥ २३॥

सरोरुहं तस्य दृशैव निर्जितं
जिताः स्मितेनैव विधोरपि श्रियः।
कुतः परं भव्यमहो महीयसी
तदाननस्योपमितौ दरिद्रता॥ २४॥

पूर्वोक्तमर्थं पुनरप्याह—सरोरुहमिति॥ तस्य नलस्य मुखावयवभूतया दृशैव सरोरुहं पद्मं निर्जितम्। स्मितेनैव विधोरपि चन्द्रस्यापि श्रियो जिताः। परं पद्मचन्द्रातिरिक्तमन्यद्भव्यं सुन्दरं वस्तु कुतः कुत्रत्यम्। अत एव तदाननस्य नलाननस्योपमितावुपमाने महीयसी महती कवीनां दरिद्रता। अहो महदाश्चर्यम्। अत्यन्ताभाव इत्यर्थः। 'महीयसाम्' इति पाठे महीयसां कवीनां दरिद्रता। भव्यम् 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ३।४।६८' इति निपातनात्साधु। यो हि यस्मान्निकृष्टो भवति स तेन दृशैव भर्त्स्यते, स्मितेन स्वल्पोपहासेनैवाधः क्रियते चे॥२४॥

१ अत्र परिकरानुप्राणितं प्रतीपम्। तेनचानुमिते रूपणादनुमानम्। २ उपमानभूतसरोरुहाद्यपेक्षया दृगाननोत्कर्षोक्त्या व्यतिरेकः। सम्भवतोऽपि साम्यसम्बन्धस्यासम्भवत्वेन निदर्शनस्य व्यतिरेकोपकारित्वात्तद्रूपा वा निदर्शना।

स्ववालभारस्य तदुत्तमाङ्गजैः
समं चमर्येव तुलाभिलाषिणः।
अनागसे शंसति वालचापलं
पुनः पुनः पुच्छविलोलनच्छलात्॥२५॥

स्ववालेति॥ एवशब्दोऽप्यर्थः। चमरी पशुरपि पुनः पुनः पुच्छविलोलनच्छलात्पुच्छस्य विलोलनं चालनं तदेव छलं व्याजो मिषं तस्मात् स्ववालभारस्य स्ववालाः केशास्तेषां भारः समूहस्तस्यानागसेऽपराधभावाय वालचापलं वालश्चपलो भवतीति तस्य चापलमपराधो नेति माता यथा शंसति तद्वच्चमरी लाङ्गूलचालनव्याजेन स्ववालभारस्यापराधो नास्तीति कथयति। कथमपराधित्वं तस्येत्यत आह—किम्भूतस्य स्ववालभारस्य—तदुत्तमाङ्गजैः समं तस्योत्तमाङ्गं शिरसि जाताः केशास्तैः सह तुलाभिलाषिणस्तुलां साम्यमभिलषतीत्येवंशीलस्तस्य। स्वयं वालः सन्महतां साम्यमिच्छति तदा तन्माता वालेनाज्ञानादेवेदं कृतं क्षम्यतामिति वदति तद्वच्चमरी। वालभारस्येति ववयोरभेदात्। उत्तमाङ्गजैरिति 'सप्तम्यां जनेर्डः३।२।९७ 'इतिडः अमूर्धमस्तकात् स्वाङ्गादकामे ६।३।१२' इति प्राप्तोऽप्यलुग् बाहुलकान्न भवति। अनागसे इति 'क्रियार्थोप—'इत्यादिना, 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्'इति सम्प्रदानत्वे वा चतुर्थी। चपलशब्दस्य गुणवाचित्वाच्चापल्यमिति ष्यञा भाव्यम्। तथाऽपि युवादित्वादणि चापलमिति साधु॥ २५॥

महीभृतस्तस्य च मन्मथश्रिया
निजस्य चित्तस्य च तं प्रतीच्छया।
द्विधा नृपे तत्र जगत्त्रयीभुवां
नतभ्रुवां मन्मथविभ्रमोऽभवत्॥ २६॥

महीति॥ तत्र नृपे नले जगत्त्रयीभुवां त्रिलोकीसमुत्पन्नानां नतभ्रुवां सुन्दरीणां ( पूर्वार्धोक्तेन प्रकारेण ) द्विधा मन्मथविभ्रमः कामजनितो विभ्रमोऽभवज्जातः। विशिष्टो भ्रमो विभ्रमः, विलासश्च। कामस्य विशिष्टो भ्रमः, कामजनितो विलासश्च। तदुभयं कथमित्यपेक्षायां यथाक्रमेणाह—तस्य महीभृतो राज्ञो नलस्य मन्मथश्रिया

१ अत्र विलोलनच्छलादिति कैतवापह्नुतिः। ववयोः सावर्ण्येनार्थद्वयश्लेषणाच्छ्लेषश्च। शंसतीवेत्येवं प्रतीत्या गम्योत्प्रेक्षा च इवादेरप्रयोगात्।

कामश्रीसदृशशोभत्वेन स्वीयान्तःकरणे मदनोऽयमिति भ्रान्तिः—तथा । निजस्य स्वस्य च चित्तस्यान्तःकरणस्य तं प्रति नलं प्रतीच्छया अत्यभिलाषेण कामजनितो विलासः कटाक्षादिरिति कामजन्यविभ्रमद्वैविध्यम् । महीभृत इति संबन्धषष्ठ्या मन्मथपदेनान्वयात्, नृपे इति विषयसप्तम्या मन्मथविभ्रमपदेनान्वयान्नात्र पौनरुक्त्यम् । चौ परस्परसमुच्चये । जगत्त्रयीभुवामिति सामान्येनोक्ते पतिव्रतादिरहितानामिति ज्ञेयम् । एवं 'न का निशि—' इत्यादावपि ज्ञेयम् । यद्वा—मन्मथश्रियैव इति चकारमेवकारार्थं व्याख्याय द्वितीयं समुच्चयार्थं व्याख्याय पतिव्रतानां मन्मथोऽयमिति निराभिलाषो विशिष्टो भ्रमो जातः । अन्यासां तु तं प्रतीच्छयापीति द्वैविध्यमित्यनौचितीं परिहरणीया 'विभ्रमो भ्रान्तिहावयोः' इति विश्वः । मननं मत् शास्त्राद्यभ्यासजन्यं ज्ञानं मथ्नातीति मन्मथः । 'मूलविभुजादिभ्यः कः' इति कः ॥ २६ ॥

निमीलनभ्रंशजुषा दृशा भृशं
निपीय तं यस्त्रिदशीभिरर्जितः ।
अमूस्तमभ्यासभरं विवृण्वते
निमेषनिःस्वैरधुनाऽपि लोचनैः ॥२७॥

इदानीं क्रमेण देवनागमर्त्याङ्गनानां कामविभ्रमं श्लोकत्रयेणाह-निमीलनेत्यादिना ॥ त्रिदशीभिर्देवाङ्गनाभिः योऽभ्यासभरोऽभ्यासातिशयो निमीलनभ्रंशजुषा निमीलनस्य नेत्रसङ्कोचस्य भ्रंशोऽभावस्तं जुषतीति निमीलनभ्रंशजुट् तया दृशा तं नलं निपीय सादरं दृष्ट्वार्जितः कृतः । अमूस्त्रिदश्यस्तमभ्यासभरं निमेषनिःस्वैः निमेषदरिद्रैर्लोचनैरधुनाप्यद्यापि विवृण्वते प्रकटयन्ति । देवाङ्गनानां स्वत एव निर्निमेषत्वं नलावलोकने उत्प्रेक्षणीयमित्युत्प्रेक्षितम् । यदत्यन्तमभ्यस्तं तत्कदाऽपि न विस्मर्यते । त्रिदशीति पुंयोगलक्षणो वा ङीष् ॥ २७ ॥

---

१ नले मान्मथ्याः श्रियः सम्बन्धासम्भवेऽपि सम्बन्धप्रतिपादनात्सम्बन्धातिशयोक्तिः । मन्मथपदस्य द्विःप्रयोगात् कथितपदत्वं तु न योगेन पूर्वत्र मतो (मननस्य) मथनकर्तृत्वेन प्रयोगात्, परत्र रूढ्या कामवाचकत्वेन प्रयुक्तत्वात् । २ सिद्धस्यापि निर्निमेषत्वस्य तथाऽपह्नवनादपह्नुतिः ।

अदस्तदाकर्णि फलाढ्यजीवितं
दृशोर्द्वयं नस्तदवीक्षि चाफलम् ।
इति स्म चक्षुःश्रवसां प्रिया नले
स्तुवन्ति निन्दन्ति हृदा तदात्मनः ॥२८॥

अद इति ॥ चक्षुःश्रवसां नागानां प्रियाः स्त्रियो नले नलनिमित्तमात्मनस्तद्दृशोर्द्वयमिति पूर्वोक्तप्रकारेण हृदा मनसा स्तुवन्ति स्म निन्दन्ति स्म च । इतीति किम्—अद इदं नोऽस्माकं दृशोर्द्वयं तदाकर्णि तं नलमाकर्णयतीत्येवंशीलं सत् फलाढ्यजीवितं फलेनाढ्यं जीवितं यस्य । सफलजीवितामित्यर्थः । तदवीक्षि तं नलं न वीक्षते एवंभूतं सत् अफलं निष्फलमिति । पाताले स्थितत्वान्नलाकर्णनं भवति,न तु वीक्षणम् ॥ २८ ॥

विलोकयन्तीभिरजस्रभावना
बलादमुं नेत्रनिमीलनेष्वपि ।
अलम्भि मर्त्याभिरमुष्य दर्शने
न विघ्नलेशोऽपि निमेषनिर्मितः ॥२९॥

विलोकेति ॥ मर्त्याभिर्मानुषीभिरमुष्य दर्शनेऽवलोकने निमेषनिर्मितो नेत्रनिमीलनरचितो विघ्नलेशोऽपि नालम्भि न प्रापि । किंभूताभिर्मानुषीभिः—अजस्रभावनाबलादजस्रं निरन्तरं या भावना वासना, चिन्तनं वा तद्वशादमुं नलं नेत्रनिमीलनेष्वपि नेत्रसंकोचेष्वपि सत्सु विलोकयन्तीभिः पश्यन्तीभिः यो हि यं स्मरति स नेत्रगोचराभावेऽपि तमेव पश्यति । मर्त्याभिरिति योपधत्वान्न ङीष् । अलम्भि इत्यत्र 'लभेश्च' इत्यनुवृत्तौ 'विभाषा चिण्णमुलोः' इति नुम् ॥ २९ ॥

न का निशि स्वप्नगतं ददर्श तं
जगाद गोत्रस्खलिते च का न तम् ।
तदात्मताध्यातधवा रते च का
चकार वा न स्वमनोभवोद्भवम् ॥३०॥

---

१ अत्र सिद्धस्य चक्षुःश्रवस्त्वस्य स्तुतिनिन्दार्हत्वेन समर्थनात् काव्यलिङ्गम् । सफलस्यैव विफलत्वमसम्भवमिति तथाऽपि वर्णनाद्विरोधाभासः, चक्षुःश्रवसामित्यस्य साकूतमुक्तत्वात्परिकरश्च । २ नेत्रनिमीलने विलोकनमसम्भवीति विरोधाभासः, निर्विघ्नदर्शनरूपस्य कार्यस्य प्रतिबन्धकत्वेन निमेषरूपकारणसत्त्वेऽपि सम्पत्त्या विभावना, निमेषरूपस्य कारणस्य सत्त्वेऽपि वा विघ्नितदर्शनरूपस्य कार्यस्यासम्पत्त्या विशेषोक्तिः । एतयोश्च सन्देहसङ्कर इति दिक् ।

इदानीं पतिव्रताव्यतिरिक्तानां सर्वासामपि मुग्धादिक्रमेण नलेऽनुरागमाह—नेति ॥ का स्त्री निशि स्वप्नगतं रात्रौ स्वप्नप्राप्तं तं नलं न ददर्श, अपि तु सर्वाअपि ददृशुरित्यर्थः। का च गोत्रस्खलिते नामव्यत्यये नामभ्रान्त्यौ तं नलं न जगाद, अपि तु सर्वाअपि जगदुः। च परंरते सम्भोगे तदात्मताध्यातधवा तस्य नलस्यात्मा स्वरूपं यस्य तस्य भावस्तत्ता नलस्वरूपवत्त्वं तया नलस्वरूपेण ध्यातो धवः प्रियो यया सैवंभूता सती का वा स्वमनोभवोद्भवं स्वस्य मदनोद्भूतिं न चकार, अपि तु सर्वा अपि चक्रुः। स्वेस्वे प्रिये नलभावं कृत्वा रेमिर इत्यर्थः।क्रमेण मुग्धादीनां नले चित्तासङ्गो दर्शितः। वहयो युवतयो नलमेव स्वप्नगतं ददृशुरित्यर्थः। 'नाम गोत्रं कुलं गोत्रं गोत्रस्तु धरणीधरः' इति यादवप्रकाशः ॥ ३० ॥

> श्रियाऽस्य योग्याऽहमिति स्वमीक्षितुं
> करे तमालोक्य सुरूपया धृतः।
> विहाय भैमीमपदर्पया कया
> न दर्पणः श्वासमलीमसः कृतः ॥३१॥

इदानीमन्यस्त्रीणां तदयोग्यत्वप्रतिपादनपुरःसरं भैमीप्रसङ्गं करोति—श्रियेति॥कया सुरूपया स्त्र्या भैमीं विहाय त्यक्त्वा दर्पण आदर्शः श्वासमलीमसः श्वासेन मुखवायुना मलिनो न कृतः, अपितु भैमीव्यतिरेकेण सर्वाभिरपि कृतः। अयोग्यत्वात्। किम्भूतो दर्पणः—तं नलं चित्रादावालोक्य इति विचार्य स्वमात्मानम् अपि ईक्षितुं अवलोकयितुं करे हस्ते धृतः। इतीति किम्—श्रिया शोभयाऽस्य नलस्याहं योग्या सदृशी स्यामिति काकुः। किम्भूतया तया—अपदर्पया गतदर्पया तमालोक्य गतगर्वया इति वाऽन्वयः। भैमीं त्यक्त्वा सर्वा अपि गतगर्वा जाता इति भावः। 'प्राप्तरूपसुरूपाभिरूपा बुधमनोज्ञयोः।' इत्यमरः। विहायेति ल्यबन्तसरूपो निपातो विनाऽर्थे द्रष्टव्यः। तद्योगे च 'ततोऽन्यत्रापि दृश्यते' इति वचनाद्भैमीमिति द्वितीया,शिष्टप्रयोगात्।'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ५।२।११४' इति मलीमसो निपातितः ॥ ३१ ॥

> यथोह्यमानः खलु भोगभोजिना
> प्रसह्य वैरोचनिजस्य पत्तनम्।
> विदर्भजाया मदनस्तथा मनो(ऽ-)
> नलावरुद्धं वयसैव वेशितः ॥ ३२ ॥

नले भैमीमनोऽभिलापमाह—

यथेति॥वयसा पक्षिणा गरुडेनैवोह्यमानः प्राप्यमाणो मदनः प्रद्युम्नः प्रसह्य बलात्कारेण वैरोचनिजस्य पत्तनं बलिपुत्रस्य बाणस्य शोणितपुरं नगरं यथा गरुडेनैव प्रवेशितस्तथा वयसैव तारुण्येनैव विदर्भजाया दमयन्त्या मनः कर्म प्रसह्य शैशवसमयं क्रान्त्वा मदनः प्रवेशितः। खलु वाक्यालंकारे, प्रसिद्धौ वा। किंभूतेन गरुडेन—भोगभोजिना भोगं सर्पशरीरं भुङ्क्ते एवंशीलस्तेन। तारुण्यपक्षे—भोगं सुखं भुङ्क्ते भोजयति वा तच्छीलेन। किम्भूतं पत्तनम्—अनलेनाग्निनावरुद्धं समन्ततो व्याप्तम्। भैमीमनःपक्षे—नलेन संबद्धमाक्रान्तम्। चित्रादौ दृष्टं श्रुतं च नलं मनसि निधाय कामपीडिता जातेत्यर्थः। कामः कीदृक्—तारुण्यविहङ्गमानस्तक्र्यमाणः। प्रसह्येति हठार्थेऽव्ययम्। पक्षे सहेर्ल्यप्। 'बाणासुरकन्याविवाहेऽनिरुद्धे श्रीकृष्णनप्तरि बाणेनावरुद्धे नारदवचनाद्बलप्रद्युम्नसहितः श्रीकृष्णो गरुडमारुह्यानिरुद्धमोचनार्थं शोणितपुरं गतः' इति विष्णुपुराणम्। 'भोगिभोजिना' इति पाठे भोगिनः सर्पान्, भोगयुक्तान्विलासिनश्चेति। 'खगबाल्यादिनोर्वयः' इत्यमरः ॥ ३२ ॥

> नृपेऽनुरूपे निजरूपसम्पदां
> दिदेश तस्मिन् बहुशः श्रुतिं गते।
> विशिष्य सा भीमनरेन्द्रनन्दना
> मनोभवाज्ञैकवशंवदं मनः ॥ ३३ ॥

तमेव प्रकारमाह—नृप इति ॥ सा भीमनरेन्द्रस्य नन्दना दमयन्ती तस्मिन्नृपे नले मनो विशिष्य अन्यस्त्रीभ्यः सकाशादतिशयेन,अन्यनृपेभ्य आकृष्य वा दिदेश

---

१ 'निजस्य चित्तस्य च तं प्रतीच्छया' इत्युक्तदिशा सर्वासां सुन्दरीणां प्रायो नलेऽनुरागं आसीदिति स्थितौ इदं वचनम्। २ दर्शनादिव्यापारनिर्देशानुसारेणेत्यर्थः। ३ विशेषणस्य साभिप्रायत्वात् परिकरः मुग्धाऽऽदीनां नलं प्रति दर्शनादिक्रियैर्वैचित्र्यस्य यथासङ्ख्यं निदर्शनं प्रतीयत इति व्यङ्ग्यं यथासङ्ख्यम्।

१ पद्येत्यस्य पादद्वये यमनाद् यमकम्।अनेकवारं वर्णव्यादनुप्रासश्च। २ अत्र श्लिष्टोपमा, श्लिष्टैर्विशेषणैरौपम्यसमर्थनात् वयसोर्भिन्नत्वेऽपि अभिन्नत्वाध्यवसायेनोक्त्या तन्मूलाऽतिशयोक्तिस्तस्या एवोपस्कारिकेति बोध्यम्।

निदधौ । किम्भूते नृपे—निजरूपसम्पदां स्वकीयसौन्दर्याधिक्यानामनुरूपे योग्ये । रूपं च सम्पदश्चेति तासामनुरूप इति वा । तथा बहुशोऽनेकवारं श्रुतिं श्रवणगोचरं गते प्राप्ते । किम्भूतं मनः—मनोभवस्य कामस्य आज्ञाया एकं मुख्यं वशंवदं प्रवणम्, कामाज्ञाकारकमित्यर्थः । मदनायत्तत्वान्नल एव संलग्नमित्यर्थः। बहुश इति 'संख्यैकवचनाच्च वीप्सायाम् ५।४।४३' इति शस् । नन्दना इति नन्द्यादित्वाल्ल्युः । वशंवदमिति 'प्रियवशे वदः खच् ३।२।३८' 'अरुर्द्विषदजन्तस्य मुम् ६।३।६३' इति मुम् ॥ ३३ ॥

**उपासनामेत्य पितुः स्म रज्यते**
**दिने दिने साऽवसरेषु बन्दिनाम् ।**
**पठत्सु तेषु प्रतिभूपतीनलं**
**विनिद्ररोमाऽजनि शृण्वती नलम्॥ ३४॥**

मनोनिवेशनक्रममाह—

उपासनामिति ॥ सा भैमी ( स्वावसरं त्यक्त्वा ) दिने दिने प्रतिदिनं पितुरुपासनां सेवामित्यागत्य वन्दिनामवसरेषु समयेषु रज्यते स्म अनुरक्ता बभूव, नले ऽनुरक्ताऽऽसीत् । तेषामवसरे नलस्यैव लोकोत्तरत्वेन गुणाकर्णनात् । तदेवाह—तेषु वन्दिषु प्रतिभूपतीनन्यान्राज्ञः पठत्सु स्तुतिपूर्वकं वदत्सु सत्सु सा भैमी नलं शृण्वती सती अलमत्यर्थं विनिद्ररोमा अजन्युत्पुलका जाता । श्रवणानुरागः सात्त्विको भावश्च दर्शितः । उपासनामिति 'ण्यासश्रन्थो युच् ३।३।१०७' इति युच् । रज्यते इति स्वरितेतो दैवादिकस्य रञ्जे रूपम् । भूपतीन्प्रतीति लक्षणे कर्मप्रवचनीयत्वम् । विनिद्ररोमा इति नान्तं डाबन्तं वा । अजनीति 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३।१।६१' इति कर्तरि च्चिणि 'जनिवध्योश्च ७।३।३५' इति निषेधाद्वृद्ध्यभावः ॥३४॥

**कथानुषङ्गेषु मिथः सखीमुखा-**
**तृणेऽपि तन्व्या नलनामनि श्रुते ।**
**द्रुतं विधूयान्यदभूयतानया**
**मुदा तदाकर्णनसज्जकर्णया ॥ ३५ ॥**

नलेऽतीवानुरक्ताऽऽसीदित्याह—

कथेति ॥ मिथः परस्परं रहसि वा कथाऽनुषङ्गेषु सखीमुखात्तृणेऽपि विषये नलनाम्नि तन्व्या दमयन्त्या श्रुते सति अनया भैम्या मुदा हर्षेण तस्य नलनाम्न आकर्णने श्रवणे सज्जौ तत्परौ कर्णौ यस्या एवंविधयाऽभूयत जातम्, किं पुनर्वाच्यं नलनृपाकर्णने सज्जकर्णेति । किं कृत्वा—अन्यत् कथाऽन्तरं कार्यान्तरं वा द्रुतं झटिति विधूय परित्यज्य, एता मयि स्नेहान्नलराजकथा एव कथयन्ति इति ज्ञात्वेत्यर्थः । 'मिथोऽन्योऽन्यं रहस्यपि' इत्यमरः । 'नलः

---

१ "जीवातुकारास्तु" बहुशः—बहुभ्य इति 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५ । ३ । ४२' इत्यतः शस्" इत्याहुः, एषामयम्भावः—सभायामितस्ततः समागतेभ्यो बहुभ्यो बन्द्यादिभ्यः सकाशात्तद्रूपसम्पदां कीर्त्तनेन तस्य श्रुतिविषयत्वं गतत्वमिति यथोक्तमिति । वस्तुतस्तु निजा सहजा या रूपसम्पदस्तासामनुरूपे—गुणान्तरशालिताऽतिशयेन पात्रतां लब्धुं योग्ये, तथैव च बहुशः—बहुवारं श्रुतिं गते, नृपे—सर्वोपद्रवनिवर्त्तनपुरःसरं सर्वाभिलषितार्थपूरणेन मनुष्यमात्रस्य रक्षके नले विषये, सा प्रसिद्धा—निजरूपसम्पदामनुरूपत्वेन प्रसिद्धा । अमनोभवा—कन्दर्पवासनाशून्या, अथ च ज्ञा विदुषी स्त्रिया हि पतिव्रतया भाव्यमिति धर्मं जानन्ती ( अपि ), भीमनरेन्द्रस्य नन्दना, जन्मान्तरीयसंस्कारवशात् एकस्य, जन्मान्तरीयस्य पत्युः, यद्वशंवदं—स्वाभाविकतयाऽनुगतं मनः, अत एव विशिष्य—वैशिष्ट्यमवलम्ब्य पारकीयत्वादिलाञ्छनामपहायेति यावत्, स्थितम्मनो दिदेश-जन्मान्तरीय संस्कारवशादेव निदधौ इति भावः। एवं च यथा नलो लोकोत्तरसौन्दर्यशाल्यासीत्तथैव लोकोत्तरेभ्योऽन्येभ्योऽपि गुणेभ्यः सम्पन्न एवासीत्, दमयन्त्याश्च विवाहात्पूर्वमेव यत्तस्मिन्मनोनिधानं, तत् नलस्यैव पूर्वस्मिन्नपि जन्मनि पतित्वेन तत्र स्वाभाविकीं तां प्रवृत्तिं निरोद्धुमक्षमणादिति तत्त्वम् । 'पूर्वं रक्ता भवेन्नारी' इति समयेन नलापेक्षया दमयन्त्याः प्रथममनुरागोदयश्च युक्त इति कविना समवधार्यैवोपक्रान्तामिति बोध्यम् ।

१ 'नित्यवीप्सयोः ८ । १ । ८ इति द्विर्भावः ।' २ तथा पठ्यमानांस्ताननादृत्येति भावः । ३ अत्र परार्द्धे नलं नलमिति प्रतिपादं निवेशनाद् यमकम् । जन्मान्तरवंशात्तिरोहितोऽप्यस्या नलेऽनुरागो वन्दिभिर्नृपान्तरगुणेषु कीर्त्यमानेष्वपि नृपान्तरेऽप्रवृत्य नल एव मनसः प्रवृत्तेः सात्त्विकतयैवाभूदिति भावः । ४ कथानां—तत्तच्चरितवर्णनानाम्, येऽनुषङ्गाः प्रसङ्गा अवसरा इति यावत् तेषु कथाप्रसङ्गेष्विति पाठान्तरम्, अर्थस्त्वेक एव ।

पोटगले राशि' इति विश्वः। तन्व्या इति। विरहव्यथया कृशत्वम्। अभूयत। भावे यगात्मनेपदे ॥ ३५ ॥

स्मरात्परासोरनिमेषलोचना-
द्बिभेमि तद्भिन्नमुदाहरेति सा।
जनेन यूनः स्तुवता तदास्पदे
निदर्शनं नैषधमभ्यषेचयत् ॥ ३६ ॥

नलः कन्दर्पात्सौंदर्ये न न्यून आसीत्, किंतु तथाभूत एवेत्याह—

स्मरादिति ॥ सा भैमी इति पूर्वोक्तेन विन्यासेन यूनस्तरुणान् स्तुवता जनेन सख्यादिना प्रयोज्येन नैषधं नलं तदास्पदे मदनस्थाने निदर्शनं दृष्टान्तमभ्यषेचयत्स्थापयामास, नलमेव मदनमिव परं सुंदरं दृष्टान्तत्वेन बोधितवतीति भावः। इतीति किम्—हे जन, परासोः परागता असवः प्राणा यस्य तस्मान्मृतात्, अत एवानिमेषलोचनान्निमेषरहितनेत्रात्स्मरात्कामादहं बिभेमि, तत्तस्माद्भिन्नमन्यं दृष्टान्तमुदाहर वद इति पृष्टेन तेन जनेन नलं दृष्टांतेन स्थापयामास। अन्यस्योपमानस्याभावान्नलमेव दृष्टांतं जनो ददातीत्यर्थः। जीवंस्तु सौंदर्ये नल एव साम्प्रतं तादृगित्युत्तरं लब्धवतीति भावः। तस्मात्स्मराद्भिन्नमित्येकं पदं वा। देवत्वादनिमेषत्वं मृतत्वेनोत्प्रेक्षितम्। मृतस्य राजादेः स्थानेऽन्योऽभिषिच्यते, इति मदनस्य परासुत्वोत्तरं नलस्यैव तदासनारूढत्वं सम्पद्येत इति तयोक्तम् स्मरादिति' भीत्रार्थानांभय हेतुः १।४।२५'इत्यपादानम्।आस्पदे इति'आस्पदं प्रतिष्ठायाम् ६।१।१४६' इति साधुः। नैषधमिति निषधानामयमिति संबन्धमात्रेऽण्। प्रकरणादिना स्वस्वामिभावाधिगतिः। निषधानां राजा इत्यर्थे तु जनपदलक्षणोऽञो बाधके नादित्वात् 'कुरुनादिभ्यो ण्यः ४।१।१७२' इति ण्ये नैषध्यमिति स्यात्। अभ्यषेचयदित्यत्र 'प्राक्सितादड्व्यवायेऽपि ८।३।६३' इति षत्वम् ॥ ३६ ॥

१ वस्तुतस्तु लोकोत्तरलावण्यायास्तस्यास्तन्वीत्वं प्रशस्ततनुत्वमभिव्यनक्ति। न तु विरहादितत्त्वमिति बोध्यम्. २ अत्रानुप्रासः मुदा तदेत्यादौ वर्णसाम्याद्, परार्द्धे पादान्तयोयेति यमकम्। ३ 'जनपदशब्दात् क्षत्रियादञ् ४।१।१६८' इत्यञ् इत्यर्थः। ४ नलस्य मदनाद् न्यूनत्वं जानन्त्यास्तथा 'प्रश्नस्तस्यैव' सौन्दर्यं प्रकृते वर्णनीयमित्येवं प्रवर्त्तनं तदितरानुरागित्वाभावं सूचयति,तेन तस्या नलालाभेऽपि नल एव चित्तानुसक्त्या पतिव्रतात्वास्खलनं सूचितम्, विश्रम्भकथास्वपि साध्वीनां परगुणश्रवणादेरयोगात्। पर्यायोक्तं चार्थालङ्कारः।

नलस्य पृष्टा निषधागता गुणान्
मिषेण दूतद्विजवन्दिचारणाः।
निपीय तत्कीर्तिकथामथानया
चिराय तस्थे(ऽ-)विमनायमानया॥ ३७॥

नलस्येति ॥ अनया भैम्या निषधादागता निषधदेशादागता दूतद्विजवन्दिचारणाः चारविप्रस्तुतिपाठका देशान्तरभ्रमणजीविनो नलस्य गुणान्सौन्दर्यादीन्। भवतां देशे को राजा कीदृग्गुणः कथं प्रजाः पालयतीति मिषेण व्याजेन पृष्टाः। अथ प्रश्नानन्तरं तत्कीर्तिकथां निपीय नलयशोवर्णनमाकर्ण्य अनया भैम्या चिराय विमनायमानयाऽहृष्टचित्तया दुर्मनायमानया तस्थे स्थितम्। ईदृग्गुणो राजा मया कथं लप्स्यते इति विमनस्कता। अकारप्रश्लेषेणाऽविमनायमानया हृष्टचित्तया बभूवे इति व्याख्येयम्। चिरकालमाकर्णयन्त्यैव स्थिरचित्तयावहितचित्तया जातमिति तात्पर्यम्।'तत्कीर्तिसुधाम्' इति वा पाठः। चिराय निपीय इति वा संबन्धः। 'अकथितं च १।४।५१' इति द्विकर्मकत्वाप्रच्छेरप्रधाने कर्मणि निष्ठा तयाभिहितत्वान्न द्वितीया चारणाः इति। 'गुणान्—' इति 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधाद्द्वितीया। तस्थे इति भावे तङ्। पक्षे निपीय तस्थे इत्यत्र मुखं व्यादाय स्वपितीतिवत्तुल्यकाल एव ल्यप्। विमना इवाचरति इति 'कर्तुः क्यङ् सलोपश्च ३।१।११' 'अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५' ङित्वाच्छानच् ॥ ३७ ॥

प्रियं प्रियां च त्रिजगज्जयिश्रियौ
लिखाधिलीलागृहभित्ति कावपि।
इति स्म सा कारुवरेण लेखितं
नलस्य च स्वस्य च सख्यमीक्षते॥ ३८॥

पूर्वश्लोकपञ्चकेन भैम्या नले श्रवणानुरागं प्रतिपाद्य इदानीं लिपिस्वप्नादौ दर्शनानुरागं प्रतिपादयति—

प्रियमिति ॥ सा भैमी इति स्वाज्ञया कारुवरेण कुशलेन लिपिकर्त्रा प्रयोज्येन लेखितं नलस्य स्वस्यात्मनश्च सख्यं रूपसाम्यमीक्षते स्म पश्यति स्म। इतीति किम्—हे कारुवर, त्वमधिलीलागृहभित्ति लीलागृहं क्रीडागृहं

१ अत्रानयेत्यस्य परार्द्धे पादान्तयोर्यमनाद् यमकम्। थादेरनेकशः प्रयोगादनुप्रासश्च।

तस्य भित्तौ । विभक्त्यर्थेऽव्ययीभावः[1] प्रियं । नायकं प्रियां नायिकां चोभौ काव्यप्यनिर्दिष्टनामानौ लिख । किम्भूतौ—त्रिजगज्जयिश्रियौ त्रयाणां जगतां समाहारस्त्रिजगत्, तज्जयतीत्येवंशीला श्रीः शोभा ययोः । जगत्त्रय्यामावामेव सुन्दरौ इति[2] । जगज्जयीत्यत्र 'जिदृक्षिविश्रीण्वमाव्यथाभ्यमपीरभूप्रसूभ्यश्च ३।२।१५७' इतीनौ पुंवद्भावः ॥ ३८ ॥

मनोरथेन स्वपतीकृतं नलं
निशि क्व सा न स्वपती स्म पश्यति ।
अदृष्टमप्यर्थमदृष्टवैभवात्
करोति सुप्तिर्जनदर्शनातिथिम् ॥ ३९ ॥

नलस्य मम च सारूप्यं सर्वेऽपि निरूपयन्ति, इति मम नलेऽनुरागः स्यादित्येव न तथाऽभ्युपमन्यते स्म, किंतु यदि कमपि प्रपत्स्ये तदा नलमेवेत्यवगमयन्नेवाह—मनोरथेनेति ॥ स्वपती निद्राणा सा भैमी मनोरथेन वाञ्छया स्वपतीकृतम् अस्वपतिः स्वपतिः कृतस्तं स्वप्राणेश्वरी कृतं नलं क्व निशि कस्यां रात्रौ न पश्यति स्म, अपि तु सर्वास्वपि रात्रिषु । दिवा दृष्टस्य स्वप्ने दर्शनात्कदाप्यदृष्टस्य कथं दर्शनमित्यर्थे हेतुमाह—अदृष्टमिति—सुप्तिः स्वप्नः कदाचिददृष्टमप्यर्थं वस्तु अदृष्टवैभवाद्धर्माधर्मसामर्थ्याज्जनदर्शनातिथिं जनदर्शनगोचरं करोति । 'यद् दृष्टं दृश्यते स्वप्नेऽननुभूतं कदाऽपि न' इति न्यायेन जन्मान्तरस्थानान्तरानुभूतं समुत्पन्नसंस्कारमसिञ्जन्मन्यदृष्टमप्यर्थं धर्माधर्मावेव दर्शयत इति भावः । चित्रादौ नलदर्शने सत्यपि साक्षात्तद्दर्शनाभावाददृष्टत्वोक्तिर्युक्ता । 'साक्षाच्चित्रे तथा स्वप्ने तस्य स्याद्दर्शनं त्रिधा' इति दर्शनस्य त्रैविध्यम्, तत्र साक्षाद्दर्शनासम्भवात् पूर्वत्र श्लोके चित्रे दर्शनमुक्तम्, अथात्र न केवलं चित्र एव तया तद्दर्शनमधिगतं, किं तु स्वप्नेऽपीति । ननु कथं स्वप्ने ज्ञातामिति परार्धेन समर्थितमिति बोध्यम्[1] ॥ ३९ ॥

निमीलितादक्षियुगाच्च निद्रया (ऽ-)
हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
अदर्शि सङ्गोप्य कदाप्यवीक्षितो
रहस्यमस्याः स महन्महीपतिः ॥ ४० ॥

निमीलितादिति ॥ निद्रयैव सुषुप्त्यैव प्रयोजिकया कर्त्र्या स महीपतिर्नलोऽस्या भैम्या महद्रहस्यमदर्शि दर्शितः । किंभूतः—कदापि जाग्रत्स्वप्नावस्थयोरपि एवंरूपत्वेनावीक्षितोऽदृष्टपूर्वः । किं कृत्वा—निमीलितान्मुद्रितादक्षियुगान्नेत्रद्वयात्संगोप्य संयम्य गोपयित्वा । तथा बाह्येन्द्रियमौनमुद्रिताद्बाह्येन्द्रियस्य चक्षुरिन्द्रियस्यैव मौनेन स्वविषयग्रहणाभावेन मुद्रिताद्रूपलक्षणस्वविषयग्रहणेऽशक्ताद्धृदोऽपि मनसोऽपि संगोप्य । अक्षियुगमनसोरपि ज्ञातुमवकाशमदत्वापीति यावत् । चशब्दापिशब्दावन्योन्यसमुच्चये । महारहस्यत्वेन निरतिशयानन्दरूपत्वेन निद्रया भैम्यै साक्षात्प्रदर्शित इत्यर्थः । ननु सुषुप्तौ मनसोऽप्यव्यापारश्चेत्तर्हि ज्ञानं कथम्? उच्यते—स्वप्नार्थानां बाह्येंद्रियग्राह्यत्वाभावाद्बाह्यत्वाभावे सुखादिष्वन्तर्भावाभावादाभ्यन्तरत्वाभावेऽप्यदृष्टसहकृतकेवलाविद्यावृत्तिरूपसुषुप्तिविषयत्वस्य युक्तत्वात्, आत्मन एव तत्र दृष्टत्वाच्च आत्मरूपेण नित्यस्फुरणोपपत्तेः । यद्वा—नल एव भैम्या अनुरक्तत्वात्तत्प्राप्तिं विना विषयमात्रस्यापि विरागसंभवात् बोधानन्तरं च 'सुखमहमस्वाप्सं न किंचिदवेदिषम्' इत्यनुसंधानस्य सद्भावान्नलविषयत्वमन्तरेणैवमनुसंधानस्यायुक्तत्वात्, सुषुप्त्यवस्थावशात्स नल एव मम निरतिशयानन्दात्मरूपत्वेन स्फुरित इति बोधानन्तरं तया ज्ञातमिति भावः । इति यथाकथंचित्सुषुप्त्यवस्था व्याख्येया । एवं यथाक्रमं श्लोकत्रयेणावस्थात्रयेऽपि नलसाक्षात्कारो वर्णितः । बालत्वादतिगूढत्वान्नलविषयोऽनुरागः केनापि न ज्ञात इति तस्य

---

[1] 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २।१।६' इति शास्त्रेणेत्यर्थः ।

[2] अत्र यदि लोकोत्तरसौन्दर्यशालिनौ नायकौ लोके स्तस्तर्हि दमयन्तीनलावेवेति नल इव दमयन्ती, इयमिव च स इत्येवमेतयोरेवान्योऽन्योपमानोपमेयभावप्रत्यायनादुपमेयोपमा व्यज्यते । न चाभ्यामितरस्तथाविधः सुन्दरो लोके इतीमाविवेमावेवेति पर्यवसानादनन्वयोऽपि व्यज्यते ।

[1] अत्र पूर्वार्द्धे न स्वपती इति प्रतिपादमिति यमकम् । परार्द्धे प्रागुक्तस्यैवार्थस्य समर्थनमित्यर्थान्तरन्यासः । अदृष्टेत्यस्य परत्रार्द्धेऽपि द्विः प्रयोग इति यमकम्, न चार्थैक्यम्, एकत्र न दृष्टस्तामिति, परत्र दैवस्यर्थस्य च सत्वेन भेदात् । एवं दमयन्त्या नलेऽनुरागनिबन्धनं दैवानुमोदितमेवेति साध्वीत्वं न तस्याः खण्डितमासीदिति सूचितम् ।

महारहस्यत्वम् । यथा काचन दासी स्वामिन्यै तत्प्रार्थितं वस्तु इङ्गितज्ञतयाऽवधार्य रहसि समर्पयति तथा निद्राऽपि तां भैमीं प्रति नलं समर्पितवतीति भावः ॥

व्याख्यानान्तरं च—पूर्वस्मिञ्श्लोके 'मनोरथेन—' इति स्वप्नावस्थोक्ता—, तत्रैव स्वप्नावस्थायां दृष्टं नलं प्रति स्वयमेवाह—निमीलितादिति ॥ हे नल, ( इदमध्याहार्यम् ) स प्रसिद्धस्त्वं पतिः स्या भवेति प्रार्थनायां लिङ् ( अर्थान्मम । एवं च महीतिपतिरिति च पदद्वयम् । तथा रहस्यमेति स्या इति च पदच्छेदः ) प्रसिद्धस्तु पुराणादौ भैमीपतिर्नल एव, नत्विन्द्रादय इतीन्द्रादिपरित्यागेन तस्यैव प्रार्थनाय सम्बोधने हेतुमाह—यतः हे अक्षियुगात्, अक्षो विभीतको निवासोऽस्यास्तीत्याक्षि, अक्षि च तद्युगं च—कलियुगं तस्मादपि, वाह्य ! भिन्न । चोऽप्यर्थे । किम्भूतादाक्षियुगात्—निद्रया निद्राजन्येनाज्ञानेन निमीलितात्तिरोहितात् । वाह्य इत्यर्थः । तथा ( अकारप्रश्लेषेण ) अहृदः अज्ञानिनो जडात् । मूर्खादित्यर्थः । तस्मादपि, वाह्य भिन्न! किम्भूतादहृदः—इन्द्रियस्य वाग्रूपस्य मौनं व्यापाराभावः तदेव मुद्रा स्वभावो यस्य । परस्तुतो मूकादित्यर्थः । तल्लक्षणं माघे—'सहजान्धदृशः स्वदुर्नये परदोपेक्षणदिव्यचक्षुषः । स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः'॥ इति । तथा हे रहस्यम, रहस्या अत्यन्तगोप्या मा लक्ष्मीर्यस्य । तथा हे महन् मानार्ह । एतेषु संबोधनेषु पदत्रयं हेतुर्यथायथं योज्यम् । किम्भूतस्त्वम्—अदर्शिसङ्गः अं विष्णुं पश्यन्तीत्येवंशीला अदर्शिनो विष्णुभक्तास्तैः सह सङ्गो मैत्री यस्य । पुनः किम्भूतः—अकदाप्यवीक्षितः न कम् अकं दुःखं दापयन्तीत्येवंशीला अकदापिनः स्वयं दुःखं ददाति दापयन्ति चेत्येवंशीला दुष्टास्तैरकदापिभिः । अवीक्षितो न दृष्टः, तत्सङ्गादिरहित इत्यर्थः । एवं च अकदाप्यवीक्षित इति समस्तं पदम् । अत एव महो सर्वदोत्सववान् । स्याः इति मध्यमपुरुषसामर्थ्यात्सा भैमी(प्रार्थयित्री) इति ज्ञातव्यम् । यद्वा कश्चन कस्मैचिदाशिषं ददत्प्रार्थयते स त्वं महीपती राजा स्याः भव इति प्रार्थनायां लिङ् । यद्वा राजानं प्रार्थयते महीपतिस्त्वं प्रसिद्धः स्याः । अन्यत्पूर्ववत् । दमयन्तीपदानि नलसंबोधनपदानि समानार्थानि ज्ञातव्यानीत्यलम् ॥

पूर्वं भैमी निशि ( लक्षणया रहसि ) नलं पतिमन्यतेत्युक्तम्, अथ किं ततः परं कृतवतीत्यवाजिगमिषायामिदं वचनं, तथा चेत्थं व्याख्येयम् । निद्रया लक्षणया स्वप्नावस्थया प्रयोजकया कर्त्र्या, निमीलितात्—स्वव्यापारं समाप्य विरतात्, अक्ष्णोर्युगात् च वाह्यानि यानीन्द्रियाणि कर्णादीनि तेषां यत् मौनं—लक्षणया तं तं स्वं व्यापारमपहाय विरमणं, तेन मुद्रितात् । इंद्रियोपरामे मनसोऽपि वाह्यविषयतो विरामात् । हृदः मनसः अपि । चापी एकर्दवेति समुच्चयेन बोधनाय । सङ्गोप्य—वञ्चयित्वा । कदाऽपि अवीक्षितः—अदृष्टः इतः प्राग्यस्य कदाऽपि न दर्शनं लब्धं तादृशः सः पूर्वं पतित्वेन वृत इति य उक्तः स एव, न तु ततोऽन्य इति भावः, मह्याः पतिः ( कर्म्म ) महत्—प्रत्येकदर्शनीयम्, अस्याः प्रकृताया दमयन्त्याः रहस्यं—गोप्याङ्गम् ( इदमपि कर्म्म ) अदर्शि—दर्शयते स्म । अत्र अक्ष्णोर्विशिष्य वचनं स्वप्नादिसमर्पणे प्राधान्यं सूचयति । एवं च तेन तेनेन्द्रियेण समं मनसोऽन्तर्मुखत्वे वासनोपनीतो नलः सर्वमपि तस्या वासनयोपनीयमानं भोग्यं वस्तु गृहीतवानिति स्थितम् । मनसोऽक्ष्णोश्च गोपने दर्शनासम्भव इति वाह्येत्युक्तिः। अक्षियुगस्य हृदश्च प्रियवयस्यत्वं सम्भाव्य ततोऽपि संगोप्येति वचनमतीवालभ्यत्वं नलस्येति सूचयितुमुक्तम् । निद्राशब्दश्च स्वप्नपरोऽनेकत्र प्रयुज्यत इति न क्षतिः।शास्त्रानिद्रायामिन्द्रियाणां वाह्यव्यापारमात्रतो विरत्यभिधानं च न युज्यत इति समीक्षणीयं विदुषाम् ॥ ४० ॥

अहो अहोभिर्महिमाहिमागमे-
ऽप्यभिप्रपेदे प्रति तां स्मरार्दिताम्।
तपर्तुपूर्तावपि मेदसाम्भरा
विभावरीभिर्बिभरांबभूविरे ॥ ४१ ॥

अस्याश्चिन्ताजागरावाह—अहो इति ॥ अहोभिर्दिवसैः कर्तृभिः हिमागमे हेमन्तर्तावपि स्मरार्दितां मदनपीडितां तां भैमीं प्रति लक्ष्यीकृत्य महिमा दैर्घ्यं प्रपेदे प्राप्तम् । विभावरीभी रात्रिभिः तपर्तुपूर्तावपि निदाघपूर्तावपि मेदसां भरा मज्जबाहुल्यानि, लक्षणया स्थूलत्वानीति यावत्, बिभरांबभूविरे धृताः।हेमन्ततौं दिनानि ह्रस्वानि, रात्रयो महत्यः । ग्रीष्मेऽपि दिनानि महान्ति,

१ महारहस्यवस्तुरूपेण महीपते रूपणाद्रूपकम् ।

१ स्वप्नदशाया वर्णनमिदं यथाऽर्थमेवेति स्वभावोक्तिः।

रात्रयोऽल्पाः । विरहित्वादतिवाहयितुमशक्यत्वात्तां प्रति विपरीता जाता इत्यर्थः । अहो विचित्रमित्यर्थः । अहो इत्योदन्तत्वात् 'ओत् १।१।१५' इति प्रगृह्यत्वम् । विभरामित्यत्र 'भीह्रीभृहुवांश्लुवच्च ३।१।३९' इत्याम् श्लुवच्च ॥ ४१ ॥

**स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः**
**श्रयन्तमन्तर्घटनागुणश्रियम् ।**
**कदाचिदस्या युवधैर्यलोपिनं**
**नलोऽपि लोकादशृणोद्गुणोत्करम् ॥४२॥**

इदानीं नलस्यापि तस्यामनुरागमाह—

स्वकान्तीति ॥ कदाचित् कस्मिंश्चित्समये, नलोऽपि लोकात्लोकमुखादस्या भैम्या गुणोत्करं सौंदर्यादिगुणसमूहमशृणोत् । न तु स भैम्यैवेत्यपि द्योत्योऽर्थः । गुणानाम् सौंदर्यादीनाम् उत्करः पुञ्जस्तम् । किम्भूतं गुणोत्करम्—युवधैर्यलोपिनं तरुणधैर्यलोपनशीलम् । यूनां यद् धैर्य—यावच्छक्ति संरक्षणीयं धीरत्वम्, अक्षोभ्यत्वमिति यावत्, तल्लुम्पतीति तं तथोक्तम् । तथा—स्वस्या भैम्याः कान्तिकीर्तिव्रजः सौन्दर्यविषयो यो यशःसमूहः स एव शुभ्रत्वान्मौक्तिकमाला तस्या अन्तर्घटना नलस्य मनसि या घटना संबन्धस्तस्यै गुणश्रियं दोरकशोभां श्रयन्तं कुर्वाणम् । गुणोत्करेण नलचेतसि तत्कान्तिकीर्तिर्गुम्फितेत्यर्थः । मालाया अन्तर्घटनार्थं दोरको भवति । यद्वा—स्वस्य नलस्य । तद्योगे नलरामणीयकानुरूपो भैमीगुणसमूह इति भावः । 'पुञ्जराशी तूत्करः कूटमस्त्रियाम्' इत्यमरः । मौक्तिकमिति 'विनयादिभ्यष्ठक् ५।४।३४' इति स्वार्थे ठक् । लोकादित्यत्र हेतौ पञ्चमी ॥ ४२ ॥

१ अत्र यमकम्, अनुप्रासश्च शब्दालङ्कारौ । हिमागमे दिनानां ग्रीष्मे च रात्रीणां ह्रस्वत्वं क्षीणत्वं स्यात्, किंतु तथा हिमागमग्रीष्मयोः सतोरपि ह्रस्वत्वरूपकार्यानुत्पत्त्या विशेषोक्तिः । दिवसानां रात्रीणां च स्थूलतोत्पादकस्य कारणस्यासत्त्वेऽपि स्थूलतोक्तेर्विभावना चेति दर्पणकाराः । २ पूर्वं पूर्वं नायिकाया नायकेऽनुरागं निरूप्य नायकस्य नायिकायामनुरागोऽपि निरूपणीयः, अन्यथा शृङ्गारानुदयादित्यत आह—इदानीमिति । ३ अत्र 'लो, णो' इत्यादेरनुप्रासः । कीर्तिव्रजस्य मौक्तिकमालारूपेण गुम्फने श्लेषेण सौन्दर्यादिवाच्यानां तन्तुविशेषवाच्यानां गुणानां श्रयणीयत्वव्यञ्जनादेकदेशविवर्तिरूपकं चार्थालङ्कारः ।

**तमेव लब्ध्वाऽवसरं ततः स्मरः**
**शरीरशोभाजयजातमत्सरः ।**
**अमोघशक्त्या निजयेव मूर्तया**
**तया विनिर्जेतुमियेष नैषधम् ॥४३॥**

तमेवेति ॥ ततो भैमीगुणश्रवणानन्तरं स्मरः कामस्तमेवावसरं प्रस्तावं लब्ध्वा तया भैम्या कृत्वा नैषधं नलं विनिर्जेतुं पराभवितुमियेष ऐच्छत् । उत्प्रेक्षते—मूर्तया शरीरिण्या निजया स्वकीययाऽमोघशक्त्येव । यतः स्वशरीरस्य या शोभा तस्या जयस्तेन जातो मत्सरः क्रोधो यस्येति पराजयेच्छायाः कारणम् । नलशरीरस्य मनोभवशरीरापेक्षयाऽतिशायितत्वेन तेन मनोभवशरीरस्य तिरस्कारो जात इति यत्नमन्तरा जातमपि स्वतिरस्कारमसहमान इव मनोभवस्तदानीं तत्पराजयनेऽमोघशक्तिरूपां भैमीमवलम्ब्य तं पराजेतुमभिलषितवानिति भावः । जातक्रोधो हि वैरी कमप्यवसरं प्राप्य शक्त्यायुधः सन्वैरिणं पराजेतुं प्रक्रमते । शोभेति भिदादिगणे निपातनात्साधुः ॥४३ ॥

**अकारि तेन श्रवणातिथिर्गुणः**
**क्षमाभुजा भीमनृपात्मजालयः ।**
**तदुच्चधैर्यव्ययसंहितेषुणा**
**स्मरेण च स्वात्मशरासनाश्रयः ॥४४॥**

अकारीति ॥ तेन क्षमाभुजा राज्ञा नलेन भीमनृपात्मजालयः भीमनृपकन्या आलयः स्थानमाश्रयो यस्य एवंभूतो गुणः सौन्दर्यादिः श्रवणातिथिः श्रवणगोचरोऽकारि कृतः आकर्णित इत्यर्थः । यथा कुतश्चिदकस्मादुपागतोऽतिथिरभ्यर्चनीयो भवतीति दमयन्तीरूपस्थानविशेषनिवासी गुणो यदाऽभ्युपागतस्तदा तथैव तमप्यभ्यर्चयितुं नलेन स्वश्रवणस्थाने निवेद्य तदभ्यर्चनार्थं तस्य श्रवणस्यैव नियुक्तिर्विदधे । महान्तो हि तादृशाभ्यर्चनार्थं कमपि नियुञ्जत इति बोध्यम् । नलेनापि दमयन्तीगुणाः श्रुता इति तु उक्तोऽर्थः । आदरातिशयापूर्वत्वसूचनायातिथिपदम् । स्मरेणापि गुणः प्रत्यञ्चा स्वात्मशरासनाश्रयः स्वात्मनो यच्छरासनं शोभनं दृढं यदात्मशरासनमिति वा धनुस्तदाश्रय आधारः स्थानं

१ अत्र भैम्या आत्मीयत्वेनोत्प्रेक्षणादुत्प्रेक्षा, अमोघशक्तित्वेन रूपणाद्रूपकं च । तयेति यमकं शब्दालङ्कारश्च । २ भीमनृपात्मजाश्रय इति पाठान्तरे कथितपदत्वं दोषः ।

यस्यैवंभूतोऽकारि। किम्भूतेन—तस्य नलस्योच्चमुत्कृष्टं यद् धैर्यं तस्य व्ययो नाशस्तस्मै संहितो धनुष्यारोपित इषुर्येन। यदैव भैमीगुणश्रवणं जातं तदैव तस्य मदनपीडा जातेति भावः। चस्तुल्यकालद्योतनार्थो वा ॥ ४४ ॥

अमुष्य धीरस्य जयाय साहसी
तदा खलु ज्यां विशिखैः सनाथयन्।
निमज्जयामास यशांसि संशये
स्मरस्त्रिलोकीविजयार्जितान्यपि ॥४५॥

अमुष्येति॥स्मरः त्रयाणां लोकानां समाहारस्त्रिलोकी('अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इतिस्त्रीलिङ्गत्वे लोकानां द्विगोरिति ङीप्) तस्या विजयेनार्जितानि सम्पादितान्यपि यशांसि कीर्तीः संशये संदेहे, तद्रूपे समुद्र इति यावत्, निमज्जयामास। खलु सम्भावनायाम्। त्रैलोक्ये जितेऽपि यद्येनं जेतुं न शक्ष्यामि तर्ह्येकस्याजये सर्वापि कीर्तिर्गमिष्यतीति शक्ष्यामि न वेति संदेहः किंभूतः स्मरः—तदा धीरस्यामुष्य नलस्य जयाय विशिखैर्बाणैः ज्यां सनाथयन्सनाथां कुर्वन् योजयन्नित्यर्थः। यतः साहसी हिताहितानपेक्षं यत्कर्म तत्साहसं तद्वान् अविमृश्यकारीत्यर्थः। विशिखैरिति धीरस्यैकेन जेतुमशक्यत्वाद्बहुत्वम्। त्रैलोक्यापेक्षयास्यातिधीरत्वमुक्तम्। 'विजयोर्जितानि' इति पाठः साधीयान्। जयायेति 'तुमर्थाच्च भाववचनात् २।३।१५' इति चतुर्थी। निमज्जयामासेति मस्जेः सकारस्य श्चुत्वेन शे तस्य 'झलां जश् झशि ८।४।५३' इति जकारः॥ ४५ ॥

१ शोभनं दृढं यदात्मशरासनमित्यत्र पुनरुक्तवदाभासः, नलेन यदा श्रवणातिथिः कृतस्तदैव स्मरेण शरासनाश्रयः कृत इति तुल्ययोगाभिधानात्तुल्ययोगिता। २ अत्र स्मरस्य प्रशंसा संशये निमज्जनसम्बन्धासम्भवेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः। अन्ये त्वस्य तात्पर्यमिदमाहुः—'न संशयमनारुह्य नरो भद्राणि पश्यति।' इति न्यायमुपपद्यैव स्मरस्तं त्रिलोकीविजेतारमपि धीरं नलं विजेतुं धनुस्तदा भैमीगुणसाहाय्ये लब्धे सशरं कुर्वन्नेव तदीयानि त्रैलोक्यविजयार्जितान्यपि यशांसि संशयास्पदानि कृतवान्। सम्प्रति मदने भैमीगुणसहाये प्रत्युद्यते नलस्य तानि यशांसि कथं स्थास्यन्तीति। महागुणपरिग्रहे हि क्षुद्रोऽपि दुःशकं सुशकं करोतीति बोध्यम्। अत्र चानुकूलमुत्तरपद्यम्। अत्रैवमतिशयोक्तिरिति दिक्।

अनेन भैमीं घटयिष्यतस्तथा
विधेरवन्ध्येच्छतया व्यलासि तत्।
अभेदि तत्तादृगनङ्गमार्गणै-
र्यदस्य पौष्पैरपि धैर्यकञ्चुकम् ॥४६॥

अनेनेति॥ अस्य नलस्य तत्प्रसिद्धं तादृग्दुर्भेद्यमपि धैर्यमेव कञ्चुकं पौष्पैः पुष्परूपैरप्यनङ्गमार्गणैः कामबाणैर्यस्मादभेदि विदारितम्, तत्तस्मात् तथा वक्ष्यमाणभैम्यभिलापीन्द्रादिपरित्याजनप्रकारेण अनेन नलेन भैमीं घटयिष्यतः संगमयिष्यतो विधेर्ब्रह्मणोऽवन्ध्येच्छतया अवन्ध्या सफला इच्छा मनोरथो यस्य तस्य भावस्तत्ता सफलेच्छता तया व्यलासि विलासितमिति वितर्कः। तत्तादृगनङ्गमार्गणैरित्येकं वा पदम्। तैः पञ्चसंख्यतया प्रसिद्धैरल्पैस्तादृग्भिश्चातिमृदुश्लक्ष्णैः कामबाणैरिति। अङ्गरहितस्यापि पुष्परूपैर्बाणैर्धैर्यकञ्चुकस्यामूर्तस्यापि॥ वस्तुनो यद्विदारणं तद्ब्रह्मसफलेच्छताया एव विलास इति यत्तदोः क्रियाविशेषणत्वं वा। असंभावितमपि विधीष्टं भवत्येवेति भावः। व्यलासीति भावे चिण्। अभेदीति कर्मणि कर्मकर्तरि वा चिण्। पौष्पैः। भेदविवक्षायां संबन्धेऽण्। स्वार्थे वा ॥ ४६ ॥

किमन्यदद्यापि यदस्त्रतापितः
पितामहो वारिजमाश्रयत्यहो
स्मरं तनुच्छायतया तमात्मनः
शशाक शङ्के स न लङ्घितुं नलः॥४७॥

धैर्यभङ्गमेवाह—

किमन्यदिति॥ यस्य कामस्यास्त्रैर्बाणैस्तापितः पितामहो ब्रह्माऽद्यापि वारिजं कमलमाश्रयति। अहो आश्चर्यं—वृद्धोऽपि ब्रह्मा कामसंतप्तः। यः स्वपितामहमप्यतिवृद्धमतिपूज्यं शस्त्रैः पीडयतीति सोऽन्यं पीडयतीति किं वाच्यम्? स्वभावसिद्धं कमलासनत्वं कामसंतप्तत्वेनोत्प्रेक्षितम्। गम्योत्प्रेक्षा। संतप्ताः शीतलमाश्रयन्ते। अत एव वारिजपदम्। अन्यत्कामस्य किं वर्णनीयं तत्राह—शङ्के इति। नल आत्मनः स्वस्य तनुच्छायतया शरीरसाम्येनेव। यद्वा—तन्वी छाया शोभा यस्य तस्य भावस्तत्ता तया विरहव्यथाजनितम्लानशोभतया तं स्मरं लङ्घितुं जेतुं न शशाक। यद्वा—आत्मनः सकाशात्कामस्य तनुच्छायत-

१ अत्र विरोधाभासः, धैर्यस्य कञ्चुकत्वेन रूपणाद्रूपकं च।

याऽल्पशोभत्वेन जेतुं नाशकत्, अपि तु शशाकैव । तस्याल्पकान्तित्वमात्मनोऽधिककान्तित्वमेव जय इत्यर्थः। पूर्वं तस्यातिशयितं धैर्यं वर्णयित्वा तन्नाशकथनं विप्रलम्भपोषार्थम् । लङ्घितुमिति शाकियोगे तुमुन् ॥ ४७ ॥

**उरोभुवा कुम्भयुगेन जृम्भितं**
**नवोपहारेण वयस्कृतेन किम् ।**
**त्रपासरिद्दुर्गमपि प्रतीर्य सा**
**नलस्य तन्वी हृदयं विवेश यत् ॥४८॥**

उर इति ॥ सा तन्वी कृशाङ्गी स्वीया त्रपैव सरिन्नदी तस्या दुर्गं प्राकारमपि, त्रपासरिदेव दुर्गं वा । प्रतीर्य तीर्त्वा नलस्य हृदयं यद्विवेश प्रविष्टा । यद्वा—नलस्यैव त्रपासरिद् दुर्गम् । तदुरोभुवा वक्षःस्थलगतेन कुम्भयुगेन कुचकलशयुगलेन जृम्भितं विलसितम् । किमुत्प्रेक्षायाम् । किम्भूतेन—नवोपहारेण नवो नूतन उप ( समीप )-गतो हारो मुक्ताहारो यस्य, उपहार उपायनं तद्रूपेण वा । वयसा यौवनेन कृतं वयस्कृतं तेन ।तेनलज्जां त्यक्त्वा सम्पन्नयौवना भैमी ध्याता इत्यर्थः। अन्याऽपि कुम्भकारकृतमुपढौकितं कुम्भद्वयं वक्षसि निधाय जलदुर्गं तीर्त्वा प्रियसङ्केतं गच्छति । यच्छब्दोऽप्यर्थः सा तन्व्यप्युरोभुवा कुम्भयुगेन त्रपासरिद्दुर्गमपि प्रतीर्य नलस्य हृदयमपि विवेश किमिति ।वितर्क इति चान्वयः । किम्भूतं दुर्गम्—जृम्भितम् । अत्युच्चमित्यर्थः । अन्यत्पूर्ववत् । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । उरोभुवा इत्यत्र भाषितपुंस्कत्वेन नुमभावः । कुम्भयुगेनेत्यत्र च कर्तरि तृतीया ॥ ४८ ॥

**अपह्नुवानस्य जनाय यन्निजा-**
**मधीरतामस्य कृतं मनोभुवा ।**
**अबोधि तज्जागरदुःखसाक्षिणी**
**निशा च शय्या च शशाङ्ककोमला ४९**

अपेति ॥ मनोभुवा कामेनास्य नलस्य यद् अनिर्वाच्यमभिभवनं कृतम् । तत् निशा रात्रिः शय्या आस्तरणं चाबोधि जानाति स्म किम्भूतस्यास्य—जनाय लोकाय निजां स्वीयामधीरतामधैर्यमपह्नुवानस्य गोपायतः। किम्भूता निशा शय्या च—यतो जागरदुःखं साक्षादीक्षते सा । विदुषीत्यर्थः । तज्जागर इत्येकं पदं वा । तथा शशाङ्ककोमला चन्द्रेण मनोहरा । शशस्य मृगविशेषस्याङ्क उत्सङ्गस्तद्वन्मृद्वी । चन्द्रवन्मनोहरा वा । चन्द्रेण कर्पूरप्रक्षेपेण मनोहरा वा। चान्द्री रात्रिरतिदुःसहत्वाज्जागरदुःखसाक्षिणी । शय्या चात्मनि विलुण्ठनेन । रात्रिशय्याव्यतिरेकेण केनचित्तद्विरहदुःखं न ज्ञातमिति भावः। जनायेति 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः १।४।३४' इति सम्प्रदानत्वम् । अबोधीति 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३ । १ । ६१' इति कर्तरि चिण् निशा इति हलन्ताद्वा टाप्। शय्या इति'सञ्ज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ३ । ३ । ९९' इति क्यपि 'अयङ् यि क्ङिति १ । ४ । २२'इत्ययङ्॥४९॥

**स्मरोपतप्तोऽपि भृशं न स प्रभु-**
**र्विदर्भराजं तनयामयाचत ।**
**त्यजन्त्यसूञ्शर्म च मानिनो वरं**
**त्यजन्ति न त्वेकमयाचितव्रतम् ॥५०॥**

स्मरेति ॥ भृशं स्मरोपतप्तोऽप्यतिशयेन कामपीडितोऽपि स नलो विदर्भराजं विदर्भदेशाधिपं भीमं तनयां कन्यां नायाचत । यतः प्रभुः समर्थः । अभिमानीति यावत् । कामपीडितः स कथं न याचितवानित्यत आह—मानिनोऽभिमानिनः पुरुषाः शर्म सुखं तथा असूंश्च प्राणानपि त्यजन्ति । एतद्द्वयं तेषां वरमल्पामिष्टम् । एकमद्वितीयं प्रधानमयाचितव्रतम् । अयाचनरूपं

---

१ अत्र स्मरं विजेतुं नलस्याक्षमणे तनुच्छायत्वं हेतुरूपेणोत्प्रेक्षितमिति हेतूत्प्रेक्षा, स्मरत्रासाद्ब्रह्माऽपि कमलमाश्रित्यावतिष्ठत इत्युत्प्रेक्षणे इवादेरनुपन्यासाद् गम्योत्प्रेक्षा। ब्रह्मणः स्मरत्रासं समर्थ्य नलत्रासौचित्यसमर्थनात् काव्यलिङ्गम् । तनोः छायेव च्छाया यस्येति लुप्तोपमा । तनुच्छायापदयोः श्लिष्टत्वाच्छ्लेषः । छाययोरभेदाध्यवसानादतिशयोक्तिश्चार्थालङ्कारः ।'अनुप्रासः शब्दालङ्कारश्च ।२ अत्रोरोभुवोर्वयस्कृतनवोपहारत्वेन रूपणात् । उरोभुवोश्च साम्यमनभिधायाभेदाध्यवसानेन वचनादतिशयोक्तिः। त्रपाया दुर्गसरित्वं समर्थयितुमुरोभुवोः कुम्भयुगत्वं तेन च तत् प्रतरणौचित्यासम्भवेऽपि तत्प्रतरणरूपणात् परम्परितरूपकम् । किमित्युत्प्रेक्षा च ।

१ नहि महान्तः कुतश्चित्तिरस्कारं प्राप्य पुनःप्रसीदन्तीति, किंच तत्प्रतिकाराय परस्य पुरस्तादात्मानं निवेदयन्ते।किंतु यावदात्मनि, अशक्तत्वं तावत् स्वयं निगूह्यावतिष्ठन्त इति निशाशय्ययोस्तद्विषये साक्षिकत्वमुक्तमिति बोध्यम्। तापप्रशमनाय मालतीकुसुमादिभिः कल्पितायाः शशाङ्ककोमलात्वं तु निर्बाधमेव, अथ निशाया अपि शशाङ्केन ( उपलक्षिता ) कोमलेति तदवधार्यमिति एतयोर्वयस्यात्वं ध्वन्यते ।

व्रतं नैव त्यजन्तीत्यर्थः । एतदवरं न विद्यते वरं श्रेष्ठं यस्मात् । अतिश्रेष्ठमित्यर्थः । पाठक्रमादर्थक्रमस्य बलीयस्त्वाच्छर्मपदस्य पूर्वमन्वयः । यद्वा—चकारस्तुल्यकालद्योतनार्थः । शर्म यथा भवति तथासूनपि त्यजन्ति । सुखेन त्यजन्तीत्यर्थः । वरं श्रेष्ठमिति व्रतविशेषणं वा । विदर्भराजेति 'राजाहःसखिभ्यष्टच् ५ । ४ । ९१' इति टच्'दुह्याच्' इत्यादिना याचिर्द्विकर्मकः।'देवाद्वृते वरः श्रेष्ठे त्रिपु क्लीबं मनाक्प्रिये' इत्यमरः ॥ ५० ॥

मृषाविषादाभिनयादयं क्वचि-
ज्जुगोप निःश्वासततिं वियोगजाम् ।
विलेपनस्याधिकचन्द्रभागता-
विभावनाच्चापललाप पाण्डुताम् ॥ ५१ ॥

मृषेति ॥ अयं नलः क्वचित्कस्मिंश्चिद्वस्तुनि विषये मृषाविषादाभिनयात्तद्वस्तु गतमिति मिथ्याखेदप्रकटनाद्वियोगजां विरहजनितां निःश्वासततिं निःश्वासपरम्परां जुगोप तिरोधत्ते स्म । तथा—विलेपनस्य चन्दनस्याधिकश्चन्द्रभागः कर्पूरांशो यस्मिंस्तस्य भावस्तत्ता, तस्या विभावनाज्ज्ञापनात्प्रकटीकरणाद्वियोगजां पाण्डुतां चापललाप । अत्र चन्दनमध्ये कर्पूरोऽधिको जातस्तेनाङ्गपाण्डुत्वं न त्वन्यत्कारणम् । विषमत्तीति विषादः शिवः तस्याभिनयाद् निःश्वासानुपदं शिवाशिवेति नामोच्चारणाद्वा जुगोप । 'घनसारश्चन्द्रसंज्ञः कर्पूरः' इत्यमरः॥५१

शशाक निह्नोतुमयेन तत्प्रिया-
मयं बभाषे यदलीकवीक्षिताम् ।
समाज एवालपितासु वैणिकै-
र्मुमूर्छ यत्पञ्चममूर्छनासु च ॥ ५२ ॥

शशाकेति ॥ अयं नलोऽलीकवीक्षितां मोहेन मिथ्यैव वीक्षितां प्रियां भैमीं प्रति यत्किंचिद्बभाषे, तदयेन दैवेन निह्नोतुं गोपायितुं शशाक "अलीकं त्वनृतेऽप्रिये' इत्यमरः- यद्वा अये ! कष्टम् । न शशाकेत्यर्थः । 'अये क्रोधे विषादे च' इति विश्वः। वैणिकैर्वीणावादनकुशलैः पञ्चमरागस्य मूर्छनास्वालपितासु पुनःपुनर्गीतासु सतीषु समाज एव सभायामेव यन्मुमूर्छ तदपि अयेन रागमूर्छनाजनितसुखानुभवव्यापारवश्यव्याजेन निह्नोतुं शशाक । मूर्छाप्यपलपितेत्यर्थः । यद्वा मूर्च्छापि न निह्नोतुं शशाकेत्यर्थः । सप्तानां स्वराणामारोहावरोहौ मूर्छनाः । तास्त्वेकाविंशतिः। अथ च प्रियां प्रति अये भैमीति समाजे बभाषे तत् निह्नोतुं न शशाक इति काकुः किंतु शशाकैव । शब्दान्तरान्तर्भूतत्वाद्वचनमपलपितम् । यद्वा,—वैणिकैः पञ्चमरागमूर्छनासु गातुं प्रारब्धासु समाज एव सभैव मुमूर्छ । येन नलकृतभैमीसंबोधनमाकर्णनीयं स समाज एव मूर्छां प्राप । यद्वा—यत्किंचिद्बभाषे, तद् अये कामाय निह्नोतुं न शशाक, समाजाय त्वपलपितुं समर्थोऽभूत् । यतः समाज एव मुमूर्छ । इः कामः तस्मै कामाय । 'अये क्रोधे विषादे च संभ्रमे स्मरणेऽपि च' 'इः कामे परुषोक्तौ च' इति च विश्वः।'अयः शुभावहो विधिः'' वीणावादस्तु वैणिकः''समाजस्तु सधर्मिणाम्' इति चामरः। रागप्रकटीकरणमालपनम् । पशुव्यतिरिक्तसमूहवाचित्वात्समाज इत्यत्र घञ् । वैणिकैरिति 'शिल्पम् ४।४।५५' इति ठक् । मूर्छोन्मादावुक्तौ ॥ ५२ ॥

अवाप सापत्रपतां स भूपति-
र्जितेन्द्रियाणां धुरि कीर्तितस्थितिः ।
असंवरे शंबरवैरिविक्रमे
क्रमेण तत्र स्फुटतामुपेयुषि ॥ ५३ ॥

अवापेति ॥ स भूपतिः सापत्रपतामवाप । अन्यतो लज्जापत्रपा तया सह वर्तमानः सापत्रपः तस्य भावस्तत्ता तां प्राप । 'लज्जा सापत्रपाऽन्यत' इत्यमरः। किंभूतः—यतो जितेन्द्रियाणां मध्ये धुर्यग्रे प्रथमतः कीर्तिता स्तुता स्थितिर्मर्यादा यस्य । विरहव्यथा लोकेनापि ज्ञातेति सलज्जोऽभूदित्यर्थः । कस्मिन्सति—तत्र समाजे सभामध्येऽसंवरे निरोद्धुमशक्येऽगोप्ये शंबरवैरी कामस्तस्य विक्रमे क्रमेण परिपाट्या स्फुटतां प्राकट्यमुपेयुषि प्राप्ते सति । असंवरे इत्यत्र 'ग्रहवृदृनिश्चिगमश्च ३ । ३ । ५८' इत्यप्॥५३॥

---

१ अत्र विदर्भराजमुपेत्य न ततो याचितवानिति विशेषार्थस्य मानिनां प्राणत्यागः सुकरः, याच्ञा न कर्तव्येति व्रतत्यागः परं दुःशक इति सामान्येन समर्थनात्तदात्मा्ऽर्थान्तरन्यासोऽर्थालङ्कारः । त्यजेः कथितपदत्वेन ग्रस्ततायामपि न दुष्टत्वम् । त्यागस्य सुकरत्वेऽपि तस्यैवान्यदा दुष्करत्वाभिति प्रत्यायनस्य पदान्तरेण तदुक्तावसम्भवादिति बोध्यम् । २ 'अत्रावहित्थाभावो व्यज्यते ।' 'अवहित्थाऽऽकारगुप्तिः' इत्युक्तेः । व्याजोक्तिश्चार्थालङ्कारः 'व्याजोक्तिश्छद्मनाभिन्नवस्तुरूपनिगूहनम् ।' इत्युक्तेः ।

१ अत्र ह्रीत्यागोन्मादमूर्छाऽऽख्याः कामावस्था नलस्योक्ताः। २ तथोक्तस्यापि नलस्य सापत्रपत्वोक्तौ वाक्यस्य हेतुत्वात् काव्यलिङ्गम् । अनुप्रासस्तु शाब्दः ।

अलं नलं रोद्धुममी किलाभव-
न्गुणा विवेकप्रमुखा न चापलम् ।
स्मरः स रत्यामनिरुद्धमेव य-
त्सृजत्ययं सर्गनिसर्ग ईदृशः ॥ ५४ ॥

अलमिति ॥ अमी विवेकप्रमुखा विवेकादयो गुणा नलमिदं पूर्वोक्तं चापलं रोद्धुमावरितुमलं समर्था नाभवन् । नलस्य चापलं रोद्धुं न समर्था इत्यर्थः । किल निश्चयेन । यद्यतः स प्रसिद्धः स्मरो रत्यामनुरागे सति पुरुषमनिरुद्धमेव चपलमेव सृजति करोति । न निरुद्ध इति तम् अयमतादृक्सर्गनिसर्गः सृष्टिनिर्णयः स्वभावो वा । अयमेव निश्चय इत्यर्थः । अनुरागे सति सर्वोऽपि चञ्चलो भवतीत्यर्थः । विवेकस्यापि किमपि न चलतीत्यर्थः । यद्वा—स्मरो रत्यां संभोगेऽनिरुद्धं निवारयितुमशक्यम् । चापलमित्यर्थः । अयमीदृशः कामेन सृज्यमानस्य प्रस्तुतत्वाच्चापलस्य स्वभावः । अथ च—मदनः प्रद्युम्नाख्यो रत्यां स्वप्रियायामनिरुद्धनामानमेव पुत्रं जनयतीति यत्, अयमीदृशोऽनादिः सर्गस्वभावः । हेयोपादेयविचारो विवेकः । नलमिति षष्ठ्यर्थे सप्तम्यर्थे वा द्वितीया । रुधेर्द्विकर्मकत्वात् । 'स्वभावश्च निसर्गश्च' इत्यमरः । रोद्धुमित्यलंयोगे 'पर्याप्तिवचनेष्वलमर्थेषु ३।४। ६६' इति तुमुन् ॥ ५४ ॥

अनङ्गचिह्नं स विना शशाक नो
यदाऽऽसितुं संसदि यत्नवानपि ।
क्षणं तदाऽऽरामविहारकैतवा-
न्निषेवितुं देशमियेष निर्जनम् ॥ ५५ ॥

अनङ्गेति ॥ स नलो यदा यस्मिन्समये विरहाचिह्नापलापविषये यत्नवानपि सन् संसदि सभायामनङ्गचिह्नं पाण्डुत्वकृशत्वगोत्रस्खलनादि कामचिह्नं विना क्षणमप्यासितुं स्थातुं नो शशाक न समर्थोऽभूत् तदा तस्मिन्समये आराम उपवने विहारः क्रीडा तस्याः कैतवाद्व्याजेन निर्जनं देशमुद्यानदेशं निषेवितुं सेवितुमियेष ऐच्छत् । क्षणमुत्सवरूपं, निर्जनत्वाद्देशविशेषणं वा यत्तदिति कारणार्थं वा । 'कालविशेषोत्सवयोः क्षणः' इत्यमरः । चिह्नमिति 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् २। ३ । ३२' इति द्वितीया । क्षणमिति पक्षे "कालाध्वनोरत्यन्तसंयोगे २।३।५' इति द्वितीया ॥ ५५ ॥

अथ श्रिया भर्त्सितमत्स्यलाञ्छनः
समं वयस्यैः स्वरहस्यवेदिभिः ।
पुरोपकण्ठोपवनं किलेक्षिता
दिदेश यानाय निदेशकारिणः ॥५६॥

अथेति ॥ अथानन्तरं स नलो यानाय यानमानेतुं निदेशकारिणो भृत्यान्दिदेशाज्ञापयामास । किंभूतः—विरहव्यथाव्यथितोऽपि श्रिया कान्त्या सुरूपत्वाद्भर्त्सितस्तिरस्कृतो मत्स्यलाञ्छनः कामो येन । विरहव्यथागोपनार्थमङ्गीकृतशोभत्वाद्वा जितकामः तथा स्वरहस्यवेदिभिरात्मनः परतो गोप्यमप्यर्थं जानद्भिर्वयस्यैः कतिपयैः स्निग्धैः सखिभिः समं सह पुरोपकण्ठोपवनं नगरानिकटस्थमुद्यानम् । किलेत्यलीकम् । ईक्षिता ईक्षमाणः । इदं तृन्नन्तम् कामचिह्नापह्नवे तात्पर्यं, न तु वनविलोकन इति किलेत्युक्तम् । 'स्निग्धो वयस्यः सवयाः' इत्यमरः । 'किल सम्भाव्यवार्त्तयोः । हेत्वरुच्योरलीके च' इति हैमः । 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २ । २।११' इत्यव्ययेन सह समासनिषेधात्पुरमुपकण्ठे यस्येति बहुव्रीहिः । केचिदस्मिन्सूत्रे पूर्वोत्तरसाहचर्यात्कृदव्ययस्यैवायं निषेधो, न त्वव्ययमात्रस्येत्याहुः । तन्मते पुरस्योपकण्ठमिति षष्ठीतत्पुरुषोऽपि । 'उपकण्ठान्तिकाभ्यर्णाः' इत्यमरः । वनम्, तृना योगे षष्ठ्यभावः । यानायेति १ 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः । २ । ३ । १४' इति चतुर्थी ॥ ५६ ॥

अमी ततस्तस्य विभूषितं सितं
जवेऽपि मानेऽपि च पौरुषाधिकम् ।
उपाहरन्नश्वमजस्रचञ्चलैः
खुराञ्चलैः क्षोदितमन्दुरोदरम् ॥ ५७॥

१ अत्रानिरुद्धपदार्थयोर्भिन्नत्वेऽप्यभेदाध्यवसायेनोक्तत्वादतिशयोक्तिः विवेकादीनां चापलनिरोधनाक्षमत्ववचनस्य विशेषस्य । परार्धार्थरूपेण सामान्येन समर्थनात् काव्यलिङ्गं च श्लेषः प्राणप्रदः ।

१ अनङ्गस्यापि चिह्नमिति विरोधः, तत्परिहारश्चार्थान्तरेणेति विरोधाभासः । अत्र कैतवोक्तिश्चमत्कारानिमित्तत्वेन नापह्नुत्युद्भावकत्वामिति अपह्नुतिस्तु न सम्भाव्यते । २ अत्र परिकरो वयस्यानां स्वरहस्यवेदित्वेन समं सञ्चालने योग्यताव्यञ्जकत्वात् । श्रियेत्यादौ तु व्यतिरेकाभासः स्यात् । मीनकेतनकर्मकस्य तर्जनस्यासम्भवेऽपि सम्भवोक्तेरतिशयोक्तिर्वा । न चात्रोपमा, न वा सहोक्तिरलङ्कारोपस्कारकत्वाभावात् ।

अमी' इति ॥ ततस्तदाज्ञानन्तरममी वयस्यास्तस्य नलस्याश्वमुपाहरन्नानिन्युः । अश्वविशेषणानि—सितं श्वेतम्। विभूषितं विशेषणालंकृतम्। जवेऽपि वेगेऽपि पौरुषेण बलेनाधिकम्। मानेऽपि परिमाणेऽपि पौरुषं पुरुषप्रमाणं तस्मादाधिकम्। अजस्रं निरन्तरं चञ्चलैः खुराञ्चलैः खुराग्रैः प्रयोज्यैः क्षोदितं चूर्णीकारितं मन्दुराया वाजिशालाया उदरं मध्यं येन तादृशम्। 'नित्यानवरताजस्रं' 'वाजिशाला तु मन्दुरा' । इति चामरः। 'खुरैः खनन्यः पृथिवीमश्वो लोकोत्तरः स्मृतः' इति शालिहोत्रे । विभूषितम्। वीनां पक्षिणां भुवि स्थान उषितं कृतावासम् वेगवशादाक्रमणवशाद्वा गगनगामिनमिति वा भावः। सितमित्यनेन कफप्रकृतित्वम् । तेनातिबलवत्त्वसहिष्णुत्वादिलक्षणं सूचितम् । 'ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिपु' इत्यमरः।पुरुषशब्दात्पक्षे भावे युवादित्वादण्। परिमाणे 'पुरुषहस्तिभ्यामण् च ५।२।३८' इत्यण्। क्षोदितमिति हेतुमण्ण्यन्तान्निष्ठा । कर्तरि, करणे वा तृतीया, उपाहरन्नश्वमित्यन्तं समाप्यापि अजस्रेत्यादिना पुनरुपात्तं वाक्यमिति समाप्तपुनरात्तत्वं दोषः ॥ ५७ ॥ ( इतः परं सप्तभिः पद्यैरन्वयात् कुलकम्—)

अथान्तरेणावटुगामिनाऽध्वना
निशीथिनीनाथमहःसहोदरैः।
निगालगाद्देवमणेरिवोत्थितै-
र्विराजितं केसरकेशरश्मिभिः ॥ ५८ ॥

अथेति ॥ अथाश्वोपाहरणानन्तरं स नलः हयमारुरोहेति सप्तमश्लोकेनान्वयः। अश्वविशेषणानि । किंभूतं हयम्—स्कन्धे प्ररूढा ये केसरकेशाः किञ्जल्कवर्णाः केशास्तेषां रश्मिभिः तल्लक्षणैरेव किरणैर्वा विराजितम्। 'किञ्जल्कः केस (श) रोऽस्त्रियाम्' इत्यमरः। किम्भूतैः—निगालगाद् गलप्रदेशे वर्तमानाल्लक्षणभूताद्देवमणेः देवमणिनाम्नो दक्षिणावर्तादवटुगामिना आन्तरेण कण्ठमध्यवर्तिनाऽध्वना मार्गेणोत्थितैः निःसृतैरिव। तथा—( उज्ज्वलत्वात् ) निशीथिनी रात्रिस्तस्या नाथश्चन्द्रस्तस्य महांसि तेजांसि किरणा इति यावत् तेषां सहोदरैः सदृशैः प्रायेण सहोदराः सरूपा भवन्तीति सारूप्यं लक्ष्यते । अथ च देवमणिःकौस्तुभः, चन्द्रश्च। समुद्रादुत्पन्नत्वादुभयोः सहोदरत्वम्। केसरकेशरश्मिभिरुपलक्षितम्। विराजितं वीनां पक्षिणां राजा विराजो गरुडः तद्वदाचरितम् । 'निगालस्तु गलोद्देशे' 'अवटुर्घोटा कृकाटिका' इतिचामरः। 'देवमणिः शिवेऽश्वस्य कण्ठावर्ते च कौस्तुभे' इति विश्वः। सहोदरैरिति 'वोपसर्जनस्य ६।३।८२' इति वैकल्पिकत्वात्सादेशाभावः ॥ ५८ ॥

अजस्रभूमीतटकुट्टनोत्थितै-
रुपास्यमानं चरणेषु रेणुभिः।
रयप्रकर्षाध्ययनार्थमागतै-
र्जनस्य चेतोभिरिवाणिमाङ्कितैः ॥५९॥

अजस्रेति ॥ रेणुभिश्चरणेषूपास्यमानं सेव्यमानम्। किंभूतै रेणुभिः—अजस्रं निरन्तरं भूमीतटकुट्टनं धरातलचूर्णनं तेनोत्थितैः । कैरिव—अणिमा अणुपरिमाणत्वं तेनाङ्कितैर्युक्तैर्जनस्य लोकस्य चेतोभिरिवान्तःकरणैरिव। 'अणुपरिमाणं मनः' इति। किंभूतैश्चेतोभिः—रयप्रकर्षस्य वेगातिशयस्याध्ययनार्थं पठनार्थमागतैः । तद्वेगं प्रेक्षतां लोकानां चेतोभिर्वेगातिशयाध्ययनार्थमागतैरिवेत्युत्प्रेक्षा इति मनसोऽपि सकाशादश्वस्य वेगातिशयो द्योत्यते। अथ च शिष्यो गुरुचरणयोरुपास्ते। अजस्रभूमीतटकुट्टनमुत्तमाश्वजातिः । भूमीति 'कृदिकारादक्तिनः' इति ङीप्। अणिमा 'पृथ्वादिभ्य इमनिज् वा ५।१।१२२' इति पृथ्वादित्वादिमनिच् ॥ ५९ ॥

चलाचलप्रोथतया महीभृते
स्ववेगदर्पानिव वक्तुमुत्सुकम्।
अलं गिरा वेद किलायमाशयं
स्वयं हयस्येति च मौनमास्थितम् ॥६०॥

चलाचलेति ॥ चलाचलोऽतिचञ्चलः प्रोथ ओष्ठाग्रं नासापुटं यस्य, तस्य भावस्तत्ता, तया महीभृते नलाय स्वकीयवेगविषये दर्पान्गर्वान्वक्तुमुत्सुकमिवोत्कण्ठितमिव। 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः। तर्हि किमिति नोक्तवानित्याशङ्क्याह—किल प्रसिद्धौ। अयं नलो हयस्याशयमभिप्रायं स्वयमात्मनैव वेद जानाति किल, अतो गिरा वाचा अलं पूर्यतामिति हेतोरिव मौनमास्थितम्। 'अश्वहृदयवेदी नलः' इति प्रसिद्धम्' 'चलाचलप्रोथत्वमश्वजातिः'। ज्ञातुरग्रे स्वयं स्वगुणं वक्तुमनुचितमित्यर्थः।

१ अत्र सहोदरैरित्यत्रोपमा, मणेरिवेत्युत्प्रेक्षा, केसरेयादौ रूपकं चार्थालङ्कारः। मध्यतालव्यमपि केशरपदमिति तथा पाठे यमकं च, अन्यथाऽनुप्रासः।

१ अत्रोत्प्रेक्षा । २ अत्रोत्प्रेक्षा ।

चलाचल इति 'चरिचलिपतिवदीनां द्विर्वचनमाक्चाभ्यासस्य' इति द्वित्वमागागमश्च। 'अभ्यासकार्यमनचि' इति वक्तव्याद्, आगमदीर्घसामर्थ्याद्वा, 'हलादिः शेषः ।४।६०' इति न । महीभृते 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' इति सम्प्रदानत्वम् । गिरेति वारणार्थयोगे तृतीया । वेद इति 'विदो लटो वा ३।४।८३' इति णल् ॥ ६० ॥

**महारथस्याध्वनि चक्रवर्तिनः**
**परानपेक्षोद्वहनाद्यशःसितम् ।**
**रदावदातांशुमिषादनीदृशां**
**हसन्तमन्तर्बलमर्वतां रवेः ॥ ६१ ॥**

महारथस्येति ॥ महारथस्य 'आत्मानं सारथिं चाश्वान् रक्षन्युध्येत यो नरः । स महारथसञ्ज्ञः स्यात्' इत्याद्युक्त्याऽयुतयोधिनः, चक्रवर्तिनः चक्रं राष्ट्रं वर्त्तयति स्वातन्त्र्येण प्रवर्त्तयतीति तस्य सार्वभौमस्य नलस्याध्वनि मार्गे आकाशगामित्वेन न विद्यतेऽपेक्षा यस्यां क्रियायामिति परेषामन्येषामश्वानामनपेक्षयाऽनाश्रयेण यदुद्वहनं तस्माज्जातं यद्यशस्तेन यशसा सितं श्वेतम्, अत एव रदानां दन्तानामवदाता निर्मला येंऽशवः किरणास्तेषां मिषाद् अनीदृशां परानपेक्षोद्वहनासमर्थानां महान् रथो यस्य उदयाचलात् प्रभृति अस्ताचलं यावत्तदक्षस्य स्थितत्वात्तस्य चक्रमिव धर्म्माधर्म्मयोः साक्षित्वेन तयोरनुसारं प्राणिनां फलदातृत्वेन च जगद्, वर्त्तयति ऊर्ध्वमधश्च भ्रामयतीति तस्य रवेः सूर्यस्यार्वतामश्वानां बलं अन्तर्मुखमध्ये हसन्तम् । इदं तत्त्वम्, मद्वोढेव सूर्योऽपि महारथश्चक्रवर्त्ती च, किंतु तस्याश्वो नाहमिवैकः, अत एवान्योऽन्यं सङ्गत्य ते वोढुमनेके युक्ताः सन्तीति कथं नाम मादृशत्वं तेषामिति । यद्वा–रवेः सूर्यस्य, लक्षणया तत्सम्बन्धिनः, चक्रेण–एकेन चक्रेण वर्त्तत इति शीलमस्येति चक्रवर्त्तिनः, महान् असौ रथ इति तस्य महारथस्य, महतो रथस्येति यावत्, येऽश्वास्ते बहुत्वेन परापेक्षमुद्वोढार इति अहं तु महारथस्य चक्रवर्त्तिनो नलस्यैक एव वोढा, अतः परानपेक्षं मत्साध्यं तदुद्वहनमिति कथं नामाध्वनि मार्गे वोढृत्वसाम्यं लभेरन्निति । एतत्सर्वमभिप्रेत्यैव कविनाऽनीदृशामित्युक्तम् । 'सप्त युञ्जन्ति रथमेकचक्रम्' इति सूर्याश्वानां बहुत्वम्, तत एव अर्वतामित्यत्र बहुवचनं प्रयुक्तम् । अत्र स्पर्धाहेतुरुद्वाह्ययो रविनलयोः साम्यम् । यद्वा–महारथस्य चक्रवर्त्तिनो रवेरर्वतां यद्बलं तत् अन्तः स्वमनसि, हसन्तम् अनाधिक्यभावनया मृषा प्रथितं मत्वेव स्मयमानमिव, किम्भूतमर्वतां बलम्, चक्रवर्त्तिन एकचक्रस्य रविसम्बन्धिन इति प्रकृतत्वात्, महतो रथस्य अध्वनि–गगनरूपे मार्गे, ( अस्य गगनस्य निराधारत्वात् ) परानपेक्षं यदुद्वहनं ततो लब्धेन यशसा सितमिति । बलानाधिक्यभावना तु श्लेषोत्थापितमहारथादिपदार्थसाम्यमूलैव स्पर्धाहेतुश्च न त एवैवम्भूताः, किं त्वहमपि; अतः किं तेषां बले उत्कृष्टत्वम्, यद्वा–तेषां यावत् यद्बलं तावद्बलं ममापीति । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।' इति, 'रदना दशना दन्ता रदाः' इति, 'अवदातः सितो गौरः' इति चामरः । 'आन्महतः समानाधिकरणजातीययोः ६।३।४६' इति महत आत् ॥ ६१ ॥

**सितत्विषश्चलतामुपेयुषो**
**मिषेण पुच्छस्य च केसरस्य च ।**
**स्फुटं चलच्चामरयुग्मचिह्नै-**
**रनिह्नुवानं निजवाजिराजताम् ॥ ६२ ॥**

सितेति ॥ सिता श्वेता त्विट् दीप्तिर्यस्य तस्य चञ्चलतां चापल्यमुपेयुषः प्राप्तस्य पुच्छस्य च केसरस्य स्कन्धकेशसमूहस्य च मिषेण व्याजेन चलच्चञ्चलं चामरयोर्युग्मं तस्य चिह्नैः कृत्वा निजवाजिराजतां वाजिनां राजा वाजिराजः, तस्य भावस्तत्ता निजस्यात्मनो वाजिराजता तामनिह्नुवानं प्रकटयन्तमिति स्फुटमुत्प्रेक्षे । राजा हि श्वेतचामरद्वयेन वीज्यते । चलनक्रियापेक्षया चिह्नैरिति बहुवचनम् । चिह्नैरिति 'तत्करोति तदाचष्टे' इति ण्यन्ताद्भावे 'ल्युट् च ३।३।११५' इति ल्युट् राज्ञो हि चामरद्वयेनोपासना दृश्यते, अश्वस्यास्य पुनः पुच्छकेसरयोर्द्वयं तस्योभयतः सञ्चारणेनेति यथोक्तम् ॥ ६२ ॥

**अपि द्विजिह्वाभ्यवहारपौरुषे**
**मुखानुषक्तायतवल्गुवल्गया ।**

---

१ अत्र सिद्धायास्तथोक्तायाः क्रियाया अलभित्यादिनाऽपह्नवनादपह्नुतिः, दर्पानिवेत्युत्प्रेक्षणादुत्प्रेक्षा, तादृश्याः क्रियाया एवोक्तः स्वभावोक्तिश्चालङ्कारः ।

१ अत्रेवाभावाद्गम्योत्प्रेक्षा, मिषादित्यपह्नुतिः, सूर्याश्वापेक्षया नलाश्वोत्कर्षप्रत्यायनाद् व्यतिरेकः, सूर्यतद्रथनलानां श्लेषेणाभेदोद्भावनाद्व्यङ्ग्यं रूपकं चालङ्कारः । नलः सूर्य इवेत्युपमा तु ध्वन्यैव । २ अत्राप्यपह्नुतिः अनिह्नुवानमिव स्थितमिति व्यङ्ग्योत्प्रेक्षा च ।

उपेयिवांसं प्रतिमल्लतां रय-
स्समये जितस्य प्रसभं गरुत्मतः ॥६३॥

अपीति ॥ रयस्समये वेगगर्वे प्रसभं बलात्कारेण जितस्य गरुत्मतो गरुडस्य द्विजिह्वाः सर्पास्तेषामभ्यवहारो भक्षणं तस्मायत्पौरुषं तस्मिन्नपि मुखेऽनुपक्ता लग्ना आयता दीर्घा वल्गुः सुन्दरी या वल्गा प्रग्रहस्तया कृत्वा प्रतिमल्लतां प्रतिभटत्वमुपेयिवांसं प्राप्तवन्तम्। वल्गाप्रान्ता हि सर्पपुच्छसदृशा दृश्यन्ते। पूर्वं वेगदर्पविषये जितः अधुना सर्पभक्षणपौरुषेऽपीति। वल्गा कान्यकुब्जभाषायां 'वाग' इति प्रसिद्धो ॥ ६३ ॥

स सिन्धुजं शीतमहःसहोदरं
हरन्तमुच्चैःश्रवसः श्रियं हयम्।
जिताखिलक्ष्माभृदनल्पलोचन-
स्तमारुरोह क्षितिपाकशासनः ॥ ६४ ॥

स इति ॥ सिन्धुजं सिन्धुदेशोद्भवम्। शीतमहाश्चन्द्रस्तस्य सहोदरं तुल्यम्। उच्चैःश्रवस इन्द्राश्वस्य श्रियं शोभां हरन्तं तत्सदृशम्। किंभूतो नलः—जिता अखिलाः समस्ताः क्ष्माभृतो राजानो येन। तथा अनल्पे महती लोचने यस्य सः यद्वा—अनल्पं लोचनं ज्ञानं यस्य। तथा क्षितौ पृथिव्यां पाकशासन इन्द्र इव। क्षितौ पाकं पचिक्रियां शास्त्युपदिशति सूपशास्त्रप्रणेतृत्वात्। उच्चैःश्रवाः अपि समुद्रजः स चन्द्रभ्राता तं यथा जिता, अखिला भूभृतः पर्वता येनेति जिताखिलक्ष्माभृत् जितसमस्तशैलः, तथा अनेकातिसहस्रीमत्यर्थः लोचनानि यस्येत्यनेकलोचनः। सहस्रलोचनश्च इन्द्र आरोहति, तथा सिन्धोः समुद्रात् जायत इति सिन्धुजः तथा शीतं महः प्रभामण्डलं यस्य तस्य, चन्द्रस्येत्यर्थः, सहोदरः सिन्धुजत्वेन सोदरो भ्रातेति तं हयमारुरोहेति। सिन्धुमित्यनेनाश्वशास्त्रोक्तचतुष्पञ्चाशदुत्तमकुलमध्यजत्वं बलित्वं महाकायत्वं च सूचितम् 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः। 'पञ्चम्यामजातौ ३। २।९८। इति जनेर्डः 'राजा राट् पार्थिवक्ष्मान्नृपभूपमहीक्षितः' इति,'महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः' इति चामरः। इति कुलकम् ॥ ६४ ॥

निजा मयूखा इव तीक्ष्णदीधितिं
स्फुटारविन्दाङ्कितपाणिपङ्कजम्।
तमश्ववारा जवनाश्वयायिनं
प्रकाशरूपा मनुजेशमन्वयुः ॥ ६५ ॥

निजा इति ॥ अश्ववारा अश्वसादिनस्तं मनुजेशं राजानं नलमन्वयुरनुजग्मुः। किम्भूता अश्ववाराः—निजाः स्वकीयाः। किम्भूतं नलम्—स्फुटं प्रकटं लक्षणभूतानि रेखारूपाणि यान्यरविन्दानि तैराङ्कितं चिह्नितं पाणिपङ्कजं यस्य तं तथा—जवनो वेगवान्योऽश्वस्तेन यातीत्येवंशीलम्। के कमिव—निजाः सहजा मयूखाः किरणास्तीक्ष्णदीधितिं सूर्यमिव। सूर्यविशेषणमपि। स्फुटेति 'कमलपाणिः सूर्यः' इत्यागमात्। सूर्योऽपि जवनैरश्वैर्याति। मयूखा यथा सदा सूर्यसहचारिणः,तथाश्ववारा अपि। तेन तेषां स्वरहस्यवेदित्वमुक्तम्। 'जवनस्तु जवाधिकः' इत्यमरः। 'प्रकाशोऽतिप्रसिद्धे स्यात्प्रकाशातपयोः स्फुटे' इति विश्वः। मीनाति हिनस्ति तम् इति मयूखः 'मीनातेरूखः' इत्यौणादिक ऊखप्रत्ययः। अश्वान् वृण्वते इत्यश्ववाराः 'कर्मण्यण् ३।२।१' इत्यण् 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलपपतपदः ३।२।१५०' इति युचि जवनः ॥६५॥

चलन्नलङ्कृत्य महारयं हयं
स्ववाहवाहोचितवेषपेशलः।
प्रमोदनिःस्पन्दतराक्षिपक्ष्मभि-
र्व्यलोकि लोकैर्नगरालयैर्नलः ॥ ६६॥

चलन्निति ॥ नगरालयैः नगरम् आलयः स्थानं येषां तैर्नगरवासिभिर्लोकैर्नलो व्यलोकि स्वेच्छया दृष्टः। किम्भूतः—महारयमतिशयितवेगं हयमश्वं स्वाधिष्ठानेनालङ्कृत्य चलन्मध्येमार्गं गच्छन्। पुनः किम्भूतः—स्वस्य वाहोऽश्वस्तल्लक्षणो वाहो वाहनं तस्योचितो वेषोऽलंकारादिस्तेन पेशलो रमणीयः। यद्वा—वाहवाहस्याश्ववारस्य।

१ अत्र प्रतिमल्लतयाऽवस्थाने उभयतः प्रसृताया वल्गाया द्विजिह्वाभेद इत्युपमा, तादृशाभेदे च सम्भाव्यमानं साम्यं हेतुरित्युत्प्रेक्षाप्राणिता। साम्यं च मुखानुपङ्गावसरे वल्गाया उभयतः प्रसरणेन जिह्वाद्वयवत्त्वप्रत्ययात्,अभ्यवहारावसरे मुखानुपक्तत्वं तूभयत्र स्थान एवेति बोध्यम्।

१ अत्र श्लिष्टोपमा, विशेष्यस्याश्लिष्टत्वाद्विशेषणानां च श्लिष्टत्वं क्षितिपतिनाकपत्योः साम्यमिति समासोक्तिश्च। २ अत्राश्ववाराणाम्मयूराणां च साम्यं सम्भाव्य नलस्य विशेषणवैशिष्ट्येन सूर्यरूपत्वं प्रत्यायितमिति समासोक्तिरुपमा च। श्लेषश्च प्राणप्रदः। विशेष्यस्य मनुजेशस्याश्लिष्टत्वं च सुव्यक्तमिति दिक्। ३ "पारे मध्ये षष्ठ्या वा २।१।१८" इति मार्गस्य मध्य इत्यर्थः। मध्यपदस्य पूर्वपदत्वेदन्तत्वयोर्निपातनात्।

यद्वा—वाहस्याश्वस्य वाहे संचारणे उचितो वेषो नेपथ्यम्। किम्भूतैर्लोकैः—प्रमोदेनातिशायितानन्देन निःस्पन्दतराण्यक्षिपक्ष्माणि नेत्रपक्ष्माणि येषां तैः।निर्निमेषं सादरावलोकनं कुर्वद्भिरित्यर्थः । महारयमित्यनेनाष्टाभिर्मात्राभिर्धनुःशतमात्रभूलङ्घनसामर्थ्यं सूचितम् । 'वाहस्तु मीनभेदे वृषे हये' इति, 'पेशलः सुन्दरो दक्षः' इति च विश्वः । नगाः सन्त्यस्मिन्निति नगरम् । 'ऊषसुषिमुष्कमधो रः ५।२।१०७' इत्यत्र 'नगपांसुपाण्डुभ्यश्च' इति वार्तिकवचनात् रः ॥ ६६ ॥

क्षणादथैष क्षणदापतिप्रभः
प्रभञ्जनाध्येयजवेन वाजिना ।
सहैव ताभिर्जनदृष्टिवृष्टिभि-
र्बहिः पुरोऽभूत्पुरुहूतपौरुषः ॥ ६७ ॥

क्षणादिति ॥ अथाश्वारोहणानन्तरमेष नलः वाजिनाऽश्वेन ताभिर्जनदृष्टिवृष्टिभिः सहैव क्षणान्निमेषमात्रेण पुरो नगराद्बहिरभूत् । यः प्राक्क्षणे पुरे दृष्टः स एव उत्तरक्षणे पुराद्बहिरिति जवातिशयोक्तिः किम्भूतो नलः—क्षणदा रात्रिस्तस्याः पतिश्चन्द्रः तद्वत्प्रभा यस्य । तथा पुरुहूत इन्द्रस्तद्वत्पौरुषं सामर्थ्यं यस्य । कीदृशेन वाजिना—प्रभञ्जनेन वायुनाऽध्येयोऽध्येतव्यो जवो वेगो यस्मात् । क्षणादिति विभक्तिप्रतिरूपकमव्ययम् 'अपपरिबहिरञ्चवः पञ्चम्या २।१।१२' इति पञ्चमीसमासविधानादेव ज्ञापकाद्बहिर्योगे पञ्चमी ॥ ६७ ॥

ततः प्रतीच्छ प्रहरेति भाषिणी
परस्परोल्लासितशल्यपल्लवे ।
मृषा मृधं सादिबले कुतूहला-
न्नलस्य नासीरगते वितेनतुः ॥ ६८ ॥

तत इति ॥ ततः पुरतो निर्गमानन्तरं नासीरं सेनामुखं गते प्राप्ते नलस्य सादिबलेऽश्वारोहसैन्ये कुतूहलात्कौतुकादत एव मृषा अलीकं मृधं युद्धं वितेनतुश्चक्रतुः किम्भूते बले—हे शूर, त्वं प्रतीच्छ मदीयं शस्त्रं स्वाङ्गे गृहाण, प्रहर मयि प्रहारं कुर्विति भाषिणी वदन्ती । तथा—परस्परस्योपर्युल्लासिता उद्गूर्णाः, न तु युयुत्सया मृषात्वेन क्षिप्ताः शल्यानां शस्त्राणां पल्लवाः प्रान्ता याभ्याम् । अत एव मृषा पल्लवः प्रान्तवाची वस्त्रपल्लववत् । नलस्य कुतूहलादिति वा । शल्यं तोमरं शस्त्रम् । 'सेनामुखं तु नासीरम्' इत्यमरः । परस्परेत्यत्र कस्कादित्वात्सः ॥ ६८ ॥

प्रयातुमस्माकमियं कियत्पदं
धरा तदम्भोधिरपि स्थलायताम् ।
इतीव वाहैर्निजवेगदर्पितैः
पयोधिरोधक्षममुद्धतं रजः ॥ ६९ ॥

प्रयातुमिति ॥ निजेन स्वकीयेन वेगेन जवेन प्रयोजकेन दर्पितैर्गर्वं प्रापितैर्वाहैरश्वैरितीव मनसि धृत्वा इति हेतोर्वा रज उद्धतमुत्थापितम् । इतीति किम्—इयं धरा पृथिव्यस्माकं धावतामश्वानां कियत्पदं स्यात्, अपि तु द्वित्राणि पदानि भविष्यन्तीति । यस्मादित एवं प्रयातुं प्रकर्षेण यातुं गन्तुमम्भोधिरपि समुद्रोऽपि स्थलायतां स्थलमिवाचरतु भवतु । किम्भूतं रजः—पयोधेः समुद्रस्य रोधः तस्य यत् पूरणं तत्र क्षमं समर्थम् । प्रयातुमित्यस्य स्थलायतामित्यनेन सम्बन्धः । दर्पितैरिति ण्यन्तान्निष्ठा । अन्यथा श्यन्विकरणस्य दृप्त इति स्यात् । शब्विकरणस्य तु दर्पित इति ॥ ६९ ॥

हरेर्यदक्रामि पदैककेन खं
पदैश्चतुर्भिः क्रमणेऽपि तस्य नः ।
त्रपा हरीणामिति नम्रिताननै-
र्न्यवर्ति तैरर्धनभःकृतक्रमैः ॥ ७० ॥

हरेरिति ॥ इति विचार्य, हेतोर्वा नम्रिताननैः नम्रितं नम्रीकृतमाननं मुखं यैः अर्धेन पूर्वार्धेन नभस्यन्तरिक्षे कृतः क्रमः पादविक्षेपो यैस्तैरश्वैर्न्यवर्ति निवृत्तम् । अर्धे नभसीति वा । इतीति किम्—यत् खं नभो हरेर्विष्णोरेककेनासहायेन पदा चरणेनाक्रामि आक्रान्तं तस्य खस्य नभसश्चतुर्भिरेव पदैश्चरणैः क्रमण आक्रमणे

---

१ अत्रानुप्रासः । २ अत्रोपमानभूतप्रभञ्जनापेक्षयोपमेयभूताश्वोत्कर्षप्रतिपादनाद् व्यतिरेकः । सहेति प्रयुज्य जवातिशयप्रतिपादनात्सहोक्तिश्च । न चात्र यथाऽऽहुर्जीवातुकाराः, वेगातिशयोक्तिरिति, एषा हि सहोक्तेरलङ्कारत्वाधायिका अन्यथा चमत्कारास्फुरणे 'देवदत्तेन सहागतो यज्ञदत्तः' इत्यादिवन्नालङ्कारत्वमित्यालङ्कारिकाः प्राहुः ।

१ अनुप्रासोऽत्र शब्दालङ्कारः । २ अत्रोत्प्रेक्षाऽनुप्राणिता, स्वभावोक्तिः, धूल्युद्धूलनस्य तद्गमने सिद्धत्वात् ।

नोऽस्माकं हरीणामश्वानाम्, अथवा विष्णूनाम्। बहूनामस्माकं त्रपा लज्जा भविष्यतीति, यस्मादस्मज्जातीयेनैकेन हरिणा एकेनैव पादेन यदाक्रान्तं नभस्तस्य बहुभिरस्माभिर्बहुभिः पदैराक्रमणे नोऽस्माकं महती लज्जा कथं न स्यादिति हरिशब्दच्छलेन गम्योत्प्रेक्षा। सलज्जश्च नम्रमुखो भवति। अर्धनभःकृतक्रमैरित्यनेन गतेरुत्तमत्वं सूचितम्। तेन सादिनामानन्दोऽरीणां भीतिश्च। 'नोदात्तोपदेशस्य मान्तस्यानाचमेः ७। ३। ३४' इति वृद्धिनिषेधात् अक्रामि इति चिन्त्यम्। 'सकृद्गद्धमबद्धं भवति, द्विर्बद्धं सुबद्धं भवति' इति तदो दावचनज्ञापितया परिभाषया वृद्धिनिषेधस्यानित्यत्वमाश्रित्य कथञ्चित्परिहरणीयम्। यदा तु 'तदो दा च ५।३।१९' इत्यत्र स्वार्थे दा इति प्रत्यय इति पक्षस्तदैतस्याः परिभाषाया निर्मूलत्वाच्चिन्त्यमेव। यद्वा—'प्राग्दिशो विभक्तिः५।३।१'इति थमो विभक्तित्वात् 'न विभक्तौतुस्माः१।३।४'इत्यनेनैव मकाररस्येत्संज्ञानिषेधे सिद्धे'इदमस्थमुः' इत्युकारोच्चारणं व्यर्थं सदेतस्याः परिभाषाया मूलमिति ज्ञेयम्। गत्यन्तरं वा गवेषणीयम्।पदेति'पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ६।१। ६३'इति पदादेशः। एककेनेति 'एकादाकिनिच्चसहाये ५।३।५२' इति चकारात्कन्॥ ७० ॥

**चमूचरास्तस्य नृपस्य सादिनो**
**जिनोक्तिषु श्राद्धतयेव सैन्धवाः।**
**विहारदेशं तमवाप्य मण्डली-**
**मकारयन्भूरितुरङ्गमानपि ॥ ७१ ॥**

चमूचरा इति॥ तस्य नृपस्य चमूचराः सेनाचराः सादिनोऽश्ववारास्तं पूर्वोक्तं विहारदेशं बाह्यलीलाप्रदेशमवाप्य प्राप्य भूरितुरङ्गमानपि बहूनश्वानपि मण्डलीं मण्डलाकारेण गतिविशेषमकारयन्। अपिशब्दात्तन्मण्डलीकरणवशात्स्वयमपि कृतवन्त इत्यर्थः। के इव—जिनोक्तिषु बौद्धवचनेषु श्राद्धतयाऽऽस्तिकतया सैन्धवा इव सिंधुदेशोद्भवा जिना इव। विहारदेशं सुगतालयं प्राप्य यथा जिना मण्डलाकारेणावतिष्ठन्ते तथेत्यर्थः। तण्डुलादिसप्तधान्यमयीं मण्डलीं कारयन्तीति तत्संप्रदायविदः, चमूचरा इति 'चरेष्टः। ३।२।१६' श्राद्ध इति मत्वर्थे 'प्रज्ञाश्रद्धाऽर्चाभ्यो णः ५।२।१०२' इति णः। मण्डलीमिति गौरादित्वान्ङीष्। तुरङ्गमानिति 'हृक्रोरन्यतरस्याम् १।४।५३' इति कर्मत्वात्॥ ७१ ॥

**द्विपार्द्धिरेवास्य विलङ्घिता दिशो**
**यशोभिरेवाब्धिरकारि गोष्पदम्।**
**इतीव धारामवधीर्य मण्डली-**
**क्रियाश्रियाऽमण्डि तुरङ्गमैः स्थली॥७२॥**

द्विपार्द्धिरिति॥ तुरङ्गमैरश्वैरितीव हेतोः, विचार्य वा धारामास्कन्दितादिपञ्चप्रकारां गतिमवधीर्य त्यक्त्वाऽवज्ञाय मण्डलीक्रियाश्रिया मण्डलीकरणजनितशोभया स्थली अकृत्रिमा भूमिः, अमाण्डि अभूषि। 'मडि भूषायाम्' अश्ववारा धाराभिः प्रथममश्वान्नमयन्ति, पश्चाद् भूमिप्रदक्षिणाकारेणावस्थापयन्तीति तेषां जातिः। इतीति किम्—अस्य द्विपार्द्धिरेव दिशो भयेन विलङ्घिता आक्रान्ताः, अस्य यशोभिरेव कीर्तिभिरेवाब्धिः समुद्रो गोष्पदं गोखुरप्रमाणोऽनायासेन लङ्घ्य एवंविधोऽकारि कृतः। ऋजुगत्याऽस्माभिर्दिगन्तः समुद्रश्च लङ्घनीयः। तयोर्लङ्घनमन्यैरेव कृतमिति तत्रैव भ्रमिं चक्रुरित्यर्थः। 'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्। गतयोऽमूः पञ्च धाराः' इत्यमरः।गोष्पदमिति'गोष्पदं सेवितासेवितप्रमाणेषु ६।१। १४५' इति सुट्पत्वे। धारामिति धार्यन्ते गतौ स्थाप्यन्तेऽनयेति धारा। भिदादित्वादङ्।धाराणां पञ्चत्वेन धारा इति बहुवचनान्तमेव पठनीयं, किंत्वत्र जातावेकवचनम्। स्थलीति। अकृत्रिमत्वे 'जानपद ०००।४।१।४२' इति

१ अत्र 'यदेककेनाक्रमि खं हरेः पदा' इति प्रथमपादपाठः, पाठान्तरं तु गड्डलिकान्यायेन प्राप्तमित्यभियुक्ताः। अथ समाधातारोऽपि महामहोपाध्यायाः 'गत्यन्तरम्' इति प्रतीकमुपजीव्य 'अत एव मनोरमायां दीक्षितैः— 'कथं तर्हि 'हरेर्यदक्रामि पदैककेन खम्' इति श्रीहर्षः? प्रमाद एवायम्। यदि समाधेयमेवेत्याग्रहः, 'तर्हि निवृत्तप्रेषणात् प्राकृतेऽर्थे णिचि तत्तश्चिण् बोध्यः। 'इत्युक्तम्। तथा च णिन्निमित्तिकाऽत्र वृद्धिः। न च तत्राप्यमन्तत्वेन मित्त्वेन ह्रस्वापत्तिः। 'मितां ह्रस्वः ६।४।९२' इत्यत्र 'वा चित्तविरागे' ६।४।९१'इत्यतो वेत्यस्येत्यनुवृत्तौ व्यवस्थितविभाषाऽऽश्रयणेन ह्रस्वाप्रवृत्तेः।' इति तेषामाशयः।' इति प्राहुः। वयं त्वेवं ब्रूमः,— क्रम एव क्रामः, इति स्वार्थेऽणि रूपं, ततः 'तत् करोति तदाचष्टे'इति णिचि, ततः क्रामेर्धातुत्वे कर्मणि लुङि रूपमिदं स्यादिति। २ अत्र हेतूत्प्रेक्षा।

१ अत्र श्राद्धतयेवेति सम्भावनादुत्प्रेक्षा श्लेषश्चास्या अङ्गमित्यङ्गाङ्गिभावात्माऽनयोः सङ्करोऽपि।

ङीष्। अवधीर्येति 'अवधीर अत्यवज्ञायाम्' इति धातो रूपं न, तस्य ल्यबादेशासंभवात्। किंत्ववधिपूर्वस्य 'ईर प्रेरणे' इत्यस्य अवधीर्येत्यत्र शकन्ध्वादित्वात्पररूपम्। ततश्चावधीर्य इति सिद्धम् ॥ ७२ ॥

**अचीकरच्चारु हयेन या भ्रमी-**
**र्निजातपत्रस्य तलस्थले नलः।**
**मरुत्किमद्यापि न तासु शिक्षते**
**वितत्य वात्यामयचक्रचङ्क्रमान्॥७३॥**

अचीकरदिति ॥ नलो निजातपत्रस्य स्वीयच्छत्रस्य तलस्थलेऽधोभागे हयेनाश्वेन चारु सम्यक् मनोज्ञं यथा स्यात्तथेति यावत् या भ्रमीर्भ्रमणान्यचीकरत्कारयामास, तासु विषये मरुद्वायुरद्यापि वात्यामया वातसमूहरूपाश्चक्राकाराश्चङ्क्रमा भ्रमणानि तान्वितत्य किं न शिक्षते। भ्रमिविषये ज्ञाने शक्तो भवितुं नेच्छति किम्, अपि तु शक्तो भवितुमिच्छत्येव परमद्यापि शक्तो नाभूदित्यर्थः। वात्यावर्तं कुर्वन्वायुरपि भ्रमिज्ञाने शक्तो भवितुमिच्छतीवेत्युत्प्रेक्षा।एतेनाश्वस्य चलनक्रियादाक्ष्यं सत्ववत्त्वं चोक्तम्। सत्त्वरहितो न संग्राह्य इति 'तल्लक्षणगुणैः श्लाघ्यः किं सत्त्वेन विना हयः। पञ्चेन्द्रियसमेतोऽपि यथा कायो विनाऽऽत्मना ॥' इति सारसिन्धौ। हयेनेति 'हृक्रोरन्यतरस्याम् १।४।५३' इति विकल्पितत्वात्कर्मत्वाभावः। भ्रमीरिति कृष्यादित्वादिक्। शिक्षत इति सन्नन्ताच्छकेः 'शिक्षेर्जिज्ञासायाम्' इति कर्त्र्यात्तङ्। चचङ्क्रमान् इति यङन्ताद्घञि अतो लोपे 'यस्य हलः ६।४।६' इति यलोपः। वितत्य शिक्षते इति समानकाले क्त्वा। पाशादित्वाद्यात्या। ततस्ताद्रूप्ये मयट् 'ताः सुशिक्षते' इति पाठे ता भ्रमीः सु शोभनं किं न शिक्षते जिज्ञासते इत्यर्थः ॥७३॥

**विवेश गत्वा स विलासकाननं**
**ततः क्षणात्क्षोणिपतिर्धृतीच्छया।**
**प्रवालरागच्छुरितं सुषुप्सया**
**हरिर्घनच्छायमिवार्णसां निधिम् ॥७४॥**

विवेशेति ॥ ततोऽनन्तरं स क्षोणिपतिः पृथ्वीपतिर्नलः प्रवालरागेण नवपल्लवलौहित्येन छुरितं विचित्रं घनच्छायं निविडच्छायं विलासकाननं क्रीडावनं गत्वा प्राप्य क्षणाच्छीघ्रं धृतीच्छयाऽत्र मम संतापो निवर्तिष्यते इत्यभिलाषेण, अन्यत्र व्यासङ्गाद्वैर्यं भवेदिति वासनया वा विवेश। कः कया कमिव—हरिर्विष्णुः सुषुप्सया स्वप्तुमिच्छया प्रवालरागेण विद्रुमलौहित्येन छुरितं श्यामत्वाद् वनस्य मेघस्य छायेव छाया यस्य तम्। एवं भूतमर्णसां निधिं समुद्रमिव। अथ च पल्लवताम्रं जलस्थानभूतं निविडच्छायं वनं सुषुप्सया हरिः सिंहो यथा विशति तथेत्यर्थः। क्षोणिपतिरिति 'ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम् ६।३।६३ इति' ह्रस्वः। ह्रस्वान्त एव वा 'क्षोणिशब्दः' दीर्घान्तस्तु 'कृदिकारादक्तिनः' इति ङीषन्तत्वात् ॥ ७४ ॥

**वनान्तपर्यन्तमुपेत्य सस्पृहं**
**क्रमेण तस्मिन्नवतीर्णदृक्पथे।**
**न्यवर्ति दृष्टिप्रकरैः पुरौकसा-**
**मनुव्रजद्बन्धुसमाजबन्धुभिः ॥ ७५ ॥**

वनेति ॥ पुरौकसां नगरवासिनां दृष्टिप्रकरैर्नेत्रसमूहैर्नलावलोकनार्थं सस्पृहं साभिलाषं वनान्तस्य वनस्वरूपस्य पर्यन्तं मर्यादामुपेत्य गत्वा न्यवर्ति निवृत्तम्। कस्मिन्सति—तस्मिन्नले क्रमेणावतीर्णदृक्पथे दृङ्मार्गागोचरे सति। किम्भूतैर्दृष्टिप्रकरैः—अनुव्रजन्ननुगच्छन् यो बन्धुसमाज इष्टसमूहस्तस्य बन्धुभिः सदृशैः। वनान्तः पर्यन्तोऽवधिर्यथा भवति गतित्वेन तथेति क्रियाविशेषणं वा। बन्धुभिरपि वनान्तमुदकसमीपं क्रीडावनसमीपं वा साभिलाषं गत्वा तत्रैव पथि स्थित्वा पथिकेऽदृष्टे सति निवर्त्यते। 'जीवनं भुवनं वनम्' इत्यमरः। पुरौकसामिति 'पॄ पालने' इत्यस्मान्मूलविभुजादेराकृतिगणत्वात्कप्रत्यये 'उदोष्ठ्यपूर्वस्य ७।१।१०२' इत्युत्त्वे रपरत्वे पुर इत्यदन्तेन पुरे पुरं वा ओको येषामिति 'सप्तमीविशेषणे बहुव्रीहौ १।२।३५' इत्यत्र सप्तमीग्रहणात्तज्ज्ञापकात् लक्षणया वा बहुव्रीहौ सुब्लुकि 'वृद्धिरेचि ६।१।८८ इति वृद्धौ सिद्धमिष्टं

---

१ यद्यपि नायं धातुषु पठितो धातुरुपलभ्यते, तथाऽपि सिद्धान्तकौमुद्यां चुराद्यन्ते 'बहुलमेतन्निदर्शनम्' इत्युक्त्वा' अदन्तधातुनिदर्शनार्थमिदम्।बाहुलकादन्येऽपि बोध्यास्तद्यथा अवधीरयति इत्युक्तम्।एवंचास्यार्थोऽप्ययं स्यादिति। वस्तुतस्तु 'अवधीर्य' इति चिन्त्यमेव, 'अवधीय' इति तु साधु 'धीङ्' आधारे इति, यद्वा दधातेरेवेदं रूपम्, भागुरिमते वाकारलोपे नञा समासे प्रकृतार्थोपपत्तावबाधात्। २ अत्रोत्प्रेक्षा अतिशयोक्तिः, स्वभावोक्तिश्च। ३ अत्राप्युत्प्रेक्षा व्यतिरेकध्वनिश्च।

१ अत्रोपमा।

रूपम्, दृक्पथे इति 'ऋक्पूरब्धूःपथामानक्षे ५।४।१४' इति समासान्तः ॥ ७५ ॥

ततः प्रसूने च फले च मञ्जुले
स सम्मुखस्थाङ्गुलिना जनाधिपः ।
निवेद्यमानं वनपालपाणिना
व्यलोकयत्काननकामनीयकम् ॥७६॥

तत इति ॥ ततो वनप्रवेशानन्तरं स जनाधिपो नलः काननस्य क्रीडावनस्य कामनीयकं रामणीयकम् व्यलोकयत् पश्यति स्म । किंभूतम्—वनपालस्योद्यानरक्षकस्य पाणिना हस्तेन निवेद्यमानं ज्ञाप्यमानम् । किम्भूतेन—मञ्जुले रमणीये प्रसूने पुष्पे फले च (जातावेकवचनम्) सम्मुखस्थाऽभिमुखाऽङ्गुलिर्यस्य कामनीयकमिति भावे 'योपधाद्गुरूपोत्तमाद्वुञ् ५।१।१३२' इति वुञ्। गुणवाचित्वात् 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २।२।११' इति समासनिषेधेऽपि 'तदशिष्यं सञ्ज्ञाप्रमाणत्वात् १।२।५३' इति ज्ञापकबलात्समासः ॥ ७६ ॥

फलानि पुष्पाणि च पल्लवे करे
वयोतिऽपातोद्गतवातवेपिते ।
स्थितैः समादाय महर्षिवार्धका-
द्वने तदातिथ्यमशिक्षि शाखिभिः ७७

फलानीति ॥ वने विद्यमानैः शाखिभिर्वृक्षैर्महर्षिवार्धकाद्वृद्धमहर्षिसमूहात्तदातिथ्यं तस्य नलस्य पूजाऽशिक्षि शिक्षितेव । किम्भूतैः शाखिभिः—वयसां पक्षिणामतिपातोऽतिजवेनोत्पतनं तेन उद्गत उच्छ्रितो यो वातस्तेन वेपिते कम्पिते करे हस्ते तद्रूप इति यावत् । पल्लवे पत्रे पुष्पाणि फलानि च समादाय गृहीत्वा स्थितैः । वृद्धमहर्षिसङ्घा वयसः शरीरावस्थायाःअतिपातः अत्यन्तं व्ययस्तेनोद्गत उत्पन्नो वातस्तद्रोगस्तेन वेपिते इति वृद्धत्वादेव चले इति भावः, पल्लवे तद्रूपे हस्ते फलानि पुष्पाणि च गृहीत्वा राजपूजार्थं यथा तिष्ठन्ति तथा वृक्षा अपि । उद्याने महर्षयस्तिष्ठन्तीति उचितम् । विजने विद्याभ्यासश्च । तत्र फलपुष्पयुक्ता वृक्षा भूयांस इति भावः । वृद्धानां समूहो वार्धकम् 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् इति४।२।३५'सूत्रे 'वृद्धाच' इति वक्तव्या द्वुञ् महर्षीणां वार्धकमिति षष्ठीसमासः।सामर्थ्याद्वृत्त्यन्तर्गतस्यापि वृद्धशब्दस्य यथाकथंचिन्महर्षिशब्देनान्वयः । 'आख्यातोपयोगे १।४।२९' इत्यपादानत्वम् । आतिथ्यम् तादर्थ्ये 'अतिथेर्ञ्यः ५।४।२४' इति ञ्यः । शाखिनः व्रीह्यादित्वादिनिः 'लगवाल्यादिनोर्वयः' इत्यमरः । जनेष्वागतेषु पक्षिणः सहसोद्गच्छन्ति तद्वातश्च पल्लवादि कम्पयतीति वार्द्धक्ये च वातरोगो वर्धते तेन करादेः कम्पनं दृष्टचरमिति यथोक्तम् । वृक्षपक्षे पल्लवस्य कररूपत्वम्, अन्यत्र तु करस्य पल्लवरूपत्वमिति यथायथं बोध्यम् ॥ ७७ ॥

विनिद्रपत्रालिगतालिकैतवान्
मृगाङ्कचूडामणिवर्जनार्जितम् ।
दधानमाशासु चरिष्णु दुर्यशः
स कौतुकी तत्र ददर्श केतकम् ॥ ७८॥

राजानं दृष्ट्वा सात्त्विकभावोत्पत्तेः कण्टकितत्वात्प्रथमं केतकं वर्णयति—

विनिद्रेति ॥ स नलस्तत्र वने कौतुकी अपूर्वपुष्पादिदर्शनोत्सुकः सन्केतकं केतकीपुष्पं ददर्श । किम्भूतं केतकम्—विनिद्रा विकसिता पत्रालिः पत्रपंक्तिस्तत्र गताः, तां वा गता ये अलयो भ्रमरास्तेषां कैतवान्मिषात् मृगाङ्कश्चन्द्रः चूडामणी यस्य स शिवः, तेन वर्जनं पुराणप्रसिद्धः परित्यागस्तेनार्जितमुपार्जितमाशासु दिशासु चरिष्णु प्रसरणशीलं दुर्यशोऽपकीर्तिः तां दधानम् । भ्रमरा न सन्ति किंतु महादेवकृतपरित्यागजन्यमयश इति भावः ।महताहिपरित्यक्तोऽयशोभाग्भवति ।चरिष्णु 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ३।२।१३६' इति इष्णुच्।कौतुकी'अत इनिठनौ ५।२।११५' इतीनिः। केतक्याः पुष्पं केतकम् । विकारावयवप्रत्ययस्य 'पुष्पमूलेषु बहुलम्' इति वचनाल्लुक् 'लुक् तद्धितलुकि४।२।४९' इति स्त्रीप्रत्ययलुक् ॥ ७८ ॥

---

१ अत्रानुप्रासश्शब्दालङ्कारः, रूपकं त्वर्थालङ्कारः । दृष्टिप्रकराणां समाजबन्धुत्वेनरूपणात् । दृक्पथमवतीर्य स्थितौ दृष्टीनां निवृत्तेः सिद्धत्वमेवेति तथा वचनं यावद् द्रष्टुं स शक्य आसीत्तावदनुगम्याऽपि नागरिका द्रष्टुमुत्सुकतामेव प्रकटयामासुरिति बोध्यम् । २ अत्रानुप्रासः।

१ अत्र रूपकं,श्लेष, उत्प्रेक्षा च । २ अत्रापह्नुतिः । दधानमिवेत्यभिप्रेतत्वाद्गम्योत्प्रेक्षा च ।

**वियोगभाजां हृदि कण्टकैः कटु-**
**र्निधीयसे कर्णिशरः स्मरेण यत् ।**
**ततो दुराकर्षतया तदन्तकृ-**
**द्विगीयसे मन्मथदेहदाहिना ॥ ७९ ॥**

वियोगेति ॥ 'तेन नलेन इति क्रुधा क्रोधेन केतकमाक्रुश्यतानिन्द्यतेव' इति तृतीयश्लोकेनान्वयः । इतीति किम्—'स्मरेण कामेन वियोगभाजां वियोगिनां स्त्रीपुंसानां हृदि वक्षसि कण्टकैः कटुः क्रूरः कर्णिशरः कर्णयुक्तो बाणः त्वं यद्यस्मान्निधीयसे निक्षिप्यसे ततस्तस्मात्कारणात्कर्णिशरत्वाद्वा हृदयाद्वा दुराकर्षतयोद्धर्तुमशक्यतया तदन्तकृद्वियोगिनां प्राणहारी त्वं मन्मथदेहदाहिना स्मरहरेण महादेवेन विगीयसे निन्द्यसे । येन वियोगिनो हता अस्मदादयः स दग्ध एव तत्प्रेष्यस्त्वं केतकमिति निन्द्यसे[1] ॥ ७९ ॥

**त्वदग्रसूच्या सचिवेन कामिनो-**
**र्मनोभवः सीव्यति दुर्यशःपटौ ।**
**स्फुटं स पत्रैः करपत्रमूर्तिभि-**
**र्वियोगिहृद्दारुणि दारुणायते ॥ ८० ॥**

त्वदग्रेति ॥ मनोभवः कामस्तवाग्रमेव सूक्ष्मत्वात्तीक्ष्णत्वाच्च सूची तद्रूपेण सचिवेनोपकारकेण सहायेन कृत्वा कामिनोः स्त्रीपुंसयोः परस्परधैर्यभङ्गौ दुर्यशोलक्षणौ पटौ सीव्यति योजयतीव तत्प्रथमकलिकयातिसुरभितयोद्दीपनभावहेतुभूततया कामिनावुचितानुचितसम्बन्धमप्यविचार्य मिथो रिरंसू प्रवर्तेते इति भावः । स्फुटमुत्प्रेक्षते—स कामो वियोगिनां हृदेव दारु काष्ठं तस्मिन्करपत्रवत्क्रकचवन्मूर्तिः स्वरूपं येषां तैस्तव पत्रैः कृत्वा दारुणायते भीषणवदाचरति । केतकाग्रदर्शनाद्वियोगिनोः स्त्रीपुंसयोर्धैर्यभङ्गः, पत्रदर्शनाच्च हृदयं विदीर्णं भवतीति भावः । 'दारुणायसे' इति पाठे त्वमिति ज्ञातव्यम् । सूची इति गौरादिपाठान्ङीष् । कामिनोः वियोगीत्यत्र च 'पुमान्स्त्रिया १।२।६७' इत्येकशेषः ॥ ८० ॥

**धनुर्मधुस्विन्नकरोऽपि भीमजा-**
**परं परागैस्तव धूलिहस्तयन् ।**
**प्रसूनधन्वा शरसात्करोति मा-**
**मिति क्रुधाऽऽक्रुश्यत तेन केतकम् ॥ ८१ ॥**

धनुरिति ॥ प्रसूनधन्वा कामस्तव परागैर्धूलिभिः धूलिहस्तयन्धूलियुक्तं हस्तं कुर्वन्सन् भीमजापरं भैम्यनुरक्तं मां शरसाद्बाणाधीनं बाणलक्ष्यं करोति । किम्भूतः कामः—धनुः पुष्पं तस्य मधुना रसेन खिन्न आर्द्रः करो यस्य इति केतकमनिन्द्यत । तव धूलिर्यदि न स्यात्तदा कामः खिन्नकरत्वाच्च्युतसायकः स्यात् । अतोऽयमपराधस्तवैव । खिन्नकरो धनुर्धरो धूलियुक्तं हस्तं करोतीति जातिः । धूलिहस्तयन्निति धूलियुक्तं हस्तं करोतीति ण्यन्ताच्छता । प्रसूनधन्वा इति 'धनुषश्च ५।४।१३२' इत्यनङ् । शरसादिति 'तदधीनवचने ५ । ४ । ५४' इति सातिः इति विशेषकम्[1] ॥ ८१ ॥

**विदर्भसुभ्रूस्तनतुङ्गताऽऽप्तये**
**घटानिवापश्यदलं तपस्यतः ।**
**फलानि धूमस्य धयानधोमुखान्**
**स दाडिमे दोहदधूपिनि द्रुमे ॥ ८२ ॥**

विदर्भेति ॥ स नलो दाडिमे दाडिमसञ्ज्ञके द्रुमे फलानि अपश्यत् । किम्भूते द्रुमे—दोहदधूपिनि अतिशयितफलादिसमृद्धिर्येन भवति तद्दोहदम् । दाडिमीवृक्षस्य दोहदं यो धूपः स दोहदधूप इत्यसावस्यास्तीति तस्मिन् । कानिव—घटानिव । किम्भूतान् घटान्—विदर्भसुभ्रूर्भैमी, तस्याः स्तनयोस्तुङ्गता उच्चैस्त्वं तस्य आप्तये तत्साम्यं लब्धुमलमतिशयेन तपस्यतस्तपः कुर्वतः । अत एव धूमस्य धयान्धायकान् । अत एवाधोमुखान् । अन्योऽप्युच्चपदप्राप्तयेऽधोमुखो धूमपानादिना तपश्चरति । एतानि दाडिमीफलानि न किंतु घटा एवैते तानिवेत्युत्प्रेक्षा। तपस्यतः 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ३।१।१५' इति क्यङ् । 'तपसः परस्मैपदं च' इति वक्तव्याच्छता । धयान् 'पाघ्राध्मास्थाम्नादा...७।३।७१' इत्यादिना सूत्रेण धेटः शः । तत्र च 'उपसर्गानुवृत्तिर्नावश्यकी' इति वृत्तावुक्तम् । दोहदधूपिनि इति कर्मधारयादिनिः समर्थनीयः ॥ ८२ ॥[2]

**वियोगिनीमैक्षत दाडिमीमसौ**
**प्रियस्मृतेः स्पष्टमुदीतकण्टकाम् ।**

---

१ अत्र यत्तदर्थयोः वाक्ययोर्हेतुहेतुमत्त्वमिति काव्यलिङ्गम्। २अत्र सीव्यतीवेत्युत्प्रेक्षा गम्या दारुणायत इवेति लुप्तोपमा, दुर्यशःपटा इति रूपकं चार्थालङ्काराः । दार्विति यमकं च ।

१ अत्र गम्योत्प्रेक्षा, प्रहर्तुमिच्छुर्को हि स्विन्नकरः करं रजसा लिप्तं करोतीति स्वभाव इति स्वभावोक्तिश्च २ अत्रोत्प्रेक्षा ।

फलस्तनस्थानविदीर्णरागिहृ-
द्विशच्छुकास्यस्मरकिंशुकाशुगाम् ८३॥

वियोगिनीमिति ॥ असौ नलो दाडिमीमैक्षतापश्यत । किम्भूताम्—वियोगिनीं विभिः पक्षिभिः शुकादिभिः योगोऽस्या अस्तीति । अथ च वियोगिनीं विरहिणीं नायिकामिवेति गम्योत्प्रेक्षा । प्रियस्मृतेर्दोहदादिस्मरणात् ( लक्षणया ) प्राप्तेर्हेतोः स्फुटं प्रकटमुदीतकण्टकां प्रियस्मरणाद्रोमाञ्चिताङ्गीम् । नायिकाऽपि नायकस्मरणाद्रोमाञ्चिताङ्गी भवति । तथा—फलानि स्तना एव, तेषां स्थाने मध्ये विदीर्णं स्फुटितं रागि पक्वत्वाल्लोहितयुक्तं यद् हृत् आन्तरप्रदेशस्तस्मिन्विशन्ति यानि शुकास्यानि शुकमुखानि तान्येव स्मरस्य किंशुकानि पलाशपुष्पाण्येव आशुगा बाणा यस्याम् । नायिकापक्षे फलवत् स्तनौ तयोर्यत् उत्थानं तत्र विदीर्णं विरहासह्यत्वाद्विधाभूतम्, अथ च रागि अनुरागि यद् हृत् हृदयं तस्मिन्विशन्तः शुकास्यतुल्या मदनकिंशुका आशुगा बाणा यस्याः । दाडिमीफलं स्वयमेव विदीर्यते । अथवा फलस्य परमात्मसाक्षात्कारलक्षणस्य स्तनं कथकम्, बोधकमिति यावत्, एवम्भूतं यत्स्थानं तुरीयावस्थालक्षणं तस्माद्विदीर्णं च्युतं तुरीयावस्थामप्राप्तमेवंभूतं पूर्वं विषयेषु रागि सानुरागं यद्धृदयं तद्विशन्तः शुकाः ( लक्षणया ) तदुपदेशा योगाभ्यासेन हृदयसंलग्नास्तैः आस्याः क्षेप्याः स्मरकिंशुकाशुगा यस्यास्ताम् । विषयेभ्यः परावृत्तचित्ताम् । अनन्तरं प्रियस्य परप्रेमास्पदस्य सच्चिदानन्दघनस्य परमात्मस्वरूपस्य स्मृतेः संनिहितानन्तरप्राप्तस्यानुध्यानाच्छीघ्रतत्प्राप्तिसंभावनासंजातहर्षेणोद्गतरोमाञ्चाम् । विविधा योगा वियोगास्तद्वतीमष्टाङ्गयोगयुक्तां, विशिष्टां योगिनीं वा तद्वदैक्षत । सामर्थ्यादिवशब्दलाभः । वियोगिनीमिति 'संपृचानुरुधा——३।२।१४२' इति विपूर्वाद्युजेः कर्मकर्तरि घिनुणि ङीप् । दाडिमीति जातिवाचित्वान्ङीप् । उत्पूर्वादीङः दैवादिकात् कर्तरि निष्ठायामुदीत इति । स्तनेति पक्षे पचाद्यच् । आस्येति अस्यतेर्हलन्तात्कर्मणि ण्यत् ॥ ८३ ॥

स्मरार्धचन्द्रेषुनिभे क्रशीयसां
स्फुटं पलाशेऽध्वजुषां पलाशनात् ।
स वृन्तमालोकत खण्डमन्वितं
वियोगिहृत्खण्डिनि कालखण्डजम् ८४

स्मरार्धेति ॥ स नलः पलाशे पलाशपुष्पे वृन्तं प्रसवबन्धनमालोकताद्राक्षीत् । किम्भूते पलाशे—स्मरस्यार्धचन्द्राकारो य इषुर्बाणस्तन्निभे तत्तुल्ये, तद्व्याजे वा । तथा—वियोगिहृत्खण्डिनि विरहिहृदयविदारके । अत एव क्रशीयसां कृशतराणामध्वजुषां पथिकानां पलाशनात् पलं मांसं तस्याशनाद्भक्षणात्स्फुटं प्रकटमेव पलाशे पलं मांसमश्नातीत्यन्वर्थसञ्ज्ञके । पलाशशब्दस्यावृत्त्या योजनीयम् । किमिव—कालखण्डजं कालखण्डाज्जातमन्वितं वियोगिहृदि सम्बद्धं खण्डमंशमिव । दक्षिणपार्श्वस्थं कृष्णं मांसं कालखण्डम् । कृशादीयसुनि ' र ऋतो हलादेर्लघोः६।४।१६१' इति रः ॥ ८४ ॥

नवा(वा)लता गन्धवहेन चुम्बिता
करम्बिताङ्गी मकरन्दशीकरैः ।
दृशा नृपेण स्मितशोभिकुड्मला
दरादराभ्यां दरकम्पिनी पपे ॥ ८५ ॥

नवेति ॥ दरादराभ्यां भयेन भयाभावेन ( हर्षेण ) चेत्येवमुभाभ्यामुपलक्षितेन नृपेण नलेन लता दृशा नेत्रेण कृत्वा पपे सादरं ददृशे । पुष्पितलताआदिदर्शनं विरहिणामसह्यमिति दरो भयम् । रमणीयदर्शनाच्चाह्लादः । तिर्यगादिसम्भोगवृत्तान्तावलोकनं विरहिणां कौतूहलमावहतीति वा नृपाह्लादः । किंभूता लता——नवा नूतनपल्लवा । तथा गन्धवहेन कामितुल्येन वायुना चुम्बिता स्पृष्टा । अत एव मकरन्दसीकरैः पुष्परसकणैः करम्बितं व्याप्तमङ्गं यस्याः सा।तथा स्मितेन लक्षणया विकसनेनेत्यर्थः।शोभीनि कुड्मलानि मुकुलानि यस्याः । तथा वायुसंगमात् दरमीषत्कम्पते एवंशीला । दरोऽस्त्री शङ्खभीगर्तेष्वल्पार्थे त्वव्ययम्' इति वैजयन्ती । न विद्यते बालता बालत्वं यस्याः । तरुणी इत्यर्थः । सा यथा लतासदृशी तन्वी कस्तूर्यादिगन्धयुतया गन्धस्य सौरभस्य वह इति तेन नायकेन चुम्बिता तत एव च रोमाञ्चहर्षं प्राप तद्रूपकण्टकयुक्ताङ्गी, स्मितेन ईषद्धास्येन शोभीनि कुड्मलानि दन्तरूपाणि यस्या इति शोभितकुड्मलाकारदन्ता ईषत्सात्त्विककम्पयुक्ता । परस्त्रीत्वाद्भयम्, सौन्दर्यादाह्लाद-

१ अत्र रूपकं श्लेषश्च । उत्प्रेक्षा च व्यङ्ग्या, अनुप्रासः शब्दालङ्कारश्च ।

१ अत्रोत्प्रेक्षा अनुप्रासश्च।अत्र लताया अभिन्नार्थत्वेऽपि विशेषणादिवैशिष्ट्येनाप्रस्तुतार्थप्रत्यायकत्वात्समासोक्तिः।

स्ताभ्यां युक्तेन केनचित्कौतुकिना दृश्यते । यद्वा—वहतीति वहः, बालतागन्धस्य शैशवलेशस्य वहः नैवम्भूतः—नवालतागन्धवहस्तरुणस्तेन चुम्बिता काचित् नवा नवोढा लतासदृशी तन्वी नवोढत्वात्सकम्पा । नकारस्य निषेधार्थस्य समासत्वान्नलोपाभावः । संयोगोपधत्वेऽपि 'अङ्गगात्रकण्ठेभ्यास्त्विष्यते' इति ङीष् ॥ ८५ ॥

**विचिन्वतीः पान्थपतङ्गहिंसनै-**
**रपुण्यकर्माण्यलिकज्जलच्छलात् ।**
**व्यलोकयच्चम्पककोरकावलीः**
**स शम्बरारेर्बलिदीपिका इव ॥ ८६ ॥**

विचिन्वतीरिति ॥ स नलः चम्पककोरकावलीश्चम्पककुड्मलपङ्क्तीर्व्यलोकयद्ददर्श । का इव—शम्बरारेः कामस्य बलिदीपिका बल्यर्थदीपिका इव । किम्भूताश्चम्पककोरकावलीः—पान्था एव पतङ्गाः शलभास्तेषां हिंसनैर्मारणैः अलिकज्जलच्छलात् अलयो भ्रमरा एव कज्जलं तस्य छलाद्व्याजादपुण्यकर्माणि पापकर्माणि विचिन्वतीरर्जयन्तीरिव । कामोद्दीपकानि चम्पकानि दृष्ट्वा विरहिणो म्रियन्ते 'पन्थो ण नित्यम् ५।१।७६' इति णे पान्थः । चम्पकोपरि भ्रमरा न तिष्ठन्तीति केचित् । तत्र तिष्ठन्ति परंतु गता म्रियन्त इति प्रामाणिकाः॥८६॥

**अमन्यतासौ कुसुमेषु गर्भगं**
**परागगन्धङ्करणं वियोगिनाम् ।**
**स्मरेण मुक्तेषु पुरा पुरारये**
**तदङ्गभस्मेव शरेषु सङ्गतम् ॥ ८७ ॥**

अमन्यतेति ॥ असौ नलः कुसुमेषु गर्भगमान्तरप्रदेशगतं परागं पुरा पूर्वं स्मरेण पुरारये शिवाय मुक्तेषु पुष्परूपेषु शरेषु सङ्गतं लग्नं तस्य शिवस्याङ्गलग्नं भस्म इवामन्यतातर्कयत् । किम्भूतम्—वियोगिनामन्धङ्करणं नेत्रोपघातकम् । भस्मनाऽन्धत्वं भवति । अन्धङ्करणमिति । 'आढ्यसुभगस्थूल ३।२।५६' इति ख्युन् । 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुम् ॥ ८७ ॥

---

१ अत्र समासोक्तिः । नायिकापक्षे दन्तानां कुड्मलत्वेनाध्यवसानाद्रूपकातिशयोक्तिश्चार्थालङ्कारौ । दरेत्यादावर्थानैक्याद् यमकमनुप्रासश्च शब्दालङ्कारौ । २ अत्र कज्जलच्छलादित्यपह्नुतिः, अलीनां कज्जलत्वेन रूपणाद्रूपकं दीपिका इवेत्युपमोत्प्रेक्षा वा । ३ अत्रामन्यतेति तदङ्गभस्मेवेति चोत्प्रेक्षे ।

**पिकाद्वने शृण्वति भृङ्गहुंकृतै-**
**र्दशामुदञ्चत्करुणे वियोगिनाम् ।**
**अनास्थया सूनकरप्रसारिणीं**
**ददर्श दूनः स्थलपद्मिनीं नलः ॥ ८८॥**

पिकादिति ॥ दूनः संतप्तो नलः स्थलपद्मिनीं ददर्श । कस्मिन्सति—वने पिकात्कोकिलाद्वियोगिनां दशामवस्थां भृङ्गाणां भ्रमराणां हुङ्कृतैर्हुङ्कारैः कृत्वा शृण्वति सति । किम्भूते वने—उदञ्चन्तो विकासं प्राप्नुवन्तः करुणसञ्ज्ञका वृक्षा यस्मिन् । किम्भूताम्—अनास्थया नलगताऽधीरतयाऽभिनयवशात् सूनानि पुष्पाणि कमलानि तल्लक्षणकरान्हस्तान्प्रसारयतीत्येवंशीला ताम्, अनास्थयाऽनादरेणापश्यदिति वा । अन्यस्मिन्दयावति कस्यचित् कष्टां दशां शृण्वति सति अनिच्छया किमनेनेति करं प्रसार्य कश्चन वारयति । यद्वा—अनास्थया संसारानित्यतयाभिनयवशात्करं प्रसारयतीति । वने पिकाः कूजन्ति भृङ्गा हुङ्कारं कुर्वन्ति करुणपुष्पाणि विकसन्ति कमलानि चोन्मीलन्ति । एतच्च दृष्ट्वा विरहिणो व्यथन्ते इति भावः । किमिदं वनं शृणोति । दुःखवार्तामितीव पुष्पविकासव्याजेन करं प्रसारयतीति वाऽर्थः । आस्थाः इत्यत्र 'आतश्चोपसर्गे ३।३।१३६' इत्यङ् । दून इति दीर्घाद्दूङः स्वादि—( ल्वेनोदि— ) त्वान्निष्ठानः । 'करुणस्तु रसे वृक्षे कृपायां करुणा मता ।' इति विश्वोक्तेः करुणो वृक्षः, पक्षे करुणा दया ॥ ८८॥

**रसालसालः समदृश्यतामुना**
**स्फुरद्द्विरेफारवरोषहुङ्कृतिः ।**
**समीरलोलैर्मुकुलैर्वियोगिने**
**जनाय दित्सन्निव तर्जनाभियम् ॥८९॥**

रसालेति ॥ अमुना नलेन रसाल आम्रलक्षणः सालो वृक्षः समदृश्यत दृष्टः । किम्भूतः—स्फुरन्तो भ्रमन्तो ये द्विरेफा भ्रमरास्तेषामाराव एव रोषहुङ्कृतिः क्रोधहुङ्कारो यस्य । किं कुर्वन्निव—समीरेण वायुना लोलैर्मुकुलैः कृत्वा वियोगिने विरहिणे जनाय तर्जनाया भर्त्सनाया भीर्भयं तां दित्सन्निव दातुमिच्छन्निव । अन्योऽपि हुङ्कृत्य चलेनाङ्गुल्यादिना तर्जयति । रसालशब्दस्तत्पुष्पे वर्तते । दित्सन्निति ददातेः सनि द्विर्वचनम् 'सनि मीमाघुरभलभशक-

---

१ प्रसूनानां करत्वेन रूपणाद्रूपकम् । पद्मिन्या नायिकाविशेषात्मना प्रत्ययात्समासोक्तिश्च ।

कपतपदामच इस् ७ । ४ । ५४ ' इतीस् 'अत्र लोपोऽभ्यासस्य ७।४ । ५८' इत्यभ्यासलोपः 'सःस्यार्धधातुके' ७ । ४ । ४९ ' इति तः । ' भयभीतभीतिभिरिति वाच्यम्' इति वार्त्तिकेन वक्तव्यात्तर्जनाभियमिति समासः ॥ ८९ ॥

दिनेदिने त्वं तनुरेधि रेऽधिकं
पुनःपुनर्मूर्च्छ च तापमृच्छ च।
इतीव पान्थाञ्शपतः पिकान् द्विजान्
सखेदमैक्षिष्ट स लोहितेक्षणान् ॥९०॥

दिनेदिन इति ॥ स नलः पिकान् द्विजान् पक्षिणः ब्राह्मणांश्च सखेदं सोद्वेगमैक्षिष्ट ददर्श । किम्भूतानिव —इति पूर्वोक्तप्रकारेण पान्थाञ्जनानशपत इव पान्थेभ्यः शापं ददत इव । यतो लोहितेक्षणान्मत्तत्वाद्रक्तनेत्रान् । 'दन्तविप्राण्डजा द्विजाः ।' इत्यमरः । इतीति किम्—रे पान्थ, त्वं दिने दिने अधिकं भृशं तनुः कृश एधि भव, पुनस्त्वं मूर्च्छ मूर्च्छां प्राप्नुहि । तथा त्वं तापं सर्वाङ्गे, संतापमृच्छ लभस्व च । पिकः स्वभावाद्रक्तलोचनः । पिकशब्दं श्रुत्वा पान्थानां मूर्च्छा तापश्च भवति इति तथोक्तम् । क्रुद्धा ब्राह्मणा अपिरक्तनेत्राः सन्तः शापं ददते । रे इत्यानादरेऽव्ययम् । एधि । आस्तेर्लोटि हेः 'हुझल्भ्यो हेर्धिः ६ । ४।१०१' इति धौ 'घ्वसोरेद्धावभ्यासलोपश्च' इत्येत्वे ' श्नसोरल्लोपः ६ । ४ । १११' इत्यल्लोपश्च । ऋच्छ इत्यत्रैर्हौ ' पाघ्राध्माधेट्दृशः शः ३। १ । १३७' इति ऋच्छादेशे 'अतो हेः ५ । १।१०५' इति हेर्लुक् । ऋच्छेर्वा । पान्थानित्यं पन्थानं गच्छन्तीत्यर्थे 'पन्थो ण नित्यम् ५ ।१।७६।' इति णः पन्थादेशश्च । शीप्स्यमानत्वाभावात्पान्थानिति द्वितीया । उपालम्भाभावाच्च 'शपतः' इति तङभावः ॥ ९० ॥

अलिस्रजा कुड्मलमुच्चशेखरं
निपीय चाम्पेयमधीरया धिया।
स धूमकेतुं विपदे वियोगिना-
मुदीतमातङ्कितवानशङ्कत ॥ ९१ ॥

अलीति ॥ स नलः चाम्पेयं कुड्मलमधीरया धिया बुद्ध्या निपीय सादरमालोक्य आतङ्कितवान् चकितः सन् वियोगिनां विपदे विनाशायोदीतमुदयं प्राप्तं तमेव धूमकेतुमुत्पातविशेषमशङ्कत तर्कितवान् । धूमकेतुर्विनाशसूचकः।किम्भूतं कुड्मलम्—अलिस्रजा भ्रमरपङ्क्त्योच्चशेखरमुच्चाग्रम् ।'चाम्पेयश्चम्पको हेमपुष्पकः'इत्यमरः । ततो विकारप्रत्ययस्य 'पुष्पमूलेषु बहुलम्' इति लुक् । कुड्मलमिति 'फलस्तृपश्च' इत्यत्रौणादिके सूत्रे कलप्रत्ययमनुवर्त्य'कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्'इति औणादिकेन सूत्रेण कले तस्य मुडागमे 'कुट कौटिल्ये' इत्यस्य धातोः 'कुट्मलः' टमध्योऽयम् । 'कुड बाल्ये' इत्यस्य 'कुड्मलः' डमध्योऽपि।तथाच मेदिनीकोषः—'कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे' इति ॥ ९१ ॥

गलत्परागं भ्रमिभङ्गिभिः पत-
त्प्रसक्तभृङ्गावलि नागकेसरम् ।
स मारनाराचनिघर्षणस्खल-
ज्ज्वलत्कणं शाणमिव व्यलोकयत् ९२

गलदिति ॥ स नलो नागकेसरं नागकेसरकुसुमं शाणमिव निकषमिव कषणपाषाणमिव व्यलोकयत् । कीदृशम्—गलत्परागं भ्रश्यत्परागम् । तथा भ्रमिभङ्गिभिर्भ्रमणरचनाविशेषैः पतन्ती वृक्षादागच्छन्ती प्रसक्ता लग्ना भृङ्गावलिर्भ्रमरपङ्क्तिर्यस्मिन् । किम्भूतं शाणम्—मारस्य कामस्य नाराचा बाणशल्यानि तेषां निघर्षणात्स्खलन्तो भ्रश्यन्तो ज्वलन्तो देदीप्यमानाःकणाः स्फुलिङ्गा यस्मात् । परागो ज्वलत्तत्कणस्थाने, । भृङ्गावलिर्नाराचस्थाने । शाणस्यापि भ्रमणं भवति । लोहसङ्घर्षाज्ज्वलन्तः कणाश्च तस्मादुच्छलन्ति ।'शाणस्तु निकषः कषः' इत्यमरः ॥ ९२ ॥

तदङ्गमुद्दिश्य सुगन्धि पातुकाः
शिलीमुखालीः कुसुमाद्गुणस्पृशः ।
स्वचापदुर्निर्गतमार्गणभ्रमा-
त्स्मरः स्वनन्तीरवलोक्य लज्जितः९३॥

तदिति॥स्मरः कामः शिलीमुखालीर्भ्रमरपङ्क्तीरवलोक्य स्वचापात्स्वधनुषः दुर्निर्गता दुःखेन निर्गता मार्गणा बाणास्तेषां भ्रमाद्भ्रान्तेः लज्जितो लज्जां प्राप्त इवेत्यर्थः । गम्योत्प्रेक्षा । किम्भूताः शिलीमुखालीः—कुसुमादपि सुगन्धि तदङ्गं नलाङ्गमुद्दिश्य पातुकाः पतनशीला आगच्छन्तीः । यद्वा—कुसुमात्सकाशात्पातुकाः । यद्वा—कुसुमगुणवद्धात्कुसुमलक्षणाद्धनुषः

१ अत्र सालेत्यावृत्त्या यमकम्,दित्सन्निवेत्युत्प्रेक्षा च ।

१ अत्रोत्प्रेक्षाऽनुप्रासश्चालङ्कारौ । २ अत्राप्युत्प्रेक्षा ।

पातुकाः । यतो गुणस्पृशः गुणाभिलाषिणीः,मौर्वीस्पृशश्च। स्वनन्तीः शब्दायमानाः । शिलीमुखपदं भ्रान्तेः कारणम्। 'अलिबाणौ शिलीमुखौ' । इत्यमरः। दुर्निर्गतो हि बाणो ध्वनति लक्ष्यं च न स्पृशति तेन धानुष्को लज्जते । सुगन्धीति सुपूर्वस्य 'गन्धस्येदुत्पूतिसुसुरभिभ्यः ५।४।१३५' इतीत्वम्।पातुकाः तच्छीले 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ३ । २ । १५४ । '—इत्युकञ् ॥९३॥

मरुल्ललत्पल्लवकण्टकैः क्षतं
समुच्छलच्चन्दनसारसौरभम् ।
स वारनारीकुचसञ्चितोपमं
ददर्श मालूरफलं पचेलिमम् ॥ ९४ ॥

मरुदिति ॥ स नलः पचेलिमं पक्कं मालूरफलं बिल्वफलं ददर्श । किम्भूतम्—मरुता ललन्तो विलसन्तो ये पल्लवाः शाखाग्राणि तेषां कण्टकैः क्षतम्।मरुत्।देवः तद्वल्लुलन्विलासं, कुर्वन्ः पल्लवो विटस्तस्य कण्टकाः कण्टकवत्तीक्ष्णा नखास्तैः क्षतम्।अथ च—तस्य पल्लव इव पल्लवः पाणिः,तस्य कण्टकैर्नखैरिति छायाऽर्थः।तथा समुच्छलदुद्रच्छच्चन्दनवत्सारं श्रेष्ठं सौगन्ध्यं यस्मात्, चन्दनस्य सारं सौगन्ध्यं यस्मादिति च । सारशब्देन घनसारः कर्पूरो लक्षणया, श्रीखण्डयुक्तः सार इति वा, अत एव वारनारी गणिका तस्याः कुचौ ताभ्यां सञ्चिता तुल्या, अर्जिता वा उपमा सादृश्यं यस्य । गणिकास्तनतुल्यशोभं वा । कुलस्त्रीकुचे नखक्षतादिप्राकट्योक्तेरनौचित्यमिति 'वार' इति पदम् । 'बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलौ 'इत्यमरः । ललतिरुभयपदी । ' इगन्ताच्च लघुपूर्वात् ५।१।१३१' इति भावेऽण् । कर्मकर्तरि कर्मण्येव * वा केलिमर उपसंख्यानात्पचेलिमम् ॥९४॥

युवद्वयीचित्तनिमज्जनोचित-
प्रसूनशून्येतरगर्भगह्वरम् ।
स्मरेषुधीकृत्य धिया भयान्धया
स पाटलायाः स्तवकं प्रकम्पितः ९५॥

युवेति ॥ स नलो भयान्धया भयभ्रान्तया धिया बुद्ध्या पाटलायाः स्तवकं गुच्छं स्मरेषुधीकृत्य कामतूणीरकृत्य प्रकम्पितश्चकितः । किम्भूतं गुच्छम्—युवद्वयी स्त्रीपुंसद्वयी तस्याश्चित्ते वेध्येऽन्तःकरणे तयोर्मध्ये निमज्जनं ( ब्रुडनं )तस्मिन्नुचितानि योग्यानि प्रसूनानि पुष्पाणि तैः शून्येतरं पूर्णं गर्भगह्वरं मध्यबिलं यस्य । एतत्पाटलागुच्छं न भवति, किंतु कामस्य शस्त्रमिति बुद्ध्या कम्पित इत्यर्थः ॥ ९५ ॥

मुनिद्रुमः कोरकितः शितिद्युति-
र्वनेऽमुनाऽमन्यत सिंहिकासुतः ।
तमिस्रपक्षत्रुटिकूटभक्षितं
कलाकलापं किल वैधवं वमन् ॥ ९६ ॥

मुनीति ॥ अमुना नलेन वने कोरकितः शितिः कृष्णा द्युतिर्यस्य स मुनिद्रुमोऽगस्त्यवृक्षः सिंहिकासुतो राहुरिवामन्यत ज्ञात इति गम्योत्प्रेक्षा । किल इवार्थे वा । किम्भूतो राहुः—तमिस्रपक्षेऽन्धकारपक्षे या त्रुटिश्चन्द्रस्य कलाविच्छेदः सैव कूटं व्याजस्तेन भक्षितं गिलितं वैधवं विधुश्चन्द्रः तत्सम्बन्धिनं कलाकलापं कलासमूहं वमन्नुद्गिरन् । मुनिपदं शान्तिसंभावनाद्वधनिवृत्तिसंभावनार्थम् । श्यामवर्णत्वाद्राहुत्वम् । श्यामवृक्षस्य कलिकानां शुभ्रत्वादाकारसाम्याच्च चन्द्रकलात्वम् । चन्द्राद्वयमनेन व्यज्यते । कोरकाः संजाता अस्य । तारकादित्वादितच् । अथ च सिंहिकापुत्रः सिंहः शितिद्युतिर्धवलवर्णः भक्षितं श्वापदाद्युद्गिरन् वनेऽमन्यत अयं सिंह इति । तद्दर्शनाद्यथा भयं भवति तथा विरहिणोऽस्यागस्त्यदर्शनाज्जातमिति भावः । 'शिती धवलमेचकौ ' इत्यमरः ॥ ९६ ॥

पुरा हठाक्षिप्ततुषारपाण्डुर-
च्छदा वृतेर्वीरुधि बद्धविभ्रमाः ।
मिलन्निमीलं ससृजुर्विलोकिता
नभस्वतस्तं कुसुमेषु केलयः ॥ ९७ ॥

पुरेति ॥ कुसुमेषु पुष्पेषु नभस्वतो वायोः केलयः विलोकिता क्रीडाः यद्वा, नभस्वतः तद्रूपस्य नायकस्य सम्बन्धिनः कुसुमेषोर्मदनस्य केलयः स्त्रीसम्भोगादिरूपा व्यापारा इति यावत्।विलोकिताः सत्यः तं नलं मिलन्निमी-

१ अत्र भ्रान्तिमान् व्यङ्ग्योत्प्रेक्षा च ।२ उपमाऽऽर्थोऽलङ्कारः, अनुप्रासश्च शाब्दोऽत्र । * तथा हि कैयटः, कर्म्मकर्त्तरि चार्यं, कैश्चिदिष्यते भाष्यकारेण तु कर्म्मणि प्रदर्शितः ।' इति ।

१ अत्रानुप्रासः, भयान्धया धिया पाटलास्तवकस्य स्मरेषु धीमननं भ्रम इति भ्रान्तिमांश्च । २ अत्रोत्प्रेक्षा, कूटेत्यनेन मुनिद्रुमकोरकापह्नवनादपह्नुतिश्च ।

लं कृतनेत्रसङ्कोचं ससृजुश्चक्रुः किम्भूताः—पुरा आदौ हठेन बलात्कारेण आक्षिप्ताश्चालितास्तुषारेण हिमेन पांडुराश्छदाः पत्त्राणि याभिर्यत्र वा ताः । तथा—वृतेः आवरणस्य सम्बन्धिन्यां वीरुधि लतायां बद्धविभ्रमाः कृतविशिष्टभ्रमाः कृतपक्षिभ्रमणा वा । हठेनाक्षिप्तास्तुषारपाण्डुराः छदावृतयः पत्त्ररूपाणि वस्त्राणि येनेति तस्येति वायुविशेषणं वा । विरहित्वादसह्यत्वाद्वा परसम्भोगदर्शनस्यानुचितत्वाद्वा मिलन्ती निमीला नेत्रव्यापारो यस्य । वीरुधि स्त्रीलिङ्गत्वाद्योषिति नभस्वतः पुल्लिङ्गत्वान्नायकस्य कुसुमेषु केलयः कामक्रीडाः 'नेक्षेतार्कं न नग्नां स्त्रीं न च संसक्तमैथुनाम्' इति याज्ञवल्क्यनिषेधात् । वस्तुतस्तु तत्तद्रमणीयताऽऽह्लादेन मिलन्निमीलत्वमिति बोध्यम् ॥ ९७ ॥

गता यदुत्सङ्गतले विशालतां
द्रुमाः शिरोभिः फलगौरवेण ताम् ।
कथं न धात्रीमतिमात्रनामितैः
स वन्दमानानभिनन्दति स्म तान् ९८

गता इति ॥ स नलः फलगौरवेण फलबाहुल्येन पुण्यजन्यफलाधिक्येन च अतिमात्रमतिशयेन नामितैर्नम्रितैः शिरोभिरग्रभागैर्मस्तकैश्च तां धात्रीं पृथ्वीम्, उपमातरं च वन्दमानान्स्पृशतो, नमस्कारं कुर्वतश्च तान्द्रुमान्, सुतांश्च कथं नाभिनन्दति स्म प्रीत्या कथं नाभिनन्दति स्म प्रास्तौत् किन्त्वभिनन्दति स्मैवेत्यर्थः । कांस्तान्—ये द्रुमा यस्या धात्र्या उत्सङ्गतल उपरिप्रदेशे अथवाङ्कस्थले विशालतां वृद्धिं गताः प्राप्ताः । ते हि युक्तकारिणः स्तोतुमुचिता आसन् । फलभरनम्रा हि वृक्षाः स्तोतव्या एवेति विरहित्वेऽभिनन्दनम् । यद्वा, कथं नाभिनन्दति स्मेति कवेर्जिज्ञासा, विरहार्दित एवंविधानपि नाभिनन्दितुं शशाकेत्यर्थः । वियोगतप्ताय तस्मै स्मरोपकरणहेतवः पुष्पवृक्षा इव फलवृक्षा अपि न रुरुचिरे इति भावः । यतः—'दुःखिते मनसि सर्वमसह्यम्' इति भारविः । 'धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि ।' इत्यमरः। दधाति याम्, धयन्ति यामिति धात्री 'धः कर्मणि ष्ट्रन् ३।२।१८१' इति ष्ट्रनि ङीप् । नामितैरिति ' ज्वलह्वलह्मलनमामनुपसर्गाद्वा एषां मित्त्वं वा' इति पाक्षिकं मित्त्वम् ॥ ९८ ॥

१ अत्र लिङ्गस्य विशेषणानां च वैशिष्ट्येन कामुककेलिर्व्यज्यते इति समासोक्तिः।२अत्रापि द्रुमाणां दीक्षितपुत्रत्वं धिव्याश्चोपमातृत्वं व्यज्यत इति समासोक्तिरेव ।

नृपाय तस्मै हिमितं वनानिलैः
सुधीकृतं पुष्परसैरहर्महः ।
विनिर्मितं केतकरेणुभिः सितं
वियोगिनेऽदत्त न कौमुदीमुदः ॥९९॥

नृपेति ॥ अहर्महः अह्नो दिवसस्य महस्तेजः तस्मै वियोगिने नृपाय कौमुदीमुदश्चान्द्रिकाजनितान्संतोषान्नादत्त । किम्भूतमहर्महः—वनानिलैरुद्यानवायुभिर्हिमितं हिमीकृतम् । पुष्परसैर्मकरन्दैः—सुधीकृतममृतीकृतम् । केतकरेणुभिः केतकीकुसुमपरागैः सितं श्वेतं विनिर्मितं कृतम् । चन्द्रिकातुल्यमपि दिवसे तेजो विरहित्वात्तस्य चन्द्रिका दुःखदायिनी इति दुःखदं जातमित्यर्थः । अहर्महः कौमुदीति व्यस्तरूपकम्, तस्मै मुदो नादत्त इति वा । शैत्यादिगुणयोगादहर्मह इति कारणात्तस्मै मुदोऽदत्त, न कौमुदीति वा । शैत्यादिगुणयोगेन दिवसतेजः सुखान्तरं तस्मै ददौ, कौमुदी मुदो न ददाविति वा । दिवसतेजः कौमुदीजन्यहर्षान्नादत्त किम् ? अपि तु ददावेवेति वा । अहर्मह इति 'रोऽसुपि ८ । २ । ६९ । इति रेफः ॥ ९९ ॥

अयोगभाजोऽपि नृपस्य पश्यता
तदेव साक्षादमृतांशुमाननम् ।
पिकेन रोषारुणचक्षुषा मुहुः
कुहूरुताहूयत चन्द्रवैरिणी ॥१००॥

अयोगेति ॥ अयोगभाजोऽपि विरहिणोऽपि नृपस्य नलस्य तत्प्रसिद्धमाननं मुखं साक्षादबाधितत्वेन अमृतांशुं चन्द्रमेव पश्यता पिकेन कोकिलेन चन्द्रवैरिण्यमावस्या मुहुरहूयताऽऽकारिता । किम्भूतेन पिकेन—अनेन मुखेन विरहित्वान्म्लानेन भवितव्यं, तदधुनापि न म्लायतीति रोषेण क्रोधेन अरुणे रक्ते चक्षुषी यस्य । तथा—कुहूः कुहूः इति रुत् शब्दो यस्य । कुहूः इति रौतीति वा कुहूः इति रुत् शब्दस्तयाऽमावास्या आकारिता । उत इति निश्चये, किलार्थे वा । चन्द्रवैरिणी कुहूरिति वा योजना । विरहेऽपि चन्द्राधिक्यं मुखस्य।तदेव पाण्डुताऽऽदिगुणोपेतमेवेति वा।'कुहूः स्यात्कोकिलालापनष्टेन्दुकलयोरपि ।'' इति विश्वः । पिकस्य

१ अहर्महसः प्रमोदकारणत्वेऽपि नलस्य कृते प्रमोदरूपकार्यकारणत्वं न जातमिति विशेषोक्तिः ।

नेत्रे स्वभावेनैव रक्ते, शब्दश्च कुहूरिति । तत्रैतत्सर्वमुत्प्रेक्षितम् ॥ १०० ॥

**अशोकमर्थान्वितनामताशया**
**गताञ्शरण्यं गृहशोचिनोऽध्वगान्।**
**अमन्यतावन्तमिवैष पल्लवैः**
**प्रतीष्टकामज्वलदस्त्रजालकम्॥१०१ ॥**

अशोकेति ॥ एष नलोऽशोकं वृक्षमेवम्भूतमिवामन्यत । 'अर्थेन यत्सेवया शोको न भवति' इत्येवंरूपेणान्वितमन्वर्थं नाम यस्य तस्य भावोऽर्थान्वितनामता तस्यामाशयाभिलाषेणागतान्प्राप्तान्गृहशोचिनः स्त्रीशोचिनोऽध्वगान्पान्थानवन्तमिवामन्यत'इत्यन्वयः । पुनः किम्भूतम्—पल्लवैः शाखाग्रैः कृत्वा प्रतीष्टमङ्गीकृतं कामस्य ज्वलत् आरक्तमस्त्रजालकमस्त्रसमूहो येन, अस्त्ररूपाणि जालकानि कलिका येनेति वा । यतः—शरण्यं शरणे रक्षणे साधुम् । अन्योऽपि शरण्योऽरिशस्त्राणि स्वाङ्गे गृह्णञ्शरणागतान्रक्षति । पल्लवैरवन्तमिति वा । कामस्य ज्वलदस्त्रजालकमाग्नेयास्त्रकाण्डं येनेति वा अर्थान्वितनामताशया शरणागतान्पान्थानवन्तं मारयन्तमिति वाऽमन्यत । अवन्तं मारणार्थमेवेति तात्पर्यम्।यतः शरणे मारणे साधुं समर्थम्।पथिकानां कामास्त्रेभ्यो भयम्,तानि तु पुष्पान्तराद्दारुणान्यत्रैव विद्यन्ते । ततश्च 'कामशस्त्राणि स्वहस्ते गृहीत्वाऽयमेव मारयति' इति प्रकृतौपथिकत्वादयमेवार्थः साधीयान् । रक्तान्यशोकपुष्पाणि दृष्ट्वा पान्था व्यथन्ते इत्यर्थः । 'शरणं वधरक्षित्रोः शरणं रक्षणे गृहे' इति 'गृहाः पत्न्यां गृहे स्मृताः' इति च विश्वः । 'क्षारको जालकं क्लीबे कलिका कोरकः पुमान् ।' इत्यमरः । शरणे साधुरिति 'तत्र साधुः' इति यत् । अध्वगान् 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ३ ।२।४८।' इति[२] डः ॥ १०१ ॥

**विलासवापीतटवीचिवादनात्**
**पिकालिगीतेः शिखिलास्यलाघवात् ।**
**वनेऽपि तौर्यत्रिकमारराध तं**
**क्व भोगमाप्नोति न भाग्यभाग्जनः १०२**

विलासेति ॥ तौर्यत्रिकं नृत्यगीतवाद्यरूपं कर्तृ वनेऽपि तं नलमारराध सेवते स्म । कस्मात्—विलासार्थं क्रीडार्थं वापी दीर्घिका तस्यास्तटे तीरे वीचिवादनात्तरङ्गनादात् । तथा—पिकाः कोकिला अलिनो भ्रमरास्तेषां गीतेर्गानात् । पिकानामालिः पङ्क्तिर्वा । तथा शिखिनां मयूराणां लास्यं नृत्यं तस्य लाघवाच्चातुर्यात् । अत्रार्थान्तरं न्यसन्नाह—क्वेति, भाग्यभाग्दैवयुक्तो जनः पुरुषः क्व कस्मिन्स्थाने भोगं सुखं सुखसाधनं वा नाप्नोति, अपितु सर्वत्रैव प्राप्नोति । विरहिणस्तौर्यत्रिकं सुखाय न, तथाऽपि लोकदृष्ट्या तस्य सुखहेतुत्वमभिमत्य सप्रशंसं तत्तत् सेवाव्यापारो दर्शितः । नलस्य तु न तत्स्वीकारः । भुज्यत इति भोग इति तेषां वास्तवी निरुक्तिरस्त्येव । नलस्य सा तदा नास्तीति चेत् माभूत्, तथाऽपि भोग एव । यथा नीरागजनसमीपस्था युवतिर्युवतिरेव।यद्वा आ खेदे।तौर्यत्रिकं तं पुरवद्वनेऽपि रराध हिंसितवत्।भाग्यभाक् शुभाशुभकर्मभाक् सुखदुःखान्यतरसाक्षात्कारलक्षणं भोगं कुत्र नाप्नोति, अपि तु सर्वत्रापि । यो हि सुखी स स्थानान्तरेऽपि सुखं प्राप्नोति, यस्तु दुःखी स स्थानान्तरे गतोऽपि दुःख्येवेति वा सुखिनस्तस्य वनेऽपि सुखप्रतिपादनं प्रसङ्गकृतम् । 'भाग्यं शुभात्मकविधौ स्याच्छुभाशुभकर्मणि 'इति विश्वः । यद्वा नाकादिवन्नकारस्य निषेधार्थकतया तेन सह समासेन भाग्यभागित्येकं पदं तथा च, दैवहतः क्व भोगं लभत इत्यर्थः अलीतीन्नन्तः । इकारान्तत्वे घ्यन्तत्वात्पूर्वनिपातः स्यात् । 'तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम्' । इत्यमरः ॥ १०२ ॥

**तदर्थमध्याप्य जनेन तद्वने**
**शुका विमुक्ताः पटवस्तमस्तुवन्।**
**स्वरामृतेनोपजगुश्च सारिका-**
**स्तथैव तत्पौरुषगायनीकृताः॥१०३॥**

तदर्थमिति ॥ जनेन लोकेन तदर्थं नलस्तुत्यर्थमेवाध्याप्य पाठयित्वा तद्वने नलोद्याने विमुक्ताः पटवः स्फुटवाचः शुकास्तं नलमस्तुवन्। तथैव तेनैव प्रकारेण तद्वने विमुक्ताः स्फुटवाचः सारिका अपि स्वरामृतेन तं नलमुपजगुस्तुष्टुवुः।किम्भूताः—तस्य पौरुषं पराक्रमः तस्य गायना

---

१ अत्र मुखचन्द्रयोरभेदरूपणाद्रूपकम्,वियोगरूपकारणसत्त्वेऽपि आननविच्छायत्वरूपकार्यानुत्पत्त्या विशेषोक्तिः, तथा दर्शनस्य रोपारुणचक्षुष्करत्वं प्रति हेतुत्वोक्तेः काव्यलिङ्गम्,कुहूपदार्थयोर्भेदेऽप्यभेदोक्तेरतिशयोक्तिश्च । २ अत्रोत्प्रेक्षा ।

१ अत्र तुर्यपादार्थेन पादान्तरार्थः समर्थित इत्यर्थान्तरन्यासः, सामान्येन विशेषसमर्थनात्मेति बोध्यम् ।

गायन्यश्च कृता गायनीकृताः । जननेति शेषः । उभयोर्विशेषणं, सारिकाणामेव वेदम् अनेन स्तुतिविरुदावलीपाठकाः सूचिताः । अध्याप्येति 'क्रीङ्जीनां णौ ६ । १ ४८' इत्यात्त्वम् । गायनीत्यत्र 'ण्युट् च ३ । ३ १०७' इति ण्युट् । ततश्च्विः ॥ १०३ ॥

इतीष्टगन्धाढ्यमटन्नसौ वनं
पिकोपगीतोऽपि शुकस्तुतोऽपि च ।
अविन्दतामोदभरं बहिश्चरं
विदर्भसुभ्रूविरहेण नान्तरम् ॥ १०४ ॥

इतीति ॥ असौ नलः इति पूर्वोक्तप्रकारेण वनमटन्परिभ्रमन्सन् बहिश्चरं बाह्यमामोदभरं सौरभातिशयमविन्दत प्राप । लोकदृष्ट्या वा प्रमुमोदेति भावः । विदर्भसुभ्रूर्भैमी तस्या विरहेणान्तरं वास्तविकं वाऽऽमोदभरं हर्षातिशयं न लेभे 'बहिः परम्' इति क्वचित्पाठः । तत्र परं केवलम् । किम्भूतं वनम्—इष्टगन्धाढ्यमिष्टेनाभीष्टेन गन्धेन सौरभेणाढ्यं समृद्धम् । किम्भूतोऽसौ—पिकोपगीतोऽपि । तथा—शुकस्तुतोऽपि । 'आमोदो हर्षगन्धयोः' इति विश्वः ॥ १०४ ॥

करेण मीनं निजकेतनं दधद्
द्रुमालवालाम्बुनिवेशशङ्कया ।
व्यतार्कि सर्वर्तुघने वने मधुं
स मित्रमत्रानुसरन्निव स्मरः ॥ १०५ ॥

करेणेति ॥ स नलः स्मर इव व्यतार्कि । लोकैरिति शेषः । किम्भूतः स्मरः—सर्वे च ते ऋतवश्च सर्वर्तवस्तैर्घने सम्पूर्णेऽत्रास्मिन्वने मित्रं सहायं मधुं वसन्तमनुसरन्मृगयमाणः । निजकेतनं चक्रवर्तिचिह्नं ध्वजरूपं मीनं लक्षणभूतरेखारूपमत्स्यं द्रुमाणामालवालेष्वम्बु तस्मिन्निवेशशङ्कया करेण दधत् धारयन् । दधदिति 'नाभ्यस्ताच्छतुः' ७।१।७८' इति नुम्निषेधः । आलूयते खन्यत इत्यालवालम् । औणादिक आलच्प्रत्ययः ॥ १०५ ॥

लतावलालास्यकलागुरुस्तरु-
प्रसूनगन्धोत्करपश्यतोहरः ।
असेवतामुं मधुगन्धवारिणि
प्रणीतलीलाप्लवनो वनानिलः ॥ १०६ ॥

लतेति ॥ वनानिलोऽमुं नलमसेवत । किम्भूतः—लतारूपा अबलास्तासां लास्यकला नृत्यविद्या तस्या गुरुरध्यापकः । तथा—तरूणां प्रसूनानि पुष्पाणि तेषां गन्धोत्करस्य गन्धसमूहस्य पश्यतोहरश्चोरः । तथा—मधु पुष्परसस्तल्लक्षणे गन्धवारिणि गन्धोदके प्रणीतं कृतं लीलाप्लवनं जलक्रीडा येन । मधुगन्धाख्यं 'नलसर' इति केचित् । क्रमेण विशेषणत्रयेण मन्दत्वसुगन्धत्वशीतलत्वानि सूच्यन्ते । एवंविधो वायुः कार्यसिद्धेः सूचकः । अन्योऽप्येवंविधः पीठमर्दादिभिः परिचारको नायकं सेवते । पश्यतोहर इति 'षष्ठी चानादरे २।३।३८' इति षष्ठ्या 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इत्यलुक् ॥ १०६ ॥

अथ स्वमादाय भयेन मन्थना-
च्चिरत्नरत्नाधिकमुच्चितं चिरात् ।
निलीय तस्मिन्निव सन्नपांनिधि-
र्वने तडाको ददृशेऽवनीभुजा ॥ १०७ ॥

अथेति ॥ अथ तत्तद्वनानिलाद्युपभोगानन्तरमवनीभुजा राज्ञा नलेन स तडाकोऽपांनिधिरिव समुद्र इव ददृशे । उत्प्रेक्षा । किम्भूतः—चिराद्बहुकालेनोच्चितं वृद्धिं प्रापितम्, तथा—चिरत्नैश्चिरन्तनै रत्नैरैरावतादिभिरधिकम् । पूर्वं तान्यसहायान्येवासन्, इदानीं तु तान्येव बहूनि जातानि तेभ्योऽधिकं वा । स्वं धनं मन्थनाद्भयेनादाय गृहीत्वा तस्मिन्वने निलीय तडाकरूपेण तिरोहितीभूय निवसन् । समुद्रोपमयोदकबाहुल्यं व्यज्यते । तस्मिन्वने सन् विद्यमान इति पक्षे साक्षादुत्प्रेक्षा । अन्योऽपि धनी राजादिपीडनाद्भयेन सर्वस्वं गृहीत्वा निरुपद्रवे देशान्तरे गुप्तो वसति । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । तडाक इति 'तड आघाते' इत्यस्मात् 'पिनाकादयश्च' इत्युणादिसूत्रेणाकप्रत्यये सिद्धम् । मन्थनादिति 'भीत्रार्थानां भयहेतुः १।४।२५' इत्यपादानत्वम् । चिरत्न इति 'चिरपरुत्परारिभ्यस्त्नो वक्तव्यः' इति त्नः ॥ १०७ ॥

पयोनिलीनाभ्रमुकामुकावली-
रदाननन्तोरगपुच्छसुच्छवीन् ।
जलार्धरुद्धस्य तटान्तभूभिदो
मृणालजालस्य मिषाद्बभार यः ॥ १०८ ॥

१ अत्र स्वभावोक्तिः । २ अत्र विशेषोक्तिः । ३ अत्रोत्प्रेक्षाऽनुप्रासश्च यद्वा—मीनयोर्भेदेऽप्यभेदोक्त्याऽतिशयोक्तिरपीति ।

१ अत्र रूपकं, समासोक्तिश्च । २ अत्रोत्प्रेक्षा ।

समुद्रधर्मानाह—अग्रे 'पयोधिलक्ष्मीमुषि' इति तडाकविशेषणात्तदेव पयोधिलक्ष्मीमुद्वमाहाष्टाभिः—

पय इति ॥ स कः—यस्तडाको मृणालजालस्य विससमूहस्य मिषाद्व्याजात्पयसि निलीना मग्ना अभ्रमुकामुका ऐरावतास्तेषामावली समूहस्तस्या रदान्दन्तान्बभार । किम्भूतान् रदान्—अनन्तोरगः अनन्तसञ्ज्ञक उरगः शेषस्तस्य पुच्छं तद्वत्सुच्छवीञ्शोभनदीप्तीन् । 'सच्छवीन्' इति पाठे सदृशदीप्तीञ्श्वेतान् किम्भूतस्य मृणालजालस्य—जलेनार्धरुद्धस्यार्धावृतस्वरूपस्य । तथा तटान्ते तटसमीपे या भूस्तां भिनत्तीति तटान्तभूभित्तस्य-आकण्ठमग्नत्वादैरावता न दृश्यन्ते किं तु दन्ता दृश्यन्ते । पूर्वं त्वेक एवैरावत आसीत्, अधुना तु बहव इत्यर्थः । आवलीशब्देन रत्नाधिकत्वं सूचितम् । एवमुत्तरत्रापि रत्नाधिक्यं द्रष्टव्यम् । तटान्तभूभेत्तृत्वं दन्तानामपि विशेषणम् । 'कमेरनिषेधः' इत्यतः 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९' इतिनिषेधाभावात् अभ्रमुकामुकेत्यत्र षष्ठीसमासः । सच्छवीनित्यत्र 'समानस्यच्छन्दस्यमूर्धप्रभृत्युदर्केषु ६ । ३ । ८४' इति योगविभागात्समानस्य सः ॥ १०८ ॥

तटान्तविश्रान्ततुरङ्गमच्छटा-
स्फुटानुबिम्बोदयचुम्बनेन यः ।
बभौ चलद्वीचिकशान्तशातनैः
सहस्रमुच्चैःश्रवसामिवाश्रयम् ॥ १०९ ॥

तटेति ॥ यस्तडाकः तटान्ते कूलप्रान्ते विश्रान्ताः स्थिता नलतुरंगमच्छटा अश्वसमूहास्तेषां स्फुटम् प्रकटमुदितोऽनुबिम्बः प्रतिबिम्बस्तस्य चुम्बनेन सम्बन्धेन तत्प्रतिबिम्बमिषेणेत्यर्थः । उच्चैःश्रवसां सहस्रमाश्रयन्निव प्राप्नुवन्निव बभौ । किम्भूतं सहस्रम्—वीचय एव कशा अश्वताडन्यस्तासामन्ताः प्रान्तास्तैर्यानि शातनानि ताडनानि तैश्चलच्चञ्चलम् । प्रतिबिम्बितं वस्तु तरङ्गवशाच्चञ्चलमिव प्रतिभाति । तत्र ताडितत्वेन चलत्वमुत्प्रेक्षागर्भम् । नलाश्वानामुच्चैःश्रवःसाम्यं द्योत्यते । 'अश्वादेस्ताडनी कशा' इत्यमरः ॥ १०९ ॥

सिताम्बुजानां निवहस्य यश्छला-
द्बभावलिश्यामलितोदरश्रियाम् ।
तमःसमच्छायकलङ्कसङ्कुलं
कुलं सुधांशोर्बहलं वहन्बहु ॥ ११० ॥

सितेति ॥ यस्तडाकः सिताम्बुजानां श्वेतोत्पलानां निवहस्य समूहस्य छलान्मिषात्सुधांशोश्चन्द्रस्य बहलं सान्द्रं विस्तृतं वा कुलं वृन्दं वहन्सन् बहु अतिशयेन बभौ शुशुभे । किम्भूतानाम्—अलिभिर्भ्रमरैः श्यामलिता श्यामलीकृता उदरश्रीर्मध्यशोभा येषाम् । किम्भूतं कुलम्—तमःसमच्छायोऽन्धकारसदृशशोभो यः कलङ्कस्तेन सङ्कुलं व्याप्तम्। श्रियामिति भाषितपुंस्कत्वात्पुंवत् ॥ ११० ॥

रथाङ्गभाजा कमलानुषङ्गिणा
शिलीमुखस्तोमसखेन शार्ङ्गिणा ।
सरोजिनीस्तम्बकदम्बकैतवा-
न्मृणालशेषाहिभुवाऽन्वयायि यः ॥ १११ ॥

रथेति ॥ यस्तडाकः सरोजिनी कमलिनी तस्याः स्तम्बकदम्बो गुल्मसमूहस्तस्य कैतवान्मिषात्कमलिनीगुल्मसमूहेनैव शार्ङ्गिणा श्रीकृष्णेनान्वयायि अनुसृतः । कृष्णो हि समुद्रे शेते । कदम्बपदप्रयोगसामर्थ्यात् शार्ङ्गिणेति जातावेकवचनम् । किंभूतेन—रथाङ्गं चक्रं, चक्रवाकश्च तद्भाजा । तथा—कमला लक्ष्मीः, कमलमुत्पलं तया, तेन च सहानुषङ्गः संबन्धोऽस्यास्तीति तेन । तथा—शिलीमुखस्तोमो भ्रमरसमूहस्तत्सखेन तत्सदृशेन तद्वच्छयामेन तत्सहितेन च, बाणसमूहसहितेन वा । तथा—मृणालमिव शेषाहिः स एव भूः शयनस्थानं यस्य । मृणालान्येव शेषाहिः भूरुत्पत्तिस्थानं यस्य । 'सलिलं कमलं जलम्' इति 'कमला श्रीर्हरिप्रिया' इतिचामरः । कर्मानुषङ्गिणेत्यत्र इनिः ॥ १११ ॥

तरङ्गिणीरङ्कजुषः स्ववल्लभा-
स्तरङ्गरेखा बिभराम्बभूव यः ।
दरोद्गतैः कोकनदौघकोरकै-
र्धृतप्रवालाङ्कुरसञ्चयश्च यः ॥ ११२ ॥

तरङ्गिणीरिति ॥ यस्तडाकः तरङ्गरेखास्तरङ्गमाला एव तरङ्गिणीर्नदीर्बिभराम्बभूव । व्यस्तरूपकम् । किम्भूताः—अङ्कजुषो मध्यसेविनीरुत्सङ्गसेविनीश्च । तथा—स्ववल्लभाः स्वप्रियाः, प्राणेश्वरीश्च । यतश्च तडागः दरो-

१ अत्रापह्नुतिः । २ अत्र रूपकमुत्प्रेक्षा च ।

१ अत्रापह्नुतिः, उपमा, उत्प्रेक्षा च । २ अत्रापह्नुतिः श्लेषश्च तथा,—मृणालमिवेत्युपमा, मृणालमेवेति रूपकं च ।

द्रुतैरीषदुद्भूतैः कोकनदौघा रक्तोत्पलसमूहास्तेषां कोरकैर्मुकुलैः कृत्वा धृतः प्रवालाङ्कुरसञ्चयो विद्रुमाङ्कुरसमूहो येन ( तादृग् अस्ति ) समुद्रे नद्यः प्रविशन्ति, विद्रुमाङ्कुराश्च बहवः सन्ति, तथाऽत्रापीति समुद्रसाम्यम् ॥ ११२ ॥

महीयसः पङ्कजमण्डलस्य य-
श्छलेन गौरस्य च मेचकस्य च ।
नलेन मेने सलिले निलीनयो-
स्त्विषं विमुञ्चन्विधुकालकूटयोः ११३

महीयस इति ॥ यस्तडाको नलेन महीयसो महत्तरस्य गौरस्य श्वेतस्य तथा मेचकस्य नीलस्य पङ्कजमण्डलस्य कमलसमूहस्य छलेन व्याजेन सलिले निलीनयोर्निमग्नयोर्विधुकालकूटयोश्चन्द्रविषयोस्त्विषं दीप्तिं विमुञ्चन्नुद्गिरन्निव मेने शङ्कितः । समुद्रे यथा चन्द्रो, विषं च तिष्ठति तथाऽत्रापीति । विधुरमृतमिति केचित् ११३

चलीकृता यत्र तरङ्गरिङ्गणै-
रबालशैवाललतापरम्पराः ।
ध्रुवं दधुर्वाडवहव्यवाडव-
स्थितिप्ररोहत्तमभूमधूमताम् ॥ ११४ ॥

चलीकृता इति ॥ यत्र यस्मिंस्तडाके तरङ्गरिङ्गणैस्तरङ्गस्खलनैः चलीकृताश्चालिता अबाला महत्यः शैवाललतास्तासां परम्पराः समूहाः वाडवहव्यवाट् वाडवानलस्तस्यावस्थितिरवस्थानं तेन प्ररोहत्तमोऽतिशयेन प्रादुर्भूतो भूमा बाहुल्यं यस्य एवंविधो यो धूमस्तस्य भावस्तत्ता तां दधुरिति ध्रुवं शङ्के । समुद्रे वाडवानलधूमस्तिष्ठति तद्वदत्रापि । प्ररोहत्तमधूमभूमतामिति कश्चित् । तत्र प्ररोहत्तमो धूमभूमा यासामिति । 'वहेश्च' इत्यस्य छान्दसत्वस्य प्रायिकत्वात् 'हव्यवाट्' इत्यत्र ण्विः । बहोर्भावो भूमा इति 'बहोर्लोपो भू च बहोः ६।४।१५८' इति सिद्धम् ॥ ११४ ॥

प्रकाममादित्यमवाप्य कण्टकैः
करम्बितामोदभरं विवृण्वती ।
धृतस्फुटश्रीगृहविग्रहा दिवा
सरोजिनी यत्प्रभवाप्सरायिता ॥ ११५ ॥

प्रकामेति ॥ यत्प्रभवा यस्मात्प्रभव उपत्तिर्यस्याः सा सरोजिनी कमलिनी दिवा दिने अप्सरायिता अप्सरस इवाचरिता अप्सरस्तुल्या । किम्भूता—आदित्यं सूर्यमवाप्य प्रकाममतिशयेन कण्टकैः करम्बिता व्याप्ता । आमोदभरं सौगन्ध्यबाहुल्यं विवृण्वती प्रकटयन्ती । तथा—धृतःस्फुटानि विकसितानि श्रीगृहाणि कमलानि तान्येव विग्रहः शरीरं यया । अथ च एवंविधाः प्रकामं प्रकृष्टमदनमादित्यं देवं प्राप्य रोमाञ्चिता हर्षं प्रकटयन्त्यो दिवा स्वर्गेण धृतः स्फुटायाः प्रकाशमानायाः श्रियः शोभाया गृहं स्थानं विग्रहः शरीरं यासां ता अप्सरसोऽपि । आदित्यमिति 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः४।१।८५' इति ण्यः । अप्सरायितेति 'कर्तुः क्यङ् सलोपश्च३।१।११' इति क्याङ् 'ओजसोऽप्सरसो नित्यम्' इति सलोपः ॥ ११५ ॥

यदम्बुपूरप्रतिबिम्बितायति-
र्मरुत्तरङ्गैस्तरलस्तटद्रुमः ।
निमज्ज्य मैनाकमहीभृतः सत-
स्ततान पक्षान्धुवतः सपक्षताम् ॥ ११६ ॥

यदिति ॥ यस्य तडाकस्याम्बुन उदकस्य पूरे प्रवाहे प्रतिबिम्बिता प्रतिफलिता आयतिर्दैर्घ्यं यस्य एवम्भूतस्तटद्रुमस्तीरवृक्षो निमज्ज्यान्तर्निलीय सतो विद्यमानस्य मैनाकमहीभृतो मैनाकनाम्नः पर्वतस्य सपक्षतां समानतां पक्षसाहित्यं च ततान विस्तारयामास । मैनाक इव स्थित इत्यर्थः । किम्भूतः—मरुत्तरङ्गैर्वायुचालितोर्मिभिस्तरलश्चञ्चलः । किम्भूतस्य—पक्षान्धुवतः कम्पयतः । अत्र वृक्षप्रतिबिम्बः समुद्रे मैनाकस्तिष्ठति[2] ॥ ११६ ॥

पयोधिलक्ष्मीमुषि केलिपल्वले
रिरंसुहंसीकलनादसादरम् ।
स तत्र चित्रं विचरन्तमन्तिके
हिरण्मयं हंसमबोधि नैषधः ॥ ११७ ॥

१ अत्र तरङ्गरेखाणां तरङ्गिणीत्वेन रूपणाद्रूपकम् । कोरकाणां प्रवालत्वसम्भावनस्यापह्नवमूलत्वादपह्नुतिश्च । २ अत्र स्फुटैवापह्नुतिः, छलेन साक्षात्तदुक्तेः । त्विषं विमुञ्चन्निवेत्युत्प्रेक्षा च । ३ अत्र ध्रुवमित्युत्प्रेक्षा परम्पराणां न धूमभिन्नत्वमिति तत्स्वरूपापह्नवनादपह्नुतिश्च ।

१ अत्रोपमा श्लेषश्च । आदित्यसरोजिन्योश्च नायकनायिकात्वप्रतीत्या समासोक्तिश्च । २ अत्रोत्प्रेक्षा, तरङ्गैर्द्रुमस्य महीभृत्त्वाख्यानादपह्नुतिश्च ।

प्रियासु बालासु रतक्षमासु च
द्विपत्रितं पल्लवितं च बिभ्रतम् ।
स्मरार्जितं रागमहीरुहाङ्कुरं
मिषेण चञ्च्वोश्चरणद्वयस्य च ॥११८॥

पयोधीति युग्मम् ॥ स नलस्तत्र तस्मिन्केलिपल्वले क्रीडाल्पसरसि चित्रमन्तिके विचरन्तं हंसीसमीपे गच्छन्तं हिरण्मयं सुवर्णमयं हंसमबोध्यज्ञासीत् । किम्भूते—पयोधिः समुद्रस्तस्य लक्ष्मीं शोभां पूर्वोक्ताब्धिलक्षणप्रकारेण मुष्णातीति तत्र ।किम्भूतं हंसम्—रिरंसुं रन्तुमिच्छुः हंसी तस्याः कलनादोऽव्यक्तमधुरध्वनिस्तत्र सादरं साभिलाषम् । चित्रं सुवर्णमयत्वादाश्चर्यकारकं वा । आन्तिके पल्वलसमीपे वा । पूर्वोक्तप्रकारेणातिवर्णितस्य पल्वलत्वमनुचितम् । तत्तु नलस्य क्रीडासर इति बुद्ध्या पल्वलशब्दप्रयोग इति वा । अथ च विस्तरत्वात्समुद्रतुल्ये विनाशित्वात्पल्वलतुल्ये शरीरे विचरन्तं हंसं परमात्मानं कश्चिद्योगी पश्यति । रिरंसुर्हंसी शक्तिः तस्याः कलनादे सादरम् । हिरण्मयत्वं 'हिरण्मयः पुरुषः' 'एको हंसः' इत्यादिश्रुतेः । विहरन्तमिति क्वचित् । हिरण्यस्य विकार इत्यर्थे मयटि 'दाण्डिनायन—६। ४ । १७४' हिरण्मयो निपातनात् साधुः।अबोधीति कर्तरि चिण्॥प्रियास्विति॥ किम्भूतम्—बालासु प्रियासु रतक्षमासु च सुरतसमर्थासु प्रियासु विषये चञ्च्वोर्मिषेण चरणद्वयस्य च मिषेण द्विपत्रितं द्विपत्रयुक्तं पल्लवितं पल्लवयुक्तं च स्मरार्जितं कामोत्पन्नं रागोऽनुरागस्तल्लक्षणो महीरुहो वृक्षस्तस्याङ्कुरं बिभ्रतं यथाक्रमं धारयन्तम् । बालासु स्वल्पोऽनुरागः प्रौढासु भूयानित्यर्थः । पत्रद्वयसाम्यं चञ्चुपुटस्य अनेकाङ्गुलीसंयोगाच्चरणद्वयस्य पल्लवसाम्यम् । राजहंसस्य च चञ्चुचरणं लोहितम् । द्विपत्रपल्लवाभ्यां तारकादित्वादितच् । बिभ्रतमिति 'नाभ्यस्ताच्छतुः ७।१।७८' इति नुमभावः चञ्चुपुटस्य द्विपत्रितत्वाद्बालासु प्रियासु चुम्बनादिव्यापारः । प्रौढासु चरणद्वयस्य पल्लवितत्वात्सर्वाङ्गीण इति सूचितम् ॥ ११७॥११८ ॥

१ अत्रोपमा,पयोधेरपेक्षया तटाकस्यातिशयं सम्भावयितुं हिरण्मयहंससद्भावाख्यानमिति व्यतिरेकश्च । परमेश्वरस्य तत्त्वावबोधस्फूर्त्या तत्स्वरूपानुभवप्राप्तिरूपवस्तुनो व्यञ्जनाद्वस्तुध्वनिश्च । २ अत्र रागस्य महीरुहा-

महीमहेन्द्रस्तमवेक्ष्य स क्षणं
शकुन्तमेकान्तमनोविनोदिनम् ।
प्रियावियोगाद्विधुरोऽपि निर्भरं
कुतूहलाक्रान्तमना मनागभूत् ॥११९॥

महीति ॥ स महीमहेन्द्रः पृथ्वीन्द्रः प्रियावियोगाद्दमीविरहान्निर्भरमत्यन्तं विधुरोऽपि विह्वलोऽपि तं शकुन्तं हंसं क्षणं मुहूर्तमवेक्ष्यावलोक्य मनागीषत्कुतूहलेन कौतुकेनाक्रान्तं मनोऽन्तःकरणं यस्यैवंभूतोऽभूत् । यद्वा तं शकुन्तमवेक्ष्य क्षणमिति योज्यम् । किंभूतम्—एकान्तेन नियमेन सर्वदाभीक्ष्णं वा मनो विनोदयति रञ्जयत्येवंशीलम् ॥ ११९ ॥

अवश्यभव्येष्वनवग्रहग्रहा
यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते
जनस्य चित्तेन भृशावशात्मना ॥१२०॥

विरहित्वेऽपि तस्य कुतूहलाक्रान्तत्वं कुत इत्यपेक्षायां कविरर्थान्तरन्यासेनोत्तरमाह—ससैन्यनलदर्शनेनातिभीतः कथं तत्र निद्रावित्युत्तरश्लोकाकाङ्क्षायामुत्तरश्लोकसमर्थनार्थं वार्थान्तरन्यासमाह—

अवश्येति ॥ अवश्यं नियमेन भव्येषु भवितव्येषु शुभादिषु विषयेऽनवग्रहोऽबाध्यमानो निरर्गलो ग्रहोऽभिनिवेशः प्रसरो यस्याः सा वेधसो ब्रह्मणः स्पृहा वाञ्छा यया दिशा येन मार्गेण धावति गच्छति तया दिशा तेनैव मार्गेण जनस्य लोकस्य चित्तेन सा वेधसः स्पृहानुगम्यते । यथा विधिः प्रेरयति तथा लोकः करोतीत्यर्थः । किंभूतेन चित्तेन—भृशमत्यर्थमवशोऽनधीन आत्मा स्वरूपं यस्य तेन । विधिस्पृहाधीनेनेत्यर्थः । यथा—अप्रतिबन्धा वात्या यया दिशा धावति तया दिशा निःसारत्वाद्वातपरतन्त्रेण तृणेन सा वात्यानुगम्यते तथेत्यर्थः । अवश्यंभाविभैमीपरिणयनानुकूले विधिप्रेरिते हंसे कौतुकं

—ङ्कुरात्मना रूपणाद्रूपकम्,प्रस्तुतस्थले रागपदार्थस्य भिन्नत्वेऽपि श्लेषवैशिष्ट्येनाङ्कुरसाम्यसंभावनाय रक्तिमात्मनाऽवस्थानाच्छेषानुप्राणितत्वं तस्य । मिषेणेत्यपह्नुतिः ।

१ अत्रानुप्रासः, कुतूहलाविष्टताऽवरोधकवैधुर्यरूपकारणसत्त्वेऽपि कुतूहलाविष्टतारूपकार्योत्पत्तेर्विभावना, वैधुर्यरूपकारणसत्त्वेऽपि च कुतूहलाऽऽवेशरूपकार्यानुत्पत्तेश्च विशेषोक्तिः । विधुरत्वे कौतुकित्वं विरुद्धमिति विरोधश्च ।

युक्तमिति भावः । विधिप्रेरितत्वादेव नलस्वीकृतस्वीय-ग्रहणपूर्वमोचनद्वारा नलस्योपकारार्थं सैन्यसन्निधावपि बुद्धिपूर्वं निदद्राविति भावः । यद्वा अनेनाकारेण तेन न ज्ञातस्तथाऽपि विधिवशादेव भाविन्यापि सुखेऽन्तःकरणं सोत्साहं जातमिति भावः । अवश्यभव्योष्विति मयूरव्यंसकादित्वात्समासः । तत एव च 'लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि' इत्याद्युक्तदिशा मलोपः ॥ १२० ॥

**अथावलम्ब्य क्षणमेकपादिकां**
**तदा निदद्रावुपपल्वलं खगः ।**
**स तिर्यगावर्जितकंधरः शिरः**
**पिधाय पक्षेण रतिक्लमालसः ॥ १२१ ॥**

अथेति ॥ अथ नलस्य स्पृहोदयानन्तरं स खगो हंसस्तदा तस्मिन्समये रतिक्लमेन सुरतखेदेनालसः सन् उपपल्वलं सरःसमीपे क्षणं निदद्रौ निद्रां चक्रे । किं कृत्वा—पक्षेण शिरः पिधायाच्छाद्य । किंभूतः—तिर्यगावर्जिता नम्रीकृता कंधरा ग्रीवा येन सः । पुनः किं कृत्वा—एकश्चासौ पादश्च एकपादः सोऽस्यां स्थितावस्तीति तां स्थितिमवलम्ब्याङ्गीकृत्य । पक्षिजातिरियम् । एकपादिकामिति बहुव्रीहौ कुम्भपद्यादिष्वेकपदीशब्दस्य पाठात्पादशब्दान्त्यलोपे 'पादोऽन्यतरस्याम् ४।१।८' इति ङीपि भत्वात्पद्‌दादेशे एकपदीमिति प्राप्ते 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः ।' इति । 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इति चानित्यत्वादनाश्रित्योक्तकर्मधारयादस्त्यर्थे ठनि कादेशे समर्थनीयम् । उपपल्वलमिति सामीप्येऽव्ययीभावः ॥ १२१ ॥

**सनालमात्माननिर्जितप्रभं**
**ह्रिया नतं काञ्चनमम्बुजन्म किम् ।**
**अबुद्ध तं विद्रुमदण्डमण्डितं**
**स पीतमम्भःप्रभुचामरं नु किम् १२२॥**

सनालमिति ॥ स नलः तं हंसमित्यबुद्ध तर्कितवान् । इतीति किम्—एकचरणावस्थानात्सनालं नालसहितमात्मनः स्वस्याननेन मुखेन निर्जिता प्रभा यस्य । अत एव ह्रिया लज्जया नतं नम्रं काञ्चनं सौवर्णमम्बुजन्म कमलमेतत्किम् । तथा—चरणस्य रक्तत्वाद्विद्रुमदण्डेन मण्डितमलंकृतं पीतं पीतवर्णमम्भःप्रभोर्वरुणस्य चामरं किमिति तर्कितवान् । कमलं सनालम्, चामरं च सदण्डं भवति । काञ्चनमिति विकारे 'अनुदात्तादेश्च ४।३।१४०' इत्यञ्। रजतादित्वाद्वा।अबुद्धेति बुध्यतेर्लुङि सिज्लोपे 'झषस्तथोर्धोऽधः ८।२।४०' इति धादेशे रूपम् ॥ १२२ ॥

**कृतावरोहस्य हयादुपानहौ**
**ततः पदे रेजतुरस्य बिभ्रति ।**
**तयोः प्रवालैर्वनयोस्तथाम्बुजै-**
**र्नियोद्धुकामे किमु बद्धवर्मणी ॥१२३॥**

कृतेति ॥ ततो हंसशयनानन्तरं हयादश्वात्कृतावरोहस्य कृतोत्तरणस्यास्य नलस्य पदे चरणौ रेजतुः शुशुभाते । किंभूते पदे—उपानहौ बिभ्रती धारयमाणे । तत्रोत्प्रेक्षते—तयोः प्रकृतयोर्वनयोः काननोदकयोर्यथाक्रमं प्रवालैः पल्लवैः तथाम्बुजैः सह नियोद्धुकामे संग्रामयितुकामे सती बद्धवर्मणी बद्धं वर्म कवचं याभ्यां ते । किमु सम्भावनायाम् । तथा-समुच्चये । अत्र नियुद्धं युद्धमात्रम्, नतु बाहुयुद्धम् । तस्य पदे पल्लवरक्तोत्पलतुल्ये इति सूचितम्। योद्धुकामो बद्धकवचो भवति । 'वने सलिलकानने' इत्यमरः । उपानहाविति 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६।३।११६' इति दीर्घः । रेजतुरिति 'फणां च सप्तानाम् ।६।४।१२५' इत्येत्वाभ्यासलोपौ[२] ॥ १२३ ॥

**विधाय मूर्तिं कपटेन वामनीं**
**स्वयं बलिध्वंसिविडम्बिनीमयम् ।**
**उपेतपार्श्वश्चरणेन मौनिना**
**नृपः पतङ्गं समधत्त पाणिना ॥१२४॥**

विधायेति ॥ अयं नृपः पाणिना हस्तेन पतङ्गं पक्षिणं हंसमिति यावदिति प्रकृते,परत्र सूर्यमित्यर्थः।'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः । स्वयमेव समधत्त धृतवान् । किं कृत्वा—कपटेन बलिध्वंसी नारायणस्तस्य विडम्बिनीमनुसरणशीलां वामनीं ह्रस्वां मूर्तिं स्वरूपं विधाय कृत्वा । किंभूतः—मौनिना निःशब्देन चरणेन पादेन गमनेन वोपेतः प्राप्तः पार्श्वो हंससामीप्यं येन । त्रिविक्रमोऽपि बलिं छलयितुं वामनावतारमूर्तिं कृत्वा आकाशगामित्वान्निः-

१ पूर्ववाक्यार्थस्य समर्थनायैवं वाक्यमिवि परस्परं सापेक्षत्वेनात्रार्थान्तरन्यासः वात्येवेत्युपमा च। २ अत्र शयनानुरूपावस्थोक्तेः स्वभावोक्तिः ।

१ अत्र कविरात्मविषयं संदेहमाविष्करोतीति ससन्देहः, किं चास्य प्राणभूतोत्प्रेक्षा । २ अत्रोत्प्रेक्षा ।

शब्देन चरणेनाङ्घ्रिणा गमनेन प्राप्तसूर्यपार्श्वोऽभवत्। सूर्यश्च हस्तेनास्प्राक्षीदित्यागमाद्यथोक्तम्। पक्षिधारणे स्वाभाविकी क्रियोक्ता। वामनीमिति सम्बन्धेऽपि ङीप्, गौरादित्वान्ङीप् वा ॥ १२४ ॥

तदात्तमात्मानमवेत्य सम्भ्रमात्
पुनः पुनः प्रायसदुत्प्लुताय सः।
गतो विरुत्योड्डयने निराशतां
करौ निरोद्धुर्दशति स्म केवलम् १२५॥

तदात्तमिति ॥ स हंस आत्मानं तेन नलेनात्तं धृतमवेत्य ज्ञात्वा सम्भ्रमाद्भयात्पुनःपुनः उत्प्लवायोड्डीनगमनाय प्रायसद्यत्नं चक्रे। अनन्तरमुड्डयने निराशतां निष्प्रयत्नत्वम्, आशाराहित्यं वा गतः प्राप्तः सन्विरुत्य दीनं शब्दं कृत्वा केवलं निरोद्धुर्ग्रहीतुर्नलस्य करौ दशति स्म ददंश। पक्षिजातिः प्रायसदिति 'यसु प्रयत्ने' इत्यस्मात् 'यसोऽनुपसर्गात्३।१।११' इति श्यनो निषेधे लुङि शप्। यद्वा लुङि पुषादित्वादङ्। तदेति भिन्नं वा ॥१२५॥

ससम्भ्रमोत्पातिपतत्कुलाकुलं
सरः प्रपद्योत्कतयाऽनुकम्प्रताम्।
तमूर्मिलोलैः पतगग्रहान्नृपं
न्यवारयद्वारिरुहैः करैरिव ॥ १२६ ॥

ससंभ्रमेति ॥ सरः कर्तृ सजातीयधारणात्सम्भ्रमं भयसहितं यथास्यात्तथा उत्पाति अवश्यमुत्पतनशीलिं पततां पक्षिणां कं कुलं तेन आकुलं व्याप्तं सत् तत एव पक्षिपक्षवातेन योत्कता उत् उच्छलत्कमुदकं यस्य तस्य भावस्तत्ता तया, हंसोत्कण्ठतया वा अनुकम्प्रतां सकम्पतां, दयालुतां वा प्रपद्य प्राप्य ऊर्मिलोलैस्तरङ्गचञ्चलैर्वारिरुहैः कमलैरेव करैर्हस्तैस्तं नृपं पतगग्रहाद्धंसग्रहणान्न्यवारयदिव न्यषेधयदिव। करैरिवेति वा। अन्योऽपि कश्चिज्जिघांसुमुत्कण्ठित्वेन दयालुतां प्राप्य चञ्चलैः कमलतुल्यैः करैर्वारयति। इयमपि पक्षिजातिः। कम्प्रेत्यत्र 'नमिकम्पिस्म्यजसकमहिंसदीपो रः ३।२।१६७' इति रः। यद्यपि सरसः पतगग्रहो नेष्टः तथापि नृपस्येष्ट इति। 'वारणार्थानामीप्सितः १।४।२७' इत्यपादानत्वम्॥ १२६ ॥

पतत्रिणा तद्रुचिरेण वञ्चितं
श्रियः प्रयान्त्याः प्रविहाय पल्वलम्।
चलत्पदाम्भोरुहनूपुरोपमा
चुकूज कूले कलहंसमण्डली ॥ १२७॥

पतत्रिणेति ॥ कलहंसमण्डली राजहंससंहतिः कूले तीरे चुकूज शब्दं चकार। किम्भूता—तत् पल्वलमल्पसरः प्रविहाय त्यक्त्वा प्रयान्त्याः। गच्छन्त्याः श्रियः शोभायाः शब्दच्छलेन लक्ष्म्याः चलन्ती ये पदाम्भोरुहे चरणकमले तयोर्वर्तमानौ नूपुरौ तदुपमा तत्तुल्या। श्रीत्यागे कारणमाह—किम्भूतं पल्वलम्–रुचिरेण पतत्रिणा पक्षिणा हंसेन वञ्चितं रहितम्। तस्या नूपुरसाम्यात् कूजितस्य मञ्जीरशब्दसाम्यम्। कूजनैव तस्या नूपुरतुल्यत्वं वा। यया सुखप्रदेन प्रियेण त्यक्तं स्थानं त्यक्त्वा गच्छन्त्याः प्रियायाश्चरणे नूपुरौ कूजत इति श्लेषः। प्रयान्त्याः इति वर्तमानप्रत्ययेन श्रियः शीघ्रं प्रत्यागमनं सूचितम्। 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे।' इति विश्वः॥ १२७॥

न वासयोग्या वसुधेयमीदृश-
स्त्वमङ्ग यस्याः पतिरुज्झितस्थितिः।
इति प्रहाय क्षितिमाश्रिता नभः
खगास्तमाचुक्रुशुरारवैः खलु ॥१२८॥

नेति ॥ क्षितिं प्रहाय त्यक्त्वा नभोऽन्तरिक्षमाश्रिताः प्राप्ताः खगाः पक्षिण आरवैः शब्दैस्तं नलमिति पूर्वोक्तप्रकारेणाचुक्रुशुर्निनिन्दुः। खलु उत्प्रेक्षायां, निश्चये वा। इतीति किम्—हे अङ्ग दीनकर्तृकसामर्षामन्त्रणे, यस्या वसुधाया उज्झितास्थितिस्त्यक्तमर्याद ईदृशो निरपराधप्राणिधारणलक्षणमधर्मं कुर्वाणो निरपत्रपो वा त्वं पतिः पालयिता सेयं वसुधा पृथ्वी वासयोग्या न भवतीति वरम्। शून्यं नभ एव आश्रयिष्यामः, न तु बहुधनरत्नसंपूर्णां वसुंधराम्। दुष्टस्वामित्वादित्यर्थः। अन्योऽपि सोपद्रवं देशं त्यजति। आरवैरित्यत्र 'ऋदोरप् ३।३।५७' इत्यपो नित्यम् 'उपसर्गे रुवः ३।३।२२' इति बाधके घञि प्राप्ते 'विभाषाङि रुप्लुवोः ३।३।५०।' इत्याङि घञो विकल्पविधानात्पक्षेऽप्॥ १२८॥

न जातरूपच्छदजातरूपता
द्विजस्य दृष्टेयमिति स्तुवन्मुहुः।

---

१ अत्र वामन्या मूर्तेः साधर्म्यसम्भावनाय पतङ्गादौ श्लेषः। स्वभावोक्तिः, पक्षिनिग्रहक्रियाया निदर्शनात्। अनयोश्चाङ्गाङ्गिभावात्मा सङ्करः। २ अत्रापि स्वभावोक्तिः। ३ अत्र रूपकमुत्प्रेक्षा च।

१ अत्रोपमा स्वभावोक्तिश्च। २ अत्रोत्प्रेक्षा।

अवादि तेनाथ स मानसौकसा
जनाधिनाथः करपञ्जरस्पृशा ॥१२९॥

न जातेति ॥ अथानन्तरमिति पूर्वोक्तप्रकारेण मुहुर्वारंवारं स्तुवन्स जनाधिनाथो नलः तेन मानसौकसा हंसेनावादि वक्ष्यमाणप्रकारेणोक्तः ।किम्भूतेन—करपञ्जरं हस्ततलक्षणं पञ्जरं पक्षिबन्धनयन्त्रं स्पृशतीति तेन ।इतीति किम्—द्विजस्य पक्षिणो जातरूपस्य सुवर्णस्य छदौ पक्षौ ताभ्यां जातं रूपं सौन्दर्यं यस्य तस्य भावस्तत्ता, सा क्वापि न दृष्टेति । अथ च ब्राह्मणमात्रस्य सौवर्णप्रच्छदसंजातसौन्दर्यमाश्चर्यकारि भवति ।पञ्जरपदेन करपुटस्य शैथिल्यात्पीडाभावः सूच्यते ॥ १२९ ॥

धिगस्तु तृष्णातरलं भवन्मनः
समीक्ष्य पक्षान्मम हेमजन्मनः ।
तवार्णवस्येव तुषारसीकरै-
र्भवेदमीभिः कमलोदयः कियान्१३०॥

धिगिति ॥ हे राजन्, हेमजन्मनः सुवर्णप्रभवस्य सुवर्णप्रभवत्वान्मम पक्षान्समीक्ष्य दृष्ट्वा तृष्णया स्पृहया तरलं चञ्चलं भवन्मनस्त्वदन्तःकरणं धिक् गर्ह्यमस्तु । सुवर्णाभिलाषेणैव त्वयाहं धृतः,स्तुतश्चेत्यर्थः । अमीभिः पक्षैस्तव राज्ञः सतः कियान्कियत्परिमाणः कमला लक्ष्मीस्तस्या उदय आधिक्यं भवेत् । अपितु नाल्पोऽपीत्यर्थः कैः कस्येव—तुषारसीकरैर्हिमकणैरर्णवस्य समुद्रस्येव । यथा हिमकणैरर्णवस्य समुद्रस्य कमलं जलं तस्योदयः कमलायालक्ष्म्याउदयश्च कियान् ।यथोदकवृद्ध्यर्थं समुद्रेण हिमकणा नाद्रियन्ते, तथा समृद्धेन त्वया मम पक्षसुवर्णं नाभिलषणीयमिति भावः । परद्रव्याभिलाषेण कियांल्लक्ष्मीसमुदयो भवेत्, अपि तु विपदेवेति वा।'कमला श्रीर्हरिप्रिया' 'सलिलं कमलं जलम्' इत्यमरः । धिग्योगे 'मनः । ४ । १ ११' इति द्वितीया ॥ १३० ॥

न केवलं प्राणिवधो वधो मम
त्वदीक्षणाद्विश्वसितान्तरात्मनः।
विगर्हितं धर्मधनैर्निबर्हणं
विशिष्य विश्वासजुषां द्विषामपि १३१॥

न केवलमिति ॥ हे राजन्, त्वदीक्षणात्साधोस्तव ईक्षणाद्विलोकनाद्विश्वसितो विश्वासं प्राप्तोऽन्तरात्मा मनो यस्यैवंभूतस्य मम वधः केवलं प्राणिवधो जन्तुहिंसामात्रं न भवति, किंतर्हि धर्म एव धनं येषां तैर्मन्वादिभिर्द्विषां वैरिणामपि विश्वासजुषां विश्वसितानां निबर्हणं मारणं विशिष्योत्कृष्य विगर्हितं विशेषेण निन्दितम् । धर्मधनैर्निबर्हणं हिंसामात्रं निन्दितम् । सामान्येनेत्यर्थः । विश्वासजुषां तु द्विषामपि निबर्हणं विशिष्य विशेषतो गर्हितमिति वा योजना । विश्वासघातकस्य गुरुप्रायश्चित्तप्रतिपादनात् । यस्तु मारणीयस्तस्यापि विश्वसितस्य मारणं निन्दितम्,किंपुनर्निरपराधस्य मादृशस्येति भावः॥१३१॥

पदेपदे सन्ति भटा रणोद्भटा
न तेषु हिंसारस एष पूर्यते ।
धिगीदृशं ते नृपते कुविक्रमं
कृपाश्रये यः कृपणे पतत्रिणि ॥१३२॥

पद इति ॥ हे नृपते, पदेपदे स्थानेस्थाने रणोद्भटाः सङ्ग्रामदुर्मदा भटाः शूराः सन्ति विद्यन्ते । एष हिंसारसो मारणानुरागस्तेषु भटेषु न पूर्यते परिपूर्णो न भवति इति काकुः । अपितु भवितुं युक्तः । एष हिंसारसस्त्वया भटेषु परिपूर्णः कर्तव्यः । स्थानेस्थाने भटाः सन्ति परमेष हिंसारसो नतेषु नम्रेषु मादृशेषु त्वया पूर्णः क्रियते इति शिरश्चालनेनायुक्तत्वमेव ध्वन्यते । तेषां शूरतरत्वात्त्वमपि किंचिदपि कर्तुं न शक्तोषीति भाव इति वा । स्थानेस्थाने शूरा न सन्ति । काकुः । एष हिंसारसस्तेषु परिपूर्णो भवितुं युक्तो न त्वस्मास्विति वा । तेषु हिंसारसो न परिपूर्णः क्रियते त्वया, ततश्चास्मास्वसु परिपूर्णं क्रियत इति वा । ईदृशं विश्वासहननलक्षणं ते कुविक्रमं कुत्सितं पौरुषं धिक्।निन्द्यस्ते पराक्रम इत्यर्थः।यः पराक्रमः कृपणे दीने कृपाश्रये करुणास्पदे मयि पतत्रिणि पक्षिणि वर्तते । पुनर्धिक्पदमतिशयनिन्दासूचकम् । कौ पृथिव्यां प्रसिद्धं विक्रममिति वा । 'पूरी पूर्तौ ( आप्यायने )' इत्यस्य कर्तरि श्यनि पूर्यते इति रूपम् । कर्मणि क्यपि यकि वा ॥ १३२ ॥

फलेन मूलेन च वारिभूरुहां
मुनेरिवेत्थं मम यस्य वृत्तयः ।
त्वयाद्य तस्मिन्नपि दण्डधारिणा
कथं न पत्या धरणी हृणीयते ॥१३३॥

१ अत्र यमकं रूपकं च । २ अत्र श्लेषानुप्राणितोपमा ।

१ अत्रानुप्रासः परिकरश्च । २ अत्रानुप्रासः परिकरश्च ।

फलेनेति ॥ हे राजन्, वार्येव भूरुत्पत्तिस्थानं वारिभूस्तस्यां रोहन्त उत्पद्यन्ते तेषां कमलानां फलेन पद्माक्षलक्षणेन, मूलेन कन्दादिना मृणालेन च यस्य मम हंसस्येत्थमभिनयेन पुरोवर्तितया दर्शयति । मुनेरिव वृत्तयो जीवनानि । इत्थं सर्वलोकसमक्षमिति वा । तस्मिन्नप्यनपराधे निस्पृहे ऋषितुल्येऽपि मयि अद्य दण्डधारिणा शास्तिकारिणा त्वया पत्या स्वामिना धरणी पृथ्वी कथं न हृणीयते । अन्यायवर्तिनि प्रिये स्त्रियो यथा लज्जन्ते वारिरुहां भूरुहां चेति वा । कण्ड्वादेः 'हृणीङ् रोषे लज्जायां च' इत्यस्माद्धातोः कण्ड्वादित्वात्स्वार्थे यकि ञित्त्वात् 'स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।१२' इति सूत्रेण कर्तृगामिनि क्रियाफले तङ् । 'हृणीङ्' इति पाठान्ङित्त्वात्तङ् । हृणीङ् सौत्रो धातुर्लज्जार्थे इति केचित् ॥ १३३ ॥

इतीदृशस्तं विरचय्य वाङ्मयैः
सचित्रवैलक्ष्यकृपं नृपं खगः ।
दयासमुद्रे स तदाशयेऽतिथी-
चकार कारुण्यरसापगा गिरः ॥ १३४ ॥

इतीति ॥ स खगो हंस इत्यनेन प्रकारेण ईदृशैरेताहशैरन्यैरपि वाङ्मयैर्वचनैस्तं नृपं राजानं सचित्रवैलक्ष्यकृपं चित्रं च वैलक्ष्यं च कृपा च तत्सहितं विरचय्य विधाय दयासमुद्रे कृपासिन्धौ तस्य नलस्याशये हृदये कारुण्यलक्षणो रसस्तस्यापगा नदीः गिरो वाचोऽतिथीचकार करुणा वाचस्तमाकर्णयामासेत्यर्थः । पक्षिणो मनुष्यवाक्त्वाद्, हेमपक्षत्वाद्वा चित्रमाश्चर्यम् । स्वनिन्दाश्रवणात्सलज्जत्वम्, तद्दैन्यश्रवणात्कृपा । समुद्रे च रसनद्योऽतिथीभवन्ति । 'आत्मनश्चरिते सम्यग्ज्ञातेऽन्यैर्यस्य जायते । अपत्रपातिमहती स विलक्ष इति स्मृतः ॥' विरचय्येति 'ल्यपि लघुपूर्वात् ६।४।५६' इति णेरयादेशः । वाङ्मयैरिति 'नित्यं वृद्धशरादिभ्यः ४।१।१४४' इति नित्यग्रहणादेकाचो मयट् । 'बहुष्वनियमः' इति कृपाशब्दस्य न पूर्वनिपातः । कारुण्येति स्वार्थे ष्यञ् ॥ १३४ ॥

मदेकपुत्रा जननी जरातुरा
नवप्रसूतिर्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्दय-
न्नहो विधे त्वां करुणा रुणद्धि न ॥ १३५ ॥

मदिति ॥ कारुण्यगिरोऽन्यापदेशेन राजानं श्रावयति, जननी मम माता जरातुरा वार्धक्यपीडिता स्वतो जीवितुमसमर्था । तर्हि पुत्रान्तरेण जीविका स्यात्, तदपि नेत्याह—यतो मदेकपुत्रा अहमेवैकः पुत्रो यस्याः सा । तर्हि तव स्त्री स्यात्, नेत्याह—वरटा मम स्त्रीनवप्रसूतिर्नवप्रसवा । सापि स्वतो जीवितुमसमर्था । पत्यन्तरेणापि जीविकाऽसंभावितेत्याह—यतः तपस्विनी पतिव्रता, अथ च दीना । एष मल्लक्षणो जनस्तयोर्मातृपत्न्योर्गतिर्वृत्त्युपायः । यद्वा—मत्त एकः पुत्रो यस्याः सा अजननी मत्मरणानन्तरमप्रसवित्री । यतो जरातुरा न वृद्धा न । प्रसवसंभावनायामपि पातिव्रत्यादजननी । नवे सूतिश्चेष्टा यस्याः । यद्वा—नव एव सानुरेव सुतरामूती रक्षणं यस्याः सा । मद्वियोगात्पर्वतभ्रमणं करिष्यतीत्यर्थः । वरटाविशेषणानि । तयोः पुत्रवरटयोः । तं मामर्दयन्पीडयन्मारयन् हे विधे ब्रह्मन्, दैव वा । करुणा दया त्वां न रुणद्धि नावृणोति न वारयतीत्यर्थः । अहो आश्चर्यम् । एवंविधपीडने हि त्वया सदयेन भवितव्यम् । तव देवस्य सतो दया नोत्पद्यते, किं पुनर्मनुष्यस्येति करुणोक्तिः । 'हंसस्य योषिद्वरटा' इत्यमरः । अर्दयन्निति चौरादिकादर्दयतेः 'संबोधने च ३।२।१२५' इति शता । आत्मनेपद्येवेति केचित् । तदा 'गणकृत्यमनित्यम्' इत्यर्दनमर्दस्तद्वन्तं कुर्वन्निति मतुब्लुका वा समाधिः ॥ १३५ ॥

मुहूर्तमात्रं भवनिन्दया दया-
सखाः सखायः स्रवदश्रवो मम ।
निवृत्तिमेष्यन्ति परं दुरुत्तर-
स्त्वयैव मातः सुतशोकसागरः ॥ १३६ ॥

मुहूर्तेति ॥ मम सखायो मित्राणि पक्षिणः मुहूर्तमात्रं क्षणमात्रमीदृश्येव संसारस्थितिरिति भवस्य निन्दया निवृत्तिं दुःखविस्मरणमेष्यन्ति यास्यन्ति । किम्भूताः—स्रवन्ति गलन्त्यश्रूणि येषाम् । तथा—दयासखा दयालवः हे मातः, परं केवलं सुतशोकः पुत्रशोक एव सागरः समुद्रस्त्वयैव दुरुत्तरो दुःखेनापि तरितुमशक्यः । भविष्यतीति शेषः । 'मम मित्राणां क्षणमात्रं दुःखं तव तु यावज्जीवम्' इति भावः । मुहूर्तमात्रमिति 'कालाध्वनोरत्यन्तसंयोगे २।३।५' इति द्वितीया । दयासखा इति 'राजाहःसखिभ्यष्टच् ५।४।९१' दुरुत्तर

१ अत्र यथासङ्ख्यमुपमा चार्थालङ्कारौ । २ अत्रानुप्रासो रूपकं च शब्दार्थालङ्कारौ ।

१ अत्र विशेषणानां प्रकृतानुगुणत्वात्परिकरः, रोदनक्रियाया आनुरूप्यात् स्वभावोक्तिश्च ।

इति खल् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३।६९' इति निषेधात्त्वयेति तृतीया ॥ १३६ ॥

मदर्थसंदेशमृणालमन्थरः
प्रियः कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिणः
प्रिये स कीदृग्भविता तव क्षणः॥१३७॥

मदर्थेति ॥ हे प्रिये, स तव क्षणः समयः कीदृक्कीदृशो भविता भविष्यति । नितरामनिर्वाच्यो भविष्यतीति भावः। किम्भूतायास्तव—त्वया इति पूर्वोक्तप्रकारेण वचांसि मत्सहचारान्प्रत्युदिते उक्ते सति । पृष्टे सतीत्यर्थः। अथानन्तरमेव पक्षिणो मत्सहचरान्रुदतो रोदनं कुर्वतो विलोकयन्त्याः पश्यन्त्याः । इतीति किम्—हे सहचराः, मह्यमिमे मदर्थे ये संदेशमृणाले संदेशश्च मृणालं च तयोर्विषये मन्थरोऽलसः । तत्र गत्वा त्वमिदं मत्प्रियां ब्रूहि इति संदेश आज्ञा, मृणालं च मद्भक्ष्यम् । एवंभूतो मत्प्रियः कियद्दूरे पथि वर्तत इति । कियद्दूरं यस्येति प्रियाविशेषणं वा । पूर्वत्रान्यपदार्थः पन्थाः । मदर्थं मृणालान्यानेयानीति संदेशमृणालानि तैर्मन्थरो, भारबाहुल्यान्मन्थर इति वा । मदर्थ इति 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति समासः ॥ १३७ ॥

कथं विधातर्मयि पाणिपङ्कजा-
त्तव प्रियाशैत्यमृदुत्वशिल्पिनः ।
वियोक्ष्यते वल्लभयेति निर्गता
लिपिर्ललाटंतपनिष्ठुराक्षरा ॥ १३८ ॥

कथमिति ॥ हे विधातः ब्रह्मन्, मयि विषये तव पाणिपङ्कजात्करकमलादित्येवंभूता लिपिः कथं निर्गता। किंभूतात्—प्रियायाः शैत्यं शीतलत्वं, मृदुत्वं च तयोः शिल्पिनो निर्मातुः । इतीति किम्—त्वं वल्लभया प्रियया सह वियोक्ष्यसे वियोगं प्राप्स्यसीति । किम्भूता—ललाटं तापयन्ति ललाटंतपानि निष्ठुराणि कठिनान्यक्षराणि यस्याः । लिप्यामेतदयुक्तमित्यर्थः । 'कारणगुणाः कार्यगुणानारभन्ते' इति न्यायात् । करपङ्कजं शीतलं मृदु च तस्य दाहकाठिन्ययोरुत्पादकत्वं विरुद्धमिति भावः । ललाटंतपेत्यत्र 'असूर्यललाटयोर्दृशितपोः ३।२। ३६' इति खश्, 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुम् ॥ १३८ ॥

अयि स्वयूथ्यैरशनिक्षतोपमं
ममाद्य वृत्तान्तमिमं वतोदिता ।
मुखानि लोलाक्षि दिशामसंशयं
दशापि शून्यानि विलोकयिष्यसि १३९

अयीति ॥ अयि प्रिये लोलाक्षि ! स्वभावतः शोकवशाच्च चञ्चलनेत्रे, त्वमद्य दिशां दशापि मुखान्यसंशयं निश्चितमेव शून्यानि मम विरहेण शून्या सती रिक्तानि विलोकयिष्यसि द्रक्ष्यसि । बत खेदे । मां विना सर्वं शून्यमिव द्रक्ष्यसीति भावः । किम्भूता—स्वयूथ्यैः स्ववर्ग्यैर्हंसैरशनिक्षतोपमं वज्रप्रहारसदृशमिमं मरणरूपं मम वृत्तान्तं वार्तामुदितोक्ता । अशनिः वज्रः तदाघातस्य मरणावसायितयाऽसह्यत्वे समानमिति भावः । ब्रुवोऽर्थग्रहणाद्विर्द्विकर्मा । वृत्तान्तमित्यत्र मुख्यकर्मणि द्वितीया ॥ १३९ ॥

ममैव शोकेन विदीर्णवक्षसा
त्वया विचित्राङ्गि विपद्यते यदि ।
तदास्मि दैवेन हतोऽपि हा हतः
स्फुटं यतस्ते शिशवः परासवः ॥१४०॥

ममैवेति ॥ हे विचित्राङ्गि हिरण्मयाङ्गीत्वात् सुन्दरगात्रि, ममैव शोकेन दुःखेन विदीर्णवक्षसा स्फुटितहृदयया त्वया यदि विपद्यते म्रियते, तदा तर्हि हा खेदे, अहं दैवेन हतोऽपि पुनर्हतोऽस्मि। विदीर्णं द्विधाभूतं वक्षो यस्यास्तथाभूतया यतः—स्फुटं निश्चितं तेन त्वदनयेनाल्पीयांसः शिशवो बालकाः परासवो मृता भवेयुः । मां विना त्वत्तोऽपि तेषां जीवनं सम्भाव्यते, तव मरणे सति तेऽपि मरिष्यन्तीति पिष्टपेषणमेव दैवेन कृतमिति भावः । 'एकशोकेन' इति पाठः ॥ १४० ॥

तवापि हाहा विरहात्क्षुधाकुलाः
कुलायकूलेषु विलुठ्य तेषु ते ।
चिरेण लब्धा बहुभिर्मनोरथै-
र्गताः क्षणेनास्फुटितेक्षणा मम ॥१४१॥

---

१ अत्र यमकं स्वभावोक्तिश्च । २ अत्रानुप्रासः ।

१ अत्रैकत्र मृदुत्वादिगुणाधानादिविधायिनः परत्र कठोरलेखादिना भयङ्करदुःखपातत्वादिविधायित्वमसङ्गतमिति विषमम् । रूपकं तु स्पष्टमेव ।

तवेति ॥ हाहा इति खेदे । हे प्रिये, मम ते बालका बहुभिर्मनोरथैश्चिरेण बहुकालेन लब्धाः सन्तः क्षणेन गताः, मृतप्राया इत्यर्थः । किम्भूताः—क्षुधयाऽऽकुलाः बुभुक्षया पीडिताः । तथा—अतिबाल्यादस्फुटितेक्षणा न स्फुटिते प्रकाशग्रहणसामर्थ्यं प्राप्ते ईक्षणे नेत्रे येषामित्येवम्भूताः अप्रकाशितनेत्राः । किं कृत्वा—तवापि अपिशब्दान्ममापि विरहात्तेषु प्रसिद्धेषु कुलायकूलेषु स्वकृतनीडतटेषु विलुठय लुठित्वा। पूर्वश्लोकार्थानुवादः ॥ १४१ ॥

सुताः कमाहूय चिराय चुंकृतै-
र्विधाय कम्प्राणि मुखानि कं प्रति ।
कथासु शिष्यध्वमिति प्रमील्य स
स्नुतस्य सेकाद्बुबुधे नृपाश्रुणः॥ १४२॥

इति प्रियां प्रत्युक्त्वा सुतान्प्रत्याह—

सुता इति॥ हे सुताः पुत्राः, जननीं मां विना चुंकृतैः शिशुपक्षिसूक्ष्मशब्दविशेषैश्चिराय कमाहूयाकार्य भक्ष्यं याचयिष्यथ। कं प्रति कम्प्राणि चलानि मुखानि विधाय गोष्ठीः कथयिष्यथ, अपि तु न कमपि प्रति, उभयोर्मृतत्वात् शिशुपक्षिणामियं जातिः एवं सति परं यूयं कथासु शिष्यध्वं कथाशेषीभविष्यथेत्युक्त्वा स हंसः प्रमील्य मूर्च्छां प्राप्य स्नुतस्य कारुण्याद्गलितस्य नृपाश्रुणो नृपनेत्रबाष्पस्य सेकात्सेचनाद्बुबुधे । भक्ष्ययाचनं गोष्ठीकरणं च कवेरुक्तिः, न तु हंसस्य, तस्य वचः आहूय विधायेत्येतदन्तम्। शोकवशात्खंडोक्तिः करुणरसपोषिका । गोष्ठीषु विषये चतुरा भविष्यथेति पितरं मातरं च विना युष्मान् वक्तुमपि कः शिक्षयेदिति वाक्यशेषो वा । शिष्यध्वमिति कर्मकर्तरि प्राप्तकाले लोटस्तङ् । एवमहमपि कथासु शिष्ये इत्युत्तरं चापि ज्ञेयम् ॥ १४२ ॥

इत्थममुं विलपन्तममुञ्च-
द्दीनदयालुतयावनिपालः ।
रूपमदर्शि धृतोऽसि यदर्थं
गच्छ यथेच्छमथेत्यभिधाय ॥ १४३ ॥

इत्थमिति ॥ अवनिपालो राजा दीनेषु दयालुस्य भावस्तत्ता तया इत्यभिधायोक्त्वा इत्थं पूर्वोक्तप्रकारेण विलपन्तं विलापं कुर्वन्तममुं हंसममुञ्चदत्यजत् । इतीति किम्—हे हंस, यदर्थं धृतोऽसि तद्रूपमदर्शि दृष्टम् । अथातः परं त्वं यथेच्छं स्वेच्छया गच्छ । यदर्थं धृतोऽसीत्यादिना 'धिगस्तु तृष्णा–' (१ स०, १३० ) इत्यादि परिहृतम्। 'स्पृहिगृहिपतिदयिनिद्रातंद्राश्रद्धाभ्य आलुच् ३।२।१५८' इत्यालुचि दयालुः । दोधकं वृत्तम् ॥ १४३ ॥

आनन्दजाश्रुभिरनुस्रियमाणमार्गान्
प्राक्शोकनिर्गमितनेत्रपयःप्रवाहान् ।
चक्रे स चक्रनिभचङ्क्रमणच्छलेन
नीराजनां जनयतां निजबान्धवानाम्॥ १४४

आनन्देति ॥ स हंसः चक्रनिभं चक्राकारं चङ्क्रमणं भ्रमणं तस्य छलेन व्याजेन नीराजनामारार्तिकां जनयतां कुर्वतां निजबान्धवानां स्वीयमित्राणां प्राक्स्वग्रहणसमये शोकेन निर्गतान्नेत्रसम्बन्धिनः पयसो जलस्य बाष्पस्येतियावत् । प्रवाहास्तान्स्वमुक्तिसमये आनन्दजाश्रुभिरानन्दजनितबाष्पैरनुस्रियमाणमार्गाननुगम्यमानमार्गांश्चक्रे । धृते हंसे रुरुदुः, मुक्ते जहृषुरित्यर्थः । बद्धमुक्तं पक्षिणं वेष्टयित्वा पक्षिणो भ्रमन्ति रुवन्ति चेति पक्षिणां प्रकृतिः । अन्यस्यापि कारागृहादिबद्धविमुक्तस्यानन्दाश्रुसहितैर्बान्धवैर्नीराजना क्रियते । चङ्क्रमणमिति क्रमेर्गतिकौटिल्ये यङन्ताद्भावे ल्युट् । वलयाकारापि गतिः कुटिलैव । 'यङोऽचि च २।४।७४' इति चकारादन्यत्रापि यङो लुक् । सर्वसर्गसमाप्तिश्लोकेष्वानन्दपदप्रयोगादानन्दाङ्कमिदं काव्यम् । वसन्ततिलकावृत्तम्॥ १४४॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महाकाव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः ॥ १४५ ॥

श्रीहर्षमिति ॥श्रीहीरनामा पिता । मामल्लदेवी माता च यं श्रीहर्षनामानं पुत्रं सुषुवे । किम्भूतः हीरः—कविराजानां राजिः पङ्क्तिस्तस्या मुकुटानामलंकाररूपो हीरो हीराख्यं रत्नम् । किम्भूतम्—जितेन्द्रियचयं जित इन्द्रियचय इन्द्रियसमूहो येन तम् तस्य श्रीहर्षस्य चिन्तामणिमन्त्रस्य चिन्तनमनुध्यानं जपादिकं तस्य फले

---

१ अत्र सहोक्तिरपह्नुतिः स्वभावोक्तिश्च।मण्डलाकारेणोपस्थितेर्नीराजनापदवाच्यत्वासम्भवेऽपि प्रकृतानुगुण्येन तथावचनादतिशयोक्तिश्च ।

शृङ्गारभङ्ग्या शृङ्गाररचनाविशेषेण चारुणि रमणीये शृङ्गाररसप्रधाने नैषधीयं नलसंबन्धि चरितं चरित्रं यस्मिन्नेवंविधे महाकाव्येऽयमादिः प्रथमः सर्गो गतः समाप्तः। चिंतामणिमन्त्रचिंतनसामर्थ्यादेवंविधं काव्यं कृतमिति भावः। शार्दूलविक्रीडितं वृत्तम्। नैषधसम्बन्धि नैषधीयम् 'वृद्धाच्छः ४।२।१४४।' छंदांस्यलंकाराश्चात्र नोक्ताः लक्षणग्रन्थगौरवभयात् ते तु सुधिया ग्रन्थान्तराज्ज्ञातव्याः॥ १४५॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृतौ नैषधीयप्रकाशे प्रथमःसर्गः समाप्तः॥

---

## द्वितीयः सर्गः।

अधिगत्य जगत्यधीश्वरा-
दथ मुक्तिं पुरुषोत्तमात्ततः।
वचसामपि गोचरो न यः
स तमानन्दमविन्दत द्विजः॥ १॥

हंसमुखेन भैमीवर्णनार्थं द्वितीयं सर्गमारभते—

अधिगत्येति॥अथ मोचनानंतरः स द्विजो हंसः तमानंदं लोकोत्तरं हर्षमविंदत लेभे। तं कम्—य आनन्दो वचसामपि गोचरो विषयो न। वर्णयितुमशक्य इत्यर्थः। किं कृत्वा—ततस्तस्माज्जगत्याः पृथ्व्या अधीश्वरात्स्वामिनः पुरुषोत्तमात्पुरुषश्रेष्ठान्नलान्मुक्तिं मोचनमधिगत्य प्राप्य। यथा द्विजो ब्राह्मणो जगति लोके अधीश्वरात्सर्वोत्कृष्टात्पुरुषोत्तमाच्छ्रीविष्णोः सकाशात्तत्प्रसादान्मुक्तिं लक्षणया मुक्तिसाधनं ज्ञानं संसारमोचनं च प्राप्य यो वचसाम्, अपिशब्दान्मनसोऽपि गोचरस्तमानन्दं ब्रह्मस्वरूपं प्राप्नोति। 'यतो वाचो निवर्तन्ते' इति, 'आनन्दं ब्रह्मणो रूपम्' इति च श्रुतेः। ज्ञानान्मोक्ष इति। 'जगती जगति छन्दोविशेषेऽपि क्षितावपि'' दन्तविप्राण्डजा द्विजाः' इत्यमरः। 'न निर्धारणे २।२।१०' इति निषेधात्षष्ठीसमासो न। पुरुषेषूत्तम इति निर्धारणसप्तमीसमास एव। स्वरविशेषदर्शनात्।

१ अत्रानुप्रासः। ग्रन्थान्तेऽपि मङ्गलमाचरणीयमिति श्रीपदोपन्यासेन तदाचरितमिति सूचितम्।

लाभार्थो विदिः स्वरितेत् मुचादिः। सर्गेऽस्मिन्'अश्रान्त—' इति यावद्वैतालीयं छन्दः॥ १॥

अधुनीत खगः स नैकधा
तनुमुत्फुल्लतनूरुहीकृताम्।
करयन्त्रणदन्तुरान्तरे
व्यलिखच्चञ्चुपुटेन पक्षती॥ २॥

अधुनीतेति॥ स खगो हंसस्तनुं शरीरं नैकधा नैकप्रकारमधुनीताकम्पयत्। किम्भूतां तनुम्—उत्फुल्लानि विकसितानि तनूरुहाणि रोमाणि यस्यां सा, अनुत्फुल्लतनूरुहा उत्फुल्लतनूरुहा कृता ताम्। च्विः। तथा—चञ्चुपुटेन पक्षती पक्षमूले व्यलिखत्समीचकार। किंभूते पक्षती—करयन्त्रणेन नलहस्तनियमनेन धारणेन दन्तुरं निम्नोन्नतमन्तरं मध्यं ययोस्ते। उत्फुल्लेति 'उत्फुल्लसम्फुल्लयोरुपसंख्यानम्' इति साधुः। दन्तुरेति 'दन्त उन्नत उरच् ५।२।१०६' अत्र तुन्नतत्वमात्रम्। पक्षती इत्यत्र 'पक्षात्तिः' इति तिः॥ २॥

अयमेकतमेन पक्षते-
रधिमध्योर्ध्वगजङ्घमङ्घ्रिणा।
स्खलनक्षण एव शिश्रिये
द्रुतकण्डूयितमौलिरालयम्॥ ३॥

अयमिति॥ अयं हंसः स्खलनक्षण एव मोचनसमय एवालयं नीडं शिश्रियेऽभजत्। किम्भूतः—पक्षतेः पक्षमूलस्याधिमध्यं मध्ये ऊर्ध्वगोर्ध्वगामिनी जङ्घा यस्मिन्कर्मणि तद्यथा तथा एकतमेनैकेनाङ्घ्रिणा चरणेन धृतं शीघ्रं कण्डूयितो मौलिर्मस्तकं येन। हंसादीनां प्रकृतिरियम्। एकतमेनेति 'स्वार्थेऽपि तमबादयः' इति वचनात्तमप्॥ ३॥

स गरुद्वनदुर्गदुर्ग्रहा-
न्कटु कीटान्दशतः सतः क्वचित्।

१ द्वितीयसर्गरूपस्य ग्रन्थस्यादौ मङ्गलमाचरणीयमिति भगवदनुग्रहतो मुक्तस्य, महात्मनस्तद्वृत्तिनिर्देशरूपम्मङ्गलं प्रकृतानुगुण्येनाचरितम्। अयं चाप्रकृतनिर्देशोऽजागलस्तनायमानो माभूदित्यस्योपमानत्वमादाय निबध्यमानो वृत्तान्त उपमेयतां प्रकटयन्नुपमां ध्वनयतीति बोध्यम्। न चात्र श्लेषः, श्लोक्यमानयोरर्थयोः प्रकृताप्रकृतत्वाभ्यां भिन्नतामर्पनंतु तस्याक्षमत्वात्। २ अत्र स्वभावोक्तिः। ३ अत्र स्वभावोक्तिः।

नुनुदे तनुकण्डु पण्डितः
पटुचञ्चूपुटकोटिकुट्टनैः ॥ ४ ॥

स इति ॥ स हंसः पटु कीटाद्यपनयने समर्थं चञ्चूपुटं तस्य कोटिरग्रभागस्तेन कुट्टनानि घट्टनानि तैः कीटान् तनुकण्डु तन्वी स्वल्पा कण्डूर्यस्यां क्रियायां यथा तथा नुनुदे स्फोटयामास । किम्भूतः—पण्डितः कण्डूयने कुशलः । किम्भूतान्—गरुद्वनं पक्षवृन्दं तल्लक्षणं दुर्गं तत्र दुर्ग्रहान्धर्तुमशक्यान् । अत एव—कटु तीक्ष्णं पीडाकारि यथा तथा दशतः खादतः । तथा—क्वचिन्निर्हारयितुमशक्ये शरीरे देशे सतो विद्यमानान् । अन्योऽपि पर्वतदुर्गदुर्ग्रहानुपद्रवकारकान्मारणेन नुदति । नुनुदे इति स्वरितत्वादात्मनेपदम् ॥ ४ ॥

अयमेत्य तडाकनीडजै-
र्लघु पर्यव्रियताथ शङ्कितैः ।
उदडीयत वैकृतात्कर-
ग्रहजादस्य विकस्वरस्वरैः ॥ ५ ॥

अयमेत्येति ॥ अयं हंसस्तडाकस्य नीडजाः पक्षिणस्तैरेत्यागत्य लघु शीघ्रं यथा तथा पर्यव्रियत वेष्टितः । अथ वेष्टनानन्तरमस्य करग्रहजान्नलस्य हस्तग्रहणजाताद्वैकृताद्विकाराच्छङ्कितैस्त्रस्तैः, अत एव विकस्वरस्वरैरुच्चस्वरैः पक्षिभिरुदडीयत उड्डीनम् । एषा पक्षिप्रकृतिः । वैकृतं दन्तुरपक्षत्वात् । तीर्थादौ करग्रहणार्थं कैश्चित्कश्चन परितो वेष्ट्यते । अथ वलिग्रहणजातकलहादेः शङ्कितैरुच्चैः स्वरैर्गम्यते । 'लघु क्षिप्रम्' इत्यमरः । वैकृतात् । स्वार्थेऽण् । 'स्थेशभासपिसकसो वरच् ३।२।१७५' इति वरचि विकस्वरैः ॥ ५ ॥

वहतो बहुशैवलक्ष्मतां
धृतरुद्राक्षमधुव्रतं खगः ।
स नलस्य ययौ करं पुनः
सरसः कोकनदभ्रमादिव ॥ ६ ॥

वहत इति ॥ स खगो हंसः सरसः सकाशान्नलस्य करं पुनर्ययौ। कस्मादिव—कोकनदभ्रमादिव रक्तोत्पलभ्रान्तेरिव । सरसः पल्वलस्य कोकनदभ्रमादिवेति वा । नलकरस्य रक्तत्वात्कोकनदभ्रान्तिः । रक्तोत्पलं च हंसानां प्रियमित्युत्प्रेक्षा । किंभूतस्य नलस्य सरसश्च—बहूनि शिवसम्बन्धीनि लक्ष्माणि त्रिपुण्ड्रादीनि यस्य तस्य भावस्तत्ता तां वहतो धारयतः शिवे भक्तिर्येषां ते शैवाः, तत्संबन्धीनि वा । सरःपक्षे—बहूनि शैवलानि यस्यां सा बहुशैवला क्ष्मा पृथ्वी यस्मिंस्तस्य भावस्तत्ता तां वहतः । शिवं कल्याणं तत्संबन्धीनि शुभसूचकानि लक्ष्माणि सामुद्रिकोक्तानि मत्स्यादीनि यस्येति वा । किम्भूतं करम्—धृतं रुद्राक्षाणां मधुतुल्यं समीचीनं (वा) व्रतं नियमो येन, शैवत्वाद्रुद्राक्षा एव मधुव्रत भ्रमरा येनेति वा । रुद्राक्षधारणं नियमेन करोति, अन्यचिह्नधारणे नियमो नेति न पौनरुक्त्यम् ।स्वानुरतभ्रमरयुतं कोकनदमपि रुद्राक्षसदृशं भवति । न क्षमन्त इत्यक्षमाः, रुद्रस्य अक्षमा ( कर्मषष्ठ्या समासः ) तान् धुनोति कम्पयति, रुद्राक्षमधु तच्च तद्व्रतं च, धृतं तद्येनेति वा । शिवद्रोहिपराभवकारिणमित्यर्थः । अनेन पौनरुक्त्यशङ्काऽपि निरस्ता । रवणं रुत्, धृता रुद्यैस्ते धृतरुतः सशब्दाः, रः अग्निस्तद्वदक्षीणि पिङ्गलानि नेत्राणि येषां ते राक्षाः एवम्भूता भ्रमरा यत्रेति वा । अर्थात्कोकनदविशेषणम् । रशब्दोऽग्निवाची आगमशास्त्रे । तथा 'रः पावके च तीक्ष्णे च' इति विश्वः । शैवेत्यत्र 'तस्येदम्' ४।३।१२०' इति 'भक्तिः ४।३।९५' इति वाऽण् । रुदिति सम्पदादित्वात्क्विप् । राक्षेति 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ५।४।११३' इति षच्। 'रुद्राक्षमान्धूनोतीति दीर्घान्तात् 'क्विप् च ३।२।७६' इति क्विप् । व्रतविशेषणत्वान्नपुंसकत्वाद्धस्वत्वम् ॥ ६ ॥

पतगश्चिरकाललालना-
दतिविश्रम्भमवापितो नु सः ।
अतुलं विदधे कुतूहलं
भुजमेतस्य भजन्महीभुजः ॥ ७ ॥

पतग इति ॥ एतस्य महीभुजो राज्ञो भुजं भजन्नाश्रयन्स पतगो हंसः अतुलमनुपमं कुतूहलं विदधे चकार । पुनरागमनं कौतूहले हेतुः । नु वितर्के । चिरकालं लालनात्सान्त्वनादतिविश्रम्भमतिविश्वासमवापितः प्रापित इव । अनु पश्चादेतस्य भुजं भजन्निति वा । सन्निति

१ अत्रापि स्वभावोक्तिरनुप्रासश्च। २अत्र स्वभावोक्तिः, परिवरणोड्डयनक्रियायाः स्वभावानुगुण्येनोक्तत्वात् ।

१ अत्र कोकनदादिवेत्युत्प्रेक्षा।सरोनलयोः साम्यवचनाच्छ्लेषः। करे च कोकनदभ्रमावहत्वौचित्यरूपि ॥ रुद्राक्षमधुव्रतयो रूपणाद्रूपकं, श्लेषेण तदपेक्षा समासोक्तिश्च । ...को भूपती ...ः—अरिसाय

पाठे अवापितः सन् । अनु पश्चात् । अन्योऽपि बहुकालं द्वेषितो विश्वासं प्राप्तः स्वामिनं स्वगुणेन कुतूहलिनं करोति इति ॥ ७ ॥

नृपमानसमिष्टमानसः
स निमज्जत्कुतुकामृतोर्मिषु ।
अवलम्बितकर्णशष्कुली-
कलशीकं रचयन्नवोचत ॥ ८ ॥

नृपेति ॥ इष्टं मानसं सरो यस्य सः, हंस इत्यर्थः । अवोचत उवाच । किं कुर्वन्—कुतुकामृतोर्मिषु कौतूहललक्षणामृततरङ्गेषु निमज्जद् ब्रुडन्नृपमानसं नलान्तःकरणमवलम्बिते कर्णशष्कुल्यावेव कलश्यौ येन एवंविधं रचयन् । सावधानं कुर्वन्नित्यर्थः । कुतुकम् विस्मयावहं चेष्टितं तदेवामृतं तस्य तरङ्गाः उत्तरोत्तरवृद्धिकाः सद्भावास्तेषु । राज्ञो मनः स्ववचनश्रवणोत्सुकं कुर्वन्नुवाचेति भावः । अन्योऽप्यूर्मिषु मज्जत इष्टस्य करसमवलम्बनं दत्ते। कर्णाकारो वाद्यविशेषः शष्कुली। मन एव मानसम् । प्रज्ञादित्वादण् । 'कुतुकं च कुतूहलम्' इत्यमरः ।'मानसं सरसि स्वान्ते' 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले ' इति च विश्वः । कलशीकम् 'नद्यृतश्च ५ । ४।१५' इति कप् । ' न कपि ७।४।१४' इति ह्रस्वनिषेधः ॥ ८ ॥

मृगया न विगीयते नृपै-
रपि धर्मागममर्मपारगैः ।
स्मरसुन्दर मां यदत्यज-
स्तव धर्मः सदयोदयोज्ज्वलः ॥९॥

किमवोचादित्याह—

मृगयेति ॥ धर्मागमा धर्मशास्त्राणि तेषां मर्म रहस्यं तस्य पारं गच्छन्तीत्येवम्भूतैरपि नृपै राजभिर्मन्वादिभिः मृगया पापर्द्धिः न विगीयते निन्द्यते, अपितु क्रियत एव। एवं सत्यपि हे स्मरवत्सुन्दर, त्वं मां यदत्यजः स तव दयोदयोज्ज्वलो धर्मः दयाया उदयेनोत्पत्त्या उज्ज्वलः शोभमानः । सदयः सन् अयः शुभावहविधिर्यस्य । उपकरिष्यमाणत्वात् तथा—दयोज्ज्वल इति वा । दयोदयेन सह वर्तमानः । अत एव उज्ज्वल इति वा । मन्मोचने दयां विनाऽन्यत्कारणं नास्तीत्यर्थः । स्मरेति भिन्नम् । हे सुन्दर, त्वं स्मर विचारय । वाक्यार्थः कर्म। नृपैः क्रियमाणा मृगया धर्मागममर्मपारगैरपि न निन्द्यत इति वा । पारगैः 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ३। २।४८' इति डः ॥ ९ ॥

अबलस्वकुलाशिनो झषा-
न्निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्दिनो मृगा-
न्मृगयाऽघाय न भूभुजां घ्नताम् ॥१०॥

मृगयाया अनिन्दने कारणमाह—

अबलेति ॥ मृगया भूभुजां राज्ञामघाय पापाय न भवति। कथमित्यत आह—किम्भूतानां भूभुजाम्—अबलं निर्बलं स्वकुलं च तदश्नन्त्येवंशीलाञ्झषान्मीनान् घ्नतां मारयताम् । तथा—निजाः स्वीया ये नीडद्रुमा निवासस्थानवृक्षास्तान्पीडयन्त्येवंशीलान् खगान् पक्षिणो घ्नताम् । तथा—अनवद्यं निरपराधं तृणं तद् अर्दन्ति पीडयन्त्येवंशीलान्मृगान्घ्नताम् । 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः । ' इति स्मृतेस्तरुतृणादेरपि प्राणित्वात्तद्वधस्तु दोषाय । परं दुष्टनिग्रहो राज्ञां धर्म एवेति भावः । अबलान् बलिनो भक्षयन्तीति मत्स्यानां जातिस्वभावः । अवद्येति 'अवद्यपण्य वर्या गर्ह्यपणितव्यानिरोधेषु ३।१।१०१' इति साधुः । पश्चाद्बहुव्रीहिस्तत्पुरुषो वा । पूर्वश्लोके मृगयादोषाभावे स्मृतिं प्रमाणमुक्त्वाऽत्र युक्तिमप्यवदत् ॥ १० ॥

यदवादिषमप्रियं तव
प्रियमाधाय नुनुत्सुरस्मि तत् ।
कृतमातपसंज्वरं तरो-
रभिवृष्यामृतमंशुमानिव ॥ ११ ॥

यदिति ॥ हे राजन्, अहं तव यदप्रियं निन्दाद्यवादिषमुक्तवानस्मि प्रियमाधाय कृत्वा तदप्रियं नुनुत्सुर्निराकर्तुमिच्छुरस्मि । तत्र दृष्टान्तमाह—अंशुमान्सूर्यस्तरो-

---

१अत्र वस्तुध्वनिरिति तु व्याख्यायाम् 'अन्योऽपि' इत्यादिना प्रत्यायित एव, अथ न्वित्यादिनोत्प्रेक्षणादु-इति ाऽपीति बोध्यम् । २ अत्र यमकं कुतुकामृतपदार्थयो तच्च कुतुकोत्तरोत्तरत्वस्योर्मित्वसमर्थनायेति परम्प भतएवैवमवलम्बितेत्यादौ अपि परम्परितमेव
१ अत्राः
मिति श्रीपदो

१ अत्रानुप्रासो यमकं च शब्दालङ्कारौ, परिकरः, यदित्यनेन प्रतिपादितार्थसमर्थनात् काव्यलिङ्गं च । २ अत्रानुप्रासः, परिकरः । काव्यलिङ्गं च ।

वृक्षस्य आतपेन यः कृतः सञ्ज्वरः पीडा ताममृतं जलमभिवृष्याभितो वर्षित्वा यथा नुदतीत्यर्थः । अनेन दृष्टान्तेनातिशयितं प्रियं करिष्यामीति सूच्यते ॥ ११ ॥

उपनम्रमयाचितं हितं
प्रतिहर्तुं न तवापि साम्प्रतम् ।
करकल्पजनान्तराद्विधेः
शुचितः प्रापि स हि प्रतिग्रहः ॥ १२ ॥

उपेति ॥ अयाचितमप्रार्थितमुपनम्रमुपस्थितं हितं प्रियं परिहर्तुं त्यक्तुं तवापि सार्वभौमस्यापि न साम्प्रतं न युक्तम् । हि यतः करकल्पम् ईषदसमाप्तः करः, जनान्तरम् अन्यो जनो मल्लक्षणो लोके इति जनान्तरं करकल्पं जनान्तरं यस्यैवंविधाच्छुचितो निर्मलाच्छोभनाद्विधेर्दैवात्स प्रतिग्रहस्त्वया प्रापि प्राप्तः । सर्वं हि शुभाशुभं दैवात्प्राप्यते । यद्दैववशाद्भवति तत्केनापि निराकर्तुं न शक्यते । करेण हि दीयते । यद्वा-विधेर्दैवस्य हस्तभूताज्जनान्तरादेतादृशः प्रतिग्रहो राज्ञो दोषाय न । 'अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः।'इति याज्ञवल्क्यः ॥ १२॥

पतगेन मया जगत्पते-
रुपकृत्यै तव किं प्रभूयते ।
इति वेद्मि न तु त्यजन्ति मां
तदपि प्रत्युपकर्तुमार्तयः ॥ १३ ॥

स्वगर्वं परिहरति—

पतगेनेति ॥ पतगेन पक्षिणा मया जगत्पतेर्भुवनाधिपतेस्तव नलस्योपकृत्यै उपकाराय प्रभूयते ।किं समर्थेन भूयतेऽपितु नेति यद्यपि वेद्मि जानामि तदपि तथापि प्रत्युपकर्तुं प्रत्युपकारार्थं आर्तयः कथमस्योपकरोमीत्युत्कण्ठादराः पीडा वा मां नतु नैव त्यजन्ति । असमर्थमपि प्रेरयन्तीत्यर्थः ॥ १३ ॥

अचिरादुपकर्तुराचरे-
दथवात्मौपयिकीमुपक्रियाम् ।
पृथुरित्थमथाणुरस्तु सा
न विशेषे विदुषामिह ग्रहः ॥ १४ ॥

उपकर्तुं शक्यते न वेति विचारो मास्तु, किं तूपकर्तुः प्रत्युपकर्तव्यमेवेति विधिरस्तीत्याह—

अचिरादिति ॥अथवा पक्षान्तरे।यः पुरुषः कश्चनोपकर्तुरुपकारकस्यात्मौपयिकीमात्मोपायभूतामात्मोपायादागताम् । आत्मोपायसाध्यामित्यर्थः । एवंभूतामुपक्रियामुपकारमाचिराज्झटिति आचरेत्कुर्यात् । जीवनस्य सत्वरत्वादचिरादित्युक्तम् । इत्थं विधौ सति सा उपक्रिया पृथुर्महती अथ अथवा अणुः अल्पा वाऽस्तु तिष्ठतु । इह इति विशेषे महत्वाल्पत्वलक्षणे विदुषां ज्ञातॄणां ग्रहो निर्बन्धो नास्ति । उपकारस्य महत्त्वात् स्वौद्धत्यपरिहार एव तात्पर्यम् । उपाय एवौपयिकीति विनयादिषु 'उपायाद्ध्रस्वत्वं च ' इति पाठात्स्वार्थे ठकि तदन्तात् 'तत आगतः ४।३।७४' इत्यणन्ताद्वा ङाब्ह्रस्वत्वं च । 'युक्तमौपयिकं लभ्यम्' इत्यमरः ॥ १४ ॥

भविता न विचारचारु चे-
त्तदपि श्रव्यमिदं मदीरितम् ।
खगवागियमित्यतोऽपि किं
न मुदं धास्यति कीरगीरिव ॥ १५ ॥

वचनप्रसङ्गार्थमाह—

भवितेति ॥ यद्यपि इदं मदीरितं मद्वचनं विचारचारु विचाराविषये मीमांसासहं चेन्न भविता भविष्यति । अहं लोकोत्तरमुपकारं करिष्यामीति सत्यमेव, तथापि त्वं मिथ्या चेन्मन्यसे, तथापि मदीयं वचः श्रव्यं श्रवणार्हं भवत्येव । विचारचारु चेन्न कथं श्रव्यमित्याशङ्कायामाह—इयं खगवाक्पक्षिणो वाक् पक्षी मनुष्यवाचा वदतीत्यतोऽपि हेतोर्मद्वचनं किं मुदं संतोषं न धास्यति करिष्यति, अपि तु करिष्यत्येव; इष्टसाधकत्वात् । अपिरेवार्थः । केव—शुकवागिव । श्रव्यमर्हार्थे 'अचो यत् ३।१।९७' इति यत्, 'सार्वधातुकार्धधातुकयोः' इति गुणः, 'धातोस्तन्निमित्तस्यैव ६।१।८०' इति वान्तादेशः ॥ १५ ॥

स जयत्यरिसार्थसार्थकी-
कृतनामा किल भीमभूपतिः ।
यमवाप्य विदर्भभूः प्रभुं
हसति द्यामपि शक्रभर्तृकाम् ॥ १६ ॥

तदेवाह—

स इति ॥ किल प्रसिद्धौ । स भीमसंज्ञको भूपती राजा जयति सर्वोत्कर्षेण वर्तते । किंभूतः—अरिसार्थ

१ अत्र यमकं, शब्दालङ्कारः । अंशुमानिवेत्युत्प्रेक्षा, यदवादिषं तन्नुनुत्सुरिति प्रियाप्रियोक्त्योः परिवर्त्तनं, तेन परिवृत्तिश्च । २ अत्र काव्यलिङ्गं परार्द्धेन पूर्वार्द्धार्थस्य समर्थने तयोः कार्यकारणत्वात् । ३ अत्रानुप्रासः ।

वैरिसमूहे सार्थकीकृतमन्वर्थकीकृतं नाम स्वसंज्ञा येन। बिभ्यत्यस्माद्वैरिणः नत्वन्ये इति भीमः 'भीमादयोऽपादाने' इति साधुत्वम्। स कः—विदर्भभूर्वराड्भूः? यं पतिमवाप्य शक्रभर्तृकामपीन्द्रपतिकामपि द्यां दिवं हसति। तत्तुल्या भवतीत्यर्थः। शङ्कते तपस्विभ्योऽपीति शक्रस्तद्भर्तृका द्यौः, अहं तु भीमभर्तृकेति हासहेतुः। शक्यते जेतुमिति वा। तस्मात्कोऽपि न बिभेतीति। अर्थेन सह वर्तमानं सार्थकम् 'तेन सहेति तुल्ययोगे' बहुव्रीहिः, 'वोपसर्जनस्य ६।३।८२'इति सः। 'शेषाद्विभाषा ५।४।१५४ इति कप्। ततश्चिः। शक्रभर्तृकाम् 'नद्यृतश्च ५।४।१५३' इति कप्॥ १६॥

दमनादमनाक्प्रसेदुष-
स्तनयां तथ्यगिरस्तपोधनात्।
वरमाप स दिष्टविष्टप-
त्रितयानन्यसदृग्गुणोदयाम्॥ १७॥

भैम्या लोकोत्तरे गुणोत्कर्षे मिथ्यात्वनिरासार्थं पुराणप्रसिद्धामितिहासं सूचयन्नाह—

दमनादिति॥ हे राजन्, स भीमः दमनादेतन्नाम्नस्तपोधनाद्दैवरदानसमर्थाद् अमनागत्यर्थं प्रसेदुषः प्रसन्नात्तथ्यगिरोऽप्रतारकादेवम्भूतात् तनयां वरं कन्यालक्षणमभीप्सितमर्थमाप प्राप्तवान्। किम्भूताम्—दिष्टाः भूतभाविभवदात्मानः समयाश्च विष्टपानि स्वर्गादीनि भुवनानि चेत्येषां त्रितयं—त्रयोऽवयवा यस्य तत् त्र्यवयवात्मा समूहस्तत्रेति, दिष्टः कालः विष्टपं भुवनमनयोस्त्रितये कालत्रये, भुवनत्रये चानन्यसदृगन्यः सदृशो न भवत्येवम्भूतः सौन्दर्यौदार्यादिगुणोदयो यस्यास्ताम्। भूतभविष्यद्वर्तमानकाले लोकत्रयेऽपीदृक्सौन्दर्यादिगुणवती काऽपि नास्तीति भावः। दिष्टस्तेनैव मुनिना दत्तो विष्टपत्रितयेऽनन्यसदृशो गुणोदयो यस्यैतामिति वा। 'कालो दिष्टः' इति, 'विष्टपं भुवनं जगत्' इति चामरः। दमयतीन्द्रियाणीति दमनः। 'कृत्यल्युटो बहुलम् ३।३।११३' इति ल्युट्। प्रसेदुषः प्र— सदो लिटः 'भाषायां सदवसश्रुवः ३।२।१०८।' इति क्वसुः। अनन्यसदृक् 'सर्वनाम्नो वृत्तिमात्रे' इति वा, पुंवद्भावः॥ १७॥

भुवनत्रयसुभ्रुवामसौ
दमयन्ती कमनीयतामदम्।
उदियाय यतस्तनुश्रिया
दमयन्तीति ततोऽभिधां दधौ॥ १८॥

भुवनेति॥ यतो यस्मात्कारणादसौ भीमतनया भुवनत्रये सुभ्रुवः सुन्दर्यस्तासां कमनीयतया यो मदः सौन्दर्येण यो गर्वस्तं तनुश्रिया शरीरसौन्दर्येण दमयन्ती ग्लपयन्ती शमयन्तीवोदियायोत्पन्ना। ततस्तस्मात्कारणात् 'दमयन्ती' इत्यभिधां सार्थकं नाम दधे बभार। 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति (वा.) क्युनि साधितस्य भुवनशब्दस्य बाहुलकाद्भाषायां प्रयोगः। 'अणावकर्मकात् चित्तवत्कर्तृकात् १।३।८८।' कर्त्रभिप्राये क्रियाफले यत्परस्मैपदं विहितं तस्यैव 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः १।३।८९' इति निषेधादणावकर्मकत्वे च तत्रैव चित्तवत्कर्तृकत्वाभावात्तेन परस्मैपदाप्राप्तेर्निषेधाशङ्काया अभावाचाकर्त्रभिप्राये यथाप्राप्तं परस्मैपदं भवत्येवेति दमयन्तीत्यत्र शता युज्यते॥ १८॥

श्रियमेव परं धराधिपाद्गुण-
सिन्धोरुदितामवेहि ताम्।
व्यवधावपि वा विधोः कलां
मृडचूडानिलयां न वेद कः॥ १९॥

श्रियमिति॥ हे राजन्, त्वं तां भैमीं श्रियमेव लक्ष्मीमेवावेहि जानीहि। परमयं विशेषः—गुणसिन्धोर्गुणसमुद्राद्धराधिपात्पृथ्वीपतेरुदितामुत्पन्नाम्। लक्ष्मीः समुद्रादुत्पन्ना, इयं तु गुणसमुद्राद्राज्ञ इति विशेषः। अप्रसिद्धस्य ज्ञापनं क्रियते न तु प्रसिद्धस्येत्याह—वा प्रसिद्धौ।

१ 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नयेन त्रितयपदस्य दिष्टविष्टपपदाभ्यामन्वयादिदमुक्तम्। २ मुद्रितपुस्तकेषु 'दमनात्। 'सहितविदमः संज्ञायाम्' इति ल्युः' इति पाठ उपलभ्यते, किंतु हेय एवासौ, तथाहि—न तादृशं सूत्रादि, किंतु 'साम्न्यर्यभृतृवृजिधारिसहितपिदमः ३।२।४६' इतिसूत्रम्। न चेदमपि ल्युं विधत्त इति।

१ अत्रोपमानान्तरासम्भवप्रतिपादनाद्व्यतिरेकमाहुर्व्याख्यातारः। नचासौ सम्भवति। प्रकृते उपमानं किमपि प्रकल्प्योपमेयस्योत्कर्षप्रतिपादनात्। अथ परं वरप्रभावादतिशयशालितानिदर्शन एव कवेः संरम्भः। मनेत्यावर्तनाद् यमकम्, वर्णान्तरसाम्यभूयस्त्वाचानुप्रासः, शब्दालङ्कारौ। २ यतस्ततः पदाभ्यां वाक्यस्य हेतुहेतुमत्त्वेनावस्थापनात् काव्यलिङ्गमलङ्कारः।

व्यवधिर्व्यवधानं तस्मिन् सत्यपि मृडो महादेवस्तस्य चूडा मौलिः सा निलयः स्थानं यस्याः सा तां विधोश्चन्द्रस्य कलां को न वेद जानाति, अपि तु सर्वेऽपि जना विदन्तीति । ईश्वरस्याप्रत्यक्षत्वेऽपि तन्मौलिस्थितां चन्द्रकलां सर्वेऽपि विदन्ति, तथा व्यवधानेऽपि त्वमपि तां वेत्सीति भावः । इणो लोटि हेरपित्वाद् गुणाभावे एजादित्वाभावाद् 'एत्येधत्यूठ्सु ६ । १ । ८९ । इति वृद्ध्यभावेन 'आद्गुणः ६।१।७०'आङ्प्रश्लेषेऽपि 'ओमाङोश्च ५।१।९५' इति पररूपप्राप्तेरवेहीत्येव रूपम्॥१९॥

**चिकुरप्रकरा जयन्ति ते**
**विदुषी मूर्धनि सा बिभर्ति यान् ।**
**पशुनाऽप्यपुरस्कृतेन त-**
**त्तुलनामिच्छतु चामरेण कः ॥ २० ॥**

चिकुरेति ॥ हे राजन्, ते चिकुरप्रकाराः केशसमूहा जयन्ति सर्वोत्कर्षेण वर्तन्ते । ते के——सा विदुषी पण्डिता भैमी यांश्चिकुरप्रकरान् मूर्धनि आबिभर्ति धारयति आभरणं करोति वा । चामरेण साम्ये सति सर्वोत्कृष्टत्वं कथमित्यत आह——पशुना चमरसञ्ज्ञकेनाप्यपुरस्कृतेन पश्चात्कृतेन चामरेण तत्तुलनां तेषां केशानां तुलनां साम्यं क इच्छतु ? न कोऽपि चमराणां हीनस्थानधारणात्तत्तुलना नास्ति । अथ च शास्त्रा ये मस्तके ध्रियन्ते पूज्यन्ते तेषां मूर्खेणाप्यपूजितेनासता सह साम्यं कोऽभिलष्येत । अतस्तत्केशानां सर्वोत्कर्षता । विदुषीति 'विदेः शतुर्वसुः ७ । १ । ३६' उगितश्च ४ । १। ६' इति ङीप् । 'वसोः सम्प्रसारणम् ६ । ४ । १३१ ' तुलनाम् न्यासग्रन्थो युच् ३ । ३ । १०७ 'इ ति युच् । सञ्ज्ञापूर्वकविधेरनित्यत्वाल्लघूपधगुणाभावः ॥ २० ॥

**त्वद्दृशोर्जनयन्ति सान्त्वनां**
**खुरकण्डूयनकैतवान्मृगाः ।**

१ अत्र'तस्यां सत्याम् ' इति पाठस्तु हेय एव, व्यवधिशब्दस्य स्त्रीलिङ्गत्वे मानालाभात् । २ अत्रधराधिपस्य गुणसिन्धुत्वेन, दमयन्त्याः श्रियश्चाभेदारोपाद्रूपकं, चेत्युक्तार्थाक्षेपणादाक्षेपश्च । ३ अत्रोपमानभूतानां चामराणां चिकुररूपोपमेयापेक्षया गर्ह्यत्वातिशयप्रत्यायनाद् व्यतिरेकः । अथ चामराणि चिकुराणि वेति चामराणीव चिकुरा इति वेति प्रश्नमभिप्रेत्यैवास्य वाक्यार्थस्य पर्यवसानमित्युत्तरम्, अन्यथाऽऽक्षेपश्चेति बोध्यम् ।

**जितयोरुदयत्प्रमीलयो-**
**स्तदखर्वेक्षणशोभया भयात् ॥ २१ ॥**

त्वद्दृशोरिति ॥ हे राजन्, मृगाः खुरेण कण्डूयनं कण्ड्वपनयनं तदेव व्याजस्तस्मात्त्वद्दृशोः स्वनेत्रयोः सान्त्वनामाश्वासनं जनयन्ति कुर्वन्ति । यतस्तस्या भैम्या अखर्वेक्षणशोभया विशालनेत्रशोभया जितयोः पराभूतयोः अत एव भयादिवोदयत्प्रमीलयोर्जायमानतन्द्रीकयोः । यथा केनचिज्जितं भीतमन्यमपि कश्चित्करपरामर्शादिना सान्त्वयति, तथा मृगा अपि स्वनेत्रे सान्त्वयन्ति । 'तन्द्री प्रमीला' 'खर्वो ह्रस्वश्च वामनः' इति चामरः । उदयादिति 'इ गतौ' ॥ २१ ॥

**अपि लोकयुगं दृशावपि**
**श्रुतदृष्टा रमणीगुणा अपि ।**
**श्रुतिगामितया दमस्वसु-**
**र्व्यतिभाते सुतरां धरापते ॥ २२ ॥**

अपीति ॥ हे धरापते पृथ्वीपते, दमस्वसुर्भैम्या लोकयुगमपि मातृकुलपितृकुललक्षणं श्रुतिगामितया लोकाकर्णनविषयत्वेन जगत्प्रसिद्धत्वेन सुतरां व्यतिभाते । परस्परोत्कर्षेण विनिमयेन वा भासेत इत्यर्थः । इदं भैमीमातृकुलमिति जगद्विख्यातत्वम् तेन भैमीमातृकुलस्य शोभनं तद्भैमीपितृकुलेनाङ्गीकृतम् । एवं भैमीपितृकुलमिदमिति जगद्विख्यातत्वम् । तेन भैमीपितृकुलस्य शोभनं तद्भैमी मातृकुलेनाङ्गीकृतमिति विनिमयः भैमीसम्बन्धेन पितृकुलवन्मातृकुलं मातृकुलवत्पितृकुलं शोभते । सादृश्यं तु तात्पर्यार्थः । तच्च सादृश्यं श्रुतिगामितया विशेष्यते तच्च श्रुतिगामित्वलक्षणं सादृश्यं मातृकुलस्य पितृकुलापेक्षया पितृकुलस्य च मातृकुलापेक्षया, न तु दृगाद्यपेक्षया । एवं दृगादीनामपि सजातीयापेक्षयैव श्रुतिगामित्वलक्षणं सादृश्यमङ्गीकरणीयं, नतु लोकयुगाद्यपेक्षया । तथा——दमस्वसुर्दृशावपि नेत्रे अपि श्रुतिगामितया आकर्णदेशविशालत्वेनातितरां विनिमयेन भाते शोभेते इति द्विवचनम् । दक्षिणनयनस्य श्रुतिगामित्वेन या शोभा तां वामनयनमङ्गी-

१ अत्र कैतवादित्यपह्नुतिः व्यतिरेकध्वनिश्च । जितत्वे उदयदित्युक्तं लिङ्गमिति पदार्थतुकं काव्यलिङ्गम् । यादृशं वस्तु ध्वन्यते तादृशं तु यथेत्यादिना दर्शितमेव व्याख्यायाम् ।

करोति । वामनयनस्य च श्रुतिगामित्वेन या शोभा तां दक्षिणनयनमङ्गीकरोतीत्यत्रापि विनिमयः । श्रुतिगामित्वेन दक्षिणं वाममिव वामं दक्षिणमिवेत्यत्रापि सादृश्य एव तात्पर्यं ज्ञेयम् । तथा—दमस्वसुः सम्बन्धिनः श्रुतदृष्टाः श्रुताः पुराणादौ, दृष्टाः कासुचित्सुन्दरीषु । यद्वा—कासुचित्स्त्रीष्वेव श्रुताः कासुचिद्दृष्टा रमणीगुणाः स्त्रीगुणाः श्रुतिगामितया लोकाकर्णनविषयत्वेन व्यतिभाते वितिमयेन शोभन्त इति बहुवचनम् । पुराणादावन्यस्त्रीषु वा ये श्रुतास्ते कासुचिद् दृष्टास्ते भैम्यामेव श्रूयन्त इति श्रुतानां दृष्टानां च स्त्रीगुणानां दमस्वसुः सम्बन्धिनां सर्वेषां श्रुतिगामित्वं विद्यते । ततः श्रुतानां स्त्रीगुणानां दमस्वसुः सम्बन्धिनां यच्छ्रुतिगामितया शोभनं तद्दृष्टैरङ्गीकृतम् । एवं दृष्टानां शोभनं तच्छ्रुतैरङ्गीकृतमित्यत्रापि यथाकथंचिद्विनिमयः । यथा श्रुता भैमीसम्बन्धिनः श्रुतिगामितया शोभन्ते तथा दृष्टा अपि भैमीसम्बन्धिनः श्रुतिगामितया शोभन्त इत्यत्रापि सादृश्य एव तात्पर्यम् । श्रुतदृष्टा अपि सर्वे गुणा भैम्यां विद्यन्त इति भावः । सामुद्रिकशास्त्रे श्रुतानां पद्मिन्यादौ दृष्टानामिति वा यथाकथञ्चिज्ज्ञेयम्, विस्तरभयान्न लिख्यते । 'श्रुतिः स्तोत्रे तथाऽऽम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः । गामी गम्यादि । आवश्यके ताच्छील्ये वा णिनिः । 'त्वतलोर्गुणवचनस्य' इति पुंवत् । व्यतिपूर्वस्य भातेः 'कर्तरि कर्मव्यतिहारे १ । ३ । १४' इत्यात्मनेपदम् । द्विवचने सवर्णदीर्घत्वे कृते, बहुवचने च शपो । 'आत्मनेपदेष्वनतः ७ । १ ।५'इति स्यादादेशे टेरेत्वं सर्वत्र । वचनश्लेषः[1] ॥ २२ ॥

नलिनं मलिनं विवृण्वती
पृषतीमस्पृशती तदीक्षणे ।
अपि खञ्जनमञ्जनाञ्चिते
विदधाते रुचिगर्वदुर्विधम् ॥ २३ ॥

नलिनमिति ॥ तदीक्षणे भैमीनेत्रे पृषतीमञ्जनशलाकामस्पृशती अप्राप्ते अञ्जनानञ्चिते सती नलिनं कमलं नलिनं स्वकान्त्या दूषितं विदधाते कुर्वाते । किंभूते तदीक्षणे—विवृण्वती आत्मानं प्रकाशयन्ती प्रसारयन्ती ऋजुरीत्या विलोकमाने । अञ्जनाञ्चिते अञ्जनपूजिते साञ्जने सती तदीक्षणे खञ्जनमपि खञ्जरीटमपि रुचिगर्वेण कान्तिमदेन दुर्विधं दरिद्रं विदधाते । अवतंसीकृतं कमलं कटाक्षावलोकनप्रसृतया स्वकान्त्या मलिनं श्यामं विवृण्वती कुर्वती,तथा—पृषतीं हरिणीमस्पृशती नेत्रविषयेऽगणयन्ती एवंविधे भैमीनेत्रे कज्जलाञ्चिते खञ्जनमिति पूर्ववत् । अञ्जनपूजनात्पूर्वं स्वकान्त्या कमलं जितं हरिणीनेत्रयोस्तु भैमीनेत्रशोभासम्भावनापि नास्ति । अञ्जनपूजाऽनन्तरं खञ्जनस्य मन्नेत्रसदृशे नान्यस्येति गर्वस्तद्रहितं कुर्वाते इत्यर्थ इति वा, रुचि कान्तिविषये दर्पेण रहितामिति वा । रुचीति भिन्नं पदं सप्तम्यन्तं च । खञ्जनो हि शुक्लकृष्णोऽतिसरलोऽतिचञ्चलश्च भवति अतस्तेन साम्यसम्भावनायां कज्जलदानानन्तरं तदाधिककान्तित्वात्सोऽपि जित इति भावः । मलिनं स्वगतं श्यामं गुणं विलोकनवशाद्विवृण्वती प्रकाशयन्ती नलिनं रुचिगर्वदुर्विधं विदधाते इति वा, मलिनं श्यामं नलिनं नीलोत्पलं रुचिगर्वदुर्विधं विदधाते इति वा । सविलासवीक्षणदशायाः पूर्वमेव नीलोत्पलं जितमित्यर्थः । तथा—असङ्कुचती सती पृषतीं हरिणीं रुचिगर्वदुर्विधां विदधाते, निर्निमेषत्ववेलायामपि ताभ्यां हरिणी जिता किं पुनः कटाक्षविक्षेपवेलायामिति वा । अस्मिन्पक्षे दुर्विधा च दुर्विधश्चेति 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १।२।६९' इति नपुंसकशेषैकवद्भावौ । अज्यतेऽनेनेत्यञ्जनं तेन पूजिते इत्यनेन ल्युडन्तस्य 'अञ्जु व्यक्तिम्रक्षणकान्तिगतिषु' इति धातोरर्थानुसारेण दृशोः स्निग्धनीलरक्तसितवर्णकान्तिचाञ्चल्ययोगः सूचितः । तथा च नलिनादिषु मध्ये क्वचित्कस्यचिद्गुणस्य सत्त्वाद्दृशोस्तु पूर्वोक्तगुणसद्भावात्ताभ्यां नलिनादीनि जितानीति भावः । 'मलिनं दूषिते कृष्णे' इति विश्वः । 'स्युः प्रभारुग्रुचिस्त्विड्भाः' इति 'गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगः ।' इति, 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।' इति चामरः । अञ्चिते 'अञ्चेः पूजायाम्' इतीटि 'नाञ्चेः पूजायाम् ६ । ४ । ३०' इति नलोपनिषेधः । अञ्जनाञ्जिते इति पाठे 'अजि भासि' इति चौरादिकस्याञ्जयतेर्निष्ठा । अञ्जनेन भासिते इत्यर्थः[1] ॥ २३ ॥

१ अत्र वचनानामनेकधाऽन्वयोऽनेकार्थबोधकः प्रकृतश्चेति श्लेषो वचनानाम् । अनुप्रासश्च णादेः साम्यात् । प्रकृतानां च लोकयुगादीनां तुल्यतयोक्तेस्तुल्ययोगिता च । मातृपितृकुलयोर्दशोश्चान्योन्येतरत्र साम्याभाव इति उपमेयोपमा, व्यतिरेकौ व्यज्येते च ।

१ अत्र लिनमिति शपयोरभेदेन पतीतिञ्जनेति च यमकं मलिनत्वादिकरणासम्भवेऽपि तथोक्तावतिशयोक्तिः, व्यतिरेकध्वनिश्च ।

अधरं किल बिम्बनामकं
फलमस्मादिति भव्यमन्वयम् ।
लभतेऽधरबिम्बमित्यदः
पदमस्या रदनच्छदं वदत् ॥ २४ ॥

अधरमिति ॥ हे राजन्, अस्या दमयन्त्या रदनच्छदमधरमोष्ठं वददभिदधत् अधरबिम्ब इत्यदः पदमेतत्पदं । सुबन्तोऽयं शब्द इत्यतो हेतोर्भव्यं समीचीनमन्वयं सम्बन्धं लभते प्राप्नोति । 'ओष्ठाधरौ तु रदनच्छदौ' इत्यमरः । इतीति किम्—किल यस्माद्बिम्बनामकं फलमस्मादोष्ठादधरं हीनम् । बिम्बापेक्षयाऽस्याधिकरक्तत्वादमृतयुक्तत्वाच्च । अधरं तुच्छं, बिम्बं बिम्बसंज्ञकं फलं यस्मादधरबिम्ब इति बहुव्रीहिः, न त्वधर एव बिम्बमिति । अन्यासां तु अधरो बिम्ब इवेति तत्पुरुषः कर्मधारयः । 'अधस्तादपि चाधरः ।' इत्यमरः । एतस्यास्तु बहुव्रीहौ अर्थतः शब्दतश्च भव्यत्वम् । भैम्यधरो जितबिम्ब इति भावः ॥ २४ ॥

हृतसारमिवेन्दुमण्डलं
दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते
धृतगम्भीरखनीखनीलिम ॥ २५ ॥

हृतेति ॥ इन्दुमण्डलं चन्द्रबिम्बं वेधसा ब्रह्मणा दमयन्तीवदनाय भैमीमुखं निर्मातुं हृतसारमिव गृहीतश्रेष्ठभागमिव कृतं मध्ये बिलं छिद्रं यस्यैवंभूतं विलोक्यते दृश्यते तर्क्यत इत्यर्थः । कलङ्केन हृतसारत्वमुत्प्रेक्षितम् । किम्भूतम्—धृतो गंभीरखन्यां निम्नगर्ते परभागस्थितस्य खस्याकाशस्य नीलिमा येन । कलङ्को न भवति, किं त्वयमाकाशनीलिमा । भैमीमुखं निष्कलङ्कचन्द्रसारतुल्यमिति भावः । वदनाय 'क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः २।३।१४' इति चतुर्थी । खनीति 'कृदिकारादक्तिनः' इति ङीष् ॥ २५ ॥

धृतलाञ्छनगोमयाञ्चनं
विधुमालेपनपाण्डुरं विधिः ।
भ्रमयत्युचितं विदर्भजा-
ननीराजनवर्धमानकम् ॥ २६ ॥

प्रकारान्तरेण भैमीमुखस्य चन्द्राधिक्यमाह—

धृतेति ॥ ब्रह्माज्ञया चन्द्रो भ्राम्यति । तत्रोत्प्रेक्षते । विधिर्ब्रह्मा विधुं चन्द्रमुचितं योग्यं विदर्भजा भैमी तस्या आननं तस्य नीराजनार्थमारार्तिकार्थं वर्धमानकमिव वर्धमानकं शरावं भ्रमयति । किम्भूतं विधुम्—धृतं लाञ्छनं कलङ्क, एव गोमयाञ्चनं गोमयपूजनं येन । तथा, आलेपनं पिष्टोदकम् ('अईपण' इति लोके प्रसिद्धम्) तेनैव पाण्डुरम् । चन्द्रस्तन्मुखसादृश्यं न प्रापेति भावः । गोमयलिप्तेन चूर्णादिचिह्नेन शरावेण दृष्टिदोषनिरासार्थं नीराजना क्रियत इति लोकाचारः । 'शरावो वर्धमानकः' इत्यमरः ॥ २६ ॥

सुषमाविषये परीक्षणे
निखिलं पद्मभाजि तन्मुखात् ।
अधुनाऽपि न भङ्गलक्षणं
सलिलोन्मज्जनमुज्झति स्फुटम् ॥ २७ ॥

सुषमेति ॥ कमलस्य शोभाऽधिका, भैमीवदनस्य वेति सुषमाविषये परमशोभाविषये परीक्षणे दिव्येन विचारेण शोधने निखिलं समस्तं पद्मं पद्मजातं तन्मुखाद्भैमीमुखादभाजि पराजयं प्राप्तम् । यतः—भङ्गलक्षणं पराजयचिह्नं *सलिलोन्मज्जनं जलादुन्मज्जनमूर्ध्वभवनमद्यापि* नोज्झति स्फुटं व्यक्तमेव न त्यजति । स्फुटमुत्प्रेक्षे वा । जलोन्मज्जनं तस्य स्वाभाविकं भङ्गलक्षणत्वेनोत्प्रेक्षितम् । स्फुटं विकसितमिति पद्मविशेषणं वा । एवं च कमलमुखयोः सुषमाशालित्वेऽपि कमलस्यादिव्यत्वं, मुखस्य तु दिव्य ( कमल ) त्वं सिद्धम् । यतो दिव्यादिव्ययोर्मध्ये धनुर्धरमुक्तं बाणमादाय यावदन्यो धावन्नागच्छति तावद्यः सलिले निमग्न एव तिष्ठति तस्य दिव्यत्वमित्यसौ विजयते, यस्तु ततः पूर्वमेवोन्मज्जति स पराजयते तस्यादिव्यत्वेन इति यथोक्तम् । 'सुषमा परमा शोभा' इत्यमरः । 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः ८।३।८८' इति षत्वम् । अभाजीति कर्मकर्तरि चिण् 'भञ्जेश्च चिणि' इति नलोपः ॥ २७ ॥

धनुषी रतिपञ्चबाणयो-
रुदिते विश्वजयाय तद्भ्रुवौ ।

---

१ अत्रोत्प्रेक्षा व्यतिरेकश्चवदंदिति पदार्थहेतुकं काव्यलिङ्गं च । २ अत्र खनीति यमकम्, इवेत्युत्प्रेक्षा च कलङ्कमपह्नुत्य नीलिमारोपणेनापह्नुतिस्तु तत्रैव लीना ।

१ अत्र लाञ्छनादेर्गोमयादित्वेन रूपणाद्रूपकम्, इवानुक्तावपि भ्रमयतीत्युत्प्रेक्षणादुत्प्रेक्षाध्वनिः । २ अत्र व्यतिरेकः, उक्तार्थस्य अभिन्नत्वेऽधुनाऽपीति हेतुरित्यनुमानम्, स्फुटमित्युत्प्रेक्षा च ।

नलिके न तदुच्चनासिके
त्वयि नालीकविमुक्तिकामयोः ॥ २८ ॥

धनुषी इति ॥ तद्भ्रुवौ भैमीभ्रुवौ विश्वजयाय त्रैलोक्यजयाय रतिपञ्चबाणयोर्धनुषी नोदिते प्रादुर्भूते न इति काक्वा। 'नु' इति पाठे वितर्के। तथा—तस्या भैम्या उच्चनासिके रन्ध्रद्वयोपलक्षिते नासिके त्वयि विषये नालीकौ नलिकाप्रेर्यमाणलघुशरौ तयोर्विमुक्तिकामयोर्नलिके शराधारनलौ न भवतः, अपितु नलिके एव। एतस्या भ्रूनासिकं दृष्ट्वा सर्वोऽपि कामाधीनो भवतीति भावः। 'नालीकः शरशल्ययोः इति विश्वः। विश्वजयाय'तुमर्थाच्च भाववचनात् २।३।१५९' इति चतुर्थी। कामयोरिति 'शीलिकामिभक्ष्याचरिभ्यो णः' इति वार्तिकेन णः ॥ २८ ॥

सदृशी तव शूर सा परं
जलदुर्गस्थमृणालजिद्भुजा।
अपि मित्रजुषां सरोरुहां
गृहयालुः करलीलया श्रियः ॥ २९ ॥

सदृशीति॥ हे शूर, सा भैमी परं केवलं तव सदृशी योग्या। किम्भूता—जललक्षणं दुर्गं तत्र तिष्ठन्ति जलदुर्गस्थानि मृणालानि जयत इति जितौ भुजौ यस्याः सा। मृणालादपि कोमलौ गौरौ च तद्भुजौ इत्यर्थः। तथा—करलीलया हस्तविलासेन मित्रं सूर्यं, सुहृदं च जुषन्ते सेवन्ते मित्रजूंषि तेषाम्। विकसितत्वात्सश्रीकाणामपि सरोरुहां कमलानां श्रियो गृहयालुर्ग्रहीतुकामा। त्वमपि जलदुर्गस्थवैरिजिद्भुजः सत्सुहृदां सत्सहायानामपि वैरिणां सम्पदः करलीया बलिक्रियया। गृहयालुरिति शूरत्वादुभयोः साम्यम्। अपिरन्यच्च इत्यर्थे वा। 'मित्रं सुहृदि मित्रोऽर्के,' 'बलिहस्तांशवः कराः' लीला विलासक्रिययोः' इतिचामरः। गृहेश्चौरादिण्यन्तात् 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्३।२।१५८' इत्यलुचि 'अयामन्ताल्वाय्येल्विष्णुषु ६।४।५५' इत्ययादेशे गृहयालुः। तद्योगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।२।६९' इति षष्ठीनिषेधाच्छ्रिय इति द्वितीया ॥ २९ ॥

वयसी शिशुतातदुत्तरे
सुदृशि स्वाभिविधिं विधित्सुनी।
विधिनाऽपि न रोमरेखया
कृतसीम्नी प्रविभज्य रज्यतः ॥ ३० ॥

वयसी इति ॥ हे राजन्, तस्यां सुदृशि सुनयनायां स्वाभिविधिं निजाभिव्याप्तिं विधित्सुनी कर्तुकामे अहमेव सर्वात्मना इमामभिव्याप्य तिष्ठामीति बाल्यं मन्यते। एवं तारुण्यमपि। एवम्भूते शिशुता च तदुत्तरं शिशुताया बाल्यतः परं तारुण्यं च वयसी न रज्यतः, अपितु रज्यत एव संतुष्यत एव। बाल्यतारुण्ये तस्यां तिष्ठत इत्यर्थः।' वयःसन्धौ वर्तमाना इति यावत्। किम्भूते वयसी—विधिना ब्रह्मणा उदरे वर्तमानया रोमरेखया प्रविभज्य समं विभागं कृत्वा कृतसीम्नी कृतमर्यादे अपि। एवंविधे विभज्य न रज्यतः, किं तर्हि संवलिते एवानुरागं भजत इति वा। बाल्यं वर्तते, रोमरेखोद्भवेन च तारुण्यं प्राप्तमित्युभे संवलिते एव तिष्ठतः। रम्यत्वाद्बाल्यं त्यक्तुं न शक्नोति, तारुण्यं चागन्तुमिच्छतीति भावः। विधिना शास्त्रोक्तमार्गेण रेखया कृतसीम्नी अपि सस्याधिकायां भुवि मदीयेयं मदीयेयमिति कौचिद्विवदेते ॥ ३० ॥

अपि तद्वपुषि प्रसर्पतो-
र्गमिते कान्तिझरैरगाधताम्।
स्मरयौवनयोः खलु द्वयोः
प्लवकुम्भौ भवतः कुचावुभौ ॥ ३१ ॥

अपीति ॥ उभौ कुचौ स्तनौ तद्वपुषि प्रसर्पतोः प्लवमानयोः क्रीडतोर्द्वयोः स्मरयौवनयोः कामतारुण्ययोः प्लवकुम्भौ प्लवनार्थं कुम्भौ तरणकुम्भौ भवतः। खलु उत्प्रेक्षायाम्। किम्भूते तद्वपुषि—कान्तिझरैः कान्तिप्रवाहैरगाधतामतलस्पर्शत्वं गमिते प्रापितेऽपि। अगाधे उदके क्रीडाऽनुचिता, तत्रापि क्रीडतोरिति द्योतनार्थमपिशब्दः। पूर्वापेक्षया अपिः, अन्यच्च इत्यर्थे वा।

१ अत्र भ्रुवोर्धनुरात्मना रूपणाद्रूपकम्, अनुक्तस्यापि धनुस्त्वादेर्नेत्यनेन निषेधादाक्षेप उत्तरं च ध्वन्येते। नवि काकुरिति चेदुत्प्रेक्षैव। २ अत्रोपमा श्लेषश्च।

१ अत्र दमयन्ती न प्रौढा न चाऽत्यन्तं बालेत्यभिधित्सायां तथोक्तिः कयोश्चिद् भूम्यर्थं विवदमानयोरीहितं व्यञ्जयति इति। वयसो रोमरेखया सम्भावितमप्यवधिमुल्लङ्घ्यैकस्योत्सुकत्वमिवेति सम्भावनादुत्प्रेक्षाया गम्यत्वम्,वयसो रोमरेखया कृतसीमत्वासम्भवेऽपि तथाऽभिधानादतिशयोक्तिश्च। द्वयोरेकस्य निवृत्तौ परस्योपस्थितौ च वैलक्षण्यं युक्तमेवेति स्वभावोक्तिः।

अगाधे ह्रदके क्रीडतोर्द्वयोर्घटद्वयेन भाव्यम्। यद्यपि द्विवचनेनैव द्वयोः, उभौ इति च लभ्यते तथापि सदासहवासित्वपरस्परमिलितत्वप्रदर्शनार्थमुक्तमित्यवगन्तव्यम् ॥ ३१ ॥

**कलसे निजहेतुदण्डजः**
**किमु चक्रभ्रमकारितागुणः।**
**स तदुच्चकुचौ भवन्प्रभा-**
**झरचक्रभ्रममातनोति यत् ॥ ३२ ॥**

कलस इति ॥ न्यायशास्त्रे समवायिकारणमसमवायिकारणं निमित्तकारणं चेति यत्समवेतमेव कार्यमुत्पद्यते तत्समवायिकारणं, यथा मृत्पिण्डो घटस्य । तत्र पूर्वश्लोके कुम्भत्वारोपणेन तदुभयसाम्यमसहमानः कविः प्रभागुणाधिकत्वप्रतिपादनेन तयोरुत्कृष्टतामारोपयितुं हंसमुखेनापूर्वामुक्तिभङ्गिं प्रणीतवान् । असम्भाव्यवस्तुदर्शने परसम्मतिप्रश्ने किमुशब्दः हे राजन्, चक्रभ्रमं करोत्येवंशीलश्चक्रभ्रमकारी तस्य भावश्चक्रभ्रमकारिता तल्लक्षणो गुणः स्वभावः (यः) कलसे घटे दृश्यते स निजस्य स्वस्य घटस्य हेतुर्निमित्तकारणं दण्डस्तस्माज्जातः किमु। समवायिकारणगुणः कार्यगुणमारभते, न निमित्तगुणः। अत्र तु निमित्तगुणः कार्यगुणमारभत इति असम्भाव्यमेतत्त्वया कुत्रचिद्दृष्टमिति प्रश्नार्थः किमु। मया तु दृष्टः। कुत्रेत्यपेक्षायामाह—यद्यस्मात्स कलसस्तस्या भैम्या उच्चकुचौ भवन् उच्चस्तनतां प्रपद्यमानः प्रभाझरेण दीप्तिसमूहेन चक्रभ्रमं कुलालचक्रभ्रमणमर्थाद् दृष्टेः करोति सुन्दरवस्तुदर्शनेन दृष्टेर्भ्रमणं भवति सूर्याद्यालोकावलोकनवत्। अथ च स तदुच्चकुचौ भवन्दीप्तिसमूहेन चक्रस्य राष्ट्रस्य, लोकसमूहस्य वा भ्रमं मदजनितं मोहमातनोति। सर्वोऽपि स्तनकान्तिदर्शनेन कामान्धो भवतीति भावः। अथ च कान्तिप्रवाहे चक्रवाकभ्रान्तिमातनोति। (कान्ति) प्रवाहे चक्रवाका भवन्ति (भ्रमन्ति) अतो भ्रमकारणत्वाच्छब्दच्छलाच्चक्रभ्रमकारितागुणो घटे विद्यते। तुङ्गत्वेन कान्तिमत्त्वेन च तत्कुचौ घटचक्रवाकतुल्याविति भावः। कलस इत्येकवचनं जात्यभिप्रायेण। निजः सहजश्चासौ हेतुश्च। समवायिकारणमिति यावत्। तादृशो न भवतीति अनिजहेतुर्निमित्तकारणं तादृशाद्दण्डाज्जातः। किमु इत्युत्प्रेक्षा, आक्षेपो वा। दण्डगुणः कलसे विद्यत इत्यत्र किं प्रमाणमित्याशङ्कायां शब्दच्छलेन हेतुमाह—स इति। यद् यस्मादिति वा। इति यथामति व्याख्येयम्। 'चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः। ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि' इति विश्वः ॥ ३२ ॥

**भजते खलु षण्मुखं शिखी**
**चिकुरैर्निर्मितबर्हगर्हणः।**
**अपि जम्भरिपुं दमस्वसु-**
**र्जितकुम्भः कुचशोभयेभराट् ॥ ३३ ॥**

भजत इति ॥ खलूत्प्रेक्षे। दमस्वसुः चिकुरैः केशैर्निर्मिता कृता बर्हगर्हणा पिच्छभारतिरस्कारो यस्य स शिखी मयूरः षण्मुखं कार्तिकेयं भजते सेवते। प्रसङ्गत एतदुक्तम्। तथा दमस्वसुः कुचशोभया स्तनभारेण जितौ गण्डौ यस्य स इभराट् करिणां राजा ऐरावतोऽपि जम्भारिमिन्द्रं सेवते। भैम्याः केशसाम्यं स्तनसाम्यं च देवाराधनेन प्राप्तुकामौ वैरनिर्यातनार्थं वा तौ भजत इति भावः। अधिकेन जितोऽन्यमधिकं भजते। चिकुरैरिति बहुवचनेनैव बहुत्वं सूचयित्वा षण्मुखपदप्रयोगेण षण्मुखत्वात्स्कन्दस्य केशसंभावनया तत्प्राप्त्यर्थं शिखिनः स्कन्दाश्रयणं युक्तम्। 'जभिजृभी गात्रविनामे' जम्भते गात्रविनामं करोतीति जम्भस्तद्रिपुर्जम्भादधिकः। अत एव सेव्यते। अस्या गात्रविनामकारिणी कुचशोभा जम्भतुल्येति हेतोस्तदधिकमिन्द्रं सेवते इति ॥ ३३ ॥

**उदरं नतमध्यपृष्ठता-**
**स्फुटदङ्गुष्ठपदेन मुष्टिना।**

---

१ अत्र वपुषस्तडागत्वानुक्तावपि प्रतीते रूपकातिशयोक्तिः। एवं कान्तेर्झरत्वासम्भवेऽपि तथोक्तेर्जलाभिन्नत्वं व्यज्यत इत्यपि सा। स्मरस्य यौवनाश्रयत्वे पृथगवस्थानाभावेऽपि पृथङ्निर्देशेन तदानुरूप्यं व्यज्यते। तथा स्मरयौवनयोः प्लवनयित्वोक्त्या मूर्तत्वं जलत्वं च क्रमेण व्यज्येते एवं निश्चयान्तः सन्देहोऽप्याभासते। उत्प्रेक्षा तु वाच्याऽस्त्येवेति बोध्यम्।

१ स तदुच्चकुचौ भवन्नित्युक्त्या वस्तुतया तयोर्भेद इति रूपकम्, पूर्वं शङ्कितस्य प्रमितत्वनिष्पत्तये परत्र हेतुनिर्देशः, तेन तथाऽवधारणदार्ढ्यमित्यनुमानम्, कुचकलससम्बन्धिनोर्भ्रमस्य भिन्नत्वेऽपि अभिन्नत्वाध्यवसानादभेदातिशयोक्तिस्तया च झरचक्रभ्रमरूपक्रियालक्षणं निमित्तमुपजीव्य निमित्तकारणा कुचलक्षणे कलसे कार्ये चक्रभ्रमकारितारूपनिमित्तगुणसङ्क्रमणोक्तावुत्प्रेक्षा। २ अङ्गसौष्ठववर्णनप्रसङ्गे पुनश्चिकुरोत्कर्षवर्णनं समाप्तापक्रान्तेऽङ्गविशेषोत्कर्षप्रस्तावे पुनस्तत् कथमिति यथोक्तम्। ३ भजत इति क्रियाया आवृत्त्या दीपकम्, यथोच्यमानस्य सम्भावनामात्रत्वादुत्प्रेक्षा चात्र।

चतुरङ्गुलमध्यनिर्गत-
त्रिवलिभ्राजि कृतं दमस्वसुः ॥ ३४ ॥

उदरमिति ॥ हे राजन्, दमस्वसुर्भैम्या उदरं मुष्टिना कृतम् । विधिनेत्यर्थात् । किम्भूतेन मुष्टिना—नतो नम्रो मध्यो यस्यैवंविधं पृष्ठं यस्योदरस्य तस्य भावस्तत्ता तया स्फुटत्प्रकटीभवदङ्गुष्ठपदमङ्गुष्ठस्थानं यस्य तेन । किम्भूतमुदरम्—चतसृणामङ्गुलीनां मध्यान्निर्गतास्तिस्रो वलयस्ताभिर्भ्राजते तच्छीलम् । पृष्ठमध्ये निम्नत्वमङ्गुष्ठनिवेशात् । उदरे त्रिवलियुक्तत्वं चतुरङ्गुलिधारणात् । चतसृणां त्रीण्येवान्तराणि भवन्ति । चतुरङ्गुलमिति 'तत्पुरुषस्याङ्गुलेः सङ्ख्याऽव्ययादेः ५।४।८४' इत्यच् ॥३४॥

उदरं परिमाति मुष्टिना
कुतुकी कोऽपि दमस्वसुः किमु ।
धृततच्चतुरङ्गुलीव य-
द्वलिभिर्भाति सहेमकाञ्चिभिः ॥ ३५ ॥

प्रकारान्तरेणोदरमेव वर्णयति—

उदरमिति ॥ कोऽपि कुतुकी दमस्वसुरुदरं मुष्टिना इयत्तया परिमाति व्यवच्छिनत्ति । किमु उत्प्रेक्षे । यद्यस्मात्तदुदरं सहेमकाञ्चिभिः सुवर्णमेखलासहिताभिर्वलिभिः कृत्वा धृतास्तस्य मुष्टेश्चतस्रः अङ्गुलयो येन एवंविधमिव भाति । तिस्रो वलयश्चतुर्थी हेमकाञ्ची । चतस्रोऽङ्गुलयस्तस्य मुष्टेरित्यर्थः । को ब्रह्मा । अपिरेवार्थः । ब्रह्मैवेत्यर्थः ॥ ३५ ॥

पृथुवर्तुलतन्नितम्बकृ-
न्मिहिरस्यन्दनशिल्पशिक्षया ।
विधिरेकचक्रचारिणं
किमु निर्मित्सति मान्मथं रथम् ॥३६॥

पृथ्विति ॥ विधिर्ब्रह्मा मान्मथं काममम्बन्धिनं रथं निर्मित्सति निर्मातुमिच्छति । किमु उत्प्रेक्षायाम् । किम्भूतो विधिः—मिहिरः सूर्यस्तस्य स्यन्दनो रथस्तस्य शिल्पं निर्माणं तस्य शिक्षयाभ्यासेन पृथुं महान्तं वर्तुलं तस्या भैम्या नितम्बं करोतीति कृत् । किम्भूतं रथम्—एककेनासहायेन चक्रेण चरति एवंशीलम् । सूर्यरथैकचक्रनिर्माणाभ्यासेन ब्रह्मणा भैमीनितम्बः कृतः स कामरथत्वेनोत्प्रेक्षितः । नितम्बदर्शनान्मदनप्रादुर्भावो भवतीति भावः । निर्मित्सति । माङः 'सनिमीमाघुरभलभशकपतपदामच इस् १।४।५४' इत्यादिना अच इस् । 'अत्र लोपोऽभ्यासस्य १।४।५८' ॥ ३६ ॥

१ अत्र कृतमिति सम्भावनायामुत्प्रेक्षा, । समर्थने तु काव्यलिङ्गम् । २ अत्र किम्वित्येका, धृताङ्गुलीवेत्यपरोत्प्रेक्षा अनयोश्चाङ्गाङ्गिभावात्मा सङ्करः, पूर्वयोत्तरस्याः परिष्कारकत्वात् ।

तरुमूरुयुगेन सुन्दरी
किमु रम्भां परिणाहिना परम् ।
तरुणीमपि जिष्णुरेव तां
धनदापत्यतपःफलस्तनीम् ॥३७॥

तरुमिति ॥ हे राजन्, सुन्दरी भैमी परिणाहिना विशालेनोरुयुगेनोरुद्वयेन तरुं वृक्षरूपां रम्भां कदलीं परं केवलं जिष्णुर्जयनशीलेति किमु किं वक्तव्यम् । अपि त्वेवं न वाच्यम् । किंतु तरुणीमपि तां रम्भामप्सरोविशेषमपि जिष्णुरेव । किम्भूताम्—धनदापत्यस्य कुबेरपुत्रस्य नलकूबरस्य तपसः फलं स्तनौ यस्याः । यदर्थं नलकूबरेण तपः कृतं तां रम्भाम् कदलीमप्यूरुयुगेन जितवतीत्यर्थः । द्वयेन द्वयं जितम् । 'परिणाहो विशालता' इत्यमरः । 'रम्भा कदल्यप्सरसोः' इति विश्वः । नलोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति निषेधात्तरुमिति द्वितीया । सुन्दरी । गौरादित्वान्ङीष् ॥ ३७ ॥

जलजे रविसेवयेव ये
पदमेतत्पदतामवापतुः ।
ध्रुवमेत्य रुतः सहंसकी-
कुरुतस्ते विधिपत्त्रदंपती ॥ ३८ ॥

जलजे इति ॥ ये जलजे कमले रवेः सूर्यस्य सेवयेवैतस्या भैम्याः पदतां चरणत्वं पदमुत्तमस्थानं, व्याजं चावापतुः प्रापतुरिव । ध्रुवमुत्प्रेक्षते । विधिपत्त्रदम्पती ब्रह्मवाहनपक्षिजायापती हंसस्त्रीपुंसौ कर्तारौ ते जलजे कर्मणी एत्यागत्य रुतः शब्दाद् ध्रुवं निश्चयेन सहंसकीकुरुतः हंससहिते कुरुतः । हंसरवतुल्याच्छिञ्जितादेते सहंसे इत्यनुमीयत इत्यर्थः । हंसकः पादकटकस्तत्सहिते नूपुरयुक्ते कुरुतः । विधिहंसमिथुनमेतन्नूपुरत्वेन परिणतमित्यर्थः । रविसेवया पद्मयोर्भैमीपदत्वप्राप्तिः । विधिसेवया हंसानामेतच्चरणस्थानप्राप्तिरित्यर्थः । विधिपत्त्रदम्पती ये पद्मे एत्य रुतः शब्दं कुरुतः । 'रु शब्दे' तथा सहंसे कुरुत इति वा । कमलस्य हंससंयोगो

१ अत्र किम्वित्युत्प्रेक्षा । २ अत्रापि किम्वित्युत्प्रेक्षा ।

युक्तः । भैमीपदयोः पश्चादप्युत्कृष्टत्वाद्धंसरवसमानशिञ्जितयोगाच्चेयमुत्प्रेक्षा सुन्दरतरे सुकुमारे च सृजता ब्रह्मणा स्वीयहंसमिथुनमेव तद्भूषणत्वेन कल्पितम्, तादृशस्यान्यस्य भूषणस्याभावादिति च ध्वनिः । 'हंसकः पादकटकः' इत्यमरः । पक्षे 'शेषाद्विभाषा ५।४।१५४' इति कप्, ततश्चिवः । रुत इति पक्षे सम्पदादिः ॥३८ ॥

श्रितपुण्यसरःसरित्कथं
न समाधिक्षपिताखिलक्षपम् ।
जलजं गतिमेतु मञ्जुलां
दमयन्तीपदनाम्नि जन्मनि ॥ ३९ ॥

श्रितेति ॥ जलजं कमलं दमयन्त्याः पदमेव चरण एव नाम यस्यैवम्भूते जन्मनि जन्मान्तरे मञ्जुलां रम्यां गतिं गमनं पुण्यलोकप्राप्तिरूपां दशां च कथं न एतु प्राप्नोतु । किम्भूतम्—श्रितानि पुण्यानि श्रेयस्कारीणि सरांसि, श्रेयस्कारिण्यो नद्यश्च येन तत् । तथा—समाधिना मुकुलीभावेन सम्यगाधिना क्षपिता अतिवाहिता अखिलाः क्षपा रात्रयो येन । अन्योऽपि सेवितपुण्यतीर्थः समाधिना योगाङ्गेनातिवाहितसमस्तरात्रिर्जन्मान्तर उत्तमां दशां प्राप्नोति तद्वद्भैमीपदप्राप्तिर्जलजस्य ॥ ३९ ॥

सरसीः परिशीलितुं मया
गमिकर्मीकृतनैकनीवृता ।
अतिथित्वमनायि सा दृशोः
सदसत्संशयगोचरोदरी ॥ ४० ॥

एतादृशी सा कथं त्वया ज्ञातेत्यत आह—

सरसीरिति ॥ सरसीः सरांसि परिशीलितुमवगाहितुं गमेर्धातोः कर्मीकृता गतिविषयीकृता नैका अनेका नीवृतो देशा येन एवंविधेन मया सा भैमी दृशोरातिथ्यं दृग्गोचरत्वमनायि आनीता । दृष्टेत्यर्थः । किम्भूतः—सदसतोरस्ति नास्तीति संशयस्तस्य गोचरो विषय उदरं यस्याः सा अत्यन्तं कृशोदरीति भावः । एतेन कापि देशे तादृशी न दृष्टेति भावः । 'नीवृज्जनपदो देशविषयौ' इत्यमरः । सरसीः । गौरादित्वान्ङीष् । शीलेर्भौवादिकात्तुमुन् । नीवृत् 'नहिवृतिवृषिव्यधिरुचिसहितनिपु क्वौ ६।३।११६' इति दीर्घः । गोचरोदरी 'नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च ४।१।५५' इति ङीष् ॥४०॥

अवधृत्य दिवोऽपि यौवतै-
र्न सहाधीतवतीमिमामहम् ।
कतमस्तु विधातुराशये
पतिरस्या वसतीत्यचिन्तयम् ॥ ४१ ॥

अवेति ॥ हे राजन्, अहमित्याचिन्तयं विचारितवानस्मि । किं कृत्वा—दिवोऽपि स्वर्लोकस्यापि यौवतैः स्त्रीसमूहैः सह नाधीतवतीं नाध्ययनकर्त्रीमिमां भैमीमवधृत्य निश्चित्य । सदृशैः सह पठ्यते किल । इतीति किम्—विधातुर्ब्रह्मण आशये मनस्यस्या भैम्याः कतमस्तु को वा पतिर्वियते इति विधात्रा सुरसुन्दरीभ्योऽपि सुन्दर्या भैम्या योग्यः को भर्ता विनिर्मित इति चिन्तितवानित्यर्थः । यौवतैरिति युवतिशब्दात्सामूहिके भिक्षादित्वादणि 'भस्याढे तद्धिते' इति प्राप्तः पुंवद्भावो भिक्षादौ युवतिशब्दपाठसामर्थ्यान्न भवति । ( नसहाधीतवतीमिति 'सुपा२।१।४' इति नेन समासः? ) कतम इति 'कतरकतमौ जातिपरिप्रश्ने २।१।६३' इति वचनसामर्थ्यात्स्वार्थेऽपि डतमच् ॥ ४१ ॥

अनुरूपमिमं निरूपय-
न्नथ सर्वेष्वपि पूर्वपक्षताम् ।
युवसु व्यपनेतुमक्षम-
स्त्वयि सिद्धान्तधियं न्यवेशयम् ॥४२॥

अन्विति ॥ इममस्या भैम्या अनुरूपं रूपयोग्यं पतिं निरूपयन् अयं वा योग्यः, अयं योग्य इति विचारयन्नपि अथ पश्चात्सर्वेष्वपि युवसु तरुणेषु पूर्वपक्षतामयोग्यरूपत्वं व्यपनेतुं निराकर्तुमक्षमोऽसमर्थः सन्नहं त्वयि सिद्धान्तधियं भैमीरूपानुरूपत्वबुद्धिं निःसपत्नं निश्चयं न्यवेशयं निवेशितवान् । अथ पश्चात्त्वयीति वा । त्वत्तोऽन्यस्तद्योग्यः

---

१ अत्र जलजे इव पदे इत्यनुक्त्वा तथोक्तौ व्यतिरेकः, सेवयेवेत्युत्प्रेक्षा, जलजयोः पदाभिन्नत्वेनैव विधिपत्रदम्पत्यो रुता सहंसकीकरणसम्भावनाचाप्युत्प्रेक्षा । २ अत्र जन्मान्तरे कृततपाः परमैश्वर्यं लभते इति जलजं पदनामरूपतां प्रापेत्युत्प्रेक्षणादुत्प्रेक्षा ततश्चाभेदव्यञ्जनाद्रूपकमपि व्यङ्ग्यम् ।

१ वस्तुतस्तु युतेः शतरि, ततो ङीपि च कृते 'अनुदात्तादेरञ् । ४ । ३।१४४' इत्यञि' 'भस्याढे तद्धिते' इति पुंस्त्वे रूपमिदम् । अन्यथा भाष्यमतेन यौवनैरित्येव सम्पद्येत । २ स्वर्गाङ्गना अपि नास्याः समा इति तासामुपमानभूतानां तिरस्कारात् प्रतीपम् ।

कोऽपि तरुणो न विद्यत इति । अन्यत्रापि पूर्वपक्षापेक्षया सिद्धान्तस्य बलवत्त्वम् ॥ ४२ ॥

अनया तव रूपसीमया
कृतसंस्कारविबोधनस्य मे ।
चिरमप्यवलोकिताद्य सा
स्मृतिमारूढवती शुचिस्मिता ॥ ४३ ॥

अनयेति ॥ चिरं चिरकालमवलोकितापि शुचिस्मिता रम्यहास्या सा भैमी अद्य मे स्मृतिं स्मृतिपथमारूढवती प्राप्ता । किम्भूतस्य मे—तवानया दृश्यमानया रूपसीमया लावण्यमर्यादया कृतं जनितं संस्कारविबोधनं पूर्वाहितभावनाख्यसंस्कारसमुद्बोधो यस्य । तद्रूपयोग्यत्वात्त्वद्रूपदर्शने सा स्मृतेत्यर्थः । सदृशदर्शने हि स्मृतिर्भवति 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः ।' इति । रूपसीमयेति 'डाबुभाभ्यामन्यतरस्याम्४।१।१३' इति डापि तृतीया ॥ ४३ ॥

त्वयि वीर विराजते परं
दमयन्तीकिलकिञ्चितं किल ।
तरुणीस्तन एव दीप्यते
मणिहारावलिरामणीयकम् ॥ ४४ ॥

त्वयीति ॥ किलेति संभावनायाम् । हे वीर हे शूर, किल दमयन्त्याः किलकिञ्चितं शृङ्गारचेष्टाविशेषः त्वयि परं केवलं विराजते विशेषेण शोभते । वीरस्यैव शृङ्गारित्वं युज्यते, वीरानुरागिण्यश्च स्त्रिय इति सूचनार्थं वीरेति पदम् । अर्थान्तरन्यासं दृष्टान्तत्वेनाह—मणिहारावलेर्मुक्ताहारसमूहस्य रामणीयकं सौन्दर्यं तरुणीस्तने तरुण्या एव कुचे शोभते, न तु वृद्धयोषितः । 'क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितम् ।' इत्यालङ्कारिकाः- रामणीयकं कामनीयकवत् ॥ ४४ ॥

तव रूपमिदं तया विना
विफलं पुष्पमिवावकेशिनः ।
इयमृद्धधना वृथाऽवनी
स्ववनी सम्प्रवदत्पिकाऽपि का ॥ ४५॥

पुनरुत्कण्ठार्थमाह—

तवेति ॥ हे राजन्, तव इदं दृश्यमानमनुपमं रूपं भैम्या विना विफलं निरर्थकम् । कस्य किमिव—अवकेशिनो वन्ध्यवृक्षस्य विफलं फलरहितं पुष्पमिव, तद्यथा न शोभते । अथवा—अवकेशिनो मुण्डितमुण्डस्य शिरसि धार्यमाणं पुष्पं यथा विफलम् । तया विना न केवलं रूपं विफलं, किं तु—ऋद्धधना पूर्णधना इयमवनी पृथ्व्यपि वृथा व्यर्थैव । तथा— संप्रवदन्तः कूजन्तः पिकाः कोकिला यस्यां सा स्ववन्यपि स्वयमारोपिता विलासवाटिकापि का, न कापि भैमी प्राप्त्यभावे सर्वमेतन्निरर्थकमित्यर्थः । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । वनी इति गौरादित्वान्ङीष् । अव्यक्तवाक्त्वात्सम्प्रवददित्यत्र वदेः शतृ ॥ ४५ ॥

अनया सुरकाम्यमानया
सह योगः सुलभस्तु न त्वया ।
घनसंवृतयाऽम्बुदागमे
कुमुदेनेव निशाकरत्विषा ॥ ४६ ॥

अहमेवैतद्रूपयोग्यस्तर्हि सुलभा कथमित्यत आह—

अनयेति ॥ यतः सुरैर्देवैरपि काम्यमानयाऽभिलष्यमाणयाऽनया भैम्या सह योगः संबन्धस्तु त्वया न सुलभः सुप्रापः । तत्र युक्तिमाह—कः केनेव । अम्बुदागमे वर्षाकाले घनसंवृतया मेघच्छन्नया निशाकरस्य चन्द्रस्य त्विषा दीप्त्या सह संबन्धः कुमुदेनेव सुप्रापो न प्राप्स्यते, परंतु दुःखेन मदुपायेन सा प्राप्या । तत्र गत्वा त्वय्येव तस्या अनुरागमुत्पाद्य त्वामेव यथा भजेत्तथा करिष्यामीति भावः । यथा वर्षासु मेघानामतिप्रतिबन्धकतया कुमुदेन चन्द्रज्योत्स्ना दुष्प्रापाऽपि वायुना दैवान्मेघनिराकरणे प्राप्यते तथेत्यर्थः । सुलभः । खलर्थत्वेन षष्ठीनिषेधात्त्वयेति तृतीया ॥ ४६ ॥

तदहं विदधे तथातथा
दमयन्त्याः सविधे तव स्तवम् ।
हृदये निहितस्तया भवानपि नेन्द्रेण यथाऽपनीयते ॥ ४७ ॥

व्यञ्जितमर्थं व्यक्तीकुर्वन्निगमयति—तदिति ॥ तत्तस्मात् योग्यस्य सान्तरायत्वात्कारणादहं दमयन्त्याः

---

१ अत्र ततः सेव त्वं,त्वामिव सेत्युपमेयोपमाऽवसीयत इति सैव व्यङ्ग्या । २ अत्र स्मरणम् ।३ अत्रर्थान्तरन्यास इत्युक्तमेव व्याख्यायाम् ।

१ अत्र तया विनेति विनोक्तिः । पुष्पमिवेत्युपमा चार्थालङ्कारौ । वनीति पिकेति च यमके । २ अत्रोपमा तावत् स्पष्टा, इयं प्रागुक्ते दृष्टान्तरूपतामवलम्बते इत्यनयोरङ्गाङ्गिभावात्मा सङ्करः ।

सविधे समीपे तत्र स्तवं स्तुतिं तथातथा तेनतेन प्रकारेण विदधे करिष्यामि तया भैम्या हृदये मनसि निहितोऽवधृतो भवान्यथा येन प्रकारेणेन्द्रेणापि नापनीयते दूरीक्रियते, किंपुनर्मनुष्येण। इन्द्रादेरप्यधिकतया त्वं वर्णनीयः। विदधे, अपनीयते इति च वर्तमानसामीप्ये वर्तमानवत्प्रत्ययः। विदधे आशंसायां भूतवद्वा ॥ ४७॥

तव सम्मतिमेव केवला-
मधिगन्तुं धिगिदं निवेदितम्।
ब्रुवते हि फलेन साधवो
न तु कण्ठेन निजोपयोगिताम् ॥ ४८॥

अनौचित्यं परिहरति—तवेति ॥ इदं दमयन्तीयोजनं तवानुमतं नवेति केवलां संमतिमनुमतिमाधिगन्तुमेव ज्ञातुमेव, प्राप्तुमित्यर्थः। इदं निवेदितं विज्ञप्तिं धिक्। हि यतः साधवो महान्तो निजोपयोगितां निजोपकारितां फलेन फलनिष्पत्त्या ब्रुवते, न तु कण्ठेन कण्ठस्थेन वचनेन। तव केवलां सम्मतिमेवाधिगन्तुं ज्ञातुमेवेदं निवेदितं, मम वचनं तथाऽपि निन्द्यम्। ममोपकारः कर्तव्य इति केनापि नोच्यत इति वा। यतः—साधवो न एतादृशा भवन्तीति वा ॥ ४९ ॥

तदिदं विशदं वचोऽमृतं-
परिपीयाभ्युदितं द्विजाधिपात्।
अतितृप्ततया विनिर्ममे
स तदुद्गारमिव स्मितं सितम्॥ ४९ ॥

तदिति ॥ स नलो द्विजाधिपात्पक्षिश्रेष्ठात्, चन्द्राच्च अभ्युदितं निर्गतमिदं पूर्वोक्तं विशदं प्रव्यक्तं धवलं च वचोलक्षणममृतं, परिपीय सादरमाकर्ण्य, पीत्वा चाऽतितृप्ततयाऽतिहृष्टत्वेन सितं श्वेतं स्मितं तस्य पीतस्यामृतस्योद्गारमिव विनिर्ममे चकार। श्वेतस्य श्वेत एवोद्गारो भवतीति सितपदम्। अन्योऽप्यातितृप्तोऽजीर्णत्वाद्यमुद्गारं करोति, सोऽपि भुक्तानुरूपएव भवति। साधवः स्मितभाषिणः। भैमीप्राप्तिसम्भावनाजातहर्षाद्वा स्मितम्। उद्गार इति 'उन्न्योर्ग्रः ३। ३। २९।' इति घञ् ॥ ४९ ॥

परिमृज्य भुजाग्रजन्मना
पतगं कोकनदेन नैषधः।
मृदु तस्य मुदेऽकिरद्गिरः
प्रियवादामृतकूपकण्ठजाः ॥ ५० ॥

परीति ॥ नैषधो नलस्तस्य हंसस्य मुदे हर्षाय गिरो वाचो मृदु कोमलं यथा तथाऽकिरदुवाच। किं कृत्वा—भुजाग्रे बाहुप्रान्ते जन्मोत्पत्तिर्यस्य तेन तदात्मना कोकनदेन रक्तोत्पलेन, करेणेत्यर्थः। पतगं परिमृज्य संस्पृश्य। किम्भूता गिरः—प्रियवादामृतं स्तुतिवचोलक्षणममृतं तस्य कूपः, आकर इत्यर्थः, एवंभूतो यः कण्ठस्तस्माज्जाताः। मञ्जुलं सरसं च वच उवाचेति भावः। मृदु परिमृज्येति वा 'रक्तोत्पलं कोकनदम्' इत्यमरः ॥ ५० ॥

न तुलाविषये तवाकृति-
र्नवचोवर्त्मनि ते सुशीलता।
त्वदुदाहरणाकृतौ गुणा
इति सामुद्रकसारमुद्रणा॥ ५१ ॥

नेति ॥ हे हंस, तव आकृतिः स्वरूपं तुल्यत इति तुला उपमेयं तल्लक्षणे विषये न। उपमानाभावात्, किं तूपमानमेव। तुल्यतेऽनयेति तुला उपमानं तस्य विषये लक्ष्ये उपमेयमध्ये न तिष्ठति, किं तूपमानमेवेति वा। तथा—ते सुशीलता सुस्वभावत्वं सुवृत्तत्वं

१ अत्रानुप्रासः। २अत्र क्षेपो नामालङ्कारः, निजोक्तस्य तदिदमित्योर्धिगिदामित्यादिना तिरस्कारात्। एवमाक्षिप्तस्यापि परार्द्धावतारणेन समर्थनमित्यर्थान्तरन्यासोऽलङ्कारश्च।

१वचसोऽमृतत्वोक्तौ रूपकम्, तत्सिद्धये श्लेषेण द्विजाधिपादित्यत्र हंस–चन्द्रयोरभिन्नतारूपणम्, परिपानादिरूपणं चेति श्लिष्टं परम्परितं तत्। तदुद्गारमिवेत्युत्प्रेक्षा। यद्यपि दूरान्वयः तथाऽपि स "द्विजाधिपादभ्युदितममृतं परिपीयातितृप्ततया तदुद्गारमिव सितं स्मितं यथा स्यात्तथा तदिदं ( वक्ष्यमाणं ) विशदं वचनं विनिर्म्ममे" इति विवक्षा स्यात्तर्हि प्रपाऽधिपपान्थविशेषयोरुदन्तो व्यज्यते समासोक्तिर्वाऽङ्गीक्रियेत। २ करकोकनदयो रूपकम्, न तु तदतिशयोक्तिः भुजाग्रावयवपदार्थस्यैव करत्वात् तस्यानिगरणे तदतिशयोक्तित्वासम्भवाच्च। एवं कूपकण्ठयो रूपकम्। किरणं गिरां कुसुमाभेदमाहेति तत्र रूपकातिशयोक्तिः। यथा कश्चिन् मुदे कस्यापि कूपस्योपकण्ठं जातानि कुसुमानि तदुपरि प्रक्षिपति तथेति वस्तुध्वनिः, समासोक्तिः। उपमाध्वनिर्वा।

वा वचोवर्त्मनि न वाग्गोचरो न, वर्णयितुं न शक्यत इत्यर्थः । तथा—आकृतौ गुणा इति 'यत्राकृतिस्तत्र गुणा वसन्ति' इति सामुद्रकशास्त्रस्य सारो रहस्यं तस्य मुद्रणा नियमना, सङ्ग्रह इति यावत् । सा त्वदुदाहरणा त्वमेवोदाहरणं दृष्टान्तो यस्याः । अन्यथा सा निर्विषया स्यादिति भावः । 'तवाकृतिं गुणांश्च दृष्ट्वा सामुद्रिकशास्त्रकारैः 'यत्राकृतिस्तत्र गुणा वसन्ति ' इत्युक्तम् । उदाहरणं प्रथमदृष्टान्तस्त्वमित्यर्थः, इति वा । तुलेति कर्मणि करणे च ' घञर्थे कविधानम्' इति (वा.) कः । ण्यन्तत्वात्तुलनेति यद्यपि भवितव्यम् । तथाऽपि 'अतुलोपमाभ्याम् ' इति निर्देशात्कप्रत्ययः सामुद्रकोति समुद्रेण प्रोक्तमित्यस्मिन्नर्थे'तेन प्रोक्तम् ४।३।१०१'इत्यणि स्वार्थे कन् । 'सामुद्रिक' इति पाठेऽणन्तादस्त्यर्थे 'अत इनिठनौ ५ । २ । ११५' इति ठन् ॥ ५१ ॥

न सुवर्णमयी तनुः परं
ननु किं वागपि तावकी तथा ।
न परं पथि पक्षपातिता-
ऽनवलम्बे किमु माद्दशेऽपि सा ॥५२॥

नेति ॥ ननु संबोधने । तावकी तवेयं तनुः परं केवलं सुवर्णमयी हेमविकारो न, किंतु तावकी वागपि वाण्यपि तथा किं सुवर्णमयी शोभना वर्णा यस्यां सा । किं प्रश्ने । वाक्पटुत्वं, शरीरसौन्दर्यं च त्वय्येवेति सूचितम् । नु संबोधने, न इति पृथक् । वागपि तथा न किम्, अपि तु तथैवेति वा । अन्यच्च तव पक्षपातिता पक्षाभ्यां पतति गच्छत्येवंशीलः पक्षपाती तस्य भावस्तत्ताऽनवलम्बे निरालम्बे पथि अन्तरिक्षमार्गे परं केवलं न, किंतु सा पक्षपातिता स्वयगान्तःपातित्वमनुकूलवर्तित्वमनवलम्बे निर्गतिके माद्दशे मत्सद्दशे किमु किं नेति वा । निरालम्बनस्य मम त्वमेवालम्बनमिति भावः ॥५२॥

भृशतावभृता मया भवा-
न्मरुदासादि तुषारसारवान् ।
धनिनामितरः सतां पुन-
र्गुणवत्संनिधिरेव सन्निधिः ॥ ५३ ॥

भृशेति ॥ हे हंस, मया भवान्मरुद्वायुरासादि प्राप्तः । किम्भूतेन—भृशतापमतिशयितकामज्वरं बिभर्तीति । किम्भूतो मरुत्—तुषारस्य हिमस्य सारः श्रेष्ठो भागो विद्यतेऽस्मिन् । ज्वरतप्तस्य शीतलेन वायुना यथा तापनाशस्तथा भवत्संगत्या ममेत्यर्थः । तदेव दृष्टान्तेनाह—धनिनां धनवतामितर एतद्विलक्षणो नीचो द्रव्यरूपो वा संनिधिः सम्यङ्निधिः । सतां विदुषां पुनर्गुणवतां संनिधिः समागम एव संनिधिः सम्यग् संनिधिर्न त्वन्यः । निधिप्राप्त्या धनिकानां यथा हर्षस्तथा गुणिजनसंनिधिवासिनां हर्षः । सन्निति पृथग्वा । 'इतरस्त्वन्यनीचयोः' इत्यमरः ॥ ५३ ॥

शतशः श्रुतिमागतैव सा
त्रिजगन्मोहमहौषधिर्मम ।
अमुना तव शंसितेन तु
स्वद्दशैवाधिगतामवैमि ताम् ॥ ५४ ॥

शतश इति ॥ त्रिजगतां मोहे मूर्च्छाप्रापणे वशीकरणे च महौषधिरुत्तमौषधिः संमोहिनी विद्येत्यर्थः । सा भैमी शतशः शताद्बहुभ्योऽनेकवारं वा मम श्रुतिमागतैव । अनेकवारं मयाऽऽकर्णितैवेत्यर्थः । अमुनाऽनेन तव शंसितेन त्वत्कर्तृकेण सौन्दर्यकथने तु पुनरहं तां भैमीं स्वद्दशैव स्वनेत्रेणैवाधिगतां दृष्टामवैमि जाने । यद्येवंविधा दृष्टा त्वया तर्हि मयापि दृष्टैवेत्यतिमित्रतया लौकिक्युक्तिः । यच्च बहुवारमाकर्ण्यते तत्कदाचिद् दृश्यतेऽपि । शतश इति बह्वर्थकारकत्वाच्छस् ॥ ५४ ॥

अखिलं विदुषामनाविलं
सुहृदा च स्वहृदा च पश्यताम् ।
सविधेऽपि न सूक्ष्मसाक्षिणी-
वदनालङ्कृतिमात्रपक्षिणी॥ ५५ ॥

नेत्रादपि मित्रवचनस्याधिक्यमाह—

अखिलमिति ॥ चौ तुल्ययोगार्थौ । सुहृदा मित्रेण च स्वहृदा स्वमनसा चाखिलं समस्तं वस्त्वनाविलम-

१ आकृतिसुशीतलतयोरतुलत्वोक्त्या व्यतिरेकः, एवमाकृतौ गुणा इत्यत्र त्वमेवोदाहरणमित्यत्रापि । किंतु काव्यलिङ्गमपीति । ६ अत्र श्लेष उत्प्रेक्षा च ।

१ सन्निधिरिति यमकम्, वचसि मरुत्वारोपेरूपकातिशयोक्तिः दृष्टान्तश्च । २ अत्र तत्पदार्थभूताया दमयन्त्याः श्रुतिपदस्य श्लिष्टत्वात्र ताद्दशमहौषधित्वेन रूपणस्य तात्पर्यान्तरपरतयाऽपि सम्भवाच्च परमात्ममूर्त्तिरूपता व्यज्यते, श्रुतिमात्रविषया द्दगाऽप्यधिगमनं विरुद्धमितिविरोधाभासो भाविकं च ।

संदिग्धम्, अविपर्यस्तं च आगमानुमानाभ्यां पश्यताम्, अनाविलमसंदिग्धं यथा भवति तथा वा जानतां विदुषां ज्ञातॄणामक्षिणी नेत्रे वदनालङ्कृतिमात्रं मुखालङ्करणमेव न त्वन्यत्तयोः प्रयोजनम्। यतः किम्भूते अक्षिणी—सविधेऽपि समीपेऽपि न सूक्ष्मवस्तुग्राहके। यन्नेत्रद्वयं स्वगतं कज्जलारक्तत्वादिकमपि ज्ञातुं न शक्नोति तद्दूरस्थं कथं गृह्णीयात्। असामीप्यादिति भावः। अतः प्रत्यक्षं ताभ्यां दुर्बलमित्यर्थः। मित्रस्य प्रथमग्रहणं हृदयापेक्षया प्राधान्यद्योतनार्थम्। एवंविधे अक्षिणी विदुषामलंकरणमात्रं न, किंत्वलंकृतिरेव वद कथय इति वा। सुहृदा देशकालादिव्यवहितमपि पश्यति, न तु नेत्राभ्याम्।सुहृदेति 'सुहृद्दुर्हृदौ मित्रामित्रयोः ५। ४। १५०' इति साधुः। नसूक्ष्मेति नेन समासः सूक्ष्मसाक्षिणी नेति केचित्। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। अत्रावधारणे मात्रशब्दः॥ ५५॥

> अमितं मधु तत्कथा मम
> श्रवणप्राघुणकीकृता जनैः।
> मदनानलबोधने भवे-
> त्खग धाय्या धिगधैर्यधारिणः॥ ५६॥

अमितामिति॥ हे खग हंस, जनैर्लोकैः श्रवणयोः प्राघुणकीकृताऽतिथीकृता श्राविता तस्या भैम्याःकथा मम मदनानलस्य कामाग्नेर्बोधने दीपने धाय्या अग्निसंधुक्षणे समर्था ऋग्भवेद्भवति। तया यथाऽग्निर्दीप्यते तथा तत्कथया मम मदनाग्निर्दीप्यते। किंभूता तत्कथा—अमितमनुपमं, बहु वा मधु दिव्यापरिमितामृततुल्येत्यर्थः। अतो धैर्यधारिणो मत्सदृशानधीरान्पुरुषान्धिक्। एतादृशा अधीरा निन्द्याः। मम (इत्यस्य) विशेषणम्, अधैर्यधारिण इति वा। तदा मां धिगित्यर्थः।'ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धनी।' इत्यमरः॥ ५६॥

> विषमो मलयाहिमण्डली-
> विषफूत्कारमयो मयोहितः।
> खग कालकलत्रदिग्भवः
> पवनस्तद्विरहानलैधसा॥ ५७॥

विषम इति॥ हे खग, तद्विरहानलो भैमीवियोगवह्निस्तस्यैधसा इन्धनेन मया कालकलत्रादिग् दक्षिणा तत्र भवः पवनो वायुर्दक्षिणवातः विषमो दुःसह ऊहितस्तर्कितः। किम्भूतः—मलयाचले वर्तमाना अहिमण्डली भुजंगसमूहस्तस्य विषं तस्य फूत्कारमयोऽग्निसंधुक्षणधमनवायुरूपः। ।विषं माति आत्मना समीकरोतीति वा। विषं मयते ददाति वा। कालयति सर्वभूतानीति कालस्तत्पुत्रस्त्वेवंविध एव संभाव्यते। फूत्कारसंधुक्षितेन वह्निना यथा काष्ठं दह्यते तथा मलयपवनसंधुक्षितेन विरहानलेनाहमपि दह्ये इति भावः। मलयाचले चन्दनबाहुल्यात्सर्पबाहुल्यम्। विषम इति 'आतोऽनुपसर्गे कः। ३। २। ३' फूत्कारमय इति ताद्रूप्ये प्राचुर्ये वा मयट्। कालेति नोदनार्थात्कालयतेश्चौरादिकात्पचाद्यच्॥ ५७॥

> प्रतिमासमसौ निशापतिः
> खग संगच्छति यद्दिनाधिपम्।
> किमु तीव्रतरैस्ततः करै-
> र्मम दाहाय स धैर्यतस्करैः॥ ५८॥

प्रतिमेति॥ हे खग, असौ निशापतिश्चन्द्रः प्रतिमासं मासे मासे यद्दिनाधिपं सूर्यं संगच्छति प्रविशति स चन्द्रस्ततः सूर्यसङ्गात्तीव्रतरैरतितीक्ष्णैर्धैर्यतस्करैर्धैर्यचोरैः करैः किरणैः मम दाहाय किमु।जात इति शेषः। उपलक्षित इति वा। विधोर्विरहिणां संतापकारित्वं स्वत एव रवेस्तैक्ष्ण्यमादायोत्प्रेक्षितम्। अन्योऽपि स्वतोऽपकारेऽसमर्थोऽन्यसहायोऽपकारं करोति। प्रतिमासम्। वीप्सायामव्ययीभावः। संगच्छतीति सकर्मकत्वात्तङभावः॥५८॥

> कुसुमानि यदि स्मरेषवो
> न तु वज्रं विषवल्लिजानि तत्।
> हृदयं यदमूमुहन्नमू-
> र्मम यच्चातितरामतीतपन्॥ ५९॥

कुसुमेति॥ यदि स्मरेषवः कामबाणाः कुसुमानि पुष्पाणि न तु वज्रम्। वज्ररूपा यदि न भवन्तीत्यर्थः। तत्तर्हि तानि वा कुसुमानि विषवल्लिजानि विषवल्लीभवानि यद्वा—मम ते स्मरेषवो वज्रमेव न तु कुसुमानि। लोकप्रसिद्धिविरुद्धं यदि चेत्तर्हि तानि विषवल्लीजातानि भविष्यन्ति। कुसुमत्वमस्तु विषवल्लिजत्वं मास्तु

१ यमकं हृदेत्यावर्तनात्, दर्शने सुहृत्स्वहृदोः साधनो क्तैर्योगपद्येन साधनत्वमिति दीपकम्, उक्तार्थाक्षेपणादाक्षेपः, क्षिणीति यमकम्। २ अत्र रूपकम्।

१ अत्र रूपकं,काव्यलिङ्गं च। २ अत्रोत्प्रेक्षा काव्यलिङ्गं च।

विपक्षे बाधकमाह—यद्वशगात् अमूः स्मरेषवो मम हृदयमतितरामतिशयेनामूमुहन्मोहयामासुः अतीतपंश्च तापयामासुः । अत्यन्तमोहतापौ विषवल्लीजलेन विना न संगच्छेते । तस्माद्विषवल्लीजान्येवेत्यर्थः 'इषुर्द्वयोः' इत्यमरः । अमूमुहन् अतीतपन्निति मुहेस्तपेश्च ण्यन्ताल्लुङ् । तयोरकर्मकत्वात् 'गतिबुद्धिप्रत्यवसानार्थशब्द-कर्म्मकाकर्म्मकाणामणि कर्ता स णौ१ ।४ । ५२' इत्यणौ कर्तुर्णौ कर्मत्वात् हृदयमिति द्वितीया । अतितराम् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५ । ४ । ११ इत्यामुः ॥ ५९ ॥

तदिहानवधौ निमज्जतो
मम कंदर्पशराधिनीरधौ ।
भव पोत इवावलम्बनं
विधिनाऽऽकस्मिकसृष्टसंनिधिः ॥६०॥

तदिति ॥ हे हंस, तत्तस्मात्त्वं ममावलम्बनमाधारो भव । क इव— पोत इव समुद्रतरणयानपात्रमिव । किम्भूतस्य मम—इहास्मिन्ननवधौ निर्मर्यादे कंदर्पशरैर्जनितो य आधिर्मानसी व्यथा तद्रूपे नीरधौ समुद्रे निमज्जतो ब्रुडतः । किम्भूतः—विधिना ब्रह्मणा, दैवेन वा आकस्मिकोऽकस्मात्सृष्टो जातः कृतः सन्निधिः सांनिध्यं यस्य । अपारे समुद्रे निमज्जतः कस्यचिद्दैववशात्समीपगतः पोतो यथा आलम्बनं भवति, तथा त्वमपि भवेति भावः । हेतुशून्यः कालोऽकस्मादित्यनेनाव्ययेन लक्ष्यते । तत्र भव आकास्मिकः । अध्यात्मादित्वाट्ठञ् 'अव्ययानां भमात्रे टिलोपः' ॥ ६० ॥

अथवा भवतः प्रवर्तना
न कथं पिष्टमियं पिनष्टि नः ।
स्वत एव सतां परार्थता
ग्रहणानां हि यथा यथार्थता ॥६१॥

अथवेति ॥ अथवेति पूर्वापरितोषे । इयम् 'भव पोत इवावलम्बनम्' इत्यादिका नोऽस्मत्कर्तृका भवतस्त्वत्कर्मिका प्रवर्तना प्रेरणा पिष्टं पिष्टमेव कथं न पिनष्टि । पिष्टपेषणन्यायं कथं नानुसरति व्यर्थमित्यर्थः । ननु स्वतः प्रवृत्तौ पिष्टपेषणं न तथास्तीत्याशङ्कायां स्वतःप्रवृत्तिं दृष्टान्तेन समर्थयते—हि यस्मात्सतां साधूनां परार्थता परोपकारित्वं स्वत एव । परप्रेरणं नापेक्षते इत्यर्थः । तस्मात्पिष्टपेषणतुल्या प्रवर्तनेति भावः । यथा ग्रहणानां ज्ञानानां यथार्थता प्रामाण्यं स्वत एव । ज्ञानं स्वतः प्रमाणमिति मीमांसकाः । यद्वा गृह्यते ज्ञायतेऽर्थो यैस्तानि शब्दास्तेषां यथार्थतानुगतार्थता स्वत एव । वृक्षशब्दोच्चारणमात्रे मूलशाखापत्रादि प्रत्यक्षमिव यथा स्फुरति तथा सतो नाममात्रे गृहीते तेषां परोपकारित्वं स्फुरत्येव । 'एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये—' इत्यादि भर्तृहरिः । अन्यद्विस्तरभयान्न लिख्यते । प्रवर्तनेति 'ण्यासश्रन्थो युच् ३ । ३ । १०७' इति युच् । न इति 'अस्मदो द्वयोश्च १ । २ । ५९' इत्येकत्वेऽपि बहुवचनम् ॥ ६१ ॥

तव वर्त्मनि वर्ततां शिवं
पुनरस्तु त्वरितं समागमः ।
अयि साधय साधयेप्सितं
स्मरणीयाः समये वयं वयः ॥ ६२ ॥

तवेति ॥ वर्त्मनि मार्गे तव शिवं कल्याणं वर्ततां भवतु । कृतकार्यस्य तव त्वरितं शीघ्रं समागमो मया सह मेलनं पुनरस्तु भवतु । अयि हंस, ईप्सितं भैमीप्राप्तिलक्षणं मदभिलाषितं साधय साधय निष्पादय । त्वरातिद्योतनार्थं वीप्सा । साधय गच्छ, अभिमतं साधय कुर्विति वा । हे वयः पक्षिन्, वयं समये सखीराहित्यसमये एकान्ते स्मर्तव्याः । तस्यामस्मदभिलाष उत्पादयितव्य इति केचित् । अथ च किंचित्प्रतिबन्धकाशङ्कासमये वयं वैन्यादयः कार्यसिद्ध्यर्थं स्मरणीयाः । 'अनुनये त्वयि' इत्यमरः । वयम् 'अस्मदो द्वयोश्च १ । २ । ५९' इत्येकत्वे बहुवचनम् । पक्षे 'त्यदादीनां मिथः सहोक्तौ यत् परं तच्छिष्यते' इत्यस्मदः शेषः ॥ ६२ ॥

इति तं स विसृज्य धैर्यवा-
न्नृपतिः सूनृतवाग्बृहस्पतिः ।
अविशद्वनवेश्म विस्मितः
स्मृतिलग्नैः कलहंसशंसितैः ॥ ६३ ॥

इतीति ॥ स नृपतिर्नल इति पूर्वोक्तप्रकारेण तं हंसं विसृज्य प्रस्थाप्य वनवेश्म उद्यानगृहमविशत् । किम्भूतः—

---

१ अत्रोत्प्रेक्षा काव्यलिङ्गं च । २ अत्र रूपकम् उपमा च ।

१ अत्रार्थान्तरन्यासः । २ अत्रानुप्रासो वकारादेरनेकशोऽनुवृत्तेः ।

धैर्यवान्धैर्ययुक्तः । यावद्धंसागमनं तत्रैव प्रतीक्षाकारित्वात् । तथा—सूनृतवाचि प्रिये सत्ये च वचसि बृहस्पतिरिव, न तूपचारवादी । तथा—रमणीयत्वात्स्मृतिगोचरं स्मरणविषयं लग्नैर्गतैः कलहंसशंसितैर्हंसभाषितैः कलैर्गम्भीरैः हंसभाषितैर्वा विस्मितः साश्चर्यः ॥ ६३ ॥

अथ भीमसुताऽवलोकनैः
सफलं कर्तुमहस्तदेव सः ।
क्षितिमण्डलमण्डनायितं
नगरं कुण्डिनमण्डजो ययौ ॥ ६४ ॥

अथेति ॥ अथानन्तरं सोऽण्डजो हंसो भीमसुता भैमी तस्या अवलोकनैर्दर्शनैस्तदेवाहर्दिनं सफलं सार्थकं कर्तुं कुण्डिनं नाम नगरं ययौ जगाम । किम्भूतम्—रमणीयत्वाद्भैम्यधिष्ठितत्वाच्च क्षितिमण्डलस्य मण्डनायितमलंकारीभूतं मण्डनमिवाचरितम् । तदेवेत्यनेन क्षणमपि विलम्बो न कृतः । तेन परोपकारित्वं सूच्यते ॥ ६४ ॥

प्रथमं पथि लोचनातिथिं
पथिकप्रार्थितसिद्धिशंसिनम् ।
कलसं जलसम्भृतं पुरः
कलहंसः कलयाम्बभूव सः ॥ ६५ ॥

तद्गमने श्लोकत्रयेण शकुनान्याह—

प्रथममिति ॥ स कलहंसः प्रथमं पथि मार्गे लोचनातिथिं लोचनगोचरं जलसंभृतं जलपूर्णं घटं पुरोऽग्रे कलयांबभूव ज्ञातवान् । स्वानुकूलं शकुनमग्रहीदित्यर्थः । अतिथिशब्देनाकस्मिकोपस्थितिः सूच्यते । बुद्धिपूर्वकं शकुनं तथा न फलदं यथाकाऽऽस्मिकम् । किम्भूतं कलसम्—पथिकैः प्रार्थिता या सिद्धिस्तां शंसतीति शंसिनं द्योतकम् । पथिकः 'पथःष्कन्५।१।७५' ॥ ६५ ॥

अवलम्ब्य दिदृक्षयाऽम्बरे
क्षणमाश्चर्यरसालसंगतम् ।
स विलासवनेऽवनीभृतः
फलमैक्षिष्ट रसालसंगतम् ॥ ६६ ॥

अवलम्ब्येति ॥ स हंसोऽवनीभृतो नलस्य विलासवने क्रीडावने रसाले आम्रे संगतं लग्नं फलमैक्षिष्ट ददर्श । फलमात्रदर्शनं कार्यसिद्धिसूचकम्, सुतरामाम्रफलदर्शनमिति भावः । किं कृत्वा—क्षणं मुहूर्तं दिदृक्षया मार्गावलोकनेच्छयाऽम्बर आकाशे रमणीयोद्यानदर्शनाश्चर्यरसेनालसं मन्दं गतं गमनमवलम्ब्याश्रित्य इति पक्षिजातिः ॥ ६६ ॥

नभसः कलभैरुपासितं
जलदैर्भूरितरक्षुपं नगम् ।
स ददर्श पतङ्गपुंगवो
विटपच्छन्नतरक्षुपन्नगम् ॥ ६७ ॥

नभस इति ॥ स पतङ्गपुङ्गवः पक्षिश्रेष्ठो नगं पर्वतं ददर्श । किम्भूतम्—नभस आकाशस्य कलभैः करिशावकरूपैर्जलदैर्मेघैरुपासितम् । तथा—भूरितराः क्षुपा ह्रस्वशाखाशिफवृक्षा यस्मिन् । तथा—विटपैः शाखाभिश्छन्नास्तिरोहितास्तरक्षवो मृगादनाः श्वापदविशेषाः पन्नगाः सर्पाश्च यत्र । कलभदर्शनस्य शकुनस्वरूपत्वाज्जलदानां कलभत्वमुक्तम् । तरक्षुपन्नगदर्शनमशकुनमतस्तेषां छन्नत्वमुक्तम् । 'कलभः करिशावकः', 'ह्रस्वशाखाशिफः क्षुपः,'. 'तरक्षुस्तु मृगादनः' इत्यमरः । 'स्युरुत्तरपदे व्याघ्रपुङ्गव–' इत्यादिवचनात्पुङ्गवशब्दः प्रशंसावचनः प्रशस्तः पतङ्गः । 'प्रशंसावचनैश्च' इति समासः । छन्नेति 'वादान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ७।२।२७' इति साधुः । पन्नगेति 'सर्वत्रपन्नयोरुपसंख्यानम्' इति वार्तिकेन डः ॥ ६७ ॥

स ययौ धुतपक्षतिः क्षणं
क्षणमूर्ध्वायनदुर्विभावनः ।
विततीकृतनिश्चलच्छदः
क्षणमालोककदत्तकौतुकः ॥ ६८ ॥

स इति ॥ स हंस एवंभूतः सन् क्षणं—निर्व्यापारां स्थितिं ययौ, विररामेति भावः । किम्भूतः—क्षणं त्रिंशत्कलालक्षणं धुता कंपिता पक्षतिः पक्षमूलं येन।तथा—क्षणमूर्ध्वमयनं गमनं तेन दुर्विभावनो दुर्लक्ष्यः । देहलीदीपकन्यायेन काकाक्षिगोलकन्यायेन वा क्षण-

१अत्राप्यनुप्रासः, रूपकं च । २ अत्रानुप्रासः, उपमा च । ३ अत्रानुप्रासो यमकं, परिकरश्च ।

१ अत्र यमकम् रसालसंगतमित्यस्य भागान्ते आवर्तनात् वनादेरावृत्तेस्त्वनुप्रासः । २ अत्रापि पूर्ववद् यमकमनुप्रासश्च, रूपकं जलदानां कलभत्वेन रूपणात् । हंसस्य गरुडायितत्वं श्लेषेण प्रतिपादितमिति तत्पतनव्यवहारो व्यज्यते । न चैवं समासोक्तिः । विशेष्यपदस्याश्लिष्टत्व एव तदङ्गीकारात् । परिकरश्च अत्रानुगुणः ।

मित्यस्योभयत्रावृत्तेः।क्षणमित्यस्योभयत्रान्वय इत्यतः—क्षणं विततीकृतौ विस्तारितौ अत एव निश्चलौ निष्कम्पौ छदौ पक्षौ यस्य। अत एव क्षणं प्रमोदो यथा स्यात्तथा आलोककानां पश्यतां जनानां दत्तं कौतुकं येन। एकत्र दुर्लक्ष्यत्वादेव कौतूहलम्। आलोकयतेर्ण्वुल्। 'निर्व्यापार-स्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः॥ ६८ ॥

तनुदीधितिधारया रया-
द्गतया लोकविलोकनामसौ।
छदहेम कषन्निवालस-
त्कषपाषाणनिभे नभस्तले॥ ६९ ॥

तान्विति॥ असौ हंसः, अलसद्राज। किं कुर्वन्निव—लोकविलोकनं जननयनगोचरं गतया प्राप्तया तनुदीधितिधारया शरीरदीप्तिधारया, गमनवेगात्तन्वी कृशा या दीधितिधारा दीप्तिधारा तया वा कृत्वा कषपाषाणनिभे निकषोपलतुल्ये नभस्तले गगने छदहेम पक्षसुवर्णं शुद्धमशुद्धं वेति परीक्षार्थं कषन्निव घर्षन्निव। निकषे सुवर्णलेखाऽपि जनैर्विलोक्यते॥ ६९॥

विनमद्भिरधःस्थितैः खगै-
र्झटिति श्येननिपातशङ्किभिः।
स निरैक्षि दृशैकयोपरि
स्यदझांकारितपत्रपद्धतिः॥ ७० ॥

विनमद्भिरिति॥ स हंसः स्वापेक्षयाऽधःस्थितैः खगैः पक्षिभिरेकया दृशा दृष्ट्या उपर्यूर्ध्वं निरैक्षि दृष्टः। किम्भूतैः—श्येनस्य निपातशङ्किभिर्निपतनशङ्कनशीलैः। अत एव झटिति विनमद्भिर्नम्रीभूतैः किम्भूतः—(श्येननिपातशङ्कायां हेतुः) स्यदेन वेगेन झांकारिता झाम् इत्याकारकशब्दं कुर्वती पत्रपद्धतिः पक्षसरणिर्यस्य।श्येनन्नरतपक्षिजातिरियम्। झांकारितेति तारकादित्वादितच्। 'स्यदो जवे।६।४।२८' इति निपातः॥ ७० ॥

ददृशे न जनेन यन्नसौ
भुवि तच्छायमवेक्ष्य तत्क्षणात्।
दिवि दिक्षु वितीर्णचक्षुषा
पृथुवेगद्रुतमुक्तदृक्पथः॥ ७१ ॥

ददृश इति॥जनेन यन्गच्छन्नसौ हंसो न ददृशे न दृष्टः। किंभूतेन—भुवि भूम्यां तस्य हंसस्य छाया तच्छायमवेक्ष्य दृष्ट्वा तदवलोकनार्थं तत्क्षणात्तस्मिन्नेव क्षणे दिवि गगने दिक्षु दिशासु च वितीर्णं दत्तं चक्षुर्येन। किंभूतः-(यतः) पृथुनाऽतिशयेन वेगेन द्रुतं झटिति मुक्तस्त्यक्तो दृक्पथो दृष्टिमार्गो येन। भुवि तच्छायां दृष्ट्वा तदवलोकनार्थं यावदन्तरिक्षे दिक्षु च दृष्टिर्दीयते तावदेवातिवेगेन दूरगामित्वान्नालोकीति भावः। यन् इतीणः शतरि रूपम्। तच्छायम् 'विभाषा सेनासुराच्छायाशालानिशानाम् २।२।२५' इति नपुंसकत्वम्। दृक्पथः 'ऋक्पूरब्धूः पथामानक्षे ५।४।७४' इति समासान्तोऽप्रत्ययः॥ ७१ ॥

न वनं पथि शिश्रियेऽमुना
क्वचिदप्युच्चतरद्रुचारुतम्।
न सगोत्रजमन्ववादि वा
गतिवेगप्रसरद्रुचा रुतम्॥ ७२ ॥

न वनमिति॥ अमुना हंसेन पथि मार्गे क्वचिदपि प्रदेशे वनं न शिश्रिये नाश्रितम्। किंभूतम्—उच्चतराणां द्रूणां द्रुमाणां चारुता यत्र। तथा-वाऽथवा सगोत्रजं स्वज्ञातिहंसजातं रुतं नान्ववादि नानूदितम्। सगोत्रैः सह संवादो न कृत इत्यर्थः। किंभूतेन—गतिवेगेन गमनवेगेन प्रसरन्ती रुग्रुचिर्यस्य। वनस्थितिः स्वयूथ्यसम्भाषणं च पक्षिप्रकृतिः। विलम्बभयादुभयमपि तेन न कृतमिति गमने सादरत्वं सूचितम्। सगोत्रेति 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थान—वर्णवयोवचनबन्धुषु ६।३।८५' इति सः। रुगिति संपदादित्वाद्भावे क्विप्॥ ७२ ॥

अथ भीमभुजेन पालिता
नगरी मञ्जुरसौ धराजिता।
पतगस्य जगाम दृक्पथं
हरशैलोपमसौधराजिता॥ ७३ ॥

अथेति॥ अथ धराजिता राज्ञा भीमेन पालिताऽसौ मञ्जुः सुन्दरी कुण्डिनाख्या नगरी पतगस्य हंसस्य दृक्पथं

---

१ अत्र क्षणपदस्यैकार्थकत्वे तु कथितपदत्वं प्रसज्यतेति बोध्यम्। २ स्वभावोक्तिः परिकरश्चात्रालङ्कारौ। ३अत्र रयेति यमकम्, कषन्निवेत्युत्प्रेक्षा, निभ इत्युपमा च ४अत्र स्वभावोक्तिः,श्येननिपातशङ्कने स्यदझाङ्कारितपत्रपद्धतित्वं हेतुरित्यस्यानुक्तौ वाक्याभासतेति समाप्तपुनरुक्तत्वं न दुष्टम्।

१ अत्र परिकरः। काव्यलिङ्गं च। २अत्र यमकम्।

दृष्टिगोचरं जगाम । किम्भूतेन—भीमौ शत्रूणां भयजनकौ भुजौ यस्य । किंभूता—हरशैलः कैलासस्तदुपमैस्तत्सदृशैः सौधैः सुधाधवलितै राजगृहैः राजिता शोभिता। कैलासोऽपि भीमभुजेन हरभुजेन पालितः । सौधराजिता, असौ धराजिता इति विरोधाभासः ॥ ७३ ॥

**दयितं प्रति यत्र संतता**
**रतिहासा इव रेजिरे भुवः ।**
**स्फटिकोपलविग्रहा गृहाः**
**शशभृद्भित्तनिरङ्कभित्तयः ॥ ७४ ॥**

दयितमिति ॥ असौ का—यत्र नगर्यां गृहा भुवो नायिकातुल्याया रतिहासाः केलिहासा इव रेजिरे शुशुभिरे । किंभूता रतिहासाः—दयितं पृथ्वीपतिं भीमं प्रति संतता निरन्तराः, प्रवृत्ता वा । किम्भूता गृहाः—स्फटिकोपलाः स्फाटिकरत्नानि विग्रहः स्वरूपं येषाम् । स्फटिकरत्ननिमिता इत्यर्थः । तथा—शशभृच्चन्द्रस्तस्य भित्तं शकलं तद्वन्निरङ्का निष्कलङ्का भित्तयो येषाम् । गृहाणां शुभ्रत्वाद्धासतुल्यत्वम् । रतिसमये कान्तं प्रति स्त्रीणां हासा भवन्ति अन्यदा न । 'गृहाः पुंसि च भूम्न्येव', भित्तं शकलखण्डे वा' इत्यमरः । संतताः 'समो वालोपमेके' इति ( भा. ) पक्षे मलोपाभावः 'भित्तं शकलम्' इति साधु ॥ ७४ ॥

**नृपनीलमणीगृहत्विषा-**
**मुपधेर्यत्र भयेन भास्वतः।**
**शरणार्थमुवास वासरे-**
**ऽप्यसदावृत्त्युदयत्तमं तमः ॥ ७५ ॥**

नृपेति॥यत्र तमोऽन्धकारं नृपस्य राज्ञो नीलमणीनिर्मिता गृहास्तेषां त्विषस्तासामुपधेर्व्याजात् भास्वतः सूर्याद्भयेनेव हेतुना वासरे दिवसेऽपि शरणं गृहं रक्षितारं वा अर्थयते तादृशं सत् उवास वसति स्म । इन्द्रनीलनिर्मितगृहदीप्तयो न भवन्ति, किं त्वन्धकारोऽयमिति भावः । शत्रोर्भीतोऽन्योऽपि रक्षितारमाश्रयते, तदाश्रयेणोदयं प्राप्नोति च । किम्भूतं तमः—असती अविद्यमाना आवृत्तिर्व्याघुट्टनं यस्य तत् । अत एवातिशयेनोदयत्प्रसरत् उदयत्तमम् । ततः कर्मधारयो वा । अन्यत्र रात्रौ तमस्तिष्ठति दिवा व्यावर्तते, अत्र तु रात्रिंदिवम् । असती अविद्यमाना आवृत्तिः प्रतिबन्धकं सूर्यादि यस्य । अत एवोदयत्तममिति वा । सूर्यादेरिन्द्रनीलदीप्तिप्रतिबन्धकत्वाभावादतिनिबिडमिति वा। 'उपधिर्व्याजचक्रयोः' इति विश्वः । मणी इति 'कृदिकारादक्तिनः' इति ङीष् । भास्वत इति 'भीत्रार्थानां भयहेतुः १।४।२५' इत्यपादानत्वम् । शरणार्थमिति: चतुर्थी 'तदर्थार्थबलिहितसुखरक्षितैः २।१। ३६ ' इति समासः। पक्षे 'कर्मण्यण् ३।२।१' इत्यण् ॥ ७५ ॥

**सितदीप्रमणिप्रकल्पिते**
**यदगारे हसदङ्करोदसि ।**
**निखिलान्निशि पूर्णिमा तिथी-**
**नुपतस्थेऽतिथिरेकिका तिथिः ॥ ७६ ॥**

सितेति ॥ यदगारे यस्या नगर्या अगारे गृहेषु । जातावेकवचनम् । निशि रात्रावेकिका एकाकिनी पूर्णिमा तिथिर्निखिलान्प्रतिपदादीन्सकलांस्तिथीनतिथिर्याचको भूत्वा सन् उपतस्थे प्राप । आगन्तुकरूपेण संगत इत्यर्थः । किंभूते—सिताः स्फाटिका दीप्रा दीप्तिमन्तो ये मणयो रत्नानि तैः प्रकल्पिते निर्मिते । तथा—हसन्ती प्रकाशमाने अङ्करोदसी समीपद्यावापृथिव्यौ यस्य । यद्वा हसन्नङ्को मध्यो ययोरेवंविधे रोदसी द्यावाभूमी येन । सर्वास्वपि रात्रिपु सितमणिनिर्मितगृहप्रभापटलेन द्यावाभूम्योरन्तरालस्य प्रकाशमानत्वादन्धकाराभावात्पूर्णिमैव जातेति भ्रान्तिर्भवतीति भावः । 'तिथयो द्वयोः' इत्यमरः । दीप्रेति 'नमिकम्पिस्म्यजसकमहिंसदीपो रः ३।२।१६७' इति रः । उपतस्थे 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् ' इति संगतकरणे तङ् । एकैव एकिका । 'एकादाकिनिच्चासहाये ५।३।५२' इति स्वार्थे कः ॥ ७६ ॥

---

१ अत्रापि यमकमुपमा च । २ अत्र रतिहासा इवेत्युत्प्रेक्षा शशभृदित्याद्युक्तौ स्फटिकोपलविग्रहत्वं हेतुरित्यनयोः समर्थनीयत्वसमर्थकत्वाभ्यां काव्यलिङ्गं च ।

१ अत्रापह्नुतिरुपधेरित्यनेन मणिनीलिमानमपह्नुत्यमर्तःसद्भावसम्भावनात्, वासरेऽपीति निवृत्तिकारणसत्त्वेऽपि तमोनिवृत्तिरूपकार्यातिशयोक्त्या विभावना, सम्पत्तेस्तथात्वोक्तावुदात्तं च । २ अत्र परिकरः, यमकं पूर्णिमायाः सर्वदाऽसम्भवेऽपि सम्भावनादतिशयोक्तिः, तिथेरतिथित्वोक्तौ विरोधाभासः, पूर्णिमाया एकिका( प्रतिपत् )त्वमपि विरुद्धमित्यतोऽपि स एव । उदात्तं च यथोक्तेः ।

सुदतीजनमज्जनार्पितै-
र्घुसृणैर्यत्र कषायिताशया।
न निशाऽखिलयाऽपि वापिका
प्रससाद ग्रहिलेव मानिनी॥ ७७॥

सुदतीति॥ यत्र वापिका जलक्रीडादीर्घिकाऽखिलयाऽपि सकलयाऽपि निशा रात्र्या न प्रससाद न स्वच्छाऽभूत्। किम्भूता—सुदतीजनानां सुन्दरीसमूहानां मज्जनेन जलक्रीडया अर्पितैर्वितीर्णैर्घुसृणैः कुङ्कुमाङ्गरागैः कषायितः कलुषित आशयो मध्यं यस्याः। केव—ग्रहिला आग्रहवती मानिनीव सुन्दरीव। अनेन कुङ्कुमाङ्गरागबाहुल्यं सूच्यते। मानिन्यपि सपत्नीजने प्रतिफलितं प्रियकुङ्कुमाङ्गरागं दृष्ट्वा प्रियेण नमस्कारादिना प्रसादितापि सकलयापि निशा रात्र्या न प्रसीदति। सापि घुसृणैः कलुषिता। तथा—अशया शयनं शयः स्वप्नः स न विद्यते यस्या इति वा। सुदतीजने मज्जनमासक्तिरिति वा। शोभना दन्ता यस्याः सा। 'अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ५।४।१४५' इति चकारस्यानुक्तसमुच्चयार्थत्वान्नित्यं स्त्रीसंज्ञत्वात् 'स्त्रियां संज्ञायाम् ५।४।१४३' इति वा दन्त्रादेशः। निशा 'पद्दन्नोमासृद्धन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ६।१।६३' इति निशाया निश्। 'ग्रहोऽनुग्रहनिर्बन्धौ' इति विश्वः। ग्रहशब्दो निर्बन्धवाचकः। प्रकृते तु माननिर्बन्धः। तुदादेराकृतिगणत्वाश्रयणादिलच्[1]॥ ७७॥

क्षणनीरवया यया निशि
श्रितवप्रावलियोगपट्टया।
मणिवेश्ममयं स्म निर्मलं
किमपि ज्योतिरबाह्यमिज्यते॥ ७८॥

क्षणेति॥ यया नगर्या निशि मध्यरात्रे क्षणनीरवया क्षणमात्रं निःशब्दया मणिवेश्ममयं रत्नगृहरूपं निर्मलमुज्ज्वलमबाह्यं प्राकारमध्यस्थितं किमपि वक्तुमशक्यं ज्योतिस्तेज इज्यते स्म प्राप्यते स्म। किंभूतया—श्रित आश्रितो वप्रावलिरेव प्राकारपंक्तिरेव योगपट्टो यया। एतेन मणिगृहबाहुल्यं सूचितम्। अन्ययाऽपि योगिन्या क्षणमौनिन्या आश्रितयोगपट्टया च निर्मलमविद्यादिदोषरहितं किमपि वाङ्मनसयोरविषयम् अबाह्यमाभ्यन्तरमात्मलक्षणं ज्योती रात्रौ पूज्यते। विपर्यीक्रियत इत्यर्थः। यजेः प्राप्तिरप्यर्थः। क्षणेन परमात्मसाक्षात्काररूपेण यन्नीरं सात्त्विकभावजनितमश्रुजलं तद्याति प्राप्नोति तादृश्या वा। आदन्तत्वात्कः। तदुक्तं गीतायाम्—'या निशा सर्वभूतानाम्—' इत्यादि[2]॥ ७८॥

विललास जलाशयोदरे
क्वचन द्यौरनुबिम्बितेव या।
परिखाकपटस्फुटस्फुर-
त्प्रतिबिम्बानवलम्बिताम्बुनि॥ ७९॥

विललासेति॥ या नगरी क्वचन कस्मिंश्चिज्जलाशयोदरे जलाधारमध्येऽनुबिम्बिता प्रतिबिम्बिता द्यौरिव स्वर्ग इव विललास शुशुभे। मध्य एव प्रतिबिम्बितेत्यत्र हेतुमाह—परिखेति। प्राकारपरितो जलसहितो गर्तः परिखा तस्याः कपटं व्याजस्तेन स्फुटं प्रव्यक्तं स्फुरता प्रतिबिम्बेनानवलम्बितमसंबद्धमम्बु यस्य यत्र वा। महति जलाशये नगरीरूपाल्पपरिमाणा द्यौः प्रतिबिम्बिता। प्रतिबिम्बस्थाने चोदकं न दृश्यतेऽपरितस्तु दृश्यते। मध्य एव च प्रतिबिम्बितत्वात्परितो यदुक्तं सैव परिखेति भावः। नगर्याः स्वर्गसाम्यम्[3]॥ ७९॥

व्रजते दिवि यद्गृहावली-
चलचेलाञ्चलदण्डताडना।
व्यतरन्नरुणाय विश्रमं
सृजते हेलिहयालिकालनाम्॥ ८०॥

व्रजत इति॥ यद्गृहावली यस्याः प्रासादपङ्क्तिः तस्याश्चलाश्चञ्चला ये चेलाञ्चलपताकाऽग्राणि त एव, दण्डाः प्रतोदास्तैस्ताडना हननानि (कर्त्र्यः) दिवि गगने व्रजते गच्छते। हेलिः सूर्यस्तस्य हया अश्वास्तेषामालिः पङ्क्तिस्तस्याः कालनां प्रेरणां सृजते कुर्वते अरुणाय तन्नाम्ने सूर्यसारथये विश्रमं विश्रान्तिं व्यतरन्ददुः। पताकावस्त्राञ्चलस्यदर्शनेनारुणप्रतोदताडनबुद्ध्या सूर्याश्वश्रेणिस्त्वरिता गच्छति। अत एवारुणस्य विश्रान्तिः। एवं च गृहाणामुच्चत्वं, पताकायुक्तत्वं, तेन च लोकोत्तरत्वं

---

1 अत्रोपमा, वापिकाया मानिन्या साम्योक्तेः परिकरः, काव्यलिङ्गं च।

2 अत्रोदात्तं, रूपकं च यथा अत्र वस्तु व्यज्यते तच्च यथेत्यादिना स्पष्टीकृतमेव व्याख्याकृता। 2 अत्रोत्प्रेक्षा, कपटपदेन परिखाऽपह्नवनादपह्नुतिः। विललासेति क्रियावैशिष्ट्येन दिवो नायिकात्वं, क्वचनेत्यानुगुण्येन तथा चेष्टितत्वं चेति समासोक्तिः।

व्यंज्यत इति बोध्यम् । 'हेलिरालिङ्गने रवौ' इति यादवः ॥ ८० ॥

क्षितिगर्भधराम्बरालयै-
स्तलमध्योपरिपूरिणां पृथक् ।
जगतां किल याऽखिलाऽद्भुता-
जनि सारैर्निजचिह्नधारिभिः ॥८१॥

क्षितीति ॥ या नगरी जगतां सारैः श्रेष्ठैरंशैरिवाजनि निरमायि । किल इवार्थः । किंभूतैः सारैः—क्षितिगर्भः पातालम्, धरा पृथ्वी, अम्बरमाकाशम्, एतत्त्रयमालय आश्रयो येषां तैः । किम्भूतानाम्—तलमधःप्रदेशम्, मध्यं धरारूपम्, उपरि आकाशरूपं पूरयन्ति व्याप्नुवन्ति । एतत्त्रंशकानामित्यर्थः । पुनः किम्भूतैः—( हेतुगर्भं विशेषणम् ) पृथक् निजं स्वकीयं चिह्नं लक्षणं तद्धारिभिः । पातालस्य निष्यादि चिह्नं, तत्तलगृहेषु । धान्यादि भूमेश्चिह्नं, तन्मध्यगृहेषु । सक्रन्दनादि स्वर्गचिह्नं, तदूर्ध्वगृहेषु विद्यतं इत्यर्थः । त्रिभूमिकगृहयुक्तेत्यर्थः । जगत्त्रयसारैर्निर्मितत्वादेवाखिला सकलाप्यद्भुताश्चर्यरूपा अखिलादपि त्रैलोक्याददद्भुता । एकैव त्रैलोक्यरूपत्वादाश्चर्यकारिणीति भावः । एकस्मिन्नपि लोके वर्तमानत्वेऽपि लोकान्तरवस्तुदर्शनाद्विस्मय इति वा । 'अधःस्वरूपयोरस्त्री तलम्' इत्यमरः । धरा च अम्बरं चेति समासं कृत्वा पूर्वपदेन समासः ॥ ८१ ॥

दधदम्बुदनीलकण्ठतां
वहदत्यच्छसुधोज्ज्वलं वपुः ।
कथमृच्छतु यत्र नाम न
क्षितिभृन्मन्दिरमिन्दुमौलिताम् ॥८२॥

दधदिति ॥ यत्र नगर्यां क्षितिभृन्मन्दिरं राजगृहमिन्दुमौलितां चन्द्रयुक्ताग्रतां चन्द्रशेखरत्वं, चन्द्रयुक्तमस्तकत्वं च; कथं नाम न ऋच्छतु प्राप्नोत्येव । संप्रश्ने लोट् । किम्भूतम्—अम्बुदैर्मेघैर्नीलः श्यामः कण्ठः कण्ठस्थानीयः प्रदेशो यस्य तस्य भावस्तत्ता तां दधत् । तथा—अत्यच्छया ऽतिनिर्मलया सुधया लेपेनोज्ज्वलं वपुः स्वरूपं वहद्बिभ्रत् । इन्दुर्मौली यस्य तत्तां महादेवत्वं राजगृहस्य सूच्यते । सोऽपि जलदवन्नीलकण्ठतामतिनिर्मलसुधावद्गौरं शरीरं च धारयति । कण्ठदेशे मेघा अग्रभागे चन्द्रश्चेत्यत्युच्चत्वं राजगृहस्य सूच्यते । 'सुधालेपेऽमृते स्नुही' इत्यमरः ॥८२॥

वहुरूपकशालभञ्जिका-
मुखचन्द्रेषु कलङ्करङ्कवः ।
यदनेककसौधकंधरा-
हरिभिः कुक्षिगतीकृता इव ॥ ८३ ॥

वहिति ॥ वहु रूपकं सौन्दर्यमाकृतिर्वा यासामेवंविधाः शालभञ्जिका दन्तादिरचिताः स्तम्भादिषु निर्मिताः पुत्रिकास्तासां मुखान्येवं चन्द्रास्तेषु कलङ्करङ्कवः संभाविता लाञ्छनमृगा यस्या नगर्या अनेककानां बहुसंख्याकानां सौधानां प्रासादानां कंधरासु गतैः कृत्रिमैर्हरिभिः सिंहैः कुक्षिगतीकृता इव भक्षिता इव लक्ष्यन्ते । कुक्षी गतास्तादृशाः कृताः । चन्द्रेषु लाञ्छनमृगैर्भाव्यम्, ते तु तत्र न विद्यन्ते तर्हि कन्धरागतैः सिंहैर्भक्षिता इवेति लक्ष्यते । निष्कलङ्कानि तासां मुखानीत्यर्थः । वहुरूपकेति 'शेषाद्विभाषा ५।४।१,४' इति कप् । पुंवद्भावाद्यभिवृत्तौ 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७।३।४४' इतीत्वनिवृत्तिः ॥ ८३ ॥

वलिसद्मदिवं स तथ्यवा-
गुपरि स्माह दिवोऽपि नारदः ।
अधराऽथ कृता ययेव सा
विपरीताऽजनि भूविभूषया ॥ ८४ ॥

वलीति ॥ तथ्यवाक्सत्यवाक्स नारदो वलिसद्म पातालं तल्लक्षणां दिवं स्वर्गं दिवोऽपि स्वर्गादप्युपरि अतिरमणीयामाह स वदति स्म । 'स्वर्गादप्यतिरमणीयानि पातालानि' इति विष्णुपुराणे नारदवचनम् । अथ च शब्दच्छलेनोर्ध्वभागे पातालमिति प्रसिद्धेरभावात्कथं तस्य तथ्यवाक्त्वमित्याशङ्क्य शब्दच्छलेन समर्थयते—अथ पश्चाद्भूविभूषया पृथिव्या अलंकारभूतया यया नगर्या अधरा हीना कृतेव जितेवेत्यर्थः । अथ च अधोदेशे कृतेव सा वलिसद्म द्यौर्विपरीता अन्यादृश्यजनि जाता । अधोभागे वभूवेत्यर्थः । पूर्वं भूर्लोकात्स्वर्लोकाच्चोर्ध्वमभूदिदानीं ताभ्यामधोभागे जातेति वैपरीत्यम् ।

१ अञ्चलानां दण्डत्वं तेन च ताडनं प्रतियोग्यत्वसूचनमितिरूपकमूलम्, कालनं प्रति हेतुत्वस्यासम्भवेऽपि सम्भवोक्त्याऽतिशयोक्तिः व्यङ्ग्योत्प्रेक्षा वा।२अत्र क्षितिगर्भादीनां तलमध्योपरि स्थानां चिह्नानां च यथा सङ्ख्यं सम्बन्धोक्तेर्यथासङ्ख्यम्,उदात्तं च तत्र तथा त्रैलोक्यसम्पत्युक्तेः।

१ नीलिम्न उज्ज्वलतायाश्चैकत्रावासस्य विरुद्धत्वेऽपि रत्नविशेषमयत्वापादितत्वेन तत्परिहाराद्विरोधाभासः, श्लेषः,इन्दुमौलित्वस्य समर्थनाय पदान्तरार्थानां भिन्नत्वेनाप्यवधारणात् । २ अत्रोत्प्रेक्षा रूपकं च ।

अथवा अनया जितत्वादेव पातालस्याप्यधस्त्वम्, न त्वधोभागे स्थितत्वादित्युभयत्रापि नारदस्य सत्यवाक्त्वम्। स्वर्गात्पातालं रमणीयं तदप्यनया जितमिति स्वर्गपातालाभ्यामियमतिरमणीयेति श्लोकतात्पर्यम् ॥ ८४ ॥

प्रतिहट्टपथे घरट्टजा-
त्पथिकाह्वानदसक्तुसौरभैः ।
कलहान्न घनान्यदुत्थिता-
दधुनाप्युज्झति घर्घरस्वरः ॥ ८५ ॥

प्रतीति ॥ प्रतिहट्टपथे सर्वेष्वपि विपणिमार्गेषु पथिकाः पान्थास्तेषामाह्वानमाकारणं तद्ददति आह्वानदानि सक्तूनां सौरभाणि सौगन्ध्यानि तैः कृत्वा तैरुपलक्षिताद्वा घरट्टजाद्गोधूमादिपेषणपाषाणो घरट्टस्तस्माज्जाताद्यदुत्थितायस्या नगर्या उदितात्कलहाज्जातो यो घर्घरस्वरः परुषशब्दोऽधुनाप्यद्यापि घनान्मेघान्नोज्झति न त्यजति। यत्तच्छब्दार्थोऽर्थाद्गम्यः। सक्तूनामामोदमाघ्राय पान्था भोजनार्थं तत्रत्यान्सक्तूंस्त्यक्तुं न शक्नुवन्ति, मेघाश्च तान्गृहं प्रत्युत्सुकयन्तीति सक्तुनिमित्तो मेघघरट्टयोः कलहः। मेघाः पीडयन्ति सक्तुपरिमलैर्घरट्टा जीवयन्ति। तेन मेघानां घरट्टानां च नित्यं कलहः। तेन घर्घरस्वरोऽद्यापि मेघान्न मुञ्चतीति वा। घरट्टाः पान्थाह्वानं ददति मेघाश्च घ्नन्ति खण्डयन्तीति भावः। योऽतिरोषात्कलहं करोति घर्घरस्वरस्तं न त्यजति। सर्वोपकारित्वं नगर्या द्योत्यते। हट्टपथे च कलहो भवति। 'ऋक्पूरब्धूः पथामानक्षे५।४।७४' इति समासान्तः अः। 'तृतीयासप्तम्योर्बहुलम् २।४।८४' इत्यमभावः। घर्घरः पृथक्पदम् ॥ ८५ ॥

वरणः कनकस्य मानिनीं
दिवमङ्कादमराद्रिरागताम् ।
घनरत्नकपाटपक्षतिः
परिरभ्यानुनयन्नुवास याम् ॥ ८६ ॥

वरण इति ॥ कनकस्य सुवर्णस्य वरणः प्राकार एवामराद्रिः सुमेरुः, मानिनीं कोपनां अत एवाङ्कात् अङ्कं परिहाय आगतां भुवं प्राप्तां यां नगरीमेव दिवं परिरभ्यालिङ्ग्य अनुनयन्प्रसादयन्नुवास। 'ल्यब्लोपे कर्म्मण्यधिकरणे च' इति पञ्चमी। मेरुः कथं तत्रागत इत्यत आह—घनरत्ने निबिडरत्ने निबिडे वा रत्नकपाटे ते एव पक्षती पक्षौ यस्य। सपक्षत्वात्तस्य तत्रागमनम्। उवासेत्यनेन तदिच्छया तत्रैव स्थितो, न तु तां गृहीत्वा स्वगृहं नेतुमशकत्। अतिमानिनीत्वाद्याप्यद्यापि नानुनेतुं शक्यते। स्वर्णप्राकारो मेरुतुल्यः, नगरी स्वर्गतुल्या। रत्नकपाटे हेमाद्रिपक्षतुल्ये। अन्योऽपि मानिनीमन्यत्र गतामालिङ्ग्यानुनयं स्तदनुरोधात्तत्रैव वसति। 'प्राकारो वरणः शालः' इत्यमरः। 'अनुनयन्निवास' इति वा पाठः ॥ ८६ ॥

अनलैः परिवेषमेत्य या
ज्वलदर्कोपलवप्रजन्मभिः ।
उदयं लयमन्तरा रवे-
रवहद्बाणपुरीपरार्ध्यताम् ॥ ८७ ॥

अनलैरिति ॥ या नगरी ज्वलद्भिर्दैदीप्यमानैरर्कोपलैः सूर्यकान्तैर्निर्मितेभ्यो वप्रेभ्यो जन्म येषां तैरनलैरग्निभिः परिवेषं वेष्टनमेत्य प्राप्य रवेः सूर्यस्योदयं लयमस्तं चान्तरा उदयमारभ्यास्तपर्यन्तं बाणपुरीव परार्ध्यतामग्रगण्यतां श्रेष्ठतामवहद्धार। पुर्याः परार्ध्यतां वा। बाणपुर्यपि रुद्रप्रसादादनलावरुद्धेति प्रसिद्धिः। सूर्यकिरणसंबन्धात्सूर्यकान्तेभ्योऽग्निरुत्पद्यते। अनेकप्राकारेति भावः। उदयम्, लयम्, 'अन्तरान्तरेण युक्ते २।३।४' इति द्वितीया ॥ ८७ ॥

बहुकम्बुमणिर्वराटिका-
गणनाटत्करकर्कटोत्करः ।
हिमवालुकयाच्छवालुकः
पटु दध्वान यदापणार्णवः ॥ ८८ ॥

बह्विति ॥ यस्या आपणो हट्ट एवार्णवः पटु सातिशयं दध्वान गर्जितवान्। किंभूतः—बहवः कम्बवः

---

१ अत्र रूपकमुत्प्रेक्षा च। सत्यवाक्त्वसमर्थनाय पराद्धोक्तिरिति काव्यलिङ्गं च। २ अत्र घनानां घरट्टकलहायोगेऽपि तद्योगोक्तेस्तन्मूलाऽतिशयोक्तिः।

१ अत्र वरणस्याद्रित्वेन रूपणाद्रूपकम्, समासोक्तिश्च नायिकानायकव्यवहारप्रतिपत्तेः। नचेयं रूपकादेव, लिङ्गादिवैशिष्ट्यस्यापि प्रयोजकत्वात् नगर्याः कुतश्चिदनागमनात्, अमराद्रिर्दिवमिवेत्युत्प्रेक्षणौचित्यादुत्प्रेक्षा च। २ उदयस्य सर्वदाऽसम्भवेऽपि तथोक्तेरतिशयोक्तिः, अनलानां यथोक्तवप्रजन्यत्वस्यात्रासम्भवात्तन्मूलस्य रविसार्वदिक्त्वस्य चासम्भवेऽपि तथोक्तेः सैव। अवहदिवेति सम्भावेन तूत्प्रेक्षा।

शङ्खाः मणयो मौक्तिकादयश्च यत्र, समुद्रोऽप्येवम् । तथा—वराटिकागणनायां कपर्दकगणनार्थमटन्तो भ्रमन्तः करा हस्ता एव कर्कटोत्कराः कुलीरसमूहा यत्र समुद्रे भ्रमत्कुलीरास्तिष्ठन्ति । तथा—हिमवालुकया कर्पूरेणाच्छवालुको निर्मलसिकतः । समुद्रे सिकतास्तिष्ठन्ति तत्स्थानेऽत्र कर्पूरः । सिकतासाम्येनात्र कर्पूरबाहुल्यम् । तत्र देशे बाहुल्येन कपर्दैरेव व्यवहारः । पट्टशब्देन जनसंमर्दः सूच्यते ॥ ८८ ॥

यदगारघटाट्टकुट्टिम-
स्रवदिन्दूपलतुन्दिलापया ।
मुमुचे न पतिव्रतौचिती
प्रतिचन्द्रोदयमभ्रगङ्गया ॥ ८९ ॥

यदिति ॥ अभ्रगङ्गया आकाशगङ्गया प्रतिचन्द्रोदयं चन्द्रोदये चन्द्रोदये पतिव्रतौचिती पातिव्रत्यौचित्यं न मुमुचे न त्यक्तम् । किम्भूतया—यदगारघटानां यस्या गृहसमूहानामट्टा उपरिगृहास्तेषु कुट्टिमा बद्धभूमयस्तासु स्रवन्तो द्रवन्तो य इन्दूपलाश्चन्द्रकान्तास्तैस्तुन्दिला बहुतरा आपो जलानि यस्यास्तया । चन्द्रोदये समुद्रोदकवृद्धिर्भवति गङ्गा च तत्पत्नी चन्द्रकान्तगलदुदकसंपर्काद्वर्धत इति पातिव्रत्यौचित्यम् । 'आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा' इत्यादि पतिव्रतालक्षणम् । अनेनाकाशगङ्गाया अपि कुट्टिमानामूर्ध्वभावत्वं सूच्यते । तुन्दिला मत्वर्थे 'तुन्दादिभ्य इलच ५।२।१७' इतीलच् । लक्षणया पुष्टत्वम् । तुन्दिलापयेति 'ऋक्पूरब्धूःपथामानक्षे ५।४।७४' इत्यनेन समासान्तः प्रतिवर्ष्मिसायामे ॥ ८९ ॥

रुचयोऽस्तमितस्य भास्वतः
स्खलिता यत्र निरालयाः किल ।
अनुसायमभुर्विलेपना-
पणकश्मीरजपण्यवीथयः ॥ ९० ॥

रुचय इति ॥ यत्र नगर्यामनुसायं प्रतिसंध्याकालं विलेपनापणे सुगन्धद्रव्यविक्रयहट्टे कश्मीरजं तल्लक्षणं पण्यं विक्रेयं तस्य वीथयो मार्गा अस्तमितस्यास्तं गतस्य भास्वतो रवेः स्खलिताश्च्युता निरालया निराश्रया रुचय इवाभुर्भान्ति स्म । किल इवार्थे । भातेर्लङ् । अनुर्वीप्सायाम् । सायंकाले तासां रक्तत्वादित्यर्थः । पण्यम् 'अवद्यपण्यवर्य्यागर्ह्यपणितव्यानिरोधेषु ३ । १ । १०१' इति साधु । 'पङ्क्तिर्वीथी पदव्यपि' इति कोशः ॥ ९० ॥

विततं वणिजापणेऽखिलं
पणितुं यत्र जनेन वीक्ष्यते ।
मुनिनेव मृकण्डुसूनुना
जगतीवस्तु पुरोदरे हरेः ॥ ९१ ॥

विततमिति ॥ यत्र नगर्यां जनेन लोकेन 'लोकस्तु भुवने जने' इत्यमरः । वणिजा लाभजीविना वैश्येनेत्यर्थः । आपणे हट्टे पणितुं विक्रेतुं विततं विस्तारितमखिलं जगतीवस्तु पृथिवीतले यत्सम्भवति तदित्यर्थः, 'जगती सागराम्बरा ।' इत्यमरः । वीक्ष्यते अवलोक्यते, एकैकस्यापि वणिजो हट्टे सर्वं वस्तु विद्यत इति भावः । केन कस्मिन्किमिव—मृकण्डुसूनुना मार्कण्डेयेन मुनिना पुरा पूर्वं हरेर्विष्णोरुदरे जठरे जगतीषु त्रैलोक्येषु जातं वस्त्विव । वीक्ष्यते स्मेत्यर्थः । पणितुम् । आर्धधातुके विकल्पादायाभावः । वीक्ष्यते भूते पुरायोगे 'पुरि लुङ् चास्मे ३।२।१२२' इति लट् । उकारान्तादेवापत्यार्थे शुभ्रादित्वाड्ढकि किरवाद्वृद्धौ च 'ढे लोपोऽकद्र्वाः ६।४।१४१' इत्युकारलोपे च मार्कण्डेयः ९१॥

सममेणमदैर्यदापणे
तुलयन्सौरभलोभनिश्चलम् ।
पणिता न जनारवैरवै-
दपि गुञ्जन्तमलिं मलीमसम् ॥ ९२ ॥

सममिति ॥ यस्या नगर्या आपणे पणिता विक्रेता मलीमसं श्यामं गुञ्जन्तमपि शब्दायमानमप्यालिं भ्रमरं जनारवैर्लोककोलाहलैर्न अवैन्नाज्ञासीत् । किं कुर्वन्—एणमदैः कस्तूरिकाभिः समं सह तुलयन् । किम्भूतमलिम्—सौरभलोभेन सौरभ्याभिलाषेण निश्चलं सानुरागं यथा भवेत्तथा न तु तूष्णीमित्यर्थः, कस्तूरिकायाः उपरि स्थितम् । निश्चलत्वात्समानवर्णत्वाच्च कस्तूरिकायाः सकाशाद्भिन्नत्वेन यद्यपि ज्ञातुं न शक्यते तथापि गुञ्जनाज्ज्ञेयः । न च निश्चलत्वे कथं गुञ्जनमिति लक्षणया निश्च-

१ अत्र रूपकम् । २ अत्राभ्रगङ्गाया यदगारेत्यादिना विशेषणार्थायोगेऽपि तथोक्तेरतिशयोक्तिः । न मुमुच इवेति सम्भावनायाः पर्य्यवसीयमानत्वादुत्प्रेक्षाव्यक्तिः । उदात्तं च स्पष्टम् ।

१ किलेत्युत्प्रेक्षा । साहित्यविद्याधरीकारस्तु—विशेषालङ्कारमाह 'किञ्चिदवश्याधेयं यस्मिन्नभिधीयते निराधारम् । तादृगुपलभ्यमानं विज्ञेयोऽसौ विशेषोऽतः ॥' इति रुद्रटोक्तेः । २ अत्र मुनिनेवेत्युपमा ।

लत्वस्य अनुपक्तत्वमात्रपरत्वात् जनशब्देषु गुञ्जनस्यान्तर्हितत्वादिति भावः । अवेदितीणो लङि रूपम् । तुलयन् 'तुल उन्मितौ' इति ण्यन्ताच्छता । संज्ञापूर्वकविधित्वाल्लघूपधगुणाभावः । मलीमसम् 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ५।२।११४' इति साधुः ॥ ९२ ॥

रविकान्तमयेन सेतुना
सकलाहं ज्वलनाहितोष्मणा ।
शिशिरे निशिगच्छतां पुरा
चरणौ यत्र दुनोति नो हिमम् ॥ ९३ ॥

रवीति॥यत्र नगर्यां हिमं शीतं रविकान्तमयेन सूर्यकान्तवद्धेन सेतुना पथा शिशिरे शिशिरर्तौ निशि रात्रावपि गच्छतां स्त्रीपुंसानां चरणौ पुरा नो दुनोति नादुनोत् । किंभूतेन सेतुना—सकलं च तदहश्च सकलाहं ज्वलनोऽग्निस्तेनाहित आरोपित ऊष्मा औष्ण्यं यस्य । सकलाहम् 'राजाहःसखिभ्यष्टच् ५।४।९१' इति टच् । अत्यन्तसंयोगे द्वितीया । दुनोति । पुरायोगे लट् ॥ ९३ ॥

विधुदीधितिजेन यत्पथं
पयसा नैषधशीलशीतलम् ।
शशिकान्तमयं तपागमे
कलितीव्रस्तपति स्म नातपः ॥ ९४ ॥

विधिवति ॥ आतपो यत्पथं यस्या नगर्याः पन्थानं तपागमे ग्रीष्मागमेऽपि न तपति स्म नोष्णीचकार । किंभूतम्—शशिकान्तमयं चन्द्रकान्तमयम् । अत एव विधुदीधितिजेन चन्द्रकिरणसम्बन्धजेन पयसा जलेन नैषधशीलवन्नलस्वभाववच्छीतलम् । किम्भूतः—कलितीव्रः कलियुगवदातिदारुणः । दिने तप्तोऽपि चन्द्रोदये सर्वाङ्गिश्चन्द्रकान्तैरतिशीतलो जात इत्यर्थः । यत्पथम् । ऋगादित्वादः ॥ ९४ ॥

परिखावलयच्छलेन या
न परेषां ग्रहणस्य गोचरः ।
फणिभाषितभाष्यफक्किका-
विषमा कुण्डलनामवापिता ॥ ९५ ॥

परीति ॥ या नगरी परिखावलयच्छलेन परिखामण्डलव्याजेन कुण्डलनां रेखावलयमवापिता सती परेषां शत्रूणां ग्रहणस्य स्वाधीनत्वस्य गोचरो विषयो न । शत्रुभिर्ग्रहीतुमशक्येत्यर्थः । किम्भूता—फणिभाषिता शेषोक्ता भाष्यस्य फक्किका ग्रन्थस्तद्वद्विषमा दुर्ग्रहा शेषव्यतिरिक्तेन ज्ञातुमशक्या । यथा भाष्यफक्किका वररुचिना कुण्डलितेति प्रसिद्धिः । शेष एव तदर्थं जानाति ॥९५॥

मुखपाणिपदाक्षिण पङ्कजै
रचिताङ्गेष्वपरेषु चम्पकैः ।
स्वयमादित यत्र भीमजा
स्मरपूजाकुसुमस्रजःश्रियम् ॥ ९६ ॥

मुखेति ॥ यत्र नगर्यां भीमजा स्मरस्य कामस्य पूजायाः कुसुमस्रजः श्रियं पुष्पमालायाः श्रियं शोभां स्वयमात्मनवादित स्वीचकार । कामपूजापुष्पमालास्थाने सैव जातेत्यर्थः । यतः किम्भूता—मुखपाणिपदाक्षिण आस्यकरचरणनयने पङ्कजैर्गौररक्तनीलोत्पलै रचिता निर्मिता । प्राण्यङ्गत्वादेकवद्भावः । तथा—परेष्वन्येष्वङ्गेषु चम्पकैश्चम्पापुष्पै रचिता मालाप्यनेकविधैः पुष्पैः क्रियते । वदनकरचरणनेत्रं कमलतुल्यम्, अन्यदङ्गं चम्पकतुल्यमिति भावः । मालया यथा कामः प्रसन्नीक्रियते, तथा तयेत्यर्थः । (–पदाक्षिण ) 'अक्षिदधि–सक्थ्यक्ष्णामनङुदात्तः ७।१।७५' इत्यनङ् 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति तदन्तविध्यनुज्ञानादनङादेशे 'अल्लोपोनः ६।४।१३४' इत्यल्लोपः । आदित 'आङो दोऽनास्यविहरणे १।३।२०' इति तङ् । 'स्थाघ्वोरिच्च १।२।१७' इतीकारः । 'ह्रस्वादङ्गात् ८।२।२७' इति सिचो लोपः ॥९६ ॥

---

१ "सञ्ज्ञापूर्वको हि विधिरनित्यः" इत्याभियुक्तोक्तिमाश्रित्यैवेदं समाहितम्, वस्तुतस्तु तोलयान्नित्येव साधु न च तुलां कुर्वन्निति 'तत्करोति तदाचष्टे'इतिणिचि शतरि च कृते रूपमिदमित्यपि शङ्क्यं तथात्वे अलिमित्यत्र द्वितीयाऽनुपपत्तेः । वयं तु तलयन्निति पाठं मन्यामहे- 'तल प्रतिष्ठायाम्' इति ण्यन्ताच्छतरि साधु प्रतिष्ठापयन्नित्यर्थः । २ अत्र सामान्यमलङ्कारः, 'प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ऐकात्म्यं बध्यते योगात् तत् सामान्यम्' इति तल्लक्षणात् । परिकरश्च । गुञ्जनरूपकारणसत्त्वेऽप्यवगमरूपकार्यानिष्पत्तेर्विभावना च । रवैरिति यमकमपि । ३ अत्रोदात्तम् ।

१ अत्र लुप्तोपमा, उदात्तं च । २ अत्रापह्नुतिरुपमा च । ३ दमयन्त्या मालाप्रतिनिधित्वेन रूपणायोगेऽपि रूपणादतिशयोक्तिः पङ्कजादिना तादृश श्रीसादृश्योक्तेः सामान्यं, सादृश्यमात्रपर्यवसायित्वे च तथोक्तेर्निदर्शना।

जघनस्तनभारगौरवा-
द्वियदालम्ब्य विहर्तुमक्षमाः ।
ध्रुवमप्सरसोऽवतीर्य यां
शतमध्यासत तत्सखी जनः ॥ ९७ ॥

जघनेति ॥ शतमसंख्याता अप्सरसो जघनस्तनभारगौरवान्नितम्बकुचयोः( स्य ) भारेण स्थूलत्वेन गौरवाद्गुरुत्वाद्वियदाकाशमवलम्ब्य यतो विहर्तुं क्रीडितुमक्षमा असमर्था ध्रुवं निश्चितम् । अतोऽवतीर्य भुवमागत्य तत्सखीजनो भैमीसखीजनो भूत्वा यां नगरीमध्यासताध्यतिष्ठन् । यत्सख्योऽप्सरस्तुल्या इति भावः ।अभ्यर्हितत्वाज्जघनस्य पूर्वनिपातः । याम् 'अधिशीङ्स्थासां कर्म १ । ४ । ४६ इति कर्मत्वम् ॥ ९७ ॥

स्थितिशालिसमस्तवर्णतां
न कथं चित्रमयीं बिभर्तु या ।
स्वरभेदमुपैतु या कथं
कलितानल्पमुखारवा न वा ॥ ९८ ॥

स्थितीति ॥ या नगरी स्थित्या स्वीयस्वीयाचारानतिक्रमणेन शालिनःशोभमानाः समस्ता वर्णा यस्यां तस्यां भावस्तत्ता तां कथं केन कारणेन न बिभर्तु, अपि तु बिभर्त्येव । अत एव चित्रमयी आश्चर्यरूपा । अन्यत्र ब्राह्मणादिवर्णानां संकरादत्र च तदभावादाश्चर्यरूपत्वम् । ब्राह्मणादयोऽत्रासंकीर्णास्तिष्ठन्तीत्यर्थः । अथ च या चित्रमयी लेख्यप्रचुरा सा स्थित्या परस्परानतिक्रमेण शालिनः सर्वे नीलपीतादिवर्णा यस्यां तद्भावं कथं न बिभर्तु, अपितु बिभर्त्येव । वा समुच्चये । यस्मात् या कलिताङ्गीकृता अनल्पानां बहूनां नरादीनां मुखारवा मुखशब्दा यया एवंभूता, तस्मात्स्वरभेदमनेकशब्दत्वं नरकरितुरगादिशब्दानां भेदं कोलाहलवशाद्घरघरशब्दं वा कथं नोपैतु। अथ च कलितोऽङ्गीकृतो वाचाटत्वादनल्पमुखा ब्राह्मणास्तेषामारवो वेदरूपो यथा जातो वा यस्यां सा, स्वरभेदमुदात्तादिभेदमकारादिभेदं वा कथं नोपैतु । यद्वा—स्थितयो वर्णानामष्टौ स्थानानि ताभिः शालिनः समस्ता वर्णा अक्षराणि यस्याम् । ब्राह्मणाः सलक्षणं वेदं यत्र पठन्तीत्यर्थः । 'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च॥' इति शिक्षायाम् ।अथ च—स्वः स्वर्गादभेदं साम्यं कथं न प्राप्नोतु । स्वर्गेऽनल्पमुखस्य चतुर्मुखस्य ब्रह्मण आरवः शब्दो विद्यते तस्मात्स्वर्गेण सहैकत्वं युज्यते । या बहुमुखारवा सा स्वरभेदं कथमुपैतु, अपि तु न।लोकबाहुल्यात्स्त्रीपुंसादिस्वरभेदो नोपलभ्यत इत्यर्थः।'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे' 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः ॥९८॥

स्वरुचाऽरुणया पताकया
दिनमर्केण समीयुषोत्तृषः ।
लिलिहुर्बहुधा सुधाकरं निशि
माणिक्यमया यदालयाः ॥ ९९ ॥

स्वरुचेति ॥ माणिक्यसंज्ञके रत्नविशेषैर्निर्मिता यदालया यस्या गृहाः स्वरुचा गृहकान्त्या अरुणया रक्तया पताकया कृत्वा निशि रात्रौ सुधाकरममृतनिधिं चन्द्रं बहुधानेकप्रकारं लिलिहुरस्पृशन् । पताकाया जिह्वात्वं सूच्यते । साप्यारक्ता भवति। किम्भूता—दिनं समस्तदिवसे समीयुषा संगतेनार्केण सूर्येण कृत्वा उत्तृष उत्कृष्टा बहुतरा, उद्गता वा तृट् पिपासा येषाम् । अन्योऽपि सूर्यतेजसा तप्तो रात्रौ जिह्वया शीतलं मधुरं च वस्तु लेढि । अत्युच्चा इति भावः । दिनम् । अत्यन्तसंयोगे द्वितीया । 'उपेयिवान्–' इत्यत्र 'उपेत्यस्यातन्त्रत्वादनुपसर्गस्यान्योपसर्गस्य च भवति'इत्युक्तत्वात्समीयुषेति साधुः। बहुधेति 'बहुगणवतुडतिसङ्ख्या १।१।२३ ' इति सङ्ख्यात्वात् 'सङ्ख्याया विधार्थे धा ५।४।४२' इति धाप्रत्ययः।लिहेः स्वरितेत्त्वादकर्त्रभिप्राये क्रियाफले परस्मैपदम् ॥ ९९ ॥

लिलिहे स्वरुचा पताकया
निजजिह्वानिभया सुधाकरम्।
श्रितमर्ककरैः पिपासु य-
न्नृपसद्मामलपद्मरागजम् ॥ १०० ॥

लिलिहे इति ॥ पूर्वोक्त एवार्थो जिह्वापदप्रक्षेपेण वर्णितः । अमला ये पद्मरागास्तज्जं, तन्निर्मितमिति यावत्, यत् नृपस्य सद्म प्रासादः, यत् यतो हेतोः । अर्ककरैः सूर्यस्य रश्मिभिः श्रितं संश्लिष्टं, तत एव पिपासु-

---

१ अत्रोत्प्रेक्षाऽपह्नुतिश्चार्थालङ्कारौ।

१ अत्र शब्दानामेव गुम्फनावैशिष्ट्येनानेकार्थपरत्वात्तन्मूल एव श्लेषः । न तु प्रथमार्धेऽर्थश्लेषः ।एकनाले (वृन्ते) फलद्वयवदेकस्मिन् शब्देऽर्थद्वयप्रतीतेरिति,गुणदोषालङ्काराणामन्वयव्यतिरेकानुविधायित्व एव तत्तत्सम्बन्धित्वेन सिद्धान्तितत्वात् । प्रकृते शब्दपरिवृत्तौ अर्थद्वयपरत्वासम्भवाच्छाब्द एवासाविति स्पष्टं प्रकाशादौ।२ अत्र–

पिपास्विवेति भावः । निशि—रात्रौ स्वरुचा जिह्वानिभया पताकया ( करणेन ) सुधाया आकरं लिलिहे इति भावः । लिहेः स्वरितेत्त्वात्कर्त्रभिप्राये क्रियाफले तङ् । 'श्रितम्' इति पाठः । अर्ककरैः श्रितं सामीप्यादभिप्राप्तम् । स्थितमित्यपि क्वचित् । अर्ककरैः पिपासु स्थितम् अर्ककरैस्तप्तमित्यर्थः ॥ १०० ॥

**अमृतद्युतिलक्ष्म पीतया**
**मीलितं यद्वलभीपताकया ।**
**वलयायितशेषशायिनः**
**सखितामादित पीतवाससः ॥ १०१ ॥**

अमृतेति ॥ पीतया गौर्या यस्या नगर्या वलभीपताकया वलभीसंज्ञकगृहविशेषवैजयन्त्या मिलितं संबद्धममृतद्युतेश्चन्द्रस्य लक्ष्म लाञ्छनं कर्तृ वलयायितो मण्डलीभूतः शेषस्तस्मिञ्शेते एवंशीलस्य पीतवाससो विष्णोः सखितां साम्यमादित प्राप । तत्सदृशं बभूवेत्यर्थः । कलङ्कमभितो वर्त्तमानस्य चन्द्रस्य शेषसाम्यम्, कलङ्कस्य श्रीकृष्णसाम्यम्, पीतपताकायाः पीतवस्त्रसाम्यम् । अत्युच्चत्वं व्यज्यते ॥ १०१ ॥

**अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा**
**जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना ।**
**पूर्वं गाधिसुतेन सामिघटिता मुक्ता नु मन्दाकिनी**
**यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि ॥**

अश्रान्तेति ॥ यस्याः प्रासादानां देवराजगृहाणां दुकूलवल्लिर्वैजयन्तीरूपा श्वेतदुकूलवल्लिः अनिलान्दोलैर्वायुकर्तृकचालनैर्दिवि आकाशे मन्दाकिनी नु स्वर्गङ्गेवाखेलच्चिक्रीड; नुरिवार्थे वितर्के वा । किम्भूता मन्दाकिनी—गाधिसुतेन विश्वामित्रेण पूर्वं सामिघटिताऽर्धनिर्मिता पश्चाद्ब्रह्मस्तुत्या मुक्ता त्यक्ता । किंभूतेन—अश्रान्तश्रुतिपाठेन निरन्तरवेदपाठेन पूताभ्यः पवित्राभ्यो रसनाभ्यो जिह्वाभ्य आविर्भूतेषु प्रकटीभूतेषु भूरिषु बहुषु स्तवेषु स्तुतिषु अजिह्माऽनलसा ब्रह्ममुखौघाश्चत्वार्यपि ब्रह्ममुखानि तैर्विघ्निता विघ्नवती कृता नवा नूतना स्वर्गक्रियाकेलिः स्वर्गनिर्मितक्रीडा यस्य तेन । पूर्वमर्धकृतां सृष्टिं ब्रह्मादिभिरर्थितो विश्वामित्रोऽमुञ्चदिति पुराणादौ । लता वायुना चञ्चलीक्रियते । 'सामि त्वर्धे जुगुप्सने' इत्यमरः । सामिघटितेत्यत्र 'सामि २ । १ । २७' इति समासः ॥ १०२ ॥

**यदतिविमलनीलवेश्मरश्मि-**
**भ्रमरितभाः शुचिसौधवस्त्रवल्लिः ।**
**अलभत शमनस्वसुः शिशुत्वं**
**दिवसकराङ्कतले चला लुठन्ति ॥ १०३ ॥**

यदिति ॥ यस्या नगर्या अतिविमलानि नीलरत्ननिर्मितवेश्मानि गृहाणि तेषां रश्मिभिः किरणैर्भ्रमरिता भ्रमरीकृता, तैः कृत्वा भ्रमरवदाचरिता वा भा दीप्तिर्यस्याः सा एवंविधा शुचिसौधवस्त्रवल्लिर्धवलगृहान्तरपताकापङ्क्तिर्दिवसकरस्य सूर्यस्याङ्कतले समीपाधोभागे, उत्सङ्गतले च चला चञ्चला लुठन्ती क्रीडन्ती सती शमनस्वसुर्यमभगिन्या यमुनायाः शिशुत्वमलभत प्राप । बालिका यमुनेव शोभते स्मेत्यर्थः । सापि श्यामा पितुः सूर्यस्य समीपे शिशुत्वाच्चञ्चला लुठनं करोति । शिशुत्वं यमुनापत्यत्वमिति केचित् । उच्चत्वं सूच्यते ॥ १०३ ॥

**स्वप्राणेश्वरनर्महर्म्यकटकातिथ्यग्रहायोत्सुकं**
**पाथोदं निजकेलिसौधशिखरादारुह्य यत्कामिनी । साक्षादप्सरसो विमानकलितव्योमान एवाभवद्यन्न प्राप निमेषमभ्रतरसा यान्ती रसादध्वनि ॥ १०४ ॥**

स्वप्राणेति ॥ यत्कामिनी यस्या नगर्याः स्त्री अभ्रतरसा मेघवेगेनाध्वनि मार्गे रसान्मेघवेगजनितप्रीतेः प्रियानुरागाद्वा यान्ती गच्छन्ती सती यद्यस्मान्निमेषं निमेषोपलक्षितमपि विलम्बम्, अथ च नेत्रसंकोचं न प्राप । तेन कारणेन सा स्त्री विमानेन कलितं गमिकर्मीकृतं व्योम गगनं याभिरेवंविधाः साक्षात्प्रत्यक्षदृश्यमाना अप्सरस एवाभवत् । किं कृत्वा—निजं यत्केलिसौधं क्रीडागृहं तस्य शिखराच्छृङ्गात्पाथोदं मेघमारुह्य । किम्भूतं पाथोदम्—स्वप्राणेश्वरः स्वप्रियस्तस्य नर्महर्म्यं क्रीडागृहं तस्य कटके मध्यप्रदेशे आतिथ्यग्रहाय प्राघु-

——लेहनायोगेऽपि लेहनोपपादनादतिशयोक्तिः एवं च गृहाणां सुधाकरं यावदुन्नतत्वं व्यङ्ग्यम्, एवं पूर्वार्धेऽप्यतिशयोक्तिर्व्यङ्ग्यं चैवमेतत् । किं तु उत्तप इवेत्युत्प्रेक्षाऽपीति बोध्यम् ।पताकाया लेहनकरणत्वेनाभिगमनात्तस्याजिह्वत्वमपि अभेदातिशयोक्तित एव । १ अत्र जिह्वानिभयेत्युपमा, स्वरुचोऽरुणत्वं जिह्वानिभत्वे कारणमिति तद्गुणः । २ अत्रोपमा ।

१ अत्रोत्प्रेक्षाऽनुप्रासश्च । शार्दूलविक्रीडितं वृत्तम् । २ अत्र पुष्पिताऽग्रा वृत्तम्, अतिशयोक्तिः, तद्गुणश्च ।

णिकपूजाग्रहणाय । कटकप्रान्तस्य इति यावत् । तस्मा उत्सुकमुत्कण्ठितम् । सहजसौन्दर्येण विमानतुल्यमेघाधिरोहेणाकाशगमनेन निमेषाप्राप्त्या च देवाङ्गनातुल्या जातेति भावः । कटकशिखरपदाभ्यामपि हर्म्याणामुच्चतरत्वं सूचितम् । इः कामस्तस्मिन्रसादिति वा । 'प्रसितोत्सुकाभ्यां तृतीया च २ । ३ । ४४' इति तृतीयासप्तम्योः प्रसङ्गादातिथ्यग्रह एव अयः शुभविधिस्तत्रोत्सुकमिति वा व्याख्येयम् । कामिन्यपेक्षया शुभकर्मत्वम् ।—व्योमान इति 'अनो बहुव्रीहेः ४ । १ । १२' इति न ङीप् । 'स्त्रियां बहुष्वप्सरसः' इत्यमरः ॥ १०४ ॥

वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः । कस्या नोत्तानगाया दिविसुरसुरभेरास्यदेशं गताग्रै-र्यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म ॥ १०५ ॥

वैदर्भीति ॥ यस्या नगर्या गोग्रासस्य प्रदानलक्षणव्रतं तस्य सुकृतं पुण्यं नीलत्वादंशुभिरेव दर्भैरविश्रान्तं अनवरतमुज्जृम्भते स्म वर्धते स्म । किम्भूतैः—वैदर्भीकेलिशैले भैमीक्रीडापर्वते मरकताख्यरत्नविशेषनिर्मितशिखरादुत्थितैरूर्ध्वगामिभिः । तथा—ब्रह्माण्डाघातेन ब्रह्माण्डसंघट्टनेन भग्नः स्यदजो वेगजो मदो गर्वो येषां तद्भावस्तत्ता तया ह्रिया लज्जयेव धृतं कृतमवाङ्मुखत्वं व्याघुट्टनं यैः । अत एव दिवि स्वर्गे उत्तानगाया उत्तानगामिन्याः कस्याः सुरसुरभेर्देवगव्या आस्यदेशं मुखप्रदेशं गताग्रैः प्राप्ताग्रैः सर्वस्या अपि मुखं प्राप्ताग्रैः । अनेकमरकतरत्ननिर्मितो भैमीक्रीडाशैलस्ततः उत्थिताः किरणा यावद्ब्रह्माण्डं गतास्ततः उपरिगमनाभावान्निवृत्ता देवगवीनामुत्तानगामित्वात्तन्मुखपातितास्तन्मुखपातितदर्भतुल्या जाता इति भावः । 'उत्ताना वै देवगवा वहन्ति' इति श्रुतेः । अन्यो भग्नगर्वो लज्जयाधोमुखो भवेति ॥ १०५ ॥

विधुकरपरिरम्भादात्मनिष्यन्दपूर्णैः शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।

विफलितजलसेकप्रक्रियागौरवेण व्यरचि स हृतचित्तस्तत्र भैमीवनेन १०६

विरचीति ॥ तत्र नगर्यां भैमीवनेन स हंसो रमणीयत्वाद्धृतचित्त आकृष्टमना व्यरचि विरचितः । किम्भूतेन—तरूणामालवालैर्जलाधारैः कर्तृभिर्विफलितं व्यर्थीकृतं जलसेकप्रक्रियागौरवं जलसेचनप्रकारभारो यस्य । किम्भूतैः—शशिदृषद्भिश्चन्द्रकान्तैरुपक्लृप्तानि निर्मितानि तैः । पुनः किम्भूतैः—विधुकरपरिरम्भाच्चन्द्रकिरणसंपर्कादात्मनः स्वस्य निष्यन्देन निर्झरोदकेन पूर्णैः । वृक्षाणामालवालपूरणप्रयासश्चन्द्रकान्तानिर्मितत्वात्तैरेव क्रियत इति भावः । निष्यन्देति 'अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ८।३।७२' इति षत्वम् ॥ १०६ ॥

अथ कनकपतत्रस्तत्र तां राजपुत्रीं सदसि सदृशवासां विस्फुरन्तीं सखीनाम् । उडुपरिषदि मध्यस्थायिशीतांशुलेखानुकरणपटुलक्ष्मीमक्षिलक्षीचकार १०७

अथेति ॥ अथानन्तरं कनकपतत्रः सुवर्णपक्षो हंसस्तत्र वने तां राजपुत्रीं भैमीमक्षिलक्षीचकार नेत्रगोचरीचकार । किम्भूताम्—सदृशभासां समानकान्तीनां सखीनां सदसि सभायां विस्फुरन्तीं विशेषेण दीप्यमानाम् । तथा—उडुपरिषदि नक्षत्रसभायां मध्यस्थायिनी शीतांशुलेखा चन्द्रलेखा तस्या अनुकरणेऽनुकारे पटुः समर्था लक्ष्मीः शोभा यस्यास्ताम् । सदृशदीप्तित्वेऽपि नक्षत्रापेक्षया चन्द्रलेखा यथाधिका तथा सख्यपेक्षया सेति । भैमीसखीनां तत्सादृश्यकथनमन्यसुन्दरीभ्यो विशिष्टसौन्दर्यप्रतिपादनार्थम् । 'सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा' इति राजशब्दात्परस्य दुहितृशब्दस्य पुत्रडादेशे टित्वान्ङीपि राजपुत्रीति केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति । तेन पुरुहूतपुत्रीति सिद्धम् । विस्फुरन्तीं 'स्फुरतिस्फुलत्योर्घञि ६।१।४७' इति वा षत्वम् । लक्ष्मीम् समासान्तविधेरनित्यत्वात्कबभावः ॥ १०९ ॥

भ्रमणरयविकीर्णस्वर्णभासा खगेन क्वचन पतनयोग्यं देशमन्विष्यताऽधः ।

१ अत्र शार्दूलविक्रीडितं वृत्तम् । उत्प्रेक्षाऽलङ्कारः । २ अत्र स्रग्धरा वृत्तम् । अंशूनां दर्भत्वोक्तौ रूपकम्, अतिशयोक्तिः, उदात्तं चार्थालङ्काराः ।

१ अत्र मालिनी वृत्तम् । अतिशयोक्तिश्चोदात्तं चार्थालङ्कारौ । २ अत्रापि मालिनी वृत्तम् । उपमाऽर्थालङ्कारः, अनुप्रासः, शब्दालङ्कारः ।

मुखविधुमदसीयं सेवितुं लम्बमानः
शशिपरिधिरिवोर्ध्वं मण्डलस्तेन तेने १०८

भ्रमणेति॥ तेन खगेन हंसेनोर्ध्वमूर्ध्वप्रदेशे शशिपरिधिरिव चन्द्रपरिवेष इव मण्डलस्तेने । भ्रमणमकृतेत्यर्थः । अवतरतः पक्षिणो मण्डलगतिः क्रियास्वभावः । किम्भूतेन—भ्रमणरयेण परिभ्रमणवेगेन विकीर्णा प्रसारिता स्वर्णभाः सुवर्णदीप्तिर्येन । तथा—क्वचन अधः कस्मिन्नप्यधःप्रदेशे पतनयोग्यमवतरणयोग्यदेशं स्थानमन्विष्यता पर्यालोचयता । किम्भूतः शशिपरिधिः—अदसीयममुष्या भैम्या अयं तं मुखविधुं मुखचन्द्रं सेवितुं परिचुम्बितुं लम्बमानोऽधःप्रदेशमागतः । अदसीयम् । त्यदादित्वात् 'वृद्धाच्छः ४।२।११४ भस्याढे तद्धिते ' इति वा पुंवद्भावः । ' बिंबोऽस्त्री मण्डलं त्रिषु ' इत्यमरः ॥ १०८ ॥

अनुभवति शचीत्थं सा घृताचीमुखाभि-
र्न सह सहचरीभिर्नन्दनानन्दमुच्चैः ।
इति मतिरुदयासीत्पक्षिणः प्रेक्ष्य भैमीं
विपिनभुवि सखीभिः सार्धमाबद्धकेलिम् ॥

अन्विति ॥ विपिनभुव्युपवनप्रदेशे सखीभिः सार्धं सह आबद्धकेलिं कृतक्रीडां भैमीं प्रेक्ष्य दृष्ट्वा पक्षिणो हंसस्य इति मतिर्बुद्धिरुदयासीदुत्पन्ना बभूव । इतीति किम्—सा प्रसिद्धा शचीन्द्राणी घृताचीमुखाभिर्घृताचीप्रभृतिभिः सहचरीभिरप्सरोभिः सखीभिः सह सार्धमुच्चैरतिशयेन इत्थमनेन प्रकारेण । भैमीवदित्यर्थः । नन्दनानन्दं नन्दनवने क्रीडां नानुभवति । एतत् क्रीडासुखं शच्या अपि नास्तीत्यर्थः । ततोऽपीयमधिकेति भावः । नानुभवति, अपि तु सैवेयं किं नन्दनानन्दमनुभवतीति वा । भैमीतत्सखीवनानां शचीघृताचीनन्दनैः साम्यम् । सहचरी पचादौ चरडिति पाठाट्टित्वान्ङीप् । प्रेक्ष्येति भिन्नकर्तृकत्वात्क्त्वानुपपत्तौ स्थितस्येत्यध्याहार्यम् । केलिमिति ह्रस्वः पाठः ॥ १०९ ॥

---

१ अत्रापि मालिनी छन्दः । अनुप्रासः शब्दालङ्कारः, स्वभावोक्तिरुपमा चार्थालङ्कारौ । उत्प्रेक्षास्वभावोक्ती इति तु केचित् । २ अत्रापि मालिनी वृत्तम् । अनुप्रासः, शब्दालङ्कारः । भ्रान्तिमानित्येके, स्मृतिमानित्यपरे । भैमीव शचीत्युपमानोपमयेभावमादाय तथाऽनुभवोदयोक्तौ व्यतिरेकोऽप्यर्थालङ्कारः ।

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । द्वैतीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ११० ॥

श्रीहर्षमिति ॥ पूर्वार्धं पूर्ववत् । द्वयोः पूरणो द्वितीयः द्वितीय एव द्वैतीयीकः । 'तीयादीकक्स्वार्थे वक्तव्यः' । द्विद्वैतीयीकस्य भावस्तत्ता तया मितो गणितः । निसर्गोज्ज्वलः स्वभावसुन्दरः । शेषं स्पष्टम् ॥ ११० ॥

इति श्रीवेदरकारोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृतौ नैषधीयप्रकाशे द्वितीयः सर्गः समाप्तः ॥

---

## तृतीयः सर्गः ।

अथ भैम्याः पुरस्तान्नलस्य गुणान्हंसमुखेन वर्णयितुं तृतीयसर्गमारभते—

आकुञ्चिताभ्यामथ पक्षतिभ्यां
नभोविभागात्तरसावतीर्य ।
निवेशदेशाततधूतपक्षः
पपात भूमावुपभैमि हंसः ॥ १ ॥

आकुञ्चिताभ्यामिति ॥ अथोपवनप्राप्त्यनन्तरं मण्डलकरणानन्तरं वा हंस आकुञ्चिताभ्यां संकुचिताभ्यां पक्षतिभ्यां पक्षमूलाभ्यां नभोविभागादाकाशप्रदेशात्तरसा वेगेनावतीर्योत्तीर्य उपभैमि भैमीसमीपे पपातोपविशति स्म । किम्भूतः—निवेशदेशे उपवेशस्थाने आततौ विस्तारितौ धूतौ कम्पितौ च पक्षौ येन सः पक्षिप्रकृतिः१॥

आकस्मिकः पक्षपुटाहतायाः
क्षितेस्तदा यः स्वन उच्चचार ।
द्रागन्यविन्यस्तदृशः स तस्याः
संभ्रान्तमन्तःकरणं चकार ॥ २ ॥

आकस्मिक इति ॥ पक्षपुटेन पक्षद्वयेनाहतायाः क्षितेः सकाशादाकस्मिकोऽचिन्तितोपनतोऽज्ञातहेतुको यः स्वनः शब्दस्तदापतनसमये उच्चचारोदभूत् । अकर्मक-

---

१ अत्रोपजातिश्छन्दः, स्वभावोक्तिरर्थालङ्कारः ।

स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्

त्वान्न तङ्गास शब्दस्तस्या भैम्या अन्तःकरणं द्राक् झटिति संभ्रान्तं ससंभ्रमं चकार । आकस्मिकशब्दश्रवणात्सभया साश्चर्या च जातेति भावः । कीदृश्यास्तस्याः—अन्यविन्यस्तदृशः अन्यत्र स्वनदेशात्प्रदेशान्तरेषु विन्यस्ते चालिते दृशौ यया सा । कुतोऽयं शब्द उत्पन्न इतीतस्ततो विलोकितवतीति भावः ॥ २ ॥

नेत्राणि वैदर्भसुतासखीनां
विमुक्ततत्तद्विषयग्रहाणि ।
प्रापुस्तमेकं निरुपाख्यरूपं
ब्रह्मेव चेतांसि यतव्रतानाम् ॥ ३ ॥

नेत्राणीति ॥ वैदर्भसुतासखीनां भैमीसखीनां नेत्राणि निरुपाख्यं स्तोतुमशक्यं रूपं सौन्दर्यं यस्य तमेकं केवलं हंसं प्रापुः । सादरं पपुरित्यर्थः । किम्भूतानि—विमुक्तस्त्यक्तस्तेषां तेषां विषयाणां स्रक्चन्दननृत्यगीतादीनां ग्रहो ग्रहणं यैस्तानि । केषां कानि किमिव—यतव्रतानां योगिनां चेतांसि ब्रह्मेव परमात्मस्वरूपमिव तान्यपि विमुक्तास्तत्तद्विषयाः स्रक्चन्दनवनितादयस्तेषु ग्रहोऽङ्गीकारो यैस्तानि । निरुपाख्यरूपमीदृक्तया प्रतिपादयितुमशक्यरूपम् । योगिमनोविषयत्वाद्ब्रह्मणः । एकमद्वितीयं च । वैदर्भः—विदर्भाणां राजेति पूर्ववत् । तत्तदिति वीप्सायां द्विर्वचनादेकशेषाभावः ॥ ३ ॥

हंसं तनौ सन्निहितं चरन्तं
मुनेर्मनोवृत्तिरिव स्विकायाम् ।
ग्रहीतुकामादरिणाशयेन
यत्नादसौ निश्चलतां जगाहे ॥ ४ ॥

हंसमिति ॥ असौ भैमी दरिणा सभयेन अदरिणा निर्भयेन वा शयेन पाणिना हंसं ग्रहीतुकामा धर्तुकामा सती यत्नात्स्विकायां स्वीयायां तनौ शरीरे निश्चलतां जगाहे प्राप । चित्ते तु चञ्चलैवाभूत् । किम्भूतम्—संनिहितं निकटम्, सता नलेन निहितं प्रेषितं वा । चरन्तं गच्छन्तम् । प्रयत्नपूर्वं निश्चलत्वम् । बालत्वाद्भयम् । धारणानिर्वाहाद्भयाभावः । कस्य केव—मुनेर्मनोवृत्तिरिव । यथा मुनेर्योगिनो मनोवृत्तिः मानसो व्यापारः स्विकायां तनौ चरन्तं सद्भिर्मन्वादिभिर्नितरां हितं ध्यातं, सद्भ्यो वा तेभ्य एव नितरां हितमिष्टं हंसं परमात्मानमादरयुक्तेनाशयेनाभिप्रायेण ग्रहीतुकामा ज्ञातुकमा सती निश्चलतां प्राप्नोति । पक्षिधारणप्रकृतिः । ' हंसः पक्षिणि विष्णौ च ' । स्विकेति ' भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि ७।३।४७' इति वेत्त्वम् । ग्रहीतुकामा ' ग्रहोऽलिटि दीर्घः ७।२।३७'इतीटो दीर्घः ।' तुंकाममनसोरपि'इत्युक्तनयेन पृषोदरादित्वात् मलोपः । अदरिणेति । अत इन्नन्तस्य नञ्समासः ॥ ४ ॥

तामिङ्गितैरप्यनुमाय मायामयं न भैम्या वियदुत्पपात ।
तत्पाणिमात्मोपरिपातुकं तु
मोघं वितेने प्लुतिलाघवेन ॥ ५ ॥

तामिति ॥ अयं हंसस्तां न्युब्जगमनादिरूपां भैम्या मायां स्वधारणकपटवृत्तिमिङ्गितैश्चेष्टाभिरनुमाय ज्ञात्वापि वियदाकाशं नोत्पपात उड्डयनविषयं न चकार । किंतु—आत्मोपरिपातुकं स्वस्योपरि पतनशीलं तत्पाणिं भैमीहस्तमदूरमुत्प्लवनलघुतया मोघं निष्फलं वितेने कृतवान् । प्रतार्य इयं विजनप्रदेशे नेतव्येति बुद्ध्या नोत्पपात । उत्पतने हि धारणार्थं प्रयत्नमकृत्वैवागमिष्यतीति दौत्यासिद्धिः स्यादिति भावः । अनुमाय 'न ल्यपि ६।४।६९' इति निषेधान्नेत्वम् । पातुकमिति 'लषपत—३।२।१५४' इति शील उकञ् । उपरिपातुकमिति ' सुपा २।१।४' इति समासं कृत्वा पश्चात्पूर्वेण षष्ठीसमासः । अन्यथा 'पूरणगुण—२।२।११' इति षष्ठीसमासनिषेधप्रसङ्गात् । पातुकशब्दस्योकप्रत्ययान्तत्वेऽप्युपरिपातुकशब्दस्य तदन्तत्वाभावात् 'न लोका—२।२।६९' इति षष्ठीनिषेधाभावः ॥ ५ ॥

---

१ अत्राप्युपजातिश्छन्दः । स्वभावोक्तिश्चार्थालङ्कारः ।
१ अत्रोपजातिश्छन्दः । उपमाऽर्थालङ्कारः ।

१ अत्राहुः-'प्रत्ययस्थात्कात् पूर्वस्यात इदाप्यसुपः ७।३।४४' इतीकारः । इति जीवातुकाराः, 'स्वशब्दस्य ग्रहणं सञ्ज्ञोपसर्जनार्थम्, स्वशब्दस्तु अनुपसर्जनमात्मीयवाची अकजर्हः । अर्थान्तरे तु न स्त्री । सञ्ज्ञोपसर्जनीभूतस्तु कप्रत्ययान्तत्वाद्भवत्युदाहरणम् । 'इत्युक्त्वा ' अतएवैतेन 'भस्त्रैषा—७।३।४७' इत्यनेन वैकल्पिकमित्त्वं व्याचक्षाणा उपेक्ष्याः ।' इति श्रीमनोरमायाम्'इति सुखावबोधाकाराः शब्दरत्ने तु 'स्वशब्दादत्यन्तस्वार्थिके कनित्वात्स्थानिकत्वाक्षतेर्वैकल्पिकेत्वमपि सुसाध्येव । न ह्यकचोऽत्यन्तस्वार्थिकस्यापवादः ॥'इति स्थितम् । २ अत्रोपजातिश्छन्दः अनुप्रासः शाब्द उपमात्वार्थोऽलङ्कारः।३अत्रेन्द्रवज्राछन्दः, अनुप्रासः, शब्दालङ्कारः, स्वभावोक्तिरर्थालङ्कारश्च ।

व्यर्थीकृतं पत्ररथेन तेन
तथाऽवसाय व्यवसायमस्याः।
परस्परामर्पितहस्ततालं
तत्कालमालीभिरहस्यतालम्॥ ६॥

व्यर्थीति॥ आलीभिः सखीभिस्तत्कालं तस्मिन्काले परस्परामन्योन्यमर्पितो दत्तो हस्तेषु तालस्तालिका यस्यां क्रियायां यथा भवति तथा अलमत्यर्थमहस्यत हसितम्। किं कृत्वा—अस्या भैम्या व्यवसायं पक्षिधारणोद्यमं तथा प्लुतिलाघवप्रकारेण तेन पत्ररथेन पक्षिणा हंसेन व्यर्थीकृतं निष्फलीकृतमवसाय ज्ञात्वा। परस्पराम्। 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः' इति द्वित्वम्। बहुलवचनात्समासवद्भावाभावे पूर्वपदस्य प्रथमैकवचनान्तत्वम्। कस्कादित्वात्सः। 'स्त्रीनपुंसकयोरुत्तरपदस्य वाम्भावो वक्तव्यः' इत्युत्तरपदस्याम्भावः। तत्कालम् 'कालाध्वनोः—२।३।५' इति द्वितीया॥ ६॥

उच्चाटनीयः करतालिकानां
दानादिदानीं भवतीभिरेषः।
याऽन्वेति मां द्रुह्यति मह्यमेव
साऽत्रेत्युपालम्भि तयाऽऽलिवर्गः॥७॥

उच्चेति॥ तया भैम्या आलिवर्गः सखीजन इत्यनेन प्रकारेणोपालम्भि उपालब्धः। इतीति किम्—इदानीं मय्येतं धारयन्त्यां सत्यां भवतीभिरेष हंसः करतालिकानां हस्ततालानां दानाद्वादनादुच्चाटनीय उड्डयनीयः। प्रश्नकाकुः। एतस्य ग्रहणे मया यत्नः क्रियते, भवतीभिरुच्चाटनं क्रियते, एतन्न युक्तमित्यर्थः। अत्र आसु भवतीषु मध्ये या मामन्वेति अनुगमिष्यति सा मह्यमेव द्रुह्यत्येव। एवशब्दस्यावृत्तिः। मम द्रोहमेव करिष्यतीति। अन्वेति, द्रुह्यतीति 'वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१' इति भविष्यति लट्। अन्वादेशेऽपि 'न चवाहाहैवयुक्ते ८।१।२४' इति एवशब्देन साक्षाद्योगे निषेधान्मह्यमित्यत्र न मयादेशः। मह्यम्— 'क्रुधद्रुहेर्ष्यासूयाऽर्थानां यं प्रति कोपः १।४।३७' इति चतुर्थी॥ ७॥

१ अत्रोपजातिश्छन्दः। यमकानुप्रासौ शाब्दौ। स्वभावोक्तिश्चार्थोऽलङ्कारः। २ अत्रेन्द्रवज्रा छन्दः। अनुप्रासः, शब्दालङ्कारः।

धृताल्पकोपा हसिते सखीनां
छायेव भास्वन्तमभिप्रयातुः।
श्यामाथ हंसस्य करानवाप्ते-
र्मन्दाक्षलक्ष्म्या लगति स्म पश्चात्॥८॥

धृतेति॥ श्यामा यौवनमध्यस्था हंसस्य पश्चाल्लगति स्म चचाल किंभूता—सखीनां हसिते हास्यविषये वहुपराभाभावाद् धृतः कृतोऽल्पः कोपो यया। तथा—हंसस्य करेण हस्तेनानवाप्तेरप्राप्तेर्हेतोर्मन्दाक्षेण लक्ष्म्या दृश्या। सलज्जेत्यर्थः। कस्य केव—भास्वंतं सूर्यमभिप्रयातुः सूर्यसंमुखं गच्छतः पुरुषस्य छाया यथा तस्यैव पश्चाल्लगति। छायापि हि हंसस्य सूर्यस्य किरणप्राप्तेः श्यामा भवति। हंसस्ये इत्यत्र पश्चादित्यनेन योगे 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठी। 'पश्चात्' इति निपातः। 'मन्दाक्षं ह्रीस्त्रपा' इत्यमरः॥ ८॥

शस्ता न हंसाभिमुखी पुनस्ते
यात्रेति ताभिश्छलहस्यमाना।
साह स्म नैवाशकुनीभवेन्मे
भाविप्रियावेदक एष हंसः॥ ९॥

शस्तेति॥ताभिः सखीभिरिति पूर्वोक्तेन प्रकारेण छलेन शब्दच्छलेन हस्यमाना सोपहासमुच्यमाना सा भैमी इति वक्ष्यमाणं सखीः प्रति आह स वदति स्म। इतीति किम्—हे भैमि हंसाभिमुखी राजहंससंमुखी अथ च सूर्यसम्मुखी यात्रा ते पुना राजपुत्र्या न शस्ता न प्रशस्ता। अशकुनत्वाच्छास्त्रनिषिद्धत्वादिति सखीवचनम्। हे सख्यः,एष हंसो मे मम नैव अशकुनीभवेदपशकुनरूपो नैव भवेदिति प्रार्थनायां लिङ्। यतोऽयं भावि भविष्यत्प्रियं तस्यावेदकः सूचकः।राजहंसाभिमुखी यात्रा शकुनरूपैव। हंसस्यदर्शनस्य श्रवणस्य च वसन्तराजेन सर्वसिद्धिकरत्वोक्तेरिति भावः। अत एव भावी भविष्यन्ननुरागवान्वा प्रियो नलस्तस्यावेदक इति। लोकोत्तरसुवर्णशकुनदर्शनाल्लोकोत्तरनलशुभप्राप्तिरनुमीयते वा। नैवाशकुनिः पक्ष्येवेति वा। 'प्रत्यादित्यं प्रतिबुधम्' इति यात्रानिषेधात्। न चायं सूर्यादिः, किं तु पक्ष्येव अशकुनशब्दादशुभसूचकात्पक्षिनिषेधकाच्च च्वी 'अस्य च्वौ' इतीकारः। पक्षिनिषेधकादशकुनिशब्दाच्च्वी 'च्वौ च' इति दीर्घो वा भावी गम्यादिः॥ ९॥

१ अत्रोपजातिः। उपमाऽलङ्कारः। २ अत्रेन्द्रवज्रा वृत्तम्। श्लेषमूला वक्रोक्तिरपह्नुतिश्च।

हंसोऽप्यसौ हंसगतेः सुमत्याः
पुरः पुरश्चारु चलन्बभासे ।
वैलक्ष्यहेतोर्गतिमेतदीया-
मग्रेऽनुकृत्योपहसन्निवोच्चैः ॥ १० ॥

हंस इति ॥ न केवलं ताभिरेव हसिता, किं तु असौ हंसोऽपि वैलक्ष्यहेतोर्भैमीलक्ष्योत्पादनमेव हेतुस्तस्य एतदीयां भैमीसंबन्धिनीं गतिमस्या एवाग्रे अनुकृत्यानुसृत्य उच्चैरातिशयेनोपहसन्निवोपहासं कुर्वन्निव बभासे शुशुभे । किं कुर्वन्—हंसवद्गतिर्गमनं यस्यास्तस्याः सुगत्या भैम्याः पुरःपुरोऽग्रेऽग्रे चारु रमणीयं चलन्गच्छन् । परिहासकोऽपि वेषाद्यनुकरणेनान्यान्ह्रेपयति, सुदत्याः, वैलक्ष्यहेतोरिति च 'षष्ठ्यतसर्थ—'इति 'षष्ठी हेतुप्रयोगे' इति षष्ठी ॥१०॥

पदे पदे भाविनि भाविनी तं
यथा करप्राप्यमवैति नूनम् ।
तथा सखेलं चलता लतासु
प्रतार्य तेनाचकृषे कृशाङ्गी ॥११॥

पद इति ॥ भावो हंसग्रहणानुसंधानं तद्वती सा भैमी भाविनि भविष्यति पदे पदे चरणविन्यासे तं हंसं करप्राप्यं हस्तप्राप्यं नूनं निश्चयेन यथाऽवैति जानाति उत्तरस्मिन्पदेऽवश्यमेतं धारयिष्यामीति यथा जानाति तथा सखेलं सक्रीडं चलता गच्छता तेन हंसेन प्रतार्य वञ्चयित्वा सा कृशाङ्गी लतासु वल्लीसमीपे आचकृषे आकृष्टा । भाविनीयामिति पाठे भाविनि पदविशेषणम् । भामिनीति पाठे हस्ताप्राप्तेः कोपनेत्यर्थः । कृशाङ्गीति विरहपीडा सूच्यते । प्राप्यं 'कृत्याश्च' इत्यावश्यके कृत्यः ॥ ११ ॥

रुषा निषिद्धालिजनां यदैनां
छायाद्वितीयां कलयांचकार ।
तदा श्रमाम्भःकणभूषिताङ्गीं
स कीरवन्मानुषवागवादीत् ॥१२॥

रुषेति ॥ कीरवच्छुकवन्मानुषी वागस्य यथा शुको मनुष्यवाचा वदति तथा स हंसो रुषा क्रोधेन निषिद्ध आलिजनः सखीसमूहो यया अत एव छायैव द्वितीया सहचरी यस्यास्तामेकाकिनीम्, तथा श्रमाम्भःकणैः श्रमजनितधर्मोदकबिन्दुभिः भूषितमङ्गं यस्यास्तां यदा कलयांचकार ज्ञातवान्, तदा तां प्रत्यवादीदुवाच । छायाद्वितीयामित्यनेन दौत्यावसरः सूचितः । श्रमाम्भ इत्यनेन श्रान्तेयमतः परं नागमिष्यतीति दौत्यं कर्तुमशक्यं, तस्मादत्रैव स्थातव्यं मयेति सूचितम् । भूषितपदेन श्रमबिन्दूनां मुक्तासाम्यं सूचितम् । छायया कान्त्या अद्वितीयामविद्यमानप्रतिभटां रुपा । निषिद्धालिजनां, श्रमाम्भःकणभूषिताङ्गीं च यदा ज्ञातवानिति वा । मानुषस्य वागिव वाग्यस्येति वा ॥१२॥

अये कियद्यावदुपैषि दूरं
व्यर्थं परिश्राम्यसि वा किमित्थम् ।
उदेति ते भीरपि किं नु बाले
विलोकयन्त्या न घना वनालीः ॥१३॥

अये इति ॥ अये भैमि, कियद्दूरं यावदुपैष्यागमिष्यसि । वा समुच्चये । त्वमित्यनेन प्रकारेण शीघ्रगमनादिना व्यर्थं निष्फलं किं वा परिश्राम्यसि कथय । किमाक्षेपे । वये इति व्यर्थं पक्ष्यर्थं वा । श्रमो न कार्य इत्यर्थः । किमर्थमिति पाठेऽर्थशब्दः प्रयोजनवाची । ततश्च किं प्रयोजनमित्यर्थः । यातीति याः, तद्वद्यावच्छीघ्रगामि पुरुषवत्कियद्दूरमुपैष्यसि व्यर्थमेव पक्ष्यर्थमित्थं किं परिश्राम्यसि । काक्वा प्रश्ने । व्यर्थं कियद्दूरमुपैषीति वा । नु बाले भैमि, परिश्रमं तद्वैयर्थ्यं चेन्न गणयसि तर्हि घना निबिडा वनालीर्वनपङ्क्तीर्विलोकयन्त्याः पश्यन्त्यास्ते तव भीरपि भयमपि किं नोदेति नोत्पद्यते । बालाया हि घनवनपङ्क्तिदर्शनेन भयेनोदेतव्यं तदपि तव नोदेतीत्याश्चर्यम् । 'नबाले' इति पाठे बवयोरभेदान्नवा नवीना आलयः सख्यो यस्यास्तत्संबुद्धिः । नूतनत्वात्तास्त्वां बालां वनसमीपे परित्यज्य गतास्तथा परिणता नेति भावः । यावदुपैषीति 'यावत्पुरा—' इति भविष्यति लट् । द्वितीयपक्षे या इति 'क्विप् च' इति क्विप्, तदन्ताद्वतिः । उपैषीति वर्तमानसामीप्ये भविष्यति लट् । एतेरेजादित्वात्पूर्वेण सह 'एत्येधत्यूठ्सु—'इति वृद्धिः ॥ १३ ॥

---

१ अत्रोपजातिश्छन्दः । हंसगतेरिति लुप्तोपमा, हसन्निवेत्युत्प्रेक्षा च । २ अत्रोपेन्द्रवज्रा छन्दः । यमकानुप्रासौ शब्दालङ्कारौ ।

१ अत्रोपजातिश्छन्दः । अनुप्रासः, शब्दालङ्कारः, उपमाऽर्थालङ्कारः । २ अत्राप्युपजातिश्छन्दः । अनुप्रासः, शब्दालङ्कारः । बाले इत्यादीनां साभिप्रायत्वात्परिकरोऽर्थालङ्कारः ।

वृथार्पयन्तीमपथे पदं त्वां
मरुल्ललत्पल्लवपाणिकम्पैः ।
आलीव पश्य प्रतिषेधतीयं
कपोतहुंकारगिरा वनाली ॥ १४ ॥

वृथेति ॥ इयं वनाली वनपङ्क्तिरालीव सखीव मरुता वायुना ललन्तो विलसन्तः पल्लवास्तल्लक्षणाः पाणयस्तेषां कम्पनैः कृत्वा, तथा—कपोतानां पारावतानां हुंकारगीः 'हु हुं' इति शब्दस्तया च अपथे मद्वारणरूपेऽस्थानेऽमार्गे च वृथा निष्फलं पदं व्यवसायं चरणन्यासं चार्पयन्तीं कुर्वतीं त्वां प्रतिषेधति पश्य । वाक्यार्थः ( द्वयोः ) कर्म । सख्यपि करकम्पनैर्हुंकारेण च सखीं निषेधति । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । अपथे 'पथो विभाषा ५ । ४ । ७२' इति अप्रत्ययः। 'अपथं नपुंसकम् २ ।४ । ३० ।' इति साधुः। 'हुंकारकिरा' इति पाठे किरतीति किरा 'इगुपधज्ञाप्रीकिरः कः' इत्यनेन के कान्तेन पूर्वस्य कर्मषष्ठीसमास इति सिद्धान्तः ॥ १४ ॥

धार्यः कथङ्कारमहं भवत्या
वियद्विहारी वसुधैकगत्या ।
अहो शिशुत्वं तव खण्डितं न
स्मरस्य सख्या वयसाऽप्यनेन ॥ १५ ॥

अस्थानत्वमेवाह—

धार्य इति ॥ हे भैमि ! वसुधायामेवैकाऽसाधारणा गतिः संचरणं यस्याः, वसुधैवैका गतिर्यस्या इति च भवत्या त्वया वियत्यन्तरिक्षे विहारो गमनं यस्य एवंभूतोऽहं कथंकारं कथमिव धार्यो धर्तुं शक्यः, अपितु न कथंचित् । अहो इत्याश्चर्ये संबोधने वा । स्मरस्य सख्या मित्रेणानेन प्रत्यक्षदृश्येन वयसापि । तारुण्येन तव शिशुत्वं बालत्वमज्ञत्वं च न खण्डितं न नाशितम् । मम गगनगामित्वं स्वस्य च केवलमुर्वीगामित्वमविचार्यैव मद्ग्रहणोद्योगं करोषीति भावः, प्रश्नकाकुर्वा। वयःसंधिरुक्तः । अथ च—स्मरस्य स्मरतुल्यस्य नलस्य मित्रेणानेन मल्लक्षणेन वयसा पक्षिणा ते इदं शिशुत्वं बालत्वं न खण्डितम्, अपि तु खण्डितप्रायमेव शीघ्रमेव नलप्राप्तेः करिष्यमाणत्वाद्बालत्वं झटिति गमिष्यतीति भविष्यत्यपि भूतवदुपचारः ॥ १५ ॥

सहस्रपत्रासनपत्रहंस-
वंशस्य पत्राणि पतत्रिणः स्मः ।
अस्मादृशां चाटुरसामृतानि
स्वर्लोकलोकेतरदुर्लभानि ॥ १६ ॥

मयि धृतेऽपि तव न किंचित्फलमित्याह—

सहस्रेति ॥ हे भैमि ! वयं सहस्रपत्रं कमलमासनं यस्य ब्रह्मणस्तस्य पत्राणि वाहनानि हंसास्तेषां वंशस्य कुलस्य पत्राणि पक्षभूताः सहायभूताः पतत्रिणः पक्षिणः स्मो भवामः । ततः किमत आह—अस्मेति अस्मादृशां मादृशां चाटूनि प्रियवचनानि तेषु यो रसः शृङ्गारादिस्तल्लक्षणानि अमृतानि स्वर्लोके ये लोका जनास्ते इतरे ये पृथ्वीपाताललोकवासिनस्तैर्दुर्लभानि दुष्प्रापणि । अमृतानि भुवि जनानां दुष्प्रापाणि । मानुषी त्वं मदर्थं किमर्थं क्लिश्यसीति भावः । 'पत्रं स्याद्वाहने पर्णे पक्षे च शरपक्षिणाम्' इति विश्वः । 'अस्मदो द्वयोश्च १।२।५९।' इति स्वाभिप्रायं स्म इति बहुवचनम् । नलतडागस्थहंसाभिप्रायं वा । अस्मादृशाम् ' आ सर्वनाम्नः ६।३। ९१ ' इत्यात्वम् । दुर्लभानि 'न सुदुर्भ्याम् केवलाभ्याम् ७।१।६८' इति नुमभावः॥ १६ ॥

स्वर्गापगाहेममृणालिनीनां
नालामृणालाग्रभुजो भजामः ।
अन्नानुरूपां तनुरूपऋद्धिं
कार्यं निदानाद्धि गुणानधीते ॥ १७ ॥

ननु भवतां हंसत्वात्सुवर्णशरीरत्वं कथमित्यत आह—

स्वर्गेति ॥ हे भैमि, वयम् अन्नानुरूपां भक्षणीययोग्यां तनुरूपऋद्धिं कायकान्तिसमृद्धिं भजामः प्राप्नुमः । किम्भूता—स्वर्गापगा स्वर्गनदी तस्या हेममृणालिनीनां स्वर्णकमलिनीनां या नाला मृणालानि च तेषामग्राणि क्रमेण कमलानि कोमलबिसाऽवयवाश्च नालासंबन्धीनि मृणालानि वा भुञ्जत इति भुजेः क्विप् । हि प्रसिद्धं कार्यं घटादि निदानादादिकारणात् मृत्पिण्डादेः समवायिकारणाद्गुणान्कार्ष्ण्यादीनधीते लभते । 'कारणगुणाः

---

१ अत्रोपजातिः छन्दः, आलीवेत्युत्प्रेक्षेति केचित्, उपमेत्यन्ये । पल्लवानां पाणित्वेनोक्तौ रूपकं च ।

१ अत्राप्युपजातिश्छन्दः । परिकरो विशेषोक्तिश्चालङ्कारौ। २ अत्राप्युपजातिश्छन्दः । अनुप्रासः, पुनरुक्तवदाभासश्च शब्दालङ्कारौ वंशस्येव वंशस्येत्यभेदेन रूपणाद्रूपकातिशयोक्तिरर्थालङ्कारः ।

कार्यगुणानारभन्ते' इति नैयायिकाः । प्रकृते सुवर्णमृणालभक्षणात्सुवर्णमयत्वमस्माकमिति भावः । नालाशब्दः स्त्रीलिङ्गः । नलस्येमे नाला वयमिति वा भिन्नं पदम् । रूपऋद्धिम् ' ऋत्यकः ६।१।१२८' इति प्रकृतिभावः । निदानात् 'आख्यातोपयोगे १।४।२९' इत्यपादानत्वम् ॥ १७ ॥

धातुर्नियोगादिह नैषधीयं
लीलासरः सेवितुमागतेषु ।
हैमेषु हंसेष्वहमेक एव
भ्रमामि भूलोकविलोकनोत्कः ॥ १८॥

ननु यदि भवान्ब्रह्मणो वाहनं तर्हि भुवं प्रत्यागमने च को हेतुरत आह—

धातुरिति ॥ हे भैमि! क्रीडास्थलं पृष्टस्य धातुर्ब्रह्मणो नियोगादाज्ञया इह भूलोके नैषधीयं नलसंबन्धि लीलासरः क्रीडासरः सेवितुमालोडयितुमागतेषु प्राप्तेषु हैमेषु सौवर्णेषु हंसेषु मध्ये एकोऽहमेव भूलोकविलोकने उत्क उत्कण्ठितः सन् भ्रमामि विचरामि । भूलोकं पश्यन् प्रसङ्गादत्रागतोऽहमित्यर्थः । मत्सदृशा बहवो नलसरासि क्रीडन्तीत्यर्थः । हैमेषु विकारे अनुदात्तादित्वादञन्तत्वान्न प्रकृतिभावः । हंसेषु निर्धारणे सप्तमी । 'उत्क उन्मनाः ५।२।८०' इति निपातात्साधुः ॥ १८ ॥

विधेः कदाचिद्भ्रमणीविलासे
श्रमातुरेभ्यः स्वमहत्तरेभ्यः ।
स्कन्धस्य विश्रान्तिमदां तदादि
श्राम्यामि नाविश्रमविश्वगोऽपि ॥१९॥

'धार्यः कथङ्कारम्—' इति यदुक्तं तत्र भूपर्यटनेन श्रान्तस्य तव धारणे कः प्रयास इत्याशङ्कायामाह—

विधेरिति॥हे भैमि,अहं विधेर्ब्रह्मणः कदाचित्कस्मिंश्चित्समये भ्रमणीविलासे बाह्यलीलायां श्रमातुरेभ्यः परिश्रान्तेभ्यः स्वमहत्तरेभ्यो निजपूर्वजेभ्यो हंसेभ्यः स्कन्धस्य विश्रान्तिमदाम् । तेषु श्रान्तेषु तद्भारमहमग्रहीषम्—किम्भूतोऽहम्—अविश्रमं क्वचिद्विश्रान्तिमकृत्वैव विश्वगोऽपि सर्वलोकगाम्यपि । तदादि तत्प्रभृति न श्राम्यामि न श्रान्तो भवामि । निजपूर्वजप्रसादाच्छ्रमराहितो विश्वं भ्रमामीति भावः । भ्रमणी इति 'कृत्यल्युटो बहुलम् ३ । ३ । ११३' इति ल्युट् । श्राम्यामि 'शमामष्टानां दीर्घः श्यनि ७।३।७४'इति दीर्घः । 'डप्रकरणेऽन्यत्रापि गमेर्डो दृश्यते' इति विश्वग इत्यत्र डः ॥ १९ ॥

बन्धाय दिव्ये न तिरश्चि कश्चि-
त्पाशादिरासादितपौरुषः स्यात् ।
एकं विना मादृशि तन्नरस्य
स्वर्भोगभाग्यं विरलोदयस्य ॥ २० ॥

ननु पक्षिणः सर्वत्र बन्धनसंभवात्त्वं कथं न बद्ध इत्याशङ्क्य नलप्रसङ्गेनोत्तरं प्रयच्छति—

बन्धायेति ॥ कश्चित्पाशादिर्वागुरादिर्दिव्ये दिवि भवे मादृशि मत्सदृशे तिरश्चि पक्षिणि विषये बन्धाय बन्धनाय मादृशं बद्धुमासादितपौरुषः प्राप्तसामर्थ्यो न स्यान्न भवेत्। दिव्यत्वादेवाहं केनचिद्बद्धुं न शक्य इत्यर्थः । परमयं विशेषः—विरलोदयस्य विरलजन्मनः क्वचित्कस्यचिन्नरस्य पुरुषस्य तत्प्रसिद्धमेकमसाधारणं स्वर्भोगभाग्यं स्वर्लोके स्रक्चन्दनादिभोगयोग्यं भाग्यं शुभं कर्म विना । यो भूमिस्थोऽपि स्वर्गभोगं भुङ्क्ते तस्यैव मादृशा वश्या इति भावः । एवंविधः कश्चन, न सर्व इत्यर्थः । अथ च—विगतो रेफो यस्य विरस्तस्य, रस्य स्थाने लस्योदयो यस्मिंस्तस्य नलस्य । यद्वा—नरशब्दस्य विशेषेण रस्थाने लोदयो यस्य । उभयथापि नलस्येत्यर्थः । ततश्च नलस्य तदेयं स्वर्भोगभाग्यं विना मादृशं धर्तुं कोऽपि न शक्नोति । नलस्य स्वर्भोगभागधेयस्यैव मादृशा वश्या इति भावः । स चासौ नरश्च तन्नर इति वा । बन्धाय 'तुमर्थात्—' इति चतुर्थी । दिव्ये दिगादित्वाद्यत् । एकम् 'पृथग्विना—' इति द्वितीया । विरेति 'प्रादिभ्यो धातुजस्य—' इति समासः ॥ २० ॥

इष्टेन पूर्तेन नलस्य वश्याः
स्वर्भोगमत्रापि सृजन्त्यमर्त्याः ।
महीरुहा दोहदसेकशक्ते-
राकालिकं कोरकमुद्गिरन्ति ॥ २१ ॥

नरस्य स्वर्भोगभाग्यमेव कुत इत्यत आह—

इष्टेनेति॥इष्टेन यागादिना । पूर्तेन कूपादिना, अपेक्षि-

१ अत्रेन्द्रवज्रा छन्दः । अनुप्रासः शब्दालङ्कारः अर्थान्तरन्यासश्चार्थालङ्कारः । २ अत्रेन्द्रवज्रा छन्दः । यमकमलङ्कारः ।

१ अत्रोपजातिश्छन्दः । विश्रमहेतोर्भ्रमणस्य सत्त्वेऽपि तदनुत्पत्त्युत्पत्तेर्विशेषोक्तिः,काव्यलिङ्गं च । २ अत्रेन्द्रवज्रा छन्दः । अनुप्रासः, शब्दालङ्कारः, विनोक्तिरर्थालङ्कारः।

ताधिकदक्षिणादिना या वश्या अमर्त्या देवा अत्रापि भूलोकेऽपि मनुष्यजन्मन्यपि नलस्य स्वर्भोगं सृजन्ति। यागवाहुल्यं तडागवाहुल्यं च नलं विना केनापि न कृतमिति तस्यैव वश्या भूत्वा स्वर्भोगं सृजन्ति। देहान्तरदेशान्तरभावि स्वर्गफलं कथमत्रैवेत्याशङ्क्याह—अचेतना अपि महीरुहा वृक्षा दोहदसेकशक्तेर्धूपादिदोहदसामर्थ्याद्गर्भाधानोपाधिनिक्षेपसामर्थ्याद्वा उदकसेकसामर्थ्यान्नाकालिकमन्यकालभवनयोग्यं कोरकं कलिकामुद्गिरन्ति कालान्तरे प्रकटयन्ति। तथा—वृक्षा अपीष्टेन दोहदेन पूर्तेन खातेनालवालेन नलाधीनाः सन्तो दोहदसेकसामर्थ्यादाकालिकं कोरकमुद्गिरन्तीत्यपि ज्ञेयम्। अन्योऽपीष्टो वश्यः सन्स्वर्गफलतुल्यं वस्तु ददाति। 'अथ क्रतुकर्मेष्टं पूर्तं खातादिकर्मणि' इत्यमरः। वश्यः 'वशं गतः' इति यत्। महीरुहाः'इगुपधज्ञाप्रीकिरः कः३।१।१३५' इति कः। अकाले भवः अध्यात्मादित्वाट्ठञ्। पूर्तेन 'न ध्याख्यापॄमूर्छिमदाम् ८।२।५७' इति नत्वनिषेधः॥ २१॥

सुवर्णशैलादवतीर्य तूर्णं
स्वर्वाहिनीवारिकणावकीर्णैः।
तं वीजयामः स्मरकेलिकाले
पक्षैर्नृपं चामरबद्धसख्यः॥ २२॥

स्वर्भोगमेव वक्ति—

सुवर्णेति॥ वयं स्मरकेलिकाले सुरतक्रीडासमये पक्षैस्तं नृपं नलं वीजयामः। तस्य सुरतखेदापनयनं कुर्मः। किं कृत्वा—सुवर्णशैलान्मेरोस्तूर्णं झटिति अवतीर्य आगत्य। किंभूतैः पक्षैः—स्वर्वाहिनी मन्दाकिनी तस्या वारिकणा जलकणास्तैरवकीर्णैर्व्याप्तैः। तथा—गौरत्वाच्चामरैः सह बद्धं कृतं सख्यं सादृश्यं यैः। चामरतुल्यैरित्यर्थः। अथ च—अमरैर्देवैः सह बद्धं कृतं सख्यं यैः। देवैरपि नलस्य स्वर्भोगः सृज्यते, अस्मत्पक्षैरपीति तैः सह सख्यम्। अस्मिन्पक्षे देवा वयं च वीजयामः। तूर्णमित्यनेन सेवाधर्मः सूचितः। 'ज्वरत्वरास्रिव्यविमवामुपधायाश्च ६।४।२०' इत्यूठ्॥ २२॥

क्रियेत चेत्साधुविभक्तिचिन्ता
व्यक्तिस्तदा सा प्रथमाभिधेया।
या स्वौजसां साधयितुं विलासै-
स्तावत्क्षमानामपदं बहु स्यात्॥ २३॥

तस्या नलेऽनुरागं दृष्ट्वा तद्वर्णनं प्रक्रमते—

क्रियेतेति॥ के के साधव इति साधूनां विभक्त्या विभागेन चिन्ता विचारणा चेद्यदि क्रियेत तदा तर्हि सा नललक्षणा व्यक्तिः प्रथमा आद्याऽभिधेया वाच्या। साधूनां मध्ये नल एव प्रथमो गण्य इति भावः। सा का—या स्वौजसां स्वकीयतेजसां विलासैर्विभवैर्बहु असंख्याकमनापदं नमनं नाम स न विद्यते येषां तेऽनामाः शत्रवस्तेषां राज्ञां शत्रूणां स्थानं तावत्साकल्येन साधयितुं स्वाधीनं कर्तुं क्षमा समर्था भवेत्। तावदतिमहत्क्षमानाम पृथिवीसंज्ञकं पदं साधयितुमेकैव बहुरनेकधा स्यादिति। सविसर्गः पाठ इति वा। एतेन पृथ्वीमण्डले स एव राजा नान्य इति सूचितमिति व्याख्यातम्। अथ च—चेद्यदि साधु सम्यग्विभक्तीनां सुप्तिङां चिन्ता विचारणा क्रियेत तदा सा व्यक्तिः प्रथमाभिधेया प्रथमेत्यभिधेयं संज्ञा यस्याः सा। सा का—या स्वौजसामेकवचनद्विवचनबहुवचनसंज्ञकानां प्रत्ययानां विलासैर्यथासंभवं विसर्जनीयलोपामादेशशीभावादिरूपैः प्रकारविशेषैर्बहु नाम प्रातिपदिकं पदं सुबन्तं साधयितुं कर्तुं निष्पादयितुं तावदतितरां क्षमा समर्था स्याद्भवति सा व्यक्तिः प्रथमाभिधेया व्यज्यतेऽनया प्रातिपदिकार्थ इति व्यक्तिर्विभक्तिः प्रथमेत्यभिधेया। अथच—साधुविभक्तीनां चिन्ता विचारो यदि क्रियेत तर्ह्येकवचनादिसंज्ञकानां स्वौजसां मध्ये या प्रथमा व्यक्तिर्विभक्तिः सुलक्षणा सैवाभिधेयेति यावत्। प्रयोगयोग्यत्वाय 'एकवचनमुत्सर्गतः करिष्यते' इति न्यायेन सुविभक्तिरेव विधेया भवतीति भावः॥ २३॥

राजा स यज्वा विबुधव्रजत्रा
कृत्वाध्वराज्योपमयैव राज्यम्।
भुङ्क्ते श्रितश्रोत्रियसात्कृतश्रीः
पूर्वं त्वहो शेषमशेषमन्त्यम्॥ २४॥

१ अत्रोपजातिश्छन्दः। अनुप्रासः, शब्दालङ्कारः। दृष्टान्तोऽर्थालङ्कारः। २ अत्राप्युपजातिश्छन्दः। उपमाऽर्थालङ्कारः।

१ अत्रोपजातिर्वृत्तम्। प्रकृते साधुविभक्त्यादिशब्दानां महात्मविचाराद्यर्थबोधनोत्तरं विरतव्यापाराणामर्थान्तरं बोधयितुमशक्तत्वेऽपि अर्थान्तरप्रत्यायकत्वं तद्व्यञ्जनामूलम्। तथा च व्यज्यमानोऽर्थोऽसङ्गतो माभूदिति वाच्यव्यङ्ग्ययोरुपमानोपमेयत्वमादायोपमाध्वनिरङ्गीकर्तव्यः।

राजेति ॥ श्रितश्रोत्रियसादाश्रितच्छन्दोऽध्याय्यधीनदेयीकृता श्रीर्लक्ष्मीर्येन स यज्वा विधिनेष्टवान्स राजा नलोऽध्वरे यज्ञे यदाज्यं घृतं देवसमूहाधीनदेयीकृतं तस्य घृतस्योपमयैव दृष्टान्तेनैवोपभोगेनैव राज्यं विबुधानां विदुषां व्रजः समूहस्तदायत्तं देयं कृत्वा संपाद्य श्लोकोक्तक्रमापेक्षया पूर्वमध्वराज्यं यज्ञशेषाज्यं हुतावशिष्टम्, अन्त्यं राज्यमशेषं सकलमपि भुङ्क्ते इत्यहो आश्चर्यम् । यत् पूर्वं भुज्यते तदशेषं शेषं न भवति यत्पश्चात्तच्छेषमिति लोकप्रसिद्धिः । अत्र तु विपरीतमिति । अहो आश्चर्यम् । देवसमूहाधीनदेयीकृतस्य यज्ञघृतस्योपभोगं यथा करोति तथा विद्वज्जनायत्तीकृतस्य राज्यस्यापीति भावः । यज्ञदक्षिणास्तु श्रोत्रियेभ्य एव दत्ताः राज्यभोगस्तु विद्वज्जनैः सहेति विबुधव्रजत्रा इत्यनेन श्रोत्रियसादित्यस्य न पौनरुक्त्याशङ्का । 'जन्मना ब्राह्मणो ज्ञेयः (' जायते शूद्रः, ' जायते वर्णी ) संस्काराद्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥' इति मुख्यत्वाच्च पृथगुपादानं श्रोत्रियस्य । अत्र च—सर्वजनोपभोग्यत्वादध्वनि मार्गे एव यद्राज्यं तत्सामान्येनैवोपभुङ्क्ते इति समस्तराज्योपभोग एवाश्चर्यहेतुरिति । अनेकयज्ञकारी समुद्रावधिराज्यस्य चोपभोक्तेति भावः । यज्वेति 'सुयजोर्ङ्वनिप्' । राज्योपमयेति षष्ठीसमासः । भुङ्क्तेरुपभोगस्य विवक्षितत्वात्स्त्रियं भुङ्क्ते इतिवत् 'भुजोऽनवने १।३।६६' इति तङ् । श्रिताः स्वयमाश्रिताः पालिता इति कर्मण्येव क्तप्रत्ययः समर्थनीयः । 'श्रोत्रियंश्छन्दोधीते ५।२।८४' इति श्रोत्रियशब्दः साधुः । कृतश्रीरितीयङ्स्थानत्वान्नदीत्वाभावात्कबभावः ॥ २४ ॥

दारिद्र्यदारिद्रविणौघवर्षै-
रमोघमेघव्रतमर्थिसार्थे ।
संतुष्टमिष्टानि तमिष्टदेवं
नाथन्ति के नाम न लोकनाथम् ॥ २५ ॥

दारिद्र्येति ॥ के नाम लोकास्तं लोकनाथं राजानं नलमिष्टानि हितानि धनादीनि न नाथन्ति न याचन्ते, अपितु सर्वेऽपि । याच्ञाकरणे हेतुगर्भाणि विशेषणानि । किंभूतम्—बहुत्वेन दारिद्र्यदारैर्भिर्दारिद्र्यनाशकैर्द्रविणौघवर्षैर्धनसमूहवर्षैः कृत्वा अर्थिसार्थे याचकसमूहेऽमोघं सफलं मेघव्रतं यस्य । जलदा यथा जलवर्षैर्लोकं सुखयन्ति तथा धनवर्षैरयम् । तथा—संतुष्टमवदानैः संतोषयुक्तं सहजोत्साहयुक्तं वा । तथा—इष्टदेवं यजिकर्मीकृता देवा येन । इष्टाः प्रिया देवा यस्येति वा । इष्टो हितश्चासौ देवो राजा च इष्टदेवतारूपं वा । नामेति शिरश्चालने । दारिद्र्यनाशसमर्थधनदानशीलत्वात्सर्वोऽपि तं याचत इति भावः । अथ च प्रसन्नं देवं ब्रह्माणम्, इन्द्रं वा धनादीनि सर्वेऽपि याचन्ते । नाथिर्याच्ञार्थो द्विकर्मकः । आशिष्येव तङो नियमादत्र परस्मैपदम् ॥ २५ ॥

अस्मत्किल श्रोत्रसुधां विधाय
रम्भा चिरं भामतुलां नलस्य ।
तत्रानुरक्ता तमनाप्य भेजे
तन्नामगन्धान्नलकूबरं सा ॥ २६ ॥

अस्मदिति ॥ सा रमणीयरूपा रम्भा देवाङ्गना नलस्य अतुलां लोकत्रयेऽप्यनुपमां भां कान्तिमस्मत्सकाशाच्चिरं श्रोत्रसुधां कर्णामृतं विधाय कृत्वा बहुकालं सादरमाकर्ण्य तत्र नले अनुरक्ता सती तं नलमनाप्य किल अप्राप्यैव तस्य नलस्य नाम्नो गन्धाल्लेशात्, न त्वनुरागात् । नलकूबरं कुबेरपुत्रं भेजे प्राप । नलकूबरनामापेक्षया तस्य लेशत्वम् । गन्धात्संबन्धादिति वा व्याख्येयम् । अन्योऽप्यभीष्टवस्तुप्राप्त्यभावात्केनचिद्गुणेन तत्सदृशमन्यद्वस्तु भजते । 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः । अनाप्येत्यत्राङ्प्रश्लेषादनपूर्वत्वाल्ल्यप् ॥ २६ ॥

स्वर्लोकमस्माभिरितः प्रयातैः
केलीषु तद्गानगुणान्निपीय ।
हा हेति गायन्यदशोचि तेन
नाम्नैव हाहा हरिगायनोऽभूत् ॥ २७ ॥

स्वर्लोकमिति ॥ केलीषु नलसुखासिकाविलासु क्रीडासु वा तस्य नलस्य गानस्य गुणान्माधुर्यादिगुणान्निपीय सादरमाकर्ण्य इतो भूलोकात्स्वर्लोकं प्रयातैर्गतैरस्माभिः कर्तृभिर्गायन् ( हाहासंज्ञको ) हरिगायन इन्द्रगायको हाहेति यदशोचि हा हा कष्टं कष्टमिति यस्मा-

१ अत्रेन्द्रवज्रा वृत्तम्, शेषेत्यत्र यमकं शब्दालङ्कारः । उत्प्रेक्षोपमाव्यतिरेकाश्चार्थालङ्काराः ।

१ अत्रोपजातिः छन्दः । अनुप्रासः शब्दालङ्कारः । उपमा चार्थालङ्कारः । २ अत्रेन्द्रवज्रा छन्दः । शोभारूपसुधापानमात्रेण नलनामगन्धशालिनः पुत्रस्योपरयसम्भवेऽपि सम्भवोक्तेरतिशयोक्तिः क्लिष्टोत्प्रेक्षा च ।

न्निन्दितस्तेनैव कारणेन स हरिगायनो नाम्ना हाहा एवाभूत् । ततः परं हाहा इत्येव नामाभूत् । तेनैव नाम्नेति वा । 'हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्' इत्यमरः । गायनः । 'ण्युट् च' इति ण्युट् ॥ २७ ॥

शृण्वन्सदारस्तदुदारभावं
हृष्यन्मुहुर्लोम पुलोमजायाः ।
पुण्येन नालोकत लोकपालः
प्रमोदबाष्पावृतनेत्रमालः ॥ २८ ॥

शृण्वन्निति ॥ लोकपाल इन्द्रः नाकपाल इति पाठेऽप्ययमेवार्थः । पुलोमजाया इन्द्राण्या लोम तस्या एव पुण्येन नालोकत न पश्यति स्म । किं कुर्वन्—सदार इन्द्राणीसहितः तस्य नलस्योदारभावं वदान्यत्वं शृण्वन्नाकर्णयन्मुहुर्वारंवारं हृष्यन्रोमाञ्चो भवन् । अत एव तद्रोम नापश्यदिति वा, मुहुर्वारंवारं हृष्यदिति रोमविशेषणं वा । तदनवलोकने हेतुगर्भं विशेषणम् । तथा—प्रमोदबाष्पैरानन्दाश्रुभिरावृता व्याप्ता नेत्रमाला नेत्रपङ्क्तिर्यस्य सः । इन्द्राण्या नलगुणाकर्णनोद्भूतं रोमाञ्चं चेदिन्द्रोऽद्रक्ष्यत् । अद्भुतौदार्यश्रवणरसावेशाद्रोमाञ्चोदयस्तद्दर्शने शक्रस्य शृङ्गाररसाधिक्यशङ्का स्यात्तर्हि असतीत्वात्त्यागमकरिष्यत् । तस्यौदार्यातिशयः सूचितः । अदर्शने हेतुद्वयम्—बाष्पैर्नेत्रनिमीलनत्वम् तस्याः पुण्यं च ॥ २८ ॥

साऽपीश्वरे शृण्वति तद्गुणौघान्
प्रसह्य चेतो हरतोऽर्धशम्भुः ।
अभूदपर्णाऽङ्गुलिरुद्धकर्णा
कदा न कण्डूयनकैतवेन ॥ २९ ॥

साऽपीति ॥ साऽपि पातिव्रत्येन प्रसिद्धाऽप्यपर्णा पार्वत्यपि कण्डूयनकैतवेन कण्डूयनव्याजेनाङ्गुलिरुद्धकर्णाङ्गुलिनिरुद्धश्रवणा कदा नाभूत्, अपितु सर्वदैव जाता । कस्मिन्सति—ईश्वरे शंभौ प्रसह्य बलात्कारेण चेतोऽन्तःकरणं हरतो वशीकुर्वतस्तद्गुणौघान्नलगुणसमूहाञ्शृण्वति सादरमाकर्णयति सति । किम्भूता अपर्णा—अर्धं शरीरार्धं शम्भुर्यस्याः । शम्भोः शरीरार्धं वा एकदेशिसमासो वा । शंभोरर्धशरीरत्वादन्यत्र गन्तुमशक्यत्वात्तद्गुणश्रवणेन सात्त्विकभावरोमाञ्चाद्युत्पत्तेः पातिव्रत्यभङ्गभीत्या च शम्भुर्ज्ञास्यतीति भीत्या च तद्गुणवर्णनप्रस्तावे कण्डूयनव्याजेन कर्णौ रुणद्धि स्मेत्यर्थः । अपर्णेत्यनेन शुष्कपर्णत्यागतपस्यया शम्भुप्राप्त्यर्थं यतमानया तया पातिव्रत्यभङ्गभीत्या कर्णरोधः कृत इति भावः ॥ २९ ॥

अलं सजन्धर्मविधौ विधाता
रुणद्धि मौनस्य मिषेण वाणीम् ।
तत्कण्ठमालिङ्ग्य रसस्य तृप्तां
न वेद तां वेदजडः स वक्राम् ॥ ३० ॥

अलमिति ॥ धर्मविधौ संध्याकर्मकरणे सजन्सक्तः सन् विधाता ब्रह्मा मौनस्य मिषेणालमत्यर्थं वाणीमावृणोति । बहिर्निर्गता पुरुषान्तरं भजेदिति शङ्कया मौनं करोति न तु धर्मार्थमिति भावः । यद्रुणद्धि तदलं वृथेति वा । वैयर्थ्यमेवाह—स ब्रह्मा तत्कण्ठं नलकण्ठमालिङ्ग्याश्लिष्य रसस्य शृङ्गारादिनवरसैस्तृप्तां संपूर्णां वक्रां वक्रोक्तिरूपां तां वाणीं न वेद न जानाति । यतो वेदजडः सदैव वेदपाठव्याकुलीभूतहृदयः । निरुद्धापि कदा निर्गत्य नलकण्ठमालिलिङ्गेति नाज्ञासीदिति भावः । अथ च वेदजडत्वात्तं विहायानुरागान्नलकण्ठमालिङ्ग्य शृङ्गारादिपूर्णामित्यर्थः । शृङ्गारादियुक्तां वक्रोक्तिं नल एव जानाति नान्य इत्यर्थः । अन्योऽपि छान्दसः [illegible]मनुरक्तां वा स्वस्त्रियं न जानाति । 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २ । २ । १५' इति सुहितार्थयोगे षष्ठीसमासनिषेधादेव रसस्येति तृप्त्यर्थकरणे षष्ठी ॥ ३० ॥

श्रियस्तदालिङ्गनभूर्न भूता
व्रतक्षतिः कापि पतिव्रतायाः ।
समस्तभूतात्मतया न भूतं
तद्भर्तुरीर्ष्याकलुषाणुनाऽपि ॥ ३१ ॥

---

१ अत्रापीन्द्रवज्रा वृत्तम् । अतिशयोक्तिश्चालङ्कारः ।
२ अत्रेन्द्रवज्रा छन्दः । अनुप्रासः शब्दालङ्कारः, लकारस्यानेकत्र समावेशात् ।

१ अत्रोपजातिश्छन्दः, अनुप्रासालङ्कारः । वस्तुतो गुणानां प्रसह्य चेतोहरत्वमेव, किं तु कैतवेन तदपह्नवं सम्भाव्य हंसेन तथोक्तमित्यपह्नुतिः । नच भावोदयः, तत्रायोगात् किंतु तथा सम्भाव्यैव पार्वत्या कण्डूयत इति वोत्प्रेक्षा गम्यते । २ अत्रोपजातिश्छन्दः अनुप्रासो यमकं च शब्दालङ्कारौ मौनस्य मिषेणेत्यपह्नुतिः । वाण्योर्भेदेऽप्यभेदोक्तेरभेदातिशयोक्तिः । नायकनायिकाव्यवहारप्रतीतेः समासोक्तिः, अवेदनोक्तेः समर्थनाय वेदजड इत्यस्यानुगुण्यात्परिकरश्चार्थालङ्कारः ।

श्रिय इति ॥ पातिव्रतायाः श्रियः शोभायाः छलेन राज्यलक्ष्मीछलेन च तदालिङ्गनं नलालिंगनं तस्माद् भवतीति भूः कापि व्रतक्षतिः पातिव्रत्यक्षतिर्न भूता न जाता । तस्या लक्ष्म्या भर्तुर्विष्णोर्नलालिङ्गनेन लक्ष्मीविषये ईर्ष्याऽसहिष्णुत्वलक्षणा तया कलुषं कालुष्यं तस्याणुर्लेशस्तेनापि न भूतं न जातम् । पातिव्रत्यक्षत्यभावे, तद्भर्तुरीर्ष्याकालुष्याभावे च हेतुमाह—समस्तभूतात्मतया समस्तानां भूतानामात्मस्वरूपं विष्णुस्तस्य भावस्तत्ता तया । विष्णोः सकलभूतस्वरूपत्वेन नलोऽपि विष्णुरेवेति तदालिङ्गनेन पातिव्रत्यक्षतिः, विष्णोरीर्ष्या च नाभूदित्यर्थः । सदा कान्तिसंपत्तियुक्त इति भावः । कलुषशब्दोऽत्र धर्ममात्रपरः । असूयानिमित्तपापलेशेनापि न भूतमिति वा । पत्यर्थभर्तृशब्दस्य याजकादित्वात्षष्ठीसमासः ॥ ३१ ॥

धिक् तं विधेः पाणिमजातलज्जं
निर्माति यः पर्वणि पूर्णमिन्दुम् ।
मन्ये स विज्ञः स्मृततन्मुखश्रीः
कृत्वाऽर्धमौज्झद्धरमूर्ध्नि यस्तम् ॥ ३२ ॥

धिगिति ॥ हे भैमि, स्मृता तस्य नलस्य मुखश्रीर्येन एवंभूतोऽपि यो विधेर्ब्रह्मणः पाणिर्हस्तः पर्वणि पूर्णिमायां पूर्णं परिपूर्णकलं सकलङ्कं चन्द्रं निर्माति रचयति । अत एवाजातलज्जं निर्लज्जं विधेः पाणिं धिक् । तज्जेत्रे नलानने सत्यपि यः करस्तस्मादतिहीनं पूर्णचन्द्रं निर्माति स निर्लज्जत्वान्निन्द्य एव । स विधेः पाणिर्विज्ञः कुशलः । स कः—यः स्मृतनलाननश्रीः सन् कृतार्धं कृतैकदेशमपि तं चन्द्रं हरमूर्ध्नि शिवमस्तके औज्झत्त्याजेत्यहं मन्ये । प्रारब्धमपि तदुत्तमस्यान्यस्य स्मरणाद्यस्त्यजाति स विपश्चिदेवेति भावः । पूर्णकलमेककलं च चन्द्रं यद्यप्येक एव ब्रह्मणः पाणिर्निर्माति तथापि कार्यभेदान्मूर्खत्वं कालभेदादुपचर्यते । चन्द्राद्प्यतिरमणीयं तदाननमिति भावः ॥ ३२ ॥

निलीयते ह्रीविधुरः स्वजैत्रं
श्रुत्वा विधुस्तस्य मुखं मुखान्नः ।
सूरे समुद्रस्य कदाऽपि पूरे
कदाचिदभ्रभ्रमदभ्रगर्भे ॥ ३३ ॥

१ अत्रोपजातिश्छन्दः । 'नभ्रू' इतियमकम् । काव्यलिङ्गमर्थालङ्कारः । २ अत्रेन्द्रवज्रा छन्दः । आक्षेपः मन्य इत्यनेनोक्तस्यार्थस्याक्षेपणात, उत्प्रेक्षा परिकरश्च ।

निलीयत इति ॥ हे भैमि, विधुश्चन्द्रो नोऽस्माकं मुखात्तस्य मुखं स्वजैत्रं स्वस्य जेतृ श्रुत्वा ह्रीविधुरो लज्जाविकलः सन्कदापि कदाप्यमावास्यायां सूरे सूर्ये, कदाप्यस्तसमये समुद्रस्य पूरे प्रवाहे कदाचित्प्रावृट्काले अभ्र आकाशे भ्रमन्ति अभ्राणि मेघास्तेषां गर्भे मध्ये निलीयतेऽन्तर्हितो भवति । अन्योऽपि स्वजेतारं श्रुत्वा लज्जाविकलोऽलक्षितेषु स्थानेषु निलीयते । 'सूरसूर्यार्यमा' 'द्योदिवौ द्वे स्त्रियामभ्रम्', 'अभ्रं मेघः' इति चामरः। जेत्रेव जैत्रम् । प्रज्ञादिभ्यश्चाण् ५।४।३८' इत्य ॥ ३३ ॥

सञ्ज्ञाप्य नः स्वध्वजभृत्यवर्गा-
न्दैत्यारिरस्यब्जनलास्यनुत्यै ।
तत्संकुचन्नाभिसरोजपीता-
द्धातुर्विलज्जं रमते रमायाम् ॥ ३४ ॥

संज्ञाप्येति ॥ दैत्यारिर्विष्णुः स्वध्वजस्य गरुडस्य भृत्यवर्गान्नोऽस्मानस्यब्जं जितकमलं नलास्यं नलमुखं तस्य नुत्यै स्तुतये संज्ञाप्य संज्ञया आज्ञाप्य धातुर्ब्रह्मणः सकाशाद्विलज्जं लज्जारहितं यथा तथा रमायां लक्ष्म्यां रमते क्रीडति । किंभूताद्धातुः—तयाऽसमत्कृतया नलाननतुत्या संकुचन्मुकुलीभवन्नाभिसरोजं नाभिकमलं, तेन पीतादन्तर्हितादपश्यत इत्यर्थः । अब्जमतिक्रान्तम् । अयमेव मुकलीभवने हेतुः । 'स्तवः स्तोत्रं, स्तुतिर्नुतिः' इत्यमरः । पश्यतो वृद्धस्य समक्षं स्त्रीक्रीडा लज्जावहा ॥ ३४ ॥

रेखाभिरास्ये गणनादिवास्य-
द्वात्रिंशता दन्तमयीभिरन्तः ।
चतुर्दशाष्टादश चात्र विद्या
द्वेधाऽपि सन्तीति शशंस वेधाः ॥ ३५ ॥

रेखाभिरिति ॥ वेधा अस्य नलस्यान्तरास्ये मुखमध्ये द्वात्रिंशता द्वात्रिंशत्संख्याभिर्दन्तमयीभिर्दन्तरूपाभा रेखाभिर्गणनात्संख्यानं कृत्वा विधाय इति शशंसेव कथयाति स्मेव । इतीति किम्—अत्र नलमुखमध्ये द्वेधा स्वतन्त्राभ्यां द्वाभ्यामपि प्रकाराभ्यां चतुर्दशाष्टदश च

१ अत्रोपजातिश्छन्दः । अन्यथासिद्धस्य चन्द्रभ्रमणस्यान्यथात्वेन सम्भावनादुत्प्रेक्षा व्यङ्ग्या। चन्द्रे पराजितपुरुषधर्मप्रतीतेः समासोक्तिश्च। २ अत्रेन्द्रवज्रा छन्दः । नलास्यस्तुत्या ब्रह्माश्रयस्य कमलस्य सङ्कोचायोगेऽपि तथोक्तेरतिशयोक्तिः । नलास्येन कमलं जितमिति भङ्ग्यन्तरेणोक्तेः पर्यायोक्तिश्चालङ्कारः ।

विद्याः सन्तीति । दन्तानां रेखात्वरूपेण सूक्ष्मत्वेन सामुद्रिकलक्षणवत्त्वद्योतनार्थम् । दन्ता द्वात्रिंशद्विद्यन्त इति भावः । विद्यानां चतुर्दशत्वमष्टादशत्वं च प्रथमसर्गे उक्तम् । 'विंशत्याद्याः सदैकत्वे' इति द्वात्रिंशच्छब्दो बहुवचनान्तविशेषणम्। गणनाल्ल्यब्लोपे कर्मणि पञ्चमी। द्वेधा 'सङ्ख्याया विधार्थे धा ५।३।४२' इति धाप्रत्ययस्य 'एधाच्च ५।३।४६' इत्येधाच् ॥ ३५ ॥

श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य
स्मरामरेन्द्रावपि न स्मरामः ।
वासेन तस्मिन्क्षमयोश्च सम्य-
ग्बुद्धौ न दध्मः खलु शेषबुद्धौ ॥ ३६ ॥

श्रियाविति ॥ हे भैमि!, वयं तस्य नरेन्द्रस्य श्रियौ शोभासमृद्धी निरीक्ष्य दृष्ट्वा स्मरामरेन्द्रावपि कामेन्द्रावपि न स्मरामः अन्तःकरणगोचरौ न कुर्मः । मदने कान्तिरेव, इन्द्रे च समृद्धिरेव, नले तु द्वे अपीत्याधिक्यम् । तस्मिन्नले क्षमयोः भूक्षान्त्योः सम्यग् वासेन वसत्या खलु निश्चयेन शेषबुद्धावनन्तसुगतावपि बुद्धौ चित्ते न दध्मः । मनसापि न स्मराम इत्यर्थः । तयोरेकैकक्षमाधारत्वमस्य च द्वयोरप्याधारत्वम् अतस्तयोः स्मरणं न । ताभ्यामयमधिक इति भावः ।'क्षितिक्षान्त्योः क्षमा' इत्यमरः । कर्मणः शेषत्वेनाविवक्षणात्स्मरामरेन्द्रावित्यत्र 'अधीगर्थदयेशां कर्म्मणि २।३।५२' इति षष्ठ्यभावः ॥ ३६ ॥

विना पतत्रं विनतातनूजैः
समीरणैरीक्षणलक्षणीयैः ।
मनोभिरासीदनणुप्रमाणै-
र्न लङ्घिता दिक्कतमा तदश्वैः ॥ ३७॥

विनेति ॥ तस्य नलस्य अश्वैः कतमा दिक् न लङ्घिता निर्जिता आसीत्, अपितु सर्वा अपि दिशो निर्जिताः । किम्भूतैः—पतत्त्रं पक्षं विना पक्षरहितैः विनतातनूजैर्गरुडैः । तथा—ईक्षणलक्षणीयैर्नेत्रगोचरैः समीरणैर्वायुभिः । तथा—अनणुप्रमाणैर्महापरिमाणाधिकरणैर्मनोभिरन्तःकरणैः । गरुडः सपक्षः, वायुरचाक्षुषः, मनोऽणुपरिमाणमिति प्रसिद्धिः । तद्विपरीता अपि तदश्वा वेगेन गरुडादिरूपा जाता इति भावः । इवयोजना वा कर्तव्या । 'न निर्जिता' इति क्वचित्पाठः । अतिजवास्तदश्वा इति भावः । कतमा, 'कतरकतमौ जातिपरिप्रश्ने २।१।६३' इति स्वार्थे डतमच् ॥ ३७ ॥

संग्रामभूमीषु भवत्यरीणा-
मस्त्रैर्नदीमातृकतां गतासु ।
तद्बाणधारापवनाशनानां
राजव्रजीयैरसुभिः सुभिक्षम् ॥ ३८ ॥

संग्रामेति ॥ हे भैमि!, राज्ञां व्रजाः समूहास्तेषामिमे राजव्रजीयास्तैरसुभिर्नरेन्द्रप्राणरूपैर्वायुभिः कृत्वा तस्य नलस्य बाणधारा बाणपरम्परास्तल्लक्षणाः पवनाशनाः सर्पास्तेषां सुभिक्षं भिक्षासमृद्धिर्भवति । नलबाणैः सर्वेऽपि शत्रवो हता इति भावः । कासु सतीषु—संग्रामभूमीष्वरीणां शत्रूणामस्त्रैः रुधिरैर्नदीमातृकतां गतासु नदीजलपरिपूर्णासु सतीषु । वैरिरुधिरनदीपरिपूर्णास्वित्यर्थः । दीर्घेणाशुगामित्वेन प्राणहरत्वेन बाणानां पवनाशनत्वम् । प्राणानां पवनत्वात्तैरेव तेषां सुभिक्षमिति भावः । नदीमातृकासु भूमिष्ववग्रहादिसद्भावेऽपि सुभिक्षं भवति । 'देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥' इत्यमरः । नदीमातृक इति 'नद्यृतश्च' इति कप् । राजव्रजीय इति 'वृद्धाच्छः ४।२।११४' सुभिक्षम् । भिक्षाणां समृद्धिः 'अव्ययं विभक्तिसमीपसमृद्धि—२।१।६' इत्यादिनाऽव्ययीभावः ॥ ३८ ॥

यशो यदस्याजनि संयुगेषु
कण्डूलभावं भजता भुजेन ।
हेतोर्गुणादेव दिगापगाली-
कूलंकषत्वव्यसनं तदीयम् ॥ ३९ ॥

यश इति ॥ कण्डूलभावं रणकण्डूसहितत्वं भजता प्राप्नुवता भुजेन संयुगेषु यदस्य यशोऽजनि सम्पादितं, तत् तदीयं यशःसंबन्धि दिश एवापगा नद्य-

१ अत्रोपजातिश्छन्दः, गणनादिवेत्युत्प्रेक्षा, दन्तानां रेखात्वेन रूपणाद्रूपकम् अपह्नुतिश्च, दन्तापह्नवेन गणनोपयोगिरेखात्वेनोक्तेः । २ अत्रोपजातिः छन्दः । यथासङ्ख्यं श्लेषश्चार्थालङ्कारौ । एवं च स्मरादितोऽपि नलोऽधिककान्त इति उपमेयोत्कर्षोक्तेर्व्यतिरेकश्च ।

१ अत्रोपेन्द्रवज्रा छन्दः । तदश्वा गरुडादय इवेत्यत्र तात्पर्यादुपमा । २ अत्रेन्द्रवज्रा छन्दः । रूपकमर्थालङ्कारः ।

स्तासु वा नद्यस्तासामाली पङ्क्तिस्तस्याः कूलं तीरं तत्कषत्वं कषणस्वभावस्तद्रूपं व्यसनं हेतोः कारणस्य गुणादेव जातमिति शेषः । न तु स्वभावतः । यशः कारणे भुजे विद्यमानात्कण्डूलक्षणात्कारणगुणादेव यशसि कूलङ्कषत्वरूपं व्यसनमागतमिति भावः । तस्य यशः सर्वदिग्व्यापीत्यर्थः । कण्डूल इति 'सिध्मादिभ्यश्च ५।२।९७' इत्यस्त्यर्थे लच् । कण्डूं लात्यादत्ते इति वा, 'आतोऽनुपसर्गे कः ३।२।३' कूलङ्कष इति 'सर्वकूलाभ्रकरीषेषु कषः ३।२।४२' इति खशि अजन्तत्वान्मुम् ॥ ३९ ॥

यदि त्रिलोकी गणनापरा स्यात्
तस्याः समाप्तिर्यदि नायुषः स्यात् ।
पारेपरार्धं गणितं यदि स्याद्
गणेयनिःशेषगुणोऽपि स स्यात् ॥४०॥

इदानीं तस्य गुणानुवर्णनासाक्तिं द्योतयन्नतिशयोक्तिमाह—

यदीति ॥ त्रिलोकी त्रैलोक्यं यदि गणनापरा गुणगणनासक्ता स्यात्तस्यास्त्रिलोक्यास्तद्गुणगणनार्थमायुषः समाप्तिर्यदि न स्याद्यदि गणितं गणितशास्त्रं पारेपरार्धं परार्धात्परं स्यात्तदा स नलः गणेया गणयितुं शक्या निःशेषाः समग्रा गुणा यस्य एवम्भूतोऽपि भवेत् । न तु एवम् । ततः सोऽप्यसंख्येयगुण इति भावः। त्रिलोकी समाहारे द्विगौ 'द्विगोः ४।१।२१' इति ङीप् । पारेपरार्धम्। 'पारे मध्ये षष्ठ्या वा २।१।१८' इति समासः। एदन्तत्वं च निपातनात् । गणेय इति 'गणेरेयः' इत्यौणादिको गणेरेयः स्यात्, क्रियातिपत्तेरविवक्षितत्वाल्लिङ् ॥ ४० ॥

अवारितद्वारतया तिरश्चा-
मन्तःपुरे तस्य निविश्य राज्ञः ।
गतेषु रम्येष्वधिकं विशेष-
मध्यापयामः परमाणुमध्याः ॥ ४१ ॥

तस्यान्तःपुरे स्वगतिं द्योतयन्नाह—

अवारीति ॥ हे भैमि ! वयं परमाणुवन्मध्यो यासां ता अतिकृशोदरीः कर्मभूताः स्वत एव रम्येषु गतेषु विषयेऽधिकं लोकोत्तरं गमनविशेषमध्यापयामः पाठयामः । किं कृत्वा—तिरश्चां पक्ष्यादीनामवारितद्वारतयाऽनिषिद्धद्वारत्वेन तस्य राज्ञोऽन्तःपुरे निविश्य प्रविश्य । इङः शब्दकर्मत्वात् 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' १।४।५२' इत्यण्यन्तकर्तुर्ण्यन्तत्वे कर्मत्वम् ॥ ४१ ॥

पीयूषधाराऽनधराभिरन्त-
स्तासां रसोदन्वति मज्जयामः ।
रम्भादिसौभाग्यरहः कथाभिः
काव्येन काव्यं सृजताऽऽदृताभिः ॥४२॥

नर्मसाचिव्यमपि कुर्म इत्याह—

पीयूषेति ॥ वयं रम्भादीनामप्सरसां सौभाग्यं पुरुषवशीकरणादिशक्तिस्तस्य रहो रहस्यं तस्य कथाभिः संभोगगोष्ठीभिर्वस्त्वन्तरगोप्यकथाभिश्च तासां नलस्त्रीणामन्तर्हृदयं रसोदन्वति शृङ्गारसमुद्रे निमज्जयामो निमग्नीकुर्मः। किम्भूताभिः—पीयूषधारा अमृतप्रवाहस्तस्याः सकाशादनधराभिरन्यूनाभिः । तथा—काव्यं प्रबन्धविशेषं सृजता कुर्वता काव्येन शुक्रेण आदृताभिः काव्ये इतिपादिताभिः । उदन्वति 'उदन्वानुदधौ च' ८।२।१३ इति साधुः । तत्र निमज्जनं युक्तम् । 'रहः सुरतगोप्ययोः' इति धरणिः ॥ ४२ ॥ शुक्रो दैत्यगुरुः

काभिर्न तत्राभिनवस्मराज्ञा
विश्वासनिक्षेपवणिक् क्रियेऽहम् ।
जिहेति यन्नैव कुतोऽपि तिर्य-
क्कश्चित्तिरश्चस्त्रपते न तेन ॥४३॥

स्वस्य विश्वास्यत्वं वदन्नादेशार्हत्वमाह—

काभिरिति ॥ तत्र नलान्तःपुरे काभिः सुन्दरीभिरहं पक्षी अभिनवातिगोप्या स्मराज्ञा तस्या विश्वासेन

१ अत्रोपजातिश्छन्दः । दिशामापगात्वेन रूपणाद्रूपकम् । यशसो दिगापगाकूलङ्कषत्वेन प्रतीयमानायाः कण्डूलतायास्तत्कारणभूतस्य कण्डूलभुजस्य गुणोत्पादितत्वसम्भावनादुत्प्रेक्षा च । अनुप्रासः शब्दालङ्कारः । २ अत्राप्युपजातिश्छन्दः । गुणानां गणनीयत्वयोगेऽपि यदिनाऽयोगोक्तेर्यद्यतिशयोक्तिः ।

१ अत्र राज्ञः कान्ताया वर्णनं,तस्यनरपि अनेकासामिति प्रशंसनमात्रमूलम् अन्य या कान्तया सह तस्या परिणयनात् । २ अत्रोपजातिश्छन्दः । परमाणुभिर्मध्यसाम्योक्तौ लुप्तोपमा तादृशमध्यत्वस्यासम्भवेऽपि सम्भवोक्तिरतिसौक्ष्म्यसम्भावनफलकम् । ५ अत्रेन्द्रवज्रा छन्दः । पीयूषधाराभिः कथानां साम्योद्भावनादुपमा ।

निक्षेपवणिक्स्थापानिको वणिङ् न क्रिये,अपितु सर्वाभिरपि कृतः। कथा स्वकामरहस्यं मयि न कथ्यत इत्यर्थः। तत्र हेतुः—यत् यतो हेतोस्तिर्यक्पक्ष्यादि कुतोऽपि कस्मादपि प्राणिनो नैव जिह्रेति लज्जते।तेन कारणेन काश्चित्कोऽपि प्राणी तिरश्चोऽपि सकाशान्न त्रपते लज्जते।अतस्ता निर्लज्जाःसत्यो मदग्रेऽतिगोप्या अपि कामगोष्ठीः कुर्वन्तीति भावः। अन्यदपि गोप्यं विश्वासयोग्ये वणिजि निक्षिप्यते ॥ ४३ ॥

वार्ताऽपि नासत्यपि सान्यमेति
योगादरन्ध्रे हृदि यां निरुन्धे।
विरञ्चिनाननवादधौत-
समाधिशास्त्रश्रुतिपूर्णकर्णः ॥४४॥

तासां परिहासोक्तमलीकमपि वचो नान्यस्मै कथयामीत्याह—

वार्तेति ॥ असत्यप्यलीकाऽपि सा परिहासवार्ताऽपि परिहासकथा अन्यं नैति। अन्यस्मै न कथयामीत्यर्थः। सा का—अरन्ध्रेऽरिभेदरहिते हृदि योगादुपायेन। प्रयत्नादित्यर्थः। यां वार्तां निरुन्धे नितरामावृणोमि। ध्यानादिसंबन्धाद्दोषरहिते हृदीति वा। सदोषमेवान्तःकरणमन्यस्मा अन्यवार्तां कथयति मदन्तःकरणं तु ध्यानादिना निर्दोषम्, अतो न कथयामीति भावः। वार्ताप्यन्यं नैति किमुतान्यत्, अलीकाऽप्यन्यं नैति,किमुत सत्येति द्योतनार्थमपिशब्दौ। दुष्टप्रयुक्ता वार्ता जनाहितार्थं कथनीयापि न कथ्यते। सरन्ध्रादेव बहिर्निर्गमः सम्भाव्यते इदं त्वरन्ध्रम्। अथ च—असती कुलटापि कार्मणादियोगान्नीरन्ध्रस्थाने निरुद्धान्यन्यं पुरुषं नैतीत्युक्तिः। योगवत्त्वमेवाह—विरञ्चेर्ब्रह्मणो नानाननानि चत्वारि मुखानि तत्कृतो वादो वचनं तेन धौतं पवित्रीकृतं समाधिशास्त्रं योगशास्त्रं तस्य श्रुतिः श्रवणं तेन पूर्णौ कर्णौ यस्य। योगशास्त्राणि श्रुतयश्चेति वा। योगिनो हि यत्रकुत्रापि न जल्पन्ति तथा ब्रह्मण उपदेशादहमपि। त्वमपि वयःसंधिं विश्वासार्हे मयि विश्वस्य कामगोष्ठीं कुर्वीति भावः। रुधेः स्वरितेत्त्वात्तङ् ॥ ४४ ॥

१ अत्रापोन्द्रवज्रा छन्दः। रूपकं काव्यलिङ्गं चालङ्कारौ। २ अत्रोपजातिश्छन्दः काव्यलिङ्गं चालङ्कारः।

नलाश्रयेण त्रिदिवोपभोगं
तवानवाप्यं लभते बतान्या।
कुमुद्वतीवेन्दुपरिग्रहेण
ज्योत्स्नोत्सवं दुर्लभमम्बुजिन्या ॥४५॥

अतिशयितमभिलाषमुत्पादयितुं नलप्राप्तेर्दुर्लभत्वमाह—

नलेति ॥ हे भैमि! तव त्वया अनवाप्यं दुष्प्रापमस्मत्कर्तृकपक्षवीजनादिसेवादिरूपं त्रिदिवोपभोगं स्वर्गोपभोगं नलाश्रयेण कृत्वाऽन्या नायिकानर्हाऽपि लभते। बत खेदे हा कष्टम्। प्राप्स्यते। वर्तमानसामीप्ये लट्। प्राप्नोति वा, बहुवल्लभत्वादिति वा। केव—अम्बुजिन्या कमलिन्या दुर्लभं दुष्प्रापं ज्योत्स्नोत्सवं चन्द्रिकाजन्यविकासादिरूपं महोत्सवमिन्दुपरिग्रहेण चन्द्राङ्गीकारेण कुमुद्वतीव यथा प्राप्नोति। अन्यस्या अनर्हत्वादेव मे खेदः। स्वभोगसिद्धये नलपरिग्रहस्त्वया संपाद्य इत्यर्थः। नहि तं विना वयमन्यं भजाम इत्यर्थः। तव कृद्योगे 'कृत्यानां कर्त्तरि वा २।३।७१' इति कर्तरि षष्ठी। अम्बुजिन्या खलर्थयोगे षष्ठीनिषेधात्कर्तरि तृतीया ॥ ४५ ॥

तन्नैषधानूढतया दुरापं
शर्म त्वयास्मत्कृतचाटुजन्म।
रसालवन्या मधुपानुविद्धं
सौभाग्यमप्राप्तवसन्तयेव ॥ ४६ ॥

प्रकृतमुपसंहरन्नाह—

तदिति ॥ तत्तस्मात्त्वया नैषधेन नलेनानूढतयाऽपरिणीतत्वेनास्माभिः कृतं यच्चाटु प्रियवचनं तस्माज्जन्म यस्य शर्म सुखं दुरापं दुष्प्रापम्। नलाश्रयेणैव त्वयाऽप्यस्मत्प्रियवचनजनितं सुखं प्राप्तव्यं नान्यथेति भावः। 'शर्मशातसुखानि च' इत्यमरः कथा। किमिव—अप्राप्तवसन्तया रसालवन्या सहकारवाटिकया मधुपैर्भ्रमरैरनुविद्धं कृतं सौभाग्यं मकरन्दास्वादझांकारगुञ्जनादिलक्षणमिव यथा दुष्प्रापम्। पूर्वश्लोकेऽम्बुजिनीदृष्टान्तेन सर्वथा दुष्प्रापत्वं सूचितम्, इदानीमाम्रवनीदृष्टान्तेन कालान्तरे प्राप्स्यत इति सूच्यते। खलर्थयोगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ३।२।६९' इति षष्ठीनिषेधः ॥४६॥

१ अत्रोपजातिश्छन्दः। उपमाऽर्थालङ्कारः। २ अत्रापि तदेव च्छन्दः। सैवोपमाऽर्थालङ्कारश्च।

तस्यैव वा यास्यसि किं न हस्तं
दृष्टं मनः केन विधेः प्रविश्य ।[१]
अजातपाणिग्रहणासि ताव-
द्रूपस्वरूपातिशयाश्रयश्च ॥ ४७ ॥

तत्र नलप्राप्तिसंभावनायामधैर्यं न कर्तव्यमित्याह—

तस्यैवेति ॥ त्वं तस्यैव नलस्यैव वा हस्तं किं न प्राप्स्यासि अपित्वेवमपि सम्भाव्यते । सर्वथा नलं न प्राप्नोषीति निश्चेतुं न शक्यते इति पूर्वत्रापरितोषद्योतको वाशब्दः । निश्चयाभावः कथमत आह—केन पुरुषेण विधेर्ब्रह्मणो मनोऽन्तःकरणं प्रविश्य दृष्टं ज्ञातं भैम्या नलो न प्राप्स्यत इति । अपि तु न केनापि । एवंसति कदाचित्तत्प्राप्तिसंभावनापीत्याह—तावदादौ त्वं न जातं पाणिग्रहणं विवाहो यस्याः सा एवम्भूताऽसि वर्तसे । प्रथममेव नैराश्यं न कर्तव्यमित्यर्थः । मम योग्यताऽभावश्चेत्तत्प्राप्तिः कथं स्यादित्याशङ्कयाह—रूपस्य लावण्यस्य स्वरूपेणैवालंकारमन्तरेणैव स्वाभाविकोऽतिशयस्तस्याश्रयः स्थानमप्यसि । सहजसौन्दर्येण नलप्राप्तिरपि तव सम्भाव्यत इति भावः ॥ ४७ ॥

निशा शशाङ्कं शिवया गिरीशं
श्रिया हरिं योजयतः प्रतीतः ।
विधेरपि स्वारसिकः प्रयासः
परस्परं योग्यसमागमाय ॥ ४८ ॥

सरूपत्वात्तस्या नलप्राप्तिं द्रढयति—

निशेति ॥ निशा रात्र्या शशाङ्कं चन्द्रं, शिवया गौर्या गिरीशं, श्रिया लक्ष्म्या हरिं विष्णुं योजयतः संयोगं प्रापयतो विधेरपि ब्रह्मणोऽपि स्वारसिकः स्वेच्छाकारी प्रयासः प्रयत्नः परस्परं मिथो योग्ययोः समागमाय मेलनाय प्रतीतः ख्यातः । पूर्वोक्तदृष्टान्ते ब्रह्मा स्वरसत एव परस्परं योग्ययोरेव समागमं करोति नत्वयोग्ययोरिति, अतो नलमपि त्वयैव योजयिष्यतीति भावः । स्वरसेन चरतीति स्वारसिकः । 'चरति ४ । ४ । ८' इति ठक् । स्वशब्दस्य द्वारादिषु पठितत्वात्तत्र तदादिविधेरभ्यनुज्ञानात्सौवरसिक इति यद्यपि भवितव्यं, तथापि स्वागतादिषु दर्शनात्स्वार्थिकस्वाभाविकादिभाष्यकारप्रयोगदर्शनाच्च वृद्धिरेवेति बोध्यम् । एवमन्यत्रापि द्रष्टव्यम् ॥ ४८ ॥

वेलातिगस्त्रैणगुणाब्धिवेणि-
र्न योगयोग्यासि नलेतरेण ।
संदर्भ्यते दर्भगुणेन मल्ली
माला न मृद्वी भृशकर्कशेन ॥ ४९ ॥

अन्यनिराकरणे नलस्यैव त्वं योग्येत्याह—

वेलेति ॥ वेलां मर्यादामतिक्रम्य गच्छति एवंभूतो यः स्त्रैणः स्त्रीसंबन्धी गुणाब्धिः सौन्दर्यादिगुणसमुद्रस्तस्य वेणिः प्रवाहरूपा समस्तसौन्दर्यादिगुणभाजनं त्वं नलादितरेण वरेण सह योगयोग्या संबन्धयोग्या नासि न भवसि । यतः—मृद्वी मल्लीमाला पुष्पमाला भृशकर्कशेनातिकठिनेन दर्भगुणेन कुशनिर्मितदोरकेण न संदर्भ्यते न ग्रथ्यते । मल्लीमालायाः कुशदोरकेण गुम्फनमनुचितं तथा तव नलव्यतिरिक्तेन योग इति भावः । 'वेणिर्नदीप्रवाहे कचोच्चये' इति क्षीरस्वामी । स्त्रीसंबन्धिनः स्त्रैणाः 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४।१।८३' इति नञ् । वेणीति संबुद्ध्यन्तं वा । तत्र नद्यन्तत्वाद्ध्रस्वः । मृद्वी 'वोतो गुणवचनात् ४ । १ । ४४' इति ङीप् ॥ ४९ ॥

विधिं वधूसृष्टिमपृच्छमेव
तद्यानयुग्यो नलकेलियोग्याम् ।
त्वन्नामवर्णा इव कर्णपीता
मयाऽस्य संक्रीडति चक्रिचक्रे ॥ ५० ॥

तस्या नलप्राप्तौ प्रकारान्तरेण हेतुमाह—

विधिमिति ॥ अहं तस्य विधेर्यानं विमानं तस्य धुर्यो भारवाहकः सन् नलकेलेर्नलक्रीडाया योग्यामुचितां वधूसृष्टिं नलक्रीडा योग्या का त्वया निर्मितेति स्त्रीसृष्टिं विधिं ब्रह्माणमपृच्छमेव पृष्टवानेव । तेन किमुत्तरितमित्यत आह—नलकेलियोग्या भैमी रचितेति तव नाम्नो वर्णा इव कर्णाभ्यां पीता उत्तरत्वेन मया श्रुताः । सम्यगेव किमिति न श्रुता इत्यत आह—कस्मिन्सति—अस्य ब्रह्मणश्चक्रिणो रथस्य चक्रे संक्रीडति कूजति सति ।

१ अत्राप्युपजातिः छन्दः । लोकोक्तिरलङ्कार इति प्राञ्चः । दमयन्त्या अनूढात्वमात्रं, नलस्य लावण्यातिशयशालित्वं च निर्दिशता हंसेन तत्प्राप्तौ परं तवानूढात्वं, नान्यदिति तद्वरत्वमिति न सुवचमिति सम्भावितं, तेनानन्वयो व्यतिरेको वा व्यङ्ग्यः ।

१ अत्रोपेन्द्रवज्रा छन्दः । सममलङ्कारः । २ अत्रोपजातिश्छन्दः । रूपकं, दृष्टान्तः, समं चेत्येते त्रयोऽलङ्काराः ।

रथाङ्गकूजनेन सम्यङ्नाकर्णाति भावः। यदि निश्चयेनाववक्ष्यत्तदा स्वत एव कार्यसिद्धेस्तदर्थं स्वस्मिन्सादरा नाभविष्यदितीवशब्दप्रयोगः । चक्रचक्रे हंससमूहे इति क्वचित्। युग्यः 'तद्वहति रथयुगप्रासङ्गम् ४ । ४ । ७६ । इति यत्। संकूजितें 'समोऽकूजने' इति प्रतिषेधाच्छतो ॥ ५० ॥

अन्येन पत्या त्वयि योजितायां
विज्ञत्वकीर्त्या गतजन्मनो वा।
जनापवादार्णवमुत्तरीतुं
विधा विधातुः कतमा तरीः स्यात्॥५१॥

ब्रह्मणः स्ववचनान्यथाकरणे बाधकमाह—

अन्येनेति ॥ वा अथवा, निश्चये वा । त्वयि अन्येन नलातिरिक्तेन पत्या भर्त्रा योजितायां सत्यां विज्ञत्वकीर्त्या सर्वज्ञत्वयशसैव गतमतिक्रान्तं जन्म यस्य येन वा। एवंविधस्य विधातुर्जनापवाद एवार्णवस्तं सर्वज्ञेन ब्रह्मणेदमनुचितं कथमकारीति लोकापवादसमुद्रमुत्तरीतुं कतमा विधा प्रकारस्तरीर्नौका स्यात् । अपितु न कापीत्यर्थः। सकलेनापि जन्मना यत्सर्वज्ञत्वं ब्रह्मणाऽर्जितं तदेकस्यास्तवान्यथाकरणे तदैव गमिष्यतीति भिया नलेनैव योजनीयेति भावः। समुद्रं तरीतुं काचिन्नौर्भवति, जनापवादार्णवं तरीतुं न कापीति भावः । 'स्त्रियां नौस्तरणिस्तरीः' इत्यमरः। उत्तरीतुम् 'वृतो वा १ । २ । ३८' इति दीर्घः। तरन्त्यनया तरीः 'अवितृस्तृतन्त्रिभ्य ईः ॥ ५१ ॥

आस्तां तदप्रस्तुतचिन्तयाऽलं
मयाऽसि तन्वि श्रमिताऽतिवेलम्।
सोऽहं तदागः परिमार्ष्टुकामः
किमीप्सितं ते विदधेऽभिधेहि ॥ ५२॥

अभिप्रायं ज्ञातुमुपसंहरन्नाह—

आस्तामिति ॥ हे भैमि! तुल्यवर्णनं तव तद्योग्यत्वप्रतिपादनं चास्तां तिष्ठतु। न कर्तव्यमित्यर्थः। यतः— अप्रस्तुतस्य चिन्तया कथयाऽलम्, निष्प्रयोजनत्वात्। हे तन्वि, मया त्वमतिवेलं भृशं श्रमिताऽसि । सोऽहं तदागः अपराधं परिमार्ष्टुकामोऽपनेतुकामः सन् तत् किमीप्सितं के मनोरथं विदधे करोमि अभिधेहि ब्रूहि। अप्रस्तुतचिन्तयेति वारणार्थयोगे तृतीया ॥ ५२ ॥

इतीरयित्वा विरराम पत्त्री
स राजपुत्रीहृदयं बुभुत्सुः।
ह्रदे गभीरे हृदि चावगाढे
शंसन्ति कार्यावतरं हि सन्तः ॥ ५३ ॥

इतीति ॥ राजपुत्र्या भैम्या हृदयं नलेऽनुरागो विद्यते न वेति मनो बुभुत्सुर्जिज्ञासुः स पत्त्री हंस इति पूर्वोक्तमीरयित्वोक्त्वा विरराम तूष्णीमभूत्। ननु नलानुरागस्त्वयि विद्यते, त्वमपि नलेऽनुरक्ता भवेति प्रकटं किमिति नोक्तवानित्यत आह—हि यस्माद्गभीरे गाम्भीर्ययुक्ते ह्रदे जलाशये, गूढाभिप्राये हृदि चावगाढ आलोडिते, ज्ञाते च सति सन्तः पण्डिताः कार्यावतरं करणीयं तरणपथं, कार्यस्य प्रस्तावं च शंसन्ति कथयन्ति। गम्भीरं ह्रदमनालोड्य अमोत्तरीतव्यमिति तरणमार्गं यथा न कोऽपि कथयति तथा आशयमविज्ञाय बुधस्तदग्रे कार्यविशेषप्रस्तावं न करोति । अतस्तदभिप्रायं ज्ञात्वा तस्यां नलानुरागप्रकाशनं कर्तव्यमिति नलानुरागप्रकाशयैव तूष्णीं बभूवेत्यर्थः । राजपुत्रीति हृदयस्य गूढाशयत्वम्। विररामेति 'व्याङ्परिभ्यो रमः १।३। ८३' इति परस्मैपदम्। हृदयम् 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः ॥ ५३ ॥

किंचित्तिरश्चीनविलोलमौलि-
र्विचिन्त्य वाच्यं मनसा मुहूर्तम्।
पतत्त्रिणं सा पृथिवीन्द्रपुत्री
जगाद वक्त्रेण तृणीकृतेन्दुः ॥ ५४ ॥

किंचिदिति ॥ सा पृथिवीन्द्रपुत्री भैमी मुहूर्तं क्षणमात्रं मनसाऽन्तःकरणेन वाच्यं वक्तव्यं वचनं विचिन्त्य विचार्य पतत्त्रिणं हंसं जगाद । किंभूता—वचनविचारणे क्रियमाणे किंचिदीषत्तिरश्चीनो वक्रः विलोलश्चञ्चलो मौलिर्मस्तकं यस्याः सा।तथा—सहजसौन्दर्येणाभिलाषसिद्ध्याशयाऽतिप्रसन्नत्वेन च वक्त्रेण मुखेन तृणीकृतो न्यक्कृत

---

१ अत्रोपजातिश्छन्दः। उपमाऽर्थालङ्कारः। २ अत्रोपजातिश्छन्दः। यमकमनुप्रासश्च शब्दालङ्कारौ, जनापवादस्यार्णवत्वेन रूपणाद्रूपकम्।

१ अत्रोपजातिश्छन्दः। अनुप्रासः शब्दालङ्कारः। २ अत्रोपजातिश्छन्दः। अनुप्रासः शब्दालङ्कारः। शंसन्तीत्याद्यर्थान्तरन्यासोऽर्थालङ्कारश्च। ह्रदो हृदत्वेन रूपणाद्रूपकमपि स एव।

इन्दुश्चन्द्रो यथा । तिरश्चीनम् 'विभाषाञ्चेरदिक्स्त्रियाम् ५।४।८' इति स्वार्थे खः । पुत्रीति शार्ङ्गरवादिपाठान्ङीन् ॥ ५४ ॥

धिक्चापले वत्सिमवत्सलत्वं
यत्प्रेरणादुत्तरलीभवन्त्या ।
समीरसङ्गादिव नीरभङ्ग्या
मया तटस्थस्त्वमुपद्रुतोऽसि ॥ ५५ ॥

आत्मनोऽनुचितकारित्वमाह—

धिगिति ॥ हे हंस चापले चञ्चलत्वविषये यद् वत्सिमवत्सलत्वं वत्सस्य बालस्य भावो वत्सिमा बालत्वं तेन यद्वत्सलत्वं सस्नेहत्वं बालत्वेन चापलविषये यत्प्रीतिमत्त्वम्, चापलाङ्गीकरणमिति यावत् । तद् धिग्निन्द्यमनुचितम् । यतः—यस्य चापलस्य प्रेरणान्नियोगाद्यदधीनतयोत्तरलीभवन्त्या अतिशयेन चञ्चलीभवन्त्या मया पश्चाल्लगित्वा तटस्थ उदासीनस्त्वमुपद्रुतः पीडितोऽसि । कयेव—समीरसङ्गाद्वायुसंबन्धाच्चलीभवन्त्या नीरभङ्ग्येव । तरङ्गरूपयोदकरचनया तटस्थः कूलस्थो यथोपद्रूयते । निरपराधस्त्वं पश्चाल्लगित्वा मया पीडितः। अतोऽहमनुचितकारिण्येवेति भावः । वत्सशब्दात्पृथ्व्यादित्वादिमनिच् । तस्मादेव 'वत्सांसाभ्यां कामबले ५।२।९८' इत्यभिलापवति लच् । तथाच वत्सल इति स्नेहवानुच्यते ॥ ५५ ॥

आदर्शतां स्वच्छतया प्रयासि
सतां स तावत्खलु दर्शनीयः ।
आगः पुरस्कुर्वति सागसं मां
यस्यात्मनीदं प्रतिबिम्बितं ते ॥ ५६ ॥

आत्मनिन्दापूर्वकं हंसस्तुतिमाह—

आदर्शेति ॥ हे हंस ! दर्शनीयोऽतिरमणीयस्त्वं खलु निश्चयेन, उत्प्रेक्षे वा । स्वच्छतया निष्कपटतया कृत्वा सतां साधूनां तावत्प्रथममादर्शतां दृष्टान्ततां प्रयासि प्राप्नोषि । किंवदयं निष्कपट इति प्रश्ने । त्वमेव प्रथमं दृष्टान्तयोग्योऽसीत्यर्थः । अथ च निर्मलतया दर्पणतुल्योऽसि दर्पणोऽपि सतामवलोकनीयः, श्रीकामैः प्रातरवलोक्यते च । निष्कपटतामादर्शतां च समर्थयते—पश्चाल्लगनात्सागसं सापराधां मां पुरस्कुर्वति 'मयाऽसि तन्वि श्रमिता—' इत्यादिवचनान्मां प्रति प्रियभाषिणि यस्य तवात्मनि स्वरूपे इदमागः तटस्थपीडनलक्षणो ममापराधः प्रतिबिम्बितः 'सोऽहं तदागः' इति वचनात्त्वया मदपराधः स्वीयत्वेनैव स्वीकृत इति सतां स्वभावोऽयम् । अन्यापराधं स्वात्मन्यारोपयन्ति । खलुः किमर्थे । आदर्शतां प्रयासि किम् । ततोऽप्यधिकः । आदर्शे पुरो यथास्थितं वस्तु प्रतिफलति, त्वयि तु सापराधे वस्तुनि पुरःस्थितेऽप्यपराधलक्षणो धर्मः प्रतिबिम्बितो, न तु सापराधो धर्मीत्यादर्शादधिकत्वादाश्चर्यरूपोऽसीति ॥ ५६ ॥

अनार्यमप्याचरितं कुमार्या
भवान्मम क्षाम्यतु सौम्य तावत् ।
हंसोऽपि देवांशतयाऽसि वन्द्यः
श्रीवत्सलक्ष्मेव हि मत्स्यमूर्तिः ॥ ५७ ॥

स्वापराधं निश्चित्य तत्क्षमां प्रार्थयते—

अनार्यमिति ॥ हे सौम्य सुन्दर, भवान्कुमार्या बालाया ममानार्यमनुचितमप्याचरितमाचरणं तावत्प्रथमं क्षाम्यतु सहताम् । ईप्सितप्रश्नोत्तरं तु पश्चाद्वक्तव्यम् । अज्ञस्य ह्यपराधः क्षन्तव्य इति कुमारीपदम् । राजपुत्र्याः पक्षिणि मयि प्रार्थनमनुचितमित्यत आह—हंसोऽपि त्वं देवांशतया वन्द्योऽसि पूज्योऽसि । देवांशत्वं ब्रह्मवाहनत्वान्यथानुपपत्त्या । ततः प्रार्थ्यसे इति भावः । क इव—श्रीवत्सो लक्ष्म चिह्नं यस्य स मत्स्यमूर्तिर्मत्स्यस्वरूप इव । श्रीवत्सचिह्नाद्देवांशो मत्स्योऽपि पूज्यते तथा त्वम् । 'सौम्यं तु सुन्दरे' इत्यमरः । देवताऽधिकारे सोमाट्ट्यणो विधानात् सौम्य इति चिन्त्यम् । सोमस्य चन्द्रस्येयं सौमी सुधा तामर्हति दण्डादित्वाद्यप्रत्यये सौम्यो देवतुल्य इत्यर्थ इति समर्थनीयम् ॥ ५७ ॥

मत्प्रीतिमाधित्सति कां त्वदीक्षा-
मुदं मदक्ष्णोरपि याऽतिशेताम् ।
निजामृतैर्लोचनसेचनाद्वा
पृथक्किमिन्दुः सृजति प्रजानाम् ॥ ५८ ॥

दर्शनस्तुतिद्वारेण 'तवेप्सितं किं विदधे' इत्यस्योत्तरमाह—

१ अत्रोपजातिश्छन्दः । वक्त्रेणेन्दोस्तृणीकरणोक्तेरुपमानायोग्यत्वं सम्भावितमिति व्यतिरेकः । समीरसङ्गादिवेत्युपमा च ।

१ अत्रोपजातिश्छन्दः । अत्र दर्पणतुल्यत्वेन यत्सम्भावितं तत्समर्थनाय पश्चादित्युक्तेरर्थान्तरन्यासः । २ अत्रोपजातिश्छन्दः । उपमा काव्यलिङ्गं चार्थालङ्कारौ ।

मदिति ॥ या मुद् हर्षः मदक्ष्णोर्मन्नेत्रयोः त्वदीक्षामुदं त्वदवलोकनजातमपि हर्षमतिशेतामतिक्रामतु तस्मादपि हर्षादधिका भवतु । त्वं तां कां मत्प्रीतिं मम मुदमाधित्साधि आधातुं कर्तुमिच्छसि । कापि नास्ति । एषैव ततोऽप्यधिकेति भावः । एतदेव दृष्टान्तेन द्रढयति—वा इवार्थः । यथा इन्दुर्निजामृतैः स्वीयपीयूषैः प्रजानां लोचनसेचनान्नेत्रसेकात्पृथगन्यदधिकं किमिव सृजति, अपि तु नेत्रसंतोषादन्यन्न किमपि, तथा त्वद्दर्शनादधिकं किमपि मदीप्सितं नेति भावः । अयमभिप्रायः—चन्द्रस्य लोकानां नेत्राह्लादकत्वमेव, न त्वजरामरत्वादिकरणसामर्थ्यम्, तथा त्वादृशानामपि दर्शनेन नेत्राह्लादकत्वमेव, न त्वधिकाभिलापकरणसामर्थ्यमिति तस्याभिमानोत्पादनेन नलप्राप्तिपर्यवसायी मम संतोष इति सूचितम् । तस्माद्यथा मम नलप्राप्तिस्तथा यतस्वेत्यर्थः । सेचनात् 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् २।३।३२' इति पञ्चमी॥ ५८ ॥

मनस्तु यं नोज्झति जातु यातु
मनोरथः कण्ठपथं कथं सः ।
का नाम बाला द्विजराजपाणि-
ग्रहाभिलापं कथयेदलज्जा ॥ ५९ ॥

ननु तव को मनोरथस्तं वदेत्यत आह—

मनस्त्विति ॥ हे हंस! स मनोरथः कण्ठपथं कण्ठमार्गं वचनगोचरं कथं केन प्रकारेण यातु, अपितु न केनापि । स कः—तु पुनर्यमभिलापं मनोऽन्तःकरणं जातु कदाचिदपि नोज्झति न त्यजति । अन्तःकरणस्याधोदेशात्कण्ठस्य चोर्ध्वदेशादित्यर्थः । अथ रयोऽपि गर्तपातादिना ध्वस्तं पन्थानं नावतरति । सर्वत्रापि मनसो गतिसाधनत्वादभिलापोऽपि मनसो रयः । अथ च यो वक्तुमपि न शक्यते स कर्तुं कथं शक्यत इति दुःसाधत्वम् । तदेवाह—नाम संभावनायाम् । अलज्जा निर्लज्जा साध्यमसाध्यमित्यजानाना सती का बाला द्विजराजस्य चन्द्रस्य पाणिना ग्रहाभिलापं ग्रहणाभिलापं कथयेत्, अपि तु हस्तेन चन्द्रं ग्रहीतुं मम वाञ्छेति कापि न कथयति । हस्तेन चन्द्रप्राप्तिर्यथाऽशक्या तथा मन्मनोरथप्राप्तिरिति भावः । द्विज इति संबुद्धिः । राजश्चन्द्रस्येति वा । अथ च—स्वाभिलापं कथयति—द्विजानां राजा सम्राट् नलस्तद्विवाहेच्छां का कथयेत्, अपि तु न कापि । नलविवाहेच्छा ममेति कथं कथयेयमिति भावः । अथ च सलज्जत्वादुक्तुं न शक्यत इत्याह—हे द्विजराज ! का स्त्री पाणिग्रहे विवाहेऽभिलापमिच्छां निर्लज्जा सती प्रकटयेत् । अपि त्वेवं प्रौढैव कथयति, न बालेत्यर्थः ॥ ५९ ॥

वाचं तदीयां परिपीय मृद्वीं
मृद्वीकया तुल्यरसां स हंसः ।
तत्याज तोषं परपुष्टघुष्टे
घृणां च वीणाक्वणिते वितेने ॥ ६० ॥

वाचमिति ॥ स हंसो मृद्वीकया द्राक्षया तुल्यो रसो मधुररसो यस्यास्तां मृद्वीं कोमलां तदीयां भैमीसंबन्धिनीं वाचं परिपीयाकर्ण्य परपुष्टानां कोकिलानां घुष्टे कूजिते तोषं हर्षं तत्याज । तथा—वीणाक्वणिते वीणानिनादेऽपि घृणां जुगुप्सां वितेने चकार । पिककूजितवीणाक्वणिताभ्यामपि तद्वाक्कोमला सरला चेति भावः । 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः । मृद्वीका 'वोतो गुणवचनात् ४ । १ । ४४' इति ङीषन्तात्संज्ञायां कनि 'केऽणः' ७ । ४ । १३' इत्यस्य संज्ञापूर्वकविधित्वाद्ध्रस्वत्वाभावः । घुष्ट इत्यप्रज्ञानार्थत्वात् 'घुषिरविशब्दने' ७।२।२३'इति निष्ठाया इण्निषेधः । घो ( घु ) षिमनिष्टं केचित्पठन्ति ॥ ६० ॥

मन्दाक्षमन्दाक्षरमुद्रमुक्त्वा
तस्यां समाकुञ्चितवाचि हंसः ।
तच्छंसिते किंचन संशयालु-
र्गिरा मुखाम्भोजमयं युयोज ॥ ६१ ॥

मन्दाक्षेति ॥ अयं हंसः तच्छंसिते तस्या वचने अप्रकटस्वल्पोक्तत्वादेव किंचन संशयालुः सन्दिहानः सन्मुखाम्भोजं प्रशस्तं मुखं गिरा वाचा युयोज । वदति स्मेत्यर्थः । कस्यां सत्याम्—तस्यां भैम्यां मन्दाक्षेण लज्जया मन्दाः स्वल्पाक्षरमुद्रा वर्णवि-

---

१ अत्रोपजातिश्छन्दः । किमित्याक्षेपोऽलङ्कारः । याऽतिशेतामित्यस्यैव वा समर्थनाय परार्द्धोक्तेरर्थान्तरन्यासः ।

१ अत्रोपजातिश्छन्दः।अनुप्रासः शब्दालङ्कारः।दृष्टान्तोऽर्थालङ्कारश्च । २ अत्रोपजातिश्छन्दः । अनुप्रासः शब्दालङ्कारः । उपमाऽर्थालङ्कारो मृद्वीकया वाचस्तुल्यत्वोक्तेः-एकस्मिन् क्वणिते तोषत्याग घृणावितानयोर्युगपदवधारणोक्तेः समुच्चयश्चार्थालङ्कारः ।

न्यासो यस्यां क्रियायां तथा उक्त्वा समाकुञ्चिता वाग्यया तूष्णींभूतायां सत्याम् । मुखाम्भोजम् 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २।१।५६ इति समासः ॥ ६१॥

करेण वाञ्छेव विधुं विधर्तुं
यमित्थमात्थादरिणी तमर्थम् ।
पातुं श्रुतिभ्यामपि नाधिकुर्वे
वर्णं श्रुतेर्वर्ण इवान्तिमः किम् ॥ ६२ ॥

करेणेति ॥ हे भैमि ! करेण विधुं चन्द्रं विधर्तुं ग्रहीतुं वाञ्छेव स्पृहेव नतु तात्त्विकी स्पृहा । इत्थमनेनैव गोप्याकारेण आदरिणी आदरयुक्ता, अदरिणी निर्भया अकम्पयुक्ता वा त्वं यमर्थं प्रयोजनमात्थ ब्रूषे अहं तमर्थं श्रुतिभ्यां कर्णाभ्यां पातुं सादरं श्रोतुमपि किं नाधिकुर्वे नाधिकारीभवामि कर्तुं यद्यपि न समर्थस्तथापि श्रोतुं शक्त एवेत्यपिशब्दार्थः । अथ च तमर्थं कर्तुमप्यधिकारी भवामि, किंपुनः श्रोतुमित्यपिशब्दार्थो वा। अन्तःकरणे ज्ञात एव ( मेव ) श्रोतुमपि नाधिकुर्वे, अपितु अधिकुर्व एवेति वा । कः किमिव—अन्तिमो वर्णः शूद्रः श्रुतेर्वेदस्य वर्णमक्षरमिव । वेदाक्षरश्रवणे शूद्रस्याधिकारो नास्ति तथा मम नेति भावः । आत्थेति भूतेऽपि 'वर्तमानसामीप्ये वर्तमानवद्वा ।३।३।१३१' इति वर्तमानप्रत्ययः । अन्तिमः 'अन्ताच्च' इति ( वा ) वक्तव्याड्डिमच् ॥ ६२ ॥

अवाप्यते वा किमियद्भवत्या
चित्तैकपद्यामपि विद्यते यः ।
यत्रान्धकारः किल चेतसोऽपि
जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ॥ ६३ ॥

अवाप्यत इति ॥ हस्तेन चन्द्रधारणवद्दुष्प्रापत्वं यदुक्तं तन्न किंचिदित्याह—योऽर्थः चित्तैकपद्यामन्तःकरणलक्षणे क्रमगम्येऽतिसूक्ष्मे मार्गेऽपि विद्यते स भवत्याऽवाप्यते प्राप्यते । वा निश्चये । चन्द्रधारणदृष्टान्तेन यत्तस्यार्थस्य दुष्प्रापत्वमियत्किम् । इयद्गौरवं किमर्थम् ? तन्न कार्यमित्यर्थः । अथ च—परचित्तगोचरो विषयः सुज्ञेन ज्ञायते, इयद्गोपनं तस्य किमर्थम् । स मया ज्ञात इत्यर्थः । एकमार्गे स्थितं वस्तु सर्वैरपि ज्ञायते । एतद्दृष्टान्तेन द्रढयति—किलेति श्रुतौ । यत्र ब्रह्मणि चेतसोऽप्यन्धकारः 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । यन्मनोगोचरो न भवति तदपि स्वप्रकाशं ब्रह्म जिह्मेतरैरनलसैरवाप्यं प्राप्यं प्राप्यत इत्यर्थः । किं पुनर्मनोगोचरः । ततश्च सूक्ष्मदर्शिना मया तवाभिप्रायो ज्ञात एव । त्वया किमिति गोप्यत इति भावः । 'वर्तन्येकपदीति च' 'जिह्मस्तु कुटिलेऽलसे' इति चामरः । एकपदी 'संख्यासुपूर्वस्य ५।४।१४०' इत्यन्तलोपे 'पादोऽन्यतरस्याम् ४।१।८' इति ङीपि पदादेशः । अवाप्यम् 'शकि लिङ् च ३।३।१७२' इति कृत्यः ॥ ६३ ॥

ईशाणिमैश्वर्यविवर्तमध्ये
लोकेशलोकेशयलोकमध्ये ।
तिर्यञ्चमप्यञ्च मृषानभिज्ञ-
रसज्ञतोपज्ञसमज्ञमज्ञम् ॥ ६४ ॥

मदुक्तमज्ञानन्नेवाभिमानेन ज्ञातमिति वदसीत्याशङ्कायामाह—

ईशेति ॥ ईशस्येश्वरस्याष्टविधैश्वर्यमध्येऽणिमलक्षणं यदैश्वर्यं तस्य विवर्तस्तात्त्विकोऽन्यथाभावस्तत्त्वतोऽणिमैश्वर्यमेव जातो मध्यो यस्यास्तत्संबुद्धिः हे कृशोदरि ! त्वं लोकेशो ब्रह्मा तस्य लोकेशया लोकवर्तिनो लोका जनास्तेषां मध्येऽज्ञं मूर्खं तिर्यञ्चमपि मामेवंभूतम् अञ्च जानीहि, पूजय वा । किंभूतं माम्—मृषा असत्यं तस्यानभिज्ञा अज्ञातारः सत्यवादिनो रसज्ञाः सहृदयास्तेषामुभयेषां भावस्तत्ता सत्यवादिता, सहृदयता च तद्विषये उपज्ञा आद्यं ज्ञानं यस्य एवंविधश्चासौ समज्ञश्च । समशब्दस्य सर्वशब्दपर्यायत्वात्सर्वज्ञस्तमेवंविधस्वरूपं माम् अज्ञमलीकभाषिणम्, अहृदयं मूर्खं च यथा तवेच्छा तथा जानीहीत्यर्थः । सत्यवादिनां सहृदयानां सर्वज्ञानां च मध्ये प्रथमगणनीयोऽहं मिथ्याभाष्यहृदयो मूर्खश्च कथं स्यामिति भावः । मृषानभिज्ञा सत्यवादिनी रसज्ञा जिह्वा येषां तेषां भावः सत्यवादिता, उपज्ञायत इत्युपज्ञा आद्यं ज्ञानं मृषानभिज्ञरसज्ञताया उपज्ञा मृषानभिज्ञरसज्ञतोपज्ञं, तेन समज्ञा कीर्तिर्यस्य । एवं सत्यवादिता प्रथमं कस्मादुत्पन्नेति, जिज्ञासायां तस्याः प्रथमोत्पत्तिकारणत्वेनाहमेव ख्यात इत्येवंरूपमज्ञं मां जानीहीति वा । लोकेशय इति 'अधिकरणे शेतेः ३।२।१५' इत्यचि 'शयवासवा-

१ अत्रोपजातिश्छन्दः । यमकं शब्दालङ्कारः । उपमाऽर्थालङ्कारः । २ अत्रोपजातिः छन्दः । अनुप्रासः शब्दालङ्कारः । उपमाऽर्थालङ्कारश्च ।

१ अत्रोपजातिश्छन्दः । विरोधाभासोऽर्थालङ्कारः ।

सिप्च—' इति सप्तम्या अलुक् । रसज्ञतोपज्ञ इत्यत्र (पक्षे) 'आतश्चोपसर्गे ३।३।१०६' इत्यङि 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम् १।४।२१' इति नपुंसकत्वम् । समैः सर्वैर्ज्ञायते इति समज्ञा कीर्तिः 'घञर्थे कविधानम्' इति (त्वा) कः ॥ ६४ ॥

**मध्ये श्रुतीनां प्रतिवेशिनीनां**
**सरस्वती वासवती मुखे नः ।**
**ह्रियेव ताभ्यश्चलतीयमद्धा (ऽ)-**
**पथान्न सत्सङ्गगुणेन नद्धा ॥ ६५ ॥**

सत्यवादित्वमेव प्रकटयति—

मध्ये इति ॥ हे भैमि ! नोऽस्माकं मुखे वर्तमाना सरस्वती वाणी प्रतिवेशिनीनां निकटगृहवर्तिनीनां श्रुतीनां वेदानां मध्ये वासवती स्थितिमती यस्मात्तस्मात्ताभ्यः श्रुतिभ्यो ह्रियेव अद्धा निश्चयेन अपथादपथं कुमार्गं प्राप्य । ल्यब्लोपे पञ्चमी । न चलति न व्यभिचरति । यतः—सता सह सङ्गः स एव गुणस्तेन नद्धा संबद्धा । सत्सङ्गेन काचिद्यथा न व्यभिचरति । वेदसाहचर्यान्मद्वाण्यपि सत्यैवेत्यर्थः । 'सत्ये त्वद्धाञ्जसा द्वयम्' । अपथान्कुमार्गान्प्रति न चलति न गच्छति, किंतु समीचीनमार्गान्प्रत्येव गच्छतीति वा । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति 'अपथं नपुंसकम् २।४।३०' इत्येतन्नाश्रीयते । अथवा पथिशब्दपर्यायः पथशब्दोऽकारान्तोऽप्यस्ति । 'वाटः पथश्च मार्गश्च' इतित्रिकाण्डशेषोक्तेः, अथवा 'अद्धापथात्' इत्येकमेव पदम् । अद्धापथात्सत्यमार्गान्न चलतीत्यर्थः । अथ च—सञ्शोभनः सङ्गः संधिर्यस्य तेन गुणेन दृढया रशनया बद्धा काचिद्यथा न चलति तथेयमपि । मद्वाण्याः श्रुतयः प्रतिवेशिन्यो भवन्ति । अत एव तत्सदृशमेव व्यवहरति नान्यथा ॥ ६५ ॥

**पर्यङ्कतापन्नसरस्वदङ्कां**
**लङ्कां पुरीमप्यभिलाषि चित्तम् ।**
**कुत्रापि चेद्वस्तुनि ते प्रयाति**
**तदप्यवेहि स्वशये शयालु ॥ ६६ ॥**

अथ त्वमभिप्रायं कथयेति प्ररोचनार्थं स्वसामर्थ्यं द्योतयति—

पर्यङ्केति ॥ हे भैमि ! ते चित्तं मनो लङ्कां पुरीमप्यभिलाषि द्रष्टुं गन्तुं वा अभिलाषुकं सत् कुत्राप्यन्यत्र कस्मिंश्चिल्लङ्कायाः सकाशादतितरां दुष्प्रापे वस्तुनि विषये चेत्प्रयाति गच्छति त्वं तदपि तदुभयमपि स्वशये स्वहस्त एव शयालु विद्यमानमवेहि जानीहि कुत्रापि वस्तुनि अभिलाषि तव चित्तं लङ्कायां विद्यमानवस्तुप्राप्त्यर्थं लङ्कामपि प्रयाति तदपीति वा योजना । दुष्प्रापवस्तुनः साधकोऽहमेवेति तत्कथयेति भावः । किंभूतां लङ्काम्—सरस्वतः समुद्रस्याङ्को मध्यः । परितः सर्वदिक्षु अङ्कतां चिह्नतां परिवेष्टने वा आपन्नः प्राप्तः सरस्वदङ्को यस्याः सा ताम् । पर्यङ्कतां मञ्चताम् समुद्राङ्के मुखेन तिष्ठतीत्यर्थः । पर्यङ्कतां योगपट्टत्वं प्राप्तः समुद्रोऽङ्कश्चिह्नं यस्या इति वा । पर्यङ्कतां वृसीत्वं वा समुद्रमध्ये तिष्ठतीत्यर्थ इति वा । सर्वथा लङ्काया दुष्प्रापत्वं सूचितम् । या एवंविधा दुष्प्रापा तामपि हस्तगतामवेहि किंपुनरन्याम् । कुत्रापि कोः पृथिव्याः त्राणं त्राः तामाप्नोतीति कुत्राप् । 'क्विप् च ३।२।७६' इति क्विप्, तस्मिन्राजलक्षणे वस्तुनि वा । पर्यङ्क इति विकल्पत्वाल्लत्वाभावः । अपेः पदार्थे संभावनायां समुच्चये वा कर्मप्रवचनीयत्वाल्लङ्कामिति द्वितीया । अभिलापस्य (भिशब्दस्य) गम्यादिपाठाद्वा । तदिति सा च लङ्का च तच्च वस्तु तत् 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १।२।६९' इत्येकशेषः पाक्षिकमेकत्वं च ॥ ६६ ॥

**इतीरिता पत्त्ररथेन तेन**
**ह्रीणा च हृष्टा च बभाण भैमी ।**
**चेतो (ऽ) नलङ्कामयते मदीयं**
**नान्यत्र कुत्रापि च साभिलाषम् ६७ ॥**

इतीति ॥ तेन पत्त्ररथेन पक्षिणा इति पूर्वोक्तप्रकारेणेरितोक्ता ह्रीणा निजाभिलाषकथनप्रस्तावेन लज्जिता स्वाभिलाषस्य प्रापकोऽहमिति तेनोक्तत्वाद्धृष्टा आह्लादयुक्ता । विस्मितेति यावत् । भैमी इति बभाणावोचत् । इति किम्—मदीयं चेतो लङ्कां न अयते प्राप्नोति । अभिलष्यतीत्यर्थः । अन्यत्र चान्यत्रापि कुत्रापि राजनि वा न

१ अत्राप्युपजातिश्छन्दः । लोकेशेति यमकं शब्दालङ्कारः । अन्यत्रानुप्रासोऽपि । २ अत्रोपजातिश्छन्दः । ह्रियेवेत्युत्प्रेक्षा । श्रुतीनां प्रतिवेशिनीत्वेन रूपणाद्रूपकम्, ततश्च सरस्वत्यां कदाचिद्धर्मतो विरज्यन्त्या अथ सत्सङ्गात्तत्रानुरक्तया व्यवहारः प्रतीयत इति समासोक्तिः ।

१ अत्रोपजातिः छन्दः, अनुप्रासः, शब्दालङ्कारः । समुद्रस्य पर्यङ्कत्वेन रूपणाद्रूपकम् ।

च नैव साभिलाषम्। अथ च—नलं नलनामानं राजानं कामयते। तदतिरिक्तेऽन्यवस्तुनि नैव साभिलाषमिति श्लिष्टमवोचत्। 'तर (पत) त्पक्षरयाण्डजाः' इत्यमरः। हीणा 'नुदविदोन्दत्राघ्राहीभ्योऽन्यतरस्याम् ८।२।५६' इति निष्ठानत्वम्। अप्राप्यवस्तुप्रापकोऽहमिति हंसोक्तिं श्रुत्वा हृष्टा सरोमाञ्चा। ततश्च हृषेर्लोमहर्षविषयत्वात् 'हृषेर्लोमसु ७।२।२९' इत्येवेड्विकल्पः। एवं सर्वत्र ज्ञेयम्। 'क्ङिति च १।१।५' इत्यनेनेग्लक्षणयोरेव वृद्धिगुणयोः प्रतिषेधात्कामयत इत्यत्र त्वनिग्लक्षणत्वादमातिङ्गप्रसक्ता वृद्धिरिति ज्ञेयम्॥ ६७॥

विचिन्त्यबालाजनशीलशैलं
लज्जानदीमज्जदनङ्गनागम्।
आचष्ट विस्पष्टमभाषमाणा-
मेनां स चक्राङ्गपतङ्गशक्रः॥ ६८॥

विचिन्त्येति॥ चक्राङ्गसंज्ञकानां पतङ्गानां पक्षिणां शक्रो राजा हंसो विस्पष्टं प्रकटमभाषमाणामेनां भैमीं जगादोक्तवान्। किं कृत्वा—बालाजनस्य शीलं स्वभाव एव दुर्लङ्घत्वादतिगहनत्वाच्च शैलः पर्वतस्तं लज्जारूपायां नद्यां मज्जन्त्रुडन् अनङ्गः कामलक्षणो नागो हस्ती यत्र एवंविधं विचिन्त्य विचार्य। कामपीडितोऽपि बालाजनो लज्जया काममाच्छाद्य स्वाभिलाषं न कथयतीति विचार्य विस्पष्टवादनार्थमेतामाह स्मेत्यर्थः। अथ च—पर्वतनद्यां हस्ती मज्जतीत्युक्तिः 'चक्राङ्गा मानसौकसः' इत्यमरः॥ ६८॥

नृपेण पाणिग्रहणस्पृहेति
नलं मनः कामयते ममेति।
आश्लेषि न श्लेषकवेर्भवत्याः
श्लोकद्वयार्थः सुधिया मया किम्॥ ६९॥

नृपेणेति॥ हे भैमि, श्लेषकवेः पूर्वं राजकर्तृके पाणिग्रहणे मम वाञ्छेति, अनन्तरं मम मनो नलमभिलष्यतीति च श्लिष्टकवित्वकारिण्या भवत्यास्तव क्रमेण 'का नाम बाला' (३।५९) 'चेतो नलं कामयते, (३।६७)' इत्यादेः श्लोकद्वयस्यार्थोऽभिप्रायः सुधिया विदुषापि केनचिन्नाश्लेषि नाज्ञायि, मन्दप्रज्ञेन मया नाज्ञायीति किं वाच्यम्। अथ च विदुषा श्लेषादिविवरणे पटुना मया नाज्ञायि किम्, अपितु ज्ञात एव। किमर्थं गोपायसीति भावः। 'स्वधिया' इति पाठे स्वीयबुद्ध्यैव न त्वन्यबुद्ध्या॥ ६९॥

त्वच्चेतसः स्थैर्यविपर्ययं तु
संभाव्य भाव्यस्मि तमज्ञ एव।
लक्ष्ये हि बालाहृदि लोलशीले
दरापराद्धेपुरपि स्मरः स्यात्॥ ७०॥

यदि ममाभिप्रायो ज्ञात एव तर्हि लज्जां त्याजयित्वा पुनःपुनः किमिति वादयसीत्याशङ्क्याह—

त्वच्चेतस इति॥ तुः पुनरर्थे। अहं बालभावात्त्वच्चेतसः तव मनसः स्थैर्यविपर्ययं चाञ्चल्यं संभाव्य संचिन्त्य पुनस्तमज्ञ एव तवाभिप्रायमजानान एव भाव्यस्मि। 'तदज्ञः' इति पाठे श्लोकद्वयस्यार्थस्याज्ञ इति। वा एवकार इवार्थो वा। ज्ञातोऽप्यर्थः किमज्ञात इत्युच्यत इत्याशङ्क्याह—हि यस्माद्बालत्वादेव लोलशीले चञ्चलस्वभावे बालाहृदि बालाहृदयलक्षणे लक्ष्ये विषये स्मरोऽपि दरम् ईषदपराद्धेपुश्च्युतसायकः स्यादिति संभाव्यते। कामस्यापि मनोभूत्वात्तेनापि यज्ज्ञातुं न शक्यते तत्रान्यस्य का कथा। बालानां चित्तचाञ्चल्यान्नलाभिलाषनिश्चयाभावादज्ञ एव जातोऽस्मीति भावः। अतो निश्चयार्थं पुनर्वादयामीत्यर्थः। अथ च—बालानामल्पकामत्वात्कामबाणस्तथा न पीडयति यथा तरुणीनामिति तस्य च्युतसायकत्वं युक्तम्। अन्योऽपि धानुष्कश्चञ्चले लक्ष्ये च्युतसायको भवति। भाव्यस्मि भवामीति 'धातुसंबन्धे प्रत्ययाः' इति प्रत्ययः। अपिः सम्भावनायाम्॥ ७०॥

महीमहेन्द्रां खलु नैषधेन्दु-
स्तद्बोधनीयः कथमित्थमेव।
प्रयोजनं सांशयिकं प्रतीत्य
पृथग्जनेनेव स मद्विधेन॥ ७१॥

अथ निश्चयाभावे मादृशेन राजा बोधयितुं शक्यो नेत्याह—

१ अत्रोपजातिश्छन्दः। श्लेषोऽर्थालङ्कारः। २ अत्रोपजातिश्छन्दः। लज्जाया नदीत्वेनानङ्गस्य नागत्वेन च रूपणाद्रूपकम्।

१ अत्राप्युपजातिः छन्दः। अनुप्रासः शब्दालङ्कारः। २ अत्रोपजातिश्छन्दः। पूर्वार्धार्थस्योत्तरार्धार्थेन समर्थनादर्थान्तरन्यासोऽर्थालङ्कारः। शब्दालङ्कारौ च भाव्ये तिलोलशील इति च यमकानुप्रासौ।

महीति ॥ स नैषधेन्दुर्निषधदेशोद्भवजनानामिन्दुराह्लादकः खलु यस्मान्महां महेन्द्र इव । तत्तस्मान्मद्विधेन विश्वास्येन पृथग्जनेनेव नीचजनेनेव स नल इत्थमेव बालाहृदयचञ्चलत्वसमर्थनप्रकारेण सांशयिकं संदेहचञ्चलमीदृक् नलाभिलापलक्षणं प्रयोजनं कार्यम्, इत्थमेवाविचार्यैव वा कथं बोधनीयः केन प्रकारेण ज्ञापनीयः । यथा विश्वास्येन मूर्खेण भयं त्यक्त्वा राज्ञोऽग्रेऽविचार्य यत्किंचिदुच्यते तथा मया निश्चितं वक्तुं न शक्यत इत्यर्थः । इत्थमेव बालया त्वयाहं यथा बोधितस्तथा मया स कथं बोध्य इति वा । 'पृथग्जनः स्मृतो नीचें मूर्खे च' इति विश्वः महां महेन्द्र इव 'सप्तमी शौण्डैः २ । १ । ४०' इत्यत्र 'सप्तमी' इति योगविभागात्समासः । षष्ठीसमासो वा । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ १ । ४ । ५२' इति कर्मत्वे बोधनीय इति कर्मणि कृत्यः ॥ ७१ ॥

पितुर्नियोगेन निजेच्छया वा
युवानमन्यं यदि वा वृणीषे ।
त्वदर्थमर्थित्वकृति प्रतीतिः
कीदृङ् मयि स्यान्निषधेश्वरस्य ॥७२ ॥

पूर्वोक्तमेव द्रढयति—

पितुरिति ॥ पितुर्नियोगेन आज्ञया निजेच्छया वा स्वेच्छया त्वं यद्यन्यं नलव्यतिरिक्तं युवानं तरुणं वृणीषे तर्हि त्वदर्थं तुभ्यं त्वया भैमी परिणेतव्या इति अर्थित्वकृति याच्ञाकारिणि मयि निषधेश्वरस्य नलस्य कीदृक्कीदृशी प्रतीतिर्विश्वासः स्यात् प्रतारकोऽयमिति तस्य बुद्धिः स्यात् । निश्चयं विना तस्याग्रे वक्तुं न युक्तमित्यर्थः । यद्यर्थे यदिवा इति, कीदृग्वा इति वा, वाशब्दो योजनीयः । अर्थित्वकृति । कृञः क्विपि तुक् ॥ ७२ ॥

त्वयाऽपि किं शङ्कितविक्रियेऽस्मि-
न्नधिक्रिये वा विषये निधातुम् ।
इतः पृथक्प्रार्थयसे तु यद्यत्
कुर्वे तदुर्वीपतिपुत्रि सर्वम् ॥ ७३ ॥

अथ संदिग्धे कार्ये त्वयाऽपि नाहं नियोज्य इत्याह—

त्वयेति ॥ त्वयापि शङ्कितविक्रिये संभावितवरान्तरवरणलक्षणविकारेऽस्मिन्विवाहलक्षणे विषये निधातुं योजयितुं किंवा किमित्यहमधिक्रिये अधिकारी क्रिये । अस्मिन्नधिकारे नाहं नियोज्य इत्यर्थः । हे उर्वीपतिपुत्रि, इतो विवाहलक्षणकार्यात्पृथगन्यद्यद्यत्प्रार्थयसे याचसे, अहं तत्सर्वमपि कुर्वे साधयेयम् । प्रार्थयसे इति कुर्वे इति च वर्तमानसामीप्ये लट् ॥ ७३ ॥

श्रवः प्रविष्टा इव तद्गिरस्ता
विधूय वैमत्यधुतेन मूर्ध्ना ।
ऊचे ह्रियोऽपि श्लथितानुरोधा
पुनर्धरित्रीपुरहूतपुत्री ॥ ७४ ॥

श्रव इति ॥ धरित्रीपुरुहूतपुत्री पृथ्वीन्द्रपुत्री पुनरूचे । किं कृत्वा— श्रवः कर्णं प्रविष्टाः कर्णान्तर्गतास्ताः पूर्वोक्तास्तद्गिरो हंसवाणीः वैमत्येनासंमत्या धुतेन कम्पितेन मूर्ध्ना विधूयेव निरस्येव । किंभूता— ह्रियोऽपि लज्जाया अपि श्लथीकृतः (अनुरोधः) अनुबन्धोऽनुसंधानं यया । श्रवः प्रविष्टा इवेति केचित् । तदा प्रातिकूल्यत्वादनङ्गीकारेण वस्तुगत्या श्रवणप्रविष्टा न भवन्तीत्यतः प्रविष्टा इवेत्युक्तम् अन्येनापि कर्णप्रविष्टस्य कीटादेर्निराकरणार्थं शिरश्चालनं क्रियते । या लज्जा सर्वथा त्यक्तुं न शक्या सापि त्यक्तेत्यपिशब्दार्थः । वैमत्यम् । 'वर्णदृढादिभ्यः ष्यञ्च ५।१।१२३' इति मतिशब्दस्य दृढादौ ग्रहणात् ष्यञ् । कर्मधारयाद्वा स्वार्थे ज्ञापकात् । ञ्णो जित्वाद्वचेस्तङ् ॥ ७४ ॥

दृष्टान्तद्वयेन पितृकर्तृकनलान्यस्वकर्तृकपरिणयं निराकरोति श्लोकद्वयेन—

मदन्यदानं प्रति कल्पना या
वेदस्त्वदीये हृदि तावदेषा ।
निशोऽपि सोमेतरकान्तशङ्का-
मोंकारमग्रेसरमस्य कुर्याः ॥७५॥

मदन्यदानमिति ॥ मम अन्यस्मै नलव्यतिरिक्ताय वराय पितृकर्तृकं दानं प्रति उद्दिश्य 'पितुर्नियोगेन—' इत्यादिर्या कल्पना शङ्का तर्कः एषा तावत्कल्पना त्वदीये हृदि वेदः वेद इव प्रमाणभूता इति चेत्तर्हि त्वं निशोऽपि रात्रेरपि सोमाच्चन्द्रादितरोऽन्यः कान्तः प्रियस्तस्य शङ्काम्

१ अत्रोपजातिश्छन्दः । अनुप्रासः शब्दालङ्कारः । पृथग्जनेनेवत्युपमा, कथमित्याद्युक्तमेव समर्थयितुं परार्द्धोक्तेरर्थान्तरन्यासश्च । २ अत्रोपजातिश्छन्दः । यकारवकारादेरसकृत्प्रयोगादनुप्रासः ।

१ अत्रोपजातिश्छन्दः । अनुप्रासः शब्दालङ्कारः । २ उपजातिरत्र छन्दः । श्रव इत्युत्प्रेक्षा ।

अस्य वेदस्याग्रेसरं पुरोवर्तिनमोङ्कारं कुर्या अङ्गीकुरु । वेदस्याग्रेसर आदौ ओंकारो भवति। तत्र चन्द्रादन्यः कान्तो न, तथा नलातिरिक्तो ममेत्यर्थः मत्कर्तृकं दानं वा । अग्रेसरम् 'पुरोऽग्रतोऽग्रेषु सर्तेः ३।२।१८ इति टः ।' अजाद्यदन्तम् २।२।३३ ' इति पूर्वनिपातमकृत्वाऽग्रशब्दस्य परनिपातकरणं सप्तम्येकवचनेन विग्रह एदन्तत्वार्थम् । 'यूथं तदग्रसरमेतदहो वनान्ते' इत्यादयः प्रयोगा अग्रतः सरति, अग्रेण चेति समर्थनीयाः ॥ ७५ ॥

सरोजिनीमानसरागवृत्ते-
रनर्कसंपर्कमतर्कयित्वा ।
मदन्यपाणिग्रहशङ्कितेय-
महो महीयस्तव साहसिक्यम् ॥७६॥

सरोजिनीति ॥ हे हंस सरोजिन्याः कमलिन्या मानसरागोऽन्तःकरणानुरागः तस्य वृत्तेः सद्भावस्य स्थितेः अनर्केण सूर्यादन्येन सह संपर्कं संबन्धमतर्कयित्वाऽविचार्य तवेयं ममान्येन नलव्यतिरिक्तेन पाणिग्रहः परिणयस्तच्छङ्किता तत्तव महीयोऽतीव महत्साहसिक्यं साहसिकत्वम् । अहो आश्चर्ये । सूर्यातिरिक्तः कान्तः कमलिन्याश्चेत्तर्हि नलातिरिक्तो ममेति भावः । सहसाऽविचार्यैव वर्तते साहसिकः 'ओजःसहोम्भसा वर्तते ४।२।२७' इति ठक् । ततो 'गुणवचनब्राह्मणादिभ्यः कर्मणि च ।५।१।१२८' इति ब्राह्मणादित्वात्ष्यञ् ॥ ७६ ॥

साधु त्वया तर्कितमेतदेव
स्वेनानलं यत्किल संश्रयिष्ये ।
विनामुना स्वात्मनि तु प्रहर्तुं
मृषागिरं त्वां नृपतौ न कर्तुम् ॥७७॥

पुनरपि द्वितीयं पक्षं निराकरोति—

साध्विति ॥ हे हंस, एतत्त्वया साधु सम्यक्तर्कितमूहितम् । किल उपहासे । यत्स्वेनात्मनैव स्वेच्छया अनलं नलादन्यं संश्रयिष्ये । किल चेदित्यर्थे यद्यर्थे वा । नलादन्यं चेत्संश्रयिष्ये तर्हि तु पुनरमुना नलेन विना नलप्राप्त्यभावे स्वात्मनि स्वविषये स्वप्रहारं कर्तुमनलमग्निमेव संश्रयिष्ये । न तु त्वां नृपतौ नले मृषागिरं मिथ्यावाणीकं कर्तुं नलादन्यं संश्रयिष्ये । त्वं चेदङ्गीकरोषि तर्ह्यग्नावात्मघातं करिष्यामीति तस्य पुरस्तात्कथयेति भावः । स्वात्मनीति कर्माविवक्षया सप्तमी ॥ ७७ ॥

मद्विप्रलभ्यं पुनराह यस्त्वां
तर्कः स किं तत्फलवाचि मूकः ।
अशक्यशंकाव्यभिचारहेतु-
र्वाणी न वेदा यदि सन्तु के तु ॥७८॥

एतद्वचनं प्रतारणमात्रं नतु सत्यमित्यत आह—

मदिति ॥ हे हंस ! यस्तर्कस्त्वां पुनर्मद्विप्रलभ्यं मया प्रतारणीयमाह स तर्कः तस्य प्रतारकस्य फलं प्रयोजनं तद्विषयिण्यां वाचि किं मूकः प्रतारणस्य फलं किमिति नं वदति न वदति चेन्नास्त्येव तत् । ततश्च अशक्या शङ्का येषामेवंविधा व्यभिचारहेतवोऽज्ञानादयो यस्याः [यस्या व्यभिचारकारणं शङ्कितुं न शक्यते ] एवंविधा अव्यभिचारिणी वाक् यदि वेदा न वेदवत्प्रमाणभूता न भवेत्, तर्हि के तु पुनर्वेदाः सन्तु । अव्यभिचरितवाक्त्वमेव वेदत्वम् । एवंविधाया अपि वाचोऽप्रामाण्ये वेदस्याप्यप्रामाण्यं स्यादित्यर्थः । ततश्च पूर्वश्लोकोक्तं मद्वचोऽन्यथाशङ्कां विहाय सत्यमेव ज्ञातव्यम् । विप्रलभ्यम् 'पोरदुपधात् ३।१।९८' इति यत् । शक्य इति 'शकिसहोश्च३।१।९९' इति यत् ॥ ७८ ॥

अनेषधायैव जुहोति तातः
किं मां कृशानौ न शरीरशेषाम् ।
ईष्टे तनूजन्मतनोः स नूनं
मत्प्राणनाथस्तु नलस्तथापि ॥ ७९ ॥

पुनरपि पूर्वोक्तं 'पितुर्नियोगेन—' ( ३। ७२ ) इत्यादि पक्षद्वयं युक्त्या निराकरोति—

१ उपजातिश्छन्दः। वेदः-वेद इवेत्युपमा इति चेदितिकल्पनायां यद्यर्थातिशयोक्तिश्चैतद्द्वयी व्यङ्ग्या, इवयद्यर्थयोः शब्दयोरप्रयोगात् । २ अत्रोपजातिश्छन्दः । अनुप्रासः शब्दालङ्कारः । सरोजिन्या अर्क इव ममापि नल एव नायक इत्युपमा, यद्वा—सरोजिन्या यद्यर्केतरः प्रियः स्यात्तर्हि ममापि स्यादिति यद्यर्थातिशयोक्तिः इत्युभयत्र इवादेरप्रयोगाद् व्यङ्ग्यत्वम् ।

१ अत्रोपजातिश्छन्दः । अनुप्रासः शब्दालङ्कारः । अनलमित्यत्र श्लिष्टा वक्रोक्तिः । यद्वा—हंसोक्तेरेव प्रकारान्तरेण समर्थनादर्थान्तरन्यासः । २ अत्रोपजातिश्छन्दः । वाण्यां वेदत्वरूपणाद् रूपकम् । यदिनेति यद्यर्थातिशयोक्तिः । पूर्वोत्तरार्थयोर्हेतुहेतुमद्भावात् काव्यलिङ्गं चालङ्कारः ।

अनैषधायेति ॥ तातः पिता चेच्छरीरशेषां शरीरमात्रावशेषां मामनैषधाय नलव्यतिरिक्ताय—जुहोति ददाति तर्हि कृशानावेवाग्नावेव किं न जुहोति वह्नावेव किमिति मां न क्षिपति । वद इति । किमः प्रश्नार्थत्वेन नञो निषेधार्थत्वेन च व्याख्येयम्। अङ्गीकृत्याऽप्याह—यद्यप्यन्यस्मै दास्यति तथापि मम प्राणानां नाथस्तु नल एव । तुरेवार्थः । यतो नूनं निश्चितं स पिता तनूजन्म अपत्यं तस्य तनुः शरीरं तस्यैव ईष्टे स्वामी तदधीनस्य शरीरस्य यत्किंचित्करोतु, प्राणास्तु नलाधीना एव, पितृकर्तृकान्यदाने नलोद्देशेनाग्नौ जन्मान्तरेऽपि तत्प्राप्त्यर्थं प्राणांस्त्यक्ष्यामि । 'यं यं वापि स्मरन्भावं' इति भगवद्वचनात् । तनूजन्मतनोरिति 'अधीगर्थ—'इति षष्ठी ॥ ७९ ॥

तदेकदासीत्वपदादुदग्रे
मदीप्सिते साधु विधित्सुता ते ।
अहेलिना किं नलिनी विधत्ते
सुधाकरेणाऽपि सुधाकरेण ॥ ८० ॥

'इतः पृथक्प्रार्थयसे' ( ३ । ७३ ) इत्युक्तं दूषयति—

तदिति ॥ तस्य नलस्यैकं केवलं दासीत्वं तल्लक्षणं पदं वस्तु तस्मात्सकाशादुदग्रे उत्कृष्टे मदीप्सिते ममाभिलाषे यत्ते विधित्सुता कर्तुकामत्वं तत्साधु उचितम्, काक्वा न साध्विति वा । नलदासीत्वादन्यन्न प्रार्थय इति भावः । नलस्य दासीत्वं सम्यक्, अन्यस्य महिषीत्वं नेत्याह—नलिनी कमलिनी सुधाया अमृतस्याकरेण आलयेनाप्यहेलिना हेलिः सूर्यस्तस्मादन्येन सूर्यव्यतिरिक्तेन सुधाकरेण चन्द्रेण किं विधत्ते कुरुते ? अपि तु न किमपि । सूर्येऽनुरागबाहुल्याचन्द्रे तदभावादमृतपूर्णोऽपि तस्यै न रोचते तथा ममेत्यर्थः । सुधाकरपदं प्रथमं यौगिकं द्वितीयमयौगिकमिति न पुनरुक्तिः तदेकदासीत्वपदाद्वस्तुनः—सकाशादधिके मदीप्सिते विधित्सुतास्ति । इति यत्तत्साध्वप्यनुचितम् । तादृशस्य मदीप्सितस्याभावादित्यर्थं इति वा ॥ ८० ॥

तदेकलुब्धे हृदि मेऽस्ति लब्धुं
चिन्ता न चिन्तामणिमप्यनर्घ्यम् ।
चित्ते ममैकः सकलत्रिलोकी-
सारो निधिः पद्ममुखः स एव ॥ ८१ ॥

एतदेव द्रढयति—

तदिति ॥ तस्मिन्नेवैकं केवलं लुब्धमभिलाषुकमेवंभूते मे हृदि अनर्घ्यममूल्यं चिन्तामणिमपि तदाख्यरत्नविशेषमपि लब्धुं प्राप्तुं चिन्ता मनोरथो नास्ति । किं पुनः फलान्तरमित्यपेरर्थः । यतः—मम चित्ते सकलत्रिलोक्यां सारः श्रेष्ठभूतश्चतुःषष्टिकलासहितः त्रैलोक्यश्रेष्ठश्च इति वा । पद्मवद्रमणीयाननः स एव नल एवैको निधिः । स एवैकोऽन्तःकरणे मया ध्रियते न चिन्तामणिः । अथ च पद्मो निधिर्मुखमादिर्यस्यैवंभूतो निधिः । स एव नवनिधिरूपः । किं चिन्तामणिनेति भावः । निधीयत इति निधिः । कर्मणि 'उपसर्गे घोः किः' ॥ ८१ ॥

श्रुतः स दृष्टश्च हरित्सु मोहा-
द्ध्यातः स नीरन्ध्रितबुद्धिधारम् ।
ममाद्य तत्प्राप्तिरसुव्ययो वा
हस्ते तवास्ते द्वयमेकशेषः ॥ ८२ ॥

ममाभिलाषः कर्तव्यश्चेन्मदुक्तमवश्यमेव कर्तव्यमिति स्वानुरागपूर्वकं श्लोकदशकेन हंसं प्रवर्तयति—

श्रुत इति ॥ सोऽनिर्वचनीयस्वरूपो नलो मया दूतद्विजादिमुखाच्छ्रुतः । तथा—हरित्सु सर्वासु दिक्षु मोहादुन्मादवशाद्दृष्टश्च । सर्वं जगत्तन्मयमेव दृष्टमिति यावत्। तथा—नीरन्ध्रिता विजातीयज्ञानेनाव्यवहिता निरन्तरा बुद्धिधारा बुद्धिप्रवाहो यस्यां क्रियायां तथा ध्यातो ध्यानेन गोचरीकृतश्च । एवं चक्षूरागादयो नवावस्था यथायथं मयाऽनुभूताः इदानीं मम तत्प्राप्तिर्नलप्राप्तिः, असुव्ययो दशमावस्थारूपः प्राणनाशो वा।वाशब्दश्चार्थे वा । एतद्द्वयं तव हस्ते आस्ते। त्वदधीनमेव विद्यत इत्यर्थः । परंतु एकस्य शेषः । एकश्चासौ शेषश्चेति वा । एकशेषरूपेण द्वयं तिष्ठतीत्यर्थः । यदा नलप्राप्तिस्तदा नासुव्ययः, यदा चासुव्ययस्तदा तत्प्राप्तिर्न । त्वत्सकाशान्नलं वा मृत्युं वा

---

१ अत्रोपजातिश्छन्दः । पूर्वार्द्धे यद्यर्थातिशयोक्तिर्व्यङ्ग्या । काव्यलिङ्गं तु वाऽर्थालङ्कारः । २ अत्रोपजातिश्छन्दः । यमकस्य, परिकरेण सङ्करः । अहेलिनेत्यादौ दृष्टान्तः ।

१ अत्रोपजातिश्छन्दः । अनुप्रासः, चिन्तेति यमकं च । नलस्य पद्मादिनिधिभिः सममैक्यरूपणाद्रूपकम् । पक्षान्तरे पद्ममुख इत्युपमाऽपि ।

प्राप्स्यामीति भावः । एकतरस्य निश्चयाभावाद्द्वयमित्युक्तम् । एकशेषः सरूपाणां भवति, न तु विरूपाणाम् । अत्र तु विरूपयोरप्येकशेष इति चित्रम् । अथ च—'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । मत्वा च सततं ध्येय एते दर्शनहेतवः ॥' इति वचनाच्छ्रवणादिना पूर्वं विषयीकृतस्य 'तत्त्वमसि' इति श्रुतौ तच्छब्दवाच्यस्य ब्रह्मणः प्राप्तिः कस्यचिदेव सुकृतिनो भवति, तथा मम नलप्राप्तिस्त्वत्प्रसादादेवेत्यर्थः । ब्रह्माप्यद्वयम् । अथ च—एवंविधो य एकस्यैव शुद्धस्यैव ब्रह्मणः शेषोऽवस्थानं तल्लक्षणमद्वयं चेत्युक्तिः । अत्र वाशब्दश्चार्थः । द्वयमेवेति पाठो वा । ध्यातः 'न ध्याख्यापृमूर्छिमदाम् ८।२।५७' इति नत्वनिषेधः । नीरन्ध्रा कृता नीरन्ध्रिता इति ण्यन्तान्निष्ठा ॥ ८२ ॥

संचीयतामाश्रुतपालनोत्थं
मत्प्राणविश्राणनजं च पुण्यम् ।
निवार्यतामार्य वृथा विशङ्का
भद्रेऽपि मुद्रेयमये भृशं का ॥ ८३ ॥

मम कार्यसाधने तव महाँल्लाभ इत्याह—

संचीयतामिति ॥ 'तदप्यवेहि स्वशये शयालु' (३।६९) इति आश्रुतस्य प्रतिज्ञातस्य पालनं तस्मादुत्थं जनितं पुण्यम् । तथा—मम प्राणानां मह्यमेव विश्राणनं दानं तज्जनितं च पुण्यं त्वया संचीयतां परिपुष्टीक्रियताम् । प्रतिश्रुतकरणेन महान्धर्मः, तेन च मत्प्राणरक्षणाद्धर्मो भविष्यतीत्यर्थः । प्रतिश्रुतादाने चाधर्मः, मत्प्राणहानिश्चेति स्त्रीहत्यालक्षणश्चाधर्मः एतद्द्वयं यथा न भवति तथा कर्तव्यमिति भावः । निश्चयाभावे कथं कार्यमित्यत आह—आर्य श्रेष्ठ, वृथा निष्कारणिका 'पितुर्नियोगेन—' इत्यादिविशङ्का विरुद्धा संभावना निवार्यतां दूरतस्त्यज्यताम् । अये हंस! भद्रेऽप्यसंदिग्धेऽपि पदार्थे विषये भृशमतिशयेन केयं मुद्रा मूकीभावः किमिति नाङ्गीक्रियत इत्यर्थः । भद्रे शुभरूपे श्रेष्ठे साधौ त्वयि इयं का मुद्रा स्थितिरिति वा ॥ ८३ ॥

अलं विलङ्घ्य प्रियविज्ञ याच्ञां
कृत्वापि वाम्यं विविधं विधेये ।
यशःपथादाश्रवतापदोत्थात्
खलु स्खलित्वास्तखलोक्तिखेलात् ॥ ८४ ॥

अलमिति ॥ हे प्रियविज्ञ ! प्रियश्चासौ विज्ञश्च विपु पक्षिषु मध्ये ज्ञ पक्षिश्रेष्ठ इति वा हंस ! याच्ञां मत्कृतां प्रार्थनां विलङ्घ्याऽतिक्रम्य अलं नातिक्रमणीया । प्रियस्य सतो विज्ञस्य नलस्य याच्ञां विलङ्घ्यालमिति वा।तथा-विधेये करणीयवस्तुविषये विविधं वाम्यं वक्रत्वमपि कृत्वा अलम् । न करणीयमित्यर्थः । अपिः तुल्यकालत्वद्योतनार्थः । उभयमपि न कार्यमित्यर्थः । तथा—आश्रवतापदं दातृत्वलक्षणं पदमुत्तमस्थानं तस्मादुत्थ उत्पन्नः तस्माद्यशःपथात्कीर्तिमार्गात्स्खलित्वा पतित्वापि खलु पूर्यतां पतनमपि न कार्यम् । अपिशब्दोऽत्रापि योज्यः । किंभूतात्—अस्तः क्षिप्तः खलोक्तीनां खलदुर्वचनानां खेलो विलासो यस्मिन् । हंसतुल्य उपकारी अन्यो नास्तीति दुर्जना अपि यथा तव कीर्तिं वर्णयन्ति तथा कुर्वित्यर्थः । आश्रवता वचनकारिता प्रतिश्रुतकारित्वमिति वा । पन्था हि पदोत्थो भवति । विज्ञ इति 'इगुपधज्ञाप्रीकिरः कः ३।१।१३५' इति कः । विलङ्घ्य कृत्वा, स्खलित्वा इति 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा१।२।७'इति क्त्वाप्रत्ययः । आशृणोतीत्याश्रवः पचादिषु । 'यजयाचरुचप्रवचर्चश्च ७।३।६६' इति नङि याच्ञा ॥ ८४ ॥

स्वजीवमप्यार्तमुदे ददद्भ्य-
स्तव त्रपा नेदृशबद्धमुष्टेः ।
मह्यं मदीयान्यदसूनदित्सो-
र्धर्मः कराद्भ्रश्यति कीर्तिधौतः ॥ ८५ ॥

सोपहासं ब्रूते—

स्वेति ॥ हे हंस! मदीयानसून्नललक्षणान्प्राणान्मह्यमेवाऽदित्सोर्दातुमनिच्छोः ईदृशोऽभिनवश्चासौ बद्धमुष्टिश्च कृपणशिरोमणिस्तस्य तव आर्तानां दीनानां मुदे हर्षाय स्वजीवमपि स्वप्राणमपि ददद्भ्यो जीमूतवाहनादिभ्यः सकाशाद्यस्मात्त्रपा लज्जा न भवति तस्मात्तव करात्कीर्तिधौतो यशोधवलो धर्मो भ्रश्यति । अधुनैव विनश्यति ।

१अत्रोपजातिश्छन्दः । समुच्चयस्तावत्स्पष्ट एवालङ्कारः ।अथ गुरुप्रसादतो लब्धब्रह्मावबोधस्य गुरुं प्रत्युक्तिरपि व्यज्यते तेन वाच्यव्यङ्ग्ययोरुपमानोपमेयकल्पनादुपमाध्वनिरापि शब्दशक्त्युत्थः।२अत्रोपजातिश्छन्दः । अनुप्रासः, शब्दालङ्कारः । पालनोत्थ-विश्राणनजयोः संचीयतामित्यत्र सकृद्वृत्तेर्दीपकम् ।

१ अत्रोपजातिश्छन्दः । अनुप्रासः शब्दालङ्कारः ।

यशो नश्यति धर्मोऽपीत्यर्थः । अन्यदीयं गृहीत्वा तस्मै यो न ददाति तस्य स्वजीवदातृभ्यः सकाशाल्लज्जा कथं स्यात्, यदि स्यात्तर्हि दद्यादेव तस्मादुभयमपि तव नष्टम् । ते तु जीवमपि ददुः, त्वं तु तदीयमेव धनं न ददासि, किंपुनः स्वीयजीवमिति । तस्माद्येन धर्मो यशश्च भवति तदेव कुर्विति भावः । बद्धमुष्टेः करात्पततीति विरोधाभासः । नेति काकुर्वा । 'कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि किमदेयं महात्मनाम्॥' इति वचनं जीवदाने प्रमाणम् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९।' इति निषेधादसूनिति द्वितीया । धीतः धार्वेर्निष्ठायामूठि वृद्धिः ॥ ८५ ॥

दत्त्वात्मजीवं त्वयि जीवदेऽपि
शुध्यामि जीवाधिकदे तु केन ।
विधेहि तन्मां त्वदृणान्यशोद्धु-
मसुद्रदारिद्र्यसमुद्रमग्नाम् ॥ ८६ ॥

त्वया मत्कार्ये कृते प्रत्युपकर्तुमशक्यत्वेनाहमधमर्णा यथा स्यां तथा कुर्वित्याह—

दत्त्वेति ॥ हे हंस ! जीवदे त्वयि आत्मनो जीवं दत्त्वापि शुध्याम्यनृणीभवामि, जीवाधिकं नलं ददति तस्मिंस्त्वयि केन तु पुनः प्रकारेण शुध्यामि । केवलजीवदत्वे तु जीवदानेनानृणीभवनं युक्तम्, जीवाधिकदत्वे तु जीवे दत्तेऽप्यनृणीभवितुं न शक्यते । जीवाधिकमन्यत्किमपि न विद्यत इति भावः । यतः—तस्मात्त्वदृणान्यशोद्धुमनपाकर्तुं मामसुद्रो निर्मर्यादो दारिद्र्यसमुद्रः तत्र मग्नामतिदरिद्रां विधेहि । तवाधमर्णा यथा स्यां तथा कुर्विति भावः । जीवाधिकदो भवेति भावः । ऋणशब्दस्त्वत्रोपकारपरः अशोधनं प्रत्युपकाराकरणम् । अत्र भैमीजीव एव जीवशब्देन गृह्यते । प्राणेभ्योऽप्यधिकं नलं ददातीति जीवाधिकदः एवंविधेऽत एव जीवदे नलदान एव मम प्राणनं यतः । एवंविधे त्वय्यात्मनः प्राणान्दत्त्वापि आत्मजीवव्ययसाध्यमुपकारं कृत्वापि केन पुनः प्रकारेणानृणीभवामि, अपितु प्राणव्ययसाध्य उपकारे कृतेऽपि ममानृणत्वं यतो न भवेदिति वा योजना ॥ ८६ ॥

१ अत्रोपजातिश्छन्दः । दृष्टान्तनुप्राणितं । काव्यलिङ्गमर्थालङ्कारः । २ उपजातिश्छन्दः । अनुप्रासः शब्दालङ्कारः । विरोधाभासः काव्यलिङ्गं च ।

क्रीणीष्व मज्जीवितमेव पण्य-
मन्यन्न चेदस्ति तदस्तु पुण्यम् ।
जीवेशदातर्यदि ते न दातुं
यशोऽपि तावत्प्रभवामि गातुम् ॥८७॥

अस्मिन्कार्ये कृते फलसद्भावेन त्वयैतत्करणीयमित्याह—

क्रीणीष्वेति ॥ हे हंस ! मज्जीवितं जीवमेव पण्यं विक्रेयं वस्तु क्रीणीष्व । प्रियदानमूल्येनेति शेषः । मह्यमेव तत्क्रयेण प्रयच्छ । ननु तुभ्यं क्रयेण जीवदाने मम को लाभ इत्याशङ्क्याह—अन्यद्धनादिकं चेद्यद्यपि नास्ति तत्तथापि पुण्यमस्तु भवतु । जीवितदाने च जीवाधिकदाने च जीवाधिकदानेन विनाऽन्यत् मूल्यं यद्यपि न विद्यते तथापि तस्य स्थाने श्रेय एव भवत्वित्यर्थः । ननु पुण्यं पारलौकिकम् अहमैहिकमपि किमपि वाञ्छामीत्याशङ्क्याह—हे जीवेशदातः प्राणनाथदातः, जीवाधिकतुल्यमूल्याभावेन यद्यपि ते तुभ्यं दातुं न प्रभवामि समर्थाऽस्मि तथापि तव यशस्तावत्साकल्येन प्रथमतो वा गातुं समर्थाऽस्मि। प्रभवाम्येवेति तावच्छब्दोऽवधारणार्थो वा । ऐहिकं पारलौकिकं च फलं तव विद्यते, तद्रूपेण मूल्येन मह्यं जीवदानं कुर्विति भावः । यद्वा—तावत्तर्ह्यर्थे । यदि ते दातुं न प्रभवामि तर्हि यशोऽपि यशः पुनर्गातुं न प्रभवामि, अपि तु प्रभवाम्येव । पण्यम् 'पणपादमाषशताद्यत् ५।१।३४' इत्यर्हार्थे यत् ॥८७॥

वराटिकोपक्रिययापि लभ्या-
नभ्याः कृतज्ञानथवाद्रियन्ते ।
प्राणैः पणैः स्वं निपुणं भणन्तः
क्रीणन्ति तानेव तु हन्त सन्तः ॥८८॥

पूर्वोक्तफलद्वयाभावेऽपि साधव उपकुर्वन्तीत्याह—

वराटिकेति ॥ अथवेति पूर्वोक्तापरितोषे । इभ्या धनिकाः । धनलुब्धा इवेत्यर्थः । वराटिकोपक्रियया कपर्दिकदानमात्रोपकारेणापि लभ्यान्सुलभान्कृतज्ञान्साधून्नाद्रियन्ते न संमानयन्ति । आदरं न कुर्वन्तीत्यर्थः । तुः पुनरर्थे । हन्त आश्चर्ये । सन्तस्तु साधवः प्राणैरेव पणैर्मूल्यैस्तानेव कृतज्ञान्क्रीणन्ति क्रयेण गृह्णन्ति । कृतज्ञोपकारार्थं प्राणानपि त्यक्त्वा तानर्जयन्तीत्यर्थः । किंभूताः सन्तः—स्वमात्मानं निपुणं कुशलं भणन्तो ब्रुवन्तो

१ अत्रोपजातिश्छन्दः जीवितस्य पण्यत्वेन रूपणाद्रूपकम्, परिवृत्तिश्च ।

मानयन्तः। प्राणाधिकं मूल्यमर्हन्त एतेऽस्माभिरल्पेन मूल्येन लब्धा इति वयं कुशला इति संतुष्यन्ति। अतः फलाभावेऽपि साधुना त्वया कृतज्ञाहं क्रेतव्या। मह्यं जीवदानं कुर्विति भावः। 'दाने तपसि शौर्ये वा यस्य न प्रथितं यशः। विद्यायामर्थलाभे वा मातुरुच्चार एव सः॥' इति। 'इभ्य आढ्यो धनी' इत्यमरः। इभमर्हति, दण्डादित्वात्॥ ८८॥

स भूभृदष्टावपि लोकपाला-
स्तैर्मे तदेकाग्रधियः प्रसेदे।
न हीतरस्माद्घटते यदेत्य
स्वयं तदाप्तिप्रतिभूर्ममाभूः॥ ८९॥

बलात्कारेणापि त्वत्तो नलो याचनीय इत्युक्तिविशेषेणाह—

स इति॥ यतः स भूभृत् राजा नलोऽष्टावपि लोकपालाः। लोकपालांशत्वात्त एवासावित्यर्थः। अतः तस्मिन्नल एव एकाग्रा निश्चिता धीर्यस्यास्तस्या मे मम तैर्लोकपालैः प्रसेदे प्रसन्नीभूतम्। नलस्य तदंशत्वात्ते मम भक्तायाः प्रसन्ना जाताः। प्रसन्नत्वेऽन्यथानुपपत्तिं प्रमाणयति—हि यस्मात्त्वमेत्यागत्य स्वयमप्रेरित एव मम यत्तदाप्तिप्रतिभूः नलप्राप्तिलग्नकोऽभूः जातोऽसि 'तदप्यवेहि स्वशये शयालु' इत्यादिना, तत् लोकपालप्रसादव्यतिरेकेण न घटते। लोकपालैर्मम विश्वासार्थत्वं लग्नकः कृतः, अतस्त्वामेव नलं याचे। लोके प्रतिभूरेव पीड्यते, धनिकाधमर्णयोरन्तरे स्थितत्वात्। प्रतिभूरित्यत्र 'भुवः संज्ञान्तरयोः ५।२।१७९' इति क्विप्॥ ९९॥

अकाण्डमेवात्मभुवार्जितस्य
भूत्वापि मूलं मयि वीरणस्य।
भवान्न मे किं नलदत्वमेत्य
कर्ता हृदश्चन्दनलेपकृत्यम्॥ ९०॥

नलदातृत्वं विना तवानौचित्यमेव स्यादित्याह—

अकाण्डमिति॥ अकाण्डमेवाप्रस्ताव एव कौमार एव आत्मभुवा कामेनार्जितस्य मयि जीवितस्य रणस्य शब्दस्य रहस्यकथनस्य मूलं कारणं भूत्वापि विः पक्षी भवान्नलदत्वं नलस्य दातृत्वमेत्य प्राप्य मे हृदः चन्दनलेपस्य कृतमङ्गरागकार्यं किं न कर्ता, मम हृदयं नलदानेन शीतलं विरहसंतापरहितं किमिति न कुरुषे एवं तावत्कर्तुं युक्तम्, अन्यथा त्वया रहस्यकथनं किमिति कारितम्, ततो नलदो भवेति भावः। कामपीडा कौमारे न युज्यते। किं तु तारुण्ये। मया बालत्वे कामपीडा कथिता नलमुद्दिश्य, तत्र कारणं त्वमेव जातोऽसीत्यर्थः। अकाण्डं शररहितं यथा भवति तथा कामजनितस्य संग्रामस्य निदानं भूत्वा नलप्रस्तावादिति वा। अथ च—अकाण्डं पर्वरहितं ब्रह्मणा मयि निमित्ते सृष्टस्य वीरणतृणस्य मूलं भूत्वा नलदत्वमुशीररूपतां प्राप्य संतप्तस्य हृदयस्य चन्दनलेपेन यत्कृत्यं शीतलत्वरूपं कार्यं किं न कर्तासि। काकुः, आक्षेपो वा। तवापि नलदत्वाद्धृदश्चन्दनलेपकृत्यं युक्तमेव। नलप्राप्तावेवाहं हृदश्चन्दनलेपं करिष्यामि नान्यथेति भावः। 'स्याद्वीरणं वीरतृणं मूलेऽस्योशीरमस्त्रियाम्। अभयं नलदं सेव्यम्' इत्यमरः। कृत्यम्, 'विभाषा कृवृषोः ३।१।१२०' इति कृञः क्यपि तुक्॥ ९०॥

अलं विलम्ब्य त्वरितुं हि वेला
कार्ये किल स्थैर्यसहे विचारः।
गुरूपदेशं प्रतिभेव तीक्ष्णा
प्रतीक्षते जातु न कालमर्तिः॥ ९१॥

शीघ्रमेवैतत्कर्तव्यमित्याह—

अलमिति॥ हि यस्मादियं त्वरितुं त्वरां कर्तुं वेल एतत्कार्यं कर्तुं शीघ्रं गन्तुमयं समयः, अतो विलम्ब्या विलम्बो न कार्यः। क्षणं विचार्य करिष्यामीत्यत आह—किल यस्मात्स्थैर्यसहे विलम्बसहे कार्ये विषये विचारः। क्रियत इति शेषः। इदं तु विलम्बसहं न भवतीति विचारो न युज्यत इत्यर्थः। तत्र हेतुमाह—अर्तिः तीक्ष्णा पीडा प्रकृते विरहपीडा जातु कदाचिदपि कालं न प्रतीक्षते। तत्र दृष्टान्तः—का कामिव तीक्ष्णा कुशाग्रतुल्या शिष्यस्य प्रतिभा प्रज्ञा गुरूपदेशमिव गुरूपदेशात्पूर्वमेव शास्त्रार्थं गृह्णाति। लोकेऽपि यावद्विवाहादिसमयः समायाति तावत्पूर्वमेव त्वरा भवति। शीघ्रमेतत्कार्यं साधयेति भावः। त्वरितुम्, 'कालसमयवेलासु तुमुन् ३।३।१६७' इति तुमुन्॥ ९१॥

---

१ अत्रोपजातिश्छन्दः। अनुप्रासः शब्दालङ्कारः। अर्थान्तरन्यासो रूपकं च। २ उपजातिश्छन्दः। रूपकम् अनुमानं चार्थालङ्कारौ।

१ उपजातिश्छन्दः। वीरणस्येत्यत्र श्लेषः, परार्धे वीरणस्येत्यन्यथा योजनाद् वक्रोक्तिः। नचेयं परोक्तस्यैवान्यथा योजने भवतीति न्यायसाम्येन स्वोक्तस्यान्यथा योजन एतदभ्युपगमात्। २ उपजातिश्छन्दः। प्रतिभेवेत्युपमा, पूर्वोक्तस्य परार्धेन समर्थनादर्थान्तरन्यासश्च

अभ्यर्थनीयः स गतेन राजा
त्वया न शुद्धान्तगतो मदर्थम् ।
प्रियास्यदाक्षिण्यबलात्कृतो हि
तदोदयेदन्यवधूनिषेधः ॥ ९२ ॥

श्लोकचतुष्टयेन विज्ञापनावसरमुपदिशति—

अभ्यर्थनीय इत्यादिना ॥ इतो गतेन त्वया शुद्धान्तगतोऽवरोधमध्यस्थितः स राजा भैमी त्वयानुग्राह्येति मदर्थं नाभ्यर्थनीयः। मद्विषयं किमपि न वक्तव्यमित्यर्थः । गतेन त्वयाऽभ्यर्थनीयः परंतु शुद्धान्तगतो नेति वा। एवमग्रिमश्लोकत्रयेऽपि विशेषणस्य नञा संबन्धः कार्यः । किमिति नेत्याशङ्क्याह—हि यस्मात्तदा तस्मिन्समये प्रियाणामास्यानां तेषु वा दाक्षिण्यस्यानुरोधस्य बलादाधिक्यात्कृतोऽन्यवधूनिषेधोऽन्यस्त्रीनिषेध उदयेत्प्रादुर्भवेत् । यद्यप्यन्यस्त्रीवासनास्य स्यात्तथापि तत्समक्षं प्रार्थिते तन्मुखावलोकनेन जनितया लज्जया, प्रीत्या वा एताभ्यः सकाशादन्या कापि सुन्दरी नास्तीति निषेध उदयेदिति हेतोर्न प्रार्थनीयस्तदेत्यर्थः । 'शुद्धान्तश्चावरोधश्च' इत्यमरः 'अर्थ उपयाचने' ॥ ९२ ॥

शुद्धान्तसंभोगनितान्ततुष्टे
न नैषधे कार्यमिदं निगाद्यम् ।
अपां हि तृप्ताय न वारिधारा
स्वादुः सुगन्धिः स्वदते तुषारा ॥९३॥

शुद्धान्तेति ॥ त्वया शुद्धान्तसंभोगेनान्तःपुरस्त्रीसुरतेन नितान्ततुष्टेऽतिशयेन संतुष्टे । श्रान्तकामे इति यावत् । नले इदं पूर्वोक्तं कार्यं न निगाद्यं न वक्तव्यम् । सतिसप्तमी वा । हि यस्मादपामद्भिस्तृप्ताय पुरुषाय स्वादुः सुरसा सुगन्धिः कर्पूरादिना तुषारा शीतला च वारिधारोदकधारा न रोचते । पिपासाया अभावात्पीतादुदकादुत्कृष्टमप्युदकं यथा तस्मै न रोचते तथा संभोगेन श्रान्तमदनत्वात्तद्वधूभ्योऽप्यधिकाहं तस्मै न रोचेयम् । तस्मात्तदापि न वक्तव्यमिति भावः। निगाद्यम्, सोपसर्गाद्गदत्तेर्ण्यत् । सुहितार्थयोगे 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २।२।११' इति षष्ठीसमासनिषेधादेव अपामिति षष्ठी । 'तृप्त्यर्थानां करणे षष्ठी च' इति वा तृप्ताय 'रुच्यर्थानाम्–१।४।३३' इति चतुर्थी । सुगन्धिरिति 'गन्धस्येदुत्पूति सुसुरभिभ्यः ५।४।१३५' तुषारेत्यभिधेयलिङ्गतौ ॥ ९३ ॥

त्वया निधेया न गिरो मदर्थाः
क्रुधा कदुष्णे हृदि नैषधस्य
पित्तेन दूने रसने सितापि
तिक्तायते हंसकुलावतंस ॥ ९४ ॥

त्वयेति ॥ हे हंसकुलावतंस हंसवंशभूषण, नैषधस्य हृदि क्रुधा क्रोधेन कदुष्णे ईषत्तप्ते सति मदर्था मत्प्रयोजना गिरो वाचस्त्वया न निधेयाः कर्तव्याः । यतः—पित्तेन पित्तदोषेण रसने रसनेन्द्रिये दूने दूषिते सति सितापि शर्करापि तिक्तायते तिक्तेवाचरति निम्बतुल्यरसा भवति । अहं शर्करातुल्यापि तिक्ता स्यामित्यर्थः । 'शर्करा सिता' इत्यमरः । 'कवं चोष्णे ६।३।१०७' इति चकारात्कदुष्णम् । रस्यतेऽनेनेति रसनम् । तिक्तेवाचरतीति 'कर्तुः क्यङ् सलोपश्च ३।१।११' तिक्ता भवतीति वार्थे लोहितादित्वात्क्यष् 'वा क्यषः १।३।९' इत्यात्मनेपदम् ॥ ९४ ॥

धरातुरासाहि मदर्थयाच्ञा
कार्या न कार्यान्तरचुम्बिचित्ते ।
तदार्थितस्यानवबोधनिद्रा
बिभर्त्यवज्ञाचरणस्य मुद्राम् ॥ ९५ ॥

धरेति ॥ हे हंस, त्वया धरायां तुरापाट् इन्द्रस्तस्मिन्पृथ्वीन्द्रे नले पूर्वोक्तव्यतिरिक्तकार्यान्तरचुम्बि कार्यमात्रासक्तं चित्तं यस्य एवंभूते सति मदर्थयाच्ञा न कार्या न विधेया । यतः—तदा कार्यान्तरासक्तिसमयेऽर्थितस्य याचितस्य अनवबोधोऽनाकर्णनं तल्लक्षणा निद्रा अवज्ञाया अवहेलनाया आचरणं करणं तस्य मुद्रां सादृश्यं बिभर्ति धारयति । असमर्थे कार्यान्तरासक्तत्वात्तव विज्ञापनां यदि न शृणुयात्तदा इदं कार्यमस्मै न रोचत इति विचार्य तत्रापि पुनर्विज्ञापनायां बुद्धिर्नोदीयादिति भावः तुरासाहि इति प्रयोगो भाषायां 'छन्दसि सहः ३।२।६३' इति ण्विप्रत्ययस्य छन्दसि विहितत्वाच्चिन्त्यः, यद्वा-

---

१ उपजातिश्छन्दः । पूर्वोत्तरार्थयोर्हेतुहेतुमद्भावात् काव्यलिङ्गम् ।

१ उपजातिश्छन्दः । पूर्वार्धेन प्रतिपादितस्यैवार्थस्य समर्थनायार्थान्तरन्यास इत्यर्थान्तरन्यासः । २ उपजातिश्छन्दः । अनुप्रासः शब्दालङ्कारः । तिक्तायत इत्युपमा । प्रागुक्तसमर्थनाय परार्द्धेनार्थान्तरन्यसनादर्थान्तरन्यासः ।

भापायामपि किंपि कृते स्यात् । गिरिशादिवन्महाकाविप्रयोगादस्यापि छान्दसत्वस्य प्रायिकत्वाद्वा परिहर्तव्यम् । प्रकारान्तरं तु—धरातुरा धरावत्पृथ्वीवत् अतुरानुत्ताला अवेगा वा सा पूर्वोक्ता प्रसिद्धा वा याञ्चाविशेषणम् । हि निश्चितम् । अन्यत्पूर्ववत् धरवत्पर्वतवत् अतुरा वा । स्वस्थेन समयं दृष्ट्वा न सोत्तालेनेत्यर्थः । यद्वा—हे अहिमदर्थ ! अहीन्मथ्नाति अहिमद्गरुडः तमर्थयते मित्रत्वं प्राप्तुं प्रार्थयते तत्संबोधनम् । गरुडतुल्यपराक्रम इत्यर्थः । अन्यत्पूर्ववत् ॥ ९५ ॥

विज्ञेन विज्ञाप्यमिदं नरेन्द्रे
तस्मात्त्वयास्मिन्समयं समीक्ष्य ।
आत्यन्तिकासिद्धिविलम्बिसिद्ध्योः
कार्यस्य कार्यस्य शुभा विभाति ९६

निगमयति—

विज्ञेनेति ॥ हे हंस! तस्मात्कारणादस्मिन्नरेन्द्रे विज्ञेन विशेषज्ञेन त्वया समयमवसरं समीक्ष्य दृष्ट्वा इदं कार्यं विज्ञाप्यं विज्ञापनीयम्, समयप्रतीक्षणे कार्यविलम्बः स्यादित्याशङ्क्याह—अस्य कार्यस्य आत्यन्तिकी सर्वथा असिद्धिः, तथा विलम्बिनी सिद्धिः तयोर्मध्ये आर्यस्य पूज्यस्य बुद्धिमतस्तव का सिद्धिः शुभा समीचीना विभाति प्रतिभाति । कथयेति शेषः । असमये विज्ञापितस्य कृत्यस्य सर्वथा असिद्धिरेव । समयं विचार्य कृतस्याविलम्बेन सिद्धिः सैव ज्यायसी, तस्मात्समयं समीक्ष्य विज्ञप्तिं कुर्विति भावः । आत्यन्तिकी चासावासिद्धिश्चेति कोपधत्वेऽपि 'पुंवत्कर्मधारयजातीयदेशीयेषु ६ । ३ । ४२' इति पुंवत् ।'लक्षणहेत्वोः क्रियायाः ३।२।१२६' इति ज्ञापकात् 'अल्पाच्तरम्' इत्यस्यानित्यत्वात् आत्यन्तिकासिद्धिविलम्बिसिद्ध्योरित्यत्र परनिपातः समर्थनीयः ॥ ९६ ॥

इत्युक्तवत्या यदलोपि लज्जा
सानौचिती चेतसि नश्चकास्तु ।
स्मरस्तु साक्षी तददोषताया-
मुन्माद्य यस्तत्तदवीवदत्ताम् ॥ ९७ ॥

बालायास्तरुणीवल्लज्जात्यागो न युक्त इत्याशङ्क्य परिहरति—

इतीति—'विनाऽमुना स्वात्मनि—'इत्याद्युक्तवत्या भैम्या यल्लज्जा अलोपि त्यक्ता साऽनौचिती अनौचित्यं नोऽस्माकं कवीनां चेतसि चकास्तु प्रकाशताम् । बालया लज्जया भाव्यमेवेति तत्त्यागेऽस्मत्सिद्धान्तातिक्रमादस्माकं चित्ते त्वनौचित्यं स्फुरतु नामेत्यर्थः ।तुः पुनरर्थे । तस्या अदोषतायां निर्दोषत्वे पुनः स्मरः साक्षी साक्षाद्द्रष्टा । कथं साक्षित्वमित्यत आह—यः काम उन्माद्य उन्मादावस्थां कृत्वा तां भैमी तत्तत् 'विनाऽमुना—' इत्यादि बालाया युक्तमयुक्तमवीवदद्वादयति स्म । तेनैव बलाद्वादिता सा इति तस्या न दोषः । कवीनां वर्णनेऽनौचित्यं प्रातिभासिकं, नतु तात्त्विकम् अनुवादत्वादिति भावः । शब्दकर्मत्वाद्वदेरण्यन्तकर्तुर्णौ कर्मत्वम् ॥ ९७॥

उन्मत्तमासाद्य हरः स्मरश्च
द्वावप्यसीमां मुदमुद्वहेते ।
पूर्वः परस्पर्धितया प्रसूनं
नूनं द्वितीयो विरहाधिदूनम् ॥ ९८ ॥

मदनेन सा किमित्युन्मादितेत्यत आह—

उन्मत्तमिति ॥ द्वौ उन्मत्तमुन्मत्तवस्तु आसाद्य प्राप्य असीमां निर्मर्यादां मुदं हर्पमुद्वहेते धारयतः । द्वौ कौ—'हरो महादेवः, स्मरश्च' । तयोर्मध्ये पूर्वो हरः प्रसूनं धत्तूरपुष्पलक्षणमुन्मत्तं प्राप्य हर्षं धत्ते, द्वितीयः कामो विरहाधिना विरहपीडया दूनं दुःखितमुन्मत्तमुन्मादवन्तं जनं प्राप्य हर्षं धत्ते । नूनमुत्प्रेक्षे । उभयत्र हेतुः—परस्पर्धितया अन्योन्यस्पर्धया । हरशत्रुः स्मरः हरस्योन्मत्तं धत्तूरकुसुमं हर्षजनकं दृष्ट्वा मयाप्युन्मत्तं जनं प्राप्य हर्षितव्यम्, तथा हरेणापि काम उन्मत्तं प्राप्य हृष्यति चेन्मयापि कामायुधमुन्मत्तं पुष्पं प्राप्य हर्षितव्यमित्यन्योन्यस्पर्धा । शत्रोरस्त्रादि लब्ध्वा सर्वोऽपि तुष्यति । कामोऽप्युन्मत्तं पिशाचं हरसेवकमासाद्य हर्षं धत्ते । शत्रुवस्तुलाभादित्यर्थः । 'उन्मत्त उन्मादवति धत्तूरमुचुकुन्दयोः' इति विश्वः । वहेः स्वरितेत्त्वादात्मनेपदम् ॥ ९८ ॥

तथाभिधात्रीमथ राजपुत्रीं
निर्णीय तां नैषधबद्धरागाम् ।

---

१ उपजातिश्छन्दः । यमकं पूर्वार्द्धे परार्द्धे रूपकं काव्यलिङ्गं च । २ उपजातिश्छन्दः । यमकं चानुप्रासश्चेत्युभौ शब्दालङ्कारौ ।

१ उपजातिश्छन्दः । स्वोक्तस्य परार्द्धेन साक्षादनाक्षिप्यापि भङ्ग्यन्तरेणाक्षेपणादाक्षेपो व्यङ्ग्यः । २ अत्रेन्द्रवज्रा छन्दः । 'नूनमित्युत्प्रेक्षा ।' हर इव स्मर उन्मत्तप्रिय इत्यर्थप्रत्यायनत उपमाध्वनिः ।

अमोचि चञ्चूपुटमौनमुद्रा
विहायसा तेन विहस्य भूयः ॥ ९९ ॥

तथेति ॥ अथ अनन्तरं तेन विहायसा पक्षिणा स्वाभीप्सितसिद्धेर्विहस्य चञ्चूपुटस्य मौनमुद्रा मौनभङ्गिभूयः पुनरप्यमोचि त्यक्ता । वक्तुं प्रारब्धम् । किं कृत्वा-तथाभिधात्रीं 'श्रुतश्च दृष्टश्च' इत्यादि भाषमाणां तां राजपुत्रीं भैमीं नैषधे नले बद्धो रागः प्रीतिर्यया एवंभूतां निर्णीय निश्चित्य । 'विहायाश्च शकुन्ते स्यात्' इति विश्वः ॥ ९९ ॥

इदं यदि क्ष्मापतिपुत्रि तत्त्वं
पश्यामि तन्न स्वविधेयमस्मिन् ।
त्वामुच्चकैस्तापयता नृपं च
पञ्चेषुणैवाजनि योजनेयम् ॥ १०० ॥

इदमिति ॥ हे क्ष्मापतिपुत्रि राजपुत्रि, यदि इदं पूर्वोक्तं सर्वं तत्त्वं सत्यं, तत्तर्ह्यस्मिन्कार्ये स्वस्यात्मनो विधेयं करणीयं न पश्यामि । मया करणीयं किमपि नावशिष्यते । तर्हि त्वां विना स्वयमेव कथं भविष्यतीत्यत आह—त्वां नृपं नलं चोच्चकैरतिशयेन तापयता उभयोरपि परस्परं रागाद्विरहपीडां जनयता पञ्चेषुणैव कामेनैवेयं योजना घटना अजनि जनिता । अत एव मद्व्यापारोऽत्र नावशिष्यत इत्यर्थः । तप्तयोः संधिरिति लोहादौ दृश्यते ॥ १०० ॥

त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां
तस्योपवासव्रतिनां तपोभिः ।
त्वामद्य लब्ध्वामृततृप्तिभाजां
स्वदेवभूयं चरितार्थमस्तु ॥ १०१ ॥

भैम्यवस्थाः श्रुत्वा नलस्यापि काश्चिदवस्थाः सूचयन्नाह—

त्वदिति ॥ हे भैमि ! तपोभिः पुण्यैरद्य त्वां लब्ध्वा प्राप्य अमृततृप्तिं विभाजां पीयूषपानजनिततृप्तितुल्यतृप्तिभाजां तस्य नलस्य बहिरिन्द्रियाणां चक्षुरादीनां केवलानां स्वदेवभूयम् 'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्' इत्यादिश्रुतिसिद्धं स्वीयं देवत्वं चरितार्थं कृतकार्यमस्तु । एतावत्कालं शब्दमात्रेण तेषां देवत्वमभूत्, इदानीं त्वल्लाभेनामृततृप्तितुल्यत्वाद्देवत्वं सार्थकं भविष्यतीत्यर्थः । किंभूतस्य तस्य—त्वय्येव बद्धा निवेशिता बुद्धिर्मनो येन । अनशननियमवतश्च । किंभूतानामिन्द्रियाणाम्—मनसस्त्वयि लीनत्वात्तेषु मनोव्यापाराभावादुपवासव्रतं विद्यते येषाम् । अन्यस्याप्याकृष्टेन्द्रियस्याऽनशननियमवतः परब्रह्म ध्यायतः पुण्यैस्तदेव ब्रह्म लब्ध्वा मोक्षलक्षणानन्दभाजो देवत्वं सार्थकं भवतीत्युक्तिः । बहिरिन्द्रियाणां निजव्यापारेष्वप्रवृत्तिस्तपः । विषयभोगाभावश्चोपवासः । अमृतपाने हि देवानां देवत्वं, तथा त्वल्लाभे तदिन्द्रियाणामपि देवत्वं कृतार्थमस्तु । देवभूयम् । 'भुवो भावे' क्यप् । उपवासश्चासौ व्रतं चेति कर्मधारयादिनिः समर्थनीयः । उपवासेन व्रतिन इति वा समाधिः ॥ १०१ ॥

तुल्यावयोर्मूर्तिरभून्मदीया
दग्धा परं साऽस्य न ताप्यतेऽपि ।
इत्यभ्यसूयन्निव देवतापं
तस्यातनुस्त्वद्विरहाद्विधत्ते ॥ १०२ ॥

नलस्य त्वद्विरहेण कामजनितं विरहज्वरमाह—

तुल्येति ॥ हे भैमि ! अतनुः कामः त्वद्विरहात्तस्य नलस्य देहतापं विधत्ते करोति । किं कुर्वन्निव—इति पूर्वोक्तप्रकारेण अभ्यसूयन्निव ईर्ष्यां कुर्वन्निव—इति किम् । आवयोः कामानलयोर्मूर्तिः शरीरं पूर्वं तुल्या समानाभूत्, अनन्तरं मदीया सा मूर्तिर्दग्धा, अस्य नलस्य सा मूर्तिः परमतिशयेन ताप्यतेऽपि न एतच्छरीरस्य दाहोऽपि न क्रियते, एवं परं संतापोऽपि केनचिन्न क्रियत इति । अनङ्गस्त्वद्विरहादेव देहतापं करोति नान्यस्मादित्यर्थः । मम च तस्य च आवयोः 'त्यदादीनां मिथः—' इत्येकशेषः ॥ १०२ ॥

---

१ उपजातिश्छन्दः । अनुप्रासः शब्दालङ्कारः । २इयदवधि नलस्य मदनार्दितत्वानुक्तत्वेऽपि अजनीति 'वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१' इति वर्तमानसामीप्ये लुङ् तेनास्मत्प्रभृतिमुखात्त्वद्गुणश्रवणं यावाद्विलम्बः, ततः परं शीघ्रमेव जनिष्यत इति निष्कर्षः । यद्वा—यद्यपि नलस्त्वत्तोऽप्यधिकः स्मरेण तापितः, तथाऽपि तत्तापवृत्तगोपनं त्वद्भावज्ञानार्थमेवेति भूत एव लिङ् इति बोध्यम् । ३ उपजातिश्छन्दः । तापनयोजनयोः कारणकार्यत्वेन पौर्वापर्यौचित्येऽपि समकालिकतयोक्तेरतिशयोक्तिः ।

१ उपजातिश्छन्दः । महाविद्यां प्राप्य कृतार्थस्य कस्यचिदुदन्तः प्रतीयत इति बोध्यम् । २ अत्रेन्द्रवज्राछन्दः । हेतूत्प्रेक्षा ।

लिपिं दृशा भित्तिविभूषणं त्वां
नृपः पिबन्नादरनिर्निमेषः ।
चक्षुर्झरैरर्पितमात्मचक्षू
रागं स धत्ते रचितं त्वया नु ॥ १०३ ॥

दशा वर्णयति—

लिपिमिति ॥ नृपो नलो दृशा दृष्ट्या भित्तेर्विभूषणमलंकारभूतां लिपिं चित्रनिर्मितां त्वामादरेण तात्पर्येण निर्निमेषो नेत्रसंकोचरहितः सन् पिबन्सादरमवलोकयंश्चक्षुर्झरैर्निर्निमेषत्वादनुरागवशाच्च जातैर्नेत्रवाष्पप्रवाहैरर्पितं जनितमात्मचक्षूरागं स्वीयनयनयोर्लोहितिमानं धत्ते । उत्प्रेक्षते—त्वया रचितमिव जनितमिव । अयं वाष्पजनितलोहितिमा न भवति, किंतु त्वद्विषयको नयनानुरागः । प्रथमावस्थेयं ॥ १०३ ॥

पातुर्दृशालेख्यमयीं नृपस्य
त्वामादरादस्तनिमीलयास्ते ।
ममेदमित्यश्रुणि नेत्रवृत्तेः
प्रीतेर्निमेषच्छिदया विवादः ॥ १०४ ॥

तामेव पुनराह—

पातुरिति ॥ आलेख्यमयीं चित्रलिखितां त्वामादरात् अस्तनिमीलया निर्निमेषया दृशा पातुः सादरमवलोकयितुर्नृपस्याश्रुणि विषये नेत्रवृत्तेर्नयनवर्तिन्याः प्रीतेरनुरागस्य निमेषस्य छिदया विच्छेदेन सह ममेदमिति इदमश्रु मज्जन्यम्, इदं मज्जन्यमिति अहमहमिकया विवादः कलह आस्ते भवति । अनुरागवशान्निमेषाभावो भवति नयनानुरागजन्यं, निमेषच्छिदाजन्यमेतदश्रु इति लोकः संदिग्ध इति भावः । निमेषच्छिदयेत्यत्राप्रधाने तृतीयया मुख्या: नयनप्रीतिरिति द्योतितम् । भिदादिपाठात् छिदा साधुः ॥ १०४ ॥

त्वं हृद्गता भैमि वहिर्गतापि
प्राणायिता नासिकयाऽऽस्यगत्या ।
न चित्रमाक्रामति तत्र चित्र-
मेतन्मनो यद्भवदेकवृत्ति ॥ १०५ ॥

द्वितीयामाह—

त्वमिति ॥ हे भैमि! वहिर्गतापि वाहिःप्रदेशे वर्तमानाऽपि अरागवशादन्तःकरणे विद्यमाना त्वं कया गत्या केन प्रकारेणास्य नलस्य प्राणायिता जीवायिता नासि, अपि तु सर्वप्रकारेण जीववत्प्रियासि । अथ च—वहिर्गता त्वं नासिकया आस्यगत्या मुखगत्याऽपि हृद्गता मनोरमा । अत एव प्राणायिता प्राणवत्प्रिया तव नासिकामुखसौन्दर्यं चित्रादौ दृष्ट्वा तेन हृदये धारितेत्यर्थः । वहिर्गताऽपि हृद्गतेति विरोधाभासः, तत्परत्वात्परिहारः । प्राणा अपि नासिकामुखमार्गेण द्वादशाङ्गुलपर्यन्तं बहिर्गत्वा पुनरन्तः प्रविशन्ति प्राणाख्यां च लभन्ते तया त्वमपि । भवती त्वमेका केवला वृत्तिजीवनोपायो यस्य एवंभूतम् एतन्मनो नलान्तःकरणं चित्रमालेख्यं यन्नाक्रामति तच्चित्रमिव भवति, तत्र विषये आश्चर्यम् । विरहव्यथया चञ्चलेन भवितव्यं, तच्च यदा चित्रमिव निर्व्यापारं जातं तत्राश्चर्यमित्यर्थः । त्वदायत्तत्वात्त्वदन्यत्किमपि तस्य चित्ते न लगतीति त्वं प्राणवत्प्रियेत्यर्थः । चित्रं कर्तृ, एतन्मनः कर्म यत्र स्वाधीनं करोति तत्र चित्रम्, अपि तु नेति काकुः । यतस्त्वदेकवृत्ति इति वा । भवदेकवृत्ति :एतन्मनो यच्चित्रं नाक्रामाति अर्थान्नावलोकयति तत्र चित्रम् । चित्रं हि सर्वैरवलोक्यते, अनेनेत्याश्चर्यमिति वा । एतन्मनो यच्चित्रमाक्रामत्यवलोकयति तत्र चित्रं न यद्यपि विरहिणश्चित्रं दुःखदं तथाप्याश्चर्यं न । यतश्चित्रं भवदेकवृत्ति भवत्या एव एका वृत्तिरवस्थानं यत्रैवंविधम् । यत्र त्वमेव लिखिताऽसि तदेव चित्रमवलोकयतीत्यत्र किमाश्चर्यमिति वा । 'चित्तम्' इति पाठे व्याख्या—तत्र प्राणीभवने लोकस्य चित्तमाश्चर्यं न गच्छति । यस्माद् एतन्मनस्त्वदेकवृत्ति त्वदासक्तम् । यस्य यत्रासक्तिस्तस्य प्राणवद्भवति । अत्र किमाश्चर्यम् । इति द्वितीयावस्था । आक्रामतीति,'वा भ्राश—'इति श्यन्विकल्पः।भवत्या एका वृत्तिर्यत्र'सर्वनाम्नो वृत्तिमात्रे—' इति भवतीशब्दस्य पुंवत्वं ॥ १०५ ॥

अजस्रमारोहसि दूरदीर्घां
संकल्पसोपानततिं तदीयाम् ।
श्वासान्स वर्षत्यधिकं पुनर्य-
द्ध्यानात्तव त्वन्मयतां तदाप्य ॥ १०६ ॥

तृतीयामाह—

अजस्रमिति ॥ त्वं दूरदीर्घामतिमहतीं तदीयां नल-

१ उपजातिश्छन्दः । त्वया नु इत्युत्प्रेक्षा । २ उपजातिश्छन्दः । उत्प्रेक्षा व्यज्यते ।

१ उपजातिश्छन्दः । विरोधाभासस्तावत् स्फुट एव । प्राणायितेत्युपमा । तत्र चित्रेत्यनुप्रासः । श्लेषश्च ।

संबन्धिनीं संकल्परूपां सोपानततिं सोपानपरम्परां 'भैमी-प्राप्तिः कथं भवेत्, प्राप्तौ सत्यामहमेवं करिष्यामि, सा एवं करिष्यति' इत्येवंरूपां मानसविचारलक्षणामजस्रं निरन्तरमारोहसि । त्वत्प्राप्त्युपायादि सर्वदा विचारयतीत्यर्थः । यत्पुनः स नलः अधिकमत्यर्थं श्वासान्निःश्वासान्वर्पति मुञ्चति तत्तव ध्यानाच्चिन्तनात्त्वन्मयतां त्वत्सायुज्यमाप्य प्राप्य त्वत्प्रधानो भूत्वा । त्वय्यनुरागवाहुल्यात्त्वच्चिन्तनात्त्वत्प्राप्तेरभावाद्दुःखवशादत्यर्थं निःश्वासान्मुञ्चतीत्यर्थः । योऽतिदीर्घां सोपानपङ्क्तिमारोहति स निःश्वासान्मुञ्चति, अत्र तु विपरीतमित्याश्चर्यम् । तच्च त्वद्ध्यानात्त्वन्मयत्वप्राप्तौ सत्यां व्यधिकरणत्वाभावात्संगच्छते । त्वद्धर्माः नले युज्यन्ते । तस्मात्त्वत्सायुज्यं तस्य जातमित्यनुमीयत इति भावः । अथ च यो यं ध्यायति स तन्मयो भवति । 'योगप्रभावात्प्रह्लादो जातो विष्णुमयोऽसुरः' इति विष्णुपुराणम् । 'आरोहणं स्यात्सोपानम्' इत्यमरः । आप्येत्यत्राङा समासः । तृतीयाऽवस्था तेनानुभूयत इति ॥ १०६ ॥

हृत्तस्य यन्मन्त्रयते रहस्त्वां
तद्व्यक्तमामन्त्रयते मुखं यत् ।
तद्वैरिपुष्पायुधमित्रचन्द्र-
सख्यौचिती सा खलु तन्मुखस्य ॥ १०७ ॥

संकल्पमेवाह—

हृदिति ॥ तस्य नलस्य हृदन्तःकरणं रह एकान्ते यत्त्वां मन्त्रयते त्वामुद्दिश्य गुप्तं यद्भाषते भैमीं प्राप्य तां प्रत्येवं वदिष्यामि आलिङ्गनादिकं देहीति गुप्तं विचारं करोति, मुखं नलमुखं कर्तृ तत् गुप्तभाषणं कर्म व्यक्तं यद् आमन्त्रयते भाषते । मुखस्य पाण्डुताम्लानतादिगुणं दृष्ट्वा त्वामेव ध्यायतीति व्यक्तं ज्ञायत इत्यर्थः । सा तन्मुखस्य नलमुखस्य तद्वैरी नलवैरी पुष्पायुधः कामस्तस्य मित्रं चन्द्रस्तेन सह यत्सख्यं मैत्री तस्यौचिती खलु निश्चये, उत्प्रेक्षायां वा । चन्द्रतुल्यत्वान्नलमुखं चन्द्रमित्रम् । नलः कामस्य शत्रुः पीडयमानत्वात् । चन्द्रोऽपि मदनामित्रं तद्वृद्धिकरत्वात् मित्रं च मित्रस्य कार्यं करोति । नलो मन्त्रलक्षणां शक्तिं प्रयुङ्क्ते नल एवंविधं मन्त्रं करोतीति नलसक्तेर्मदनस्याग्रे मदनमित्रेण कथनयिम् । नीतिज्ञा हि मित्रामित्रेणापि रिपुमन्त्रभेदं कुर्वन्ति तच्चन्द्रमित्रेण नलमुखेन कृतमिति भावः । मुखे पाण्डुत्वादिगुणदर्शनादतिशयेन त्वद्विषयां चिन्तां करोतीति स्पष्टं ज्ञायत इत्यर्थः । 'सप्तम्यर्थे रहोऽव्ययम्' इत्यमरः । 'मात्रि गुप्तभाषणे' ॥ १०७ ॥

स्थितस्य रात्रावधिशय्य शय्यां
मोहे मनस्तस्य निमज्जयन्ती ।
आलिङ्ग्य या चुम्बति लोचने सा
निद्राधुना न त्वदृतेऽङ्गना वा ॥ १०८ ॥

क्रममुल्लङ्घ्य लाघवार्थमेकप्रयत्नेनैव चतुर्थीं षष्ठीं चावस्थामाह—

स्थितस्येति ॥ रात्रौ शय्यामधिशय्य स्थितस्य तस्य मनो मोहे वैचित्त्ये, स्नेहविशेषे च मोहनं मोहो मदनयुद्धं तत्र वा निमज्जयन्ती तदर्शं कुर्वती सती या आलिङ्ग्याङ्गानि श्लथयित्वा लोचने चुम्बति तत्र संबद्धा भवति । अथ च लतावेष्टिताद्यालिङ्गनादीनि कृत्वा या नेत्रचुम्बनं करोति सा एवंविधा निद्राऽङ्गना वा त्वदृते त्वां विनाधुना इदानीं न विद्यते । त्वद्विरहात्तस्य न निद्रा, त(त्व)द्व्यतिरेकेणैवंविधाङ्गना वा न । अङ्गनापि न रोचत इति भावः । श्लेषप्रयत्नेन निद्राच्छेदविषयनिवृत्तिलक्षणे अवस्थे प्रोक्ते । क्रमोल्लङ्घनं दोषाय नेति ज्ञेयम् । शय्याम् 'अधिशीङ्—' इति कर्मत्वम् । त्वत्, 'अन्यारात्—' इति पञ्चमी ॥ १०८ ॥

स्मरेण निस्तक्ष्य वृथैव बाणै-
र्लावण्यशेषां कृशतामनायि ।
अनङ्गतामप्ययमाप्यमानः
स्पर्धां न सार्धं विजहाति तेन ॥ १०९ ॥

पञ्चमीमाह—

१ उपजातिश्छन्दः । श्वाससोपानारोहणयोः कार्यकारणयोर्वैयधिकरण्योक्तेरसङ्गतिरलङ्कारः । तथा हि काव्यप्रकाशकाराः—"भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः । युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः॥" इत्याहुः ।

१ अत्रेन्द्रवज्रा छन्दः । उत्प्रेक्षाऽलङ्कारः । २ उपजातिश्छन्दः । निद्राऽङ्गना वेति विकल्पोऽलङ्कार इत्यलङ्कारसूत्रादिकाराः । काव्यप्रकाशाद्यनुशीलनपरास्तु निद्राऽङ्गनयोरुभयोरपि प्रस्तुतत्वात् आलिङ्गनादिधर्मसाम्यादौपम्यं प्रतीयत इति प्रकृतविषया तुल्ययोगिताऽलङ्कारः । इत्येवाहुः । 'तुल्यबलविरोधे विकल्पः' इत्यलङ्कारसूत्रम् । नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता । इति काव्यप्रकाशश्च ।

स्मरेणेति ॥ स नलः स्मरेण बाणैर्निस्तक्ष्य निर्भिद्य लावण्यं सौन्दर्यमेव शेषं यस्यास्तां कृशतां वृथैवानायि नीतः प्रापितः । लावण्यं स्थितं, शरीरं क्षीणम् । यतः—अनङ्गतामतिकृशाङ्गताम ङ्गरहिततां मदनत्वं नीयमानो ऽप्ययं तेन मदनेन सह स्पर्धां साम्यं न जहाति न त्यजाति। रूपसाम्यात्क्रुद्धेन कामेनातिकृशत्वं नीतः । ततश्च ईषदङ्गोऽनङ्गः नञ्समासः । नञ् ईपदर्थे, अनुदरा कन्येतिवत् । कृतेऽपि कृशत्वे सुतरां साम्यमेवाभूदिति भावः । अत एव लावण्यशेषामित्युक्तम् । 'तथैव' इति पाठे लावण्यशेषामेव कृशतां तथा अनायि यथाऽनङ्गतामाप्यमानोऽपि तेन सह स्पर्धां न त्यजतीति व्याख्या ॥ १०९ ॥

त्वत्प्रापकात्त्रस्यति नैनसोऽपि
त्वय्येष दास्येऽपि न लज्जते यत् ।
स्मरेण बाणैरतितक्ष्य तीक्ष्णै-
र्लूनः स्वभावोऽपि कियान्किमस्य ॥ ११०

सप्तमीमाह—

त्वदिति॥एष नलस्त्वां प्रापयति दापयति तत्त्वत्प्रापकम्, तस्माद् एनसोऽपि पापादपि 'राक्षसो युद्धहरणात्'इत्यादिच्छला दिरूपान्न त्रस्यति न विभेति । यच्च त्वयि विषये दास्येऽपि न लज्जते,ततो हेतोः स्मरेण तीक्ष्णैर्बाणैरतितक्ष्य-अतिशयेनास्य शरीरं तनूकृत्य कियान्स्वल्पः स्वभावोऽपि लूनः छिन्नः किमिति सहेतुकोत्प्रेक्षा । धर्मशीलत्वादयं सर्वदा पातकाद्बिभेति दासत्वे च राजत्वाल्लज्जते इत्यस्य स्वभावः । स तु त्वत्प्राप्तिलोभेन न दृश्यते । शरीरस्यातिकार्श्यात्स्वभावस्यापि कार्श्यं जातमित्यनुमीयत इत्यर्थः । त्रपानाशावस्थोक्ता । त्वत्प्रापकादित्यादिना त्वदन्यविषयनिवृत्तिरेव तात्पर्यवृत्त्या वर्ण्यत इति श्लोकतात्पर्यम् । अतितक्ष्येति स्वभावापगमे हेतुत्वार्थमुक्तं, न तु तनुतावस्थाप्रतिपादनार्थम् । शरीरस्यातितक्षणे स्वभावस्य लूनत्वं संभाव्यत इति द्योतनार्थमतिशब्दतीक्ष्णशब्दप्रयोगौ । एनसः 'भीत्रार्थानां भयहेतुः १।४।२५' इति पञ्चमी ॥ ११० ॥

स्मारं ज्वरं घोरमपत्रपिष्णोः
सिद्धागदंकारचये चिकित्सौ ।
निदानमौनादविशद्विशाला
सांक्रामिकी तस्य रुजेव लज्जा ॥ १११ ॥

पुनस्त्रपानाशमेवाह—यद्वा प्रथमतस्त्रपानाशं वर्णयितुमाह—

स्मारमिति ॥ तस्य नलस्य विशाला महती लज्जा सिद्धे चिकित्सासमर्थेऽगदंकारचये वैद्यसमूहे निदानमौनादादिकारणविषये मौनादादिकारणस्याज्ञानादविशत्प्रविष्टा । किम्भूतस्य—अपत्रपिष्णोर्लज्जाशीलस्य । किंभूते—स्मारं मदनजनितं घोरं दारुणं ज्वरं चिकित्सौ प्रतिकुर्वाणे । केव—संक्रमेण जनिता सांक्रामिकी संसर्गजनिता रुजेव रोग इव क्षयादिर्व्याधिः क्षयिणं परित्यज्य यथान्यं संसर्गिणं प्रविशति तथा लज्जाशीलस्य तस्य लज्जया भावितव्यम् । सा च तं विहाय वैद्यसमूहे दृश्यते कार्ये निदानाज्ञानात् । 'अक्षिरोगो ज्वरः कुष्ठं तथापस्मार एव च । सहभुक्त्यादिसंबन्धात्संक्रामन्ति नरान्तरम् ॥'इति । वैद्यैः पृष्टेन तेन लज्जां विहाय ज्वरनिदानं यदैव कथितं तदेवास्माभिर्ज्ञातमित्युक्त्वा लज्जितम् । 'लज्जाशीलेऽपत्रपिष्णुः' इत्यमरः । ज्वरम्, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधाद्द्वितीया । अपत्रपिष्णोः, 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ३।२।१३६' इतीष्णुच् । अगदं रोगरहितं करोतीति 'अगदंकारः' । कर्मण्यणन्ते कारशब्दे उत्तरपदे 'कारे सत्यागदस्य ६।३।७०' इति मुम् । सांक्रामिकी, अध्यात्मादित्वाट्ठञि अनुशतिकादित्वादुभयपदवृद्धिः ॥ १११ ॥

बिभेति रुष्टासि किलेत्यकस्मा-
त्स त्वां किलापेति हसत्यकाण्डे ।
यान्तीमिव त्वामनु यात्यहेतो-
रुक्तस्त्वयेव प्रतिवक्ति मोघम् ॥ ११२ ॥

अष्टमीमाह—

१उपजातिश्छन्दः । स्मरोऽहमिव किमिति सुन्दर इत्यसहमान इव स्मरो नलं कृशतामानयि लावण्यशेषत्वं नीतवानिति व्यर्थमेव प्रयतितवान्,प्रत्युत तस्यैवानङ्गतान्यूनत्वमपि एवं दूरं नीतवानिति विषमः । हन्त ततः परमपि तस्मै द्रुह्यतीति कियन्मौढ्यं तस्येति हंसस्य भावो वृथापदद्योत्यः ।

१उपजातिश्छन्दः कियान् लूनः किमित्युत्प्रेक्षा सा च हेतुरूपा । २ उपजातिश्छन्दः । रोगज्ञानकारणस्य वैद्यचिकित्सनस्य सत्वेऽपि रोगज्ञानरूपकार्यासत्त्वाद्विशेषोक्तिः । रुजेवेत्युत्प्रेक्षा ।

विभेतीति ॥ स नलः हे भैमि! त्वं रुष्टासि कुपितासि किलेति संभाव्य अकस्मात्त्वत्कोपेन विनैव विभेति भयं प्राप्नोति तथा—किल मिथ्याभूतां त्वामाप्य प्राप्तवानिति कृत्वा अकाण्डेऽसमय एव त्वत्प्राप्तिं विनैव सुखातिशयाद्धसति। तथा—यान्तीमिव गच्छन्तीमिव त्वामनुलक्ष्यीकृत्य अहेतोर्निष्कारणं याति। तथा—त्वयोक्त इव संभाषित इव आगच्छामि, त्वदादिष्टं मया पूर्वमेव कृतामित्यादि सोद्यं निष्फलं प्रतिवक्ति प्रतिवचनं ददाति। उन्मादावस्था ॥ ११२ ॥

भवद्वियोगाच्छिदुरार्तिधारा-
यमस्वसुर्मज्जति निःशरण्यः।
मूर्छामयद्वीपमहान्ध्यपङ्के
हा हा महीभृद्भटकुञ्जरोऽयम् ॥११३॥

नवमीमाह—

भवदिति ॥ भवत्या वियोगेन विरहेण जनिता अच्छिदुरा संतता या अर्तिः पीडा तस्या धारा प्रणालीपरम्परा सैव यमस्वसा यमुना तस्या मूर्छामयं मूर्छारूपं यद्द्वीप जलमध्यावकाशस्तस्मिन्महान्ध्यलक्षणो महाज्ञानलक्षणः पङ्कः कर्दमस्तस्मिन् निःशरण्यो रक्षितृरहितोऽयं नलः महीभृद्भटो राजश्रेष्ठ एव कुञ्जरो हस्ती निमज्जति ब्रुडति। हा हा खेदातिशये। अन्योऽपि कुञ्जरो हस्तिपकं विना नद्या द्वीपपङ्के ब्रुडति। पङ्कमग्नो गजो नोद्धर्तुं शक्यंत इति मूर्छावस्था। एवं नवावस्थासूचकाः श्लोकाः 'लिपिम्—' इत्यादयो यथायथमूह्याः। भवत्या वियोग इति 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवत्। अच्छिदुरेति 'विदिभिदिच्छिदेः कुरच् ३।२।१६२' इति कुरच् ॥ ११३ ॥

सव्यापसव्यत्यजनाद्द्विरुक्तैः
पञ्चेषुबाणैः पृथगर्जितासु।
दशासु शेषा खलु तद्दशा या
तया नभः पुष्प्यतु कोरकेण ॥११४॥

उक्तिविशेषेण दशमीमवस्थामाह—

सव्येति ॥ सव्यापसव्याभ्यां वामदक्षिणाभ्यां त्यजनं मोचनं तस्माद्द्विगुणैर्दशभिः पञ्चेपुबाणैः कामबाणैः पृथक्प्रत्येकमर्जितासु रचितासु दशास्वर्जितप्रायासु मध्ये शेषावशिष्टा या तद्दशा मृतिलक्षणा तया कोरकेण कलिकया नभो गगनं खलु निश्चितं. पुष्प्यतु पुष्पितं भवतु। सा दशमी दशा खपुष्पतुल्या सर्वथा भवत्वित्यर्थः। एकैकेन मदनबाणेनान्येषां दशावस्था भवन्ति, अस्य तु नव, दशमी नेति तस्या अवसरः। अस्याः कोरकत्वमनुद्भूतत्वात्। नले तर्हि सापि दशा भविष्यति सा मा भूत् त्वत्प्राप्तिरेव भवत्विति भावः। दशाया अशुभत्वान्नामग्रहणानर्हत्वात्तच्छब्दप्रयोगः। द्विरुक्तशब्दो लक्षणया द्विगुणपर्यायः। शेषशब्दस्त्रिलिङ्गः, अभिधेयलिङ्गत्वात्। 'पुष्प विकसने' आशिषि लोट्। 'चक्षूरागः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः। उन्मादो मूर्छामृतिरित्येताः स्मरदशा दशैव स्युः ॥' इति ॥ ११४ ॥

त्वयि स्मराधेः सततास्मितेन
प्रस्थापितो भूमिभृतास्मि तेन।
आगत्य भूतः सफलो भवत्या
भावप्रतीत्या गुणलोभवत्याः ॥११५॥

प्रकृतमाह—

त्वयीति ॥ स्मराधेः कामजनितपीडातः सततं नियतमस्मितेन हास्यरहितेन भूमिभृता राज्ञा त्वयि विषयेऽहं प्रस्थापितोऽस्मि भैमी मदर्थं त्वया विज्ञापनीयेति। अहमिहागत्य गुणेषु लोभवत्या अनुरागिण्या भवत्यास्तव भावप्रतीत्या प्रेमपरिज्ञानेन सफलः कृतकार्यो भूतो जातः। नलसदृशो गुणी, त्वं च गुणानुरागिणी, स्वत एव तस्मिन्ननुरक्तेति ज्ञात्वा कृतार्थो जातोऽस्मीति भावः ॥ ११५ ॥

धन्याऽसि वैदर्भि गुणैरुदारै-
र्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकाया
यदब्धिमप्युत्तरलीकरोति ॥११६॥

१ उपजातिश्छन्दः, यान्तीमिवेत्युत्प्रेक्षा। २ उपजातिश्छन्दः। अर्त्तिधाराया यमस्वसृत्वेन मूर्छायाः पङ्कत्वेन महीभृतः कुञ्जरत्वेन रूपणाद्रूपकम्।

१ उपजातिश्छन्दः। सव्येति यमकम्। दशानां कामबाणोत्पादितानां दशत्वसिद्धये सव्येत्याद्युक्तमित्यनुमानम्। दशम्या दशाया नभःकोरकत्वेन रूपणस्य व्यङ्ग्यत्वाद् रूपकाभिव्यक्तिः। २ अत्रोपजातिश्छन्दः। 'तास्मितेन' इति 'लो भवत्या' इति च यमकम्।

धन्यासीति ॥ हे वैदर्भि भैमि ! सा त्वं धन्या देवाधिकासि । यया त्वया उदारैरतिरमणीयैर्गुणैः सौन्दर्यादिभिः कृत्वा नैषधो धीरोदात्तो नलोऽपि समाकृष्यत स्ववशीकृतः । या ईदृशं धीरं वशीकरोति ततः परा का धन्येत्यर्थः । दृष्टान्तेन धन्यत्वं समर्थयते—खलु यस्माच्चन्द्रिकाया इतः परा का स्तुतिः । यत् या गम्भीरमप्युदधिं समुद्रमुत्तरलीकरोति अतिशयेन चञ्चलीकरोति तद्वत्तद्वशीकरणमेव तव स्तुतिर्धन्यता च । अथच—वैदर्भी काव्यरीतिः गुणैः श्लेषादिभिरलंकारैः । अन्यदपि विशालैर्दोरकैराकृष्यते[1] ॥ ११६ ॥

**नलेन भायाः शशिना निशेव**
**त्वया स भायान्निशया शशीव ।**
**पुनःपुनस्तद्युगयुग्विधाता**
**योग्यामुपास्ते नु युवां युयुक्षुः ॥११७॥**

नलेनेति ॥ हे भैमि ! त्वं नलेन कृत्वा भायाः शोभस्व । केन केव—परिपूर्णेन शशिना निशेव । स नलस्त्वया कृत्वा भायाच्छोभताम् । कया क इव—निशया शशीव । उभयोः समागमे उभावपि व्यतिभातामित्यर्थः । नु उत्प्रेक्षे । पुनःपुनः प्रतिमासं तद्युगं चन्द्रनिशालक्षणं युग्मं युनक्ति युक् एवंविधो विधाता ब्रह्मा युवामुभावपि युयुक्षुर्योक्तुमिच्छुः सन् योग्यामभ्यासमुपास्ते करोति । शिल्पी रमणीयं वस्तु संघट्टयितुमभ्यासं करोति अन्यथा चन्द्रनिशयोः पुनःपुनर्योजनं व्यर्थं स्यादित्यर्थापत्तिः प्रमाणम् । 'स्वभ्यासमास्ते' इति पाठे अभ्यासस्समृद्ध्यर्थम् । समृद्धावव्ययीभावे चतुर्थ्या अम्भावः । 'योग्याऽभ्यासार्कयोषितोः' इति विश्वः ॥ ११७ ॥

**स्तनद्वये तन्वि परं तवैव**
**पृथौ यदि प्राप्स्यति नैषधस्य ।**
**अनल्पवैदग्ध्यविवर्धिनीनां**
**पत्रावलीनां वलना समाप्तिम् ॥११८॥**

स्तनद्वय इति ॥ हे तन्वि कृशाङ्गि ! नैषधस्य नलस्यानल्पं बहुतरं वैदग्ध्यं कौशलं तस्य विवर्धिनीनां ज्ञापिकानां पत्रावलीनां पत्रवल्लीपङ्क्तीनां वलना रचना समाप्तिं यदि प्राप्स्यति तर्हि परं केवलं पृथौ विशाले तवैव स्तनद्वये अतिपीनत्वात्, नान्यस्या अल्पकुचत्वात् । पृथुशब्दो भाषितपुंस्कः ॥ ११८ ॥

**एकः सुधांशुर्न कथंचन स्या-**
**त्तृप्तिक्षमस्त्वन्नयनद्वयस्य ।**
**त्वल्लोचनासेचनकस्तदस्तु**
**नलास्यशीतद्युतिसाद्वितीयः ॥ ११९ ॥**

एक इति ॥ एकोऽसहायः सुधांशुश्चन्द्रोऽतिविशालस्य त्वन्नयनद्वयस्य कथंचन केनापि प्रकारेण तृप्तिक्षमः संतर्पणसमर्थो यतो न स्यान्न भवेत् । तत्तः कारणात् स चन्द्रो नलास्यलक्षणो यः शीतद्युतिश्चन्द्रस्तेन सद्वितीयः ससहायः सन् त्वल्लोचनयोस्तव नेत्रयोरासेचनको निर्मर्यादतृप्तिकार्यस्तु भवतु । चकोरतुल्यस्य त्वन्नेत्रद्वयस्यैकेन चन्द्रेण तृप्त्यभावाच्चन्द्रद्वयेन भवितव्यम् । तत्र चन्द्रसहकारी नलास्यचन्द्रो भवत्वित्यभिप्रायः । तत्प्राप्त्यर्थं यत्नः कार्य इति भावः । 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इत्यमरः ॥ ११९ ॥

**अहो तपःकल्पतरुर्नलीय-**
**स्त्वत्पाणिजाग्रस्फुरदङ्कुरश्रीः ।**
**त्वद्भ्रूयुगं यस्य खलु द्विपत्री**
**तवाधरो रज्यति यत्फलम्बः ॥१२०॥**

---

१ उपजातिश्छन्दः । दमयन्तीचन्द्रिकयोर्नलसमुद्रयोराकर्षणोत्तरलीकरणयोश्च बिम्बप्रतिबिम्बभावेन दृष्टान्तः । तेन च दमयन्त्याश्चन्द्रिकाया इव लावण्यं, नलस्य समुद्रस्येव गाम्भीर्यं, समाकर्षणस्योत्तरलीकरणस्येव दूरस्थत्वेऽपि संस्कारवशादुपस्थितं परस्परमनुरागित्वं च व्यज्यते न चात्राक्षेपोऽलङ्कारः । उपमानस्योपमेयताऽकल्पनात्, तिरस्काराकल्पनाच्च । २ उपजातिश्छन्दः । उपमेयोपमाऽलङ्कारः ।' विपर्यास उपमेयोपमा तयोः' इतिप्रकाशोक्तेः । निवत्युत्प्रेक्षा चार्थालङ्कारः । भाया इति यमकं शब्दालङ्कारोऽपि ।

१ उपजातिश्छन्दः । 'समं स्यादानुरूप्येण श्लाघायोग्यस्य वस्तुनः ।' इति साहित्यदर्पणकारोक्त्या समालङ्कारः । २ उपजातिश्छन्दः । नलस्य द्वितीयसुधांशुत्वेन रूपणाद्रूपकम् । एकस्य सुधांशोरेकतृप्तिकरणक्षमत्वेन द्वितीयस्य तृप्तिकृते द्वितीयस्यैव तस्यावश्यकतेति नलमुखस्य द्वितीयसुधांशुत्वरूपणे हेतुहेतुमद्भावात् काव्यलिङ्गं च ।

यस्ते नवः पल्लवितः कराभ्यां
स्मितेन यः कोरकितस्तवास्ते ।
अङ्गम्रदिम्ना तव पुष्पितो गां
स्तनश्रिया यः फलितस्तवैव ॥१२१॥

अहो इति, यस्त इति ॥ ( युग्मम् ) नलीयो नलसंबन्धी तपोरूपः कल्पतरुः कल्पवृक्षः अहो आश्चर्यरूपः । आश्चर्यरूपत्वमेव विशेषणैः प्रकटयति—कीदृशः कल्पतरुः । त्वत्पाणिजाग्राणि तव नखाग्राण्येव स्फुरन्ती प्रकाशमाना अङ्कुरश्रीरङ्कुरशोभा यस्य । खलु निश्चये । अङ्कुरानन्तरं त्वद्भ्रूयुगमेव यस्य कल्पवृक्षस्य द्विपत्री पत्रद्वयम् । तवाधर ओष्ठ एव यस्य 'कलम्बो मध्यमाङ्कुरः' नालमित्यर्थः । रज्यत्यारक्तो भवति । प्रथमाङ्कुरापेक्षया मध्यमाङ्कुरस्यातिरक्तत्वात् । यस्ते कराभ्यां नवो नूतनः पल्लवितः पल्लवयुक्तो विद्यते मध्यमाङ्कुरापेक्षयातिरक्तत्वात्तव हस्तावेव यस्य पल्लवौ जातौ । यः तव स्मितेन कोरकितः कलिकायुक्त आस्ते । पल्लवानन्तरं कोरका भवन्ति, स्मितस्य सितत्वात्कोरकत्वम् । कोरकापेक्षया विकस्वराणां पुष्पाणां मृदुत्वाद्यस्तवाङ्गम्रदिम्ना शरीरमार्दवेन पुष्पितः पुष्पयुक्तो विभाति । अतिमृदूनि तवाङ्गानि यस्य पुष्पस्थाने जातानि । यः तवैव स्तनश्रिया फलितः फलयुक्तः । तव स्तनावेव यस्य फलस्थाने जातौ । अतीवाश्चर्यजनकोऽयं नलीयस्तपःकल्पवृक्षः । एवंविधां त्वां प्राप्तुं तेनैव तपस्ततं नान्येनेति भावः । अन्यस्य तरोरेते पदार्थाः क्रमेण भवन्ति, एतस्य त्वेककालमेवेति अहोशब्द आश्चर्यं द्योतयति । 'कद ( ल ) म्बः सायके नीपे नाले शाके कलम्ब्यपि' इति विश्वः । नलीयः, 'वा नामधेयस्य' इति वृद्धसंज्ञायां 'वृद्धाच्छः :४।२।१४४' । रज्यति 'कुपिरञ्जोः प्राचां श्यन् परस्मैपदं च१।३।९०' इति कर्मकर्तरि श्यन्परस्मैपदे । पल्लवितः तारकादिः ॥ १२०॥१२१ ॥

कांसीकृतासीत्खलु मण्डलीन्दोः
संसक्तरश्मिप्रकराः स्मरेण ।
तुला च नाराचलता निजैव
मिथोऽनुरागस्य समीकृतौ वाम् १२२॥

कांसीति ॥ खल्वुत्प्रेक्षे । हे भैमि, वां तव नलस्य च मिथः परस्परं योऽनुरागस्तस्य समीकृतौ समीकरणे नलस्य त्वयि यावाननुरागः तावानेव तव नलेऽनुराग इत्युभयोरनुरागस्य तुलनार्थं स्मरेणेन्दोश्चन्द्रस्य मण्डली कांसीकृता परिमेयवस्तुधारणार्थं कांस्यपात्रमिव कृतासीत् । किंभूता—संसक्ताः संबद्धा रश्मिप्रकराः किरणसमूहा रज्जुसमूहाश्च यस्याः सा । निजैव स्वीयैव नाराचलता बाणवल्ली तुला च तुलादण्डश्च कृता । कंसाय प ( पा ) त्रविशेषाय हितं कंसीयम् 'तस्मै हितम् ३।१।५' इति 'प्राक्क्रीताच्छः ५।१।१' तस्य विकारः 'कंसीयपरशव्ययोर्यञञौ । लुक् च ४ । ३ । १३८' इति यञ् । छस्य लुक् । कांस्यम्, अकांस्यं कांस्यं संपन्नं कांसीकृतम् । च्वौ 'क्यच्व्योश्च ६।४।१५२' इति हल उत्तरस्य 'आदेः परस्य १।१।५४' इति यकारमात्रस्य लोपः । अवर्णस्य 'अस्य च्वौ' इतीत्वम् । 'कंसीकृता' इति पाठे 'कंसो दैत्यान्तरेऽपि च । कांस्ये च कांस्यपात्रे च' इति विश्वः । 'किरणप्रग्रही रश्मी' इत्यमरः ॥ १२२ ॥

सत्त्वस्रुतस्वेदमधूत्थसान्द्रे
तत्पाणिपद्मे मदनोत्सवेषु ।
लग्नोत्थितास्त्वत्कुचपत्रलेखा-
स्तन्निर्गतास्तं प्रविशन्तु भूयः ॥१२३॥

सत्त्वेति ॥ हे भैमि ! मदनोत्सवेषु तत्पाणिपद्मं नलहस्तकमले पूर्वं लग्नाः पश्चादुत्थिताः त्वत्कुचयोः पत्रलेखाः पत्रावलयः तन्निर्गता नलपाणिपद्मेनैव लिखिता भूयस्तमेव पाणिपद्मं प्रविशन्तु । किंभूते पाणिपद्मे—सत्त्वेन सत्त्वभावेन स्रुतो जनितः स्वेदो धर्मोदकं तल्लक्षणं मधूत्थं सिक्थकं तेन सान्द्रे निबिडे । रतोत्सववशात्पत्रावल्या मार्जनं भवत्वित्यर्थः । कारणे कार्यस्य लय उचित इति भावः । मधूत्थे यथालिखितमेतीति मधूत्थपदम् । पद्मशब्दः पुंलिङ्गेऽपि ततः 'तम्' इति युज्यते ॥१२३॥

---

१ अत्र श्लोकयुगले तपसि नखादिषु कल्पतरुतत्पत्रत्वादिरूपणात्सावयवं रूपकम् । तपःकल्पतरोर्नखादिभिः साङ्कुरत्वाद्ययोगेऽपि साङ्कुरत्वादियोगोक्तेरतिशयोक्तिः । जीवातुकारास्तु 'अवयविकल्पतरोरवयवानां नखाङ्कुरादीनां च मिथः कार्यकारणभूतानां भिन्नदेशत्वादसङ्गतिः' इत्याहुः ।

१ उपजातिश्छन्दः । खल्वित्युत्प्रेक्षा । इन्दुमण्डल्यादेः कांस्यादित्वेन रूपणाद् रूपकम् । २ अत्रेन्द्रवज्रा छन्दः, रूपकमर्थालङ्कारः ।

बन्धाढ्यनानारतमल्लयुद्ध-
प्रमोदितैः केलिवने मरुद्भिः ।
प्रसूनवृष्टिं पुनरुक्तमुक्तां
प्रतीच्छतं भैमि युवां युवानौ ॥ १२४॥

बन्धाढ्येति ॥ हे भैमि! युवानौ तरुणौ युवां केलिवने क्रीडावने मरुद्भिर्वायुभिः पुनरुक्तं पुनःपुनर्मुक्तां त्यक्तां प्रसूनवृष्टिं प्रतीच्छतं गृह्णीतम् । किंभूतैर्मरुद्भिः— बन्धैः पङ्कजासनादिसुरतबन्धैराढ्यं विस्तृतं नानारतमनेकप्रकाररतं तदेव मल्लयुद्धं तेन प्रमोदितैः प्रकर्षेण परिमलं प्रापितैः। संभोगेन पुष्पेषु च्युतेषु पुनः पुनर्मोचनं संगच्छते । अथ च मल्लयुद्धहृष्टैर्देवैर्मुक्तां पुष्पवृष्टिं मल्लौ गृह्णीतः । 'मरुतौ पवनामरौ'इत्यमरः । युवतिश्च युवा च'पुमान्स्त्रिया १।२।६७' इत्येकशेषः ॥ १२४ ॥

अन्योन्यसंगमवशादधुना विभातां
तस्यापि तेऽपि मनसी विकसद्विलासे ।
स्रष्टुं पुनर्मनसिजस्य तनुं प्रवृत्त-
मादाविव द्व्यणुककृत्परमाणुयुग्मम् १२५

अन्योन्येति ॥ अधुनोभयसंबन्धानन्तरं अन्योन्यसंगमवशात्परस्परसंयोगवशाद्विकसन्विलासो विभ्रमो ययोस्ते तस्यापि नलस्यापि तेऽपि तवापि मनसी परमाणुयुग्ममिव विभातां शोभेताम् । किंभूतं परमाणुयुग्मम् मनसिजस्य कामस्य तनुं शरीरं पुनः स्रष्टुं प्रवृत्तम् । अत एवादौ द्व्यणुकं करोतीति द्व्यणुककृत् । 'साक्रियाभ्यां द्वाभ्यां परमाणुभ्यामेकं द्व्यणुकमारभ्यते, एवं क्रमेण महत्कार्यमारभ्यते' इति सिद्धान्तः । दग्धस्य कामस्य मनोजन्यत्वान्मनसिजत्वम् । ततश्च तदुत्पत्त्यर्थं मनोद्वयेन द्व्यणुकमारब्धव्यम् । तत्तु येन केनचिन्मनोद्वयेन कर्तुं न शक्यते, एतादृशपरस्परानुरागस्य कुत्रचिदप्यभावात् । ततश्च युवयोरेव मनोद्वयेन कर्तुं शक्यते नान्येनेति भावः। युवयोः परस्परानुरागबाहुल्यात्कामः शरीरी स्यादिति भावः ॥ १२५ ॥

कामः कौसुमचापदुर्जयममुं जेतुं नृपं त्वां
धनुर्वल्लीमव्रणवंशजामधिगुणामासाद्य माद्य-
त्यसौ । ग्रीवालंकृतिपट्टसूत्रलतया पृष्ठे
कियल्लम्बया भ्राजिष्णुं कषरेखयेव निव-
सत्सिन्दूरसौन्दर्यया ॥ १२६ ॥

काम इति ॥ असौ कामः कौसुमेन चापेन दुर्जयं जेतुमशक्यममुं नृपं नलं जेतुमव्रणे निर्दोषे वंशे जाताम्, अथ च घुणादिजन्यव्रणरहितवेणुजातामधिगुणामतिशयितसौन्दर्यादिगुणयुक्ताम्, आरोपितमौर्वीकां च त्वां त्वन्मयीं धनुर्वल्लीं धनुर्लतामासाद्य प्राप्य माद्यति अधुना नलं जेष्यामीति तुष्यति । किंभूतां धनुर्वल्लीम्—निवसता विद्यमानेन सिन्दूरेण सौन्दर्यं लोहितिमा यस्यां तया पृष्ठे धनुःपृष्ठभागे, अथ च पश्चाद्भागे कियल्लम्बया कियद्दीर्घया ग्रीवा मध्यं कण्ठश्च तस्या अलंकृतिरलंकारभूता पट्टसूत्रलता तया । दीर्घेण पट्टसूत्रेणेत्यर्थः । भ्राजिष्णुं शोभमानाम् । कयेव—कषरेखयेव परीक्षारेखयेव । कषणधारया धनुर्योग्यवेणुपरीक्षायां निघृष्यमाणं सिन्दूरं चलति चेत्तदा परिपाको ज्ञेय इति धानुष्कप्रसिद्धिः । कामस्य त्वां विना नलवशीकरणं किमपि न विद्यत इति भावः । भ्राजिष्णुम्, 'भुवश्च ३।२।१३८' इति चकारादिष्णुच् ॥ १२६ ॥

त्वद्गुच्छावलिमौक्तिकानि गुलिकास्तं
राजहंसं विभो-र्वेध्यं विद्धि मनोभुवः स्वमपि
तां मञ्जु धनुर्मञ्जरीम् । यन्नित्याङ्कनिवा-
सलालिततमज्याभज्यमानं लसन्-नाभीमध्य-
बिला विलासमखिलं रोमालिरालम्बते १२७

त्वदिति ॥ हे भैमि! त्वं विभोः मनोभुवः कामस्य त्वद्गुच्छावलेः तव हारविशेषपङ्क्तेर्मौक्तिकान्येव गुलिकासूक्ष्मान्मृद्गोलिकान्विद्धि जानीहि । तथा—तं राजहंसं नृपश्रेष्ठं नलं वेध्यम्, अथ च तं नलमेव राजहंसाख्यं पक्षिविशेषं कामस्य वेध्यं लक्ष्यं विद्धि । तथा—स्वमात्मानमपि तां वक्ष्यमाणगुणयुक्तां मञ्जुं मनोज्ञां धनुर्मञ्जरीं धनुर्लतां जानीहि।तव रोमाली रोमराजिर्यस्या धनुर्लतायाः नित्यं सर्वदाङ्कनिवासो मध्यवसतिस्तया लालितमति-

१ उपजातिश्छन्दः । अनुप्रासः । नानारतेषु नानायुद्धकेलित्वरूपणाद्रूपकम् । २ वसन्ततिलकावृत्तम् । 'उक्ता वसन्ततिलका तभजा जगौ गः । इति लक्षणात् । इवेत्युत्प्रेक्षा ।

१ शार्दूलविक्रीडितं वृत्तम् । वंशजायां वंशजात्वं, गुणेषु गुणत्वं चारोप्य धनुषो वल्लीत्वं, वल्ल्याश्च दमयन्त्यात्मनाऽभिधानमिति श्लिष्टं परम्परितं रूपकम् । 'नियतारोपणोपायः स्यादारोपः परस्य यत् । तत्परम्परितं श्लिष्टे' इति प्रकाशोक्तेः ।

श्येन नर्तिता शोभमाना ज्या मौर्वी तया भज्यमानं सेव्यमानमनुभूयमानं वाखिलं विलासं चापमध्यवर्तिशोभमानमौर्व्याः संपूर्णां लीलामालम्बतेऽङ्गीकरोति । रोमराजिरेव मौर्व्याः स्थाने जातेत्यर्थः । किंभूता रोमालिः—लसन्ती नाभ्येव मध्ये विलं यस्याः सा । गुलिकाधारणच्छिद्रस्थाने नाभिरेव जातेत्यर्थः । गुलीकाधनुरिति नाम (क) त्वद्रूपेण शस्त्रेण नलः कामस्य जय्यो नान्येनेति भावः । धनुर्मौर्वीमध्ये गुलिकारोपणस्थानविलं भवति, तदत्र नाभिरेव, रोमालिर्मौर्वी, अङ्गयष्टिर्धनुः, स राजहंसो वेध्य इत्यर्थः । विभुस्तु गुलिकाधनुःक्रीडां करोति । 'हारभेदा यष्टिभेदा गुच्छगुच्छार्धगोस्तनाः' इत्यमरः । 'राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोः' इति विश्वः ॥१२७॥

**पुष्पेपुश्चिकुरेषु ते शरचयं, त्वद्भालमूले धनू, रौद्रे चक्षुषि तज्जितस्तनुमनुभ्राष्टे च यश्चिक्षिपे । निर्विद्याश्रयदाश्रयं स वितनुस्त्वां तज्जयायाधुना । पत्रालीस्त्वदुरोजशैलनिलया तत्पर्णशालायते ॥ १२८ ॥**

पुष्पेपुरिति ॥ तेन नलेन सौन्दर्यादिना गुणेन जितोऽत एव निर्विद्य वैराग्यं प्राप्य यः पुष्पेषुः कामस्ते तव चिकुरेषु केशपाशेषु पुष्पेषुत्वात्स्वं शरचयं बाणसमूहं पुष्पसमूहं चिक्षिपे त्यक्तवान् । तव भालमूले ललाटमूले भ्रूस्थाने स्वं धनुस्त्यक्तवान् । रौद्रे रुद्रसंबन्धिनि दारुणे चक्षुष्यनुभ्राष्ट्रे तृतीयनेत्रलक्षणे भर्जनपात्रे स्वीयां तनुं च चिक्षिपे क्षिप्तवान् । स कामोऽधुना वितनुः शरीररहितोऽथ च विशेषेण कृशः सन् तज्जयाय तं नलं जेतुं त्वामेवाश्रयमाश्रयत । तथा—तव उरोजौ स्तनावेव शैलौ तावेव निलयः स्थानं यस्याः सा तत्र विद्यमाना पत्रालिः पत्रवल्लीपङ्क्तिः तस्य कामस्य पर्णशालेवाचरति भवति । भैमीकेशपाशपुष्पाणां कामजनकत्वात्कामबाणत्वम् । भ्रुवोरपि कामजनकत्वाद्धनुष्ट्वम् । स्तनपर्वतनिलयपत्रवल्लीनामपि तज्जनकत्वाद्गृहत्वम् । त्वयैव शस्त्रेण कामेन स जेतव्यो नान्यैः किंचित्तजयायेति त्वदाश्रयेण मदनस्तं पीडयतीत्यर्थः । अन्योऽपि जितोऽस्त्रादि त्यक्त्वाग्नौ देहं त्यक्त्वा शत्रुं जेतुं पर्वते पर्णशालामधिष्ठाय तपस्यति । अनुभ्राष्ट्रम्, सप्तम्यर्थे सादृश्ये वाऽव्ययीभावः । क्षिपेः स्वरितेत्वात्तङ् ॥ १२८ ॥

**इत्यालपत्यथ पतत्रिणि तत्र भैमीं सख्यश्चिरात्तदनुसंधिपराः परीयुः । शर्मास्तु ते विसृज मामिति सोऽप्युदीर्य वेगाज्जगाम निषधाधिपराजधानीम् ॥ १२९ ॥**

इतीति ॥ तत्र तस्मिन्पतत्रिणि हंसे इति पूर्वोक्तमालपति वदति सति तदनुसंधौ भैम्यन्वेषणे पराः सख्यश्चिराद्बहुकालेन भैमीं परीयुः दशदिग्भ्यः समागतत्वात्परितो वेष्टयामासुः । अथानन्तरं स हंसोऽपि तुभ्यं शर्म सुखमस्तु, मां विसृज प्रेषयेत्युदीर्योक्त्वा वेगाज्जवेन निषधाधिपराजधानीं नलनगरीं जगाम । नलपीडास्मरणाद्वेगेनगमनम् ॥ १२९ ॥

**चेतोजन्मशरप्रसूनमधुभिर्व्यामिश्रतामाश्रयत्-प्रेयोदूतपतङ्गपुङ्गवगवीहैयङ्गवीनं रसात् । स्वादंस्वादमसीममिष्टसुरभि प्राप्तापि तृप्तिं न सा- तापं प्राप नितान्तमन्तरतुलामानर्छ मूर्छामपि ॥ १३० ॥**

चेत इति ॥ सा भैमी प्रेयसो नलस्य दूतो यः पतङ्गपुङ्गवो हंसस्तस्य गीर्वाणी सैव हैयङ्गवीनं ह्योगोदोहोद्भवं घृतं रसात्प्रीतेः स्वादंस्वादमास्वाद्यास्वाद्य । सादरमाकर्ण्याकर्ण्येत्यर्थः । तृप्तिंप्राप्ता अन्तरन्तःकरणे नितान्तमतिशयितुं तापं संतापमपि न प्राप । अतुलां निःसीमां मूर्छामपि न आनर्छ न प्राप । किंभूतं हैयङ्गवीनम्—चेतोजन्मनःकामस्य शरभूतानि प्रसूनानि पुष्पाणि तेषां मधुभी रसैः, अथ च माक्षिकैर्व्यामिश्रतां मेलनमाश्रयत्प्राप्नुवत् । तथा—असीमं निर्मर्यादम् । तथा—इष्टं सुस्वादु सुरभि ख्यातं सुगन्धि च । समत्वेन मधुभिश्रितं घृतं नितान्तं पीतं सत्संतापमोहौ जनयतीति, तस्यास्तु नेत्याश्चर्यम् । यद्वा—एवंभूतं हैयङ्गवीनमास्वाद्यापि तृप्तिं न प्राप, तापं प्राप, मूर्छामपि प्राप । हंसमुखान्नलगुणाकर्णनेनानुरागबाहुल्यात्तापमोहौ तस्या जाताविति भावः ।

१ अत्र शार्दूलविक्रीडितं वृत्तम् । मौक्तिकादिषु गुलिकाद्यारोपो राजहंसरूपेण रूप्यमाणस्य नलस्य वेध्यत्वनिष्पत्तय इति सर्वाण्यपि रूपणानि शब्दोपात्तानीति च रूपकं श्रौतं समस्तवस्तुविषयं च 'समस्तवस्तुविषयं श्रौता आरोपिता यदा ।' इति प्रकाशकारोक्तेः ।

१ शार्दूलविक्रीडितं वृत्तम् । दमयन्तीकुसुमादेः स्मरधनुःकुसुमादेश्चाभेदोक्तेरतिशयोक्तिः । २ वसन्ततिलका वृत्तम् ।

स्वादंस्वादमपीति योजना। असीममृष्टसुरभीत्येकं वा पदम्। 'तत्तु हैयङ्गवीनं यद्ध्योगोदोहोद्भवं घृतम्' इत्यमरः। 'हैयङ्गवीनं संज्ञायाम् ५।२।२३' इति साधु। पुंगवगवीत्यत्र 'गोरतद्धितलुकि ५।४।९२' इति टचि टित्त्वान्ङीप्। स्वादंस्वादम्, आभीक्ष्ण्ये णमुल्॥ १३०॥

**तस्या दृशो नृपतिबन्धुमनुव्रजन्त्या-**
**स्तं बाष्पवारि नचिरादवधीबभूव।**
**पार्श्वेऽपि विप्रचकृषे यदनेन दृष्टे-**
**रारादपि व्यवदधे न तु चित्तवृत्तेः॥१३१॥**

तस्या इति॥ बाष्पवारि बाष्पाम्बु तं नृपतिबन्धुं नलसुहृदं हंसमनुव्रजन्त्यास्तस्या दृशो भैमीदृष्टेर्नचिराच्छीघ्रमेव यद्यस्मादवधीबभूव अग्रे गन्तुं न ददौ तत्तस्मादनेन हंसेन पार्श्वेऽपि समीपे गच्छतापि भैमीदृष्टेः सकाशाद्विप्रचकृषे व्यवहितीभूतम्। समीपे वर्तमानोऽपि नलवियोगाद्धंसगमनाद्वा जातेनाश्रुणा द्रष्टुं न दत्त इत्यर्थः। तु पुनः आरादपि दूरादपि वर्तमानेनानेन चित्तवृत्तेर्न व्यवदधे व्यवहितिभूतम्। यद्यपि दूरं गतस्तथापि प्रियबन्धुत्वात्तस्या मनस्यवर्तिष्टैवेत्यर्थः। बन्धुमनुव्रजतो वारि; अवधिर्भवति। 'औदकान्तात्प्रियं पान्थमनुव्रजेत्' इति वचनात्। दृष्टेः पार्श्वेऽपीति वा। 'तदनेन' इति पाठः। 'आराद्दूरसमीपयोः' इत्यमरः। विप्रचकृषे, अकर्मकत्वविवक्षया भावे लिट्॥ १३१॥

**अस्तित्वं कार्यसिद्धेः स्फुटमथ कथयन्पक्षतेः कम्पभेदैराख्यातुं वृत्तमेतन्निषधनरपतौ सर्वमेकः प्रतस्थे। कान्तारे निर्गतासि प्रियसखि पदवी विस्मृता किं नु मुग्धे मा रोदीरेहि यामेत्युपहृतवचसो निन्युरन्यां वयस्याः॥ १३२॥**

अस्तित्वमिति॥अथ तयोर्मध्ये एको हंसो निषधनरपतौ नलसमीप एतत्सर्वं वृत्तं निष्पन्नम्। वचसेति शेषः। आख्यातुं कथयितुं प्रतस्थे। किं कुर्वन्—पक्षयोः कम्पभेदैः कम्पविशेषैः कृत्वा भैमीप्राप्तिरूपायाः कार्यसिद्धेरस्तित्वं सद्भावं स्फुटं कथयन्। इति पूर्वोक्तमार्गेणोपहृतमुक्तं वचो याभिस्ता वयस्याः सख्योऽन्यां भैमीं निन्युः गृहं प्रापयामासुरित्यर्थः। इति किम्—हे प्रियसखि! त्वं कान्तारे दुर्गमे वर्त्मनि विपये निर्गतासि प्रस्थितासि नु, अयि मुग्धे भ्रान्तचित्ते भैमि! पदवी मार्गः विस्मृता किं त्वया, त्वं मा रोदीः, एह्यागच्छ। वयं सर्वा मिलित्वा याम गृहं प्रति गच्छाम इति। पक्षकम्पनविशेषः कार्यसिद्धिसूचकः, अन्योऽपि हस्तचालनादिना कार्यसिद्धिं कथयति। 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः। अस्तीत्यव्ययात् त्वप्रत्ययः। आख्यातेति वा पाठः॥ १३२॥

**सरसि नृपमपश्यद्यत्र तत्तीरभाजः**
**स्मरतरलमशोकानोकहस्योपमूलम्।**
**किसलयदलतल्पम्लायिनं प्राप तं स**
**ज्वलदसमशरेषुस्पर्धिपुष्पर्द्धिमौलेः॥१३३॥**

सरसीति॥ स हंसो यत्र सरसि नृपं पूर्वमपश्यत्तस्य सरसस्तीरं भजते तस्य अशोकानोकहस्याशोकवृक्षस्य उपमूले मूलसमीपे तं नलं प्राप। किंभूतम्—स्मरतरलं मदनजनितपीडया चञ्चलम्। तथा—किसलयानामग्रपल्लवानां दलानि कोमलाङ्कुरास्तेषां तल्पं शय्या तस्यापि म्लायिनं म्लानशीलम्। किंभूतस्यानोकहस्य—ज्वलन्तो देदीप्यमाना असमशरेषवः कामबाणास्तैः सह स्पर्धन्ते एवंशीलानि पुष्पाणि तेषामृद्धिः समृद्धिस्तद्युक्तो मौलिरग्रभागो यस्य। विरहव्यथया हंसं प्रतीक्षमाणस्तत्रैव स्थितो यत्र पूर्वं हंसेन दृष्टः। अशोकपुष्पाणां रक्तत्वाज्ज्वलत्कामबाणतुल्यत्वम्॥ १३३॥

**परवति दमयन्ति त्वां न किंचिद्वदामि**
**द्रुतमुपनम किं मामाह सा शंस हंस।**
**इति वदति नलेऽसौ तच्छशंसोपनम्रः**
**प्रियमनु सुकृतां हि स्वस्पृहाया विलंबः१३४**

---

१ शार्दूलविक्रीडितं वृत्तम्। हैय्यङ्गवीनाद्यारोपणाद्रूपकम्। मधुमिश्रितहैय्यङ्गवीनस्य विपत्वेऽपि तस्य तापाकरणोक्तेर्विरोधश्च। अनेकवर्णसाम्यादनुप्रासः शब्दालङ्कारश्च। २ वसन्ततिलका वृत्तम्। बाष्पवारिणोऽनुव्रजनरोधकत्वोक्त्या तत्प्रवाहोऽवगम्यते। परार्द्धे च स्पष्ट एव विरोधाभासः।

१ स्रग्धरा वृत्तम्। २ मालिनी छन्दः। अशोकस्यान्तिकेऽपि तापसम्भवसमर्थनाय ज्वलदित्यादीति परिकरः। अत एव न समासपुनरात्तत्वस्य नितान्तं दुष्टत्वम्।

परवतीति ॥ नले उन्मादवशादिति वदति असौ हंस उपनम्रः समीपमागतः सन् तद्भैमीवृत्तान्तं सर्वं शशंस कथयति स्म। इतीति किम्—चित्ते प्रत्यक्षीकृतां भैमीं प्रत्याह। एवं हंसमपि—हे परवति पित्रधीनत्वात्परतन्त्रे दमयन्ति! अहं त्वां प्रति अद्यापि नागच्छसीत्यादि किमपि न वदामि। स्वातन्त्र्याभावात्। हे हंस! त्वं द्रुतं शीघ्रमुपनम मत्समीपमागच्छ। सा भैमी मामुद्दिश्य किमाहाब्रवीत्तच्छंस कथयेति वाक्यार्थः कर्म। तद्वचनानन्तरमेवायं गत्वा कथं कथितवानित्याशङ्क्याह—प्रियमिति। यस्मात्सुकृतां धार्मिकाणां प्रियं स्वाभीष्टमनु लक्षीकृत्य स्वस्पृहायाः स्वेच्छाया एव विलम्बो, न त्वन्यस्य। यदेव तेषां वस्तु प्राप्तुमिच्छा भवति तदेव पुण्यवशात्प्राप्नुवन्तीति भावः। 'क स्पृहायाः' इति केचित्। स्पृहाया विलम्बः केति योजनीयम्। सुकृताम्, 'सुकर्मपापमन्त्रपुण्येषु कृञः २।२।८९' इति क्विप्। आहेति विभक्तिप्रतिरूपकमव्ययं भूतार्थे ॥ १३४ ॥

**कथितमपि नरेन्द्रः शंसयामास हंसं**
**किमिति किमिति पृच्छन्भाषितं स प्रियायाः।**
**अधिगतमथ सान्द्रानन्दमाध्वीकमत्तः**
**स्वयमपि शतकृत्वस्तत्तथाऽन्वाचचक्षे १३५॥**

कथितमिति ॥ स नरेन्द्रो नलो हंसेन कथितमपि प्रियाया भैम्या भाषितं वचनं किमिति किमिति कीदृक्कीदृगित्येवमादरातिशयेन हंसं पृच्छञ्शंसयामास वादयति स्म। अथानन्तरं सान्द्रो निविड आनन्द एव माध्वीकं मधु तेन मत्तो हृष्टः सन् अधिगतं ज्ञातार्थं तद्भैमीभाषितं स्वयमपि शतकृत्वोऽनेकवारं हंसेन यथोक्तं तथैव ईदृग्भैम्योक्तमीदृक्भैम्योक्तमिति शिरःकम्पाद्यभिनयेनान्वाचचक्षेऽनूदितवान्। अत्यादृतस्येयं जातिः। मत्तविशेषश्चोक्तमपि पुनर्वादयति स्वयमपि पुनर्वदति। 'मधु माध्वीकमद्ययोः' इत्यमरः। 'मार्द्वीक' इति पाठे मृद्वीकाया द्राक्षाया विकारो मार्द्वीकम्। शंसेः शब्दकर्मत्वादणौ कर्तुर्ण्यन्ते कर्मसंज्ञा। शतवारं शतकृत्वः 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ५।४।१७' इति कृत्वसुच् ॥ १३५ ॥

१ परवतीति परिकरः। शंस, हंस, इत्यादावनुप्रासः। प्रियमित्यादिना प्रागुक्तसमर्थनादर्थान्तरन्यासश्च। २ आनन्दस्य माध्वीकत्वेन रूपणाद्रूपकम्।

**श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्। तार्तीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महाकाव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १३६ ॥**

श्रीहर्षमिति ॥ तार्तीयीक इति द्वितीयीकवत् १३६॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृतौ नैषधीयप्रकाशे तृतीयः सर्गः समाप्तः ॥

## चतुर्थः सर्गः।

**अथ नलस्य गुणं गुणमात्मभूः**
**सुरभि तस्य यशःकुसुमं धनुः।**
**श्रुतिपथोपगतं सुमनस्तया**
**तमिषुमाशु विधाय जिगाय तान् ॥१॥**

अथेति ॥ अथ हंसगमनानन्तरमात्मभूर्मदनः श्रुतिपथे कर्णमार्गे उपगतं प्राप्तमाकर्णितं नलस्य गुणं सौन्दर्यादिरूपगुणं गुणं मौर्वीं विधाय कृत्वा, तथा—कर्णितं सुरभि ख्यातं सुगन्धि च तस्य यशो लक्षणं कुसुमं धनुर्विधाय, तथा—श्रुतिपथोपगतं श्रुतमाकर्णकृष्टं च तमेव राजानं नलं सुमनस्तया मनीषितया कुसुमत्वेन च इषुं बाणं विधाय आशु तां भैमीं जिगाय जितवान्। अन्यस्यान्यत्वकरणं देवत्वेन संभाव्यते। हंसमुखात्तं श्रुत्वा झटिति कामपीडासहिता जातेति भावः। नले तदनुरागपोषार्थं विप्रलम्भवर्णनमनेन सर्गेण क्रियते। निर्वेदादयो विभावा आलस्यादयश्च विप्रलम्भशृङ्गारपोषार्थं यथायथमूहनीयाः। 'सुगन्धे च मनोज्ञे च सुरभि' इति विश्वः। जिगाय, 'सन्लिटोर्जेः ७।३।५७' इति कुत्वम् ॥ १ ॥

**यदतनुज्वरभाक्तनुते स्म सा**
**प्रियकथासरसीरसमज्जनम्।**
**सपदि तस्य चिरान्तरतापिनी**
**परिणतिर्विषमा समपद्यत ॥ २ ॥**

२ अत्र द्रुतविलम्बितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति तल्लक्षणात्। रूपकमर्थालङ्कारः।

यदतान्विति ॥ अतनुज्वरभाक्कामजनितसंतापभाक्सा भैमी प्रियकथा नलगोष्ठीतल्लक्षणा सरसी तस्या विप्रलम्भाख्यशृङ्गाररूपे रसे मज्जनं तस्यां रसेन प्रीत्या मज्जनम् । सादरमाकर्णनमित्यर्थः । तनुते स्म चकार । तस्य मज्जनस्य सपदि परिणतिः परिपाकः विषमा दुःसहा समपद्यत जाता । किंभूता—चिरं चिरकालमन्तरं मनस्तापयत्येवंशीला । नलगुणाकर्णनजकामपीडाशान्त्यर्थं तत्कथया विरहपीडानाशो भविष्यतीति बुद्ध्या सादरं तत्कथायामाकर्णितायां, प्रत्युत तस्या उद्दीपकत्वात्पूर्वापेक्षयातितमां सा कथा विरुद्धकार्यजनिका जातेति भावः । योऽपि ज्वरी सरोजलस्नानं करोति तस्य विषमाख्यो ज्वरो भवति । ज्वरिणस्तदा स्नानमपि विषमत्वजनकं भवति, सरसीस्नानं तु सुतरामिति सरसीपदम्[1] ॥ २ ॥

ध्रुवमधीतवतीयमधीरतां
दयितदूतपतद्गतवेगतः ।
स्थितिविरोधकरीं द्व्यणुकोदरी
तदुदितः स हि यो यदनन्तरः ॥ ३ ॥

ध्रुवमिति ॥ द्व्यणुकोदर्यतिकृशोदरी इयं भैमी दयितस्य नलस्य दूतो हंसस्तस्य पतद्भ्यां पक्षाभ्यां गतो यो वेगस्तस्माद्दयितदूतस्य पततोः पक्षयोर्गते गमने यो वेगस्तस्माद्वा, पक्षाभ्यां गतं गमनं यस्य स पक्षी दयितदूतश्चासौ पतद्गतश्चेति वा, तस्य वेगस्तस्मात्सकाशात्स्थितिः स्त्रीमर्यादा तस्या विरोधकरीं विरोधिनीमधैर्यतां धैर्याभावं शैघ्र्यं चाधीतवती पठितवती स्वीचकार । ध्रुवमुत्प्रेक्षे । अध्ययने न्यायं प्रमाणयति—हि यस्माद्यो यस्मादनन्तर एवाव्यवहितः स तदुदितस्तस्मादेवोत्पद्यते । 'यदनन्तरमेव यद्दृश्यते तत्तस्य कारणम्' इति गौतमः । तस्मिन्हंसे गतमात्रे एतस्या अधीरता जातेति तस्मादेवाधीता, इति सहोत्प्रेक्षा । वेगतः 'आख्यातोपयोगे १।४।२९' इत्यपादानत्वम् । विरोधकरीम् हेतौ टः ॥ ३ ॥

अतितमां समपादि जडाशयं
स्मितलवस्मरणेऽपि तदाननम् ।
अजनि पङ्गुरपाङ्गनिजाङ्गण-
भ्रमिकणेऽपि तदीक्षणखञ्जनः ॥ ४ ॥

अतीति ॥ तदाननं भैमीमुखं स्मितलवस्य हास्यलेशस्य स्मरणविषयेऽप्यतितमां जडाशयं जडाभिप्रायं समपादि जातम् । विरहपीडया स्मितलेशमपि नास्मार्षीत् । स्मितं नाकरोदित्यत्र किं वाच्यम् । तदीक्षणखञ्जनः तस्या नयनरूपः खञ्जरीटोऽपाङ्गे नेत्रप्रान्तलक्षणे निजाङ्गणे भ्रमिकणेऽपि विलासगमनलेशेऽपि पङ्गुः । खञ्जोऽजनि जातः । अन्योऽपि निजाङ्गणे सुखेन भ्रमति तथा पक्ष्यङ्गणे भ्रमति अयं तु तत्राप्यसमर्थोऽभूत् । खञ्जयतीति अन्यान्विलोकनमात्रेण पङ्गूकरोति स स्वीयगमनेऽपि पङ्गुर्जात इत्याश्चर्यम् । विरहपीडया कटाक्षावलोकनमपि विसस्मार । अतितमाम् । स्वार्थे तमप् । समपादि, कर्तरि 'चिण्ते पदः ३।१।६०' इति चिण् । अङ्गनं, णत्वमपपाठः । 'अजिरं त्वङ्गनं तत्स्यात्कामिन्यामङ्गनामता' इति विश्वप्रकाशः ॥ ४ ॥

किमु तदन्तरुभौ भिषजौ दिवः
स्मरनलौ विशतः स्म विगाहितुम् ।
तदभिकेन चिकित्सितुमाशु तां
मखभुजामधिपेन नियोजितौ ॥ ५ ॥

किम्विति ॥ स्मरनलौ तदन्तस्तस्या अन्तर्हृदयं विगाहितुमालोडितुं विशतः स्म प्रविष्टौ । उत्प्रेक्षते—तदभिकेन तस्या भैम्याः कामुकेन मखभुजां देवानामधिपेनेन्द्रेण आशु शीघ्रं तां भैमीं चिकित्सितुं नीरोगां कर्तुं शरीरस्थितिं विचारयितुं च नियोजितावाज्ञप्तौ दिवो भिषजौ स्ववैद्यौ आश्विनेयौ किमु । नलो नलविषयो मदनश्च भैम्यन्तःकरणमधितिष्ठतः स्मेति भावः । 'अनुकाभिकाभीकः कमिता ५।२।१४' इत्यभिकशब्दः साधुः । नियोजितौ, चौरादिकाद्युजेः क्तः ॥ ५ ॥

श्लोकपञ्चकेन तापमाह—

कुसुमचापजतापसमाकुलं
कमलकोमलमैक्ष्यत तन्मुखम् ।
अहरहर्वहदभ्यधिकाधिकां
रविरुचिग्लपितस्य विधोर्विधाम् ॥ ६ ॥

---

१ मज्जनेन ताप इति विषमम् । २ ध्रुवमित्युत्प्रेक्षा, उत्प्रेक्षितस्य तथाऽध्ययनस्य सत्यत्वसाधनायार्थान्तरन्यास इत्यर्थान्तरन्यासः ।

१ ईक्षणस्य खञ्जनत्वेन रूपणाद्रूपकम् । खञ्जयितुः स्वयं खञ्जितत्वेन भवनं विरुद्धमथाप्युक्तमिति विरोधः, प्रकारान्तरेण तत्परिहारात्तदाभासः । २ स्मरनलौ देवेन्द्राज्ञया दमयन्त्या हृदयं चिकित्सितुमिवान्तः प्रविशत इत्युत्प्रेक्षा । तत्र स्मरनलयोः साम्योक्त्या उपमा व्यज्यते ।

कुसुमेति ॥ तन्मुखं रविरुच्या ग्लपितस्य विधोश्चन्द्रस्य अहरहः प्रत्यहमभ्यधिकाधिकां पूर्वदिनापेक्षया परदिने महतीं विधामवस्थां वहदैक्ष्यत दृष्टम् । सर्वं जनेनेत्यर्थः । किंभूतम्—कुसुमचापजः कामजस्तापो ज्वरस्तेन समाकुलं म्लानमित्यर्थः । यतः—कमलवत्कोमलं सुकुमारम् । विरहव्यथया सूर्यकिरणम्लानचन्द्रसदृशं जातमिति भावः । अहरहः, वीप्सायां द्विर्वचनम्, अत्यन्तसंयोगे द्वितीया । अभ्यधिकाया अधिका महती 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी २।३।९' इति ज्ञापकात् 'पञ्चम्यपाङ्परिभिः २।३।१०' इत्यतः पञ्चम्या इति योगविभागात्समासः ॥ ६ ॥

तरुणतातरणिद्युतिनिर्मित-
द्रढिम तत्कुचकुम्भयुगं तदा ।
अनलसंगतितापमुपैतु नो
कुसुमचापकुलालविलासजम् ॥ ७ ॥

तरुणतेति ॥ तस्याः कुचावेव कुम्भयुगं तदा तस्मिन्समये अनलसंगत्या नलप्राप्त्यभावेन वह्निसंगत्या तापं तज्जनितं ज्वरम् औष्ण्यं च नो उपैतु न प्राप्नोतु, अपि तु प्राप्नोतु । किंभूतम्—कुसुमचापः कामः स एव कुलालः कुम्भकारस्तस्य विलासः क्रीडा तया जातं विरचितम् । तथा—प्रशान्तत्वात्तरुणता तारुण्यं तल्लक्षणया तरणिद्युत्या सूर्यदीप्त्या निर्मितः कृतो द्रढिमा दार्ढ्यं यस्य । कुलालोऽपि घटं कृत्वा आतपे शुष्कं कृत्वाग्नौ प्रक्षिपति । विलासजमिति तापविशेषणं वा । द्रढिमेत्यत्र 'वर्णदृढादिभ्यः ष्यञ्च ५।१।१२३' इतीमनिचि 'र ऋतोहलादेर्लघोः ६।४।१६१' इति रः ॥७॥

अधृत यद्विरहोष्मणि मज्जितं
मनसिजेन तदूरुयुगं तदा ।
स्पृशति तत्कदनं कदलीतरु-
र्यदि मरुज्ज्वलदूपरदूपितः ॥ ८ ॥

अधृतेति ॥ तदा तस्मिन्समये मनसिजेन कामेन विरहोष्मणि आधिजनिते दाहे मज्जितं यत्तदूरुयुगमधृत जीवशेषमतिष्ठत् । कदलीतरुस्तत्कदनं तस्योरुयुगस्य कदनं साम्यमवस्थां वा तर्हि स्पृशति प्राप्नोति तदूरुयुगसमानः स्यात्, यदि कदलीतरुर्मरौ धन्वदेशे ज्वलद्वह्निदग्धमूपरं क्षारमृत्तिकास्थलं तेन दूपितः पीडितः स्यात् । अतिमृदोः कदलीतरोर्वह्निदग्धे ऊपरे यदि स्थितिः स्यात्तर्हि तदूरुयुगदुःखं कदलीतरुणाप्यनुभूयेत । तदूरुयुगमतितरां संतप्तमभूदिति भावः । मनसिजेति 'सप्तम्यां जनेर्डः ३।२।९७' 'हलदन्तात् सप्तम्याः सञ्ज्ञायाम् ६।३।९' इति सप्तम्या अलुक् । स्पृशति, कालसामीप्ये लट् । 'स्यादूपः क्षारमृत्तिका' इत्यमरः । अस्त्यर्थे 'ऊपसुपिमुष्कमधो रः ५।२।१०७' इति रः । अधृत, 'धृङ् अवस्थाने' ॥ ८ ॥

स्मरशराहतिनिर्मितसंज्वरं
करयुगं हसति स्म दमस्वसुः ।
अनपिधानपतत्तपनातपं
तपनिपीतसरः सरसीरुहम् ॥ ९ ॥

स्मरेति ॥ दमस्वसुर्भैम्याः करयुगं स्मरशरैराहतिर्हननं तया निर्मितः कृतः संज्वरः संतापो यस्य एवंभूतं सत्तपेन ग्रीष्मेण निपीतं सरस्तस्मिन्विद्यमानं सरोरुहं कमलं हसति स्म । तत्तुल्यं जातमित्यर्थः । किंभूतं कमलम्—अनपिधानो निष्प्रतिबन्धः पतंस्तपनातपः सूर्यातपो यस्मिन् । ग्रीष्मसंबन्धिकमलवदतितरां संतापोऽनुभूयत इत्यर्थः ॥ ९ ॥

मदनतापभरेण विदीर्य नो
यदुदपाति हृदा दमनस्वसुः ।
निबिडपीनकुचद्वययन्त्रणा
तमपराधमधात्प्रतिबध्नती ॥ १० ॥

मदनेति ॥ दमनस्वसुर्हृदा हृदयेन मदनतापभरेण मदनजनितज्वरबाहुल्येन कृत्वा विदीर्य स्फुटित्वा यद् नो उदपात्युत्पतितम्, निबिडं निरन्तरं पीनं पीवरं कुचद्वयं तेन कृता यन्त्रणा बन्धनं प्रतिबध्नती सती तं

---

१ चापजरविजत्तापयोः साम्यमादाय मुखचन्द्रयोः साम्यं ग्लापनेन प्रत्याय्यम्, तदर्थं च कुसुमचापस्य रविणा साम्यं प्रत्यायितम्, मुखस्य पुनः कोमलत्वोक्तिः, तापसमाकुलत्वौचित्यायेति । २ अत्र कमलसाम्यमनुचितमिव भासते। निदर्शना चात्रालङ्कारः,'निदर्शना । अभवद्वस्तुसम्बन्ध उपमापरिकल्पकः ।'इति प्रकाशकारोक्तेः ।

१उष्मणो जलाशयत्वं व्यज्यते । मज्जनेऽपि धृतत्वानुक्तेर्विशेषोक्तिः । धृतत्वोक्तिश्च विरोधमाभासयतीति । यदिनाऽसम्भावितस्याप्यर्थस्य तथोक्तेरतिशयोक्तिश्च । २ अत्रानुप्रासः, शब्दालङ्कार उपमाऽर्थालङ्कारश्च ।

विदीर्यानुत्पतनलक्षणमपराधमधाद्धार। विरहसंतापभराद्भैमीहृदयं विदीर्य गन्तुकामं जातमपि स्तनद्वयेन तमपराधं सोढ्वापि रक्षितम्। अन्यथा गतमेव स्यात्। स्तनद्वयस्यायमपराधो न तु हृदयस्य। अथ च तमपराधमधात्पीतवती। उत्पतनशीलस्य वस्त्रादेः पाषाणादिना कृता यन्त्रणा प्रतिबन्धं करोति। पूर्वनिपातभिया पूर्वं पीनशब्दस्योत्तरेण समासं कृत्वा निविडपदेन समासः कर्तव्यः। अधात्, घाघ्धेटोरपि लुङि 'घुमास्थागापाजहातिसां हलि ६।४।६६" इति सिचो लुकि रूपम्। १०

**निविशते यदि शूकशिखा पदे**
**सृजति सा कियतीमिव न व्यथाम्।**
**मृदुतनोर्वितनोतु कथं न ता-**
**मवनिभृत्तु निविश्य हृदि स्थितः॥११॥**

चिन्तामाह—

निविशत इति॥ 'शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे' इत्यमरः। शूकशिखा धान्यकण्टकाग्रमात्रं पदे चरणे यदि निविशते प्रविशति सा शूकशिखा कियतीमिव व्यथां न सृजति करोति, अपि तु महतीं पीडां करोति। अतः कारणान्मृदुतनोरतिसुकुमार्या भैम्या हृदि निविश्य प्रविश्य स्थितोऽवनिभृत्पर्वतो नलश्च, तु पुनस्तां व्यथां कथं न वितनोतु करोतु, करोत्येव। नलस्तु तस्या हृदयं प्रविश्य स्थितः परं तया न प्राप्तः। अतस्तं सर्वदा विचिन्तयन्त्यास्तस्या भूयसी व्यथा जातेति भावः। इवशब्दो वाक्यालंकारे। निविशते, 'नेर्विशः १।३।१७' इति तङ्॥ ११॥

**मनसि सन्तमिव प्रियमीक्षितुं**
**नयनयोः स्पृहयान्तरुपेतयोः।**
**ग्रहणशक्तिरभूदिदमीययो-**
**रपि न संमुखवास्तुनि वस्तुनि॥१२॥**

चिन्तया विषयान्तराग्रहणमाह—

मनसीति॥ इदमीययोरेतदीययोर्नयनयोः संमुखे अग्रे वास्तु स्थानं यस्यैवंभूते पुरोवर्तिन्यपि वस्तुनि घटादौ ग्रहणशक्तिः ज्ञानसामर्थ्यं नाभूत्। किंभूतयोः— मनसि सन्तं स्थितं प्रियं नलमीक्षितुं स्पृहयेव वाञ्छयेवान्तर्हृदयदेशमुपेतयोः। विरहव्यथया नेत्रयोर्निम्नदेशत्वेन निःसहत्वात्पुरःस्थितमपि ताभ्यां ग्रहीतुं न शक्यते। तत्रान्तर्गतत्वे प्रियालोकनवाञ्छायाः कारणत्वेनोत्प्रेक्षा। इदमीययोः,त्यदादित्वाद् वृद्धाच्छः॥ १२॥

**हृदि दमस्वसुरश्रुझरप्लुते**
**प्रतिफलद्विरहात्तमुखानतेः।**
**हृदयभाजमराजत चुम्बितुं**
**नलमुपेत्य किलागमि तन्मुखम्॥१३॥**

चिन्तानुभावं रोदनं मुखानतिं चाह—

हृदीति॥ विरहेणात्ता स्वीकृता मुखानतिर्मुखनम्रता यया तस्या दमस्वसुर्भैम्याः अश्रुझरप्लुते बाष्पप्रवाहपरिपूर्णे हृदि वक्षसि प्रतिफलत्प्रतिबिम्बितं तत्तादृगाननं मुखं कर्तृ हृदयभाजं हृदयमध्यवर्तिनं नलं चुम्बितुमुपेत्य समीपं गत्वा आगमि किल आगमिष्यदिवाराजत शुशुभे। विरहवशान्मुखं नम्रं जातम्, अश्रु च निर्गतमित्यर्थः। विरहेणात्ता या मुखानतिस्तस्या हेतोः प्रतिफलदिति वा। तं नलमिति वा। आगमि 'भविष्यति गम्यादयः३।३।३' इति साधु॥ १३॥

**सुहृदमग्निमुदश्वयितुं स्मरं**
**मनसि गन्धवहेन मृगीदृशः।**
**अकलि निःश्वसितेन विनिर्गमा-**
**नुमितनिह्नुतवेशनमायिता॥ १४॥**

चिन्तानुभावं निःश्वासमाह—

सुहृदमिति॥ मृगीदृशो भैम्या निःश्वसितेन निःश्वासलक्षणेन गन्धवहेन मलयानिलेन मनसि विद्यमानं सुहृदं स्मरं स्मरलक्षणमग्निमुदश्वयितुमुत्तेजयितुं विनिर्गमेन निःसरणेनानुमितमनुमानज्ञानविषयीकृतं निह्नुतवेशनं गुप्तप्रवेशनं यस्य स चासौ मायी च तस्य भावस्तत्ता सा अकलि अङ्गीकृता। अभ्यस्तेत्यर्थः। विरहान्निःश्वासवायुर्बहिर्निःसरति,बहिर्निःसरणं चान्तःप्रवेशनं विनानुपपद्यमानं सत्तमनुमापयति। वायुना स्वभिन्नस्य स्मराग्नेर्वर्धनार्थमन्तःप्रवेशः कृत इवेत्युत्प्रेक्षा। बाह्येन वायुनाऽन्तः प्रविश्य

---

१ अत्र हृदं उत्पतने कुचद्वययन्त्रणाया हेतुत्वासम्भवेऽपि हेतुत्वोक्तेरतिशयोक्तिः। २ कियतीमिवेत्यादावुत्प्रेक्षा।

१ सन्तमिवेत्युत्प्रेक्षा। २ हृदोऽश्रुझरप्लुतत्वोक्त्या तटाकत्वं प्रत्यायितं, तथा प्रत्यायिते च तत्र मुखप्रतिबिम्बनमतिशयोक्त्या सम्भाव्य चिन्त्यमाननलास्यचुम्बनार्थमवतरणरूपेणोत्प्रेक्षणादुत्प्रेक्षा। चिन्त्यमानत्वेनान्तःस्थस्य नलस्य चुम्बनीयत्वासम्भवेऽपि तथोक्तिरपि कविप्रौढोक्तिरिति बोध्यम्।

निःश्वासरूपेण बहिर्निर्गतमिवेत्यर्थः । विरहवशाद्दीर्घ निःश्वासो जात इति भावः । अन्योऽपि मायी दुर्गमध्ये स्थितस्य मित्रस्य बहिर्निर्गमनार्थं गुप्तं प्रविशति, निर्गमानन्तरं तस्य गुप्तप्रवेशो दुर्गस्थैरनुमीयते । पद्मिनीत्वान्निःश्वासस्य गन्धवहत्वम् । 'व्रीह्यादिभ्यश्च५।२।११६' इतीनि मायी ॥ १४ ॥

विरहपाण्डिमरागतमोमषी-
शितिमतन्निजपीतिमवर्णकैः ।
दश दिशः खलु तद्दृगकल्पय-
ल्लिपिकरी नलरूपकचित्रिताः ॥ १५ ॥

विरहेति ॥ तद्दृक् भैमीदृष्टिलक्षणा लिपिकरी चित्रकारिणी विरहेण जनितः पण्डिमा पाण्डुरत्वं, तया रागोऽनुरागो लोहितिमा च, तमो मूर्छा तल्लक्षणा मषी तस्याः शितिमा कृष्णता स प्रसिद्धो निजः स्वीयः पीतिमा गौरत्वं एतद्रूपैर्वर्णैः कृत्वा । खलु अप्यर्थः । दशापि दिशः नलरूपकैर्नलप्रतिच्छन्दकैः चित्रिताश्चित्रयुक्ता अकल्पयत् । पाण्डिमा तु मुख एव प्रकटः, अन्यत्र तु पीतिमा स चासौ निज इति विग्रहः।निजो दृक्संबन्धी, तस्या भैम्याः सहजो यः पीतिमेति वा । विरहवशात्पाण्डिमादयो वर्णा जाताः । उन्मादवशाद्दशस्वपि दिक्षु नलमेवापश्यादिति भावः । खल्विवार्थे वा । लिपिकरीवेत्युत्प्रेक्षा । लिपिकरी, 'दिवाविभा—३।२।२१' इति टे टित्वान्ङीप्[२] ॥ १५ ॥

स्मरकृतां हृदयस्य मुहुर्दशां
बहु वदन्निव निःश्वसितानिलः ।
व्यधित वाससि कम्पमदः श्रिते
त्रसति कः सति नाश्रयबाधने ॥१६॥

स्मरकृतामिति ॥ निःश्वसितानिलो निःश्वासवायुः भैम्या हृदयस्य स्मरकृतां दशां पीडां मुहुः बह्वतिशयेन सखीजनस्य पुरस्ताद्वदन्निव कथयन्निव अदो हृदयं श्रिते आश्रिते वाससि कम्पं व्यधित चकार।विरहवशान्निःश्वासानां बाहुल्यात्तस्या हृदयं चकम्पे, तत्कम्पवशाद्वस्त्रमपि चकम्प इत्यर्थः । उचितमेतत् । आश्रयस्य बाधने पीडायां सत्यामाश्रितः को हि न त्रसति बिभेति, अपि तु सर्वो बिभेत्येव । कम्पितहृदयाश्रितस्य वस्त्रस्यापि कम्पो युक्तः । वदन्निति, वदितुमिति हेतौ शता । योऽविचारं बहु वदति सोऽप्यधरादिकम्पं करोति[१] ॥ १६ ॥

करपदाननलोचननामभिः
शतदलैः सुतनोर्विरहज्वरे ।
रविमहो बहुपीतचरं चिरा-
दनिशतापमिपादुदसृज्यत ॥ १७ ॥

संततमन्तर्ज्वरमाह—

करेति ॥ सुतनोर्भैम्या विरहज्वरे वियोगजनिते ज्वरे करपदाननलोचनानि नामानि संज्ञा येषां तत्संज्ञैः शतदलैः कमलैः दिने बहु अपरिमितं पीतचरं पूर्वं पीतं रविमहः सूर्यतेजः अनिशतापमिषात्संततसंतापव्याजाच्चिराच्चिरकालमुदसृज्यत उत्सृज्यते स्म । करकमलमित्यादि ॥ १७ ॥

उदयति स्म तदद्भुतमालिभि-
र्धरणिभृद्भुवि तत्र विमृश्य यत् ।
अनुमितोऽपि च बाष्पनिरीक्षणा-
द्व्यभिचचार न तापकरो नलः ॥१८॥

अश्रुपातमाह—

उदयतीति ॥ आलिभिः सखीभिस्तत्र तस्यां धरणिभृद् राजा भीमस्तस्माद्भूरुत्पत्तिर्यस्यास्तस्यां भैम्यां विमृश्य विचार्य बाष्पनिरीक्षणादश्रुदर्शनादपि तापकरोऽनुमितो नलः यन्न व्यभिचचार तत् अव्यभिचारलक्षणमद्भुतमुदयति स्म उदितम् । अपिश्चकारार्थो वा । अकथितेऽश्रुदर्शनमात्रादेव नलविरहजनितमेवेदमिति यत्तासां निश्चयज्ञानं तदाश्चर्यमित्यर्थः । पूर्वं पाण्डुत्वादिना नलस्य तापकारित्वमनुमितम्, अश्रुदर्शनादपीति । अपि

१ अत्र स्मरे अग्नित्वारोपात्, निःश्वसिते च गन्धवहत्वारोपात् रूपकम् । प्रवेशः कृत इवेत्यर्थाङ्गीकारे गम्योत्प्रेक्षा । अन्योऽपीत्याद्युक्तव्यवहारप्रतीतेश्च समासोक्तिरर्थालङ्कारः । २लिपिकरीवेत्युत्प्रेक्षा खलुपदद्योत्या । दशो लिपिकरीत्वेन रूपणाद् रूपकम् ।

१ वदन्निवेत्युत्प्रेक्षा । निःश्वसितानिल इति रूपकम् । त्रसति क इत्यर्थान्तरन्यासश्च । २ करादौ शतदलत्वारोपाद्रूपकं मिषादित्यपह्नुतिश्च । तादृशशतदलकर्तृकत्वेन रविपानासम्भवेऽपि तथोक्तेरतिशयोक्तिश्च । अन्तश्चरं कमपि भुक्त्वा यथाशुद्धान्तजनः केनापि मिषेण निःसारयति तथेति प्रतीतेः । समासोक्तिश्चाथालङ्कारः ।

चेति समुच्चयार्थो वा । पर्वते बाष्पदर्शनाद्वह्न्यनुमितिराश्चर्यकारिणी भवति तद्वद्बाष्पदर्शनानुमितवह्नेर्यत्तापकारित्वं तदाश्चर्यम् । 'बाष्पमश्रुजलोष्मणोः' इति विश्वः । उदयाति 'इ गतौ' भौवादिकस्य रूपम् ॥ १८ ॥

हृदि विदर्भभुवः प्रहरञ्शरै
रतिपतिर्निषधाधिपतेः कृते ।
कृततदन्तरगस्वदृढव्यथः
फलदनीतिरमूर्च्छदलं खलु ॥ १९ ॥

हृदीति ॥ रतिपतिः कामः निषधाधिपतेर्नलस्य कृते नलव्यधार्थं विदर्भभुवो भैम्या हृदि शरैः प्रहरन्प्रहारं कुर्वन्नलनिमित्तं भैमीं पीडयन्स्वयमेवालमत्यर्थममूर्च्छत् मूर्च्छां प्राप । यतः किंभूतः—कृतः तदन्तरगस्य भैमीहृदयमध्यवर्तिनः स्वस्यात्मनो दृढो व्यथस्ताडनं येन सः खलु एवंविध इव । अत एव फलन्ती फलदा अनीतिर्यस्य । कामो नलश्च भैम्या हृदयवर्तिनौ,कामश्च स्ववैरिणो नलस्य प्रहारं कुर्वन्भैमीहृदयं प्रहृतवान् । ततश्चात्मानमेव प्रहृतवान्न तु नलम् । योद्धा ह्यात्मानं रक्षित्वा परं प्रहरति, अनेन तु नलार्थं भैमीहृदयं प्रहृतम्, तेन फलदनीतिना स्वयमेव मूर्च्छितम् । अथ मदनो मूर्च्छया अधिकीभवंस्तामतितरां पीडयति स्मेति भावः । नलव्यधलक्षणा नीतिः फलदेति वा । अन्यवधार्थमन्यस्य प्रहार इत्यनीतिः । 'मूर्च्छा मोहसमुच्छ्राययोः' । कृते तादर्थ्ये विभक्तिप्रतिरूपकमव्ययम् ॥ १९ ॥

विधुरमानि तया यदि भानुमा-
न्कथमहो स तु तद्धृदयं तथा ।
अपि वियोगभरास्फुटनस्फुटी-
कृतदृषत्त्वमजिज्वलदंशुभिः ॥ २० ॥

शङ्कामाह—

विधुरिति ॥ तया भैम्या विधुश्चन्द्रो यदि भानुमान्सूर्योऽमानि दाहकत्वाच्चन्द्र एव सूर्यत्वमारोपितं चेत्तर्हि स तु पुनः सूर्यः वियोगभरेण विरहबाहुल्येनापि यदस्फुटनमविदीर्णत्वं तेन स्फुटीकृतं दृषत्त्वं पाषाणत्वं यस्य येन वा एवंविधमतिकठिनमपि तस्या हृदयमंशुभिः कृत्वा कथं तथा अनिर्वाच्यमजिज्वलद्दाह । नह्यारोपितेऽग्नित्वे अग्नितुल्योऽयमिति तस्य दाहसामर्थ्यं, पाषाणदाहे त्वनिर्वाच्यम् । अत एव अहो आश्चर्यम् । मानितेऽपि सूर्यत्वे विरहिणः सूर्यस्य च परस्परमित्रत्वात्कथं दाहकत्वम् । अत एवाश्चर्यम् । यदि चन्द्रः सूर्यो मानितो, न तु तात्त्विकस्तर्हि तापातिभरास्फुटनलक्षणेन साम्येन प्रकटीकृतं सूर्यकान्तत्वं येनैवंविधं भैमीहृदयं करैः कृत्वा कथं तथाऽजिज्वलत् ? चन्द्रस्य कुत्रापि दाहकत्वमदृष्टचरमश्रुतचरं च । सूर्यस्य तु प्रसिद्धम् । अतोऽयं तात्त्विकः सूर्य एव । अन्यच्च सूर्यकान्तज्वलनं सूर्य एव करोति,न त्वन्यः, अतस्तात्त्विकः सूर्य एव, न त्वारोपित आरोपितत्वादाश्चर्यमित्यर्थः । विरहित्वाच्चन्द्रकिरणास्तया न सोढा इति भावः ॥ २० ॥

द्वाभ्यां मृतिं सूचयति—

हृदयदत्तसरोरुहया तया
क सदृगस्तु वियोगनिमग्नया ।
प्रियधनुः परिरभ्य हृदा रतिः
किमनुमर्तुमशेत चितार्चिषि ॥ २१ ॥

हृदयेति ॥ विरहाग्निपीडितत्वान्निःसहया शैत्यार्थं हृदये दत्तं सरोरुहं कमलं यया तया भैम्या सदृक् तुल्या क कस्मिन्देशे अस्तु अपि तु तत्तुल्याऽन्या कापि कुत्रापि नास्ति । रतिर्भवेदित्याशङ्क्य दूषयति—रतिः प्रियधनुः हृदा परिरभ्यालिङ्ग्य अनुमर्तुं मदनस्य पश्चान्मरणार्थं चितार्चिषि चिताऽग्नौ किमशेत निद्रिता, अपि तु न । तस्माद्रतिः समाना न । क्षत्रियाणां देशान्तरे मृतानां स्त्रियो धनुरालिङ्ग्यानुम्रियन्त इत्याचारः । विरहसंतप्तत्वाच्छीतलत्वोपचारः । विप्रयोगस्य वह्नित्वं व्यङ्ग्यं चितार्चिषीत्यनेन । 'तदारातिः' इति पाठः समीचीनः । सदृक्, 'समानान्ययोश्चेति वक्तव्यम्' इति क्विन् । 'दृग्दृशवतुषु ६ । ३ । ८९' इति समावेः ॥ २१ ॥

---

१ धराणिभृद्वद्भुवि धराणिभृत्त्ववारोपणाद्रूपकमार्थम् नले चानलत्वारोपेःश्लेषोत्थापि तत्र बाष्पमुष्मेत्यनुमिता साधकम्, जलमिति बाधकं चेति बाधकपक्षे व्यभिचारा भावोक्तौविशेषोक्तिःअनुमितोऽपि व्यभिचचार यत्र तापकरइति विरोधश्च । २ वैदर्भ्या हृदयताडनेन ताडयितुस्ताड नमसङ्गतमित्यसङ्गतिः । खल्विति पदद्योत्योत्प्रेक्षा च । अनुप्रासस्तु शब्दालङ्कारः

१ अत्र कल्पितस्य सूर्यस्य सूर्यत्वमेव द्रढयितुं तथोक्तेरपह्नुतिः । २ अत्र तस्या एव वस्तुगत्या रवित्वमनुमापितम् । यद् हृदि सरोरुहरूपं स्मरधनुर्निधाय तद्विरहे मर्तुं शेत इति व्यज्यते । आक्षेपश्च वाच्योऽलङ्कारः । व्यतिरेकोऽप्येवम् ।

अनलभावमियं स्वनिवासिनो
न विरहस्य रहस्यमबुध्यत।
प्रशमनाय विधाय तृणान्यसू-
ञ्ज्वलति तत्र यदुज्झितुमैहत ॥ २२ ॥

अनलेति ॥ इयं भैमी स्वनिवासिनः स्वीयस्य विरहस्य रहस्यं तात्त्विकमनलभावमग्नित्वं नाबुध्यत नाजानात्। यद्यस्मात् तत्र विरहे ज्वलति दीप्यमाने सति असून्प्राणांस्तृणानीव कृत्वा प्रशमनाय विरहवह्निशान्त्यर्थमुज्झितुं त्यक्तुमैहत ऐच्छत्। विरहस्य वह्नित्वं चेज्ज्ञातं स्यात्तच्छान्त्यर्थं तृणक्षेपं न कुर्यात्। अतो विरहस्य वह्नित्वं नाजानादित्यर्थः। किं तु स्वीयविरहस्य अनलभावं नलस्य भावः प्राप्तिस्तदभावं नलप्राप्त्यभावलक्षणं रहस्यं मूलकारणं नाज्ञासीत्, अपि तु जानाति स्मैव। नलविरहे मरणमेव ज्यायो न तु जीवनमित्यैच्छदिति भावः। यतः स्वविरहस्य रहस्यं स्वेन ज्ञायते, तस्मात्स्वीयान्प्राणान्प्रशमनायोद्भटाय यमाय तृणतुल्यान्कृत्वा त्यक्तुमैच्छत्। एतच्च दुःसहत्वज्ञानेन विना न घटते। विरहस्याग्निवद्दुःसहत्वं जातमिति भावः। 'शमनो यमराड्यमः' इत्यमरः ॥ २२ ॥

प्रकृतिरेतु गुणः स न योषितां
कथमिमां हृदयं मृदु नाम यत्।
तदिषुभिः कुसुमैरपि दुन्वता
सुविवृतं विबुधेन मनोभुवा ॥ २३ ॥

प्रकृतिरिति ॥ नाम प्रसिद्धौ। योषितां हृदयमन्तःकरणं मृदु कोमलमिति यत् प्रकृतिः स्त्रीणां स्वाभाविको गुणः, इमां योषितं भैमीं कथं कुतो नैतु न प्राप्नोतु, अपि तु प्राप्तः। इमां प्राप्त इत्यस्मिन्नर्थे प्रमाणमाह—विबुधेन देवेन, विदुषा च मनोभुवा कामेन कुसुमैरपि पुष्परूपैरपीषुभिर्बाणैर्हृदयं दुन्वता पीडयता सता तन्मृदुत्वलक्षणं प्रमेयं सुविवृतं सुतरां स्पष्टीकृतम्। यदि स गुणो न स्यात्तर्हि पुष्पबाणैः पीडा न स्यात्। सा तु जाता तस्मात्स गुणः समायात इति सुतरां मदनबाणैः पीडितेति भावः। दुर्बोधं प्रमेयं विदुषा विविच्यते ॥ २३ ॥

निर्वेदानुभावं बहिरनिर्गममाह—

रिपुतरा भवनादविनिर्यतीं
विधुरुचिर्गृहजालबिलैर्नुताम्।
इतरथाऽऽत्मनिवारणशङ्कया
ज्वरयितुं विशवेशधराविशत् ॥ २४ ॥

रिपुतरेति ॥ विधुरुचिश्चन्द्रकान्तिः भवनाद्गृहादविनिर्यतीं बहिरनिर्गच्छन्तीं तां भैमीं ज्वरयितुं संतापयितुं गृहजालबिलैर्गृहगवाक्षच्छिद्रैरविशत्। किंभूता—यतो रिपुतरा विरहित्वादतिवैरिणी तथा—विशवेशधरा विशरूपधारिणी। विशरूपधारित्वे हेतुमाह—इतरथान्यथा आत्मनिवारणशङ्कया आत्मनिषेधभिया। वैरिण्या चन्द्रदीप्त्या वैरिणी भैमी वध्या, सा च तद्भिया बहिर्न निर्गच्छति। अतः पद्मदण्डसमाना चन्द्रदीप्तिस्तां हन्तुं संतापशान्त्यर्थं शरीरस्थापितानां बिसानां रूपेण जालमार्गेणान्तरेव प्रविष्टा। वैरिणो मुख्यमार्गेण प्रवेशाभावाद्गवाक्षैरेव प्रविष्टा न तु स्वरूपेण। अन्तर्गतवैरिमारणार्थमियमेव रीतिरन्येनाप्यनुष्ठीयते अविनिर्यतीमिति इणः शतरि रूपम् ॥ २४ ॥

हृदि विदर्भभुवोऽश्रुभृति स्फुटं
विनमदास्यतया प्रतिबिम्बितम्।
मुखदगोष्ठमरोपि मनोभुवा
तदुपमाकुसुमान्यखिलाः शराः ॥२५॥

अतिरिक्तां भ्रशानतिमाह—

हृदीति ॥ मनोभुवा कामेन तदुपमाकुसुमानि मुखनयनोष्ठोपमायोग्यानि कुसुमानि कमलनीलोत्पलबन्धूकानि अखिलाः शराः पूर्वोक्तकुसुमरूपाः पञ्चापि बाणा अश्रुभृति अश्रुपूर्णे विदर्भभुवो भैम्या हृदि दुःखवशाद्विनमदास्यतया नम्रमुखत्वेन प्रतिबिम्बितं प्रतिफलितं मुखदगोष्ठमेव अरोपि समारोपितं, स्फुटमुत्प्रेक्षते। प्रकटं

१ नाबुध्यतेति दृढयितुं प्रशमनायेत्यादीति अनुमानम्। विरहस्य न नलभावो नलविषया रतिर्यत्र तत् तादृशं रहस्यं नाबुध्यत किंतु। नलस्य भावस्तल्लक्षणया तदग्निमबुध्यत, अथैवं नलस्यान्तः सिद्धत्वे किमिति ज्वलेति केनाप्यन्येन स्पृष्टा जाताऽस्मीति प्रशमनायेत्याद्युक्तमिति काव्यलिङ्गम्।

१ अत्र मृदुत्वं कुसुममात्रप्रहारेण व्यथितत्वमनुमापयतीत्यनुमानम्। शत्रुवृत्तान्तस्य प्रतीयमानत्वात् समासोक्तिश्च। २ विलैर्निवत्युत्प्रेक्षा। इतरथेत्यनेन रिपुत्वं साधितमिति अनुमानम् अनयोरङ्गाङ्गित्वात्सङ्करश्च। २ तेषामुपमेति तस्या अनुरूपाणीति तथाभूतानि यानि कुसुमानीति शाकपार्थिवादित्वान्मध्यमपदलोपे यथोक्तं साधु।

प्रतिबिम्बितमिति वा । प्रतिबिम्बितं भैमीमुखद्रगोष्ठमेव भैमीवधार्थं कामेन पञ्चापि बाणाः प्रायेण समारोपिता इत्यर्थः । पीडावशादश्रु, नम्रमुखत्वं च तस्या जातमिति भावः । मुखद्रगोष्ठम् शरा इति व्यस्तरूपकम् । प्राण्यङ्गत्वादेकवद्भावः ॥ २५ ॥

विरहपाण्डुकपोलतले विधु-
र्व्यधित भीमभुवः प्रतिबिम्बितः ।
अनुपलक्ष्यसितांशुतया मुखं
निजसखं सुखमङ्कमृगार्पणात् ॥२६॥

विरहेति ॥ विधुश्चन्द्रः भीमभुवो भैम्या विरहेण पाण्डुनि कपोलतले प्रतिबिम्बितः सन् भैमीमुखमङ्कमृगस्य कलङ्कमृगस्यार्पणादङ्के मुखमध्ये वा मृगस्यारोपणात्सुखमनायासेन निजसखं स्वीयं मित्रं व्यधित चकार । कया—अनुपलक्ष्याः विवेकेन ज्ञातुमयोग्याः सिता अंशवः किरणा यस्य चन्द्रस्य तस्य भावस्तत्ता तया । चन्द्रकपोलयोः पाण्डुत्वात्प्रतिबिम्बितस्यापि चन्द्रस्यानुपलब्धिः । कलङ्कस्य श्यामत्वादुपलब्धिः । ततश्च मृगाङ्कलाभाद्वदनस्य निजमित्रत्वं युक्तमित्यर्थः । सवर्णे स्थितं सवर्णं शङ्खदुग्धादिवन्न लक्ष्यते । विरहात्पूर्वं मुखस्य गौरवात्प्रतिबिम्बितश्चन्द्रः पृथग्लक्ष्यते स्म, विरहे तु पाण्डुनि मुखे सवर्णत्वाच्चन्द्रो न दृश्यते । अतो भैमीमुखं चन्द्र एवेति सर्वस्यापि प्रतीतिरभूत् । पूर्वमतिचन्द्रं मुखमासीत्, अधुना तु चन्द्रतुल्यं पाण्डुरं जातमिति भावः । अन्येन चतुरेण किंचिदुत्कृष्टं वस्तु दत्त्वा सख्यं संपादनीयमित्युक्तिः । दुष्टो निर्दोषेऽपि स्वसंसर्गिणि स्वदोषं संक्रमय्य साम्यं करोति । निजसखम्, 'राजाहःसखिभ्यष्टच् ५।४।९१' इति टच् ॥ २६ ॥

विरहतापिनि चन्दनपांशुभि-
र्वपुषि सार्पितपाण्डिममण्डना ।
विषधराभबिसाभरणा दधे
रतिपतिं प्रति शंभुविभीषिकाम् ॥२७॥

विरहेति ॥ सा भैमी रतिपतिं कामं प्रति शंभुसंबन्धिनीं विभीषिकां भयानकतां दधेऽङ्गीकृतवती । किंभूता—विरहतापिनि विरहसंतप्ते वपुषि संतापेन शुष्कत्वाच्चन्दनपांशुभिश्चन्दनरजोभिरर्पितं विरचितं पाण्डिमा पाण्डुरत्वमेव मण्डनमलंकारो यस्याः सा । तथा—दैर्घ्याच्छुष्कत्वाच्च विषधराभानि वासुक्यादिसर्पतुल्यानि बिसाभरणानि बिसालंकरणानि यस्याः सा । भस्मपाण्डुरं सा ( सर्पालंकरणं मदीयं वपुर्दृष्ट्वा शंभुभ्रान्त्या भीतः कामो मां न पीडयिष्यतीति बुद्ध्या चन्दनबिसानि धृतानीति भावः ॥ २७ ॥

विनिहितं परितापिनि चन्दनं
हृदि तया धृतबुद्बुदमाबभौ ।
उपनमन्सुहृदं हृदयेशयं
विधुरिवाङ्कगतोडुपरिग्रहः ॥ २८ ॥

विनिहितमिति ॥ परितापिनि विरहसंतप्ते हृदि तया भैम्या विनिहितं निक्षिप्तं धृतं बुद्बुदं धृतचन्द्रकं चन्दनं विधुरिव चन्द्र इवाबभौ शुशुभे । किंभूतो विधुः—हृदयेशयं हृदि विद्यमानं सुहृदं काममुपनमन्नुपागच्छन् । तथा—अङ्कगतः समीपमागतः उडवो नक्षत्राण्येव परिग्रहो यस्य । अथ च—स्त्रीत्वादुत्सङ्गवर्तिनक्षत्रसमूहः । घनस्य चन्दनस्य चन्द्रतुल्यत्वं, बुद्बुदानां च नक्षत्रतुल्यत्वम् । अन्योऽपि सपरिग्रहो मित्रमुपागच्छति । हृदयेशयम्, 'शयवासवासिष्वकालात् ६।३।१८' इति सप्तम्या अलुक् ॥ २८ ॥

स्मरहुताशनदीपितया तया
बहु मुहुः सरसं सरसीरुहम् ।
श्रयितुमर्धपथे कृतमन्तरा
श्वसितनिर्मितमर्मरमुज्झितम् ॥ २९ ॥

स्मरेति ॥ स्मर एव हुताशनोऽग्निस्तेन दीपितया तया भैम्या बहुनेकं सरसमार्द्रं सरसीरुहं कमलं श्रयितुमाश्रयितुं मुहुर्वारंवारमर्धमार्गे कृतं श्वसितेन निःश्वासवायुना निर्मितो मर्मरः शुष्कपर्णध्वनितं यस्यैवंभूतं निरुपयोगित्वादन्तरा मध्य एव निकटमनीत्वैवोज्झितं त्यक्तम् । संतापाधिक्यं सूचितम् । 'अथ मर्मरः । स्वनिते वस्त्रपर्णानाम्' इत्यमरः । अर्धपथे 'अर्धं नपुंसकम् २।२।२४' इति समासः । 'ऋक्पूरब्धूःपथामानक्षे ५।४।७४' इति समा-

---

१ कुसुमानां मुखाद्यभेदमभिसन्धाय प्रतिबिम्बितत्वेन तद्बाणारोपणं साधितमिति अनुमानम् । २ अत्र प्रतिबिम्बितस्यानुपलक्षितत्वोक्त्या सामान्यमलङ्कारः । नच तद्गुण, स्वगुणं परिहाय परगुणाग्रहणात् । नचोपमाऽपि, साधर्म्यानुक्तेः ।

१ विषधराभेत्युपमा विभीषिकामिवेति गम्योत्प्रेक्षा । २ विधुरिवेत्युत्प्रेक्षेति केचित्, उपमेत्यन्ये ।

सान्तः। 'अर्धपथम्' इति पाठे 'कालाध्वनोरत्यन्तसंयोगे २।३।५' इत्यनेनात्यसंयोगे द्वितीया ॥ २९ ॥

प्रियकराग्रहमेवमवाप्स्यति
स्तनयुगं तव ताम्यति किं न्विति।
जगदतुर्निहिते हृदि नीरजे
दवथुकुड्मलनेन पृथुस्तनीम् ॥३०॥

प्रियेति ॥ हृदि निहिते स्थापिते नीरजे कर्तृणी दवथुना सन्तापेन कुड्मलनं संकोचः, तेन कृत्वा पृथुस्तनीं भैमीं प्रति इति जगदतुरिव। इति किम्—भैमि, तव स्तनयुगं एवमस्मन्मुकुलीकृतग्रहणरीत्या एवमनेन प्रकारेण मम यथा संकोचो जातस्तथा तदाकारेण वा प्रियकराग्रहं नलपाणिसंबन्धं प्राप्स्यति, किं नु ताम्यति ग्लायति। नुः प्रश्ने। ग्लानिर्न कार्येत्यर्थः। सन्तापवशात्कमलसङ्कोचः ॥ ३० ॥

त्वदितरोऽपि हृदा न मया धृतः
पतिरितीव नलं हृदयेशयम्।
स्मरहविर्भुजि बोधयति स्म सा
विरहपाण्डुतया निजशुद्धताम् ॥ ३१ ॥

त्वदिति ॥ सा हृदयेशयं नलं विरहेण या पाण्डुता तया स्मर एव हविर्भुजि वह्नौ निजशुद्धतां स्वीयपातिव्रत्यमिति बोधयति स्मेव ज्ञापयति स्म। इति किम्—हे प्रिय, मया त्वदितरस्त्वत्तोऽन्यः पतिः हृदापि मनसापि न धृतः, क्व नु हस्तादिनेति। भैम्यन्तः कामः, पाण्डुता च विद्यत इति। अन्यापि सती वह्नौ स्वीयशुद्धतां पतिं बोधयति। 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ १।४।५२' इत्यनेन बुद्ध्यर्थत्वादणि कर्तुर्णौ कर्मत्वम् ॥ ३१ ॥

विरहतप्ततदङ्गनिवेशिता
कमलिनी निमिषद्दलमुष्टिभिः।
किमपनेतुमचेष्टत किं परा-
भवितुमैहत तद्दवथुं पृथुम् ॥ ३२ ॥

विरहेति ॥ विरहेण तप्ते तदङ्गे भैम्यङ्गे निवेशिता निक्षिप्ता कमलिनी निमिषन्ति संकुचन्ति दलानि पर्णान्येव मुष्टयस्तैः कृत्वा पृथुं महान्तं तद्दवथुं भैमीसंतापमपनेतुं दूरीकर्तुमचेष्टत किम् उद्योगं चक्रे, वा पराभवितुं मोहयितुमैहत ऐच्छत् किम्? अन्यदपि दुःखदं मुष्टिभिरपनीयते। सन्तापवशात्कमलिनी संकुचितेति भावः ॥ ३२ ॥

इयमनङ्गशरावलिपन्नग-
क्षतविसारिवियोगविषावशा।
शशिकलेव खरांशुकरार्दिता
करुणनीरनिधौ निदधौ न कम् ॥ ३३॥

विवशतामाह—

इयमिति ॥ इयं भैमी खरांशोः सूर्यस्य करैरर्दिता पीडिता शशिकलेव करुणसमुद्रे कं न निदधौ चिक्षेप, अपि तु सर्वानपि। किंभूता—अनङ्गशरावलिलक्षणाः पन्नगास्तैः क्षतं दंशनं तेन विसारि प्रसरणशीलं वियोग एव सन्तापकारित्वाद्विषं, तेन अवशा विह्वला। एवंविधां दृष्ट्वा सर्वेऽपि शुशुचुः। अन्योऽपि सर्पदष्टो विषविह्वलःसँल्लोकं करुणायां क्षिपति। अथ च सर्पदष्ट एव विषनिरासार्थं जलाशये क्षिप्यते, तया त्वन्य एव निक्षिप्त इत्याश्चर्यम्, कलाशब्देन भैम्या अतितनुत्वं सूचितम्। पन्नगक्षता चासौ विसारिवियोगविषावशा चेति वा॥३३॥

ज्वलति मन्मथवेदनया निजे
हृदि तयाऽऽर्द्रमृणाललताऽर्पिता।
स्वजयिनोस्त्रपया सविधस्थयो-
र्मलिनतामभजद्भुजयोर्भृशम् ॥ ३४ ॥

ज्वलतीति ॥ तया मन्मथवेदनया मदनजनितपीडया ज्वलति संतप्ते निजे हृदि अर्पिता निहिता आर्द्रमृणाललता सरसा मृणालवल्ली स्वजयिनोः कान्त्या मृणालजेत्रयोः सविधस्थयोः हृदयसमीपस्थितयोर्भुजयोःसकाशात्त्रपया लज्जया भृशमतितमां मलिनतामभजत्। संतापशान्त्यर्थं सरसा मृणाललता हृदये स्थापिता तदङ्गसङ्गवशान्म्लाना जाता। मृणालजेत्रहृदयस्थितमृणालसमीपस्थयोर्भैमीभुजयोर्लज्जया श्यामत्वं जनितमिति प्रतीयमानोत्प्रेक्षा। अन्योऽपि स्वजयिना सहैकत्र स्थितौ सत्यां

१ अत्र यमकं शब्दालङ्कारः। स्थगयितुमित्युक्तधर्मासम्बन्धेऽपि तथोक्तेरतिशयोक्तिः। २ किंन्विवित्युत्प्रेक्षा। ३ अत्रापि उत्प्रेक्षा।

१ अत्राप्युत्प्रेक्षा। २ अत्र शरावलेः पन्नगानां चाभेदारोपणाद्रूपकम्। कलेवेत्युपमा।

तन्मुखं पश्यन्मलिनो भवति । भुजयोः सविधस्थयोरिति सतिसप्तमी वा । अर्थात्ताभ्यामेव त्रपा ॥ ३४ ॥

पिकरुतिश्रुतिकम्पिनि शैवलं
हृदि तया निहितं विचलद्बभौ ।
सततत्द्गतहृच्छयकेतुना
हृतमिव स्वतनूघनघर्षिणा ॥ ३५ ॥

पिकरुतीति ॥ पिकरुतिश्रुत्या विरहित्वात्कोकिलालापश्रवणेनोत्कम्पिनि हृदि तया संतापनिवृत्त्यर्थं निहितं निक्षिप्तं हृदयस्य सकम्पत्वाद् विचलद्विशेषेण कम्पमानं शैवलं सततत्द्गतो निरन्तरभैमीगतो, हृद्गतो वा हृच्छयः कामस्तस्य केतुना ध्वजेन हृतमिव बभौ शुशुभे । किंभूतेन केतुना—स्वतनूं स्वशरीरं घनं निबिडं घर्षतीत्येवंशीलेन । मत्स्यो हि शैवले घर्षणं करोतीति जातिः । घर्षणस्य घनत्वं कम्पबाहुल्यसूचनार्थम् । निक्षिप्तेऽपि शैवले कोकिलालापस्तां दुनोति स्मेति भावः । हृच्छय इत्यत्र 'शयवास—' इति विकल्पितत्वाल्लुक् ॥ ३५ ॥

न खलु मोहवशेन तदाननं
नलमनः शशिकान्तमबोधि तत् ।
इतरथा शशिनोऽभ्युदये ततः
कथमसुस्रुवदस्रुमयं पयः ॥ ३६ ॥

बाष्पातिरेकमाह—

नेति ॥ नलमनो नलान्तःकरणं कर्तृ तत् सुन्दरम् । अथवा यत्सर्वदोन्मादवशेन पश्यति, तत्तदाननं भैमीमुखं कर्म उन्मादवशाच्छशिवत्कान्तं रमणीयं चन्द्रकान्तमणिविशेषरूपं न खलु नैवाबोधि । अबुद्धेति काकुः । किंतु सम्यगेवाबोधीत्यर्थः । किंतु तत्त्वत एव चन्द्रकान्तत्वं तस्य तेन ज्ञातमित्यर्थः । इतरथा पूर्ववदधुनापि भ्रान्तमेव चेत्तस्य चन्द्रकान्तत्वं तर्हि शशिनोऽभ्युदये सति ततो मुखादस्रुमयं बाष्परूपं पय उदकं कथमसुस्रुवत्स्रवति स्म । चन्द्रोदये चन्द्रकान्तादुदकं स्रवति नान्यस्मात् । चन्द्रोदये मुखाजलं स्रवति तर्हि तात्त्विकमेव चन्द्रकान्तत्वं, नतु भ्रान्तमित्यर्थः । चन्द्रवत्कान्तमिति पक्षे वैरिणा चन्द्रेण सह स्पर्धमानत्वात्तदुदये दुःखवशात्ततोऽस्रु कथं निःसृतं, वैरिण उदयेऽन्यस्यापि दुःखादस्रु निर्गच्छति न त्वन्यस्य, तस्मात् चन्द्रस्पर्धीति तत्त्वं ज्ञातम् । चन्द्रवत्कान्तः, चन्द्रः कान्तो यस्येति चोक्तौ चन्द्रमित्रत्वप्रतीतिः, ततश्च मित्रोदये आनन्दास्रु निर्गच्छति वा । चन्द्रोऽपि तां भृशमपीडयदित्यर्थः । असुस्रुवत्, 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८' ॥ ३६ ॥

रतिपतेर्विजयास्त्रमिपुर्यथा
जयति भीमसुताऽपि तथैव सा ।
स्वविशिखानिव पञ्चतया ततो
नियतमैहत योजयितुं स ताम् ॥ ३७ ॥

रतीति ॥ रतिपतेः कामस्य इषुर्यथा विजयास्त्रं विजयसंबन्धि विजयसाधनमस्त्रं जयति तथैव कामदेवबाणवदेव सा भीमसुतापि विजयसाधनमस्त्रं सर्वोत्कर्षेण वर्तते । कुतो ज्ञातमित्यत आह—तत एव हेतोः स कामः पञ्चतया पञ्चत्वसंख्यया स्वविशिखानिव स्वबाणानिव तां भैमीं नियतं नियमेन पञ्चतया योजयितुमैहत । पञ्चतया योजनं युक्तमिति छलना । अत्र मुमूर्षुतोक्ता । 'पञ्चता पञ्चभावः स्यात्पञ्चता मरणेऽपि च' इति विश्वः ॥ ३७ ॥

शशिमयं दहनास्त्रमुदित्वरं
मनसिजस्य विमृश्य वियोगिनी ।
झटिति वारुणमश्रुमिषादसौ
तदुचितं प्रतिशस्त्रमुपाददे ॥ ३८ ॥

शशिमयमिति ॥ वियोगिनी विरहव्यथिता असौ भैमी मनसिजस्य कामस्य शशिमयं चन्द्रलक्षणं दहनास्त्रमाग्नेयास्त्रमुदित्वरमुद्गमनशीलं विमृश्य विचार्य झटिति शीघ्रमश्रुमिषाद्बाष्पव्याजात्तदुचितमाग्नेयास्त्रविघातसमर्थं—वारुणं वरुणदैवतं प्रतिशस्त्रं आग्नेयास्त्रशत्रुभूतमस्त्रमुपाददेऽङ्गीचकार । चन्द्रोदयेऽसह्यत्वाद्भृशमरोदीदित्यर्थः । वारुणम्, 'सास्य देवता ४।२।२४' इत्यण् ॥ ३८ ॥

---

१ अत्र मृणालापेक्षया भुजयोराधिक्योक्तेर्व्यतिरेकः । शान्त्यर्थमाश्रितस्य स्वयं ग्लपितत्वमिति विषमम् । २ हृतमिवेत्युत्प्रेक्षा ।

१ नलमनःकर्तृकस्य तदाननाभिन्नशशिकान्तोपलत्वकर्मकबोधस्य सत्यत्वसाधनायेतरथेत्याद्युक्तमित्यनुमानम् । २ अत्र यथातथापदद्योत्योपमा । विशिखानिवेत्युत्प्रेक्षा । न चेयमप्युपमा, एहेतोत पदस्योत्प्रेक्षाया एवोपस्कारकत्वात् । ३ मनसिजस्य शशी न दहनास्त्रम् । अथापि तथोक्ते रूपकम् । अश्रुमिषादित्यपह्नुतिः ।

अतनुना नवमम्बुदमाम्बुदं
सुतनुरस्त्रमुदस्तमवेक्ष्य सा।
उचितमायतनिःश्वसितच्छला-
च्छ्वसनशस्त्रममुञ्चदमुं प्रति ॥ ३९ ॥

अतनुनेति ॥ सा सुतनुर्विरहवशाच्च भैमी नवमम्बुदं मेघमेव आम्बुदं वारुणमस्त्रम्। अतनुना स्मरेण। उदस्तं स्वं प्रति क्षिप्तमवेक्ष्य दृष्ट्वा आयतस्य दीर्घस्य निःश्वसितस्य छलान्मिषादुचितमम्बुदास्त्रनिवारणसमर्थं श्वसनशस्त्रं वायव्यास्त्रममुं कामं प्रति उद्दिश्यामुञ्चत् ।सुतनुत्वात्स्वस्य, अतनुत्वाद्वैरिणः किमपि कर्तुमशक्यत्वात्प्रावृट्कालं नवमेघदर्शनमात्रेण दीर्घनिःश्वासं तत्याजेति भावः। योधानां जातिः वैर्यस्त्रघातार्थं प्रत्यस्त्रं क्षिपतीति ॥ ३९ ॥

रतिपतिप्रहितानिलहेतितां
प्रतियती सुदती मलयानिले।
तदुरुतापभयात्तमृणालिका-
मयमियं भुजगास्त्रमिवाददे ॥ ४० ॥

रतीति ॥ सुदती शोभनदन्ता इयं भैमी मलयानिले दक्षिणपवने रतिपतिना कामेन प्रहितानिलहेतितां प्रेषितवायव्यास्त्रतां प्रतियती प्रतिजानती अयं मलयानिलो न भवति, किंतु मां प्रति कामेन क्षिप्तं वायव्यास्त्रमिति जानती तदुरुतापभयान्मदनजनितबहुसंतापभयेन तापशान्त्यर्थमेवात्ताऽङ्गीकृता या मृणालिका तन्मयं तद्रूपं भुजंगास्त्रमिव पन्नगास्त्रमिवाददे स्वीचकार। वसन्ते मलयानिले वाति सति संतापबाहुल्यात्तच्छान्त्यर्थमङ्गेषु मृणालानि निहितानीति भावः। पन्नगाकारत्वात्पवनाशनत्वाच्च मृणालिकानां पन्नगास्त्रत्वम् ॥ ४० ॥

व्यथित तद्धृदि शल्यमिव द्वयं
विरहितां च तथापि च जीवितम्।
किमथ तत्र निहत्य निखातवा-
न्रतिपतिः स्तनबिल्वयुगेन तत् ॥ ४१ ॥

व्यथितेति ॥ रतिपतिः कामस्तद्धृदि भैमीहृदये द्वयं शल्यमिव शंकुद्वयमिव व्यथित निक्षिप्तवान्। किं द्वयम्—विरहितां वियोगित्वं, तथापि वियोगित्वे सत्यव यज्जीवनम्। विरहितां च जीवितं चेति वा। चावन्योन्यसमुच्चये। अथ हृदयोपरि शल्यद्वयस्थापनानन्तरं तच्छल्यद्वयं स्तनलक्षणेन बिल्वयुगेन बिल्वफलद्वयेन कृत्वा निहत्य नितरां हत्वा तद्धृदये निखातवान्। शैथिल्यनिरासाय दृढं रोपयामास किमिति वितर्कः। विरहवशात्स्वल्पकालमपि जीवनं दुःखदं जातमिति भावः। अत्रोत्तरत्र च ग्लानेरनुभावः स्फुटो ज्ञेयः ॥ ४१ ॥

अतिशरव्ययता मदनेन तां
निखिलपुष्पमयस्वशरव्ययात्।
स्फुटमकारि फलान्यपि मुञ्चता
तदुरसि स्तनतालयुगार्पणम् ॥ ४२ ॥

अतीति ॥ मदनेन तदुरसि भैमीहृदये स्तनलक्षणतालफलयुगार्पणमकारि, स्फुटमुत्प्रेक्षे। किंभूतेन तां भैमीमतिशरव्ययता अतिवेध्यं कुर्वता। तथा— पुनः वेध्यकरणादेव निखिलाः पुष्पमयाः स्वशरास्तेषां व्ययान्नाशात्फलान्यपि तां प्रति मुञ्चता। वृक्षाणामन्येषां कुसुमाभावे फलवत्त्वाभावात्तालस्य तु सुमाभावेऽपि फलवत्त्वात्तालफलद्वयस्यैव साम्यादङ्गीकृतते-त्यर्थः। अन्योऽपि धानुष्को बाणव्यये पाषाणादिना वैरिणं हन्ति। अतिशरव्यं करोतीत्यर्थे 'तत्करोति तदाचष्टे' इति ण्यन्ताच्छता। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न यलोपः ॥ ४२ ॥

अथ मुहुर्बहुनिन्दितचन्द्रया
स्तुतविधुंतुदया च तया मुहुः।

१ अम्बुद आम्बुदास्त्रारोपाद्रूपकम्। अम्बुदस्याम्बुदसम्बन्धित्वायोगेऽपि तयोक्तेरतिशयोक्तिः। छलादित्यपह्नुतिः। २ भुजगास्त्रमिवेत्युत्प्रेक्षा। मृणालिकामयमिति रूपकमित्येके, अतिशयोक्तिरिति केचित्, अपह्नुतिरिति परे।

१ शल्यमिवेत्युपमा। किमथेत्युत्प्रेक्षा। स्तनयोर्बिल्वयुगत्वेन रूपणाद्रूपकम्। २ अत्राहुः। 'शरः कोपे शरे वज्रे' इति हैमोक्तेः। शरुशब्दोऽपि शरवाचकः, ततः 'उगवादिभ्यो यत्। ५।१।२' इति यति शरव्यम्। ततः तत्करोतीति णिचि 'यस्य हलः। ६।४।४९' इति यलोपे प्राप्ते संनिपातपरिभाषाऽऽश्रयणं स्यात्, किंतु यदि शरान् व्ययति संवृणोति, आत्मनि धारयतीति 'आतः। ३।२।११०' इति के सम्प्रसारणं स्यादेशश्चेत्येवं साधने न तदाश्रयणक्लेश इति। ३ अत्र स्तनयोस्तालयुगत्वेन रूपणाद्रूपकम्। स्फुटमित्युत्प्रेक्षा च।

पतितया स्मरतापमये गदे
निजगदेऽश्रुविमिश्रमुखी सखी ॥ ४३ ॥

अथेति ॥ अथ तया सखी निजगदे वक्ष्यमाणमुक्ता । किंभूतया—स्मरतापमये कामजनितसंतापज्वरे पतितया निमग्नया । अत एव—मुहुर्बहुवारं नितरां वक्ष्यमाणप्रकारेण निन्दितः काममित्र चन्द्रो यथा । तथा—मुहुः स्तुतो विधुंतुदो राहुर्यया । किंभूता सखी—संतापविलोकनादेवाश्रुविमिश्रं बाष्पविमिश्रं मुखं यस्याः सा । अन्योऽपि रोगग्रस्तोऽसाधुं स्तौति साधुं च निन्दति। विधुन्तुद इति 'विध्वरुषोस्तुदः ३।२ ३५' इति खशि मुम् ॥ ४३ ॥

नरसुराब्जभुवामिव यावता
भवति यस्य युगं तदनेहसा ।
विरहिणामपि तद्रतवद्ध्रुव-
क्षणमितं न कथं गणितागमे ॥ ४४ ॥

त्रिभिः श्लोकैर्विरहस्य दुःसहत्वमाह—

नरेति ॥ तदिति संबन्धाद्यादिति लभ्यते । यावता परिमाणेन यदनेहसा येषां नरसुराब्जभुवामनेहाः कालस्तेन । यद्वा, येनानेहसा कालेन नरसुराब्जभुवां मनुष्याणां देवानामब्जभुवो ब्रह्मणस्तेषां मध्ये यस्य नरस्य देवस्य ब्रह्मणो वा यद्युगं भवति तन्नरसुराब्जभुवां युगमिव विरहिणामपि वियोगिस्त्रीपुंससंबन्धि युगं गणितागमे ज्योतिःशास्त्रे रतवन्तः सुरतयुक्ता युवानः स्त्रीपुंसाः,तत्संबन्धिना निमेषचतुर्थांशलक्षणेन क्षणेन मितं गणितं सत् कथमिति न भवति नास्ति, अपितु तदपि ज्योतिःशास्त्रे गणकै रतवद्ध्रुवक्षणेन संगमनीयम् । तत्तु न कृतम् । अनुचितमेतदित्याक्षेपः, प्रश्नो वा । यद्वा—यावता यदनेहसा यस्य युगं भवति तद्युगं रतयुक्तयोर्यूनोः क्षणेन मितं गणितशास्त्रे विरहिणामपि कथं न भवति । केषामिव—नरसुराब्जभुवामिव । यथा षष्ट्यधिका दिनानां त्रिशती मनुष्याणां वर्षम्, तद्देवानामहोरात्रम्, एवं देवानां द्वादशसाहस्री चतुर्युगम्, तावती रात्रिः तदेवं चतुर्युगसहस्रं ब्रह्मदिनम्, तावत्येव रात्रिः ब्रह्मणः पञ्चाशता वर्षैः परार्धम्, एवं परार्धद्वयं परमायुः । अनया रीत्या युगादिकल्पना मनुष्यादीनां ज्योतिः शास्त्रे यथा गणिता तथा विरहिणां संयुक्तानां च गणितशास्त्रे युगगणना कथं न कृता । संयुक्तानां क्षणोऽपि वियुक्तानामतिक्रमणीयत्वाद्युगतुल्यो जायत इत्यर्थ इति यथाबुद्धि योजनीयः श्लोकः । युगगणनायां नरकालस्य मुख्यत्वादभ्यर्हितत्वेन नरशब्दस्य पूर्वनिपातः । एवं ब्रह्मण इत्यपेक्षया सुराणां कालस्य । विरहिणां, रतवद्ध्रुव, इति च 'पुमान्स्त्रिया १।२।६७' इत्येकशेषः ॥ ४४ ॥

जनुरधत्त सती स्मरतापिता
हिमवतो न तु तन्महिमादृता ।
ज्वलति भालतले लिखितः सती-
विरह एव हरस्य न लोचनम् ॥ ४५ ॥

जनुरिति ॥ सती दाक्षायणी स्मरतापिता सती हिमवतः सकाशाज्जनुर्जन्म अधत्ताङ्गीचकार । तस्य हिमाचलस्य महिम्नि देवस्वरूपोऽयमिति महत्त्वे आदृता आदरयुक्ता नतु नैव जन्म धत्ते । हिमाकरत्वात्कामतापशान्त्यर्थं जन्माङ्गीकृतवती न तु देवत्वात् । किंच हरस्य भालतले ललाटे ब्रह्मणा लिखितः सतीविरह एव ज्वलति, नतु लोचनं तृतीयं नेत्रम् । भविष्यद्विपया दैवी लिपिर्ललाटे लिख्यते । ज्वलतीत्यसह्यत्वं सूचितम् । यौ जगतो मातापितरौ तयोरपि विरहेणेदृश्यवस्था, मादृशी कथं जाता भविष्यतीति भावः । 'जनुर्जननजन्मानि' इत्यमरः । हिमवतः, नित्ययोगे निन्दायां वा मतुप् ॥ ४५ ॥

दहनजा न पृथुर्दवथुव्यथा
विरहजैव पृथुर्यदि नेदृशम् ।
दहनमाशु विशन्ति कथं स्त्रियः
प्रियमपासुमुपासितुमुद्धुराः ॥ ४६ ॥

दहनजेति ॥ दहनजाग्निजाता दवथुव्यथा दाहपीडा न पृथुर्गुर्वी किंतु विरहजैव दाहव्यथा पृथुः । असह्येत्यर्थः । अत्रार्थेऽन्यथानुपपत्तिं वा प्रमाणयति—यदीदृशं न स्याद्विपरीतमेव चेत्स्यात्, तर्हि अपगता असवः प्राणा यस्य तं मृतं प्रियमुपासितुं सेवितुमुद्धुरा उत्सुकाः सोल्लासाः स्त्रिय आशु झटिति कालविलम्बमकृत्वैव दह-

१ अत्रानुप्रासः।

१ अतिशयोक्तिः । २ स्मरतापितेवेत्युत्प्रेक्षा व्यज्यते । तया च जनुर्हेतोरपह्नवनादपह्नुतिः प्राणिता । सतीविरहस्यैव च ज्वलनत्वसमर्थनाय लोचनस्य ज्वलनात्मताऽपह्नुवनामित्यपि अपह्नुतिः ।

तमग्निं कथं प्रविशन्ति । तस्माद्वह्नेरपि सकाशाद्विरहपीडैव पृथुरिति । 'तथा' इति युक्तः पाठः ॥ ४६ ॥

हृदि लुठन्ति कला नितराममू-
विरहिणीवधपङ्ककलङ्किता ।
कुमुदसख्यकृतस्तु बहिष्कृताः
सखि विलोकय दुर्विनयं विधोः ॥ ४७ ॥

हृदीति ॥ हे सखि ! एतादृशं विधोश्चन्द्रस्य दुर्विनयमविनीतत्वं विलोकय । कीदृशं तदाह—नितरां विरहिणीवध एव पङ्कः पातकं तेन कलङ्किता मलिनता अमूर्दृश्यमानाः कला हृदि लुठन्ति क्रीडन्ति । तु पुनर्विशेषे वा । कुमुदसख्यकृतः कुमुदमैत्रीकारिण्यः कला बहिःकृताः दूरत एव धृताः । याः कलाः कुमुदविकासकारिण्यः परोपकारशीलास्ता बहिःकृताः । पातकिन्यः परापकारपरास्ता एव हृदि क्रीडन्ति । यस्तु विनीतो भवति स तूपकारिणं हृदये धारयति, पापिनं बहिरेव स्थापयति । पापी तु विपरीतं करोति । 'अस्त्री पङ्कं पुमान्पाप्मा' इत्यमरः ॥ ४७ ॥

अयि विधुं परिपृच्छ गुरोः कुतः
स्फुटमशिक्ष्यत दाहवदान्यता ।
ग्लपितशंभुगलाद्गरलात्त्वया
किमु दधौ जड वा वडवानलात् ॥ ४८ ॥

अयीति ॥ अयि सखि, त्वं विधुम् इति स्फुटं स्पष्टं परिपृच्छ । इति किम् हे चन्द्र, त्वया कुतः कस्माद् गुरोर्दाहवदान्यता दाहदातृत्वमशिक्ष्यत अभ्यस्ता । हे जड, अनुचिताभ्यासकारिन्दुर्मते! ग्लपितो दग्धः शीतलः शंभुगलो येन तस्माद्गरलाद्विषात्किमशिक्ष्यत । तन्मस्तके स्थित्वा इदमभ्यस्तम् । वाथवा उदधौ स्थिताद्वडवानलाद्वडवाग्नेर्वा । ईश्वरसंनिधानवशात्समुद्रसंनिधानवशाच्च गरलवडवाग्निभ्यामभ्यस्तमिति संभाव्यते । विषस्य समुद्रोत्पन्नत्वाच्चन्द्रस्यापि तत एवोत्पन्नत्वाद्वडवाग्नेश्च तत्रैव स्थितत्वात्संभाव्यत इति वा । चन्द्रस्ताभ्यामप्यधिकं पीडयतीत्यर्थः । जडस्य संतापकारित्वमन्यसंयोगाद्गवद्विषमग्निं वा कल्पयतीति युक्तिमूलो वितर्कः । गुरोः, 'आख्यातोपयोगे १ ।४। २९ इत्यपादानत्वम् ॥ ४८ ॥

अयमयोगिवधूवधपातकै-
र्भ्रमिमवाप्य दिवः खलु पात्यते ।
शितिनिशादृषदि स्फुटदुत्पत-
त्कणगणाधिकतारकिताम्बरः ॥ ४९ ॥

अयमिति ॥ अयं चन्द्रः, अयोगिन्यो वियोगिन्यो वध्वः स्त्रियस्तासां वधस्तज्जन्यैः पातकैः कर्तृभिर्भ्रमिं भ्रमणमवाप्य प्राप्य दिवः स्वर्गादाकाशाच्च शितिनिशा कृष्णरात्रिस्तल्लक्षणायां दृषदि शिलायां पात्यते, खलूत्प्रेक्षे । शिलापतनादेव स्फुटन्तो विदीर्यमाणा उत्पतन्त उच्छलन्तः कणगणा लेशसमूहास्तैरधिकमतिशयेन तारकितं संजाततारकमम्बरं यस्मात् । शुक्लपक्षे परिपूर्णत्वाच्चन्द्रेण विरहिण्यः पीड्यन्ते, तारकाश्च परिभूयन्ते, कृष्णपक्षे चन्द्रक्षयाद्विरहिणीनां तादृशी पीडा न भवति, तारकाश्च स्पष्टतरा भवन्ति । भ्रमणं तस्य स्वतःसिद्धम् । यद्यपि शिलायां पातितश्चूर्णीभूतोऽपि तथाऽपि भावं न त्यजतीति उत्प्रेक्षे । अन्योऽपि पातकी पातकैर्भ्रमयित्वातिगौरशिलायां स्वर्गान्निपात्यते, कणाश्चोर्ध्वं गच्छन्ति । 'शिती धवलमेचकौ' इत्यमरः । अवाप्येति ण्यन्तस्य । तारकितम्, 'तदस्य सञ्जातं तारकादिभ्य इतच् ५ । २ । ३६' इतीतच् ॥ ४९ ॥

त्वमभिधेहि विधुं सखि मद्गिरा
किमिदमीदृगधिक्रियते त्वया ।
न गणितं यदि जन्म पयोनिधौ
हरशिरःस्थितिभूरपि विस्मृता ॥ ५० ॥

त्वमिति ॥ हे सखि ! त्वं मद्गिरा भैमी त्वां पृच्छतीति विधुमभिधेहि वद । हे चन्द्र ! विशिष्टकुलोत्पन्नेन त्वया विरहिणीवधलक्षणमीदृङ् निन्द्यं कर्म किमित्यधिक्रियतेऽङ्गीक्रियते ? एवं कर्म कर्तुं युक्तं न भवतीत्यर्थः । परापकाराकरणे कारणमाह—लक्ष्मीन्द्वोर्जनकत्वादाति कुलीने पयोनिधौ रत्नाकरे जन्म यदि न

१ असावपि अपह्नुतिरेव । सत्यस्य सत्यत्वेऽपि तदसत्यत्वभ्रमापह्नवनाय तत्सदृशानिराकरणमिति दहनजैवेत्यत्रापह्नुतिरलङ्कारः । कथमित्यादावनुमानम् । २ अत्रापि कलानां वास्तविकत्वमपह्नुत्यावास्तंविकत्वमेव साधितमित्यपह्नुतिः ।

१ अत्र विकल्पलङ्कारः इति प्राञ्चः, समभिति नव्याः । २ अत्रानुमानम् । अनुप्रासश्च ।२ शिवशिर इति वाच्यम् । हरस्य दाहकत्वेन तत्सख्यादौ विरुद्धत्वासम्भवात् ।

गणितं न विचारितं तर्हि हरशिरःस्थितिलक्षणा भूरपि उत्तमसंसर्ग इत्यर्थः । सापि विस्मृता । काकुः । यस्तु कुलीनो भवति सत्संनिधौ च वर्तते स परापकारं न करोति । त्वया कुलीनत्वं सत्संनिधित्वं चोभयमपि विस्मृतम् । पापिना सह साक्षान्मया नोच्यत इति मद्गिरेत्यनेन सूचितम् ॥ ५० ॥

निपततापि न मन्दरभूभृता
त्वमुदधौ शशलाञ्छनचूर्णितः ।
अपि मुनेर्जठरार्चिषि जीर्णतां
बत गतोऽसि न पीतपयोनिधेः ॥५१॥

निपततेति ॥ शशलाञ्छन अतीनिन्दितकर्मंश्चन्द्र ! उदधौ निपतता मन्दरसंज्ञकेन भूभृता पर्वतेनापि समुद्रे स्थितस्त्वं न चूर्णितः । तथा पीतपयोनिधेर्मुनेरगस्त्यस्य जठरार्चिष्युदराग्नावपि जीर्णतां नाशं वातापिवन्न गतोऽसि बत उभयत्रापि खेदः । जीर्णतामपीति वा अस्मद्भाग्येन तद्द्वयमपि तव न जातम् । अतिदाहकत्वात्ताभ्यामपि परित्यक्तस्त्वम् ॥ ५१ ॥

किमसुभिर्ग्लपितैर्जड मन्यसे
मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां
नलमुखेन्दुपरां विबुधः स्मरः ॥ ५२ ॥

किमसुभिरिति ॥ हे जड मूर्ख ! त्वं किमिति मन्यसे इति किम्—ग्लपितैः क्षतैर्गतैरित्यर्थः । एवंविधैरसुभिः प्राणैः कृत्वा भीमसुतामनो मयि निमज्जतु निलीयतामिति । 'मनश्चन्द्रे निलीयते' इति श्रुतेः । प्राणेषु गतेषु भैमीमनो मयि निलीनं भविष्यतीति चित्ते मा कार्षीरित्यर्थः । श्रुतिरप्रमाणमित्यपि न मन्तव्यमित्याह—किल यस्मान्मेधावी कामो मम संबन्धिनीं तदर्थिकां चन्द्रे मनोलयप्रतिपादिकां श्रुतिं नलमुखेन्दुपरां नैषधवदनचन्द्रपरामाह वदति । पण्डितेन कामेन सामान्याऽपि श्रुतिर्विशिष्टविषयीकृता । अतिपीडायां कृतायामप्यहं त्वदधीना न भवामि, किं तु नलाधीनैवेति तात्पर्यम् । मूर्खस्त्वापाततः श्रुतेरर्थं गृह्णाति । पूर्वापरानुसंधानात्पण्डितस्तु श्रुतेरर्थं ब्रूते ॥ ५२ ॥

मुखरय स्वयशोनवडिण्डिमं
जलनिधेः कुलमुज्ज्वलयाधुना ।
अपि गृहाण वधूवधपौरुषं
हरिणलाञ्छन मुञ्च कदर्थनाम् ॥५३॥

मुखरयेति ॥ त्वमधुनास्मिन्समये स्वयशःसंबन्धि नवं नूतनं डिण्डिमनामकं वाद्यं मुखरयवादय । मादृशां प्राणनाशनेन महाकीर्तिर्भविष्यतीति स्वपितुर्जलनिधेः कुलं वंशमुज्ज्वलं कुरु । वधूवधपौरुषमपि गृहाण । जडनिधेर्वंशजातस्यैवं युक्तं, न त्वन्यस्य । अथ च सुष्ठु अयशःसम्बन्धि नवडिण्डिमं वादय, जलनिधेः कुलं दह । एतत्सर्वं कुरु पौरुषम् । हरिणलाञ्छन शशकलङ्क, कदर्थनां पीडां मुञ्च मा कार्षीः । पीडाया असह्यत्वाज्झटिति मारयेत्यर्थः ॥ ५३ ॥

निशि शशिन्भज कैतवभानुता-
मसति भास्वति तापय पाप माम् ।
अहमहन्यवलोकयितास्मि ते
पुनरहर्पतिनिह्नुतदर्पताम् ॥ ५४ ॥

निशीति ॥ हे शशिन् ! निशि त्वं कैतवभानुतां कपटसूर्यतां भजाङ्गीकुरु । हे पाप पापरूप ! भास्वति सूर्ये असत्यविद्यमाने मां तापय ज्वालय । निशि, सूर्ये चाविद्यमाने इत्युभयत्रापि योजनीयम् । एतत्सुखेन कुरु । अहमहनि प्रभाते पुनस्ते तव अहर्पतिना सूर्येण निराकृतो दर्पो गर्वो यस्य तस्य भावस्तत्त्वमवलोकयितास्मि द्रष्टास्मि । सूर्यसमक्षं त्वयोभयमपि कर्तुं न शक्यते । तेन यद्यत्तव करिष्यते तन्मयैव द्रक्ष्यत इति लौकिक्युक्तिः तापय, चुरादौ 'आधृषाद्वा' इत्यत्र गणपाठे पठितस्य 'तप दैन्ये' इत्यस्य । अवलोकयितास्मि, लुट् । अहर्पतिः, 'अहरादीनाम्—'इति रेफः ॥ ५४ ॥

शशकलङ्क भयंकर मादृशां
ज्वलसि यन्निशि भूतपतिं श्रितः ।
तदमृतस्य तवेदृशभूतता-
द्भुतकरी परमूर्धविधूननी ॥ ५५ ॥

शशेति ॥ हे शशकलङ्क ! मादृशां विरहिणीनां भयंकर पीडाकर ! त्वं निशिभूतपतिं पृथिव्यादिभूतानां पति-

१ अत्रानुप्रासः । पयोनिधावित्यादेः साभिप्रायत्वात् परिकरश्च । २ निपततेत्यादेः साभिप्रायत्वात् परिकरः । अपिना विशेषोक्तिश्च । ३ रूपकमत्रालङ्कारः ।

१ अनुप्रासः शब्दालङ्कारः । २ अत्राप्यनुप्रासः शब्दालङ्कारः । परिकरश्च ।

माकाशं श्रित आश्रितवान्, श्रयितुं कृतप्रारम्भो वा सन् यज्ज्वलसि दीप्यसे तत्तस्मादमृतस्यामृतमयस्य तव ईदृशभूतता इदृशो भूतस्तस्य भावो ज्वलनवज्ज्ञातता कान्तिमत्ता चाद्भुतकरी चमत्कारिणी । अत एव परेषां मूर्धविधूननी शिरःकम्पनकारिणी । अमृतस्य शीतलस्य दाहकत्वं न दृष्टमित्याश्चर्यम् । सकलङ्कस्य परपीडकस्यामृतरूपत्वादिकमाश्चर्यकारीति च । ईदृशं मादृशजनोद्वेजनलक्षणं प्रकारं भूतः प्राप्तस्तत्तेति वा । अथ च भूतपतिं शिवमाश्रितो यज्ज्वलसि अमृतस्य तवेदृशभूतताश्चर्यकारिणी । भूतानामस्मदादीनां पतिः पालकस्तदाश्रितस्य स्वभावतः सुधारूपस्य च यत्पीडाकरणशीलत्वं तदाश्चर्यकारि । युक्तं न भवतीत्यर्थः । अथ च भैरवरूपं महादेवमाश्रित्य यज्ज्वलद्रूपो रात्रौ भवसि तदमृतस्य जीवत एवेदृशपिशाचताश्चर्यकारिणी मृतस्यैवंभूतत्वं दृष्टम् भूतो हि मृतः सन् स्त्रीबालादीनां भयंकरो भवति, यत्र विशति तस्य मूर्धानमपि कम्पयति । अथवाऽमृतस्योदकस्य ज्वलनरूपताऽऽश्चर्यकारिणी। उदकस्य ज्वलनरूपत्वं कुत्रापि न दृष्टमित्यर्थः । भयंकरः 'मेघर्तिभयेषु कृञः ३ । २ । ४३' इति खच्चि मुम् । श्रित इति श्रिञो गत्यर्थत्वात् 'गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च३।४।७२' इति कर्तरि क्तः । यद्वा'आदिकर्मणि क्तः कर्तरि च ३ । ४ । ७१' इति आदिकर्मणि । अद्भुतकारी, 'कृञो हेतुताच्छील्यानुलोम्येषु३।२। २०' इति टः ॥ ५५ ॥

श्रवणपूरतमालदलाङ्कुरं
शशिकुरङ्गमुखे सखि निक्षिप ।
किमपि तुन्दिलितः स्थगयत्यमुं
सपदि तेन तदुच्छ्वसिमि क्षणम् ॥५६॥[1]

श्रवणेति ॥ हे सखि ! त्वं तव मम च श्रवणपूरं चन्द्रमृगमुखे ग्रासार्थं निक्षिपार्पय । प्रयोजनमाह—तेनाङ्कुरेण तुन्दिलितो बृहत्कुक्षिः सन् स मृगो यद्यमुं चन्द्रं किमपि स्वल्पमपि स्थगयत्याच्छादयति तत्तर्हि क्षणं क्षणमात्रमुच्छ्वसिमि श्वासमोचनमपि कर्तुं समर्था स्याम् । अङ्कुरपुष्टेनानेन चन्द्रश्रीस्तिरोधपिंतः स्यात्तर्हि तद्दर्शनाभावात्क्षणं मम पीडाभाव इत्यर्थः । स्थगयति उच्छ्वसिमि आशंसायां वर्तमानवत् । तुन्दशब्दादस्त्यर्थे तुन्दादित्वादिलचि 'तत्करोति—' इति णिचि निष्ठा ॥ ५६ ॥

असमये मतिरुन्मिषति ध्रुवं
करगतैव गता यदियं कुहूः ।
पुनरुपैति निरुध्य निवास्यते
सखि मुखं न विधोः पुनरीक्ष्यते ॥५७॥[2]

असमय इति ॥ ध्रुवं निश्चितं बुद्धिरसमयेऽप्रस्ताव एवोन्मिषति स्फुरति । कुतः—यद्यस्मादियं कुहूरमावास्या करगतेव हस्तप्राप्तेवातिसंनिहितेव गता, यदि तदैव निरुद्धा स्यात्, यदा चन्द्रो दृष्टो न भवेत्तदेयं बुद्धिर्न जाता । पुनर्वदति—कुहूर्यदि पुनरुपैत्यागमिष्यति तर्हि निरुध्य निर्बन्धं कृत्वा त्वयात्र स्यातव्यमिति सम्प्रार्थ्य निवास्यते । स्थापयिष्यते । पुनरुपैष्यतीति काकुर्वा । सदाऽमावास्यास्थितौ चन्द्रावलोकनं कदापि न स्यादित्यर्थः । करगता, गत्यर्थत्वात्कर्तरि क्तः । 'द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २ । १ । २४—' इति समासः । उपैति, वर्तमानसामीप्ये वर्तमानवत्प्रत्ययः ॥ ५७ ॥

अयि ममैष चकोरशिशुर्मुने-
र्व्रजति सिन्धुपिबस्य न शिष्यताम् ।
अशितुमब्धिमधीतवतोऽस्य वा
शशिकराः पिबतः कति शीकराः ॥५८॥[3]

अयीति ॥ चन्द्रादर्शने हेत्वन्तरसूचनार्थं चशब्दः । अयि हे सखि ! ममैष चकोरशिशुःसिन्धुपिबस्य समुद्रपानकारिणो मुनेरगस्त्यस्य शिष्यतां न व्रजति गमिष्यति पृच्छ इति शेषः । बालत्वेऽभ्यासः सुकरः । तस्य शिष्यत्वे तव किं फलमित्यत आह—तच्छिष्यत्वेनाब्धिमशितुं पातुमधीतवतः समुद्रपानसमर्थस्य चकोरशिशोः पिबतः पानं कुर्वतोऽस्य शशिकराः कति शीकरा बिन्दवो भविष्यन्ति अपि तु स्वल्पा एव । यः समुद्रं पातुमिच्छति तस्य चन्द्रकिरणपानमतिसुकरमित्यर्थः। एवं

1 श्लेषोऽर्थालङ्कारः ।

1 अनुप्रासः शब्दालङ्कारः । अत्र शशकुरङ्गयोर्भेदे शशिकुरङ्गेति न वाच्यं, किंतु शशिशब्दस्येत्येव । तस्याप्यतथ्यत्वेन तथोक्तिर्भ्रान्तिमपह्नुतिं वोपजीवयतीति भ्रान्त्यपह्नुत्योः सङ्करः । 2 अनुप्रासोऽत्र शब्दालङ्कारः ।3 अशितुं भोक्तुमित्यर्थः ।'अश भोजने' ततस्तुमुन् प्रत्ययः । लक्षणया पुनः पातुमित्यर्थः ।

सति कदापि चन्द्रदर्शनं न स्यादिति भावः । कति वेति सम्भावनार्थो वा वाशब्दः । वा यस्मादिति वा । सिन्धुपिबस्य, 'पाघ्राध्माधेट्दृशः शः ३।१।१३७' इत्यनेन शः ॥ ५८ ॥

कुरु करे गुरुमेकमयोघनं
बहिरतो मुकुरं च कुरुष्व मे ।
विशति तत्र यदैव विधुस्तदा
सखि सुखादहितं जहि तं द्रुतम् ॥ ५९ ॥

कुर्विति ॥ हे सखि! गुरुं भारवन्तमेकमयोघनं लोहमुद्गरं करे कुरु स्थापय । इतो मद्गृहाद्बहिर्मे मुकुरं च दर्पणं कुरुष्व स्थापय । किमर्थमित्यत आह—विधुस्तत्र मुकुरे यदैव प्रतिबिम्बरूपेण विशति प्रविशति तदैव सुखादनायासेनैव तमहितं चन्द्रं वैरिणं द्रुतं शीघ्रं जहि मारय । चूर्णीकुर्वित्यर्थः । ततः पीडाशान्तिर्भविष्यतीति भावः । उन्मादोक्तिः । 'दर्पणे मुकुरादर्शौ' इत्यमरः । अयो हन्यतेऽनेनेत्ययोघनः 'करणेऽयोविद्रुषु ३।३।८२' इत्यप्प्रत्यये घनादेशः ॥ ५९ ॥

उदर एव धृतः किमुदन्वता
न विषमो वडवानलवद्विधुः ।
विषवदुज्झितमप्यमुना न स
स्मरहरः किममुं बुभुजे विभुः ॥ ६० ॥

उदर इति ॥ उदन्वता विषमो दुःसहः । अथ च विषेण मीयते समीक्रियत इति विषमः । विधुश्चन्द्रो वडवानलवदुदर एव प्रागेव किं न धृतो विक्षिप्तः।एवं कर्तुं युक्तम् । परोपतापी वडवाग्निर्लोकोपकारार्थमुदर एव धृतस्तथायमपि किमिति न धृत इति व्यतिरेके दृष्टान्तः । अन्यच्च—अमुना समुद्रेण विषामिवोज्झितं विषादिनाशे विभुः समर्थः परोपकाराय प्रसिद्धः स स्मरहरो महादेवोऽमुं चन्द्रं किं न बुभुजे भुक्तवान् । विषं भुक्तवान्, विषवत्तमपि किमिति न भुक्तवान् । तस्माद्विषमो न, किन्तु ततोऽपि विषम इति।'उदन्वानुदधौ च ८।२।१३०' इति साधुः । बुभुजे, 'भुजोऽनवने १।३।६६' इति तङ् ॥ ६० ॥

असितमेकसुराशितमप्यभू-
न्न पुनरेष विधुर्विशदं विषम् ।
अपि निपीय सुरैर्जनितक्षयं
स्वयमुदेति पुनर्नवमार्णवम् ॥ ६१ ॥

असितेति ॥ सामुद्रं विषं द्विविधम्—कृष्णं श्वेतं च । असितं कृष्णं कालकूटाख्यं विषं आर्णवं सामुद्रमेकेन सुरेण महादेवेनाशितं भक्षितं पुनरपि नाभूत्तो बभूव । एष चन्द्रः पुनर्विशदं श्वेतं सामुद्रं विषं सुरैर्देवैर्वस्वादिभिः प्रतिपदादितिथिषु निपीय निःशेषं पीत्वा जनितक्षयमपि कृतनाशमपि पुनर्नवं नूतनं स्वयमुदेति समुत्पद्यते । क्षययुक्तमपि बहुभिर्बहुधैव भक्षितमपि श्वेतं विषं पुनरुत्पद्यते । एकदैव एकेनैव भक्षितं कृष्णं विषं पुनर्नोत्पन्नम् । तस्मात्पूर्वविषात्कालकूटादप्यस्याधिक्यं दृढमित्यर्थः ॥ ६१ ॥

विरहिवर्गवधव्यसनाकुलं
कलय पापमशेषकलं विधुम् ।
सुरनिपीतसुधाकमपापकं
ग्रहविदो विपरीतकथाः कथम् ॥ ६२ ॥

विरहीति ॥ हे सखि!विरहिण्यश्च विरहिणश्च विरहिणस्तेषां वर्गस्य समूहस्य वध एव व्यसनं तस्मिन्नाकुलं केनोपायेनैव ते वध्या इति चिन्ताकुलमशेषकलं परिपूर्णं विधुं परापकारित्वात्पापं पापरूपं कलय जानीहि । व्यसनेन हेतुनाऽकुलं कुलरहितं पापं जानीहि । 'कुपुत्रेण कुलं नष्टम्' इति न्यायात् । तथा सुरैर्वह्न्यादिभिर्निपीता सुधामृतं यस्य एवंविधममावास्याचन्द्रं विरहिणामतापकारित्वादपापकं पुण्यवन्तं जानीहि । ग्रहविदो ज्योतिर्विदः कथं कुतो विपरीता कथा भाषणं सिद्धान्तो येषां पूर्णेन्दुं शुभग्रहं क्षीणं च पापग्रहं 'क्षीणेन्द्वर्कभूपुत्राः पापाः' इति न ज्ञायत इत्यर्थः । विपरीतं कथयन्तीति वा । अथ च चतुःषष्टिकलावान्स विधुः परापकारी पाप एव विद्यारहितः परोपकारी पुण्यवानित्युक्तिः ।

---

१ अत्र यद्ययं समुद्रं पीतवतोऽशिष्यत्वेऽप्येवं चकोरश्चन्द्रिकायां वह्निमप्यश्नाति । तत्पुनर्यद्ययं तस्य शिष्य एवाभविष्यत्तर्हि चन्द्रस्य कराः कति पेया अभविष्यन्नित्यर्थापत्तिरिति कुवलयानन्दादिकाराः ।२अनुप्रासोऽत्र शब्दालङ्कारः ।

१ अत्र सन्देहोऽलङ्कारः । २ पीतस्य पुनस्तादवस्थ्यमिति विरोधः । कालकूटादपि विधुरूपं विषम्भयङ्करमिति व्यतिरेकः । विधौ विषत्वारोपाद्रूपकं च ।

विरहीति, 'पुमान्स्त्रिया १।२।६७' इत्येकशेषः । निपीतसुधाकम्, 'शेषाद्विभाषा ५।४।१५४' इति कपि 'आपोऽन्यतरस्याम् ७।४।१५' इति विकल्पाद्ध्रस्वत्वाभावः ॥ ६२ ॥

विरहिभिर्बहु मानमवापि यः
स बहुलः खलु पक्ष इहाजनि ।
तदमितिः सकलैरपि यत्र तै-र्व्य-
रचि सा च तिथिः किममीकृता ॥ ६३ ॥

विरहिभिरिति ॥ सदुत्प्रेक्षे । विरहिभिर्यः पक्षः बहु अत्यन्तं मानं संमानमवापि प्रापितः, तत्र चन्द्रक्षयात्स पक्ष इह लोके बहुलः कृष्णपक्षोऽजनि जातः । युक्तं चैतत् यः सपक्षो ( वा ) लोके बहुपूजां बहुमानं प्रमाणं च लभते स प्रवृद्धो बहुल एव भवति बहु लाति आदत्ते इति । इह बहुलपक्षे यस्यां तिथौ सकलैः समस्तैरपि तैर्विरहिभिस्तस्य बहुमानस्य अमितिरपरिमितता व्यरचि रचिता सा च सैव तिथिः अमा कृता किम् । अमावास्या कृतेत्यर्थः । अमावास्यायां सर्वथा चन्द्राभावादपरिमितो मानः कृतः तथा च मानपरिमाणराहित्यादमा अन्वर्था जाता, नतु 'अमा सह वसतोऽस्यां सूर्याचन्द्रमसौ' इति व्युत्पत्त्येत्यर्थः । विरहिणां कृष्णपक्षः सुखदः, तत्राप्यतितराममावास्येत्यर्थः । बहुलः, 'आतोऽनुपसर्गे कः' । 'अमीकृता' इति पाठः क्लिष्टकल्पनयोपेक्ष्यः ॥ ६३ ॥

स्वरिपुतीक्ष्णसुदर्शनविभ्रमा-
त्किमु विधुं ग्रसते स विधुंतुदः ।
निपतितं वदने कथमन्यथा
बलिकरम्भनिभं निजमुज्झति ॥ ६४ ॥

स्वेति ॥ स प्रसिद्धो विधुंतुदो राहुः स्वस्य रिपुर्विष्णुस्तस्य तीक्ष्णस्य सुदर्शनचक्रस्य वर्तुलत्वेन विभ्रमाद्भ्रान्तेर्विधुं ग्रसते किंस्वित् । उत्प्रेक्षा । अन्यथा चन्द्रबुद्ध्यैव चेत्खादेत तदा वदने निपतितं निजं स्वीयं स्ववशं वा बल्यर्थं पूजार्थं शुभ्रत्वात्करम्भनिभं दधिभक्ततुल्यं चन्द्रं कथमुज्झति त्यजेत् त्यजति तावत् । अतः सुदर्शनबुद्ध्या पूर्वं वदनानीयमानमपि छेदभियैवेति ज्ञायते । राहोरुपहारः करम्भो भवति ॥ ६४ ॥

वदनगर्भगतं न निजेच्छया
शशिनमुज्झति राहुरसंशयम् ।
अशित एव गलत्ययमत्ययं
सखि विना गलनालविलाध्वना ॥ ६५ ॥

वदनेति ॥ हे सखि ! राहुः वदनस्य गर्भे मध्ये गतं शशिनमसंशयं निःसंदेहं निजेच्छया स्वाभिलाषमात्रेण नोज्झति त्यजति । किंतु राहुणा अशित एव भक्षित एवायं चन्द्रोऽत्ययं विना नाशं विना गलनालबिलाध्वना कण्ठकंदलविवरमार्गेण गलति निःसरति । उदराग्नेरभावादमृतरूपत्वाद्विनाशाभावः ॥ ६५ ॥

ऋजुदृशः कथयन्ति पुराविदो
मधुभिदं खलु राहुशिरश्छिदम् ।
विरहिमूर्धभिदं निगदन्ति न
क नु शशी यदि तज्जठरानलः ॥ ६६ ॥

ऋजुदृश इति ॥ ऋजुदृशो यथादृष्टग्राहिणः पुराविद ऐतिहासिका मधुभिदं श्रीकृष्णं राहुशिरश्छिदं कथयन्ति । किलेति श्रुतौ । विरहिमूर्धभिदं वियोगिशिरश्छिदं न निगदन्ति । एतदुक्तं युक्तम् । परं तीक्ष्णप्रज्ञत्वाभावादन्यथा वदन्ति । नु प्रश्ने, संबोधने वा । यदि तस्य राहोर्जठरानलो जठराग्निः स्यात्, तदा शशी चन्द्रः क ? अपितु न कुतोऽपि । राहोः शिरश्छेदेन भक्षितोऽपि चन्द्रो जठराग्निं विना गच्छति । राहुशिरश्छेदेन राहोर्जठराग्निरपि विच्छिन्नः, अथ कथं स विरहिजनमारकं शशिनं भक्षित्वाऽपि निःशेषयितुं क्षमेत । ततस्तद्विच्छेदकत्वाच्छशिनो रक्षकत्वाच्च विष्णुरेव विरहिजनशिरश्छित् । न हि राहुणा विरहिणां किमप्यपकार उपस्थाप्यते किंतु शशिनैव, इति राहुरहो भयङ्करः, अथ कदाचन विरहतापार्दितास्तं दृष्ट्वा भृशं नार्दिताः स्युरिति राहुशिरस्तेन छिन्नमिति ऋजुदृशां परं प्रतारणं, प्रत्युत तेन सर्वविदा विदित्वैवेदं कृतमित्यसावेवैवंविधपापीयानिति भावः । इदं सर्वमृजुपदवैशिष्ट्यमूलं द्योत्यम् ॥ ६६ ॥

स्मरसखौ रुचिभिः स्मरवैरिणा
मखमृगस्य यथा दलितं शिरः ।
सपदि संदधतुर्भिषजौ दिवः
सखि तथा तमसोऽपि करोतु कः ॥ ६७ ॥

१ अत्र यमकमनुप्रासश्च । २ अत्र खल्विति पदद्योत्योत्प्रेक्षा। ३ अत्र यमकं शब्दालङ्कारः । किम्पदद्योत्योत्प्रेक्षा च उत्प्रेक्षितस्य चार्थस्य निर्णयपर्यन्तमवस्थापनादनुमानं च ।

१ अत्राप्यनुमानम् । २ अत्रानुप्रासः ।

स्मरेति ॥ हे सखि, रुचिभिः स्मरसखौ कामसदृशौ दिवो भिषजौ स्ववैद्यौ दस्रौ स्मरवैरिणा शिवेन दलितं खण्डितं मखमृगस्य शिरो यथा सपदि तत्क्षणमेव संदधतुर्घटयामासतुस्तथा तमसोऽपि राहोरपि कः करोतु । एतादृशः कोऽपि नास्ति । मदनारिणा यत्कार्यं कृतं, तन्मदनमित्रेण मदनेन वा मोघीकर्तव्यम् । ततः स्मरमित्रत्वाद्विपक्षत्वाच्च कामारिणा छिन्नं मृगशिरस्ताभ्यां कबन्धेन मेलितम् । तथा विरहिवैरिणा विष्णुना छिन्नं राहुशिरः कः संघट्टयतु । विरहिमित्रस्याभावादिति भावः । तात्कालिकसंधानं दृढं भवतीति सपदीत्युक्तम् । 'तमस्तु राहुः स्वर्भानुः' इत्यमरः ॥ ६७ ॥

नलविमस्तकितस्य रणे रिपो-
र्मिलति किं न कबन्धगलेन वा ।
मृतिभिया भृशमुत्पततस्तमो-
ग्रहशिरस्तदसृग्दृढबन्धनम् ॥ ६८ ॥

नलेति ॥ वाथवा रणे मृतेर्भिया मरणाद्भयेन दिवमाकाशमतितरामुत्पततः प्रत्युद्गच्छत आकाश एव नलेन विमस्तकितस्य छिन्नमूर्ध्नो रिपोर्नलशत्रोः कबन्धगलेन अपमूर्धकलेवरकण्ठेन सह तमोग्रहशिरः राहोः शिरस्तस्य कबन्धगलस्यासृग् रक्तं तेन दृढं बन्धनं यस्य एवंभूतं सत् किं न मिलति ? मेलने हि वदनमध्यगते चन्द्रे राहुजठराग्नौ जीर्णेऽतितरां पीडा न भविष्यतीति भावः । आकाशे स्थितस्य राहुशिरसः कबन्धगलेन सह सम्बन्धार्थं भृशमुत्पतत इत्युक्तम् । दृढबन्धनामिति क्रियाविशेषणं वा । 'धृतिभिया' इति पाठे नलधारणाभियेत्यर्थः ॥ ६८ ॥

सखि जरां परिपृच्छ तमःशिरः
सममसौ दधताऽपि कबन्धताम् ।
मगधराजवपुर्दलयुग्मव-
त्किमिति न व्यतिसीव्यति केतुना ॥६९॥

सखीति । हे सखि, त्वम् इति जरां राक्षसीं परिपृच्छ । असौ जरा कबन्धतामपमूर्धकलेवरत्वं दधता केतुना समं सह तमःशिरोऽपि राहुशिरोऽपि मगधराजस्य जरासंधस्य वपुषः शरीरस्य दलयुग्मं खण्डयुग्मं तद्वत्किमिति कुतो हेतोर्न व्यतिसीव्यति संयोजयति । यथा मगधराजःसंहितस्तथा त्वया राहुरपि संधेय इति जरां प्रति त्वया वक्तव्यम् । एकस्यैव दैत्यस्य शिरसो राहुत्वं कबन्धस्य केतुत्वम् ॥ ६९ ॥

वद विधुंतुदमालि मदीरितै-
स्त्यजसि किं द्विजराजधिया रिपुम् ।
किमु दिवं पुनरेति यदीदृशः
पतित एष निपीय हि वारुणीम् ॥७०॥

वदेति ॥ हे आलि सखि, त्वं मदीरितैर्मद्वचनैः विधुंतुदं राहुं वद—हे राहो, त्वं रिपुं चन्द्रं द्विजराजधिया ब्राह्मणबुद्ध्या त्यजसि किम् । 'ब्राह्मणो न हन्तव्यः' इति श्रुतेः । डित्थडवित्थादिवत्संज्ञामात्रेण द्विजराजो न तु ब्राह्मणत्वेनेत्यर्थः । ब्राह्मणत्वेऽन्यथाऽनुपपत्तिं प्रमाणयति—यदि ईदृशः श्रोत्रियो ब्राह्मणः स्यात्, तर्ह्येष वारुणीं मदिरां वरुणदिशं च निपीय पीत्वा प्राप्य च पतितो महापातकी अस्तं गतश्च सन् पुनर्दिवं स्वर्गमाकाशं किमु कथमेति प्राप्नोति । पतितो ब्राह्मणः स्वर्गः नैति, अयं पुनरेति । तस्मात्संज्ञामात्रेण द्विजराजो, न त्वन्वर्थत्वेन । ततो हन्तव्य एवायम् । हीति स्पष्टम् ॥७०॥

दहति कण्ठमयं खलु तेन किं
गरुडवद्द्विजवासनयोज्झितः ।
प्रकृतिरस्य विधुंतुद दाहिका
मयि निरागसि का वद विप्रता ॥७१॥

द्विजमात्रोऽपि न हन्तव्य इत्यत आह—

दहतीति ॥ खलु प्रायेण अयं चन्द्रो भक्षितः सन् कण्ठं दहति मामिव तेन हेतुना द्विजवासनया ब्राह्मणबुद्ध्या त्यक्त उज्झितः । केनेव—गरुडवत् । यथा गरुडेन निपादतां गतो विप्रो ब्राह्मणबुद्ध्या त्यक्त इति भारते, तथा त्वया किमिति त्यज्यते । हे विधुंतुद राहो, अस्य विधोः प्रकृतिः स्वभावो दाहिका, नतु ब्राह्मी शक्तिः । सा तु सापराधे प्रभवति न त्वन्यत्र । एवं चेन्न, तर्हि निरागसि निरपराधायां मयि का कीदृक् विप्रता ब्राह्मण्यं वा । निरपराधां मां दहतीति ब्राह्मणो

१ अत्र स्मरवैरिपदं महादेवे रूढमिति स्मरपदस्य पृथग्वचनेऽपि न कथितपदत्वं दोषः । स्मरसखावित्युपमाऽर्थालङ्कारः । २ अत्र किं नेत्युत्प्रेक्षा ।

१ अत्र युग्मवदित्युपमाऽर्थालङ्कारः २ अत्र द्विचराजेत्यत्र श्लेषमादाय त्यक्तव्यत्वमुत्प्रेक्षितमिति बोध्यम् । अत्र कस्यचिद्दुर्जनस्य ब्रह्मवेषधारिणो हनने प्रवृत्तवत्त्वेऽपि पुनस्ततो निवर्तमानं प्रतीव वचनमिदं प्रतीयत इति समासोक्तिः ।

न, अत एव त्वयावश्यं हन्तव्य इत्यर्थः। दाहिकेति कर्तरि ण्वुल् ॥ ७१ ॥

सकलया कलया किल दंष्ट्रया
समवधाय यमाय विनिर्मितः।
विरहिणीगणचर्वणसाधनं
विधुरतो द्विजराज इति श्रुतिः ॥ ७२॥

अर्थान्तरेण तस्य द्विजराजश्रुतिं समर्थयते—

सकलयेति ॥ ब्रह्मणा विधुः सकलया कलया दंष्ट्रया। जातावेकत्वम्। सर्वाभिः ( विविधाभिः ) कलाभिरेव दंष्ट्राभिः कृत्वा सम्यगवधालं कृत्वा। संयोज्येत्यर्थः।यमाय यमार्थं कलि यस्माद्विरहिणीगणस्य चर्वणं भक्षणं तद्विषये साधनं कारणं किं निर्मितः? अतो द्विजानां दन्तानां मध्ये राजा श्रेष्ठत्वाद्विजराजोऽयम्-इति श्रुतिर्जनवादः, नतु द्विजानां ब्राह्मणानां राजेति।एककालमेव सर्वासां वधाय महत्साधनमयं निर्मित इति भावः। द्विजराजः, 'राजाहःसखिभ्यष्टच् ५।४।९१' इति टच् ॥ ७२ ॥

स्मरमुखं हरनेत्रहुताशना-
ज्ज्वलदिदं चकृषे विधिना विधुः।
बहुविधेन वियोगिवधैनसा
शशमिपादय कालिकयाङ्कितः ॥७३॥

स्मरेति ॥ विधिना ब्रह्मणा विधुरेव इदं पुरोवर्ति स्मरमुखं हरनेत्रहुताशनाद्धरनेत्राग्नेः सकाशाज्ज्वलद्दह्यमानं प्रकाशमानं चकृषे समाकृष्टम्। अथ च बहुविधेनानेकप्रकारेण वियोगिनां विरहिस्त्रीपुंसानां वधो मारणं तज्जन्येनेनसा पातकेन कालिकया पातकरूपया श्यामिकया।शशमिपान्मृगव्याजादङ्कितश्चिह्नितः। नायं मृगः, किंतु पातकलक्षणश्यामिका। अन्योऽप्यपराधी केनापि चिह्नेन चिह्नयते, स्वत एव च तन्मुखे मालिन्यं भवति। 'आगसा' इति पाठे 'पापापराधयोरागः' इत्यमरः ॥ ७३ ॥

( अत्र तिलकसुखाववोधाव्याख्ययोरधिकः श्लोको दृश्यतेऽतः सोऽपि तिलकव्याख्यायुतः संगृह्यते ॥

द्विजपतिग्रसनाहितपातक-
प्रभवकुष्ठसितीकृतविग्रहः।
विरहिणीवदनेन्दुजिघत्सया
स्फुरति राहुरयं न निशाकरः ॥ १ ॥

द्विजपतीति ॥ भो सखि, विरहिणीनां वियोगिनीनां वदनेन्दुजिघत्सया मुखचन्द्रभक्षणेच्छया राहुरेव स्फुरति, न निशाकरः। कीदृशः—द्विजपतिश्चन्द्रो विप्रश्रेष्ठश्च तद्ग्रसनात्तद्ग्रहणादाहितं यत्पातकं तस्मात्प्रभवमुत्पन्नं यत्कुष्ठं तेन सितीकृतो धवलीकृतो विग्रहः शरीरं यस्य स तथा ॥ क्षेपकोऽयमिति तिलके विशेषः, सुखाववोधायां तु क्षेपकत्वं नोक्तम्, 'अनेन ब्रह्महत्याविभूतं फलमनुभवतोऽपि पुनः स्त्रीहत्याकरणोद्यतस्यास्य नास्ति त्रपेत्याभिप्रायः' इति चोक्तम् ॥ १ ॥ )

इति विधोर्विविधोक्तिविगर्हणं
व्यवहितस्य वृथेति विमृश्य सा।
अतितरां दधती विरहज्वरं
हृदयभाजमुपालभत स्मरम् ॥ ७४ ॥

इतीति ॥ सा इति विमृश्य विचार्य अतितरामत्यर्थं विरहज्वरं कामपीडां दधती हृदयभाजमतिसंनिहितं स्मरमुपालभत निनिन्द। इति किम्—व्यवहितस्य दूरस्थस्य विधोः—इति विविधाभिः पूर्वोक्ताभिरुक्तिभिर्विगर्हणं निन्दनं वृथा ॥ ७४ ॥

हृदयमाश्रयसे यदि मामकं
ज्वलयसीत्थमनङ्ग तदेव किम्।
स्वयमपि क्षणदग्धनिजेन्धनः
क भवितासि हताश हुताशवत् ॥ ७५॥

हृदयमिति ॥ हे अनङ्ग काम, मामकं मदीयं हृदयं यद्याश्रयसे आश्रित्य वर्तसे, तदाश्रयभूतं हृदयमेव इत्थमनिर्वाच्यं किमिति ज्वलयसि दहसि। किमिति न दहामीत्यत आह—क्षणमात्रेण दग्धं निजेन्धनं हृदयलक्षणं येन स एवंविधः, अतएव आश्रयाशत्वात् हे हताश नष्टाभिलाष, हुताशवद्वह्निवत्स्वयमपि आत्मनापि क भवितासि कुत्र स्थास्यसि। स्वाश्रयमपि न रक्षसि। अत्यन्तदुर्विनीतस्त्वमित्यर्थः। आश्रयस इत्यात्मनेपदेन

१ अत्रोपमा वक्रोक्तिश्च।२ अत्र यमकम्। अनुप्रासश्च। उत्प्रेक्षा हेतुश्चार्थालङ्कारौ। ३ अत्रानुप्रासः शब्दालङ्कारः। विधुरेव स्मरमुखमिति रूपकम्। प्रसिद्धं चापह्नुत्य तथोक्तेश्चापह्नुतिः।

१ अत्र निशाकरमपह्नुत्य राहुत्वस्थापनादपह्नुतिः। २ अत्रानुप्रासः।

तवैव प्रयोजनं मदाश्रयेण सिध्यतीति सूच्यते । मासकं, 'तवकममकावेकवचने ४।३।३' इत्यणि ममकादेशः ॥ ७५ ॥

पुरभिदा गमितस्त्वमदृश्यतां
त्रिनयनत्वपरिप्लुतिशङ्कया ।
स्मर निरैष्यत कस्यचनापि न
त्वयि किमक्षिगते नयनैस्त्रिभिः ॥७६॥

पुरेति ॥ पुरभिदा त्रिपुरान्तकेन त्रिनयनत्वस्य परिप्लुतिरतिव्याप्तिः, तस्याः सकाशाच्छङ्कया सर्वोऽपि जनस्त्रिनयनोऽभूदिति भयेन त्वमदृश्यतामप्रत्यक्षत्वं गमितः प्रापितः । मयि प्रत्यक्षे त्रिनयनत्वस्यातिव्याप्तिः कथमित्याशङ्क्याह—हे स्मर, त्वयि अक्षिगते प्रत्यक्षे, अथ च द्वेष्ये सति कस्यचनापि कस्यापि त्रिभिर्नयनैर्न निरैष्यत निर्गम्य न प्रादुर्भूतम् । लौकिकी चोक्तिरियम्—कश्चिद्दुष्टं दृष्ट्वा वदति—एनं दृष्ट्वाऽहं त्रिनेत्रो जात इति । अत्र यथा त्रिनेत्रशब्देन कोपयुक्तत्वं लक्ष्यते, तथाऽत्रापि सर्वेऽपि सक्रोधा भवेयुरित्यर्थः । छलात्तु सर्वेऽपि त्रिनेत्रा भवेयुरिति मम त्रिनेत्रत्वप्रसिद्धिर्गमिष्यतीति भयात्त्वमप्रत्यक्षत्वं गमितः । अथ च त्वदुदयाज्ज्ञानलक्षणे तृतीये नेत्रे गमिते सति अयमन्ध इति नेत्रत्रयस्यापि वैयर्थ्यमापद्येतेति लौकिक्युक्तिः । इति सर्वं बुद्ध्वा त्वमप्रत्यक्षतां गमितः । त्रिनयनत्वस्य परिप्लुतिर्वैयर्थ्यं तच्छङ्कया त्वयि कस्याप्याक्षिगते दृश्ये सति त्रिभिर्नेत्रैर्न व्यर्थीभूतम्, अपितु व्यर्थीभूतमेव । त्वद्दाहार्थमेव तस्य तृतीयनेत्रत्वं, त्वद्दाहे व्यर्थमेव स्यादित्यर्थ इति वा । अत्रापि तृतीयनेत्रस्य वैयर्थ्येऽपि नेत्रद्वयस्याप्यप्रयोजकत्वाद्वैयर्थ्यं ज्ञेयम् । व्याख्यानान्तरं सुधिया बोद्धव्यम् । त्रिनयन इति, क्षुभ्नादित्वाण्णत्वाभावः । निरैष्यत, 'ईष सर्पणे' इति भावे यगात्मनेपदम् ॥ ७६ ॥

सहचरोऽसि रतेरिति विश्रुति-
स्त्वयि वसत्यपि मे न रतिः कुतः ।
अथ न सम्प्रति सङ्गतिरस्ति वा-
मनुमृता न भवन्तमियं किल ॥ ७७ ॥

सहचर इति ॥ रतेः स्वप्रियायाः सहचरोऽसि तया विना एकाकी कुत्रापि न तिष्ठसीति यदि विश्रुतिर्जनवादः । अथ च रतेः प्रीतेः । तर्हि त्वयि वसति विद्यमानेऽपि मे मम रतिः प्रीतिः किमिति न चीयते । मयि त्वं वर्तसे रतिश्च नास्ति । सहचरत्वादुभाभ्यामपि भाव्यम्, तस्मात्प्रसिद्धिर्मिथ्यैवेत्यर्थः । अथवा सांप्रतमनङ्गावस्थायां वां युवयोः संगतिर्नास्ति, किल यस्मादियं रतिर्मृतं भवन्तमनुलक्ष्य न मृता अन्वारोहणं न कृतवती । यतः सांप्रतं संगतिर्मैत्री, साहचर्यं च नास्तीति प्रसिद्धिः । त्वं रतिवियुक्तः । विरुद्धा श्रुतिर्विश्रुतिः प्रसिद्धिरलीकैव । 'रतिः कामप्रियायां च रागेऽपि सुरतेऽपि च' इति विश्वः ॥७७ ॥

रतिवियुक्तमनात्मपरज्ञ किं
स्वमिव मामपि तापितवानसि ।
कथमतापभृतस्तव संगमा-
दितरथा हृदयं मम दह्यते ॥ ७८ ॥

रतीति ॥ हे अनात्मपरज्ञ, आत्मानं रक्ष्यं परं चारक्ष्यं न जानातीत्यनात्मपरज्ञस्तत्संबुद्धिः । त्वं रतिवियुक्तां मामिव रतिवियुक्तं स्वमपि आत्मानमपि किमिति तापितवान् दग्धवान् असि । आत्मनः प्रतिकूलं कोऽपि नाचरति, किंतु शत्रोरेव । त्वं तूभयोरित्यनात्मपरज्ञो भवसीत्यर्थः । एवं कुतो ज्ञातमित्यत आह—इतरथा त्वया आत्मन्यतापिते सति अतापभृतस्तापरहितस्य तव संगमात्संबन्धान्मम हृदयं कथं कस्मात्कारणाद्दह्यते संताप्यते । परापकारार्थमात्मानमपि संतापितवान् एवंविधः परापकारनिरतस्त्वमित्यर्थः । 'संसर्गजा दोषगुणा भवन्ति' । संतप्तसंबन्धात्संतप्तत्वं युक्तम् । दह्यम् इति, कर्मकर्तरि यक्तेङौ ॥ ७८ ॥

अनुममार न मार कथं नु सा
रतिरतिप्रथितापि पतिव्रता ।
इयदनाथवधूवधपातकी
दयितयाऽपि तयाऽसि किमुज्झितः ॥७९॥

अन्विति ॥ नु संभावनायां संबोधने । हे मार काम, सा सती पतिव्रतात्वेनातिप्रथितातिविख्यातापि रतिस्तव प्रिया मृतं त्वामनु कथं न ममार । पतिव्रतया मरणं कर्तव्यमिति धर्मः । 'मृते म्रियेत या पत्यौ' इत्युक्तेः । न कृतं चेत्तत्रेदं कारणम्, तया दयितयापि इयतीनां बह्वीनामनाथानां रक्षितृरहितानां वियोगिनीनां

१ अत्रानुप्रासः शब्दालङ्कारः । उपमाऽर्थालङ्कारः । २ अत्रोत्प्रेक्षा ।

१ अत्रानुप्रासः । उत्प्रेक्षा विभावना च । २ स्वमिवेत्युपमा । कथमित्यादिना निर्णयनादनुमानं च ।

वधेन पातकी त्वमुज्झितस्त्यक्तोऽसि किम्। 'आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः' इति वचनात्। अत एवानुमरणं न कृतमित्यर्थः। ममार, 'म्रियतेर्लुङ्लिङोश्च १।३।६१' इति नियमात्तङभावः॥ ७९॥

सुगत एव विजित्य जितेन्द्रिय-
स्त्वदुरुकीर्तितनुं यदनाशयत्।
तव तनूमवशिष्टवतीं ततः
समिति भूतमयीमहरद्धरः॥ ८०॥

सुगत इति॥ सुगत एव बौद्ध एव त्वां विजित्य त्वां पराभूय तव उरुर्महती कीर्तिरेव तनुः शरीरमनाशयन्नाशितवान्। यद्यस्माज्जितेन्द्रियः। 'भग्नं मारबलं तेन' इत्यादिवचनात्। ततोऽनन्तरं जितेन्द्रियो हरोऽवशिष्टवतीं भूतमयीं पञ्चमहाभूतनिर्मितां तव तनूं शरीरं समित्यहरत्। ददाहेत्यर्थः। कीर्तिरूपं शरीरं सुगतश्चेन्नानाशयिष्यत्तर्हि सर्वहर्ता हरोऽपि त्वां हर्तुं नाशक्ष्यत्, तस्मात्सर्वेषां वध्य इत्यर्थः। अथ च भूतमयीं पैशाचीमिति निन्दाप्राकट्यम्॥ ८०॥

फलमलभ्यत यत्कुसुमैस्त्वया
विषमनेत्रमनङ्ग विगृह्णता।
अहह नीतिरवाप्तभया ततो
न कुसुमैरपि विग्रहमिच्छति॥ ८१॥

फलमिति॥हे अनङ्ग,कुसुमैर्विषमनेत्रं त्रिलोचनं विगृह्णता विरुध्यता त्वया यत्फलमलभ्यत, ततः फलाद्रक्षितृरहितानामहह प्राप्तभीतिरिव नीतिः कुसुमैरपि विग्रहं युद्धं नेच्छति। 'पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः' इति नीतिः। अनङ्ग इति निन्दा। विरोधस्तु अङ्गसहितेन क्रियते त्वं पुनः स्वयमनङ्गः, विषमो नेत्रो नेता नायकः; तेन दुःसहेन विरोधं कृतवतस्तव महन्मौर्ख्यमित्यर्थः। 'नेत्रो नेतारि भेषजे' इति विश्वः॥ ८१॥

अपि धयन्नितरामरवत्सुधां
त्रिनयनात्कथमापिथ तां दशाम्।
भण रतेरधरस्य रसादरा-
दमृतमाप्तघृणः खलु नापिवः॥ ८२॥

अपीति॥ इतरामरवदिन्द्रादिदेववत्सुधाममृतं धयन्नपि पिबन्नपि त्वं त्रिनयनात्त्र्यक्षाद्भस्मसाद्भावरूपां दशां कथं केन प्रकारेण आपिथ प्राप्तवानसि। अमृतपाने तु इन्द्रादिवत्त्वमप्यमरः कथं नाभूरित्यर्थः। रतेरधरस्याधरोष्ठस्य रसे स्वादे आदरादतितरामासक्तेर्हेतोः अमृते तादृङ्माधुर्याभावादाप्ता घृणा जुगुप्सा येनैवंभूतः सन् खलु प्रायेण अमृतं नापिवः न पीतवानसीति भण ब्रूहि। इति वाक्यार्थः कर्म। खलु संभावनायां वा। ओष्ठमाधुर्यलम्पटेन त्वयामृतकार्यमृतं न पीतम्। तेनेदृशी दशानङ्गत्वरूपा प्राप्ता। आपियेति थलि क्रादिनियमाल्लिट्॥ ८२॥

भुवनमोहनजेन किमेनसा
तव बभूव परेत पिशाचता।
यदधुना विरहाधिमलीमसा-
मभिभवन्भ्रमसि स्मर मद्विधाम्॥८३॥

भुवनेति॥ हे परेत! प्राप्तमरणम्,स्मर! काम भुवनमोहनाज्जातेनैनसा पापेन तव पिशाचता बभूव किम्। वदेत्यर्थः।यद्यस्मादधुना विरहाधिना वियोगपीडया मलीमसां मलिनां मद्विधां मादृशीं स्त्रियमभिभवन्पीडयन्भ्रमसि। अन्योऽपि परेतः पातकवशात्पिशाचः सन् बालकादीन्पीडयन्भ्राम्यतीति। त्रिभुवनापकारी त्वादृशः कोऽपि नास्तीति भावः। 'भ्रमसि' श्यन्विकल्पः॥ ८३॥

वत ददासि न मृत्युमपि स्मर
स्खलति ते कृपया न धनुः करात्।
अथ मृतोऽसि मृतेन च मुच्यते
न खलु मुष्टिरकृतबन्धनः॥ ८४॥

वतेति॥ हे स्मर! त्वं हितं न करोषि परं मृत्युमपि न ददासि वत कष्टम्। मरणे सतीयं पीडा नानुभूयेतेत्यर्थः। कृपया हेतुना ते कराद्धस्ताद्धनुर्न स्खलति पतति। कृपया पतितु युक्तम्। वत कष्टम्, कृपया मृत्युं न ददासि

---

१ यमकम् शब्दालङ्कारः। अनुप्रासः। परिकर उत्प्रेक्षा चेत्यनयोः सङ्करश्च। २ कीर्त्यां तनुत्वारोपाद्रूपकम्। ३ अत्र गम्योत्प्रेक्षा।

१ अत्रानुप्रासः शब्दालङ्कारः। खलिवतिपदद्योत्योत्प्रेक्षा।तां सुधामपीत्वाऽधरसुधां पातुमभिलषितुस्तव मौढ्यमिदं, यदेवं भस्मतां नीतः। अत इतः परमपि एवं यदि परिणामाविचारं प्रवर्त्तेथास्तर्हि इतोऽपि परं किमप्यनर्थान्तरं भोक्ष्यस इति कमपि प्रति सुहृद उपदेशोक्तिरभिव्यज्यते। अस्मिन् पक्ष उभयत्र सुधापदं वास्तविकावास्तविकवस्तुविशेषपरम्।

चेद्धनुः किमिति न त्यजसीत्यर्थः । अर्थाज्जीवत एव करात्कृपया धनुः पतति, त्वं तु मृतः, तस्मात्कथं पततु कृपाया अभावात् । अकृपयेति वा । धनुःपतनाभावे कारणमाह—अथ वा मृतोऽसि । मृतेन खलु निश्चितमुरीकृतमङ्गीकृतं स्वीकृतं बन्धनं येन एवंभूतो मुष्टिर्न मुच्यते । अतः कराद्धनुर्न भ्रश्यति । मुष्टिरुभयलिङ्गः । 'बन्धनं बन्धुरं च स्यादूरीकृतमुरीकृतम् ।, इत्यनेकार्थध्वनिमञ्जरी' ॥ ८४ ॥

दृगुपहत्यपमृत्युविरूपताः
शमयतेऽपरनिर्जरसेविता ।
अतिशयान्ध्यवपुःक्षतिपाण्डुताः
स्मर भवन्ति भवन्तमुपासितुः ॥ ८५ ॥

दृगिति ॥ हे स्मर ! त्वदन्ये ये निर्जरा देवाः सूर्यादयस्तेषां सेविता सेवको दृगुपहतिमान्ध्यम्, अपमृत्युमकालमरणं, विरूपतां कुष्ठादिना वैरूप्यं च शमयते शान्तिं नयति । भवन्तं कामदेवमुपासितुः सेवितुरतिशयेनान्ध्यं प्रतिपत्तिराहित्यं नेत्रराहित्यं च वपुःक्षतिः शरीरकार्श्यम्, अकालमृत्युश्च, वपुषः पाण्डुता, विरहजनितपाण्डुरोगश्च एते भवन्ति । सूर्यादिभक्तस्यान्यसर्वरोगोपशमने सामर्थ्यम् । स्वरोगोपशान्तौ तव सामर्थ्यं नास्ति, त्वद्भक्तस्य नास्त्यत्र किं वाच्यम् । एवंविधस्त्वं देव इत्युपहासः । अपरनिर्जरान्सेवते तच्छीलस्तस्य भावः, सा कर्त्री । अन्यदेवसेवनमिति वा । अपमृत्युश्च विरूपता चेति पूर्वं द्वन्द्वः कार्यः, ततः पूर्वेण । शमयते, 'णिचश्च' इति तङ्, अमन्तत्वान्मित्वे ह्रस्वः । सेविता तृच् । अपरनिर्जरसेविता, 'अवतरस्त्वत्रोधिका' इतिवत्समासः । द्वितीयपक्षे ताच्छील्ये णिनिः, तस्माद्भावे प्रत्ययः । अतिशयपदस्य प्रत्येकं संबन्धः । क्षयश्च पाण्डुता च, वपुषः क्षयपाण्डुते इति षष्ठीसमासं कृत्वा पूर्वेण समासः । अन्यथा पाण्डुताशब्दस्य पूर्वनिपातः स्यात् । उपासितुरिति तृन्नन्तयोगाद्भवन्तमिति द्वितीया ॥ ८५ ॥

स्मर नृशंसतमस्त्वमतो विधिः
सुमनसः कृतवान्भवदायुधम् ।
यदि धनुर्दृढमाशुगमायसं
तव सृजेत्त्रिजगत्प्रलयं व्रजेत् ॥ ८६ ॥

स्मरेति ॥ हे स्मर ! त्वं, नृशंसतमोऽतिशयेन हिंस्रः, अतः कारणाद्विधिः सुमनसः पुष्पाणि भवदायुधं कृतवान् । ब्रह्मा यदि तव धनुर्दृढं कठिनम्, आशुगं बाणमायसं लोहमयं च सृजेत्, तर्हि त्रिजगत्प्रलयं व्रजेत् । अथ च तव दुष्टमनस्त्वाद्भवदायुधस्य सुमनस्त्वं कृतं विधिना । 'नृशंसो घातुको हिंस्रः' इत्यमरः । हिंसार्थाच्छंसेः कर्मण्यण् । आयसं विकारे रजतादित्वादञ् । त्रयाणां जगतां समाहार इति द्विगोरेकवचने नपुंसकत्वे च त्रिजगदिति साधुः ॥ ८६ ॥

स्मररिपोरिव रोपशिखी पुरां
दहतु ते जगतामपि मा त्रयम् ।
इति विधिस्त्वदिषून्कुसुमानि किं
मधुभिरन्तरसिञ्चदनिर्वृतः ॥ ८७ ॥

स्मररिपोरिति ॥ हे काम ! ते तवापि रोपशिखी बाणाग्निर्जगतां त्रयं मा दहतु मा स्म धाक्षीदिति हेतोरनिर्वृतः सचिन्तः सन् शङ्कितो वा विधिः कुसुमानि त्वदिषून्मधुभिर्मकरन्दैरन्तर्मध्येऽसिञ्चत्सिक्तवान्किम् । कः किमिव—स्मररिपोर्हरस्य रोपशिखी पुरां त्रयमिव । स यथा पुरां त्रयं ददाह तथा तवापीति । सिक्तं वस्तु दाहसमर्थं न भवतीति भावः । मा दहतु निषेधार्थवाचिनिरनुबन्धकमाशब्दयोगे लोट् यत्त्वाहुः—'अथ किमर्थमाङ्माङोः सानुबन्धकयोर्निर्देशः आङ्माङोः सानुबन्धकयोः निर्देशः क्रियते । आङो गतिकर्मप्रवचनीयसम्प्रत्ययार्थः । माङः प्रतिषेधसम्प्रत्ययार्थः । इह माभूत्, 'आ छायामानयति, प्रमाच्छन्दः' इति 'आङ्माङोश्च ६।१।७८' इति सूत्रभाष्यानुस्मरणेन तु निरनुबन्धमाशब्दो निषेधार्थक एव न' इति तन्न, निरनुबन्धान्माशब्दात् छे परे तुक् न स्यात्, किंतु सानुबन्धादेव । निरनुबन्धस्य हि माशब्दस्य न निषेधार्थकत्वमेव । यथा सानुबन्धस्योति अभिप्रेत्यैव 'सम्प्रत्यय' इत्यत्र चमिति प्रयुक्तमित्यवधेयम् । निरनुबन्धस्यापि माशब्दस्य निषेधार्थकत्वमपीति स्पष्टं कोषेषु ॥ ८७ ॥

---

१ अत्र खल्वित्युत्प्रेक्षया प्राणितोऽर्थान्तरन्यास इति केचित् । २ अत्रानुप्रासः शब्दालङ्कारः । उपमेयभूतस्यापरस्य देवस्यापेक्षयोपमेयभूतस्य स्मरस्य निकृष्टत्वोक्तेर्व्यतिरेक इत्येके, काव्यप्रकाशानुयायिनस्तु प्रतीपमित्येवाहुः । आक्षेप उपमानस्य प्रतीपमुपमेयता । तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना ॥' इति हि काव्यप्रकाशः ।

१ अत्र काव्यलिङ्गम् । २ अत्र स्मररिपोरिवेत्युपमा, इति किमितीति हेतूत्प्रेक्षा चार्थालङ्कारः ।

विधिरनंशमभेद्यमवेक्ष्य ते
जनमनः खलु लक्ष्ममकल्पयत्।
अपि स वज्रमदास्यत चेत्तदा
त्वदिषुभिर्व्यदलिष्यदसावपि ॥ ८८ ॥

विधिरिति ॥ विधिः—अणुपरिमाणत्वान्निरंशं निरवयवम् अतएवाभेद्यं भेत्तुमशक्यं जनमनोऽवेक्ष्य खलु निश्चितं ते लक्ष्यं वेध्यमकल्पयद्व्यरचयत्। अपि सम्भावनायाम्। स ब्रह्मा वज्रमिन्द्रायुधं, हीरकं वा त्वेद्दास्यताकल्पयिष्यत्, तर्हि असावपि वज्रोऽपि त्वदिषुभिस्त्वद्बाणैर्व्यदलिष्यद्विदीर्णोऽभविष्यदिति सम्भाव्यते वज्रमपि भेत्तुं त्वदिषवः क्षमाः, यस्य लोकेऽभेद्यत्वं प्रथितमिति। यथोक्तम्। त्वादृशो हिंस्रः कोऽपि नेत्यर्थः। क्रियाऽतिपत्तौ लृङ्। 'वज्रोऽस्त्री हीरके पवौ' इत्यमरः ॥ ८८ ॥

अपि विधिः कुसुमानि तवाशुगान्
स्मर विधाय न निर्वृतिमाप्तवान्।
अदित पञ्च हि ते स नियम्य तां-
स्तदपि तैर्वत जर्जरितं जगत् ॥ ८९ ॥

अपीति ॥ हे स्मर! विधिः कुसुमानि तव आशुगान्विधायापि निर्वृतिं सुखं नाप्तवान् अतः स ब्रह्मा तान्कुसुमरूपान्बाणान्नियम्य गणयित्वा पञ्च हि पञ्चैव ते तुभ्यमदित न त्वधिकान्,तदपि तयाऽपि तैः पञ्चसङ्ख्याकैरपि बाणैर्जगत्त्रिलोकी जर्जरितं खण्डितम् वत कष्टम्। अतिहिंस्रोऽसीति भावः ॥ ८९ ॥

उपहरन्ति न कस्य सुपर्वणः
सुमनसः कति पञ्चसुरद्रुमाः।
तव तु हीनतया पृथगेकिकां
धिगियताऽपि न तेऽङ्ग विगर्हणा॥९०॥

उपहरन्तीति ॥ हे काम! पञ्चसंख्याकाः सुरद्रुमा मन्दारादयः कस्य सुपर्वणो देवमात्रस्य विशिष्टस्य पुनः कति सुमनसः पुष्पाणि नोपहरन्ति उपयानीकुर्वन्ति असंख्याताः सुमनसः प्रयच्छन्ति। देवस्यापि तव तु पुनर्हीनतयाऽतिनिकृष्टत्वेनावज्ञया पृथक् प्रत्येकं एकिकामेकमेकं पुष्पं प्रयच्छन्ति। अतएव पञ्चबाणस्त्वम्। अङ्ग सोपहासामन्त्रणे। इयताऽपि धिक्कारेण ते विगर्हणा न लक्षणया लज्जा न। अतएव धिक् त्वामित्यर्थः। निर्लज्जो निर्घृणस्त्वमित्यर्थः। 'अङ्गविदारणम्' इति पाठे हृदयस्फोटो न भवतीत्यर्थः। 'स्त्रियः सुमनसः पुष्पम्' इत्यमरोक्त्या सुमनःशब्दस्य नित्यस्त्रीलिङ्गबहुवचनान्तत्वेऽपि 'सुमनाः पुष्पमालत्योः स्त्रियां, ना धीरदेवयोः' इति मेदिन्याद्युक्त्यैकवचनान्तत्वमप्याश्रितम् ॥ ९० ॥

कुसुममप्यतिदुर्नयकारि ते
किमु वितीर्य धनुर्विधिरग्रहीत्।
किमकृतैष तवैकतदास्पदे
द्वयमभूदधुना हि नलभ्रुवौ ॥ ९१ ॥

कुसुममिति॥ विधिः कुसुमरूपं धनुः ते तुभ्यं वितीर्य दत्त्वा पुनरग्रहीद्गृहीतवान्किमु। यतोऽतिदुर्नयकारि त्रिजगदपकारित्वादतिदुर्विनीति। किम्विति प्रश्ने संभावनायाम्। स्वयमेव पुनराह—धृतेऽपि धनुषि एष विधिस्तव किमकृत, अपितु किमप्यपकारं कर्तुं समर्थो नाभूदित्यर्थः। हि यस्मादधुना धनुष्यपहृतेऽपि एकतदास्पदे एकं च तत्तच्च एकतत् तस्य धनुषः स्थाने नलस्य भ्रुवौ द्वयमभूत्। तव तु धनुर्द्वयलाभात्तेन तवोपकार एव कृतो न त्वपकारः। विधिना परोपकारार्थं धनुर्हृतम्, परं लोकाभाग्येन विपरीतं जातमिति भावः।'उपसर्गात्परस्य नयतेर्नकारस्य णत्वं माभूत्'इति महाभाष्योक्तेर्दुर्नय-इत्येव साधुः,न तु 'उपसर्गादसमासेऽपि णोपदेशस्य ८। ४। १४' इत्यतो णत्वे दुर्णय इति ॥ ९१ ॥

षडृतवः कृपया स्वकमेककं
कुसुममक्रमनन्दितनन्दनाः।
ददति यद्भवते कुरुते भवा-
न्धनुरिवैकमिषूनिव पञ्च तैः ॥ ९२ ॥

षडिति ॥ अक्रमं क्रममुल्लङ्घ्यैव नन्दितं वर्धितं नन्दनमिन्द्रोद्यानं यैस्ते षडपि ऋतवः स्वकं स्वीयमेककमेकैकं कुसुमं पुष्पं कृपया न तु प्रीत्या यद् भवते तुभ्यं ददाति। भवान् तैः षड्भिः कुसुमैः कृत्वा एकं पुष्पं धनुरिव पञ्च पुष्पाणि इषूनिव कुरुते। भिक्षुणा त्वया

१ वज्रमिति श्लिष्टम्। अनंशस्य लक्ष्यत्वमेव कुत इति विरोध आभासते। परिहारश्च स्पष्ट एव। ६ पञ्चभिः कुसुमैर्जगत्त्रयस्य जर्जरीभवनमसम्भवमथापि तथोक्तमिति विरोधाभासः।

१ लोकप्रसिद्धमनुरुध्येदमुक्तम्। इति लोकोक्तिरिति कुवलयानन्दकाराः। २ किमित्युत्प्रेक्षा। कुसुमस्य दुर्नयकारित्वमसिद्धमिति विरोधः।

ऋतवः षट्पुष्पाणि याचिताः, तैस्त्वया विभज्य धनुर्बाणाश्च कृताः । अतिदरिद्रो भिक्षया प्राप्तं स्वल्पमपि वस्तु विभज्य, अनेनैतत्कर्तव्यमनेनैतत्कर्तव्यमिति मनोरथः क्रियत इति लौकिक्युक्तिसूचनार्थमुभयत्रापीवशब्दप्रयोगः ॥ ९२ ॥

यदतनुस्त्वमिदं जगते हितं
क स मुनिस्तव यः सहते हतीः ।
विशिखमाश्रवणं परिपूर्य चे-
दविचलद्भुजमुज्झितुमीशिषे ॥ ९३ ॥

यदिति ॥ हे स्मर ! यत्त्वमतनुः शरीररहितोऽसि इदं जगते लोकाय हितम् । सशरीरत्वे तु त्वं विशिखं बाणमाश्रवणं परिपूर्याकृष्य अविचलद्भुजं दृढभुजं यथा स्यादेवं बाणमुज्झितुं त्यक्तुं चेदीशिषे समर्थः स्याः, तर्हि यस्तव हतीर्घातान्सहते स मुनिरपि क । त्वद्बाणपीडासहो मुनिरपि न विद्यते, अन्यो नास्तीति किं वाच्यम् । तस्मात्तवाशरीरत्वे लोकभाग्यं कारणम् । हितयोगे चतुर्थीसमासविधानसामर्थ्याज्जगते इति तद्योगे चतुर्थी । 'ईशः से ७।२।७७' इति इटि ईशिषे इति रूपम् ॥ ९३ ॥

सह तया स्मर भस्म झटित्यभूः
पशुपतिं प्रति यामिषुमग्रहीः ।
ध्रुवमभूदधुना वितनोः शर-
स्तव पिकस्वर एष स पञ्चमः ॥ ९४ ॥

सहेति ॥ हे स्मर ! त्वं पशुपतिं प्रति लक्ष्यीकृत्य तद्वधाय यामिषुमग्रहीः, तया इष्वा सह त्वं झटिति भस्म अभूः । जीवपालकेन हरेणास्मदादिहिताय सबाणस्त्वं दग्ध इति भावः । वितनोः शरीररहितस्य तवाधुना पिकस्वर एव कोकिलस्वर एव पञ्चानां पूरणः शरोऽभूत् । ध्रुवमुत्प्रेक्षे । अशरीरत्वेऽपि पञ्चबाणत्वं चावास्थितमेवेत्यर्थः । 'पञ्चमं प्राह कोकिलः' इत्युक्तेः पञ्चमनामकः पिकस्वर एव शरोऽभूत् इति शब्दच्छलम्—हरेण दग्धे शरे तत्स्थाने पञ्चमस्वर एव जातः । 'पत्री रोप इषुर्द्वयोः' इत्यमरः ॥ ९४ ॥

स्मर स मद्दुरितैरफलीकृतो
भगवतोऽपि भवद्दहनश्रमः ।
सुरहिताय हुतात्मतनुः पुन-
र्ननु जनुर्दिवि तत्क्षणमापिथ ॥ ९५ ॥

स्मरेति ॥ रे स्मर ! स भगवतो, हरस्यापि भवद्दहने भवद्दाहे श्रमः मद्दुरितैर्ममैव पातकैरफलीकृतो निष्फलीकृतः । विफलत्वमेवाह—ननु यस्मात्सुराणां हिताय हुता त्यक्ता आत्मतनुः स्वशरीरं येन एवंविधस्त्वं तत्प्रसादात्तत्क्षणं तत्कालमेव दिवि पुनर्जनुर्जन्म आपिथ प्राप्तवानसि । नहि पापिनः स्वर्गे जन्म, तव तु परोपकारित्वात्स्वर्गे जन्म । सुरहिताय, 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६' इति समासः ॥ ९५ ॥

विरहिणो विमुखस्य विधूदये
शमनदिक्पवनः स न दक्षिणः ।
सुमनसो नमयन्नटनी धनु-
स्तव तु बाहुरसौ यदि दक्षिणः ॥ ९६ ॥

विरहिण इति ॥ विधूदये चन्द्रोदये विमुखस्य दुःखितस्य विरहिणः स शमनस्य यमस्य दिक्पवनो मलयानिलः दक्षिणः सुखकारी न, किन्तु वामो वक्र एव । प्रथमं विरहाद् दुःखम्, ततश्चन्द्रोदयात्, ततो मलयानिलादिति भावः । पूर्णस्य चन्द्रस्य दुःखकारित्वाद्विमुखस्य पश्चिमाभिमुखस्य विरहिणोऽपसव्यो न भवति, किंतु वाम एव । पश्चिमदिङ्मुखस्य दाक्षिणदिग्भवो वाम एवेत्यर्थः । ननु मलयानिलस्य प्रसिद्धं दक्षिणत्वं कथमपलप्यत इत्याशङ्क्याह—यदि असौ मलयानिलो दक्षिण एवेत्यभिमानः, तु तर्हि सुमनसो धनुः पुष्पमयं चापमटनी अग्रे नमयन्नम्रीकुर्वंस्तव बाहुरेव । तुरेवार्थो वा । यथा तव बाहुर्विरहिणोऽनुकूलस्तथा मलयवायुरपि । विरुद्धलक्षणया उभौ दुःसहावित्यर्थः । मलयानिलोऽप्यग्रे पुष्पाणि नमयति । सुमनसस्तवेति वा । शमयते सर्वान्मारयति, तद्दिग्गतो वायुरपि तथैव । अथ च दक्षिणः प्रहरणकुशलो धर्मयोद्धा न, पराङ्मुखस्यापि

---

१ इवेत्युपमाऽत्रार्थालङ्कारः । २ अत्रानुप्रासः शब्दालङ्कारः । यत्त्वमतनुरप्यसीदमपि जगते अहितमेवेति अकारप्रश्लेषादवधीयते, अथ यदि सतनुरेव जातुरभूस्तर्हि जगतः कियत्त्वत्तोऽहितमिति न सुवचमित्याभिप्रायेणापि पद्यमिदं योजयितुं शक्यते । काव्यलिङ्गमर्थालङ्कारः ।

१ अत्रानुप्रासः शब्दालङ्कारः ध्रुवमित्युत्प्रेक्षाऽर्थालङ्कारश्च । २ अत्र प्रागुक्तस्यार्थस्य परार्धेन समर्थनमिति काव्यलिङ्गमिति केचित्, अनुमानमित्यपरे, भगवदीयोद्योगस्य निष्फलत्वासम्भवोक्तेऽपि तथोक्तमित्यतिशयोक्तिरित्यप्यन्ये ।

हननात् । अतो दक्षिणत्वे प्रसिद्धो विरहिणां शत्रुरेवेत्यर्थः ॥ ९६ ॥

किमु भवन्तमुमापतिरेककं
मदमुदान्धमयोगिजनान्तकम् ।
यदजयत्तत एव न गीयते
स भगवान्मदनान्धकमृत्युजित् ॥९७॥

किमिति ॥ उमापतिर्मदमुदा गर्वहर्षेणान्धमयोगिजनानां वियोगिजनानामन्तकं यमतुल्यमेककं भवन्तं यदजयत्, तत एव हेतोः किमु स भगवान्हरो मदनान्धकमृत्युजित् न गीयते ? अपि तु तत एव कीर्त्यते । एकस्यैव तव जयान्मदनाजित्, अन्धकजित्, मृत्युजिदिति नामत्रयं प्राप्तवान् । मदनत्वम्, अन्धकत्वम्, मृत्युत्वं, धर्मत्रयं त्वयि विद्यते । अन्धकासुर-मृत्यु-मदन-नामभिरपकारकत्त्वमित्यर्थः ॥ ९७ ॥

त्वमिव कोऽपि परापकृतौ कृती
न ददृशे न च मन्मथ शुश्रुवे ।
स्वमदहो दहनाज्ज्वलतात्मना
ज्वलयितुं परिरभ्य जगन्ति यः॥९८॥

त्वमिवेति ॥ हे मन्मथ! परापकृतौ परापकारे विषये त्वमिव त्वत्सदृशः कोऽपि कृती कुशलो न ददृशे दृष्टः,न च शुश्रुवे श्रुतः । चोऽप्यर्थः । कथमित्यत आह—यस्त्वं ज्वलता आत्मना स्वरूपेण जगन्ति त्रिभुवनानि परिरभ्यालिङ्ग्य ज्वलयितुं दहनाद् हरनयनाग्नेर्हेतोः स्वमात्मानमदहोऽधाक्षीः । ज्वलतस्तव संबन्धात् त्रिभुवनं ज्वलतीत्यर्थः । परापकारार्थमात्मापि येन दग्ध एवंविधस्त्वं कुशल इत्युपहासः ॥ ९८ ॥

त्वमुचितं नयनार्चिषि शम्भुना
भुवनशान्तिकहोमहविः कृतः ।
तव वयस्यमपास्य मधुं मधुं
हतवता हरिणा बत किं कृतम् ॥९९॥

त्वमिति ॥ त्वं शम्भुना नयनार्चिषि उचितं योग्यं भुवनशान्तिकहोमार्थं लोकपीडाशान्तिप्रयोजनकहोमार्थं हविर्हव्यं कृतः । महामायादिपीडाशान्त्यर्थं वह्नौ होमार्थं हविर्भवति, त्वज्जनितपीडाशान्त्यर्थं तु नयनावह्नावुचितं हविस्त्वमेव प्रक्षिप्त इत्यर्थः । त्वं नयनवह्नौ हविः कृतः, एतदुचितं कृतमिति वा । शं भवत्यस्मादिति शंभुपदेन सूचितम् । हरिणा विष्णुना तव वयस्यं मित्रं मधुं वसन्तमपास्य परित्यज्य,मधुं मधुनामानं दैत्यं हतवता किं कृतम् ? न किमपीत्यर्थः । अतिपीडाकारिणं वसन्तमुपेक्ष्य दैत्यं हतवता हरिणा किमपि नोपकृतमिति भावः। बत कष्टम् । किं कृतं, कुत्सितं कृतमिति वा । शान्तिः प्रयोजनमस्य शान्तिकः 'प्रयोजनम्'इति ठक् ॥ ९९ ॥

इति कियद्वचसैव भृशं प्रिया-
धरपिपासु तदाननमाशु तत् ।
अजनि पांशुलमप्रियवाग्ज्वल-
न्मदनशोषणबाणहतेरिव ॥ १०० ॥

इतीति ॥ प्रियस्य नलस्याधरपिपासु अधरचुम्बनाभिलाषि तत्प्रसिद्धं विरहपाण्डुरं वा तस्या आननम् । इति पूर्वोक्तेन कियद्वचसैवाल्पवचनेनैव आशु शीघ्रं पांशुलमतितरां शुष्कमजनि जातम् । साकल्येन वक्तुं समर्थं नाभूदित्यर्थः । यच्च पिपासु तदल्पवचनेनैव शुष्ककण्ठं भवति । उत्प्रेक्षते—अप्रियवाचा सनिन्दावचनेन ज्वलन्क्रुद्धो यो मदनस्तस्य शोषणबाणेन शोषणाख्येन शरेण या हतिर्हननं तस्मादिव । शोषणबाणाहतं सच्छुष्कं जातमित्यर्थः ।अधरपिपासु इत्यत्र 'मधुपिपासुप्रभृतीनां गम्यादिपाठात्समासः' इति वामनाचार्यवचनात्समासः।पांशुलशब्दः सिध्मादित्वात् लजन्तः ॥ १०० ॥

प्रियसखीनिवहेन सहाथ सा
व्यरचयद्गिरमर्धसमस्यया ।
हृदयमर्माणि मन्मथसायकैः
क्षततमा बहु भाषितुमक्षमा ॥ १०१॥

वक्रोक्तिभङ्ग्याग्रतां व्यञ्जयितुमुपक्रमते—

प्रियेति ॥ अथानन्तरं सा भैमी प्रियसखीनिवहेन स्वरहस्यवेदिस्निग्धसखीनिवहेन सह अर्धया सखीभाषितस्य समस्यया प्रत्युत्तररूपेणोत्तरार्धपरिपूरणेन गिरं व्यरचयत् ।अर्धं सख्यः पूर्वमूचुः,अनन्तरं भैम्युवाचेत्यर्थः । एवं किमित्युवाचेत्यत आह—किम्भूता सा—हृदयमर्मणि

---

१ अत्र दक्षिणपदे श्लेषः । न स दक्षिण इत्येतस्यैवार्थस्य समर्थनाय परार्धावतारणमित्यनयोर्हेतुमद्भावात् काव्यलिङ्गम् । २ किम्वित्युत्प्रेक्षा । मदमुदादेर्मदनादेश्च भेदेऽप्यभेदोक्तेरतिशयोक्तिः । ३ अत्रोपमा, असम्भवोऽपीत्यन्ये ।

१ रूपकमत्रार्थालङ्कारः । अनुप्रासो यमकं चेति शब्दालङ्कारद्वयी । २ इवेत्यत्रोत्प्रेक्षा ।

हृदयलक्षणमर्मस्थाने मन्मथसायकैः क्षततमातितरां विद्धा अतएव बहु भावितुमक्षमासमर्था ।'समस्या तु समासार्था' इत्यमरः । अपूर्णत्वाद्विक्षिप्तं समस्यते संक्षिप्यतेऽनयेति समस्या । बाहुलकात् ' संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः । ३।३।९९' इति क्यप् ॥ १०१ ॥

अकरुणादव सूनशरादसू-
न्सहजयाऽऽपदि धीरतयाऽऽत्मनः ।
असव एव ममाद्य विरोधिनः
कथमरीन्सखि रक्षितुमात्थ माम् १०२॥

अकरुणादिति ॥ हे भैमि ! त्वम् अकरुणान्निर्दयात्सूनशरात् कामात्सकाशादापदि सहजया स्वाभाविकया धीरतया धैर्येण आत्मनोऽसूनव रक्ष । सूनाऽत्रास्तीति सूनाः, हिंस्रत्वशालिन इति भावः तादृशाः शरा यस्येति तस्मादिति श्लेषोऽपि । 'विपदि धैर्यम्' इति वचनम् । इति सखीवचनम् । हे सखि, ममाद्य असव एव प्राणा एव विरोधिनो वैरिणः, त्वमरीन्रक्षितुं कथमात्थ ब्रूषे । वैरिणो रक्षणीया इत्युदासीनोऽपि नोपदिशति, किंपुनर्मित्रम् । इति भैमीवचः । प्राणेषु गतेषु मम सुखं स्यादित्यर्थः । सूनशरात् 'भीत्रार्थानां भयहेतुः १ ४।२५' इत्यपादानत्वम् ॥ १०२ ॥

हितगिरं न शृणोषि किमाश्रवे
प्रसभमप्यव जीवितमात्मनः ।
सखि हिता यदि मे भवसीदृशी
मदरिमिच्छसि या मम जीवितम् १०३

हितेति ॥ हे आश्रवे सर्वदास्मद्वचनकारिणि, हितानां मादृशीनां हितां वा गिरं वाचं किं न शृणोषि, अपितु आकर्णय । यद्यप्यतिपीडा भवति तथापि 'आत्मानं सर्वदा गोपायेत्' इति श्रुतेः । प्रसभं बलात्कारेणापि धैर्यमवलम्ब्य आत्मनो जीवितमव इत्यन्यसखीवचः । उत्तरम्—हे सखि, या त्वं मदरिं मच्छत्रुभूतं मम जीवितमिच्छसि, ईदृशी यदि तर्हि हिता मे भवसि, काका हिता न भवस्येव । सखीत्वादेतादृशं वक्तुमनुचितमिति भावः । मे, चतुर्थी हितशब्दयोगे इति वा ॥ १०३ ॥

अमृतदीधितिरेष विदर्भजे
भजसि तापममुष्य किमंशुभिः ?
यदि भवन्ति मृताः सखि चन्द्रिकाः
शशभृतः क तदा परितप्यते ॥१०४॥

अमृतेति ॥ हे विदर्भजे, एष पुरोवर्ती अमृतदीधितिः, न तु तीक्ष्णदीधितिः । त्वम् अमुष्यांशुभिः सुधामयैः किरणैस्तापं दाहं किं भजसि—इति सखीवचः । छलेनोत्तरमाह—हे सखि, शशभृतः कलङ्किनः चन्द्रिका यदि मृता भवन्ति कृष्णपक्षवत्तदा क कुतो हेतोः परितप्यते संतप्येत्, कारणान्तराभावात्संतापो न भवेदिति भैमीवचः ॥ १०४ ॥

व्रज धृतिं त्यज भीतिमहेतुका-
मयमचण्डमरीचिरुदञ्चति ।
ज्वलयति स्फुटमातपमुर्मुरै-
रनुभवं वचसा सखि लुम्पसि ॥१०५॥

व्रजेति ॥ हे भैमि, धृतिं व्रजाङ्गीकुरु । सूर्यबुद्ध्या निन्दामहेतुकामकारणिकां भीतिं त्यज । अयमचण्डमरीचिश्चन्द्र उदञ्चत्युदेति—इति सखीवचः । उत्तरम्—हे सखि ! अयम् आतपमुर्मुरैरुष्णरूपकरीषा (तुषा)-ग्निकणैः स्फुटं मां ज्वलयति, त्वं वचसानुभवं लुम्पसि । वचनादनुभवो बलीयानित्यर्थः । 'मुर्मुरस्तुषवह्नौ स्यात्' इति विश्वः ॥ १०५ ॥

अयि शपे हृदयाय तवैव त-
द्यदि विधोर्न रुचेरसि गोचरः ।
रुचिफलं सखि दृश्यत एव त-
ज्ज्वलयति त्वचमुल्लयत्यसून् १०६॥

अयीति ॥ अयि भैमि ! यदि त्वं विधोश्चन्द्रस्य रुचेर्यदि गोचरो विषयो नासि,तत्तर्हि तवैव हृदयाय शपे त्वद्धृदयं स्पृशामि चन्द्र एवायं न तु सूर्य इति शपथः क्रियते । 'अपि' इति पाठे सत्यप्यर्थे तव विश्वासार्थं शपेऽपि शपथमपि करोमीत्यर्थः । छलेनोत्तरमाह—हे

१ अत्र सहोक्तिरर्थालङ्कारः । अनुप्रासः पुनः शब्दालङ्कारः । २ अत्राक्षेपः । ३ अत्र वक्रोक्तिः ।

१ अत्रापि वक्रोक्तिरर्थालंकारः । २ अत्राचण्डकरसपह्नुत्यानुभवमित्यादिना चण्डकरानुभवस्थापनादपह्नुतिः, तादृशानुभवस्य भ्रान्तिमूलत्वाद्भ्रान्तिमान्, यदि अचण्डकर एवायं भवेत्तर्हि आतपमुर्मुरैः कथं ज्वलयेत्,य एवं ज्वलयति स चण्डकरएव, यो नैवं स नैवमित्यनुमानं च ।

सखि ! रुचेः फलं दृश्यत एव यत्त्वचं ज्वलयति असूनुन्मूलयत्युन्मूलयति। त्वया सत्यमुक्तम्। रुचिफलं शरीरज्वलनं प्राणोन्मूलनं च उष्णस्पर्शत्वं तेजसः स्वभाव इति भावः। शपे 'शप उपालम्भे' इति वक्तव्यात्तङ्। तद्योगे 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः १।४।३४' इति सम्प्रदानत्वात् चतुर्थी ॥ १०६ ॥

विधुविरोधितिथेरभिधायिनी
ननु न किं पुनरिच्छसि कोकिलाम्।
सखि किमर्थगवेषणया गिरं
किरति सेयमनर्थमयीं मयि ॥ १०७ ॥

विध्विति ॥ विधुविरोधितिथेश्चन्द्रशत्रुतिथेरमावास्याया अभिधायिनीमपि कुहूशब्दं कुर्वतीमपि कोकिलां पुनः किमिति नेच्छसि। अपि तु स्वैशत्रुचन्द्रशत्रुत्वान्माननीयेयम्। अत्रोत्तरम्—हे सखि, कुहूशब्देनामावास्यामाह्वयतीयमित्यर्थगवेषणयाऽर्थविचारणया किम् अलम्। यस्मात्सेयं कोकिला मयि मद्विषयेऽनर्थमयीममावास्यालक्षणाऽनर्थशून्याम्, अथ च दुःसहदुःखप्रचुरां, गिरं किरति वदति। शब्दमात्रमेतत्, न तु तामाह्वयतीति वञ्चिकेयमिति भावः ॥ १०७ ॥

हृदय एव तवास्ति स वल्लभ-
स्तदपि किं दमयन्ति विषीदसि।
हृदि परं न बहिः खलु वर्तते
सखि यतस्तत एव विषद्यते ॥ १०८ ॥

हृदय इति ॥ हे दमयन्ति ! यद्यपि स वल्लभो नलस्तव हृदय एवास्ति तदपि तथापि किं विषीदसि खेदं कुरुषे अपितु खेदो न करणीय इति सखीवचः। हे सखि, यतः स हृद्येव परं वर्तते, बहिः खलु निश्चयेन न वर्तते, तत एव तस्मादेव हेतोर्विषद्यते विषादः क्रियत इत्युत्तरम् ॥ १०८ ॥

स्फुटति हारमणौ मदनोष्मणा
हृदयमप्यनलङ्कृतमद्य ते।
सखि हताऽस्मि तदा यदि हृद्यपि
प्रियतमः स मम व्यवधापितः ॥ १०९ ॥

स्फुटतीति ॥ हे भैमि ! मदनोष्मणा मदनजनितवियोगानलेन हारमणौ हारे विद्यमानो नायकमणिः। तत्सहित इत्यर्थः। तस्मिन्स्फुटति विदीर्यमाणे सति अद्य ते हृदयमपि अनलंकृतं न भूषितमलंकाररहितं जातमिति सखीवचः। मुखादि तु प्रागेव भूषारहितं जातमित्यपिशब्दार्थः। हे सखि ! यदि स मम प्रियतमो हृद्यपि व्यवधापितोऽन्तर्धापितस्तर्हि हतास्मि, अनलं नलरहितं हृदयं कृतमिति त्वदुक्तेर्हृदयादप्यपाकृतः प्रेयानिति च्छलेन भैमीवचः। दधातेर्णौ 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ७।३।३६' इति पुकि व्यवधापितः 'निष्ठायां सेटि ६।४।५२' इति णिचो लोपः ॥ १०९ ॥

इदमुदीर्य तदैव मुमूर्च्छ सा
मनसि मूर्च्छितमन्मथपावका।
क्व सहतामवलम्बलवच्छिदा-
मनुपपत्तिमतीमतिदुःखिता ॥ ११० ॥

मूर्च्छामाह—

इदमिति ॥ मनसि मूर्च्छितः प्राप्तवृद्धिर्मन्मथ एव पावको यस्याः सा भैमी इदं पूर्वोक्तमुदीर्योक्त्वा तदैव तत्कालमेव मुमूर्च्छ नवमीमवस्थां प्राप। अनलंकृतमित्यत्रालीकया नलराहित्यप्रतीत्या कथं मूर्च्छां प्रापेत्याशङ्क्यार्थान्तरन्यासमाह—अतिदुःखिता सा अनुपपत्तिमतीमघटमानामलीकामप्यवलम्बस्य नललक्षणस्य जीवताधारस्य यो लवो लेशस्तस्य या छिदा त्रुटिस्तां क्व कुतः सहतां सोढुं शक्ता स्यात् ? न कुतोऽपि। दुःखितो दुःखहेतो नालीकत्वं विचारयति। अलीकमेव नलराहित्यमविचार्यैवमपि मूर्च्छां प्रापेति युक्तमेव। 'तीमपि' इति पाठः ॥ ११० ॥

अधित काऽपि मुखे सलिलं सखी
प्यधित काऽपि सरोजदलैः स्तनौ।
व्यधित काऽपि हृदि व्यजनानिलं
न्यधित काऽपि हिमं सुतनोस्तनौ ॥ १११ ॥

अधितेति ॥ काऽपि सखी सुतनोरतिकृशाया भैम्या मुखे सलिलमधित चिक्षेप। काऽपि काचित्सखी सरोज-

---

१ रुचेः—तेजसो विषयभूतैव त्वमसीत्यभिप्रायेणोक्तम्, रुचेः प्रीतेः, सौहार्दस्येति यावत्, फलमित्येवं पुनरन्यथाकरणाद्वक्रोक्तिः। २ किरतीति शब्दवैशिष्ट्येन गिरोऽग्निकिरणत्वं व्यज्यते। ३ अत्रानुप्रासः।

१ अत्रानलङ्कृतमिति सख्योक्तस्यान्यार्थबोधनाद् वक्रोक्तिः। २ अत्र परिकरः सा मुमूर्च्छेति विशेषस्य क्वेत्यादिना सामान्येन समर्थनादर्थान्तरन्यासश्च।

दलैः स्तनौ प्यधितं आच्छादितवती । काचिद्दृदि व्यजनानिलं व्यधित चकार । काचिच्च हिमं चन्दनं तनौ शरीरे न्यधित निक्षिप्तवती । 'चन्दने च हिमं विदुः' इति विश्वः । 'विसम्' इति पाठः ॥ १११ ॥

उपचचार चिरं मृदुशीतलै-
र्जलजनालमृणालजलादिभिः ।
प्रियसखीनिवहः स तथा क्रमा-
दियमवाप यथा लघु चेतनाम् ॥ ११२ ॥

उपचचारेति ॥ स प्रियो हितः सखीनिवहो मृदुभिः कोमलैः शीतलैर्हिमैश्च जलजैः कमलैर्जलचन्दनव्यजनानिलाद्यैः चिरकालक्रमात्परिपाटया भैमीं तथा उपचचार यथा इयं लघ्वीमल्पां चेतनामवाप । लघु शीघ्रं वा ॥ ११२ ॥

अथ कुले कलय श्वसिति स्फुटं
चलति पक्ष्म चले परिभावय ।
अधरकम्पनमुन्नय मेनके
किमपि जल्पति कल्पलते शृणु ॥ ११३ ॥
रचय चारुमते स्तनयोर्वृतिं
ऽऽस्पद-ध्य केशिनि कैश्यमसंयतम् ।
त्वतापादो तरङ्गिणि नेत्रयो-
र्दशी स्यात्तपविति शुश्रुविरे गिरः ॥ ११४ ॥
जनो मनोऽश्विति युग्मम् । इति सखीनां परस्परं

एवमिति ॥ एभिः शुश्रुविरे आकर्णिताः । इति लज्जास्पदं यास्मिन्प्रणीनि भैमीसखीनामानि । अथानन्तरं नापृच्छि न पृष्टाले सखि, इयं भैमी स्फुटं प्रकटं श्वसिति त्वतापादिभिःकलय विचारय । हे चले सखि, पक्ष्म अवतीति चलतीति परिभावय विचारय । पक्ष्मचलनमपि जीवनचिह्नम् । हे मेनके सखि ! अधरकम्पनमोष्ठस्फुरणमुन्नय तर्कय । हे कल्पलते सखि ! इयं किमप्यस्पष्टं स्वल्पं च जल्पति वदति शृणु । एवं जीवनज्ञानानन्तरं हे चारुमते सखि ! स्तनयोर्वृतिमावरणं रचय कुरु । इयं स्तनयोरनावृतिं न जानाति । हे केशिनि सखि ! असंयतमनिबद्धं कैश्यं केशसमूहं कलय बधान । त्वं केशकर्म जानासि यतः । हे तरङ्गिणि सखि ! नेत्रयोर्जलझरी बाष्पप्रवाही अवग्रहाणापाकुरु । तरङ्गिण्या हि जलझरावग्रहः संभाव्यते । श्वसिति, 'रुदादिभ्यः सार्वधातुके ७ । २ । ७६' इतीट् । कैश्यं केशसमूहः 'केशाश्वाभ्यां यञ्छावन्यतरस्याम् ४।२।४८' इति यञ् ॥ ११३ ॥ ११४ ॥

कलकलः स तदालिजनाननाद्-
दुदलसद्विपुलस्त्वरितेरितैः ।
यमधिगम्य सुतालयमीयिवा-
न्धृतदरः स विदर्भपुरंदरः ॥ ११५ ॥

कलकल इति ॥ त्वरितेरितैः'कले'इत्यादिशीघ्रवचनैः विपुलो महान्स कलकलः कोलाहलः तस्या भैम्या आलिजनस्य सखीजनस्य आननादुदलसदुद्भूत् । कुमार्याः किं जातमिति धृतदरो जातभयः सविदर्भपुरंदरो भीमः यं कोलाहलमधिगम्य आकर्ण्य सुतालयमीयिवानागतवान् । त्वरितानां धावकानामीरितैर्वचनैर्यमधिगम्येति वा ॥ ११५ ॥

कन्यान्तःपुरबाधनाय यदधीकारान्न दोषा नृपं
द्वौ मन्त्रिप्रवरश्च तुल्यमगदंकारश्च तावूचतुः ।
देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलं
स्यादस्या नलदं विना न दलने तापस्य कोऽपि क्षमः ॥ ११६ ॥

कन्येति ॥ तौ द्वौ तुल्यं समकालं शब्दसारूप्यात्समानं च नृपमूचतुः । द्वौ कौ—मन्त्रिप्रवरश्च अगदंकारो वैद्यश्च । तौ कौ—यदधीकारात्स्वाम्यान्नियोगात्पुरुषादिभ्यो वातादिरोगादिभ्यश्च कन्यान्तःपुरस्य बाधनाय निन्दया अथ च कन्याया अन्तःपुरस्य शरीरस्य मध्ये बाधनं पीडा तस्मै दोषा व्यभिचारादयो वातादयो रोगाश्च न समर्था भवन्तीत्यर्थः । किमूचतुस्तत्राह—हे देव राजन् ! आकर्णय त्वं शृणु । सुश्रुतस्य अन्तःपुरस्यादिद्वारा, चर एव चरकः तस्य दूतस्योक्तेन वचनेनाखिलं रहस्यं जाने । किं रहस्यम्—नलदं विना नलनामकराजमदं पुरुषं विनाऽस्यास्तापस्य संतापस्य दलने नाशे कोऽपि क्षमः शक्तो न स्याद्भवति । इति मन्त्रिवचः ।

१ अत्र धितकापीति प्रतिपादमिति, स्तनाविति च यमकम् 'मूर्च्छानिवर्त्तनायैवमेवानुष्ठेयं भवतीति स्वभावोक्तिश्च । २ अत्रानुप्रासः ।

१ अत्राप्यनुप्रासः।२अत्राप्यनुप्रास एव शब्दालङ्कारः । स्वभावोक्तिरपि स्यादर्थालङ्कारः । अनुप्रासो, दर इति यमकं च ।

दूतमुखान्मया श्रुतम् । अस्या नलेऽनुरागः; तदप्राप्तिजनितोऽयमस्याः संतापः, तत्प्राप्तौ शाम्येदित्युपायं रचयेत्यर्थः । अस्यास्तापस्य ज्वरस्य शमने नलदमुखौरं विना कोऽपि क्वाथादिस्तापं शमयितुं क्षमो नेति, सुश्रुताख्यवैद्यकग्रन्थेन तथा चरकनाम्नायुर्वेदविदो वचनेन तत्प्रणीतेन ग्रन्थेन अखिलं निदानं चिकित्सां जाने इत्यगदंकारवचनम् । अथच कोऽपि अत्रापि न क्षमः । आकस्मिकशब्दश्रवणादाकुलस्य राज्ञोऽन्तःपुरे मन्त्रिवैद्ययोः प्रवेशो युक्तो भवति न काऽप्यनौचितीति । 'पुरं पुरि शरीरे च' इति विश्वः । कन्या, प्रथमवयोवाचित्वेऽपि 'कन्यायाः कनीन च ४।१।११६' इति निर्देशान्ङीबभावः । अधीकारात्, 'उपसर्गस्य घञ्यमनुष्ये बहुलम् ६।३।१२२' इति दीर्घः ॥ ११६ ॥

ताभ्यामभूद्युगपदप्यभिधीयमानं
भेदव्यपाकृति मिथः प्रतिघातमेव ।
श्रोत्रे तु तस्य पपतुर्नृपतेर्न किंचि-
द्भैम्यामनिष्टशतशङ्कितयाऽऽकुलस्य ११७

ताभ्यामिति ॥ ताभ्यां मन्त्रिवैद्याभ्यां युगपदेककालमभिधीयमानं भेदस्य शब्दस्वरूपविशेषस्य व्यपाकृतिनिराकरणं यत्र तत् अभिन्नस्वरूपम् । एवंविधमपि वचनं मिथः परस्परं प्रतिघातो यत्र एवंविधं परस्परं भिन्नमेवाभूत् । भैम्यामनिष्टशतशङ्कितया अनर्थपरम्पराशङ्कितया आकुलस्य तस्य नृपतेः श्रोत्रे तु कर्णौ पुनः किंचिदेकस्यापि वचनं न पपतुः शुश्रुवतुः । राजा भैम्यवस्थया नितरामाकुलोऽभूदित्यर्थः ॥ ११७ ॥

द्रुतविगमितविप्रयोगचिह्ना-
मपि तनयां नृपतिः पदप्रणम्राम् ।
अकलयदसमाशुगाधिमग्नां
झटिति पराशयवेदिनो हि विज्ञाः ११८

द्रुतविगमितेति ॥ नृपती राजागमनमाकर्ण्य द्रुतं शीघ्रं विगमितं दूरीकृतं विप्रयोगचिह्नं यया एवंभूतामपि पदप्रणम्रां चरणपतितां तनयामसमाशुगः कामस्तज्जनित आधिः पीडा तत्र मग्नामकलयदजानात् । चिह्नाभावे कथं ज्ञातवानित्यत आह—हि यस्मात् विज्ञातारो झटिति शीघ्रं परेषामाशयवेदिनोऽभिप्रायाभिज्ञा भवन्ति । चिह्नेन विनाऽपीत्यर्थः ॥ ११८ ॥

व्यतरदथ पिताऽऽशिषं सुतायै
नतशिरसे सहसोन्नमय्य मौलिम् ।
दयितमभिमतं स्वयंवरे त्वं
गुणमयमाप्नुहि वासरैः कियद्भिः ११९

व्यतरदिति ॥ अथ प्रणामानन्तरं पिता भीमो नतशिरसे नम्रमूर्ध्ने सुतायै भैम्यै आदरातिशयात्सहसा शीघ्रं हस्ताभ्यां मौलिं मस्तकमुन्नमय्योच्चैःकृत्य इति आशिषं व्यतरत् । इति किम्—हे स्वयंवरे स्वयं वृणुत इति स्वयंवरा, तत्संबोधनं, हे पुत्रि ! अथ च स्वयं व्रियतेऽस्मिन्निति स्वयंवरो राजसमूहः तन्मध्ये वा, त्वं कियद्भिः स्वल्पैर्द्वित्रैः वासरैर्दिवसैः गुणमयं बहुगुणमभिमतं स्वेप्सितं दयितं वल्लभमाप्नुहि लभस्वेति । त्वदभीष्ट एव गुणमय इत्यर्थः ॥ ११९ ॥

तदनु स तनुजासखीरवादी-
त्तुहिनऋतौ गत एव हीदृशीनाम् ।
कुसुममपि शरायते शरीरे
तदुचितमाचरतोपचारमस्याः

तदिति ॥ तदनु आशीर्वादानन्तरं
सखीरित्यवादीत् इति किम्—हे
शिशिरर्तौ गत एव गतमात्र एव
कोमलाङ्गीनां प्राप्ततारुण्यानां च श
सत् शरायते शरवदाचरति पीडां [illegible]
वाणायते तत्तस्मादस्या भैम्याः तदु
चितमुपचारमाचरत कुरुतेति । तुहिन[illegible]
६ । १ । १२८' इति प्रकृतिभावः शर[illegible]
क्यङ् सलोपश्च ३ । १ । ११' इति क्यङ् ॥ १२[illegible]

[illegible]त्याभित्य-
पित्याशक्त्या-
नुपपत्तिमतीम-
[illegible]य जीवताधार-
त्रुटिस्तां क्व कुतः
।दुःखितो दुःख-
व नलराहित्यम-
तीमपि ' इति

कतिपयदिवसैर्वयस्यया वः
स्वयमभिलष्य वरिष्यते वरीयान् ।
शशिमशमनयानया तदाप्तुं
रुचिरुचिताथ भवद्विधाविधाभिः १२१

१ अत्र शार्दूलविक्रीडितं वृत्तम् । श्लेषस्तुल्ययोगिता चालङ्कारौ । २ वसन्ततिलका छन्दः । अनुप्रासः शब्दालङ्कारः ।

१ अत्र पुष्पिताग्रा वृत्तम् । अकलयदिति विशेषस्य वेदिनो—हीति सामान्येन समर्थनादर्थान्तरन्यासः । २ अत्रापि पुष्पिताग्रा वृत्तम् । ३ अत्रापि पुष्पिताग्रा वृत्तम् । अनुप्रासः । शरायतइत्युपमा ।

कतीति ॥ हे भैमीसख्यः ! वो युष्माकं वयस्यया भैम्या अभिलष्य वरीयानातितरां श्रेष्ठः वरः कतिपयादिवसैः द्वित्रैरेव दिनैः द्वित्रेषु मध्ये इति यावत्स्वयं वरिष्यते, तत्तस्मादनया भैम्या कृशिमानं कार्श्यं शमं शान्तिं नयाति प्रापयतीति कृशिमशमनया अथ रुचिः समग्रा शोभा विरहात्पूर्वकालिकी भवद्विधानां भवादृशीनां सखीनां विधाभिः प्रकारैरुपचारैराप्तुमुचिता योग्या ।'अभिधाभिः'इति पाठे वचनैः इयं यथा पूर्वरुचिं प्राप्नोति तादृशमुपचरत । यद्वा—तादृगेनां शिक्षयतेत्यर्थः । ' कृशिम्नः शमनया ' इति भैमीविशेषणं वा । 'अथ सम्प्रश्ने मङ्गलारम्भयोरपि । अनन्तरे च कार्त्स्न्ये च ' इति विश्ववचनादथशब्दः कार्त्स्न्यवाची । अथ वा अन्यच्चेत्यर्थ इति वा । अयमेतेभ्योऽतिमनोहरः श्रेष्ठो वरीयान् ' द्विवचनविभज्योपपदे तरबीयसुनौ५।३।५७' इत्यनेनेयसुनि ' प्रियस्थिरास्फिरोरुबहुलगुरु–६।४।१५७ ' इत्यादिना वरादेशः, अयमेतेभ्यो वर इति वरशब्दाद्वा ईयसुन् । कृशिमशमनया, पक्षे नयतेः पचाद्यच् । ततः पूर्वेण षष्ठीसमासः, ततोऽपि पूर्वेण स एव । पक्षे नन्द्यादित्वाल्ल्युः ॥ १२१ ॥

**एवं यद्वदता नृपेण तनयानापृच्छि लज्जाऽऽस्पदं-यन्मोहः स्मरभूरकल्पि वपुषः पाण्डुत्वतापादिभिः । यच्चाशीः कपटादवादि सदृशी स्यात्तत्र या सान्त्वना—तन्मत्वाऽऽलिजनो मनोऽन्धिमतनोदानन्दमन्दाक्षयोः १२२**

एवमिति ॥ एवं पूर्वोक्तं वदता नृपेण भीमेन तनया लज्जास्पदं यस्मिन्पृष्टे सति लज्जा भवति तद्विरहकारणं नापृच्छि न पृष्टा । लज्जापदं न पृष्टेति वा । यच्च पाण्डुत्वतापादिभिः शरीरपाण्डिमकृशिमसंपादिभिः स्मराद्भवतीति स्मरभूः स्मरजन्यो मोहो मूर्छा अकल्पि किं ततः ? यच्चाशीःकपटादाशीर्वचनव्याजादवादि आश्वासनसमर्थम् ' दयितमभिमतम्–' इत्यादि यदुक्तम् । तत्र सन्तापादिविषये सदृशी समुचिता या सान्त्वना उपचारः स्यात्स चावादि । आलिजनः सखीसमूहः तत्सर्वं मत्वा ज्ञात्वा मनोऽन्तःकरणम् आनन्दश्च मन्दाक्षं च लज्जा तयोरन्धिमतनोच्चकार । शीघ्रं भैम्याः स्वयंवरप्राप्तेरानन्दातिशयः, राज्ञा विरहपीडा ज्ञातेति लज्जाधिक्यं चाभूदित्यर्थः ॥ १२२ ॥

**श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । तुर्यः स्थैर्यविचारणप्रकरणभ्रातर्ययं तन्महा–काव्येऽत्र व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ १२३ ॥**

श्रीहर्षमिति ॥ पूर्वार्धं पूर्ववत् । स्थैर्यविचारणं क्षणभङ्गनिराकरणेन स्थिरत्वस्य विचारणसूचकं प्रकरणं ग्रन्थः, तस्य भ्रातरि एककर्तृकत्वात्सोदरे काव्ये तुर्यश्चतुर्थः सर्गः समाप्तः । स्थैर्यविचाराख्यो ग्रन्थः श्रीहर्षेण कृतः । 'चतुरश्छयतौ चलोपश्च' इति यति चलोपे च तुर्य इति सिद्धम् ॥ १२३ ॥

इदमवधेयम् । "अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।" इत्यभियुक्तानां सिद्धान्तः,युक्तश्चायम्, किंतु हन्त प्रकृते सर्गे प्रायो नितान्तमवज्ञातो महापण्डितेन । अयं हि सर्गो दमयन्त्या नलानुरक्ततोद्बोधने शक्तः । दमयन्त्या नलेऽनुरक्तताऽतिशयं प्रत्याययितुं ह्येतस्य सर्गस्य निर्म्माणे संरम्भः । वर्णयितुर्यद्यपि संरम्भोऽयं पाण्डित्योद्रेकं प्रत्याययति, तथाऽपि सहृदयानां हृदयं नानुरञ्जयति, प्रकृतावस्थाऽननुरूपत्वात् । दमयन्ती हि तावदनूढा मुग्धा च, नहि तस्याः प्रौढाया इवानुरागोद्रेकः प्रस्फुटं सम्भाव्यमानो रमणीयतामावहतीति सहृदयानां हृदयम् । वस्तुतश्चानुरागोद्रेकोऽपि विषयान्तरतो विरागमात्रेणानुभाव्यः, नत्वेवं परिस्पर्धयेव कल्पनामात्रोत्कर्षप्रदर्शनेन । अतएव महान्तः कवयो नायिकाया नायकस्य वाऽपि तदानीन्तनावस्थानिदर्शनेनैव प्रायोऽनुरक्तत्वमनुभावयन्ति, नतूक्त्यैव । अत्र तु केवलमुक्त्या, नतु तदानीन्तनोचितावस्थानिदर्शनेन । मुग्धाया अनुरागः प्रियवयस्याभिरपि चिरादवधारयितुं शक्यते, तदवधारणमपि प्रथमं सामान्याकारेण, नतु विशेषाकारेण । विशेषाकारेण ह्यनुरागः समयान्तरे परिप्रश्नेनैव । नत्वनुरागिजनेन प्रथमत एवोद्घोष्यमाणः । अत्र पुनर्दमयन्त्या मुहुर्मुहुः स्वयं नलेऽनुरागातिशयः प्रथितः । सोऽपि चन्द्रादेरननुगुणत्वोट्टङ्कनमात्रात्मेति । एवमनुरागः क्रमेण तथा तथा प्रचीयमाणः परिचाय्यः, नतु एकपदमुद्घोष्यमाणः । अत्र तु हंसवचःश्रवणसमकाल-

---

१ पुष्पिताग्रा वृत्तम् । २ अत्र शार्दूलविक्रीडितं वृत्तम् । मनोऽन्धिमिति रूपकम् ।

१ अत्रापि शार्दूलविक्रीडितं वृत्तम् ।

मेव । नच प्रथमे सर्गे नलगुणश्रवणोद्भूतो दमयन्त्या नलविषयोऽनुरागः प्रथमं निर्दिष्टः स चैव प्रकृते सर्गे प्रवृद्धात्मना वर्णित इति सुयुक्तं गदितुम् । तत्र हि नायकाऽनुरागापेक्षया नायिकाऽनुरागप्राथम्यनिदर्शनार्थः परं कवेः संरम्भः । अस्तु वा तत्रैवोद्भूतात्मना वर्णितोऽपि, किंतु मुग्धाया एवनमुक्त्यात्मना निर्दिश्यमानः सर्वथास्थान एव । अथ कविना यद्वर्ण्येत तद्वर्ण्यमानानुगुणकालानुसन्धानपुरस्कृत एव सङ्गच्छते, अत्र तु 'अयि जरां परिपृच्छ०० ( ६९ )' इत्यादि विपरीतम्, नहि जरासन्धो दमयन्त्याः पूर्वतनः, यत् तच्चरितं प्राक्तनं दमयन्त्याऽवधारितं स्यात् । दमयन्ती हि सत्ययुगान्त्यकालिकी, जरासन्धः पुनर्द्वापरयुगान्त्यकालिकः स्पष्टश्चैवं कालभेदः । यद्यपि कवेः प्राक्तनो जरासन्धः, किंतु प्रकृते कवेः प्राक्तनत्वं नापेक्षितमित्यनौचित्यमेवेति दिक् ।

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपाण्डितात्मजनारायणकृते नैषधीयप्रकाशे चतुर्थः सर्गः समाप्तः ॥

---

# पञ्चमः सर्गः ।

अथ 'व्यतरत्—' इति श्लोके पित्रोक्तं स्वयंवरोपक्रममुद्दिश्य तत्प्रसङ्गार्थं पञ्चमं सर्गमारमते—

यावदागमयतेऽथ नरेन्द्रा-
न्स स्वयंवरमहाय महीन्द्रः ।
तावदेव ऋषिरिन्द्रदिदृक्षु-
र्नारदस्त्रिदशधाम जगाम ॥ १ ॥

यावदिति ॥ अथ भैमीसमाश्वासनानन्तरं स महीन्द्रो भीमः स्वयंवर एव मह उत्सवः तदर्थे यावत् नरेन्द्रान्राज्ञ आगमयते प्रतीक्षते आनाययते वा स्वयंवरार्थमाहूतानां राज्ञां प्रतीक्षां करोति तावदेव तस्मिन्नेव काले इन्द्रं दिदृक्षुर्द्रष्टुमिच्छुर्नारदनामा ऋषिस्त्रिदशधाम स्वर्गं जगाम गतवान् । कलहद्वारा नरसमूहं द्यतीति कलहप्रवर्तक इत्यर्थः । आगमयते, 'आगमेः क्षमायामात्मनेपदम्' इति वक्तव्यात्तङ् । एव ऋषिः, 'ऋत्यकः ६।१।१२८' । इन्द्रदिदृक्षुः शेषषष्ठीसमासः । बहुलग्रहणाद्योगविभागाद्वा । अधर्मजुगुप्सुरितिवद् द्वितीयासमासो वा ॥ १ ॥

नात्र चित्रमनु तं प्रययौ य-
त्पर्वतः स खलु तस्य सपक्षः ।
नारदस्तु जगतो गुरुरुच्चै-
र्विस्मयाय गगनं विललङ्घे ॥ २ ॥

नात्रेति ॥ पर्वत एतन्नामा ऋषिः तं नारदमनु पश्चाद्यत्प्रययौ अनुगतः । अत्र अस्मिन्विषये चित्रमाश्चर्यं न । कुतः—खलु यस्मात्स पर्वतः तस्य नारदस्य सपक्षो मित्रभूतः । यद्यपि कार्याक्षमः, तथापि मित्रत्वादनुगमनं युक्तम्, अतो नाश्चर्यम् । तर्हि कुत्राश्चर्यमित्यत आह—उपदेष्टृत्वात्पूज्यत्वाच्च जगतो गुरुर्नारदस्तु पुनर्यद्गगनमाकाशं विलल्ङ्घे लङ्घितवान् तत् उच्चैरतितरां विस्मयाय आश्चर्याय । जातमिति शेषः । अर्थाद्यत्तदोः संबन्धः । जगतो विस्मयायेति वा । वीनां पक्षिणामपि स्मयाय वेगातिशयेनाद्भुतायेति वा । अथ च पक्षसहितस्य शैलस्य गमनमाश्चर्यकारि न । सकलस्यापि जगतो दुर्वहो जगतः सकाशाद्वा भारवान्यदाकाशं लङ्घयति, तदतितरामाश्चर्याय भवति । गुरुत्वात्पतनं युक्तम्, ऊर्ध्वगमनमयुक्तमिति भावः । 'पर्वतः शैलदेवर्प्योः,' 'स्मयो गर्वेऽद्भुते' इति विश्वः । विस्मयाय तादर्थ्ये चतुर्थी । पक्षे, 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः २।३।१४' इति वा । 'लघिगतौ' भौवादिकोऽनुदात्तेत् ॥ २ ॥

गच्छता पथि विनैव विमानं
व्योम तेन मुनिना विजगाहे ।
साधने हि नियमोऽन्यजनानां
योगिनां तु तपसाखिलसिद्धिः ॥ ३ ॥

गच्छतेति ॥ विमानं विनैव पथि गच्छता तेन मुनिना व्योमाकाशं विजगाहे आलोडितम् । हि यस्मात् साधने उपकरणेऽश्वादौ अन्यजनानां योगिव्यतिरिक्तानां जनानां नियमः वाहनं विना गन्तुं न शक्नुवन्ति।योगिनां तपस्विनां तु तपसैवाखिलसिद्धिः समस्तकार्यसिद्धिः ।

---

१ अत्र सर्गे 'स्वागतेति रनभाद्गुरुयुग्मम्' इत्युक्त्याऽर्थितमिति पद्यं यावत्स्वागता छन्दः । अनुप्रासः शब्दालंकारोऽत्र पद्ये । २ अत्र गुरोर्नारदस्य गगनोलंघनमिति विरोधाभासः ।

खिलं प्रतिबन्धः, तद्रहिता सिद्धिर्गतिः । तेषां गमनादि-साधनं तप एव,नान्यदश्वादि । एव इवार्थः।विनैव पक्षिणैव गच्छतेति वा । किंभूतं व्योम—विमानं विगतं मानमियत्तापरिमाणं यस्मादिति वा ॥ ३ ॥

**खण्डितेन्द्रभवनाद्यभिमाना-**
**लङ्घते स्म मुनिरेष विमानान् ।**
**अर्थितोऽप्यतिथितामनुमेने**
**नैव तत्पतिभिरङ्घ्रिविनम्रैः ॥ ४ ॥**

खण्डितेति ॥ एप मुनिर्नारदो विमानाँल्लङ्घते स्म अतिचक्राम । किंभूतान्—खण्डित इन्द्रभवनादीनामभिमानो रमणीयताऽहंकारो यैस्तान् । 'इन्दुभवन' इति पाठे अत्युच्चत्वादतिदीप्तत्वाच्च त्याजितचन्द्रनक्षत्रादिस्थानदर्पान् । इन्दुभवनादीनां चन्द्रशालादीनां वा । तत ऊर्ध्वं गत इत्यर्थः । अथवा नादृतवान् । अङ्घ्रिविनम्रैश्चरणनिपतितैः तत्पतिभिर्विमानस्वामिभिः आतिथ्यमङ्गीक्रियतां विमानमारुह्यतामित्यादि अर्थितोऽप्यतिथितां नैव अनुमेनेऽङ्गीचकार । विलम्बभियेति भावः । 'विमानोऽस्त्री' इत्यमरः ॥ ४ ॥

**तस्य तापनभिया तपनः स्वं**
**तावदेव समकोचयदर्चिः ।**
**यावदेव दिवसेन शशीव**
**द्रागतप्यत न तन्महसैव ॥ ५ ॥**

तस्येति ॥ तपनः सूर्यः तस्य नारदस्य तापनं संतापनं तस्माद्भिया भयेन स्वं स्वकीयमर्चिस्तेजः, तावदेव प्रथममेव तावत्कालमेव तावत्परिमाणमेव वा समकोचयत्संकोचितवान् । सकलेन तेजसा यद्यहं तप्येय तर्हि मत्संनिधिमागतो मुनिः संतप्तो भवेदिति तन्माभूत्, इति तेजः संकोचितम्, परं तावत्कालमेव ।यावदेव यावत्कालमेव तन्महसैव मुनितेजसैव कृत्वा स तपनः द्राक् शीघ्रं स्वयं न अतप्यत संतप्तो नाभूत् । केन क इव—दिवसेन दिनतेजसा कृत्वा शशीव सूर्यस्तावदेव तावत्पर्यन्तमर्चिः समकोचयत् यावदेव यावत्पर्यन्तमेव तन्महसैव कृत्वा नारदो नातप्यतेति वा । शापभीत्या स्वस्य तत्कर्तृकतापभीत्या वा तावदेव तेजः प्रकटीकृतवान्, यावता तस्य क्रोधो नोत्पद्यते संतापो वा न भवति । अल्पस्य सङ्कोचे स्वतेजसा तस्याभिभवः स्यात्, अधिकसंकोचे स्वयैव तन्महसाऽभिभवः स्यात् । तेन युक्तमेव संकोचितवानित्यर्थः । सूर्येण समतेजा नारद इत्यर्थः । अर्थान्तरं तु सुधिया बोद्धव्यम् ॥ ५ ॥

**पर्यभूद्दिनमणिर्द्विजराजं**
**यत्करैरहह तेन तदा तम् ।**
**पर्यभूत्खलु करैर्द्विजराजः**
**कर्म कः स्वकृतमत्र न भुङ्क्ते ॥ ६ ॥**

पर्यभूदिति ॥ खलूत्प्रेक्षे । यद्यस्मात्कारणाद्दिनमणिः सूर्यः द्विजराजं चन्द्रं करैः किरणैः कृत्वा पर्यभूत् । तेन खलु तेनैव कारणेन द्विजराजो ब्राह्मणश्रेष्ठो नारदः करैः स्वतेजोभिः कृत्वा तस्मिन् काले तं सूर्यं पर्यभूद्व्यजेष्ट । अहहेत्याश्चर्ये । युक्तमेतत्—अत्र लोके स्वेन कृतं कर्म शुभाशुभात्मकं को न भुङ्क्ते, अपि तु सर्वेऽपि । 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इति न्यायेन । सूर्येण निरपराधे द्विजराजे पराभूते अन्येन द्विजराजेन क्रोधवशादिव स पराभूतः । सूर्यतेजसोऽपि तत्तेजोऽधिकमिति भावः । सूर्यः स्वतेजसा पूर्वं नारदं पर्यतापयत्, अतो नारदः क्रुद्धः सन्स्वतेजसा सूर्यं पर्यतापयदिति वा ॥ ६ ॥

**विष्टरं तटकुशालिभिरद्भिः**
**पाद्यमर्घ्यमथ कच्छरुहाभिः ।**
**पद्मवृन्दमधुभिर्मधुपर्कं**
**स्वर्गसिन्धुरदितातिथयेऽस्मै ॥ ७ ॥**

विष्टरमिति ॥ अथानन्तरं स्वर्गसिन्धुर्मन्दाकिनी अतिथयेऽभ्यागतायास्मै नारदाय तटकुशालिभिस्तीरजातदर्भपङ्क्तिभिः विष्टरं कुशासनमदित ददौ । तथा—अद्भिरुदकैः पाद्यं पादार्थमुदकम् । तथा—कच्छरुहाभिः पुष्पितलताभिर्दूर्वाभिर्वा अर्घ्यमर्घार्थं वस्तु । तथा—पद्मवृन्दस्य मकरन्दैः कृत्वा मधुपर्कं मधुपर्कार्थं मधुमिश्रं दध्यादि । अदितेति सर्वत्र संबध्यते । अतिथये विष्टरादिकं दीयते । मन्दाकिनीं दृष्ट्वा तुतोषेत्यर्थः ।

---

१ विमानं विनैवेति विशेपोक्तिः, साधने हीति सामान्येन विशेषसमर्थनात्माऽर्थान्तरन्यासः । २ अत्र यमकं मानादिति प्रतिपाद्यं पूर्वभागे प्रयोगात् ।

१ अत्र शशीवेत्युपमा । आर्चिषः सङ्कोचने तापनभियोऽभावेऽपि तथोक्तेरतिशयोक्तिः । मुनेश्च सूर्यापेक्षयाऽधिकतेजस्कत्वं ध्वन्यते । २ अत्राऽर्थान्तरन्यासश्चोत्प्रेक्षा चार्थालङ्कारौ । श्लेपस्तु करपदगत आर्थस्तत्परिवृत्तिसहत्वात्, द्विजराजपदगः पुनःशाब्दः, अस्य परिवृत्त्यसहत्वात् ।

पाद्यम्, अर्घ्यम् 'पादार्घाभ्यां च ५।४।२५' इति यत् । मधुना पृच्यते मिश्रीक्रियते । कर्मणि घञ् । 'चजोः कुघिण्यतोः ७।३।५२' इति कुत्वम् ॥ ७ ॥

स व्यतीत्य वियदन्तरगाधं
नाकनायकनिकेतनमाप ।
सम्प्रतीर्य भवसिन्धुमनादिं
ब्रह्म शर्मभरचारु यतीव ॥ ८ ॥

स इति ॥ स नारदः अन्तर्मध्ये अगाधं विशालं वियदाकाशं व्यतीत्यातिक्रम्य स्वर्गेऽपि क्वचित्प्रदेशे वर्तमानं नाकनायकस्येन्द्रस्य निकेतनं गृहमाप प्राप्तवान् । कः किमिव—यती परिव्राड् ब्रह्मेव । किं कृत्वा—अनादिं प्रवाहनित्यं भवसिन्धुं संसारसमुद्रं सम्यगतिशयेन प्रतीर्य तीर्त्वा । किंभूतं ब्रह्म शर्मणः सुखस्य भरः समूहस्तेन सुन्दरम् । 'आनन्दं ब्रह्मणो रूपम्' इति श्रुतेः । 'अनादि' इति पाठे ब्रह्मविशेषणम् । 'यतयो यतिनश्च ते' इत्यमरः । यतं यतनमस्यास्तीति इनिः । 'नलोपः सुप्स्वर—' इति नियमात्सवर्णदीर्घः ॥ ८ ॥

अर्चनाभिरुचितोच्चतराभि-
श्चारु तं सदकृतातिथिमिन्द्रः ।
यावदर्हकरणं किल साधोः
प्रत्यवायधुतये न गुणाय ॥ ९ ॥

अर्चनाभिरिति ॥ इन्द्र उचिताभ्यो योग्याभ्योऽपि सकाशादुच्चतराभिः श्रेष्ठाभिरर्चनाभिः पूजाभिः तम् अतिथिं चारु विध्युक्तमार्गेण सदकृत पूजितवान् । अधिकपूजाकरणे कारणमाह—साधोरतिथेर्यावदर्हं यथोचितं सत्करणमादरपूजादेः संपादनमतिथेर्यावती अर्हा उक्तास्ति, तावत्याः करणं यावदर्हकरणं तद्धा प्रत्यवायधुतये अकरणजन्यप्रत्यवायपरिहारायैव, न गुणाय तदतिरिक्ताधिकाय कस्मैचित्फलायेति नारदयोग्यपूजाभ्योऽप्यधिकाः पूजाः कृतवान् । 'कर्मभूयस्त्वात्फलभूयस्त्वम्' इति न्यायादधिकफलप्राप्तय इति भावः । दातृग्रहीत्रोर्योग्याश्च ता उच्चतराश्च ताभिः पूजाभिः पूजितवान् । यावदर्हम्, इति पक्षे 'यावदवधारणे २।१।८'इत्यव्ययीभावः । 'आदरानादरयोः सदसती १।४।६३' इति गतिसंज्ञा ॥ ९ ॥

नामधेयसमतासखमद्रे
रद्रिभिन्मुनिमथाद्रियत द्राक् ।
पर्वतोऽपि लभतां कथमर्चां
न द्विजः स विबुधप्रभुलम्भी ॥ १० ॥

नामधेयेति ॥ अथ नारदपूजानन्तरमद्रिभिदिन्द्रः अद्रेः पर्वतस्य नामधेयेन पर्वत इति संज्ञया समता साम्यं तेन सखा मित्रं मुनिं पर्वतनामानं द्राक्शीघ्रमाद्रियत पूजितवान् । अद्रिभिदः पर्वतपूजानुचितेति । छलेनाशङ्क्याह—स द्विजः ब्राह्मणरूपः पर्वतोऽपि विबुधप्रभुमिन्द्रं लम्भत इति प्राप्तः सन् अर्चां पूजां कथं न लभताम् अपितु तेन पूजा प्राप्तुं युक्ता । सन्तो गृहागतं शत्रुमपि पूजयन्तीति भावः, इति च्छलम् । नाममात्रेणायं पर्वतः न तु तत्कार्यकारी । अयं तु द्विजः, न तु वैरी पर्वतः, तस्माद्युक्तमेव पूजनम् । अथ च पर्वतः पाषाणतुल्यो मूर्खोऽपि ब्राह्मणो विप्रत्वादाश्रितत्वाच्च पण्डितश्रेष्ठं प्राप्तः पूजां कथं न लभताम् । ज्ञातिमात्रेण ब्राह्मणः पण्डितेनापि पूज्यः । नामधेय इति ' भागरूपनामभ्यो धेयः ' इति धेयः । समतासखम्, राजादिना टच् ॥ १० ॥

तद्भुजादतिवितीर्णसपर्या-
द्युद्धमानापि विवेद मुनीन्द्रः ।
स्वःसहस्थितिसुशिक्षितया ता-
न्दानपारमितयैव वदान्यान् ॥ ११ ॥

तद्भुजादिति ॥ परमस्य भावः पारमं दानस्य पारमं दानपारमं तद्विद्यते यस्यासौ दानपारमी तस्य भावो दानपारमिता अतिवदान्यता मुनीन्द्रो नारदः अतिशयेन वितीर्णा कृता सपर्या पूजा येन एवंभूतात्तद्भुजादिन्द्रभुजात् गुरोः स्वः स्वर्गे या इन्द्रेण तद्भुजेन वा

१ अत्रादितेवेत्युत्प्रेक्षा, तत्कुशादिभिर्विष्टरादीनामनेकेषां धर्म्मिणां देयत्वरूपेण सकृदेवोपादानाद् दीपकं च । 'सकृद् वृत्तिस्तु धर्म्मस्य प्रकृताप्रकृतात्मनाम् । सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥' इति प्रकाशकारोक्तेः । २ अत्रागाध मित्यस्य विशेषणस्योभयत्रान्वयार्हत्वात् यतीवेत्युपमा श्लिष्टा । अनुप्रासश्च शब्दालङ्कारः ।

१ अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । अनुप्रासश्च शब्दालङ्कारः । २ अत्र द्रागाद्रियतेत्युक्तस्यार्थस्य स द्विज इत्यादिना समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । अद्रिभिदोऽपि पर्वतस्य ( अद्रेः )पूजनलाभो विरोधः, तत्परिहारश्च स द्विज इत्युक्त एवेति विरोधाभासः ।

सह स्थितिस्तया कृत्वा सुशिक्षितया सुतरामभ्यस्तया एवंभूतया दानपारमितया वदान्यतया कृत्वा तान्प्रसिद्धान्द्युद्रुमानपि कल्पवृक्षानपि वदान्यानेव दानशौण्डानेव विवेदामन्यत । कल्पवृक्षाणां दानशूरत्वं सहजं न, किंतु ते इन्द्रभुजाच्छिक्षित्वाऽतिवदान्या जाता इति भावः । व्याख्यानान्तरं तु क्लिष्टत्वादुपेक्ष्यम् । युवादेराकृतिगणत्वाङ्गीकारेण भावेऽणि पारमः, तस्मादत इनौ 'यस्येति च' इति तद्धितनिमित्तेऽल्लोपे पारमीति सिध्यतीति ॥ ११ ॥

मुद्रितान्यजनसङ्कथनः स-
न्नारदं बलरिपुः समवादीत् ।
आकरः स्वपरभूरिकथानां
प्रायशो हि सुहृदोः सहवासः ॥ १२ ॥

मुद्रितेति ॥ मुद्रितं निवारितमन्यजनेनान्यजनस्य वा संकथनं संभाषणं येन एवंभूतः सन् बलस्य दैत्यस्य रिपुरिन्द्रो नारदं समवादीत्सादरमवोचत् तेन सह संवादमकरोत् । अन्यभाषणनिवारणे हेतुमाह—हि यस्मात्सुहृदोः मित्रयोः सहवास एकत्र स्थितिः प्रायशो बाहुल्येन स्वसंबन्धिपरसंबन्धिन्यो भूयो बह्वयः कथा गोष्ठ्यः तासामाकरः खनिः, तस्मादन्यकथां त्यक्तवान् । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः ॥ १२ ॥

तं कथानुकथनप्रसृतायां
दूरमालपनकौतुकितायाम् ।
भूभृतां चिरमनागतिहेतुं
ज्ञातुमिच्छुरवदच्छतमन्युः ॥ १३ ॥

तमिति ॥ शतमन्युरिन्द्र आलपने सम्भाषणे कौतुकी तस्य भावस्तत्ता तस्यां दूरमत्यर्थं कथानुकथनेन वचनानुवचनेन प्रसृतायां प्रवृद्धायां सत्यां तं नारदमवददुवाच । किम्भूत इन्द्रः—भूभृतां राज्ञां स्वर्गं प्रति चिरं दीर्घकालमनागतिहेतुमनागमनकारणं ज्ञातुमिच्छुः । पुनरुक्तौ कारणम् । राजानो युद्धेऽपराङ्मुखाः सन्तो युद्धं कृत्वा साम्प्रतं किमिति स्वर्गे नागच्छन्तीति ज्ञातुमिच्छयाऽवददित्यर्थः ॥ १३ ॥

प्रागिव प्रसुवते नृपवंशाः
किं नु सम्प्रति न वीरकरीरान् ।
ये परप्रहरणैः परिणामे
विक्षताः क्षितितले निपतन्ति ॥ १४ ॥

प्रागिति ॥ हे मुने, नृपा एव वंशा वेणवो वीरा एव करीरा वंशाङ्कुराः, तान्प्रागिव पूर्वमिव सम्प्रति इदानीं किंनु न प्रसुवतेन जनयन्ति । किंन्विति प्रश्ने, वितर्के वा । करिण ईरयन्तीति करीरान्हस्तिपातनसमर्थान्वा, वीरयोधान्वा । प्रश्नेऽत्रानागमनं हेतुः । किं वितर्के च । यथा पूर्वं जनयन्ति स्म तथेदानीं नेति । ये वीरकरीराः परिणामे परिपूर्णे तारुण्ये वार्धके वाऽन्तकाले वा शस्त्रविद्यापरिणतौ सत्यां वा परप्रहरणैः परेषां वैरिणामन्येषां च शस्त्रैः कुठारादिभिश्च विक्षता हताः खण्डिताश्च सन्तः क्षितितले निपतन्ति, न त्वतीसारादिना । करिण ईरयन्तीति 'कर्मण्यण् ३।२।१' इत्यण् न तु 'इगुपधज्ञाप्रीकिरः कः ३।१।१३५' इति कः अनुपपदत्व एव तस्य प्रवृत्तेः । 'द्वौ वंशौ कुलमस्करौ' 'वंशाङ्कुरे करीरोऽस्त्री इति चामरः ॥ १४ ॥

वीरा एव किमिति पृच्छयन्त इत्यत आह—

पार्थिवं हि निजमाजिषु वीरा
दूरमूर्ध्वगमनस्य विरोधि ।
गौरवाद्वपुरपास्य भजन्ते
मत्कृतामतिथिगौरवऋद्धिम् ॥ १५ ॥

पार्थिवमिति ॥ वीराः पार्थिवं राजभूतं द्व्यणुकादिक्रमेण पृथिवीजन्यं च निजं स्वीयं वपुः आजिषु सङ्ग्रामेषु अपास्य त्यक्त्वा दिव्यं देहं प्राप्य मत्कृतां मद्रचितामतिथिगौरवऋद्धिमतिथिसत्कारसमृद्धिं हि यस्माद्भजन्ते प्राप्नुवन्ति ततः पृच्छयन्त इत्यर्थः । किम्भूतं वपुः ? गौरवात्पतनहेतोर्गुरुत्वाच्च दूरमतितरामूर्ध्वगमनस्य स्वर्गप्राप्तेः विरोधि प्रतिबन्धकम् । अन्योऽपि दूरगमनविरोधि गुरुतरं वस्तु त्यक्त्वा जिगमिषति । गौरवादादरातिशयादतिथिगौरवऋद्धिमिति वान्वयः । गुरु वस्तु त्यक्त्वा गुरुतरं गृह्णाति तत्रापि स्वीयं त्यक्त्वाऽन्यदीयं गृह्णातीति सुतरामाश्चर्यम् । गौरवऋद्धिम्, 'ऋत्यकः ६।१।१२८' इति प्रकृतिभावः ॥ १५ ॥

१ अत्रकल्पवृक्षाणां वदान्यतायाः स्वाभाविक्या अपि देवराजवदान्यतोत्कर्षप्रदर्शनायोत्पाद्यत्वाभिधानादतिशयोक्तिरलङ्कारः । अत्र २ प्रायशो हीति सामान्येन समवादीदिति विशेषार्थस्य समर्थनादर्थान्तरन्यासः । संवदनं च तदा स्वाभाविकमिति स्वभावोक्तिश्च । ३ अत्रानुप्रासः ।

१ अत्र प्रागिवेत्युपमा, नृपवंशा इत्यादौ श्लेषमूलं रूपकं च । २अत्र परिवृत्तिः'परिवृत्तिर्विनियमो योऽर्थानां स्यात् परस्परम् ।'इति प्रकाशोक्तेः । स्वभावोक्तिश्च स्फुटैव ।

साभिशापमिव नातिथयस्ते
मां यदद्य भगवन्नुपयन्ति ।
तेन न श्रियमिमां बहु मन्ये
स्वोदरैकभृतिकार्यकदर्याम् ॥ १६ ॥

साभिशापमिति ॥ हे भगवन् ! ते वीरलक्षणा अतिथयः साभिशापमिव सकलङ्कमिव मामद्य इदानीं यद्यस्मान्नोपयन्ति न प्राप्नुवन्ति तेन तदनागमनेन कारणेन इमां श्रियमिन्द्रलक्ष्मीं बहु अतितरां न मन्ये न संमानयामि । अस्यास्तदातिथ्याद्यावदुपयोगो न, तावदस्या निष्प्रयोजनत्वान्मम संतोषो न । किंभूतां श्रियम्—स्वोदरस्यात्मोदरस्यैवैका केवला या भृतिर्भरणं सैव कार्यं प्रयोजनं यस्याः । अत एव—सा चासौ कदर्या च कुत्सिता । निन्द्यामित्यर्थः । 'आत्मानं धर्मकार्यं च पुत्रदारांश्च पीडयेत् । लोभाद्यः पितरौ भृत्यान्स कदर्य इति स्मृतः' 'अथ मिथ्याभिशंसनम् । अभिशापः' इत्यमरः ॥ १६ ॥

पूर्वपुण्यविभवव्ययलब्धाः
श्रीभरा विपद एव विमृष्टाः ।
पात्रपाणिकमलार्पणमासां
तासु शान्तिकविधिर्विधिदृष्टः ॥ १७ ॥

पूर्वेति ॥ हे मुने ! पूर्वं पुराकृतं यत्पुण्यं कृच्छ्रचान्द्रायणादि तस्य विभवो माहात्म्यं तस्य व्ययेन विनियोगेन नाशेनेति यावत् । लब्धाः प्राप्ताः श्रीभरा लक्ष्मीविलासा विमृष्टा विचारिताः सत्यो विपद एव बहुपुण्यक्षयकारित्वाद्दुदर्कदुःखकारित्वाच्च विपद्रूपा एव । तासु सम्पद्रूपासु विपत्सु सतीषु आसां सम्पदां पात्रस्य पाणिलक्षणे कमले अर्पणं दानं शान्तिकः शान्तिप्रयोजनको विधिर्होमादिः विधिना वेदेन शास्त्रेण, ब्राह्मणा वा दृष्ट उक्तः । विपत्सु हि शान्तिकं क्रियते । कमलस्य दानजलस्य वा । पात्रेभ्यो यावन्न दीयन्ते तावत्संपदो विपद एव । दाने पुण्यवृद्धे, संपदां संपद्रूपता । पात्रे दानं विना मम चेतो न तुष्यतीत्यर्थः । 'न विद्यया केवलया तपसा वाऽपि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥' इति याज्ञवल्क्यः ॥ १७ ॥

१ साभिशापमिवेत्युपमा । मन्य इत्युत्प्रेक्षा । स्वोदरैकेति परिकरश्च । २ अत्र पूर्वेति परिकरः श्रीभराविपदएवेति विरोधानुप्राणितं रूपकं, पूर्वोक्तस्य समर्थनाय पात्रेत्यादि वचनोपन्यासेऽर्थान्तरन्यासश्च ।

तद्विमृज्य मम संशयशिल्पि
स्फीतमत्र विषये सहसाऽघम् ।
भूयतां भगवतः श्रुतिसारै-
रद्य वाग्भिरघमर्षणऋग्भिः ॥ १८ ॥

तदिति ॥ हे मुने, श्रुतिसारैः श्रवणयोः सारैः सुधाभूतैर्वेदेषु श्रेष्ठभूतैश्च भगवतो वाग्भिर्वचनैरद्य इदानीमघमर्षणस्य दुःखस्य पातकस्य च मार्जनस्य सम्बन्धिभिर्ऋग्भिर्भूयताम् । 'ऋतं च सत्यं च—' इत्यघमर्षणऋचः पापं नाशयन्ति । अघमर्षणसंबन्धिन्य ऋचः । अघं मर्षयन्ति क्षालयन्ति । नन्द्यादित्वाल्ल्युः । किं कृत्वा—ते मम साभिशापत्वादन्यद्वेतोर्वाऽत्र नागच्छन्तीति अत्र विषये संशयशिल्पि संदेहकारि स्फीतं प्रवृद्धं मम अघं दुःखं पातकं च सहसा झटिति विमृज्यापनीय भूयतामिति भावे लकारः ॥ १८ ॥

इत्युदीर्य मघवा विनयर्द्धिं
वर्धयन्नवहितत्वभरेण ।
चक्षुषां दशशतीमनिमेषां
तस्थिवान्मुनिमुखे प्रणिधाय ॥ १९ ॥

इतीति ॥ मघवा इन्द्र इति पूर्वोक्तमुदीर्योक्त्वा अवहितत्वस्य सावधानत्वस्य भरेणाधिक्येन विनयर्द्धिं विनीतत्वसमृद्धिं वर्धयन्नधिकीकुर्वन्सन् अनिमेषां निमेषरहितां चक्षुषां दशशतीं नेत्रसहस्रं मुनिमुखेन प्रणिधाय संस्थाप्य तस्थिवांस्तूष्णीं स्थितः । अमरत्वात्सावधानत्वाच्च निर्निमेषत्वम् ॥ १९ ॥

वीक्ष्य तस्य विनये परिपाकं
पाकशासनपदं स्पृशतोऽपि ।
नारदः प्रमदगद्गदयोक्त्या
विस्मितः स्मितपुरःसरमूचे ॥ २० ॥

वीक्ष्येति ॥ नारदः प्रमदेन हर्षेण गद्गदयाऽस्पष्टया उक्त्या वाचा कृत्वा स्मितपुरःसरमूचे । महानुभावाः स्मितपूर्वभाषिणो हि । किंभूतः—पाकशासनपदमिन्द्रपदं स्पृशतोऽधितिष्ठतोऽपि तस्येन्द्रस्य विनये परिपाकं प्रकर्षं वीक्ष्य विस्मित आश्चर्ययुक्तः । अतिसमृद्धस्य विनीतत्वं दुर्लभम्, इन्द्रे तु विद्यत इत्याश्चर्यम् । अविनीतं दृष्ट्वा इन्द्रपदे स्थित इति लौकिक्युक्तिः । 'आख्यत्' इति

१ अत्र श्लेषो रूपकं परिकरश्च । २ अत्रानुप्रासः ।

पाठे 'अस्यतिवक्ति ख्यातिभ्योऽङ् ३ । १ । ५२' इत्यङ् ॥ २० ॥

भिक्षिता शतमखी सुकृतं य-
त्तत्परिश्रमविदः स्वविभूतौ ।
तत्फले यदि परं तव हेला
क्लेशलब्धमधिकादरदं तु ॥ २१ ॥

भिक्षितेति ॥ हे इन्द्र, त्वया शतमखी सुकृतं पुण्यं भिक्षिता । याच्यर्थत्वाद्विकर्मकः । यागशतं कृत्वा यत्पुण्यमुपार्जितं तस्या भिक्षायाः परिश्रमविद आयासवेदिनस्तव तस्य पुण्यस्य फले कार्ये स्वविभूतौ स्वाराज्यलक्षणायां विभूतौ स्वीयसम्पदि यदि हेला 'बहु न मन्ये' इति पूर्वश्लोके वचनादवज्ञा, तर्हि भिक्षायासवेदिनस्तव परं केवलं हेला नान्यस्य कस्यापि । बहुक्लेशार्जितायां संपदि अन्योऽवज्ञां नैव करोति । तु यस्मात्क्लेशेन प्रयासेन लब्धं वस्तु स्वस्मिन्नधिकमादरं ददाति करोतीति ज्योतिष्टोमादियज्ञजन्ये कालान्तरभाविनि फले स्वाराज्येऽवज्ञा, अतिथिषु चादर इति त्वय्येव दृष्टं नान्यत्रापीति भावः । शतमखानां समाहारः शतमखी । 'हेलाऽवज्ञाविलासयोः' इति विश्वः ॥२१॥

सम्पदस्तव गिरामपि दूरा
यन्न नाम विनयं विनयन्ते ।
श्रद्दधाति क इवेह न साक्षा-
दाह चेदनुभवः परमाप्तः ॥ २२ ॥

संपद इति ॥ इयत्तया वक्तुमशक्यत्वाद्गिरामपि वाचामपि दूरा अगोचरा अपि तव संपदो यत् नाम निश्चितं ते विनयं नम्रत्वं न विनयन्ते दूरीकुर्वन्ति । इहात्र विषये परमाप्तोऽतिमित्रम्, अव्यभिचारी च साक्षादनुभवः प्रत्यक्षोपलब्धिश्चेद्यादि नाह न ब्रूते तर्हि क इव श्रद्दधाति विश्वसिति, अपि तु न कोऽपि । संपत्स्वविनयो नियत इति सर्वेषां मतम्, तत्तु त्वयि प्रत्यक्षेण विनयस्य दृष्टत्वाद्बाधितमिति भावः । साक्षात्स्वयं चेन्नाहेति वा । नाम संभावनायां वा । अन्यत्रापि वस्तुनि साक्षात्प्रतीत्यानुभवेनाऽनुमानज्ञानेन परमाप्तवचनेन वा विश्वासो भवति । अत्र पूर्वोक्ते विषये परमाप्तोऽनुभवश्चेत्साक्षादाह तर्हि को वा न विश्वसितीति वा । स्तुतेः प्रायेणालीकत्वात्सर्वेणापि सर्वस्य स्तुतिः क्रियते, तव तु न तथा । अनुभवश्चेन्न कथयति तदिहासु विशिष्टासु सम्पत्सु विषये क इव विश्वसितीति वा । 'विनयन्ति' इति पाठः साधीयान् ॥ २२ ॥

श्रीभरानतिथिसात्करवाणि
स्वोपभोगपरता न हितेति ।
पश्यतो बहिरिवान्तरपीयं
दृष्टिसृष्टिरधिका तव काऽपि ॥ २३ ॥

श्रीति ॥ हे इन्द्र, इति अन्तरपि अन्तःकरणेऽपि बहिरिव बहिर्देश इव पश्यतो जानतोऽवलोकयतश्च तवेयं वर्णयितुमशक्या अधिका भूयसी काप्यनिर्वचनीया दृष्टिसृष्टिर्ज्ञानसृष्टिश्च । इति किम्—अहं श्रीभराञ्छ्रीसमूहानतिथिसाद्देयत्वेनातिथ्यधीनान्करवाणि कुर्याम् । तथा स्वोपभोगपरता आत्मन एवोपभोगतात्पर्यं हिता श्रेयस्करी न भवतीति । यथा बहिर्बहुभिर्नेत्रैः सर्वमवलोकयसि, तथाऽन्तःकरणेऽपि सर्वं करणीयं ज्ञानदृष्ट्याऽवलोकयसि, एवंविधस्त्वमेव नान्य इति भावः । 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः ॥ २३ ॥

आः स्वभावमधुरैरनुभावै-
स्तावकैरतितरां तरलाः स्मः ।
द्यां प्रशाधि गलितावधिकालं
साधु साधु विजयस्व बिडौजः ॥ २४॥

आ इति ॥ हे बिडौजः इन्द्र ! वयं स्वभावमधुरैर्निसर्गसुन्दरैः । तावकैस्त्वदीयैरनुभावैः स्वभावसूचनैः प्रभावैर्वा अतितरामत्यर्थं आः तरलाः साश्चर्याः स्मो भवामः । ऋषीणामस्माकं तरलत्वमनुचितमिति पीडायां आः शब्दः, हर्षे वा । त्वं गलितोऽवधिर्मर्यादा यस्यैवंभूतः कालो यस्यां क्रियायां यथा तथा निरवधिकं द्यां स्वर्गं साधु सम्यक्प्रशाधि पालय । तथा साधु सम्यग्विजयस्व सर्वोत्कर्षेण वर्तस्व । 'अनुभावः प्रभावे स्यान्निश्चये भावसूचने' इति विश्वः । अनुगतो भाव इति समासः । प्रशाधि, शासः 'शा हौ ६।४।३५' इति शादेशः । साधु साधु हर्षाद्द्विरुक्तिर्वा । विजयस्व 'विपराभ्यां जेः' इति तङ् । वेवेष्टि विट् व्यापकमोजो यस्य बिडौजाः पृषोदरादित्वाद्वृद्धिः ॥ २४ ॥

१ अत्राप्यनुप्रासः । २ अत्र काव्यलिङ्गमर्थालङ्कारः ।

१ अत्रातिशयोक्तिः, अर्थान्तरन्यासश्च । २ अत्रोपमा, व्यतिरेकश्च । ३ अत्रानुप्रासः ।

सङ्ख्यविक्षततनुस्रवदसृ-
क्षालिताखिलनिजाघलघूनाम् ।
यत्त्विहानुपगमः शृणु राज्ञां
तज्जगद्यूवमुदं तमुदन्तम् ॥ २५ ॥

संख्येति ॥ हे इन्द्र, यत्पुनर्यस्माद्धेतोर्वा इह स्वर्गे राज्ञामनुपगमोऽनागमनं तत् तं प्रसिद्धमुदन्तं राज्ञामनागमने हेतुं वृत्तान्तं शृणु । किम्भूतानां राज्ञाम्—सङ्ख्ये रणे विक्षततनुभ्यो निहतशरीरेभ्यः स्रवन्निःसृतमसृक् रुधिरं तेन क्षालितं धौतमखिलं समग्रं निजं सहजमघं पापं येषां ते अत एव लघवस्तेषाम् । एवम्भूतेन पातकेन लघूनां स्वर्गगमनयोग्यलाघवयुक्तानां वा । किम्भूतमुदन्तम्—जगद्यूनां त्रैलोक्यतरुणानां मुत् संतोषो यस्मात् तम् । 'यस्तु' इति क्वचित्पाठः ॥ २५ ॥

सा भुवः किमपि रत्नमनर्घं
भूषणं जयति तत्र कुमारी ।
भीमभूपतनया दमयन्ती
नाम या मदनशस्त्रममोघम् ॥ २६ ॥

सेति ॥ सा भीमभूपतनया दमयन्ती नाम कुमारी तत्र भुवि प्रसिद्धा जयति सर्वोत्कर्षेण वर्तते । किंभूता—भुवः भूषणमलंकारभूतं किमपि लोकोत्तरमनर्घममूल्यं रत्नं रत्नभूता । भूमण्डलं तयैवालंकृतमित्यर्थः । सा का—या अमोघमप्रतिहतं मदनशस्त्रं कामास्त्रम् । कुलनामसौन्दर्यसौभाग्यविवाहयोग्यत्वानि कथितानि ॥ २६ ॥

सम्प्रति प्रतिमुहूर्तमपूर्वा
कापि यौवनजवेन भवन्ती ।
आशिखं सुकृतसारभृते सा
कापि यूनि भजते किल भावम् ॥२७॥

संप्रतीति ॥ सा भैमी क्वापि यूनि लोकोत्तरे अथ च मयाप्यज्ञातनामानि तरुणे संप्रति भावमनुरागं भजते किलेति श्रूयते । किंभूता । यौवनजवेन तारुण्यभरवेगेन प्रतिमुहूर्तं प्रतिक्षणं कापि वर्णयितुमशक्या अपूर्वा सुन्दरी भवन्ती जायमाना । किंभूते यूनि—आशिखं नखादारभ्य चूडापर्यन्तं सुकृतसारेण पुण्योत्कर्षेण भृते पूर्णे । स्वत एव सुन्दरी स्वत एव यस्मिन्ननुरक्ता तत्पुण्यस्येयत्ता नास्तीत्यर्थः । क्वापीति निर्देश इन्द्रस्य ज्ञानाभिलापजननार्थं ॥ २७ ॥

कथ्यते न कतमः स इति त्वं
मां विवक्षुरसि किं चलदोष्ठः ।
अर्धवर्त्मनि रुणत्सि न पृच्छां
निर्गमेण न परिश्रमयैनाम् ॥ २८ ॥

कथ्यत इति ॥ हे इन्द्र, त्वं मां प्रति इति किमर्थं विवक्षुरसि वक्तुमिच्छसि । अपि तु न वक्तव्यम् । किम्भूतः—चलन् चञ्चल ओष्ठोऽधरो यस्य सः । इति किम्—यस्मिन् सा भावं भजते स कतमो युवा न कथ्यत इति । अपि तु श्रीमता कथनीयः । त्वम् अर्धवर्त्मनि वदनमार्गमध्ये पृच्छां प्रश्नं न निरुणत्सि, अपि तु रुणत्स्येवेति काकुः । रुधिर्द्विकर्मा । युक्तमेतत्, त्वम् एनां पृच्छां निर्गमेण मुखान्निःसरणेन न परिश्रमय खेदं मा नैषीः । 'स कः' इति त्वयाऽहं न प्रष्टव्य इत्यर्थः । पृच्छा, भिदादित्वादङ् ङित्वाद् 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६ । १ । १६' इति सम्प्रसारणम् ॥ २८ ॥

यत्पथावधिरणुः परमः सा
योगिधीरपि न पश्यति यस्मात् ।
बालया निजमनःपरमाणौ
ह्रीदरीशयहरीकृतमेनम् ॥ २९ ॥

तदकथने कारणमाह—

यत्पथेति ॥ परमोऽणुः परमाणुः यस्या योगिबुद्धेः पन्था मार्गस्तस्य यस्यावधिर्मर्यादारूपः परमाणुपर्यन्तं योगिबुद्धेर्विषयो न तु तस्मात्परतः किंचित् । सा योगिनां माद्दशामपि बुद्धिरेनं युवानं यस्मात्कारणान्न पश्यति । तत् कारणमेवाह—किंभूतमेनम्—बालया निजमनःपरमाणौ स्वीयमनोलक्षणे परमाणौ ह्रीरेव लज्जैव दरी कन्दरा तस्यां शेते शयो हरिः सिंहस्तत्स्वरूपं कृतम् । 'अणुपरिमाणं मनः' इति तार्किकाः । मन एव योगिबुद्ध्या गृह्यते, न तु तत्स्था ह्रीस्तस्यां विद्यमानो दूरत इति सा तु लज्जावशात्कस्याप्यग्रे न कथयतीत्यर्थः । परमाणूनां निरवयवरूपाद्याश्रयत्वं यथा तथा निरवयवह्रियोऽपीत्यविरुद्धमित्यर्थः । कन्दरायां सुप्तः सिंहः केनापि न ज्ञायते ।

१ अत्रानुप्रासः शब्दालङ्कारः । क्षालितावपदार्थस्य लघुत्वहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमर्थालङ्कारश्च । २ अत्र मदनशस्त्रमिति रूपकम् ।

१ अत्रातिशयोक्तिरर्थालङ्कारः । २ अत्रानुप्रासः ।

सिंहरूपणात्तस्य श्रेष्ठत्वं सूचितम् । 'शयवासवासिषु-' इति विकल्पविधानाद् 'ह्रीदरीशय-'इत्यत्र ङ्लुक्॥२९॥

सा शरस्य कुसुमस्य शरव्यं
सूचिता विरहवाचिभिरङ्गैः ।
तातचित्तमपि धातुरधत्त
स्वस्वयंवरमहाय सहायम् ॥ ३० ॥

सेति ॥ सा भैमी स्वस्वयंवरमहाय स्वीयस्वयंवरोत्सवाय तातचित्तमपि पितृचित्तमपि धातुर्ब्रह्मणः सहायमधत्त कृतवती। किंभूता—कृशिमपाण्डिमादिना विरहवाचिभिर्विरहपीडां सूचयद्भिरङ्गैः स्वावयवैः कुसुमरूपस्य शरस्य। मदनबाणस्येत्यर्थः । शरव्यं वेध्यं पितरं प्रति सूचिता ज्ञापिता । ब्रह्मणा तस्याः स्वयंवराश्चित्ते धृतः वियोगपीडां दृष्ट्वा पित्राप्यारब्ध इत्यर्थः । शृणातीति शरुर्हिंस्रस्तस्मै हिता शरव्या, 'उगवादिभ्यो यत्' । ५।१।२। 'शरव्यम्' इत्येव पाठो युक्तः ॥३०॥

मन्मथाय यदथादित राज्ञां
हूतिदूत्यविधये विधिराज्ञाम् ।
तेन तत्परवशाः पृथिवीशाः
सङ्गरं गरमिवाकलयन्ति ॥ ३१ ॥

मन्मथायेति ॥ अथानन्तरं विधी राज्ञां हूतिदूत्यविधये आकारणार्थं दूतत्वविधये दूतत्वव्यापाराय मन्मथाय 'त्वं सर्वानाकारय' इत्याज्ञां यद्यतः अदित दत्तवान् तेन हेतुना तत्परवशाः कामाज्ञापराधीनाः सन्तः पृथिवीशाः संगरं सङ्ग्रामं गरमिव विषतुल्यमाकलयन्ति मन्वते । अपकारित्वाद्विषं यथा त्यज्यते तथा संग्राममपि त्यक्त्वा भैमीपरवशा जाता इति भावः । अथ च सम्यक् सुतरां गरो विषम् । गरं योऽस्ति तमेव नाशयति, संगरस्तु सर्वान् । दूत्येति, 'दूतवणिग्भ्यां च' ( वा० ) इति भावे यः ॥ ३१ ॥

येषु येषु सरसा दमयन्ती
भूषणेषु यदिवाऽपि गुणेषु ।
तत्र तत्र कलयाऽपि विशेषो
यः स हि क्षितिभृतां पुरुषार्थः ॥३२॥

येष्विति ॥ दमयन्ती येषु येषु भूषणेषु यदि वा अथवा येषु येषु गुणेषु औदार्यादिषु सरसा सादरा, तत्र तत्र भूषणेषु गुणेषु वा कलयाऽपि लेशेनापि परस्परापेक्षया वा यो विशेष आधिक्यं स हि स एव क्षितिभृतां राज्ञां यस्मात्पुरुषार्थो धर्मादिरूपः अस्माकमेवंविधा गुणा अलङ्कारा वा युज्येरन् यादृशा अन्येषां न स्युः । अन्यथा गुणैरलङ्कारैश्च विशिष्टाऽसौ नास्मासु रुचिं निधास्यतीति भूषणगुणाधिक्यमेव पुरुषार्थत्वेनार्जयन्ति भैमीप्रीतिहेतुत्वात् न तु संग्रामवासनामिति भावः । एवं चासावेव सर्वेषां राज्ञां मनोऽधिदेवीवान्तरुवासेति सूचितम् ॥ ३२ ॥

शैशवव्ययदिनावधि तस्या
यौवनोदयिनि राजसमाजे ।
आदरादहरहः कुसुमेषो-
रुल्ललास मृगयाभिनिवेशः ॥ ३३ ॥

तदेवाह—

शैशवेति ॥ कुसुमेषोः कामस्य मृगयायामभिनिवेश आदरो यौवनोदयिनि यौवनोन्मुखे राज्ञां समाजे समूहे विषये तस्या भैम्याः शैशवव्ययदिनं बाल्यापगमदिनमवधिर्यस्यां क्रियायां तथा यौवनोदयमारभ्य अहरहः प्रत्यहमादरादातितरामुल्ललास प्रकटीबभूव । भैमी यदा शैशवमपनीय यौवनमादृतवती, ततः प्रभृति सर्वेऽपि राजानः स्मरस्यैव लक्ष्या आसन्नित्यर्थः । एवं च सर्वेऽपि राजानस्ततः प्रभृति । तत्प्राप्तिमेव पुरुषार्थत्वेन मन्यन्ते इति भावः ॥ ३३ ॥

इत्यमी वसुमतीं कमितारः
सादरास्त्वदतिथीभवितुं न ।
भीमभूसुरभुवोरभिलाषे
दूरमन्तरमहो नृपतीनाम् ॥३४॥

प्रकृतमुपसंहरन्नाह—

इतीति ॥ अमी वसुमतीं पृथ्वीं कमितारो वाञ्छाशीला राजान इति कारणात्त्वदतिथिभवितुं तवातिथयो भवितुं सादराः साभिलाषा न । सङ्ग्रामाभावात्स्वर्गं प्रति

१ अत्रातिशयोक्ती रूपकं च । २ अत्राङ्गैः सममिति सहोक्तिः । अतिशयोक्तिस्तु न, अस्या उपजीव्यत्वसाधारण्यमात्रेणावस्थानात् । ३ अत्रानुप्रासः शब्दालङ्कारः । गरमिवेत्युपमाऽर्थालङ्कारश्च ।

१ विशेषपुरुषार्थयोर्भिन्नत्वेऽपि तथोक्तिरित्यतिशयोक्तिरिति केचित् । २ अत्र यौवनोदयिनीति विशेषणेन शिशूनां जरतां च कुसुमेषुणा घृणयेव त्यक्तत्वमिति सूचितम् । एवं मदनादितत्वमेव तेषां जातमित्यपि असम्भवत्वेऽपि सम्भवीवोक्तमित्येषाऽप्यतिशयोक्तिरेव काचिदित्याहुः ।

नागच्छन्तीत्यर्थः। भैम्यर्थं वसुमतीमेव कमितारो न स्वर्गमिति वा। अहो आश्चर्ये। अभिलाषे विषये भीमभूसुरभुवोर्भैमीदेवालययोर्दूरमतितरां नृपतीनामन्तरं तारतम्यं महान्विशेषः। यागादिभिः प्राप्यात्स्वर्गादपि भैमीप्राप्तिरधिका इति मन्वत इत्यर्थः। स्वर्गे सुरभूर्देवकन्या भोग्या, भैम्यास्तस्याश्च महान्विशेषः। अथ च—भीमस्य भूः प्रदेशः तत्र भैम्या विद्यमानत्वात्कुण्डिनत्रिदिवयोर्महान्विशेषः। अतः स्वर्गाभिलाषो नेत्यर्थः। अथ च—कुण्डिनस्य भूमौ विद्यमानत्वाद्राज्ञां भूमावेव निवासात्कुण्डिनमेव समीपं न तु स्वर्ग इति तयोर्महान्विशेषः। कमितारः, ताच्छील्ये तृन्। तस्यार्धधातुकत्वेऽपि पाक्षिकत्वाण्णिङभावः। तद्योगाद्वसुमतीमिति द्वितीया॥ ३४॥

तेन जाग्रदधृतिर्दिवमागां
सङ्ख्यसौख्यमनुसर्तुमनु त्वाम्।
यन्मृधं क्षितिभृतां न विलोके
तन्निमग्नमनसां भुवि लोके॥ ३५॥

तेनेति॥ हे इन्द्र, अहं तन्निमग्नमनसां भैम्यासक्तचित्तानां क्षितिभृतां भुवि लोके भूलोके मृधं संग्रामं यद् यस्मान्न विलोके न पश्यामि, तेन हेतुना जाग्रती स्फुरन्ती अधृतिरसंतोषो यस्यैवंभूतः सन् त्वामनु उद्दिश्य संख्यसौख्यं युद्धजनितं सुखमनुसर्तुमन्वेष्टुं प्राप्तुं दिवमागामागमम्। किंभूतोऽहम्—जाग्रद्वर्तमानः। तथा—न विद्यते धृतिर्धैर्यं सुखं वा यस्येति वा। लक्षणेऽनुः कर्मप्रवचनीयः॥ ३५॥

वेद यद्यपि न कोऽपि भवन्तं
हन्त हन्त्रकरुणं विरुणद्धि।
पृच्छ्यसे तदपि येन विवेक-
प्रोञ्छनाय विषये रससेकः॥ ३६॥

वेदेति॥ कोऽपि कश्चनापि हन्तृषु घातुकेषु अकरुणं निष्कृपं भवन्तं न विरुणद्धि त्वया सह विरोधं न करोतीति यद्यप्यहं वेद तदपि तथाऽपि त्वं पृच्छ्यसे युद्धमस्ति न वेति। यतः—विषये अभिलषणीये वस्तुनि रसस्यानुरागस्य सेक आधिक्यं येन कारणेन विवेकप्रोञ्छनाय ज्ञानाभावाय भवति। अनुरागवशात्किमपि न ज्ञायते। हन्त आश्चर्ये। ज्ञाने सत्यप्येवं प्रश्न आश्चर्यहेतुः। रससेक उदकसेकश्चित्रादेर्मार्जनाय भवतीत्युक्तिः॥ ३६॥

एवमुक्तवति देवऋषीन्द्रे
द्रागभेदि मघवाननमुद्रा।
उत्तरोत्तरशुभो हि विभूनां
कोऽपि मञ्जुलतमः क्रमवादः॥ ३७॥

एवमिति॥ देवऋषीन्द्रे नारदे एवं पूर्वोक्तमुक्तवति सति मघवाननमुद्रा इन्द्रमुखमौनं द्राक् झटिति अभेदि स्वयं भिन्ना। इन्द्रो बभाषे इत्यर्थः। पुनः किमित्युवाचेत्यत आह—हि यतो विभूनां प्रभूणां मञ्जुलतमो रम्यतमः कोऽपि लोकोत्तरः क्रमेण वादो वचनम्। उत्तरस्य प्रत्युत्तरेण पुरस्तात्पुरस्ताद्वा शुभः सुभगो भवति। अतः पुनरप्युवाचेत्यर्थः। अभेदि, कर्मकर्तरि॥ ३७॥

काऽनुजे मम निजे दनुजारौ
जाग्रति स्वशरणे रणचर्चा।
यद्भुजाङ्कमुपधाय जयाङ्कं
शर्मणा स्वपिमि वीतविशङ्कः॥ ३८॥

केति॥ हे मुने, स्वस्य मम शरणे गृहे रक्षितारि च स्व आत्मैव रक्षिता यस्य स्वशरणाय परानपेक्षे वा निजे स्वीये सहजे वाऽनुजे कनिष्ठभ्रातरि दनुजारौ दैत्यदानवशत्रौ तस्मिन्नुपेन्द्रे जाग्रति सावधाने जागरूके सति मम का रणस्य चर्चा विचारणा। मम रणचिन्ता नास्तीत्यर्थः। निजेऽनुजे इत्यनेन आज्ञावशवर्तित्वं वत्सलत्वात्स्वतः प्रवृत्तत्वं च सूचितम्। दनुजारावित्यनेन सामर्थ्यातिशयः सूचितः। स्वस्य शरणे गृहविषये जाग्रतीति वा। परानपेक्षमात्मनो रक्षके इति सर्वविशेषणसार्थक्यम्। तस्मिन्कस्मिन्—जयश्चिह्नं यस्य जयस्य चिह्नभूतं वा यस्योपेन्द्रस्य भुजाङ्कं दक्षिणभुजोत्सङ्गमुपधायोच्छीर्षकीकृत्य वीतविशङ्को गतभयः सन् शर्मणा सुखेन स्वपिमि निद्रामि पूर्वोक्तहेतोः॥ ३८॥

विश्वरूपकलनादुपपन्नं
तस्य जैमिनिमुनित्वमुदीये।

१ स्वधर्मस्पृहामप्यपहाय, इन्द्रातिथ्यस्पृहामप्यपहाय च तदर्थमेव प्रवृत्तत्वमुक्तमित्यपि अतिशयोक्तिः। २ अत्र परार्द्धे लोक इति यमकम्।

१ अत्र तदपि येनेति हेतुहेतुमद्भावापादनात् काव्यलिङ्गम्। २ अत्रामुद्राऽभेदीति विशेषस्योत्तरोत्तरशुभ इत्यादिरूपेण सामान्येन समर्थनादर्थान्तरन्यासः। ३ अत्रानुप्रासः।

विग्रहं मखभुजामसहिष्णु-
र्व्यर्थतां मदशनिं स निनाय ॥ ३९ ॥

विश्वेति ॥ हे मुने, तस्य मदनुजस्य विश्वरूपकलनात् 'सर्वं विष्णुमयं जगत्' इति विश्वेषां सर्वेषां रूपस्य स्वरूपस्य कलनात्स्वीकारात् । सर्वात्मकत्वाङ्गीकरणादित्यर्थः । उपपन्नं घटमानं जैमिनिमुनित्वमुदोये उत्पन्नम् । जैमिनेर्विश्वान्तःपातित्वात्, विष्णोश्च विश्वरूपत्वाज्जैमिनिमुनिरूपत्वं युक्तमेवेत्यर्थः । यतस्तस्य जैमिनिमुनित्वम्, अतो जैमिनिरूपः सोऽनुजो मखभुजां देवानां विग्रहं शरीरं दैत्यैः सह युद्धं वाऽसहिष्णुरसहमानो मदशनिं मम वज्रं व्यर्थतां वैयर्थ्यं विनाय प्रापयत्। शत्रुमारणेन वज्रकृत्यं स्वयमेव कृतवानित्यर्थः । वेदान्ताद्यभिमतदेवतानां विग्रहेण कर्मसमवायेऽङ्गीक्रियमाणे युगपदनेकयजमानैर्नानादेशेष्वनुष्ठीयमानेषु कर्मस्वेकयागगतस्येन्द्रस्येन्द्रशरीरस्य तस्मिन्नेव क्षणे भिन्नदेशयागान्तरहविर्ग्रहणे शक्त्यभावाद्यागान्तरलोपप्रसङ्गे वेदस्याप्रामाण्यापातः । न चैश्वर्यवशादनेकशरीराङ्गीकारेणैकोऽपि युगपत्कृष्णवत्सर्वत्र प्रयास्यतीति वाच्यम् । तस्यैवंविधैश्वर्यवत्त्वे मानाभावात् । अचेतनानामपि देवतात्वाङ्गीकारात्तेष्वैश्वर्यसंभावनाया अप्यभावाच्च । तथा चाहानुक्रमणिकाकारः—'या काचित्तेन मन्त्रेणोच्यते सा देवता चेतनाऽचेतना वा भवतु क्वचिद्वाणाः, क्वचिद्धनुः, क्वचिन्मौर्वी' इति । निरुक्तकारोऽपि—'इमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाज ऋग्भाजश्च'—इत्याह। 'या यत्र भजते हविः सा देवता' इति श्रुतिमात्रेण कर्मसमवायेऽङ्गीक्रियमाणे इदमिन्द्रायेत्यादि चतुर्थ्यन्तप्रदरूपेणैव युगपदनेकयागसंबन्धो घटत इति वेदप्रामाण्यसिद्धेः 'वज्रहस्तः पुरंदरः' इत्यादेश्चार्थवादत्वसमर्थनात् 'बहुभिर्युगपद्यागे समारब्धे समन्ततः । पुरुहूतः समाहूतो नृभिः क्व नु स गच्छतु ॥' इत्यादिग्रन्थसंदर्भेण देवताधिकरणे देवतानां जैमिनिमुनिना मन्त्ररूपेणैव कर्मसमवायस्य समर्थनात्। स्वचक्रेणैव दानवनिवारणाच्चेत्यर्थः। अथ च कस्मिंश्चित्समये सवज्रमिन्द्रबाहुं जैमिनिः स्तम्भितवान्, अतोऽपि वज्रस्य वैयर्थ्यम् । अत्र 'जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च। पुलस्तिः पुलहो विष्णुः पञ्चैते वज्रवारणाः ॥' इति वृद्धोक्तिः प्रमाणम्। 'मन्त्रमयी देवतेति सर्वकर्मसु देवतानां सत्त्वम्' इति जैमिनिः। 'कर्मसमवायिनी देवता' इत्यन्ये । इति समाधिः ॥ ३९ ॥

१ अत्र प्रकृताप्रकृतोभयविषयः श्लेषः ।

ईदृशानि मुनये विनयाब्धि-
स्तस्थिवान्प्र वचनान्युपहृत्य ।
प्रांशुनिःश्वसितपृष्ठचरी वा-
ग्नारदस्य निरियाय निरोजाः ॥ ४० ॥

ईदृशानीति ॥ विनयस्य अब्धिः समुद्रोऽतिविनीतः स इन्द्र ईदृशानि पूर्वोक्तानि वचनानि मुनय उपहृत्य उपहारीकृत्य तस्थिवान् । तूष्णींभावमापेत्यर्थः । युद्धाभावजन्यदुःखेन प्रांशु दीर्घं निःश्वसितं तस्य पृष्ठचरी पश्चात्सञ्चारिणी, प्रथमं निःश्वस्योक्ता अत एव निरोजा दीना नारदस्य वाक् निरियाय निर्गता । ईप्सितरणालाभेन निःश्वासो, वाचो निष्प्रभत्वं च ॥ ४० ॥

स्वारसातलभवाहवशङ्की
निर्वृणोमि न वसन्वसुमत्याम् ।
द्यां गतस्य हृदि मे दुरुदर्कः
क्ष्मातलद्वयभटाजिवितर्कः ॥ ४१ ॥

स्वरिति ॥ हे इन्द्र, वसुमत्यां भूलोके वसन्नहं स्वः स्वर्गश्च रसातलं च स्वर्गपाताले तयोर्भवो जात आहवः सङ्गमस्तच्छङ्काशीलःसन् न निर्वृणोमि सुखभिवामि।पृथिव्यां युद्धाभावात्स्वर्गं युद्धदर्शनेच्छया आगतोऽहमित्यर्थः। द्यां गतस्यापि मे हृदि क्ष्मायाः पृथिव्यास्तले स्वरूपाधोभागौ तयोर्द्वयं भूपातालयुगं तत्रस्थानां भटानामाजिः सङ्ग्रामस्तस्य वितर्कः सम्भावना दुरुदर्को दुष्टोत्तरकालः । निष्फल इत्यर्थः । स्वर्गेऽपि युद्धाभावादत्र स्थितस्य मम भुवि पाताले वा केनाचिच्छूरेण युद्धं कृतं स्यादिति मनीषया न सुखमित्यर्थः । 'अधःस्वरूपयोरस्त्री तलम्' इति 'उदर्कः फलमुत्तरम्' इति चामरः । स्वारसेति, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः ६ । ३ । १११' इति दीर्घः ॥ ४१॥

वीक्षितस्त्वमसि मामथ गन्तुं
तन्मनुष्यजगतेऽनुमनुष्व ।
किं भुवः परिवृढा न विवोढुं
तत्र तामुपगता विवदन्ते ॥ ४२ ॥

१ विनयाब्धिरिति रूपकम् । २ अत्र काव्यलिङ्गमित्येके । वस्तुतस्तु नारदप्रकृतेस्तथा निदर्शनामिति स्वभावोक्तिरियमपीत्यन्ये ।

वीक्षित इति ॥ हे इन्द्र, मया त्वं वीक्षितो दृष्टोऽसि अथ मङ्गले आनन्तर्ये वा । युद्धाभावादद्याप्यहं न सुखी तत्तस्मान्मनुष्यजगते भूलोकाय गन्तुं त्वम् अनुमनुष्वानुजानीहि । तत्र युद्धे किं प्रमाणमत आह—तत्र भूमौ तां भैमीं विवोढुं परिणेतुमुपगताः समागता भुवः परिवृढाः प्रभवो राजानः किं न विवदन्ते । अहमहमिकया परस्परं कलहं न करिष्यन्ति किमित्यर्थः । ततो युद्धं ततो मम सुखं स्यादित्याशां देहीत्यर्थः । जगते, 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि २। ३ । १२' इति चतुर्थी । 'प्रभौ परिवृढः १।२।२१' इति साधुः । विवदन्ते, '. वासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः १।३।४७' इति विमतौ तङ्, वर्तमान सामीप्ये वर्त्तमानवद्वा ३।३।१३१'इति वर्तमानवत्प्रत्ययश्च॥४२॥

इत्युदीर्य स ययौ मुनिरुर्वीं
स्वर्पतिं प्रतिनिवर्त्य वलेन ।
वारितोऽप्यनुजगाम सयत्नं
तं कियन्त्यपि पदान्यपराणि ॥ ४३ ॥

इतीति ॥ स मुनिरित्युदीर्य पूर्वोक्तमुक्त्वा उर्वी ययौ। किं कृत्वा—बलेन बलात्कारेण स्वर्पतिं नाकनायकं प्रतिनिवर्त्य परावर्त्य । वारितोऽपि शपथादिना तिष्ठ तिष्ठेति निषिद्धोऽपि स शक्रः सयत्नं यथा तथा कियन्त्यप्यपराणि द्वित्रादिपदानि तं नारदमनुजगाम पश्चादगमत् । 'यन्तम्' इति क्वचित्पाठः तदा स इन्द्रः । स्वर्पतिम्, अहरादित्वाद्रेफः । पदानि, अध्वमानार्थत्वादत्यन्तसंयोगे द्वितीया । 'वारितेऽप्यनुगमाय सजन्तम्' इति पाठे वारितेऽपि निवारणे कृतेऽपि अनुगमाय कियन्त्यपि पदानि सजन्तं लगन्तं स्वर्पतिं बलान्निवर्त्य ययावित्यन्वयः ॥ ४३ ॥

पर्वतेन परिपीय गभीरं
नारदीयमुदितं प्रतिनेदे ।
स्वस्य कश्चिदपि पर्वतपक्ष-
च्छेदिनि स्वयमदर्शि न पक्षः ॥ ४४ ॥

पर्वतेनेति ॥ पर्वतेन मुनिना गभीरमर्थगंभीरं स्थूलं च नारदीयं नारदसंबन्धि उदितं वचनं परिपीय सादरं श्रुत्वा प्रतिनेदे साधूक्तमिति तस्याभिनन्दनं चक्रे । पर्वतपक्षांश्छिनत्तीत्येवंशीले इन्द्रे विषये, अथ च पर्वतस्य पक्षे मतं छिनत्तीत्येवंशीले इन्द्रे स्वस्य आत्मनः कश्चिदपि पक्षो मर्मैव प्रतिभातीति किंचिदपि मतं स्वयं नादर्शि प्रदर्शितम् । अथ च 'आपो नारा इति प्रोक्ताः' इति वचनान्नारमुदकं ददाति नारदो मेघः, तदीयं गर्जितं परिपीय आद्रिणा प्रतिनद्यते प्रतिध्वन्यते । गिरिगरुच्छेदिनि स्वपक्षः स्वगरुन्ति छेदनभयात्पर्वतेन न प्रदर्श्यन्त इत्युक्तिः ॥ ४४ ॥

पाणये वलरिपोरथ भैमी-
शीतकोमलकरग्रहमर्हम् ।
भेषजं चिरचिताशनिवास-
व्यापदामुपदिदेश रतीशः ॥ ४५ ॥

पाणय इति ॥ अथ रतीशः कामश्चिरं चितानां सम्भृतानामशनिवासेन वज्रवासेन जन्यानां विशिष्टानामापदां रोगाणामर्हं योग्यं तदपनयनसमर्थं भैम्याः शीतकोमलस्य करस्य ग्रहं परिणयनलक्षणं भेषजमौषधं वलरिपोः पाणये उपदिदेश समादिष्टवान् । स्मरो भैमीप्राप्तौ वज्रत्यागात्कठिनवज्रजन्यः संतापः शाम्यतीत्यर्थः । दाहशान्त्यर्थमन्यत्रापि शीतलं भेषजमुपादिश्यते ॥४५॥

नाकलोकभिषजोः सुषमा या
पुष्पचापमपि चुम्बति सैव ।
वेद्मि तादृगभिषज्यदसौ त-
द्वारसङ्क्रमितवैद्यकविद्यः ॥ ४६ ॥

मदनस्यौषधोपदेशे कुतः सामर्थ्यमित्यत आह—

नाकेति ॥ नाकलोकस्य स्वर्लोकस्य भिषजोर्वैद्ययोर्या सुषमा परमा शोभा सैव शोभा पुष्पचापमपि काममपि चुम्बति स्पृशति । तयोरेव शोभा मदने समागतेति वेद्मि । यतोऽसौ मदनस्तादृक् स्ववैद्यरूपः सन् अभिषज्यदचिकित्सत् । किंभूतः—सैव सुषमैव द्वारं तेन कर्तृभूतेन संक्रामिता संक्रान्तिं प्रापिता समावेशिता वैद्यकविद्या आयुर्वेदशास्त्रं यस्मिन्मदने । शोभाद्वारेण करणेनात्मनि संक्रामिता वैद्यकविद्या येन वा। अतः कामस्य भिषक्त्वं संगतमिति भावः । अमन्तत्वात्क्रमो मित्त्वाह्रस्वत्वे संक्रमितमिति साधुः । तारकादेराकृतिगणत्वा-

१ अत्रानुप्रासः । २ अत्राप्यनुप्रासः ।

१ ध्वन्यत इति शेषः।अत्र पक्षपदयोः पर्वतपदयोश्चैकार्थत्वाभावान्न कथितपदत्वं दोषः,प्रत्युत परत्र यमकमलङ्कारः । पर्वतेन पर्वतपक्षच्छेदिनि पक्षदर्शनाभावस्य युक्तत्वोक्तेः हेतुहेतुमत्त्वेन पदार्थहेतुकं काव्यलिङ्गम् । २अनुप्रासः शब्दालङ्कारः ।

दितचा वा। विद्यां वेत्तीति वैद्य इत्यणन्तात्तस्य कर्मेति 'योपधाद्गुरूपोत्तमाद्वुञ् ५ । १।१३२' इति वुञ् । अभिषज्यत्, 'भिषज रोगापनयने' कण्ड्वादित्वाद्यक् ॥ ४६ ॥

इन्द्रे भैमीमभिलषति सतीन्द्राण्यादीनामिन्द्रपरित्यागजन्यामवस्थां षड्भिः श्लोकैराह—

मानुषीमनुसरत्यथ पत्यौ
खर्वभावमवलम्ब्य मघोनी।
खण्डितं निजमसूचयदुच्चै-
र्मानमाननसरोरुहनत्या ॥ ४७ ॥

मानुषीमिति ॥ अथ पत्याविन्द्रे खर्वभावं नीचत्वमवलम्ब्याङ्गीकृत्य मानुषीं भैमीमनुसरति जिगमिषति सति मघोनीन्द्राणी आननसरोरुहस्य चिन्तावशान्नत्या नम्रतया निजं स्वीयमुच्चैर्महान्तं मानमहङ्कारं पूजनं वा खण्डितमसूचयत् । आननसरोरुहनत्या खण्डितामिति वा कृत्वा । अथ च खर्वत्वं ह्रस्वत्वम् । यो हि वामनत्वमङ्गीकरोति तस्यैव परिमाणेन न्यूनत्वं भवितुं युक्तं, नान्यस्येति, अत्र तु विपरीतम् । मानुषीम्, जातिवाचित्वान्ङीप् । मघोनी 'पुंयोगादाख्यायाम् ४ ।१ ।४९' इति ङीपि 'श्वयुवमघोनामतद्धिते ६ । ४ । १३३ ' इति सम्प्रसारणम् ॥ ४७ ॥

यो मघोनि दिवमुच्चरमाणे
रम्भया मलिनिमाऽलमलम्भि ।
वर्ण एव स खलूज्ज्वलमस्याः
शान्तमान्तरमभाषत भङ्ग्या ॥ ४८ ॥

य इति ॥ रम्भया देवाङ्गनया मघोनीन्द्रे दिवमुच्चरमाणे त्यक्त्वा गच्छति सति यो मलिनिमा मालिन्यमलमत्यर्थमलम्भि प्राप्तः स मलिनिमरूपो वर्ण एव खलु निश्चयेनास्या रम्भाया उज्ज्वलं हर्षयुक्तमान्तरं हृदयं भङ्ग्या आकारविशेषेण शान्तं निर्विण्णं दुःखयुक्तमभाषतावोचत् । उज्ज्वलस्य मालिन्यमनुपपद्यमानं सदर्थापत्त्या दीप्ततायाः शान्ततां ब्रूते । स्वत्यागदुःखवशाच्छ्यामत्वं जातं सर्वैरपि ज्ञातमित्यर्थः । अथ च— अस्या उज्ज्वलं शृङ्गाररसप्रधानमान्तरं मनः शान्तं शान्तैकरसप्रधानं ब्रूते स्म । तस्या अपि वैराग्यमभूदित्यर्थः । अथ च—शान्तं कोपरहितम् । तदीयमन्तःकरणम् उदतिशयेन ज्वलतीत्युज्ज्वलं दीप्तं सकोपमभापत् तत्त्यागात्तदानीं क्रुद्धा सा जातेत्यर्थः । कोपाच्छ्यामता भवति, अत्रापि शान्तस्य दीप्तत्वं शान्तरसस्य च शृङ्गाररसत्वमित्युभयमप्याश्चर्यकारि । श्यामवर्णस्य च शृङ्गारत्वं युक्तं तस्य तद्दर्पणत्वात् । उच्चरमाणे, 'उदश्चरः सकर्मकात् १ । ३ । ५३ ' इत्यात्मनेपदम् ॥ ४८ ॥

जीवितेन कृतमप्सरसां त-
त्प्राणमुक्तिरिह युक्तिमती नः ।
इत्यनक्षरमवाचि घृताच्या
दीर्घनिःश्वसितनिर्गमितेन ॥ ४९ ॥

जीवितेनेति ॥ घृताच्या देवाङ्गनया दीर्घनिःश्वसितस्य निर्गमितेन निःसरणेन कृत्वा इति अनक्षरं वर्णैर्विनैवावाचि । अथ च अनक्षरमवाच्यमवाचि । इति किम्—अप्सरसां नोऽस्माकमिह समये जीवितेन कृतमलम्, इन्द्रस्य भैम्यनुरागाज्जीवितं निष्फलं यतः, तत्तस्मान्नोऽस्माकं प्राणमुक्तिःप्राणत्याग एव युक्तिमती युक्तेति। दुःखेन तादृग्दीर्घो निःश्वासो मुक्तो यथा प्राणा अपि बहिर्निर्गच्छन्तीति भावः । प्राणा निःश्वासरूपाः,ततस्तन्निर्गमात्प्राणनिर्गमो युक्तः । 'अनक्षरमवाच्यम्' इत्यमरः ॥ ४९ ॥

साधु नः पतनमेवमितःस्या-
दित्यभण्यत तिलोत्तमयाऽपि ।
चामरस्य पतनेन कराब्जा-
त्तद्विलोलनचलद्भुजनालात् ॥ ५० ॥

साध्विति ॥ तद्विलोलनेन चामरचालनेन चलन् चञ्चलो भुज एव नालो यस्य एवंविधात् कर एवाब्जं कमलं तस्माच्चामरस्य पतनेन कृत्वा तिलोत्तमया देवाङ्गनयाऽपि इत्यभण्यताऽवादि । इति किम्— इतोऽस्मात्स्वर्गान्नोऽस्माकं चामरवत्पतनमेव युक्तं स्यादिति । दुःखवशादतिवैकल्यात्तत्करकमलाच्चामरं पतितमिति भावः ॥ ५० ॥

---

१ वेत्रीत्युत्प्रेक्षा । २ अत्रानुप्रासः, स्वभावोक्तिश्च ।

१ अत्रानुप्रासः, उत्प्रेक्षा च । २ अत्रानुप्रासः । अनक्षरमवाचीति विरोधाभासः।निर्गमितेनेत्यपह्नुतिः । ३ अत्र कैतवापह्नुतिर्व्यङ्ग्या ।

मेनका मनसि तापमुदीर्तं
यत्पिधित्सुरकरोदवहित्थाम् ।
तत्स्फुटन्निजहृदः पुटपाके
पङ्कलिप्तिमसृजद्बहिरुत्थाम् ॥ ५१ ॥

मेनकेति ॥ मेनका देवाङ्गना मनसि उदीर्तं जातं तापं विरहज्वरं पिधित्सुः पिधातुमिच्छुः अवहित्थामाकारगुप्तिमकरोदीति यत् तद् आकारगुप्तिकरणमेव कर्मीभूतं निजहृदः स्वहृदयस्य पुटमध्ये यः पाकस्तद्विषये बहिरुत्थां बहिर्जातां पङ्कलिप्तिं पङ्कलेपमेवासृजदकरोत् । स्फुटमुत्प्रेक्षे । संतापाकारगुप्तिभ्यां तद्धृदयमातितरां पीडितम् । संतापस्याधः स्थितत्वादवहित्थाया उपरि स्थितत्वाद्धृदयस्य मध्ये स्थितत्वात्पुटपाकत्वम् । पुटपाके विनाशाभावाद्दुःखसहत्वं सूचितम् । साक्षात्पाके झटिति विनाश एव भवेत्तथा चिरं दुःखं नानुभूयेतेत्यर्थः । अन्योऽपि पुटपाके बहिः पङ्कलेपं करोति । स्फुटतो निजहृद इति वा । मेनकेति पृषोदरादित्वात्साधुर्भाषायामेपि ॥ ५१ ॥

उर्वशी गुणवशीकृतविश्वा
तत्क्षणस्तिमितभावनिभेन ।
शक्रसौहृदसमापनसीम-
स्तम्भकार्यमपुषद्वपुषैव ॥ ५२ ॥

उर्वशीति ॥ गुणैः सौन्दर्यादिभिर्वशीकृतं विश्वं यया सा उर्वशी देवाङ्गना तस्मिन्नेव क्षणे स्तिमितभावस्य निश्चलत्वस्य निभेन व्याजेन शक्रसौहृदस्य इन्द्रस्नेहस्य समापनं समाप्तिस्तस्य सीमायां मर्यादायां स्तम्भस्य कार्यं मर्यादाज्ञापनलक्षणं वपुषैवापुषज्ज्ञापितवती । इयत्कालं शक्रसौहृदं, नातः परमित्यवधिज्ञापनं निश्चलत्वात्स्तम्भतुल्येन शरीरेणैव कृतवतीत्यर्थः । अतिसचिन्तत्वात्स्तथा जातेति भावः । सीमायामपि समाप्तिज्ञापकस्तम्भो भवति । सौहृद इत्यत्र 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ७।३।१९' इत्युभयपदवृद्धिर्न 'संज्ञापूर्वको विधिरनित्यः' इति परिभाषया, अन्ये तु अर्थवत्परिभाषया 'सुहृद्दुर्हृदौ मित्रामित्रयोः । ५।४।१५' इति निपातितस्य सुहृच्छब्दस्य योऽवयवो हृच्छन्दस्तदन्तस्योत्तरपदस्य वृद्धिर्न भवतीति व्याचक्षते । समुदायस्त्वत्र मित्रवचनोऽवयवस्तु निरर्थक इति रक्षितोक्तेः । अपुषत् 'पुषादिद्युताद्यॢदितः परस्मैपदेषु ३।१।५५इत्यङ् ॥५२॥

अनुरागवशाल्लोकापवादोऽपि तेनावज्ञात इति श्लोकद्वयेनाह—

काऽपि कामपि बभाण बुभुत्सुं
शृण्वति त्रिदशभर्तरि किंचित् ।
एष कश्यपसुतामभिगन्ता
पश्य कश्यपसुतः शतयज्ञः ॥ ५३ ॥

कापीति ॥ कापि देवाङ्गना सर्वा अपि देवाङ्गनाः किमित्येवं सचिन्ताः, किं जातमिति बुभुत्सुं ज्ञातुमिच्छुं कामपि स्त्रियं त्रिदशभर्तरीन्द्रे किंचिच्छृण्वति सति सोपहासं बभाणोवाच । एष कश्यपसुतः शतयज्ञः इन्द्रः कश्यपसुतां पृथ्वीमभिगन्ता लक्षीकृत्य गमिष्यति पश्य इति वाक्यार्थः कर्म । पृथ्वीं गच्छतीन्द्रस्ततो हेतोरेताः सचिन्ताः । कश्यपमुनेः पुत्रोऽपि शतं मन्यवः, यज्ञा यस्य इति शतयज्ञोऽपि कश्यं मद्यं पिबतीति मद्यपकन्यां गच्छतीत्यप्याश्चर्यम् । पामरेणापि न क्रियते,विशिष्टकुलोत्पन्नेनानेकयज्ञकारिणाऽनेन तु मद्यपकन्यागमनं क्रियत इत्याश्चर्यम् । अथ च कश्यपपुत्रः कश्यपपुत्रीं भगिनीं गच्छतीत्याश्चर्यं पश्य । तत्राप्यनेकयज्ञकारी । अथ च मद्यपपुत्रो मद्यपस्यैव पुत्रीं भगिनीं गच्छतीति नात्र चित्रम् । यतः शतमन्युर्लक्षणयानेकापराधः । मद्यपस्य निषिद्धकारित्वं नाश्चर्यकारि । 'मन्युः क्रोधे क्रतौ दैन्ये' इति विश्वः । अभिगन्ता इति लुट् ॥ ५३ ॥

आलिमात्मसुभगत्वसगर्वा
काऽपि शृण्वति मघोनि बभाषे ।
वीक्षणेऽपि सघृणाऽसि नृणां किं
यासि न त्वमपि सार्थगुणेन ॥ ५४ ॥

आलिमिति ॥ आत्मनः सुभगत्वे सौन्दर्यविषये सगर्वा कापि देवाङ्गना मघोनि शृण्वति सति आलिं सखीं बभाषे—नृणां वीक्षणेऽपि किमिति सघृणाऽसि जुगुप्सासहिताऽसि त्वमपि सार्थगुणेन सङ्घानुरोधेन न यासि । जुगुप्सां परित्यज्य मनुष्यावलोकनार्थं गच्छ ।

---

१ अत्रानुप्रासः शब्दालङ्कारः । उत्प्रेक्षाऽर्थालङ्कारः ।

१ अत्र वशीति यमकम् । स्तम्भकार्यं प्रति वपुषः करणत्वासम्भावेऽपि तथोक्तावतिशयोक्तिः । निभेनेति वास्तविकस्यान्यथास्वरूपस्यापह्नुवनमित्यपह्नुतिरित्येके।२अनुप्रासः शब्दालङ्कारः । विरोधाभासो व्यङ्ग्यः॥

'गतानुगतिको लोकः' इति न्यायात् । येषामवलोकनेऽपि त्वं जुगुप्सां करोपि तद्वरणार्थं विवुधेन्द्रः सन् गच्छसीति युक्तामित्युपहासः । इन्द्रादपि त्वमेव सचेता इत्यर्थः ॥५४॥

अन्वयुर्द्युतिपयःपितृनाथा-
स्तं मुदाऽथ हरितां कमितारः ।
वर्त्म कर्षतु पुरः परमेक-
स्तद्गतानुगतिको न महार्घः ॥ ५५ ॥

अन्वयुरिति ॥ अथ द्युतिपयःपितृनाथा वह्निवरुणयमा हरितां दिशां कमितारः कामुका दिक्पालास्तमिन्द्रं मुदा भैमीदर्शनादिनिमित्तहर्षेणान्वयुरनुजग्मुः । तस्मिन्निर्गते किमिति निर्गता इत्यत आह—परं केवलमेकः पुर प्रथमतो वर्त्म कर्षतु करोतु प्रवर्तयतु । पुरोमार्गकर्तैव दुर्लभ इत्यर्थः । तस्य पुरो गच्छतो गतं गमनमनु लक्षीकृत्य गतिर्यस्य एवंविधः पुरुषो महार्घो न दुर्लभो न । किं त्वेकस्मिन्पुरो निर्गतेऽन्योऽपि तदनुयायी भवाति । इन्द्रमनु सर्वेऽपि निर्गता इत्यर्थः । अनुगतिकः 'शेपाद्विभाषा' इति कप् । कर्पतु, प्रार्थने लोट् । कमितारः, तृच्[१] ॥ ५५ ॥

प्रेषिताः पृथगथो दमयन्त्यै
चित्तचौर्यचतुरा निजदूत्यः ।
तद्गुरुं प्रति च तैरुपहाराः
सङ्ख्यसौख्यकपटेन निगूढाः ॥ ५६ ॥

प्रेपिता इति ॥ अथो अनन्तरं तैरिन्द्रादिभिश्चित्तचौर्ये भैम्यन्तःकरणवशीकरणे चतुरा निगूढाः स्वापेक्षया दूत्यपेक्षया च परस्परस्माद्गोपिताः पृथक् प्रत्येकं निजदूत्यः स्वीयस्वीयदूत्यो दमयन्त्यै भैम्यर्थं प्रेपिताः । निगूढा विद्यया कुण्डिनवासिनामदृश्या इति वा । तद्गुरुं प्रति तत्पितरं प्रत्युद्दिश्य संख्यसौख्यकपटेन सङ्ग्रामजनितसंतोपव्याजेन पृथगुपहारा दिव्यरत्नाद्युपायनानि च प्रेषिताः । त्वया वैरिणो निहतास्तेन वयं प्रसन्नास्तुभ्यं दिव्यरत्नादि प्रेपितमङ्गीकरणीयमिति । प्रीतेन तेन स्वस्मै भैमीं देयेति तात्पर्यम् । संख्यसौख्येति विशेषणं भैमीप्राप्तिं प्रत्युपाधिराहित्यद्योतनार्थम् । निगूढाः, उपहारविशेपणं च[३] ॥ ५६ ॥

चित्रमत्र विबुधैरपि यत्तैः
स्वर्विहाय बत भूरनुसस्रे ।
द्यौर्न काचिदथवास्ति निरूढा
सैव सा चलति यत्र हि चित्तम् ॥५७॥

चित्रमिति ॥ तैः विबुधैर्देवैः, अथ च पण्डितैरपि स्वः स्वर्गं विहाय यत् भूरनुसस्रेऽनुसृता बत खेदे । अत्र चित्रम् । स्वर्गप्राप्त्यर्थमज्ञैरपि यत्नः क्रियते, एतैर्विबुधैरपि स्वर्ग एव त्यक्त इत्याश्चर्यम् । अर्थान्तरन्यासमाह—अथवा युक्तमेतत्—निरूढा प्रसिद्धा काचित् द्यौः स्वर्गो नास्ति, किंतु सैव सा सैव द्यौः यत्र चित्तमन्तःकरणं चलति चञ्चलम् । यत्रानुरागः स एव स्वर्गः, ततश्च भूमावनुरागात्तेषां भूमिरेव स्वर्ग इति तदनुसरणं युक्तमित्यर्थः । 'वलति' इति पाठे लगति रज्यतीति यावत् ॥ ५७ ॥

शीघ्रलङ्घितपथैरथ वाहै-
र्लम्भिता भुवममी सुरसाराः ।
वक्रितोन्नमितकन्धरबन्धाः
शुश्रुवुर्ध्वनितमध्वनि दूरम् ॥ ५८ ॥

शीघ्रेति ॥ अथ अमी सुरसारा देवश्रेष्ठा अध्वनि मार्गे दूरं दूरदेशोद्भवमतिशयितं वा ध्वनितं शब्दितं शुश्रुवुः । किंभूताः—शीघ्रं लङ्घितः पन्था यैर्वाहैरश्वैः कर्तृभिर्भुवं लम्भिताः प्रापिताः तथा—पूर्वं वक्रीकृता पश्चादुन्नमिता ऊर्ध्वीकृता कंधरा ग्रीवा यस्मिन्नेवंविधो बन्धः शरीरावस्थाविशेषो येषाम् । अध्वनि ध्वनिरहितं यथा तथा कथान्तरं परित्यज्य शुश्रुवुरिति वा । वाहैर्विमानैर्वा ॥ ५८ ॥

किं घनस्य जलधेरथवैवं
नैव संशयितुमप्यलभन्त ।
स्यन्दनं परमदूरमपश्य-
न्निःस्वनश्रुतिसहोपनतं ते ॥ ५९ ॥

किमिति ॥ ते देवा इदं घनस्य मेघस्य ध्वनितं, समुद्रस्य किमिति संशयितुं सन्देहमपि कर्तुमर्थात्समर्थं नैवालभन्त किंपुनर्निश्चेतुम् । किंतु निःस्वनस्य श्रुति-

---

१ अत्रानुप्रासः । सगर्वेति परिकरः । २ अत्रानुप्रासः शब्दालङ्कारः । तद्गतान्वित्यर्थान्तरन्यासः । ३ कपटेनेत्यपह्नुतिः ।

१ अत्रानुप्रासः शब्दालङ्कारः। विबुधैरपीति विरोधः । द्यौर्नेत्यादिना सामान्येन समर्थनादर्थान्तरन्यासः । २ अत्र स्वभावोक्तिः परिकरश्च

राकर्णनं तया सहोपनतं तस्याः समये एव उपनतं प्राप्तमित्यर्थः । अदूरं निकटवर्तिनं स्यन्दनं रथं परं केवलमपश्यन्ददृशुः । शब्दाकर्णनसमये एव रथोऽपि वेगादागत इत्यर्थः । नलस्याश्वहृदयवेदित्वं सूचितम् । प्रथमे क्षणे घनध्वनितस्य स्मरणम्, द्वितीये जलधेः, ततः क्रमेण द्वयोः समानधर्मस्मरणलक्षणः पञ्चमक्षणे संशयः । प्रथमक्षण एव रथे समागते कथं संशयः, कथंतरां च विचारः कथंतमां च निर्णय इत्यर्थः । रथध्वनेर्गाम्भीर्यं सूचितम् ॥ ५९ ॥

सूतविश्रमदकौतुकिभावं
भाववोधचतुरं तुरगाणाम्।
तत्र नेत्रजनुपः फलमेते
नैषधं बुबुधिरे विबुधेन्द्राः ॥ ६० ॥

सूतेति ॥ एते विबुधेन्द्रा नेत्रजनुषो नयनजन्मनः फलं नैषधं नलं तत्र रथे बुबुधिरे ज्ञातवन्तः । किंभूतम्—सूतस्य सारथेर्विश्रमं ददातीति विश्रमदः कौतुकिभावः कुतूहलित्वं यस्य । तथा तुरगाणां भाववोधे हृदयाशयज्ञाने चतुरम् । अत एव एवंविधस्य सुन्दरान्तरस्याभावादेतस्यावलोकने नेत्रजन्मनः साफल्यमित्यर्थः । सूतश्रमापनोदेनास्माकमप्यभीष्टं कृत्वा श्रममपनेष्यतीति सूचितम् । यः पशूनां हृदयं जानाति सोऽस्माकं हृदयस्थमभिप्रायं कथं न ज्ञास्यतीति भावबोधपदेन सूचितम् । विशिष्टं श्रमं यति नुदतीति । एतैश्चिह्नैर्नलोऽयमिति तैर्ज्ञातमिति भावः ॥ ६० ॥

वीक्ष्य तस्य वरुणस्तरुणत्वं
यद्बभार निविडं जडभूयम्।
नौचिती जलपतेः किमु साऽस्य
प्राज्यविस्मयरसस्तिमितस्य ॥ ६१ ॥

वीक्ष्येति ॥ तस्मिन्समये वरुणस्तस्य नलस्य तरुणत्वं वीक्ष्य यत् निविडं जडभूयं जडत्वं बभार प्राप्तवान्। एनं दृष्ट्वा भैमी मां कथं वरिष्यतीति चिन्तयातिखिन्नोऽभूदित्यर्थः । अथ च जडत्वं, तयैव चिन्तया स्तब्धत्वमपि प्राप । स नलसौन्दर्या( तारुण्या )वलोकनेन प्राज्यो बहुतरो विस्मयरस आश्चर्यरसः,तेन स्तिमितस्य निश्चलस्य अस्य जलपतेर्वरुणस्य किमु न औचिती, अपि त्वौचित्यमेव । जलपतेरुदकरूपत्वम्, जडपतेर्मूर्खश्रेष्ठस्य च मन्दभूयस्त्वं च युक्तमेव । अन्यस्यापि विशिष्टगर्वरसयुक्तस्य जडपतेर्जडत्वं युक्तमित्युक्तिः । तादृशं तमालोक्यातितरां सचिन्तोऽभूदित्यर्थः ॥ ६१ ॥

रूपमस्य विनिरूप्य तथाऽति-
म्लानिमाप रविवंशवतंसः।
कीर्त्यते यदधुनाऽपि स देवः
काल एव सकलेन जनेन ॥ ६२ ॥

रूपमिति ॥ रविवंशस्य वतंसो भूषणं यमोऽस्य नलस्य रूपं सौन्दर्यं विनिरूप्य विशेषेण सादरमवलोक्य तथा तेन प्रकारेणातिम्लानिमधिकं कालिमानमाप । यद् येन कारणेन सकलेनापि जनेनाधुनापि स देवः कालः कृष्णवर्ण एव, अथ च कालसंज्ञकः कीर्त्यते कथ्यते । नलरूपावलोकनजनितकालिम्नोऽद्यापि वर्तमानत्वाद्यमस्य कालत्वमन्वर्थं, न तु नाममत्रेणेत्यर्थः । यमोऽपि सचिन्तोऽभूदिति भावः । रविवंशवतंसस्य श्यामत्वमाश्चर्यकारि । तथाऽनिर्वचनीयस्वरूपस्य सौन्दर्यं विलोक्य यस्माद्यमोऽपि कालिमानं प्राप तस्माज्जनैरेवं कीर्त्यत इति ॥ ६२ ॥

यं बभार दहनः खलु तापं
रूपधेयभरमस्य विमृश्य।
तत्र भूदनलता जनिकर्त्री
मा तदप्यनलतैव तु हेतुः ॥ ६३ ॥

यमिति ॥ दहनोऽग्निरस्य नलस्य रूपधेयस्य सौन्दर्यस्य भरं बाहुल्यं विमृश्य विचार्य दुःखाद्यं तापं बभार तत्र संतापेऽनलताऽग्निता खलु निश्चयेन जनिकर्त्री जन्मकारिणी मा भूत् । स्वेन स्वस्य तापकारणायोगादेकस्यैव कर्तृत्वकर्मत्वविरोधात् । तदपि तथापि तु पुनर्निश्चितमनलतैव नलान्यत्वमेव हेतुः कारणम् । अहं चेन्नलोऽभविष्यं तर्हि भैमी ममैवाभविष्यत् । तत्तु नाभूदिति दुःखवशात्संतप्तोऽभूदिति भावः । रूपधेय इत्यत्र 'भागरूपनामभ्यो धेयः' इति स्वार्थे धेयः । जनिकर्त्रीत्यवतरत्वबोधिकेतिवत्साधुः ॥ ६३ ॥

---

१ अत्रातिशयोक्तिः । २ अत्र यमकमनुप्रासश्च शब्दालङ्कारौ ।

१ अत्रानुप्रासः श्लेषश्च । २ कालयोर्भेदेऽपि अभेदाध्यवसायात्करातिशयोक्तिः । ३ अत्र विरोधाभासः ।

कामनीयकमधःकृतकामं
 काममक्षिभिरवेक्ष्य तदीयम् ।
कौशिकः स्वमखिलं परिपश्य-
 न्मन्यते स्म खलु कौशिकमेव ॥ ६४ ॥

कामेति ॥ कौशिक इन्द्रोऽखिलं स्वमात्मानं परिपश्यन्परितो विलोकयन् खलु निश्चितं कौशिकमेवोलूकमेव मन्यते स्म । किं कृत्वा—अधःकृतो न्यक्कृतः कामो येन तदीयं नलसंबन्धि कामनीयकं सौन्दर्यमाक्षिभिः सहस्रेणापि नेत्रैः काममतितरामवेक्ष्य निपीय, 'नलाग्रेऽहमुलूकतुल्य एव' इतीन्द्रस्य बुद्धिरुदभूत्, प्रत्यवयवं स्वस्य नेत्रसद्भावात् । विसंस्थुलत्वादित्यर्थः । अक्षिभिरिति बहुवचनं तद्रूपावलोकने सौन्दर्यसूचनार्थम् । कौशिकस्य कौशिकत्वं युक्तमेव । 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमरः । कामनीयकम्, पूर्ववद्भावे 'योपधाद्गुरूपोत्तमाद्वुञ् ५।१।१३२' इति वुञ् ॥ ६४ ॥

रामणीयकगुणाद्वयवादं
 मूर्तमुत्थितममुं परिभाव्य ।
विस्मयाय हृदयानि वितेरु-
 स्तेन तेषु न सुराः प्रबभूवुः ॥ ६५ ॥

रामेति ॥ सुरा इन्द्रादयोऽमुं नलं मूर्तमाकारवन्तमुत्थितमुदितं रामणीयकं सौन्दर्यं तल्लक्षणो गुणः तस्याद्वयवादोऽद्वितीयवादस्तं परिभाव्य विचार्य हृदयान्यन्तःकरणानि विस्मयायाश्चर्याय यतो वितेरुर्दत्तवन्तः । आकारवत्सौन्दर्यमिदमेकमेव दृष्टं, नान्यत्रेत्याश्चर्ययुक्ता यतो जातास्तेन कारणेन तेषु हृदयेषु विषये न प्रबभूवुः समर्था नाभूवन् । आश्चर्यवशात्किं करणीयमधुनेति किमपि न स्फुरितमिति भावः । दानस्य स्वस्वत्वनिवृत्तिपरस्वत्वापादनत्वाद्विस्मयाय दत्तेषु हृदयेषु स्वामित्वं नाभूदिति युक्तमेव । रामणीयकं गुणो यस्य तस्याद्वयवाद एतादृशोऽयमेव नान्य इति वा । रामणीयकं कामनीयकवत् ॥ ६५ ॥

प्रैयरूपकविशेषनिवेशैः
 संवदद्भिरमराः श्रुतपूर्वैः ।

१ अत्र यमकम् । परिकरः स्वमखिलं च परिपश्यतः कौशिकत्वेनैव मनन विरुद्धम्, सति भेदप्रत्यये अभेदप्रत्ययासम्भवात्, अतो विरोधाभासोऽपि । २ वादस्य मूर्तत्वेनोक्तिरतिशयोक्तिं निरूपयति ।



एष एव स नलः किमितीदं
 मन्दमन्दमितरेतरमूचुः ॥ ६६ ॥

प्रैयेति ॥ अमरा इति एवम् इदमितरेतरं परस्परं मन्दमन्दमल्पस्वरं यथा तथा ऊचुः । एवमिदं कथम्—श्रुतपूर्वैः पूर्वं लोकमुखाच्छ्रुतैः संवदद्भिर्यादृशा गुणाः पूर्वं श्रुतास्तादृशा एवाधुना दृष्टा इति संवादं भजमानैः प्रैयरूपकस्य प्रियरूपकत्वस्य यो विशेषोऽतिशयस्तस्य निवेशैरवस्थानैः सौन्दर्यविशेषविन्यासैः कृत्वा स नल एष एव किम् । श्रुतानुरूपगुणावलोकनेन नलं व्यतर्कयन्नित्यर्थः । प्रैयरूपकम्, मनोज्ञादित्वाद्भावे वुञ् । मन्दमन्दम्, प्रकारे द्विरुक्तिः ॥ ६६ ॥

तेषु तद्विधवधूवरणार्हं
 भूषणं स समयः स रथाध्वा ।
तस्य कुण्डिनपुरं प्रतिसर्प-
 न्भूपतेर्व्यवसितानि शशंसुः ॥ ६७ ॥

तेष्विति ॥ एते पदार्था भूपतेर्नलस्य व्यवसितानि उद्योगास्तेष्विन्द्रादिषु विषये शशंसुः । अथ भैमीवरणार्थं गच्छतीति तेभ्यः कथयामासुः । एते के—तद्विधाऽतिसुन्दरी वधू भैमी तस्या वरणार्हं योग्यं भूषणमेकः पदार्थः, स समयः स्वयंवरकालश्चैकः, कुण्डिनपुरं प्रतिसर्पन्प्रतिगच्छन् स रथाध्वा रथमार्ग एकः । नलस्य भूषणादि विचार्य अयं भैमीवरणार्थं तत्र गच्छतीति तैर्निर्णीतमित्यर्थः ॥ ६७ ॥

धर्मराजसलिलेशहुताशैः
 प्राणतां श्रितममुं जगतस्तैः ।
प्राप्य हृष्टचलविस्तृततापै-
 श्चेतसा निभृतमेतदचिन्ति ॥ ६८ ॥

धर्मराजेति ॥ तैर्धर्मराजसलिलेशहुताशैर्यमवरुणानलैश्चेतसा कृत्वा निभृतं गुप्तमेतद्वक्ष्यमाणमचिन्ति विचारितम् । किंभूतैः—जगतः सम्यक्पालनाल्लोकस्य प्राणतां श्रितं जीवनप्रियम् । अथ च प्राणाख्यवायुभूतं वा अमुं प्राप्य यथासङ्ख्यं हृष्टचलविस्तृततापैर्जगत्प्रियत्वाद्धर्मराजत्वाद्यमो हृष्टः, वरुणोऽपि सलिलेशत्वाद्धर्षवशादेव चञ्चलः, वह्निरपि हुताशत्वाद्धर्षवशादेव विस्तृततापः परिपुष्टो जात इत्यर्थः । असूनां प्राप्तौ यमो हृष्यति लोकप्रा-

१ अत्रानुप्रासः । स्वभावोक्तिश्च । २ अत्र समुच्चयः ।

णाहारित्वात् । वायूनां प्राप्तौ जलात्मकत्वान्मेघरूपत्वाच्च वरुणश्चञ्चलो भवति । तथा वायूनां प्राप्तौ वह्निरुदार्चिर्भवति । वचनभङ्गया यमः क्रुद्धोऽभूत्, वरुणोऽपि चिन्तावशाच्चञ्चलोऽभूत्, वह्निरपि चिन्तावशादतिसंतप्तोऽभूदिति भावः ॥ ६८ ॥

नैव नः प्रियतमोभयथाऽसौ
यद्यमुं न वृणुते वृणुते वा ।
एकतो हि धिगमूमगुणज्ञा-
मन्यतः कथमदःप्रतिलम्भः ॥ ६९ ॥

यमश्चिन्तामाह—

नेति ॥ असौ भैमी यदि अमुं नलं न वृणुते, वाऽथवा वृणुते उभयथाऽपि वरणेऽवरणे च नोऽस्माकं प्रियतमा प्राणेश्वरी पत्नी हितकारिणी च नैव भवेत् । कुतः—हि यस्मादेकतोऽवरणपक्षे अमूं भैमीमगुणज्ञां धिक् मत्तो नलगुणाधिक्यं न जानाति सा कथं वरणीया । अन्यतो वरणपक्षे नलगुणाधिक्यज्ञानेन वृते नले अदःप्रतिलम्भः अमुष्या लाभो मम कथम् । उभयथापि न प्रियतमेति यमेन धर्मप्रधाना चिन्ता कृता । एकतः, अन्यतः, सप्तम्यर्थे तसिः ॥ ६९ ॥

मां वरिष्यति तदा यदि मत्तो
वेद नेयमियदस्य महत्त्वम् ।
ईदृशी च कथमाकलयित्री
मद्विशेषमपरान्नृपपुत्री ॥ ७० ॥

वरुणश्चिन्तामाह—

मामिति ॥ इयं भैमी मां तदा वरिष्यति यदि मत्तः सकाशादियदतिबहु अस्य महत्त्वं माहात्म्यं न वेद न जानाति न त्वन्यथा । ईदृशी च मत्तो नलस्य विशेषमजानानैव चेद्राजपुत्री, तर्हि अपरादन्यस्मात्सजातीयाद्विजातीयाद्वा सकाशात् मद्विशेषं ममाधिक्यं कथमाकलयित्री ज्ञास्यति, अपि तु तदपि न ज्ञास्यतीति । उभयथाऽस्या अलाभ इति वरुणेन चञ्चलं चिन्तितम् । मत्तो नले विशेषापरिज्ञानवदन्यस्मान्ममापि विशेषापरिज्ञानान्न मामपि वरिष्यतीति भाव इति वा ॥ ७० ॥

नैषधे बत वृते दमयन्त्या
व्रीडितो नहि बहिर्भवितास्मि ।
स्वां गृहेऽपि वनितां कथमास्यं
ह्रीनिमीलि खलु दर्शयिताहे ॥ ७१ ॥

वह्निश्चिन्तामाह—

नैषध इति ॥ अहं दमयन्त्या नैषधे वृते सति व्रीडितः सन् न बहिर्भवितास्मि निर्गन्तास्मि । बत खेदे । गृहेऽपि स्वां वनितामास्यं मुखं कथं दर्शयिताहे दर्शयिष्यामि । हि यस्माद् ह्रीनिमीलि लज्जासंकुचितम् । गृहे स्वस्त्रीभयम्, बहिर्लोकदर्शनभयम्, उभयथा कष्टमिति वह्निना संतापेन चिन्तितम् । दर्शयिताहे 'णिचश्च १ । ३ । ७४' इत्यात्मनेपदे 'दृशेश्च' इति 'अभिवादिदृशोरात्मनेपदे वा' इति (वा० ) कर्मत्वम् ॥ ७१ ॥

इत्यवेत्य मनसाऽऽत्मविधेयं
किंचन त्रिविबुधी बुबुधे न ।
नाकनायकमपास्य तमेकं
सा स्म पश्यति परस्परमास्यम् ॥ ७२ ॥

इतीति ॥ सा त्रिविबुधी देवत्रयी मनसा इति पूर्वोक्तमवेत्याकलय्य किंचन आत्मविधेयं किमपि स्वीयं कार्यं न बुबुधे ज्ञातवती । किंतु तमेकं नाकनायकमिन्द्रमपास्य विहाय परस्परमास्यं वदनं पश्यति स्म । किंकर्तव्यतामूढाऽभूदित्यर्थः । 'आत्मविशेषम्' इति पाठे नलापेक्षया आत्मनो न्यूनत्वरूपं विशेषं मनसा विचिन्त्य किंचन न बुबुध इत्यर्थः ॥ ७२ ॥

किं विधेयमधुनेति विमुग्धं
स्वानुगाननमवेक्ष्य ऋभुक्षाः ।
शंसति स्म कपटे पटुरुच्चै-
र्वञ्चनं समभिलष्य नलस्य ॥ ७३ ॥

किमिति ॥ ऋभुक्षा इन्द्रोऽधुना किं विधेयमित्यस्फुरणाद्विमुग्धं विशेषेण भ्रान्तं स्वानुगानां यमादीनामाननमवेक्ष्य विलोक्य उच्चैरतितरां कैतवे पटुः कुशलः, अत एव नलस्य वञ्चनं प्रतारणं समभिलष्य शंसति स्म वक्ष्यमाणं वदति स्म ॥ ७३ ॥

सर्वतः कुशलवानसि कच्चि-
त्त्वं स नैषध इति प्रतिभा नः ।
स्वासनार्धसुहृदस्त्वयि रेखा
वीरसेननृपतेरिव विद्मः ॥ ७४ ॥

१ दृष्टत्यादेर्यथासङ्ख्यं निर्देशात् यथासङ्ख्यम् । २ अत्र काव्यलिङ्गम् । ३ अत्र वितर्क इति मल्लिः ।

१ अत्र परिकरः । २ अत्र विरोधाभासोऽर्थालङ्कारः । अनुप्रासश्च शब्दालङ्कारः । ३ अनुप्रासोऽत्र ।

सर्वत इति ॥ त्वं सर्वतः सप्ताङ्गराज्यादौ कुशलधानासि कच्चित्कथय । कच्चित्कामप्रवेदनं स्वाभिप्रायकथनम् । अपरिचितस्य कुशलप्रश्नो न युक्त इत्यत आह—स प्रसिद्धो नैषधस्त्वमिति नोऽस्माकं प्रतिभा आनुमानिकी बुद्धिः । कुत इत्यत आह—वयं स्वस्य मम आसनार्धे विषये सुहृदोऽतिमित्रस्य वीरसेननाम्नो नृपतेरिव त्वयि विद्यमानां रेखां शोभां विद्मो जानीमः । वीरसेनतुल्यशोभत्वात्तत्पुत्रस्त्वम् । प्रायेण पितृसदृशः पुत्रो भवति । 'शोभाम्' इति वा पाठः । 'उपमानोपमानं या भूषणस्यापि भूषणम् । आङ्गश्रीः कथ्यते रेखा चक्षुःपीयूषवर्षिणी ॥' इत्यालङ्कारिकाः ॥ ७४ ॥

क्व प्रयास्यसि नलेत्यलमुक्त्वा
यात्रयात्र शुभयाजनि यन्नः ।
तत्तयैव फलसत्वरया त्वं
नाध्वनोऽर्धमिदमागमितः किम् ॥७५॥

क्वेति ॥ हे नल, त्वं क्व प्रयास्यसि कं देशमुद्दिश्य गमिष्यसि इत्युक्त्वा अलं प्रश्नो नैव युक्तः । यद्यस्मात् नोऽस्माकमत्र पृथिव्यां मार्गविषये वा कार्यविशेषविषये वा पृथ्वीमार्गं वा उद्दिश्य या यात्रा तया शुभया अजनि जातम् । तत् तस्मात् फले सत्वरयोन्मुख्या तयैव यात्रया त्वमिदमध्वनोऽर्धं न आगमितः प्रापितः किम् ? अपि तु तयैव प्रापितोऽस्मत्कार्यार्थं न तु स्वकार्यार्थंवशादत्र त्वमागतोऽसीत्यर्थः।अथ च गन्तारं प्रति क्व प्रयास्यसीति वक्तुं लोकेऽनुचितम् ॥ ७५ ॥

एष नैषध स दण्डभृदेष
ज्वालजालजटिलः स हुताशः ।
यादसां स पतिरेष च शेषं
शासितारमधिगच्छ सुराणाम् ॥७६॥

एष इति ॥ हे नैषध, एष पुरो दृश्यमानः स प्रसिद्धो दण्डभृद्यमः । तथा—एष ज्वालाजालेन जटिलः परीतः स हुताशोऽग्निः । एष स यादसां पतिर्वरुणः । शेषमवशिष्टं च मां सुराणां शासितारमिन्द्रमधिगच्छ त्वं जानीहि । दण्डभृदादिविशेषणमादराय भयाय च । 'वह्निद्वयोर्ज्वालकीलौ' इति पुंलिङ्गो ज्वालशब्दः । पूर्ववाक्यत्रये अधिगच्छेति सम्बन्धे वाक्यार्थः कर्म । जटिलः मत्वर्थे पिच्छादित्वादिलच् ॥ ७६ ॥

१ नृपतेरिवेत्युपमा । २ अत्रानुप्रासः । ३ अत्र परिकरोऽलङ्कारः ।

अर्थिनो वयममी समुपेम-
स्त्वां नलेति फलितार्थमवेहि ।
अध्वनः क्षणमपास्य च खेदं
कुर्महे भवति कार्यनिवेदम् ॥ ७७ ॥

अत्रागमने कारणमाह—

अर्थिन इति ॥ हे नल, इति त्वं फलितार्थं तात्पर्यमवेहि जानीहि । इति किम्—अमी वयमर्थिनः सन्तस्त्वां समुपेमो याचकत्वेन प्राप्ताः स्मः किल इति । तर्हि याच्यतामित्यत आह—अध्वनो जातं खेदं क्षणमपास्य भवति भवत्समीपे कार्यनिवेदं प्रयोजनज्ञापनं च इदानीमेव कुर्महे ॥ ७७ ॥

ईदृशीं गिरमुदीर्य विडौजा
जोषमास न विशिष्य बभाषे ।
नात्र चित्रमभिधाकुशलत्वे
शैशवावधिगुरुर्गुरुरस्य॥ ७८ ॥

ईदृशीमिति ॥ विडौजा इन्द्र ईदृशीं पूर्वोक्तां गिरमुदीर्योक्त्वा जोषं तूष्णीमास बभूव, परं विशिष्य न बभाषे । भैमीवरणार्थमागतानामस्माकं दूत्यं कुर्विति विविच्य प्रकटं नावोचत् । निषेधभियेति भावः । एतदेव नलवञ्चनं ज्ञेयम् । अत्र ईदृशेऽभिधाकुशलत्वे वचनकौशलविषये चित्रमाश्चर्यं न । कुतः—यतो गुरुर्बृहस्पतिरस्येन्द्रस्य शैशवमवधिर्यथा भवति तथा शैशवमारभ्य गुरुः शिक्षकः, स एवं वदतीति किमाश्चर्यमित्यर्थः । 'आस' इति 'अस गतिदीप्त्यादानेषु' तेन न काऽप्यनुपपत्तिः । ईदृशीम्, 'त्यदादिषु दृशोऽनालोचने कञ् च ३।२।६०' इति कञि 'टिड्ढा ४।१।१५' इति ङीप् ॥ ७८ ॥

कपटाभिप्रायमजानतो नलस्य धीरोदात्ततां पञ्चदशभिः श्लोकैराह—

अर्थिनामहृषिताखिललोमा
स्वं नृपः स्फुटकदम्बकदम्बम् ।
अर्चनार्थमिव तच्चरणानां
स प्रणामकरणादुपनिन्ये ॥ ७९ ॥

अर्थीति ॥ दानशूरत्वात् अर्थी इति नाम्ना श्रुतेन हृषितानि विकसितान्यखिलानि लोमानि यस्य स नृपो

१ अनुप्रासोऽत्र । २ अत्रानुप्रासः, 'गुरु' इति यमकम्,नात्र चित्रमित्यनेन न बभाष इत्यस्य समर्थनादर्थान्तरन्यास इत्येके,पूर्वोत्तरवाक्ययोर्हेतुहेतुमद्भावात् काव्यलिङ्गमित्यन्ये ।

नलः प्रणामकरणाद्भक्तिश्रद्धादिप्रकृष्टनमस्कारकरणाद्धेतोः, तच्चरणानामर्चनार्थमर्चनायै स्वमात्मानमुपानिन्ये तच्चरणसमीप उपहृतवान्। कमिव—स्फुटकदम्बकदम्बमिव रोमाञ्चितत्वाद्विकसितनीपकुसुमसमूहमिवेति स्वपदविशेषणम्। तत्तुल्यामित्यर्थः। कदम्बपुष्पैरपि भक्तेन देवार्चना क्रियते। स्वमङ्गमेव पूजोचितकदम्बपुष्पसदृशं कृत्वार्पयामासेत्यर्थः। हृषित इति 'हृषेर्लोमसु ७।२।२९' इतीट्॥ ७९॥

दुर्लभं दिगधिपैः किममीभि-
स्तादृशं कथमहो मदधीनम्।
ईदृशं मनसिकृत्य विरोधं
नैषधेन समशायि चिराय॥ ८०॥

दुर्लभमिति॥ नैषधेन नलेन ईदृशं याच्ञादानयोः परस्परविरोधं मनसिकृत्य विचार्य चिराय चिरकालं वक्ष्यमाणप्रकारेण समशायि संशयितम्। ईदृशं कथम्। अमीभिर्दिगधिपैर्दिक्पालैः किं वस्तु दुर्लभम्? अपितु न किमपि तादृशम्। यद्दिक्पालैर्दुर्लभं वस्तु तन्मदधीनं कथम्, अहो आश्चर्यमिति संशयः। दिगधिपैः। खलर्थयोगे षष्ठीनिषेधात्तृतीया। मनसिकृत्य 'अनत्याधान उरसिमनसी १।४।७५' इति वा गतिसञ्ज्ञायां 'ते प्राग्धातोः १।४।८०' इति प्राक्प्रयोगे अनञि समासे 'कुगतिप्रादयः २।२।१८' इति ल्यप्। अत्याधान उपश्लेषे तु गतिसञ्ज्ञाऽभावात् उरसि कृत्वा पाणिं शेते इति ल्यबभावः॥ ८०॥

जीवितावधि वनीयकमात्रै-
र्याच्यमानमखिलैः सुलभं यत्।
अर्थिने परिवृढाय सुराणां
किं वितीर्य परितुष्यतु चेतः॥ ८१॥

तमेव संशयमाह—

जीवितेति॥ अखिलैः समस्तैरपि वनीयकमात्रैरिन्द्रसकाशान्न्यूनैः पात्रलक्षणरहितैः केवलैर्याचकैर्जीवितमवधिर्यस्य एवंविधं प्राणपर्यन्तं याच्यमानं याचितं यद्वस्तु सुलभं सुप्रापं, यद्यस्माद्वा सुलभं तत्। अर्थान्मत्सकाशादर्थिने याचकाय सुराणां सुष्ठु रान्ति—ददति, इति तथाभूतानां परिवृढाय प्रभवे इन्द्रायान्ययाचकेभ्योऽधिकाय किं वितीर्य दत्त्वा ममास्य च चेतोऽन्तःकरणं परितुष्यतु संतुष्टं भवतु। जीवितपर्यन्तं यस्मै कस्मैचिद्दीयते, देवेन्द्राय दातुं योग्यं वस्तु जीवितादधिकं नास्त्येव यद्दातव्यम्। 'अखिलम्' इति वा पाठः। 'वनीयको याचनको मार्गणो याचकार्थिनौ' इति 'प्रभुः परिवृढोऽधिपः।' इति चामरः॥ ८१॥

भीमजा च हृदि मे परमास्ते
जीवितादपि धनादपि गुर्वी।
न स्वमेव मम सार्हति यस्याः
षोडशीमपि कलां किल नोर्वी॥ ८२॥

जीविताधिका भैमी तस्मै दीयतामित्याशङ्क्याह—

भीमजेति॥ अपिशब्दश्चशब्दो वा किंचेत्यर्थे। उर्वी यस्या भैम्याः षोडशीमपि कलां षोडशभागं किल निश्चितं नार्हति। यत्संबन्धी षोडशोऽपि भागः समग्रपृथ्वीलक्षणमूल्यलभ्यो न भवति सा भीमजा जीवितादपि धनादपि गुर्वी मूल्यरहिता मे हृदि मम हृदये परं केवलमास्ते विद्यते। किल यतः सा भैमी मम स्वं नैव। केवलं तामभिलष्यामि परं सा मदधीना न भवत्येव। यत्र स्वकीयत्वं तदेव दातुं शक्यते भैम्यां स्वकीयत्वाभावात्तद्वितरणमशक्यमिति कथं चेतः सन्तुष्यतीति भावः। अथ च राजभिर्यन्निमित्तं बन्धुवित्तादिव्ययः क्रियते सा पृथ्वी राज्ञां परमं स्वं धनं तदपि यस्याः षोडशं भागं नार्हति सा राज्ञो मम स्वं कथम्? अपि तु न कथंचिदित्यर्थः। अथ च यस्याः षोडशीं कलां मम स्वमेव स्वरूपमेव नार्हति किं पुनः समग्रा उर्व्यपि। किल यस्मात्क्रमेण जीवितादपि गुर्वी पृथ्वीरूपाद्धनादपि परमतिशयेन गुर्वी सा मद्धृदये आस्तेऽतो दातुमयोग्या इन्द्रेण दुर्लभा वेति व्याख्येयम्॥ ८२॥

मीयतां कथमभीप्सितमेषां
दीयतां कथमयाचितमेव।
तं धिगस्तु कलयन्नपि वाञ्छा-
मर्थिवागवसरं सहते यः॥ ८३॥

मीयतामिति॥ अर्थाद्यथा तथेति सम्बध्यते। मयाऽयाचितमेवाप्रार्थितमेव शीघ्रमेतेभ्यो यथा दीयतां तथा

१ अत्र यमकमनुप्रासश्चेति शब्दालङ्कारद्वयम्, अर्चनाऽर्थमिवेत्युत्प्रेक्षा, कदम्बेति रूपकं चेत्यर्थालङ्कारद्वितयी। २ अत्रानुप्रासः।

१ ये स्वयं सुरान्तीति तेषामपि पुनः परिवृढोऽर्थीति विरोधो व्यज्यते। २ अत्र जीवितादपि गुर्वीत्यतिशयोक्तिः।

एषामभीप्सितं वस्तु कथं ज्ञायताम् । अभीप्सितज्ञानेन विना दातुं न शक्यतेऽतो कथितमप्यभीप्सितं ज्ञातं भवति चेत्तर्हि अप्रार्थितमेव दीयत इत्यर्थः । ननु ज्ञातेऽप्ययाचितं किमिति दातव्यमित्यत आह—'गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम् । सहस्रगुणमाहूय याचिते तु तदर्धकम् ॥' इति वचनप्रामाण्याद्वाञ्छां याचकस्याभीष्टं कलयन्नपि जानन्नपि य एतद्याचनानन्तरं दास्यामीति अर्थिवाचोऽवसरं सहते प्रतीक्षते तं धिगस्तु सोऽधमः । वाञ्छां ज्ञात्वाऽपि प्रार्थनानन्तरं दास्यामीति विचारयाति सोऽधम इति किं वाच्यम् । तस्मादयाचितमेव देयमिति भावः । एषाम्, 'क्तस्य च वर्तमाने २ । २ । ६७' इति षष्ठी । अभीप्सितम् 'मतिबुद्धिपूजार्थेभ्यश्च ३ । २ । १८८' इति वर्तमाने क्तः । कलयन्निति हेतौ शता ॥ ८३ ॥

प्रापितेन चटुकाकुविडम्बं
लम्भितेन बहुयाचनलज्जाम् ।
अर्थिना यदघमर्जति दाता
तन्न लुम्पति विलम्ब्य ददानः ॥ ८४ ॥

प्रापितेनेति ॥ दाता अर्थिना कृत्वा यदघं पातकमर्जति विलम्ब्य चिराद्ददानो दाता तत्पातकं न लुम्पति परिमार्ष्टुं न शक्नोति । अधिकस्य सुकृतस्य का कथेत्यर्थः । किंभूतेनार्थिना—चटु प्रियवाक्यं, काकुः दीनवाक्यं ताभ्यां विडम्बं पराभवं प्रापितेन स्वस्य प्रियं दैन्यं च वादितेन तथा—बहु अनेकवारं याचनं,तेन कृत्वा या लज्जा तामपि लम्भितेन प्रापितेन । प्रियवचनाद्यवादयित्वैव झटित्यर्थिने देयम्, अन्यथा पातकं स्यादिति भावः । अर्जति, 'अर्ज अर्जने' भ्वादिः, 'अर्जक् अर्जने' चुरादिः ॥ ८४ ॥

यत्प्रदेयमुपनीय वदान्यै-
र्दीयते सलिलमर्थिजनाय ।
सार्थनोक्तिविफलत्वविशङ्का-
त्रासमूर्च्छदपमृत्युचिकित्सा ॥ ८५ ॥

यदिति ॥ वदान्यैर्बहुप्रदैः प्रदेयं दातव्यं वस्तु उपनीय समीपे संस्थाप्य अर्थिजनाय यत्सलिलं दीयते देयसङ्कल्पार्थमुदकमर्थिहस्ते प्रक्षिप्यते सा सलिलदानरूपा क्रिया अर्थनोक्तिर्याचनवचनं तस्य विफलत्वविशङ्का वैफल्ये विशङ्का तया जातस्त्रासस्तर्कजन्यं भयं तेन मूर्च्छन्नतिशयेन वर्धमानोऽपमृत्युरकालमरणं तस्य चिकित्सा प्रतिक्रिया ।सलिलदानेन याच्ञासाफल्यनिश्चयात् 'मरणे यानि चिह्नानि तानि चिह्नानि याचके'इति वचनप्रमाणको याच्ञावैफल्यशङ्काजन्योऽपमृत्युः शाम्यतीत्यर्थः। मूर्च्छतोऽपमृत्युः सलिलप्रक्षेपेण शाम्यति । अर्थिन्युपस्थिते दानविधिसिद्धये जलानयनविलम्बोऽपि न कर्तव्य इति भावः ॥ ८५ ॥

अर्थिने न तृणवद्धनमात्रं
किं तु जीवनमपि प्रतिपाद्यम् ।
एवमाह कुशवज्जलदायी
द्रव्यदानविधिरुक्तिविदग्धः ॥ ८६ ॥

अर्थिन इति ॥ 'कुशवत्सलिलोपेतं दानं संकल्पपूर्वकम्' इति वचनाद्दर्भसहितं जलं दात्राऽर्थिने दापयतीति दर्भसहितजलदाने दातारं प्रयोजयतीति कुशवज्जलदायी । उक्तिविदग्धः श्लेषोक्तिचतुरश्च द्रव्यदानविधिर्धनदानप्रकारस्य ज्ञापकं यच्छास्त्रं स एवमाह ब्रूते । एवं किम्—दात्रा अर्थिने तृणवत्तृणमिव धनमात्रं केवलं धनं न प्रतिपाद्यमभिलाषमकृत्वा न देयं, किं तु जीवनमपि प्राणा अपि तृणवद्देयाः । तृणदान इव प्राणदानेऽपि कोऽपि विचारो न कार्यः । अथ च तृणं दर्भस्तद्युक्तं केवलं धनं न देयम् । किं तु जीवनमपि उदकमपि देयमिति ब्रूते । अत एवोक्तिविदग्धः । अर्थिने प्राणा अपि तृणवद्देयाः किमन्यदिति भावः ॥ ८६ ॥

पङ्कसङ्करविगर्हितमर्हं
न श्रियः कमलमाश्रयणाय ।
अर्थिपाणिकमलं विमलं त-
द्वासवेश्म विदधीत सुधीस्तत् ॥ ८७ ॥

पङ्केति ॥ पङ्कस्य सङ्करेण सम्बन्धेन विगर्हितं निन्दितं कमलं श्रियो लक्ष्म्याः सम्पदश्च आश्रयणायार्हं योग्यं न भवति । पङ्किलस्थानं केनापि नाश्रीयते, अथ चान्यदपि पातकसम्बन्धनिन्दितं स्थानमाश्रययोग्यं न भवति । तत्तस्मात्सुधीर्विद्वान्विमलं मलपङ्कवर्जितम् पातकरहितं चार्थिपाणिकमलं तस्या लक्ष्म्याः सम्पदश्च वासवेश्म

१ अत्र यतामिति पूर्वभागे यमकम्, तं धिगस्त्वित्यस्य अर्थिवागवसरमित्यस्य च हेतुहेतुमद्भावात् काव्यलिङ्गं परार्द्धे । २ परिकरोऽत्रालङ्कारः ।

१ यद्दीयते सति रूपकम् । २ तृणवदित्युपमा ।

वसतिगृहं विदधीत कुर्यात् विदुषा सम्पद्धीर्थिभ्यो देयेत्यर्थः । अन्येनापि विदुषोज्ज्वलं देवायतनं क्रियते८७

याचमानजनमानसवृत्तेः
पूरणाय बत जन्म न यस्य ।
तेन भूमिरतिभारवतीयं
न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ८८ ॥

याचमानेति ॥ यस्य पुरुषस्य जन्म उत्पत्तिर्याचमानस्य जनस्य मानसवृत्तेर्मनोरथस्य पूरणाय समर्था न भवति तेन पुंसा इयं भूमिरतिभारवती बत कष्टम् । न द्रुमैः, न गिरिभिः, न समुद्रैः भारवती । तेन पुंसा यावान्भूमेर्भारः तावान्वृक्षादिभिर्न । एते तु कचित्पुष्पादिना औषधादिना रत्नादिना चोपकुर्वन्ति, न त्वदाता । तस्माद्याचकाभिलाषपूरणं करणीयमिति भावः ॥ ८८ ॥

मा धनानि कृपणः खलु जीवं-
स्तृष्णयाऽर्पयतु जातु परस्मै ।
तत्र चैष कुरुते मम चित्रं
यत्तु नार्पयति तानि मृतोऽपि ॥ ८९ ॥

मेति ॥ कृपणोऽतिलुब्धो जीवन् तृष्णयाऽतिलोभेन परस्मै अर्थिने जातु कदाचिदपि धनानि खलु निश्चितं माऽर्पयतु मास्म दात् । जीवित्वा लोभसद्भावान्न ददातीत्यत्र नाश्चर्यम्, मृतोऽप्येष कृपणो यत्तु पुनः तानि नार्पयति न धनानि प्रयच्छति तत्र च तत्र पुनः, तत्रैव वा विषये मम चित्रमाश्चर्यं कुरुते, मृतस्यापि लोभसद्भावात् । अथ च मृतः सन्नयं कृपणः धनानि नृपसंबन्धीनि राजायत्तानि नार्पाणि करोति नार्पयति तत्राश्चर्यम् । यो जीवन्कस्मैचिन्न ददाति स मृतोऽपि राज्ञे ददातीत्याश्चर्यम् । तस्माद्यावज्जीवति तावद्दातव्यं मृते राजा नेष्यतीति भावः ॥ ८९ ॥

माममीभिरिह याचितवद्भि-
र्दातृजातमवमत्य जगत्याम् ।
यद्यशो मयि निवेशितमेत-
न्निष्क्रयोऽस्तु कतमस्तु तदीयः ॥ ९० ॥

मामिति ॥ इह जगत्यां भूलोके दातृजातं वदान्यमात्रमवमत्यानादृत्य मां याचितवद्भिर्याचमानैरमीभिरिन्द्रादिभिः मयि यद्यशो निवेशितम् । इन्द्रादयो यस्य याचका जाता इत्यसाधारण्येन मम कीर्तिः कृता एतस्याः कीर्तेर्निष्क्रयो विनिमयः तदीय इन्द्रादिसंबन्धी कतमस्तु कः पुनः तदाऽर्थः अस्तु भवतु । इन्द्रादिभिः पूर्वमन्यः कोऽपि चेदयाचिष्यत तेन च तेभ्यः किञ्चिन्नेददास्यत तर्हि तदेव वस्तु कीर्तिविनिमयं समभविष्यत् न त्वेवमित्येतत्कीर्तितुल्यमेतेभ्यो वितरणीयं विनिमयं वस्तु नास्तीति भावः । यद्वेतद्यश इति वा । स्वर्लोके वर्तमानं कल्पवृक्षादिदातृवर्गमिति वा । दानं तावत्तिष्ठतु, यशोवितरणस्य मूल्यमपि दातव्यमित्यर्थः॥९०

लोक एष परलोकमुपेता
हा विहाय निधने धनमेकः ।
इत्यमुं खलु तदस्य निनीष-
त्यर्थिबन्धुरुदयद्दयचित्तः ॥ ९१ ॥

लोक इति ॥ एष लोको निधने मरणे प्राप्ते धनं विहाय एक एवासहाय एव परलोकमुपेता गमिष्यति हा कष्टम् । इति हेतोः खलु निश्चितमुदयन्ती उदिता दया यस्मिन्नेवंभूतं चित्तं मनो यस्य सोऽर्थिबन्धुर्याचकलक्षणः सुहृदस्य दातुर्लोकस्य तद् धनममुं परलोकं परलोकगतं जनं वा निनीषति नेतुमिच्छति । खलु उत्प्रेक्षे वा । अर्थिने दत्तं परलोके तदधिकमुपतिष्ठत इत्यर्थः । अन्योऽपि बन्धुः पूर्वस्थानं त्यक्त्वा स्थानान्तरं प्रत्येकाकिन एव गच्छतः सुहृदो धनादि तत्स्थानं प्रापयति । उपेता, 'इण् गतौ' तृट् तृच्वा । द्विकर्मकः ॥ ९१ ॥

दानपात्रमधमर्णमिहैक-
ग्राहि कोटिगुणितं दिवि दायि ।
साधुरेति सुकृतैर्यदि कर्तुं
पारलौकिककुसीदमसीदत् ॥ ९२ ॥

दानेति ॥ इह भुवि एकग्राहि एकत्वसंख्यायुक्तं देयं वस्तु गृह्णाति तच्छीलं दिवि स्वर्गे कोटिगुणितं कोटिपरिमितं दायि ददाति दास्यति वा एवंशीलं दानपात्रम् अधमर्णं याचकलक्षणम् ऋणगृहीतारं सुकृतैः पुण्यैः कृत्वा पारलौकिकं स्वर्लोकभवं कुसीदं वृद्धिजीविकामसीददवि-

---

१ पाणिकमलमित्यादौ रूपकम् । २ अत्रानुप्रासः शब्दालङ्कारः । न द्रुमैरित्यादिना भारमपह्नुत्य तस्यैव भारत्वोक्तेरपह्नुतिः । ३ अत्र नार्पयतीति श्लेष इत्येके, विरोधाभास इत्यपरे ।

१ अत्रानुप्रासः । २ अत्रानुप्रासः । उदयद्दयचित्त इति परिकरः, अमुं धनमिति रूपकम् ।

नश्वरं कर्तुं यदि एति प्राप्नोति जानाति वा तर्हि साधुः सज्जन एव एति नान्यः । एवंविधं दानपात्रं साधुव्यतिरेकेण केनापि न लभ्यते । लब्धे च तस्मिन्साधुना चिरकालं स्वर्गे स्थीयते । तस्माद्याचकमनोरथः पूरणीय इति भावः । कुसीदमसीदत्कर्तुं साधुर्यदेति तर्हि सुकृतैः कृत्वा, नान्येन प्रकारेणेति वा । अन्योऽधमर्णो द्विगुणाधिकं न ददाति, दानपात्रमधमर्णस्तु वार्धुषिक एकगुणं गृहीत्वा कोटिपरिमितं ददाति ततश्चैतादृशमधमर्णं साधुरेव सुकृतैरेव प्राप्नोति नान्योऽन्येन वोपायेनेति वा । 'कुसीदं वृद्धिजीविका' इत्यमरः । दायि, 'भविष्यति गम्यादयः ३ । ३ । ३' इति भविष्यदर्थे णिनिः, 'आवश्यकाधमर्ण्ययोः ३ । ३ । १७०' इत्याधमर्ण्ये वा । तद्योगे 'अकेनोर्भविष्यदाधमर्ण्ययोः । २ । ७०' इति षष्ठीनिषेधात्कोटिगुणितमिति कर्मणि द्वितीया । पारलौकिकम्, अध्यात्मादिषु 'लोकोत्तरपदाच्च' इति वक्तव्याट्ठञि अनुशतिकादिपाठादुभयपदवृद्धिः ॥९२॥

> एवमादि स विचिन्त्य मुहूर्तं
> तानवोचत पतिर्निषधानाम् ।
> अर्थिदुर्लभमवाप्य सहर्षा-
> न्याच्यमानमुखमुल्लसितश्रि ॥ ९३ ॥

एवमिति ॥ स निषधानां पतिर्नल एवमादि 'जीवितावधि—' इत्येवंप्रभृति मुहूर्तं क्षणं विचिन्त्य विचार्य तानिन्द्रादीनवोचत । किंभूतान्—अर्थिनां दुर्लभं याच्यमानस्य यजमानस्य मुखमुल्लसितश्रि उदितशोभमवाप्य सहर्षान् ।याचकैर्दाता प्रसन्नमुखो दुर्लभः, तं तु प्रसन्नमुखमवाप्य कार्यसिद्धिर्भविष्यतीति सहर्षैर्जातमित्यर्थः ॥ ९३॥

> नास्ति जन्यजनकव्यतिभेदः
> सत्यमन्नजनितो जनदेहः ।
> वीक्ष्य वः खलु तनूममृतादं
> दृङ्निमज्जनमुपैति सुधायाम् ॥ ९४ ॥

नास्तीति ॥ जन्यजनकयोः कार्यकारणयोः व्यतिभेदोऽतिशयो भेदो नास्ति, तथा—जनस्य देहः अद्यत इत्यन्नं भक्ष्यं तेन जनितो जन्यः, इत्युभयमपि सत्यम् । उभयत्रादि सुवर्णजन्यं कुण्डलं दृष्टान्तः । खलु यस्मात् अमृतमत्ति भक्षयतीत्यमृतादं वो युष्माकं तनूं वीक्ष्य मम दृक् सुधायाममृते निमज्जनमुपैति । अमृतमज्जनेन यथा सुखं भवति तथा भवद्दर्शनेनेति । यतो भवन्तोऽमृतभक्षिणः । अत्र पूर्वोक्त एव हेतुः । यद्वा अन्नजन्यो जनदेहः, नास्ति जन्यजनकयोर्भेदो यस्मिन्नसौ, नास्तिजन्यजनकभेदः । अन्नादभिन्न एवेति सत्यम् । यस्मादित्यादि पूर्ववत् । यद्वा अन्नजन्यो जनदेहः, अस्ति जन्यजनकयोर्व्यतिभेदो यस्मिन्नसावस्तिजन्यजनकव्यतिभेदः,एवंविधो न भवति, किं त्वन्नादभिन्न एव।एतत्सत्यम्। यस्मादित्यादि पूर्ववत्।पूर्वव्याख्यानादेतद्याख्यान ज्यायः। 'अमृतादाम्' इति पाठे आदित्यस्य हलन्तत्वादापि तनूमित्यस्य विशेषणत्वेन योजना । 'नास्ति—' अस्ति-इति क्षीरादिवदस्तिना समासं विधाय पश्चान्नञ्शब्देन समासः । अमृतादम् अमृतादामिति 'अदोऽनन्ने३ २ । ६८' इति विट् ॥ ९४ ॥

> मत्तपः क्व नु तनु क्व फलं वा
> यूयमीक्षणपथं व्रजथेति ।
> ईदृशं परिणमन्ति पुनर्नः
> पूर्वपूरुषतपांसि जयन्ति ॥ ९५ ॥

मत्तप इति ॥ तनु अत्यल्पं मम तपः क्व नु अदृश्या अपि यूयमीक्षणपथं दृष्टिगोचरं व्रजथेति फलं वा क्व । अपि त्वसंभावितमेतत् । बहुतपोलभ्यस्य फलस्याल्पेनैव तपसा दुर्लभत्वात् । तर्हीदं फलं कथमित्यत आह—ईदृशं भवद्दर्शनलक्षणं फलं परिणमन्ति जनयन्ति भवद्दर्शनफलरूपेण वा परिणतानि एतदाकाराणि नोऽस्माकं पूर्वपूरुषाणां पित्रादीनां तपांसि तदुपार्जितानि पुण्यानि पुनः जयन्ति सर्वोत्कर्षेण वर्तन्ते । मत्पूर्वजपुण्यैर्भवद्दर्शनं जातमिति भावः । जयन्ति सर्वोत्कर्षेण वर्तमानानि तपांसि पुनरीदृशं परिणमन्तीति वा । 'ईदृशान्यपि ददन्तीति' क्वचित्पाठः । तत्र फलशब्दस्य विभक्तिविपरिणामेनेदृशान्यपि दुर्लभान्यपि फलानि नोऽस्मभ्यं ददन्ति तानि पूर्वपूरुषतपांसि पुनर्जयन्तीति व्याख्या । 'परिणमन्ति फलं नः' इति केचित् । तत्र ईदृशं भवद्दर्शनलक्षणं फलं परिणमन्तीति व्याख्या । ददन्ति, 'वा नपुंसकस्य ७ । १ । ७९' इति शतुर्नुम् । 'अस्मदो द्वयोश्च १ । २ । ५९' इत्येकत्वे 'नः' इति षष्ठीचतुर्थीबहुवचनस्य नसादेशः ॥ ९५ ॥

---

१ अत्रानुमासः शब्दालङ्कारः । दानपात्रमधमर्णमिति रूपकम् । २ अत्र परिकरः ।

१ अत्र चतुर्थपादोक्तस्य विशेषस्यार्थस्य समर्थनाय नास्तीत्यर्थान्तरन्यास इत्येके, अनुमानमित्यपरे । २ अत्र विषममित्येके, लोकोक्तिरित्यन्ये ।

प्रत्यतिष्ठिपदिलां खलु देवीं
कर्म सर्वसहनव्रतजन्म ।
यूयमप्यहह पूजनमस्या
यन्निजैः सृजथ पादपयोजैः ॥ ९६ ॥

प्रतीति ॥ सर्वसहनं व्रतं सर्वभारादिसहनलक्षणो नियमः तस्माज्जन्मोत्पत्तिर्यस्य एवंविधं कर्म व्यापारः सुकृतरूपं कर्तृ इमां भूमिं खलु निश्चयेन देवीं प्रत्यतिष्ठिपत् प्रतिष्ठापयामास । खलु, उत्प्रेक्षायां वा । 'सर्वंसहा वसुमती' इत्यभिधानाद्भूमेः, सर्वंसहत्वम् ततस्तेन सुकृतेन तस्या देवीत्वं कृतमित्यर्थः । तत्र प्रमाणमाह—अहह आश्चर्ये । यत् यूयमपि दिङ्नाथा अपि भूमिमस्पृशन्तोऽपि निजैः स्वीयैः पादपयोजैः चरणकमलैः कृत्वा अस्या भूमेः पूजनं सृजथ कुरुथ । भवन्तो यत्पूजां कुर्वन्ति सा देव्येवेति भवद्भिर्देवीत्वेन प्रतिष्ठापितेयम् । सर्वापराधसहोऽपि देवत्वं लभते पूजां च । पृथिव्यामागमने किं कारणमिति प्रश्नभावः । प्रत्यतिष्ठिपत्, णौ चङि 'तिष्ठतेरित् ७ । ४ । ५' इतीकारः ॥ ९६ ॥

जीवितावधि किमप्यधिकं वा
यन्मनीषितमितो नरडिम्भात् ।
तेन वश्चरणमर्चतु सोऽयं
ब्रूत वस्तु पुनरस्तु किमीदृक् ॥ ९७ ॥

जीवितेति ॥ जीवितमवधिर्मर्यादा यस्य तत् प्राणपर्यन्तं प्राणेभ्योऽप्यधिकं वा यत्किमपि वस्तु इतो मल्लक्षणात् नरडिम्भान्मनुष्यबालकाद्भवद्भिर्मनीषितमभिलषितम् । सोऽयं नृपालो वो युष्माकं चरणं तेन वस्तुनार्चतु पूजयतु । ईदृग्वस्तु किं पुनः अस्तु ब्रूत । वाक्यार्थः कर्म । बालोऽप्यहं प्राणाधिकमपि दास्यामि, याचने शङ्का न कार्या, ईप्सितं च कथनीयमिति भावः । चरणद्वयपूजने सामर्थ्याभावाच्चरणमित्येकवचनेन विनीतत्वं सूचितम् । अर्चतिर्भ्वादिः ॥ ९७ ॥

एवमुक्तवति वीतविशङ्के
वीरसेनतनये विनयेन ।
वक्रभावविषमामथ शक्रः
कार्यकैतवगुरुर्गिरमूचे ॥ ९८ ॥

एवमिति ॥ अथ कार्ये कैतवगुरुः कपटाचार्यो बृहस्पतिर्वा शक्रः नलं प्रति स्वीयाननलादीनपि प्रति वक्रभावेन वक्रोक्त्या कुटिलाभिप्रायेण च विषमां दुष्टां दुर्बोधां च गिरमूचे । कस्मिन्सति—वीता गता विरुद्धा विविधा शङ्का वा यस्मात् विरुद्धमनेकं वा किं याचयिष्यन्तीति त्यक्तभये वीरसेनतनये नले विनयेन विनीतत्वेन एवं पूर्वोक्तमुक्तवति सतीति ॥ ९८ ॥

पाणिपीडनमहं दमयन्त्याः
कामये(—)महि महीमिहिकांशो ।
दूत्यमत्र कुरु नः स्मरभीतिं
निर्जितस्मर चिरस्य निरस्य ॥ ९९ ॥

पाणीति ॥ हे मही पृथ्वी तस्यां मिहिकांशो ! चन्द्र-नल, सर्वे वयं दमयन्त्याः पाणिपीडनं विवाहः, तल्लक्षणं महमुत्सवं कामयेमहि इच्छामः । कान्त्या वशितया च नितरां जितः स्मरो येन तत्संबुद्धिः चिरस्य चिरकालं स्मराद्भीतिं भयं निरस्य विरहजन्यं दुःखं विहाय अत्र भैमीविवाहोत्सवे विषये नोऽस्माकं दूत्यं कुरु । सा यथाऽस्मान्वृणीते तथा प्रयत्नं कुर्वित्यर्थः । जितस्मरत्वात्तव ततो भीतिर्न । अतिसुन्दरस्य तव देवदूतत्वाद्भैमीं प्रति दूत्यं युक्तं नान्यं प्रति । अथ च स्वीयानपि वञ्चयति—अहं दमयन्त्याः पाणिपीडनं कामये । किंभूतम्—मह उत्सवोऽस्त्यस्मिन्निति माहि । नोऽस्माकं चतुर्णां मध्ये मम दूत्यं कुरु न त्वेषाम् । त्वं स्मरभीतिं निरस्य संत्यज्य यस्मान्निर्जितस्मर । दूत्यं कुरु, चिरस्य विलम्बमिति यावत्, निरस्य त्यजेति वा । निरस्य अस्यतेर्लोडन्तम् दूत्ये विलम्बो न कार्य इत्यर्थः । भीतिं स्मर जानीहि दूत्याकरणे विलम्बे वा मत्तः शापादिभीतिः स्मरणीया । भीतिम् कर्मत्वविवक्षया षष्ठ्यभावः । 'नः' पक्षे 'अस्मदो द्वयोश्च ७।१।७२' इत्येकत्वे बहुवचनम् ॥ ९९ ॥

आसते शतमधिक्षिति भूपा-
स्तोयराशिरसि ते खलु कूपाः ।
किं ग्रहा दिवि न जाग्रति ते ते
भास्करस्य कतमस्तुलयाऽऽस्ते ॥ १०० ॥

---

१ पादपयोजैरिति रूपकमत्रार्थालङ्कारः । २ अत्रानुप्रासः ।

१ परिकरोऽत्रालङ्कारः । २ अत्रानुप्रासः शब्दालङ्कारः महीमिहिकांशो इति रूपकं, निर्जितस्मरेति परिकरश्चार्थालङ्कारौ ।

अस्मिन्विषये राजान्तरं याच्यतां, न त्वहमित्याशङ्क्याह—

आसत इति ॥ हे नल ! अधिक्षिति पृथिव्यां शतं बहुसंख्याका भूपाः राजान आसते तिष्ठन्ति । परं भूपत्वे तुल्येऽपि त्वमौदार्यादिगुणबाहुल्यान्महाशयत्वात्तोयराशिः समुद्रोऽसि । ते भूपाः खलु निश्चितं कूपा अगाधताभावात् । समुद्रापेक्षया कूप यथा हीनाः, तथा त्वदपेक्षयाऽन्ये राजान इति । तस्मान्न याचिता इति भावः । आधिक्यमेव समर्थयते—दिवि स्वर्गे तेऽनेकसंख्याकाः प्रसिद्धाश्चन्द्रादयो ग्रहा न जाग्रति स्फुरन्ति किम् ? अपि तु प्रकाशन्त एव । परं ग्रहत्वे सत्यपि भास्करस्य तुलया साम्येन कतमो ग्रहः पुनरास्ते, अपि तु सूर्यसदृशो ग्रहमध्ये कोऽपि नास्ति तथा त्वत्सदृशोऽन्यो भूपो न विद्यते, अतस्त्वमेव याच्यस इत्यर्थः । 'भास्करस्य कतमस्तु तुलास्ते' इति पाठे भास्करस्य तुला समानः कतम आस्ते, अपि तु न केऽपि । अधिक्षिति, सप्तम्यर्थेऽव्ययीभावः ॥ १०० ॥

विश्वदृश्वनयना वयमेव
त्वद्गुणाम्बुधिमगाधमवेमः ।
त्वामिहैवमनिवेश्य रहस्ये
निर्वृतिं नहि लभेमहि सर्वे ॥ १०१ ॥

विश्वेति ॥ विश्वं पश्यन्ति विश्वदृश्वानि सर्वसाक्षीणि नयनानि येषामेवंभूता यतस्तस्माद्वयमेवागाधं गम्भीरं त्वद्गुणाम्बुधिं त्वद्गुणसमुद्रमवेमो जानीमः त्वद्गुणसमुद्रं ज्ञातुं नान्यस्य सामर्थ्यं विश्वदृश्वनयनत्वाभावादित्यर्थः । सर्वे वयमिह भैमीपाणिग्रहणलक्षणे रहस्ये गोप्येऽर्थे एवं दूतत्वप्रकारेण त्वामनिवेश्य दूतत्वमप्राप्य निर्वृतिं परमं सुखं नहि नैव लभेमहि प्राप्नुमः । 'इहैकम्' इति पाठे एकं त्वामनिवेश्यानियुज्येत्यर्थः । त्वत्सदृशोऽन्यो नास्ति, इत्यतो दूत्ये नियो (यु) ज्यसे, न करिष्यसि चेच्छापं दास्याम इति भावः । अयमेव वक्रभावः । वयमपि गुणसमुद्रमगाधमेव जानीमः, अत एव गाहितुमसमर्था इति भावः । सर्वदर्शिभिरस्माभिस्त्वद्गुणसमुद्रो न दृष्ट इति वा । सर्वे इति पूर्वश्लोके कृतामपि सहचरवञ्चनां गोपायति । दृश्व इति 'दृशेः क्वनिप् ३।२।९४' इति क्वनिप् ॥ १०१ ॥

१ अत्र तोयराशिरसीति रूपकम् । २ अत्र परिकरः ।

शुद्धवंशजनितोऽपि गुणस्य
स्थानतामनुभवन्नपि शक्रः ।
क्षिप्नुरेनमृजुमाशु सपक्षं
सायकं धनुरिवाजनि वक्रः ॥ १०२ ॥

शुद्धेति ॥शक्रो धनुरिव वक्रोऽजनि क्रूरः कुटिलश्च जातः । किम्भूतः शक्रो धनुश्च—शुद्धवंशजनितोऽपि विशिष्टकश्यपकुलोत्पन्नोऽपि दृढवेणुजनितोऽपि च गुणस्य विवेकवीर्यौदार्यादेः मौर्व्याश्च स्थानतामाश्रयतामनुभवञ्श्रयन्नपि आश्रयो भवन्नपि ऋजुं शुद्धाशयमवक्रं च सपक्षं लोकपालांशसंभूतत्वात्, यज्ञे हविर्दानाद्वा सपक्षं मित्रं भैमीप्राप्तिरूपसमानसाध्यत्वादपि मित्रं पक्षसहितं च सायकमिव एनं नलं क्षिप्नुः प्रेरयितुकामः प्रतारयितुकामः त्यक्तुकामश्च उत्तमवंशजस्य गुणाश्रयस्य च वक्रत्वं विरुद्धमित्यपिशब्दौ विरोधद्योतकौ । 'अथास्त्रियाम् । धनुश्चापौ' इत्यमरोक्तेर्धनुःशब्दः पुँल्लिङ्गोऽपि । क्षिप्नुः 'त्रसिगृधिधृषिक्षिपेः क्नुः ३।२।१४०' इति क्नुः तद्योगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति न षष्ठी ॥ १०२ ॥

तेन तेन वचसैव मघोनः
स स्म वेद कपटं पटुरुच्चैः ।
आचरत्तदुचितामथ वाणी-
मार्जवं हि कुटिलेषु न नीतिः ॥१०३॥

तेनेति ॥ उच्चैरतितरां पटुः प्राज्ञः श्लेषवक्रोक्त्यादिचतुरः स नलो मघोन इन्द्रस्य तेन तेन 'पाणिपीडनमहं—' 'त्वामिहैकमनिवेश्य' इत्यादिवचसैव कपटं वेद स्म जानाति स्म, अथ तदुचितां कपटयोग्यां वाचमाचरदूचे । इन्द्रेण तथोक्तेऽपि नलः कथमुक्तवानित्यत आह—हि यस्मात्कुटिलेषु पुरुषेषु आर्जवमकापट्यं नीतिर्न भवति, किं तु कपटिषु कपटिनैव भवितव्यमिति न्यायः । 'व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः' इति भारव्युक्तेः । नलेनापि कपटित्वमङ्गीकृतं युक्तमित्यर्थः ॥ १०३ ॥

सेयमुच्चतरता दुरिताना-
मन्यजन्मनि मयैव कृतानाम् ।

१ धनुरिवेत्युपमा सा च वंशादिपदानां श्लिष्टत्वात् श्लिष्टा । २ अत्र तदुचितामिति समर्थनाय, आर्जवमित्याद्युक्तमित्यर्थान्तरन्यासः ।

युष्मदीयमपि या महिमानं
जेतुमिच्छति कथापथपारम् ॥ १०४॥

सेयमिति॥हे देवाः,सेयमन्यजन्मनि जन्मान्तरे मयैव कृतानां 'न तु पूर्वजैः' दुरितानामुच्चतरता अतितरां समुच्चयः निरवधित्वमिति यावत् । सा का—या कथापथस्य कथनमार्गस्य पारं परतीरं कथापथं पारयाति समाप्तिं नयाति वागगोचरं युष्मदीयं यौष्माकीणमपि महिमानं माहात्म्यं जेतुमतिक्रामयितुमिच्छति अभिलष्यति आज्ञारूपं माहात्म्यम् अकरणेन विरुद्धभाषणेन च विनाशयितुं वाञ्छति । भवदाज्ञाऽकरणीया दूषणीया चेति बुद्धिरुत्पन्नेत्यर्थः । भवदाज्ञा सुकृतेन विना कर्तुं न शक्यते, तत्तु मम न विद्यत इति भावः । अथ च मही उत्सवान् यः स चासौ मानोऽहङ्कारश्च भैमीप्राप्त्यहङ्कारं पराभवितुं या वाञ्छति सेयं मयैवान्यजन्मनि कृतानां दुरितानामशुभकर्मणामुच्चतरता सामर्थ्यातिशयः । भवदहङ्कारखण्डने शक्तोऽस्मि तस्माद्भैमीच्छा न कार्या इतीन्द्रकपटोचितो विवक्षितोऽर्थः ॥ १०४ ॥

वित्थ चित्तमखिलस्य न कुर्यां
धुर्यकार्यपरिपन्थि तु मौनम् ।
ह्रीर्गिराऽस्तु वरमस्तु पुनर्मा
स्वीकृतैव परवागपरास्ता ॥ १०५ ॥

वित्थेति॥ यूयं यद्यपि विश्वसाक्षित्वादखिलस्य सर्वस्य चित्तं वित्थ जानीथ मयैतन्न क्रियत इति, तथापि धुर्याणां श्रेष्ठानां कार्यपरिपन्थि कार्यप्रतिकूलं भैमीप्राप्तिलक्षणप्रधानकार्यविरोधि वा मौनं तु पुनः न कुर्याम्, ज्ञातेऽपि ममाभिप्राये मौनं युक्तं न । तदेवाह—न करोमीति । निष्ठुरवचनभाषणरूपा ह्रीर्लज्जा वरं मनागस्तु वरम् । मौनित्वादपरास्ताऽनिराकृता परस्य वाक् 'अप्रतिषिद्धमनुमतं भवति' इति न्यायात् स्वीकृतैव पुनर्मा भूत् । तस्माद्भवद्भिर्ज्ञातेऽपि मया स्पष्टः प्रतिषेधः क्रियत इति भावः । 'छन्दसि परि पन्थिपरिपरिणौ पर्यवस्थातरि' इति च्छन्दस्येव निपातितः, तथापि महाकविप्रयोगाद्भाषायामपि साधुः । 'प्रत्यर्थिपरिपन्थिनः' इत्यमरः । 'अनुपस्थितपरिपन्थिभिः' इत्युदयनाचार्यः । यद्वा-परितः पन्ययति आवृणोति कार्यं तच्छीलः परिपन्थी इति णिनौ समर्थनीयम् । स्वरे विशेषानिपातवैयर्थ्यं न शङ्क्यम् 'वित्त' इति पाठे लोट् ॥ १०५ ॥

यन्मतौ विमलदर्पणिकायां
संमुखस्थमखिलं खलु तत्त्वम् ।
तेऽपि किं वितरथेदृशमाज्ञां
या न यस्य सदृशी वितरीतुम्॥ १०६॥

यदिति ॥ येषां युष्माकं मतौ बुद्धावेव विमलायां निर्मलायां दर्पणिकायां खलु निश्चितमखिलं तत्त्वं यथार्थं करणीयाकरणीयं वस्तु संमुखस्थं प्रत्यक्षं स्फुरद्रूपम्, तेऽपि ईदृशा अपि यूयम् ईदृशमेवंविधां तामाज्ञां तस्मै मह्यं किं वितरथ दत्थ। तां काम्—याऽऽज्ञा यस्य यस्मै वितरीतुं दातुं सदृशी युक्ता न, यो भैम्याः कामुकोऽतिसुन्दरश्च तस्मै भैमीदूत्यं कुर्वित्याज्ञां दातुं नैव युक्तेति भावः ॥ १०६ ॥

यामि यामिह वरीतुमहो त-
द्दूततां नु करवाणि कथं वः ।
ईदृशां न महतां बत जाता
वञ्चने मम तृणस्य घृणाऽपि॥ १०७॥

यामीति ॥ इह अस्मिन्समये मार्गे वा यां वरीतुमहं यामि । अहो सोपहासमाश्चर्ये संबोधने वा । वो युष्मत्संबन्धि तद्विषयां दूततां पुनः कथंकारं करवाणि ? अपितु न कुर्याम् । ईदृशां दिक्पालानां महतामत्रभवतां तृणस्य तृणप्रायस्यातिहीनस्य नलस्य मम वञ्चने प्रतारणे विषये घृणा कृपा जुगुप्सा वा न जाता नोत्पन्ना ? बत खेदे । महतां कृपया भवितव्यम् । महद्भिर्महानेव प्रतारयितुं युक्तो, न लघीयान्, तस्यायोग्यत्वादित्यपिशब्दार्थः । कपटोक्तिश्च—महतामन्येषां सत्पुरुषाणां जातौ समाजे ईदृशां परप्रतारकाणां भवतामञ्चने पूजने विषये तृणस्याल्पस्य ममापि घृणा न अपि त्वस्त्येव । किमुत महतामित्यर्थः । अथ च ईदृशां वञ्चकानां न महताम्,न समासेन,असाधूनां तृणस्यापि जातौ पूजने तृणजातीयमध्येऽपि, पूजने मम घृणा भवति भवद्भ्योऽपि तृणजातिरेव श्रेयसी इति मम प्रतिभाति इति भावः ॥ १०७ ॥

---

१ अत्रानुप्रासः । काव्यलिङ्गं च ।

१ अनुप्रासोऽत्र शब्दालङ्कारः । २ दर्पणिकायां यन्मताविति रूपकम् । ३ अनुप्रासोऽत्रालङ्कारः ।

उद्भ्रमामि विरहात्खलु यस्या
मोहमेमि च मुहूर्तमहं यः ।
ब्रूत वः प्रभवितास्मि रहस्यं
रक्षितुं स कथमीदृगवस्थः ॥ १०८ ॥

उद्भ्रमामीति ॥ योऽहं अस्या भैम्या विरहान्मुहुः पुनरुद्भ्रमाम्युन्मादयुक्तो भवामि पुनः मुहूर्तं क्षणमात्रं मोहं मूर्च्छां च एमि प्राप्नोमि । अन्याः सप्तावस्था मयानुभूताः अधुना मूर्च्छोन्मादलक्षणे अवस्थे अनुभूयेते इत्यर्थः । ईदृगवस्थाद्वययुक्तः सोऽहं वो युष्माकं रहस्यं रक्षितुं गोपायितुमन्तःकरणेऽवधारयितुं कथं प्रभवितास्मि शक्तो भवितास्मि ? ब्रूत कथयत, अपितु न कथंचिदित्यर्थः । वाक्यार्थः कर्म । भ्रान्तो रहस्यं गोपायितुं समर्थो न भवति, सर्वस्याग्रे कथयति । योऽपि मूर्च्छालो मूर्खश्च स मनसि रहस्यं धारयितुं न शक्नोति किंतु विस्मरत्येवेति दूत्ययोग्यो न भवामीति भावः ॥ १०८ ॥

यां मनोरथमयीं हृदि कृत्वा
यः श्वसिम्यथ कथं स तदग्रे ।
भावगुप्तिमवलम्बितुमीशे
दुर्जया हि विषया विदुषाऽपि ॥१०९॥

यामिति ॥ योऽहं मनोरथमयीं संकल्परूपां यां भैमीं हृदि कृत्वा श्वसिमि जीवामि सोऽहं दूत्याङ्गीकारादथानन्तरं तदग्रे तस्याः पुरः भावानां स्वेदस्तम्भाऽऽदिसात्त्विकानां गुप्तिं गोपनमवलम्बितुं कर्तुं कथमीशे शक्तोऽस्मि अपि तु न कथंचित्।हि यस्माद्विदुषापि पण्डितेनापि विषया रूपादयो दुर्जया जेतुमशक्याः । अलीकाया अपि यस्याश्चिन्तनेन जीवामि तस्य मम तस्याः सत्यायाः साक्षात्कारे सात्त्विकभावाः स्फुटमुत्पद्येरन्, ततः कुतो युष्मद्दूत्यचिन्ता, इत्यतोपीयमाशा ममानुचिता इति भावः । 'स्वपिमि' इति पाठे निद्रां करोमि ॥ १०९ ॥

यामिकाननुपमृद्य च मादृक्
तां निरीक्षितुमपि क्षमते कः ।
रक्षिलक्षजयचण्डचरित्रे
पुंसि विश्वसिति कुत्र कुमारी ॥ ११० ॥

यामिकानिति ॥ च अपरं मादृक् कः पुरुषोऽतिसुन्दरो यामिकान्प्रहरजागरूकाननुपमृद्यानिष्पीड्याविनाश्य अन्तःपुरस्थां तां भैमीं निरीक्षितुमपि क्षमते शक्नोति न कोपीत्यर्थः । वक्तुं तु दूरत इत्यपिशब्दार्थः । सुन्दरस्य यामिकमर्दनेन विनाऽन्तःप्रवेशो न घटत इत्यर्थः । तर्हि शूरेण त्वया तेऽपि मर्दनीया इत्यत आह— रक्षिणां लक्षं तस्य जयेन चण्डं दारुणं चरित्रं यस्यैवंभूते पुंसि पुरुषे कुमारी बाला मृद्वङ्गी कोमलहृदया च कुत्र कुतोऽपि विश्वसिति विश्वासं प्राप्नोति, अपितु न कुतोऽपि । एवंविधं चण्डमाकर्ण्य बाला पलायिष्यत एवेत्यतोऽपि मम दूत्यमयुक्तमिति भावः । एवंविधे कुत्र पुंसीति वा। रक्षणार्थं यामोऽस्यास्तीति यामिकः । अस्त्यर्थे ठन्, कालवाचित्वाद्भवार्थे ठञ् ॥ ११० ॥

आददीचि किल दातृकृतार्घं
प्राणमात्रपणसीम यशो यत् ।
आददे कथमहं प्रियया तत्
प्राणतः शतगुणेन पणेन ॥ १११ ॥

आदधीचीति ॥ प्राणमात्रं जीवितमेव पणसीमा मूल्यावधिर्यस्यैवंविधं यद्यशः आदधीचि दधीचिनामकवदान्यपर्यन्तं दातृभिर्वदान्यैः कृतोऽर्घो मूल्यं यस्य किल श्रूयते यशः प्राणेभ्योऽप्यधिकं मूल्यं नार्हति । यशोऽर्थं दधीच्यादिभिः प्राणा एव दत्ताः, न त्वधिकं किंचित् । अहं तद् यशः प्राणतः प्राणेभ्यः शतगुणेन अतितरामधिकेन प्रियया भैमीलक्षणेन पणेन मूल्येन कथमाददेऽङ्गीकुर्याम्, अपि तु न कथंचित् । यदल्पेन मूल्येन लभ्यते तद्बहुना केनापि न गृह्यते, अतो यशोवाञ्छयापि जीवादधिकस्यादेयत्वाद्भवतां भैमीप्राप्त्यर्थं मया यत्नो न क्रियत एवेति भावः । अतिथीभूय त्वया ब्राह्मणस्य दधीचेरपि प्राणा गृहीताः, किं पुनः क्षत्रियस्य ममेति भावः ॥ १११ ॥

अर्थना मयि भवद्भिरिवास्यै
कर्तुमर्हति मयाऽपि भवत्सु ।

---

१ अत्रानुप्रासः शाब्दः, काव्यलिङ्गं चार्थोऽलङ्कारः । २ ईश इत्यन्तमुक्तस्य समर्थकं दुर्जया इत्याद्युक्तमित्यर्थालङ्कारः ।

१ अत्रानुप्रासः । २ पणेन प्रिययेति रूपकम् । सीमेति शतगुणेनेति विषमं चेत्येतावर्थालङ्कारौ । अनुप्रासः पुनः शब्दालङ्कारः । न चात्र परिवृत्तिरवधेया । यत्तु स्वीक्रियते जीवातुकारैः, तदनवधानमूलम्, विनिमयस्य सम्भाव्यमानत्वं यावत्तदस्वीकारात्, न चात्र विनिमयसम्पन्नता कविना प्रतिपादितेति दिक् ।

भीमजाऽर्थ परयाचनचाटौ
यूयमेव गुरवः करणीयाः ॥ ११२ ॥

अर्थनेति ॥ मयाऽपि भवत्सु अस्यै भैम्यर्थमर्थना याच्ञा कर्तुमर्हति उचिता । कैः कस्मिन्निव—भवद्भिर्मयीव । यथा भवद्भिर्मयि याच्ञा क्रियते तथा मयापि भवत्सु यथा सा मां वरिष्यति तथा भवद्भिरपि कर्तव्यमिति भवन्तो याच्यन्त इत्यर्थः । क्षत्रियस्य दातृत्वमेव युक्तम्, न तु याचकत्वमित्यत आह—भीमजारूपो योऽर्थः प्रयोजनं तत्र परं तत्परं याचनचाटु प्रार्थनप्रियवचनं तस्मिन्यूयमेव गुरव उपदेष्टारः करणीयाः । दिक्पाला अपि याचन्ते चेत्तर्हि मादृशां का कथा । भवतां चेदेतद्युक्तं तर्हि ममापि युक्तमेव । गुरूपादिष्टमेव शिष्यः करोति 'याचनवाचे' इति पाठे प्रार्थनवचनाय । अर्थनाशब्दस्य भाववचनत्वात्, मयत्येत्रानुक्ते कर्तरि तृतीया, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९ ' इति षष्ठीनिषेधात् । एवं भवद्भिरित्यत्रापि कर्तुमित्यर्हतावुपपदे 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ३।४।६५' इति तुमुन् ।याचनचाटौ भाषितपुंस्कम् ॥ ११२ ॥

अर्थिताः प्रथमतो दमयन्तीं
यूयमन्वहमुपास्य मया यत् ।
ह्रीर्न चेद्व्यतियतामपि तद्वः
सा ममापि सुतरां न तदस्तु ॥ ११३॥

अर्थिता इति ॥ मया यूयम् अन्वहं प्रतिदिनमुपास्य पूजां विधाय प्रथमत आदावेव दमयन्तीम् अर्थिता याचिताः, तद्भैमीयाचनं व्यतियतामतिक्रमतामपि मां प्रति याचने भैमीयाचनव्यत्ययं कुर्वतां वो युष्माकं ह्रीश्चेत् नास्ति तत्तर्हि सा लज्जा ममापि सुतरां नास्तु मा भूत् । अतो मयापि भवन्तो भैमीं याचितुं योग्याः 'यत्रोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥' इति न्यायात् । 'अप्रधाने दुहादीनाम्–' इति वचनादप्रधाने कर्मणि 'अर्थिताः' इति निष्ठा । व्यतियताम् कर्मव्यतिहारे सत्यपि ' न गतिहिंसार्थेभ्यः १।३।१५' इति आत्मनेपदनिषेधात्कर्तरीणः शतो ॥ ११३ ॥

कुण्डिनेन्द्रसुतया किल पूर्वं
मां वरीतुमुररीकृतमास्ते ।
व्रीडमेष्यति परं मयि दृष्टे
स्वीकरिष्यति न सा खलु युष्मान् ११४

किं च—

कुण्डिनेन्द्रेति ॥ कुण्डिनेन्द्रसुतया भैम्या पूर्वं किल आदावेव मां वरीतुमुररीकृतमङ्गीकृतमास्ते किल श्रूयते वा । सा भैमी दूत्यार्थं गते मयि दृष्टे सति परं केवलं सात्विकभाववशाद्व्रीडं लज्जामेष्यति प्राप्स्यति । युष्मान् खलु निश्चयेन स्वीकरिष्यति । मय्यनुरागवशान्मम प्राप्तीत्यभवद्दूकथाकर्णनमपि कुतस्त्यमिति भावः। वामनाचार्यवचनाद्व्रीडशब्दः पुंलिङ्गो घजन्तोऽपि । 'व्रीडमावहति मे' इति रघौ 'व्रीडादिवाभ्यासगतैः' इति माघे महाकविप्रयोगदर्शनात् । उररीकृतम्, भावे क्तः ॥ ११४॥

तत्प्रसीदत निधत्त न खेदं
दूत्यमत्यसदृशं हि ममेदम् ।
हास्यतैव सुलभा न तु साध्यं
तद्विधित्सुभिरनौपयिकेन ॥ ११५ ॥

तदिति ॥ हि यस्मात्पूर्वोक्तप्रकारेण इदं दूत्यं मम अत्यसदृशमतितरामनुचितम् । तत्तस्मात्प्रसीदत ममोपरि प्रसन्ना भवत, खेदमनेनास्मद्वचो न कृतमिति चित्ते दुःखं मा कुरुत । अनौपयिकेनानुपायेन तद्दूत्यं विधित्सुभिर्विधातुमिच्छद्भिर्भवद्भिर्हास्यतैवोपहास्यत्वमेव सुलभा न तु भैमीरूपं साध्यं सुलभम् । मदन्येन साध्यं साधनीयमित्यर्थः ॥ ११५ ॥

ईदृशानि गदितानि तदानीमाकलय्य स नलस्य बलारिः ।
शंसति स्म किमपि स्मयमानः
स्वानुगाननविलोकनलोलः ॥ ११६ ॥

ईदृशानीति ॥ स बलारिरिन्द्रस्तदानीं तस्मिन्समये नलस्य इति पूर्वोक्तानि गदितानि वचनान्याकलय्य विचार्य उपहासार्थं किमपिपद्धसन् शंसति स्म बभाषे । किंभूतः—अङ्गीकृतमपि पुनरनेन त्यज्यते—इति पश्यतेति विज्ञापनार्थं स्वानुगानामग्न्यादीनामाननविलोकने लोलैः ॥ ११६ ॥

---

१ भवद्भिरिवेत्युपमा । २ अत्र काव्यलिङ्गम् ।

१ अत्रानुप्रासः । २ अत्रानुप्रासः । ३ अत्रानुप्रासः शब्दालङ्कारः ।

नाभ्यधायि नृपते भवतेदं
रोहिणीरमणवंशभुवैव ।
लज्जते न रसना तव वाम्या-
दर्थिषु स्वयमुरीकृतकाम्या ॥ ११७ ॥

नेति ॥ हे नृपते नल, रोहिणीरमणस्य चन्द्रस्य वंशे भवतीति भूस्तेन पुरुषेणैव भवता इदं 'सेयमुच्चतरता—' ( ५।१०४ ) इत्यादि 'कुण्डिनेन्द्रसुतया—( ५।११४ ) इतिपर्यन्तं नाभ्यधायि नोक्तम् । चन्द्रकुलोत्पन्नो ह्यङ्गीकरोत्येव, अङ्गीकृतं च परिपालयत्येव, त्वया तु सोमवंशोत्पन्नेनाप्यङ्गीकृतमसोमवंश्येनेव न परिपाल्यत इत्यर्थः । अर्थिषु याचकेषु 'जीवितावधि किमल्पधिकं वा—'(५।९७)इत्यादिना स्वयमात्मनैवोरीकृतमङ्गीकृतं काम्यं याचकाभिलषणीयं यया एवंविधा तव रसना जिह्वा वाम्याद्वक्रत्वादङ्गीकृतस्यापरिपालनाद्धेतोर्न लज्जते लज्जां न प्राप्नोति, अपि तु अङ्गीकृतपरित्यागाल्लज्जा प्राप्तुमुचिता । अनयाऽङ्गीकृतं त्वया परिपालनीयमेवेत्यर्थः । अथ च, इदं रोहिणी गौस्तस्या रमणो बलीवर्दः, तत्कुलोत्पन्नेन बलिवर्देनेव त्वया नोक्तम् । यो ह्युक्तं न करोति स गोसदृशो मूर्खः पशुश्च; त्वमपि तादृश इत्यर्थः । बलीवर्दोऽपि जिह्वया भाक्षितस्य तृणादेर्वमनान्न लज्जते, एवं तव जिह्वा वाम्यान्न लज्जते तस्मात्त्वमपि बलीवर्दोऽसीत्युपहासः । वामस्य भावो वाम्यं ष्यञ् । पक्षे वमनं वमिः,वमिरेव वाम्यं,चातुर्वर्ण्यादित्वात्ष्यञ् ॥ ११७ ॥

भङ्गुरं न वितथं न कथं वा
जीवलोकमवलोकयसीमम् ।
येन धर्मयशसी परिहातुं
धीरहो चलति धीर तवापि ॥ ११८ ॥

भङ्गुरमिति ॥ हे धीर, त्वम् इमं जीवलोकं प्राणिसङ्घं भङ्गुरं स्वयमेव नश्वरं कथं न अवलोकयसि बुध्यसे । वितथमलीकं वा कथं न बुध्यसे, अपि तु त्वया एवं ज्ञेयम् । अहं जानामीत्यत आह—येनानवबोधलक्षणेन कारणेन धार्मिकस्यातिधीरस्यापि तव धीर्बुद्धिरभङ्गुरावितथे अपि धर्मयशसी पुण्यकीर्ती परिहातुं चलति तरला भवति । त्यक्तुमीहत इत्यर्थः । अहो इत्याश्चर्ये । नश्वरालीकप्राणिहेतोरनश्वरानलीके धर्मयशसी त्वया न हातव्ये इत्यर्थः ॥ ११८ ॥

कः कुलेऽजनि जगन्मुकुटे वः
प्रार्थकेप्सितमपूरि न येन ।
इन्दुरादिरजनिष्ट कलङ्की
कष्टमत्र स भवानपि मा भूत् ॥ ११९ ॥

क इति ॥ येन प्रार्थकेप्सितं याचकाभिलषितं नापूरि न पूरितमेतादृक् कः पुरुषो जगन्मुकुटे लोकालंकरणभूते वः कुलेऽजनि प्रसूतः, अपि तु न कोऽपि । अत्र कुले आदिर्वंशादिरिन्दुःकलङ्की अजनिष्ट जातः । कष्टं स प्रसिद्धो भवानपि कलङ्की माभूत् । अङ्गीकृतत्यागात्त्वं कलङ्की भविष्यसि ततश्चोभाभ्यामपि कुलं मलिनीकृतं स्यादित्युपहासः । तस्माद्यथा कुलस्य कलङ्को न भवति तथ कार्यमिति भावः ॥ ११९ ॥

याऽपदृष्टिरपि या मुखमुद्रा
याचमानमनु या च न तुष्टिः ।
त्वादृशस्य सकलः स कलङ्कः
शीतभासि शशकः परमङ्कः ॥ १२० ॥

पूर्वं द्वाभ्यामपि कुलं कलङ्कितामित्युक्तम्,इदानीं त्वय्येवेत्याह—

यापेति ॥ याचमानं याचकमनु लक्षीकृत्य वा अपदृष्टिरनादरदर्शनम्,अदर्शनं वा या च मुखमुद्रा मौनं,या च नतुष्टिरसंतोषः, स सकलः समस्तस्त्वादृशस्य वदान्यस्य, धीरस्य च कलङ्कोऽपयशः । शीतभासि चन्द्रे परं केवलं शशकोऽङ्कश्चिह्नम् । चन्द्रे कलङ्को न, किं तु चिह्नं शशः। तस्मादपदृष्ट्यादि त्वया न करणीयामिति भावः । शशकः, 'अल्पे' इति कन् ॥ १२० ॥

नाक्षराणि पठता किमपाठि
प्रस्मृतः किमथवा पठितोऽपि ।
इत्थमर्थिचयसंशयदोला-
खेलनं खलु चकार नकारः ॥ १२१ ॥

नाक्षराणीति ॥ हे नल, अक्षराणि बाल्ये मातृकां पठता त्वया नकारः 'न' इत्ययं शब्दो नापाठि किं

---

१ अत्र परिकरः,उपमा तु कल्पनीयैवेति बोध्यम् ।

१ अत्रानुप्रासो यमकं च । काव्यलिङ्गं चार्थालङ्कारः । २ अत्रानुप्रासः शब्दालङ्कारः परिकरः पुनरर्थालंकारः । ३ अनुप्रासः।शशांकोऽपि न भवानिवेति व्यतिरेको व्यङ्ग्यः।

नाधीतः किम् । अथवा पठितोऽपि नकारः प्रस्मृतो विस्मृतः किम् । नकार इत्थमेवम् अर्थिचयस्य याचकसमूहस्य संशय एव दोला द्विकोट्यवलम्बना तस्यां खेलनं क्रीडनं चकार । खलूत्प्रेक्षायां, निश्चये वा । त्वया पूर्वं याचकाभिलापे नेति कदाऽपि नोक्तमद्यापि न वक्तव्यमिति भावः ॥ १२१ ॥

अब्रवीत्तमनलः क्व नलेदं
लब्धमुज्झसि यशः शशिकल्पम् ।
कल्पवृक्षपतिमर्थिनमित्थं
नाप कोऽपि शतमन्युमिहान्यः ॥१२२

अब्रवीदिति ॥ अनलोऽग्निस्तं नलमब्रवीत्—हे नल, त्वं शशिकल्पं चन्द्रप्रभमिदमेवंविधं लब्धं करस्थितं यशः क्व हेतोरुज्झसि त्यजसि । इदं किम्—इह भूलोके अन्यो नलादन्यः कोऽपि कल्पवृक्षस्य पतिं शतमन्युं शतक्रतुमित्थं पूर्वोक्तप्रकारेण अर्थिनं याचकं नाप न प्राप्तवान् । सर्वाभिलापकरः कल्पवृक्षोऽपि यद्वशगः, यश्च शतयज्ञकारी, तमिन्द्रं याचकं नल एवं प्राप्तवान्नान्य इति यशो न त्याज्यम् इति कल्पवृक्षोऽपि यन्मनोरथं पूर्णं कर्तुं न समर्थोऽभूत्, त्वं तु समर्थः । शतमन्युरिति पात्रत्वं सूचितम् ॥ १२२ ॥

न व्यहन्यत कदाऽपि मुदं यः
स्वःसदामुपनयन्नभिलापः ।
तत्पदे त्वदभिषेककृतां नः
स त्यजत्वसमतामदमद्य ॥ १२३ ॥

नेति ॥ अभीष्टसाधनात्स्वःसदां देवानां मुदं हर्षमुपनयञ्जनयन् योऽभिलापः कदाऽपि केनापि न व्यहन्यत व्यर्थीकृतः । तत्पदे अभिलापस्थाने त्वदभिषेकस्य नवदभिषेकस्य स्वाभीष्टसाधनाय कृतां तं कुर्वतामित्यर्थः,नोऽस्माकं सोऽभिलापो मादृशः कामपूरणसमर्थोऽन्यो न विद्यत इत्यसमतामदं असाम्यविषयगर्वम् । अद्य त्यजतु । कामपूरणे त्वमेव समर्थ इत्यर्थः । नच वयमितःपरमेवं दत्ता भविष्याम इति भावः व्यहन्यत, कर्मणि तङ् कर्मकर्तरि वा ॥ १२३ ॥

१ अत्रानुप्रासः ।२अत्रानुप्रासः । शशिकल्पमित्युपमा । कल्पवृक्षपतित्वेऽप्यर्थित्वं विरुद्धमित्यपेस्तद्द्योतकस्याप्रयोगात् प्रतीयमानो विरोधाभासः । २ अत्र नलाभिलाप–देवाभिलापयोरुपमानोपमेयभावबोधनादुपमा व्यज्यते ।

अब्रवीदथ यमस्तमहृष्टं
वीरसेनकुलदीप तमस्त्वाम् ।
यत्किमप्यभिबुभूपति तत्किं
चन्द्रवंशवसतेः सदृशं ते ॥ १२४ ॥

अब्रवीदिति ॥ अथ यमो भैमीप्राप्तिविघ्नसंभावनयाऽहृष्टं दुःखितं तं नलमब्रवीत्— हे वीरसेनकुलस्य दीप प्रकाशक नल ! तमो भैम्यप्राप्त्यसंभावनजन्यं दुःखं यत् त्वां किमपि अल्पमनिर्वाच्यं वाऽभिबुभूपत्याभिभवितुमिच्छति तत् चन्द्रवंशवसतेश्चन्द्रवंशोत्पन्नस्य ते तव किं सदृशमुचितम् ? अपि त्वयुक्तम् । चन्द्रवंशोत्पन्नो हि प्राणानपि ददाति, तदुत्पन्नेन त्वयापि तथैव भवितव्यं, न त्वन्यथेति भावः । अथ च दीपरूपं त्वां यदन्धकारमभिबुभूपति तचन्द्रवंशवसतेस्ते किमुचितम् ? अपि त्वनुचितम् । दीपस्य तमसाऽभिभवो न युक्तः, तत्रापि चन्द्रवंशवसतेः चन्द्रस्यान्धकारेणाभिभवो न युक्तः, अतस्तद्वंशोत्पन्नस्य तवापि तस्मात्पराभवो न युक्त इत्युपहासः ॥ १२४ ॥

रोहणः किमपि यः कठिनानां
कामधेनुरपि या पशुरेव ।
नैनयोरपि वृथाऽभवदर्थी
हा विधित्सुरसि वत्स किमेतत् ॥ १२५ ॥

रोहण इति ॥ कठिनानां निष्ठुराणां पाषाणादीनां मध्ये यः किमपि लोकोत्तरो निष्ठुरो रोहणो विदूरोऽद्रिः मेरुः, अथ च निष्कृपाणां कृपणानां मध्ये लोकोत्तरः कृपणो यो विदूराचलः, याऽपि कामधेनुः साऽपि पशुरेव गौरेव, अज्ञैव च, एनयो रोहणकामधेन्वोरपि सम्बन्धी अर्थी याचको वृथा निष्फलो नाभवत्, किं तु सफलो जातः । एनयोर्विषयो वा । कष्टं, हे वत्स, किमेतत् अर्थिप्रातिकूल्यं विधित्सुश्चिकीर्षुरसि । अचेतनेषु कृपणावधिः कठिनावधिश्च रोहणः, चेतनेषु पश्चवाधिर्मूर्खावधिश्च कामधेनुः, ताभ्यामप्यर्थिनेऽभीष्टं दीयते । त्वं तु मृदुचित्तो बुधोऽपि, ततो देयमेवेति भावः । किमिति सामान्यनिर्देशान्नपुंसकत्वम् । एनयोः, अन्वादेश एनादेशः । रोहणो वैदूर्यः पर्वतो वा ॥ १२५ ॥

१ अत्र तम इति यमकम् । दीपेति रूपकम् ।२ अत्रानुप्रासः ।

याचिताश्चिरयाति क नु धीरः
प्राणने क्षणमपि प्रतिभूः कः ।
शंसति द्विनयनी दृढनिद्रां
द्राङ्गनिमेषमिषघूर्णनपूर्णा ॥ १२६ ॥

याचित इति ॥ धीरो याचितः सन् क नु कुतः चिरयाति कालविलम्बं करोति, अपि तु न । कुतः—क्षणमपि मुहूर्तमात्रमपि प्राणने जीवने कः प्रतिभूर्लग्नकः, अपि तु न कोऽपि । अथ च को ब्रह्मा प्रतिभूः विध्यधीनं जगत् । को ब्रह्मा प्रतिभूरिति काकुर्वा । तत्कुतः—द्राग् झटिति निमेषमिषेण नेत्रसंकोचव्याजेन घूर्णनेन तन्द्रया पूर्णा द्विनयनी दृढनिद्रां मरणं कथयति । द्रागदृढनिद्रामिति वा । यावता कालेन पुनरपि निमेषो भवति तावत्येव काले मरणं भवतीति निमेषतुल्यं मरणम्, तस्माद्विदुषा त्वया विचारितं शीघ्रमेव दातव्यम्, मरणस्य शीघ्रप्राप्तिभयात् । अतिनिद्रितोऽपि घूर्णते ॥ १२६ ॥

अभ्रपुष्पमपि दित्सति शीतं
सार्थिना विमुखता यदभाजि ।
स्तोककस्य खलु चञ्चुपुटेन
म्लानिरुल्लसति तद्घनसङ्घे ॥ १२७ ॥

अभ्रेति ॥ स्तोककस्य चातकस्यार्थिना याचकेन चञ्चुपुटेन सा प्रसिद्धा विमुखता पराङ्मुखत्वं यदभाजि आश्रिता तत्खलु तस्मादेव हेतोः, तस्मादिव हेतोरित्युत्प्रेक्षा वा । म्लानिः चातकवैमुख्यजनिताऽकीर्तिः घनसङ्घे मेघसमूहे उल्लसति शोभते । किंभूते घनसङ्घे—शीतं शीतलमभ्रपुष्पं जलं दित्सति दातुमिच्छति सति अपि । चातकेन याचिते जले कालविलम्बान्मेघानां श्यामत्वलक्षणमपयशो जातमिति भावः । अथ च—स्तोक एव स्तोककोऽतिनिकृष्टः तस्यार्थिना मुखेन पराङ्मुखत्वं यदाश्रितम्, तत्तस्मात् मेघतुल्ये पुरुषे म्लानिरुल्लसति।यतः शीतलं दारिद्र्यहारि अभ्रपुष्पमपि खपुष्पतुल्यमपि वस्तु दातुमिच्छतः परं विलम्बकारिणो वदान्यस्यापि जीवितपर्यन्तमयशो भवति, किं पुनरिन्द्रादीनां पराङ्मुखत्वेन, तस्मात्त्वया शीघ्रमेव देयमिति भावः । पक्षिणोऽपि विमुखतया मेघेऽपि म्लानिरुल्लसति, किं पुनरन्यत्रेत्यर्थः । तस्मादिन्द्रादीनां तत्त्वतो विमुखत्वेऽयशो भावि इति किं वक्तव्यमिति भावः, 'मेघपुष्पं घनरसः' इत्यमरः ॥ १२७ ॥

ऊचिवानुचितमक्षरमेनं
पाशपाणिरपि पाणिमुदस्य ।
कीर्तिरेव भवतां प्रियदारा
दाननीरझरमौक्तिकहारा ॥ १२८ ॥

ऊचिवानिति ॥ पाशपाणिरपि वरुणोऽपि पाणिमुदस्योद्यम्य एनं नलमुचितमक्षरं वचनमित्यूचिवान् । इति किम्—भवता भवादृशां राज्ञां दाने क्रियमाणे यो नीरझरो जलप्रवाहः स एव मौक्तिकहारो यस्याः सा कीर्तिरेव प्रियदाराः प्रेयस्यः स्त्रियः, न तु राजकन्याः, ततः कीर्तिरेव त्वयोपार्जनीया, नाकीर्तिः । पाणिमुदस्येति याचकजातिः ॥ १२८ ॥

चर्म वर्म किल यस्य न भेद्यं
यस्य वज्रमयमस्ति च तौ चेत् ।
स्थायिनाविह न कर्णदधीची
तन्न धर्ममवधीरय धीर ॥ १२९ ॥

चर्मेति ॥ यस्य कर्णस्य चर्म त्वक् न भेद्यमभेद्यं वर्म कवचं किल श्रुतौ । येन कवचनिर्माणार्थं त्वग्दत्ता, यस्य च अस्थि वज्रमयम्, वज्रनिर्माणार्थं येन दधीचिना स्वीयमस्थि दत्तं, तौ एवंविधौ वदान्यौ कर्णदधीची अपि इह भूलोके चेद्यस्मात्स्थायिनौ, न किंतु मृतावेव । तत्तस्मात् हे धीर प्राज्ञ, त्वं धर्मं नावधीरय मावज्ञासीः । धर्म एव स्थिरतरो नतु स्त्र्यादिसुखं चेति भावः । कर्णो यद्यपि न नलात् प्रागभूत्, यत्तं दृष्टान्तीकृत्य नलं प्रति वरुण एवं गदितुं क्षमेत, तथाऽपि कल्पान्तरभेदमादाय कथञ्चित्समाधेयम् । वस्तुतस्तु कविनैव प्रमादात् पौर्वा-

---

१ अत्रानप्रासः । निमेषमिवेत्यपह्नुतिः ।

१ स्वतः सिद्धां म्लानिमपह्नुत्य दानविलम्बोत्पादितत्वेन तत्सम्भावनादपह्नुतिः, किंत्वसौ व्यङ्ग्यः । जडे घनसङ्घे चेतनधर्मभूताया म्लानेरसम्भवेऽपि सम्भवोक्तिः कविनिबद्धप्रौढत्वमूला । नचोत्प्रेक्षा, यथाऽऽहुर्व्याख्यातारः, यत्तदोरुद्देश्यविधेयभावापेक्षयैव प्रयुक्तत्वात् । अस्तु वा श्लेषमुपजीव्योत्प्रेक्षाऽपीति । मेघपुष्पमित्येव रूढं, नत्वभ्रपुष्पमित्यपीति तत्प्रयोगान्नेयार्थात्वमित्यपि बोध्यम् । २ अत्रानुप्रासः, रूपकं च ।

पर्य्यं विस्मृत्य प्रयुक्तामिति तथा प्रयोगे दुष्ट एव। एवं पुरस्तादपि बोध्यम् ॥ १२९ ॥

अद्य यावदपि येन निबद्धौ
न प्रभू विचलितुं बलिविन्ध्यौ।
आस्थितावितथतागुणपाश-
स्त्वादृशा स विदुषा दुरपासः ॥ १३० ॥

अद्येति ॥ येन सत्यप्रतिज्ञत्वगुणलक्षणेन पाशेन निबद्धौ बलिविन्ध्यौ दैत्याचलौ अद्य यावदपि एतावन्तमपि कालं विचलितुं प्रतिज्ञातमनिर्वोढुं न प्रभू समर्थौ न जातौ, किं तु ताभ्यामङ्गीकृतं यद्वशेन परिपालितम्। एकः पाताले स्थितः, अन्यश्च यद्वशेन न वर्धत इत्यर्थः। स आस्थितत्याङ्गीकृतस्यावितथता सत्यता तल्लक्षणो गुणः सूत्रं च तल्लक्षणः पाशो रज्जुः सत्यवादितागुणः त्वादृशा त्वद्विधेन विदुषा पण्डितेन दुरपासो दुर्लङ्घ्यः। अङ्गीकृतं परिपालयेत्यर्थः। दैत्यपाषाणाभ्यामप्यङ्गीकृतं सत्यं कृतम्, अतस्त्वयाङ्गीकृतं निर्वोढव्यमिति भावः १३०

प्रेयसी जितसुधांशुमुखश्री-
र्या न मुञ्चति दिगन्तगताऽपि।
भङ्गिसङ्गमकुरङ्गदृगर्थे
कः कदर्थयति तामपि कीर्तिम् ॥ १३१ ॥

प्रेयसीति ॥ प्रेयसी प्रियतमा तथा—जिता तिरस्कृता उज्ज्वलत्वात्सुधांशुमुखानां सुधांशुश्चन्द्रस्तत्प्रमुखानां तारकाऽऽदीनां श्रीः शोभा धवलिमा यया, जिता चन्द्रप्रारम्भशोभा यया, इत्येवंविधा वा, प्राणेश्वरी च जितचन्द्रा मुखश्रीर्यस्या एवंविधा, या कीर्तिः दिगन्तगताऽपि सुदूरं प्राताऽपि स्वमिति शेषः। न मुञ्चति-त्यजति, किंतु स्वप्रेयां-समनुमोदयत्येवेति भावः। तामेवंविधामपि कीर्तिं भङ्गी विनश्वरः संगमो यस्याः सा भङ्गिसंगमा एवंभूता कुरङ्गदृक् मृगाक्षी तस्या अर्थे निमित्तम्, अथ च—कुत्सितो रङ्गो रचना यस्या एवंविधा दृग् यस्याः तत्कृते कः कदर्थयति पीडयति, अपि तु नित्यां कीर्तिं विहायानित्यां प्रेयसीं कोऽपि न वाञ्छति। तस्मात्कीर्तिरेव त्वयाप्युपार्जनीयेति भावः। अथ च—कलिप्रभावाङ्गिसङ्गमत्वं भैम्याः सूचितम्। अन्योऽपि दुष्टसपत्न्याः कृते गुणवतीं पत्नीं न पीडयति। स्त्रियः कृते कीर्तिर्न त्याज्येत्यर्थः। कुत्सितो दुःखरूपोऽर्थः कदर्थः, कोः कदादेशे अर्शआद्यचि मतुपि वा तद्वर्ती करोतीति णिचि 'णाविष्ठवत्—' इति टिलोपे मतुल्लोपे वा पीडयतीति तात्पर्यार्थः। एवं कदर्थनात्यर्थतयेत्यादावपि ज्ञेयम् ॥ १३१ ॥

यान्वरं प्रति परेऽर्थयितार-
स्तेऽपि यं वयमहो स पुनस्त्वम्।
नैव नः खलु मनोरथमात्रं
शूर पूरय दिशोऽपि यशोभिः ॥ १३२ ॥

यानिति ॥ परे अन्ये पुरुषा यानस्मान्प्रत्युद्दिश्य वरमभीष्टमर्थयितारो याचनशीलाः, वरमुद्दिश्यास्मानर्थयितार इति वा, तेऽपि वयं यं त्वामर्थयितारः। अहो आश्चर्यम्। येऽन्यस्मै वरं दातुं समर्थास्ते वयं तव याचका जाताः। स एवंभूतस्त्वं पुनः शूर दानशूर नल! खलु निश्चितं नोऽस्माकं मनोरथमात्रं केवलं मनोरथं पूरय परिपूर्णं कुर्विति नैव, किं तु इन्द्रादयोऽपि यस्यार्थिनो जाता इति यशोभिः दिशोऽपि दिगन्तानपि पूरय। अस्मन्मनोरथपूरणेन तव महती कीर्तिर्भविष्यतीति भावः। 'यान्परम्' इति पाठे अन्ये यानस्मान्प्रति परं केवलमर्थयितारो न तु दातार इत्यर्थः। अर्थयितारः, ताच्छील्ये तृन् ॥ १३२ ॥

अर्थितां त्वयि गतेषु सुरेषु
म्लानदानजनिजोरुयशःश्रीः।
अद्य पाण्डु गगनं सुरशाखी
केवलेन कुसुमेन विधत्ताम् ॥ १३३ ॥

अर्थितामिति ॥ सुरशाखी कल्पतरुः सुरेषु त्वयि विषयेऽर्थितां याचकतां गतेषु सत्सु म्लाना विनष्टप्राया दानजा स्वीया सहजा वा उर्वी महती यशःश्रीः यस्यैवंभूतः सन् अद्य केवलेन कीर्तिरहितेन कुसुमेन पुष्पेण कृत्वा गगनं पाण्डु श्वेतं विधत्तां करोतु। एतावन्तं कालं कीर्तिपुष्पाभ्यां श्वेतं कृतं, त्वया कीर्तेरपहृतत्वात्केवलेन पुष्पेणेति भावः ॥ १३३ ॥

---

१ अत्र यमकमनुप्रासश्च। २ अत्रानुप्रासः। प्रतिज्ञातपरिपालनस्य पाशरूपेणोक्तेः रूपकम्।

१ जितेत्यादौ व्यतिरेकः, प्रेयसीत्यादौ च व्यतिरेकः। दिगन्तगमने सङ्गासम्भवात् कृतेप्रयस्यागतत्वस्य सिद्धत्वेऽपि तथोक्तिर्विरुद्धेवेति विरोधाभासश्च। २ अत्रानुप्रासः। ३ अनुप्रासः।

**प्रवसते भरतार्जुनवैन्यव-**
**त्स्मृतिधृतोऽपि नल त्वमभीष्टदः।**
**स्वगमनाफलतां यदि शङ्कसे**
**तदफलं निखिलं खलु मङ्गलम्॥१३४॥**

'हास्यैतव सुलभा, न तु साध्यम्' इत्यस्योत्तरमाह—

प्रवसत इति ॥ हे नल ! भरतार्जुनवैन्यवत् भरतः शाकुन्तलेयः, अर्जुनः कार्तवीर्यः, पृथुर्वैन्यः तद्वत्स्मृतिधृतः स्मृतिगोचरः स्मृत इत्यर्थः । एवंभूतोऽपि नलः प्रवसते देशान्तरगामिने पुरुषायाभीष्टं ददातीत्यभीष्टदः स त्वं स्वगमनस्य अफलतां नैष्फल्यं यदि शङ्कसे संभावयसि तत्तर्हि निखिलं समस्तं वैन्यादिस्मरणलक्षणं मङ्गलं शकुनादि च त्वद्दृष्टान्तेन खलु निश्चितमफलं निष्फलम् । 'वैन्यं पृथुम्—' इत्यादीनां स्मरणस्यापि वैयर्थ्यप्रसङ्गात्स्वगमननैष्फल्यं त्वया नाशङ्कनीयम्, अतो गच्छेत्यर्थः । भरतादिवत्त्वयीति वा । भरतादेरभ्यर्हितत्वात्पूर्वनिपातः ॥ १३४ ॥

**इष्टं नः प्रति ते प्रतिश्रुतिरभूयाद्य स्वराह्लादिनी—धर्मार्था सृज तां श्रुतिप्रतिभटीकृत्यान्विताख्यापदाम् । त्वत्कीर्तिः पुनती पुनस्त्रिभुवनं शुभ्राद्वयोदेशना—द्रव्याणां शितिपीतलोहितहरिन्नामान्वयं लुम्पतु ॥१३५॥**

इष्टमिति ॥ हे नल ! नोऽस्माकं इष्टमाकाङ्क्षितं प्रत्युद्दिश्य स्वराह्लादिनी अस्मदाह्लादनात्स्वर्गानन्ददायिनी स्वरेणाङ्गीकारसूचकमधुरस्वरेण वाऽऽनन्दिनी तथा—धर्मार्था धर्मप्रयोजनिका या तव प्रतिश्रुतिः 'जीविताविधि किमप्यधिकं वा'( ५।९७ ) इत्यादिका प्रतिज्ञाऽभूज्जाता तां प्रतिश्रुतिमद्येदानीं सत्यत्वेन श्रुतिप्रतिभटीकृत्य वेदसदृशीं कृत्वा अन्वितं श्रुतेः प्रतिभटा प्रतिश्रुतिरिति, सार्थकमाख्यापदं संज्ञापदं यस्या एवंभूतां सृज कुरु । सत्यां कुर्वित्यर्थः । श्रुतिप्रतिभटत्वे हि प्रतिश्रुतिशब्दः सार्थको भवति । सत्यत्वेन स्वीयं वचनं श्रुत्यन्तरं कुर्वित्यर्थः । अङ्गीकृतं परिपालयेति भावः । पुनः प्रतिज्ञासिद्धौ सत्यां त्रिभुवनं त्रिलोकीं पुनती पुनाना, अथ च उज्ज्वलं कुर्वाणा त्वत्कीर्तिः शुभ्रस्य श्वेतस्य अद्वयमद्वैतं तस्यादेशनात्करणाद् द्रव्याणां वस्तूनां शितिपीतलोहितहरितां कृष्णगौररक्तनीलानां वर्णानां नाम संज्ञा तस्य अन्वयः संबन्धः, तं लुम्पतु विनाशयतु । सर्वस्य त्रिलोकस्य श्वेतीकरणात्कृष्णादिवर्णाभावो भवत्वित्यर्थः । प्रतिज्ञातपरिपालनाल्लोकत्रयेऽपि तवातिनिर्मलं यशः प्रसरिष्यतीति भावः । कर्मप्रतिपादिका श्रुतिरपि इष्टं यागमुद्दिश्य प्रवर्तते । स्वरैरुदात्तादिभिः, अः अकार आद्यो येषां ते आद्याः स्वरा अचस्तैर्वा,कर्मफलभूत आद्यः प्रथमभोक्तव्यः स्वः स्वर्गः—तेन वाऽऽनन्ददायिनी। तथा—'चोदनालक्षणोऽर्थो धर्मः' इति वाक्यप्रतिपादितस्य धर्मस्य वेदैकगम्यत्वोक्तेर्धर्मो र्थोऽभिधेयं वाक्यार्थो वा यस्याः सा धर्मप्रतिपादिनी। तथा—श्रूयत इति श्रुतिरित्यान्वितमनुगतार्थमाख्यापदं नामपदं यस्या एवंभूता च । अथ च—प्रतिश्रुतिः प्रतिवचनरूपम् 'अस्तु श्रौषट्' इत्यादिवाक्यं सापि इष्टं यागं प्रति भवति, स्वरैरुदात्तादिभिराह्लादिनी च भवति। अथ च—त्वत्कीर्तिरूपा ब्रह्मप्रतिपादिका श्रुतिः, त्वया कीर्त्यमाना सदा पठ्यमाना वा वेदान्तश्रुतिः श्रवणमननादिद्वारा त्रैलोक्यं पवित्रं कुर्वाणा, यद्वा—सत्त्वरजस्तमोरूपेभ्यस्त्रिभ्यो गुणेभ्यो भवतीति त्रिभ्यो भूरुत्पत्तिर्यस्येति वा त्रिभु । सृष्ट्याद्यवस्थात्रयसहितत्वमिति यावत्। तच्च तद्वनं चातिगहनं संसाराख्यम् । पृथग्वा पदम् । निवृत्तिद्वारा पुनाना शुभ्रस्यातिनिर्मलस्य निर्दोषस्य ब्रह्माद्वैतस्योपदेशाद् द्रव्याणां दृश्यपदार्थानां कृष्णपीतादिनामसंबन्धं लुम्पति । 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतेः 'एकमेवाद्वितीयं ब्रह्म' इत्यादिवचनाद्घटादेर्मिथ्यात्वसाधनान्नामादिविकारं निराकरोतीति ध्वनिः । धर्मार्थामिति कचित् । इष्टम्, 'इषु इच्छायाम्' अस्माद्यजेश्च कर्मणि भावे च क्तः । यजेः सम्प्रसारणं पत्वष्टुत्वे च । इष्टिमित्यमरादयः सर्वेऽपि व्याचक्षते 'इष्टिर्यागेच्छयोः' इत्यादिना, तत्तु शिष्टप्रयोगाज्ज्ञातव्यम् । विशेषस्तु ग्रन्थविस्तरभयान्न लिख्यते । 'इष्टम्' इत्येव पाठः साधीयानित्यलम् ॥ १३५ ॥

---

१ अत्र द्रुतविलम्बितं वृत्तम् । अत्रानुप्रासः शब्दालङ्कारः ।

१ अत्र शार्दूलविक्रीडितं वृत्तम्, अनुप्रासो यमकं च शब्दालङ्कारौ । श्लेषोऽतिशयोक्तिश्चार्थालङ्कारौ । त्रिभुवनपावनक्षमताया गङ्गायामेव सम्भवात् तया साम्यमनुक्त्वाऽपि तत्प्रत्यायनादुपमा प्रत्याय्या,अभेदविवक्षायां तु रूपकमिति वयम् । जीवातुकारास्तु ' नीलादिवस्तूनां स्वगुणत्यागेन तत्कीर्तिगुणग्रहणात्तद्गुणालङ्कारः ।' तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः ।' इति लक्षणात् ।' इति तद्गुणमप्युपदिशन्ति ।

यं प्रासूत सहस्रपादुदभवत्पादेन खञ्जः कथं स च्छायातनयः सुतः किल पितुः सादृश्यमन्विच्छति । एतस्योत्तरमद्य नः समजनि त्वत्तेजसां लङ्घने—साहस्रैरपि पङ्गुरङ्घ्रिभिरभिव्यक्तीभवन्भानुमान् ॥ १३६ ॥

यमिति ॥ सहस्रपात्सहस्रचरणः अथ च सहस्रकिरणः सूर्यः यं प्रासूत प्रसूतवान् स छायानाम्न्याः सूर्यपत्न्याः तनयः पुत्रः शनैश्चरः पादेन चरणेन पङ्गुः कथमुदभवज्जातः । सहस्रचरणस्य पुत्रेण सहस्रचरणेन भावितव्यम्, अस्य तु नैकोऽपीति । किल यस्मात्सुतः पितुः सादृश्यमन्विच्छति । 'कारणगुणा हि कार्यगुणानारभन्ते' इति न्यायात्, तत्तस्माच्छनैश्चरस्यैकोऽपि पादो नास्तीत्येतस्य नोऽस्मदीयप्रश्नस्याद्य भानुमानुत्तरं समजनि जातः । किं कुर्वन्—त्वत्तेजसां लङ्घनेऽतिक्रमणविषये साहस्रैः सहस्रसंख्याकैरप्यङ्घ्रिभिश्चरणैः पङ्गुः पादरहितोऽभिव्यक्तीभवन्प्रकटीभवन् । अतः पितुः पङ्गुत्वात्पुत्रस्यापि पङ्गुत्वं युक्तमेवेत्यर्थः । त्वत्तेजः सूर्यतेजसोऽप्याधिकम्, तस्मात्त्वयास्मदिष्टं साधनीयमिति भावः । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः ।' सहस्रपात् 'संख्यासुपूर्वस्य ५।४।१४०' इति पादस्यान्तलोपः । पादेन । खञ्जः, अङ्घ्रिभिः पङ्गुरिति 'येनाङ्गविकारः २।३।२०' इति तृतीया । साहस्रैः, 'तदस्य परिमाणम्' ५।१।५७' इत्यर्थे 'शतमानविंशतिकसहस्रवसनादण् ५।१।२७' इत्यण् ॥ १३६ ॥

इत्याकर्ण्य क्षितीशस्त्रिदशपरिषदस्ता गिरश्चाटुगर्भा—वैदर्भीकामुकोऽपि प्रसभविनिहितं दूत्यभारं बभार। अङ्गीकारं गतेऽस्मिन्नमरपरिवृढः सम्भृतानन्दमूचे भूयादन्तर्धिसिद्धिरनुविहितभवच्चित्तता यत्र तत्र ॥१३७॥

इत्याकर्ण्येति ॥ क्षितीशो राजा वैदर्भीकामुकोऽपि भैमीमभिलाषुकोऽपि सन् प्रसभविनिहितं बलादारोपितं दूत्यलक्षणं भारं बभार । किं कृत्वा-इति पूर्वोक्तप्रकारेणोपहासस्यापि कारणाच्चाटुगर्भाः प्रियोक्तियुक्तमध्याः त्रिदशपरिषदो देवसभायाः ताः पूर्वोक्ता गिरो वाणीराकर्ण्य । त्रिदशपरिषदः सकाशाद्वा । अन्योऽपि बलाद्विहितं भारं दुःखेन वहति । अस्मिन्नलेऽङ्गीकारं गते प्राप्ते सति करिष्यामीति तेनाभ्युपगते सति अमरपरिवृढो देवप्रभुरिन्द्रः संभृतानन्दं सानन्दं यथा तथा तं नलं प्रति इत्यूचे । इति किम्—अन्तर्धिसिद्धेः यत्र तत्र सर्वत्र देशे काले अनुविहितमनुसृतं भवच्चित्तं यया तस्या भावोऽनुविहितभवच्चित्तता कार्यसिद्धिः भूयात् । यत्रादृश्यो भवितुमिच्छसि तत्रान्तर्धिसिद्धिर्भूयात्, यत्र नेच्छसि तत्र माभूत् । 'यामिकाननुपमृद्य—' (५।११०) इत्यादि परिहृतमनेन ॥ १३७ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । तस्य श्रीविजयप्रशस्तिरचनातातस्य नव्ये महाकाव्ये चारुणि नैषधीयचरिते सर्गोऽगमत्पञ्चमः ॥ १३८ ॥

श्रीहर्षमिति ॥ पूर्वार्धं पूर्ववदेव । श्रीविजयप्रशस्तिनाम्नो ग्रन्थस्य रचनया तातस्य जनकस्य । सापि तेन रचितेत्यर्थः । नव्ये नूतनप्रमेये चारुणि शोभने पञ्चमः पञ्चानां पूरणः सर्गः समाप्तः । नव्ये स्तुत्यर्हे इति, नुधातोः 'अर्हे कृत्य—' इति अर्हार्थे यदिति व्याख्येयम् ॥ १३८ ॥

इति श्रीवेदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे पञ्चमः सर्गः ॥

---

## षष्ठः सर्गः ।

दूत्याय दैत्यारिपतेः प्रवृत्तो
द्विषां निषेद्धा निषधप्रधानम् ।
स भीमभूमीपतिराजधानीं
लक्षीचकाराथ रथस्य तस्य ॥ १ ॥

दूत्यायेति ॥ अथ दूत्याङ्गीकारादनन्तरं दैत्यारयो देवास्तेषां पतिरिन्द्रस्तस्य दूत्याय दूतकर्मणे प्रवृत्त उद्युक्तः द्विषां निषेद्धा परंतपः स निषधप्रधानं निषधदेशानामधिपः भीमनामको भूमिपती राजा तस्य राजधानीं कुण्डिनाख्यां रथस्य स्यदो जवस्तस्य लक्षीचकार । तां प्रति ययावित्यर्थः । चतुर्णां दूत्यकरणे प्रवृत्तावपि

---

१ अत्रानुप्रासः । शनैश्चरस्य पङ्गुत्वहेतोर्नलतेजोऽलङ्घ्यत्वमिति उत्प्रेक्षाऽनुप्राणितातिशयोक्तिः ।

१ अत्र स्रग्धरा वृत्तम्, अनुप्रासः शब्दालङ्कारः ।

प्राधान्यादिन्द्रोपादानम् । इन्द्राद्युपकारार्थं प्रवृत्तः स्वयं परंतपश्चेत्यनेन भीमस्य भयानकस्यापि राज्ञो नगरीं प्रति गमने सामर्थ्यं सूचितम् । प्रधानशब्दः क्लीबे । निषेद्धेति तृच् ॥ १ ॥

भैम्या समं नाजगणद्वियोगं
स दूतधर्मे स्थिरधीरधीशः ।
पयोऽधिपाने मुनिरन्तरायं
दुर्वारमप्यौर्वमिवौर्वशेयः ॥ २ ॥

भैम्येति ॥ स्थिरधीरक्षोभ्यहृदयो दृढबुद्धिः सोऽधीशो नलः निर्विकारत्वलक्षणे दूतधर्मे विषये दुर्वारमपि दुर्लङ्घ्यमप्यन्तरायं विघ्नभूतं भैम्या समं सार्धं वियोगं नाजगणन्मनसि न धृतवान् । कः कमिव— और्वशेयो मुनिरगस्त्यः पयोधिपाने समुद्रपाने दुर्वारमन्तरायरूपमौर्वमिव वडवानलमिव । विकारहेतौ सत्यपि गाम्भीर्यात्स्वीयं स्वयंवरनायकत्वम् दूरे त्यक्त्वा निष्कपटेनाशयेन तेषां दूत्यमङ्गीकृतवानिति भावः । दुष्टं वार्वारि येन दुर्वाः तम्, और्वविशेषणम् । मित्रावरुणयोर्दीक्षितयोरुर्वशीपुत्रः । उरु वहश्नात्युर्वशी तत्पुत्रस्य वहुभोजित्वमेव युक्तमिति च ज्ञेयम् ॥ २ ॥

नलप्रणालीमिलदम्बुजाक्षी
संवादपीयूषपिपासवस्ते ।
तदध्ववीक्षाऽर्थमिवानिमेषा
देशस्य तस्याभरणीबभूवुः ॥ ३ ॥

नलेति ॥ ते देवा यत्र नलदेवानां संवादोऽभूत्तस्य देशस्याभरणीवभूवुः । तत्रैव स्थिता इत्यर्थः । किंभूताः— नलरूपया प्रणाल्या मिलत आगच्छतः अम्बुजाक्ष्या भैम्याः संवादपीयूषस्य रहस्यकथालक्षणस्यामृतस्य पाने साभिलाषास्तदाकर्णनैकपराः । तथा—तदध्ववीक्षार्थं नलमार्गावलोकनार्थमिवानिमेषा निमेषरहिताः । देवत्वात्सहजमप्यनिमेषत्वं, नलोऽनेन मार्गेण भैमीकथाकथनार्थं कदा समागमिष्यतीति नलमार्गप्रतीक्षार्थत्वेनोत्प्रेक्षितम् । नलप्रतीक्षार्थं तत्रैव तस्थुरित्यर्थः ॥ ३ ॥

तां कुण्डिनाख्यापदमात्रगुप्ता-
मिन्द्रस्य भूमेरमरावतीं सः ।
मनोरथः सिद्धिमिव क्षणेन
रथस्तदीयः पुरमाससाद ॥ ४ ॥

तामिति ॥ स तदीयो नलसंबन्धी रथो भूमेरिन्द्रस्य भीमस्य कुण्डिनमित्याख्यापदमात्रेण संज्ञापदेनैव गुप्तां गोपिताममरावतीं तां पुरं क्षणेन शीघ्रमाससाद प्राप । स्वरूपतः साक्षादमरावती परं कुण्डिननामधेयेति विशेषः । कः कामिव—तपःप्रभाववतां मनोरथः सिद्धिमिव मनोरथदृष्टान्तेन रथस्यातिजवनत्वं सूचितम् ॥ ४ ॥

भैमीपदस्पर्शकृतार्थरथ्या
सेयं पुरीत्युत्कलिकाकुलस्ताम् ।
नृपो निपीय क्षणमीक्षणाभ्यां
भृशं निशश्वास सुरैः क्षताशः ॥ ५ ॥

भैमीति ॥ भैमीपदस्पर्शेन कृतार्था रथ्या मार्गो यस्याः, यत्र भैमी विचरति सेयं नगरी इति उत्कलिकाकुल उत्कण्ठाबाहुल्येन विमानः स नृपो नलस्तां नगरीमीक्षणाभ्यां नेत्राभ्यां क्षणमात्रं निपीय सादरं प्रेक्ष्य भृशं बहु निशश्वास निश्वसितवान् । यतो दूत्यादेशनात्सुरैः क्षताशः खण्डिताशः । भैम्या सार्धमत्राहं विचरामीति मनोरथेन पूर्वमुत्काण्ठितोऽभूत् । पश्चाद्दूत्यस्मरणाद्दुःखितोऽभूदिति भावः ॥ ५ ॥

स्विद्यत्प्रमोदाश्रुलवेन वामं
रोमाञ्चभृत्पक्ष्मभिरस्य चक्षुः ।
अन्यत्पुनः कम्प्रमपि स्फुरत्त्वा-
त्तस्याः पुरः प्राप नवोपभोगम् ॥ ६ ॥

स्विद्यदिति ॥ भैमीनगरी मया दृष्टेति प्रमोदेन संसर्गप्रीतिजनितानन्देन जातो योऽश्रुलवो वाष्पलेशस्तेन स्विद्यत्स्वेदयुक्तम् । वाष्प एव स्वेदस्थाने जातो यस्यैवंभूतम्, पक्ष्माभिर्नेत्ररोमभी रोमाञ्चभृद्रोमाञ्चयुक्तम् । तान्येव रोमाञ्चस्थाने जातानि यस्यैवंभूतम्, अस्य नलस्य वामं सव्यं चक्षुः तस्याः पुरः प्रथमदर्शनलक्षणं नवोपभोगं नूतनकामकेलिं च प्राप । अन्यद्दक्षिणं चक्षुः पुनः स्फुरतीति स्फुरत् तद्भावेन कम्प्रमपि कम्पनशीलमपि । भैमीप्राप्तिसूचकं स्फुरणं प्राप्नोति यावत् । एवंभूतं दक्षिणमपि तस्याः पुरो नवोपभोगं प्राप । चलत्वं नयनस्य यद्यपि स्वभावतो विद्यते तथाऽपि प्रियाप्राप्तिसूचकत्वादि-

---

१ उपजातिरत्र च्छन्दः एवं पुरस्तादपि । अनुप्रासः शब्दालङ्कारः । २ रधीति यमकम्, और्वशेय इवेत्युपमा । ३ इवेत्युत्प्रेक्षा नलप्रणालीति रूपकम्, अम्बुजाक्षीत्युपमा च ।

१ अत्रानुप्रासः शब्दालङ्कारः । सुरैः क्षताशो निशश्वासेति परिकरः । अतएव नात्र समाप्तपुनरात्तत्वहेयत्वम् ।

त्यस्य सार्थम् । अन्यस्यापि कामिनो नवोपभोगे स्वेदादयः सात्त्विका भावाः प्रभवन्ति । दक्षिणनयनस्फुरणं भैमीलाभसूचकं शकुनं कथितम् ॥ ६ ॥

रथादसौ सारथिना सनाथा-
द्राजावतीर्याथ पुरं विवेश ।
निर्गत्य विम्बादिव भानवीया-
त्सौधाकरं मण्डलमंशुसंघः ॥ ७ ॥

रथादिति ॥ अथासौ राजा नलः सारथिना सनाथादधिष्ठिताद्रथादवतीर्य पुरं विवेश । कः किमिव—अंशुसङ्घः भानवीयात्सूर्यसंबन्धिनो विम्बान्मण्डलान्निर्गत्य निर्गम्य सौधाकरं चन्द्रसंबन्धि मण्डलमिव । अमावास्यायां सूर्यं प्रविष्टश्चन्द्राकिरणसमूहो यथा प्रतिपादि ततो निर्गत्य चन्द्रं प्रविशति । सूतं रथे संस्थाप्यैकाकी नगरं प्रविष्ट इत्यर्थः ॥ ७ ॥

चित्रं तदा कुण्डिनवेशिनः सा
नलस्य मूर्तिर्ववृते न (–)दृश्या ।
वभूव तच्चित्रतरं तथाऽपि
विश्वैकदृश्यैव यदस्य मूर्तिः ॥ ८ ॥

चित्रमिति ॥ तदा तस्मिन्समये कुण्डिनवेशिनः पुरप्रवेशिनो नलस्य सा दृग्गोचरः, अथ चातिसुन्दरी मूर्तिः कायः दृश्या दृग्गोचरः न ववृते अथ च सुन्दरी न ववृते नाभूदित्याश्चर्यम् । एतावन्तं कालं दृग्गोचरस्याकस्मादन्तर्हितत्वात्, सुन्दरस्य चेदानीमसुन्दरत्वादाश्चर्यम् । 'भूयादन्तर्धिसिद्धेः–' इति वचनादिच्छावशादन्तर्हितोऽभूदित्यर्थः । यद्यपि दृश्या नाभूत्तथाप्यस्य मूर्तिर्विश्वस्य सर्वस्य लोकस्यैका मुख्याऽसहाया वा दृश्यैव दृग्गोचर एव वभूवेति यत् तच्चित्रतरमतिशयितमाश्चर्यम् । अन्तर्हितस्याप्यनन्तर्हितत्वे विरोधादाश्चर्यम् । अथ च सर्वस्मिञ्जगति एका रमणीयाभूत्तदतिचित्रम् । एतादृक्सौन्दर्यस्यान्यत्राभावात् । नदृश्येति नसमासोवा॥८

जनैर्विदग्धैर्भवनैश्च मुग्धैः
पदे पदे विस्मयकल्पवल्लीम् ।
तां गाहमानाऽस्य चिरं नलस्य
दृष्टिर्ययौ राजकुलातिथित्वम् ॥ ९ ॥

जनैरिति ॥ तां पुरं गाहमाना विलोकयन्ती अस्य नलस्य दृष्टिः राजकुलातिथित्वं राजसदनातिथ्यं ययौ राजमन्दिरं ददर्शेत्यर्थः । 'गाहमानस्य' इति पाठे राजविशेषणम् । राजकुलाभिमुख्यमिति क्वचित् । किंभूताम्—विदग्धैश्चतुरैर्जनैः, मुग्धैः सुन्दरैर्भवनैश्च कृत्वा पदेपदे विस्मयस्य कल्पवल्लीं कल्पलताम् । कल्पवृक्षसंबन्धिनीं वल्लीमित्यर्थः । अतिशयाश्चर्यकारिणीम् । 'कुलं जनपदे गृहे' इति विश्वः ॥ ९ ॥

हेलां दधौ रक्षिजनेऽस्त्रसज्जे
लीनश्चरामीति हृदा ललज्जे ।
द्रक्ष्यामि भैमीमिति संतुतोष
दूतं विचिन्त्य स्वमसौ शुशोच ॥१०॥

हेलामिति ॥ असौ नलोऽस्त्रसज्जे शस्त्रसंनद्धे रक्षिजने राजगृहरक्षकलोके हृदा हेलामवज्ञां दधौ । एते मम किमपि कर्तुं न शक्नुवन्तीति । अहं लीनश्चौरवददृश्यो राजा सन् चरामीति विचार्य मनसा ललज्जे । तथा—अहमद्य भैमीं द्रक्ष्यामीति हेतोर्हृदा संतुतोष । तथा—अनन्तरं स्वमात्मानं दूतं विचिन्त्य हृदा शुशोच दुःखं कृतवान् । भैमीदर्शनेऽपि मम लोभो नास्तीति । हृदेत्यनेनावज्ञादिसूचका करादिचेष्टा न कृतेत्यर्थः । प्रथमतृतीयचरणाभ्यां पुरुषानुरागावुक्तौ, द्वितीयचतुर्थाभ्यां तौ प्रशान्तीकृतौ । दूतस्य मम तस्या अभिलाषोऽनुचित इत्यात्मानं निनिन्देति वा भावः । हेलाम् 'हेलृ अनादरे' इत्यस्मात् 'षिद्भिदादिभ्योऽङ् ३।३। १०४' ॥ १० ॥

अथोपकार्याममरेन्द्रकार्या-
त्कक्षासु रक्षाऽधिकृतैरदृष्टः ।
भैमीं दिदृक्षुर्बहु दिक्षु चक्षु-
र्दिशन्नसौ तामविशद्विशङ्कः ॥ ११ ॥

अथेति ॥ अथ असौ तामुपकार्यां पूर्वदृष्टामुपकारिकामविशत् । किंभूतः—अमराश्चान्ये त्रयः, इन्द्रश्च तेषां

---

१ अत्रेन्द्रवज्रा छन्दः । चक्षुषोर्नायकव्यवहारप्रतीतेः समासोक्तिरलङ्कारः । २ अत्रानुप्रासः शब्दालङ्कारः विम्बादिवेत्युपमाऽर्थालङ्कारः । ३ न दृश्याऽथापि विश्वैकदृश्येति विरोधाभासोऽपेरभावाद् व्यङ्ग्यः ।

१ तस्यां कल्पवल्लीत्वारोपाद्रूपकम् । दृष्टौ देवतात्वप्रतीतेः समासोक्तिरपीति अर्थालङ्कारद्वितयी । अनुप्रासः पुनः शब्दालङ्कारोऽपि । २ अत्रैकस्मिन् धर्म्मिणि नलेऽनेकेषां धर्म्माणां युगपदुक्तेर्दीपकम् ।

प्राधान्यादमरेन्द्रस्य वा कार्याद्धेतोः कार्याद्वरदानाद्धेतोः कक्षासु गृहप्रकोष्ठेषु स्थितै रक्षाधिकृतै रक्षकैरन्तर्हितत्वाददृष्टः अत एव विशङ्को गतभयः । तथा—बहु वारंवारं दिक्षु चक्षुर्दिशन्ददानः । यतो भैमीं दिदृक्षुर्द्रष्टुकामः । 'कक्षा प्रकोष्ठे हर्म्यादेः' इत्यमरः ॥ ११ ॥

**अयं क इत्यन्यनिवारकाणां**
**गिरा विभुर्द्वारि विभुज्य कण्ठम् ।**
**दृशं ददौ विस्मयनिस्तरङ्गां**
**स लङ्घितायामपि राजसिंहः ॥ १२ ॥**

अयमिति ॥ स विभुः प्रशस्तो राजा राजसिंहो नलः लङ्घितायामतिक्रान्तायामप्युपकार्याद्वार्यन्तर्हितोऽप्यहमेभिर्दृष्टः किमिति विस्मयेनाश्चर्येण निस्तरङ्गां निश्चलां दृशं ददौ दत्तवान् । किं कृत्वा—कोऽयमित्यन्यनिवारकाणां नलान्यनिषेधकारिणां रक्षकाणां गिरा कृत्वा मामेव किमेते निषेधन्तीति धिया कण्ठं विभुज्य वक्रीकृत्य । सिंह इत्यनेन दृष्टेऽप्यात्मनि निर्भयत्वं सूच्यते।सिंहोऽप्यवज्ञया ग्रीवां वक्रीकृत्य गर्वेण दृष्टिं पश्चाद्ददाति । राजसिंहः 'प्रशंसावचनैश्च २।१।६६' इति, 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २।१।५६'—इति वा समासः ॥ १२ ॥

**अन्तःपुरान्तः स विलोक्य बालां**
**कांचित्समालब्धुमसंवृतोरुम् ।**
**निमीलिताक्षः परया भ्रमन्त्या**
**सङ्घट्टमासाद्य चमच्चकार ॥ १३ ॥**

अन्तरिति ॥ स नलः अन्तःपुरस्यान्तर्मध्ये समालब्धुमुद्वर्तयितुमसंवृते अनाच्छादिते ऊरू जङ्घे यस्यास्तां कांचित्स्त्रियं विलोक्य 'न नग्नां स्त्रियमीक्षेत' इति स्मृतेः उत्तमपुरुषत्वाच्च निमीलिताक्षः बभूवेति शेषः । तथा—यदृच्छया भ्रमन्त्या चलन्त्या परया कयाचित्स्त्रिया सह निमीलितनयनत्वादेव सङ्घट्टं सम्पर्कमासाद्य प्राप्य चमच्चकार । सचकितो बभूवेत्यर्थः 'एकं संधित्सतोऽपरं प्रच्यवते' इति न्यायात् सजुगुप्सो जातः॥१३॥

१ अत्र कार्येति यमकम्, अन्यत्र वर्णसाम्यादनुप्रासश्च शब्दालङ्कारः । २ अत्रोपवज्रा छन्दः । राजा सिंह इवेति पक्षे सिंहो यथा पुरो गत्वा पुनरुल्लङ्घितंमार्गं पश्यति तथेतिप्रतीतेरुपमा । ३ समालब्धुमित्यतः पूर्वं तैलादि कर्म्मरूपेण प्रयोज्यं, नतु प्रयुक्तम्, अतो न्यूनपदत्वं दोषः । प्रत्युत काञ्चिदित्यस्य तत्र प्रयोग इत्यस्थानस्थपदत्वमपि दोषः । परया सङ्घट्टमित्यत्र समासोक्तिरलङ्कारः ।

**अनादिसर्गस्रजि वाऽनुभूता**
**चित्रेषु वा भीमसुता नलेन ।**
**जातेव यद्वा जितशम्बरस्य**
**सा शाम्बरीशिल्पमलक्षि दिक्षु ॥१४॥**

अनादीति ॥ नलेन सा भैमी दिक्षु प्रतिदिशमलक्षि दृश्यते स्म । ननु चक्षुषाऽसंनिकृष्टा कथं दृष्टा । न च शुक्तौ रजतमिव तत्रासत्यपि सारोपाद्भासत इति वाच्यम्। अननुभूतपूर्वस्य वस्तुन आरोपासम्भावादित्याशङ्क्य भ्रमान्यथाऽनुपपत्त्या पूर्वानुभवमुत्प्रेक्षते—अनादयो ये सर्गाः सृष्टयस्तेषां स्रक् परम्परा तस्यामनुभूता वा । ननु जन्मान्तरेऽपि भैम्याः परिग्रहे तत्स्मरणे वा प्रमाणं नास्तीत्यत आह—चित्रेष्वालेख्येषु वा अनुभूता । ननु चित्रेष्वियं निष्क्रियैवानुभूता । यथानुभवं चारोपो भवति । तत्कथमियमालिङ्गतीव, सानुरागमालोकयन्तीव, सप्रणयमनुनयन्तीव, सकेलिकोपमाक्षिपन्तीव, दृश्यत इत्यत आह—यद्वा—जितः शम्बरो येन स जितशम्बरो मदनः तस्य या शाम्बरी शम्बरो दैत्यस्तस्येयं शाम्बरी माया तस्याः, शिल्पं निर्माणं जातेव । कामेन शम्बरं जयता तस्य मायाप्यपहृता तया माययेयं निर्मितेत्यर्थः । यद्वा—शम्बरारेः संबन्धिमाया निर्माणकौशलं सा जातेव । मदनस्यैवेदं शिल्पं तच्च मायामात्रहेतुकं, न तु प्रसिद्धबाह्यकारणरचितामिति । मायानिर्मितं चातिसुन्दरं भवति कारणगुणानुरोधाभावात् । यद्वा—नलेन सा कामस्य शाम्बरीरूपं शिल्पं कौशलं जातेवालक्षि । शम्बरस्य जितत्वात्तन्मायेव भैमीरूपाऽपहृतेत्यर्थः । अथवा जातेवत्युत्प्रेक्षान्तरम् । प्रागननुभूतापि तदानीं कामस्य शिल्पभूता सा जाता उत्पन्नेवालक्षि । यतोऽपरोक्षमनुभूयते, न च बाध्यते आलिङ्गनालापादिरूपसमर्थप्रवृत्तिजनकत्वादिता भावः । यद्वा—शाम्बरीत्युत्प्रेक्षान्तरमेव व्याख्येयम् । विरहवशात्सर्वत्र भैमी दृष्टा सा पूर्वमनुभवतारतम्येन स्मृता सत्यारोपात्प्रतीयते शुक्तौ रजतवत् ।यद्वा-पूर्वमननुभूतैव स्मरेण प्रतिदिशमपूर्वैवोत्पादिता यथाविद्यकं रजतम्। गन्धर्वनगरवन्मायावशादत्यन्तमसत्येवानुभूतापि भासत इति समुदायतात्पर्यम् ॥ १४ ॥

**अलीकभैमीसहदर्शनात्र**
**तस्यान्यकन्याप्सरसो रसाय ।**

१ अत्र जातेवेत्युत्प्रेक्षा । सा—शिल्पमिति रूपकम् ।

भैमीभ्रमस्यैव ततः प्रसादा-
द्भैमीभ्रमस्तेन न तास्वलम्भि ॥ १५ ॥

अलीकेति ॥ मोहवशादवलोकिता अलीकभैमी मिथ्याभैमी यया सह तासामपि दर्शनादन्यकन्याप्सरसो ऽन्तःपुरस्थिता अप्सरस्तुल्या भैमीव्यतिरिक्ता अबलास्तस्य नलस्य रसाय प्रीतये नाभूवन् । सहदर्शनात्तारतम्यज्ञानस्य सम्भवादलीकदृष्टाया अपि भैम्याः सकाशादन्या अतिहीना इति तास्वनुरक्तो नाभूत् । किंत्वलीकदृष्टायामपि तस्यामेवेत्यर्थः । तास्वेव भैमीबुद्धिः कथं नेत्यत आह— ततः, पञ्चम्यर्थे तसिः । तस्य भैमीभ्रमस्यैव भैमीभ्रान्तेरेव प्रसादात्सामर्थ्यात्तेन नलेन तास्वन्यकन्याप्सरःसु भैमीभ्रमो नालम्भि न प्राप्तः । अलीकदृष्टायास्तस्याः सकाशात्तासामतिहीनत्वात्सादृश्यलक्षणभ्रान्तिकारणाभावाद्भैमीभ्रान्तिर्नोत्पन्नेत्यर्थः ॥ १५ ॥

भैमीनिराशे हृदि मन्मथेन
दत्तस्वहस्ताद्विरहाद्विहस्तः ।
स तामलीकामवलोक्य तत्र
क्षणादपश्यन्व्यपदद्विबुद्धः ॥ १६ ॥

भैमीति ॥ दूत्याङ्गीकाराद्भैमीविषये निराशे वितृष्णेऽपि हृदि विद्यमानान्मन्मथेन दत्तः स्वहस्तः स्वहस्तावलम्बनं यस्मै एवंभूताद्विरहाद्वियोगाद्विहस्तो विकलः । हृदि भैमीनिराशे सतीति वा । हृदि व्याकुले इति वा । एवंभूतः स नलः तत्र उपकार्यायामलीकां तामसत्यरूपां भैमीमवलोक्य क्षणात्तस्मिन्नेव क्षणे विबुद्धो भ्रान्तिरहितः तामपश्यन्ननवलोकयन्व्यपदद्विषादं प्राप । दूत्याङ्गीकाराद्भैम्यां निराशत्वेन शान्तोऽपि विरहः कामेन स्वहस्तं दत्त्वा पुनरुद्दीपितः । विरहजनितया भ्रान्त्या भैमी तेनावलोकिता, भ्रान्त्यपगमे च नावलोकितेत्यनवेक्षणहेतुर्मम बोधो वृथा जातो यत्प्रसादान्मया भैमी विलोकिता, सा भ्रान्तिर्गता कष्टं जातमिति दुःखितोऽभूदित्यर्थः । येन हस्तो दत्तस्तस्य हस्तराहित्यं त्वयुक्तम् । अत्र विपरीतमित्याश्चर्यम् । व्यपदत् लृदित्वादङ् 'प्राक्सितादड्व्यवायेऽपि ८।३।६३' इत्यधिकारे 'सदिरप्रतेः ८।३।६६' इति षत्वम् । 'विहस्तव्याकुलौ समौ' इत्यमरः ॥१६॥

प्रियां विकल्पोपहृतां स याव-
द्दिगीशसंदेशमजल्पदल्पम् ।
अदृश्यवाग्भीषितभूरिभीरु-
भवो रवस्तावदचेतयत्तम् ॥ १७ ॥

प्रियामिति ॥ स नलः विकल्पेन सङ्कल्पेन उपहृतामुपनीतां प्रियां भैमीं प्रति दिगीशानां संदेशमल्पमपि यावदजल्पदवोचत्, तावदेव तस्मिन्नेव क्षणेऽदृश्यस्य तस्यैव वाचा भीषिता भयं प्राप्ता भूरयो बहवो भीरवो भयशीला या बालास्ताभ्यो भव उत्पन्नो रवः शब्दस्तं नलमचेतयत्सावधानं चकार । भ्रान्तिवीक्षितां भैमीं प्रति इन्द्रादिभिरेवमुक्तमिति यावद्वक्तुं प्रारब्धम्, तावदनेनैव शब्देन अदृश्यो भूतादिः कोऽप्यायात इति भीतानां बालानां कलकलेन पुनरभ्रान्तो भूत्वा तूष्णीं बभूवेति भावः । अल्पं संदेशमिति वा । भीषित इति 'भियो हेतुभये षुक् ७ । ३ । ४०' । 'चिती संज्ञाने' भौवादिकाद्धेतुमण्णिचि अचेतयत् ॥ १७॥

पश्यन्स तस्मिन्मरुतापि तन्व्याः
स्तनौ परिस्प्रष्टुमिवास्तवस्त्रौ ।
अक्षान्तपक्षान्तमृगाङ्कमास्यं
दधार तिर्यग्वलितं विलक्षः ॥ १८ ॥

पश्यन्निति ॥ तस्मिन्नन्तःपुरे अचेतनेन मरुता वायुनापि, अथ च देवेनापि परिस्प्रष्टुमिव मर्दयितुमिव अस्तवस्त्रौ क्षिप्तवस्त्रौ कस्याश्चित्तन्व्याः स्तनौ पश्यन्नबुद्धिपूर्वकमकस्माद्विलोकयन्परस्त्रीकुचदर्शनाद्विलक्षो विचित्तः सलज्जो मृगाङ्कत्वादेव न क्षान्तः सोढः पक्षान्तमृगाङ्कः पूर्णिमाचन्द्रो येन एवंभूतमास्यं वदनं तिर्यग्वलितं तिरश्चालितं दधार । पराङ्मुखोऽभूदित्यर्थः । नलादन्यः कोऽप्युत्तमः पुरुषो नास्तीति भावः । प्रच्छन्नकामुकसम्भोगे चन्द्रस्य तिरोधानं युक्तमिति ध्वन्यते ॥ १८ ॥

अन्तःपुरे विस्तृतवागुरोऽपि
बालावलीनां वलितैर्गुणौघैः ।
न कालसारं हरिणं तदक्षि-
द्वयं प्रभुर्वेन्द्धुमभून्मनोभूः ॥ १९ ॥

अन्तरिति ॥ मनोभूः कामः कालः कृष्णः कनीनिकालक्षणः सारः श्रेष्ठभागो यस्य तत् । तथा—हरिण-

---

१ कन्यास्वप्सरस्त्वारोपणाद्रूपकम्, यस्य प्रसादो लब्धः, स न लब्ध इति विरुद्धमिवेति भैमीभ्रमस्येत्यादौ विरोधाभासो व्यङ्ग्यः । २ मन्मथेन हस्ते दत्तेऽपि विहस्त इति विरोधाभासो व्यङ्ग्योऽत्र ।

१ अत्रानुप्रासः । २ परिस्प्रष्टुमिवेत्युत्प्रेक्षा । अक्षान्त-पक्षान्तेत्यनुप्रासश्च ।

मभितः पाण्डुरं तस्य नलस्य अक्षिद्वयं बन्द्धुं सौन्दर्यस्य वशं कर्तुं प्रभुः समर्थो नाभूत् । अथ च नेत्रद्वयमेव हरिणं मृगं धर्तुम् । अरण्ये मृगयुना मृगो धर्तुं सुशकः । कामो मृगयुस्तु अन्तःपुरे नगरमध्ये हरिणं धर्तुं न शशाकेत्याश्चर्यम् । किंभूतः—बालावलीनामवरोधतरुणीपङ्क्तीनां वलितैः सविलासैः पुनःपुनः प्रवृत्तैर्वा गुणौघैर्नृत्यगीतसौन्दर्यादिगुणसमूहैर्वलितैरङ्गमोटनैर्गुणौघैश्च वा कृत्वा अन्तःपुरे विस्तृता वागुरा लक्षणया वशीकरणद्रव्यं येन । गुणा एव वागुरास्थाने यस्य जाता इत्यर्थः । अथ च केशपङ्क्तीनां वलितैस्त्रिगुणितैर्दोरकसङ्घैर्नगरमध्ये विस्तृतवागुरोऽपि । बालां नलः साभिलाषं नापश्यदित्यर्थः ॥ १९ ॥

दोर्मूलमालोक्य कुचं रुरुत्सो-
स्ततः कुचौ तावनुलेपयन्त्याः ।
नाभीमथैष श्लथवाससोऽनु
मिमील दिक्षु क्रमकृष्टचक्षुः ॥ २०[2] ॥

दोरिति ॥ एष नलः कुचं केशपाशं रुरुत्सोर्बन्द्धुमिच्छोः कस्याश्चित्केशसंयमनादेव दोर्मूलं बाहुमूलमालोक्य ततस्तस्माद्देशात्किंचिदधोनामितदृष्टिः ततश्चन्दनादिनाऽनुलेपयन्त्या विलेपयन्त्यास्तस्या एव तावतिसुन्दरौ कुचौ स्तनावालोक्य ततोऽपि किंचिन्नमितदृष्टिः । अथ कुचलेपनानन्तरं नाभीविलेपनार्थं श्लथवाससः श्लथीकृतवसनायास्तस्या एव नाभीमालोक्य ततोऽप्यधोनमितदृष्टिः । एवं दिक्षूर्ध्वदेशादधोदेशे क्रमेण कृष्टं समाकृष्टं चक्षुर्येन एवंभूतः सन् अनु पश्चादनवलोकनीयस्य कस्याप्यङ्गस्यावलोकनप्रसङ्गान्मिमील नेत्रनिमीलनमेव चकार । अत्राप्युत्तमत्वं सूचितम् ॥ २० ॥

मीलन्न शेकेऽभिमुखागताभ्यां
धर्तुं निपीड्य स्तनप्रान्तराभ्याम् ।
स्वाङ्गान्यपेतो विजगौ स पश्चा-
त्पुमङ्गसङ्गोत्पुलके पुनस्ते ॥ २१[1] ॥

मीलन्निति ॥ मीलन्संकोचितनयनः स नलोऽभिमुखं सम्मुखमागताभ्यां स्त्रीभ्यां मध्ये विद्यमानो निपीड्य नितरां पीडनं कृत्वा धर्तुं न शेके न शक्तः । यतः—स्तनाभ्यां कृत्वा सान्तरे व्यवधानरहिते ताभ्याम् । उभयोरुच्चैः स्तनावेव परस्परमिलितौ, न तु तयोः परस्परसंश्लेषो जातः, स्तनसान्तरत्वात् । ताभ्यामपेतो, निर्गतः सन् पश्चात्स्वाङ्गानि स्वीयानवयवान् परस्त्रीसंसर्गाद्विजगौ विशेषेण निनिन्द, एतेऽनुचितकारिण इति । ते स्त्रियौ पुनः पुंसोऽङ्गसङ्गेनोत्पुलके सात्त्विकभावोद्बोधाद्रोमाञ्चिते जाते । स्त्रीणां पापप्रधानत्वात्परपुरुषसंयोगेन तयो रोमाञ्चितत्वं जातम् । नलेन तूत्तमपुरुषत्वात्परस्त्रीसंसर्गादङ्गनिन्दा कृतेति भावः । धर्तुम्, शकियोगे तुमुन् ॥ २१ ॥

निमीलनस्पष्टविलोकनाभ्यां
कदर्थितस्ताः कलयन्कटाक्षैः ।
स रागदर्शीव भृशं ललज्जे
स्वतः सतां ह्रीः परतोऽतिगुर्वी ॥२२[2] ॥

निमीलनेति ॥ निमीलनं परस्त्रीसंसर्गात्प्रकटविलोकनं च विवस्त्रस्त्रीदर्शनात् निमीलनस्पष्टविलोकनाभ्यां कदर्थितः पीडितः अतस्तास्तरुणीरुभयपरिहारार्थं कटाक्षैः कलयन्नवलोकयन् स नलो रागेणानुरागेण दर्शीव पश्यन्निव भृशं ललज्जे लज्जितः । लज्जा तु अन्यतो भवति, तत्कथं लज्जित इत्यत आह—सतां साधूनां परतः सकाशात्स्वतो ह्रीर्लज्जातिगुर्व्यतिमहती भवति स्वतो यावती लज्जा भवति तावती परतो न । तस्माद्दृश्यत्वेन कटाक्षावलोकनेन स्वयमेव लज्जेत्यर्थः ॥ २२ ॥

रोमाञ्चिताङ्गीमनु तत्कटाक्षै-
र्भ्रान्तेन कान्तेन रतेर्निदिष्टः ।
मोघः शरौघः कुसुमानि नाभू-
त्तद्धैर्यपूजां प्रति पर्यवस्यन् ॥ २३ ॥

रोमेति ॥ नलाङ्गसङ्गाद्रोमाञ्चिताङ्गीं स्त्रियमनु लक्षीकृत्य तस्य नलस्य कटाक्षैः एतावपि परस्परमनुरक्ताविति भ्रान्तेन रतेः कान्तेन कामेन परस्परसंभोगार्थं निदिष्टः क्षिप्तः कुसुमानि पुष्पलक्षणः शरौघः मोघो निष्फलो ना-

१ अत्राक्षिद्वयं हरिणमिति रूपकम् । बालेत्यादौ श्लेषः, विस्तृतवागुरोऽपीत्यादौ विशेषो विरोधाभासश्च श्लेषश्च । २ अत्र दीपकम् ।

१ निपीडने स्तनसान्तरायत्वासम्भवेऽपि तथोक्तेर्वास्तविकहेतोर्निगूहनमित्यपह्नुतिर्व्यज्यते । अपेतोऽपि विजगाविति विरुद्धम् । २ अत्रोपेन्द्रवज्राछन्दः । दर्शीवेत्युपमा । स्वत इत्यादिना सामान्येन स ललज्ज इति विशेषस्य समर्थनादर्थान्तरन्यासश्च ।

भूत् । यतः—तस्य नलस्य धैर्यपूजां प्रत्युद्दिश्य पर्यवस्यन्संजाततात्पर्यः । मुख्यप्रयोजनाभावेऽपि नलसदृशः कोऽपि धीरो नास्तीति तद्धैर्यपूजायामुपयोगात्पुष्पसाफल्यम् ॥ २३ ॥

हित्वैव वर्त्मैकमिह भ्रमन्त्याः
स्पर्शः स्त्रियाः सुत्यज इत्यवेत्य ।
चतुष्पथस्याभरणं बभूव
लोकावलोकाय सतां स दीपः ॥ २४ ॥

हित्वेति ॥ एकं वर्त्म एकपदीं हित्वा त्यक्त्वैव इहैकपद्यामन्तःपुरे वा भ्रमन्त्या विचरन्त्याः स्त्रियाः स्पर्शः सुत्यजः सुखेन त्यक्तुं शक्यते नान्यथा इत्यवेत्य विचार्य सतां साधूनां प्रकाशरूपत्वाद्दीप इव दीपः स नलः लोकानां कर्मीभूतानां पुरलोकानामवलोकाय चतुष्पथस्य चतुर्णां पथां चतुर्दिग्भ्यः समागतानां मार्गाणामेकत्र समाहारः यस्मिन्स्थितेन लोकेन चतुर्दिग्भ्यः समागतो जनो दृश्यते तस्याभरणं बभूव । दीपोऽपि लोके लोककर्तृकायावलोकनाय चतुष्पथस्याभरणं भवति । चतुष्पथम्, समाहारे 'पथः संख्याव्ययादेः' इति (वा-)नपुंसकत्वम् ॥ २४ ॥

उद्वर्तयन्त्या हृदये निपत्य
नृपस्य दृष्टिर्न्यवृतद्द्रुतैव ।
वियोगिवैरात्कुचयोर्नखाङ्कै-
रर्धेन्दुलीलैर्गलहस्तितेव ॥ २५ ॥

उद्वर्तेति ॥ नृपस्य दृष्टिरुद्वर्तयन्त्याः समालम्भनं कुर्वत्याः कस्याश्चिद्धृदये उरसि निपत्य द्रुतैव वेगसाहितैव न्यवृतत्परावृत्ता । परस्त्रीकुचदर्शनभियेत्यर्थः । उत्प्रेक्षते—कुचयोर्विद्यमानैः अर्धेन्दुलीलैरर्धचन्द्राकारैः नखाङ्कैर्नखक्षतैः वियोगिनो नलस्य वैराद्गलहस्तितेव । गले हस्तो गलहस्तः संजातो यस्याः । तारकादित्वादितच् । नखाङ्कदर्शनं चन्द्रदर्शनं च विरहिणोऽसह्यमिति शत्रुत्वम् । गलहस्तितो हि झटिति परावर्तते । न्यवृतदिति 'द्युद्भ्यो लुङि १।३।९१' इति परस्मैपदे द्युतादित्वादङ् ॥ २५ ॥

तन्वीमुखं द्रागधिगत्य चन्द्रं
वियोगिनस्तस्य निमीलिताभ्याम् ।
द्वयं द्रढीयः कृतमीक्षणाभ्यां
तदिन्दुता च स्वसरोजता च ॥ २६ ॥

तन्वीति ॥ तन्व्या मुखं चन्द्रमधिगत्य ज्ञात्वा अथ च वदनलक्षणं चन्द्रं प्राप्य द्राक् झटिति निमीलिताभ्यां संकुचिताभ्यां वियोगिनस्तस्येक्षणाभ्यां नेत्राभ्यां द्वयं द्रढीयोऽतितरां दृढं कृतं सत्यं कृतम् । द्वयं किम्—तदिन्दुता तन्मुखचन्द्रत्वम्, स्वस्य सरोजता कमलता च । चन्द्रप्राप्तौ कमलस्यैव संकोचो नत्वन्यस्य, चन्द्रप्राप्तावेव कमलस्य संकोचो नत्वन्यप्राप्तावित्यन्वयव्यतिरेकाभ्यां तदिन्दुत्वं स्वसरोजत्वं च । तन्वीमुखं चन्द्रवद्रमणीयम्, नलनेत्रे च नीलोत्पलवद्रमणीये इत्यर्थः । परस्त्रीमुखावलोकनमयुक्तमिति नेत्रसंकोचः कृत इत्युत्तमत्वं सूचितम् ॥ २६ ॥

चतुष्पथे तं विनिमीलिताक्षं
चतुर्दिगेताः सुखमग्रहीष्यन् ।
संघट्ट्य तस्मिन्भृशभीनिवृत्ता-
स्ता एव तद्वर्त्म न चेददास्यन् ॥ २७ ॥

चतुष्पथ इति ॥ परस्त्रीमुखाद्यवलोकनभिया निमीलिताक्षं नलं चतुर्दिगेताः चतुर्दिग्भ्यःसमागताश्चतस्रःस्त्रियः चतुष्पथेऽपि तर्हि सुखमनायासमग्रहीष्यन्धर्तुमशक्ष्यन् । चेद्यदि तास्मिन्नदृश्ये नले संघट्ट्य संघट्टं प्राप्य अदृश्यसंघट्टादेव भृशभिया जातमहाभीत्या निवृत्ताः पुनः पुनर्विवृत्तास्ता एव पूर्वोक्ताः तद्वर्त्म तस्य निर्गन्तुं मार्गं नादास्यन्न व्यतरिष्यन् । परावृत्तत्वान्मार्गस्तस्मै दत्तः ततो धर्तुं नाशक्नुवन्निति क्रियाऽतिपत्तिः ॥ २७ ॥

सङ्घट्टयन्त्यास्तरसाऽऽत्मभूषा-
हीराङ्कुरप्रोतदुकूलहारी ।
दिशा नितम्बं परिधाप्य तन्व्या-
स्तत्पापसंतापमताप भूपः ॥ २८ ॥

सङ्घट्टेति ॥ भूपो नलः तन्व्याः कस्याश्चित् नितम्बं दिशा करणभूतया परिधाप्य । दिगम्बरं कृत्वे-

---

१ अत्रेन्दवज्रा छन्दः । नलधैर्यं भङ्क्तुं मदनेन प्रयुक्ताः शरा न परं स्वयं भग्नाः, किंतु तदेव पूजयितुं प्रवृत्ता आसन्निति विषमः । २ अत्र लोकेति यमकम् । ३ हस्तितेवेत्युत्प्रेक्षा ।

१ मुखं चन्द्रमिति रूपकम् । द्रढीय इत्यनुमानम् । धर्मद्वयस्यैकत्र समवेतत्वोक्तेर्दीपकम् । २ अत्र सुखमग्रहीष्यन्नित्यस्य नचेददास्यन्नित्यस्य च हेतुहेतुमद्भावात् काव्यलिङ्गम् ।

त्यर्थः । तेन परस्त्रीविवसनकरणेन जनितं यत्पापं तेन संतापं परमं दुःखमवाप प्राप । किंभूतायाः—सङ्घट्टयन्त्याः सङ्घट्टं कुर्वत्याः । अत एव किम्भूतः—परस्त्रीस्पर्शभिया तरसा परस्त्रीसंस्पर्शभिया झटिति निवृत्तत्वादात्मनो भूषा अलङ्काराः तेषु हीरकाः, तेषामङ्कुराः कोटयः तत्र प्रोतं स्यूतं दुकुलं हरति एवंशीलः । स्यूतत्वात्स्वत एवागच्छतो दुकूलस्य नेता । अबुद्धिकारित्वेऽप्यतितरां मयैतदनुचितं कृतमिति सन्तापादुत्तमत्वं सूचितम् ॥ २८ ॥

हतः कयाचित्पथि कन्दुकेन
सङ्घट्टय भिन्नः करजैः कयाऽपि ।
कयाचनाक्तः कुचकुङ्कुमेन
सम्भुक्तकल्पः स बभूव ताभिः ॥ २९ ॥

हत इति ॥ स नलः पथि चतुष्पथरूपे कयाचित्सुन्दर्या कन्दुकेन हतः अन्यस्यै प्रहितः कन्दुको मध्येमार्गमदृश्यरूपस्य तस्य देहे लग्नः। कयाचित्तत्रैव सङ्घट्टय बुद्धिपूर्वं करजैर्भिन्नोऽङ्कितः । कयाचन तत्रैव सङ्घट्टय बुद्धिपूर्वमालिङ्गनवशात्कुचकुङ्कुमेनाक्तो म्रक्षितः । एवं ताभिरन्तःपुरसुन्दरीभिः सम्भुक्तकल्प ईदूपनः सम्भुक्तो बभूव। ग्राम्यधर्माभावादीषदूनत्वं संभोगस्य । ताभिरिति तृतीयया तासामेव बुद्धिपूर्वकारित्वम्, न तु नलस्येति सूचितम् ॥ २९ ॥

छायामयः प्रैक्षि कयाऽपि हारे
निजे स गच्छन्नथ नेक्ष्यमाणः ।
तच्चिन्तयाऽन्तर्निरचायि चारु
स्वस्यैव तन्व्या हृदयं प्रविष्टः ॥ ३० ॥

छायेति ॥ कौतुकित्वाददृश्यस्यैव मम प्रतिविम्बेन भवितव्यमितच्छिावशात्कयापि तन्व्या सुन्दर्या निजे स्वीये हारे छायामयः प्रतिविम्बरूपः स नलः प्रैक्षि पूर्वमवलोकितः । अथानन्तरं गच्छन् ततः स्थानात्स्थानान्तरं गच्छन् अतो हारे न ईक्ष्यमाणः न दृश्यमानः अधुनैव कश्चित् सुन्दरो हारे मया दृष्टः क्वेदानीं गत इति तच्चिन्तया नलचिन्तया कृत्वा स नलः स्वस्यैव हृदयं स्वीयमन्तःकरणं प्रविष्टः इति तन्व्या अन्तर्मनसि चारु सम्यङ् निरचायि निर्धारितः । हृदय एव हारस्य विद्यमानत्वात्सामीप्यात्तत्रैव प्रविष्ट इति निश्चयः कृत इत्यर्थः । प्रतिविम्बरूपं तमालोक्य विरहपीडिता जातेति भावः ॥ ३० ॥

तच्छायसौन्दर्यनिपीतधैर्याः
प्रत्येकमालिङ्गदमू रतीशः ।
रतिप्रतिद्वन्द्वितमासु नूनं
नामूषु निर्णीतरतिः कथञ्चित् ॥ ३१ ॥

तदिति ॥ रतीशः कामः हारादौ तच्छायस्य नलप्रतिविम्बस्य सौन्दर्येण निपीतमपहृतं धैर्यं यासां ता अमूः अन्तःपुरसुन्दरीः प्रत्येकं पृथक्पृथगालिङ्गत् । ननु रतीशेन रत्या एवालिङ्गनं युक्तम्, न त्वन्यस्या इत्यत आह—नूनमुत्प्रेक्षते । स कामः रतेः प्रतिद्वन्द्वितमास्वतितरां प्रतिस्पर्धिनीषु रतितुल्यास्वमूषु मध्ये कयंचित्केनापि प्रकारेण सौन्दर्यशीलादिना न निर्णीता रतिर्येन एवंभूतो नूनम् । रतेरनिश्चयात्सर्वासामालिङ्गनेन रतेरप्यालिङ्गनं भविष्यतीति बुद्ध्येत्यर्थः । नलप्रतिविम्बदर्शनमात्रेण सर्वा अपि कामपरवशा जाता इति भावः । तस्य छाया ' विभाषा सेनासुराच्छायाशालानिशानाम् २ । ४ । २५ ।' इति नपुंसकत्वम् । प्रतिद्वन्द्वितमासु 'तसिलादिष्वाकृत्वसुचः ६ । ३ । ३५ ' इति पुंवत् ॥ ३१ ॥

तस्मादहश्यादपि नातिबिभ्यु-
स्तच्छायरूपाहितमोहलोलाः ।
मन्यन्त एवादृतमन्मथाज्ञाः
प्राणानपि स्वान्सुदृशस्तृणानि ॥ ३२ ॥

तस्मादिति ॥ ताः सुदृशः तरुण्यः अदृश्यादपि तस्मान्नातिबिभ्युरतिशयं भयं न प्रापुः । यतः—हारादौ तच्छायस्य तत्प्रतिविम्बस्य यद्रूपं सौन्दर्यं तेनाहितो जनितो मोहो मदनविकारविलासः, तेन लोलाश्चञ्चलाः, मदनविकारविलासे आसक्ता वा । तत्प्रतिविम्बदर्शनेन मदनपरवशत्वाददृश्यादपि तस्माद्भयं न प्राप्तमित्यर्थः । एतदपि कुत इत्यत आह—आदृतमन्मथाज्ञाः संमानितकामाज्ञाः । सुदृशः स्वान्प्राणानपि तृणान्येव तृणतुल्यानेव मन्यन्ते यतः, अतो मदनपरवशत्वाद्भयं न प्राप्तमिति युक्तम् । यस्य प्राणवाञ्छापि

१ अत्र तत्पापसंतापेत्यनुप्रासः । २ सम्भुक्तकल्प इत्युपमा ।

१ अत्र तच्चिन्तयान्तर्निरचायि चार्वित्यनुप्रासः । २ नूनमित्युत्प्रेक्षा ।

न विद्यते तस्य भयं दूरापास्तमिति भावः। 'लोलश्चलसतृष्णयोः' इत्यमरः ॥ ३२ ॥

जागर्ति तच्छायदृशां पुरा यः
स्पृष्टे च तस्मिन्विससर्प कम्पः।
द्रुते द्रुतं तत्पदशब्दभीत्या
स्वहस्तितश्चारुदृशां परं सः ॥ ३३ ॥

जागर्तीति ॥ तच्छायदृशां नलप्रतिबिम्बावलोकिनीनां चारुदृशां सात्त्विकप्रादुर्भाववशाद्यः कम्पः पुरा जागर्ति अजागः। प्रतिबिम्बदर्शनमात्रेण यः कम्पः समुद्भूत्। तस्मिन्नले स्पृष्टे च सति यः कम्पो विससर्प। दर्शनापेक्षया स्पर्शनस्याधिकसात्त्विकजननसामर्थ्याद्दर्शनजन्यकम्पापेक्षया योऽधिको जातः स कम्पः स्पर्शनभयात् द्रुतं शीघ्रं द्रुते पलायिते तस्मिन् अदृश्यस्य तस्य पदशब्दभीत्या चरणशब्दभिया कर्त्र्या पूर्वापेक्षया परम् अतिशयेन स्वहस्तितो दत्तावलम्बनः। वृद्धिं प्रापित इत्यर्थः। अथ च परं केवलं स्वहस्तं प्रापितो दत्तावलम्बः कृतः। मदीयोऽयं कम्पो न सात्त्विकभावजनित इत्येवं तया कथित इत्यर्थः। उभयथा तासां दर्शनस्पर्शनजन्यः कम्पः शृङ्गारस्यानुभावः पाश्चात्यो भयानकस्येति परिपाट्या प्रवृद्धोऽभूदिति भावार्थः। स्वहस्तितः, तारकादिः। जागर्ति 'पुरि लुङ् चास्मे ३।२।१२२' इति भूते लट् ॥ ३३ ॥

उल्लास्यतां स्पृष्टनलाङ्गमङ्गं
तासां नलच्छायपिबाऽपि दृष्टिः।
अश्मैव रत्यास्तदनर्ति पत्या
छेदेऽप्यबोधं यदहर्षि रोम ॥ ३४ ॥

उल्लास्यतामिति ॥ रत्याः पत्या कामेन तासामन्तःपुरसुन्दरीणां स्पृष्टं नलाङ्गं येन एवंभूतमङ्गमुल्लास्यतां हर्षवशात्परिपुष्टीक्रियतां नाम। न केवलं तदेव किंतु नलच्छायपिबा नलप्रतिबिम्बपिबा तासां दृष्टिरप्युल्लास्यतां हर्षवशात् प्रसार्यतां नाम। अत्र विषये चित्रं न। किं तर्हि—छेदे कर्तने कृतेऽपि सति अबोधमचेतनं लोम यदहर्षि हर्षं प्रापितं तत् अश्मैव पाषाण एवानर्ति नर्तितः। अचेतनस्य लोम्नो हर्षणं पाषाणनर्तनतुल्यमित्यर्थः। सत्त्ववशाद्रोमाञ्चोऽभूदिति भावः।

उल्लास्यतां, कर्मणि लोट्। उपसर्गानुवृत्तेरनावश्यकत्वात्पिबेति 'पाघ्राध्माधेट्दृशः शः ३।१।१३७' इत्यादिना शः ॥ ३४ ॥

यस्मिन्नलस्पृष्टकमेत्य हृष्टा
भूयोऽपि तं देशमगान्मृगाक्षी।
निपत्य तत्रास्य धराराजःस्थे
पदे प्रसीदेति शनैरवादीत् ॥ ३५ ॥

यस्मिन्निति ॥ नलसम्मुखमागच्छन्ती मृगाक्षी हरिणनेत्रा यस्मिन्देशे अन्यापदेशाद्व्रच्छतो नलस्य गात्रेण सह स्वगात्रसङ्घट्टलक्षणं स्पृष्टकाख्यमालिङ्गनमेत्य प्राप्य हृष्टा। रोमाञ्चादियुक्ता जाता तं देशं भूयोऽपि पुनरप्यगाज्जगाम। तत्र देशे धराराजःस्थे पृथ्वीरजःसु स्थितेऽस्य नलस्य पादे चरणप्रतिबिम्बे निपत्य नमस्कारं कृत्वा प्रसीदेति, अनुग्रहं मम कुर्विति आकर्णनभीत्या शनैरवादीदवोचत्। नितरां नलाधीना जातेति भावः। "यत्रोपितः सम्मुखमागताया अन्यापदेशाद्व्रजतो नरस्य। गात्रेण गात्रं घटते यदेतदालिङ्गनं स्पृष्टकमाहुरार्याः ॥" इति कामशास्त्रम् ॥ ३५ ॥

भ्रमन्नमुष्यामुपकारिकाया-
मायस्य भैमीविरहात्कृशीयान्।
असौ मुहुः सौधपरम्पराणां
व्यधत्त विश्रान्तिमधित्यकासु ॥ ३६ ॥

भ्रमन्निति ॥ असौ नलः सौधपरम्पराणां सप्तभूमिकप्रासादपरम्पराणामधित्यकासूर्ध्वभूमिषु मुहुः पुनः पुनः विश्रान्तिं व्यधत्त कृतवान्। किं कृत्वा—भैमीविरहात्कृशीयानतितरां कृशो यतः, तस्मादमुष्यामुपकारिकायां भ्रमन् आयस्य बहुश्रमं प्राप्य। श्रमापनोदार्थं क्षणमात्रं तत्र तत्र स्थित्वा ऊर्ध्वगृहान् विशति स्मेत्यर्थः। 'उपत्यकासु' इति पाठः साधीयान्। उपत्यकानां विश्रान्तियोग्यत्वात्। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः ५।२।३४' इत्युभयत्रापि त्यकन् ॥ ३६ ॥

उल्लिख्य हंसेन दले नलिन्या-
स्तस्मै यथाऽदर्शि तथैव भैमी।

---

१ मार्गास्तृणानीति रूपकम्। २ अत्रोत्तरोत्तरं सात्त्विकभावसम्पत्तिवर्णनम्।

१ रोमहर्षणा—श्मनर्तनरूप—वाक्यार्थयोर्यत्तच्छब्दाभ्यामवगतस्य सामानाधिकरण्यस्यानुपपत्त्या सादृश्यमाक्षिप्यत इति निदर्शना। २ मगा—मृगा, धरा—रजः, पदे—प्रसीदेत्यनुप्रासः। ३ अत्र काव्यलिङ्गम्।

तेनाभिलिख्योपहृतस्वहारा
कस्या न दृष्टाऽजनि विस्मयाय ॥ ३७ ॥

दलिख्येति ॥ हंसेन नलिन्या दले पत्रे भैमी-मुल्लिख्य लिखित्वा तस्मै नलाय यथा—भैम्यदर्शि दर्शिता । तथैव तत्र विश्रान्तेन नलेनाप्यभिलिख्य लिखित्वा उपहृतः कण्ठेऽर्पितः स्वहारः स्वीयमुक्ताहारो यस्या एवंभूता चित्ररूपा भैमी दृष्टा सती कस्याः शुद्धान्तसुन्दर्या विस्मयायाश्चर्याय न जाता । तथाभूतां तां दृष्ट्वा, केनेयमत्रातिसुन्दरी लिखिता कण्ठार्पितहारा चेति सर्वा अपि विस्मिता जाता इत्यर्थः । विश्रान्त्यर्थं भैमीं लिखित्वा साक्षाद्भैमीप्राप्तिबुद्ध्याऽनन्तरकरणीयसंकल्पवशात्तेन मुक्ताहारार्पणा कृतेति भावः ॥ ३७ ॥

कौमारगन्धीनि निवारयन्ती
वृत्तानि रोमावलिवेत्रचिह्ना ।
साऽऽलिख्य तेनैक्ष्यत यौवनीय-
द्वाःस्थामवस्थां परिचेतुकामा ॥ ३८ ॥

कौमारेति ॥ तेन नलेन सा भैमी आलिख्य ऐक्ष्यत दृश्यते स्म । किंभूता—कौमारं शैशवं तस्य गन्धो लेशोऽपि विद्यते येषु तानि वृत्तानि खेलादीनि निवारयन्ती निषेधयन्ती, यतः रोमावलिरेव वेत्रयष्टि-चिह्नं यस्याः सा । तथा—यौवनीयायां यौवनसंबन्धिन्यां द्वारि तिष्ठतीति यौवनीयद्वाःस्था तामवस्थामाकारविशेषं परिचेतुकामाऽङ्गीकर्तुकामा । वयःसंधिं प्राप्तां लिखित्वा पश्यति स्मेत्यर्थः । अन्यापि वेत्रधारिणी कांश्चिन्निषेधति, द्वाःस्था च भवति । गन्धीनीति, 'अल्पाख्यायाम् ५।४।१३६' इति गन्धस्येदादेशः ॥ ३८ ॥

पश्याः पुरंध्रीः प्रति सान्द्रचन्द्र-
रजः कृतक्रीडकुमारचक्रे ।
चित्राणि चक्रेऽध्वनि चक्रवर्ति-
चिह्नं तदङ्घ्रिप्रतिमासु चक्रम् ॥ ३९ ॥

पश्या इति ॥ सान्द्रं घनं चन्द्ररजः कर्पूरपरागस्तेन कृता क्रीडा खेलो येनैवंभूतं कुमारचक्रं बालसङ्घो यस्मिन्नेवंविधेऽध्वनि मार्गे तदङ्घ्रिप्रतिमासु नलचरणकमलप्रतिबिम्बेषु वर्तमानं चक्रवर्तिनः सार्वभौमस्य चिह्नं लक्षणं रेखारूपं चक्रं १ पश्याः विलोकयन्तीः पुरन्ध्रीस्तरुणीः प्रति लक्षीकृत्य चित्राण्यतितरामाश्चर्याणि चकार । केन सार्वभौमेनात्र विचारितमिति तासामाश्चर्यमभूदित्यर्थः । 'चान्द्र' इत्यपि पाठः । 'पश्याः' इति पाठे भैम्याः सम्बन्धिनीः पुरन्ध्रीरिति योजना । स्वाम्येन चक्रं राष्ट्रं वर्तयतीति चक्रवर्ती ॥ ३९ ॥

तारुण्यपुण्यामवलोकयन्त्यो-
रन्योन्यमेणेक्षणयोरभिख्याम् ।
मध्ये मुहूर्तं स बभूव गच्छ-
न्नाकस्मिकाच्छादनविस्मयाय ॥ ४० ॥

तारुण्येति ॥ स नलः तारुण्येन पुण्यां चार्वीमन्योन्यं परस्परसंबन्धिनीमभिख्यां शोभामवलोकयन्त्योः पश्यन्त्योः कयोश्चिदेणेक्षणयोर्मृगीदृशोर्मध्ये मुहूर्तं क्षणमात्रं गच्छन्सन् आकस्मिकेन निर्हेतुकेन आच्छादनेन तिरोधानेन कृत्वा यो विस्मय आश्चर्यं तस्मै बभूव । 'भूयादन्तर्धिसिद्धेः—' ( ५–१३७ ) इत्यादिवरदानाददृश्यस्य मम स्पर्शेन भवितव्यम्, शरीरेणान्यस्याच्छादनं कर्तव्यम्, अदृश्येषु मदीयभूपारत्नेषु प्रतिबिम्बेन भवितव्यमित्यादीच्छावशादाच्छादनात्तयोराश्चर्यं जनयति स्मेति भावः । 'पुण्यं तु चार्वपि' इत्यमरः ॥ ४० ॥

पुरःस्थितस्य क्वचिदस्य भूषा-
रत्नेषु नार्यः प्रतिबिम्बितानि ।
व्योमन्यदृश्येषु निजान्यपश्य-
न्विस्मित्य विस्मित्य सहस्रकृत्वः ॥ ४१ ॥

पुर इति ॥ क्वचित्प्रदेशे स्त्रीणां पुरोऽग्रे स्थितस्यास्य नलस्यादृश्येषु भूषारत्नेषु भूषणरत्नेषु निजानि स्वीयानि प्रतिबिम्बानि विस्मित्य विस्मित्य पुनःपुनः विस्मयं प्राप्य नार्यः सहस्रकृत्वः सहस्रवारं व्योमनि गगने अपश्यन्नवलोकयन्ति स्म । केवले गगने केनापि प्रतिबिम्बं नावलोक्यते अस्माभिरवलोक्यते । स्वकीयं परकीयमपि किमेतदिति साश्चर्यं पुनः पुनः ददृशुरित्यर्थः । एतदपि नलस्येच्छावशादेवेति पूर्वमुक्तम् । प्रतिबिम्बितानीति भावे क्तः । रूपाणीति वा सम्बन्धनीयम् ॥ ४१ ॥

---

१ अत्रेन्द्रवज्रा छन्दः । २ रोमावलिवेत्रेति रूपकम् ।

१ 'सान्द्रचन्द्र'–'चक्रे,चक्र'इत्यनुप्रासः । २ अत्र व्यवधानकारणाभावेऽपि व्यवधानरूपकार्योत्पत्तिरिति विभावना । ३ अत्रानुप्रासः ।

तस्मिन्विषज्यार्धपथात्तपातं
तदङ्गरागच्छुरितं निरीक्ष्य ।
विस्मेरतामापुरविस्मरन्त्यः
क्षिप्तं मिथः कन्दुकमिन्दुमुख्यः[1] ॥ ४२ ॥

तस्मिन्निति ॥ इन्दुमुख्यश्चन्द्रवदनाः कन्दुकं निरीक्ष्य मिथः परस्परं क्षिप्तं तमेवाविस्मरन्त्योऽपि विस्मेरतां साश्चर्यतामापुः । किंभूतं कन्दुकम्—तस्मिन्नले विषज्य संघट्ट्य यस्यै क्षिप्तः तामप्राप्य अर्धपथेऽर्धमार्गे एव आत्तोऽङ्गीकृतः पातः पतनं येन तम् । तथा—तदङ्गरागेण नलाङ्गरागेण छुरितं भूषितं रूपितं वा । यस्यै क्षिप्तस्तामप्राप्य मध्ये संघट्टयोग्यस्य वस्तुनोऽभावात्, अकस्मात्कथं पतित इति, कस्याङ्गरागोऽस्मिंल्लग्न इति साश्चर्या जाता इति भावः । पथोऽर्धमिति 'अर्धं नपुंसकम् २ । २ । २४' इति समासः, 'ऋक्पूरब्धूःपथामानक्षे ५।४।७४' इति समासान्तः ॥ ४२ ॥

पुंसि स्वभर्तृव्यतिरिक्तभूते
भूत्वाऽप्यनीक्षानियमव्रतिन्यः[2] ।
छायासु रूपं भुवि वीक्ष्य तस्य
फलं दृशोरानशिरे महिष्यः ॥ ४३ ॥

पुंसीति ॥ महिष्यो राजपत्न्यः मणिबद्धायां भुवि तत्प्रतिबिम्बेषु केवलायां वा भूमौ आतपाभावरूपासु छायासु तस्य नलस्य रूपं स्वरूपं सौन्दर्यं वा वीक्ष्य दृशोर्नेत्रयोः फलं साफल्यमानशिरे प्रापुः । किं कृत्वा—स्वभर्ता भीमः, तस्माद्व्यतिरिक्तभूते व्यतिरिक्तरूपे पुंसि विषये अनीक्षाऽनवलोकनं तस्यां यो नियमोऽवश्यंभावः तल्लक्षणं यद्व्रतं तद्विद्यते यासामेवंभूता भूत्वाऽपि सुन्दरवस्त्ववलोकनात्तासां नेत्रसाफल्यं जातम्। प्रतिबिम्बस्य वाऽऽतपाभावस्य वा पुरुषत्वाभावात्तदवलोकनेऽपि व्रतक्षतिर्नाभूदिति भावः ॥ ४३ ॥

विलोक्य तच्छायमतर्कि ताभिः
पतिं प्रति स्वं वसुधा (ऽ) पिधत्ते ।
यथा वयं किं मदनं तथैनं
त्रिनेत्रनेत्रानलकीलनीलम्[1] ॥ ४४ ॥

विलोकेति ॥ ताभिर्महिषीभिः भुवि तच्छायं नलस्य छायां विलोक्य इत्यतर्कि उत्प्रेक्षितम् । इति किम्—यथा वयं स्वं भीमलक्षणं पतिं प्रत्युद्दिश्य मदनं धारयामः तथा वसुधाऽपि त्रिनेत्रनेत्रानलस्य त्रिलोचनलोचनाग्नेः कीलेन ज्वालेन नीलं श्यामलभूतमेनं मदनं भीमलक्षणं स्वं पतिं प्रतिधत्ते धारयति किम् । छायायाः श्यामत्वात्त्रिनेत्रेत्यादि विशेषणं युक्तम् । यथा वयं भीमं प्रति मदनं पिदध्महे लज्जावशादन्तर्गूढतया धारयामः, तथा स्वं पतिं प्रति वसुधा मदनं पिधत्ते अन्तर्गूढतया धारयति किमिति वा । नलोऽतिसुन्दर इति भावः । 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्यमरः ॥ ४४ ॥

रूपं प्रतिच्छायिकयोपनीत-
मालोकि ताभिर्यदि नाम कायम् ।
तथाऽपि नालोकि तदस्य रूपं
हारिद्रभङ्गाय वितीर्णभङ्गम्[2] ॥ ४५ ॥

रूपमिति ॥ ताभिर्महिषीभिः प्रतिच्छायिकया प्रतिबिम्बेनोपनीतं रूपं नलस्वरूपं सौन्दर्यं वा यदि यद्यपि काममालोकि दृष्टम्, तथाऽपि तदतिप्रसिद्धं ... रूपं नालोकि न दृष्टम् । यतः हारिद्रभङ्गाय हरिद्राच्छेदाय सुवर्णच्छेदाय वाऽतिगौरत्वाद्वितीर्णो दत्तो भङ्गः पराजयो येन तत् । छायायां गौरत्वादिवर्णानालोकनादिति भावः । अतिसौन्दर्यं सूचितम् ॥ ४५ ॥

भवन्नदृश्यः प्रतिबिम्बदेह-
व्यूहं वितन्वन्मणिकुट्टिमेषु ।
पुरं परस्य प्रविशन्वियोगी
योगीव चित्रं स रराज राजा ॥ ४६ ॥

भवन्निति ॥ वियोगी स राजा नलः योगीव वियोगरहित इव, अथ च मुनिरिव विरराज । एतच्चित्रं विरहिणो विरहित्वाभावादाश्चर्यम् । यतोऽदृश्यो भवन्मणिकुट्टिमेषु मणिबद्धभूमिषु प्रतिबिम्बदेहव्यूहं प्रतिबिम्बरूपकायसमूहं वितन्वन्विस्तारयन् । तथा—परस्य पुरं नगरं गृहोपरिगृहं वा प्रविशन् । मुनिरप्यदृश्यो भवति कायव्यूहं च करोति परस्य जीवान्तरस्य शरीरं च प्रविशति, विषयेभ्यो निवृत्तत्वाद्वियोगी च भवति ।

---

१ इन्दुमुख्य इत्युपमा । स्पर्शमात्रेणाङ्गरागस्फुरितत्वासम्भवेऽपि तथोक्तेरातिशयोक्तिश्च ।२परादर्शनव्रतं पालयन्त्योऽपि तद्रूपं साक्षात्कृतवत्यः, अर्थात्, साक्षात्कृत्वाऽपि परादर्शनव्रतं न खण्डितवत्य इति विशेषोक्तिः ।

१ अत्र यथा वयमित्युपमा । त्रिनेत्रनेत्रेत्यनुप्रासः, कीलनीलं मदनमित्युत्प्रेक्षा । २ आलोकि–नालोकीति विरोधाभासः । भङ्गेत्यनुप्रासश्च ।

'पुरं पाटलिपुत्रे स्याद्गृहोपरिगृहे पुरम् । पुरं पुरि शरीरे च' इति विश्वः ॥ ४६ ॥

पुमानिवास्पर्शि मया व्रजन्त्या
छाया मया पुंस इव व्यलोकि ।
ब्रुवन्निवातर्कि मयाऽपि कश्चि-
दिति स्म स स्त्रैणगिरः शृणोति ॥४७॥

पुमानिति ॥ स नल इति स्त्रैणगिरः स्त्रीसमूहवाणीः शृणोति स्म । इति किम्—व्रजन्त्या विचरन्त्या मया पुमानिवास्पर्शि स्पृष्टः, विचरन्त्या मया पुंस इव पुरुषस्येव छाया व्यलोकि दृष्टा,मया कश्चिद्ब्रुवन्निव वदन्निवातर्कि। ससम्भ्रमाभिः सर्वाभिः परस्परं भैमीं प्रत्येव वा एवमुक्तमित्यर्थः । स्त्रैणं स्त्रीसमूहः 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४।१।२७' इति नञ्।स्त्रैणीः स्त्रीसंबन्धिनीर्गिर इति वा४७

अम्बां प्रणत्योपनता नताङ्गी
नलेन भैमी पथि योगमाप ।
स भ्रान्तिभैमीषु न तां व्यविक्त
सा तं च नादृश्यतया ददर्श ॥ ४८ ॥

अम्बामिति ॥ नताङ्गी सुन्दराङ्गी सा भैमी अम्बां मातरं प्रणत्य प्रणम्य उपनता आगता सती नलेन सह पथि योगं सम्बन्धमाप । स नलः भ्रान्तिभैमीषु भ्रान्त्या दृष्टासु भैमीषु मध्ये तां सत्यरूपां न व्यविक्त विवेकेन न ज्ञातवान् । सा चादृश्यतया तं न ददर्श । 'सा तं च नादर्शदृश्यमेव' इति पाठे नाद्राक्षीदेवेत्यर्थः । अदर्शत्, 'ऋदृशोऽङि गुणः ७।४।१६' इति गुणः । प्रणत्य 'वा ल्यपि ६ । ४ । ३८' इत्यनुनासिकलोपे तुक् ॥ ४८ ॥

प्रसूप्रसादाधिगता प्रसून-
माला नलस्योद्भ्रमवीक्षितस्य ।
क्षिप्ताऽपि कण्ठाय तयोपकण्ठं
स्थितं तमालम्बत सत्यमेव ॥ ४९ ॥

प्रसूविति ॥ प्रसूप्रसादाधिगता मातृप्रसादप्राप्ता प्रसूनमाला कुसुममाला उद्भ्रमेण भ्रान्त्या वीक्षितस्यापि नलस्य कण्ठाय तया भैम्या क्षिप्ता उपकण्ठे समीपे स्थितं सत्यरूपमेव तं नलं तत्कण्ठं चालिङ्गत् ॥ ४९ ॥

स्रग्वासनादृष्टजनप्रसादः
सत्येयमित्यद्भुतमाप भूपः ।
क्षिप्तामदृश्यत्वमितां च माला-
मालोक्य तां विस्मयते स्म बाला ५०॥

स्रगिति ॥ भूपो नल इत्यद्भुतमाश्चर्यमाप । इति किम्—वासनादृष्टस्य चिन्तासंतानोपनीतस्य भैमीलक्षणस्य जनस्य प्रसादरूपेयं स्रक् माला सत्या सत्यरूपेति । अलीकदृष्टेन दत्तस्य कुत्रापि सत्यत्वं न दृष्टम्, अत्र त्वपूर्वं दृष्टम् । सा बाला च अलीकनलकण्ठाय क्षिप्तां तां मालामदृश्यत्वमितां प्राप्तामालोक्य विचार्य विस्मयते स्म साश्चर्या बभूव । अलीकदृष्टनलकण्ठे क्षिप्ता माला भूमौ नास्ति केन नीता किं जातमस्या इत्याश्चर्यम् ॥ ५० ॥

अन्योन्यमन्यत्रवदीक्षमाणौ
परस्परेणाध्युषितेऽपि देशे ।
आलिङ्गितालीकपरस्परान्त-
स्तथ्यं मिथस्तौ परिषस्वजाते ॥ ५१ ॥

अन्योन्यामिति ॥ सत्यरूपेण परस्परेणाध्युषितेऽधिष्ठितेऽपि देशे अन्योन्यं परस्परमन्यत्रवदन्योन्यानध्युषितदेशवद्भ्रान्तिदृष्टमिव ईक्षमाणौ विलोकयन्तौ तौ आलिङ्गितं यदलीकं परस्परं तस्यान्तर्मध्ये तथ्यं सत्यमपि मिथः परस्परं परिषस्वजाते आलिलिङ्गतुः । अलीकदृष्टस्य परस्परस्य मध्ये सत्यरूपस्याप्यालिङ्गनं जातमिति भावः । आलिङ्गितमलीकं परस्परं येन एवंभूतमन्तः अन्तःकरणं ययोरिति वा । सत्यमप्यलीकबुद्ध्यैवालिलिङ्गतुरिति भावः। परिषस्वजाते, 'सदिस्वञ्जोः परस्य लिटि' इति स्वञ्जेः परस्य षत्वनिषेधः ॥ ५१ ॥

स्पर्शं तमस्याधिगताऽपि भैमी
मेने पुनर्भ्रान्तिमदर्शनेन ।

---

१ अत्र योगीवेत्युपमा श्लिष्टा । अदृश्यः—अथच प्रतिबिम्बदेहव्यूहं वितन्वन्निति विरोधाभासश्च । २ पुमानिवेत्यादावुपमा । स्वभावोक्तिश्च । ३ अत्र रूपसाम्यातिशयेनाभ्रान्तभैम्या भ्रान्तभैमीभिः समम्, एवमभ्रान्तनलस्य भ्रान्तनलैः समं चाभेदमध्यवसाययितुं यथोक्तमिति सामान्यमलङ्कारः ।

१ अत्र 'प्रसू' इति यमकम्, मालेत्यादौ चानुप्रासः । २—'माप भूपः—माला—माला' इत्यनुप्रासः । ३अन्यत्रवदिति स्वभावोक्तिः ।

नृपः स पश्यन्नपि तामुदीत-
स्तम्भो न धर्तुं सहसा शशाक ॥५२॥

स्पर्शमिति ॥ भैमी सत्यरूपं तम् अस्य स्पर्शमधिगता प्राप्तापि तस्यादर्शनेन पुनर्भ्रान्तिं मेने । सत्यस्य दर्शनेन भाव्यम्, नच दृश्यते सः तस्मादलीकः स्पर्श इत्यमन्यत । स नृपः सत्यरूपां तां पश्यन्नपि झटित्युदीतो जातः सात्त्विकविकाररूपः स्तम्भो यस्य एवंभूतः सन् तां धर्तुं न शशाक ॥ ५२ ॥

स्पर्शातिहर्षादृतसत्यमत्या
प्रवृत्य मिथ्याप्रतिलब्धबाधौ ।
पुनर्मिथस्तथ्यमपि स्पृशन्तौ
न श्रद्दधाते पथि तौ विमुग्धौ ॥ ५३ ॥

स्पर्शेति॥ सत्यरूपपरस्परस्पर्शजनितेन हर्षेणादृतयाऽङ्गीकृतया सत्यमत्या सत्यबुद्ध्या पुनरप्यालिङ्गनादौ प्रवृत्त्य पुनरप्यलीकपरस्परस्पर्शाभावान्मिथ्यात्वेन प्रतिलब्धः सत्यमतेर्बाधो याभ्यामेवंभूतौ सन्तौ तृतीयस्थाने पथि मार्गे तथ्यं सत्यरूपं मिथः परस्परं पुनः स्पृशन्तावपि विमुग्धौ भ्रान्तौ न श्रद्दधाते सत्यत्वेन स्पर्शं न जानीतः स्म । प्रथमस्थले तात्त्विकोपलम्भात्, द्वितीयस्थले बाधोपलम्भात्, तद्दृष्टान्तावष्टम्भेन तृतीयस्थले किं प्रथमस्थल इव सत्यम्, उत द्वितीयस्थल इवासत्यमिति निर्णयाभावादनादरसहितौ जाताविति भावः । पुनरपि तृतीयस्थले सत्यालिङ्गने जातेऽपि विश्वासो नाभूदित्यर्थः ॥ ५३ ॥

सर्वत्र संवाद्यमबाधमानौ
रूपश्रियाऽऽतिथ्यकरं परं तौ ।
न शेकतुः केलिरसाद्विरन्तु-
मलीकमालोक्य परस्परं तु ॥ ५४ ॥

सर्वत्रेति ॥ रूपश्रिया परस्परसौन्दर्यशोभया परम् अतितरां परस्परस्य आतिथ्यकरं सौख्यकरं सर्वत्र बहुषु स्थलेषु संवाद्यं स्पर्शादिना संवादयोग्यं सत्यरूपं परस्परं कर्मभूतमबाधमानौ सत्यत्वेन मन्यमानौ क्वचिदलीकं तु असत्यं पुनः, यद्वा तु अप्यर्थे इति असत्यमपि परस्परमालोक्य तौ भैमीनलौ केलिरसात्क्रीडाप्रीतेः विरन्तुं विरतिं प्राप्तुं न शेकतुः समर्थौ नाभूताम् । क्वचिदलीकत्वेऽपि बहुषु स्थलेषु सत्यत्वादालिङ्गनादिक्रीडां चक्रतुरेवेति भावः । 'तथ्यकरम्' इति पाठे कीदृक्परस्परम्—केवलं तथ्यंकरं सत्यबुद्धिजनकमिति वा ॥ ५४ ॥

परस्परस्पर्शरसोर्मिसेका-
त्तयोः क्षणं चेतसि विप्रलम्भः ।
स्नेहातिदानादिव दीपिकार्चि-
र्निमिष्य किंचिद्द्विगुणं दिदीपे ॥ ५५ ॥

परेति ॥ परस्परस्पर्शरसः अन्योन्यस्पर्शजनितोऽनुरागस्तस्य ऊर्मिरुद्रेकः तज्जनितात्सेकात्सेचनात्तयोश्चेतसि विप्रलम्भो वियोगः क्षणमात्रे किंचिन्निमिष्य पूर्वापेक्षया द्विगुणं द्वाभ्यां गुणनं यथा तथा दिदीपे प्रदीप्तः । कस्मात्किमिव—स्नेहातिदानात् तैलस्य बहुप्रक्षेपाद्दीपिकार्चिरिव दीपशिखेव । सा यथा किंचिन्मन्दीभूय द्विगुणं प्रकाशते । अप्राप्तौ सत्यां विप्रलम्भस्तादृक् दुःसहो न यथा संयोगपूर्वको वियोग इति भावः ॥ ५५ ॥

वेश्माप सा धैर्यवियोगयोगा-
द्बोधं च मोहं च मुहुर्दधाना ।
पुनः पुनस्तत्र पुरः स पश्य-
न्बभ्राम तां सुभ्रुवमुद्भ्रमेण ॥ ५६ ॥

वेश्मेति॥सा भैमी वेश्म स्वगृहम् ।आप । किम्भूता-धैर्यवियोगयोर्योगात्सम्बन्धात्क्रमेण अत्र नलसम्भावना कुतस्त्येति बोधं सम्यग्ज्ञानम्, नल एवायमिति मोहं मिथ्याज्ञानं च मुहुर्दधाना । स नल उद्भ्रमेण भ्रान्तिवशेन तां सुभ्रुवं सुन्दरीं पुनः पुनः पुरोऽग्रे पश्यन् तत्रैव बभ्राम । अलीकतदालिङ्गनादिवाञ्छया तत्रैव विचचारेति भावः ॥ ५६ ॥

पद्भ्यां नृपः संचरमाण एष
चिरं परिभ्रम्य कथंकथंचित् ।
विदर्भराजप्रभवाभिरामं
प्रासादमभ्रंकषमाससाद ॥ ५७ ॥

---

१ अत्र विशेषोक्तिः, स्वभावोक्तिश्च । २ अत्र स्तम्भपदार्थस्य विशेषणगत्या धारणाशक्तिहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमित्याहुः ।

१ अनुप्रासोऽत्र शब्दालङ्कारः।स्वभावोक्तिरर्थालङ्कारः । २ दानादिवेत्युपमा । ३ धैर्यवियोगयोर्योगाद्बोधं मोहं च मुहुः क्रमेण दधानेति यथासङ्ख्यं,'यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः ।' इति तल्लक्षणात् ।

पद्भ्यामिति ॥ पद्भ्यां संचरमाणो विचरन् एष नृपः कथंकथंचिच्चरणचारित्वेन परिचयाभावादतिमहता क्लेशेन चिरं परिभ्रम्य परितो भ्रमित्वा अभ्रंकषमत्युच्चत्वाद्गगनलग्नशिखरं विदर्भराजप्रभवया भैम्या अभिरामं सुशोभमधिष्ठितमित्यर्थः। प्रासादमाससाद प्राप। विप्रलम्भजनितपरिभ्रमणवशादेव प्रासादं प्राप्तवान्, न तु बुद्धिपूर्वकमिति भावः। संचरमाणः, 'समस्तृतीयायुक्तात्' इति तङ्। कथंकथंचित् इति समुदायनिपातोऽतिकृच्छ्रार्थो द्रष्टव्यः। अभ्रंकषम्, 'सर्वकूलाभ्रकरीषेषु कषः ३।२।४२' इति खच्॥ ५७॥

सखीशतानां सरसैर्विलासैः
स्मरावरोधभ्रममावहन्तीम्।
विलोकयामास सभां स भैम्या-
स्तस्य प्रतोलीमणिवेदिकायाम्॥ ५८॥

सखीति॥स नलः तस्य प्रासादस्य प्रतोल्यां पुरोमार्गे मणिवेदिकायां मणिबद्धभूमौ भैम्याः सभां विलोकयामास। किंभूताम्—सखीशतानां सरसैः सशृङ्गारैः विलासैर्विभ्रमैः स्मरस्यावरोधभ्रममन्तःपुरभ्रान्तिमावहन्तीं कुर्वतीम्, सखीनां रतितुल्यत्वात्। प्रतोलीमणिबद्धवेदिकोपरि रचितां सभां ददर्शेत्यर्थः। 'रथ्या प्रतोली विशिखा' इत्यमरः॥ ५८॥

कण्ठः किमस्याः पिकवेणुवीणा-
स्तिस्रो जिताः सूचयति त्रिरेखः।
इत्यन्तरस्तूयत यत्र कापि
नलेन बाला कलमालपन्ती॥ ५९॥

कण्ठ इति॥ यत्र सभायां नलेन कलं मधुरास्फुटमालपन्ती रागालापं कुर्वती कापि काचिद्बाला अन्तर्मनसि इत्यस्तूयत स्तुता नतु व्यक्तवाचा। इति किम्—अस्याः सुन्दर्याः त्रिरेखः लक्षणभूतास्तिस्रो रेखा यस्मिन्स कण्ठः तिस्रोऽपि पिक-वेणु-वीणाः स्वरामृतेन जिताः, पराभूताः सूचयति ज्ञापयति किम्? मधुरस्वराकर्णनेन रेखात्रयदर्शनेन च कोकिला-वेणु-वीणानां त्रयस्य जयसूचनार्थमिदं रेखात्रयं कण्ठेन धृतम्, नतु लक्षणत्वेनेत्युपमीयत इत्यर्थः। 'रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते' इति सामुद्रिकलक्षणोक्तिः॥ ५९॥

१ अत्रानुप्रासः। २ स्मरावरोधभ्रमिति स्मृतिमान् उपमा वा। ३ किमित्युत्प्रेक्षा।

एतं नलं तं दमयन्ति पश्य
त्यजार्तिमित्यालिकुलप्रबोधान्।
श्रुत्वा स नारीकरवर्तिसारी-
मुखात्स्वमाशङ्कत यत्र दृष्टम्॥ ६०॥

एतमिति॥यत्र सभायां स नलः नारी सुन्दरी तत्करवर्तिनी सारी सारिका तस्या मुखादित्येवम् आलिकुलेन सखीसमूहेन पाठितान्प्रबोधान् सान्त्वनवाक्यानि श्रुत्वा स्वमात्मानं ताभिर्दृष्टमाशङ्कत। इति किम्—हे भैमि दमयन्ति! त्वं तं मनसि स्थितमेतं पुरोवर्तिनमागतं वा नलं पश्य, आर्तिं तद्वियोगजनितां पीडां त्यजेति। अहमेताभिः प्रायोऽत्र दृष्टः,अन्यथा सारिकामेवमेताः कुतः पाठयन्तीति॥ ६०॥

यत्रैकयाऽलीकनलीकृताली-
कण्ठे मृषाभीमभवीभवन्त्या।
तद्दृक्पथे दौहदिकोपनीता
शालीनमाधायि मधूकमाला॥ ६१॥

यत्रेति॥ यत्र सभायां मृषा मिथ्या भीमभवीभवन्त्या न भीमभवेत्यसौ न भवन्तीति तया भैमीवेषं धारयन्त्येति भावः। एकया अलीकनलीकृतालीकण्ठे अलीकः मृषाभूतः, असौ, अतएव न नल इत्यसौ कृतो येन असावाल्याः कण्ठस्तत्रेति असत्यनलाकारीकृतसखीकण्ठे दौहदिकोपनीता मालाकारेणानीता मधूकमाला तस्याद्दृश्यस्य नलस्य दृक्पथे दृग्गोचरे शालीनं सलज्जमाधायि निक्षिप्ता। भैमीविनोदार्थं तादृशीमेव क्रीडां सर्वाः कुर्वन्तीति भावः। दौहदिका धात्री वा। वृक्षादिदोहदे नियुक्तो दौहदिकः 'तत्र नियुक्तः ४।४।६९' इति ठक्। 'शालीनकौपीने अधृष्टाकार्ययोः५।२।२' इति निपातनाच्छालीनशब्दः साधुः॥ ६१॥

चन्द्राभमार्द्रं तिलकं दधाना
तद्भ्रान्निजास्येन्दुकृतानुबिम्बम्।
सखीमुखे चन्द्रसमे ससर्ज
चन्द्रानवस्थामिव काऽपि यत्र॥६२॥

१ अत्र सार्या वाक्यस्य नारीवाक्यायमानतया नलस्य तथा शङ्कनं भ्रान्तिं सूचयतीति भ्रान्तिमान्। २ अनुप्रासोऽत्र शब्दालङ्कारः।

चन्द्रेति ॥ यत्र सभायां कापि काचित्सुन्दरी चन्द्राणामनवस्थामियत्तानवधारणान्निर्णयाभावम्, अन्योन्यस्मिन्प्रतिबिम्बादनवस्थितिं वा ससर्ज इव । किम्भूता— चन्द्रसमे चन्द्रतुल्ये निजसखीमुखेऽतिस्वच्छत्वाच्चन्द्राभं चन्द्रतुल्यम्, आभ्रमभ्रमतिस्वच्छद्रव्यविशेषः तत्सम्बन्धि आभ्रं तद्रूपं तिलकं ललाटाभरणं दधाना कुर्वाणा । किम्भूतमाभ्रं तिलकं—तद्वच्चन्द्राकाराभ्रतिलकयुक्तं निजं स्वीयमास्यं तल्लक्षण इन्दुः तेन कृतमनुबिम्बं यत्र । चन्द्राकाराभ्रतिलकयुक्तस्वीयमुखचन्द्रे कृतमनुबिम्बं येनेति वा । यन्मुखे चन्द्राकारे चन्द्राकारोऽभ्रतिलकः क्रियते, तस्याश्चन्द्राकारोऽभ्रतिलको, मुखं च द्वौ चन्द्रौ अलंकारकारिण्याश्चन्द्राकारेऽभ्रतिलके प्रतिबिम्बितौ । यया चालंकारः क्रियते तस्या मुखं, तत्र विद्यमानोऽभ्रतिलकश्च द्वौ चन्द्रौ यस्याः क्रियतेऽलंकारस्तन्मुखेचन्द्राभ्रतिलके प्रतिबिम्बितौ । एवं प्रतिबिम्बितयोरपि परस्पराभिमुखमुखचन्द्राभ्रतिलकयोः प्रतिबिम्बरूपौ परस्परमुखचन्द्राभ्रतिलकौ प्रतिबिम्बितौ । एवं प्रतिबिम्बितप्रतिबिम्बादावित्येवं चन्द्रानवस्था द्रष्टव्या । तद्विततेऽत्र—तद्वदित्यत्र मतुपो मकारस्य 'झयः ८।२।१०' इति वः ॥ ६२ ॥

दलोदरे काञ्चनकेतकस्य
क्षणान्मसीभावुकवर्णलेखम् ।
तस्यैव यत्र स्वमनङ्गलेखं
लिलेख भैमी नखलेखिनीभिः ॥ ६३ ॥

दलोदर इति ॥ यत्र सभायां तस्यैव काञ्चनकेतकस्य सुवर्णकेतकीकुसुमस्य दलोदरे पत्रगर्भे क्षणाल्लेखनानन्तरं क्षणमेव मसीभावुका मसीभवनशीला वर्णलेखा यस्मिन् तस्यैव नलसंबन्धिनमेव मम नखक्षतादिवाञ्छा विद्यत इत्येवमादिरूपं स्वं स्वीयमनङ्गलेखं मदनोपदिष्टं लेखनं भैमी नखलेखिनीभिर्लिलेख । विरहिणीभिः स्वीयभावसूचनार्थं प्राणेशाय पत्रिका प्रेष्यते, यस्या वर्णाश्च लिख्यन्ते । केतकीपुष्पेषु नखलेखानां श्यामीभवनं स्वभावः । भावुक-इति 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ३ । २ । १५४' इति शीले उकञ् ॥ ६३ ॥

१ अत्र चन्द्राभमिति चन्द्रसम इति चोपमा, निजास्येन्द्विति रूपकम्, इवेत्युत्प्रेक्षा च । २ अत्रानुप्रासः शब्दालङ्कारः । नखलेखिनीभिरिति रूपकमर्थालङ्कारः ।

विलेखितुं भीमभुवो लिपीषु
सख्याऽतिविख्यातिभृताऽपि यत्र ।
अशाकि लीलाकमलं न पाणि-
रपारि कर्णोत्पलमाक्षि नैव ॥ ६४ ॥

विलेखितुमिति ॥ यत्र सभायां लिपीषु चित्रकर्मसु अतिविख्यातिभृताऽतिकुशलया अपि भैमीसख्या भीमभुवो भैम्या लीलाकमलं भित्तौ चित्रपटे वा विलेखितुमशाकि शक्तम् । पाणिः करो नैव लेखितुं शक्तः । तथा—कर्णोत्पलं कर्णाभरणीभूतं विलेखितुमपारि पर्याप्तम् । अक्षि तु लेखितुं नैवापारि । लीलाकमलावतंसोत्पलापेक्षया पाणिनयनमतिसुन्दरत्वाल्लेखितुं न शक्तमिति भावः । विलेखितुम्, 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ३ । ४ । ६५' इति, 'पर्याप्तिवचनेष्वलमर्थेषु ३ । ४ । ६६' इति वा तुमुन्, लघूपधत्वाद्गुणः । लिपीषु, 'कृदिकारादक्तिनः' इति ( ग.) ङीष् ॥ ६४ ॥

भैमीमुपावीणयदेत्य यत्र
कलिप्रियस्य प्रियशिष्यवर्गः ।
गन्धर्ववध्वः स्वरमध्वरीण-
तत्कण्ठनालैकधुरीणवीणाः ॥ ६५ ॥

भैमीमिति ॥ यत्र सभायां कलिप्रियस्य नारदस्य गन्धर्ववधूलक्षणः प्रियः शिष्यवर्गः एत्यागत्य भैमीमुपावीणयद्वीणया उपागायत् । किंभूतः—स्वरमधुना स्वरामृतेनारीणं पूर्णं तस्या भैम्याः कण्ठनालं तेन एकधुरां वहति एकधुरीणा तुल्या वीणा यस्य । प्रथमं गन्धर्ववध्वः, अनन्तरं नारदेन वीणावादनामध्यापिताः, अतिकौशलात्तस्यातिप्रियाः । एवंविधा अपि वीणावादने ततोऽप्यधिकं कौशलमभ्यसितुं तत्रागत्य भैमीं वीणयोपगायन्ति स्मेति भावः । वीणागन्धर्व्यपेक्षया भैमीकण्ठस्यातिमाधुर्यं सूचितम् । नालपदेन मुखस्य कमलत्वं च । 'ध्क (स्य) न्नं रीणं स्नुतं स्रुतम्' इत्यमरः । रीणम् 'ओरीङ् क्षरणे' अस्माद्दोदित्वान्निष्ठानत्वम् । उपावीणयत्, 'सत्यापपाश—रूपवीणातूलश्लोकसेनालोमत्वचवर्म्मवर्णचूर्णचुरादिभ्यो णिच् ३ । १ । २५' इति णिच् । कलिः प्रियो

१ अत्रानुप्रासः ।

यस्येति 'वा प्रियस्य' इति (वा) पूर्वनिपाताभावः । एकधुरीणेत्यत्र 'एकधुराल्लुक्च ४।४।७९' इति खः ॥ ६५ ॥

नावा स्मरः किं हरभीतिगुप्ते
पयोधरे खेलति कुम्भ एव ।
इत्यर्धचन्द्राभनखाङ्कचुम्बि-
कुचा सखी यत्र सखीभिरूचे ॥ ६६ ॥

नावेति ॥ यत्र सभायां सखीभिः सखी इतिः पूर्वोक्तमूचे । किम्भूता—अर्धचन्द्राभोऽर्धचन्द्राकारो नखाङ्को नखक्षतं तेन चुम्बिनावाश्लिष्टौ स्तनौ यस्याः । इति किम्—हे सखि, स्मरस्ते तव पयोधरे स्तनलक्षणे कुम्भ एव, अथ च पयोधरे जलाधारे कुम्भ एव, हराद् भीतिस्तस्याः सकाशादात्मानं गोपायतीति हरभीतिगुप् एवम्भूतः सन् नावा नौकया खेलति । किम् वितर्के । अर्धचन्द्राकारत्वान्नखाङ्के नौकात्वं युक्तम् । 'अग्निभीतो हि शैत्यप्रधानं स्थानमाश्रयति' इति त्रिनेत्रानलाद्भीत्या पलायितो निर्भयं शीतस्तनद्वयलक्षणं स्थानमागत्य सुखेन जलक्रीडां करोतीत्यर्थः । एवमन्योऽपि वैरिणः सकाशात्पलाय्य निर्भयं स्थानं गत्वा क्रीडति । हरेण पार्वत्याः सकाशाद्भीतिस्तया गुप्ते अमर्दिते सौन्दर्यात्त्वत्कुचमर्दनवाञ्छायां समुत्पन्नायामप्यर्धाङ्गत्वात्पार्वतीकोपभिया हरेणास्पृष्टेत्यर्थे कुचविशेषणं वा । पार्वतीभिया हरागमनसंभावनाया अप्यभावान्निर्भयत्वेन स्मरस्य क्रीडा युज्यत इत्यर्थः । नखाङ्कचुम्बिपीवरत्वत्कुचदर्शनात्सर्वस्यापि कामोद्रेको भवतीति भावः । हरेण पार्वतीभीत्या गुप्ते ऽस्पृष्टे सुन्दरि सखि, सम्बोधनं वा । हरभीलक्षणा ईतिः परचक्रं तस्मादात्मानं गोपायतीति मदनविशेषणं वा । हरोऽप्येतद्दर्शनविमोहितो मम वशं गतः शान्तकोपो भविष्यतीति बुद्ध्या निर्भय इति ॥ ६६ ॥

स्मराशुगीभूय विदर्भसुभ्रू-
वक्षो यदक्षोभि खलु प्रसूनैः ।
स्रजं सृजन्त्या तदशोधि तेषु
यत्रैकया सूचिशिखां निखाय ॥ ६७ ॥

स्मरेति ॥ प्रसूनैः पुष्पैः स्मराशुगीभूय कामबाणीभूय विदर्भसुभ्रूवक्षो भैमीवक्षो यदक्षोभि पीडितं तद् भैमीवक्षःक्षोभलक्षणं वैरं तेषु पुष्पेषु गुणे घटनार्थं सूचिशिखां सूच्यग्रं निखायारोप्य स्रजं मालां सृजन्त्या रचयन्त्या एकया अशोधि शोधितं, खलूत्प्रेक्षते । तेषां शस्त्रप्रहारकरणाद्वैरनिर्यातनं तया कृतमित्यर्थः । यत्र काचिन्मालां जग्रन्थेति भावः । मालाकारिण्याश्च पुष्पेषु सूचिशिखानिखननं प्रकृतिः ॥ ६७ ॥

यत्रावदत्तामतिभीय भैमी
त्यज त्यजेदं सखि साहसिक्यम् ।
त्वमेव कृत्वा मदनाय दत्से
बाणान्प्रसूनानि गुणेन सज्जान् ॥ ६८ ॥

यत्रेति ॥ यत्र सभायां भैमी अतिभीय अतितरां भयं प्राप्य तां मालाकारिणीमित्यवदत् । इति किम्—हे सखि, इदं मालाग्रथनलक्षणं साहसिक्यमविचार्यकारित्वं त्यज त्यज मुञ्च मुञ्चेति । साहसिकत्वमेवाह—यतः प्रसूनानि पुष्परूपान्बाणान्गुणेन दोरकेण, अथ च मौर्व्या, सज्जान् संनद्धान्कृत्वा मदनाय त्वमेव दत्से ददासि । मां पीडयतः कामस्य मौर्वीसंबद्धबाणदानेन या त्वं साहायकमाचरसि सा त्वं समीचीना सहचरी भवसीति सोल्लुण्ठनं तामवददित्यर्थः । मालायां बाणसंनद्धमौर्वीबुद्ध्या भैम्या भयं जातमिति भावः । त्यज त्यजेति भयाद्विरुक्तिः । सहसा वर्तते साहसिकी 'आजःसहोम्भसा वर्तते ४।४।२७' इति ठक् । तस्याः भावे 'गुणवचनब्राह्मणादिभ्यः कर्मणि च ५।१।१२' इत्येन ष्यञ् ॥ ६८ ॥

आलिख्य सख्याः कुचपत्रभङ्गी-
मध्ये सुमध्या मकरीं करेण ।
यत्रालपत्तामिदमालि यानं
मन्ये त्वदेकावलिनाकनद्याः ॥ ६९ ॥

आलिख्येति ॥ यत्र सभायां काचित्सुमध्या सुन्दरी सख्याः कुचयोः पत्रभङ्गीमध्ये पत्रवल्लीरचनामध्ये करेण मकरीमालिख्य तां सखीमित्यालपदवदत् । इति किम्—हे आलि सखि ! त्वदेकावलिस्तव एकयष्टिकमुक्ताहारविशेषः, तल्लक्षणाया नाकनद्याः स्वर्गङ्गाया इदं मकरीलक्षणं यानं वाहनं मन्ये तर्कयामि । स्वच्छ-

१ अत्र यमकमनुप्रासश्च शब्दालङ्कारौ, कण्ठनालैकधुरीणवीण इत्युपमा । २ किमित्युत्प्रेक्षा, चन्द्राभेत्युपमा, पयोधर एव पयोधरः(जलाशयः)इति रूपकं च ।

१ अत्रोपेन्द्रवज्रा छन्दः । अनुप्रासः शब्दालङ्कारः । खलिवत्युत्प्रेक्षाऽर्थालङ्कारः । २ अत्र दत्से ( ननु दत्से ) 'इत्युत्प्रेक्षा ।

त्वान्मुक्ताहारस्य नाकनदीत्वम्, हारसमीपे मकर्या विद्यमानत्वान्मकरीवाहनत्वं नाकनद्यामुत्प्रेक्षितम् । 'एकावल्येकयष्टिका' इत्यमरः । गङ्गा मकरवाहिनीति प्रसिद्धिः[1] ॥ ६९ ॥

तामेव सा यत्र जगाद भूयः
पयोधियादः कुचकुम्भयोस्ते ।
सेयं स्थिता तावकहृच्छयाङ्क-
प्रियाऽस्तु विस्तारयशःप्रशस्तिः ॥७०॥

तामिति ॥ यत्र सा मुग्ध्या तामेव सखीं भूयः पुनरपि इति जगाद । इति किम्—हे सखि ! पयोधियादः समुद्रजलजन्तुः तावकस्त्वदीयहृदयस्थितो हृच्छयः कामस्तस्य अङ्कश्चिह्नं मीनस्तस्य प्रिया प्राणेश्वरी ते कुचकुम्भयोः स्थिता सती सेयं मकरी अर्थात्कुचयोः विस्तारस्य पीवरत्वस्य यशःप्रशस्तिर्यशःशासनमनु भवत्विति । या समुद्रे सदा वसति सा तं विहाय नेत्कुचयोः स्थिता, तर्हि तदपेक्षयाऽनयोस्त्वत्कुचयोः पीवरत्वं दुरवगाहत्वं च स्पष्टतरम्, नान्यस्येति यशःशासनमनु । प्राणेशस्य हृच्छयत्वेन प्रियाया अपि तत्रैव स्थातुमुचितमिति भावः ॥ ७० ॥

शारीं चरन्तीं सखि मारयैता-
मित्यक्षदाये कथिते कयाऽपि ।
यत्र स्वघातभ्रमभीरुशारी-
काकूत्यसाकूतहसः स जज्ञे ॥ ७१ ॥

शारीमिति ॥ चरन्तीं गृहाद् गृहान्तरं गच्छन्तीमथ च भ्रमन्तीमेतां शारीमक्षोपकरणं, शकुनिविशेषं च हे सखि ! गृहाण मारय जहि चेति कयापि कयाचित्सखीं प्रति अक्षदाये पाशकदाने कथिते सति यत्र स नलो द्वितीयार्थप्रतीत्या स्वघातस्य भ्रमो भ्रान्तिस्तेन भीरुर्भयशीला शारी पक्षिविशेषस्तस्या काकुर्भयविकृतस्वरस्तस्य उत्थ उत्थानं तेन साकूतः साभिप्रायो हसो हासं यस्य एवंविधो जज्ञे जातः । मां मारयिष्यतीति भिया सविकृतस्वरमुक्तीनां शारीं दृष्ट्वा पक्षोरप्येवं ज्ञानं कथमिति भ्रान्तिवशाच्च साश्चर्यत्वात्सहास्यो जात इत्यर्थः । 'शारी चाक्षोपकरणे तथा शकुनिकान्तरे'

इति 'दायो दाने यौतकादिधने' इति च विश्वः । 'एचः स्वनद्धयोर्वा ३।३।६२' इत्यप् ॥ ७१ ॥

भैमीसमीपे स निरीक्ष्य यत्र
ताम्बूलजाम्बूनदहंसलक्ष्मीम् ।
कृतप्रियादूत्यमहोपकार-
मरालमोहद्रढिमानमूहे ॥ ७२ ॥

भैमीति ॥ यत्र स नलो भैमीसमीपे ताम्बूलधारणार्थं जाम्बूनदहंसलक्ष्मीं सुवर्णघटितहंसपुत्तलिकाशोभां निरीक्ष्य कृतः प्रियादूत्यलक्षणो महानुपकारो येन एवंभूतो मरालो हंसस्तस्मिन् मोहो भ्रान्तिस्तस्य द्रढिमा दृढत्वमूहे प्रापेत्यर्थः । मम दूतो हंस एवायं किमिति तस्य भ्रमो जात इत्यर्थः । ऊहे, वहेर्लिटि 'वचिस्वपियजादीनां किति ६।१।१५' इति सम्प्रसारणम् ॥ ७२ ॥

तस्मिन्नियं सेति सखीसमाजे
नलस्य सन्देहमथ व्युदस्यन् ।
अपृष्ट एव स्फुटमाचचक्षे
स कोऽपि रूपातिशयः स्वयं ताम् ७३

तस्मिन्निति ॥ अथ स प्रसिद्धः कोऽपि लोकोत्तरो रूपातिशयः सौन्दर्यातिशयोऽपृष्ट एव स्वयमात्मनैव तां भैमीं स्फुटं प्रकटमाचचक्षे कथयति स्म । किं कुर्वन्—तस्मिन्सखीसमाजे सखीसमूहमध्ये सा प्रसिद्धा भैमीयं भविष्यतीति प्रतिसखि जातं नलस्य संदेहं व्युदस्यन्निराकुर्वन् सहचर्यपेक्षया सौन्दर्यातिशयदर्शनादियं भैमीति नलेन स्वत एव ज्ञातमित्यर्थः । पूर्वेण संदेहस्वरूपेण नो देयमिति बुद्ध्वा अपृष्ट एव भविष्यत्संदेहनिराकरणार्थमाचष्ट इति हेतौ शता । प्रथमं सखीसमूहदर्शने जाते आसु मध्ये का भैमीति संदेहे तदनन्तरं भैमीदर्शने जाते रूपातिशयः संदेहं निराकुर्वन्नपृष्ट एव भैमीमाचष्टेति वा व्याख्या । 'व्युदस्य' इति ल्यबन्तो वा पाठः ॥ ७३ ॥

भैमीविनोदाय मुदा सखीभि
स्तदाकृतीनां भुवि कल्पितानाम् ।

---

१ मन्य इत्युत्प्रेक्षा, स्वदेकावलिनाकनद्या इति रूपकं चात्रार्थालङ्कारः । २ अत्र पयोधियादः—प्रशस्तिरसीवाति रूपकम् ।

१ अत्रेन्द्रवज्रा छन्दः । अनुप्रासः शब्दालङ्कारः । २ अत्रानुप्रासः शब्दालङ्कारः । द्रढिमानमिति स्मरणमर्थालङ्कारः । ३ रूपातिशयस्याख्यातृत्वस्यासम्भवेऽपि लोकव्यवहारमादाय वचनं, तेन तस्यास्तत्तत्सर्वापेक्षयाऽतिशयरूपाढ्यं व्यज्यत इति व्यतिरेकः ।

नातर्कि मध्ये स्फुटमप्युदीतं
तस्यानुबिम्बं मणिवेदिकायाम् ॥७४॥

भैमीति ॥ सखीभिर्भैम्या विनोदाय मनोरञ्जनाय मुदा हर्षेण मणिवेदिकायां भुवि लेखितानां तदाकृतीनां नलप्रतिस्वरूपाणां मध्ये मणिवेदिकायामुदीतं स्फुटं जातमपि तस्य सत्यस्य नलस्यानुबिम्बं प्रतिबिम्बं ताभिर्नातर्कि न लक्षितम्। रचितनलप्रतिच्छन्दमध्ये सत्यमपि प्रतिबिम्बं प्रतिच्छन्दबुद्ध्या सत्यत्वेन न ज्ञातमित्यर्थः७४

हुताशकीनाशजलेशदूती-
निराकरिष्णोः कृतकाकुयाच्ञाः ।
भैम्या वचोभिः स निजां तदाशां
न्यवर्तयद्दूरमपि प्रयाताम् ॥ ७५ ॥

हुताशेति ॥ स नलो भैम्या वचोभिर्दूरमत्यर्थम्, अथ च दूरदेशं प्रयातामपि प्राप्तामपि निजां स्वीयां तदाशां भैमीसंबन्धिनीमाशां न्यवर्तयत्। किंभूताया भैम्याः—हुताशोऽग्निः, कीनाशो यमः, जलेशो वरुणः, तेषां दूतीः, निराकरिष्णोर्निराकरणशीलायाः । किंभूता दूतीः—कृता काकुयाच्ञा दैन्यस्वरयुक्ता याचना याभिस्ताः । वह्न्यादित्रयदूतीनिराकरणेन पुनरपि भैमीप्राप्तावाशासहितो बभूवेत्यर्थः। वह्न्यादेरप्रधानत्वाद्दूतीवचनप्रकारो विस्तरेण नोक्तः। अन्यदपि दूरं प्रयातं वचनैः परावर्त्यते । दूतीः, 'नलोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः ॥ ७५ ॥

विज्ञप्तिमन्तःसभयः स भैम्या
मध्येसभं वासवसम्भलीयाम् ।
संभालयामास भृशं कृशाश-
स्तदालिवृन्दैरभिनन्द्यमानाम् ॥ ७६ ॥

विज्ञप्तिमिति ॥ स नलो मध्येसभं सभामध्ये तस्या भैम्यां आलिवृन्दैः सखीवृन्दैरिन्द्रदूती सम्यग्वदतीति अभिनन्द्यमानामभिनन्दितां वासवस्य सम्भली दूती तत्संबन्धिनीं भैम्या विज्ञप्तिं सावधानः संभालयामास समाकर्णयामास । किंभूतः सः— भैमी वासवं प्रायेण वरिष्यतीति अन्तःसभयो मनसि भयसहितः । तथा —अस्या वचनं स्वीकरिष्यतीति तथा स्वसखीवचनं भैमी करिष्यत्येवेति बुद्ध्या भैम्यां कृशाशः खण्डिताशः । 'संभली कुट्टनी समे' इत्यमरः । ज्ञपेर्ण्यन्तायुचि विज्ञापनेति यद्यपि भवितव्यं, तथापि 'क्तिन्नावादिभ्यश्च' इति वचनादास्यादयः प्रयोगतोऽनुसर्तव्या इति वचनाज्ज्ञप्तिरित्यत्र क्तिन् । पदमञ्जरीकारोऽप्येवमेव समर्थितवान् । मध्येसभम्, 'पारेमध्ये षष्ठ्या वा २।१।१८' इत्यव्ययीभावे नपुंसकत्वे ह्रस्वः, एदन्तत्वं निपातनात् ॥ ७६ ॥

लिपिर्न दैवी सुपठा भुवीति
तुभ्यं मयि प्रेरितवाचिकस्य ।
इन्द्रस्य दूत्यां रचय प्रसादं
विज्ञापयन्त्यामवधानदानैः ॥ ७७ ॥

लिपिरिति ॥ हे भैमि, त्वं विज्ञापयन्त्यामिन्द्रस्य दूत्यां मयि अवधानदानैरेकाग्रचित्तत्वेन प्रसादं रचय कुरु । एकाग्रचित्तत्वमेव प्रसादः । किंभूतस्य—इति तुभ्यं त्वदर्थं प्रेरितं वाचिकं संदेशवचनं येन । इति किम्—भुवि विद्यमानेन लोकेन दैवी देवसंबन्धिनी लिपिर्न सुपठा सुखेन पठितुं न शक्येति कृत्वा पत्रिका न दत्ता । सावधाना सतीन्द्रविज्ञापनामाकर्णयेत्यर्थः । वाचिकम्, 'वाचो व्याहृतार्थायाम्' इति स्वार्थे ठक् । 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते वा' इति नपुंसकत्वम् । तथा—सेनैव सैन्यम्, मालैव माल्यम् । विज्ञापयन्त्याम्, घटादिपाठात् ( ठेऽपि ) 'मितां ह्रस्वः' इत्यत्र 'वा चित्तविरागे'इत्यतो वेत्यनुवृत्तेर्व्यवस्थितविभाषया 'विज्ञापना भर्तृषु सिद्धिमेति' इत्यादिमहाकविप्रयोगदर्शनाच्च ह्रस्वाभावात्साधुत्वं ज्ञेयम् ॥ ७७ ॥

सलीलमालिङ्गनयोपपीड-
मनामयं पृच्छति वासवस्त्वाम् ।
शेषस्त्वदाश्लेषकथापनिद्रै-
स्तद्रोमभिः संदिदिशे भवत्यै ॥ ७८ ॥

सलीलमिति ॥ वासवः सलीलं सविलासमालिङ्गनया आश्लेषेणोपपीडमुपपीड्य गाढमालिङ्ग्य त्वामनामयमारोग्यं पृच्छति—हे भैमि, तव आरोग्यं विद्यते कच्चिदिति । 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रं पृच्छेदनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥' इति मनु-

---

१ अत्र सामान्यमलङ्कारः, 'प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया । ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम् ॥' इति प्रकाशोक्तेः । तेन भ्रान्तिमान् व्यज्यत इति बोध्यम् । २ अत्रानुप्रासः शब्दालङ्कारः ।

१ अत्रानुप्रासः । २ अत्रानुप्रासः ।

वचनात् । तवाश्लेषकथया तवालिङ्गनकथावशात् । अपनिद्रैर्विकसितैस्तस्य इन्द्रस्य रोमभिः कर्तृभिः शेषोऽवशिष्टोऽर्थो भवत्यै तुभ्यं संदिदिशे संदिष्टः । इन्द्रस्त्वय्येव सानुरागः, तस्मात्त्वयानुग्रहीतव्य इत्यर्थः । सात्त्विकभावोदयेन गद्गदकण्ठत्वादन्यत्किंचिन्न संदिदेशेत्यर्थः । 'लिगि चित्रीकरणे, चुरादिराङ्पूर्वः श्लेषणे' तस्माण्ण्यन्तत्वाद्युच् । उपपीडम्, 'सप्तम्यां चोपपीडरुधकर्षः ३।४।४९' इति णमुल् ॥ ७८ ॥

**यः प्रेर्यमाणोऽपि हृदा मघोन-**
**स्त्वदर्थनायां ह्रियमापदागः ।**
**स्वयंवरस्थानजुषस्तमस्य**
**बधान कण्ठं वरणस्रजाशु ॥ ७९ ॥**

य इति ॥ हे भैमि, त्वयाऽहमनुग्राह्य इत्यादि त्वदर्थनायां त्वदीययाच्ञायां विषये मघोन इन्द्रस्य मनसा प्रेर्यमाणोऽपि यः कण्ठो ह्रियं लज्जालक्षणमागोऽपराधमापत्प्राप । लज्जया किमप्यन्यन्नोक्तवानित्यर्थः । त्वं स्वयंवरस्थानजुषः स्वयंवरस्थानस्थितस्यास्येन्द्रस्य तं सापराधं कण्ठं वरणस्य स्रजा मालया आशु शीघ्रं बधान । सापराधो हि प्रभुणा दोरकेण बध्यते । त्वमप्यस्य प्रभुतुल्येत्यर्थः । एवं सानुरागमिन्द्रं वृणीष्वेति भावः ॥ ७९ ॥

**नैनं त्यज क्षीरधिमन्थनाद्यै-**
**रस्यानुजायोद्गमितामरैः श्रीः ।**
**अस्मै विमथ्येक्षुरसोदमन्यां**
**श्राम्यन्त नोत्थापयितुं श्रियं ते ॥ ८० ॥**

नैनमिति ॥ हे भैमि, त्वमेनं इन्द्रं मा त्यज । यैरमरैः क्षीरधिमन्थनादस्येन्द्रस्यानुजायोपेन्द्राय श्रीरुद्गमिता निर्गमिता, ते देवा इक्षुरसोदमिक्षुरससमुद्रं विमथ्य मथित्वा अस्मै इन्द्रार्थमन्यां श्रियमुत्थापयितुं निर्गमयितुं न श्राम्यन्तु यैर्देवैः क्षीरसमुद्रं निर्मथ्य लक्ष्मीं निर्गमय्य सा इन्द्रानुजाय दत्ता, ज्येष्ठत्वात्तस्यापि पूज्यायेन्द्राय तैस्ततोऽप्यधिका दातव्या, सा इक्षुरससमुद्रमथनं विना न प्राप्यत इति तदर्थं तन्मथने तेषां प्रयासः स्यात्, त्वत्प्राप्त्या स प्रयासो मा भूत् । त्वं लक्ष्म्याः सकाशादतिसुन्दरी, एनं वृणीष्वेति भावः । अतिसौन्दर्येण त्वमेवेक्षुरससमुद्रसंभवा लक्ष्मीरित्यर्थः । इक्षुरस एवोदकं यस्य, 'उदकस्योदः संज्ञायाम् ६।३।५७' इति उदभावः ॥ ८० ॥

**लोकस्रजि द्यौर्दिवि चादितेया**
**अप्यादितेयेषु महान्महेन्द्रः ।**
**किंकर्तुमर्थी यदि सोऽपि रागा-**
**ज्जागर्ति कक्षा किमतः पराऽपि ॥ ८१ ॥**

लोकेति ॥ हे भैमि, लोकस्रजि चतुर्दशभुवनमालायां द्यौर्महती स्वर्गोऽधिकः । दिवि च आदितेया युद्धसंमुखरणादिप्राप्तदेवत्वापेक्षया अदित्यपत्यानि ये देवास्ते महान्त,आदितेयेष्वपि महेन्द्रो महान् । सोऽपि एवंविध इन्द्रोऽपि रागादनुरागात् यदि तव किंकर्तुं किंकरीभवितुमर्थी प्रार्थयत इत्यर्थः । नतु केनापि बलात्कारेण प्रवर्तितः।अतःपराऽपि अन्याऽपि कक्षा उत्कर्षः किं जागर्ति । नास्त्येवेत्यर्थः । इन्द्रोऽपि तव किंकरीभवितुमिच्छति अत एव तव तुल्या कापि सौभाग्यवती सुन्दरी च न विद्यत इति भावः।अदित्या अपत्यानि आदितेयाः 'कृदिकारादक्तिनः' इति (वा) ङीपन्तात् 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४।१।८५' इति ण्यं बाधित्वा 'स्त्रीभ्यो ढक् ४।१।१२०' इति ढक् ॥ ८१ ॥

**पदं शतेनाप मखैर्यदिन्द्र-**
**स्तस्मै स ते याचनचाटुकारः ।**
**कुरु प्रसादं तदलंकुरुष्व**
**स्वीकारकृद्भ्रूनटनश्रमेण ॥ ८२ ॥**

पदमिति ॥ इन्द्रः शतेन मखैर्यज्ञशतेन यत्पदं प्राप स इन्द्रस्तस्मै पदाय ते तव याचने प्रार्थनाविषये चाटूनि प्रियवचनानि करोतीति कारः । त्वं प्रसादं कुरु, तथा तत् ऐन्द्रं पदं स्वीकारकृदङ्गीकारसूचकं भ्रूनटनं भ्रूचालनं तदेव श्रमस्तेन प्रयासमात्रेणालंकुरुष्व । भ्रूभङ्गेनाङ्गीकुरुष्वेत्यर्थः । इन्द्रवरणे स्वर्गाधिपत्यं तवैव भविष्यतीति-

१ अनुप्रास एवात्रापि । रोम्णां संदेशनसाधकत्वोक्त्या दूतरूपत्वं व्यज्यते । २ अत्र ह्रियमागः इति रूपकम् । आगस्कृतश्च कण्ठबन्धनं युक्तमिति बधानेत्यादि तादृशं व्यवहारं प्रत्याययतीति समासोक्तिश्च ।

१ क्षीरोदजापेक्षयेक्षुसमुद्रजाया आधिक्यमिति, अथ च न त्वमेवम्भूतेति साऽपि त्वदुपमानमिति व्यतिरेकमादायेयमुक्तिः । एवं च व्यतिरेककृत एवात्र चमत्कारः । २ अत्रानुप्रासः । उत्तरोत्तरं श्रेष्ठत्वोक्तेरत्र सारालङ्कारः । 'उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ।' इति हि प्रकाशकाराः ।

भावः । प्रभोर्भ्रूविक्षेप एवाङ्गीकारसूचकः । चाटुकारः 'कृञो हेतुताच्छील्यानुलोम्येषु ३।२।२०' इति प्राप्तस्य टस्य 'न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ३।२।२३' इति निषेधादण् ॥ ८२ ॥

मन्दाकिनीनन्दनयोर्विहारे
देवे धवे देवरि माधवे वा ।
श्रेयः श्रियां यातरि यच्च सख्यां
तच्चेतसा भाविनि भावयस्व ॥ ८३ ॥

मन्दाकिनीति ॥ मन्दाकिनीनन्दनयोर्विहारे जलक्रीडादौ यच्छ्रेयो मङ्गलं भवेत् । तथा—देव इन्द्रे धवे भर्तरि च यच्छ्रेयः । तथा—माधवे नारायणे देवरि स्वामिनः कनीयसि भ्रातरि च यच्छ्रेयः । तथा—यातरि भर्तृभ्रातृजायायां सखीप्रायायां लक्ष्म्यां च यच्छ्रेयः हे भाविनि, विचारचतुरे भैमि, त्वं तत्सर्वं चेतसा भावयस्व विचारय । इन्द्रवरणे यत्केनापि दुर्लभं तत्सर्वं त्वया सुलभमितीन्द्रं वृणुष्वेति भावः । देवे माधवे च अग्न्यादीनां वरणे मन्दाकिनीविहारमात्रम्, न तु नन्दनविहारः । तथा—अग्न्यादिर्देवो वरो, न माधवो देवरः । तथा—श्रीः संपद्रूपा सखी, न तु लक्ष्मीरूपयातृरूपा सखी । इन्द्रवरणे त्वेतद्द्वयप्राप्तिर्भविष्यति तस्माद्विचार्य अग्न्यादीन्परित्यज्येन्द्रमेव वृणीष्वेति भावः । भावाः शृङ्गारादयो वा । 'श्यालाः स्युभ्रातरः पत्न्याः स्वामिनो देवृदेवरौ,' 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' इत्यमरः । 'दिव ऋन्' इत्यौणादिक ऋन्प्रत्यये देवा तस्मिन्देवरि । 'यतेर्वृद्धिश्च' इति याता तस्यां यातरि ॥ ८३ ॥

रज्यस्व राज्ये जगतामितीन्द्रा-
द्याच्ञाप्रतिष्ठां लभसे त्वमेव ।
लघूकृतस्त्वं बलियाचनेन
तत्प्राप्तये वामनमामनन्ति ॥ ८४ ॥

रज्यस्वेति ॥ त्रयाणामपि जगतां तस्मिन्राज्ये त्वं रज्यस्व प्रीतिमती भवेति इन्द्रात्सकाशाद्याच्ञाप्रतिष्ठां याच्ञाजन्यं माहात्म्यं त्वमेव लभसे प्राप्नोषि, नान्या । यस्य त्रैलोक्यराजस्य प्राप्तये बलियाचनेन लघूकृतः स्व आत्मा येन तं पुरुषं वामनं सर्वे महानुभावा आमनन्ति ब्रुवन्ति । याचनजन्यलघुत्वादेव तस्य वामनत्वं, न त्वन्यतः लघुत्वमाश्रित्य वामनेन यद्राज्यमिन्द्रार्थमर्थितं तद्राज्ये त्वं रज्यस्वेतीन्द्रेण स्वयं प्रार्थितायास्तव प्रतिष्ठा कथं न भवति, अपि तु भवत्येव । रज्यस्व 'रञ्ज रागे' दिवादिः। स्वरितेत्त्वादात्मनेपदम् ॥ ८४ ॥

यानेव देवान्नमसि त्रिकालं
न तत्कृतघ्नीकृतिरौचिती ते ।
प्रसीद तानप्यनृणान्विधातुं
पतिष्यतस्त्वत्पदयोस्त्रिसंध्यम् ॥ ८५ ॥

यानिति ॥ त्वं यानेव देवांस्त्रिकालं त्रिसंध्यं नमसि नमस्करोषि तेषां कृतघ्नीकृतिः कृतघ्नीकरणं ते तव न औचिती । तेषामकृतज्ञताकरणं नोचितम् । तर्हि किं कर्तव्यमित्यत आह—त्रिसंध्यं तव पादयोः पतिष्यतः तान्देवानप्यनृणानृणरहितान्विधातुं कर्तुं प्रसीद प्रसन्ना भव। इन्द्रवरण इन्द्रसेवार्थमागच्छद्भिर्देवैरिन्द्रं प्रणम्येन्द्राणीं विहाय तवापि प्रणतिः करिष्यते । त्वया पूर्वं नमस्कृतास्त्रिकालं त्वां नमस्यन्ति पुरा तेन तेषामनृणत्वं भविष्यति । इन्द्रं वृणीष्वेति भावः । त्रिकालम्, त्रिसंध्यं च पात्रादित्वान्ङीबभावः । उभयत्राप्यत्यन्तसंयोगे द्वितीया॥८५॥

इत्युक्तवत्या निहितादरेण
भैम्या गृहीता मघवत्प्रसादः ।
स्रक्पारिजातस्य ऋते नलाशां
वासैरशेषामपुपूरदाशाम् ॥ ८६ ॥

इतीति ॥ पारिजातस्य पुष्पस्रक् माला नलस्याशामृते नलाभिलाषं विना वासैः परिमलैः कृत्वा अशेषामाशां सकला अपि दिशोऽपुपूरत्पूर्णा चकार । किंभूता स्रक्—इति पूर्वोक्तमुक्तवत्या इन्द्रदूत्या निहिता दत्ता । तथा—आदरेण भैम्या गृहीता च । तथा—मघवत इन्द्रस्य प्रसादरूपा । सर्वा अपि दिशः परिमलवहला

१ अत्र कुर्वेति यमकम् । २ अत्रानुप्रासः । मन्दाकिनी–नन्दनसम्बन्धिन्यां विहारक्रियायां माधवदेवृकत्व–श्रीयातृकत्वरूपयोर्गुणयोर्युगपत्सामस्त्यामिति समुच्चयोऽर्थालङ्कारोऽपि 'गुणक्रियायौगपद्यं समुच्चयः।' इति प्रकाशोक्तेः ।

१ अत्रानुप्रासः, मनेति यमकं च । त्रैलोक्यराज्यस्य कृते श्रीपतिरपि यद्वामनो भूतस्तत्किमिवेति न सुवचं, किंतु निरुपममिति अथ तदेव स्वयं प्रत्यर्पयतीतीदमप्यन्यदहो इति भाग्यसम्पत्तेरतिशयोक्तावुदात्तम्। त्वमेवेति व्यतिरेकमादाय तत्प्राप्तये इत्यादिना दृष्टान्तोपन्यासाद् दृष्टान्तश्च । २ अत्र तकारानुप्रासः ।

जाता इत्यर्थः । आदरेण मालाया गृहीतत्वादिन्द्रे भैम्यनुरागसंभावनया नलः शिथिलाशो जातः,इन्द्रदूत्यादीनामपि तत एवाभिलाषपूरणं जातमिति भावः । 'न मां तथा जातमृते तवालि' 'फलति पुरुषाराधनमृते' इत्यादिप्रयोगदर्शनादृतेयोगे नलाशामिति द्वितीयापि भवति । 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वविधानात् 'पूरी आप्यायने' दैवादिकस्य पूर्यते पूरयतेर्वा अपूपुरदिति प्राप्ते अपुपूरदिति चिन्त्यम् ।न च 'नाग्लोपि—' इत्यादिना निषेधप्रसङ्गः । अग्लोपित्वाभावाद्गत्यन्तरं मृग्यम् । संज्ञापूर्वको विधिरनित्य इत्युपधाह्रस्वत्वाभाव इति वा । 'पूरी आप्यायने' इत्यस्य पूरणं पूरः । घञ्, तं करोतीति, 'तत्करोति तदाचष्टे' (वा ) इति णिचि अग्लोपित्वे सति 'नाग्लोपिशास्वृदिताम् ७।४।२' इत्युपधाह्रस्वनिषेधात् अपुपूरदिति वा ॥ ८६ ॥

आर्ये विचार्यालमिहेति कापि
योग्यं सखि स्यादिति काचनाथे ।
ओंकार एवोत्तरमस्तु वस्तु
मङ्गल्यमत्रेति च काप्यवोचत् ॥ ८७॥

आर्ये इति ॥ हे आर्ये श्रेष्ठे, इह इन्द्रवरणविषये विचार्यालं विचारो न कर्तव्यः किंतु इन्द्रो वरणीय इति काप्यवोचत् । काचन अयि सखि भैमि, इदमिन्द्रवरणं योग्यमुचितं स्यादित्यवोचत् । काऽपि च इत्यवोचत् । इति किम्—अत्र इन्द्रवरणविषये अङ्गीकारसूचक ओंकार एव वस्तु तात्त्विकं मङ्गल्यमस्तु भवतु । इति सखीनां सम्मतिः, मङ्गल्यामित्यहार्थे यत् ॥ ८७ ॥

अनाश्रवा वः किमहं कदाऽपि
वक्तुं विशेषः परमस्ति शेषः ।
इतीरिते भीमजया न दूती-
मालिङ्गदालीश्च मुदामियत्ता ॥ ८८ ॥

अनेति ॥ भीमजया इति पूर्वोक्तमभिहिते सति मुदां हर्षाणामियत्ता परिमितता दूतीमालीः सखीश्च न आलिङ्गत् । अनयास्मद्वचनेनेन्द्रवरणमङ्गीकृतामिति बुद्ध्या ता अपरिमितहर्षा जाता इत्यर्थः । इति किम्—हे सख्यः, अहं कदाऽपि कदाचिदपि वो युष्माकमनाश्रवा वचनकारिणी न किम् ? अपितु सर्वदा भवद्वचनकारिण्येव भवदुक्तं मया क्रियत एव सर्वदा परं किंतु वक्तुं शेषः अवशिष्टो विशेषोऽस्ति । नालिङ्गत्, अपि त्वालिङ्गदेव । शेषपदश्रवणादल्प एव संतोषोऽभूदित्यर्थ इति वा । विशेषः शेषोऽस्ति किम् ? अपितु नास्तीत्युभयत्रापि किमः सम्बन्धाद्भ्रान्तिवशादपरिमितहर्षा जाता इति वा । परं किंत्वर्थे ॥ ८८ ॥

भैमीं च दूत्यं च न किंचिदाप-
मिति स्वयं भावयतो नलस्य ।
आलोकमात्राद्यदि तन्मुखेन्दो-
रभून्न भिन्नं हृदयारविन्दम् ॥ ८९ ॥

भैमीमिति ॥ अहं भैमीं च दूत्यं च किंचिदपि द्वयोर्मध्ये किमप्यहं नापं न प्राप्तवानिति स्वयं भावयतश्चिन्तयतो नलस्य हृदयारविन्दं यदि यद् भिन्नं विदीर्णं नाभूत् तत् तन्मुखेन्दोर्भैमीमुखचन्द्रस्य आलोकमात्राद्दर्शनादेव नान्यतो हेतोः । पूर्वोक्तचिन्तावशात्तस्य हृदयस्फोटेन यद्यपि भवितव्यं, तथाऽपि भैमीमुखालोकनतत्परतया तेन न भूतमित्यर्थः । हृदयस्फोटपर्यन्तं तस्य दुःखं जातमिति भावः । इन्द्रानादरसूचकभैमीमुखावलोकनान्न स्फुटितमिति भाव इति वा । अथ च कमलं चन्द्रप्रकाशाद्भिन्नं विकसितं न भवति किंतु संकुचत्येवेति युक्तम् । दूत्यप्राप्ती कीर्तिर्भवति, दूत्याप्राप्तौ कीर्त्यभावाद् दुःखम् ॥ ८९ ॥

ईषत्स्मितक्षालितसृक्कभागा
दृक्सञ्ज्ञया वारिततत्तदालिः ।
स्रजा नमस्कृत्य तयैव शक्रं
तां भीमभूरुत्तयाञ्चकार ॥ ९० ॥

ईषदिति ॥ भीमभूः भैमी तयैव स्रजा शक्रं सह वा नमस्कृत्य मालामेव महान्प्रसाद इति कृत्वा तामिन्द्रदूतीमुत्तरयांचकार उत्तरवतीं चकार । इन्द्रवाचिकस्य प्रत्युत्तरं ददावित्यर्थः । ताम् उत्तरमाचष्टेति वा । किंभूता—इन्द्रस्य दूत्यादीनामिन्द्रे स्वीयानुरागप्रतीतिसूचकहर्षप्रदर्शनात् ईषत्स्मितेनाल्पस्मितेन क्षालितो धौतः सृक्कभाग ओष्ठप्रान्तदेशो यस्याः सा । तथा—दृक्संज्ञया किंचित्कटाक्षविक्षेपलक्षणेन संकेतेन वारिता निषिद्धा 'आर्ये, विचार्या-

१ प्रसादःस्रगिति रूपकम् । २ अत्रानुप्रासः ।

१ यमकमनुप्रासश्च । २ अत्रोपमा । इन्दोर्विकाशे, अरविन्दविकासासम्भवात्तयोक्तिर्विरुद्धैवेति विरोधाभासोऽपि शब्दाप्रयोगाद् व्यज्यते ।

लम्' इति ब्रुवत्यस्तास्ता आलयः सख्यो यया । लोकरीत्या नमस्कारोऽनङ्गीकारसूचकः । स्मितशब्देनै-वेपस्त्वप्रतीतेरीषत्पदमत्यल्पत्वसूचनार्थम् । 'प्रान्तावोष्ठस्य सृक्कणी' इत्यमरः । उत्तरवर्ती करोति 'तत्करोति तदाचष्टे' (वा) इति णिचि मतुब्लोपः । तदाचष्टे इति वा णिच् ॥ ९० ॥

स्तुतौ मघोनस्त्यज साहसिक्यं
वक्तुं कियत्तं यदि वेद वेदः ।
मृषोत्तरं साक्षिणि हृत्सु नृणा-
मज्ञातृविज्ञापि ममापि तस्मिन् ॥ ९१ ॥

स्तुताविति ॥ हे दूति, 'लोकस्रजि द्यौः—' ( ६ । ८१ ) इत्यादि मघोनः स्तुतौ साहसिक्यमविचार्यकारित्वं त्यज मुञ्च । वर्णयितुमशक्यस्य तस्य वर्णनं त्वं मा कार्षीः । कुतः साहसिकत्वमित्यत आह, तं शक्रं वक्तुं वर्णयितुं यदि वेद जानाति, तर्हि वेदः कियत्किंचिद्वेद नान्यः । मानुषस्य का कथेत्यर्थः । तस्य वर्णनं त्वं करोषीति महत्साहसं तवेत्यर्थः । तस्य वर्णनं न कार्यम् । नृणां हृत्सु साक्षिणि मनुष्यहृदयविज्ञे तस्मिन्निन्द्रे अज्ञातारमजानानं विज्ञापयति बोधयत्येवंशीलं ममाप्युत्तरं प्रतिवचनं मृषा अर्थाद्व्यर्थमेव । एवंविधमुत्तरमज्ञातारमेव प्रति सार्थकम्, नतु सकलहृदयवेदिनं प्रतीत्यर्थः । त्वत्कृतवर्णनं मृषा, मया मनसि धृतं नलमिन्द्रोऽपि जानातीति प्रत्युत्तरं व्यर्थम् । अथ यदि न जानाति तदा तस्य विज्ञत्वमपि न, एवमविज्ञं प्रत्युत्तरदानमपि व्यर्थमिति भावः ॥ ९१ ॥

आज्ञां तदीयामनु कस्य नाम
नकारपारुष्यमपैति जिह्वा ।
प्रह्वा तु तां मूर्ध्नि विधाय मालां
बालापराध्यामि विशेषवाग्भिः ॥ ९२ ॥

आज्ञामिति ॥ कस्य नाम जिह्वा तदीयामैन्द्रीमाज्ञामनु लक्षीकृत्य न करोमीत्येतद्रूपं पारुष्यं काठिन्यमुपैतु प्राप्नोतु ? अपितु न कस्यापि । सर्वैरपि तदाज्ञा क्रियत एवेत्यर्थः । तु पुनः प्रह्वा नम्रा सती बालाऽहं तामाज्ञां मालामाज्ञारूपां मालां मूर्ध्नि विधाय शिरसा स्वीकृत्य, अथ च नमस्कृत्य, विशेषवाग्भिर्विशेषवचनैरपराध्यामि । 'अदेवदेहमिन्द्रं वृणे' ( ६ । ९४ ) इत्यादिवचनैः देवदेहं न वृण इति निश्चितत्वादपराध इत्यर्थः । अज्ञत्वादाज्ञाया अकरणेऽप्यपराधो न मन्तव्य इति बालपदेन सूचितम् । भूमीन्द्रवरणाक्रियत्याशांङ्गीकृतेत्यर्थः । मालापि मूर्ध्नि विधीयते ॥ ९२ ॥

तपःफलत्वेन हरेः कृपेय-
मिमं तपस्येव जनं नियुङ्क्ते ।
भवत्युपायं प्रति हि प्रवृत्ता-
वुपेयमाधुर्यमधैर्यसर्जि ॥ ९३ ॥

तप इति ॥ इयमीदृशी हरेः कृपा तपःफलत्वेन महतस्तपसः फलं परिपाकः तत्त्वेन इमं मल्लक्षणं जनं स्वकारणे तपस्येव नियुङ्क्ते प्रेरयति । येन तपसेयं कृपा लब्धा तत्तप एव त्वया कर्तव्यमिति मामाज्ञापयतीत्यर्थः । तपसः फले जाते पुनरपि तपस्येव किमिति प्रवर्त्तयतीत्याशङ्क्याह—हि यस्मादुपेयस्य फलस्य माधुर्यं श्रेष्ठत्वमुपायं स्वसाधनं प्रत्युद्दिश्य प्रवृत्तौ अधैर्यकारि भवति । येनेदं फलं लब्धम्, तदेव पुनरपि कर्तव्यमिति पुरुषं स्वसाधने लम्पटं करोति । अत इयं कृपा तपस्येव प्रेरयतीत्यर्थः । 'स्वादुप्रियौ तु मधुरौ' इत्यमरः । यथा तपसोपायेनात्यन्तदुर्लभापीन्द्रकृपा प्राप्ता, तथैव तपसा नलप्राप्तिर्भविष्यतीति निश्चयात्तपसि मां पुनः प्रवर्तयतीति भावः । नियुङ्क्ते, 'स्वराद्यन्तोपसर्गादिति वक्तव्यम् (वा.)' इति तङ् ॥ ९३ ॥

शुश्रूषिताहे तदहं तमेव
पतिं मुदेऽपि व्रतसम्पदेऽपि ।
विशेषलेशोऽयमदेवदेह-
मंशागतं तु क्षितिभृत्तयेह ॥ ९४ ॥

शुश्रूषिताह इति ॥ यस्मादियमैन्द्री कृपा तपस्येव नियुङ्क्ते, तत्तस्मादहं मुदेऽपि हर्षार्थं व्रतसंपदेऽपि नियमसमूहसिद्ध्यर्थं च तमिन्द्रमेव पतिं प्राणेशं शुश्रूषिताहे तस्यैव सेवां कर्तुमिच्छामि । तर्हि अस्माकं मनोरथेन

---

१ स्मिते क्षालनसाधनताया वस्तुगत्याऽसम्भव इति लक्षणयोज्ज्वलनीकरणं बुध्यते, प्रयोजनं च स्मितस्यातीव कान्तिशालित्वप्रत्यायनमिति बोध्यम् । २ वेदेति यमकम् । विज्ञापि ममापीत्यनुप्रासश्च ।

१ अत्राज्ञायाम्मालात्वारोपाद्रूपकम् । २ अत्रानुप्रासः शब्दालङ्कारः । अर्थान्तरन्यासोऽर्थालङ्कारश्च ।

फलितामित्यत आह—अयं तु अयं पुनः विशेषलेशः स्वल्पो विशेषः इह भुवि क्षितिभृत्तया राजत्वेनांशेनागतं राज्ञो लोकपालांशत्वस्मरणादेवंविधमदेवदेहं मनुष्यशरीरम् । इन्द्रांशं भूमीन्द्रं नलमेव वृणे, नतु देवदेहमिन्द्रमिति भावः । शुश्रूषिताहे, 'शाश्रुस्मृदृशां सनः' १ ।३ ।५७ 'इति तङ् । उत्तमैकवचने टेरेत्वे 'ह एति १ । ४ ।५२' इति तासेः सस्य हः ॥ ९४ ॥

अश्रौषमिन्द्रादरिणीर्गिरस्ते
सतीव्रतातिप्रतिलोमतीव्राः ।
स्वं प्रागहं प्रादिषि नामराय
किंनाम तस्मै मनसा नराय ॥ ९५ ॥

अश्रौषमिति ॥ हे दूति,अहं ते तव गिरोऽश्रौषम् । किंभूता गिरः—इन्द्रे आदरोऽस्त्यासां ताः । तथा—सतीव्रतस्य पतिव्रताव्रतस्य अतिप्रतिलोमा अतिप्रतिकूलाः, अत एव तीव्रा दुःसहाः । अनुचितमेतन्मया कृतमिति शेषः । अनूढायाः सतीत्वाभावाद्व्रतलोपः कुतस्तरामित्यत आह—अहं स्वम् आत्मानं मनसान्तःकरणेन प्राक्पूर्वम् अमराय देवेन्द्राय न प्रादिषि दत्तवती, किं नाम किं तर्हि—नराय मनुष्याय तस्मै इन्द्राय इन्द्रांशत्वाद्भूमीन्द्राय मनसा आत्मानं दत्तवती, अथ च रलयोरभेदात्तस्मै प्रसिद्धाय नलाय । 'मनः पूर्वरूपम्, वागुत्तररूपम्' इति श्रुतेः । कायिकवाचिकयोर्मनःपूर्वकत्वान्मानसस्यैव विवाहस्य मुख्यत्वादन्तःकरणेन पूर्वमेव नलस्य वृतत्वान्मम सतीत्वम् । सत्या च परपुरुषकथापि नाकर्णनीया, सा च मयाऽऽकर्णितेत्यनुचितं कृतमिति भावः । प्रादिषि, दाञो लुङ्युत्तमपुरुषैकवचने 'स्थाघ्वोरिच्च १ । २। २७' इतीत्त्वकित्त्वे ॥ ९५॥

तस्मिन्विमृश्यैव वृते हृदैषा-
मैन्द्री दया मामनुतापिकाऽभूत् ।
निर्वातुकामं भवसम्भवानां
धीरं सुखानामवधीरणेव ॥ ९६ ॥

तस्मिन्निति ॥ तस्मिन्नले विमृश्यैव विचार्यैव हृदा मनसा वृते सति एषा दया मामनुतापिका पश्चात्तापयिष्यन्ती मा भूत् । यदि मया नलः पूर्वं न वृतः स्यात् तर्हीदानीमिन्द्रो व्रियेत । पूर्वमविचार्यैवाहं नलं वृतवती, अनुचितमेतत्कृतमिति पश्चात्तापो न विद्यत इत्यर्थः । का कमिव—भवे संसारे संभव उत्पत्तिर्येषां सुखानामापातरमणीयानामवधीरणा अवज्ञा निर्वातुकामं मुमुक्षुं धीरमिव यथा न संतापयति । कस्मिन्सति—कस्मिंस्तच्छब्दवाच्ये ब्रह्मणि हृदा विमृश्यैवाङ्गीकृते सति । विषया मया वृथा त्यक्ता इति यथा धीरो न तप्यते तथाऽहमपि न तप्ये इत्यर्थः । मोक्षसुखस्य संसारसुखस्य च यावदन्तरं तावन्नलेन्द्रयोरिति भावः । मामनुतापिका, भविष्यदकेन योगे 'अकेनोर्भविष्यदाधमर्ण्ययोः २ । ३ । ७०' इति षष्ठीनिषेधाद्द्वितीया ॥ ९६ ॥

वर्षेषु यद्भारतमार्यधुर्याः
स्तुवन्ति गार्हस्थ्यमिवाश्रमेषु ।
तत्रास्मि पत्युर्वरिवस्ययेह
शर्मोर्मिकिर्मीरितधर्मलिप्सुः ॥ ९७ ॥

'मुदेऽपि व्रतसंपदेऽपि' (६।९४) इत्युक्तं विवृणोति—वर्षेष्विति ॥ आर्येषु साधुषु मध्ये धुर्याः श्रेष्ठा मन्वादयः, वर्षेषु इलावृतादिखण्डेषु मध्ये यत् जम्बूद्वीपनवमांशं भारतं खण्डम् अतिपुण्यभूमित्वात्स्तुवन्ति । केषु किमिव—आश्रमेषु ब्रह्मचर्यादिषु मध्ये गार्हस्थ्यं गृहस्थाश्रमामिव । स्तुवन्तीत्यर्थः । 'यथाऽरण्यं समाश्रित्य सर्वे जीवन्ति जन्तवः । वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः ॥' इति । तत्र तस्मिन्निह भारते खण्डे पत्युः प्राणेशस्य नलस्य वरिवस्यया सेवया अहं शर्मणः सुखस्योर्मयः परम्परास्ताभिः किर्मीरितो मिश्रितो धर्मः, तं लिप्सुरभिलाषुका अस्मि । नलसेवयोभयमपि भविष्यतीति स एव वृत इति भावः । भरतस्य क्षत्रियस्येदं भारतम् । 'वरिवस्या तु शुश्रूषा' इत्यमरः ॥ ९७ ॥

स्वर्गे सतां शर्म परं न धर्मा
भवन्ति भूमाविह तच्च ते च ।
शक्या मखेनापि मुदोऽमराणां
कथं विहाय त्रयमेकमीहे ॥ ९८ ॥

---

१ अत्र देवीति यमकम्, अन्यत्रानुप्रासः । २ सतीत्यादावनुप्रासः, रायेति यमकं च शब्दालङ्कारः ।

१ दयाया अनुतापिकात्वं विरुद्धमिवेति विरोधाभासः, धीरणेवेत्युपमा च ।२ अत्र अनुप्रासः शब्दालङ्कारः, उपमा चार्थालङ्कारः ।

नलवरणेनैव पूर्वोक्तं द्रढयति—

स्वर्ग इति ॥ स्वर्गे सतां स्थितिमतां जनानां परं केवलं शर्म अस्ति, न धर्माः पुण्यानि, तस्य केवलं भोगभूमित्वात् । इह भारतभूमौ पुनस्तच्च सुखं च ते धर्माश्च सन्ति । कर्मभोगभूमित्वाद्भारतस्येत्यर्थः । इन्द्रे वृते तत्सुखोत्पादनाद्धर्मोऽपि विद्यत इत्याशङ्क्याह— अमराणां मुदो मखेनापि शक्याः । यज्ञकरणादिन्द्रप्रीतिरपि कर्तुं शक्या इति स्वर्गे केवलं सुखम्, अत्र तु सुखम्, धर्मो, देवमुदश्च; इत्येतत्त्रयं विहाय केवलमेकं सुखं कथमिहेच्छामि । तस्मान्नले वृते सुखादित्रयप्राप्तेर्नलवरणमेव ज्यायः । अन्योऽपि यत्र बहु प्राप्नोति तदेव गृह्णाति । इन्द्रवरणे तस्यैव सुखं, नान्येषाम् । नलवरणे सर्वेषां देवानामित्यभिप्रायेण बहुवचनम्[1] ॥ ९८ ॥

साधोरपि स्वः खलु गामिताऽधो
गमी स तु स्वर्गमितः प्रयाणे ।
इत्यायती चिन्तयतो हृदि द्वे
द्वयोरुदर्कः किमु शर्करे न ॥ ९९ ॥

पूर्वोक्तमेवान्वयव्यतिरेकाभ्यां समर्थयते—

साधोरिति ॥ साधोर्धार्मिकस्यापि स्वः स्वर्गात्सकाशात्प्रयाणे खलु निश्चितमधोगामिता अधःपातिता । 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति भगवद्वचनात् । इतो भारतवर्षात्तु प्रयाणे मरणरूपे सति स साधुः स्वर्गं गमी पुण्यवत्त्वात् । इति द्वयोः स्वर्गमर्त्ययोः द्वे आयती उत्तरकालौ हृदि चिन्तयतो विचारयतः पुरुषस्य द्वयोस्तयोरुदर्क उत्तरं फलम् उभे द्विविधे शर्करे न किमु किंतु शर्करे एवेत्यर्थः । परमियान् विशेषः । तत्रैका मृत्प्राया, द्वितीयेक्षुरसप्राया, अतः स्वर्गस्याधोगामिहेतुत्वेन मृत्प्रायत्वमादाय शर्करासमत्वम्, भुवः पुनरूर्ध्वगामिताहेतुत्वेनेक्षुरसप्रायत्वमादाय शर्करासमत्वम्, तथा च स्वर्गो न विवेकिने रोचते, भूः पुना रोचत एवेति कृत्वा ममात्र भुव्येव नलपरिचर्यैव ज्यायसीति भावः । 'शर्करा खण्डविकृतावुपलाशर्करांशयोः' इति विश्वः । गमी इति 'भविष्यति गम्यादयः ३।३।१३' इति भविष्यतीनौ कृते 'अकेनोर्भविष्यदाधमर्ण्ययोः २।३।७०' इति षष्ठीनिषेधात्स्वर्गमिति द्वितीया[2] ॥ ९९ ॥

प्रक्षीण एवायुषि कर्मकृष्टे
नरान्न तिष्ठत्युपतिष्ठते यः ।
बुभुक्षते नाकमपथ्यकल्पं
धीरस्तमापातसुखोन्मुखं कः ॥ १०० ॥

स्वर्गवाञ्छा सर्वथा न कर्तव्येत्याह—

प्रक्षीण इति ॥ यः स्वर्गः कर्मकृष्टे कर्मार्जिते आयुषि प्रक्षीण एव नितरां क्षीणे सत्येव नरानुपतिष्ठते तैः संगतो भवति । तिष्ठति आयुषि नोपतिष्ठते प्राप्नोति । न तिष्ठति स्थिरो भवतीति वा । क्षणमात्रं न प्रतीक्षते पुनरप्यधोगामित्वात् 'क्षीणे पुण्ये—' इति भगवद्वचनात् । 'कर्मकृष्टेः' इति पाठे पुण्यक्षयादित्यर्थः । धीरः क आपातसुखोन्मुखमविचारितरमणीयसुखकारिणम् । प्रथमान्तपाठे अविचारितरमणीयसुखोद्युक्तः अपथ्यकल्पमपथ्यतुल्यं तं नाकं बुभुक्षते भोक्तुमिच्छति, अपितु न कोऽपि । तस्मान्नल एव वरणीयो नत्विन्द्र इति भावः । उपतिष्ठते, 'उपाद्देवपूजासङ्गतिकरण—' इत्यादिना (वा.) सङ्गतिकरणे तङ् । पथोऽनपेतं पथ्यम् 'धर्मपथ्यर्थ—' इत्यादिना यत् । ततो नञ्समासे ईषदसमाप्तौ कल्पः[2] ॥ १०० ॥

इतीन्द्रदूत्याः प्रतिवाचमर्धे
प्रत्युह्य सैषाऽभिदधे वयस्याः ।
किंचिद्विवक्षोल्लसदोष्ठलक्ष्मी-
जितापनिद्रद्दलपङ्कजास्याः ॥ १०१ ॥

इतीति ॥ इन्द्रदूत्या इति एवंप्रकारं प्रतिवाचं प्रत्युत्तरं अर्धे मध्य एव प्रत्युह्य समाप्य सैषा भैमी वयस्याः सखीरभिदधे उवाच । किंभूताः—किंचिद्विवक्षया इन्द्रवरणानुगुणं किंचिद्वक्तुमिच्छया उल्लसन्तौ स्फुरन्तौ यौ ओष्ठौ तयोर्लक्ष्म्या शोभया जितमपनिद्रद्दलं विकसत्पत्रं पङ्कजं येन एवंविधमास्यं यासां ताः। तस्याः प्रत्युत्तरं त्यक्त्वा मध्ये सखीनिषेधार्थमवददित्यर्थः । ओष्ठौ पद्मदलाधिकौ, मुखं पद्माधिकमित्यर्थः । प्रत्युह्य 'उपसर्गा-

---

१ अत्र स्वर्गादपि भूमेरुत्कर्षोक्तेर्व्यतिरेकः ।

१ स्वर्गो न भूरिवेति व्यतिरेकपर्यवसायितामादायेन्द्रादपि नलस्यैव श्रेष्ठत्वमिति व्यतिरेकस्यैव पर्यवसानोत्पादनाद् व्यतिरेकाद्व्यतिरेको ध्वन्यते । द्वावप्युदर्कौ शर्करे इवेति साम्यं पर्यवसीयत इतीयमपि निदर्शनेत्यपि बोध्यम् । २ अपथ्यकल्पमित्युपमा ।

ऋत्व ऋहतेः' इति ह्रस्वः । अपगता निद्रा येभ्यस्तान्यपनिद्राणीवाचरन्तीति 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः( वा ) इति क्विप् । तदन्ताच्छतौ ॥ १०१ ॥

अनादिधाविस्वपरम्पराया
हेतुस्रजः स्रोतसि वेश्वरे वा ।
आयत्तधीरेष जनस्तदार्याः
किमीदृशः पर्यनुयोगयोग्यः ॥ १०२ ॥

अनादीति ॥ अनादि: आदिरहितं यथा तथा धाविन्या भ्रमन्त्याः पुनःपुनरावर्तमानायाः स्वस्य जीवात्मनः परम्परायाः पङ्क्तेर्हेतूनां कारणानामदृष्टलक्षणानां शुभाशुभकर्मणां स्रजो मालायाः स्रोतसि प्रवाहे ईश्वरे वा एष सकलो लोको मल्लक्षणो वा यस्मादायत्ता प्रवाहाधीना ईश्वराधीना वा बुद्धिर्यस्य एवंभूतोऽस्ति । तस्माद्धो आर्या बुद्धिमत्यः सख्यः, ईदृशः पराधीनः सकलो मल्लक्षणो वा जनः त्वमेवं चिकीर्षसीति पर्यनुयोग आक्षेपः प्रश्नो वा तद्योग्यः तदर्हः किम्, अपितु न भवति । अदृष्टमीश्वरो वा यथा यथा प्राणिनं प्रवर्तयति तादृशी बुद्धिरुदेति । तथाच त्वमेवं किं चिकीर्षसीत्याक्षेपं प्रश्नं वा स प्राणी नार्हति तस्य स्वातन्त्र्याभावात् । ततश्च अदृष्टवशादीश्वरवशाद्वा नलेऽनुरक्ताहमपि त्वं नले किमित्यनुरक्ता, इन्द्रे किमिति नेत्युभयथा पर्यनुयोग्या न भवामीति प्रकृते भवतीभिः किमपि न वक्तव्यमिति भावः । अनादिधाविनां स्वेषामेषामात्मनां नलभैमीलक्षणानां परम्पराया हेतुस्रजः । प्रतियुगं हि नलभैमीसंबन्धः श्रूयते, न त्विन्द्रभैमीसंबन्ध इति वा व्याख्या । 'किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मभिः' इति, 'किं करोति सुधीरस्मिन्नीश्वराज्ञावशंवदः' इति च वृद्धवचनम् । प्रवाहपतितं हि किमपि कर्तुमसमर्थमिति स्रोतःपदेन सूचितम्[1] १०२॥

नित्यं नियत्या परवत्यशेषे
कः संविदानोऽप्यनुयोगयोग्यः ।
अचेतना सा च न वाचमर्हे-
द्वक्ता तु वक्रश्रमकर्म भुङ्क्ते ॥ १०३ ॥

पूर्वोक्तमेवाह—

नित्यमिति ॥ अशेषे समस्ते जने नित्यं सर्वदा नियत्या दैवेन परवति अदृष्टाधीने सति संविदानोऽपि ज्ञाताऽपि कोऽनुयोगयोग्यः, अपितु न कोऽपि । दैवेन यथा प्रेर्यते तथैव सर्वोऽपि करोतीत्यर्थः । कुमार्गप्रवृत्युत्पादिका नियतिरेव प्रष्टव्येत्यत आह—सा च नियतिरपि यतोऽचेतना, अतो वाचं नार्हेत् । पूर्वोक्तनियोगकारी पुरुषः पुनर्वक्रश्रमहेतुकं कर्म भुङ्क्ते ऽनुभवति लोकस्य दैवाधीनत्वान्नियतेश्चाचेतनत्वाच्च प्रति वचनस्य वैयर्थ्याद्वक्तुः केवलं कण्ठशोषो भवति, तस्माद्भवतीभिर्मां प्रति किमपि प्रकृते न वक्तव्यमिति भावः । संविदानः 'विदिप्रच्छिस्वरतीनामुपसङ्ख्यानम्' ( वा० ) इति । तङ्[2] ॥ १०३ ॥

क्रमेलकं निन्दति कोमलेच्छुः
क्रमेलकः कण्टकलम्पटस्तम् ।
प्रीतौ तयोरिष्टभुजोः समायां
मध्यस्थता नैकतरोपहासः ॥ १०४ ॥

क्रमेलकमिति ॥ कोमलेच्छुर्मृदुवस्त्वभिलाषी पुरुषः क्रमेलकमुष्ट्रं कठिनवस्तुभक्षत्वान्निन्दति । क्रमेलकः कण्टकलम्पटः कण्टकाशी सन् तं कोमलेच्छुं निन्दति । इष्टभुजोः स्वेष्टेन भक्षणशीलयोस्तयोः समायां तुल्यायां प्रीतौ न एकतरोपहासः, किंतु मध्यस्थता । यद्यपि तौ द्वावपि परस्परनिन्दाकारित्वादनुचितकारिणौ तथाप्युदासीनेन पक्षपातो न कार्यः । तस्मान्मम नले पक्षपातः, दूत्यास्त्विन्द्रे इत्यावयोस्तुल्यायां प्रीतौ सत्यां भवतीभिर्माध्यस्थ्यमेव कार्यम्, न त्वेकतरोपहासः कार्यः । किमपि न कार्यमिति भावः । समायामिति तुल्यार्थत्वात्सर्वनामत्वाभावः ॥ १०४ ॥

गुणा हरन्तोऽपि हरेर्नरं मे
न रोचमानं परिहापयन्ति ।
न लोकमालोकयथापवर्गा-
त्त्रिवर्गमर्वाश्रममुश्रमानम् ॥ १०५ ॥

गुणा इति ॥ हरन्तो मनोरमा अपि हरेरिन्द्रस्य दूत्युक्ता गुणा मे मह्यं रोचमानं मम प्रीतिविषयं नरम्, अथ च नलं न परिहापयन्ति न त्याजयन्ति । अथ च रमणीया अन्ये हरेरश्वस्य गुणा रोचमानाख्यमावर्तं न परिहापयन्ति । अन्यगुणापेक्षया तस्याधिकगुणत्वादि-

---

१ अत्रापि चतुर्थपाद उपमैव। २ अत्र रूपकम्।

१ अत्र काव्यलिङ्गम् । २ अत्र दृष्टान्तः ।

त्यर्थः, ननु हरणशीलत्वेऽपि किमिति तं न त्याजयन्तीत्याशङ्क्य दृष्टान्तेन परिहरति—हे सख्यः! यूयमपवर्गान्मोक्षादर्वाञ्चं हीनमपि त्रिवर्गं धर्मार्थकामरूपममुञ्चमानमत्यजन्तं लोकं नालोकयथ । लोको यथा परमसुखरूपं मोक्षं परित्यज्य त्रिवर्गं सेवते तथेन्द्रं परित्यज्य नलं सेवे। रुचिरेवात्र प्रमाणमिति भावः । मे, 'रुच्यर्थानां प्रीयमाणः १।४।३३' इति चतुर्थी ॥ १०५ ॥

आकीटमाकैटभवैरि तुल्यः
स्वाभीष्टलाभात्कृतकृत्यभावः।
भिन्नस्पृहाणां प्रति चार्थमर्थं
द्विष्टत्वमिष्टत्वमपव्यवस्थम् ॥ १०६ ॥

आकीटमिति ॥ हे सख्यः! आकीटं हीनेषु कृमिमभिव्याप्य उत्तमेषु आकैटभवैरि पुरुषोत्तममभिव्याप्य स्वाभीष्टलाभात्सर्वेषां स्वीयस्वीयेप्सितप्राप्तेः कृतकृत्यभावः कृतकृत्यत्वं तुल्यो विष्णोर्यथा स्वाभीष्टलाभात्कृतकृत्यत्वम्, तथा कीटस्यापि स्वाभीष्टलाभात्कृतकृत्यत्वम् । अर्थान्तरन्यासेनैतदेवाह—च यस्माद्भिन्नस्पृहाणां स्वीयं स्वीयमीप्सितमभिलाषुकाणां सर्वेषामर्थमर्थं प्रति विषयं विषयमुद्दिश्य द्विष्टत्वं द्वेषाविषयत्वम्, इष्टत्वमिच्छाविषयत्वमपव्यवस्थम् अपगता व्यवस्था नियमो यस्य तादृगस्ति । एकस्य यद्विष्टं तत्सर्वस्यापीति नियमो नास्ति । तस्माद्यद्यस्मै रोचते तत्तस्येष्टम्, यन्न रोचते तत्तस्य द्विष्टमिति। तस्मात् मम नल एवानुरागाद्भवतीभिः किमपि न वक्तव्यमिति भावः । चकारो यस्मादर्थे समुच्चयार्थे वा द्विष्टत्वम्, इष्टत्वं चेति । आकीटम् आकैटभवैरीति च 'आङ् मर्यादाभिविध्योः २।१।१३' इति समासः ॥ १०६ ॥

अध्वाग्रजाग्रन्निभृतापदन्धु-
र्बन्धुर्यदि स्यात्प्रतिबन्धुमर्हः।
जोषं जनः कार्यविदस्तु वस्तु
प्रच्छया निजेच्छा पदवीं मुदस्तु १०७

अध्वेति ॥ हे सख्यः! बन्धुः सुहृत् अध्वाग्रे पुरोमार्गे जाग्रद्वर्तमानो निभृत आच्छादित आपद्रूपोऽन्धुः कूपो यस्य एवंभूतो यदि स्यात्तर्हि सुहृत्प्रतिबन्धुं निषेद्धुमर्हं उचितः स्यात् । तेन पथा मा गच्छ, यदि गमिष्यसि, तर्ह्यापद्रूपे गम्भीरे कूपे पतिष्यसि इति सुहृदा सुहृन्निषेद्धुमुचितः । प्रकृते तु नैवमित्यर्थः । तस्मात्कार्यविद्विपत्कूपाभावं जानानो भवल्लक्षणो जनो जोषं तूष्णीमस्तु भवतु । गुणिनो नलस्य वरणे ममानिष्टं किंचिदपि न भविष्यतीति भवतीभिरहं न निषेद्धव्येति मया नलो विचार्यैव वृतोऽस्ति तस्मात्तूष्णीं स्थातव्यमित्यर्थः।भवतीभिर्निजेच्छा स्वेच्छैव मुदो हर्षस्य पदवीं वस्तु मार्गरूपं वस्तु प्रच्छया प्रष्टव्या भवतीनामपि यस्मिन्पुरुषादौ हर्षः तत्रैव किमिति हर्ष इत्यनुयोगे भवतीभिरप्यनुराग एव कारणं वक्तव्यम्, तत्प्रकृतेऽपि तुल्यमिति भावः । मत्कार्यं जानानो जनो जोषमस्तु, अजानानस्तु यत्किंचिद्वदत्वित्यर्थः। 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः । प्रच्छिर्द्विकर्मा ॥ १०७ ॥

इत्थं प्रतीपोक्तिमतिं सखीनां
विलुप्य पाण्डित्यबलेन बाला।
अपि श्रुतस्वर्पतिमन्त्रिसूक्तिं
दूतीं बभाषेऽद्भुतलोलमौलिम् ॥१०८॥

इत्थमिति ॥ बाला भैमी सखीनां प्रतीपोक्तौ प्रतिकूलवचनविषयिणीं मतिं बुद्धिं पाण्डित्यस्य बलेन सामर्थ्येन इत्थं पूर्वोक्तप्रकारेण विलुप्य प्रमार्ज्य )इन्द्र)दूतीं बभाषे। किंभूतां दूतीम्—श्रुता स्वर्पतिमन्त्रिणो बृहस्पतेः सूक्तिः शोभनोक्तिर्यया एवंभूतामपि । तथा—भैम्युक्तिं श्रुत्वा जातेनाद्भुतेनाश्चर्येण लोलो मौलिर्मस्तको यस्याः। अवशिष्टप्रतिवचनार्थं पुनरुवाचेत्यर्थः ॥ १०८ ॥

परेतभर्तुर्मनसेव दूतीं
नभस्वतेवानिलसख्यभाजः।
त्रिस्रोतसैवाम्बुपतेस्तदाशु
स्थिरास्थमायातवतीं निरास्थम् १०९॥

किमुवाचेत्यत आह—

परेतेति ॥ हे इन्द्रदूत्यः! यस्मान्मनसा मया नलो वृतः तत्तस्मात्स्थिरा आस्था वशीकरणशक्तिर्यस्मिन्कर्मणि अहं भैमीं वशीकरिष्यामीति बुद्ध्या आशु शीघ्रमायातव-

१ अत्र लोकेति यमकम्, अन्यत्रानुप्रासश्च । हरन्तोऽपि न परिहापयन्तीति विभावना ।२ अत्रानुप्रासो यमकं च शब्दालङ्कारौ।

१ आपदि कूपत्वारोपाद्रूपकम्, जोषमित्यादौ निजेच्छाया एव सर्वत्र प्रवृत्तौ हेतुत्वोक्त्या काव्यलिङ्गम् । २ अत्रानुप्रासः।

शीमायातां परेतभर्तुर्यमस्य दूतीं मनसैव निरास्थं निराकृतवत्यस्मि । तत्रानभिलाषादेतोः । त्रिष्वप्ययमेव हेतुः । तथा—अनिलस्य सख्यभाजोऽग्नेः स्थिरास्थं शीघ्रमायातवतीं दूतीं नभस्वतेव वायुनेव निरास्थम् । तथा—स्थिरास्थमाशु आयातवतीमम्बुपतेर्वरुणस्य दूतीं त्रिस्रोतसेव मन्दाकिन्येव निरास्थम् । यमस्य परेतभर्तृत्वात्परेतप्राणानां, तदधीनत्वान्मनसश्च प्राणाधीनत्वान्मनसैव कृत्वा शीघ्रमायातां यमदूतीम्, वह्नेरनिलमित्रत्वादनिलेनेव कृत्वा शीघ्रमायातां वह्निदूतीम्, वरुणस्य जलपतित्वान्मन्दाकिन्येव शीघ्रमायातां वरुणदूतीम्, निरास्थमिति वा । तस्मादहमेव निराकर्तेति दुःखं माकार्षीरिति भावः । मनोनभस्वत्रिस्रोतःशब्दैरुत्साहगमनवेगा द्योत्यन्ते । मनआदिभिः सहायातवतीमिवेति वा । निरास्थम्, 'अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२' इत्यङ् 'अस्यतेस्थुक्' ॥ १०९ ॥

भूयोऽर्थमेनं यदि मां त्वमात्थ
तदा पदावालभसे मघोनः ।
सतीव्रतैस्तीव्रमिमं तु मन्तु-
मन्तर्वरं वज्रिणि मार्जितास्मि ॥११०॥

भूय इति ॥ हे दूति ! त्वमेनं इन्द्रवरणरूपमर्थं मा भूयः पुनर्यदि आत्थ ब्रवीषि तदा तर्हि मघोनः पदौ आलभसे स्पृशसि । एवं शपथदानात्त्वया भूयो न वक्तव्यमित्यर्थः । तर्हीन्द्रस्त्वयि कोपं करिष्यतीत्यत आह—अहं सतीव्रतैः । पतिव्रतानियमैर्वज्रिणि इन्द्रे विषयेऽन्तरन्तःकरणे तीव्रं दुःसहमिमं मन्तुमपराधं तु पुनर्वरं मार्जितास्मि प्रोञ्छितास्मि । वरं मनागिष्टे, वरं सम्यक् अन्तः हृदयस्थितैः सतीव्रतैरिति वा । अन्तर्वरं वरस्य नलस्य अन्तर्मध्ये वज्रिणि राज्ञो लोकपालांशत्वेन नले स्थित इन्द्र इति वा नले तुष्टे इन्द्रोऽपि परितोक्ष्यत्येवेति भावः । 'आगोऽपराधो मन्तुश्च' इत्यमरः । मार्जितेति 'मृजेर्वृद्धिः ७।२।११४' इति वृद्धिः । ऊदित्त्वादिट् ॥ ११० ॥

१ यः परेतानांमृतानाम् एवभर्त्ता स क इव, यश्च तेजस्वी सन्नपि अनिलसख्यंविना । न जीवतीति सोऽपि क इव, योऽप्येवमम्बुपतिः स परं जले चकास्तु, स्थले तस्य कियानधिकार इति भावनयेयं वैरस्योक्तिः । २ अत्रानुप्रासो यमकं च ।

इत्थं पुनर्वागवकाशनाशा-
न्महेन्द्रदूत्यामपयातवत्याम् ।
विवेश लोलं हृदयं नलस्य
जीवः पुनः क्षीवमिव प्रबोधः ॥ १११॥

इत्थमिति ॥ इत्थमनेन प्रकारेण पुनर्वागवकाशस्य वचनावसरस्य नाशान्महेन्द्रदूत्यामपयातवत्यां गतायां सत्यां नलस्य जीवः प्राणः 'भैमीं च दूत्यं च—' ( ६।८९ ) इत्यादिचिन्तावशात् लोलं चञ्चलं हृदयं पुनः विवेश । कः कमिव—प्रबोधः क्षीवं मत्तमिव । तस्यां सत्यां चिन्तावशात्तस्य प्राणा गतप्राया एवाभूवन् । गतायां तु स्वस्य भैमीप्राप्तिनिश्चयेन दूत्यप्राप्तिसंभावनया वा तस्य प्राणाः पुनरागता इत्यर्थः । मत्तोऽपि नष्टलो भवति । 'मत्ते शौण्डोत्कटक्षीवाः' इत्यमरः । 'अनुपसर्गात्फुल्लक्षीवकृशोल्लाघाः ८।२।५५'इति साधुः॥१११॥

श्रवणपुटयुगेन स्वेन साधूपनीतं
दिगधिपकृपयाप्तादीदृशः संविधानात् ।
अलभत मधु बाला रागवागुत्थमित्थं
निषधजनपदेन्द्रः पातुमानन्दसान्द्रम् ११२

श्रवणेति॥ निषधजनपदानाम् इन्द्रो नलो बाला भैमी तस्या रागवागनुरागवचनं तस्या उत्थमुत्पन्नम् इत्थं पूर्वोक्तं मध्वमृतं पातुं सादरमाकर्णयितुमानन्दसान्द्रं यथा भवति तथा लब्धवान् । किंभूतं मधु—दिगधिप इन्द्रः, तस्य कृपया प्राप्तात् ईदृशो दूत्याङ्गीकारप्राप्तात्संविधानाददृष्टीकरणलक्षणादुपायाद्धेतोः स्वेन स्वीयेन श्रवणलक्षणेन पुटयुगेन पात्रयुगेन साधु सम्यक्प्रकारेण उपनीतमानीतम् । स्वयमाकर्णितामित्यर्थः । 'आनन्दसान्द्रः' इति पाठे नलविशेषणम् । पूर्वोक्तं भैम्यनुरागवचनमानन्दसहितः सादरमाकर्णयामासेत्यर्थः, प्रभुणा केनचित्स्वकीयेन पात्राभ्यामानीतं मधु पीयते । इन्द्रादयो मह्यं दूत्यं चेत्रादास्यंस्तर्हि भैम्यनुरागवचनमहं स्वयं नापास्यम् । अतस्तत्प्रसादान्मया भैमविचनं स्वयमाकर्णितमित्यानन्दने सान्द्र इत्यर्थः ॥ ११२ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी

१ अत्रानुप्रासः । क्षीवमिवेत्युपमा । २ अत्र मालिनी छन्दः, तल्लक्षणं चोक्तं प्राक् ।

च यम् । षष्ठः खण्डनखण्डतोऽपि सहजा-
त्क्षोदक्षमे तन्महाकाव्येऽयं व्यगलन्नलस्य
चरिते सर्गो निसर्गोज्ज्वलः ॥ ११३ ॥

श्रीहर्षमिति ॥ सहजात्सोदरात्खण्डनलक्षणात्खण्डत इक्षुविकाराच्छर्कराविशेषादपि क्षोदक्षमे उद्घर्षणसहे परीक्षाक्षमे यथा यथा घृष्यते, तथा तथा सरसेत्यर्थः । षष्ठः षण्णां पूरणः व्यगलत्समाप्त इत्यर्थः । 'स्यात्खण्डः शकले चेक्षुविकारे मणिदोषयोः' इति विश्वः । षष्ठः पूरणे डटि 'षट्कतिकतिपयचतुरां थुक् ५।२।५१' इति थुक् । अस्मिन्सर्गे दूतगुणा धर्मशास्त्रद्वारेणोक्ताः ॥ ११३ ॥

इति श्रीवेदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे षष्ठः सर्गः ॥

---

## सप्तमः सर्गः ।

इत्थमिन्द्रदूतीनिराकरणेन भैम्याः स्वस्मिन्ननुरागं दृढं परीक्ष्य तुष्टो नलो भैमीमेवावर्णयदिति वक्तुं सप्तमं सर्गमारभते—

अथ प्रियासादनशीलनादौ
मनोरथः पल्लवितः पुरा यः ।
विलोकनेनैव स राजपुत्र्याः
पत्या भुवः पूर्णवदभ्यमानि ॥ १ ॥

अथेति ॥ अथेन्द्रदूतीनिराकरणानन्तरं यो मनोरथः प्रियाया भैम्या आसादने प्राप्तिविषये शीलनादौ च तेन तेन विशेषेण रूपादिपरिकल्पने विषये आदिपदेनालिङ्गनादिसंभोगविषये पूर्वं पल्लवितः पल्लवयुक्तो जातः भैमीं कथं प्राप्नोमि, कथं वा तस्या विशिष्टं भावादिकं जानामीति चिरमुदितः पूर्वमासीत् । स मनोरथो भुवः पत्या राज्ञा नलेन राजपुत्र्या विलोकनेनैव पूर्णवत्परिपूर्ण इव फलित इवाभ्यमानि संमानितः । प्राप्तिं विनैव दर्शनमात्रेण प्राप्त्यादिजन्यमानन्दं प्रापेति भावः । पल्लवितशब्देन मनोरथस्य वृक्षत्वं सूचितम् । अन्योऽप्यारोपितं पल्लवितं फलितं च दृष्ट्वात्यन्तं सन्तुष्यति ।

---

१ अत्र सर्गे प्राय उपजातिः छन्दः । उपेन्द्रवज्रेन्द्रवज्रे च पृथगपीति बोध्यम् ।

आसादनं च शीलनादि चेति समासः एकवद्भावः । अन्यथा शीलनशब्दस्य पूर्वनिपातापातात् ॥ १ ॥

प्रतिप्रतीकं प्रथमं प्रियाया-
मथान्तरानन्दसुधासमुद्रे ।
ततः प्रमोदाश्रुपरम्परायां
ममज्जतुस्तस्य दृशौ नृपस्य ॥ २ ॥

प्रतीति ॥ तस्य नृपस्य दृशौ नेत्रे प्रथमं प्रतिप्रतीकं प्रत्यवयवं प्रियायां भैम्यां ममज्जतुर्निमग्ने । अथ पश्चादन्तरन्तःकरणे आन्तरो वा यः प्रत्यवयवदर्शनजन्य आनन्दस्तद्रूपा सुधाऽमृतं तस्य समुद्रे ममज्जतुः । ततः पश्चात्प्रमोदाश्रुपरम्परायामानन्दजनितबाष्पप्रवाहे ममज्जतुः अनया रीत्या सर्वेषामप्यवयवानामतिसौन्दर्यं सूचितम् । प्रत्यवयवसौन्दर्यदर्शनादानन्दः, तस्माच्चाश्रुपरम्परा जाता, तया नलनयनाभ्यां किमपि न दृष्टमित्यर्थः समुद्रे जलप्रवाहे च निमज्जनमुचितम् ॥ २ ॥

ब्रह्माद्वयस्यान्वभवत्प्रमोदं
रोमाग्र एवाग्रनिरीक्षितेऽस्याः ।
यथौचितीत्थं तदशेषदृष्टा-
वथ स्मराद्वैतमुदं तथाऽसौ ॥ ३ ॥

नेत्रप्रमोदमुक्त्वा मनःप्रमोदमाह—

ब्रह्मेति ॥ असौ नलोऽस्या भैम्या रोम्णोऽप्यग्र एव अग्रे प्रथमं निरीक्षिते सति न विद्यते द्वयं यस्य तदद्वयं, ब्रह्म च तदद्वयं च ब्रह्माद्वयं तस्य । ब्रह्मैक्यस्येत्यर्थः । प्रमोदमानन्दम् अन्वभवदनुबभूव । अथानन्तरम् इत्थमनेन प्रकारेण तस्या भैम्या अशेषा सकला या दृष्टिर्दर्शनं तस्यां सत्यम् अशेषभैमीदर्शने सति यथा यादृशी औचिती भवति तथा द्वैतं द्वयोर्भावो द्विता द्वितैव द्वैतं तन्न विद्यते तस्यासावद्वैतः स्मरश्चासावद्वैतश्च स्मरस्य द्वैतराहित्यं वा तस्य मुदं हर्षमन्वभवत् । मदनैक्यजनितमानन्दमनुबभूवेत्यर्थः । यस्या निकृष्टस्य रोमाग्रस्यैव निरीक्षणे ब्रह्माद्वैतानन्दो भवति, तस्या रमणीयसकलावयवदर्शने ब्रह्माद्वैतानन्दादधिको मदनाद्वैतानन्द एव भवितुं समुचित इत्यर्थः । । सर्वावयवदर्शने मदनान-

---

१ पूर्णवदित्युपमा, तथाभूताया दमयन्त्या आसादनरूपस्य कार्यस्य महत्त्वेऽपि विलोकनरूपस्य निमित्तस्याल्पत्वेऽपि तथोक्तिरिति हर्षातिशयेन तथाऽवगमे न काऽप्यनुपपत्तिरिति परिहाराद्विषमः । २ द्रूपस्यैकस्याधेयस्यानेकत्रोपस्थित्युक्तेः पर्यायः ।

न्देऽमज्जदिति भावः। तेषां रोम्णामशेषदृष्टी सत्यामिति वा। द्वैतम्,प्रज्ञादित्वात्स्वार्थेऽण् ॥ ३ ॥

वेलामतिक्रम्य पृथुं मुखेन्दो-
रालोकपीयूषरसेन तस्याः।
नलस्य रागाम्बुनिधौ विवृद्धे
तुङ्गौ कुचावाश्रयतः स्म दृष्टी ॥ ४ ॥

वेलामिति॥ नलस्य दृष्टी दृशौ तस्या मुखेन्दोः आलोको विलोकनं तल्लक्षणेन पीयूषरसेनामृतरसेन विलोकनलक्षणं यदमृतं तस्मिन् वा रसेन तद्विषयिण्या प्रीत्या कृत्वा पृथुं महतीं वेलां दूत्यसमयरूपामतिक्रम्य नलस्य रागाम्बुनिधावनुरागसमुद्रे विवृद्धे वृद्धिं गते सति तुङ्गावुच्चौ कुचौ आश्रयतः स्म। दूत्यसमयमविचार्य मुखचन्द्रावलोकनविवृद्धेनानुरागेण तुङ्गौ कुचौ नलोऽवलोकयति स्मेति भावः। चन्द्रस्य प्रकाशलक्षणेनामृतरसेन महतीं मर्यादामतिक्रम्य समुद्रे वृद्धिं गते सत्याप्लवनभयादन्योऽपि तुङ्गं स्थानमाश्रयति। 'दृष्टिः' इति क्वचित्पाठः॥ ४ ॥

मग्ना सुधायां किमु तन्मुखेन्दो-
र्लग्ना स्थिता तत्कुचयोः किमन्तः।
चिरेण तन्मध्यममुञ्चतास्य
दृष्टिः क्रशीयः स्खलनाद्भिया नु ॥ ५ ॥

मग्नेति॥ अस्य नलस्य दृष्टिः क्रशीयः अतिशयेन कृशं तस्या भैम्या मध्यं चिरेण चिरकालेन अमुञ्चतात्यजत्। मध्यं विलम्बेन तत्याजेत्यर्थः। अत्राप्युत्प्रेक्षते— स्खलनात्पतनात् भिया भयेन नु किम्। अतिकृशमेतच्छीघ्रं चेत्त्यक्ष्यामि तर्हि पतिष्यामीति बुद्ध्या किं विलम्बेनात्यजत्। किंभूता दृष्टिः—तन्मुखेन्दोः सुधायां मग्ना किमु मुखेन्दावेव विलम्बिता। तथानन्तरं मृणालसूत्रेणापि दुर्लभावकाशे तत्कुचयोरन्तर्मध्ये लग्ना संबद्धा सती निर्गन्तुमशक्तत्वात्स्थिता विलम्बिता। पूर्वं यदङ्गं विलोकितं तदङ्गं सुन्दरत्वात्परित्यक्तुं न शक्ता, किंतु पुनःपुनस्तदेवावलोकयति स्मेति भावः। क्रशीयसः सकाशात्स्खलनं क्रशीयः स्खलनमिति वा ॥ ५ ॥

१ यथेत्युपमा। एकस्मिन्नेव प्रेयसि ब्रह्माद्वयस्मराद्वयप्रमोदयोः क्रमेण स्थित्युक्तेः पर्यायश्च। २ अत्र दृष्टिविशेषसादृश्य इन्दूदये समुद्रवृद्धौ तन्मज्जनभयादुत्सधेस्याश्रयणावगमात्समासोक्तिः। तथा समुद्रमज्जनभयादिवेति व्यज्यत इत्युत्प्रेक्षा गम्या। अत्र व्यतिरेकः उपमाऽपमान इति रूपकम्।

प्रियाङ्गपान्था कुचयोर्निवृत्य
निवृत्य लोला नलदृग्भ्रमन्ती।
बभौ तमां तन्मृगनाभिलेप-
तमःसमासादितदिग्भ्रमेव ॥ ६ ॥

प्रियेति॥ नलदृक् एवंभूता सती बभौतमामतितरां शुशुभे। किंभूता— प्रियाया भैम्या अङ्गस्य प्रत्यङ्गं पान्था नित्यपथिकी। अतएव लोला चञ्चला। अथ च सस्पृहा सती निवृत्य निवृत्य व्यावृत्य व्यावृत्य कुचयोः भ्रमन्ती। उत्प्रेक्षते, किंभूतेव—तयोः कुचयोर्मृगनाभिलेपः कस्तूरिकालेपस्तल्लक्षणं तमोऽन्धकारस्तेन कृत्वा समासादितः प्राप्तो दिग्भ्रमो दिङ्मोहो यया एवंभूतेव। अन्योऽपि पान्थस्तमसा प्राप्त दिङ्मोहो भ्रमन्निवृत्य निवृत्य पूर्वमेव स्थानं प्राप्नोति। सर्वावयवावलोकनतत्परापि कुचावेवावलोकयति स्म। कुचौ त्यक्तुं न शशाकेति भावः। 'लोलश्चलसतृष्णयोः' इत्यमरः। नित्यं पन्थानं गच्छति पान्थः 'पन्थो ण नित्यम्' इति णः। ततष्टाप्। बभौतमाम्, 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५।४।११' इत्यनेनामुः ॥ ६ ॥

विभ्रम्य तच्चारुनितम्बचक्रे
दूतस्य दृक्तस्य खलु स्खलन्ती।
स्थिरा चिरादास्त तदूरुरम्भा-
स्तम्भावुपाश्लिष्य करेण गाढम् ॥ ७ ॥

विभ्रम्येति॥ तस्याश्चारुणि सुन्दरे नितम्बरूपे चक्रे विभ्रम्य परिभ्रम्य स्खलन्तीव खलु पतन्तीव तस्य दूतस्य नलस्य दृग्दृष्टिःतदूरुलक्षणौ रम्भास्तम्भौ कदलीस्तम्भो करेण रश्मिना कृत्वा गाढं निबिडमुपाश्लिष्यालिङ्ग्य चिराच्चिरं कालं स्थिरा निश्चला आस्त बभूव। अन्यापि चक्रभ्रमणं प्राप्य पतन्ती सती हस्तेन स्तम्भं गाढमालिङ्ग्य चिरं स्थिरा भवति। नितम्बं विलोक्यादरेण तदूरू पश्यति स्मेति भावः॥ ७ ॥

वासः परं नेत्रमहं न नेत्रं
किमु त्वमालिङ्ग्य तन्मयाऽपि।
उरोनितम्बोरु कुरु प्रसाद-
मितीव सा तत्पदयोः पपात ॥ ८ ॥

१ लेपतम इति रूपकम् भ्रममेवेत्युत्प्रेक्षा च। २ नितम्बचक्र इति, ऊरुरम्भास्तम्भाविति च रूपकम्। खलित्युत्प्रेक्षा।

वास इति ॥ सा नलदक् इतीव कारणात्तत्पदयो-र्भैमीचरणयोः पपात प्रणामं चकार। इति किम्—हे भैमि, वासो वसनमुत्तमपट्टदुकूलविशेषः परं केवलं नेत्रम्, अथ च नेत्रशब्दवाच्यम्। अहं नेत्रं न किन्तु, अपितु अहमपि नेत्रं नेत्रशब्दवाच्यं यन्नवामि तत्तस्मादुभयोरपि नेत्रशब्दवाच्यत्वलक्षणाद्धेतोः हे भैमि! त्वं नेत्रेण वसनेनेव मयाऽपि प्रयोज्येन उरो वक्षः, नितम्बो जघनपश्चाद्भागः, ऊरू च एतेषां समाहारः उरोनितम्बोरु आलिङ्गय वेष्टय, अथ च दर्शयस्व प्रसादं च कुरु, तदालिङ्गनार्थं च ममोपरि प्रसन्ना भव इति। अन्योऽपि स्वसमानस्य कस्यचिद्राजादेः सकाशादुत्तमपदप्राप्तिं दृष्ट्वा स्वस्यापि तल्लाभार्थं राजचरणयोः पतति मह्यमप्येतद्देयमिति प्रार्थयते च। उरो नितम्बोरु विलोक्य तच्चरणावपि विलोकयाति स्मेति भावः। प्राण्यङ्गत्वादेकवद्भावे नपुंसकत्वं च ॥ ८ ॥

दृशोर्यथाकाममयोपहृत्य
स प्रेयसीमालिकुलं च तस्याः।
इदं प्रमोदाद्भुतसम्भृतेन
महीमहेन्द्रो मनसा जगाद ॥ ९ ॥

दृशोरिति ॥ अथ स महीमहेन्द्रो भूमीन्द्रो नलः प्रमोदो भैमीविलोकनेनानन्दः, सौन्दर्यदर्शनादद्भुतमाश्चर्यं च ताभ्यां सम्भृतेन पूर्णेन मनसा इदं वक्ष्यमाणं जगादाचिन्तयत्। मनसैव तामवर्णयदित्यर्थः। किं कृत्वा—प्रेयसीं भैमीं तस्या आलिकुलं सखीसमूहं च दृशोर्नयनयोर्यथाकाममभिलाषमनतिक्रम्य नयनाभ्यामेव उपहृत्योपायनीकृत्य ॥ ९ ॥

पदे विधातुर्यदि मन्मथो वा
ममाभिषिच्येत मनोरथो वा।
तदा घटेतापि न वा तदेत-
त्प्रतिप्रतीकाद्भुतरूपशिल्पम् ॥ १० ॥

तदेवाह—

पद इति ॥ यदि जगन्निर्माणशीलस्य विधातुर्ब्रह्मणः पदेऽधिकारे मन्मथो वाभिषिच्येत, मम मनोरथो वाभिषिच्येत, तदापि तर्ह्यपि तदनिर्वचनीयम्, एतद् दृश्यमानं एतस्या वा प्रतिप्रतीकं प्रत्यवयवं अतिसुन्दरत्वादद्भुतमाश्चर्यकारि रूपं लावण्यं तस्य शिल्पं निर्माणं घटेत न वा घटेत। ब्रह्मणाप्येतत्प्रत्यवयवं सौन्दर्यं कर्तुं न शक्यत इत्यर्थः। ईदृक् सौन्दर्यं कदापि कुत्रापि न दृष्टमिति भावः ॥ १० ॥

तरङ्गिणी भूमिभृतः प्रभूता
जानामि शृङ्गाररसस्य सेयम्।
लावण्यपूरोऽजनि यौवनेन
यस्यां तथोच्चैःस्तनताघनेन ॥ ११ ॥

तरङ्गिणीति ॥ घनेन निविडेन यौवनेन यस्यां भैमीलक्षणायां तरङ्गिण्यां लावण्यपूरोऽजनि जनितः। तथा उच्चैः स्तनौ यस्यां तस्या भाव उच्चकुचत्वम- जनि। यद्वा—उच्चैः स्तनता—अत्यन्तं गर्जता तेनैवात्यन्तपूर्णतां सूचयता, अतएव घनेन निबिडेन यौवनेन। यद्वा—यौवनेन तदभिन्नेन घनेन यस्यां लावण्यस्य सौन्दर्यविशेषस्य तद्रूपस्य जलस्य, लावण्यमस्मिन्नस्तीति लावण्योऽर्शो इति वा पूरोऽजनि इत्यर्थः, सेयं शृङ्गारलक्षणस्य रसस्य तरङ्ग उद्रेकस्तद्वती, अथ च नदी एवंभूता भीमनाम्नो भूमिभृतो भूपतेः सकाशात्प्रभूता उत्पन्नेति जानामि। वाक्यार्थः कर्म। प्रथमं सहजसौन्दर्याच्छृङ्गाररूपा जाता, अनन्तरं निबिडयौवनेन सौन्दर्याधिक्यजननादुच्चकुचत्वजननाच्च पूर्वापेक्षया शृङ्गाररसस्याधिक्यात् शृङ्गाररसस्य मूर्तिमतीयं नदीति मन्य इति भावः। अथच रसस्योदकस्य नदी पर्वतादुत्पद्यते। तस्यामुच्चैः स्तनता शब्दायमानेनातितरां गर्जता घनेन मेघेन पूर्वं जलप्रवाहो जलोद्रेकोऽपि जन्यते। तथाऽनिर्वचनीयप्रकारा या उच्चैःस्तनता तया कृत्वा घनेन निरन्तरेणेत्येकं पदे, यौवनविशेषणं वा। 'पूरो जलप्रवाहे स्यात्' इति विश्वः। 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिति स्मृतम्' इति लावण्यं कान्तिविशेषः। लवणस्य भावो लावण्यं, तदस्मिन्नस्तीति लावण्यः—क्षाराम्बुमयः, असौ पूर इति च। अर्शआदित्वादच्। भूमिभृतः, 'भुवः प्रभवः १।४।३१' इत्यपादानत्वम्। प्रभूता, अकर्मकात्कर्तरि क्तः ॥ ११ ॥

१ किमित्युत्प्रेक्षा। २ प्रमोदाद्भुताभ्यां सम्भूतत्वोक्तौ जलरूपत्वं मनसश्च तदाधारत्वेन रूपणमिति रूपकं व्यङ्ग्यम्।

१ अत्र भीमजारूपशिल्पस्य प्रसिद्धविधातृयोगेऽपि अयोगोक्तेः, स्मराद्ययोगेऽपि सम्भावनया स्मरादियोगोक्तेश्च रूपकातिशयोक्ती। २ तरङ्गिणीत्यादौ रूपकम्। शृङ्गाररसस्येत्यादौ रसादिपदेषु श्लेषः। लावण्यस्य जलत्वेन निरूपणमार्थम्।

अस्यां वपुर्व्यूहविधानविद्यां
किं द्योतयामास नवां स कामः ।
प्रत्यङ्गसङ्गस्फुटलब्धभूमा
लावण्यसीमा यदिमामुपास्ते ॥ १२ ॥

अस्यामिति ॥ अङ्गमङ्गं प्रति प्रत्यङ्गं प्रत्यवयवं यः स्वस्यैव लावण्यस्य सङ्गः संबन्धस्तेन कृत्वा स्फुटं व्यक्तं लब्धो भूमा प्राचुर्यं यया एवंभूता लावण्यसीमा सौन्दर्यपरमकाष्ठा यद्यस्मादिमां भैमीमुपास्ते सेवते तस्मात्कारणाद्बाल्यापेक्षया नवां नूतनां स कामस्तद्दैवापूर्वामभ्यस्तां वपुर्व्यूहस्य शरीरसमूहस्य विधानं निर्माणं तस्य विद्यां शास्त्रं कायव्यूहरचनाकौशलम् अस्यां भैम्यामेव किं द्योतयामास प्रकाशयामास । न त्वन्यस्यामित्यर्थात् । किं वितर्के । बाल्यापेक्षया तरुणिमन्यधिकं सौन्दर्यं भवति सकलावयवेषु साकल्येन सौन्दर्यसीमा भैम्यामेव विद्यते, नान्यस्यामिति भावः । प्रत्यङ्गसङ्गमवयवसंधिम् अवयवसंधिं प्रतीति वा । अस्यामित्यनेन भैम्या वैदुष्यं सूच्यते । विद्याप्रकाशनं हि विद्वत्समीपे भवति । स मदनोऽस्यां नवामपूर्वां कायव्यूहनिर्माणविद्यां द्योतयामास किम्, यस्मात्सौन्दर्यस्य परमा काष्ठा स कामः प्रत्यङ्गविद्यमानत्वेन प्राप्तो भूमा बाहुल्यं येनैवंविधः सन्निमां भैमीं सेवते । प्रत्यवयवं साकल्येन मदनस्य विद्यमानत्वान्मदनेन स्वीयं बहुरूपत्वं प्रकटीकृतमित्यर्थः । मुखावलोकनेन यादृशो मदनप्रादुर्भावो भवति तादृश एव नयनावलोकनेनेति तदीयैकैकावयवदर्शनेन सकलस्य साकल्येन मदनप्रादुर्भावो भवतीत्यर्थः । लब्धभूमेत्यादौ पक्षे 'मनः' इति निषेधान्ङीबभावः ॥ १२ ॥

जम्बालजालात्किमकार्षि जम्बू-
नद्या न हारिद्रनिभप्रभेयम् ।
अप्यङ्गयुग्मस्य न सङ्गचिह्न-
मुन्नीयते दन्तुरता यदत्र ॥ १३ ॥

जम्बालेति ॥ इयं भैमी जम्बूनद्या जम्बूफलरसजातनद्या जम्बालजालात्पङ्कसमूहात्किं नाकर्षि नाकृष्टा, अपितु तत एवाकृष्टा।यद्यस्माद् हारिद्रनिभप्रभा हरिद्राक्तवस्त्रतुल्यकान्तिः। जम्बूनद्या जम्बालजालं नाम जाम्बूनदं तच्चान्यसुवर्णापेक्षयाऽत्युत्तमम्, तत आकृष्टा तदैव हरिद्रातुल्यवर्णत्वं घटते नान्यथेत्यर्थः। हारिद्रं सुवर्णं वा । अपिशब्दो हेत्वन्तरं विशिनष्टि—यदपि अत्रास्यां भैम्यामङ्गयुग्मस्य हस्ताद्यवयवयुगलस्य सङ्गचिह्नं परस्परसंधिलाञ्छनं दन्तुरता लक्षणया विसंस्थुलता निम्नोन्नतता नोन्नीयते न तर्क्यते । यद्धि जम्बालजालादाकृष्यते तस्योच्चावचप्रदेशेषु पङ्कलग्नत्वादिसंस्थुलता न लक्ष्यते । भैम्यामपि तथा यतः ततोऽपीयं जाम्बूनदपङ्कादाकृष्टेत्यनुमीयते । अवयवसंधिसूचकं कूर्परादि भैम्या न लक्ष्यते, सुवर्णगौरी चेयमिति भावः । कूर्परादेरलक्ष्यत्वेन सामुद्रिकलक्षणवत्त्वं सूच्यते । यदित्युभयत्रापि संबध्यते । पूर्वार्धे हारिद्रपदेन योजना, उत्तरार्धे यथास्थितम् । मध्यस्य स्तनयोश्चाङ्गयुग्मसङ्गाभावो ज्ञातव्यः, नो चेन्मध्यस्य परमाणुरूपत्वात्स्तनयोश्च उच्चैस्त्वाज्जाम्बूनदजम्बालपूर्णत्वेनैते मुद्रिताः स्युरित्यादि ज्ञातव्यम् ॥ १३ ॥

सत्येव साम्ये सदृशादशेषाद्
गुणान्तरेणोच्चकृपे यदङ्गैः ।
अस्यास्ततः स्यात्तुलनाऽपि नाम
वस्तु त्वमीषामुपमाऽपमानः ॥ १४ ॥

सत्येवेति ॥ यत् अङ्गैर्भैम्या अङ्गैर्मुखाद्यवयवैरर्थात् गुणान्तरेण वृत्तत्वादिना गुणेन चन्द्रादिना, समं साम्ये सत्येव सदृशात्कविसमये मुखादेः सदृशत्वेनोपमानत्वेनाभिमताच्चन्द्रादेरशेषात्सकलाद्वस्तुनःसकाशाद् गुणान्तरेण केनचिद् गुणान्तरेणान्येन गुणेन कृत्वा यद्यस्माद् उच्चकृपे उत्कृष्टैर्जातम् । ततस्तस्मादर्थात् अस्या अङ्गैः कृत्वा सदृशस्य चन्द्रादेर्वस्तुनस्तुलनाऽपि, समीकरणमपि तैः सह साम्यं वा स्यान्नाम । कविसमये सर्वत्रोपमानस्याधिक्यम्, उपमेयस्य च न्यूनत्वं प्रसिद्धम् । तथा चान्यत्र रमणीयमुखाद्यपेक्षया चन्द्रादेराधिक्यादुपमानत्वम्, मुखादेश्च न्यूनत्वादुपमेयत्वं घटते अस्यास्तु मुखं यद्यपि वर्तुलत्वेन चन्द्रेण समानं तथाऽपि चन्द्रापेक्षयाधिकामृतयुक्तत्वेनाधिकगौरत्वेन कलङ्काभावेन च चन्द्रादाधिकम् । नेत्रे अप्याकारेण नीलिम्ना च यद्यपि नीलोत्पलदलने समाने तथापि नीलोत्पलदलस्य कटाक्षविक्षेपादिराहित्येन स्वस्य तत्साहित्येन नीलोत्पलदलापेक्षयाधिके । एवमोष्ठादेरपि केनचिद् गुणेन साम्ये सत्येव गुणा-

१ किमित्युत्प्रेक्षा । प्रत्यङ्गसङ्गेत्यनुप्रासश्च ।

१ निभेत्युपमा । किमित्युत्प्रेक्ष्य यदत्रेति स्थिरीकरणादनुमानं च ।

न्तरेण वन्धूकाद्यपेक्षयाधिक्यं द्रष्टव्यम् । तथाच चन्द्राद्यपेक्षयाऽऽधिक्येनैतदीयवदनाद्यङ्गानामुपमानत्वम् । चन्द्रादेश्चैतदीयवदनाद्यपेक्षया न्यूनत्वेनोपमेयत्वमिति चन्द्रो भैमीमुखसदृशो, नीलोत्पलं च भैमीनयनसदृशमिति । एवं सदृशस्य चन्द्रादेर्भैमीवदनादिना समीकरणं साम्यं वा भवेदपि, भैमीवदनादेरुपमानत्वं चन्द्रादेश्चोपमेयत्वं युक्तमेवेत्यर्थः । अमीषामेतदीयानामङ्गानां तु पुनर्वस्तु चन्द्रादिलक्षणमुपमा उपमानम् अपमानो धिक्कार एव, अर्थादमीषामेव । हीनस्योपमानत्वाभावात्, अधिकस्योपमेयत्वाभावादिति भावः । यत उच्चकृपे ततो हेतोरस्या भैम्यास्तुलनापि स्यान्नाम । साम्यं विनोत्कर्षो न सिध्यतीति साम्यमप्यस्तु नाम, वस्तुतस्तु परमार्थतस्तु अमीषामङ्गानामुपमानं तिरस्कार इति वा । उपमीयतेऽनेनेत्युपमानं वा, 'उपमा' इति करणे भावे वा 'आतश्चोपसर्गे ३।३।१३६' इत्यङ् ॥ १४ ॥

पुराकृति स्त्रैणमिमां विधातु-
मभूद्विधातुः खलु हस्तलेखः ।
येयं भवद्भाविपुरंध्रिसृष्टिः
सास्यै यशस्तज्जयजं प्रदातुम् ॥ १५ ॥

पुरेति ॥ पुरा प्रथमं कृतिर्निर्माणं यस्यैवंभूतं प्रथमनिर्मितं स्त्रैणं रम्भोर्वश्यादि इमां भैमीं विधातुं स्रष्टुं विधातुः खलु निश्चितं हस्तलेखः प्रथमोऽभ्यासोऽभूत् । अन्योऽपि शिल्पी प्रथमं हस्तलेखाः कृत्वा पश्चात्सुन्दरं वस्तु निर्माति । उत्तरशिल्पापेक्षया हस्तलेखस्यातिहीनत्वाद्भैमीजन्मनः पूर्वं यः स्त्रीसमूहो हस्तलेखेऽभूत्स भैम्यपेक्षयातिहीनः भैमी चातिसुन्दरीति भावः । ननु यन्निर्माणार्थमभ्यासः कृतः सा निर्मिता, अग्रिमसृष्टिः किमिति कृता इत्याशङ्क्याह—या इयं भवन्ती वर्तमाना भाविनी भविष्यन्ती च पुरंध्रिसृष्टिः स्त्रीनिर्मितिः सा अस्यै भैम्यै तज्जयजं तस्या भवद्भाविपुरंध्रिसृष्टेः भैमीकर्तृको यो जयस्तस्माज्जातं यशः प्रदातुं, न त्वन्यत्किमपि प्रयोजनमस्ति, तस्या भैम्यपेक्षयातिहीनत्वात्, मयापीदृशी निर्मातुं न शक्यत इति सर्वान्ज्ञापयितुं ब्रह्मणा भैमीजन्मानन्तरमपि स्त्रीनिर्मितिः कृता । अकरणे तु भैम्यनन्तरं चेदन्यां स्त्रियं धाता निरमास्यत, तर्ह्येतदपेक्षयापि सा रमणीयाभविष्यदिति लोकस्य संभावना भवेत् तन्निवारणार्थं ब्रह्मणैवं कृतमित्यर्थः । भूतभविष्यद्वर्तमानेषु भैमीसदृशी कापि नास्तीति भावः । खलु उत्प्रेक्षायां वा । पुरंध्रीति 'ङ्यापोः संज्ञाछन्दसोर्बहुलम् ६।३।६३' इति बाहुलकाद्ध्रस्वः । ह्रस्वान्त एव वा । भवद्भावीति प्रागेव स्त्रीत्वविवक्षाया द्वंद्वं कृत्वा पुरंध्रिशब्देन यथाकथंचित्कर्मधारयः । अन्यथा भवन्तीभावीति स्यात् । 'द्रुतमध्यविलम्बितासु वृत्तिषु' इति भाष्यकारप्रयोगस्य सामान्यापेक्षज्ञापकतया वा समर्थनीयम् ॥ १५ ॥

भव्यानि हानीरगुरेतदङ्गाद्
यथा यथाऽनर्ति तथा तथा तैः ।
अस्याधिकस्योपमयोपमाता
दाता प्रतिष्ठां खलु तेभ्य एव ॥ १६ ॥

भव्यानीति ॥ भव्यानि शोभमानानि चन्द्रादीनि वस्तूनि एतस्या वदनाङ्गात् सकाशात् यथा यथा येन येन प्रकारेण यावद् यावद् हानीरपकर्षान् अगुः प्रापुः । तैश्चन्द्रादिभिस्तथा तथा तावत्तावत् अनर्ति नृत्तम् । अपकर्षप्राप्तावपि कथं नृत्तमत आह—खलु यस्मादधिकस्योत्कृष्टस्य अस्य एतदीयाङ्गस्य उपमया साम्येन उपमाता कविर्न्यूनेभ्योऽपि तेभ्यश्चन्द्रादिभ्य एव प्रतिष्ठां माहात्म्यं दाता दास्यति । भैमीमुखसदृशश्चन्द्रादिरिति वर्ण्यमानास्तदुपमेयताप्रतिष्ठाप्राप्त्या अधिकानि भैम्यङ्गान्यस्माकमुपमानानि वयं धन्या इति उत्तमोऽस्माकं प्रतियोगीत्यानन्देन नृत्यन्तीति भावः । भैमीमुखं किंवदिति पृष्टे चन्द्रस्य न्यूनत्वेऽप्यन्यस्योपमानस्याभावाच्चन्द्रवदित्येव वक्तव्यं स्यात् । एवं नयनादावपि द्रष्टव्यम् । 'ग्लाम्लाज्याहाभ्यो निः' । 'अगुः' 'इणो गा लुङि २।४।४५' इति गादेशे 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।७७' इति सिचो लुक् । दाता इति लुटि ॥ १६ ॥

---

१ उपमाया अपमानत्वेन रूपणाद्रूपकम् । मुखाद्यङ्गानामुपमेयानामपेक्षया चन्द्रादीनामुपमानानां तुलनाऽपीत्यादिना तिरस्कारनिबन्धनात् प्रतीपम्, 'तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना ।' इति तल्लक्षणं च ।

१ विधातुरिति यमकम्, खल्वित्युत्प्रेक्षा, स्त्रैणस्य हस्तलेखत्वेन रूपणाद्रूपकम्, रम्भाऽऽदेरत्रापि भङ्ग्यन्तरेण साम्ये तिरस्कारकल्पनमिति प्रतीपं च । २ दाता मातेत्यनुप्रासः । हानि—गमन—नर्तनक्रियाणां विरुद्धानामपि निबन्धनाद्विरोधाभासः, खल्वित्युत्प्रेक्षा, अस्याधिकस्येत्युपमेयस्याप्युपमानतासम्भावनात् प्रतीपं च ।

नास्पर्शि दृष्टाऽपि विमोहिकेयं
दोषैरशेषैः स्वभियेति मन्ये ।
अन्येषु तैराकुलितस्तदस्यां
वसत्यसापत्न्यसुखी गुणौघः ॥ १७ ॥

नेति ॥ दृष्टापीयं भैमी द्रष्टुर्विमोहिका मदनविकारकारिणी अथ च मूर्च्छाकारिणीति कृत्वा स्वस्यात्मनो भिया अशेषैः सकलैरपि दोषैरियं नास्पर्शि न स्पृष्टेति मन्ये अहं शङ्के । या दर्शनमात्रेण मूर्च्छां जनयति, दर्शनापेक्षयातिनिकटेन स्पर्शेन किं करिष्यतीति भयेन दोषैर्न स्पृष्टेत्यहं मन्ये इति भावः । अशेषैरिति शब्दादपिशब्दोऽध्याहार्य योज्यः । अन्यथा कियद्भिः स्पृष्टा इति विरुद्धप्रतीतिप्रसङ्गात् । यस्मादियं दोषैर्न स्पृष्टा तत्तस्मादन्येषु भैमीव्यतिरिक्तस्थानेषु तैर्दोषैराकुलितो गुणौघः शीलसौन्दर्यादिर्न विद्यते सपत्नः शत्रुर्यस्य तस्य भावोऽसापत्न्यं तेन सुखी सन् अस्यां भैम्यां वसति । अन्यत्र वैरिभिः सह वसतौ महत्कष्टम्, अस्यां तु तदभावात्सुखेन वसतीत्यर्थः । अन्येषु गुणा दोषसंवलिताः सन्ति अस्यां तु दोषा न सन्त्येवेति गुणानां निःसापत्न्येन स्थितिः । अन्योऽपि सबाधं स्थानं त्यक्त्वा निर्बाधे स्थाने वसति ॥ १७ ॥

औज्झि प्रियाङ्गैर्घृणयैव रूक्षा
नवा (ऽऽ) रिदुर्गात्तु वराटकस्य ।
न कण्टकैरावरणाच्च कान्ति-
र्धूलीभृता काञ्चनकेतकस्य ॥ १८ ॥

औज्झीति ॥ प्रियाङ्गैर्भैम्यवयवैर्वराटकस्य बीजकोशस्य कान्तिः शोभा घृणयैव जुगुप्सयैव औज्झि अत्याजि । यतो रूक्षा स्निग्धत्वरहिता । न वारिदुर्गाज्जलदुर्गाद्धेतोः । असाध्यं जलदुर्गमाश्रितेति ग्रहीतुमशक्येति बुद्ध्या त्यक्तेति न मन्तव्यम् । किंतु रूक्षत्वात् । अथवा आराणि दलानि सन्त्यस्य तदारि कमलं तल्लक्षणाद्दुर्गात् तन्मध्यवर्तित्वाद्धेतोर्नवा नैव । अथ च न कण्टकैरिति नञमुभयत्र सम्बध्य नवा प्रत्यग्रा कान्तिरिति व्याख्येयम् अथ च कृपयैव त्यक्ता । तथा—काञ्चनकेतकस्यापि सुवर्णकेतकीकुसुमस्यापि कान्तिः प्रियाङ्गैर्घृणयैवौज्झि । यतो धूलीनिर्भृता पूरिता । चोऽप्यर्थः । कण्टकैः कृत्वा यदावरणं परिवेष्टनं तस्माद्धेतोर्न । किं तु कृपयैवेति व्याख्येयम् । वराटकसुवर्णकेतकाभ्यामपि सकाशादतिस्निग्धगौरवर्णेयमिति भावः ॥ १८ ॥

प्रत्यङ्गमस्यामभिकेन रक्षां
कर्तुं मघोनेव निजास्त्रमस्ति ।
वज्रं च भूपामणिमूर्तिधारि
नियोजितं तद्द्युतिकार्मुकं च ॥ १९ ॥

प्रत्यङ्गमिति ॥ अभिकेन भैम्याः कामुकेन मघोनेन्द्रेण प्रत्यङ्गं प्रत्यवयवं दोषादेः सकाशाद्रक्षां कर्तुं भूपामणिमूर्तिधारि नेपथ्यरत्नवेषधारि निजास्त्रं स्वायुधं वज्रं च तथा तस्य वज्रस्य द्युतिस्तल्लक्षणं कार्मुकं च अस्यां भैम्यां विषये नियोजितमिव नियुक्तमिवास्ति । चौ परस्परसमुच्चये । प्रत्यवयवमलंकारेषु हीरकाः सन्ति तेषां द्युतिश्च सर्वत्र प्रकाशते । तत्र वज्रशब्दच्छलेन सहेतुकोत्प्रेक्षा । इन्द्रधनुषश्च वज्रद्युतिरूपत्वं प्रसिद्धम् । अन्योऽपि स्वाभीष्टं वस्तु रक्षितुं किमपि निजं नियुङ्क्ते । अस्यामभिकेनेति वा ॥ १९ ॥

अधुना मानुषीत्वात्केशानारभ्यापादं वर्णनमारभते—

अस्याः सपक्षैकविधोः कचौघः
स्थाने मुखस्योपरि वासमाप ।
पक्षस्यतावद्बहुचन्द्रकोऽपि
कलापिनां येन जितः कलापः ॥ २० ॥

अस्या इति ॥ सदृशत्वात्सपक्षो मित्रं सहायश्च एकः केवलो विधुश्चन्द्रो यस्य अस्या मुखस्योपरि शिरसि कचौघः केशसमूहो वासं वसतिमाप तत् स्थाने युक्तम्। कथमित्यत आह—येन कचौघेन पक्षस्याः पक्षेषु स्थितास्तावन्तो बहवश्चन्द्रका यस्यैवंविधः कलापिनां मयूराणां कलापः पिच्छभारो जितः पराजितः । उत्तमोऽपि मयूरपिच्छभारो येन जितस्तस्यात्युत्तमत्वाच्छिरसि वसतिर्युक्तैवेत्यर्थः ॥ २० ॥

---

१ दोषैरशेषैरित्यनुप्रासः, स्वभियेति हेतूत्प्रेक्षा, असापत्न्यसुखीत्युपमानाभावोक्तेर्व्यतिरेको व्यङ्ग्यश्चेति बोध्यम् ।

१ औज्झीत्यादेः सम्भाव्यमानत्वाद्गम्योत्प्रेक्षा, वराटक—केतककान्त्योस्तिरस्करणोक्तेः प्रतीपम् । २ अत्र मघोनेवेत्युत्प्रेक्षा, तद्द्युतिकार्मुकं चेति रूपकम्, वज्रद्युत्योरेकत्र योगात्तुल्ययोगिता, वज्रमेव, किंतु भूपामूर्त्तिधारीत्यपह्नुतिश्च । ३ स्थाने इत्युत्प्रेक्षा, कलेति यमकम्, सपक्षैकविधोरित्युपमा च ।

श्लोकद्वयेन केशानेव वर्णयति—

**अस्या यदास्येन पुरस्तिरश्च**
**तिरस्कृतं शीतरुचान्धकारम्।**
**स्फुटस्फुरद्भङ्गिकचच्छलेन**
**तदेव पश्चादिदमस्ति बद्धम् ॥ २१ ॥**

अस्या इति ॥ अस्या भैम्या आस्येन वदनलक्षणेन शीतरुचा चन्द्रेण पुरोऽग्रतः तिरास्तिर्यक्च वर्तमानं यदन्धकारं तिरस्कृतमपसारितं पराजितं च तदेवेदं स्फुटं प्रकटं स्फुरन्तो विलसन्तो भङ्गिनो निम्नोन्नताः कचास्तेषां छलेन व्याजेन पश्चान्मुखस्य पश्चाद्भागे बद्धमस्ति । पुरस्तिरश्च यत्तिमिरं स्थितं ततोऽपसारितत्वात्पश्चाद्भागादपसारणे चन्द्रस्यासामर्थ्यादागत्य राशीभूय पश्चाद्भागे स्थितिमकरोदित्यर्थः । विलसत्कौटिल्यो निबद्धकेशसमूहोऽयं न भवति, किं तु चन्द्रेण तिरस्कृतत्वाद्विलसत्पराजयाचिह्नं पश्चाद्बद्धमन्धकारमेव ।अन्योऽपि जातपराजयो धृतपराजयचिह्नः पश्चाद्बाहुर्बध्यत इति अतिनीलोऽतिकुटिलश्च भैमीकचसङ्घ इति भावः । 'अन्धकारोऽस्त्रियाम्'इत्यमरः।'भङ्ग'इत्यपि पाठः ॥२१॥

**अस्याः कचानां शिखिनश्च किंतु**
**विधिं कलापौ विमतेरगाताम्।**
**तेनायमेभिः किमपूजि पुष्पै-**
**रभर्त्सि दत्त्वा स किमर्धचन्द्रम् ॥२२॥**

अस्या इति ॥ अस्याः कचानां केशानां शिखिनो मयूरस्य च कलापौ सङ्घपिच्छभारौ विमतेरहमुत्कृष्टोऽहमुत्कृष्ट इति विवादाद्धेतोर्मध्यस्थत्वेन विधिं ब्रह्माणमगातां जग्मतुः । किंतु इति समुदायो वितर्के । तेन ब्रह्मणा अयं पुरो दृश्यमानः केशपाशः पुरो दृश्यमानैरेभिः पुष्पैरपूजि किं, पूजितः किम् । स मयूरकलापश्चार्धचन्द्रं गलहस्तं दत्त्वा अभर्त्सि भर्त्सितः किम् । मध्यस्थेन ब्रह्मणा विवदमानयोस्तयोर्मध्ये केशकलापोऽत्युत्कृष्ट इति ज्ञापयितुं तस्य पुष्पपूजा कृता, मयूरकलापस्त्वतितरां हीनोऽतितरामधिकेन केशकलापेन सह स्पर्धमानोऽनुचितकारित्वाद्गलहस्तित इत्यर्थः । अर्धचन्द्राकाराश्चन्द्रका मयूरकलापे विद्यन्ते ततः शब्दच्छलेनेयमुत्प्रेक्षा । अन्योऽप्यधिको मध्यस्थेन पुष्पैः पूज्यते, यश्च हीन उत्तमेन सह स्पर्धते स भर्त्स्यते गलहस्त्यते चेति । अगाताम्, 'इणो गा लुङि २।४।४५' इति गादेशः ॥ २२ ॥

**केशान्धकारादथ दृश्यभाल-**
**स्थलार्धचन्द्रा स्फुटमष्टमीयम्।**
**एनां यदासाद्य जगज्जयाय**
**मनोभुवा सिद्धिरसाधि साधु ॥ २३ ॥**

भालं वर्णयति—

केशेति ॥ केशलक्षणादन्धकारात् अथानन्तरमधोदेशे दृश्यो दर्शनविषयो रमणीयश्च भालस्थललक्षणो ललाटपट्टलक्षणोऽर्धचन्द्रो यस्याः, अथ च भालस्थलेऽर्धचन्द्राकारास्तिलकविशेषो यस्याः सा इयं भैमी स्फुटं प्रकटमष्टमी । कृष्णाष्टमीरूपेयमित्यर्थः । कृष्णाष्टम्यापि प्रथमयामद्वयान्धकारानन्तरं दृश्यार्धचन्द्रा भवति । अत एव एनामासाद्य प्राप्य स्वयंवरे जगतो जयाय मनोभुवा कामेन सिद्धिर्जगद्वशीकरणलक्षणा यदसाधि साधिता तत्साधु युक्तमेव । अतिसुन्दर्या भैम्या कृत्वा मदनेन जगद्वशीकृतमित्यर्थः । कृष्णाष्टम्यां जगद्वशीकर्तुं गुटिकादिसिद्धिः साध्यते । अर्धचन्द्राकारभालस्थलेयमित्यर्थः । एतेन ललाटसौन्दर्यं सामुद्रिकलक्षणवत्त्वं च सूचितम् ॥ २३ ॥

श्लोकत्रयेण भ्रुवौ वर्णयति—

**पौष्पं धनुः किं मदनस्य दाहे**
**श्यामीभवत्केसरशेषमासीत्।**
**व्यधाद्विधेशस्तदपि क्रुधा किं**
**भैमीभ्रुवौ येन विधिर्व्यधत्त ॥ २४ ॥**

पौष्पमिति ॥ मदनस्य दाहसमये पौष्पं पुष्परूपं धनुस्तस्यैव चापं श्यामीभवन्तः श्यामायमानाः केसरा एव शेषा यस्यैवंविधं स्वरूपेण दग्धमपि श्यामीभवत्केसरशेषमासीत्किम् । मदनदाहानन्तरम् ईशो महादेवः श्यामीभूतं धनुराकारं तत्केसरमपि क्रुधा

१ अत्र तिर इति यमकम्, कचच्छलेनेत्यपह्नुतिः, ननु तदेवेत्युत्प्रेक्षा गम्या च ।

१ किंस्विदित्युत्प्रेक्षा, कचेषु पुष्पसद्भावात् पिच्छेष्वर्द्धचन्द्राकृतिसद्भावाच्च पूजनभर्त्सनयोरुत्प्रेक्षणाच्च द्वितीयोत्प्रेक्षा च । २ अत्र सिद्धिरित्यादावनुप्रासः, केशानामन्धकारत्वेन भालस्यार्द्धचन्द्रत्वेन च रूपणाद्रूपकम् । अष्टमीयं स्फुटमित्युत्प्रेक्षा, पूर्वोत्तरयोरर्थयोर्हेतुहेतुमद्भावाच्च काव्यलिङ्गम् ।

क्रोधेन द्विधा व्यधाच्चकार मध्ये बभञ्ज किम् । द्विधाभूतेन येन कृत्वा विधिर्ब्रह्मा भैमीभ्रुवौ व्यधत्त चकार । अन्यथा तत्सादृश्यं भ्रुवोर्न घटत इत्यर्थः । असंलग्ने धनुराकारे श्यामे च भैमीभ्रुवाविति भावः । अन्योऽपि वैरिणं हत्वा क्रोधेन तदायुधमपि भनक्ति ॥ २४ ॥

भ्रूभ्यां प्रियाया भवता मनोभू-
चापेन चापे घनसारभावः ।
निजां यदप्लोषदशामपेक्ष्य
सम्प्रत्यनेनाधिकवीर्यताऽऽर्जि ॥ २५ ॥

भ्रूभ्यामिति ॥ प्रियाया भैम्या भ्रूभ्यां कृत्वा भवता उत्पद्यमानेन भ्रूत्वं गच्छता मनोभूचापेन घनो दृढः सारो मज्जा यस्य तद्भावोऽतिदृढत्वं च आपे प्रापे । यदैव भ्रूत्वं तद्भावोऽदृढत्वमिति चकारार्थः । पुष्पत्वदशायां निःसारस्यापि धनुषो भैमीभ्रूभवनदशायां ससारत्वं जातमित्यर्थः । कथं ससारत्वमित्यत आह—यद्यस्मात् निजां स्वीयामप्लोषदशामदाहावस्थामपेक्ष्य संप्रति दग्धस्य भैमीभ्रूभवनसमये अनेन धनुषा अधिकवीर्यताऽतिशयितपराक्रमत्वम् आर्जि अर्जितम् । अदग्धपुष्परूपचापापेक्षया दग्धस्य श्यामीभवत्केसरशेषस्य भैमीभ्रूभवतस्तस्यैव चापस्य जगद्वशीकरणेऽधिकसामर्थ्यदर्शनादेवमनुमीयत इति भावः । घनत्वं दृढत्वं सारत्वं श्रेष्ठत्वं च प्रापे इति वा । अथच घनसारभावः कर्पूरत्वं च । यतः—कर्पूरोऽपि निजामदाहावस्थामपेक्ष्य दाहावस्थायामधिकवीर्यतामतिशयितसौगन्ध्यं शीतलत्वं चार्जयति । 'अथ कर्पूरमस्त्रियाम् । घनसारः' इत्यमरः ॥ २५ ॥

स्मारं धनुर्यद्विधुनोज्झिताऽस्या
या (ऽऽ) स्येन भूतेन च लक्ष्मलेखा ।
एतद्भ्रुवौ जन्म तदाप युग्मं
लीलाचलत्वोचितबालभावम् ॥ २६ ॥

स्मारमिति ॥ यत् स्मारं मदनसम्बन्धि धनुस्तदेकम्, अस्या आस्येन भूतेन वदनत्वं गतेन विधुना चन्द्रेण उज्झिता त्यक्ता या च लक्ष्मलेखा कलङ्करेखा भैम्या मुखस्य निष्कलङ्कत्वात्तन्मुखीभवनौचित्याय चन्द्रेण त्यक्ता या लक्ष्मलेखेति द्वितीयं त्यक्तम् । तत् मदनचापचन्द्रलक्ष्मलेखालक्षणं युग्मं द्वयं कर्तृ एतद्भ्रुवौ भैमीभ्रुवौ भैमीभ्रूरूपं जन्म आप । भैमीभ्रूस्वरूपेण तद्द्वयं परिणतमित्यर्थः । किंभूतं जन्म—लीलया विलासेन चञ्चलत्वं यत्र तदुचितो बालभावः केशलता यस्मिन् । लीलात्वेन विलासत्वेन चपलत्वेन चेष्टया च उचितस्तदुभयोर्योग्यो बालभावः केशलता यस्मिञ्जन्मनि तत्तेन युग्मेन लब्धमित्यर्थ इति वा । जन्मप्राप्तौ क्रीडाचञ्चलत्वोचितो बालभावः शैशवं भवति । लीलापदं साम्यार्थम् । भैमीभ्रुवौ कामचापचन्द्रलक्ष्मलेखाकारे सविलासे कामजनिके चेति भावः । 'भावः सत्तास्वभावयोः' इत्यमरः ॥ २६ ॥

नवभिर्दृशौ वर्णयति—

इषुत्रयेणैव जगत्त्रयस्य
विनिर्जयात्पुष्पमयाशुगेन ।
शेषा द्विबाणी सफलीकृतेयं
प्रियादृगम्भोजपदेऽभिषिच्य ॥ २७ ॥

इष्विति ॥ पुष्पमयाशुगेन पुष्परूपबाणेन कामेन कर्त्रा इषुत्रयेणैव पुष्परूपेण बाणत्रयेणैव जगत्त्रयस्य विनिर्जयाद्वशीकरणादेकैकेन बाणेन एकैकस्य जगतो जयाद्धेतोर्बाणत्रयस्य सार्थक्यात्संभावितवैयर्थ्या पञ्चबाणत्वाच्छेषावशिष्टा इयं पुरो दृश्यमाना द्विबाणी प्रियाया भैम्या दृगम्भोजपदे नयनद्वयरूपकमलस्थानेऽभिषिच्यारोप्य सफलीकृता सार्थकीकृता । उत्तमस्थानप्रापणेन तस्याः साफल्यं जातमित्यर्थः । पुष्पमयबाणत्वाद्दृगम्भोजयोरपि बाणत्वमुचितम् । अयमभिप्रायः—बाणत्रयेण जगत्त्रयीजयात्त्रयाणां साफल्यम्, अवशिष्टं बाणद्वयं भैमीनेत्राम्भोजयोरभिषिच्य कामेन सार्थकीकृतम् । तत्र त्रयेण जगत्त्रयं पराजितमित्याश्चर्यं न, किं तु वैयर्थ्यसंभावनापि । द्वयेन जगत्त्रयं जितमित्याश्चर्यम् । तस्मादेतद्बाणद्वयमेव सार्थकं यथा, तथा बाणत्रयं

---

१ केशरशेषमित्यनुप्रासः, किमित्युत्प्रेक्षाद्वयी । २ चापेन चापे इति यमकम्, भ्रूभ्यां चापमेलनस्यासम्भवेऽपि सम्भवोक्तेरतिशयोक्तिः । अथापनार्जनयोरतात्त्विकत्वादिवादेरप्रयोगाच्च गम्योत्प्रेक्षा ।

१ आयभूतेन विधुनेति मुखस्य चन्द्रत्वेन रूपणाद्रूपकम् । तथा—स्मरधनुर्लक्ष्मालेखयोर्भ्रूयुगत्वेन रूपणाद्रूपकम् । एवं रूप्यमाणस्यार्थस्य 'सम्भावितमात्रत्वादुत्प्रेक्षाऽपि ।

नेत्यभिप्रायः । विनिर्जयात् विनिर्जयं पर्यालोच्येति ल्यब्लोपे वा ॥ २७ ॥

सेयं मृदुः कौसुमचापयष्टिः
स्मरस्य मुष्टिग्रहणार्हमध्या ।
तनोति नः श्रीमदपाङ्गमुक्तां
मोहाय या दृष्टिशरौघवृष्टिम् ॥ २८ ॥

सेयमिति ॥ मुष्टिग्रहणार्हो मध्यो यस्याः सेयं भैमी स्मरस्य कौसुमी चापयष्टिर्धनुर्लता । अत एव मृदुः कोमला । चापयष्टिरपि मध्ये मुष्टिना ध्रियते । सा का—या भैमी नोऽस्माकं मोहाय मदनजन्यविकाराय श्रीमता सलक्ष्मकेनापाङ्गेन नेत्रप्रान्तेन मुक्तां दृष्टिलक्षणानां नेत्रकमललक्षणानां शराणामोघस्य समूहस्य वृष्टिम्, ओघेन परम्परया वा वृष्टिं तनोति विस्तारयाति । मदनोऽप्यस्मादृशां मोहाय पूर्वोक्तामेव शरौघवृष्टिं तनोति तथेयमपि कटाक्षविक्षेपमात्रेण जगत्त्रयमपि मोहयतीति भावः । 'ओघपरम्परायां च' इति विश्वः ॥ २८ ॥

आघूर्णितं पक्ष्मलमक्षिपद्मं
प्रान्तद्युतिश्वैत्यजितामृतांशु ।
अस्या इवास्याश्चलदिन्द्रनील-
गोलामलश्यामलतारतारम् ॥ २९ ॥

आघूर्णितमिति ॥ अस्या भैम्या अक्षिपद्मं नयनकमलम् अस्या भैम्या इव । न त्वन्यनयनाभ्यां तुल्यमित्यर्थः । किंभूतमक्षिपद्मम्—आघूर्णितं घूर्णायमानं मन्दमुन्मीलदित्यर्थः । अथ च विकसदवस्थम् । तथा—पक्ष्मलं रोमसहितम् । अथ च दलसहितम् । तथा—प्रान्तद्युतेरपाङ्गकान्तेः श्वैत्येन श्वेतिम्ना कृत्वा जितोऽमृतांशुश्चन्द्रो येन । प्रान्तं तस्मादधिकमुज्ज्वलम् । चन्द्रः सुधया यथाह्लादकारी, तथापाङ्गद्युत्या तदप्याह्लादकारीत्यर्थः । कमलमपि प्रकृष्टा या अन्तर्द्युतिर्गर्भकान्तिस्तस्याः श्वैत्येन जितचन्द्रम् । 'प्रांशुद्युति' इति पाठे महाकान्ति, श्वैत्येन जितचन्द्रम्, भिन्नं पदम् । तथा—चलंश्चञ्चलो य इन्द्रनीलगोलः, तद्वदमला तस्य वाऽमला स्निग्धतरा श्यामलता कृष्णता ताम् आरात्यादत्तेऽङ्गीकरोति इति श्यामलतारा एवंविधा तारा कनीनिका यस्यैवंविधम् । आङ्पूर्वो रातिरादाने वर्तते । कमलमपि चलदिन्द्रनीलगोलवदमला या श्यामलता श्यामत्वं तां रात्यङ्गीकरोति श्यामलतारो भ्रमरस्तेन तारं तारस्वरयुक्तम् । भ्रमरस्य तारोऽत्युच्चः स्वरो यस्मिन्निति वा । पद्मेन साम्ये वक्तव्ये तत्कमलं स्वरूपेणैतदेवेति भेदाभावात्कमलेन साम्याभावः । यद्वा कमलस्य नेत्रयोश्च यद्यपि साम्यमस्ति, तथापि नेत्रकमलस्य कमलेन साम्याभावः । कमलनेत्रत्वे सति कमलत्वस्याभावादित्यर्थः । अन्यस्या नयनाभ्यां तु साम्यमसंभावितमेव । तथा च दक्षिणनेत्रपद्मं वामनेत्रपद्मतुल्यम्, वामनयनकमलं दक्षिणनयनकमलतुल्यम्, न त्वन्यदस्योपमानमस्तीति भावः । अत्र विषये 'रामरावणयोर्युद्धं रामरावणयोरिव' इतिवत्तदेवोपमेयमुपमानं च संगच्छते । पक्ष्मलम्, सिध्मादित्वान्मत्वर्थे लच् ॥ २९ ॥

कर्णोत्पलेनापि मुखं सनाथं
लभेत नेत्रद्युतिनिर्जितेन ।
यद्येतदीयेन ततः कृतार्था
स्वचक्षुषी किं कुरुते कुरङ्गी ॥ ३० ॥

कर्णोत्पलेनेति ॥ कुरङ्गी मृगी भैमीनेत्रकान्त्या निर्जितेन एतदीयेन भैमीसंबन्धिना कर्णोत्पलेन कर्णावतंसोत्पलेनापि सनाथं युक्तं स्वमुखं यदि लभेत, ततस्तर्हि कृतार्था कृतकृत्या सती स्वचक्षुषी किं किमर्थं कुरुते । अपितु अतिहीनत्वान्निष्प्रयोजनत्वाच्च नेत्रे त्यजेदेवेति भावः । भैमीनेत्रशोभाप्राप्तौ का कथेत्यपरेर्थः । तन्नेत्रदीप्त्या जितेनापि कर्णोत्पलेन तन्मुखस्य सनाथत्वं चेल्लभ्यात्तर्हि सा स्वनयने त्यजेदेवेत्यर्थः । मृगीनेत्रापेक्षया भैमीकर्णोत्पलमधिकम्, ततोऽपि भैमीनेत्रे अधिके इति भावः । ततः कर्णोत्पलयोगलाभाद्धेतोः कृतार्था सतीति वा ॥ ३० ॥

---

१ एकेनैकेनेपुणा एकमेकं जगज्जितमिति प्रतीतिमात्रमतो यथासङ्ख्यं व्यज्यते । स्मरस्य पञ्चाशुगत्वेन प्रसिद्धौ तन्नेत्रपुत्रयस्य विनियोगे चेपुद्वयं कुत्रेति शेषेत्याक्षिप्तम् । एवं च स्मरस्येपुद्वयमेव तद्दृग्द्वयमिति रूपकं व्यवसीयते । रूपकत्वेऽपि उपमात्वहानेः प्रतीपं च तद् व्यङ्ग्यम् । २ सेयं स्मरस्य मुष्टिरिति रूपकम् सिद्धा च तापह्नुत्य मुष्टित्वेन साधनादपह्नुतिश्च ।

१ अक्षिपद्ममिति रूपकम्, अस्या अक्षिपद्ममिवास्या अक्षिपद्ममित्यनन्वयः, इन्द्रनीलतारापदार्थयो रूपणाद्रूपकं च । २ मृगीनेत्रापेक्षया भैम्याः कर्णोत्पलमुत्कृष्टं ततोऽपि तस्या एव नेत्रे इत्युत्तरोत्तरमुत्कर्षोक्त्या सारः, 'उत्तरोत्तरमुत्कर्षो भवेत्सार परावधिः' इति प्रकाशोक्तेः ।

त्वच समुत्तार्य दलानि रीत्या
मोचात्वचः पञ्चपपाटनायाम्।
सारैर्गृहीतैर्विधिरुत्पलौघा-
दस्यामभूदीक्षणरूपशिल्पी ॥ ३१ ॥

त्वच इति ॥ मोचात्वचः कदलीगर्भत्वचः संबन्धिनीर्बाह्यास्त्वचो वल्कलानि रीत्या प्रकारेण क्रमेण समुत्तार्य पृथक्कृत्य, तथा कमलवृन्दसम्बन्धीनि बाह्यानि दलानि पत्राणि क्रमेण पृथक्कृत्य पञ्चपपाटनायां पञ्च षड् वा परिमाणं येषां कदलीत्वक्कमलवृन्ददलानां तेषां पाटनायां सत्यां बाह्याः पञ्चपास्त्वचो बाह्यानि पञ्चपाणि दलानि चोत्पाट्य मोचात्वचः कदलीवल्कलात्, उत्पलौघाच्च गृहीतैः सारैः श्रेष्ठभागैः कृत्वा अस्यां भैम्यां विषये विधिर्ब्रह्मा ईक्षणे नेत्रे तयो रूपं रामणीयकं तस्य शिल्पी कारकोऽभूत् कदलीगर्भगतं गौरत्वं गृहीत्वा नेत्रगतं गौरत्वं निर्मितम् । यद्वा कमलगर्भपत्रगतं गौरत्वं गृहीत्वा नेत्रसौन्दर्यं निर्मितमित्यर्थः । उत्पलशब्देन नीलोत्पलं वा । तथा च तत्सारेण नेत्रयोर्नीलिमा कृत इत्यर्थः । पञ्चप इति 'सङ्ख्ययाव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये २।२।२५' इति बहुव्रीहौ, 'बहुव्रीहौ संख्येये डजबहुगणात् ५।४।७३' इति डच् ॥ ३१ ॥

चकोरनेत्रैणदृगुत्पलानां
निमेषयन्त्रेण किमेष कृष्टः।
सारः सुधोद्गारमयः प्रयत्नै-
र्विधातुमेतन्नयने विधातुः ॥ ३२ ॥

चकोरेति ॥ एतन्नयने भैमीनेत्रे विधातुं निर्मातुं विधातुर्ब्रह्मणः प्रयत्नैः समुद्योगैः चकोरनेत्राणामेणदृशां हरिणीनेत्राणाम्, उत्पलानां च संबन्धी सुधोद्गारमयः पीयूषनिर्झररूप एष प्रत्यक्ष (:) दृश्यः सारः श्रेष्ठो भागो निमेषलक्षणेन यन्त्रेण कृष्ट आकृष्टः किमित्यूहः । निमेषः पक्ष्मसंकोचो दलसंकोचश्च । त्रयाणामपि निमेषयन्त्रेण निष्पीड्य गृहीतेन श्रेष्ठभागेनैतन्नेत्रे निर्मिते । सारस्य सुधोद्गाररूपत्वं च पीतचन्द्रचन्द्रिकचकोरनयनताराकर्षणात्, एणस्य च चन्द्रोत्सङ्गस्थत्वात्, तद्दृशोरप्यमृतसंबन्धात्तत्ताराकर्षणात्, उत्पलानां च सोमसंबन्धाद्रात्रौ चन्द्रामृतसंबन्धात्तत्साराकर्षणादिति ज्ञेयम्। अत्योऽपीक्ष्वादिसारो रसरूपः काष्ठयन्त्रेणाकृष्यते । निमेषरूपं ब्रह्मणा सारग्रहणार्थं यन्त्रमेव निर्मितम् । एणदृगुत्पलयोः पूर्वं द्वन्द्वः । तत्रैणदृशोरुत्पलापेक्षया दृगुपमानेऽन्तरङ्गत्वादभ्यर्हितत्वादेणदृक्पदस्य पूर्वनिपातः, अजाद्यदन्तत्वाप्युत्पलशब्दस्य न । एणेति जातिमात्रविवक्षया ॥ ३२ ॥

ऋणीकृता किं हरिणीभिरासी-
दस्याः सकाशान्नयनद्वयश्रीः।
भूयोगुणेयं सकला बलाद्यत्
ताभ्योऽनयाऽलभ्यत बिभ्यतीभ्यः ३३

ऋणीति ॥ हरिणीभिरस्याः सकाशान्नयनद्वयस्य श्रीः शोभा ऋणीकृता वृद्ध्या गृहीता आसीत्किम् । कुतः— यद्यस्मादनया भैम्या बिभ्यतीभ्यस्ताभ्यो हरिणीभ्यः सकला सम्पूर्णा कलया विलासेन सहिता वा भूयोगुणा बहुगुणा इयं नयनद्वयश्रीः बलात्कारेणालभ्यत लब्धा । अथ च सकला धनवृद्धिसहिता भूयोगुणा त्रिगुणा चतुर्गुणा वा बिभ्यतीभ्यो बलात्कारेण लब्धा।उत्तमर्णेन हि असद्भ्योऽधमर्णेभ्यो वृद्धिसहिता त्रिगुणा चतुर्गुणा वा संपत् बलात्कारेण लभ्यते । भूयोगुणत्वं याज्ञवल्क्योक्तं व्यवहाराध्याये द्रष्टव्यम् 'अशीतिभागो वृद्धिः स्यात्' इत्यादिना । अनयाऽपि तादृशी लब्धा तस्मात्पूर्वमृणग्रस्तरूपेण गृहीतेति सत्यम् । त्रस्यन्तीभ्योऽतएव चञ्चलनयनाभ्योऽपि हरिणीभ्यः सकाशादेतन्नेत्रे अति सुन्दरे, अतिचञ्चले चेति भावः ॥ ३३ ॥

दृशौ किमस्याश्चपलस्वभावे
न दूरमाक्रम्य मिथो मिलेताम्।
न चेत्कृतः स्यादनयोः प्रयाणे
विघ्नः श्रवःकूपनिपातभीत्या ॥ ३४ ॥

दृशाविति ॥ चपलस्वभावे अतिचञ्चलस्वभावे अस्या दृशौ दूरमाक्रम्य दूरं गत्वा शिरः परिभ्रम्य मिथोऽन्योन्यं किं न मिलेताम्? अपि तु मिलिते भवेतामेव । परं चेद्यदि अनयोः प्रयाणे दूरगमने विषये श्रवःकूपयोः कर्णलक्षणकूपयोर्निपातः पतनं

---

१ एकस्यैक्षणस्य निष्पत्तयेऽनेकेषां क्रमेण सारग्रहणोक्तेर्यथासङ्ख्यम्।

१ किमेष इत्युत्प्रेक्षा, विधाताविति यमकम् ।
२ किमित्युत्प्रेक्षा। अधमर्णोत्तमव्यवहारयोः प्रतीतेः समासोक्तिश्च ।

तस्माद्भीत्या भयेन विघ्नः कृतो न स्यात् । भयरूपेण प्रतिबन्धकेन न मिलिते । नेत्रे आकर्णपूर्णे चञ्चलतरे चेति भावः । अन्योऽपि कूपादिपतनभीत्या परावर्तते । क्रियाऽतिपत्तिर्न विवक्षणीया ॥ ३४ ॥

केदारभाजा शिशिरप्रवेशा-
त्पुण्याय मन्ये मृतमुत्पलिन्या ।
जाता यतस्तत्कुसुमेक्षणेयं
यातश्च तत्कोरकदृक्चकोरः ॥ ३५ ॥

केदारेति ॥ केदारभाजा व्रीहिक्षेत्रभाजा आलवालभाजा वा, अथ च केदाराख्यदेवसेविन्या उत्पलिन्या-कमलिन्या शिशिरर्तोः प्रवेशादथ च शिशिरे हिमे प्रवेशाद्धिमचूर्णनाद्धेतोः पुण्याय मृतं पुण्यं प्राप्तुं मृतम् । पुण्यायेति तुमर्थे चतुर्थी तज्जन्यसुकृतविशेषजन्योत्तमफलप्राप्तय इत्यर्थः । इत्यहं मन्ये जानामि । यतो यस्मादियं तस्याः कमलिन्याः कुसुमे इव ईक्षणे नेत्रे यस्या एवंविधा जाता । यतश्च यस्माच्च चकोरस्तत्कोरकदृक् तस्या एव कोरकौ कलिके दृशौ यस्यैवंविधो जातः । तस्मादेतदनुमीयते । नहि सुकृतातिशयेन विना भैमीनयनत्वं चकोरनयनत्वं च तदुत्पन्नकुसुमकोरकाभ्यां लभ्यते । अन्योऽपि केदारदेवसंनिधौ हिमचूर्णनादुत्तमे वंशे जायते । शिशिरर्तोः प्रवेशे कमलिनी नश्यति । भैमीनेत्रे च कमलतुल्ये । कलिकापेक्षया कुसुमस्याधिक्याच्चकोरनेत्रापेक्षया भैमीनेत्रे अतिसुन्दरे इति सूचितम् । 'केदारः पर्वते शंभोः क्षेत्रभेदालवालयोः', 'शिशिरः स्यादृतोर्भेदे तुषारे' इति विश्वः ॥ ३५ ॥

नासाऽदसीया तिलपुष्पतूणं
जगत्त्रयव्यस्तशरत्रयस्य ।
श्वासानिलामोदभरानुमेयां
दधद्द्विबाणीं कुसुमायुधस्य ॥ ३६ ॥

नासां वर्णयति—

नासेति ॥ अदसीया अमुष्याः सम्बन्धिनी नासा नासिका जगत्त्रये विजयाय व्यस्तं क्षिप्तं शरत्रयं येन तस्य कुसुमायुधस्य शरत्रयस्य क्षिप्तत्वादवशिष्टां द्विबाणीं बाणद्वयीं दधत् तिलपुष्परचितं तूणं भस्त्रा । पुष्पबाणस्येषुधिरपि पुष्पमयो युक्तः । तिलपुष्पं च तूणीराकारम् । किंभूतां द्विबाणीम्—श्वासानिलस्य निश्वासपवनस्यामोदभरेण परिमलबाहुल्येनानुमेयामनुमानार्हाम् । बाणत्रयेण जगत्त्रयं जितम् अवशिष्टं बाणद्वयं भैमीनासालक्षणतिलपुष्पतूणीररन्ध्रद्वये स्थापितमित्यर्थः ॥ ३६ ॥

श्लोकषट्केनाधरोष्ठं वर्णयति—

बन्धूकबन्धूभवदेतदस्या
मुखेन्दुनाऽनेन सहोज्जिहाना ।
रागश्रिया शैशवयौवनीयां
स्वमाह सन्ध्यामधरोष्ठलेखा ॥ ३७ ॥

बन्धूकेति ॥ अनेन प्रत्यक्षदृश्येन मुखेन्दुना सहैवोज्जिहाना उत्पद्यमाना अस्या अधरोष्ठलेखा लेखाकारोऽधरोष्ठ एतत्प्रत्यक्षदृश्यं स्वयमात्मानं शैशवयौवनीयां बाल्यतारुण्यसम्बन्धिनीं सन्ध्यां ब्रूते अहमेव सन्ध्येति । बाल्यतारुण्ययोः सन्धौ भवनात्सन्ध्यात्वम् । शैशवान्ते यौवनादौ चाधरोष्ठे भूयात्रक्तिमा भवतीति भावः । किम्भूतं स्वम्—रागश्रिया लोहितिमशोभया कृत्वा बन्धूकस्य मध्याह्नविकसितपुष्पस्य बन्धूभवत्समानं भवत अतिरक्तमित्यर्थः । अथ च रात्रिदिनसन्धौ सन्ध्या भवति । सन्ध्याऽपि चन्द्रेण सहैवोदेति रक्ता च भवति ॥ ३७ ॥

अस्या मुखेन्दावधरः सुधाभू-
बिम्बस्य युक्तः प्रतिबिम्ब एषः ।
तस्याथवा श्रीर्द्रुमभाजि देशे
सम्भाव्यमानस्य तु विद्रुमे सा ॥ ३८ ॥

अस्या इति ॥ अस्या मुखेन्दौ वदन एव चन्द्रे विद्यमान एषोऽधरोष्ठः सुधाभुव्यमृतभूमौ जातस्य बिम्बस्य बिम्बीफलस्य प्रतिबिम्बः सदृशो युक्तः । बिम्बीफलस्य भैम्यधरसाम्यं नास्त्येव रक्तत्वे सत्यमृतवत्त्वाभावात् । यदि स्यात्तर्ह्यमृतभूमावुत्पन्नस्यैव नान्यस्य । अथ च निर्मलत्वाच्चन्द्रे प्रतिबिम्बोऽन्यस्य युक्त इत्यर्थः । अतएव मुखेन्दौ इति निर्देशः । अथ च चन्द्रबिम्बस्य प्रतिबिम्बो भवतीति युक्तमेवेत्यर्थः । अथवेत्यपरितोषेणैतद्दूषयति—तस्य श्रीः शोभा द्रुमभाजिदेशे द्रुमसहिते देशे । अस्य तु एतदधरस्य सा श्रीर्विद्रुमे प्रवाले सम्भाव्यमाना सम्भाव्यत इत्यर्थः ।

---

१ किमित्युत्प्रेक्षा, श्रवःकूपेति रूपकम् । २ मन्य इत्युत्प्रेक्षा, कुसुमेक्षणेत्युपमा, कोरकेत्यादौ रूपकं च ।

१ नासातिलपुष्पतूणमिति रूपकम् । २ बन्धू इति यमकम् । मुखेन्दुनेत्युपमा, अधरोष्ठलेखामपह्नुत्य सन्ध्यात्वस्य तत्र स्थापनादपह्नुतिः, किंतु व्यङ्ग्येयम् रागेति श्लिष्टम् ।

सुधाभूत्समुत्पन्नस्यापि बिम्बफलस्य रसवत्त्वेन साम्यं स्यात् तथापि तस्य वृक्षाश्रयत्वाद्रक्तशोभाया अतिलक्षत्वात्, भैम्यधरस्य स्निग्धत्वात् तदधरस्येव स्निग्धरक्तशोभा कुत्रास्तीति विचारे विद्रुमेऽस्ति । रक्तिम्ना कृत्वा विद्रुमस्याधरस्य च साम्यं विद्यते यद्यपि तथापि विद्रुमस्य सुधाभूमावनुत्पन्नत्वादधरतुल्यरसत्वाभावाद्विद्रुमेण अपि साम्यं न विद्यत इत्यर्थः । बिम्बीफलस्यैवंविधरक्तिमाभावाद्विद्रुमस्यामृतवत्त्वाभावात्, एतदधरस्य चैतदुभययुक्तत्वादेतदधरो न ताभ्यां तुल्य इति भावः । द्रुमसहिते देशे वर्तमानस्य परस्परविरुद्धत्वात्साम्याभाव इत्यर्थः । अन्यरमणीरदनच्छदस्य बिम्बीफलस्य च यद्यपि साम्यमस्ति, तथाप्येतस्या नास्तीति अस्या इति पदेन सूचीतम् । मुखेन्दाविति सुधासंभवसूचनं भैम्यधरस्यैव । यद्वा—अथवा अन्यस्मादपि हेतोरिति यावत् । तस्य बिम्बीफलस्य शोभा वृक्षसहिते देशे बहुवृक्षे वने वर्तते । बिम्बीफललताया वृक्षाद्याश्रयत्वात् । अस्य तु पुनः संभाव्यमाना विचार्यमाणा सा विगतवृक्षे नगरे संभाव्यते । नगर एव भैम्याः सत्त्वात् । द्रुमभाजि साधारणकन्दकवृक्षसहिते देशेऽरण्ये तस्य श्रीः, अस्य तु विशिष्टाम्रादिवृक्षे नगरे सा संभाव्यत इति वा । आरण्यकस्य नागरिकस्य च यदन्तरमित्यर्थः । इति विस्तरेणालम् । प्रतिबिम्बशब्दोऽर्धर्चादिषु द्रष्टव्यः ॥ ३८ ॥

जानेऽतिरागादिदमेव बिम्बं
बिम्बस्य च व्यक्तमितोऽधरत्वम् ।
द्वयोर्विशेषावगमाक्षमाणां
नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥ ३९ ॥

जान इति ॥ रदनच्छदोपमानत्वेन प्रसिद्धं यद्बिम्बं बिम्बीफलं तत् इदमेव भैम्योष्ठलक्षणमेव नान्यदिति जाने। कुतः—अतिरागादतिलौहित्यादत्यनुरागाच्च । लोकप्रसिद्धस्य बिम्बस्य तादृग्लौहित्याभावात्सर्वत्रोपमानस्याधिक्याच्चाधर उपमानमभूत् । यद्बिम्बफलं तद्भैमीरदनच्छदरूपमेव नान्यादित्यर्थः । भैमीरदनच्छदस्योपमानत्वं युक्तमिति भावः । लौकिकस्य बिम्बस्य च इतः सत्यरूपाद्भैमीरदनच्छदात्सकाशादधरत्वं हीनत्वं व्यक्तं स्पष्टम् । तादृग्लौहित्याभावान्न्यूनत्वादुपमेयत्वामित्यर्थः । अथ च इदं पुरो दृश्यमानमेव बिम्बमितः पुरो दृश्यमानादस्माल्लौहित्यादेतोर्बिम्बस्य च प्रसिद्धबिम्बीफलस्याधरत्वमोष्ठत्वम् । नन्वेवं सति लोकप्रसिद्ध्यपलापप्रसङ्ग इत्यत आह—द्वयोर्बिम्बफलाधरयोर्विशेषावगमे तारतम्यज्ञाने अक्षमाणामसमर्थानां पामराणां जनानां द्वयोरनयोर्बिम्बाधरयोर्नाम्नि भ्रमोऽभूत् । तारतम्यास्फुरणात्पामरैर्बिम्बत्वेन परीक्षकाभिमतस्याधरसंज्ञा कृता, अधरत्वेन च परीक्षकाभिमतस्य बिम्बसंज्ञा कृता । अतः पामरप्रसिद्ध्यपलापः, न तु परीक्षकप्रसिद्ध्यपलाप इत्यर्थः । बिम्बापेक्षया भैम्योष्ठोऽधिक एवेति भावः[1] ॥ ३९ ॥

मध्योपकण्ठावधरोष्ठभागौ
भातः किमप्युच्छ्वसितौ यदस्याः ।
तत्स्वप्नसम्भोगवितीर्णदन्त-
दंशेन किं वा न मयाऽपराद्धम् ॥ ४० ॥

मध्योपेति ॥ अस्या भैम्या अधरोष्ठस्य मध्योपकण्ठौ मध्यसमीपवर्तिनौ अधरोष्ठभागावधरोष्ठप्रदेशौ किमपि किंचित् उच्छ्वसितावुच्छूनौ यद्यस्मात् भातः शोभेते । तत्तस्माद्धेतोः स्वप्ने यो भैमीसम्भोगस्तत्र वितीर्णो दत्तो दन्तदंशः दन्तक्षतं येन एवंविधेन मया वा मयैव किं नापराद्धम् । किंतु तादृगपराधो मयैव कृतः । वाशब्दः सम्भावनायां वा । स्वप्नसम्भोगे वितीर्णेन दन्तक्षतेन कृत्वेति वा । अधरोष्ठस्य मध्यसमीपवर्तिनोः पार्श्वदेशयोः किंचिदुच्छूनता स्वाभाविको गुणः, दन्तक्षतेनाप्युच्छूनता भवति । स्वप्ने प्रत्यहं मयेयं सम्भुज्यते ॥ ४० ॥

विद्या विदर्भेन्द्रसुताधरोष्ठे
नृत्यन्ति कत्यन्तरभेदभाजः ।
इतीव रेखाभिरपश्रमस्ताः
सङ्ख्यातवान्कौतुकवान्विधाता ॥ ४१ ॥

विद्या इति ॥ अन्तरभेदभाजः अवान्तरभेदसहिताः कति विद्याः कियत्यो विद्या विदर्भेन्द्रसुताधरोष्ठे नृत्यन्ति स्फुरन्ति जाग्रद्रूपेण वर्तन्ते इतीव इति स्वयमेव

---

१ मुखेन्दावित्युपमा, अधरमपह्नुत्य बिम्बस्य प्रतिबिम्ब्यमानत्वेन साधनादपह्नुतिस्तावदेका । अपरा पुनः, श्रियमपह्नुत्य विद्रुमत्वेन साधनात् । उभयत्रोत्प्रेक्षा प्राणप्रदा ।

[1] जान इति उत्प्रेक्षा, इदमेव बिम्बमिति रूपकम्, इदन्त्वमपह्नुत्य बिम्बत्वेन साधनादपह्नुतिश्च ।
२ किमित्युत्प्रेक्षा, अधरोष्ठेति उपमा ।

संदिहानः, इवेति लोकसंदेहनिवृत्त्यर्थं वा, कौतुकवान् अपश्रमः श्रमरहितो विधाता ब्रह्मा अधरोष्ठवर्तिनीभी रेखाभिः कृत्वा इयत्यो विद्या विद्यन्त इति ता विद्याः संख्यातवान्गणितवान्। रामणीयकहेतुभूता रेखा विद्यागणनार्थत्वेनोत्प्रेक्षिताः। अन्तरे ओष्ठमध्य इति वा॥ ४१॥

सम्भुज्यमानाऽद्य मया निशान्ते
स्वप्नेऽनुभूता मधुराधरेयम्।
असीमलावण्यरदच्छदेत्थं
कथं मयैव प्रतिपद्यते वा॥ ४२॥

संभुज्येति॥ निशान्ते गृहमध्ये रात्र्यवसानसमये वा अद्य स्वप्ने मया सम्भुज्यमाना कृतोपभोगा इयं भैमी चुम्बनवशान्मधुराधरा अमृतोष्ठी सुन्दराधरा वाऽनुभूता। इत्थमनिर्वचनीयप्रकारेण असीमलावण्यो निर्मर्यादसौन्दर्यो रदच्छदोऽधरोष्ठो यस्याः सेयं मयैव कथं वा पतिपद्यते प्रतीयते। आश्चर्यमेतदित्यर्थः। स्वप्ने यादृशी सुन्दराधरत्वेनानुभूता तादृश्येव जाग्रदवस्थायामपीत्याश्चर्यम्। अत्र हेतुर्निशान्तपदम् 'गोविसर्जनवेलायां दृष्ट्वा सद्यःफलं भवेत्' इति। अथ च या मया मधुरसंयुक्ताधरानुभूता सा निर्मर्यादो लवणरसभावो यस्यैवंविधोऽधरोष्ठो यस्याः सा मयैव कथमनुभूयत इत्याश्चर्यम्। मधुररसलवणरसयोः परस्परविरोधादित्यर्थः॥४२॥

यदि प्रसादीकुरुते सुधांशो-
रेषा सहस्रांशमपि स्मितस्य।
तत्कौमुदीनां कुरुते तमेव
निर्मिच्छ्य देवः सफलं स जन्म॥४३॥

स्मितं वर्णयति—

यदीति॥ एषा स्मितस्य सहस्रांशं सहस्रपरिपूरकं लेशमपि सुधांशोर्यदि चेत्प्रसादीकुरुते चन्द्रस्य प्रसन्ना भूत्वा प्रसादत्वेन स्मितलेशत्वमपि ददाति तर्हि स चन्द्रो देवस्तमेव स्मितसहस्रांशमेव निर्मिच्छ्य अर्थात्कौमुदीभिरेव पूजयित्वा नीराजनं कृत्वा कौमुदीनां जन्म सफलं कृतकृत्यं कुरुते। अत्युत्तमस्य तस्य नीराजनस्थाने तासां भवनयोग्यत्वात् अन्यदप्युत्तमं वस्तूत्तमेन वस्त्रादिना नीराज्यते। कौमुद्यस्तात्स्मितसहस्रांशस्यापि सदृश्यो नेति भावः। सहस्रं चासावंशश्चेति व्युत्पत्तिः। सहस्रपूर्णोऽश इति लक्षणया व्याख्येयम्। अन्यथा 'नित्यं शतादि—' इत्यादिना डटस्तमडागमे सहस्रतम इति स्यात्। निर्पूर्वो मिच्छतिर्नीराजनार्थः ४३

श्लोकत्रयेण दन्तपङ्क्तिद्वयं वर्णयति—

चन्द्राधिकैतन्मुखचन्द्रिकाणां
दरायतं तत्किरणाद्घनानाम्।
पुरःसरस्रस्तपृषद्द्वितीयं
रदावलिद्वन्द्वति बिन्दुवृन्दम्॥ ४४॥

चन्द्रेति॥ तस्य चन्द्रस्य किरणात्। जात्यभिप्रायेणैकवचनम्। किरणेभ्यः सकाशाद्घनानां मुखचन्द्रस्य चन्द्रादुत्कृष्टत्वाद् घनानामतिनिबिडानां चन्द्राधिकं चन्द्रोत्कृष्टम् एतन्मुखं भैमीमुखचन्द्रस्तस्य चन्द्रिकाणां दरायतमीषद्दीर्घम्, अथ च चन्द्राधिकैतन्मुखचन्द्रचन्द्रिकारूपाणामेव घनानां मेघानां तेभ्यो मेघेभ्यः क्षरणाद्धेतोः ईषदायतम्। पुरःसराण्यग्रेसराणि स्रस्तानि निःसृतानि पृषन्ति बिन्दवः, तान्येव द्वितीयानि यस्य तत्। बिन्दुवृन्दम् रदावलिद्वन्द्वति दन्तपङ्क्तिद्वयमिवाचरति। अग्रनिःसृतबिन्दूनां सूक्ष्मत्वादधोदन्तत्वम्, पश्चादव्यवधानेन निःसरतां बिन्दूनामीषदायतत्वादूर्ध्वदन्तत्वमित्यर्थः। पर्जन्यवशात्पटलान्तात्प्रथममेका बिन्दुपङ्क्तिः पतति, तदनु द्वितीया, तयैव संलग्नेषदायता पतति। तद्वदिदं दन्तपङ्क्तिद्वयमिति। दन्तानामीषदायतत्वं घनत्वं सूक्ष्मत्वं सामुद्रिको गुणः। रदावलिद्वन्द्वतीत्यत्र 'सर्वप्रातिपदिकेभ्यः क्विब्वाचारे' इति (वा.) क्विप्॥ ४४॥

सेयं ममैतद्विरहार्तिमूर्च्छा-
तमीविभातस्य विभाति सन्ध्या।

---

१ इतीवेति हेतूत्प्रेक्षा। २ मधुराधरेत्यत्र रूपकम्, असीमलावण्यमेव रदच्छदो यस्या व्याख्यानेऽतिशयोक्तिरपि, रूपकं तु स्यादेव।

१ स्मितस्य सहस्रांशमपत्याद्यसम्भवेऽपि तथोक्तेर्यद्यर्थातिशयोक्तिः, व्यतिरेकप्रतीपे तु व्यज्येते। २ मुखचन्द्रिकाणां घनानामिति रूपकम्, रदावलिद्वन्द्वतीत्युपमा चन्द्रकिरणापेक्षया मुखचन्द्रिकाणामत्युत्कृष्टत्व उच्यमाने मुखस्य चन्द्रापेक्षयात्युत्कृष्टत्वं सिद्धमेवेति तादृशत्वासम्भवेऽपि व्यञ्जितमित्यतिशयोक्तिश्च। द्वन्द्वतीत्यादावनुप्रासः शब्दालङ्कारोऽपीत्यन्यत्।

महेन्द्रकाष्ठागतरागकर्त्री
द्विजैरमीभिः समुपास्यमाना ॥ ४५ ॥

सेयमिति ॥ सेयं भैमी मम एतया सह विरहो वियोगः, तज्जन्या याऽर्तिः पीडा तज्जन्या या मूर्च्छा सैव तमी रजनी तस्या विभातस्य प्रातःकालसमयस्य सम्बन्धिनी सन्ध्या विभाति प्रकाशते । कीदृशी महेन्द्रस्य काष्ठामुत्कर्षं गतः प्राप्तः काष्ठां मर्यादामागतः प्राप्तो वा रागोऽनुरागस्तस्य कर्त्री जनिका । तथा—अमीभिः प्रत्यक्षदृश्यैर्द्विजैर्दन्तैः समुपास्यमाना सेव्यमाना । विभातस्य सन्ध्येयमित्यनेन भैमीदर्शनान्मूर्च्छाऽपगमः सूचितः । प्रातःसंध्याऽपि प्राचीप्राप्तलौहित्यजनिका द्विजैर्ब्राह्मणैः सेव्यते । 'रजनी यामिनी तमी' इत्यमरः ॥ ४५ ॥

राजौ द्विजानामिह राजदन्ताः
सम्बिभ्रति श्रोत्रियविभ्रमं यत् ।
उद्वेगरागादिमृजाऽवदाता-
श्चत्वार एते तदवैमि मुक्ताः ॥ ४६ ॥

राजाविति ॥ इह दृश्यमानायां द्विजानां दन्तानां राजौ पङ्क्तौ एते दृश्यमानाश्चत्वारो राजदन्ता दन्तश्रेष्ठा यद्यस्मात् श्रोत्रियाणां विभ्रमं विलासमुज्ज्वलत्वलक्षणं धारयन्ति तत् तस्मात् मुक्ताः । एतान्राजदन्तान्मौक्तिकानि अवैमि । किंभूताः—उद्वेगरागः क्रमुकजन्यो लोहितिमा स आदिर्यस्य खादिरादेर्मृजया शोधनेन कृत्वा अवदाता उज्ज्वलाः । क्रमुकत्वचा भस्मीभूतेन वा क्रमुकेण कृतमार्जना दन्ता अत्युज्ज्वला भवन्तीति चतुर्णामेव मार्जनं क्रियते तेषामेव दर्शनविषयत्वात् । ततश्चात्युज्ज्वलत्वान्मुक्तासाम्यं युज्यते । अथ च राजन् अन्तः स्वरूपं येषां ते राजदन्ताः । एवंभूता ब्राह्मणानां पङ्क्तौ श्रोत्रियविभ्रमं पङ्क्तिपावनत्वं बिभ्रति । उद्वेगस्योद्वेजनस्य चित्तवैक्लव्यस्य रागस्याभिलाषस्य आदिशब्देन द्वेषादेश्च यन्मार्जनं त्यागः, तेन निष्कल्मषाश्च भवन्ति । 'उत् उत्कृष्टो वेगो येषां रागादीनाम् इति वा । एवंविधा ब्राह्मणा मुक्ता भवन्तीति युक्तमेवेत्यर्थः । 'घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु । फलमुद्वेगम्' इत्यमरः । दन्तानां राजानो राजदन्ताः । राजदन्तादित्वात्परनिपातः॥ ४६ ॥

श्लोकचतुष्टयेन वाणीं वर्णयति—

शिरीषकोषादपि कोमलाया
वेधा विधायाङ्गमशेषमस्याः ।
प्राप्तप्रकर्षः सुकुमारसर्गे
समापयद्वाचि मृदुत्वमुद्राम् ॥ ४७ ॥

शिरीषेति ॥ वेधाः शिरीषस्य कोशात्कुसुमादपि कोमलाया अस्या भैम्या अशेषं सकलमङ्गं सुकुमारतरं विधाय निर्माय सुकुमारसर्गे मृदुतरवस्तुसृष्टौ प्राप्तप्रकर्षः सन् वाचि अस्या एव वाण्यां मृदुत्वमुद्रां सौकुमार्यमुद्रां समापयत् । ब्रह्मा सुकुमारतराण्येतदङ्गानि कृत्वा सौकुमार्यमर्यादां भैमीवाण्यामेव समाप्तिं नीतवान् । अतिमधुरस्वरेयमिति भावः । अन्योऽपि क्वापि शिल्पे स्वोत्कर्षं समाप्तिं नयति ॥ ४७ ॥

प्रसूनबाणाद्वयवादिनी सा
काचिद्द्विजेनोपनिषत्पिकेन ।
अस्याः किमास्यद्विजराजतो वा
नाधीयते भैक्षभुजा तरुभ्यः ॥ ४८ ॥

प्रसूनेति ॥ तरुभ्य आम्रादिवृक्षेभ्यो भैक्षभुजा फलपुष्पादिरूपभिक्षासमूहभोजिना पिकेन कोकिलेन द्विजेन पक्षिणा प्रसूनबाणः कामः, तस्य अद्वैतवादिनी सा भैमीवाग्रूपा काचिदपूर्वा उपनिषत् रहस्यग्रन्थः,अस्या भैम्या आस्यद्विजराजतो मुखचन्द्रात् नाधीयते न पठ्यते किम्,अपि तु पठ्यत एव । कषायरसाम्रादिमञ्जरीभक्षणेन

---

१ मूर्छायास्तमीत्वेनोक्तेरेकं, सेयं सन्ध्येति द्वितीयं च रूपकम् । महेन्द्रेत्यादिकयोर्विशेषणयोस्तत्पदार्थेन सन्ध्यापदार्थेन च सममनुगतत्वे श्लेषः शाब्दः, रागद्विजपदयोः परिवृत्तिसहत्वाभावात् ।

१ अवैमीत्युत्प्रेक्षा,राजदन्ता मुक्ता इति रूपकम्,दन्तानां श्रोत्रियविभ्रमभरणत्वासम्भवेऽपि तथोक्तेरतिशयोक्तिः । राजदन्ता इत्यादौ श्लेषश्च राजौ राजेत्यादावनुप्रासः । २ अत्रानुप्रासः । समापयदित्यसम्भवेऽपि तथोक्तेरतिशयोक्तिः, ततश्च व्यतिरेको व्यज्यते । वाचां मृदुत्वं किमिवेति प्रश्नासत्त्वेऽपि तादृशेतरत्वाभावं प्रत्याययितुं समापयदित्युक्तेः परिसङ्ख्या च । "किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्प्यते । तादृगन्यव्यपोहाय परिसङ्ख्या तु सा मता ॥" इति प्रकाशकारोक्तेः ।

पिकस्य मधुरस्वरत्वं सूचितम् । पिकः पञ्चमं स्वरं पठति स भैमीस्वर एवेदानीमपि तेनाभ्यस्यते परं तु नायातीत्यर्थः । कोकिलस्वराधिकभैमीस्वराकर्णनमात्रेण मदनाद्वैतमेव भवतीति भावः । अन्येनापि भिक्षाभुजा ब्राह्मणेनाद्वितीतपादिका 'एकमेवाद्वितीयं ब्रह्म' इत्यादिकोपनिषत् ब्राह्मणश्रेष्ठादधीयते । न विद्यते द्वयं यस्य तदद्वयं प्रसूनबाणलक्षणं यदद्वयमिति समासः । द्विजराजतः, 'आख्यातोपयोगे'इत्यपादानत्वम् । भिक्षाणां समूहः 'भिक्षादिभ्योऽण्' ॥ ४।२।३८॥ ४८॥

पद्माङ्कसद्मानमवेक्ष्य लक्ष्मी-
मेकस्य विष्णोः श्रयणात्सपत्नीम् ।
आस्येन्दुमस्या भजते जिताब्जं
सरस्वती तद्विजिगीषया किम् ॥ ४९ ॥

पद्मेति ॥ सरस्वती अस्या भैम्याः तस्याः सपत्न्या विजिगीषया जेतुमिच्छया, सपत्नीगृहादुत्तमं गृहं मम कथंकारं स्यादिति मनीषया सौन्दर्येण जिताब्जं जितपद्ममास्येन्दुं मुखचन्द्रं भजते सेवते । किं वितर्के । किं कृत्वा—एकस्य विष्णोरुभाभ्यां श्रयणादात्मनः सपत्नीं लक्ष्मीं पद्मस्याङ्कः क्रोडः स एव सद्म स्थानं यस्यास्तामवेक्ष्य । चन्द्रोदयो कमलसंकोचाच्चन्द्रोऽपि जिताब्जो भवति । यद्वा जितोऽब्जश्चन्द्रो येन चन्द्रेण कमलं जितं सोऽप्यनेन जित इति तदाश्रयणाल्लक्ष्मीर्वाण्याऽतितरां जितेत्यर्थः । वक्रोक्त्यादिचातुर्यमस्यामेवास्ति नान्यस्यामिति भावः । अन्यापि सपत्नीगृहाद्युत्तमं विलोक्येर्ष्यया स्वगृहादि तस्मादप्युत्तमं करोति । 'अब्जो जैवातृकः सोमः' इत्यमरः ॥ ४९ ॥

कण्ठे वसन्ती चतुरा यदस्याः
सरस्वती वादयते विपञ्चीम् ।
तदेव वाग्भूय मुखे मृगाक्ष्याः
श्रोतुः श्रुतौ याति सुधारसत्वम् ॥ ५० ॥

कण्ठे इति ॥ अस्याः कण्ठे वसन्ती वीणावादने चतुरा सरस्वती यत् विपञ्चीं वीणां वादयते तदेव वीणावादनमेव मृगाक्ष्या मुखे वाग्भूय वाणीत्वेन परिणम्य श्रोतुः श्रुतौ कर्णे सुधारसत्वं याति । वीणावन्मधुरस्वरेयमिति भावः । वाग्भूयेत्यत्र च्व्यन्तत्वाद्गतिसञ्ज्ञायां समासः ॥ ५० ॥

विलोकिताऽस्या मुखमुन्नमय्य
किं वेधसेयं सुषमासमाप्तौ ।
धृत्युद्भवा यच्चिबुके चकास्ति
निम्ने मनागङ्गुलियन्त्रणेव ॥ ५१ ॥

चिबुकं वर्णयति—

विलोकितेति ॥ विधिना इयं भैमी सुषमासमाप्तौ मुखनिर्माणशोभासमाप्तौ सत्यां मुखमुन्नमय्य कियदूर्ध्वीकृत्य विलोकितमास्यं यस्या एवम्भूता किम् । अलंकरणसमाप्तौ शृङ्गारकारिणी मुखमुन्नमय्यालंकारशोभां विलोकयति, विधिनापि तथैव कृतमिति वितर्कः, अस्या मुखमुन्नमय्येति वा योजना । कथं ज्ञातमित्यत आह—यद्यस्मात् मनाक् ईषन्निम्ने गम्भीरे चिबुके हन्वग्रसंधौ धृत्युद्भवाङ्गुलिधारणजन्याङ्गुल्या कृत्वा या यन्त्रणा नियमना सैव चकास्ति शोभते । अतिमार्दवादङ्गुलिधारणादपि हन्वग्रसंधौ निम्नत्वं जातमित्यर्थः,उत्तमस्त्रीणां स्वभावादेव चिबुकं निम्नं भवतीति ॥ ५१ ॥

पुनरपि श्लोकनवकेन सावयवं मुखं वर्णयति—

प्रियामुखीभूय सुखी सुधांशु-
र्जयत्ययं राहुभयव्ययेन ।
इमां दधाराधरबिम्बलीलां
तस्यैव बालं करचक्रवालम् ॥ ५२ ॥

प्रियेति ॥ अयं सुधांशुश्चन्द्रः प्रियामुखीभूय भैमीमुखत्वं प्राप्य मुखाकारेण परिणम्य राहुभयस्य व्ययेनाभावेन सुखी निश्चिन्तः सन् जयति सर्वोत्कर्षेण वर्तते । मुखचन्द्रस्य राहुबाधा नास्तीति सुखित्वम् । यतश्चायं चन्द्र एव, तस्मात्तस्यैव चन्द्रस्य बालं उदयसमयभावि करचक्रवालं किरणमण्डलम् इमां प्रत्यक्षाधरबिम्बलीलामधरोष्ठबिम्बविलासं दधार । चन्द्रतुल्यं मुखम्, उदितमात्ररक्तचन्द्रकिरणतुल्योऽधरोष्ठश्चेति भावः । अन्योऽपि

---

१ अत्र पिकेन द्विजेनेति श्लिष्टं रूपकम्, सोपनिषदितीतरत्, आस्यद्विजराजेति तृतीयं च । किमिवेत्युत्प्रेक्षा, समासोक्तिस्तु न रूपकेण तदुच्छेदात् । २ आस्येन्दुमिति रूपकम्, किंमित्युत्प्रेक्षा ।

१ यद्वादयते तदेवेत्यसम्भाव्यपि सम्भावितयोक्तमित्यतिशयोक्तिः । वाग्भूयेति वास्तविकभेदापह्नवनादपह्नुतिः । मृगाक्ष्या इति लुप्तोपमा । २ उत्प्रेक्षाऽत्र तावत्स्पष्टा । निम्नीकृतक्रियायाः स्वाभाविकतया वचनात् स्वभावोक्तिः । सम्भावनाया प्रमितीकरणादनुमानम् ।

वैरिणः सकाशाद्भीतस्तदीयः परिजनोऽपि भीतः सन् तदनवबोधार्थमन्यमाकारं कृत्वा धारयन्सुखी भवति । बालक्ष्म लीलां धारयतीति ॥ ५२ ॥

अस्या मुखस्यास्तु न पूर्णमाऽऽस्यं
पूर्णस्य जित्वा महिमा हिमांशुम् ।
भ्रूलक्ष्म खण्डं दधदर्धमिन्दु-
र्भालस्तृतीयः खलु यस्य भागः ॥५३॥

अस्या इति ॥ पूर्णस्य सर्वावयवपरिपूर्णस्य, अथ च वर्तुलस्य अस्या मुखस्य महिमा श्रेष्ठत्वं कीर्तिः, अथ च चन्द्रापेक्षयाऽधिकपरिमाणत्वं नास्तु अपि त्वास्त्वित्यर्थः । किम्भूतस्य—पूर्णमा आस्यं प्रारम्भो यस्य, यदुदये पूर्णिमाऽस्ति, पूर्णमाया आस्यमिवः वा तथाभूतं हिमांशुं पूर्णचन्द्रं जित्वा स्थितस्य । कुतोऽधिकत्वमत आह— खलु यस्मात् यस्य मुखस्य तृतीयो भागोंऽशो भालो ललाटमर्धखण्डम् इन्दुः समशकलरूपश्चन्द्रः । किम्भूत इन्दुः—भ्रुवावेव लक्ष्म कलङ्कं दधत् धारयन् । मुखस्य तृतीयो भागो भाले यस्य चन्द्रार्धम्, एकेनांशेन मुखम् । भालेऽर्धचन्द्रतुल्यः, तदधोभागः पूर्णचन्द्रतुल्य इत्यर्थः । चन्द्राधिकमुखी चन्द्रार्धतुल्यभाला चेयमिति भावः । जित्वेत्यनन्तरं स्थितस्येत्यध्याहार्यम् । अन्यथा भिन्नकर्तृकत्वादनुपपत्तिः 'अथ च पूर्णमासी तु पूर्णिमा। पूर्णमा पौर्णमासी च' इति केशवः ॥ ५३ ॥

व्यधत्त धाता वदनाब्जमस्याः
सम्राजमम्भोजकुलेऽखिलेऽपि ।
सरोजराजौ सृजतोऽदसीयां
नेत्राभिधेयावत एव सेवाम् ॥ ५४ ॥

व्यधत्तेति ॥ धाता अखिलेऽपि अम्भोजकुलेऽस्या मुखपद्मं सम्राजं द्वादशराजमण्डलाधीशं व्यधत्त अकृत । अथ च तदपेक्षया सम्यगतिशयितं राजत इति सम्राजम् । अत एव नेत्राभिधेयौ नेत्रसंज्ञकौ सरोजराजौ अन्यकमलापेक्षया भैमीनयनीभूते कमले श्रेष्ठे तद्रूपौ सरोजराजौ अदसीयाममुष्यैतन्मुखकमलस्य संबन्धिनीं सेवां सृजतः कुरुतः । अस्य यदि सम्राट्त्वं न स्यात्तर्हि किमिति नेत्राभिधेयाभ्यां सरोजराजाभ्यां सेवा क्रियेत क्रियते तावत्, अतोऽन्यथानुपपत्तिप्रमाणगम्यमस्य सम्राट्त्वमित्यर्थः । भैमीमुखनेत्रं विजिताब्जमिति भावः । अन्योऽपि सम्राड् राजभिः सेव्यते । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः ॥ ५४ ॥

दिवारजन्यो रविसोमभीते
चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम् ।
आस्ये यदाऽस्या न तदा तयोः श्री-
रेकश्रियेदं तु कदा न कान्तम् ॥ ५५ ॥

दिवेति ॥ दिवारजन्यौ क्रमेण दिनरात्र्यौ रविसोमाभ्यां सकाशाद्भीते भयं प्राप्ते चन्द्राम्बुजे स्वलक्ष्मीं स्वशोभाम् अस्या भैम्या आस्ये मुखे यदा निक्षिपतः स्थापयतः, तदा तयोश्चन्द्रपद्मयोः श्रीर्न ? सूर्याद्भीतेन चन्द्रेण दिने चन्द्राद्भीतेन कमलेन रात्रौ यदा स्वस्वशोभा भैमीमुखे निक्षिप्ता तदा तद्द्वयमपि निःशोभं जातम् । अथ च निक्षिपतो न्यासीकुरुतः, तदा चन्द्राम्बुजयोः श्रीः शोभा नास्ति । इदं तु भैमीमुखं पुनरेकस्य चन्द्रस्य अम्बुजस्य वा श्रिया शोभया कृत्वा कदा कस्मिन्समये दिने रात्रौ वा न कान्तम्, अपि तु दिने रात्रौ च । चन्द्रशोभया कमलशोभया च सशोभम् । चन्द्रस्य शोभा रात्रावेव, न दिने । कमलस्य सा दिन एव, न रात्रौ । भैमीमुखं दिवा रात्रौ च सशोभमित्यर्थः । भैमीमुखं चन्द्रस्य लक्ष्मीरूपं निक्षेपं रात्रौ तस्मै प्रयच्छति दिने भीतत्वात्तस्य । एवं कमलस्य लक्ष्मीरूपं निक्षेपं दिने प्रयच्छति रात्रौ भीतत्वात् । धनादिनिक्षेपोऽपि धनिना यदा याच्यते तदैव दातव्यो भवति न स्थापनीयश्च भवति । यावच्चास्ति तावत्तेनैव स्वस्यालंकारः क्रियते । दिवा चन्द्रदीप्त्या रात्रौ कमलदीप्त्या चात्मानमलंकरोतीत्यर्थः ॥ ५५ ॥

---

१ मुखीभूयेति रूपकेण मुखमिव सुधांशुर्नासीदिति व्यतिरेको व्यज्यते । बाललीलाऽभेदारोपादपि रूपकम् । बालमिति यमकं च । २ महिमा 'हिमांशुं जित्वेत्यतिशयोक्तिः । इन्दुर्भाल इति रूपकं । खल्वित्युत्प्रेक्षा ।

१ अब्जान्तरस्य साम्यपात्रत्वनिराकरणाद्व्यतिरेकव्यक्तिः, नेत्राभिधेयौ सरोजराजाविति वदनाब्जमिति च रूपकम्, अत एवेति काव्यलिङ्गं च । २ मुखस्य चन्द्राम्बुजोभयोपमानापेक्षयाऽतिशयप्रत्यायनाद् व्यतिरेकध्वनिः, रवेश्चन्द्रस्य भीतत्वं, सोमादम्बुजस्य भीतत्वमिति क्रममादायैव दिवारजन्योरित्युक्तम्, अतस्तथोक्तौ यथासङ्ख्यम्, भीतान्तरस्य कुत्रचिदुत्कृष्टे स्वलक्ष्मीनिक्षेपव्यवहारः,तत्प्रतीतेश्च समासोक्तिः, कदा नेत्युत्प्रेक्षा चेति ।

अस्या मुखश्रीप्रतिविम्बमेव
जलाच्च तातान्मुकुराच्च मित्रात् ।
अभ्यर्थ्य धत्तः खलु पद्मचन्द्रौ
विभूषणं याचितकं कदाचित् ॥ ५६ ॥

अस्या इति ॥ खलूत्प्रेक्षते । पद्मश्चन्द्रश्चोभौ तातात् पितुर्जलान्मित्रान्मुकुरादादर्शाच्चाभ्यर्थ्य, अर्थात्प्रतिविम्बमेव याचित्वा अस्या भैम्या मुखश्रीप्रतिविम्बमेव सशोभमुखप्रतिविम्बलक्षणमेव याचितकं याच्ञया प्राप्तं विभूषणं कदाचित् दिने रात्रौ च धत्तः धारयतः । जलोत्पन्नत्वात्पद्मस्य पिता जलम् । वृत्तत्वोज्ज्वलत्वादिगुणयुक्तत्वाद्दर्पणस्य चन्द्रसखत्वम् । पितृमित्राभ्यां याचितं दीयते याचितकालंकारः कदाचिद्ध्रियते, न सर्वदा । उदके यदा प्रतिबिम्बितं भैमीमुखं तदेव पितरं जलं याचित्वा दिने कमलं शोभते । दर्पणे यदा प्रतिविम्बितं भैमीमुखं तदेव दर्पणं मित्रं याचित्वा रात्रौ चन्द्रः शोभते नान्यथैतयोः शोभेत्यर्थः । भैमीमुखप्रतिविम्बेनापि सदृशौ यदि पद्मचन्द्रौ न भवतः, तदा भैमीमुखसदृशौ कुतस्तरां भवेताम्, अपि तु न कुतोऽपीति भावः । चौ परस्परसमुच्चये । याचितकं याचितेन प्राप्तमित्यर्थे 'अपमित्ययाचिताभ्यां कक्कनौ ४।४।२१' इति कन् ॥ ५६ ॥

अर्काय पत्ये खलु तिष्ठमाना
भृङ्गैर्मितामक्षिभिरम्बुकेलौ ।
भैमीमुखस्य श्रियमम्बुजिन्यो
याचन्ति विस्तारितपद्महस्ताः ॥ ५७ ॥

अर्कायेति ॥ अर्काय सूर्याय पत्ये प्रियाय तिष्ठमानाः स्वप्रकाशनेन सूर्यं स्वीयं भावं ज्ञापयितुकामा अम्बुजिन्यः अम्बुकेलौ जलक्रीडासमये भृङ्गरूपैरक्षिभिर्नेत्रैः कृत्वा मितां ज्ञातां भैम्या एव मुखस्य श्रियं विस्तारिताः पद्मरूपा हस्ता याभिस्ता एवंभूताः सत्यो भैमीं याचन्ते । खलूत्प्रेक्षते । अस्मत्पतिः सूर्योऽधुना समागमिष्यतीति त्वन्मुखशोभयापि रुचिरा भवाम इति भैमीमुखशोभां भैमीं याचन्त इत्यर्थः । कमलभैमीमुखयोः सर्वथा साम्यं नास्तीति भावः । अन्योऽपि स्वामिनि हस्तं प्रसार्य दृक्संज्ञया याचते । अन्याप्यन्यदीयमलंकारं स्वालंकारणार्थं हस्तौ प्रसार्य याचते । क्रीडासमये याचितमवश्यं प्रभुणा दीयते । अर्काय 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः १।४।३४' इति सम्प्रदानत्वम् । तिष्ठमानाः 'प्रकाशनस्थेयाख्ययोश्च १।३।२३' इत्यात्मनेपदम् । स्वीयं भावं ज्ञापयितुमिति हेतौ वा शानच् । याचिर्द्विकर्मा ॥ ५७ ॥

अस्या मुखेनैव विजित्य नित्य-
स्पर्धी मिलत्कुङ्कुमरोषभासा ।
प्रसह्य चन्द्रः खलु नह्यमानः
स्यादेव तिष्ठत्परिवेषपाशः ॥ ५८ ॥

अस्या इति ॥ अस्या मुखेनैव नित्यस्पर्धी सदा स्पर्धमानश्चन्द्रो विजित्य पराभूय खलु निश्चितं प्रसह्य हठात् नह्यमानो वध्यमान एवाधुनापि तिष्ठन् परिवेष एव पाशो बन्धनरज्जुर्यस्यैवंविधः स्याद्भवेत् । नान्यथैतद्घटत इत्यर्थः । किंभूतेन मुखेन—उद्वर्तनार्थं मिलत्संलग्नं कुङ्कुमं तदेव रोषभाः क्रोधलौहित्यं यस्मिन्, मिलन्ती कुङ्कुमरूपा रोषभा यस्मिन्निति वा । भैमीमुखस्पर्धया सापराधश्चन्द्रो मुखेनैव जित्वा परिवेषमिषेण बद्ध इत्यर्थः । चन्द्रोऽपि भैमीमुखसमानो न भवतीति भावः । अन्योऽपि स्पर्धमानं रोषारुणः सन् हठाद्विजित्य निबध्नाति । सोऽपि बद्ध एव तिष्ठतीति । खलूत्प्रेक्षायां वा । नह्यमान इव इति ॥ ५८ ॥

विधोर्विधिर्बिम्बशतानि लोपं
लोपं कुहूरात्रिषु मासि मासि ।
अभङ्गुरश्रीकमसुं किमस्या
मुखेन्दुमस्थापयदेकशेषम् ॥ ५९ ॥

विधोरिति ॥ विधिः मासि मासि प्रतिमासं कुहूरात्रिषु नष्टेन्दुकलामावास्यारात्रिषु विधोश्चन्द्रस्य बिम्बशतानि बहूनि मण्डलानि लोपं लोपं विलुप्य विलुप्य अभङ्गुरश्रीकमविनश्वरशोभमिमं प्रत्यक्षदृश्यमस्या मुखेन्दुं मुख-

१ खल्वित्युत्प्रेक्षा, पद्मचन्द्रयोर्जलादेरभ्यर्थनादेर्योगासम्भवेऽपि योगोक्तेरतिशयोक्तिः, प्रतिविम्बमेव विभूषणमिति रूपकम्, कदाचिदिति तथा, तद्धारणयोग्यताऽपि न शाश्वतीति तदुपमानताया अत्यन्तं तिरस्कृतत्वात् प्रतीपम्, पद्मचन्द्रयोर्जले दर्पणे वा न काऽपि कान्तिः शोभायै, किं तु तन्मुखस्यैवेत्यतिशयोक्तिर्व्यङ्ग्या, तातादिति मित्रादिति परिकरः, जलात् पद्मस्य मुकुराच्चन्द्रस्य क्रमेण अभ्यर्थनोक्तेर्यथासङ्ख्यम् । मुखं सर्वदा पद्मचन्द्रापेक्षयाऽतिशयितमिति व्यतिरेकश्च।

१ खल्वित्युत्प्रेक्षा, भृङ्गैरक्षिभिरिति रूपकं चेति सर्वम्, किंत्वम्बुजिनीनां पद्महस्तत्वोक्तिरयुक्तेति हस्तनाला इति सुवचम् ।

चन्द्रम् एकशेषं एकश्चासौ शेषश्च तथाभूतमस्थापयत्स्थापितवान् किम् । अमावस्यायां सर्वथा चन्द्रादर्शनादियमुत्प्रेक्षा । क्षयित्वाच्चन्द्रबिम्बानां स्थानेऽविनश्वरशोभत्वात्तत्कार्यकारित्वाच्चास्या मुखलक्षणमिन्दुं स्थापितवानित्यर्थः।क्षयित्वादपि चन्द्रो मुखतुल्यो न भवतीति भावः। अन्योऽपि कारुः स्वयमेवं कृतं वस्तु अनुत्तमं ज्ञात्वा विनाश्य सुन्दरत्वं स्थापयति । अथ च सूत्रेणापि सरूपाणां मध्ये कानिचित्सरूपाणि विलुप्यैकशेषः क्रियते। यश्चैकः शिष्यते स तत्कार्यकारी भवति । लोपंलोपम् 'आभीक्ष्ण्ये णमुल्च ३।४।२२' इति णमुल् ॥ ५९ ॥

कपोलपत्रान्मकरात्सकेतु-
र्भ्रूभ्यां जिगीषुर्धनुषा जगन्ति ।
इहावलम्ब्यास्ति रतिं मनोभू
रज्यद्वयस्यो मधुनाऽऽधरेण ॥ ६० ॥

कपोलेति ॥ मनोभूः कामो रतिं प्रीतिम्, अथ च स्वप्रियामवलम्ब्याङ्गीकृत्य तया सह इह भैमीमुखेऽस्ति । किंभूतः—कपोललिखितापत्रावलीरूपान्मकरात् सकेतुः सचिह्नः । तथा—भ्रूभ्यामेव धनुषा जगन्ति जिगीषुः । तथा—अधरेणौष्ठलक्षणेन मधुना वसन्तेन कृत्वा रज्यन् सानुरागो वयस्यो वसन्तलक्षणं मित्रं यस्य । आधरेण अधरसंबधिना मधुना रसेन कृत्वा रज्यन् शोणो वयस्यो मदनवृद्धिकरत्वादधर एव यस्य भैमीमुखे सकलकामचिह्नदर्शनादत्र मदनो वसतीत्यनुमीयत इत्यर्थः । भैमीमुखावलोकनात्सवलस्य कामस्योत्पत्तिर्भवतीति भावः । रज्यदिति 'कुपिरजोः प्राचां श्यन् परस्मैपदं च १।३।९०' इति श्यन्परस्मैपदे ॥ ६० ॥

श्लोकपञ्चकेन कर्णौ वर्णयति—

वियोगवाष्पाञ्चितनेत्रपद्म-
च्छद्मार्पितोत्सर्गपयःप्रसूनौ ।

१ अत्रानुप्रासो यमकं चेति शब्दलङ्कारद्वयं तावत्स्फुटमेव, अथ कमित्युत्प्रेक्षा, मुखेन्दुमिति रूपकम् चन्द्रान्तरापेक्षयाऽतिशयप्रत्यायनाद् व्यतिरेकध्वनिश्च । स्थूणानिखननन्यायप्रतीतेः समासोक्तिः, मुखेन्दोरभंगुरश्रीकत्वासम्भवेऽपि तथोक्तेरतिशयोक्तिश्चार्थालङ्कारः । २ अत्र पत्ररूपस्य मकरस्य मकरान्तरस्य चाभेदोक्तेरतिशयोक्तिः भ्रूभ्यां धनुषेति अधरेण मधुनेति च रूपकम्, ससन्देहं निवासोक्तौ सकेतुत्वादिसाधकमित्यनुमानम् ।

कर्णौ किमस्या रतितत्पतिभ्यां
निवेद्यपूपौ विधिशिल्पमीदृक् ॥ ६१ ॥

वियोगेति ॥ अस्याः कर्णौ रतिश्च तत्पतिः कामश्च ताभ्यां निवेद्यस्योपहारस्य सम्बन्धिनौ पूपौ मण्डकौ ईदृक् किं विधिशिल्पं ब्रह्मनिर्माणम् इति संभावना । एतदर्थम् ब्रह्मणा किमेतौ निर्मितावित्यर्थः । किंभूतौ—वियोगजनिता ये बाष्पा अश्रूणि तैरञ्चितस्य पूजितस्य नेत्रपद्मस्य छद्मना व्याजेनार्पिते वितीर्णे उत्सर्गाय दानार्थं पयःप्रसूने जलपुष्पे ययोस्तौ।अश्रु दानजलम्,नेत्रे च दानपुष्पे ययोः समीपे तिष्ठतः । नैवेद्यसमीपे जलपुष्पे भवतः । आकर्णनेत्रत्वादित्यर्थः । कर्णदर्शनादपि मदनोत्पत्तिरिति भावः ।'पूपोऽपूपः पिष्टकः स्यात्' इत्यमरः । निवेद्यम्, अर्हार्थे ण्यत् ॥ ६१ ॥

इहाविशद्येन पथाऽतिवक्रः
शास्त्रौघनिष्यन्दसुधाप्रवाहः ।
सोऽस्याः श्रवःपत्रयुगे प्रणाली-
रेखेव धावत्यभिकर्णकूपम् ॥ ६२ ॥

इहेति ॥ अतिवक्रो वैषम्यादतिकुटिलो व्यङ्ग्यगूढार्थयुक्तो दुर्बोधोऽनृजुश्च शास्त्रौघस्य शास्त्रसमूहस्य निष्यन्दः सारभाग एव सुधाप्रवाहो येन पथा इह अस्याः कण्ठकूपेऽविशत्स पन्था अस्या भैम्याः श्रवःपत्रयुगे कर्णताटङ्कद्वये प्रणालिकाया रेखेवाभिकर्णकूपं कर्णरन्ध्रं लक्षीकृत्य कर्णकूपसंमुखं वा धावति । यादृशी प्रणालिका तादृश एव प्रवाहो भवति । अत्र च ताटङ्कप्रणालिके कुण्डलाकारत्वाद्वक्रे, अतस्तत्र गच्छन्प्रवाहोऽपि वक्रो युक्तः । यद्वा वक्रगामिनो हि प्रवाहस्य प्रणालीरूपो मार्गो वक्र एव भवति, कूपं चानुधावति । अतो वक्रकर्णरेखारूपया प्रणाल्या कृत्वा वक्रः शास्त्रसुधाप्रवाहः कर्णयुगे भैम्यां वा प्रविष्ट इत्यर्थः ।वक्रोक्तिः सुधारूपा भवति, सकलकलाप्रवणेयामिति भावः । निष्यन्दते इति निष्यन्दः । पक्षे पचाद्यच् । 'अनुविपर्यभिनिभ्यः स्यन्दतेः—' इति षत्वम् । अभिकर्णकूपमिति 'लक्षणेनाभिप्रती आभिमुख्ये २।१।१४' इति समासः ॥ ६२ ॥

१ पद्मच्छद्मेत्यपह्नुतिः, किमित्युत्प्रेक्षाः निवेद्यपूपौ कर्णाविति रूपकं च । २ निष्यन्द एव सुधाप्रवाह इति रूपकमेकं,कर्णकूपमिति द्वितीयं रूपकं च,रेखेवेत्युपमा च।

अस्या यदष्टादश संविभज्य
विद्याः श्रुती दध्रतुरर्धमर्धम् ।
कर्णान्तरुत्कीर्णगभीररेखः
किं तस्य सङ्ख्यैव नवा नवाङ्कः॥६३॥

अस्या इति ॥ अस्याः श्रुती कर्णौ अष्टादश विद्याः संविभज्य द्विधाकृत्य यदर्धमर्धं प्रत्येकं धारयामासतुस्तस्यार्धस्य कर्णान्तः कर्णमध्ये उत्कीर्णा उद्धृता गभीरा निम्ना रेखा यस्य एवंभूतो नवसंख्याद्योतकोऽङ्को नवा अपूर्वाश्चर्यरूपा सङ्ख्या किं न, अपि तु भवत्येव । नवसंख्याका विद्या एका श्रुतिर्धारयति, अपरापि नवसंख्याका इति द्योतनार्थं ब्रह्मणैव कर्णमध्ये रेखारूपोऽष्टादशार्धगणनानुरूपो नवाङ्को निर्मित इत्यर्थः । तस्यैवार्धसंख्या नवा किं नवाङ्क इत्यर्थ इति वा । नवेति निषेधार्थः । अस्याः कर्णरेखा विवाङ्कतुल्या सलक्षणेति भावः ॥ ६३ ॥

मन्येऽमुना कर्णलतामयेन
पाशद्वयेन च्छिदुरेतरेण ।
एकाकिपाशं वरुणं विजिग्ये-
ऽनङ्गीकृतायासततो रतीशः ॥ ६४ ॥

मन्य इति ॥ रतीशः कामोऽमुना एतदीयेन कर्णलतामयेन छिदुरेतरेण दृढतरेण पाशद्वयेन पाशरूपशस्त्रद्वयेन कृत्वा एक एव एकाकी पाशो यस्यैवंविधं वरुणं सुखेन विजिग्ये जितवानितिन्मन्ये । किंभूतः-न अङ्गीकृता आयासततिः श्रमसाहित्यं येन । पाशद्वयेनैकस्य पाशस्य जयः सुकर इत्यायासराहित्यम् । कर्णयुगं दृष्ट्वा वरुणादयः सर्वेऽपि कामपरवशा भवन्तीति भावः । 'पाशो बन्धनशस्त्रयोः' इत्यमरः । 'विजिग्ये विपराभ्यां जेः १।३।१९' इति तङ् ॥ ६४ ॥

आत्मैव तातस्य चतुर्भुजस्य
जातश्चतुर्दोरुचितः स्मरोऽपि ।
तच्चापयोः कर्णलते भ्रुवोर्ज्ये
वंशत्वगंशौ चिपिटे किमस्याः ॥ ६५ ॥

आत्मेति ॥ स्मरोऽपि तस्माच्चतुर्दोः—चत्वारो दोषो बाहवो यस्य एतादृश उचितो युक्तः । यतः—चतुर्भुजस्य कृष्णस्य तातस्य पितुरात्मैव स्वरूपमेव । 'आत्मा वै पुत्रनामासि' इति श्रुतेः पितुः सदृशः पुत्रो युक्त एव । तस्य चतुर्भुजत्वे अस्या भ्रुवोस्तच्चापयोर्भ्रूरूपयोर्द्वयोः स्मरधनुषोः चिपिटे विस्तृते कर्णलते एव वंशत्वगंशौ वेणुत्वग्भागौ ज्ये किम् । भैम्या भ्रुवौ कामधनुषी कर्णौ मौर्व्यौ । द्वयोर्धनुषोर्मौर्वीद्वयं युक्तम् । निर्व्यापारस्य धनुषोऽवतारिता मौर्वी कोणे तिष्ठति कर्णलते अपि भ्रूधनुषोः कोणे वर्तेते इत्यर्थः । 'चिपिटौ' इत्यपि पाठः ॥ ६५ ॥

ग्रीवाऽद्भुतैवावटुशोभिताऽपि
प्रसाधिता माणवकेन सेयम् ।
आलिङ्ग्यतामप्यवलम्बमाना (–)
सुरूपताभागखिलोर्ध्वकाया ॥ ६६ ॥

ग्रीवां वर्णयति—

ग्रीवेति ॥ सेयं ग्रीवा अद्भुतैव आश्चर्यभूतैव । अर्थाद्भैम्याः । अद्भुतत्वमेव विशेषणैराह—किंभूता—अवटुवा कृकाटिकाग्रीवापुरोभागेनालंकृता । अपिः समुच्चये । माणवकेनार्धहाराख्येन हारविशेषेण वा प्रसाधिताऽलंकृता । तथा—आलिङ्ग्यतामपि आलिङ्गनयोग्यमतिसौन्दर्यमवलम्बमाना आश्रयन्ती । अत एव सुरूपतां शोभनरूपत्वं भजत्याश्रयति एवंविधोऽखिल ऊर्ध्वकायः शरीरोर्ध्वदेशो यया । कण्ठसौन्दर्यात्सकलः शरीरोर्ध्वदेशः शोभते।ईदृशी ग्रीवा नान्यस्या इत्यर्थः।असुरूपताभागतिप्रियत्वात्प्राणरूपताभागखिलोर्ध्वकायो यया कृत्वेति वा । याऽवटुशोभिता न सा माणवकेन बालेन प्रसाधितेति विरोधादाश्चर्यम् । अथ च याऽऽलिङ्ग्यतां मर्दलविशेषत्वं तद्रूपत्वमवलम्बते सा सुरूपताभाजोऽखिला ऊर्ध्वका मृदङ्गविशेषा यस्या यया वा । 'हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वकः । आलिङ्ग्यश्चैव गोपुच्छाकारः' 'मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः' इत्यमरः । 'सरूपता' इति

---

१ अत्रानुप्रासः, किमित्युत्प्रेक्षा ।२ मन्ये इति उत्प्रेक्षा, कर्णौ एव लते इति, मयेन पाशद्वयेनेति च रूपकम् । अनुप्रासः शब्दालङ्कारश्च ।

१ अत्र उचित इत्यनुमानम्, किमित्युत्प्रेक्षा, तच्चापयोर्भ्रुवोरिति, ज्ये कर्णलते इति च रूपकम् । स्मरस्य तन्मुखे निवास इति तदाश्रयेण च न जिगीषाऽपेक्षेति च व्यज्यते, अत एव धनुर्ज्यायाःकोणेस्थतत्त्वोक्तिरनुयुज्यत इति वस्तुना वस्तुध्वनिःकविनिबद्धप्रौढोक्तिसिद्धश्च।

पाठो वा । अथिया कृत्वाऽद्भुतेत्येकपदे भैमीविशेषणानि । 'अवटुर्घाटा कृकाटिका । अर्धहारो माणवकः' इत्यमरः । 'भवेन्माणवको बाले हारभेदे कुपूरुषे' इत्यज-(य) पालः ॥ ६६ ॥

कवित्वगानप्रियवादसत्या-
न्यस्या विधाता व्यधिताधिकण्ठम् ।
रेखात्रयन्यासमिषादमीषां
वासाय सोऽयं विबभाज सीमाः॥६७॥

कण्ठं वर्णयति—

कवित्वेति ॥ विधाता अस्या आधिकण्ठं कण्ठे कवित्वं गानं प्रियवादः प्रियवचनं सत्यं वा एतानि चत्वारि व्यधित रचितवान् । कुतो ज्ञातमित्यत आह—सोऽयं विधाता कण्ठे रेखात्रयस्य न्यासस्य मिषाच्चतुर्णाममीषां कवित्वादीनां पृथग्वासाय स्थित्यर्थं सीमाश्चतस्रो विबभाज विभक्तवान् । रेखात्रयेण चत्वारि स्थानानि भवन्ति । कवित्वादिकलावती कम्बुकण्ठी चेयमिति भावः । 'रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते' ॥ ६७ ॥

श्लोकद्वयेन बाहू वर्णयति—

बाहू प्रियाया जयतां मृणालं
द्वन्द्वे जयो नाम न विस्मयोऽस्मिन् ।
उच्चैस्तु तच्चित्रममुष्य भग्न-
स्यालोक्यते निर्व्यथनं यदन्तः ॥६८॥

बाहू इति ॥ प्रियाया बाहू मृणालं जयताम् । अनुमतमेतत् । यतोऽस्मिन् भुजलक्षणे द्वन्द्वे जयो नाम यत् स न विस्मयः । अतिगौरवा (त्वा) दतिमृदुत्वाच्च बाहुभ्यां मृणालं जितम् । किमाश्चर्यमित्यर्थः । अथ च द्वाभ्यामेकः सुखेन पराजीयते । अथ च द्वन्द्वे युद्धे जयो भवत्यत्र नाश्चर्यम् । एकस्य युद्धे जयो भवत्येव । तत्तु तत्पुनरुच्चैरतिशयितं चित्रमाश्चर्यम् । यत् भग्नस्य जितस्यामुष्यान्तरन्तःकरणं निर्व्यथनं व्यथारहितमालोक्यते । पराजितस्यान्तःकरणं सव्यथं भवति, अस्य तु नेत्याश्चर्यम् । द्विधाकृतमृणालमध्ये छिद्राणि दृश्यन्ते । भैमीभुजौ मृणालादपि गौरतरौ च कोमलतराविति भावः । 'द्वन्द्वं कलहयुग्मयोः', 'छिद्रं निर्व्यथनम्' इति चामरः । पक्षे निर्गतं व्यथनान्निर्व्यथनम्, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति (वा.) तत्पुरुषः ॥ ६८ ॥

अजीयतावर्तशुभंयुनाभ्या
दोर्भ्यां मृणालं किमु कोमलाभ्याम् ।
निःसूत्रमास्ते घनपङ्कमृत्सु
मूर्तासु नाकीर्तिषु तन्निमग्नम् ॥ ६९ ॥

अजीयतेति ॥ आवर्तेन दक्षिणावर्तेन शुभंयुः शुभान्विता रमणीया नाभिर्यस्यास्तया भैम्या कोमलाभ्यां दोर्भ्यां भुजाभ्यां कृत्वा मृणालमजीयत पराजितम् । किमु संभावनायाम् । अत एव निःसूत्रं निर्व्यवस्थं स्फूर्तिरहितं निरुपायं सत् । अथ च तन्तुरहितं तन्मृणालं घनपङ्कमृत्सु निबिडकर्दममृत्तिकारूपासु मूर्तासु शरीरधारिणीषु अकीर्तिष्वयशःसु निमग्नं किमु नास्ते, अपि तु ताभ्यां जितत्वादेवंविधमास्ते । अयशसः श्यामरूपत्वान्मृद्रूपत्वम् । अतिकोमलं मृणालं तन्तुरहितं भवति । अन्योऽपि केनचिज्जितो निरुपायः सन्नकीर्तिषु निमज्ज्य तिष्ठति । कोमलमपि मृणालं भैमीभुजसदृशं नेति भावः। 'सूत्रं तु सूचनाग्रन्थे सूत्रं तन्तुव्यवस्थयोः' इति विश्वः । शुभंयुः, मत्वर्थे 'अहंशुभमोर्युस् ५ । २ ।१४०'॥६९॥

श्लोकत्रयेण पाणिं वर्णयति—

रज्यन्नखस्याङ्गुलिपञ्चकस्य
मिषादसौ हैङ्गुलपञ्चतूणे ।
हैमैकपुङ्खाऽस्ति विशुद्धपर्वा
प्रियाकरे पञ्चशरी स्मरस्य ॥ ७० ॥

रज्यदिति ॥ असौ प्रत्यक्षदृश्या स्मरस्य पञ्चशरी रज्यन्तः स्वयमेव रक्ता भवन्तो नखा यस्य अंगुलीनां पञ्चकस्य मिषाद्व्याजात् प्रियाया भैम्याः करे अस्ति । किंभूते—रक्तत्वात् हैङ्गुलं हिंगुलेन रक्तं पञ्चतन्मितो यस्तूण इषुधिस्तद्रूपे । किंभूता पञ्चशरी । हैमाः सुवर्णमया एके श्रेष्ठाः पुङ्खा मुखानि यस्याः

---

१ अत्राद्भुतैवेत्युपमाननिराकरणाद् व्यतिरेकः, अपिना द्योत्यो विरोधाभासश्च । २ अत्रानुप्रासः, मिषादित्यपह्नुतिः ।

१ अत्र मृणालरूपस्योपमानस्य जितत्वोक्तेः प्रतीपम्। २ अत्र किम्वित्युत्प्रेक्षा, निःसूत्रमित्यादिना सम्भावितस्यैव दृढीकरणादनुमानं च, धनपङ्कादेरकीर्त्यभेदेनोक्ते रूपकं च ।

सा । तथा—विशुद्धानि ऋजूनि पर्वाणि ग्रन्थयो यस्याः सा । मदनस्य पुष्पायुधत्वादिषुधिरपि पुष्पमयः । तच्च पुष्पं साम्याद्रक्तपद्ममेव । इषुधिश्च हिंगुलेन रज्यते । करस्येषुधित्वं, पञ्चांगुलीनां पञ्चबाणीत्वं, रक्तनखानां च सुवर्णपुंखत्वम्, उभयोरपि विशुद्धपर्ववत्त्वम् । अत्युत्तमं च सुवर्णं रक्तं भवति । भैमीकराङ्गुलीदर्शनात्कामप्रादुर्भावो भवतीति प्रतिप्राणिवर्णने पञ्चशरत्वम् । हैङ्गुलम् 'तेन रक्तं रागात् । ४ । २ । १' इत्यण् । पञ्चशरी समाहारे 'द्विगोः' ४ । १ । २१' इति ङीप् ॥ ७० ॥

अस्याः करस्पर्धनगर्धनार्द्धि-
बालत्वमापत्खलु पल्लवो यः ।
भूयोऽपि नामाधरसाम्यगर्वं
कुर्वन्कथं वाऽस्तु न स प्रवालः ॥ ७१ ॥

अस्या इति ॥ यः पल्लवोऽस्याः करस्पर्धनस्य पाणिस्पर्धाया गर्धनमभिलाषस्तेन ऋद्धिराधिक्यं यस्य, यद्वा स्पर्धने गर्धनर्द्धिरभिलाषसमृद्धिर्यस्य, भैमीपाणिभ्यां तुल्योऽहमिति चित्ते धत्ते, एवंविधः सन् बालत्वं नवीनत्वमापत्खलु । यस्मान्नवीनस्यैव तस्यारक्तत्वात्पाणिसाम्यार्हत्वम् । अथ च बालत्वमज्ञत्वं प्रापत् । स्वापेक्षयाऽधिकेन भैमीपाणिना सह स्पर्धमानत्वात् । अथ च स्वयं पदो लवः प्रलुवश्चरणावयवः पाणिना सह यदा स्पर्धते तदा स मूर्ख एव, पाणेरुत्कृष्टत्वात्तस्य चातिनिकृष्टत्वादित्यर्थः । स पल्लवो भूयः पुनरप्यधरसाम्यगर्वम् ओष्ठतुल्योऽहमिति गर्वं कुर्वन् प्रकृष्टो बालोऽतिनूतनः कथं वा नास्तु, अपितु तादृश एव भवतु । अथ च मूर्खः कथं नास्तु । यःपाणिभ्यां साम्यं न लेभे स पाण्यपेक्षयाऽतिरक्तस्याधरस्य साम्यमिच्छन् प्रवालः प्रकृष्टो मूर्खः कथं न, अपितु मूर्खतर इत्यर्थः । नामेत्युपहासे । नवपल्लवादप्यतिरक्तौ भैमीकराविति भावः । अधरवर्णनं प्रासङ्गिकम् । 'मूर्खेऽर्भकेऽपि बालः स्यात्' इत्यमरः ॥ ७१ ॥

अस्यैव सर्गाय भवत्करस्य
सरोजसृष्टिर्मम हस्तलेखः ।
इत्याह धाता हरिणेक्षणायां
किं हस्तलेखीकृतया तयाऽस्याम् ॥ ७२ ॥

अस्यैवेति ॥ धाता अस्यां हरिणेक्षणायां भैम्यां हस्ते लेखीकृतया लिखितया अथ च अभ्यस्तया तया सरोजसृष्ट्या कृत्वा इत्याह किं पूर्वोक्तं ब्रूते किम् । इति किम्—हे भैमि, अस्य भवत्करस्य त्वत्पाणेरेव सर्गाय निर्माणाय सरोजसृष्टिर्मम हस्तलेखोऽभ्यासो ऽभूदिति । हस्तयोः कमलादप्यतिरमणीयत्वं, लक्षणभूतरेखाजन्यकमलवत्त्वं च सूचितम् । अन्योऽपि पूर्वं हस्तलेखां करोति पश्चात्सुन्दरतरं वस्तु निर्मीते ॥ ७२ ॥

षड्भिः सालंकारौ कुचौ वर्णयति—

किं नर्मदाया मम सेयमस्या
दृश्याभितो बाहुलतामृणाली ।
कुचौ किमुत्तस्थतुरन्तरीपे
स्मरोष्मशुष्यत्तरबाल्यवारः ॥ ७३ ॥

किमिति ॥ अभितः पार्श्वद्वये दृश्या दर्शनयोग्या रमणीया मम नर्मदाया दर्शनमात्रेण सुखदाया अस्या भैम्याः सेयं बाहुलतारूपा मृणाली किमिति सम्भावना । नर्मदाया नद्यास्तटद्वयेऽपि मृणाली दृश्या भवति तथेयमपि नर्मदा । ततश्चैतदीया बाहुवल्ल्यपि मृणालीति संभाव्यते । अस्याः कुचौ अन्तरीपे द्वीपे किमुत्तस्थतुरुन्ममज्जतुः । किंभूतायाः—स्मरोष्मणा तारुण्यतेजसा कृत्वा शुष्यत्तरमतितरां विनश्यदवस्थं बाल्यमेव वार्जलं यस्याः । बाल्यनाशात्तारुण्योद्गमाच्च द्वीपतुल्यावत्युच्चौ कुचावस्या इति भावः । जलशोषान्नर्मदायां द्वीपयोरुन्मज्जनं युक्तम् । बाहुलता इति पृथग्वा । 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः । अन्तरीपे 'द्व्यन्तरुपसर्गेभ्योऽप ईत् ६ । ३ । ९७' 'ऋक्पूरब्धूःपथामानक्षे ५ । ४ । ७४' इति समासान्तोऽच् ॥ ७३ ॥

तालं प्रभु स्यादनुकर्तुमेता-
वुत्थानसुस्थौ पतितं न तावत् ।
परं च नाश्रित्य तरुं महान्तं
कुचौ कृशाङ्ग्याः स्वत एव तुङ्गौ ॥ ७४ ॥

तालमिति ॥ तालफलं द्विविधम्, पतितमपतितं च । तालं कर्तृ एतौ कृशाङ्ग्या भैम्याः कुचौ अनुकर्तुं प्रभु समर्थं स्यात् । यतः—पतितं भैम्याः कुचावनु-

१ मिषादित्यपह्नुतिः, तूणे कर इति रूपकम्, विशुद्धेत्यादौ श्लेषश्च । २ खल्वित्युत्प्रेक्षा, पल्लव इति प्रवाल इति च वबयो सावर्ण्यमिति श्लेषः ।

१ हरिणेक्षणायामिति उपमा, किमित्युत्प्रेक्षा, अस्यैव सर्गाय सरोजसृष्टिरिति उपमानस्य तुच्छत्वप्रत्यापनात् प्रतीपं च । २ बाहुलतामृणालीतिरूपकम्, किमित्युत्प्रेक्षा, नर्मदाया इति श्लेषश्च ।

कर्तुं न तावत्प्रभु समर्थम् । यत उत्थानेन परस्परसं-श्लेषोद्गमनेन सुस्थौ । निरन्तरत्वेन सुन्दरावित्यर्थः । तस्य पतितत्वात्तयोरुन्नतत्वात्साम्यं न युज्यत इत्यर्थः । अन्योऽपि पातित्यदोषयुक्तोऽन्यं सुकृतिनं समीकर्तुं न शक्नोत्येवेत्यर्थः । द्वितीयस्यापतितस्याप्यसामर्थ्यमाह—परम् अतिशयेन महान्तमुच्चम्, अथ च परमन्यम् उच्चं तालवृक्षमाश्रित्य तुङ्गमपि कुचौ समीकर्तुं न समर्थम् । यतः कुचौ स्वत एव परानपेक्षमेव तुङ्गौ उच्चतरौ । स्वतस्तुङ्गस्य पराश्रयेण तुङ्गस्य च कुतः साम्यम् । तालफलादप्यतिवृत्तावुच्चतरौ च भैमीकुचाविति भावः ॥७४॥

एतत्कुचस्पर्धितया घटस्य
ख्यातस्य शास्त्रेषु निदर्शनत्वम् ।
तस्माच्च शिल्पान्मणिकादिकारी
प्रसिद्धनामाऽजनि कुम्भकारः ॥ ७५ ॥

एतादिति ॥ एतस्या भैम्याः कुचस्पर्धितया स्तनस्पर्धया ख्यातस्य प्रसिद्धस्य घटस्य न्यायशास्त्रादिषु 'यत्कृतकं तदनित्यं, यथा घटः' इति, 'यान्नित्यं न तदकृतकमपि न, यथा घटः' इत्यन्वयव्यतिरेकाभ्यां निदर्शनत्वं दृष्टान्तत्वमजनि जातम् । प्रसिद्धस्य हि दृष्टान्तत्वम् अन्योऽप्यप्रसिद्धः प्रसिद्धस्पर्धया ख्यातो भवति । मणिकादिकारी अलिंजरादिकारी च तस्माच्छिल्पात् भैमीकुचस्पर्धिघटनिर्माणादेव प्रसिद्धं नाम यस्यैवंविधः सन् कुम्भकारोऽजनि जातः । मणिकादिकारित्वात्कुम्भकारस्य कुम्भकारत्वप्रसिद्धिर्न, किंतु भैमीकुचस्पर्धया ख्यातस्य कुम्भस्य निर्माणात्कुम्भकारत्वप्रसिद्धिः । नान्यत्किंचित्कारणम् । 'वरं विरोधोऽपि समं महात्मभिः' इति भारविवचनात् । कुम्भपरिमाणावेतत्कुचाविति भावः । 'अलिंजरः स्यान्मणिकः' इत्यमरः ॥ ७५ ॥

गुच्छालयस्वच्छतमोदविन्दु-
वृन्दाभमुक्ताफलफेनिलाङ्के ।
माणिक्यहारस्य विदर्भसुभ्रू-
पयोधरे रोहति रोहितश्रीः ॥ ७६ ॥

गुच्छेति ॥ माणिक्यमयस्य हारस्य रोहितश्रीः लोहिता कान्तिः विदर्भसुभ्रूपयोधरे भैमीकुचे रोहति प्रादुर्भवति । किंभूते—गुच्छो हारविशेष आलय आश्रयो येषां तानि स्वच्छतमानि निर्मलतराणि उदविन्दुवृन्दवज्जलबिन्दुसमूहवदाभा येषां तानि मुक्ताफलानि तैः फेनिलः फेनयुक्तो (इव उज्ज्वलतरोऽ-) ङ्को मध्यो यस्य । मुक्ताहारमाणिक्यहाराभ्यां भैमीकुचौ शोभेते इति भावः । अथ च पयोधरे मेघे रोहितश्रीः ऋजुशक्रधनुःशोभा प्रादुर्भवतीत्युक्तिः । 'हारभेदा यष्टिभेदाद् गुच्छगुच्छार्धगोस्तनाः' 'इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम्', रोहितो लोहितो रक्तः' इत्यमरः । फेनिलः, मत्वर्थे 'फेनादिलच ५।२।९९' इतीलच् ॥ ७६ ॥

निःशङ्कसङ्कोचितपङ्कजोऽय-
मस्यामुदीतो मुखमिन्दुबिम्बः ।
चित्रं तथाऽपि स्तनकोकयुग्मं
न स्तोकमप्यश्नाति विप्रयोगम् ॥७७॥

निःशङ्केति॥यदेतन्मुखम् अस्यां भैम्यामयम् इन्दुबिम्ब एवोदीतः । किंभूतः—निःशङ्कं यथातथा बलात्कारेण सङ्कोचितानि निमीलितानि, अथ च जितानि कमलानि येन । इदं मुखं न, किंतु चन्द्रोयमित्यर्थः । चन्द्रेण हि कमलानि संकोच्यन्ते मुखनैकट्यात्संमिते कमले एवैते, नतु कुचावित्यर्थः । तथाप्युदितेऽपि चन्द्रे स्तनलक्षणं कोकयुग्मं चक्रवाकयुग्मं कर्तृ स्तोकमप्यल्पमपि विप्रयोगं वियोगं नाश्नाति न प्राप्नोति । मिलितमेव यत्तिष्ठति तच्चित्रमाश्चर्यम् । चक्रवाकयुग्मं चन्द्रोदये वियोगं प्राप्नोति, कुचलक्षणं नेत्याश्चर्यम् । चक्रवाककमलकलिकाकारावतिसंश्लिष्टौ चैतत्कुचाविति भावः ॥ ७७ ॥

आभ्यां कुचाभ्यामिभकुम्भयोः श्री-
रादीयतेऽसावनयोर्न ताभ्याम् ।
भयेन गोपायितमौक्तिकौ तौ
प्रव्यक्तमुक्ताभरणाविमौ यत् ॥ ७८ ॥

१ अत्र तकरानुप्रासः, न पतितमित्यत्र हेतुत्वस्थानसुस्थत्वं, न महान्तमित्यत्र स्वत एव तुङ्गाविति स्वाभाविकतुङ्गत्वमिति काव्यलिङ्गम्, एवं च तालस्य यत्तुङ्गत्वं तदाश्रयकृतं, न सहजमिति न तत्फलमपि कुचोपमं भवितुं शक्तमिति तदपेक्षयातिशयाद् व्यतिरेकः । २ अत्रोपमा व्यङ्ग्या, काव्यलिङ्गं च ।

१ अत्रानुप्रासः शब्दालङ्कारः । वृन्दाभेतिफेनिलाङ्क इति चोपमा । २ अत्रानुप्रासः, मुखमिन्दुबिम्ब इति रूपकम् । वस्तुत इन्दुरेव,नेदं मुखमिति प्रतीतोरपह्नुतिव्यङ्ग्या अथ स्तनयोः कोकरूपत्वमभिप्रेत्योक्तमित्यादि, किंतु मुखस्य चन्द्रत्वे तत्सद्भावे कोकयोः किमिवावस्थानमिति विरोधाभास इति चित्रमिति पदेन द्योत्यते ।

आभ्यामिति ॥ आभ्यां प्रत्यक्षदृश्याभ्यां कुचाभ्यामिभकुम्भयोः श्रीः शोभा, संपच्च वलादादीयते गृह्यते । इभकुम्भश्रियोऽत्र दर्शनादित्यर्थः । ताभ्यामिभकुम्भाभ्याम् अनयोः कुचयोः असौ नादीयते । कुतो ज्ञातमेतदित्यत आह—यद्यस्मात् तौ इभकुम्भौ भयेन अर्थात्स्तनसकाशादेव भीत्या गोपायितमौक्तिकौ, इमौ कुचौ तु प्रव्यक्तमुक्ताभरणौ प्रकटमुक्तालंकरणौ । मुक्ताग्रहणभियेभकुम्भाभ्यां स्वमुक्ता गोपिताः । इभकुम्भाभ्यामप्यधिकं भैमीकुचौ रमणीयाविति भावः । अन्योऽपि भीतः स्वरत्नानि गोपायति, निर्भयश्च प्रकटयति ॥ ७८ ॥

करात्रजाग्रच्छतकोटिरर्थी
ययोरिमौ तौ तुलयेत्कुचौ चेत् ।
सर्वं तदा श्रीफलमुन्मदिष्णु
जातं वटीमप्यधुना न लब्धुम् ॥ ७९ ॥

करेति ॥ कराग्रे जाग्रद्विद्यमानः शतकोटिर्वज्रो यस्य स इन्द्रः ययोः कुचयोरर्थी याचकः कुचमर्दनाभिलाषी । उन्मदिष्णुलक्षणया पक्वं सर्वं श्रीफलं बिल्वफलं कर्तृ चेद्यदि तौ इमौ कुचौ तुलयेत्समीकुर्यात् साम्याभिलाषि यदि भवेत् तदा तर्हि तद्बिल्वफलमधुना वटीमपि लक्षणया स्तनलावण्यलेशमपि लब्धुं न जातं नोत्पन्नम् । रम्भाद्यप्सरसो विहायेन्द्रोऽप्येतयोरभिलाषी ताभ्यामतिसुन्दराभ्यां कुचाभ्यां पक्वमपि बिल्वफलं तुल्यं कथं भवेदित्यर्थः । यथोत्तमस्पर्धया नीचस्तेनावज्ञातत्वात्कपर्दकमूल्यमपि न लभेत तथाऽतितुच्छे जातमित्यर्थः । बहुसंख्याकमपि द्वाभ्यां समं नाभूदिति सर्वपदेन सूचितम् । अथ च—कराग्रे जाग्रत्यः शतं कोटयो द्रव्यसंख्या यस्य सोऽपि ययोरर्थी ग्रहणाभिलाषी ताविमौ कुचौ सर्वं लक्ष्मीफलं तुलयेच्चेत् तदा उन्मदिष्णुत्वाद्वटीं वराटिकामपि लब्धुं न जातम् । न योग्यमित्यर्थः । 'वटः कपर्दे न्यग्रोधे ' इति विश्वः । ' स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि ' इत्यमरसिंहवचनादल्पो वटो वटी । उन्मदिष्णिवत्यत्र ' अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ३ । २ । १३६' इतीष्णुच् ॥ ७९ ॥

स्तनावटे चन्दनपङ्किलेऽस्या
जातस्य यावद्युवमानसानाम् ।
हारावलीरत्नमयूखधारा-
काराः स्फुरन्ति स्खलनस्य रेखाः ॥ ८० ॥

स्तनेति ॥ चन्दनेन पङ्किले आर्द्रचन्दनयुक्तेऽस्याः स्तनावटे स्तनावेवावटो गर्तस्तत्र, गम्भीरे स्तनमध्ये जातस्य निष्पन्नस्य यावद्युवमानसानां सर्वतरुणान्तःकरणानां स्खलनस्य पतनस्य हारावल्यां रत्नानि तेषां मयूखधाराः किरणपरम्परा आकारः स्वरूपं यासां ता रेखाः स्फुरन्ति प्रतिभासन्ते । किरणपरम्परेयं न भवति, किंतु पतनरेखा एवेति । एवंभूतं स्तनमध्यं दृष्ट्वा सर्वेऽपि मुह्यन्तीति, तत्र स्खलनस्योक्तत्वात्तत्रालब्धावकाशा इति भावः । पङ्किले गर्ते लोकस्य पतनं तद्रेखाश्चोत्पद्यन्ते । 'अवटः स्यात्खिले गर्ते कूपे कुहकजीविनि ' इति विश्वः । पङ्किलः पिच्छादिः । यावन्तो युवानस्तावतामिति यावद्युवं साकल्येऽव्ययीभावः ॥ ८० ॥

क्षीणेन मध्येऽपि सतोदरेण
यत्प्राप्यते नाक्रमणं वलिभ्यः ।
सर्वाङ्गशुद्धौ तदनङ्गराज्य-
विजृम्भितं भीमभुवीह चित्रम् ॥ ८१ ॥

वलीसहितमुदरं वर्णयति—

क्षीणेनेति ॥ मध्येऽवलग्नेऽपि सता विद्यमानेन क्षीणेन कृशतरेणोदरेण यत् वलिभ्यस्त्रिवलिभ्यः सकाशादाक्रमणमभिभवो न प्राप्यते तत् सर्वाङ्गशुद्धौ सर्वाङ्गाणां शुद्धिः यस्या एवम्भूतायामिहास्यां भीमभुवि भैम्यां चित्रमाश्चर्यरूपं अनङ्गराज्यस्य कामराज्यस्य विजृम्भितं विलसितम् । अद्भुततारुण्यवशात्सूक्ष्माणां वलीनामपतितत्वात्ताभिरतिकृशमुदरं नाक्रान्तमित्यर्थः । अन्येनापि क्षीणेन दुर्बलेनोभयोः सीमायां विद्यमानेनापि

---

१ अत्रेभकुम्भाविव कुचौ, न तु कुचाविवेभकुम्भावित्युमानोपमेयभावं दृढं प्रत्याय्यापि भयेनेत्यादिना उपमानस्य तुच्छत्वप्रत्यायनात् प्रतीपम् ।

१ सर्वमित्यादि लोकोक्तिमाश्रित्योक्तमिति लोकोक्तिरित्यपि केचित् । 'लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते ।' इति चन्द्रालोके तल्लक्षणमिति बोध्यम् । २ अत्र धाराकारा रेखा इत्यपह्नुतिः, स्तनावटे इति रूपकम्, युवमानसानां नवतडाक–विशेषाविशेषेण रूपेणाभिप्रेतत्वे तु स्तनावटस्य लोकोत्तरत्वमप्युक्तम्भवति ।

स्वाम्यमात्यादीनां सप्ताङ्गानां शुद्धौ सत्यामपि बलिष्ठेभ्यो भयानकायां भूमौ पराभवो न प्राप्यते, तत् सप्ताङ्गराहितस्य दुर्बलस्य विलक्षितमाश्चर्यरूपम् । बालिनां सर्वाङ्गशुद्धेर्विधमानत्वात्, स्वस्य च सर्वाङ्गराहित्यात्सीमनि वर्तमानत्वादिपराभवकारणे सत्यपि यत्पराभवो न प्राप्तस्तदाश्चर्यमित्यर्थः । तथा—भीमस्य भुवि राज्येऽनङ्गस्य राज्यं कथम् । अन्यभूमावन्यराज्यभावासंभवात् । अथ च भीमस्य महादेवस्य भुवि कामस्य राज्यमित्यप्याश्चर्यम् । परैर्ग्रहीतुमशक्यत्वादातिविषमायां भूमौ पराभवो न प्राप्यते अत्र चित्रम्, अपि तु नेति काकुर्वा ॥ ८१ ॥

मध्यं तनूकृत्य यदीदमीयं
वेधा न दध्यात्कमनीयमंशम् ।
केन स्तनौ सम्प्रति यौवनेऽस्याः
सृज्रेदनन्यप्रतिमाऽङ्गयष्टेः ॥ ८२ ॥

मध्यं वर्णयति—

मध्यमिति ॥ वेधा इदमीयमेतदीयं मध्यं तनूकृत्यातिकृशं कृत्वा मध्यसम्बाधिनं कमनीयमंशं भागं यदि न दध्यात्क्वापि न स्थापयेत् तर्हि सम्प्रति यौवने अनन्यप्रतिमाऽनन्यतुल्याङ्गयष्टिरङ्गकान्तिर्यस्या एवम्भूताया अस्याः स्तनौ केनांशेन प्रकारेण वा सृजेत् । एतदीयस्यातिसुन्दरस्य मध्यांशस्य सङ्ग्रहं कृत्वा तेनैवांशेन यौवने कुचौ कृतावित्यर्थः । मध्योऽतिकृशः स्तनौ चातिसुन्दराविति भावः ॥ ८२ ॥

गौरीव पत्या सुभगा कदाचि-
त्कर्त्रीयमप्यर्धतनूसमस्याम् ।
इतीव मध्ये विदधे विधाता
रोमावलीमेचकसूत्रमस्याः ॥ ८३ ॥

रोमावलीं वर्णयति—

गौरीति ॥ विधाता अस्या मध्ये रोमावलीलक्षणं मेचकसूत्रं नीलसूत्रम् इतीव विदधे कृतवान्किम् । इति किम्—सुभगा सौभाग्यवतीयमपि पत्या प्रियेण कृत्वा कदाचिदर्धतनूसमस्यां शरीरार्धपूरणं कर्त्री करिष्यति । केव—गौरीव । पार्वती ईश्वरेणार्धतनुसमस्यां यथा कृतवती तथेयमपि । इयं रोमावली न, किन्त्वर्धशरीरघटनार्थं नीलसूत्रं निहितम् । 'कर्त्री' इति लुट् ॥ ८३ ॥

रोमावलीरज्जुमुरोजकुम्भौ
गम्भीरमासाद्य च नाभिकूपम् ।
मद्दृष्टितृष्णा विरमेद्यदि स्या-
न्नैषां वतैपासिचयेन गुप्तिः ॥ ८४ ॥

पुनरपि सनाभिं रोमावलीं वर्णयति—

रोमावलीति ॥ मद्दृष्टितृष्णा मम दर्शनवाञ्छा रोमावलीलक्षणां रज्जुम्, रोजलक्षणौ कुम्भौ, गम्भीरं नाभिलक्षणं कूपं चासाद्य तर्हि विरमेच्छाम्येत्, यदि एषां रोमावल्यादीनां सिचयेन वस्त्रेण एषां गुप्तिर्वेष्टनं न स्यात् । बत खेदे 'एवं तु न जातम्' इति खेदः । अवेष्टितानां सुखेन द्रष्टुं शक्यत्वाद्दर्शनवाञ्छा शाम्येत् वस्त्रावृतत्वात्तु नेत्यर्थः । अथ च—अनावृतदर्शनाद्विरागः, आवृतदर्शनात्त्वनुरागवशात्पुनः पुनर्दिदृक्षैव वर्धत इत्यर्थः । रोमावल्यादेर्वस्त्रेण गोपनादौचित्यं सूचितम् । अथ च—गोरकं, कुम्भौ, गम्भीरं कूपं च प्राप्य तृष्णा, पिपासा तदा शाम्येत् । यद्येषामसिचयेन लक्षणया खड्गधारिपुरुषसमूहेन रक्षणं न स्यात् । राजैकभोग्यः कूपः खड्गपाणिभी रक्ष्यते, अतो जलहरसामग्रीसद्भावेऽपि पिपासा न शाम्यतीति । अतिगभीरः नाभिरियमिति भावः । 'तृष्णे स्पृहा पिपासे द्वे' इत्यमरः । विरमेत् 'व्याङ्परिभ्यो रमः १ । ३ । ८३' इति परस्मैपदम् ॥ ८४ ॥

---

१ मध्येऽपीत्याद्युक्तौ विरोधः प्रतीयत इवेति विरोधाभासः तथा भीमस्य भुवि राज्ये अनङ्गस्य राज्यमित्यपरो विरोधाभासः परराज्येऽपि राज्याङ्गानाममात्यादीनां वैमनस्याद्यवद्यसद्भावे स्यात् कदाचित्पराधिपत्यं, किं त्वङ्गानां शुद्धत्वे वैमल्ये ( सम्पन्नत्वे ) कथं नामेति सर्वाङ्गशुद्धाविति तस्यैव पोषकम्, 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥' इत्यमरोक्तान्यङ्गानि । अस्य चार्थस्याप्रकृतत्वात् प्रकृत एवार्थेऽभिधानियमनाच्च व्यङ्ग्यत्वमित्यनयोश्च व्यज्यमानयोरुपमानोपमेयभावमादायोपमाव्यक्तौ अपि विरोधाभासो व्यङ्ग्यः । २अङ्गयष्टेरनन्यप्रतिमत्व एव केनेत्यादिः संशयः सङ्गच्छत इति परिकरः, तथा च तत्प्रमासम्पत्तेरनुमानं च ।

१ अत्र गौरीवेत्युपमा, इतीवेत्युत्प्रेक्षा, रोमावलीमेचकमिति रूपकं च । २ रोमावलीरज्जुम् इत्यादौ रूपकम्, यदि गुप्तिर्न स्यात्तदा विरमेदिति सहेतुप्रतीतिर्दृढीकरणादनुमानं च ।

उन्मूलितालानविलाभनाभि-
श्छिन्नस्खलच्छृङ्खलरोमराजिः ।
मत्तस्य सेयं मदनद्विपस्य
प्रस्वापवप्रोच्चकुचाऽस्तु वास्तु ॥ ८५॥

उन्मूलितेति ॥ सेयं भैमी मत्तस्य उद्भटस्य अथ च गलन्मदजलस्य, मदनरूपस्य द्विपस्य वास्तु वसतिगृहमस्तु । किम्भूता—उन्मूलितमुत्पाटितं यदालानं गजबन्धनस्तम्भः तत्सम्बन्धि यद्बिलं गर्तस्तदाभा तत्तुल्याऽतिनिम्ना नाभिर्यस्याः सा । तथा—छिन्नं त्रुटितं स्खलत्पतितं शृङ्खलं तत्तुल्या रोमराजिर्यस्याः तथा—प्रस्वापाय गजस्य शयनार्थं वप्रवन्निर्मितवरण्डवदुच्चकुचा । इमामेवावलम्ब्य कामोऽतिमत्तो जात इति भावः । रोमावल्याश्छिन्नत्वं वलीमध्यगतत्वात् । मत्तस्य गजस्य वसतिगृहमप्येतादृशं भवति । 'शृङ्खलं त्रिषु' इत्यमरः ॥ ८५ ॥

रोमावलिभ्रूकुसुमैः स्वमौर्वी
चापेषुभिर्मध्यललाटमूर्ध्नि ।
व्यस्तैरपि स्थास्नुभिरेतदीयै-
र्जैत्रः स चित्रं रतिजानिवीरः ॥ ८६ ॥

रोमेति ॥ स रतिजानिवीरः रतिर्जाया यस्य स रतिजानिः स्मरः स चासौ वीरः शूरश्च एतदीयैः क्रमेण रोमावलिश्च भ्रुवौ च कुसुमानि च तद्रूपैः स्वमौर्वीचापेषुभिः कृत्वा जैत्रः जेता । लोकत्रयमपि जयतीत्यर्थः । एतच्चित्रम् । किंभूतैः रोमावलिभ्रूकुसुमैः मध्यललाटमूर्ध्नि व्यस्तैः परस्परासम्बद्धैः किं पुनः समष्ट्यात्मना स्थितैरित्यर्थः । रोमावलीरूपा ज्या मध्ये, भ्रूरूपं चापं ललाटे, मूर्ध्नि कुसुमरूपा बाणाश्च विद्यन्ते । एवं पृथक्स्थितैरपि लोकत्रयजयादाश्चर्यम् । अन्यो हि धानुष्को मौर्वीधनुर्बाणैः संमिलितैरेव जयति न तु पृथक्स्थितैः, नैकैकेन, अत्र तु विपरीतदर्शनादाश्चर्यम् । प्रत्येकं भैमीरोमावलीभ्रूकुसुमदर्शनात्कामप्रादुर्भावो भवतीति भावः । मूर्ध्नीति प्राण्यङ्गत्वादेकवद्भावः । स्थास्नुभिः 'ग्लाजिस्थश्च ग्स्नुः ३।२।१३९' रतिजानिः 'जायाया निङ् ५।४।१३४' ॥ ८६ ॥

'पुष्पाणि बाणाः कुचमण्डनानि
भ्रुवौ धनुर्भालमलङ्करिष्णु ।
रोमावली मध्यविभूषणं ज्या
तथापि जेता रतिजानिरेतैः ॥ ८७ ॥

पुष्पेति ॥ रतिजानिः—रतिर्जाया यस्य तादृशो मदनः, कुचयोर्मण्डनानि—वक्षसि धृतत्वे शोभाऽऽधायकभूतानि यानि पुष्पाणि तान्येव बाणाः—प्रहरणायुधानीत्यर्थः, एवं भालं—ललाटम् अलङ्करिष्णू—तस्यालङ्कारभूते, भ्रुवौ एव धनुः प्रहरणसाधनम्, मध्यस्य—उदरस्थलस्य विभूषणं, तत्स्वरूपभूता रोमावली एव ज्या मौर्वी, तथाऽपि एवं प्रहरणसाधनमात्रवैकल्येऽपि एतैः—एतैरेवेत्यर्थः 'सर्ववाक्यं सावधारणम्भवति' इति न्यायात् जेता जयति सर्वमपि जगदिति विशेषानिर्देशात् । यद्यपि भ्रुवौ धनुरिति न वाच्यं, तथाऽपि भ्रमराटावलिभूतपुष्पमालाऽभेदमुपजीव्येदमुक्तमित्यवधार्यम् ॥ ८७ ॥

अस्याः खलु ग्रन्थिनिबद्धकेश-
मल्लीकदम्बप्रतिबिम्बवेशात् ।
स्मरप्रशस्ती रजताक्षरेयं
पृष्ठस्थलीहाटकपट्टिकायाम् ॥ ८८ ॥

पृष्ठस्थलीं वर्णयति—

अस्या इति ॥ अस्या ग्रन्थ्या निबद्धाः केशाः केशपाशः, तत्र मल्लीकदम्बानि विकसितमल्लीकदम्बपुष्पसमूहास्तेषां प्रतिबिम्बस्य वेषात् व्याजात्पृष्ठस्थलीलक्षणायां हाटकपट्टिकायां सुवर्णघटितपट्टिकायाम् इयं दृश्यमाना रजताक्षरा रूप्यमयाक्षरा स्मरप्रशस्तिः कामयशःप्रशस्तिः । उत्तमस्य प्रशस्तिः सुवर्णपट्टिकायां, रजताक्षरैर्लिख्यते । भैमीपृष्ठं सुवर्णपट्टिकारूपम्, तत्र केशग्रन्थिषु निबद्धमल्लीपुष्पाणां प्रतिबिम्बितत्वाद्रजताक्षरत्वम् । वेणीनिबद्धकेशपुष्पाणां पृष्ठे प्रतिबिम्बासंभवाद् ग्रन्थिनिबद्ध इत्युक्तम् । सुवर्णपट्टिकातुल्या मदनजनिका च भैमीपृष्ठस्थलीति भावः । खलु निश्चये ॥ ८८ ॥

---

१ मदनद्वयस्येति रूपकम्, विलाभेत्युपमा, शृंखलरोमेत्युपमारूपकयोः सन्देहसङ्करः, एवं प्रस्वापेत्यत्रापि उपमोत्प्रेक्षयोः सन्देहसङ्कर एव । २ कुसुमैः स्वमौर्वीत्यत्र रूपकम्, विरोधाभासश्च ।

१ अत्रापि रूपकं विरोधाभासश्चेत्यलङ्कारद्वयमस्त्येव, अथ भ्रुवोर्धनुष आरोपार्थं भ्रमरावलिव्याप्तपुष्पावलितो भेदमेकपदमपधूव तथोक्तिरित्यतिशयोक्तिरपीति बोध्यम् । २ अत्र खल्वित्युत्प्रेक्षा, वेशादित्यपह्नुतिः, स्थलीहारकपट्टिकायामिति रूपकं च ।

श्लोकद्वयेन नितम्बं वर्णयति—

चक्रेण विश्वं युधि मत्स्यकेतुः
पितुर्जितं वीक्ष्य सुदर्शनेन ।
जगज्जिगीषत्यमुना नितम्ब-
मयेन किं दुर्लभदर्शनेन ॥ ८९ ॥

चक्रेणेति ॥ मत्स्यकेतुः कामः पितुः श्रीकृष्णस्य सुदर्शनेन चक्रेण युधि विश्वं जितं वीक्ष्य वस्त्राच्छादितत्वाद्दुर्लभदर्शनेनामुना नितम्बमयेन नितम्बरूपेण चक्रेण कृत्वा जगज्जिगीषति किम् । किमिवार्थः । सुलभदर्शनेन पितुश्चक्रेण युधि जगज्जितम् । मया तु दुर्लभदर्शनेन सुदर्शनादधिकेन चक्रेण जेतव्यम् । पुत्रेण पित्रपेक्षयाधिकेन भवितव्यमिति मनीषया कामेन कृतमित्यर्थः । कामजनको भैमीनितम्ब इति भावः । जिगीषति, 'सन् 'लिटोर्जेः १।४।९३' इति कुत्वम् ॥ ८९ ॥

रोमावलीदण्डनितम्बचक्रे
गुणं च लावण्यजलं च बाला ।
तारुण्यमूर्तेः कुचकुम्भकर्तु-
र्बिभर्ति शङ्के सहकारिचक्रम् ॥ ९० ॥

रोमेति ॥ बाला भैमी तारुण्यमूर्तेस्तारुण्यस्वरूपस्य कुचकुम्भकर्तुः कुचकुम्भकारस्य एतत् सहकारिचक्रं सहकारिकारणवृन्दं बिभर्ति, अहं शङ्के । एतत्किम्—रोमावल्येव चक्रभ्रामकं दण्डम्, नितम्बरूपं चक्रम्, गुणं च शीलादिलक्षणमेव गुणं दोरकं च, लावण्यरूपं जलं च । कुम्भकारस्यापि दण्डचक्रजलदोरकलक्षणं सहकारिकारणं भवति । तारुण्ये सत्येतानि प्रादुर्भूतानीति भावः ॥ ९० ॥

अङ्गेन केनापि विजेतुमस्या
गवेष्यते किं चलपत्रपत्रम् ।
न चेद्विशेषादितरच्छदेभ्य-
स्तस्यास्तु कम्पस्तु कुतो भयेन ॥९१॥

वराङ्गं वर्णयति—

अङ्गेनेति ॥ अस्याः केनाप्यतिसौन्दर्यादनिर्वचनीयेन, अथ च ग्राम्यत्वात्प्रकटं वक्तुमयोग्येन अङ्गेनावयवेन योन्याख्येन चलपत्रस्याश्वत्थस्य पत्रं विशेषेण जेतुं गवेष्यते किमित्युत्प्रेक्षे । कुतो ज्ञातमित्यत आह—न चेदेवं तर्हि इतरच्छदेभ्योऽन्यवृक्षदलेभ्यः सकाशात् विशेषादाधिक्यात्तस्य चलदलस्य कम्पः कुतः कस्मात्तु भयेन अस्तु भवतु । अन्यतरुदलापेक्षयाऽश्वत्थदले भूयान्कम्पो दृश्यते तदनेन जेतुं गवेष्यते । आकारेणाश्वत्थदलतुल्यमस्या वराङ्गमित्यर्थः ॥ ९१ ॥

पञ्चभिः श्लोकैरूरू वर्णयति—

भ्रूश्चित्रलेखा च तिलोत्तमास्या
नासा च रम्भा च यदूरुसृष्टिः ।
दृष्टा ततः पूरयतीयमेका-
नेकाप्सरःप्रेक्षणकौतुकानि ॥ ९२ ॥

भ्रूरिति ॥ अस्या भैम्याः भ्रूः चित्रा आश्चर्यरूपा लेखा विन्यासो यस्याः सा, अथ च चित्रलेखाऽप्सरोविशेषः । तथा—अस्या नासातिलात्तिलपुष्पादप्युत्तमातिरम्या, अथ च नासैव तिलोत्तमाऽप्सरोविशेषः । तथा—अस्या ऊरुसृष्टिश्च रम्भा स्वयं कदली, अथ च ऊरुसृष्टिः रम्भाप्सरोविशेषः । यस्मात् । ततः तस्मादियमेकैव दृष्टा सती अनेकाप्सरसां प्रेक्षणजनितानि कौतुकानि पूरयति जनयति । ताभ्योऽप्यस्या अतिसौन्दर्यं द्रष्टुः कौतुकं जनयतीत्यर्थः । एतदूरू कदलीतुल्याविति भावः । तिलादुत्तमेति 'पञ्चमी विभक्ते २ । ३ । ४२ ' इत्यतः 'पञ्चमी ' इति योगविभागात्समासः ॥ ९२ ॥

रम्भाऽपि किं चिह्नयति प्रकाण्डं
न चात्मनः स्वेन न चैतदूरू ।
स्वस्यैव येनोपरि सा ददाना
पत्राणि जागर्त्यनयोर्भ्रमेण ॥ ९३ ॥

रम्भेति ॥ रम्भाऽपि कदल्यपि आत्मनः प्रकाण्डं स्वस्य स्तम्भं स्वेनात्मना नच नैव चिह्नयति स्वीयत्वेन न जानाति किम्? एतदूरू च न चिह्नयति एतदीयत्वेन न जानाति किम् । लोको न जानाति, रम्भापि न जानातीत्यपिशब्दार्थः । स्वस्तम्भं भैम्यूरुत्वेन भैम्यूरू च स्वस्तम्भत्वेन नाज्ञासीत् किमित्युत्प्रेक्षा । कुतो ज्ञातमित्यत आह—येन कारणेन अनयोर्भैम्यूर्वोर्भ्रमेण

१ भयेन चक्रेणेति रूपकम्, किमित्युत्प्रेक्षा चार्थालङ्कारः । दर्शनेनेति यमकं शब्दालङ्कारोऽपीति दिक् । २ रोमावलीत्यादौ रूपकं, शङ्क इत्युत्प्रेक्षा च ।

१ अत्र किमित्युत्प्रेक्षा, न चेदित्यनुमानं च । २ अत्र चित्रलेखाऽऽदिपदानामनेकार्थत्वाच्छ्लेषः, भ्रूश्चित्रलेखेत्येवं कृत्वा रूपकं च, एकाऽनेकेति विरोधाभासश्च ।

भैम्यूरू एताविति बुद्ध्या सा रम्भा स्वस्य आत्मन एवोपरि स्वेनैव पत्राणि पत्रालम्बनानि ददती सती जागर्ति । अन्योऽपि वादी प्रतिवादिनि पत्रालम्बनं कुरुते । इयं स्वपरविवेकाभावात्परस्मिन्कर्तव्यमात्मन्येव करोतीत्यर्थः । कदलीस्तम्भोपरि दलानि भवन्ति । कदलीगर्भस्तम्भतुल्यावेतदूरू इति भावः । चिह्नवन्तं करोति, 'तत्करोति तदाचष्टे' इति (वा.) णिचि मतुब्लोपः॥ ९३ ॥

**विधाय मूर्धानमधश्चरं चे-**
**न्मुञ्चेत्तपोभिः स्वमसारभावम् ।**
**जाड्यं च नाञ्चेत्कदली वलीय-**
**स्तदा यदि स्यादिदमूरुचारुः ॥९४॥**

विधायेति ॥ कदली इदमूरुचारुः अस्या ऊरुवच्चारुः तत्तुल्यकान्तिः तदा स्यात्तदा भवेत्, यदि मूर्धानमधश्चरमधोगतं विधाय कृत्वा तपोभिश्चान्द्रायणादिभिः कृत्वा स्वं स्वीयमसारभावं निःसारत्वं चेन्मुञ्चेत्त्यजेत् । तथा—वलीयः सार्वकालिकं जाड्यं शीतलत्वं चेन्नाञ्चेन्नाप्नुयात् । तदेवैतदूरुतुल्या भवेत् । कदली भैम्यूरुतुल्यकान्तिर्यदि भवेत्तर्हि तदा भवेत् । एवं यदि कदली कुर्यात्, तदेदमूरुचारुः स्यान्नान्यथेत्यर्थः।ऊर्वोरूर्ध्वदेशस्य स्थूलत्वात्, अधोदेशस्य च सूक्ष्मत्वात्ससारत्वाच्च, कदल्याश्चैतद्विपरीतत्वादिदमूरुचारुत्वं न युज्यते । तस्मात्कदल्या तपसा इदमूरुचारुत्वं साध्यम् । अनुपमावेतदूरू इति भावः । अन्योऽपि मूर्धानमधो विधाय तपसा स्वीयमसारत्वं भूयिष्ठं मूर्खत्वं च त्यक्त्वोत्तमेन समानो भवति । 'सुषीमः शिशिरो जडः' इत्यमरः ॥ ९४ ॥

**ऊरुप्रकाण्डद्वितयेन तन्व्याः**
**करः पराजीयत वारणीयः ।**
**युक्तं ह्रिया कुण्डलनच्छलेन**
**गोपायति स्वं मुखपुष्करं सः ॥ ९५ ॥**

ऊर्विति ॥ तन्व्या ऊरुप्रकाण्डद्वितयेन ऊरुस्तम्भद्वयेन वारणीयो हस्तिसंबन्धी करः शुण्डादण्डः पराजीयत पराभूतः । अतः स करी कुण्डलनच्छलेन मण्डलीकरणव्याजेन ह्रिया लज्जया कृत्वा स्वं स्वीयं मुखभूतं पुष्करं गोपायति न दर्शयति तद्युक्तम् ॥ ९५ ॥

**अस्यां मुनीनामपि मोहमूहे**
**भृगुर्महान्यत्कुचशैलशीली ।**
**नानारदाह्लादिमुखं श्रितोरु-**
**र्व्यासो महाभारतसर्गयोग्यः ॥ ९६ ॥**

अस्यामिति ॥ अहं अस्यां व्यासादिमुनीनामपि किं पुनरन्येषामित्यर्थः, मोहं भ्रान्तिं ऊहे तर्कयामि । मुनयोऽप्येतामाश्रित्य तिष्ठन्तीति अथ च जितेन्द्रियाणामप्यस्यां विषये मोहं मदनविकारं तर्कयामि । तेऽप्यनया मोहिता इत्यर्थः । तस्मात् महानतितापसो भृगुः कुचशैलशीली कुचपर्वतसेवी । मुनीनां पर्वताश्रयत्वात्पर्वतबुद्ध्या स्तनावाश्रयति । अथ च कामपीडितत्वादत्युच्चावेतत्कुचौ मर्दयितुमिच्छति । अथ च भृगुरतटः पर्वताश्रयेण वर्तते । कुचयोः पार्श्वभागोऽतटतुल्य इत्यर्थः । शीलमेव शैलं कुचयोः शैलं स्वभावं शीलयत्यभ्यस्यति, परमद्यापि कुचस्वभावो नायातीत्यर्थः । 'प्रपातस्त्वतटो भृगुः' इत्यमरः । मुखं नारदमाह्लादयतीति नारदाह्लादि न नारदाह्लादि अनारदाह्लादि एवंविधं न भवति, किंतु नारदाह्लाद्येव । 'नञ्द्वयं सुदृढप्रकृतमर्थमवगमयतः इति' तथोक्तिः । गानकलाभ्यासार्थं नारदो मुखसेवां करोतीत्यर्थः । मदनपीडितत्वादुन्मुखं चुम्बनाभिलाषिणं नारदमानन्दयतीत्यर्थः । मुखं नानाविधैर्द्वात्रिंशत्संख्याकै रदैर्दन्तैरानन्दयति । अतिसुन्दरमित्यर्थः । महाभारतस्य सर्गे निर्माणे योग्यः समर्थो व्यासः श्रितौ ऊरू येनैवंविधः । कदलीस्तम्भच्छायाबुद्ध्या एतदूरू आश्रित्य तिष्ठति । अथ च कामपीडितत्वादेतदूरू समालिङ्ग्य वर्तत इत्यर्थः । महती भा दीप्तिर्यस्य । रतं सुरतं तस्य सर्गो निर्माणं तत्र योग्यः ततः कर्मधारय इति वा । एवंविधो व्यासो विस्तारः श्रितावूरू येन । अतिविशालावूरू इति भावः । 'भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि', 'व्यासो मुनौ स्याद्विस्तारे' इति च विश्वः ॥ ९६ ॥

---

१ किमित्युत्प्रेक्षा, भ्रमेणेति च भ्रान्तिमान् । २ यदि तदाभ्यां तथासम्भवं स्याद्दृष्ट तया शशशृङ्गोक्तिवन्मिथ्यात्वमेवेति निरुपमैवोरुरिति व्यतिरेकः प्रतीयते। यद्वा सम्भाव्योपमेयं स्यादिति । ऊरुचारुरित्यनुप्रासः।

१ छलेनेत्यपह्नुतिः,युक्तमित्यनुमानम्, उत्प्रेक्षा वा । २ ऊहे इत्युत्प्रेक्षा, भृग्वादिपदानामनेकार्थत्वात् श्लेषश्चार्थालङ्कारौ, अनुप्रासः परं शब्दालङ्कारः । इदं तु चिन्त्यं, नलसामयिकवर्णनपरेण सता कविना व्यासस्य कथमुल्लेख एव कृत इति । अर्थान्तरे तु न क्षतिः । अथापि तथा श्लेषभङ्गः ।

क्रमोद्गता पीवरताऽधिजङ्घं
वृक्षाधिरूढं विदुषी किमस्याः ।
अपि भ्रमीभङ्गिभिरावृताङ्गं
वासो लतावेष्टितकप्रवीणम् ॥ ९७ ॥

जङ्घे वर्णयति—

क्रमेति ॥ अस्या अधिजङ्घं जङ्घयोः विद्यमाना क्रमोद्गता पीवरता अवरोहक्रमनिर्मिता पीनता वृक्षस्याधिरूढं वृद्धिप्रकारं विदुषी किं जानाति किम् ? किमिति शङ्कायाम् । उत्प्रेक्षायां वा । वृक्षो यथा मूलभागे सूक्ष्मः अग्रभागे च स्थूलः तथेयं जङ्घयोः क्रमेणोद्गता पीनता । ऊर्ध्वभागो वृक्षो यथा भारवान्भवति तथेयं पीनतापीत्यर्थः । अथ च वृक्षाधिरूढाख्यमालिङ्गनविशेषं जानाति किम् । तथा—भ्रमीभङ्गिभिर्भ्रमणाकारवेष्टनविच्छित्तिभिः कृत्वा आवृतमङ्गं येन एवंविधमस्या वासो दुकूलमपि लताया वेष्टितके प्रवीणं कुशलम् । यथा लता भ्रमीभङ्गिभिः वृक्षं वेष्टयति तथैव दुकूलमप्यङ्गं वेष्टयतीति भावः । 'बाहुभ्यां कण्ठमालिङ्ग्य कामिनी कान्त उत्थिते । अङ्कमारोहते यस्य वृक्षारूढः स उच्यते ॥' 'उपविष्टं प्रियं कान्ता सुप्ता वेष्टयते यदि । तल्लतावेष्टितं ज्ञेयं कामानुभववेदिभिः ॥' इति रतिशास्त्रोक्तेः । अधिजङ्घम्, विभक्त्यर्थेऽव्ययीभावः ॥ ९७ ॥

अरुन्धतीकामपुरंध्रिलक्ष्मी-
जम्भद्विषद्दारनवाम्बिकानाम् ।
चतुर्दशीयं तदिहोचितैव
गुल्फद्वयाप्ता यददृश्यसिद्धिः ॥ ९८ ॥

गुल्फौ वर्णयति—

अरुन्धतीति ॥ अरुन्धती वसिष्ठपत्नी, कामपुरंध्री रतिः, लक्ष्मीः, जम्भद्विषद्दारा इन्द्राणी, नवसंख्याका अम्बिकाश्च ब्राह्म्याद्याः सप्त, गौरी सरस्वती चेति द्वे, एतासां त्रयोदशानां पूरणी चतुर्दशी इयं यद्यस्मात् तत्तस्मादिहास्यामदृश्यस्य वस्तुनः सिद्धिरदृश्यता सा उचितैव युक्तैव गुल्फद्वयेन आप्ता प्राप्ता । पुलोमाख्यदैत्यस्य पुत्रीन्द्राणीति दैत्यदेवानां द्वेषित्वस्य जन्मसिद्धत्वाज्जम्भद्विषद्दारा इत्युक्तम् । अरुन्धत्यादिवदियमतिसुन्दरी पतिव्रता च, तस्मादस्यां निमग्नगुल्फत्वं नाम सामुद्रिकं लक्षणं युक्तमेवेति भावः । यस्मादस्यामदृश्यसिद्धिर्लब्धा, तस्मादियमरुन्धत्यादीनां चतुर्दशी समुचितेति वा संबन्धः । ( अथ च चतुर्दश्यां तिथावदृश्यताया अदृश्यीकरणविद्यायाः सिद्धिः साधकानां प्राप्तिरुचितैव—इति सुखावबोधा ) । आगमे—'चतुर्दश्यामदृश्यत्वसिद्धिर्भवति' इत्युक्तमित्यर्थः, चतुर्दशानां पूरणी—'तस्य पूरणे डट्' । संख्यादित्वान्न मट् । टित्वान्ङीप् ॥ ९८ ॥

षड्भिः पादौ वर्णयति—

अस्याः पदौ चारुतया महान्ता-
वपेक्ष्य सौक्ष्म्याल्लवभावभाजः ।
जाता प्रवालस्य महीरुहाणां
जानीमहे पल्लवशब्दलब्धिः ॥ ९९ ॥

अस्या इति ॥ चारुतया सौन्दर्येण कृत्वा महान्तौ उत्तमौ अस्याः पदावपेक्ष्य यत्सौक्ष्म्यमल्पत्वम्, एतस्याः सुन्दरपदापेक्षया स्वस्य यदल्पत्वम् । तादृक्सौन्दर्याभावादित्यर्थः । तस्मात् लवभावभाजः प्रदशोभालेशरूपत्वं भजतः महीरुहाणां प्रवालस्य बालकिसलयस्य 'पल्लव' इति शब्दस्तस्य लब्धिर्लाभो जात इति वयं जानीमहे । पदो लवः भैम्याश्चरणसंबन्धी लवो लेशो यस्य पदो लवरूपो वायामिति पल्लवशब्दः । प्रवालशब्दस्य पल्लवशब्दप्राप्तिरतो जातेत्यर्थः । प्रवालादप्यधिकरमणीयौ चरणाविति भावः । लब्धिरिति 'स्त्रियां क्तिन् ।३।३।९४' इति क्तिन् ॥ ९९ ॥

जगद्वधूमूर्धसु रूपदर्पा-
द्यदेतयाऽदायि पदारविन्दम् ।
तत्सान्द्रसिन्दूरपरागरागै-
र्द्वयं प्रवालप्रबलारुणं तत् ॥ १०० ॥

जगदिति ॥ एतया रूपदर्पात्सौन्दर्यगर्वाज्जगद्वधूमूर्धसु लोकत्रयसुन्दरीशिरःसु पदारविन्दं यद्यस्माददायि दत्तम् । तत्पदारविन्दद्वयं तेषु मूर्धसु सान्द्रं यत्सिन्दूरं तस्य परागस्तेषां रागैर्लौहित्यैः कृत्वा प्रवालात्पल्लवात्, विद्रुमाद्वा प्रबलमधिकम् अरुणमारक्तं जातं ध्रुवमुत्प्रेक्षे।भैमीचरणावत्यरुणाविति भावः॥१००॥

१ किमित्युत्प्रेक्षा ।

१ अत्र चतुर्दशीयमिति रूपकम् । उचितैवेत्यनुमानं च । २ अत्र जानीमह इत्युत्प्रेक्षा पदोर्लवाविति पल्लवावित्यर्थस्यापि सम्पत्तेः श्लेषश्च । ३ अत्रानुप्रासः । पदारविन्दमदायीत्यसम्भवेऽपि तयोक्तेरतिशयोक्तिश्च ।

रुषाऽरुणा सर्वगुणैर्जयन्त्या
भैम्याः पदं श्रीः स्म विधेर्वृणीते ।
ध्रुवं स तामच्छलयद्यतः सा
भृशारुणैतत्पदभाग्विभाति ॥ १०१ ॥

रुषेति ॥ श्रीर्लक्ष्मीः शोभा च विधेर्ब्रह्मणः सकाशाद्भैम्याः पदं स्थानं स्वरूपत्वम् अधिकारं वा वृणीते स्म । यतः—सर्वैः स्त्रीगुणैः कृत्वा श्रियं जयन्त्याः । अत एव किंभूता—रुषा क्रोधेन अरुणा स ब्रह्मा ध्रुवं निश्चितं तां श्रियमच्छलयत्प्रतारितवान् । यतो यस्माद्भृशांऽरुणाऽतिरक्ता सा श्रीः एतत्पदभाग्भैमीचरणसेविनी विभाति शोभते । यद्वा—'भृशारुण' इति पदविशेषणत्वेनैकं पदम् । पदशब्दच्छलेन भैमीचरणं दत्तवान्, न स्वरूपादि । शत्रुणा जितोऽन्योऽपि देवतां प्रसन्नीकृत्य तत्पदं याचते।भैमीचरणशोभा लोकोत्तरेति भावः॥१०१॥

यानेन तन्व्या जितदन्तिनाथौ
पादाब्जराजौ परिशुद्धपार्ष्णी ।
जाने न शुश्रूषयितुं स्वमिच्छू
नतेन मूर्ध्ना कतरस्य राज्ञः ॥ १०२ ॥

यानेनेति ॥ तन्व्याः पादाब्जराजौ श्रेष्ठकमलतुल्यौ चरणौ कतरस्य राज्ञः कस्य नृपस्य प्रणयकलहे नमस्कारार्थं नतेन नम्रेण मूर्ध्ना प्रयोज्येन स्वमात्मानं शुश्रूषयितुमात्मसेवां कारयितुम् इच्छू अभिलाषुकाविति न जाने । किंभूतौ—यानेन गमनेन कृत्वा जितो दन्तिनाथो हस्तिश्रेष्ठो याभ्याम् । तथा—परिशुद्धो रमणीयः पार्ष्णिश्चरणपश्चाद्भागो ययोस्तौ । एतादृक् महत्तपः केन राज्ञा कृतमिति न जाने इत्यर्थः। गजगमनेयमिति भावः। भैमीचरणावेव राजानौ यानेन विजययात्रया जितः गजपतिः गौडेश्वरो याभ्यां तौ । तथा—परिशुद्धः पार्ष्णिः पार्ष्णिग्राहो ययोरेवंभूतौ सन्तौ कस्य राज्ञः भीतत्वान्नमस्कारार्थं नम्रेण शिरसा स्वसेवां कारयितुमिच्छू न जाने । अन्योऽप्येवंविधो राजा गूढमन्त्रत्वात्स्वसेवां केन कारयिष्यतीति न ज्ञायते । तेन प्रसिद्धेनोर्जितेन मूर्ध्ना न जाने इति न अन्यत्पूर्ववदिति वा ॥ १०२ ॥

१ ध्रुवमित्युत्प्रेक्षा । अरुणपदस्य पदपदस्य च वारद्वयं प्रयोगात् कथितपदत्वम् । २ पादावब्जराजे इवेति उपमा, न पादावेवाब्जराजाविति रूपकम्, अन्यथाऽब्जराजपदस्यक्लीबलिङ्गतयैव प्रयोगार्हत्वापत्तेः ।

कर्णाक्षिदन्तच्छदबाहुपाणि-
पादादिनः स्वाखिलतुल्यजेतुः ।
उद्वेगभागद्वयताभिमाना-
दिहैव वेधा व्यधित द्वितीयम् ॥१०३॥

कर्णेति ॥ स्वस्य आत्मनोऽखिलं समग्रं यत्तुल्यं पाशनीलोत्पलादि तस्य जेतुः जैत्रस्य कर्णादेः कर्णः, अक्षि नेत्रम्, दन्तच्छद ओष्ठः, बाहुः पाणिः,पादश्चरणः, एतेषां समाहारः, तत् आदिर्यस्य । आदिशब्दादङ्गुल्यादेरवयवस्य प्रत्येकमद्वयताभिमानात् मत्सदृशं सुन्दरमन्यन्नास्तीति अहमेवैकं सुन्दरमित्यद्वैतगर्वादुद्वेगभाक् क्रोधयुक्तः वेधाः इहैवास्यां भैम्यामेव द्वितीयं द्वयोः पूरणं कर्णादि कृतवान् । हे कर्णादयः ! एवं गर्वं चेत्कुरुथ तर्हि भवद्गर्वशान्त्यर्थं भवत्सदृशमन्यमस्यामेव करिष्यामीति द्वितीयं कर्णादि कृतवानित्यर्थः । अतिक्रुद्धो हि तद्दर्पशान्तये तत्रैव प्रतिद्वन्द्विनं रचयति । भैमीकर्णौ भैमीकर्ण इव, नान्येन तुल्यः । एवं नेत्रादावपि ज्ञातव्यम्।'कर्णाक्षि—'इत्यादौ प्राण्यङ्गत्वादेकवद्भावः । 'स्वाखिल' इति भाषितपुंस्कम् ॥ १०३ ॥

तुषारनिःशेषितमब्जसर्गं
विधातुकामस्य पुनर्विधातुः ।
पञ्चस्विहास्याङ्घ्रिकरेष्वभिख्या-
भिक्षाऽधुना माधुकरीसदृक्षा ॥१०४॥

तुषारेति ॥ विधातुः इह एषु पञ्चसु आस्यम्,अङ्घ्री, करौ च एतेषु भैमीवदनचरणद्वन्द्वपाणिद्वन्द्वेषु विषये अभिख्याभिक्षाशोभायाच्ञा माधुकरीसदृक्षा यतिभिक्षातुल्या । भवतीति शेषः । किंभूतस्य विधातुः—तुषारेण हिमेन निःशेषितमात्यन्तिकं विनाशितमब्जसर्गं कमलसृष्टिमधुना इदानीं पुनः विधातुकामस्य निर्मातुकामस्य । भिक्षा हि गृहपञ्चक एव भवति । मधुकरो ह्यनेकानि पुष्पाणि मधु याचित्वा स्वोदरभरणं करोति, तत्संबन्धित्वान्माधुकरी । कमलान्येतद्वदनादितुल्यानि नेति भावः । आस्यादीनां प्राण्यङ्गद्वन्द्वेऽपि पञ्चस्वित्यनेन संख्यापरिगणनात् 'अधिकरणैतावत्त्वे च' इत्येकवद्भावाभावः ॥ १०४ ॥

१ अत्रानन्वयो व्यङ्ग्यः, कर्णौ कर्णाविवेत्यादिप्रतीतेः। २ अत्र विधातुरिति यमकम् अभिख्याभिक्षेति रूपकम् । माधुकरीसदृक्षेत्युपमा च ।

एष्यन्ति यावद्गणनादिगन्ता-
न्नृपाः स्मरार्ताः शरणे प्रवेष्टुम् ।
इमे पदाब्जे विधिनाऽपि सृष्टा-
स्तावत्य एवाङ्गुलयोऽत्र लेखाः १०५॥

अङ्गुलीर्वर्णयति—

एष्यन्तीति ॥ स्मरार्ता नृपा इमे पदाब्जे भैमीचरणकमले कर्मभूते शरणे रक्षके प्रवेष्टुं कामादस्मात्रक्षतं युवामिति वदन्तो यावद्गणनायावत्संख्याकाद्दिगन्तात्सकाशादेष्यन्ति समागमिष्यन्ति, विधिनाऽपि तावत्यः तावत्संख्याका अङ्गुलयोऽङ्गुलिरूपा रेखा एवात्र चरणद्वन्द्वे सृष्टा निर्मिताः । एता अङ्गुलयो दश । दिगन्तानामपि दशसंख्यात्वाद्दशदिग्भ्यः कामार्ता नृपाः समागमिष्यन्तीति सूचनार्थं ब्रह्मणा दश रेखारूपा अङ्गुलय एव निर्मिताः । 'न रेखाः' इति पाठे अङ्गुलयो न भवन्ति, किंतु रेखा एवेत्यन्वयः । यावद्गणनादित्यव्ययीभावे 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः २।४।८३' इत्यत्र 'अपञ्चम्याः' इति वचनादम्भावाभावः ॥ १०५ ॥

प्रियानखीभूतवतो मुदेदं
व्यधाद्विधिः साधुदशत्वमिन्दोः ।
एतत्पदच्छद्मसरागपद्म-
सौभाग्यभाग्यं कथमन्यथा स्यात् १०६

नखान्वर्णयति—

प्रियेति ॥ विधिः मुदा स्वेच्छया प्रियाया नखीभूतवतो नखत्वं प्राप्तवत, इन्दोः इदं दशत्वं दशसंख्यात्वं साधु उचितं व्यधात्कृतवान् । अथ च साध्वी शोभना दशावस्था यस्य एवंविधत्वं कृतवान् । कथमित्यत आह—अन्यथा अस्य इन्दोः एतस्याः पदच्छद्मना चरणव्याजेन सरागपद्मसौभाग्यं रक्तोत्पलसौभाग्यं तस्य भाग्यं लाभः कथं स्यात्—दशसंख्यत्वेन भैमीसमीचीनावस्थत्वेन च विनैतच्चरणसेवा न लभ्यते । अनेन तावल्लब्धा, तस्मादस्य साधुदशत्वं कृतमिति ज्ञायत इत्यर्थः । चन्द्रपद्मयोर्विरोधाच्चन्द्रोदये कमलस्य संकोचात्समीचीनावस्थत्वेन विना रक्तोत्पलसंबन्धश्चन्द्रस्य न युज्यते, स तु जातः, तस्य च रक्तत्वं लब्धम्, तस्मादेतदनुमीयत इत्यर्थः । अन्योऽपि साधुदशत्वेनाप्राप्यमपि प्राप्नोति । दशापि चरणनखाश्चन्द्रतुल्या इति भावः ॥ १०६ ॥

यशः पदाङ्गुष्ठनखौ मुखं च
बिभर्ति पूर्णेन्दुचतुष्टयं या ।
कलाचतुःषष्टिरुपैतु वासं
तस्यां कथं सुभ्रुवि नाम नास्याम् १०७

अङ्गुष्ठनखौ च पुनः पृथक्त्वेन वर्णयति—

यश इति ॥ या भैमी यशः कीर्तिः पदाङ्गुष्ठनखौ मुखं च एतद्रूपं पूर्णेन्दुचतुष्टयं षोडशकलचन्द्रचतुष्टयं बिभर्ति, तस्याम् अस्यां सुभ्रुवि भैम्यां चतुरधिका षष्टिः कला कथं नाम वासं नोपैतु, अपि तु प्राप्नोतीति युक्तमेतत् । षोडशकलचन्द्रचतुष्टयधारणात्षोडशकलाश्चतुर्गुणिताश्चतुःषष्टिर्भवन्तीति युक्तमित्यर्थः । गीतवाद्यादिकलाप्रवीणेयमित्यर्थः । कलेति जातावेकवचनम् । कलानां चतुःषष्टिरिति वा । 'कलाः' इति पाठे कलारूपा चतुःषष्टिरिति ॥ १०७ ॥

सृष्टाऽतिविश्वा विधिनैव ताव-
त्तस्यापि नीतोपरि यौवनेन ।
वैदग्ध्यमध्याप्य मनोभुवेय-
मवापिता वाक्पथपारमेव ॥ १०८ ॥

अथ वर्णयितुमशक्येयमिति निगमयति—

सृष्टेति ॥ विधिनैव इयं तावत् आदौ अतिविश्वा जितत्रैलोक्या सृष्टा । अतिसुन्दरी कृतेत्यर्थः । अनन्तरं यौवनेन तस्याप्यतिविश्वसर्गस्यापि विधेर्वा उपरि नीता शैशवसौन्दर्यापेक्षयाधिकं सौन्दर्यं प्रापिता । तारुण्येऽतिसौन्दर्यं भवति । ततोऽप्यनन्तरं मनोभुवा कामेन वैदग्ध्यं सर्वव्यापारचातुर्यमध्याप्य शिक्षयित्वा वाक्पथस्य पारं परतीरमवापिता । वर्णयितुमशक्यत्वाद्वागगोचरा इत्यर्थः । अथ च विद्यापारं प्रापितेत्यर्थः । मदनवशादतिचतुरेयमित्यर्थः । अन्योऽपि प्राज्ञोऽध्यापितः सन्वाङ्मयपारं प्राप्नोति ॥ १०८ ॥

---

१ अङ्गुलीनां लेखात्वेन स्थापनाद्रूपकमभिव्यज्यते । यद्वा—अङ्गुलयो न, किं तु लेखा एवैता इति स्वरूपापह्नवनादपह्नुतिः ।

१ अत्र नखीभूतवत इन्दोरिति रूपकम्, पदच्छद्मेत्यपह्नुतिः कथमन्यथेति चानुमानम् । २ यश आदिचतुष्टयमेव पूर्णेन्दुचतुष्टयमिति रूपकं, कथं नाम नेत्यनुमानं च । ३ अतिविश्वात्वाद्यसम्भवेऽपि तथोक्तेरतिशयोक्तिः ।

इति स चिकुरादारभ्यैनां नखावधि वर्णय-
न्हरिणरमणीनेत्रां चित्राम्बुधौ तरदन्तरः।
हृदयभरणोद्वेलानन्दः सखीवृतभीमजा-
नयनविषयीभावे भावं दधार धराधिपः १०९

इतीति ॥ स धराधिपो नलः सखीभिर्वृता भीमजा तस्या नयनविषयीभावे नयनगोचरत्वे भावमभिलाषं दधार। इदानीमात्मानं सखीसहितभैम्यै दर्शयिष्यामीति तस्य बुद्धिरुत्पन्नेत्यर्थः । प्रकटो जात इति भावः। इन्द्रवरदानात्सखीसहितयैव भैम्या द्रष्टव्यो नान्येन केनचिदित्यभिप्रायः सूचितः । किं कुर्वन्—इति पूर्वोक्तप्रकारेण चिकुरादारभ्य केशपाशमारभ्य नखावधि नखपर्यन्तं हरिणरमणीवन्नेत्रे यस्यास्तामेनां भैमीं वर्णयन् । तथा—चित्राम्बुधौ अद्भुतसौन्दर्यदर्शनादेवाश्चर्यसमुद्रे तरत्प्लवमानमन्तरं मानसं यस्य सः। साश्चर्यः। भैमीदर्शनादेव हृदयस्य भरणेन परिपूरणेन उद्वेलः वेलां मर्यादां तीरं चातिक्रान्तोऽतिवहल आनन्दो यस्य सः। उद्वेलत्वेनानन्दस्य समुद्रत्वं सूचितम्। अन्यदप्युदकं गम्भीरं स्थानं परिपूर्य बहिर्निर्गच्छति । 'आरम्भार्थयोगेऽपीति केचित्' इति चिकुरादिति पञ्चमी ॥ १०९ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । गौडोर्वीशकुलप्रशस्तिभणितिभ्रातर्ययं तन्महा-काव्ये चारुणि वैरसेनिचरिते सर्गोऽगमत्सप्तमः ॥ ११० ॥

श्रीहर्षमिति ॥ गौडोर्वीशकुलस्य गौडदेशभूपालवंशस्य प्रशस्तिर्वर्णना तस्या भणिती रचना तस्या भ्रातरि, एककर्तृकत्वात् । सापि येन रचितेत्यर्थः। वैरसेनिचरिते चारुणि महाकाव्येऽयं सप्तमः सर्गः अगमत् समाप्तिं प्राप्तः। भ्रातरीति भाषितपुंस्कम् ११०॥

इति श्रीमन्नरसिंहपण्डितात्मजनारायणकृते
नैषधीयप्रकाशे सप्तमः सर्गः ॥

---

१ अत्र हरिणी छन्दः, 'रसयुगहयैर्न्सौम्रौस्लौ गो हरिणी तदा' इति तल्लक्षणात् । हरिणरमणीनेत्रामित्युपमा, अन्तरस्य तरत्त्वेनानन्दस्योद्वेलत्वेन चोक्तौ प्राणिविशेषजलपूरविशेषाभेदः पर्यवसीयत इति रूपकातिशयोक्तिः; उपमानस्य निगरणादिति बोध्यम्।

# अष्टमः सर्गः ।

इदानीं नलो दिक्पालदूत्यं कृतवानिति वक्तुमष्टमं सर्गमारभते—

अथाद्भुतेनास्तनिमेषमुद्र-
मुन्निद्रलोमानममुं युवानम् ।
दृशा पपुस्ताः सुदृशः समस्ताः
सुता च भीमस्य महीमघोनः ॥१॥

अथेति ॥ अथ भैमीनयनविषयीभावाभिलाषानन्तरं ताः समस्ताः सुदृशः सख्यो महीमघोनो भीमस्य सुता भैमी च अमुं युवानं दृशा दृष्ट्या पपुः साभिलाषं ददृशुः। कीदृशम्—अद्भुतेन भैमीसौन्दर्यजनितेनाश्चर्येण कृत्वा अस्ता त्यक्ता निमेषमुद्रा नेत्रसंकोचरीतिर्येन । अत एव सात्त्विकभाववशादुन्निद्रलोमानमुद्गतरोमाञ्चम् । दृशेत्येकवचनेन कटाक्षावलोकनं सूचितम् । अचिन्तितसुन्दरदर्शनादाश्चर्येण अस्तनिमेषमुद्रं यथा तथा पपुरिति वा । युवपदेन दर्शनयोग्यत्वं सूचितम् । भैमीप्रमुखाः सर्वा अपि तत्परा जाता इति भावः ॥ १ ॥

कियच्चिरं दैवतभाषितानि
निह्नोतुमेनं प्रभवन्तु नाम ।
पलालजालैः पिहितः स्वयं हि
प्रकाशमासादयतीक्षुडिम्भः ॥ २ ॥

कियदिति ॥ देवतासम्बन्धीनि दैवतानां वा अन्तर्धिसिद्धिरूपाणि भाषितानि कियच्चिरं कियन्तं कालम् एनं नलं निह्नोतुं गोपायितुं प्रभवन्तु नाम समर्थानि भवन्तु । अपि तु क्षणमात्रं गोपायितुं समर्थानि जातानि, न बहुकालमित्यर्थः। नामेति शिरश्चालने । अर्थान्तरन्यासमाह—हि प्रसिद्धं यस्मात् वा पलालजालैः नीरसतृणसमूहैः पिहित इक्षोर्डिम्भोऽङ्कुरः स्वयमात्मनैव प्रकाशं

---

१ अस्मिन्नपि सर्गे पूर्ववदुपेन्द्रवज्रा, इन्द्रवज्रा, एतयोश्च मेलनं यथासम्भवमूह्यम् । २ अत्रास्तनिमेषमुद्रमुन्निद्रलोमानमिति अन्योऽन्यं भावोदयः समकालमेव जात इति सूचयति । दृशेत्येकवचनेन सर्वासामभिन्नपानसाधनत्वं प्रत्याय्याभिन्नात्मत्वमपि प्रत्याय्यते।

प्राकट्यं हृद्यत्वमासादयति प्राप्नोति। 'वृन्दारका देवतानि' इत्यमरः ॥ २ ॥

अपाङ्गमप्याप दृशोर्न रश्मि-
र्नलस्य भैमीमभिलष्य यावत् ।
स्मराशुगः सुभ्रुवि तावदस्यां
प्रत्यङ्गमापुङ्खशिखं ममज्ज ॥ ३ ॥

अपाङ्गमिति ॥ नलस्य दृशोर्नेत्रयोः रश्मिर्दीप्तिः भैमीमभिलष्य अपाङ्गमप्यतिनिकटत्वादविलम्ब्यप्राप्यमपि नेत्रप्रान्तं यावन्नाप न प्राप तावदादावेव स्मराशुगः सुभ्रुवि सुन्दर्यामस्यां प्रत्यङ्गं प्रत्यवयवं पुङ्खस्य शिखा अग्रं तत् आ मर्यादीकृत्य, अभिव्याप्य ममज्ज । नलकर्तृकसाभिलाषदर्शनोपक्रममात्रेण प्रत्यङ्गं भैमी अतितरां कामाधीना जातेति भावः । अभिलाषं प्रति रश्मेरुपचारात्कर्तृत्वे समानकर्तृकत्वात् क्त्वो ल्यप् । आपुङ्खशिखम्, 'आङ्मर्यादाभिविध्योः २।१।१३' इत्यव्ययीभावः॥३॥

यदक्रमं विक्रमशक्तिसाम्या-
दुपाचरद् द्वावपि पञ्चबाणः ।
कथं न वैमत्यममुष्य चक्रे
शरैरनर्घार्धविभागभाग्भिः ॥ ४ ॥

यदिति ॥ पञ्चबाणः कामो द्वावपि नलभैम्यौ अक्रमं परिपाटीरहितं युगपद्विक्रमरूपायाः शक्तेः सामर्थ्यस्य साम्यात् विक्रमो मनउत्साहः शक्तिः शारीरं बलं तयोः साम्यात्तुल्यत्वाद्वा यद्यस्मादुपाचरदात्मवशीचकार । तत्तस्मात्पञ्चबाणत्वेऽप्यमुष्य कामस्य अर्धेनार्धेन अर्धाधिकाभ्यां द्वाभ्यां द्वाभ्यां विभागः तद्भाजो न भवन्ति तैरनर्घार्धविभागभाग्भिः एवंभूतैरपि बाणैर्वैमत्यं वैषम्यं न कृतम् । पञ्चभिरपि प्रथमं नलस्य व्यधं कृत्वानन्तरं तावद्भिरेव भैम्या व्यधं चेदकरिष्यत्तर्ह्युभयोस्तुल्योऽनुरागो ऽघटिष्यत । तत्तु तेन न कृतम्, तुल्यकालमेवोभयोरनुरागदर्शनात्, यद्येकसमयावच्छेदेन व्यधं कुर्यात्तर्हि बाणानां दशत्वात्पञ्चत्वं भज्येत । यस्मादर्धाधिकौ द्वौ द्वौ बाणौ चेत्सम्भवतस्तर्ह्यप्यनुरागसाम्यं संभाव्येतापि । न त्वेव युज्यते, । भग्नस्य बाणस्य व्यधेऽसामर्थ्यात् । द्वाभ्यां नलस्य त्रिभिर्भैम्या व्यधे वैपरीत्येन वा, अनुरागे वैषम्येण भवितव्यम् '। तच्च यौगपद्ये बाणवैषम्ये च सत्यपि न जातम् । तत्र पराक्रमशक्तिसाम्यमेव हेतुरित्यर्थः । द्वयोरप्येककालमेव तुल्य एवानुरागो जात इति भावः । यद्वा वैमत्यं कलहः विषमसंख्यत्वाद्बाणानां विभागो न घटते । एकस्य द्वैधीकरणे तत्सर्वेषामपि प्राप्नोति, यस्य च प्राप्नोति स एव वैमत्यमाचरतीत्यर्थः। बाणानां वैमत्यभिया स्वविक्रमशक्तिसाम्यादेवोपाचरदिति वा । यथा राजा स्वसेवकानां वैमत्यभियाऽन्यप्रकारेण कार्यं साधयति तथैवेत्यर्थः । तस्मादेव तैर्वैमत्यं न कृतमिति भावः । अथ च—वेः पक्षिणः क्रम आक्रमणं ग्रहणं तत्र या शक्तिः सामर्थ्यं तेन साम्यात्तुल्यत्वात् ।'खले कपोतन्यायेन ' इति यावत् । यथा कपोतः खले पतितान्कणान्युगपच्चञ्च्वा गृह्णाति तथा पञ्चबाणोऽपि युगपद् द्वावपि तेन न्यायेन यस्मादुपाचरत्, तस्मादस्य बाणैरपि विषमसंख्यत्वेऽपि विरुद्धत्वं नाकारि । अथ च कामेनायं न्यायोऽङ्गीकृतः, अत एव वैर्मतिरिव मतिर्यस्य तद्भावो वैमत्यं खले कपोतन्याय एव । स कामबाणैरपि न कृतः, अपि तु कृत एवेति काका व्याख्येयम् । तैरपि पञ्चभिरेकदैव मिलित्वा युगपदेव तौ वशीकृतौ कालस्य सूक्ष्मत्वात् । विक्रमतुल्यो नलः, शक्तितुल्या भैमी, ततो विक्रमशक्तितुल्यौ तौ सकृदेव स्वबाणैः कुसुमैरपूजयदित्यर्थ इति वा ॥ ४ ॥

तस्मिन्नलोऽसाविति साऽन्वरज्य-
त्क्षणं क्षणं क्वेह स इत्युदास्त ।
पुनः स्म तस्यां वलतेऽस्य चित्तं
दूत्यादनेनाथ पुनर्न्यवर्ति ॥ ५ ॥

अनुरागसाम्यमेवाह—

तस्मिन्निति ॥ सा भैमी तस्मिन्पुरुषे असौ नल इति हेतोः अन्वरज्यदनुरक्ता । अनन्तरं सोऽतिसुन्दरो नलोऽतिसुरक्षिते इहास्मिन्नन्तःपुरे क्व कुत इति क्षणंक्षणं प्रतिक्षणं विचार्य उदास्तोदासीनाऽऽसीत् । क्षणमन्वरज्यत् क्षणमुदास्तेति वा । अस्य चित्तमस्यां पुनर्मुहुर्वलते स्म चञ्चलमभूत् । अथानन्तरमनेन नलेनास्य चित्तेन

---

१ अत्र कियच्चिरमित्यादिनोद्भावितस्यैवार्थस्य समर्थनाय पलालजालैरित्याद्युक्तमित्यर्थान्तरन्यासः । २ यावदिति कार्यकारणयोः पौर्वापर्यागणनादतिशयोक्तिः ।

१ अत्रानुप्रासः, नलभैम्योः समकालं लक्ष्यीकरणादतिशयोक्तिः, यत् पञ्चबाणोऽक्रमं कृतवान् ततस्तदीयैर्बाणैरपि अक्रमः कृत एवेति स्वामिकिङ्करयोर्व्यवहारप्रत्ययात्समासोक्तिः, यत्तत इति वा हेतुहेतुमद्भावमादायोक्तेः काव्यलिङ्गम् ।

वा दूत्याद्धेतोः पुनर्न्यवर्तिं परावृत्तम् । दूत्याङ्गीकारे भैम्यभिलापो न युक्त इति परावृत्तमित्यर्थः । उभयोरपि भूयाननुरागोऽभूदित्यर्थः । 'पुरः स्म' इति पाठे प्रथमम् ॥ ५ ॥

कयाचिदालोक्य नलं ललज्जे
कयाऽपि तद्भासि हृदा ममज्जे ।
तं काऽपि मेने स्मरमेव कन्या
भेजे मनोभूवशभूयमन्या ॥ ६ ॥

कयेति ॥ कयाचिद्बालया नलमालोक्य ललज्जे अनुरागवशात्प्रकटितलज्जानुभावया भूतम् । कयाचित्प्रौढया तद्भासि नलकान्तौ हृदाऽन्तःकरणेन ममज्जे निमग्नम् । सौन्दर्यदर्शनमात्रेणाश्चर्यपरया साभिलाषया स्मरपरवशया जातम् । कापि कन्या कुमारी तं स्मरमेव मेने । अतिसौन्दर्यात्स्मरजनकत्वाच्चेत्यर्थः । अन्या मनोभूवशभूयं कामवशत्वमेव भेजेऽशिश्रियत् । अननुभूतसंभोगरसापि नले सानुरागा जातेति भावः । 'तं वीक्ष्य काचित्कुलजा ललज्जे' इत्यपि पाठः ॥ ६ ॥

कस्त्वं कुतो वेति न जातु शेकु-
स्तं प्रष्टुमप्यप्रतिभाऽतिभारात् ।
उत्तस्थुरभ्युत्थितिवाञ्छयेव
निजासनान्नैकरसाः कृशाङ्ग्यः ॥ ७ ॥

क इति ॥ कृशाङ्ग्यः अप्रतिभाया अप्रागल्भ्यस्यातिभारादतिबाहुल्याद्धेतोः इति तं प्रष्टुमपि जातु कदाचित्तत्र कंचित्कालं स्थिता अपि न शेकुः । इति किम्—कस्त्वं किंसंज्ञकः कुतो वा देशादागत इति । तर्हि किं चक्रुरत आह—नैकरसा लज्जाभयानुरागादियुक्ताः सत्यः अभ्युत्थितिवाञ्छयेवाभ्युत्थानकाङ्क्षयेव निजासनात्स्वीयस्वीयासनादुत्तस्थुरुत्थिताः । अन्योऽप्यप्रतिभोऽतिभारोऽपिकिमपि वक्तुं न शक्नोति । ईहासद्भावेऽप्यूर्ध्वकर्मत्वादुत्तस्थुरित्यत्र तङ्भावः ॥ ७ ॥

स्वाच्छन्द्यमानन्दपरम्पराणां
भैमी तमालोक्य किमप्यवाप ।
महारयं निर्झरिणीव वारा-
मासाद्य धाराधरकेलिकालम् ॥ ८ ॥

स्वाच्छन्द्यमिति ॥ भैमी तमालोक्य किमप्यनिर्वाच्यमानन्दपरम्पराणां स्वाच्छन्द्यमाधिक्यमवाप । 'छन्दः पद्येऽभिलाषे च' इत्यभिधानात्स्व आत्मीयश्छन्दोऽभिलाषो यस्य सः स्वच्छन्दो निरवग्रहः तस्य भावः स्वाच्छन्द्यम् । का कमिव—निर्झरिणी नदी धाराधरो मेघः तस्य केलिकालः क्रीडासमयः तं वर्षासमयमासाद्य प्राप्य वारां जलानां महारयं महावेगमाधिक्यमिव लभते स्म । दर्शनमात्रेण लोकोत्तरमानन्दं प्रापेति भावः ॥ ८ ॥

तत्रैव मग्ना यदपश्यदग्रे
नास्या दृगस्याङ्गमयास्यदन्यत् ।
नादास्यदस्यै यदि बुद्धिधारां
विच्छिद्य विच्छिद्य चिरान्निमेषः ॥ ९ ॥

तत्रेति ॥ अस्या दमयन्त्या दृक् यदस्य नलस्याङ्गमग्रे प्रथममपश्यत्, तत्रैव तस्मिन्नेवाङ्गेऽनुरागवशान्निमग्ना सती प्रथमदृष्टमङ्गं विहाय अन्यदङ्गं तर्हि नायास्यत्, न प्राप्स्यत्, यदि चिराच्चिरकालात्संजातो निमेषो नेत्रसंकोचः विच्छिद्य विच्छिद्य पूर्वदृष्टाङ्गविच्छेदं कृत्वा कृत्वा अस्यै भैम्यै बुद्धिधारामन्यामन्यां बुद्धिं दर्शनेच्छासंततिं नादास्यत् । तेन तु बुद्ध्यन्तरं दत्तं, तद्वशादेवान्यदङ्गं प्रापदित्यर्थः । अतिसुन्दराङ्गदर्शनस्य निमेषेण विच्छेदे कृते सत्यनन्तरं तस्यैवाङ्गस्य दर्शनेच्छया पुनरप्यङ्गान्तरदर्शनं, न तु प्रथमाङ्गदर्शनविरक्त्येत्यर्थः । सर्वेऽप्यवयवा अतिसुन्दरा इति भावः । क्रियाऽतिपत्तौ लृङ् ॥ ९ ॥

दृशाऽपि सालिङ्गितमङ्गमस्य
जग्राह नाग्रावगताङ्गहर्षैः ।

---

१ केत्यस्य कुत इत्यर्थे प्रयोगादप्रयुक्तत्वं दोषः । २ स्वाभाविक्याश्चेष्टाया वर्णनात्स्वभावोक्तिः, स्मरमेवेति रूपकम् । ३ अत्रानुप्रासः, वाञ्छयेवेत्युत्प्रेक्षा । एकासनादित्यनेन तासामभिन्नासनत्वमुक्तं, तेनैवैकरसत्वमुक्तमित्येकदैवैकात्मनोत्तस्थुरिति अनुरागातिशयो व्यज्यते, एकरसा इत्यत्र परिकरश्च ।

१ अत्रनिर्झरणीवेत्युपमा निर्झरणीति धाराधरकेलिकालमिति लिङ्गादिवैशिष्ट्यात् राज्ञा राज्ञश्चानन्दावसरो व्यज्यत इति समासोक्तिः । २ अत्रानुप्रासः, मग्नेति, विच्छिद्य विच्छिद्य बुद्धिधारां नादास्यदिति कथमपि मुह्यन्तीं बोधयित्वा कर्तव्यान्तरं शिक्षयतो व्यवहारप्रतीतेः समासोक्तिः, सर्वाण्येव तदीयान्यङ्गान्यतिशायितलावण्यान्यासन्निति प्रत्याय्यम् ।

सङ्गान्तरेऽनन्तरमीक्षिते तु
निवृत्य सस्मार न पूर्वदृष्टम् ॥ १० ॥

दृशेति ॥ सा दृशा आलिङ्गितं स्पृष्टमप्यस्य नलस्य प्रथमदृष्टादन्यदङ्गम् अग्रे प्रथमतोऽवगतानि दृष्टान्यङ्गानि तज्जनितैर्हर्षैरानन्दैर्हेतुभिर्न जग्राह । दृष्टमप्यङ्गं हर्षभरान्न ददर्शेत्यर्थः। हर्षानुभवादनन्तरं निमेषादिवशादङ्गान्तरे ईक्षिते तु पुनः निवृत्य परावृत्य पूर्वदृष्टं प्रथमदृष्टमङ्गं न सस्मार । प्रथमदृष्टादप्यनन्तरदृष्टस्याङ्गस्यातिरमणीयत्वात्, दृश्यमानाच्च प्रथमदृष्टस्यातिरम्यत्वात्, सुखपरवशत्वाद्व्याघुट्य प्रथमदृष्टमङ्गं न स्मृतवती । नालोकतेति भावः। अन्यत्र हि पूर्वदृष्टं स्मर्यते, अत्र तु नेत्याश्चर्यम्। पूर्वोक्त एव भावः ॥ १० ॥

हित्वैकमस्यापघनं विशन्ती
तद्दृष्टिरङ्गान्तरभुक्तिसीमाम् ।
चिरं चकारोभयलाभलोभा-
त्स्वभावलोला गतमागतं च ॥ ११ ॥

हित्वेति ॥ तस्या भैम्या दृष्टिः स्वभावलोला सती उभयोः प्रथमदृष्टानन्तरदृष्टयोरङ्गयोर्लाभः तत्र लोभाल्लोलुपत्वाद्धेतोः चिरं गतं गमनम्, आगतमागमनं च चकार । द्वयोरप्यङ्गयोरतिसौन्दर्याद्गतागताभ्यां विवेकं कर्तुमशक्ता द्वयमपि कर्तुं नाशकदिति भावः। किंभूता दृष्टिः—अस्य एकमपघनं अङ्गं हित्वाङ्गान्तरस्य भुक्तिरालोकनं तस्याः सीमां मर्यादां विशन्ती अङ्गान्तरमवलोकयन्ती। स्वभावलोलं च गमनागमने करोति । अन्योऽपि वणिग्देशान्तरस्थं वस्तु ग्रहीतुं स्वदेशस्थं विक्रेतुं गमनागमने करोति। 'अपघनोऽङ्गम् ३।३।८१' इति निपातः ॥ ११ ॥

निरीक्षितं चाङ्गमवीक्षितं च
दृशा पिबन्ती रभसेन तस्य ।
समानमानन्दमियं दधाना
विवेद भेदं न विदर्भसुभ्रूः ॥ १२ ॥

निरीति ॥ सा विदर्भसुभ्रूः भैमी तस्य नलस्य प्रथमं नितरां सादरमीक्षितमेकमङ्गम् अवीक्षितं विशेषाकारेणानवलोकितं चान्यदङ्गम्, दृशा रभसेनौत्सुक्येन हर्षेण पिबन्ती सादरं विलोकयन्ती सती किंचिद् दृष्टाङ्गदर्शनविषयेऽपि सादरं दृष्टाङ्गजनितानन्देन समानं तुल्यमानन्दं दधाना धारयन्ती किं सर्वं दृष्टम्, किं चेषद्दृष्टम्, यद्वा—किं सादरदृष्टम् किं च सर्वथैवादृष्टमित्युभयोर्भेदं तारतम्यं न विवेद । तुल्यसौन्दर्यत्वाद्द्वयोरपि दर्शने तुल्यानुरागाभूदिति भावः । लोकस्य दृष्टेऽनादरः, अदृष्टे चोत्साहो भवति, तथाऽत्र तु न, उभयोरपि लोकोत्तरत्वादिति भावः। अन्यापि योगिनी दृष्टं घटादि, अदृष्टं वागगोचरं श्रुतिगम्यं ब्रह्मस्वरूपं च दृशा ज्ञानेन किं सारं किमसारमिति सादरं विचारयन्ती घटादिनिरसनेन श्रुत्यादिप्रमाणगम्यमानन्दस्वरूपं ब्रह्मसाक्षात्कारदशायामङ्गीकरोतीत्युक्तिः ॥ १२ ॥

सूक्ष्मे घने नैषधकेशपाशे
निपत्य निस्पन्दतरीभवद्भ्याम् ।
तस्यानुबन्धं न विमोच्य गन्तु-
मपारि तल्लोचनखञ्जनाभ्याम् ॥ १३ ॥

सूक्ष्म इति ॥ तल्लोचनलक्षणाभ्यां खञ्जनाभ्यां तस्य केशपाशस्य सादरावलोकनलक्षणमनुबन्धं संबन्धम्, अथ च तन्निर्मितं बन्धनं विमोच्य त्यक्त्वा नापारि नाशाकि। किंभूताभ्याम्—सूक्ष्मे घने निबिडे च नैषधकेशपाशे सादरावलोकनार्थं निपत्य नितरां पतित्वा सादरावलोकनादेव निस्पन्दतरीभवद्भ्यां नेत्रसंकोचरहिताभ्याम्। खञ्जनोऽपि पाशे पतितो बन्धनं विमोच्य पदमपि चलितुं न शक्नोति । भैमीदृष्टिश्चिरकालं केशपाशमेवालोकतेति भावः । केशाः सूक्ष्मा घनाश्च । 'सूक्ष्माखुपाणिदशनाङ्गुलिपर्वकेशाः' इत्यादि लक्षणम् । 'पाशः कचान्ते सङ्घार्थः कर्णान्ते शोभनार्थकः । क्षत्राद्यन्ते च निन्दार्थः पाशः पक्ष्यादिबन्धने ॥' इति विश्वः ॥ १३ ॥

---

१ दृशो हस्तादेश्चाङ्गसाधारण्ये दृशाऽऽलिङ्गितत्वेऽङ्गेनालिङ्गितत्वं सम्पन्नमेव, अथापि तदभावोक्तिर्विरोधाभासः, अङ्गालिङ्गनस्य दृगालिङ्गनं हेतुमुक्त्वाऽपि तस्य कार्यस्यानुक्तत्वाद्विशेषोक्तिः अङ्गेति कथितपदत्वदुष्टम् । २ अत्रानुप्रासः । द्वयोरुपनायकयोरेकदोपगमे कामिन्या व्यवहारस्येव प्रतीतेस्समासोक्तिश्च ।

१ निरीक्षितानिरीक्षितस्वरूपे पानापानरूपस्य कार्यद्वयस्य कारणद्वये सत्यपि एकतरकार्योत्पत्तावेकतरकार्यानुत्पत्तौ वैगुण्यं स्थितमेव, अथापि तददर्शनाद्विशेषोक्तिः, एवं तथाभेदवेदनकारणसत्त्वेऽपि भेदवेदनरूपकार्यानुक्तिरित्यपि विशेषोक्तिः। २ केशपाशे इति लोचनखञ्जनाभ्यामिति च रूपकम् ।

भूलोकभर्तुर्मुखपाणिपाद-
पद्मैः परीरम्भमवाप्य तस्य।
दमस्वसुर्दृष्टिसरोजराजि-
श्चिरं न तत्याज सबन्धुबन्धम् ॥ १४ ॥

भूलोकेति ॥ दमस्वसुः भैम्याः दृष्टिसरोजराजिर्नेत्रकमलपङ्क्तिः तस्य भूलोकभर्तुर्नलस्य मुखपाणिपादलक्षणैः पद्मैः परीरम्भं संश्लेषमवाप्य सबन्धुबन्धं सगोत्रसंबन्धं सजातीयस्नेहं चिरं न तत्याज मुखादीनां कमलत्वात्सगोत्रत्वम्। अन्योऽपि चिराद्बन्धुभिरालिङ्गनं प्राप्य झटिति न मुञ्चति। भैमीदृष्टिर्नलमुखाद्यतिरमणीयत्वाच्चिरमालोकतेति भावः। सबन्धुः 'ज्योतिर्जनपदरात्रिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ६। ३।८५' इति सः 'सगन्ध—' इति पाठे 'सगन्धो बन्धुरुच्यते ॥१४॥

तत्कालमानन्दमयीभवन्ती
भवत्तरानिर्वचनीयमोहा।
सा मुक्तसंसारिदशारसाभ्यां
द्विस्वादमुल्लासमभुङ्क्त मिष्टम् ॥ १५ ॥

तत्कालमिति ॥ सा भैमी पूर्वोक्तक्रमेण मुक्तसंसारिणोः ये दशे अवस्थे तयो रसाभ्यां प्रीतिभ्यां कृत्वा द्वौ स्वादौ रसौ यत्र एवंविधं मिष्टमतिस्वाद्वतिबहुलमुल्लासं हर्षमभुङ्क्तानुबभूव। क्रममाह—किंभूता। तत्कालं तस्मिन्नलदर्शनकाले नलोऽयमिति बुद्ध्या आनन्दमयी आनन्दरूपा भवन्ती। तथा—सुरक्षितेऽन्तःपुरे नलागमनं कथमिति हेतोः अतिशयेन भवन् भवत्तरोऽतितरामनिर्वचनीयो लोकोत्तरो मोहो भ्रान्तिर्यस्याः। तद्दर्शनेनैवोत्पद्यमानमूर्छा वा। आनन्दरूपत्वं मुक्तदशा। 'आनन्दो ब्रह्मणो रूपम्' इति श्रुतेः। अनिर्वचनीयमोहवत्त्वं संसारिदशा। तुल्यकालमेव मुक्तसंसारिदशे तयाऽनुभूते इत्याश्चर्यं च। अभुङ्क्त इति लङ्। 'अभुक्त' इति पाठे लुङ् ॥ १५ ॥

१ अत्र पद्मैरिति, सरोजेति च रूपकम्, न तूपमा, सबन्धुबन्धमित्यस्योपमाप्रातिकूल्यात्। दृष्टिसरोजयोर्द्वित्वेऽपि राजित्वेन वचनं तद्वृत्यनेकत्वेन तयोरपि अनेकत्वमित्यभिप्रेत्यैवेति बोध्यम्। २ अत्र मुक्तत्वे संसारित्वमसिद्धं संसारित्वे च मुक्तत्वमिति कालभेदो वाच्यः, अथापि तदनुक्तावतिशयोक्तिरिति केचित्, विरोधाभास इत्येके, तुल्ययोगितेति परे।

दूते नलश्रीभृति भाविभावा
कलङ्किनीयं जनि मेति नूनम्।
न संव्यधान्नैषधकायमायं
विधिः स्वयं दूतमिमां प्रतीन्द्रम् ॥ १६ ॥

नलत्वनिश्चयं विना तत्रानुरक्ताया भैम्याः पातिव्रत्यभङ्गलक्षणामनौचितीमाशङ्क्य कविः परिहरति—

दूत इति ॥ विधिः इमां भैमीं प्रत्युद्दिश्य नैषधस्य कायो नलदेह एव माया यस्य एवंविधं कपटनलवेषधारिणमिन्द्रमेव स्वयं दूतं न संव्यधान्नाकरोत्। अपि तु इति हेतोः सत्यमेव नलं दूतमकरोत्, नूनमुत्प्रेक्षे। इति किम्—नलश्रीभृति नलकान्तिधारिणि दूते भाविभावा नलबुद्ध्यैव भविष्यदनुरागेयं भैमी नलव्यतिरिक्तेऽनुरागात्कलङ्किनी पातकिनी, अकीर्तिमती च मा जनि मा भूत्। कपटनलरूपधारणसामर्थ्ये सत्यपि इन्द्रो नलरूपं धृत्वा स्वीयदूत्यार्थं न गतवान्, तत्रेदमाकूतम्—ब्रह्मा भैम्याः पातिव्रत्यभङ्गो मा भूदितीन्द्राय बुद्धिं नादत्तेत्यर्थः। नलनिश्चयाभावेऽपि सत्य एव नलेऽनुरागान्न पातिव्रत्यक्षतिरिति भावः। 'जनिता' इति पाठे नूनं निश्चितं कलङ्किनी जनिता भविष्यतीति लुटा व्याख्येयम् ॥ १६ ॥

पुण्ये मनः कस्य मुनेरपि स्या-
त्प्रमाणमास्ते यदघेऽपि धावत्।
तन्निश्चिन्ति चित्तं परमेश्वरस्तु
भक्तस्य हृष्यत्करुणो रुणद्धि ॥१७॥

नन्वतिसुन्दरस्य नलस्यान्तःपुरे प्रवेशासंभवनिश्चयान्नलसदृशेऽन्यस्मिन्भैमीमनोवृत्तेः कथं पातिव्रत्यभङ्गप्रसङ्ग इत्याशङ्कां परिहरति—

पुण्य इति ॥ आस्तां भैमी, परित्यक्तविषयस्य मुनेरपि कस्य मनः पुण्ये विषये प्रमाणं निश्चितं स्यात्, अपि तु न स्यात्। कुतः—यद्यस्मात् अघेऽपि परदारगमनादौ पातकेऽपि विषये धावत् शीघ्रं गच्छत् आस्ते। मुनेर्मनः पुण्ये एव नियतं प्रवर्तत इति न, किंतु पातकेऽपि। तत्राप्ययं विशेषः—शीघ्रमविचार्यैव प्रवर्तते। एतच्च धावत्पदेन सूचितम्। शीघ्रगतावेव धावादेशविधानात्। अत्र तु नलस्य सत्यत्वाद्भैम्याः पातिव्रत्यरक्षणार्थं ब्रह्मैवं कृतवानिति। तर्हि सर्वेऽपि मुनयः पापिनः

१ नूनमित्युत्प्रेक्षा, कायमायमिति रूपकम्।

स्युरित्याशङ्कां परिहरति—परमेश्वरः तु पुनः हृष्यत्करुण उद्यत्कृपः सन् तच्चिन्ति तदर्थं चिन्तयति कर्तुमिच्छतीत्येवंशीले भक्तस्य चित्तं रुणद्धि पातकात्परावर्तयति। येषामुपरि रघुनाथकृपा ते पातके सर्वथैव न प्रवर्तन्त इति न सर्वेषां पातकित्वप्रसङ्ग इति तात्पर्यार्थः। अत्र श्रुतिश्च 'स उ एव साधु कर्म कारयति यं यमेभ्यो लोकेभ्यः उन्निनीषति' इति तच्चिन्ति परमेश्वरचिन्ति वा॥ १७॥

साऽलीकदृष्टे मदनोन्मदिष्णु-
यथाऽप शालीनतमा न मौनम्।
तथैव तथ्येऽपि नले न लेभे
मुग्धेषु कः सत्यमृषाविवेकः॥ १८॥

सेति॥ स्वभावतः शालीनतमाऽतिसलज्जापि मदनेनोन्मदिष्णुरुन्मादवती सती सा भैमी अलीकदृष्टे मिथ्यादृष्टे नले विषये यथा मौनं नाप यथा पूर्वं किमप्यवादीत् तथैव तथ्ये सत्येऽपि नले मौनं न लेभे। अलीकबुद्ध्यैव सत्येऽपि नलेऽवोचदित्यर्थः। तत्कथमित्याशङ्क्याह—मुग्धेषु मूढेषु सत्यस्य मृषा असत्यस्य विवेको विचारः कः? अपि तु न। अतो न धृष्टतया वचनं दोषायेति भावः। 'शालीनतया' इति वा पाठः। अपशालीनतयाऽपगतशालीनतया यथा मौनं न लेभे तथैव तथ्येऽपीति व्याख्येयम्॥१८॥

व्यर्थीभवद्भावपिधानयत्ना
स्वरेण साऽथ श्लथगद्गदेन।
सखीचये साध्वसबद्धवाचि
स्वयं तमूचे नमदाननेन्दुः॥ १९॥

व्यर्थीभवदिति॥ अथ सा भैमी स्वयमात्मना तं नलमूचे। क्व सति—सखीनां चये समूहे साध्वसेनान्तःपुरे परपुरुषप्रवेशाज्जातेन साध्वसेन कृत्वा बद्धा वाक् येन कृतमौने सति। किंभूता सा—श्लथो विरलः, गद्गदश्च छिन्नस्तेन स्वरेण शब्देन कृत्वा व्यर्थीभवन् भावपिधानयत्नः सात्त्विकभावगोपनप्रयासो यस्याः। तथा—अत एव नमन्नम्रीभूत आननेन्दुर्मुखचन्द्रो यस्याः सा। 'अथ स्वरेणैव विभावयन्ती भावं निजं सा मृदुगद्गदेन' इत्यपि पाठः। स्पष्टोर्थः॥१९॥

नत्वा शिरोरत्नरुचाऽपि पाद्यं
सम्पाद्यमाचारविदाऽतिथिभ्यः।
प्रियाक्षरालीरसधारयाऽपि
वैधी विधेया मधुपर्कतृप्तिः॥ २०॥

स्वधाष्टर्यं परिहरति—

नत्वेति॥ त्रिभिर्विशेषकम्। हे पुरुषश्रेष्ठ, आचारविदा सदनुष्ठानज्ञेन, धर्मशास्त्रविदा वा पुंसा नत्वा शिरोरत्नरुचा चूडामणिदीप्त्याऽप्यतिथिभ्यः पाद्यं पदार्थं वारि सम्पाद्यं देयम्। जलाभावे नत्याऽपि तावच्चरणक्षालनसम्भावना कर्तव्या। तस्या रत्नरुचो जलतुल्यत्वादित्यर्थः। आदौ नमस्कारः कर्तव्य इति भावः। 'आचारविदातिथिभ्यः' इति प्रतिवाक्यं श्लोकत्रयेऽपि ज्ञेयम्। वैधी विधिसंबन्धिनी नोदनावाक्यादागता मधुपर्कजन्या तृप्तिः प्रियाक्षराली प्रियवचनपङ्क्तिस्तस्या रसधारया माधुर्यधारयापि विधेया करणीया। मधुपर्कसामग्र्यभावे प्रियवचनमपि वक्तव्यमित्यर्थः। पाद्यं पूर्ववत्॥ २०॥

स्वात्माऽपि शीलेन तृणं विधेयं
देया विहायासनभूर्निजाऽपि।
आनन्दबाष्पैरपि कल्प्यमम्भः
पृच्छा विधेया मधुभिर्वचोभिः॥ २१॥

स्वात्मेति॥ आचारविदा शीलेन विनीतत्वादिना स्वभावेन सद्वृत्तेन वा कृत्वा स्वात्मापि स्वशरीरमपि तृणं विधेयम्। तृणं यथा नम्रीक्रियते, तथातिथीनामग्रे सेवार्थं स्वात्मापि नम्रीकर्तव्य इत्यर्थः। अथ च तृणाभावे स्वात्मैव तृणस्थाने विधेय इत्यर्थः। विष्टराद्यभावे निजापि स्वीयाप्यासनलक्षणा या भूः स्थानं सिंहासनादि तदप्यादराज्झटिति त्यक्त्वा विहाय देया। भूस्थाने आसनमेव कल्प्यमित्यर्थः। चरणक्षालनार्थं यदि जलं न संभवति तर्ह्यानन्दबाष्पैरपि हर्षाश्रुभिर-

१ तच्चिन्तीत्यादावर्थान्तरन्यासः। २ अत्रानुप्रासो यमकं च। मदनोन्मदिष्णुरिति परिकरः यथेति दृष्टान्तः, अपेरभावेऽपि शालीनतामा (अपि) मौनं नापेति विरोधाभासध्वनिः, मौनामौनयोः कारणभेदे सत्यपि एकात्मना कार्यस्योत्पत्त्युक्तेर्विशेषोक्तिः। मुग्धेष्वित्यर्थान्तरन्यासः।

१ आननेन्दुरिति उपमा, न तु रूपकम्, अभेदारोपस्यानुपयोगात्। २ अत्रानुप्रासः, रसधारोक्तेरानुगुण्याय प्रियाक्षराल्यास्तत्सम्भृतपात्रविशेषत्वमर्थत उक्तम्भवतीति तदंशे रूपकातिशयोक्तिश्च।

प्यम्भः कल्प्यम् । अतिथिदर्शनमात्रेण हृष्टेन भवितव्यमित्यर्थः । अथ च जलस्थाने आनन्दवाष्पा एव कल्प्या इत्यर्थः । मधुभिरतिप्रियैर्वचोभिः पृच्छापि कुशलप्रश्नोऽपि विधेया । प्रियं वक्तव्यमित्यर्थः । मधुपर्कस्थाने मधुरं वचनमेव कर्तव्यमित्यर्थः । आचारवशान्मयापि प्रियवचनादि क्रियत इति भावः । 'शीलं स्वभावे सद्वृत्ते' इति विश्वः । 'अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः' इति स्मृतेः । पृच्छा पूर्ववर्त् ॥ २१ ॥

पदोपहारेऽनुपनम्रताऽपि
सम्भाव्यतेऽपां त्वरयाऽपराधः ।
तत्कर्तुमर्हाञ्जलिसञ्ज्ञनेन
स्वसंभृतिः प्राञ्जलताऽपि तावत् ॥२२॥

पदेति ॥ पदोपहारे चरणक्षालनविषये त्वरया झटिति अपामनुपनम्रता जलानामनानयनमपि अपराधः सम्भाव्यते यतो लोकेनेत्यर्थात् विलम्बादानयनेऽपि झटित्यनानयनाद्यतोऽपराधः संभाव्यते तत्तसादाचारविदा अञ्जलिसञ्ज्ञनेन करपुटसंयोजनेन कृत्वा स्वस्य सम्भृतिरूपा स्वकरणीयातिथ्यसामग्री यावत्सम्पाद्यते, तावदञ्जलिसंयोजनेन स्वीया प्राञ्जलता ऋजुता कर्तुमर्हा । प्रकटीकर्तुमुचितेत्यर्थः । तावतापि पूर्वापराधशान्तिर्भवतीति भावः । यावत्स्वसंभृतिः स्वकरणीयातिथ्यसामग्री संपाद्यते तावदञ्जलिसञ्ज्ञनेन प्राञ्जलतापि कर्तुमर्हेति वान्वयः । यद्वा—अपां त्वरया जलानयनार्थं संभ्रमेणानुपनम्रता नमस्काराभावोऽपराधः संभाव्यते । जलानयनात्पूर्वं कृतेन नमस्कारेण सर्वोप्यातिथ्यसंभारः कृतो भवतीत्यर्थः । तया एतत्सर्वं कृतमिति तात्पर्यम् । प्राञ्जल इति 'अचू प्रत्यन्वव—' इत्यत्र अच् इति योगविभागात्पद्मनाभ इतिवत्समासान्त इति ज्ञेयम् ॥ २२ ॥

पुरा परित्यज्य मयाऽत्यसर्जि
स्वमासनं तत्किमिति क्षणं न ।
अनर्हमप्येतदलङ्क्रियेत
प्रयातुमीहा यदि चान्यतोऽपि ॥ २३ ॥

पुरेति ॥ अर्थात्पूर्वोक्ताचारदर्शनादाचाराच्च पुरा आदावेव मया स्वमासनं परित्यज्य अत्यसर्जि भवते दीयते स्म तदेतदनर्हमपि योषिदासनत्वाद्राजानर्हत्वादयोग्यमप्यासनं क्षणं क्षणमात्रं किमिति कुतो हेतोः नालङ्क्रियेत । किंत्वलङ्क्रियतामित्यर्थः । यदि च यद्यपि अन्यतोऽपि प्रयातुमन्यदेशमपि गन्तुम् ईहा वाञ्छा विद्यते । तथाप्येतदलंक्रियतामित्यर्थः । त्वामेवोद्दिश्यागतमिति चेत् । न ममैतादृग्भागधेयाभावात् । अन्यत्र गमनेच्छायामपि क्षणमात्रमलंक्रियतामित्यर्थः । क्रियेत, प्रार्थनायां लिङ् ॥ २३ ॥

निवेद्यतां हन्त समापयन्तौ
शिरीषकोषम्रदिमाऽभिमानम् ।
पादौ कियद्दूरमिमौ प्रयासे
निधित्सते तुच्छदयं मनस्ते ॥ २४ ॥

निवेद्यतामिति ॥ ( हे पुरुषश्रेष्ठ ) तुच्छदयं कृपाशून्यं ते मनः कियद्दूरं किम्परिमाणं दूरगमनलक्षणे प्रयासे इमौ पादौ निधित्सते हन्त इत्यनुकम्पया निवेद्यतां, मदग्रे कथ्यताम् । किम्भूतौ—शिरीषाणां शिरीषपुष्पाणां कोषः समूहस्तस्य म्रदिम्नि मार्दवविषये योऽभिमानः मत्तोऽधिकं कोमलं वस्तु नास्त्येवेति यो गर्वस्तद्विषये लोकस्य वा गर्वः तं समापयन्तौ नाशयन्तौ । अन्योऽपि निष्कृपः पुरुषः सुकुमारं जनं प्रयासे प्रेरयति । अत्रागमनेनैव श्रान्तोसि, इदानीमितः क्व गन्ताऽसीति भावः । 'शून्यं तु वशिकं तुच्छरिक्तके' इत्यमरः ॥ २४ ॥

अनायि देशः कतमस्त्वयाऽद्य
वसन्तमुक्तस्य दशां वनस्य ।
त्वदाप्तसंकेततया कृतार्था
श्रव्याऽपि नानेन जनेन संज्ञा ॥ २५ ॥

अनायीति ॥ त्वया अद्य कतमः किंसञ्ज्ञको देशो वसन्तेन मुक्तस्य वनस्य त्यक्तस्य दशामवस्थामनायि प्रापितः । वसन्तेन विना यथा वनं निःशोभं, तथा त्वया विना स देशोऽपीत्यर्थः । कस्माद्देशादागतोऽ-

---

१अत्रानुप्रासः स्वात्मा तृणमित्यादिना अभेदनिरूपणस्य अपिना निराकृतप्रतिष्ठत्वान्न रूपकम् । भैम्युक्तौ कल्प्यमिति कठोरपदप्रयोगोऽत्यन्तं दुःश्रवत्वग्रस्तम् । २ अनुप्रासः । तदिति हेतोरुपन्यासात् काव्यलिङ्गम् ।

१ न्यस्तेति वाच्यम् । २ अत्र पादयोः शिरीषपुष्पादपि मृदुलत्वस्यासम्भवेऽपि सम्भवोक्तेरतिशयोक्तिः । अन्यस्यान्यसाध्यसाधकत्वामोगेऽपि सादृश्योद्भावनाय तथानिर्देशान्निदर्शना ।

सीति कथयेति भावः । तथा—अनेन मल्लक्षणेन जनेन त्वयि आप्तः विषयं प्राप्तः सङ्केतः समयः सम्बन्धो यया तस्या भावेन हेतुना कृतार्था चरितार्था सञ्ज्ञापि नामापि न श्रव्या ? अपि तु श्रोतुमर्हा । स्वनामापि कथयेत्यर्थः । श्रव्या, आवश्यकाभावात् 'अचो यत् ३।१।९७' इति यत् ॥ २५ ॥

तीर्णः किमर्णोनिधिरेव नैष
सुरक्षितेऽभूदिह यत्प्रवेशः ।
फलं किमेतस्य तु साहसस्य
न तावदद्यापि विनिश्चिनोमि ॥ २६ ॥

तीर्ण इति ॥ ( हे नरश्रेष्ठ ) सुरक्षिते इह अन्तःपुरे तव प्रवेशोऽभूदिति यत्, एष अर्णोनिधिः समुद्र एव किं न तीर्णः ? किं तु बाहुभ्यामर्णवतरणतुल्य इति एतस्यान्तःपुरप्रवेशरूपस्य साहसस्याविचार्यकारित्वस्य तु पुनः किं फलं प्रयोजनमित्यद्यापीदानीमपि न विनिश्चिनोमि । किमर्थमत्रागतामित्यपि कथयेत्यर्थः ॥ २६ ॥

तव प्रवेशे सुकृतानि हेतु-
र्मन्ये मदक्ष्णोरपि तावदत्र
न लक्षितो रक्षिभटैर्यदाभ्यां
पीतोऽसि तन्वा जितपुष्पधन्वा ॥२७॥

तवेति ॥ तव अत्र प्रवेशे मदक्ष्णोर्मदीयनेत्रयोः सुकृतानि पुण्यान्यपि तावदादौ हेतुः कारणमित्यहं मन्ये । । कारणान्तरे सम्भवत्यपि मन्नेत्रपुण्यमादिकारणमित्यर्थः । कथमित्यत आह—यद्यस्मात् रक्षिभटैरतिसुन्दरस्त्वं न लक्षितः । तथा—तन्वा वपुषा जितः पुष्पधन्वा कामो येन एवंभूतो यत् आभ्यां नेत्राभ्यां पीतोऽसि स्वेच्छयाऽवलोकितोऽसीत्यर्थः । रक्षणार्थमेव नियुक्तैः शूरैर्न दृष्टः; आभ्यां च दृष्टः, तत्र मन्नेत्रपुण्यमेवात्र प्रवेशे हेतुरिति भावः ॥ २७ ॥

यथा कृतिः काचन ते यथा वा
दौवारिकान्धङ्करणी च शक्तिः ।
रुच्यो रुचीभिर्जितकाञ्चनीभि-
स्तथाऽसि पीयूषभुजां सनाभिः ॥२८ ॥

यथेति ॥ यथा येन कारणेन ते आकृतिराकारः काचन लोकोत्तराऽतिरमणीया । यथा वा ते काचन अपूर्वा शक्तिश्च दौवारिकाणां रक्षकाणामन्धंकरण्यन्धताकारिणी । स्वीयगौरत्वेन जिता काञ्चनी हरिद्रा याभिस्ताभी रुचीभिः कान्तिभिः कृत्वा रुच्योऽभिलाषयोग्योऽसि । तथा तेन कारणेन पीयूषभुजां देवानां सनाभिः सगोत्रोऽसि । देवत्वेन विनैतन्न घटतेऽतः प्रायस्त्वं कश्चन देवोऽसीति मन्ये । चकारो रुच्य इत्यनेन योज्यः । रुच्यश्चासि यथा इति सम्बन्ध इति वा । 'निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी' इत्यमरः 'काञ्चना' इति पाठे सुवर्णम् । दौवारिक इत्यत्र 'द्वारे नियुक्तः' इत्यर्थे 'तत्र नियुक्तः ४ । ४ । ६९' इति ठकि 'द्वारादीनां च १ । ३ । ४' इत्यैचि, अभूततद्भावे 'आढ्यसुभग० ३।२।५६' इति ख्युनि खित्वात्पूर्वपदस्य मुमि इति'नञ्स्नञीकक् ख्युंस्तरुणतलुननाम्'(वा.) ङीप् । रुचिमर्हति रुच्यः । 'तदर्हति ५ । १ । ६३' इति यत् । 'राजसूयसूर्यमृषाद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः १ । ११ । ४' इति निपातो वा । 'जितकाञ्चनीभिः' इति पाठे समासान्तविधेरनित्यत्वात् 'नद्यृतश्च ५ । ४ ।१५३'इति न कप् । सनाभिः, 'ज्योतिर्जनपदरात्रिः६ ।३ । ८५ । इति समानस्य सभावः ॥ २८ ॥

न मन्मथस्त्वं स हि नास्तिमूर्ति-
र्नचाश्विनेयः स हि नाद्वितीयः ।
चिह्नैः किमन्यैरथवा तवेयं
श्रीरेव ताभ्यामधिको विशेषः ॥ २९ ॥

नेति ॥ त्वं मन्मथो न । हि यतः स कामो नास्तिमूर्तिरशरीरी।त्वम् आश्विनेयोऽश्विनीकुमारश्च न।चोऽप्यर्थः।हि यतः सः अद्वितीयो नास्ति, किंतु द्वितीयसहितः त्वं सशरीर एककश्च । अथवेति पूर्वापरितोषे । अन्यैश्चिह्नैः किम् ? आपितु न किमपि । किंतर्हि—ताभ्यां कामाश्विनेयाभ्यां सकाशादधिका तव इयं श्रीः शोभैव विशेषः । तयोरीदृक्शोभाभावादियमेव तदन्यत्वज्ञापि-

---

१ अत्रानुप्रासः किमित्युत्प्रेक्षा । २ अत्र यत् प्रवेशोऽभूत् एष किलार्णवतरणसमापनमिति विरूपोक्तेः सादृश्यपर्यवसानपरतया निदर्शना । ३ अत्र जितेति व्यतिरेकः प्रतीपं च, न लक्षितइति काव्यलिङ्गम् । ४ 'यथा वा' इत्यत्र 'तथैव' इति पाठान्तरम् ।

१ जितेति प्रतीपं व्यतिरेकश्च, सनाभिरित्युपमा ।

केत्यर्थः । नास्तिमूर्तिः, 'अस्तिक्षीरादयश्च' इतिवद् बहुव्रीहौ पश्चान्नञ्कारेण समासः ॥ २९ ॥

आलोकतृप्तीकृतलोक! यस्त्वा-
मसूत पीयूषमयूखमेनम्।
कः स्पर्धितुं धावति साधु सार्ध-
मुदन्वता नन्वयमन्ववायः ॥ ३० ॥

आलोकेति ॥ हे आलोकेन दर्शनेन तृप्तीकृतः कृतार्थीकृतो लोको येन तत्संबोधनम् । यः त्वाम् एवं त्वद्रूपं पीयूषमयूखं चन्द्रमसूत स कः ! अयमन्ववायो वंश उदन्वता सार्धं स्पर्धितुं स्पर्धां कर्तुं साधु युक्तं धावति । समुद्रसाम्यार्थं झटिति बुद्ध्युपारूढो भवतीत्यर्थः। समुद्रोऽप्यालोकेन प्रकाशेन तृप्तीकृतभुवनं सुधाकरं सूते। कस्मिन्वंशे समुत्पन्नोऽसीत्यपि कथयेति भावः । 'आलोको दर्शनोद्योतौ', 'लोकस्तु भुवने जने' इत्यमरः ॥ ३० ॥

भूयोऽपि बाला नलसुन्दरं तं
मत्वाऽमरं रक्षिजनाक्षिबन्धात्।
आतिथ्यचाटून्यपदिश्य तस्थां
श्रियं प्रियस्यास्तुत वस्तुतः सा ॥ ३१ ॥

भूयोऽपीति ॥ सा बाला तं नलं रक्षिजनानां दौवारिकाणामक्षिबन्धान्नेत्रबन्धनात् अदृष्टीकरणान्नलवत्सुन्दरं नलसदृशममरं देवं मत्वा निश्चित्य आतिथ्यसम्बन्धीनि चाटूनि प्रियवचनान्यपदिश्य व्याजीकृत्य तद्व्याजेन तस्थां तस्मिन्नमरे विद्यमानां प्रियस्य नलस्य श्रियं शोभां वस्तुतस्तत्त्वतः अस्तुत पुनरपि वर्णयति स्म । प्रियवचनव्याजेन तत्त्वतो नलशोभावर्णनतत्परैव बभूवेति भावः ॥ ३१ ॥

१ अत्र न मन्मथस्त्वमित्यादौ मन्मथत्वेन प्रतीतिस्तावदित्यनुक्तमप्युक्तमिव प्रतिभाति, तदपह्नवनादपह्नुतिः, 'स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः।' इति चन्द्रालोककारोक्तेः । २ अत्र यमकं, लोकेत्यस्य पुनर्न्यासात्, वर्णान्तरसाम्यभूयस्त्वेनानुप्रासश्च । पीयूषमयूखमिति रूपकम्, उदन्वता स्पर्धितुं वंशस्य धावनायोग्यत्वेऽपि तथोक्तेरुपमाघटकत्वान्निदर्शना चार्थालङ्कारः । ३ अत्र स्तुतेति यमकम्, मत्वेति हेतूत्प्रेक्षा, तस्थामित्यनेन तथाऽमरविशेषत्वे सम्भाव्यमानेऽपि नलश्रियो नल एव सम्भव इति उपमानान्तरनिराकरणे द्योत्यमाने व्यतिरेकः प्रतीयते ।

वाग्जन्मवैफल्यमसह्यशल्यं
गुणादभुते वस्तुनि मौनिता चेत्।
खलत्वमल्पीयसि जल्पिते तु
तदस्तु बन्दिभ्रमभूमितैव ॥ ३२ ॥

पुनरपि किमित्यस्तुतेत्याशङ्क्य कविराह—

वागिति ॥ गुणैरद्भुते आश्चर्यभूते वस्तुनि मौनिता मूकीभावश्चेत् गुणाद्भुतं वस्तु न वर्ण्यते चेत्, तर्हि वाग्जन्मनो वैफल्यमसह्यशल्यमतिदुःखदायि दुःसहशल्यतुल्यं भवतीत्यर्थः । मूकस्य तस्य च न कोऽपि विशेष इत्यर्थः । तद्व्यल्पमेव वक्तव्यमित्यत आह—अल्पीयसि जल्पिते तु भाषिते तु खलत्वं दुर्जनत्वमायाति लोकस्तं दुर्जन इति वदति । तस्माद्बन्दिनः स्तुतिपाठकस्य यो भ्रमः स्तुतिपाठकोऽयमिति भ्रान्तिस्तस्या भूमितैव स्थानतैवास्तु युक्ता भवतु। गुणाद्भुतं वस्तु बह्वेव वर्णनीयमिति कवेरुपदेशवचः। तस्मात्तया युक्ता स्तुतिरारब्धेति भावः। तस्मान्मयि स्तुतिपाठकभ्रान्तिर्लोकस्य भवत्विति भैमीवचो वेति भावः ॥ ३२ ॥

कन्दर्प एवेदमविन्दत त्वां
पुण्येन मन्ये पुनरन्यजन्म ।
चण्डीशचण्डाक्षिहुताशकुण्डे
जुहाव यन्मन्दिरमिन्द्रियाणाम्॥ ३३॥

कन्दर्प इति ॥ कन्दर्प एव महता पुण्येन त्वामेवत्वद्रूपमेव इदं दृश्यमानं पुनरप्यन्यजन्माविन्दत लेभ इत्यहं मन्ये जाने। कुतः—यद्यस्मात्स मदनः चण्डीशः शिवः, तस्य चण्डं दुःसहमक्षि तृतीयं नेत्रं तल्लक्षणं यद्धुताशकुण्डं तस्मिन्निन्द्रियाणां मन्दिरं गृहं शरीरं जुहाव । पूर्वापेक्षयाधिकसौन्दर्यप्राप्त्याशया बुद्धिपूर्वं कामेनाग्निकुण्डे स्वशरीरं क्षिप्तं, तेनैव पुण्येन त्वद्रूपं जन्म प्राप्तम् । अन्येनापि तथैव क्रियते । स एव त्वमिति भावः ॥ ३३ ॥

१ वाग्जन्मवैफल्यस्यासह्यशल्यत्वेन रूपणाद्रूपकम्, एवं चेत्तदिति हेतुहेतुमद्भावोपन्यासात् काव्यलिङ्गम् । २ अत्रानुप्रासः शब्दालङ्कारः, मन्य इत्युत्प्रेक्षा चण्डाक्षिहुताशेति रूपकम्, त्वत्पदार्थस्य कन्दर्परूपत्वाभावे वास्तविकभेदं ज्ञायमानमप्यपह्नुत्य यथोक्तेरपह्नुतिः,पूर्वोक्तस्य समर्थनाय पराद्धस्यहेतुत्वेन वचनात् काव्यलिङ्गम् ।

शोभायशोभिर्जितशैवशैलं
करोषि लज्जागुरुमौलिमैलम् ।
दस्रौ हठश्रीहरणादुदस्रौ
कन्दर्पमप्युज्झितरूपदर्पम् ॥ ३४ ॥

शोभेति ॥ त्वं शोभायशोभिः कान्तिकीर्तिभिः कृत्वा जितः शैवो हरसम्बन्धी शैलः कैलासो येन एवंविधम् ऐलं पुरूरवसं हठेन बलात्कारेण श्रीहरणाच्छोभाग्रहणाल्लज्जया गुरुर्नम्रो मौलिः शिरो यस्य एवंविधं करोषि । गुरुर्हि नमतीति गुरुपदमपि नम्रवचनः तथा—कान्तिकीर्तिभिः जितकैलासौ दस्रावाश्विनेयावपि हठश्रीहरणादुदस्रौ गलद्बाष्पौ करोषि । तथा—तस्मादेव हेतोः कन्दर्पमप्युज्झितस्त्यक्तो रूपदर्पः सौन्दर्यगर्वो येन एतादृशं करोषि । चतुर्भ्योऽपि त्वमधिकं सुन्दरतर इति भावः । अन्योऽपि बलाद् गृहीतधनः सलज्जो गलद्बाष्पस्त्यक्तदर्पश्च भवति ॥ ३४ ॥

अवैमि हंसावलयो वलक्षा-
स्त्वत्कान्तिकीर्तेश्चपलाः पुलाकाः ।
उड्डीय युक्तं पतिताः स्रवन्ती-
वेशन्तपूरं परितः प्लवन्ते ॥ ३५ ॥

अवैमीति ॥ लक्षा धवला हंसावलयो हंसपङ्क्तयः त्वत्कान्तेस्त्वत्सौन्दर्यस्य या कीर्तिर्यशस्तस्या चपलाश्चञ्चलाः प्रसरणशीलाः पुलाकास्तुच्छधान्यांशा इत्यहं जाने । 'वलाकाः' इति पाठे ताश्चेति व्याख्येयम् । पुलाकत्वं समर्थयते—अत एव ता उड्डीयोत्पत्य स्रवन्तीनां नदीनां वेशन्तानां पल्वलानां च पूरं प्रवाहं परित उभयतः पतिताः सत्यः युक्तं प्लवन्ते । यत्प्लवन्ते तदुचितमित्यर्थः । पुलाका अप्यतिलघुत्वादुत्पत्य नद्यादौ पतिताः सन्तो गौरवाभावात्तरन्ति । तस्माद्धंसादीनां पुलाकत्वं घटत इत्यर्थः । शुभ्रा हंसावलयो न, किंतु त्वत्कान्तिकीर्तेः पुलाकाः सर्वत्रोड्डीय पतिताः सत्यो नदरिल्पसरांसि च पूरयित्वा प्लवन्ते । ईदृक् सुन्दरतरः कोऽपि न दृष्ट इति भावः । 'वलक्षो धवलोऽर्जुनः', 'स्यात्पुलाकस्तुच्छधान्ये''वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। पूरं परितः 'अभितःपरितः समयानिकषाहाप्रतियोगेऽपि,इति (वा.) द्वितीया ॥ ३५ ॥

१ अत्रानुप्रासस्तावद् स्फुटः शब्दालङ्कारः, जितेति प्रतीपम् । २ अवैमीत्युत्प्रेक्षा, हंसावलयः पुलाका इति रूपकम् ।

भवत्पदाङ्गुष्ठमपि श्रिता श्री-
र्ध्रुवं न लब्धा कुसुमायुधेन ।
रतीशजेतुः खलु चिह्नमस्मि-
न्नर्धेन्दुरास्ते नखवेषधारी ॥ ३६ ॥

भवदिति ॥ मकरध्वजेन भवत्पदस्य भवच्चरणस्याप्यवयवभूतोऽङ्गुष्ठः, तमपि श्रिता श्रीः शोभा तस्मात्कारणात् ध्रुवं प्रायेण न लब्धा । अन्यावयवशोभाप्राप्तेः का वार्ता । तस्मात् कुतः—खलु यस्मात् अस्मिन्नङ्गुष्ठे नखवेषं नखव्याजं धारयतीति नखवेषधारी दधत् अर्धेन्दुरर्धचन्द्रलक्षणं रतीशजेतुर्महादेवस्य चिह्नमास्ते विद्यते । स्वशत्रुचिह्नं नखरूपमर्धेन्दुं विलोक्य तद्गतां श्रियं ग्रहीतुं बिभेतीत्यर्थः । अन्योऽपि स्वशत्रुचिह्नं दृष्ट्वा तच्छ्रियं ग्रहीतुं न शक्नोति । कामस्त्वत्पादाङ्गुष्ठनखसदृशोऽपि न भवतीति भावः । कामजयिनमीशमपि जित्वा तच्चिह्नं येनापहृतं तस्याङ्गुष्ठस्य श्रियं कामः कथं लभेतेति भावः. 'त्वदङ्गुष्ठः कामस्य जेता, अर्धचन्द्राङ्कितत्वाच्छया शिवः' इत्यनुमानमत्र प्रमाणमित्यर्थः । त्वन्नखाश्चन्द्राकारा इति रतीशजेतुः, शेषषष्ठीसमासः ॥ ३६ ॥

राजा द्विजानामनुमासभिन्नः
पूर्णां तनूकृत्य तनूं तपोभिः ।
कुहूषु दृश्येतरतां किमेत्य
सायुज्यमाप्नोति भवन्मुखस्य ॥ ३७ ॥

राजेति ॥ अनुमासं प्रतिमासं भिन्नः पुनरुत्पद्यमानत्वादन्य एव द्विजानां राजा चन्द्रः पूर्णिमायां पूर्णां तनूं शरीरं चान्द्रायणादितपोभिरिव तनूकृत्य क्षयं नीत्वा कुहूषु प्रतिमासामावास्यासु दृश्येतरतामदृश्यत्वमेत्य प्राप्य भवन्मुखस्य सायुज्यमैक्यम् आप्नोति गच्छति किम् । तपःसामर्थ्येन त्वन्मुखैक्यगतः किं ? किंतु न गत इत्यर्थः ।एवं च तपोभिरपि सायुज्यं प्राप्तुं दुःशकमिति द्योतितम् । चन्द्रादप्याधिकं भवन्मुखमिति भावः । अन्योऽपि ब्राह्मणश्रेष्ठः पूर्वसंस्कारवशात्तपोभिः शरीरं कृशीकृत्य ब्रह्मैक्यं गन्तुमीहते किं तु तन्न तपोभिर्लभ्यते, किंतु 'ज्ञानादृते न मुक्तिः' इत्यन्येनैवोपायेनेति सूचितम्भवति । 'दृश्येतरतामिषेण' इति क्वचित्पाठः ॥ ३७ ॥

१ध्रुवमित्युत्प्रेक्षा,नखवेषधारीत्यपह्नुतिश्च २ अत्रानुप्रासः शब्दानुप्रासः । सायुज्यमाप्नोतीति न तावत्सायुज्यं लब्धम्, किमित्यनेन लब्धमपि दुःशकमिति तस्योपमानत्वसम्भावनानिराकारणात्प्रतीपं व्यज्यते, सायुज्यलाभाय तपश्चर्यायां प्रवृत्तस्य ब्राह्मणश्रेष्ठस्य वृत्तप्रतीतिश्च समासोक्तिः ।

कृत्वा दृशौ ते बहुवर्णचित्रे
किं कृष्णसारस्य तयोर्मृगस्य ।
अदूरजाग्रद्विदरप्रणाली-
रेखामयच्छद्विधिरर्धचन्द्रम् ॥ ३८ ॥

कृत्वेति ॥ विधिः ते दृशौ बहुभिर्वर्णैः कृष्णशुक्लरक्तरूपैश्चित्रे नानावर्णे, आश्चर्यरूपे च कृत्वा कृष्णवर्ण एव सारः श्रेष्ठोऽशो विद्यते यस्मिन्नेतादृशस्य मृगस्य तयोर्दृशोरदूरे निकटे जाग्रती स्फुरन्ती विदररूपा नेत्राधोगर्तरूपा प्रणाली रेखा तामेवार्धचन्द्रमयच्छद्दत्तवान् किम् । त्वन्नेत्रसादृश्याभिलाषिण्योर्मृगदृशोरधोवर्तमानगर्तमिषेण धिक्कारसूचनार्थं परीक्षको ब्रह्मा गलहस्तं दत्तवान् । 'विदरः स्फुटनं भिदा' इत्यमरः ॥ ३८ ॥

मुग्धः स मोहात्सुभगान्न देहा-
द्ददद्भ्रुवक्र्रचनाय चापम् ।
भ्रूभङ्गजेयस्तव यन्मनोभू-
रनेन रूपेण यदातदाभूत् ॥ ३९ ॥

मुग्ध इति ॥ यद्यस्माद् यो मनोभूः कामः भवद्भ्रुवो रचनाय निर्माणाय ब्रह्मणे स्वं चापं ददत्प्रयच्छन् यदातदा सर्वदा अनेन प्रत्यक्षदृश्येन रूपेण सौन्दर्येण हेतुना तव भ्रुवोर्भङ्गः कौटिल्यं तन्मात्रेण जेयो जेतुं योग्यो जेतव्यमात्रकोऽभूत्, तस्मात्कारणात्स कामो मोहादज्ञानान्मुग्धो मूर्खो, न तु सुभगात्सुन्दराद्देहाद्धेतोर्मुग्धः सुन्दरः । यः स्वीयमायुधं स्ववैरिणे प्रयच्छति स निरायुधत्वाद्धेलया वैरिणा जेतुं शक्यते । तस्मात्कामो मुग्धो मूर्खो, न तु सुन्दरः । उन्मादकत्वात्तदाकारत्वाच्च त्वद्भ्रुवौ कामचापे इति भावः । यदातदेति समुदायस्य सर्वदेत्ययमेवार्थः । 'मुग्धः सुन्दरमूढयोः' इति विश्वः ॥ ३९ ॥

मृगस्य नेत्रद्वितयं तवास्ये
विधौ विधुत्वानुमितस्य दृश्यम् ।
तस्यैव चञ्चत्कचपाशवेषः
पुच्छः स्फुरच्चामरगुच्छ एषः ॥४०॥

मृगस्येति ॥ तवास्ये विधौ मुखरूपे चन्द्रे 'विमतो मृगवान् चन्द्रत्वात्, संमतवत्' इति विधुत्वेन हेतुनानुमितस्यानुमानगम्यस्य मृगस्य नेत्रद्वितयं नेत्रद्वयं दृश्यम्। दृश्यत इत्यर्थः । तस्यैव मृगस्य चञ्चन्विलसन्कचपाशः केशपाशः तस्य वेष आकारो व्याजो यस्यैवंविध एष पुच्छः स्फुरन् चामरगुच्छो यस्य स्फुरच्चामरस्तबकयुक्तो दृश्यः, न तु केशपाश इत्यर्थः । चन्द्रतुल्यं मुखम्, मृगनेत्रतुल्ये नेत्रे, स्फुरच्चामरगुच्छपुच्छसदृशश्च केशपाशः । अलंकारार्थं चामरगुच्छः पुच्छे वध्यते । अत्र हरिणविशेषो ज्ञातव्यः ॥ ४० ॥

आस्तामनङ्गीकरणाद्भवेन
दृश्यः स्मरो नेति पुराणवाणी ।
तवैव देहं श्रितया श्रियेति
नवस्तु वस्तु प्रतिभातिवादः ॥ ४१ ॥

आस्तामिति ॥ इति पुराणवाणी पुराणानां पुरातनानाम्, पुराणी च जीर्णा वाग्, आस्तां तिष्ठतु । किम्—स्मरो भवेन शिवेनानङ्गीकरणादशरीरकरणाद्धेतोः दृश्यो न नयनगोचरो नेति । तु पुनः तव देहं श्रितया श्रिया शोभयैव कर्त्र्या अनङ्गीकरणात्कामस्वाश्रयत्वेनास्वीकाराद्धेतोर्न दृश्यः नयनागोचरः । अथ च तेनैव हेतुना दृश्यो रमणीयो न भूत इति नवो नूतनतोऽपूर्वश्च वादो वचनं वस्तु सत्यभूतः वस्तु तत्त्वं वा प्रतिभाति स्फुरति । कामस्त्वच्छोभया जितत्वाददृश्यो जातो, न तु दग्धत्वादिति तत्त्ववादः । कामादपि सुन्दरोऽसीति भावः । नवः प्रतिभाया अतिवादोऽतिशय इति वा । वाणी स्त्री जीर्णा, वादस्तु पुमान्नवश्च, अनयोर्महदन्तरमित्यर्थः । त्वद्देहाश्रितया शोभया हेतुना शोभादर्शनमात्रेणादृश्यो जात इति वा ॥ ४१ ॥

त्वया जगत्युञ्छितकान्तिसारे
यदिन्दुनाऽशीलि शिलोञ्छवृत्तिः ।
आरोपि तन्माणवकोऽपि मौलौ
स यज्वराज्येऽपि महेश्वरेण ॥ ४२ ॥

१ अत्र किमित्युत्प्रेक्षा, विदरप्रणालीति, रेखार्धचन्द्रमिति च रूपकम् । २ अत्र मुग्धत्वसमर्थकं यद्दित्यादीति काव्यलिङ्गम् ।

१ अत्रानुप्रासः । आस्ये विधाविति रूपकम् । वेष इत्यपह्नुतिश्च । २ अत्र स्मरस्य शरीरित्वायोगेऽपि तथोक्तेरतिशयोक्तिरित्येके, स्मरोऽनङ्गत्वेन न दृश्य इति वस्तुस्थितिमपह्नुत्य श्रिया त्वद्देहमुपाश्रित्य नवो लोकोत्तरसौन्दर्यो जात इति स्थापनादपह्नुतिरित्यपरे । तवैवेति उपमानान्तरव्यवच्छेदः, तेन स्मर इव भवानिति सम्भावनायास्तावद्दूरमपासनाद् व्यतिरेकस्य प्रतीपस्य वा ध्वनिः, एतयोर्वा सन्देहसङ्कर इति दिक् ।

त्वयेति ॥ त्वया उचितो गृहीतः कान्तिसारः शोभाश्रेष्ठभागो यस्य यस्माद्वा एवंविधे जगति भुवने मध्ये इन्दुना शिलं चोञ्छश्च क्षेत्रादिपतितकणादानधान्यादानलक्षणौ शिलोञ्छौ तावेव वृत्तिर्जीविका यद्यस्मादशीलि अभ्यस्ता कृता तत्तस्मात्कारणान्महेश्वरेण माणवकोऽपि बालः कलारूपोऽपि स चन्द्रो मौलौ शिरस्यारोपि धृतः, यज्वनां याजकानां राज्येऽपि चाभिषिक्तः। द्विजराजोऽपि तत एव कृत इत्यर्थः। त्वद्गृहीतात्कान्तिसारादवशिष्टं कान्तिभागं कथंचिन्मेलयित्वा चन्द्रेण स्वस्य सौन्दर्यं यस्मादर्जितं तस्मात्कलामात्रस्यापि सुन्दरत्वादीश्वरेण बालोऽपि शिरसि भूषणत्वेन धृतो यज्वनां मध्ये श्रेष्ठश्च कृतः, अत्युज्वलत्वाच्छिलोञ्छवृत्त्युपादानाच्चेत्यर्थः। बालोऽप्यन्यस्तपस्वी महता राज्ञा नमस्क्रियते द्विजराज्ये स्थाप्यते च। महाधनिकेन माणवको हारविशेषो मौलावारोप्यत इत्याश्चर्यम्। स तु कण्ठे धार्यते न तु शिरसि। चन्द्रे त्वच्छोभालेश एव विद्यते, त्वादृशः सुन्दरः कोऽपि नास्तीति भावः। 'जीवेद्वापि शिलोञ्छेन' इति स्मृत्या शिलोञ्छवृत्तिजीविनोऽतिप्रशस्तत्वोक्तिः ॥ ४२ ॥

आदेहदाहं कुसुमायुधस्य
विधाय सौन्दर्यकथादरिद्रम्।
त्वदङ्गशिल्पात्पुनरीश्वरेण
चिरेण जाने जगदन्वकम्पि ॥ ४३ ॥

आदेहदाहमिति ॥ कुसुमायुधस्य कामस्य आदेहदाहं देहदाहमारभ्य सकलं जगत्सौन्दर्यकथया दरिद्रं विहीनं विधाय इदानीं त्वदङ्गस्य शिल्पान्निर्माणाद्धेतोः ईश्वरेण पुनरपि चिरेण चिरकालाज्जगत् अन्वकम्पि कृपया दृष्टमिति जाने अहमुत्प्रेक्षे। कामादनन्तरमियन्तं कालं सौन्दर्यवार्ताऽपि नाभूत्, इदानीं तत्स्थाने तवाभिषेककरणादीश्वरेण जगतः कृपा कृतेत्यर्थः। अन्योऽपि राजा दुःसहदारिद्र्यपीडितानां दयते। मदनादप्यधिकोऽसीति भावः ॥ ४३ ॥

मही कृतार्था यदि मानवोऽसि
जितं दिवा यद्यमरेषु कोऽपि।
कुलं त्वयाऽलङ्कृतमौरगं चे-
न्नाधोऽपि कस्योपरि नागलोकः ॥४४॥

महीति ॥ त्वं यदि कोऽपि मानवो मनुष्योऽसि, तर्हि मही कृतार्था कृतकृत्या, त्वयाऽलंकृतत्वादित्यर्थः। अथच कृतः पर्याप्तोऽर्थोऽभिधेयं यस्याः सा मह्यते पूज्यते महीयत इति महीत्यर्थः। यदि अमरेषु देवेषु मध्ये त्वं कोऽपि देवस्तर्हि दिवा स्वर्गेण जितं सर्वोत्कृष्टेन जातम्, पूर्वस्मादेव हेतोः। दीव्यति विजिगीषत इति द्यौरिति पूर्वं दिवो विजयेच्छैवाभूत्, इदानीं तया जितामित्यर्थः। त्वया औरगं सर्पसंबन्धि कुलमलंकृतं चेत्कश्चन नागस्त्वम्, तर्हि अधोऽप्यधोदेशस्थितोऽपि त्वयाऽधिष्ठितो नागलोकः पातालं कस्योपरि न ऊर्ध्वदेशे न, अपितु सर्वस्यापि। पूर्व एव हेतुः। न गच्छन्तीत्यगाः न अगा नागास्तेषां लोकः। इदानीमप्रतिहतप्रसरत्वात्सर्वस्याप्युपरि गन्तुं योग्य इत्यर्थः। पूर्वोक्तेषु मध्ये कस्त्वमिति कथयेति भावः। सम्भावनया स्वाभिलषितत्वाच्च प्रथमं मानवोक्तिः ॥ ४४ ॥

सेयं न धत्तेऽनुपपत्तिमुच्चै-
र्मच्चित्तवृत्तिस्त्वयि चिन्त्यमाने।
ममौ स भद्रं चुलुके समुद्र-
स्त्वयाऽऽत्तगाम्भीर्यमहत्त्वमुद्रः ॥ ४५॥

सेति ॥ अगस्त्यप्रसृतौ समुद्रः कथं ममाविति महतीमनुपपत्तिं पूर्वं या प्राप सेयं मच्चित्तवृत्तिस्त्वयि चिन्त्यमाने विचार्यमाणे सति तामतिमहतीमनुपपत्तिमघटमानतामिदानीं न धत्ते न धारयति। कुतः—यतः त्वया आत्ते गृहीते गाम्भीर्यमहत्त्वे गम्भीरताविशालते एव मुद्रा चिह्नं यस्य स समुद्रः भद्रं सुखेन अगस्त्यस्य चुलुके ममौ। गाम्भीर्यस्य महत्त्वस्य च त्वया गृहीतत्वान्न काप्यनुपपत्तिः। समुद्रादप्यतिगम्भीरोऽतिमहांश्च त्वमिति भावः। आत्तेत्याङ्पूर्वस्य ददातेः 'अच उपसर्गात्तः' ७।४।४७' इति तः ॥ ४५ ॥

१ शौलिशिलेत्यनुप्रासः। चन्द्रमसस्त्वं कान्तिमात्रभागोऽसीति वस्तुना ततस्त्वं साम्प्रतमतीवोत्कृष्ट इति व्यतिरेको व्यज्यते। २ अत्र जाने इत्युत्प्रेक्षा, स्मरादनन्तरं तवैव तादृशी सृष्टिरित्युमापर्यवसीयते।

१ अत्र 'नाधोऽपि कस्योपरि' इत्यनुक्त्वा 'अधोऽपि सर्वोपरि' इति अधोऽगतोऽप्युपरि इति वा सुवचम्। यथोक्तेन वस्तुना व्यतिरेकध्वनिरुभयथाऽपीत्यन्यत्। २ नलजन्मतः पश्चादेव यद्यपि समुद्रः पीतः तथाऽपि तथोक्तिः कवेः तदानीन्तनत्वप्रमादमूला। अत्र समुद्रस्य नलकर्तृकगाम्भीर्यमहत्त्वादानत्वायोगेऽपि तयोक्तेरतिशयोक्तिः, सेयमित्यस्य सम्भाव्यमानमात्रत्वादुत्प्रेक्षा च।

संसारसिन्धावनुविम्बमत्र
जागर्ति जाने तव वैरसेनिः ।
बिम्बानुबिम्बौ हि विहाय धातु
र्नजातु दृष्टाऽतिसरूपसृष्टिः ॥ ४६ ॥

संसारेति ॥ अत्रास्मिन्संसाररूपे जगत्त्रयरूपे सिन्धौ समुद्रे वैरसेनिः नलः तव अनुविम्बं प्रतिबिम्बं जागर्ति स्फुरतीति जाने । नल एव त्वत्सदृशो नान्य इत्यर्थः । सिन्धुपदं प्रतिविम्बसंभावनार्थम् । हि यस्मा-द्धातुर्ब्रह्मणोऽतिसरूपयोरतिसमानसौन्दर्ययोर्वस्तुनोः सृष्टि-र्निर्माणं विम्बानुविम्बौ बिम्बप्रतिबिम्बौ विहाय त्यक्त्वा जातु कदाचिदपि न दृष्टा । बिम्बसदृशं प्रतिबिम्बमेव, नान्यदित्यर्थः । अतिसरूपो नलः, तस्यानुविम्बस्त्व-मित्यर्थः । नलसदृशोऽसीति भावः ॥ ४६ ॥

इयत्कृतं केन महीजगत्या-
महो महीयः सुकृतं जनेन ।
पादौ यमुद्दिश्य तवापि पद्या-
रजःसु पद्मस्रजमारभेते ॥ ४७ ॥

इयादिति ॥ केन जनेन महीजगत्यां भूलोके इयद-निर्वचनीयं महीयोऽतितरां महत्सुकृतं कृतम् । अहो आश्चर्यम् । तवापि सम्राजोऽतिसुकुमारस्यापि पादौ चरणौ यमुद्दिश्य पद्यारजःसु मार्गरजःसु पद्मस्रजं लक्षणभूतकमलमालामारभेते आरचयतः । भूलोके कः पुण्यवानेवंविधो यमुद्दिश्य कार्यार्थं त्वमपि चरणचारी गच्छसि तं कथयेति भावः । सर्गे सुकृती सम्भाव्यते, भूलोके तु विद्यत इत्याश्चर्यम् । 'महीमहेन्द्र–महः' इति पाठे महीन्द्रवन्नलवन्महस्तेजो यस्येति सम्बुद्धिः । 'सरणिः पद्धतिः पद्या' इत्यमरः । पद्या, पदमस्मिन्दृ-श्यम् ४।४।८७' इति यत् ॥ ४७ ॥

ब्रवीति ते किं किमियं न जाने
सन्देहदोलामवलम्ब्य संवित् ।
कस्यापि धन्यस्य गृहातिथिस्त्व-
मलीकसम्भावनयाऽथवाऽलम् ॥४८ ॥

ब्रवीतीति ॥ इयं मे संवित् चेतना सन्देहलक्षणां दोलामवलम्ब्याधिरुह्य किं किं ब्रवीतीति न जाने । किं नल एव त्वम्, अन्यो वा । मामेवोद्दिश्यागतः, अन्यं वेत्याद्यनेकप्रकारः संशयो भवति सत्यं किमिति न निश्चि-नोमीत्यर्थः । अथवा पूर्वापरितोपे । अलीकसंभावनया मामुद्दिश्यागतोऽसि, नलोऽसीति च मृषासम्भावनयालं सा न कार्या । यतः–त्वम् अन्य एव कस्यापि धन्यस्य लोकोत्तरभागधेयस्य गृहेऽतिथिर्भविष्यसि प्रायेण नतु मम । एतादृग्भागधेयाभावादिति भावः । 'कस्यासि' इति पाठे गृहातिथिरसीति वदेत्यर्थः ॥ ४८ ॥

प्रीतैव तावत्तव रूपसृष्टिं
निपीय दृष्टिर्जनुषः फलं मे ।
अपि श्रुती नामृतमाद्रियेतां
तयोः प्रसादीकुरुषे गिरं चेत् ॥ ४९ ॥

प्रीतेति ॥ मे दृष्टिस्तव रूपदृष्टिं रामणीयकातिशयं निपीय सादरं विलोक्य तावत्प्रथमतः जनुषो जन्मनः फलं साफल्यं प्रीतेव परं श्रुती अपि कर्णावपि अमृतं नाद्रि-येताम्, अपि तु ते अप्यमृतपानं कुरुताम् चेद्यदि स्वीयां गिरं तयोः श्रुत्योः प्रसादीकुरुषे । प्रसन्नो भूत्वा किमपि वदिष्यासि तर्ह्यमृतपानजन्यं सुखमनयोर्भविष्यतीत्यर्थः। सर्वस्यापि प्रश्नस्योत्तरं प्रयच्छेति भावः ॥ ४९ ॥

इत्थं मधूत्थं रसमुद्गिरन्ती
तदोष्ठबन्धूकधनुर्विसृष्टा ।
कर्णात्प्रसूनाशुगपञ्चबाणी
वाणीमिषेणास्य मनो विवेश ॥ ५० ॥

इत्थमिति ॥ प्रसूनाशुगः कामः, तस्य पञ्चबाणी वाणीमिषेण कर्णात्कर्णं प्रविश्यास्य नलस्य मनो विवेश । किंभूता——इत्थं पूर्वोक्तप्रकारेणातिस्वादुत्वान्मधूत्थं माक्षिकोद्भवममृतोद्भवं वा रसमुद्गिरन्ती प्रकटयन्ती पुष्परसं च क्षरन्ती । तथा—तस्या ओष्ठलक्षणं बन्धूकं तल्लक्षणं कामधनुस्तेन विसृष्टा युगपन्मुक्तानां कामबा-णानां युगपदन्तःप्रवेशे यथा कामव्यथा भवति, तथा तद्वाणीसमाकर्णनमात्रेण तस्याभूदिति भावः । कर्णात्, ल्यब्लोपे पञ्चमी ॥ ५० ॥

---

१ अत्र संसारस्य सिन्धुत्वेन रूपणाद्रूपकं, न त्विय-मुपमा, अनुबिम्बग्रहणौचित्यस्य जल एव सम्भवात् । जाने इत्युत्प्रेक्षा, बिम्बानुबिम्बौ हि विहायेत्यर्थान्तर-न्यासश्च । २ महोमहीय इत्यनुप्रासः । पादयोः पद्म-स्रगारम्भकत्वायोगेऽपि यथोक्तेरतिशयोक्तिश्च ।

१ जाने इत्युत्प्रेक्षा ।२ जनुषः फलं तावन्न तद्दर्शनं,किंतु तत इतरदेव,तथाऽपि तथोक्तोतिशयोक्तिः।२ अत्रानुप्रासः यमकं च । तदोष्ठेत्यादौ रूपकम् । मिषेणेत्यपह्नुतिः, ।

अमज्जदाकण्ठमसौ सुधासु
प्रियं प्रियाया वचनं निपीय ।
द्विषन्मुखेऽपि स्वदते स्तुतिर्या
तन्मिष्टता नेष्टमुखे त्वमेया ॥ ५१ ॥

अमज्जादिति ॥ असौ नलः प्रियायाः प्रियं मधुरं सानुरागं स्वीयस्तुतिरूपं वचनं निपीय सादरमाकर्ण्य आकण्ठं कण्ठावधि, 'आमज्जम्' इति पाठे मज्जापर्यन्तं, सुधास्वमृतेष्वमज्जत् । सर्वाङ्गीणानन्दमयोऽभूदित्यर्थः । स्वस्तुतिश्रुत्या कथमानन्दो युक्त इत्यत आह—या स्तुतिः द्विषन्मुखेऽपि विद्यमाना सती स्वदते रोचते तस्याः स्तुतेः मिष्टता मधुरता इष्टमुखे तु पुनरमेया अपरिमिता न भवति, अपि तु भवत्येव । वैरिसमाश्रयेणान्यदरुच्यं भवति, स्तुतिस्तु रुच्यैव भवति सा स्वप्रियाश्रया रुच्यतरा कथं न भवतीत्याशयः । आमज्जम् 'अनश्च ५।४।१०८' इति टच् ॥ ५१ ॥

पौरस्त्यशैलं जनतोपनीतां
गृह्णन्यथाह्नःपतिरर्घ्यपूजाम् ।
तथाऽऽतिथेयीमथ सम्प्रतीच्छन्
प्रियाऽर्पितामासनमाससाद ॥ ५२ ॥

पौरस्त्येति ॥ अथ अह्नःपतिः सूर्यः जनतया जनसमूहेनोपनीतामर्पितामर्घ्यलक्षणां पूजां गृह्णन्नङ्गीकुर्वन् यथा पुरोभवं पौरस्त्यं शैलमुदयाचलमासादयति, तथा प्रियार्पितां भैम्या वितीर्णामातिथेयीमतिथिषु साध्वीं पूजां संप्रतीच्छन्स्वीकुर्वन् स नलः अस्या भैम्या (आसनम् 'अस्या वयस्यासनम्' इति पाठे अस्या भैम्याः) वयस्यासनं सख्यासनमाससाद भेजे । स्वस्य दूतत्वाद्भैम्यासनं त्यक्त्वा सख्यासनं भेजे इत्यर्थः । पौरस्त्यम्, भवार्थे 'दाक्षिणापश्चात्पुरसस्त्यक् ४।२।९८' इति त्यक् आतिथेयीम्, साध्वर्थे 'पथ्यतिथिवसतिस्वपतेर्ढञ् ४।४।१०४' इति ढञि ङीप् ॥ ५२ ॥

अयोधि तद्धैर्यमनोभवाभ्यां
तामेव भैमीमवलम्ब्य भूमिम् ।
आह स्म यत्र स्मरचापमन्त-
श्छिन्नं भ्रुवौ तज्जयभङ्गवार्ताम् ॥ ५३ ॥

अयोधीति ॥ तद्धैर्यमनोभवाभ्यां तस्य नलस्य धैर्यकामाभ्यां कर्तृभ्यां तां भैमीमेव भूमिं स्थानमवलम्ब्याश्रित्य भैमीमेव विषयं कृत्वा च परस्परमयोधि युद्धमकारि । भैमीविषयं धैर्यं कर्तृ भैमीविषयमदनजिगीषया युद्धं चकार, मदनश्च धैर्यजिगीषयेत्यर्थः । यत्र भैमीलक्षणायां युद्धभूमावन्तर्मध्ये छिन्नं भ्रूरूपं कामचापं कर्तृ तयोर्धैर्यकामयोर्यथाक्रमं जयस्य भङ्गस्य पराजयस्य च वार्तां कथामाह स्म ब्रवीति स्म । भैमीरूपायां सङ्ग्रामभूमौ पतितं भैमीभ्रूरूपं कामचापं छिन्नं धैर्यस्य विजयं, कामस्य पराजयं कथयति स्मेति भावः । यस्य धनुर्भङ्गस्तस्य पराजयोऽन्यस्य च जय इति लोकप्रसिद्धिः । भैम्यामुत्पन्नमपि कामं धैर्येण नाजीगणदिति भावः । 'अथास्त्रियौ । धनुश्चापौ' इत्यमरोक्त्या क्लीबलिङ्गोऽपि चापशब्दः भ्रुवोरसंलग्नत्वं सामुद्रिकोक्तं लक्षणम् ॥ ५३ ॥

अथ स्मराज्ञामवधीर्य धैर्या-
दूचे स तद्वागुपवीणितोऽपि ।
विवेकधाराशतधौतमन्तः
सतां न कामः कलुषीकरोति ॥ ५४ ॥

अथेति ॥ अथ तस्या भैम्या वाग्रूपया वीणया उपवीणितोऽप्युपगीतोऽपि स नलो धैर्यात्स्मराज्ञामवधीर्य ऊचे । वीणयोपगायने हि कामाधीनत्वं युक्तम् । धैर्यात्तन्न जातमित्यर्थः । धैर्याधिक्यात्कामो व्यवहितो नतु सर्वथा शान्त इति ज्ञातव्यम् । अन्यथा रसभङ्गः स्यात् । अर्थान्तरन्यासमाह—कामो विवेकधारया विचारप्रवाहेण शतवारं धौतमुज्ज्वलीकृतं सतामन्तः मानसं न कलुषीकरोति । तस्मादुचितमेतदित्यर्थः । अवधीर्येति पूर्ववत् ॥ ५४ ॥

---

१ द्विषन्मुखेऽपीति कैमुत्यन्यायेन स्वादुत्वोत्कर्षप्रत्यायनादर्थापत्तिरिति केचित्, "कैमुत्येनार्थसंसिद्धिःकाव्येऽर्थापत्तिरिष्यते" इति कुवलयानन्दकाराः । २ अत्रानुप्रासः, उपमा च ।

१ अत्र भैमीं भूमिमिति रूपकम्, वास्तविकयोः प्रतिस्पर्धिनो राज्यार्थे योधव्यवहारस्य प्रतीतेः समासोक्तिरित्यपरे, वयं तु तथा साक्षाद्वचनान्न समासोक्तिरिति ब्रूमः । स्मरचापेन जयपराजयौ निर्णीताविति प्रौढोक्तिसिद्धेन वस्तुना धैर्येण मनोभवः पराजित इति धैर्यान्न मनोभवः प्राभवदिति व्यतिरेक इति बोध्यम् । २ अत्रानुप्रासः, वाचोपवीणनं वीणात्वमादायैवेति तान्त्रिगरणनादतिशयोक्तिः, उपवीणनरूपस्य कारणस्य सत्त्वेऽपि स्मराज्ञापालनरूपस्य कार्यस्यानुत्पत्तेर्विशेषोक्तिः, विवेकेति परिकरः, अर्थान्तरन्यासश्च ।

हरित्पतीनां सदसः प्रतीहि
त्वदीयमेवातिथिमागतं माम् ।
वहन्तमन्तर्गुरुणाऽऽदरेण
प्राणानिव स्वःप्रभुवाचिकानि ॥ ५५ ॥

हरिदिति ॥ हे भैमि ! त्वं मां हरितां दिशां पतयः तेषां दिक्पालानां सदसः सभात आगतं त्वदीयमेवातिथिं प्रतीहि जानीहि । किम्भूतं माम्—स्वःप्रभवो दिक्पालास्तेषामिन्द्रादीनां वाचिकानि संदेशवचनानि गुरुणा आदरेण प्राणानिव अन्तः हृदये वहन्तं धारयन्तम् । अहं त्वदर्थं देवैर्दूतः प्रेषित इत्यर्थः । कुत आगतः, कस्यातिथिरिति प्रश्नस्योत्तरं दत्तम् ।गुरुणाऽऽदरेणेत्यनेन दूतधर्मो दर्शितः ॥ ५५ ॥

विरम्यतां भूतवती सपर्या
निविश्यतामासनमुज्झितं किम् ।
या दूतता नः फलिना विधेया
सैवातिथेयी पृथुरुद्भविन्त्री ॥ ५६ ॥

विरम्यतामिति ॥ हे भैमि! त्वया विरम्यतां निर्व्यापारतया स्थीयताम् । यतः—सपर्या पूजा भूतवती जाता । निविश्यतामुपविश्यताम् । दूतदर्शनमात्रेणासनं किमित्युज्झितं त्यक्तम् । अतिथिदर्शने एतत्कर्तव्यमिति कृतमित्याशङ्क्याह—या नोऽस्माकं दूतता फलिना फलवती विधेया करणीया सैव पृथुर्महती आतिथेयी अतिथिपूजा उत् उच्चैस्तरां भवित्री भविष्यति । आसनादिपरित्यागस्तूपचार एव । स न कार्यः, किं तु यदर्थमागतोऽस्मि तत्सफलयेत्यर्थः ।'फलिता'इत्यपि पाठः । फलिनेति 'फलबर्हाभ्यामिनन्' इति (वा.) अस्त्यर्थे ५६

कल्याणि कल्यानि तवाङ्गकानि
कच्चित्तमां चित्तमनाविलं ते ।
अलं विलम्बेन गिरं मदीया-
माकर्णयाकर्णतटायताक्षि ॥ ५७ ॥

कल्याणीति ॥ हे कल्याणि शोभनरूपे ! तव अङ्गकानि कोमलान्यङ्गानि कल्यानि समर्थानि नीरोगाणि कच्चित्तमाम् । अतिशयेन नीरोगाणि किं कथयेत्यर्थः । ते चित्तं अनाविलं कालुष्यरहितं कच्चित्तमां विद्यते । विलम्बेनालम् । एतावानेव कुशलप्रश्नोऽस्तु, अन्यत्प्रपञ्चमयुक्तम् । प्रकृतकार्यविरोधात् । प्रकृतमेवाह—हे आकर्णतटायताक्षि आकर्णपूर्णनयने भैमि, त्वं मदीयां वक्ष्यमाणां गिरमाकर्णय । 'निरामयः कल्य' इत्यमरः । कच्चित्तमाम्, 'किमेत्तिङव्ययघादाम्व-द्रव्यप्रकर्षे ५ । ४ । ११' इत्यामुः ॥ ५७ ॥

श्लोकत्रयेण चतुर्णामपि साधारण्येन दूत्यं करोति—

कौमारमारभ्य गणा गुणानां
हरन्ति ते दिक्षु धृताधिपत्यान् ।
सुराधिराजं सलिलाधिपं च
हुताशनं चार्यमनन्दनं च ॥ ५८ ॥

कौमारमिति ॥ हे भैमि ! कौमारमारभ्य बाल्यादारभ्य ते गुणानां गणाः सौन्दर्यशीलत्वादयो दिक्षु धृतमाधिपत्यं यैस्तान्देवेन्द्रान्हरन्ति । तानेवाह—सुराधिराजमिन्द्रम्, सलिलाधिपं वरुणं च, हुताशनमग्निम्, अर्यम्णः सूर्यस्य नन्दनं पुत्रं यमं च । त्वद्गुणाकर्णनाच्चत्वारोऽपि त्वय्यनुरक्ता इत्यर्थः ॥ ५८ ॥

चरच्चिरं शैशवयौवनीय-
द्वैराज्यभाजि त्वयि खेदमेति ।
तेषां रुचश्चौरतरेण चित्तं
पञ्चेषुणा लुण्ठितधैर्यवित्तम् ॥ ५९ ॥

चरदिति ॥ शैशवं यौवनं च तत्संबन्धि शैशवयौवनीयं द्वैराज्यं भजते तस्यां वयःसंधौ वर्तमानायां त्वयि चिरं चरत् तव शैशवमारभ्य चञ्चलसमासक्तं सत् तेषां चित्तं खेदं दुःखमेति प्राप्नोति । किंभूतं चित्तम्—पञ्चेषुणा कामेन लुण्ठितं धैर्यमेव वित्तं यस्य । किंभूतेन कामेन—अतिपीडितत्वाद्रुचः शरीरकान्तेः चौरतरेण । विरहातुरस्याङ्गकान्तिर्हीना भवति । त्वय्यासक्तत्वाद्धैर्यापगमात्त्वद्विरहपीडाया असह्यत्वम् । अन्योऽपि राज्यद्वयमध्ये सीमायां चरति, स धनुर्धरेण केनचिदपहृतधनो दुःखं प्राप्नोति । द्वैराज्य इति टञ्चि भावे ष्यञ् ॥ ५९ ॥

तेषामिदानीं किल केवलं सा
हृदि त्वदाशा विलसत्यजस्रम् ।
आशास्तु नासाद्य तनूरुदाराः
पूर्वादयः पूर्ववदात्मदाराः ॥ ६० ॥

१ प्राणानिवेत्युपमा, अनुप्रासश्च । २ या दूतता सैवातिथेयीति रूपकम् ।

१ कल्येति कर्णेति च यमकम् । २ अत्रानुप्रासः । ३ अत्र चौर्यतरेण पञ्चेषुणेति धैर्यवित्तमिति च रूपकम् ।

तेषामिति ॥ किल निश्चये। इदानीं त्वत्तारुण्यदशासमये सा त्वदाशा त्वत्प्राप्तितृष्णा तेषां हृदि केवलं निश्चितम् अजस्रं सर्वदा विलसति स्फुरति। उदारा महतीः सुन्दरीश्च तनूः शरीराण्यासाद्य कृत्वा आत्मदाराः स्वीयाः स्त्रियः पूर्वादय आशा दिशस्तु पुनः पूर्ववन्नः। स्फुरन्ति। प्राच्यादीनां शरीरमपि विद्यते। त्वय्येवासक्तत्वात्सुन्दरीरपि दिशो यथा पूर्वं भुक्तवन्तः, तथेदानीं नेति, एकया त्वदाशया भूयसीनामपि आशानां भोक्तत्वं परित्यक्तम् इति च भावः। अन्योऽपि नवीनायां कस्यांचिदनुरक्तः सन् जीर्णशरीरां प्रथमां स्वस्त्रियं त्यजति ॥ ६० ॥

अनेन सार्धं तव यौवनेन
कोटिं परामच्छिदुरोऽध्यरोहत्।
प्रेमापि तन्वि त्वयि वासवस्य
गुणोऽपि चापे सुमनःशरस्य ॥ ६१ ॥

सामान्यतः सर्वेषां दूत्यं कृत्वेदानीं मुख्यत्वात्पूर्वमिन्द्रं स्तौति—

अनेनेति ॥ हे भैमि, त्वयि विषये अच्छिदुरोऽतिदृढः असीमा निर्मर्यादो वासवस्य प्रेमानुरागोऽप्यनेन प्रत्यक्षदृश्येन तव यौवनेन सार्धं सह परां कोटिं परमां काष्ठामध्यरोहत्प्राप। यथा तव यौवनमत्युत्कर्षं प्राप्तं, तथा त्वय्यनुरागोऽपीत्यर्थः। यतः प्रभृति तव यौवनप्रादुर्भावस्ततः प्रभृति त्वयीन्द्रानुराग इत्यर्थः। न केवलमिन्द्रप्रेमैव, किं तु सुमनःशरस्य कामस्याच्छिदुरो गुणोऽपि मौर्व्यपि चापे धनुषि परां द्वितीयां कोटिमटनिमारूढा। त्वद्यौवनमारभ्येन्द्रं पराभवितुं कामेन चापे गुणः समारोपीत्यर्थः। ततः प्रभृति कामेनेन्द्रः पीड्यत इति भावः ॥ ६१ ॥

प्राचीं प्रयाते विरहादयं ते
तापाच्च रूपाच्च शशाङ्कशङ्की।
परापराधैर्निदधाति भानौ
रुषाऽरुणं लोचनवृन्दमिन्द्रः ॥ ६२ ॥

प्राचीमिति ॥ अयमिन्द्रः परापराधैश्चन्द्रापराधैर्लोचनवृन्दं नेत्रसमूहं रुषा क्रोधेन अरुणं रक्तं प्राचीं प्रयाते उदितमात्रे भानौ निदधाति निक्षिपति। किंभूतः—ते विरहाद्धेतोः तापात्संतापजनकत्वात्, रूपाच्च रक्तवर्तुलस्वरूपत्वाच्च हेतोः भानावेव शशाङ्कशङ्की कृतचन्द्रशङ्कः सन्। स्वरूपाच्चन्द्रकार्यकारित्वाच्च ममापकारकश्चन्द्र एवायमिति बुद्ध्या चन्द्रापराधस्मरणात्स्वदिशि वर्तमानं सूर्यं क्रोधरक्तैरीक्षणैः पश्यतीत्यर्थः। अन्यापराधेनान्यस्मिन्रोष इत्याश्चर्यं च। चन्द्रस्त्वद्विरहार्तं पीडयतीति भावः। 'विरहं दधत्से' इति च पाठः। ते विरहं दधदितीन्द्रविशेषणम् ॥ ६२ ॥

त्रिनेत्रमात्रेण रुषा कृतं य-
त्तदेव योऽद्यापि न संवृणोति।
न वेद रुष्टेऽद्य सहस्रनेत्रे
गन्ता स कामः खलु कामवस्थाम् ॥ ६३ ॥

त्रिनेत्रेति ॥ त्रिनेत्र एव त्रिनेत्रमात्रं तेन नेत्रत्रयसहितेन हरेणैव रुषा क्रोधेन कृत्वा यत् अशरीरत्वरूपं दुःखं कृतं, यः कामस्तदेव (अत्यनल्पं) दुःखमद्यापि एतावद्दिनपर्यन्तं न संवृणोति निश्चितं निस्तराति, स कामोऽद्य ईश्वरादधिके नेत्रसहस्रसहिते सहस्रनेत्रे महेन्द्रे रुष्टे क्रुद्धे सति कतमां कामवस्थां दशां गन्ता गमिष्यतीत्यहं न वेद न जाने। नेत्रत्रयसहितेन हरेण भस्मसात्कृतः सहस्रनेत्रसहितेनेन्द्रेण कीदृशीमवस्थां नेष्यत इत्यहं न जाने इत्यर्थः। कामस्त्वमतितरां पीडयतीति भावः। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। वेद, 'विदो लटो वा ३।४।८३' इति णल् ॥ ६३ ॥

पिकस्य वाङ्मात्रकृताद्व्यलीका-
न्न स प्रभुर्नन्दति नन्दनेऽपि।
बालस्य चूडाशशिनोऽपराधा-
न्नाराधनं शीलति शूलिनोऽपि ॥ ६४ ॥

इदानीं विभावानुभावव्यभिचारिभावानाह—

पिकस्येति ॥ स प्रभुः समर्थ इन्द्रः पिकस्य कोकिलस्य वागेव वाङ्मात्रं तेन कृतादनुचिताद्व्यलीकादप्रियाद्वाग्रूपादप्रियाद्धेतोः नन्दने वनेऽपि न नन्दति आनन्दं न प्राप्नोति। नन्दयतीति नन्दनं तस्मिन्यदनन्दनं

१ आशाविलासे आशाविलासाभावोक्तिर्विरुद्धेवेति विरोधाभासः। २ सार्धमिति सहोक्तिः। प्रेमागुणश्च अध्यरोहदिति तुल्ययोगिता।

१ परापरेति यमकम्। भानोः शशाङ्कत्वेन शङ्कनाद्भ्रान्तिमान्, तापरूपयोररुणताहेतुत्वे भानौ दोषाधानोक्तौ विषमः। तापदारुणताऽस्तु नाम, किं तु रूपादरुणता कथं, न चानुरागारुणतयोरेकार्थवाचित्वं, तन्नेयार्थत्वं दोषः। २ अत्र छेकोक्तिः 'छेकोक्तिर्यदि लोकोक्तेः स्यादर्थान्तरगर्भता।' इति पूर्वाचार्योक्तेः।

तदाश्चर्यमित्यर्थः। अन्योऽपि प्रभुर्वाङ्मात्रकृताद्विप्रियान्निष्ठुरभाषणाद्धेतोर्नन्दने पुत्रेऽपि न नन्दति। तथा वाल्यैककलस्य चूडाशशिनः शिरश्चन्द्रस्यापराधात्तत्कृतात्पीडनाद्धेतोः शूलिनोऽपि सेवनीयस्य हरस्याप्याराधनं सेवां न शीलति न करोति। पूर्वं प्रत्यहमीश्वरसेवार्थे गच्छति, इदानीं तु त्वद्विरहाच्चन्द्रपीडाभयात्तत्सेवा परित्यक्तेत्यर्थः। अन्योऽपि तेजस्वी स्ववैरिपुरस्कारिणः शस्त्रपाणेरपि सेवां न करोति। त्वद्विरहाच्चन्द्रकलाकोकिलालापावतितरां तस्यासह्यौ जाताविति भावः। शीलति, 'शील समाधौ' इति भ्वादिः। दुःखदैन्यादयो व्यभिचारिभावाः स्वयमूह्याः ॥ ६४ ॥

तमोमयीकृत्य दिशः परागैः
स्मरेषवः शक्रदृशां दिशन्ति।
कुहूगिरश्चञ्चुपुटं द्विजस्य
राकारजन्यामपि सत्यवाचम् ॥ ६५ ॥

तम इति ॥ स्मरेषवः पुष्परूपत्वात्परागैः कृत्वा दिशस्तमोमयीकृत्यान्धकारबहुलाः कृत्वा शक्रस्य दृशां नेत्राणां कुहूरिति स्वभावत एव गीर्यस्य कुहूगिरो द्विजस्य कोकिलस्य चञ्चुपुटं राकारजन्यामपि पूर्णिमारात्रावपि सत्यां वाग्यस्यैतादृशं दिशन्ति कथयन्ति। पूर्णचन्द्रां पूर्णिमामपि नष्टचन्द्रा कुहूरमावास्येयमिति कथयत्पिकचञ्चुपुटमिन्द्रं प्रति सत्यवचनं जातमित्यर्थः। त्वद्विरहादिन्द्रो मदनान्धो जात इति भावः। अन्योऽपि ब्राह्मणः कमप्यन्धं प्रति पूर्णिमाममावास्यां वदति,सोऽपि मूर्खत्वात्तद्वाचमन्यं प्रति सत्यां कथयति। 'पूर्णे राका निशाकरे' इत्यमरः। 'कुहूः स्यात्कोकिलालापनष्टेन्दुकलयोरपि' इति विश्वः। पुटशब्दः पुंलिङ्गोऽपि। वाचाशब्दश्चावन्तोऽपि वा ॥ ६५ ॥

शरैः प्रसूनैस्तुदतः स्मरस्य
स्मर्तुं स किं नाशनिना करोति।
अभेद्यमस्याहह वर्म न स्या-
दनङ्गता चेद्गिरिशप्रसादः ॥ ६६ ॥

शरैरिति ॥ स इन्द्रः प्रसूनैः पुष्परूपैः शरैस्तुदतः पीडयतः स्मरस्य स्मर्तुं कामं स्मृतिविषयं कर्तुम् अशनिना वज्रेण किं न करोति, अपितु मारयेदेव। अहह खेदे। यदि अस्य कामस्य गिरिशस्य हरस्य प्रसादोऽनङ्गतारूपमभेद्यं वर्म अच्छेद्यं कवचं न स्यात्। हरेणाङ्गतारूपो निग्रहोऽप्यनुग्रह एव कृतो यतस्तत्साद्गृष्टुमशक्यत्वाद्वज्रेण मारयितुं न शक्यत इत्यर्थः। कामस्तथापराध्यति, यथा मारणार्हो भवतीति भावः। स्मरस्य 'अधीगर्थदयेशां कर्मणि ।२।३।५२' इति कर्मणि षष्ठी॥६६॥

धृताधृतेस्तस्य भवद्वियोगा-
दन्यान्यशय्यारचनाय लूनैः।
अप्यन्यदारिद्र्यहराः प्रवालै-
र्जाता दरिद्रास्तरवोऽमराणाम् ॥ ६७ ॥

धृतेति ॥ अमराणां देवानां तरवो मन्दारादयोऽन्येषां दारिद्र्यहरा दारिद्र्यनाशका अपि प्रवालैः पल्लवैर्दरिद्रा जाताः। किंभूतैः प्रवालैः—भवद्वियोगात्त्वद्विरहाद्धेतोः धृता अधृतिरधैर्यं येन तस्येन्द्रस्यातितप्तस्य अन्यान्याः प्रतिक्षणं नूतनाः शय्यास्तासां रचनाय निर्माणाय लूनैरवचितैः। पल्लवरहिता जाता इत्यर्थः। अन्येषां नन्दनवृक्षाणां का कथा, येऽकल्पितस्यापि दाने समर्थास्ते स्वस्वामिनः शय्यार्थं पल्लवदानेऽप्यसमर्था जाता इत्यर्थः। अन्यदारिद्र्यहरस्यापि दारिद्र्यमाश्चर्यकारीत्यर्थः। त्वद्विरहेणात्यन्तं पीड्यत इति भावः। 'अन्यान्य' इति वीप्सायां द्वित्वे पूर्वपदस्य न प्रथमैकवचनान्तत्वम् ॥ ६७ ॥

रवैर्गुणास्फालभवैः स्मरस्य
स्वर्णाथकर्णौ बधिरावभूताम्।
गुरोः शृणोतु स्मरमोहनिद्रा-
प्रबोधदक्षाणि किमक्षराणि ॥ ६८ ॥

रवैरिति ॥ स्वर्णाथकर्णाविन्द्रकर्णौ स्मरस्य गुणास्फालभवैर्मौर्वीस्फालनसंभूतै रवैर्धनुष्टङ्कारैः कृत्वा बधिरावभूताम्। एवं सति स इन्द्रो गुरोर्बृहस्पतेः स्मरमोहनिद्रा

१ अत्र नन्देति यमकम्। वालस्य चूडाशशिनोऽपराधाच्छूलिनोऽप्याराधनत्यागायोगेऽपि तथोक्तेरतिशयोक्तिः। २ अत्र राकायां कुहूगिरः सत्यवक्त्वं विरुद्धम्, अथापि निर्दिष्टमिति विरोधाभासः, ब्राह्मणकोदन्तस्फूर्तेः समासोक्तिश्च।

१ अभेद्यमस्येति काव्यलिङ्गम्, अनङ्गता चेदिति उल्लासः 'एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि।' इति प्राचामभिधानात्। २ दारिद्र्यहराणां दारिद्र्यमिति विरोधाभासः। प्रवालानां तथालूनत्वायोगेऽपि तथोक्तेरतिशयोक्तिश्च।

कामजन्यमूर्छालक्षणा, अज्ञानलक्षणा वा निद्रा तस्याः सकाशाद्यः प्रबोधो जागरणं तत्र दक्षाणि समर्थानि काममोहहराण्यक्षराण्युपदेशवचनानि वधिरत्वात्, मदनपीडितत्वाच्च किं कथं शृणोतु । किम् उपायप्रश्ने, आक्षेपे वा । स्वर्णाथ इति, 'पूर्वपदात्संज्ञायामगः ८।४।३' इति णत्वम् ॥ ६८ ॥

**अनङ्गतापप्रशमाय तस्य**
**कदर्थ्यमाना मुहुरामृणालम् ।**
**मधौ मधौ नाकनदीनलिन्यो ।**
**वरं वहन्तां शिशिरेऽनुरागम् ॥ ६९ ॥**

अनङ्गेति ॥ नाकनदीनलिन्यः स्वर्णदीकमलिन्यः स्वशत्रुभूतेऽपि शिशिरे ऋतावनुरागं प्रीतिं वहन्तां धारयन्ताम् । एतद्वरम्, नतु वसन्ते । किम्भूता नलिन्यः—यतस्तस्येन्द्रस्य अनङ्गतापप्रशमाय कामजनितसंतापशान्त्यै मधौ मधौ वसन्ते वसन्ते पुष्पादाआरभ्येत्यर्थः । विसमाभिव्याप्य मुहुर्वारंवारं कदर्थ्यमानाः पीड्यमानाः। शिशिरतौ हिमेन पुष्पमात्रं नश्यति, मूलभूतं मृणालं त्ववशिष्यते । वसन्ते तस्य कामज्वरशान्त्यर्थं मृणालानामप्युन्मूलनात् कालान्तरेऽप्युत्पत्त्यसंभवादात्यन्तिकविनाशप्रसङ्गादिति भावः । वसन्ते कामपीडा भूयसीति भावः । वहन्तां स्वरितेत्त्वात्तङ् ॥ ६९ ॥

**दमस्वसः सेयमुपैति तृष्णा**
**हरेर्जगत्यग्रिमलेख्यलक्ष्मीम् ।**
**दृशां यदब्धिस्तव नाम दृष्टि-**
**त्रिभागलोभार्तिमसौ बिभर्ति ॥ ७० ॥**

दमस्वसरिति ॥ हे दमस्वसः सेयमतिप्रसिद्धा हरेरिन्द्रस्य तृष्णा जगति लोकत्रयमध्ये अग्रिमलेख्यस्यादिमगणनीयवस्तुनो लक्ष्मीं शोभामुपैति प्राप्नोति।लोके कस्य तृष्णा महतीति प्रश्ने इन्द्रतृष्णा प्रथमं गणनीयेत्यर्थः । कुतः—यद्यस्मात् दृशामब्धिर्नाम सहस्रनेत्रत्वान्नयनसमुद्रोऽप्यसाविन्द्रस्तव दृष्टेस्तृतीयो भागस्तस्य लोभोऽभिलापस्तत्कृतामार्तिं पीडां बिभर्ति।सहस्रनेत्रोऽप्यन्यदीयनेत्रस्य तृतीयमपि भागं प्राप्तुं चेद्वाञ्छति तर्ह्येतादृशो लोभवान्न्या नास्तीति तस्य तृष्णा प्रथमं गणनीयेत्यर्थः । त्वत्कटाक्षविक्षेपं वाञ्छतीति भावः । नाम अप्यर्थे, अहो इत्यर्थे वा । अग्रिम इति 'अग्रादिपश्चाड्डिमच्' । त्रिपु भागः 'सप्तमी शौण्डैः २ । ३ । ४० ' इत्यतः सप्तमी इति योगविभागात्समासे तृतीयो भाग इत्यर्थात् ॥ ७० ॥

**अग्न्याहिता नित्यमुपासते यां**
**देदीप्यमानां तनुमष्टमूर्तेः ।**
**आशापतिस्ते दमयन्ति ! सोऽपि**
**स्मरेण दासीभवितुं न्यदेशि ॥ ७१ ॥**

अग्नीति ॥ हे दमयन्ति, स्मरेण सोऽप्याशापतिरग्निस्ते दासीभवितुं न्यदेशि त्वं भैम्या दासो भवेत्यादिष्ट आज्ञप्तः । स कः—अग्न्याहिता दीक्षिता देदीप्यमानां यामष्टमूर्तेरीश्वरस्य तनुं मूर्तिमग्निरूपां नित्यं सर्वदा उपासते सेवन्ते । स्मरहरमूर्तित्वात्स्वयमेव स्मरस्य दग्धत्वाच्च स्मरवैरित्वेऽपि स्मराज्ञाकारित्वमाश्चर्यरूपमित्यपिशब्दो द्योतयति । कामो वह्निमपि पीडयतीति भावः । अग्न्याहिताः, 'वाऽऽहिताग्न्यादिपु २।२।३७ ' इति परनिपातः ॥ ७१ ॥

**त्वद्गोचरस्तं खलु पञ्चबाणः**
**करोति संताप्य तथा विनीतम् ।**
**स्वयं यथा स्वादिततप्तभूयः**
**परं न संतापयिता स भूयः ॥ ७२ ॥**

त्वद्गोचर इति ॥ खलु उत्प्रेक्षे, निश्चये वा । त्वद्गोचरस्त्वद्विषयः पञ्चबाणस्तं वह्निं संताप्यातितरां तापयित्वा पीडयित्वा तथा विनीतं भयात्त्यक्तोपद्रवं करोति । स्वयं स्वेन स्वादितमनुभूतं तप्तभूयं तप्तभावो येनैवंविधः सन् वह्निः परमन्यं पुनर्यथा न संतापयिता स्वस्य पीडानुभवादद्यप्रभृति मया कस्यापि संतापो न कार्य इति बुद्ध्वा विनीतो जात इत्यर्थः । अन्यदपि लोहादि संताप्य विनीतं क्रियते । अन्योऽपि साधुः स्वेनानुभूतपीडः परं न पीडयति । मदनस्तमतितरां पीडयतीति भावः ॥ ७२ ॥

---

१ अत्रानुप्रासः, वधिरत्वायोगेऽपि तथोक्तविरोधाभासः । २ अत्रानुप्रासो यमकं च । वरमित्यनुज्ञा, 'दोपस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात् ।' इति चन्द्रालोककारोक्तेः ।

१ आर्तेलाभाय तृष्णेति विषमम्, 'विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः । ' इतितल्लक्षणात् । २ अत्र स्मरस्य सम्राट्त्वं, सम्राजश्च तस्य त्वत्सेनानीत्वं व्यज्यते । ३ खल्वित्युत्प्रेक्षा, अत्र राजभट–परपीडकोदन्त स्फुरणात्समासोक्तिश्च ।

अदाहि यस्तेन दशार्धबाणः
पुरा पुरारेर्नयनालयेन ।
न निर्दहंस्तं भवदक्षिवासी
न वैरशुद्धेरधुनाऽधमर्णः ॥ ७३ ॥

अदाहीति ॥ पुरारेर्हरस्य नयनमेवालयो यस्य एवंभूतेन तेन वह्निना पुरा पूर्वं यो दशार्धबाणः पञ्चबाणोऽदाहि दग्धः स पञ्चबाणः कटाक्षविक्षेपमात्रजन्यत्वाद्भवत्या अक्षिवासी नेत्रवासी सन् तं वह्निमधुना इदानीं निर्दहन्नातितरां पीडयन् वैरशुद्धेर्वैरनिर्यातनस्याधमर्णो लग्नको न भवति । अन्यनयनालयस्यस्यात्मदाहकस्यान्यनयनालयेनैवात्मनैव दाहाद्वैरलक्षणमृणं तेनापाकृतमित्यर्थः । पुरुषं श्रितस्य वह्नेः स्वतोऽकिंचित्करत्वम्, अङ्गनानामपाङ्गेषु कामो वसतीति कृत्वा स्त्रियं श्रितस्य कायस्य महत्प्रभुत्वं सूचितम् । पूर्वोक्त एव भावः ॥७३॥

सोमाय कुप्यन्निव विप्रयुक्तः
स सोममाचामति हूयमानम् ।
नामापि जागर्ति हि यत्र शत्रो-
स्तेजस्विनस्तं कतमे सहन्ते ॥ ७४ ॥

सोमायेति ॥ विप्रयुक्तो वियोगी च स वह्निः सोमाय चन्द्राय कुप्यन्निव हूयमानं दीयमानं सोमाख्यं लताविशेषरसमाचामति पिबति । ननु चन्द्रापराधे सोमलतां किमिति भक्षितवानित्याशङ्क्यार्थान्तरन्यासेनापनुदति हि यस्माद्यत्र जने शत्रोर्नाम अपि जागर्ति, कतमे के तेजस्विनस्तं जनं सहन्ते सोढुं शक्नुवन्ति अपि तु न केऽपि । स्ववैरिचन्द्रस्य सोमनाम्न्यां लतायां नामसद्भावात्तेजस्विनाऽग्निना सा भक्षितेति युक्तमेव । चन्द्रस्तं पीडयतीति भावः । सोमाय 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति ( वा. ) संप्रदानत्वे 'चतुर्थी संप्रदाने २ । ३ । १३ इति चतुर्थी ॥ ७४ ॥

शरैरजस्रं कुसुमायुधस्य
कदर्थ्यमानस्तरुणि त्वदर्थे ।
अभ्यर्चयद्भिर्विनिवेद्यमाना-
दप्येष मन्ये कुसुमाद्बिभेति ॥ ७५ ॥

शरैरिति ॥ तरुणि ! त्वदर्थे त्वत्कृते कुसुमायुधस्य शरैरजस्रं निरन्तरं कदर्थ्यमानः पीड्यमानः सन् स एष वह्निरभ्यर्चयद्भिः पूजकैः पूजार्थमेव विनिवेद्यमानादेकस्मादपि कुसुमाद्बिभेति मदनशरबुद्ध्या त्रस्यतीत्यहं मन्ये । 'एष देवः' इत्यपि पाठः । मदनेन वह्निः पीड्यत इति भावः ॥ ७५ ॥

स्मरेन्धने वक्षसि तेन दत्ता
संवर्तिका शैवलवल्लिचित्रा ।
रराज चेतोभवपावकस्य
धूमाविला कीलपरम्परेव ॥ ७६ ॥

स्मरइति ॥ तेन वह्निना स्मरस्येन्धनभूते मदनानलस्य दह्यमानत्वात्काष्ठतुल्ये स्ववक्षसि दत्ता निहिता शैवलवल्ल्या कृत्वा चित्रवर्णा आश्चर्यरूपा च संवर्तिका नवदलं पद्मं चेतोभवः कामस्तल्लक्षणस्य पावकस्याग्नेर्धूमाविला धूममिश्रिता कीलपरम्परेव ज्वालासमुदाय इव चकास्ति शोभते । मदनज्वरशान्त्यर्थं शैवालं नवदलं कमलं च वक्षसि निक्षिप्तम् । पिङ्गस्य कमलस्य हृदयोपरि विद्यमानत्वात्कामपावककीलत्वम् । शैवलस्य च श्यामत्वाद्धूमत्वम् । 'संवर्तिका नवदलम्' इत्यमरः । 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्यमरवचनात्कीलशब्दः पुल्लिङ्गोऽपि ॥ ७६ ॥

पुत्री सुहृद्येन सरोरुहाणां
यत्प्रेयसी चन्दनवासिता दिक् ।
धैर्यं विभुः सोऽपि तवैव हेतोः
स्मरप्रतापज्वलने जुहाव ॥ ७७ ॥

पुत्रीति ॥ विकासकारित्वात्सरोरुहाणां सुहृत् सूर्यो येन कृत्वा पुत्री पुत्रवान्, चन्दनेन वासिता परिमलाढ्या दिक् दक्षिणा यत्प्रेयसी यस्य प्रियतमा, सोऽपि यमलक्षणो विभुस्तवैव हेतोः स्मरप्रतापज्वलने कामजन्यसंतापरूपेऽनले धैर्यं जुहाव । कामज्वरवशाद्धैर्यं त्यक्तवानित्यर्थः । पितृमित्रत्वाच्छीतलानि कमलानि, प्रियाया-

---

१ अत्र नयनालयत्वमासाद्य वह्निना स्मरो मर्दितः' अथ स्मरोऽपि नयनालयत्वमासाद्य वह्निं मर्दयितुं तथा प्रवृत्त यथा न किमप्यवशिष्यतेति व्याघातइत्येके, स्वभावोक्तिरित्यपरे । २ कुप्यन्निवोत्प्रेक्षा, विप्रयुक्तो वियोगी चेति श्लेषः, नामापीत्यर्थान्तरन्यासश्च ।

१ मन्य इत्युत्प्रेक्षा, विनिवेद्यमानादपि कुसुमाद्बिभेतीत्यसम्भवेऽपि तथोक्तेरतिशयोक्तिः । अत्र कुसुमे शरबुद्धिरिति भ्रान्तिमांस्तु तया व्यज्यते । २ अत्र, स्मरेन्धन इति रूपकम्, चेतोभवपावकस्येति च रूपकम् कीलपरम्परेवेत्युत्प्रेक्षा च ।

श्चन्दना वशवर्तिनो यद्यपि, तथापि त्वद्विषयं यमस्य विरहदाहं शमयितुं न शक्नुवन्तीत्याश्चर्यम् । कुलं स्थानं च कथितम् । यमोऽपि त्वद्वशो जात इत्यर्थः । तवैव हेतोः,'षष्ठी हेतुप्रयोगे ।२।३।२६' इति षष्ठी ॥ ७७ ॥

तं दह्यमानैरपि मन्मथैधं
हस्तैरुपास्ते मलयः प्रवालैः ।
कृच्छ्रेऽप्यसौ नोज्झति तस्य सेवां
सदा यदाशामवलम्बते यः ॥ ७८ ॥

तमिति ॥ मलयः पर्वतः जाज्वल्यमानत्वान्मदनस्य एधमिन्धनं तं यमं कामेन्धनत्वादेवातिशयेन दह्यमानैर्जाज्वल्यमानैरपि यदर्थमवचितैः प्रवालैः पल्लवरूपैस्तैः कृत्वा उपास्ते सेवते । युक्तमेतत्—यः सदा यदाशां यत्सम्बन्धिनीं तृष्णामवलम्बते धारयति । यो यदधीनजीविक इत्यर्थः । असौ स तस्य सेवया स्वस्य कृच्छ्रे कष्टे जायमानेऽपि तस्य सेवां नोज्झति न त्यजति । 'अदः परस्मिन्नत्रापि' इति वचनादसावित्यस्य स इत्यर्थः । अयमपि सदा यमदिशामवलम्बते ततो हस्तसंतापे सत्यपि सेवां चक्रे इत्युचितमित्यर्थः । अन्योऽप्यनुजीवी स्वामिनो दारिद्र्येऽपि सेवां करोति । एधशब्दोऽकारान्तोऽपि ॥ ७८ ॥

स्मरस्य कीर्त्येव सितीकृतानि
तद्दोःप्रतापैरिव तापितानि ।
अङ्गानि धत्ते स भवद्वियोगा-
त्पाण्डूनि चण्डज्वरजर्जराणि ॥ ७९ ॥

स्मरस्येति ॥ स यमो भवत्या वियोगाद्धेतोरङ्गानि पाण्डूनि चण्डस्तीव्रो ज्वरस्तेन जर्जराणि, विशीर्णानि च धत्ते । तत्र हेतूत्प्रेक्षे यथाक्रमम्—किंभूतान्यङ्गानि—स्मरस्य कीर्त्या यशसा श्वेतीकृतानीव । तथा—तस्य कामस्य दोःप्रतापैः बाहुक्षत्रतेजोभिः तापितानीव । संतापितं हि जर्जरितं भवति । कामस्तमतितरां पीडयतीति भावः ॥ ७९ ॥

१ प्रताप ज्वलन इति रूपकं,धैर्यस्येन्धनत्वं प्रतीयते इति रूपकातिशयोक्तिश्च । २अत्र मन्मथैधं तमिति प्रवालैर्हस्तैरिति च रूपकम्, कृच्छ्रेऽपीत्यर्थान्तरन्यासश्च ।३ कीर्त्येति प्रतापैरिवेति चोत्प्रेक्षा, वियोगाच्चण्डज्वरजर्जरत्वायोगेऽपि तयोक्तेरतिशयोक्तिश्च ।

यस्तन्वि भर्ता घुसृणेन सायं
दिशः समालम्भनकौतुकिन्याः ।
तदा स चेतः प्रजिघाय तुभ्यं
यदा गतो नैति निवृत्य पान्थः ॥८०॥

य इति ॥ हे तन्वि कृशाङ्गि ! यः सायं घुसृणेन कुङ्कुमेन समालम्भनेऽङ्गरागविषये कौतुकिन्याः सायंसंध्यानुरागयुक्ताया दिशः प्रतीच्या भर्ता वरुणः तदा चित्राव्यतीपातादौ समये तुभ्यं त्वदर्थं चेतः प्रजिघाय प्राहिणोत् । यदा समये गतः पान्थो विवृत्य परावृत्य नैति नागच्छति । यतः प्रभृति तस्य मनस्त्वयि लग्नं, तत प्रभृति व्याघुट्य तं प्रति न गतम् । सोऽपि त्वदधीनो जातोऽस्तीति भावः । प्रजिघाय, हिनोतेर्लिटि 'हेरचङि ७।३।५६" इति कुत्वम् 'चित्रास्वात्योर्गता मेघाश्चित्रास्वात्योर्गता नराः । आयायुर्दैवयोगेन याता एव न संशयः ॥ इति ज्योतिःशास्त्रम् ॥ ८० ॥

तथा न तापाय पयोनिधीना-
मश्वामुखोत्थः क्षुधितः शिखावान् ।
निजः पतिः सम्प्रति वारिपोऽपि
यथा हृदिस्थः स्मरतापदुःस्थः ॥ ८१॥

तथेति ॥ यतः स्मरदाहेन कामज्वरेण दुःस्थः पीडितः, अतो वारि पाति रक्षतीत्येवंविधोऽपि हृदिस्थः स्मरणगोचरः, अथ च मध्ये विद्यमानो निजः स्वीयः पतिर्वरुणः संप्रति त्वद्विषयविरहदशायां यथा येन प्रकारेण पयोनिधीनां संतापाय भवति तथा तेन प्रकारेण क्षुधितो बुभुक्षितो मध्ये विद्यमानः संनिहितो वारि पिबति वारिपः, एवंभूतोऽपि अश्वामुखोत्थो वडवामुखोत्थः शिखावानग्निः पयोनिधीनां तापाय नाभूत् । वारिपत्वे हृदिस्थत्वे तुल्येऽपि कामदाहदुःस्थत्वाभावात्तथा न तापकारित्वमित्यर्थः । कामज्वरपीडितजलप्रविष्टवरुणसंस्पर्शात्पयोनिधयोऽपि संतप्ता बभूवुरित्यतो हेतोर्वरुणोऽतितरां कामेन पीडित इति भावः । वडवानलादपि विरहानलोऽधिक इति भावः । अन्योऽपि साधुर्दासः पीडितं स्वामिनं स्मरन्संतप्यते । क्षुधितः 'वसतिक्षुधोरिट् ७।२।५२' ॥ ८१ ॥

१ अत्र यमेन त्वदन्तिक एव चित्तं प्रहितं, तच्च यावन्न ते प्रसादस्तावन्न प्रत्यावृत्यगामीत्यत्र चित्तस्य दूतत्वं व्यङ्ग्यम् । २ तथा नेत्यसम्भवोक्तेरतिशयोक्तिः ।

यत्प्रत्युत त्वन्मृदुबाहुवल्ली
स्मृतिस्रजं गुम्फति दुर्विनीता ।
ततो विधत्तेऽधिकवेम तापं
तेन श्रिता शैत्यगुणा मृणाली ॥ ८२ ॥

यदिति ॥ शैत्यमेव गुणो यस्याः सा तेन वरुणेन शरीरोपरि श्रिता निक्षिप्ता मृणाली यद्यस्मात्त्वन्मृदुबाहुवल्ली तस्याः स्मृतिस्रजं स्मरणपरम्परां गुम्फति करोति साहश्यात् । ततस्तस्माद्वैपरीत्येन पूर्वापेक्षयाप्याधिकं तापं विधत्ते करोति । अत एव दुर्विनीता दुष्टा । संतापशान्त्यर्थं श्रितस्य शीतलस्याधिकसंतापकारित्वमेव वैपरीत्यम् । साहश्यात्त्वद्बाहुवल्लुयाः स्मारकत्वान्मृणाली तमतितरां तापयतीति भावः । अन्योऽपि दुर्विनीतो यदर्थमाश्रीयते तद्विरुद्धमेव करोति ॥ ८२ ॥

न्यस्तं ततस्तेन मृणालदण्ड-
खण्डं बभासे हृदि तापभाजि ।
तच्चित्तमग्नैर्मदनस्य बाणैः
कृतं शतच्छिद्रमिव क्षणेन ॥ ८३ ॥

न्यस्तमिति ॥ सकलमृणाली यतस्तापं करोति ततः सकलमृणालीत्यागानन्तरं तापभाजि हृदि तेन न्यस्तं मृणालदण्डखण्डं तस्य वरुणस्य चित्ते मग्नैर्मदनस्य बाणैः क्षणेन शतच्छिद्रं बहुरन्ध्रं कृतमिव बभासे शुशुभे । भग्नं मृणालं स्वत एव शतच्छिद्रं भवति तस्य शतच्छिद्रत्वमन्यथोत्प्रेक्षितम् । कामबाणैस्तद्धृदयं जर्जरीकृतामिति भावः ॥ ८३ ॥

इति त्रिलोकीतिलकेषु तेषु
मनोभुवो विक्रमकामचारः ।
अमोघमस्त्रं भवतीमवाप्य
मदान्धताऽनर्गलचापलस्य ॥ ८४ ॥

इतीति ॥ त्रिलोक्यास्तिलकेष्वलंकारभूतेष्विन्द्रादिषु विषये भवतीं त्वामेवामोघशस्त्रं सफलमस्त्रमवाप्य मदान्धतया गर्वान्धत्वेन अनर्गलमुच्छृङ्खलं चापलं यस्य,मनोभुवः कामस्य इति पूर्वोक्तप्रकारेण विक्रमः कामचारः स्वेच्छाचारः । वर्तत इति शेषः । कामेन त्वन्निमित्तमिन्द्रादयोऽतितरां पीड्यन्ते । मदान्धतेत्यनेन कामस्य द्विरदत्वं सूचितम् । अवाप्य स्थितस्येति योजनीयम् ॥ ८४ ॥

सारोत्थधारेव सुधारसस्य
स्वयंवरः श्वो भविता तवेति ।
संतर्पयन्ती हृदयानि तेषां
श्रुतिः श्रुती नाकजुषामयासीत् ॥ ८५ ॥

सारेति ॥ हे दमयन्ति ! तव स्वयंवरः श्वो भाविनि दिवसे भवितेति श्रुतिर्वार्ता तेषां नाकजुषां देवानां श्रुती कर्णावयासीत्प्रापत् । किंभूता—सुधारसस्यामृतरसस्य सारोत्थधारेव श्रेष्ठभागोत्थितप्रवाह इव संतर्पयन्ती तानेव हर्षयन्ती । स्वयंवरं श्रुत्वाऽतीव हृष्टा इति भावः ॥ ८५ ॥

समं सपत्नीभवदुःखतीक्ष्णैः
स्वदारनासापथिकैर्मरुद्भिः ।
अनङ्गशौर्यानलतापदुःस्थै-
रथ प्रतस्थे हरितां मरुद्भिः ॥ ८६ ॥

सममिति ॥ अथ स्वयंवरवार्ताश्रवणानन्तरं हरितां मरुद्भिः स्वामिभिरिन्द्रादिभिः स्वेषां दाराः स्त्रियस्तेषां नासापथिकैर्नासिकामार्गस्थैर्मरुद्भिः निश्वसितानिलैः समं सह प्रतस्थे प्रस्थितम् । किंभूतैर्नासावायुभिः—सपत्नीभवेन सपत्नीहेतुकेन दुःखेन तीक्ष्णैरत्युष्णैः । किंभूतैर्दैवैः—अनङ्गशौर्यमेवानलोऽग्निस्तज्जनितस्तापस्तेन दुःस्थैर्जर्जरीभूतैः । त्वद्वरणार्थं प्रस्थितान्स्वपतीन्दृष्ट्वा तत्पत्नीभिर्दुःखान्नासावायवो मुक्ता इति भावः । अन्योऽपि पान्थः पान्थैः सह प्रस्थानं करोति । चण्डवायुभिः सार्धमित्यनेनाशकुनं सूचितम् ॥ ८६ ॥

अपास्तपाथेयसुधोपयोगै-
स्त्वच्चुम्बिनैव स्वमनोरथेन ।
क्षुधं च निर्वापयता तृषं च
स्वादीयसाऽध्वा गमितः सुखं तैः ॥ ८७ ॥

अपास्तेति ॥ तैरिन्द्रादिभिस्त्वच्चुम्बिना त्वत्संबन्धिना स्वमनोरथेन भैमीं प्राप्स्याम इति स्वीयेनाभिला-

१ अत्र बाहुवल्लीति स्मृतिस्रजमिति च रूपकं, बहुया मृदुत्वदुर्विनीतत्वोक्तेर्विरोधाभासः, एवं शैत्यगुणायास्तापविधातृत्वोक्तेरपि विरोधाभासश्च । २ इवेत्युत्प्रेक्षा ।

१ भवतीमस्त्रमिति रूपकम् । २ अत्रानुप्रासः, धारेवेत्युपमा च । ३ अत्र सममिति सहोक्तिः, शौर्यानलेति रूपकं च ।

पेणैव कृत्वा अध्वा मार्गः सुखमनायासेन गमितोऽतिवाहितः । किंभूतेन—स्वादीयसाऽतिस्वादुना । अत एव—क्षुधं तृषं च निर्वापयता शमयता । अत एव अपास्तस्त्यक्तः पाथेयो मार्गशम्बलरूपः सुधोपयोगोऽमृतोपयोगो यैस्तैः । त्वयि निविष्टचित्तत्वात्क्षुधा तृषा च नाभूत्, अत एव मार्गशम्बलममृतमपि त्यक्तं, ततोऽप्यधिका तव प्राप्त्याशेत्यर्थः । भुवं प्रत्यागमने मनोलक्षणेन रथेन भुवमागताः । 'सुधोपभोगैः' इति पाठे उपभोगः साफल्यमपास्तं यैः । पाथेयं, साध्वर्थे 'पथ्यतिथिवसतिस्वपतेर्ढञ् । ४ । ४ । १०४ ।' इति ढञ् ॥ ८७ ॥

> प्रिया मनोभूशरदावदाहे
> देवीस्त्वदर्थेन निमज्जयाद्भिः ।
> सुरेषु सारैः क्रियतेऽधुना तैः
> पादार्पणानुग्रहभूरियं भूः ॥ ८८ ॥

प्रिया इति ॥ तैः सुरेषु सारैः श्रेष्ठैरिन्द्रादिभिरधुना इयं भूः भूमिः पादानामर्पणं तदेवानुग्रहः कृपा तस्य भूः स्थानं क्रियते किंभूतैः—प्रियाः स्त्रिय इन्द्राणीप्रमुखा देवीस्त्वदर्थेन त्वत्कारणेन मनोभूशराः कामबाणास्त एव दावो वनवह्निस्तज्जनितदाहे निमज्जयद्भिः । कामपीडिताः कुर्वद्भिरित्यर्थः । इदानीं भूमौ वर्तन्त इत्यर्थः । तेषामत्रागमनाद्देवीनां विरहसंतापः ॥८८ ॥

> अलङ्कृतासन्नमहीविभागै-
> रयं जनस्तैरमरैर्भवत्याम् ।
> अवापितो जङ्गमलेखलक्ष्मीं
> निक्षिप्य संदेशमयाक्षराणि ॥ ८९ ॥

अलमिति ॥ तैरमरैः भवत्यां त्वद्विषयेऽयं मल्लक्षणो जनः संदेशमयाक्षराणि निक्षिप्य जङ्गमलेखलक्ष्मीं चलत्पत्रिकाशोभामवापितः प्रापितः । यद्वा—जङ्गमा न तु पाषाणादिमया ये लेखाः देवास्तेषामिन्द्रादीनां लक्ष्मीः शोभा अथच व्यवस्था तामित्यर्थः । किंभूतैः—अलंकृत आसन्नो महीविभागो यैः । समीपस्थितैस्तैस्त्वां प्रार्थयितुमहं प्रेषित इत्यर्थः । अवापित इति कर्तरि क्तः 'भवत्यै' इति वा पाठः ॥ ८९ ॥

> एकैकमेते परिरभ्य पीन-
> स्तनोपपीडं त्वयि संदिशन्ति ।
> त्वं मूर्च्छतां नः स्मरभिल्लशल्यै-
> र्मुदे विशल्यौषधिवल्लिरेधि ॥ ९० ॥

एकैकमिति ॥ हे भैमि, एते देवा एकैकं पृथक्पृथक् पीनस्तनयोरुपपीड्य संश्लिष्य तद्यथा भवति तथा, त्वत्पीनस्तनाभ्यामात्मानमुपपीड्य गाढमालिङ्ग्य त्वयि इति संदिशन्ति । इति किम्—हे भैमि, त्वं स्मराभिल्लशल्यैः कामलक्षणपार्वधिकनाराचैः कृत्वा मूर्च्छतां नोऽस्माकं मुदे प्रीतये शल्योद्धरणान्मूर्च्छापहाराय विशल्यनाशी ओषधिवल्लिः एधि भव । त्वां विनाऽस्माकं काममूर्च्छा न शाम्यतीत्यस्मान्प्रीणीष्वेति भावः । एकैकम्, वीप्सायां द्विः । स्तनोपपीडम्, 'सप्तम्यां चोपपीडरुधकर्षः ३ । ४ । ४९' इति णमुलि 'तृतीयाप्रभृतीन्यन्यतरस्याम् २ । २ । २१' इति समासः । एधि 'घ्वसोरेद्धावभ्यासलोपश्च६।४।११९' इत्येत्वम् ॥ ९० ॥

> त्वत्कान्तिमस्माभिरयं पिपास-
> न्मनोरथाश्वासनयैकयैव ।
> निजः कटाक्षः खलु विप्रलभ्यः
> कियन्ति यावद्भण वासराणि ॥ ९१ ॥

त्वदिति ॥ त्वत्कान्तिं त्वत्सौन्दर्यं पिपासन्पातुमिच्छन् अयं निजः स्वीयः कटाक्ष एकया मुख्यया भैमीकान्तिमवश्यं वयं पाययामह इत्येवंरूपया मनोरथाश्वासनया मनोराज्यजन्ययाश्वासनयैव सान्त्वनेनैव कृत्वा कियन्ति वासराणि यावत्कियद्दिनपर्यन्तं विप्रलभ्योऽस्माभिः प्रतारणीयः खलु निश्चितं भण कथय । पथि गच्छन्बालकादिरिदमुदकमिति प्रतारणं सहते, द्वित्राणि दिनानि । तथा कटाक्षोऽपि । अस्मान्प्रीणी-

---

१ अत्र निर्वापयत्वादेः क्षुत्त्विरत्वं हेतुरिति अनयोर्हेतुहेतुमद्भावात् काव्यलिङ्गं, भुवामित्युत्प्रेक्षा च । २ दावदाह इत्यादावनुप्रासः, दाहस्य निमज्जनाधारतोक्तेर्जलाशयत्वं व्यज्यते ।

१ कश्चित् कथमपि स्वं परिचाय्यादेयमादत्ते तथैव सन्देशग्राहणेन स्वं परिचाय्य लक्ष्मीमादत्तेति स्फुरणात्समासोक्तिः । तथा निक्षिप्यावापित इति परिवृत्तिः, 'पदार्थानां विनिमयो योऽर्थानां स्यात् समासमैः' इति प्रकाशकारोक्तेः।२ स्मरभिल्लेति त्वं विशल्यौषधिवल्लिरिति च रूपकम् ।

ष्वेति भावः । अवधी यावच्छन्दः । वासराणि, अत्यन्तसंयोगे द्वितीया ॥ ९१ ॥

निजे सृजास्मासु भुजे भजन्त्या-
वादित्यवर्गे परिवेषवेषम् ।
प्रसीद निर्वापय तापमङ्गै-
रनङ्गलीलालहरीतुषारैः ॥ ९२ ॥

निज इति ॥ हे भैमि ! त्वं निजे स्वीये भुजे आदित्यवर्गे अदितिपत्यसमूहेऽस्मासु परिवेषस्य वेष्टनस्य वेषमाकारं भजन्त्यौ सृज कुरु । अङ्कपालीं देहीति भावः। आदित्ये च परिवेषः परिधिर्युक्तः । तथा—अनङ्गलीला एव लहर्यस्ताभिस्तुषारैः शीतलैरङ्गैः कृत्वाऽस्माकं तापं कामज्वरं निर्वापय शमय । प्रसीद प्रसन्ना भव । सकामं त्वदङ्गसंपर्कादस्माकं कामज्वरः शान्तिं प्रयास्यतीति भावः । शीतलेन तापशान्तिर्युक्ता । 'चार्वङ्गि निर्वापय' इति वा पाठः । 'अनुग्रहोऽस्मासु यदि त्वदीयस्तद्देहि देहि द्रुतमङ्कपालीम्' इति पूर्वार्धपाठः क्वचित् । स स्पष्टार्थः । भुजाशब्द आवन्तोऽपि । 'परिवेषो रवेः पार्श्वमण्डले वेष्टने तथा' इत्यजयपालः ॥ ९२ ॥

दयस्व किं घातयसि त्वमस्मा-
ननङ्गचण्डालशरैरदृश्यैः ।
भिन्ना वरं तीक्ष्णकटाक्षबाणैः
प्रेमस्तव प्रेमरसात्पवित्रैः ॥ ९३ ॥

दयस्वेति ॥ हे भैमि ! दयस्व त्वं दयां कुरु । अदृश्यैराकस्मिकलग्नैः अनङ्ग एव चण्डालस्तस्य शरैः प्रयोज्यैः प्रयोजिका त्वम् अस्मान्किं किमिति घातयसि, अपित्वेवं त्वया न कार्यम् । अन्योऽपि स्ववैरिणं चण्डालेनादृश्यैर्बाणैर्मारयति । तर्हि किं कार्यमित्यत आह—वयं प्रेमरसात्प्रीतिरूपाद्रसात्पवित्रैः पूर्णैः पूतैश्च तव तीक्ष्णकटाक्षलक्षणैर्बाणैर्भिन्ना विदीर्णाः सन्तो यत् प्रेमः म्रियामहे प्राणांस्त्यक्ष्यामः तत्वरं मनागिष्टम् । चण्डालबाणप्रयोज्यकर्तृकमरणापेक्षया तव पवित्रकटाक्षलक्षणैर्बाणैर्मरणं श्रेष्ठमित्यर्थः । कटाक्षैरस्मानाश्वासय । वृणीष्वेति भावः । रसादुदकात्पवित्रत्वं युक्तम् । प्रेमः प्रपूर्वाद्दिणो मरणवाचिनो लङुत्तमबहुवचनम् ॥ ९३ ॥

त्वदर्थिनः सन्तु परस्सहस्राः
प्राणास्तु नस्त्वच्चरणप्रसादः ।
विशङ्कसे कैतवनर्तितं चे-
दन्तश्चरः पञ्चशरः प्रमाणम् ॥ ९४ ॥

त्वदर्थिन इति ॥ परस्सहस्रा बहवस्त्वदर्थिनस्त्वदभिलाषुकाः सन्तु, नोऽस्माकं प्राणास्तु पुनस्त्वच्चरणयोः प्रसादः त्वच्चरणौ चेत्प्रसन्नौ भवतस्तर्ह्येव नः प्राणनं, नान्यथेत्यर्थः । इदं कैतवनर्तितमलीकभाषितमिति चेत् विशङ्कसे मन्यसे तर्ह्यन्तश्चरोऽन्तर्वर्ती पञ्चशरः कामः प्रमाणमत्र साक्षी । त्वन्निमित्तमस्माकं कियती पीडा भवतीति काम एव त्वया पृच्छयताम् । वयं चेन्मिथ्याभाषिण इत्यर्थः । कामोऽन्तर्वर्तित्वात्सर्वं वेत्ति । कूटसाक्ष्यं करोतीत्यर्थः। अतो वयमेवानुग्राह्या नान्य इति भावः । परस्सहस्राः परश्शता इतिवत् ॥ ९४ ॥

अस्माकमस्मान्मदनापमृत्यो-
स्त्राणाय पीयूषरसायनानि ।
सुधारसादप्यधिकं प्रयच्छ
प्रसीद वैदर्भि निजाधरं च ॥ ९५ ॥

अस्माकमिति ॥ हे वैदर्भि! 'समग्रगुणा वैदर्भी' इति रीतिविशेषसदृशत्वेन विदर्भराजात्मजात्वेन च तथोक्ते । अस्मात्—पीडकत्वेनापह्नूयमानस्वरूपात् मदनरूपादपमृत्योः तस्य सकाशात् अस्माकं त्वदेकशरणानां देवानां त्राणाय रक्षाकृते । पीयूषरसस्यायनभूतानि सन्देशाक्षराणीति शेषः, यद्वा—पीयूषरसस्यायनानि धारा इत्यर्थः । च तथा । इदं समुच्चयार्थम् । सुधारसादपि अधिकं पेयं निजाधरं प्रयच्छ एवं प्रसीद चेत्यर्थः ॥ ९५ ॥

अस्माकमध्यासितमेतदन्त-
स्तावद्भवत्या हृदयं चिराय ।

---

१ सुधयाऽभेदमध्यवसाय्य त्वत्कान्तिमित्युक्तमिति रूपकम्,श्वासनयेति रूपकातिशयोक्तिः,तस्य पात्रविशेषाध्यवसानमूलत्वात् । २ तुषारैरिति परिकरः । वेषेति तु यमकं शब्दालङ्कारः ।

१ अनङ्गचण्डालेत्यादौ रूपकं परिकरश्च, प्रेम इति यमकम्, चेत्यन्यत् । २ अत्र प्रसादः प्राणा इति रूपकं, विशङ्कसे इति समासोक्तिः यथा नृपतिसंनिधौ स्वसत्यत्वं साधयितुं साक्षिणमुपस्थापयति तथोदन्तावगतेः । ३ मदनापमृत्योरिति मदनस्य चाण्डालत्वं,तद्द्वाराऽऽपादितस्य च मृत्योर्जघन्यत्वमवगत्येदमुक्तम्, अत्र चाण्डालपदार्थनिगरणाद्रूपकातिशयोक्तिः ।

बहिस्त्वयाऽलंक्रियतामिदानी-
मुरो मुरं विद्विषतः श्रियेव ॥ ९६ ॥

अस्माकमिति ॥ हे भैमि, भवत्या अस्माकमेतद्धृदयमन्तः आन्तरदेशे तावत् पुनः चिरायाध्यासितमधिष्ठितम् । चिरकालं चित्तमध्ये धृतासीत्यर्थः । परमिदानीं तत् उरः त्वया बहिर्देशेऽप्यलंक्रियताम् आलिङ्ग्यतामित्यर्थः । कया कस्येव—श्रिया मुरं विद्विषतो विष्णोरिव । 'द्विषः शतुर्वा' इति(वा.)मुरामिति द्वितीया॥९६॥

दयोदयश्चेतसि चेत्तवाभू-
दलंकुरु द्यां विफलो विलम्बः ।
भुवः स्वरादेशमथाचरामो
भूमौ धृतिं यासि यदि स्वभूमौ ॥९७ ॥

दयोदय इति ॥ तव चेतसि अस्माकमुपरि दयाया उदयश्चेदभूदुद्भूत् तर्हि त्वं द्यां स्वर्गमलंकुरु । विलम्बो विफलः । न कर्तव्य इत्यर्थः । अथ यदि स्वस्य भूमावुत्पत्तिस्थाने भूमौ भूलोके धृतिं प्रीतिं यासि प्राप्नोषि तर्हि वयं भुवो भूलोकस्य स्वरादेशं स्वर्गसंज्ञामाचरामः कुर्मः । यत्र वयं स एव स्वर्गः । वर्येऽप्यागत्य स्वर्गभोगानत्रैव कुर्म इति भावः । 'क्ष्मामेव देवालयतां नयामो भूमौ रतिश्चेत्तव जन्मभूमौ' इति च पाठः॥९७॥

धिनोति नास्माञ्जलजेन पूजा
त्वयाऽन्वहं तन्वि वितन्यमाना ।
तव प्रसादोपनते तु मौलौ
पूजाऽस्तु नस्त्वत्पदपङ्कजाभ्याम् ॥९८॥

धिनोतीति ॥ हे तन्वि, त्वया अन्वहं प्रत्यहं जलजेन वितन्यमाना क्रियमाणा पूजा अस्मान्न धिनोति न प्रीणयति । किंतु तव प्रसादाय प्रीतिकलहे प्रसन्नत्वाय नमस्कारकरणवशादुपनते नम्रे नोऽस्माकं मौलौ शिरसि त्वत्पदपङ्कजाभ्यां चरणाघातवशात्त्वच्चरणकमलाभ्यां तु पूजास्तु । कमलपूजापेक्षया त्वच्चरणकमलयोरुत्कृष्टत्वात्ताऽस्माकं सुखायालं, न कमलपूजा । त्वच्चरणाघातेन वयं यथा सुखिनो भवामः तथा कुर्वीति भावः ॥ ९८ ॥

स्वर्णैर्वितीर्णैः करवाम वाम-
नेत्रे भवत्या किमुपासनासु ।
अङ्ग त्वदङ्गानि निपीतपीत-
दर्पाणि पाणिः खलु याचते नः॥९९॥

स्वर्णैरिति ॥ हे वामनेत्रे, सुन्दरनेत्रे, भवत्या त्वया उपासनासु पूजासु वितीर्णैरर्पितैः स्वर्णपुष्पैः किं करवाम । तानि बहून्यस्माकं विद्यन्ते तैः किमपि प्रयोजनं नास्ति । तर्हि किम्—हे अङ्ग प्रिये, खलु यस्मात् नः अस्माकं पाणिः निपीतः पीतानां सुवर्णादीनां पदार्थानां दर्पो गर्वो यैस्तानि त्वदङ्गानि याचते । यैः सुवर्णादि जितं तदभिलाषिणः पुरुषस्य सुवर्णेन प्रीतिः कथं स्यादित्यर्थः ॥ ९९ ॥

वयं कलादा इव दुर्विदग्धं
त्वद्गौरिमस्पर्धि दहेम हेम ।
प्रसूननाराचशरासनेन
सहैकवंशप्रभवभ्रु वभ्रु ॥१०० ॥

वयमिति ॥ हे प्रसूननाराचः कामस्तस्य शरासनेन धनुषा सह एकस्मिन् वंशे वेणौ कुले च प्रभवो ययोः तादृशे भ्रुवौ यस्याः तत्संबुद्धिः। प्रायेणैकवंशोत्पन्नस्तुल्यो भवति । वयं कलादा इव स्वर्णकारा इव तव गौरिम्णा सह स्पर्धि त्वद्गौरत्वसाम्याभिलाषि अत एव उत्तमस्पर्धया दुर्विदग्धं दुर्विनीतं बभ्रु पिङ्गलं हेम सुवर्णं देहमग्नौ प्रक्षिपामः । बभ्रुत्वादन्यवर्णत्वं सुवर्णस्य सूचितम् । वयं त्वदीयास्त्वदपराधकारिणः सुवर्णस्य वह्निप्रक्षेपरूपं दण्डं कुर्म इत्यर्थः । अस्माकं सुवर्णेन प्रयोजनं नास्तीत्यभिप्रायः । 'कलादो रुक्मकारके' 'बभ्रु स्यात्पिङ्गले त्रिषु' इति चामरः । 'नेयङुवङ्स्थानावस्त्री १ । ४ । ४' इति नदी संज्ञानिषेधात् 'अम्बार्थनद्यो ह्रस्वः ७ । ३ । १०१' इति ह्रस्वाभावात् 'प्रभवभ्रु' इत्यत्र सम्बुद्धिह्रस्वो 'विमानना सुभ्रु कुतः' इत्यादिमहाकविप्रयोगदर्शनाज्ज्ञातव्यः । समाधानान्तरं च ग्रन्थान्तराज्ज्ञातव्यम् ॥ १०० ॥

सुधासरः सुत्वदनङ्गतापः
शान्तौ न नः किं पुनरप्सरःसु ।
निर्वाति तु त्वन्ममताऽक्षरेण
सूनाशुगे पोर्मधुसीकरेण ॥ १०१ ॥

---

१ श्रियेवेत्युपमा । २ दयोदय इत्यादावनुप्रासः, काव्यलिङ्गं च । ३ अत्रानुप्रासः, ।

१ अत्रानुप्रासो यमकं चादर्पपानासम्भवेऽपि दर्पपानोक्तेरतिशयोक्तिः । २ हेमेति वाञ्चिति च यमकम्, अनुप्रासश्च, कलादा इवेति गौरिमस्पर्धीति चोपमा ।

सुधेति ॥ नोऽस्माकं त्वन्निमित्तोऽनङ्गतापः कामज्वरः सुधासरःस्वमृतसरसीष्वपि निमज्जनेन न शान्तः । किं पुनः अपां सरःसूदकसरसीषु, अथ च रम्भादिदेवाङ्गनासु न शान्तः । तदपेक्षया त्वमधिकेति भावः । तर्हि कथं शाम्यतीत्याशङ्क्याह—सूनाशुगः प्रसूनाशुगः सूनाऽऽशुगेषु यस्येति तथाभूतो वेति कामस्तस्य इषुः पुष्पं तस्य मधुसीकररूपेण तव ममतारूपेणाक्षरेण इन्द्रादयो मदीया इति स्वस्य स्वामित्वम्, इन्द्रादीनां च स्वीयत्वं सूचयता तु पुनर्निर्वाति । अमृतरसस्यापेक्षया ममताक्षररूपस्य मधुसीकरस्याधिक्यादित्यर्थः । यो बहुभिर्न शान्तः, स एकेन शान्त इति चित्रम् । अस्मान्वृणीष्वेति भावः ॥ १०१ ॥

खण्डः किमु त्वद्गिर एव खण्डः
किं शर्करा तत्पथशर्करैव ।
कृशाङ्गि तद्भङ्गिरसोत्थकच्छ-
तृणं न दिक्षु प्रथितं तदिक्षुः ॥१०२॥

खण्ड इति ॥ हे कृशाङ्गि, त्वद्गिरस्त्वद्वाण्याः खण्ड एव लेश एव खण्डः शर्करारसविशेषः किमु । त्वद्वाणीशकलवाच्यत्वादेव तस्य खण्डत्वं नाम माधुर्यं च । जातमित्युत्प्रेक्षा । तस्या वाण्याः पन्था गमनमार्गः तस्मिन्न शर्करा कर्परांशरूपैव शर्कराख्य इक्षुविकारः किम् । कर्परांशनामसाम्याच्छर्करेति नाम जातं माधुर्यं च । पथि शर्करा भवन्ति । तस्या वाण्या भङ्गिर्वक्रोक्त्यादिरचना तज्जनितः शृङ्गारादिरसस्तस्मात्, अथ च तल्लक्षणादुदकात् उत्थमुत्थितं यत्कच्छतृणं जलप्रायप्रदेशतृणं तदेव दिक्षु इक्षुरिति प्रथितं नु । कच्छतृणस्य च इक्षुरिति संज्ञा । तद्रससंबन्धान्माधुर्यं जातं किमित्यर्थः । खण्डादिभ्योऽप्यधिकं त्वद्वाणी मधुरतरेति भावः । 'शर्करा खण्डविकृतावुपलाकर्परांशयोः' इति विश्वः ॥ १०२ ॥

ददाम किं ते सुधयाऽधरेण
त्वदास्य एव स्वयमास्यते हि ।
चन्द्रं विजित्य स्वयमेव भावि
त्वदाननं तन्मखभागभोजि ॥ १०३ ॥

ददामेति ॥ हे भैमि, वयं ते तुभ्यं किं ददाम । अपितु त्वद्दानयोग्यं वस्तु किमपि न विद्यत इत्यर्थः । अमृतामरत्वयज्ञभागेषु मध्ये एकं देयमित्याशङ्क्याह— अधरेण सुधया ओष्ठलक्षणेनामृतेन त्वदास्य एव स्वयं हि यस्मादास्यते स्थीयते । ओष्ठेन त्वन्मुखे सुधीभूयैव स्थीयते यत इति वा । यतश्च त्वदाननं चन्द्रं विधुं विजित्य स्वयमेव तस्य चन्द्रस्य मखभागभोजि यज्ञभागग्राहि भावि भविष्यति । तत्तदपि न देयमित्यर्थः । अमृतयज्ञभागदानद्वारोपकर्तुं न शक्नुम इत्यर्थः । सुधाचन्द्राभ्यां सकाशात्त्वदोष्ठमुखमधिकमिति भावः ॥१०३॥

प्रिये वृणीष्वामरभावमस्म-
दिति त्रपाकृद्वचनं न किं नः ।
त्वत्पादपद्मे शरणं प्रविश्य
स्वयं वयं येन जिजीविषामः ॥ १०४ ॥

अमरत्वमपि दातुमशक्यमित्याह—

प्रिय इति ॥ नोऽस्माकं वचनमस्माकमेव त्रपाकृल्लज्जावहं किं न, अपितु लज्जावहमेव । इति किम्— हे प्रिये, त्वमस्मत्सकाशादमरभावमविनाशत्वं वृणीष्वेति । येन करणेन वयं त्वत्पादपद्मे शरणं प्रविश्य तल्लक्षणमेव रक्षितारं प्राप्य स्वयम् आत्मनैव जिजीविषामः जीवितुमिच्छामः । स्वयं तीर्णो हि परांस्तारयति न त्वतीर्णः । त्वच्चरणसेवया जीवतामस्माकं तुभ्यममरत्वं दातुं का शक्तिः । अत एव पूर्वोक्तं वचनं लज्जावहमेवेत्यर्थः । अत एव तवोपकर्तुमसमर्थानस्मान् दयां विधाय वृणीष्वेति भावः ॥ १०४ ॥

नास्माकमस्मान्मदनापमृत्यो-
स्त्राणाय पीयूषरसायनानि ।
प्रसीद तस्मादधिकं निजं तु
प्रयच्छ पातुं रदनच्छदं नः ॥ १०५ ॥

नेति ॥ यस्मात्पीयूषरूपाणि रसायनानि अस्मान्मदनलक्षणात्, तज्जनिताद्वा अपमृत्योः सकाशादस्माकं त्राणाय न भवन्ति, तस्मात्प्रसीद अस्माकमुपरि प्रसन्ना भव । त्वमधिकममृतरसायनेभ्योऽप्यतितरां स्वादुम्, अधिकसामर्थ्यं वा निजं स्वीयं रदनच्छदमोष्ठं तु पुनः

१ अनङ्गत्वे तापाभावस्तथाऽपि अनङ्गस्य ताप इति विरुद्धमिवेति विरोधाभासः । अप्सरस्विति श्लेषः, मधुसीकरेणाक्षरेणेति रूपकं च । २ अत्र यमकमनुप्रासश्च शब्दालङ्कारा किमित्युत्प्रेक्षाऽलङ्कारः ।

१ अत्र सुधाया अधरत्वेनोक्तौ व्यतिरेकोऽर्थालङ्कारः अनुप्रासः शब्दालङ्कारश्च । २ पादपद्मे इत्युपमा, अनुप्रासस्तु स्फुट एव ।

पातु नोऽस्मभ्यं प्रयच्छ देहि । अनेन मदनापमृत्युः शान्तिं प्राप्स्यतीति भावः । सामान्यमौषधं यत्रापमृत्युशान्त्यर्थं न प्रभवति तत्र तदपेक्षयाऽधिकमौषधं दीयते तेनापमृत्युः शाम्यति तद्वदस्माकम् । '-रसोऽपि नार्धो' इति पाठे तस्माद्रसादित्यर्थः । अर्धाच्च यत्तदौ । अपमृत्योः, 'भीत्रार्थानां भयहेतुः १।४।२५' इत्यपादानत्वम् ॥ १०५ ॥

**प्लुष्टः स्वैश्चापरोपैः सह स हि मकरेणात्मभूः केतुनाऽभू-द्धत्तां नस्त्वत्प्रसादादथ मनसिजतां मानसो नन्दनः सन् । भ्रूभ्यां ते तन्वि धन्वी भवतु तव सितैर्जैत्रभल्लः स्मितैः स्ता-दस्तु त्वन्नेत्रचञ्चत्तरशफरयुगाधीनमीनध्वजाङ्कः ॥ १०६ ॥**

प्लुष्ट इति ॥ य आत्मभूः कामः स्वैश्चापरोपैर्धनुर्बाणैर्मकरेण मीनरूपेण केतुना ध्वजेनापि सह प्लुष्टो दग्धोऽभूत् स कामः, अथानन्तरम् । इदानीमिति यावत् । त्वत्प्रसादात् नोऽस्माकं मानसो मनःसंबन्धी नन्दनो हर्षकः, अथ च मानसः पुत्रः सन् मनसि जायतेऽसौ मनसिजस्तद्भावं धत्तां धारयतु । तव संगमवशादानन्दकः कामोऽस्मन्मनसि पुनरुत्पद्यताम् । अत एव मनसिजत्वमपि धारयत्वित्यर्थः । हे तन्वि, स कामस्ते भ्रूभ्यां धन्वी भवतु । भ्रूभ्यामिति द्विवचनेन पूर्वापेक्षया चापद्वयं सूचितम् । तव सितैः श्वेतैस्तीक्ष्णैश्च स्मितैः कृत्वा जेतार एव जैत्रा एवंभूता भल्ला बाणविशेषा यस्य एवंविधः स्ताद्भवतु । अत्रापि पूर्वापेक्षयाऽधिकं तीक्ष्णत्वं जेतृत्वम् अनियतसंख्यत्वं च सूचितम् । तव नेत्रे एव चञ्चत्तरम् अतिशयेन शोभमानं चपलतरं वा यच्छफरयुगं तस्य अधीनो मीनध्वजलक्षणोऽङ्कः चिह्नं यस्य एवंभूतोऽस्तु । पूर्वमेक एव ध्वजोऽभूत्, इदानीं तु द्वौ मीनध्वजाविति शफरयुगपदेन सूचितम् । त्वयाऽस्मद्वरणे कृते सति पूर्वापेक्षयाऽधिकसामर्थ्यः साङ्गो मदनः पुनरुत्पत्स्यते तस्मादस्मान्वृणीष्वेति भावः । अन्योऽपि विनष्टो देवताप्रसादात्पुनरुत्पद्यतेऽधिकशक्तिश्च भवति । 'नन्दनो हर्षके सुते' इति विश्वः । धन्वी व्रीह्यादिः ॥ १०६ ॥

**स्वप्नेन प्रापितायाः प्रतिरजनि तव श्रीषु मग्नः कटाक्षः-श्रोत्रे गीतामृताब्धौ त्वगपि ननु तनूमञ्जरीसौकुमार्ये । नासा श्वासाधिवासेऽधरमधुनि रसज्ञा चरित्रेषु चित्तं-तन्न-स्तन्वङ्गि कैश्चिन्न करणहरिणैर्वागुरा लङ्घितासि ॥ १०७ ॥**

स्वप्नेनेति ॥ ननु यस्मात्संबुद्धौ वा नः अस्माकं कटाक्षः प्रतिरजनि रजन्यां रजन्यां स्वप्नेन प्रापितायाः विषयीकृतायास्तव श्रीषु शोभासु यस्मान्मग्नः । तथा यस्मात् नः श्रोत्रं कर्णौ गीतामृताब्धौ गानरूपसुधासमुद्रे मग्ने । यस्माच्च नस्त्वगपि सुकुमारत्वात् तनूमञ्जरी शरीररूपा मञ्जरी तस्याः सौकुमार्ये मग्नाः यस्माच्च नः नासा तव श्वासाधिवासे निःश्वासरूपे गन्धमाल्यादिपरिमले मग्ना । यस्माच्च नः रसज्ञा जिह्वा अधररूपेऽधरसंबन्धिनि वाऽमृते निमग्ना । तस्माच्च नः चित्तं तव चरित्रेषु विलासादिसर्वव्यापारेषु मग्नम् । तत्तस्मात् हे तन्वङ्गि, नोऽस्माकं कैश्चिदपि करणहरिणैरिन्द्रियरूपैर्मृगैर्वागुरा मृगबन्धनरूपा न लङ्घितासि नातिक्रान्तासि । वागुरातुल्यया त्वया बद्धानि चक्षुरादीनि पञ्चेन्द्रियाणि त्वद्रूपं स्वं स्वं विषयं प्राप्य त्वामतीत्य गन्तुं न शक्नुवन्तीत्यर्थः । स्वप्नेऽप्यस्माभिरन्या न स्पृष्टेत्येवमनुरागिणोऽस्मान्छाटिति वृणीष्वेति भावः । देवानामस्वप्नत्वेऽपि स्वानुभवसिद्धत्वेनैव दूतेनैवमुक्तम् । प्रतिरजनि स्वप्नेन प्रापितायाः इत्यनौचिती नाशङ्कनीया । यद्वा विरहवशात्प्रतिकूला रजनी रात्रिर्यस्यास्तादृशी भैमी स्वप्न इव स्वप्नो विपर्ययज्ञानम् । उन्मादावस्थेति यावत् तया प्रापितायाः सर्वत्र दृश्यमानायास्तवेति व्याख्येयम् । रजन्या हरिद्रायाः प्रतिकूला । यद्वा-प्रतिकूला रजनी यस्याः गौरत्वातिशयेन जितहरिद्रे भैमीति वा । वागुरापि मृगैर्लङ्घितुं न शक्यते । प्रतिरजनि वीप्सायामव्ययीभावः । पक्षे समासान्तविधेरनित्यत्वात्कप्रभावः । कैश्चिच्छब्दादपिशब्दो द्रष्टव्यः । तन्वङ्गी 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति वा ङीप् ॥ १०७ ॥

---

१ पीयूषरसायनानामपमृत्युवारकत्वाभावेऽपि अधरस्यापमृत्युवारकत्वोक्त्यातिशयोक्तिः ।

१ अत्र स्रग्धरा छन्दः, 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति तल्लक्षणम् अत्रानुप्रासः शब्दालङ्कारः, सहेति सहोक्तिश्च । २ अत्रापि स्रग्धरा छन्दः । करणहरिणैरिति रूपकम् । तुर्यपादार्थस्य वा वाक्यान्तरार्थहेतुभूतत्वात् काव्यलिङ्गम् ।

इति धृतसुरसार्थवाचिकस्र-
ङ्निजरसनातलपत्रहारकस्य ।
सफलय मम दूततां वृणीष्व
स्वयमवधार्य दिगीशमेकमेषु ॥१०८॥

इतीति ॥ हे भैमि ! त्वं मम दूततां सफलय कृतार्थीकुरु । एषु इन्द्रादिषु मध्ये एकं दिगीशं स्वयमवधार्य विचार्य न तु सखीभिः सार्धमित्यर्थः । यस्मिन्ननुरागस्तं वृणीष्व । कस्यचिदेकस्य वरणान्मम दूत्यसाफल्यं कुर्वित्यर्थः । किम्भूतस्य मम—इति पूर्वोक्तप्रकारेण धृता सुरसार्थानामिन्द्रादिदेवसङ्घानां वाचिकस्रक् संदेशवचनपरम्परा येनैवंविधं निजं स्वीयं रसनातलं जिह्वास्वरूपं तद्रूपं यत् पत्रं तस्य हारक आनायकस्तस्य । अन्योऽपि लेखपत्रानायकस्य दूतस्य दूत्यं सफलयेति १०८

आनन्दयेन्द्रमथ मन्मथमग्नमग्नि
केलीभिरुद्धर तनूदरि नूतनाभिः ।
आसादयोदितदयं शमने मनो वा
नो वा यदीत्यमथ तद्वरुणं वृणीथाः १०९

आनन्दयेति ॥ हे तनूदरि भैमि, त्वं वरणेनेन्द्रमानन्दय । अथवा नूतनाभिर्नवनवाभिः केलीभिः सुरतक्रीडाभिः मन्मथमग्नं मदनजनितपीडामग्नमग्निं कामपीडायाः सकाशादुद्धर पृथक्कुरु । प्रवाहादिमग्नमन्यदपि नूतनकलश्यादिभिरुद्ध्रियते । वा अथवा शमने यमे मन उदिता दया यस्यैवंविधं सकृपमासादय कुरु । वा अथवा यदि इत्थम् एवं नो इन्द्रादिवरणं न क्रियते अथ तर्हि वरुणं वृणीथाः वृणीष्व । चतुर्णां मध्ये यस्य कस्यापि वरणान्मम दूत्यं सफलयेति भावः ॥ १०९ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तस्यागादयमष्टमः कविकुलादृष्टाध्वपान्थे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ११० ॥

श्रीहर्षमिति ॥ किंभूते महाकाव्ये—कविकुलेन कालिदासादिमहाकविसमूहेन अदृष्टोऽध्वा प्रमेयमार्गस्तस्य पान्थे नित्यं पथिके । अपूर्वप्रमेयपरिपुष्टे काव्येऽयमष्टमः सर्गः अगात्समाप्तिं प्राप्तः ॥ ११० ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशेऽष्टमः सर्गः ॥

---

## नवमः सर्गः ।

दूतवचनश्रवणानन्तरं किमभूदिति वर्णयितुं नवमं सर्गमारभते—

इतीयमक्षिभ्रुवविभ्रमेङ्गित-
स्फुटामनिच्छां विवरीतुमुत्सुका ।
तदुक्तिमात्रश्रवणेच्छयाऽशृणो-
द्दिगीशसंदेशगिरं न गौरवात् ॥ १ ॥

इतीति ॥ इयं भैमी इति पूर्वोक्ताम् दिगीशसंदेशगिरं दिक्पालानां वाचिकं तस्य नलतुल्यदूतस्योक्तिमात्रस्य केवलोक्तस्य श्रवणेच्छयाकर्णनेच्छया अशृणोत्, न गौरवात् । इन्द्रादीनामाज्ञा श्रोतव्येत्यादरान्न श्रुतवती । किंभूता—अक्षिभ्रुवस्य विभ्रमः परिस्पन्दविलासः, तल्लक्षणेनेङ्गितेन स्वाभिप्रायसूचकचेष्टितेन स्फुटामनिच्छां दिक्पालानामनादरं विवरीतुं विशेषेण प्रकटीकर्तुमुत्सुकोत्कण्ठिता । अक्षिणी च भ्रुवौ च 'अचतुर–५ । ४ ।७७' इति साधुः ॥ १ ॥

तदर्पितामश्रुतवद्विधाय तां
दिगीशसंदेशमयीं सरस्वतीम् ।
इदं तमुर्वीतलशीतलद्युतिं
जगाद वैदर्भनरेन्द्रनन्दिनी ॥ २ ॥

तदिति ॥ वैदर्भनरेन्द्रनन्दिनी भैमी उर्वीतले भूतले आह्लादकत्वाच्छीतलद्युतिं चन्द्रं तं नलम् इदं वक्ष्यमाणं जगाद । किं कृत्वा—तेन दूतेनार्पितामुक्तां तां दिगीशसंदेशमयीं दिक्पालवाचिकबहुलां सरस्वतीं वाणीमना-

---

१ अत्र पुष्पिताग्रा छन्दः, 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।' इति तल्लक्षणम् । वाचिकस्रगित्यादौ रूपकम् । २ अत्र वसन्ततिलका वृत्तम् । विकल्पालङ्कारः ।

१ अत्र सर्गे प्रायः समाप्तिं यावत् वंशस्थं वृत्तम्, 'जतौ तु वंशस्थमुदीरितं जरौ ।' इति तल्लक्षणात् । २ अत्रानुप्रासः ।

दराद्युत्तराभावात् अश्रुतवदश्रुतेन तुल्यं वर्तते अनाकर्णितामिव विधाय । प्रत्युत्तरमदत्त्वा स्वमनीषित-मुक्तवतीत्यर्थः ॥ २ ॥

मयाऽङ्ग पृष्टः कुलनामनी भवा-
नमू विमुच्यैव किमन्यदुक्तवान् ।
न मह्यमत्रोत्तरधारयस्य किं
ह्रियेऽपि सेयं भवतोऽधमर्णता ॥ ३ ॥

मयेति ॥ अङ्ग दूत, मया भवान् कुलनामनी पृष्टः सन् अमू कुलनामनी विमुच्यान्यदेव दिगीशसंदेशाद्य-प्रस्तुतमेव किमुक्तवान् । अयुक्तमेतदित्यर्थः । अत्र कुलनामप्रश्नविषये मह्यमुत्तरधारयस्य प्रत्युत्तरलग्नकस्य भवतोऽपि सेयं प्रस्तुताधमर्णता ह्रिये न किम् । प्रश्नो-त्तरमददतः परमन्यस्यापि ह्रीर्भवति उत्तमस्य तव कथं नेति । तस्मात्कुलनामनी कथयेति भावः । ऋणा-पाकरणे समर्थोऽन्योऽपि तदनपाकरणाल्लज्जापदं भवति । निषेधमात्रवाचिनो नकारस्य प्रथमान्तत्वमेव च युक्तमिति 'वपूर्वायाः प्रथमाया विभाषा ८ । १ । २६' इति वैक-ल्पिकत्वान्मयादेशाभावः । धारयतीति धारयः ' अनु-पसर्गाल्लिम्पविन्द—३। १ । १३८ ।' इति शः । उत्त-रस्य धारय इति समासः ॥ ३ ॥

अदृश्यमाना क्वचिदीक्षिता क्वचि-
न्ममानुयोगे भवतः सरस्वती ।
क्वचित्प्रकाशां क्वचिदस्फुटार्णसं
सरस्वतीं जेतुमनाः सरस्वतीम् ॥ ४ ॥

अदृश्येति ॥ भवतः सरस्वती वाणी सरस्वतीं नाम्ना सरस्वतीं नदीं जेतुमनाः । तत्तुल्या भवतीत्यर्थः । किंभूतां सरस्वतीम्—क्वचिद्देशविशेषे प्रकाशां प्रकट-जलाम्, क्वचिच्चास्फुटमप्रकटम् अर्ण उदकं यस्यास्ताम् । किंभूता तव सरस्वती—क्वचित्कुलनामविषये ममानुयोगे प्रश्ने उत्तरादानाददृश्यमाना गुप्ता, क्वचित् कुत आगतो-ऽसीति मम प्रश्ने ईक्षिता उत्तरदानात्प्रकटा । कुलनाम-

प्रश्नस्याप्युत्तरं प्रयच्छेति भावः । 'सरस्वती नदीभेदे गोवाग्देवतयोरपि ' इति विश्वः ॥ ४ ॥

गिरः श्रुता एव तव श्रवःसुधाः
श्लथाऽभवन्नाम्नि तु न श्रुतिस्पृहा ।
पिपासुता शान्तिमुपैति वारिजा
न जातु दुग्धान्मधुनोऽधिकादपि ॥ ५॥

गिर इति ॥ अतिमधुरत्वात् श्रवसोः कर्णयोः सुधा अमृतरूपास्तव गिरः श्रुता एव यद्यपि श्रुतास्तथापि तु पुनर्नाम्नि भवन्नामविषये श्रुतिस्पृहा श्रवणेच्छा न श्लथा शान्ता नाभवत् नाभूत् । अतस्तदपि कथयेति भावः । अतिमधुरवाणीसमाकर्णने कथं न शान्तिरित्याशङ्कायां हेतु-माह—वारिजा उदकसंबन्धिनी पिपासुता पानेच्छुता अधिकादुदकापेक्षयाऽतिमधुराद् दुग्धान्मधुनोऽपि जातु कदाचिदपि शान्तिं नोपैतीत्याभाणकः । तस्माद्युक्तमेत-दित्यर्थः । अधिकादपि जलापेक्षया बहुपीतादपि दुग्धा-न्मधुनो वेति वा । दुग्धापेक्षयाऽधिकान्मधुनोऽपीति वा । दुग्धान्न शाम्यति, नापि मधुनः, अधिकादप्यमृतादपि न शाम्यतीति वा । दुग्धमधुभ्यामधिकादमृतादपि न शाम्यति । अतिबहु किं वक्तव्यम् ॥ ५ ॥

बिभर्ति वंशः कतमस्तमोऽपहं
भवादृशं नायकरत्नमीदृशम् ।
तमन्यसामान्यधियाऽवमानितं
त्वया महान्तं बहु मन्तुमुत्सहे ॥ ६ ॥

बिभर्तीति ॥ सूर्यादिवंशमध्ये कतमो वंशः भवादृ-शमीदृशं हस्ताद्यभिनयनमात्रेण वर्णयितुं शक्यं न त्ववय-

१ अत्रोर्वीसलक्ष्मीतल्लुर्तिं तमिति रूपकम् । अत्रानु-प्रासश्च । २ सेयमधमर्णतेति रूपकम्, न मह्यमिति काव्यलिङ्गं च ।

१ अत्र यमकम्, नलवाचः सरिद्विशेषस्य च सर-स्वतीवाच्यत्वसाधारण्योद्भावने श्लेषः, इमं चोपजीव्य सरस्वत्योः स्वस्य प्राधान्यप्रकटनावश्यकतयाऽन्यो-ऽन्यस्याजिगीषाया उत्प्रेक्षणादुत्प्रेक्षा, किं स्वसा-विवादैः स्वद्योतकस्य साहाय्यानवलम्बितत्वाद् व्यङ्ग्या, तथा च श्लेषोद्भावितं सारूप्यमादायोपमा प्रत्याय्यत इत्युपमाऽपि व्यङ्ग्येति कविनिबद्धप्रौढो क्तिसिद्धाऽलङ्कारान्तरतोऽलङ्कारध्वनिश्च । २ गिर एव सुधा इति रूपकं, तथा च श्रुता इति पीता इत्य-र्थपरं, तेन सुधापानेऽपि स्पृहायास्तृष्णायास्सद्भाव इति विरोधाभासध्वनिः, अपेरप्रयोगात्, पिपासुतेत्यादौ अर्थान्तरन्यासश्च ।

ववत्, तम ईश्वरगुणस्तदपहान्ति तिरस्करोति क्रोधराहितमज्ञानविनाशिनं, शोकापनुदं वा, नायकरत्नं बिभर्ति । यस्मिंस्त्वमुत्पन्नः स कतमो वंश इति प्रश्नः । अन्यसामान्यधियाऽन्यवंशतुल्यत्वबुद्ध्याऽवमानितं तिरस्कृतमेवंगुणविशिष्टेन त्वया कृत्वा महान्तमत्युत्तमं तं वंशं बहु आतितरां मन्तुं संमानयितुमुत्सहे उत्साहवत्यस्मि । अनन्यतुल्यत्वेन पूजयितुमिच्छामि । वंशं कथयेति भावः । अथ च—स्वतेजसा तमःस्तोमनिराकरणसमर्थं लोकोत्तरं हारमध्ययोग्यं रत्नं यो वंशो धारयति तं वंशमन्यतुल्यत्वबुद्ध्या प्रथमं तिरस्करोति, पश्चात्तद्रत्नं दृष्ट्वा तस्य वेणोर्भूयान्मानः क्रियते तद्वत् । वेणोरपि रत्नोत्पत्तिर्वृद्धैरुक्ता । यद्वा—भवादृशं भवन्तमिव सम्भाव्यं नायकरत्नं प्रकाशकत्वादिनाऽन्यापेक्षया रत्नमिव ज्वलन्तं तमोऽपहं सूर्यमित्यर्थः । 'तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे,' 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । तमोऽपहम्, 'अपे क्लेशतमसोः ३।२।१५०' इति डः ॥ ६ ॥

इतीरयित्वा विरतां स तां पुन-
गिराऽनुजग्राहतरां नराधिपः ।
विरुत्य विश्रान्तवतीं तपात्यये
घनाघनश्चातकमण्डलीमिव ॥ ७ ॥

इतीति ॥ स नराधिपो नल इति पूर्वोक्तमीरयित्वोक्त्वा विरतां विश्रान्तां तां भैमीं गिरा वाचा पुनरनुजग्राहतरामतितरामनुगृहीतवान् । उवाचेत्यर्थः । तां प्रति तस्य वंशकथनवचनमेवानुग्रहः । कः कामिव—तपात्यये ग्रीष्मान्ते प्रावृषि घनाघनो वर्षुको मेघः चातकमण्डलीमिव । किं कृत्वा—पिपासावशाद्विरुत्य शब्दित्वा विश्रान्तवतीं विश्रान्ताम् । 'शक्रघातुकमत्तेभवर्षुकाब्दा घनाघनाः' इत्यमरः । 'चरिचलि पतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्' इत्यादितो द्वित्वे आगागमे च अनुवर्तमाने 'हन्तेर्घत्वं च' इति (वा०) साधुः ॥ ७ ॥

अये ममोदासितमेव जिह्वया
द्वयेऽपि तस्मिन्ननतिप्रयोजने ।
गरौ गिरः पल्लवनार्थलाघवे
मितं च सारं च वचो हि वाग्मिता ॥ ८ ॥

अये इति ॥ अये भैमि, मम जिह्वया तस्मिन्कुलनामलक्षणे द्वयेऽपि उदासितमेवोदासीनतयैव जातम् । यतः—अनतिप्रयोजनेऽतिशयितप्रयोजनशून्ये । निरर्थकत्वान्मया द्वयं न कथितमिति भावः । निष्प्रयोजनेऽपि पृष्टे प्रत्युत्तरं दातव्यमित्याशङ्क्याह—पल्लवनम् अत्यल्पेऽपि प्रमेये बहुशब्दरचनम् । अर्थलाघवमर्थसंकोचश्च द्वे अपि गिरो वाण्या गरौ विषतुल्यौ दोषौ । अविचार्यापि विषं यथा त्यज्यते तथैते अपि त्याज्ये इत्यर्थः । तस्मान्निरर्थकं न प्रष्टव्यं, पृष्टमपि प्रत्युत्तरार्हं न भवतीति मज्जिह्वयोदासितमिति भावः । दोषत्वमेव समर्थयते—हि यस्मात् मितं च शब्दतः सारं चार्थतः, यद्वचः सैव वाग्मिता पण्डितता । तद्विपरीतस्य दोषवत्त्वं स्फुटमेवेत्यर्थः । चौ सामस्त्यं सूचयतः । उदासितम्, भावे क्तः । पल्लवशब्दो लक्षणया विस्तारवाची तस्मात् 'तत्करोति तदाचष्टे ।' इति ण्यन्ताल्ल्युट् । 'ण्यासश्रन्थो युच् ३।३।१०७' इति युज् वा ॥ ८ ॥

वृथा कथेयं मयि वर्णपद्धतिः
कयाऽऽनुपूर्व्या समकेति केति च ।
क्षमे समक्षव्यवहारमावयोः
पदे विधातुं खलु युष्मदस्मदी ॥ ९ ॥

नाम्नोऽतिप्रयोजनत्वाभावं समर्थयते—

वृथेति ॥ हे भैमि, मयि का वर्णपद्धतिः वर्णपङ्क्तिः समकेति संकेतिता । कथा च आनुपूर्व्या परिपाट्या संकेतिता । चकारः प्रश्नसमुच्चयार्थः । नकाराकारलकारशकारविसर्जनीयात्मिका संज्ञा संकेतिता । किं तत्रापि तद्विपरीता लकारादिरूपा वा इयं कथा गोष्ठी निष्प्रयोजना । नामसंज्ञानभिधाने व्यवहारसिद्धिः कथमित्यत आह—खलु यस्मात् आवयोस्तव मम च समक्षं प्रत्यक्षं व्यवहारं विधातुं कर्तुं साधयितुं युष्मदस्मदी पदे सुबन्ते क्षमे समर्थे । परोक्षव्यवहार एव हि संज्ञा सप्रयोजना, प्रत्यक्षव्यवहारे च त्वमेवं कुरु, अहमेवं करिष्यामीति युष्मदस्मद्भ्यामेव

---

१ भवादृशं तमोऽपहमिति सूर्यादपि आधिक्यप्रत्यायनाद् व्यतिरेको व्यज्यते, तमोऽपहं भवादृशं नायकरत्नमिति पक्षे तु तमोऽपहेन भवत्पदार्थस्याभेदोक्ते रूपकं, रत्नाद् व्यतिरेकश्च, अनुप्रासोऽपि शब्दालङ्कारोऽन्तेऽस्त्यन्यत् । २अत्रानुप्रासः । मण्डलीमिवेत्युपमा।

---

१ गरत्वारोपाद्रूपकम्, मितमित्यादिना पूर्वत्र हेतुमद्भावमुत्पाद्य हेतुतास्थापनात् काव्यलिङ्गं च ।

कार्यसिद्धेः पूर्वोक्ता कथा निष्प्रयोजनैव यद्वा—चकारात्कुलप्रश्नोऽपि वृथैवेत्यर्थः । यथा नामप्रश्नः । उत्तरश्लोकेन कुलस्य दत्तोत्तरत्वात् । व्याख्यानान्तरं तथा ज्यायो नेत्युपेक्ष्यम् । समकेतीति 'कित निवासे रोगापनयने च' इत्यस्य लुङि रूपम् । आवयोरिति परत्वादस्मदः शेषः । युष्मदस्मदी शब्दपरत्वादादेशाभावः ॥ ९ ॥

**यदि स्वभावान्मम नोज्ज्वलं कुलं**
**ततस्तदुद्भावनमौचिती कुतः ।**
**अथावदातं तदहो विडम्बना**
**तथा कथा प्रेष्यतयोपसेदुषः ॥ १० ॥**

नामाकथने हेतुमुक्त्वा कुलाकथने हेतुमाह—

यदीति ॥ मम कुलं स्वभावाद्यदि उज्ज्वलं निर्मलं न ततस्तर्हि सदोषस्य तस्य कुलस्योद्भावनं कथनं मम कुतः कथमौचिती,अपितु तादृशस्य कथनमयुक्तमित्यर्थः । अथ अवदातं तत्कुलं तर्हि प्रेष्यतया परदूतत्वेनोपसेदुष आगतस्य मम तथा तादृशी कथा तादृक्प्रसिद्धनिर्दोषवंशकथा सा विडम्बना, अहो आश्चर्यम् । महानुपहास इत्यर्थः । उपहासभिया तत्कथनं प्रेष्यस्य ममानुचितमित्यर्थः । अवदातम् 'दैप् शोधने' । उपसेदुषः, 'भाषायां सदवसश्रुवः ३ । २ । १०८ ॥ इति क्वसुः ॥१०॥

**इति प्रतीत्यैव मयाऽवधीरिते**
**तवापि निर्बन्धरसो न शोभते ।**
**हरित्पतीनां प्रतिवाचिकं प्रति**
**श्रमो गिरां ते घटते हि संप्रति ॥११॥**

उपसंहरति—

इतीति ॥ पूर्वोक्तप्रकारेण वैयर्थ्येनानौचित्येन च हेतुना प्रतीत्यैव विचार्यैव मयावधीरिते कुलनामप्रश्नरूपेऽर्थे तवापि निर्बन्ध आग्रहे रसः प्रीतिः न शोभते । न युक्तेत्यर्थः तर्हि किम्—हि यस्मात्संप्रति इदानीं हरित्पतीनामिन्द्रादीनां प्रतिवाचिकं प्रत्युत्तरं प्रत्युद्दिश्य ते तव गिरां श्रमः प्रयासो घटते । युक्त इत्यर्थः । निरर्थककुलनामप्रश्ने आग्रहं त्यक्त्वा शीघ्रं दिक्पालानां प्रत्युत्तरं देहीति भावः ॥ ११ ॥

**तथाऽपि निर्बध्नाति तेऽथवा स्पृहा-**
**मिहानुरुन्धे मितया न किं गिरा ।**
**हिमांशुवंशस्य करीरमेव मां**
**निशम्य किं नासि फलेग्रहिर्ग्रहः ॥१२॥**

तथेति ॥ अथवा ते तथाऽपि कुलनामाकथनकारणे कथितेऽपि एतत्कथनविषये निर्बध्नाति आग्रहशीले भैमि, अहम् इह कुलनामप्रश्ने तव स्पृहामिच्छां मितया गिरा स्वल्पेन वचनेन किं नानुरुन्धे नावृणोमि, अपि तु पूरयामि । द्वयोर्मध्य एकेनाग्रहः परित्याज्यः, त्वया तु न परित्यज्यते, ततो मयैव त्यज्यते इति । अथवेत्यनेन सूचितम् । मितमाह—त्वं हिमांशुवंशस्य चन्द्रवंशस्य करीरं बालमेव मां निशम्याकर्ण्य फलं गृह्णातीति फलेग्रहिः फलितः ग्रहो निर्बन्धो यस्याः सा एवंभूता किं नासि न भवसि, अपि तु फलितनिर्बन्धा भव ! निशम्यैवेति वा योजना । चन्द्रवंशे बहवो विख्यातास्तन्मध्येऽहं प्रसिद्धो न भवामीति करीरपदेन स्वं गोपायति । करीरपदं हि अङ्कुरवाचकं सत् तस्मिन् वंशे मामप्युत्पन्नं विद्धीत्युत्तरम् । वंशपरस्य कुलवेणुवाचकतया वंशवद्वंश इत्यभेदाध्यवसायेन प्रयोगस्तदा वंशसदृशस्य वंशस्यांकुरभूतं नलमेव मां विद्धीति प्रकारान्तरेण नाम्नोऽपि प्रकाशनम् । अथ यदि वंशपदं कुलवाचकमेवाभिप्रेयते, तदाऽपि तस्य करीरं—तदभिधेयं वृक्षं, तथाभूतमेव मां विद्धीत्युत्तरम्—यथा करीरो न फलेभ्यः स्पृहणीयस्तथा तादृशे निर्म्मले कुले सम्भूयाप्यहमेवम्भूतः सम्भूतोऽस्मीत्यात्मावज्ञानिवेदनम् । एवं च नलस्य वाग्मिताऽऽदि द्योतते 'फलेग्रहिरात्मंभरिश्च' ३ । २ । २६' इति साधुः । 'स्यादवन्ध्यः फलेग्रहिः' इत्यमरः ॥१२॥

**महाजनाचारपरम्परेदृशी**
**स्वनाम नामाददते न साधवः ।**
**अतोऽभिधातुं न तदुत्सहे पुन-**
**र्जनः किलाचारमुचं विगायति ॥१३॥**

नाम्नस्त्वत्यन्तमकथनीयत्वमाह—

महेति ॥ नाम प्रसिद्धौ । यत् साधवः स्वनाम न आददते न कथयन्ति ईदृशी महाजनानामाचारपरम्परा

---

१ अत्रानुप्रासो यमकं च क्षम इति काव्यलिङ्गं च । २ अत्रानुप्रासः । उभयथा कुलनाम्नोर्विषये प्रश्नोत्तरयोर्व्यवस्थापनात् काव्यलिङ्गम् । ३ अत्रानुप्रासो यमकं च । श्रम इति काव्यलिङ्गम् ।

१ अत्र वंशपदं करीरपदं च श्लिष्टे,व्याजोक्तिः, व्याजोक्तिश्छद्मना वचः' इति तल्लक्षणात् ।करीरमेवेति रूपकम्, वंशपदस्य श्लिष्टत्वाङ्गीकारे रूपकातिशयोक्तिश्च ।

यतः, अतः कारणात्स्वनामाभिधातुं वक्तुं नोत्सहे नेच्छामि । कुलं कथितं, नाम न कथनीयमित्यर्थः । अत्र हेतुः—किल यस्मात् जन आचारमुचं पुरुषं पुनः विगायति निन्दति । अतो न कथ्यत इत्यर्थः । 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । आयुष्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥' इति सदाचारो मूलम् । आददते 'आङो दोऽनास्यविहरणे १ । ३ । २०' इति तङ् ॥ १३ ॥

अदोऽयमालप्य शिखीव शारदो
बभूव तूष्णीमहितापकारकः ।
अथास्यरागस्य दधा पदे पदे
वचांसि हंसीव विदर्भजाऽऽददे ॥ १४ ॥

अद इति ॥ अयं नलः अदः पूर्वोक्तं वचनमालप्योक्त्वा तूष्णीं बभूव । किंभूतः—शारदो निपुणो हिंसाप्रदो वा । अत एव—अहिताः शत्रवस्तेषामपकारकः । क इव—शारदः शरत्संबन्धी शिखीव मयूर इव, यथा—अहीनां सर्पाणां तापं करोति एवंभूतो मयूरः प्रावृषि रुतं कृत्वा शरदि मूकीभवति । अथानन्तरं च आस्यरागस्य मुखलौहित्यस्य पदे पदे प्रतिचरणं दधा धारयित्री हंसीव विदर्भजा वचांस्याददे उवाचेत्यर्थः । किंभूता इयम्—अस्य नलस्य पदे पदे सुप्तिङन्तरूपे रागस्य मधुरत्वादनुरागस्य दधा धारयित्री । आस्यस्यैव रागः, तस्य दधा वा हंसी । प्रावृषि मयूरो मधुरस्वरः, शरदि हंसी मधुरस्वरा । आस्ये चञ्च्वोश्चरणयोश्च लोहिता भवति । दधेति 'ददातिदधात्योर्विभाषा ३ । १ । १३९' इति शः । रागस्य कर्मणि षष्ठी ॥ १४ ॥

सुधांशुवंशाभरणं भवानिति
श्रुतेऽपि नापैति विशेषसंशयः ।
कियत्सु मौनं वितता कियत्सु वा-
ग्महत्यहो वञ्चनचातुरी तव ॥ १५ ॥

सुधेति ॥ भवान् हिमांशुवंशस्याभरणमिति श्रुतेऽपि नलो वान्यो वा कश्चनेति विशेषविषयः संशयो नापैति न गच्छति । तस्मान्नामापि वदेत्यर्थः । कियत्सु द्वित्रेषु नामादिप्रश्नेषु मौनं प्रत्युत्तरादानं, कियत्सु किमर्थमागतोऽसीत्यादिषु प्रश्नेषु वाक् वितता अप्रस्तुतत्वद्वृदेवसंदेशकथनरूपा अहो आश्चर्यकारिणी महती तव वञ्चनचातुरी। ईदृशः प्रतारको न दृष्टचर इति भावः । वंशे च मुक्तारूपमाभरणं भवति ॥ १५ ॥

मयाऽपि देयं प्रतिवाचिकं न ते
स्वनाम मत्कर्णसुधामकुर्वते ।
परेण पुंसा हि ममापि संकथा
कुलाबलाचारसहासनासहा ॥ १६ ॥

त्वया नाम्न्यकथिते सति मयापि प्रत्युत्तरं न दातव्यमित्याह—

मयेति ॥ स्वनाम मम कर्णयोः सुधारूपमकुर्वते स्वनाम न कथयते ते तुभ्यं मयाऽपि प्रतिवाचिकं प्रत्युत्तरं न देयं दातुमनुचितम् । तत्र हेतुमाह—हि यस्मात् परेण पुंसा परपुरुषेण सह ममापि संकथा सम्यग्गोष्ठी कुलाबला कुलस्त्री तस्या आचारेण सहासनमेकस्मिन्नासने उपवेशनं तस्यासहा । पतिव्रताचारपरपुरुषकथयोः सहानवस्थानलक्षणो विरोध इत्यर्थः । यथा त्वया सदाचारभङ्गभीत्या नाम न कथ्यते, तथा मयापि स्त्रीकुलाचारभङ्गभीत्या स्वाभिप्रायो न कथ्यत इति प्रतिवन्दीत्यर्थः ॥ १६ ॥

हृदाभिनन्द्य प्रतिवन्द्यनुत्तरः
प्रियागिरः सस्मितमाह स स्म ताम् ।
वदामि वामाक्षि परेषु मा क्षिप
स्वमीदृशं माक्षिकमाक्षिपद्वचः ॥ १७ ॥

हृदेति ॥ स नलः सस्मितं यथा तथा तां भैमीमाह स्मावोचत् । किं कृत्वा—प्रियागिरः भैमीवचांसि प्रिया मनोज्ञा वा गिरः साधूक्तमिति हृदा मनसाभिनन्द्य स्तुत्वा । किंभूतः—कुलस्त्रीणामाचारानुचितं परपुरुषसंवादमहमपि न करोमीति प्रतिवन्दी तया तस्याः सकाशाद्वा अनुत्तर उत्तरहीनः । ईदृग्वक्रोक्तिप्रतिवन्द्यादिचातुर्यं कस्या अपि

१ अत्र 'न तदुत्सहे' इत्यन्तं हेतुहेतुमद्भावमादायैकवाक्यतासम्पत्तेः काव्यलिङ्गम्, जन इत्यर्थान्तरन्यासश्च। २ अत्र शारद इति श्लेषः, शिखीवेति हंसीवेति चोपमा पूर्णा च । अनुप्रासोऽपीत्यन्यत्

१ अत्र हेतुरलङ्कारः, 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते ।' इति कुवलयानन्दकारोक्तेः । आभरणं भवानिति रूपकम् । २स्वनाम मत्कर्णसुधामिति रूपकम् । परेणेति काव्यलिङ्गं चार्थालङ्कारः । अनुप्रासश्चतुर्थपादे शब्दालङ्कारः ।

नास्तीत्याश्चर्यवशात्स्मितपूर्वाभिभाषित्वम् । तदेवाह— हे वामाक्षि सुनेत्रे, कटाक्षविक्षेपाद्वक्रनेत्रे वा अहं वदाम्युपदिशामि—त्वं माक्षिकं मधु आक्षिपत्तिरस्कुर्वत् अतिमधुरमीदृशं प्रतिवन्द्यादिरूपं वचनं परेष्विन्द्रादिव्यतिरिक्तेषु माहशेषु मा क्षिप । तानेव प्रत्येवं वदितुं युक्तम्, न तु मां प्रतीति प्रतिवन्दीं मुक्त्वा ऋजुमार्गेणैव प्रत्युत्तरं देहीति भावः । सस्मितं यथा तथा माक्षिकमाक्षिपत् वचनमाह स्मेत्यन्वयः । ईदृशं स्वम् इन्द्रादिदूतत्वेनात्मीयं पुरुषं परपुरुषेषु मध्ये मा क्षिपः । येन सह संकथया पातिव्रत्यभङ्गप्रसङ्गस्ताहशोऽहं न भवामि। किं त्विन्द्रादिदूतत्वात्त्वदीय एवेति मह्यमुत्तरे दत्तेऽपि न पातिव्रत्यक्षतिरिति भाव इति वा । माक्षिकमाक्षिपद्वचः परेषु मा क्षिप । किं तु मयि क्षिपेति वा । मयि परबुद्धिं मा कुर्विति नल एवाहमिति अर्थान्नाम कथितमिति वा । वदामि नाम कथयामि परेष्वन्येषु अयं नलादन्य इति मा क्षिपेति वा । सर्वथाऽहं नल एवेत्यर्थः । व्याख्यानान्तरं क्लिष्टत्वादुपेक्ष्यम् । वामाक्षि, बहुव्रीहौ पचि पित्त्वान्ङीपि नदीत्वाद्ध्रस्वः । मा क्षिप पूर्ववल्लोट् ॥ १७ ॥

करोषि नेमं फलिनं मम श्रमं
दिशोऽनुगृह्णासि न कंचन प्रभुम् ।
त्वमित्थमर्हासि सुरानुपासितुं
रसामृतस्नानपवित्रया गिरा ॥ १८ ॥

करोषीति ॥ त्वम् इमं मम श्रमं फलिनं सफलं न करोषि प्रश्नकाकुः । अपितु कुर्विति । तथा—दिशः कचन प्रभुं नानुगृह्णासि, अपि तु स्वयंवरेणानुगृहाण । चतुर्षु मध्येऽन्यतमस्यापि वरणेन मम श्रमं सफलयेत्यर्थः। इत्थं प्रतिवन्दीरूपेण प्रकारेण रसो माधुर्यं तल्लक्षणममृतं तेन यत्स्नानं तेन पवित्रया गिरा सुरान् त्वमुपासितुमर्हा योग्यासि । एवंविधां वाणीं तान् प्रति संदेशयेति भावः । यथा गिरा मां संतोषयसि तथा देवानपि संतोषयेत्यर्थः ॥ १८ ॥

सुरेषु संदेशयसीदृशीं बहुं
रसस्रवेण स्तिमितां न भारतीम् ।
मदर्पिता दर्पकतापितेषु या
प्रयाति दावार्दितदाववृष्टिताम् ॥ १९॥

सुरेष्विति । हे भैमि, त्वं बहुं विपुलार्थां रसस्रवेण माधुर्यद्रवेण स्तिमितामार्द्राम् अतिसरसामनुरागबाहुल्येन चार्द्रां वक्रोक्तिप्रतिवन्द्यादिरूपां भारतीं वाणीं सुरेषु देवेषु न संदेशयसि, अपि तु तान्प्रत्येतं संदेशं कुरु । या वाणी मय्यर्पिता संदेशरूपेण, मया चार्पिता कथिता सती दर्पकतापितेषु कामपीडितेषु सुरेषु दावेन वनवह्निनार्दितो दावो वनं तस्य वृष्टितां प्रयाति । दह्यमानस्य वनस्य वह्नौ वृष्टिर्यथा सुखाय भवति, तथा कामपीडितानां तेषां तव वाणी सुखाय भविष्यति । तस्मादेवं कुर्विति भावः । प्रयाति, वर्त्तमानसमीप्ये वर्त्तमानवद्वा ३।३।१३१'इति वर्तमानसामीप्ये लट्१९॥

यथायथेह त्वदुपेक्षयानया
निमेषमप्येष जनो विलम्बते ।
रुषा शरव्यीकरणे दिवौकसां
तथातथाद्य त्वरते रतेः पतिः ॥ २० ॥

तेषां कामपीडां स्वनिन्दां चाह—

यथेति ॥ एष मल्लक्षणो जनोऽनया प्रत्युत्तरादानरूपया त्वदुपेक्षया त्वत्कृतयाऽवज्ञया निमेषपारिमितं कालमपि यथायथा यावद्यावत् इह तव संनिधौ विलम्बते कालक्षेपं करोति तथातथा तावत्तावत् रतेः पतिः रुषा दिवौकसां शरव्यीकरणे लक्ष्यीकरणे अद्यास्मिन्समये त्वरते सत्वरो भवति तस्मात्सत्वरं प्रत्युत्तरं देहीति भावः। इहोत्तरविषये त्वदुपेक्षयेति वा ॥ २० ॥

इयच्चिरस्यावदधान्ति मत्पथे
किमिन्द्रनेत्राण्यशनिर्न निर्ममौ ।
धिगस्तु मां सत्वरकार्यमन्थरं
स्थितः परप्रेष्यगुणोऽपि यत्र न ॥ २१॥

---

१ अत्रानुप्रासः । माक्षिकं वच इति रूपकम् । २ अत्रानुप्रासः । रसामृतेति रूपकम्,तद्द्वारा स्नानोक्तौ रसामृतस्य नदविशेषाद्यभेदः प्रतीयत इति तत्रांशे रूपकातिशयोक्तिः,स्नानेन पवित्रोक्तेर्गिरि नायिकात्वमारोप्यमाणं प्रतीयते ।

१ अत्र दावेत्यनुप्रासः, या वृष्टितामिति रूपकं, न तूपमा । २ अत्रानुप्रासः । विलम्बते त्वरते इति क्रिययोर्हेतुहेतुमद्भावात्मना प्रयोगात् काव्यलिङ्गम्, त्वरणरूपस्य कार्यस्य विलम्बनरूपस्य हेतोश्च भिन्ननिष्ठत्वेनासङ्गतिः । 'विरुद्धं भिन्नदेशत्वं कार्यहेतोरसङ्गतिः ।' इति तल्लक्षणात् । त्वरत इति मन्य इत्युत्प्रेक्षा व्यङ्ग्या, तदप्रयोगात् ।

इयदिति ॥ अत्र निर्ब्रह्म इयच्चिरस्य एतावद्बहु कालं मत्पथेऽवदधन्ति निर्निमेषं सावधानानि एवंभूतानीन्द्रनेत्राणि किं न निर्ममौ, अपि तु तेनैव निर्मितानि । अन्यथा तेषां विलम्बसहनदार्ढ्यं कथम् । तस्माद्वज्रनिर्मितानीति सत्यम् । सत्वरे त्वरया कर्तुमर्हे कार्ये मन्थरं मन्दं मां धिगस्तु । अहमपि निन्द्य इति यावत् । यतः—यत्र मयि परस्य प्रेष्यो दूतः तस्य गुणो दूतत्वलक्षणः सोऽपि न स्थितः न विद्यते। पर उत्कृष्टो यो दूतगुण इति वा । सत्वरकार्यकारित्वं दासधर्मः । प्रेषितेन दासेन शीघ्रं कार्यं संपाद्यागन्तव्यम्, कार्याभावेऽपि शीघ्रमागत्य कार्यं न भवतीति झटिति निवेदनीयम् । ते यस्मान्मां प्रतीक्षन्ते, तस्माज् झटिति प्रत्युत्तरं दत्त्वा मां प्रेषयेति भावः । अवदधन्ति वा नपुंसकस्य ३ । १ । १८' इति नुम् ॥ २१ ॥

**इदं निगद्य क्षितिभर्तरि स्थिते**
**तयाऽभ्यधायि स्वगतं विदग्धया ।**
**अधिस्त्रि तं दूतयतां भुवः स्मरं**
**मनो दधत्या नयनैपुणव्यये ॥ २२ ॥**

इदमिति ॥ क्षितिभर्तरि नले इदं पूर्वोक्तं निगद्योक्त्वा स्थिते तूष्णींभावं प्राप्ते सति तया भैम्या स्वगतमप्रकाशमभ्यधायि अवादि । किंभूतया—भुवो भूलोकस्य स्मरं कामरूपमतिसुन्दरं तम् अधिस्त्रि स्त्रीविषये दूतयतां दूतं कुर्वतामिन्द्रादीनां नये नैपुणं कौशलं तस्य व्यये अभावे स्वमनो दधत्या धारयन्त्या स्त्रीष्वभव्यः सामान्यो दूतः प्रेषणीय इति नीतिः । अयं चातिसुन्दरः प्रेषित इति तेष्वनभिज्ञता । सर्वथा नीतिशास्त्रं न जानन्तीति मनसि निश्चितवत्या । अतो—विदग्धया नीतिशास्त्रादौ चतुरया । यद्वा—तेषां मनो नयकौशलाभावे दधत्या । तेषां मनसि नयकौशलं नास्तीति निश्चितवत्येति योज्यम् । 'नोज्ज्वलं रूपवन्तं च नार्थवन्तं न चातुरम्। दूतं वापि हि दूतीं वा नेरः कुर्यात्कदाचन ॥' इति नीतिः । अधिस्त्रि, इति सप्तम्यर्थेऽव्ययीभावः । नैपुणम्, भावे युवादित्वादण् ॥ २२ ॥

१ अत्र सत्वर—मन्थरमित्यनुप्रासः । किमित्युत्प्रेक्षा। मन्थरमिति परिकरश्च, मन्थरत्वेन हेतुना प्रेष्यगुणत्वाभावरूपस्य कार्यस्य वर्णनात् काव्यलिङ्गं च । २ भुवः स्मरं तमिति रूपकम्।

**जलाधिपस्त्वामदिशन्मयि ध्रुवं**
**परेतराजः प्रजिघाय स स्फुटम् ।**
**मरुत्वतैव प्रहितोऽसि निश्चितं**
**नियोजितश्चोर्ध्वमुखेन तेजसा ॥ २३ ॥**

स्वगतं तं प्रति किमाहेत्याह—

जलेति ॥ जलाधिपो वरुणो मयि विषये त्वां ध्रुवं निश्चितमदिशदादिष्टवान्।जडाधिप इति श्लेषः। परेतराजः स यमः स्फुटं निश्चितं प्रजिघाय प्रेषितवान् । मृतत्वेऽसन्देहभूमिरिति श्लेषः । मरुत्वता इन्द्रेणैव निश्चितं प्रहितोऽसि । वायुसम्भृतेनेति श्लेषः । ऊर्ध्वमुखेन तेजसा वह्निना नियोजितश्च । दृष्टेनेति श्लेषः । चतुर्ष्वप्यन्वयेष्वापाततः काकुवत्कथयेत्यस्य योजना । अथ चातिसुन्दर्यां मयि अतिसुन्दरं त्वां यः समादिष्टवान् स पूर्वोक्तनीतिलङ्घनान्निश्चितं जडानां स्वामी । अतिमूर्ख इत्यर्थः । यश्च तादृश्यां मयि तादृशमेव त्वां प्रेषितवान् स परेतानां मृतानां राजैव । न चेतन इत्यर्थः । येन तादृश्यां मयि तादृशस्त्वं प्रेषितः स मरुत्वान्वातूलो भवति । येन तादृश्यां मयि तादृशस्त्वं नियोजितः स ऊर्ध्वमुखः पिशाचः प्रतिभारहितश्च । पिशाचश्चोर्ध्वमुखो भवति अप्रतिभश्च भवति । ऊर्ध्वमुखत्वेन त्वन्मुखसौन्दर्यं तेन न दृष्टमित्यपि सूचितम् । अवज्ञारूपत्वान्मनसैव नलं संबोध्येयमुक्तिः ॥ २३ ॥

**अथ प्रकाशं निभृतस्मिता सती**
**सतीकुलस्याभरणं किमप्यसौ ।**
**पुनस्तदाभाषणविभ्रमोन्मुखं**
**मुखं विदर्भाधिपसम्भवा दधौ ॥ २४ ॥**

अथेति ॥ अथ असौ सती निभृतस्मिता गुप्तस्मितेषत्स्मिता सतीकुलस्य पतिव्रतासमूहस्य किमपि लोकोत्तरमाभरणं एवंभूता विदर्भाधिपसंभवा भैमी स्वमुखं पुनस्तेन सह यत् आभाषणं तत्र यो विभ्रमो विलासस्तल्लक्षणो वा तत्रोन्मुखं संमुखमेवंभूतं दधौ· प्रकाशं स्फुटम् । सखीभिरपि यथाऽऽकर्ण्यते तथावददित्यर्थः । प्रकाशमत्युज्ज्वलं प्रसन्नं चेति मुखविशेषणं वा । अयोग्या अपीन्द्रादयो मां वाञ्छन्तीति गूढस्मिता । सतीपदेन यो मनसा पूर्वं धृतः स एव पतिरिति सूचितम् । 'तदाभाषण—' इत्यादिना तेन सह नल-

१ अत्र श्लेषः परिकरश्च ।

बुध्या आभाषणं मुख्यं, उत्तरदानं प्रासङ्गिकमिति सूचितम् ॥ २४ ॥

वृथा परीहास इति प्रगल्भता
न नेति च त्वादृशि वाग्विगर्हणा ।
भवत्यवज्ञा च भवत्यनुत्तरा-
दतः प्रदित्सुः प्रतिवाचमस्मि ते ॥२५॥

वृथेति ॥ हे देवदूत, इति इयं प्रगल्भता धृष्टत्वम् । इति किम्—वृथा निष्प्रयोजनः परीहास उपहासः । इयम् अपरिचितेन सहोपहासं करोति । अत्यन्तं धृष्टेयमिति सखीजनो वदिष्यति । त्वादृशि प्रतिवन्ध्यादिरूपः क्रीडावाद इति कारणाद्वृथा । इति किम्—प्रगल्भतेति वा । तथा—यत्त्वयोपदिश्यते तन्मया न क्रियत इति न नेति त्वादृशि निषेधवाक् त्वत्सदृशस्य विगर्हणा विशेषेण निन्दैव भवति । भव्यं प्रति सोपपत्तिकमेव वक्तव्यम्, निरुपपत्तिकं तु विगर्हणा । तर्हि तूष्णीं स्थातव्यमिति चेदत आह—भवति त्वयि अनुत्तरादुत्तरादानात् तव देवानां चावज्ञा भवति । अतः अहं प्रतिवाचं तुभ्यं प्रदित्सुः प्रदातुमिच्छुरस्मि । न नेति देवानां पृथङ्निषेधसूचनार्थम् । तादृशि—भवतीति पदाभ्यां तवैव माहात्म्यादुत्तरं दीयते, न त्विन्द्रादिमाहात्म्यादिति सूचितम् । अन्यस्मिन्दूते नेत्यर्थः । परीहासः, 'उपसर्गस्य घञ्यमनुष्ये बहुलम् ६।३।१२२' इति दीर्घः ॥ २५ ॥

कथंनु तेषां कृपयाऽपि वागसा-
वसावि मानुष्यकलाञ्छने जने ।
स्वभावभक्तिप्रवणं प्रतीश्वराः
कया न वाचा मुदमुद्गिरन्ति वा॥२६॥

कथमिति ॥ मानुष्यकमेव लाञ्छनं यस्य एवंविधे मल्लक्षणे जने कृपयाऽपि हेतुना असौ अस्मान्वृणीष्वेति देवानां वाक् कथंनु केन वा प्रकारेणासावि प्रसूता । मानव्या देवताऽनर्हत्वात्तेषां तां प्रत्येवं कृपया वक्तुमनुचितम् । कथंन्विति निपातसमुदायः । पृथग्वा नुः शिरश्चालने प्रश्ने वा । तेषां कृपया कर्त्र्या वाक् कथमसावीति वा । मानुष्यकलाञ्छन इति स्वनिन्दया देववरणनिषेधे तात्पर्यम् । वाशब्दः पूर्वोक्तानौचितीपरीहासार्थः । अथवेति वा ईश्वराः प्रभवः स्वभावेन भक्त्या प्रवणं नम्रं जनमुद्दिश्य कया वाचा मुदं हर्षं नोद्गिरन्ति प्रकटयन्ति । अपितु यया कयापि । भक्त्या मां प्रति स्वहर्षप्रकटने तेषां तात्पर्यम्, न तु मद्वरण इति सोल्लुण्ठं वचनमिति भावः । ते केवलं नमस्कारार्हाः, न तु वरणार्हा इत्यपि सूचितम् । प्रथमपक्षेऽसावीति कर्मकर्तरि 'अचः कर्मकर्तरि ३ । १ । ६२' इति चिण् । पक्षे 'भावकर्मणोः १ । ३ । १३' इति चिण् । मानुष्यक इति 'योपधाद् गुरूपोत्तमाद् वुञ् ५ । १ । १३२ ।' इति वुञ् ॥ २६ ॥

अहो महेन्द्रस्य कथं मयौचिती
सुराङ्गनासङ्गमशोभिताभृतः ।
ह्रदस्य हंसावलिमांसलश्रियो
बलाकयेव प्रबला विडम्बना ॥२७॥

अहो इति ॥ सुराङ्गनानामुर्वशीप्रभृतीनां संगमेन शोभिताभृतः शोभाशालित्वं बिभ्राणस्य महेन्द्रस्य मानुष्या मया कृत्वा विडम्बना कथमौचिती ? अपितु न कथंचित् । अहो आश्चर्ये, संबोधने वा । अत्यन्तमनौचितीत्यर्थः । उचितैवौचिती । कया कस्येव—बलाकया कृत्वा हंसावल्या मांसला बहला श्रीः शोभा यस्य ह्रदस्येव । प्रबला विडम्बना जुगुप्सिताकारता । हंसापेक्षया यथा बलाका हीना, तथा रम्भाद्यपेक्षयाऽहमितीन्द्रवरणनिषेधे तात्पर्यम् ॥ २७ ॥

पुरः सुरीणां भण केव मानवी
न यत्र तास्तत्र तु शोभिकाऽपि सा ।
अकाञ्चनेऽकिञ्चननायिकाङ्के
किमारकूटाभरणेन न श्रियः ॥ २८ ॥

पूर्वोक्तमेव द्रढयति—

पुर इति ॥ सुरीणां देवाङ्गनानां पुरोऽग्रे मानवी केव किंरूपेव तुच्छत्वातिशयेन निर्देष्टुमनुचितत्वे किमा निर्देश्यैवेति भावः । भण कथय, अपितु न काऽपि, अति-

१ सतीति मुखमिति च यमकम्, आभरणमसावीति रूपकम् । २ इति प्रगल्भतेत्यादि कृत्वा काव्यलिङ्गम्, प्रगल्भताऽऽदीनामनेकधर्माणामेकत्र निवेशात्तुल्ययोगिता च ।

१ अत्रानुप्रासः । मानुष्यकलाञ्छन इति परिकरः । कथं न्वित्युत्प्रेक्षा । २ अत्र बलाकयेवेत्युपमा ।

तुच्छेत्यर्थः । इवशब्दो वा वाक्यालंकारे । 'केन' इति पाठे मानवी सुरीणां पुरः केन गुणेन शोभिका शोभते इति भण न केनापीति भावः । एतादृशः कोऽपि गुणो मानुष्यां न विद्यत इत्यर्थः । तर्हि कुत्र शोमत इत्यत आह— यत्र ता देव्यो न विद्यन्ते तत्र तु पुनः पृथिव्यां सा अपि मानव्यपि शोभिका शोभते । मानुष्यापेक्षयाऽहं सुन्दरी न तु देव्यपेक्षया । तत्र दृष्टान्तः—यथा अकाञ्चने सुवर्णालङ्काररहितेऽकिञ्चनस्य दरिद्रस्य नायिका स्त्री तस्या अङ्गकेऽल्पेऽवयवे एकस्मिन्नप्यवयवे आरकूटस्य कृतेनालंकारेण श्रियः शोभाः किं न भवन्ति । अपि तु भवन्त्येव । तथा देवीरहितायां भुवि अन्यरमण्यपेक्षया ममापि शोभा युक्तैवेत्यर्थः । पूर्वोक्तमेव तात्पर्यम् । रीतिः स्त्रियामारकूटम्' इत्यमरः । लोके पित्तलमिति वदन्ति । सुरीणाम्, पुंयोगे ङीप् । मानवी, अण्णन्तत्वात् । शोभिका, कर्तरि शुभेर्ण्वुल् । किंचन किमपि धनादि यस्य नास्ति सोऽकिंचनः, मयूरव्यंसकादित्वात्समासः । अङ्गक इत्यल्पत्वे कन् । अल्पत्वं संख्याकृतम् । यद्वा स्वार्थिकः कन् ॥ २८ ॥

**यथा तथा नाम गिरः किरन्तु ते**
**श्रुती पुनर्मे बधिरे तदक्षरे ।**
**पृषत्किशोरी कुरुतामसङ्गतां**
**कथं मनोवृत्तिमपि द्विपाधिपे ॥ २९ ॥**

यथेति ॥ ते देवा यथा तथा येन तेन प्रकारेणाभिलापेण कृपया वा वरणविषये गिरो वाणीः किरन्तु विक्षिपन्तु नाम, सुखेन ब्रुवन्तु इति भावः । तथाऽपि मे श्रुती कर्णौ पुनस्तासां गिरामक्षरे एकस्मिन्नपि वर्णे विषये बधिरे । एकमप्यक्षरं नाकर्णयतः किं पुनर्बहूनि । श्रुतमप्यननुष्ठेयत्वादश्रुतमेवेत्यर्थः । दृष्टान्तेन हेतुमाह— पृषतो हरिणस्य किशोरी हरिणी द्विपाधिपे ऐरावते हस्तिश्रेष्ठे वा विषये असंगतामयोग्यां मनोवृत्तिमपीच्छामात्रमपि कथं कुरुताम् । इच्छामपि न धारयति, नानुतिष्ठतीति किं वाच्यमित्यर्थः । पशुरपि बालाऽपि सती या मृगी योग्यायोग्यविभागं जानाति, ततोऽप्यज्ञा किमहम् । तान्न वृणे इति भावः ॥ २९ ॥

**अदो निगद्यैव नतास्यया तया**
**श्रुतौ लगित्वाऽभिहितालिरालपत् ।**
**प्रविश्य यन्मे हृदयं ह्रियाऽऽह त-**
**द्विनिर्यदाकर्णय मन्मुखाध्वना ॥ ३० ॥**

अद इति ॥ आलिः काचित्सखी आलपदवोचत् । किम्भूता अदो निगद्यैव एवमुक्त्वैव नतास्यया लज्जावशान्नम्रमुख्या तया भैम्या श्रुतौ लगित्वाऽभिहिता एवं वद इति उक्ता । हे दूत, इयं ह्रिया मे हृदयं प्रविश्य यदाह ब्रवीति, तत् त्वं मन्मुखाध्वना विनिर्यद्विनिर्गच्छद् आकर्णय । इयं लज्जया किमपि स्वयं वक्तुं न शक्नोति, मन्मनसि रहस्यं निवेश्य यदाह, तन्मयानूद्यते, न तु स्वस्फूर्त्या किमप्युच्यते तदाकर्णयेत्यर्थः ॥ ३० ॥

**बिभेमि चिन्तामपि कर्तुमीदृशीं**
**चिराय चित्तार्पितनैषधेश्वरा ।**
**मृणालतन्तुच्छिदुरा सतीस्थिति-**
**र्लवादपि त्रुट्यति चापलात्किल ॥ ३१ ॥**

बिभेमीति ॥ यतोऽहं चिराय बहुकालं चित्तेऽर्पितो धृतो नैषधेश्वरो यया अत एव ईदृशाम् इन्द्रादीन्वृणे न वृणे इति चिन्तामपि विचारमपि कर्तुं बिभेमि, भयं प्राप्नोमि, निश्चयं कर्तुं किमुत । मनोव्यापारेऽपि भयम्, किं पुनः कायव्यापारे इत्यपिशब्दार्थः, विचारो हि मानसो व्यापारः । मनसश्च नलेनाधिष्ठितत्वादन्यविषयविचारस्यावकाशोऽपि नास्ति । ईदृशे विचारे क्रियमाणे तत्स्यो नलः समाकर्णयेत् । स चेश्वरः प्रभुः । तस्मादेवं विचारयितुमपि बिभेमीत्यर्थः । मनसा नलस्य वृतत्वान्नान्यवरणकथामपि कर्तुं शक्नोमीति भावः। मनसैव वृतो न तु साक्षात् । तस्मादन्यवरणाविषयविचारे क्रियमाणे किमिति भयमित्याशङ्क्याह—किल यस्मात् मृणालतन्तुवच्छिदुरा स्वयमेव भिदुरा सतीस्थितिः पतिव्रतामर्यादा लवादप्यल्पादपि चापलान्त्रुट्यति। बिसतन्तुर्यथा हस्तस्पर्शमात्राच्छिद्यते तथा । साक्षाद्वरणादपि मनसा यद्वरणं तस्यैव ज्यायस्त्वादन्यविषयंकथयापि सतीस्थितिर्भज्यते । तस्मादिदं युक्तमेवेति भावः ॥ ३१ ॥

---

१ अत्र काञ्चन इति दृष्टान्तः, 'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः । इति चन्द्रालोककारोक्तेः । २ अत्रानुप्रासः । पृषत्किशोरीति दृष्टान्तः ।

१ अत्रानुप्रासः । २ अत्रानुप्रासस्तावत् शब्दालङ्कारः। मृणालतन्तुच्छिदुरेत्युपमा, सतीस्थितिस्त्रुट्यतीति निर्देशे सत्या नवलतात्वं व्यज्यते, तेन तद् भेदाद्रूपकातिशयोक्तिः ।

ममाशयः स्वप्नदशाऽऽज्ञयाऽपि वा
नलं विलङ्घयेतरमस्पृशद्यदि ।
कुतः पुनस्तत्र समस्तसाक्षिणी
निजैव बुद्धिर्विबुधैर्न पृच्छ्यते ॥ ३२ ॥

ममेति ॥ वाशब्दो यदीत्यस्यानन्तरं सम्भावनाऽर्थो द्रष्टव्यः । ममाशयोऽभिप्रायः स्वप्नदशायाः स्वप्नावस्थाया आज्ञयाऽपि वशेनेत्यर्थः । अज्ञा इव अज्ञा, तत्कृतो मोहस्तयाऽपीति वा नलं विलङ्घयेतरं यदि वाऽस्पृशत्, तर्हि विबुधैरिन्द्रादिभिः पण्डितैश्च तत्र तस्मिन्विषये समस्तसाक्षिणी समस्तलोकवृत्तसाक्षात्कारिणी निजैव बुद्धिः कुतः पुनः न पृच्छ्यते । स्वप्नदशायामपि नलादन्यं न चिन्तयामीति सर्वज्ञत्वाद्देवा अपि जानन्तीति भावः ॥ ३२ ॥

अपि स्वमस्वप्नमसूपुपन्नमी
परस्य दारानवेतुमेव माम् ।
स्वयं दुरध्वार्णवनाविकाः कथं
स्पृशन्तु विज्ञाय हृदाऽपि तादृशीम् ३३

निजैव बुद्धिः पृच्छ्यतामिति पूर्वमुक्तम्, इदानीं स्वयमेवाह—

अपीति ॥ अमी देवा मां परस्य दारान्स्त्रियं अनवैतुमनवज्ञातुमेव अस्वप्नमपि निद्रारहितमपि स्वमात्मानमसूपुपन्निद्रापयन्ति स्म । देवास्त्वस्वप्नाः, अपिः सम्भावनायाम् । एतदर्थमेवास्वप्नं स्वमसूपुपन्नित्यहं सम्भावयामीत्यर्थः । अस्मिन्नर्थे गूढोपहासमन्यथाऽनुपपत्तिं प्रमाणयति—स्वयमात्मनैव दुष्टोऽध्वा दुरध्वः परदारवाञ्छयाऽवद्यमार्गः स एवार्णवस्तस्य नाविकाः कर्णधाराः, स्वयं–स्वात्मना, दुरध्वार्णवसम्बन्धित्वेन भाविनिमज्जनाः सन्त इति भावः । कथं तादृशी पारेदुरध्वार्णवं स्थितात्वेन दुष्पापामिव सतीत्वमाश्रित्य स्थितां विज्ञाय सुन्दरीत्वेनानुमीयापि हृदाऽपि कथं स्पृशंतु न कथमपीत्यर्थः । अपीति उभयत्र योज्यम् । यद्वा, यथा नाविका भूत्वाऽपि तरणीयदोपात्पतनाभिमुखा न परं पारमुत्तारयितुं क्षमन्ते, तथा ते तथा दुरभिप्रायाः स्वतस्तादृशेभ्यो विरक्तां मादृशीं कथं स्प्रष्टुमलं स्युरिति भावः । 'स्वप्नवशादेवाहं तैर्मनस्यबुद्धिपूर्वं धृतेति तेषां न दोषः । अन्यथा येऽन्यानुपदिशन्ति ते स्वयं कथं परदारान्वाञ्छन्तीति भावः । एवंविधा अपि परदारानभिलष्यन्तीत्युपहासः । समुद्रकर्णधारत्वेन ते स्पर्शनयोग्या अपि न भवन्तीति सूचितम् । असूपुपन्, ण्यन्तात्स्वपेश्चङि 'स्वापेश्चङि ६।१।१८' इति सम्प्रसारणम् । दुरध्वः, 'उपसर्गादध्वनः ५।४।८५' इत्यच् । 'व्यध्वो दुरध्वो विपथः' इत्यमरः । नाविकाः 'तराति' इत्यर्थे 'नौद्व्यचष्ठन् ४।४।७' इति ठन् ॥ ३३ ॥

अनुग्रहः केवलमेष मादृशे
मनुष्यजन्मन्यपि यन्मनो जने ।
स चेद्विधेयस्तदमी तमेव मे
प्रसद्य भिक्षां वितरीतुमीशताम् ॥ ३४ ॥

अनुग्रह इति ॥ मादृशे मनुष्यजन्मन्यपि मादृशे मल्लक्षणे जने यत् तेषां मनः अनुरक्तमित्यर्थात् । एष केवलं तेषामनुग्रहः कृपा, न तु तत्त्वतोऽनुरक्ताः । ममायोग्यत्वात् । सोऽनुग्रहः चेत् यदि विधेयः कर्तव्यः, तत्तर्हि अमी देवाः प्रसद्य प्रसन्नीभूय मे मह्यं तमेव नलमेव भिक्षां वितरीतुमीशतां समर्था भवन्तु । अहं तानेव नलं याचे, तैः प्रसन्नीभूय नल एव दातव्यो, न त्वन्योऽभिलापः । मनुष्याज्जन्म यस्येति बहुव्रीहिः । अन्वादेशत्वाच्चतुर्थ्या मयादेशः वितरीतुम्, 'वृतो वा ७।२।३८' इतीटो दीर्घः ॥ ३४ ॥

अपि द्रढीयः शृणु मत्प्रतिश्रुतं
स पीडयेत्पाणिमिमं न चेन्नृपः ।
हुताशनोद्बन्धनवारिकारितां
निजायुषस्तत्करवै स्ववैरिताम् ॥ ३५ ॥

नलावरणे स्वप्रतिज्ञामाह—

अपीति ॥ अपिः अन्यचेत्यर्थे । त्वं द्रढीयः दृढतरं केनाप्यनिराकार्यं मम प्रतिश्रुतं प्रतिज्ञातमपि शृणु । तदेवाह—स नलः नृपः इमं पाणिं चेत् न पीडयेन्मदीयपाणिग्रहणं न कुर्यात्, तत्तर्हि हुताशनेनोद्बन्धनेन शाखादौ रज्ज्वा कण्ठोर्ध्वबन्धनेन वारिणा च प्रयोज्येन कारितां विधापितां निजायुषः स्वजीवितस्य स्वेनैवात्मनैव

१ बुद्धिर्न कुतो नु पृच्छत इत्यत्र,ततस्तेषां नाममात्रेण विबुधत्वं, वस्तुतस्तु बुधविपरीतत्वमेवेति व्यङ्ग्यम् । समस्तेति परिकरश्च ।

१ अस्वप्नमसूपुपन्निति विरोधाभासः, दुरध्वार्णवेति रूपकम्, कथं स्पृशन्त्विति । काव्यलिङ्गं च ।२ अत्र तकारानुप्रासः, यन्मनः स एवानुग्रह इति रूपकम् ।

वैरिता शत्रुतां करवै । ममादृष्टवशाद्देवानुरोधाद्वा, चेन्मां नलो नाङ्गीकुर्यात्तर्हि वह्न्यादिष्वन्यतमेनोपायेन स्वजीवितं त्यक्ष्यामि, अन्यं कंचन न वृणे इति । पूर्वनिपातानित्यत्वं पूर्वोक्तं ज्ञातव्यम् । 'वारिताम्' इति पाठे निषिद्धाम् । अग्न्यादिभिर्मरणं निषिद्धम् ॥ ३५ ॥

निषिद्धमप्याचरणीयमापदि
क्रिया सती नावति यत्र सर्वथा ।
घनाम्बुना राजपथे हि पिच्छिले
क्वचिद् बुधैरप्यपथेन गम्यते ॥ ३६ ॥

आत्मघातोऽनुचित इत्यत आह—

निषिद्धमिति ॥ यत्र यस्यामापदि सती श्रुत्याद्यविरोधिनी क्रिया सर्वथा केनापि प्रकारेणात्मानं नावति न रक्षति, तस्यामापदि सत्यां निषिद्धमपि कर्माचरणीयम् । अचिकित्स्यव्याध्यादौ भृगुपतनादिभिर्मरणमापद्धर्मनिरूपणप्रस्तावेऽभिहितम् । नलं विना कामज्वरपीडायामापदि निषिद्धमप्याचरणीयमेवेति भावः । तदेवार्थान्तरन्यासेनाह—हि यस्मात् घनाम्बुना सान्द्रजलेन मेघजलेन वा राजपथे राजमार्गे पिच्छिले पाङ्किले सति बुधैरपि पण्डितैरपि क्वचित् किंचिदुद्दिश्य अपथेन कापथेन गम्यते । राजमार्गस्य पङ्किलत्वाद्गत्यन्तराभावादमार्गगामित्वेऽपि न दोष इत्यर्थः । पिच्छिले, पिच्छादित्वादिलच् । अपथेन, 'पथो विभाषा ५।४।७२' इति समासान्तः ॥ ३६ ॥

त्रिया मया वाग्मिषु तेषु शक्यते
न जातु सम्यग्वितरीतुमुत्तरम् ।
तदत्र मद्भाषितसूत्रपद्धतौ
प्रबद्धन्धृताऽस्तु प्रतिबन्द्धृता न ते ३७॥

स्वोक्तं निगमयन्ती दूतं प्रार्थयते—

त्रियेति ॥ त्रिया मया वाग्मिषु पण्डितेषु तेषु देवेषु सम्यक् संतोषकारि उत्तरं जातु कदाचिदपि वितरीतुं न शक्यते यस्मात् तत्तस्मात् अत्रास्यां मम भाषितमेव सूत्रं तस्य पद्धती रचना तस्यां विषये ते तव प्रबन्द्धृता प्रबन्धकारित्वं भाष्यकारित्वं वार्तिककारित्वं वास्तु । प्रतिबन्द्धृता तु दूषकत्वं नास्तु । सूत्रप्रायं मद्वचनं स्वकल्पितैर्विवरणपदैः सोपस्कारं कृत्वा देवास्त्वया बोधनीयाः न तु मद्वचने दूषणं कर्तव्यम् । यथा भाष्यकर्त्रा सूत्रं समर्थ्यते नतु दूष्यते । उभयत्रापि तृजन्ताद्बन्धेस्तल् । उपसर्गवशादर्थभेदः ॥ ३७ ॥

१ अत्रानुप्रासः, रितामिति यमकम् । २ अस्य प्रागुक्तस्यैव समर्थनपरवाक्यत्वादर्थान्तरन्यासोऽत्रार्थालङ्कारः । पूर्वार्द्धस्य सामान्यस्य पुनरुत्तरार्द्धेन समर्थनादपरः स एव ।

निरस्य दूतः स्म तथा विसर्जितः
प्रियोक्तिरप्याह कदुष्णमक्षरम् ।
कुतूहलेनेव मुहुः कुहूरवं
विडम्ब्य डिम्भेन पिकः प्रकोपितः३८॥

निरस्येति ॥ तथा पूर्वोक्तेन प्रकारेण निरस्य निराकृत्य प्रियोक्तिरपि मधुरवचनोऽपि विसर्जितः प्रेषितः दूतः कदुष्णं संतापकरमक्षरं वक्ष्यमाणप्रकारेणाह स्म वदति स्म । क इव—डिम्भेन बालकेन मुहुः पुनः पुनः कुतूहलेन कौतुकेन कुहूरितिरवं शब्दं विडम्ब्यानुकृत्य प्रकर्षेण कोपितो मधुरवचनोऽपि पिक इव । तथा तेन प्रकारेण प्रस्थापितो, यथा प्रियवचनोऽपि परुषवचनं ब्रूते स्म । अवज्ञया प्रस्थापित इत्यर्थ इति वा योजना । 'तया' इति वा पाठः । बालेन विडम्बितः पिकः कुपितः सन् परुषं रटतीति जातिः । 'सर्ज अर्जने' इत्यतः क्तः । स चोपसर्गवशात्प्रेषणार्थः ॥ ३८ ॥

अहो मनस्त्वामनु तेऽपि तन्वते
त्वमप्यमीभ्यो विमुखीति कौतुकम् ।
क्व वा निधिर्निर्धनमेति किंच तं
स वाक्कवाटं घटयन्निरस्यति ॥ ३९ ॥

अहो इति ॥ हे भैमि, अत्युत्तमाः तेऽपि देवा अपि त्वामनु मनः तन्वते । मानुषीं त्वामभिलष्यन्ति । अहो आश्चर्यम् । मानुष्यतिहीना त्वमपि उत्तमेभ्योऽप्यमीभ्यो देवेभ्यो विमुखी पराङ्मुखीति चाश्चर्यम् । अहो कौतुकम्, महदाश्चर्यमिति चोभयत्र योजनीयम् । उत्तमो हीनां नाभिलष्यतीति हीना तत्र नानुरज्यत इति युक्तम् । 'उत्तमे कामयमानेऽपि हीना तं न कामयते' इति कुत्राचित्र दृष्टचरमिति महदाश्चर्यम् । उत्तमाय हि सर्वोऽपि स्पृहयतीति भावः । एतदेव परुषं वचनम् । दृष्टान्तमाह—निधिः महापद्मादिः निर्धनं दरिद्रं क्व वा कुतोऽपि दैवादायाति । किंच अन्यच्च स दरिद्रः प्रतिषेधकत्वाद्द्वाररूपं कवाटं घटयन् मत्समीपे त्वया नागन्तव्य-

१ बन्द्धृतेति यमकम् । भाषितसूत्रेति रूपकम् । २ पिक इवेत्युपमा च ।

मिति विशेषवचनम् ब्रुवन् तं निधिं निराकरोति । ताद्दग्गेतादित्यर्थः । निधिर्निर्धनमेति स च वाक्कवाटं घटयंस्तं निरस्यतीति क वा कुत्र वा । दृष्टमित्यर्थात् । अपितु कुत्रचिन्नेति वा । 'स वा कवाटम्' इति वा पाठः । निर्धनस्य निधिनिराकरणं यथाऽनुचितम्, तथा दिगीशानां त्वय्यनुराग एवानुचितः, कृतेऽप्यनुरागे त्वं तत्र नानुरज्यस इति महदनुचितमिति भाव इति वा ॥ ३९ ॥

सहाखिलस्त्रीषु वहेऽवहेलया
महेन्द्ररागाद्गुरुमादरं त्वयि ।
त्वमीदृशि श्रेयसि सम्मुखेऽपि तं
पराङ्मुखी चन्द्रमुखि न्यवीवृतः ४०॥

सहेति ॥ हे चन्द्रमुखि, महेन्द्रस्य त्वय्यनुरागाद्धेतोः अखिलस्त्रीष्विन्द्राणीप्रभृतिषु अवहेलयाऽवज्ञया सह त्वयि यं गुरुमादरं संमानं वहे धारये । इन्द्रस्य त्वय्यनुरागात्, त्वदन्यासु चाननुरागात्त्वदन्या कापि धन्या नास्तीति त्वामेव बहु मन्ये इति भावः । ईदृशि इन्द्रस्वाराज्यप्राप्तिलक्षणे सम्मुखे त्वामनु स्वयमागच्छत्यपि श्रेयसि कल्याणे विषये पराङ्मुखी तदनङ्गीकुर्वाणा त्वं तं ममादरं न्यवीवृतः व्यनाशय इत्यर्थः । त्वत्सदृशी कापि दुर्मतिर्नास्तीत्यर्थः । न्यवीवृतः, ण्यन्ताल्लुङि च ङ् ॥ ४० ॥

दिवौकसं कामयते न मानवी
नवीनमश्रावि तवाननादिदम् ।
कथं न वा दुर्ग्रहदोष एष ते
हितेन सम्यग्गुरुणाऽपि शम्यते ॥४१॥

दिवौकसमिति ॥ मानवी दिवौकसं न कामयते इतीदं नवीनमपूर्वं तवाननादश्रावि श्रुतम् । उत्तमस्य वस्तुनोऽनभिलाषाच्चित्रमित्यर्थः । एष ते दुर्ग्रहदोषः दुष्टग्रहलक्षणो दोषः सम्यगतितरां हितेनाऽनेन गुरुणा पित्राऽपि कथं वा न शम्यते नापनीयते । अपि त्वपनेतुमर्हः अपत्यहितमभिलष्यता पित्रा ह्यपत्यदुष्टग्रहः केनाप्युपायेन निराक्रियते । तव तु नेत्यपि चित्रमित्यर्थः । अथ च—दुष्टग्रहाः शनैश्चरादयः तज्जनितो दोषः पीडा सम्यक् हितेन केन्द्रस्थानस्थितत्वादनुकूलतरेण गुरुणा बृहस्पतिनाऽपनीयते, नापनीयते चेच्चित्रम् । 'किं कुर्वन्ति ग्रहाः सर्वे यदि केन्द्रे बृहस्पतिः' इतिज्योतिर्विदः । सर्वथा आग्रहं परित्यज्येन्द्रादिष्वन्यतमं वृणीष्वेति भाव'/ अथ च त्वद्वरणसंबन्धी देवानामाग्रहो मन्त्रिणा बृह- तिना कथं न शम्यते इति चित्रम् । दिवौकसमिति पृषोदरादिः । आङ्प्रश्लेषे वृद्धिर्वा । नवीनम् 'नवस्य न त्नप्तनप्खाश्च' इति (वा) खो नूरादेशः ॥ ४१ ॥

अनुग्रहादेव दिवौकसां नरो
निरस्य मानुष्यकमेति दिव्यताम् ।
अयोविकारे स्वरितत्वमिष्यते
कुतोऽयसां सिद्धरसस्पृशामपि ॥ ४२॥

अन्विति ॥ नरः दिवौकसामनुग्रहादेव अनुग्रहमात्रेण मानुष्यकं मनुष्यत्वं निरस्य परित्यज्य दिव्यतां देवत्वमेति प्राप्नोति । तत्र दृष्टान्तः—सिद्धरसस्पृशामपि औषधसाधितपारदस्पृशां सुवर्णभूतानामप्ययसां लोहाना मयोविकारे लोहविकारभूते पदार्थे मध्ये स्वरितत्वमाक्षिप्तत्वं कुतो हेतोरिष्यते, अपि तु न कुतोऽपि । सिद्धरसस्पृष्टानि सुवर्णभूतानि लोहानि अयोविकृतेषु मध्ये के क्षिप्यन्ते एतानि लोहजन्यानीति लोह ( जन्य ) पाती केन क्रियन्ते । किंतु सुवर्णमध्य एवेत्यर्थः । 'अयोऽधिकारे स्वरितत्वम्' इति पाठे आधिकारे प्रस्तावे । 'स्वरितेनाधिकारः' इति पाणिनिवचनात्स्वरितत्वाभावे कुतस्त्योऽधिकार इत्यर्थः । यथा सिद्धरसस्पृष्टं लोहं सुवर्णत्वे वर्ण्यते, न तु लोहत्वेन । तथा देवानुग्रहात्त्वमपि देव्येव न तु मानुषीति देवान्वृणीष्वेति भावः । स्वरित इ 'स्वर आक्षेपे' इति चौरादिकाददन्तान्निष्ठा । रसशब्दे विश्वप्रकाशे पारदवाच्युक्तः । स्पृशाम् 'स्पृशोनुदके क्वि ३।२।५८' इति क्विन् । अनेन 'मानुष्यकलाञ्छने जने इत्यादेरुत्तरं दत्तम् ॥ ४२ ॥

---

१ अत्रानुप्रासः । अहो मन इत्यादौ विषमं, वाक्कवाटमिति रूपकं,क चेति दृष्टान्तश्च । २ अत्र वहे इतिमुखीति च यमकं, गुरुमित्यादावनुप्रासश्च । चन्द्रमुखीत्युपमा, त्वमीदृशीति व्याजनिन्दा, 'निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ।' इति तल्लक्षणात् । किं त्वसौ व्यङ्ग्येति बोध्यम् ।

१ अत्रानुप्रासः । दुर्ग्रहदोष इति रूपकम्, गुरुणे दुर्ग्रहेति च श्लिष्टम् । जीवातुकारास्तु 'अत्राभिधाय प्रकृतार्थनियन्त्रणादप्रकृतार्थप्रतीतिरिति ध्वनिरेव, तु श्लेषः ।' इत्याहुः । २ अत्र नरो निरस्येत्यादावनुप्रासः पूर्वोत्तरवाक्ययोर्बिम्बप्रतिबिम्बत्वकल्पनायां दृष्टान्तः अनुग्रहादेवेत्यस्य सिद्धरसस्पृशामिति सिद्धरसस्पर्शा दित्यस्य च साधर्म्यमित्येतयोश्च समर्थ्य–समर्थकत्व त्यामर्थान्तरन्यास इति केचित् ।

हरिं परित्यज्य नलाभिलाषुका
न लज्जसे वा विदुषिन्ब्रुवा कथम् ।
उपेक्षितेक्षोः करभाच्छमीरता-
दुरुं वदे त्वां करभोरु भोरिति ॥४३॥

हरिमिति ॥ हे भैमि, त्वं हरिमिन्द्रं परित्यज्य नलनामकं राजानं नलाख्यतृणविशेषं च अभिलाषुकाऽभिलाषिणी तथा विदुषिन्ब्रुवा आत्मानं विदुषीं पण्डितां ब्रुवाणा सती कथं वा न लज्जसे ?अपि तु त्वया लज्जितव्यम्।महेन्द्रं त्यक्त्वा तृणतुल्यं नरं प्रियं वाञ्छसि अहं ज्ञात्रीति च ब्रूषे एतन्महच्चित्रम् । त्वादृशी दुर्बुद्धिर्निर्लज्जा च क्वापि नास्तीत्यर्थः । भोः करभोरु करस्य कनिष्ठामणिबन्धमध्यदेशवदनुवृत्तौ कोमलौ उरू यस्या एवंविधे भैमि, इति पूर्वार्धोक्तात्कारणात् अहं त्वां उपेक्षितेक्षोस्त्यक्तरसवादुरसेक्षोः शमीरतात्कटुरसशमीकण्टकलम्पटात् करभादुष्ट्रादपि उरुमुत्कृष्टां वदे ज्ञानपूर्वं कथयामि । उष्ट्रस्यापि कदाचित्तारतम्यज्ञानं भविष्यतीत्यपि संम्भाव्यतेऽपि तव तु न कदाचित् । तस्मादपि त्वं मूर्खतरेत्यर्थः । इक्षुशम्योर्यावदन्तरं, तावदिन्द्रनलयोरिति जानीहीति भावः । अयमेवात्राभिप्रायो ज्ञातव्यः । न तु करभादुरः—करभोरुरिति । अस्मिन्नर्थे 'ह्रस्वस्य गुणः ७।३।१०८' इति गुणप्राप्तेः करभोरो इति स्यात् । इतिशब्दस्यानन्वयापत्तेश्च । तस्मात्पूर्वार्धार्थपरामर्शी इतिशब्दो हेत्वर्थो ज्ञातव्यः । 'संज्ञापूर्वको विधिरनित्यः' इति परिभाषया ह्रस्वगुणरूपां संज्ञामाश्रित्य पाक्षिकगुणाभावसमाधानं कृत्वा करभोरु इति संबुद्ध्या ज्ञानपूर्वं कथयामीति वा । 'मनुष्यजातेर्विवक्षाविवक्षे' इति वामनाचार्यवचनात् करभादुरुः करभोरुरिति मनुष्यजातिविवक्षया 'ऊङुतः ४।१।६६' इत्यूङ् । तस्य नदीत्वात् 'अम्बार्थ' इति ह्रस्वे ह्रस्वविधिसामर्थ्याद्गुणाभावे च साधूकृतस्य करभोरुपदस्य पूर्वव्याख्याने योजना कार्येति वा । कं सुखं राति ददातीति करा । करा भा ययोस्तौ करभौ दर्शनमात्रेण यूनो मदनाद्वैतानन्दोदधौ निमज्जयन्तौ ऊरू यस्या इति व्युत्पत्त्या त्वय्येतावन्तं कालं करभोरु इति प्रातिपदिकम्, त्वाम् इदानीं करभादुष्ट्रादुरुं वदे इति वा । नलाभिलाषुका 'लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ३।२।१५४' इत्युकञि 'गम्यादीनामुपसंख्यानम्' इति (वा) समासः विदुषी इति ङीपः पचाद्यजन्ते ब्रुवशब्दे परे 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६।३।४३' इति ह्रस्वः । पचादिषु ब्रुव इति पाठसामर्थ्यादेव च वचिगुणौ न भवतः । करभादुरुः इति योगविभागात्समासः । वदे 'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः १।३।४७' इति ज्ञाने तङ् ॥ ४३ ॥

विहाय हा सर्वसुपर्वनायकं
त्वया धृतः किं(-)नरसाधिमभ्रमः ।
मुखं विमुच्य श्वसितस्य धारया
वृथैव नासापथधावनश्रमः ॥ ४४ ॥

विहायेति ॥ हे भैमि त्वया सर्वे सुपर्वाणो देवाः तेषां नायकं स्वामिनमिन्द्रं विहाय नरे मनुष्ये साधिमभ्रमः साधुत्वविषयः साधुत्वलक्षणो वा भ्रमः । अथ च नले साधिमभ्रमः किं धृतः हा कष्टम् । अनुचितमेतत् । उक्तमर्थं लोकोक्त्याऽऽह—श्वसितस्य श्वासानिलस्य धारया परम्परया मुखं विमुच्य मुखमार्गं विहाय सुखरूपानायासगमनोपायभूतं मुखं पिधाय नासापथेन नासिकामार्गेण यद् धावनं शीघ्रं गमनं तज्जनितः श्रमः क्लेशो वृथैव यथा धृतः तथा त्वयेत्यर्थः । अथ च इन्द्रं विहाय तदपेक्षया हीनस्य किंनरस्य देवयोनिविशेषस्य इन्द्रापेक्षया साधिमभ्रमो वृथा । अथ च रलयोरभेदात् कुत्सितो नरो मनुष्यो नलश्च तस्मिन् इति । 'वृथा धृतः' इत्यपि पाठः । तस्मादेनं भ्रमं परित्यज्य महेन्द्रो वरणीय इति भावः । साधुः पृथ्वादिः(?) ॥ ४४ ॥

तपोऽनले जुह्वति सूरयस्तनू-
र्दिवे फलायान्यजनुर्भविष्णवे ।
करे पुनः कर्षति सैव विह्वला
बलादिव त्वां वलसे न बालिशे ॥४५॥

---

१ अत्रानुप्रासः । विदुषिन्ब्रुवेति परिकरः । उपेक्षितेक्षोरितिकरभोरुत्वस्य यथाऽर्थसञ्ज्ञत्वाविष्करणात् करभादपेक्षयापि अतिशयोक्तिरिति ।व्यतिरेकइति केचित्, व्याजनिन्देति परे । 'निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गम्यते'।इति तल्लक्षणात्।२अत्रानुप्रासः, पूर्वोत्तरार्धयोर्बिंबानुबिम्बत्वाद् दृष्टान्तः । श्रम इव तादृशस्य भ्रमस्य वृथात्वेन निर्देश एव वाक्यपर्यवसानाच्च निदर्शना । 'निदर्शना । अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ।' इति तल्लक्षणं च ।

तप इति ॥ सूरयो बुधाः अन्यत् यज्जनुः जन्म तत्र भविष्णवे भाविने दिवे स्वर्गलक्षणाय फलाय तपोऽनले चान्द्रायणादितपोरूपेऽग्नौ तनूः शरीराणि जुह्वति प्रक्षिपन्ति यदर्थं शरीरपीडामपि कृत्वा तपोऽर्जयन्ति सैव इन्द्रादिस्वरूपा द्यौरेव पुनस्त्वदनुरागवशाद्विह्वला सती अस्मिन्नेव जन्मनि त्वां बलादिव बलात्कारेण करे धृत्वा आकर्षति । हे बालिशेऽज्ञे ! त्वं पुनः न वलसे नाभिमुखीभवसि । चित्रमित्यर्थः । कर्षतीवेति वा । जन्मान्तरभाविफलार्थं बुधाः शरीरमपि त्यजन्ति, तच्च फलं प्रत्युत त्वत्प्राप्त्यर्थं स्वयमेव साभिलाषं सदस्मिन्नेव जन्मनि एतच्छरीरसहितामेव त्वां स्वसमीपं नेतुमिच्छति, त्वं तु तत्सम्मुखी न भवसीति मूर्खतरा बालिशेत्यनेन सूचितम् । आग्रहं त्यक्त्वा इन्द्रादिष्वन्यतमं वृणीष्वेति भावः । 'अज्ञे च बालिशः' इत्यमरः । जुह्वति 'अदभ्यस्तात् ७ । १ । ४' इति झेरत् 'हुश्नुवोः सार्वधातुके ६ । ४ । ८७' इति यणादेशः । 'भुवश्च ३ । २ । १३८' इतीष्णुचः छन्दस्येव विधानमिति वृत्तिकारादिवचनाद्भाषायां 'भविष्णवे' इति चिन्त्यम् । यद्वा 'भूष्णुर्भविष्णुर्भविता,' 'जगत्प्रभोरप्रभविष्णु वैष्णवम्' इत्यादिप्रामाणिकप्रयोगदर्शनाच्च 'भुवश्च ३ । २ । १३७' इति चकारं 'भुवश्छन्दसि च' इति संबध्य चकारात् 'भाषायामपि क्वचिद्भवति' इति व्याख्यानात्समर्थनीयम् । गत्यन्तरं वा गवेषणीयम् ॥ ४५ ॥

यदि स्वमुद्बन्धुमना विना नलं
भवेर्भवन्तीं हरिरन्तरिक्षगाम् ।
दिविस्थितानां प्रथितः पतिस्ततो
हरिष्यति न्याय्यमुपेक्षते हि कः ॥ ४६ ॥

'हुताशनोद्बन्धन—' इत्यादि यदुक्तं, तच्छ्लोकत्रयेण दूषयति—

यदीति ॥ त्वं नलं विना यदि स्वम् आत्मानं उद्बन्धुमना भवेः तर्हि अन्तरिक्षगामन्तरालस्थां त्वां ततोऽन्तरिक्षात् हरिरिन्द्रो हरिष्यति नेष्यति । यस्माद्दिविस्थितानामन्तरिक्षस्थानां पतिः स्वामी प्रथितः ख्यातः। युक्तमेतत्—कः न्याय्यं न्यायादनपेतं स्वीयं भागमुपेक्षते नाङ्गीकरोति । अपितु सर्वोऽप्यङ्गीकरोति । तत इति तर्ह्यर्थे वा । न्याय्यं, 'धर्मपथ्यर्थ—' इति यत् ॥ ४६ ॥

निवेक्ष्यसे यद्यनले नलोज्झिता
सुरे तदस्मिन्महती दया कृता ।
चिराद्नेनार्थनयाऽपि दुर्लभं
स्वयं त्वयैवाङ्ग यदङ्गमर्प्यते ॥ ४७ ॥

निवेक्ष्यस इति ॥ नलेनोज्झिताऽपरिणीता त्वं यदि अनलेऽग्नौ निवेक्ष्यसे आत्मानं क्षेप्स्यसि । तत्तर्हि अस्मिन्सुरे वह्नौ त्वया महती दया कृता । यद्यस्मात् अङ्ग भैमि, अनेनाग्निना चिराद्बहुकालमर्थनया प्रार्थनयापि कृत्वा दुर्लभमङ्गं त्वयैव स्वयमर्प्यते दीयते । यच्चिरकालं याचितमपि दुष्प्रापं, तद्दात्रा स्वयमेव यदि दीयते तत्र दयैव निमित्तमिति ज्ञायते । स्वयमेव स्वाङ्गदानात्त्वया गुर्वी दया कृता । तथा च वह्निप्रवेशोऽपि त्वया कर्तुं न शक्यत इति भावः । कस्मिन्कृते किं भविष्यतीति न जानासीत्युपहासः अङ्गेति संबुद्ध्या सूचितः ॥ ४७ ॥

जितं जितं तत्खलु पाशपाणिना
विना(ऽ)नलं वारि यदि प्रवेक्ष्यसि ।
तदा त्वदाख्यान्बहिरप्यसूनसौ
पयःपतिर्वक्षसि वक्ष्यतेतराम् ॥ ४८ ॥

जितमिति ॥ हे भैमि, यदि त्वं नलं विना पूर्वोदोपादनलमपि विना वारि प्रवेक्ष्यसि वारिप्रवेशलक्षणमन्यं मरणोपायं चेत्करिष्यसि, तत्तर्हि खलु निश्चितं पाशपाणिना वरुणेन जितंजितम् । अतितरां जितमित्यर्थः । संभ्रमे द्विरुक्तिः । अतिदुर्लभस्य चिरेप्सितस्य स्वत एवागमनात्सर्वोत्कर्षेण वृत्तमित्यर्थः । यतः— असौ पयःपतिः तदा त्वयि प्रविष्टायां सत्यां त्वदाख्यांस्त्वन्नामकान्स्वीयानसून्प्राणान् बहिरपि वक्षसि हृदयोपर्यपीत्यर्थः । वक्ष्यतेतरां धारयिष्यतितराम् । इदानीमन्तःकरणे तावच्चिरकालं वहत्येव, तदानीमालिङ्गनवशाद्बहिरपि वक्ष्यतेतराम् । अतस्तेन जितमित्यर्थः ।

१ अत्रानुप्रासः । तपोऽनल इति रूपकम्, बलादिवेत्युत्प्रेक्षा । कर इत्यादौ सख्योर्व्यवहारः प्रतीयत इति समासोक्तिश्च ।

१ अत्रानुप्रासः । न्याय्यमुपेक्षते हि क इत्यर्थान्तरन्यासः । २ अत्रानुप्रासः । नललाभे जीविताजिहासायाम नलावलम्बनरूपानर्थोक्तेर्विषमः ।

अत्र पयःपतित्वमेव हेतुः । अयमप्युपायः कर्तुं न शक्य इत्यर्थः । वक्षसि वक्ष्यतेतरामित्यन्वयः । ततो वहिर्योगाभावान्न पञ्चमी । अर्थाच्च वक्षोपेक्षमेव वहिष्ठम् । वक्ष्यते, वहेः स्वरितेत्त्वात्तङि स्ये 'हो ढः ८ । २ । ३१' इति हस्य ढत्वे 'षढोः कः सि ८ । २ । ४१' इति कत्वे 'आदेशप्रत्यययोः ५ । ३ । ५८' इति षत्वम् ॥ ४८ ॥

**करिष्यसे यद्यत एव दूषणा-**
**दुपायमन्यं विदुषी स्वमृत्यवे ।**
**प्रियातिथिः स्वेन गृहागता कथं**
**न धर्मराजं चरितार्थयिष्यसि ॥ ४९ ॥**

मरणोपायान्तरं च दूषयति—

करिष्यस इति ॥ हे भैमि, त्वम्, अत एव दूषणात् उद्बन्धनादिमरणे इन्द्राद्यधीना भविष्यामीत्यस्माद्दूषणाद्विदुषी अन्योपायस्फुरणे प्रतिभावती सती स्वमृत्यवे अन्यमुपायं कर्पूरभक्षणादिलक्षणं यदि चेत्करिष्यसे तर्हि स्वेन स्वयमेव गृहान्प्रत्यागता प्रिया प्राणेश्वरी अतिथिरूपा त्वं धर्मराजं यमं कथं न चरितार्थयिष्यसि । कृतार्थं करिष्यसीत्यर्थः । यमगृहे सर्वेणापि गन्तव्यमेव । स्वयं गृहागतायाश्च वरणे न दोषः । तस्मान्मरणे उपायान्तरमपि कर्तुं न शक्यत इति भावः । विदुषः पूर्वोक्तपक्षदूषणे उपायान्तरं स्फुरति । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः ॥ ४९ ॥

**निषेधवेषो विधिरेष तेऽथवा**
**तवैव युक्ता खलु वाचि वक्रता ।**
**विजृम्भितं यस्य किल ध्वनेरिदं**
**विदग्धनारीवदनं तदाकरः ॥ ५० ॥**

तवाभिप्रायमजानानेनैव मया 'इन्द्रादीन्वृणीष्व' इत्युक्तम्, त्वया तु 'न' इति वचनभङ्ग्योक्तम् । इदानीं तवाभिप्रायो ज्ञात इत्याह—

निषेधेति ॥ अथवा इन्द्रादीन्न वृणे इति एष ते तव निषेधो वेषो रूपं यस्यैतादृशो विधिरेव । न वृणे इति यथाश्रुतार्थग्राहिणा मया पूर्वं न ज्ञातः, इदानीं वृणे इति विधिरेव ज्ञातः । लौकिकवचनरीतिरप्येवम् । निषेधे विधिप्रतीतिः कथमित्यत आह । खलु यस्मात् तवैव वाचि वक्रता युक्ता । वक्रोक्तिस्त्वद्वचनविषयैव युक्तेत्यर्थः । एतदपि कुत इत्याशङ्क्याह—खलु यस्मात् यस्य ध्वनेः ध्वनिसंज्ञकस्योत्तमकाव्यस्य इदं निषेधविधिरूपं किल प्रसिद्धं विजृम्भितं विलसितम्, तस्य आकरः खनिः उत्पत्तिस्थानं विदग्धनारीवदनं चतुरवनितामुखम् । वक्रोक्त्यादिध्वनिविलसितं वक्तुं विदग्धा नार्येव जानाति, न त्वन्या । त्वादृशी वक्रोक्त्यादि वक्तुं चतुरा ना (अ) स्तीत्यर्थः । 'इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इति काव्यप्रकाशः । 'विस्पष्टं क्रियमाणादक्लिष्टा स्वरविशेषतो भवति । अर्थान्तरप्रतीतिर्यत्रासौ काकुवक्रोक्तिः ॥' इति 'वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्' इत्यत्र स्नाननिषेधे स्नानविधिः, प्रियोपसरणविधौ तन्निषेध इति । तथा—'प्राणेश ! विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः । संप्रत्ययोग्यस्थितिरेष देशः कला यदिन्दोरपि तापयन्ति ॥' इति । तत्रैव दिवसा नेयाः नात्रागन्तव्यमिति निषेधो व्यज्यते । स निषेधोऽपि भङ्ग्या आगमविधिरेव । यतस्तया आत्मनो भर्तृविरहासहत्वं भङ्ग्या सूचितमिति निषेधवेषो विधिर्ज्ञातव्यः । अन्यदपि ग्रन्थान्तराज्ज्ञातव्यं सुधीभिः ॥ ५० ॥

**भ्रमामि ते भैमि सरस्वतीरस-**
**प्रवाहचक्रेषु निपत्य कत्यदः ।**
**त्रपामपाकृत्य मनाक्कुरु स्फुटं**
**कृतार्थनीयः कतमः सुरोत्तमः ॥ ५१ ॥**

भ्रमामीति ॥ हे भैमि, अहं ते तव सरस्वत्या रसो माधुर्यं तत्संबन्धिषु वक्रोक्त्यादिरूपप्रवाहचक्रेषु समूहेषु । आवर्तेष्वित्यर्थः । निपत्य कति कियन्तं कालं कति वारान् वा भ्रमामि भ्रान्तो भवामि । निषेधरूपेणोच्यते विधिरूपेण वेति निश्चयाभावात्कियत्कालं मया भ्रमितव्यमित्यर्थः । अन्योऽपि नदीजलप्रवाहावर्तेषु बहुवारं बहुकालं वा भ्राम्यति । कुलालचक्रनिपतितो घटादिर्वा । त्रपां लज्जां मनाक् ईषदपाकृत्य इन्द्रादिषु मध्ये कतमः सुरोत्तमः स्वयंवरेण त्वया कृतार्थनीयः । इन्द्रः, अग्निः, यमः, वरुणो वेति अदः एतत्स्फुटं कुरु । नामग्राहमेकं

---

१ अत्रानुप्रासः । खल्वित्युत्प्रेक्षा । २ अत्र प्रार्थनातो यं न गृह्णासि तं पुनः स्वयं ग्रहीष्यसीति 'विषादनम्, 'इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् ।' इति तल्लक्षणात्, विषमं वा, अनुरूपकार्योपस्थ्यानोक्तेः ।

१ अत्रानुप्रासः । निषेधवेष इत्यपह्नुतिः, खल्विति चोत्प्रेक्षा, अथवेत्याक्षेपः, वदनं तदाकर इति रूपकं च ।

वृण इति कथयेत्यर्थः । मनाक् प्रकटं कुर्विति वा । कति, 'कालाध्वनोरत्यन्तसंयोगे २।३।५' इति कालवाचित्वेऽत्यन्तसंयोगे द्वितीयाबहुवचनान्तम् । सुरोत्तमः पुरुषोत्तमवत् । दिक्पतित्वाच्चतुर्णामपि सुरोत्तमत्वम् । भैमीवरणाभिप्रायं वा ॥ ५१ ॥

**मतः किमैरावतकुम्भकैतव-**
**प्रगल्भपीनस्तनदिग्धवस्तव ।**
**सहस्रनेत्रान्न पृथग्मते मम**
**त्वदङ्गलक्ष्मीमवगाहितुं क्षमः ॥ ५२ ॥**

कतम इत्युक्तं तदेवोपन्यस्यति—

मत इति ॥ ऐरावतकुम्भस्थलस्य कैतवेन व्याजेन तत्कुम्भाविव प्रगल्भौ कठिनौ पीनौ मांसलौ स्तनौ यस्या दिशः प्राच्या धवः पतिः इन्द्रः तव मत ईप्सितः किम् । प्रायेणैवमेव त्वया विचारितं स्यादित्यर्थः । युक्तं चैतत्—त्वदङ्गलक्ष्मीं त्वच्छरीरशोभामवगाहितुं सामस्त्येनेक्षितुं सहस्रनेत्रादिन्द्रात्पृथक् अन्यो द्विनेत्रः मम मते क्षमो न । नेत्रद्वयेन तव सौन्दर्यं द्रष्टुं न शक्यते इति सहस्रनेत्रत्वादिन्द्र एव तव सौन्दर्यदर्शनयोग्य इति ममाप्ययमेवाशय इति भावः । तव मतो, मम मत इति 'क्तस्य च वर्तमाने २।३।६७' इति कर्तरि षष्ठी । सहस्रनेत्रात्, 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् २।३।३२' इति पञ्चमी ॥ ५२॥

**प्रसीद तस्मै दमयन्ति ! सन्ततं**
**त्वदङ्गसङ्गप्रभवैर्जगत्प्रभुः ।**
**पुलोमजालोचनतीक्ष्णकण्टकै-**
**स्तनुं घनामातनुतां स कण्टकैः ॥५३॥**

प्रसीदेति ॥ हे दमयन्ति, तस्मै इन्द्राय प्रसीद त्वं प्रसन्ना भव । तं वृण्वित्यर्थः । अनन्तरं स जगत्प्रभुरिन्द्रः त्वदङ्गसङ्गात्प्रभवो येषां तैः कण्टकै रोमाञ्चैः कृत्वा तनुं शरीरं संततं सर्वदा घनां निबिडां परिपूर्णामातनुताम् । किम्भूतैः—पुलोमजाया इन्द्राण्या लोचनयोरतितरां सोढुमशक्यत्वात् तीक्ष्णकण्टकैरसह्यकण्टकरूपैः सूच्यग्रतुल्यैः क्षुद्रशत्रुरूपैर्वा । त्वया वृते सतीन्द्राणीपरित्यागेन त्वय्येवानुरक्तो भविष्यतीति भावः । सपत्नीसुतान्भर्तुरङ्कगतान्क्रीडतो दृष्ट्वाऽन्यस्या नेत्रयोः कण्टकविद्धवेदना भवतीत्युक्तिः । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः । तस्मै 'क्रियया यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानम्[१]५३॥

**अबोधि तत्त्वं दहनेऽनुरज्यसे**
**स्वयं खलु क्षत्रियगोत्रजन्मनः ।**
**विना तमोजस्विनमन्यतः कथं**
**मनोरथस्ते वलते विलासिनि ॥ ५४ ॥**

वह्निवरणे कारणमाह—

अबोधीति ॥ त्वं स्वयमप्रवर्तितैव दहनेऽग्नौ अनुरज्यसेऽनुरक्तासीति मया तत्त्वं परमार्थोऽबोधि अज्ञायि । हे विलासिनि, खलु यस्मात्क्षत्रियाणां गोत्रे वंशे जन्म यस्यास्तस्याः ते तव मनोरथः तम् ओजस्विनं तेजस्विनं वह्निं विना परिहृत्य अन्यतोऽन्यस्मिन्पुरुषे कथं वलते । अपित्वयोग्यत्वान्न यात्येव । तेजो हि तेजस्येवानुरज्यते । त्वं तेजस्विनी, वह्निरपि तेजस्वीति वह्नावनुरक्तासीति युक्तमिति मया ज्ञातमिति भावः । अन्यस्यापि क्षत्रियकुलोत्पन्नस्य मन इव शीघ्रगामी रथः तेजस्विनमन्यं क्षत्रियं विहाय ब्राह्मणादिषु न वलते । अनुरज्यसे, श्यनो ङित्वात् 'अनिदितां हल उपधायाः क्ङिति ६।४।२३।' इति नलोपः । अन्यतः, सप्तम्यर्थे तसिः ॥५४॥

**त्वयैकसत्या तनुतापशङ्कया**
**ततो निवर्त्यं न मनः कथंचन ।**
**हिमोपमा तस्य परीक्षणक्षणे**
**सतीषु वृत्तिः शतशो निरूपिता ॥५५॥**

त्वयेति ॥ त्वादृगन्यपतिव्रताभावात् एका चासौ सती च तया मुख्यपतिव्रतया त्वया तनोः शरीरस्य तापाद्दाहात् देहदाहमयं करिष्यतीति शङ्कया भिया संतापभिया च तस्मादग्नेः सकाशात् कथंचन केनापि प्रकारेण मनो न निवर्त्यं परावर्तनीयम् । यस्मात् परी-

---

१ अत्र सरस्वतीत्यत्र सरस्वत्यां सरस्वत्या रसे रसस्य चाभेदमध्यवसाय्योक्ते रूपकातिशयोक्तिः । न चात्रापि 'विद्वन्मानसहंस' इत्यादिवत्परम्परितरूपकमेवेति, तत्र हंसत्वस्याश्लिष्टत्वेनारोपहेतोरनपह्नवात्, अत्र तथाऽभावाच्च । श्लेषश्चोभयथाऽपीत्यन्यत् त्रपामपेत्यादावनुप्रासः शब्दालङ्कारः । २ कैतवेत्यपह्नुतिः । अनुप्रासश्चात्र ।

१ अत्रानुप्रासो यमकं च । कण्टकेषु कण्टकत्वारोपाद्रूपकम् । २ अत्रानुप्रासः, अबोधीत्यत्र स्वयमित्यादेर्हेतुत्वात् काव्यलिङ्गम् ।

क्षणक्षणे साधुत्वासाधुत्वपरीक्षार्थं दिव्यसमये, स्त्रीणां सहगमनादिसमये, सीतादिपतिव्रतापरीक्षासमये, तस्य अग्नेः वृत्तिः स्थितिः शतशः रामायणादौ हिमोपमा तुषारसदृशी निरूपिता दृष्टा च । त्वं चापि सती । शतशः सतीष्विति वा ॥ ५५ ॥

स धर्मराजः खलु धर्मशीलया
त्वयाऽस्ति चित्तातिथितामवापितः ।
ममापि साधुः प्रतिभात्ययं क्रम-
श्चकास्ति योग्येन हि योग्यसंगमः॥५६॥

यमवरणे कारणमाह—

स धर्मेति ॥ खलु निश्चये संभावनायां वा । स प्रसिद्धो धर्मराजो यमः त्वया चित्तस्यातिथितां गोचरत्वमवापितः प्रापितोऽस्ति। यतः—धर्मप्रधानं शीलं यस्याः, धर्मं शीलयत्यभ्यस्याति वा एवंभूतया। धर्मशीला हि धर्मशील एवानुरज्यत इति । अयं क्रम इयं परिपाटी ममापि साधुः समीचीना प्रतिभाति । एतन्ममापि संमतम् । हि यस्मात् कुलशीलादिभिर्योग्येन उत्तमेन सह योग्यस्यैव संगमश्चकास्ति, न त्वयोग्येन योग्यस्य । तस्माद् धर्मराजेन धर्मशीलायाः सम्बन्धो युक्त इति भावः ॥ ५६ ॥

अजातविच्छेदलवैः स्मरोद्भवै-
रगस्त्यभासा दिशि निर्मलत्विषि ।
धुतावधिं कालममृत्युशङ्किता
निमेषवत्तेन नयस्व केलिभिः ॥ ५७ ॥

अजातेति ॥ हे भैमि, त्वम् अगस्त्यभासाऽगस्त्यनक्षत्रदीप्त्या निर्मलत्विषि उज्ज्वलकान्तौ सम्भोगयोग्यायां दक्षिणस्यां दिशि तेन यमेन सह न जातो विच्छेदलवो येषु तैः स्मरोद्भवैः केलिभिः कृत्वा यमस्यैव पतित्वात् अमृत्युशङ्किता मृत्युभयरहिता सती निमेषवत् धुतावधिं निर्मर्यादम् आचन्द्रार्कं कालं नयस्वातिवाहय । अन्यवरणे विच्छेदः सम्भाव्यते, एतद्वरणे तु मरणाभावादाचन्द्रार्कं कामसुखमनुभवेति भावः । 'स्मरोत्सवैः' इति पाठे स्मरस्य उत्सवरूपैः कामसंबन्धिभिरुत्सवैश्चुम्बनादिभिः कृत्वा अजातविच्छेदलवैश्चुम्बनादिभिर्निरन्तरैरित्यर्थः । नयस्वेति जित्वा-त्कर्त्रभिप्राये क्रियाफले तङ् । 'नय' इति वा ॥ ५७ ॥

शिरीषमृद्वी वरुणं किमीहसे
पयःप्रकृत्या मृदुवर्गवासवम् ।
विहाय सर्वान्वृणुते स्म किं न सा
निशाऽपि शीतांशुमनेन हेतुना॥५८॥

वरुणवरणे कारणमाह—

शिरीषेति ॥ शिरीषमृद्वी शिरीषपुष्पवत्कोमलाङ्गी त्वं वरुणमीहसे इच्छसि किम् । प्रायेणैवं संभावयामि । यतः—किंभूतम्—पयःप्रकृत्या उदकस्वभावेन, पयोलक्षणया प्रकृत्या उपादानकारणेन वा मृदुवर्गस्य मृदुवस्तुसङ्घस्य वासवम् । किंचित्पार्थिवावयवसहितस्याप्यशरीरस्य वरुणलोके विद्यमानत्वान्मृदुतममित्यर्थः । त्वमपि मृद्वी, सोऽपि मृदुरिति उभयोर्योग्यत्वम् । दृष्टान्तेनैतदेवोपपादयति—सा अतिशीतातिमृद्वी निशाऽप्यनेन मृदुतरत्वेनैव हेतुना सर्वान्देवान् विहाय शीतांशुं चन्द्रं किं न वृणुते स्म अपितु वव्रे । योग्यत्वादित्यर्थः । हेतुना 'सर्वनाम्नस्तृतीया च २ । ३ । २७' इति तृतीया ॥ ५८ ॥

असेवि यस्त्यक्तदिवा दिवानिशं
श्रियः प्रियेणानणुरामणीयकः ।
सहामुना तत्र पयःपयोनिधौ
कृशोदरि क्रीड यथामनोरथम् ॥५९॥

असेवीति ॥ त्यक्ता द्यौः स्वर्गो येन श्रियः प्रियेण नारायणेन अनणु महद् रामणीयकं यस्यैवंभूतो यः क्षीरोदो दिवानिशं रात्रिंदिवमसेवि । हे कृशोदरि, त्वं पयसो दुग्धस्य पयोनिधौ तत्पतित्वादमुना सह सार्धं यथामनोरथं स्वेच्छया क्रीड । श्रीसहितो विष्णुर्यथा तत्र क्रीडति तथा त्वमप्यनेन सहेत्यर्थः । दिवानिशम्, 'कालाध्वनोरत्यन्तसंयोगे २ । ३ । ५ । इति द्वितीया ।

१ अत्रानुप्रासः । 'पूर्ववाक्यस्यैकपत्नीपदार्थहेतुकत्वात् पदार्थहेतुकं, तस्याप्युत्तरवाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं च काव्यलिङ्गमिति स्पष्टं जीवातौ । २ अत्रानुप्रासो यमकं च । योग्येन हीति सामान्येन प्रागुक्तस्य विशेषस्य समर्थनादर्थान्तरन्यासश्च ।

१ निमेषवदित्युपमा ।२शिरीषमृद्वी । विहायेत्यादिना प्रागुक्तस्य बिम्बप्रतिबिम्बभावात्मना वचनाद् दृष्टान्तः ।तेन निशाशीतांशुमिव त्वं वरुणं वृणुष्वेत्यत्र तात्पर्ये वाक्यार्थस्य परिणमनादुपमा व्यङ्ग्या चेति प्रकृतेऽलङ्कारेणालङ्कारध्वनिः ।

यथामनोरथम्, 'यथाऽसादृश्ये २ । १ । ७' इति समासः ॥ ५९ ॥

इति स्फुटं तद्वचसस्तयाऽऽदरा-
त्सुरस्पृहारोपविडम्बनादपि ।
कराङ्कसुप्तैककपोलकर्णया
श्रुतं च तद्भापितमश्रुतं च तत् ॥६०॥

इतीति ॥ कराङ्के हस्तक्रोडे सुप्तं स्थितमेकं कपोलकर्णं यस्या एवंविधया तया तत्तस्य दूतस्य इति पूर्वोक्तं भाषितं श्रुतं चाश्रुतं च । इन्द्रियपाटवाच्छ्रुतम्, अनङ्गीकारान्न श्रुतमिति भावः । स्फुटमुत्प्रेक्षायाम् । श्रवणे हेतुः—तस्य नलाकारस्य दूतस्य आदराच्छ्रुतम् । अश्रवणे हेतुः—सुरेषु इन्द्रादिषु स्पृहारोपोऽभिलापारोपः, तद्रूपाद्विडम्बनाद्दूषणादश्रुतम् । पतिव्रताया मम अन्याभिलापारोपवचनं दुष्टमिति नाकर्णितमित्यर्थः ॥ ६० ॥

चिरादनध्यायमवाङ्मुखी मुखे
ततः स्म सा वासयते दमस्वसा ।
कृतायतश्वासविमोक्षणाऽथ तं
क्षणाद्बभाषे(ऽ)करुणं विचक्षणा ॥६१॥

चिरादिति ॥ ततोऽनन्तरं सचिन्तत्वादवाङ्मुखी विचक्षणा चतुरा सा दमस्वसा भैमी मुखे चिरकालमनध्यायं वचनाभावं वासयते स्म । मुहूर्तं तूष्णीं बभूवेत्यर्थः । अथ पश्चात्कृतमायतं दीर्घं श्वासविमोक्षणं यया एवंभूता सती क्षणान्मुहूर्तादनन्तरं करुणं करुणरसप्रधानं वचनं, करुणं यथा तथा वा बभाषे । अकरुणमिति वा । निष्ठुरमुवाचेत्यर्थः । अन्तकदूततोचितम् इत्यादेर्वक्ष्यमाणत्वात् । अनादरसूचकमौनावाङ्मुखत्वदीर्घनिश्वासकरणात् विचक्षणेति साभिप्रायम् । प्रचण्डवायौ वाति सति तात्कालिकोऽनध्यायः क्रियते, क्षणानन्तरं पुनः पठ्यते तद्वदुवाचेत्यर्थः । सचिन्तस्य जातिः स्वभावो वा । 'अध्यायन्यायोद्यावसंहाराश्च ३ । ३ । १२२' इत्यनेन अध्यायशब्दः साधुः । वासयते 'णिचश्च १।३।७४' इति तङ् । 'अणावकर्मकाच्चित्तवत्कर्तृकात् १ । ३ ।८८' इति न परस्मैपदम्, अणौ चित्तवत्कर्तृकत्वाभावात् । अनध्यायस्याकर्तृत्वात् । विचक्षणा 'अनुदात्तेतश्च हलादेः ३।२।१४९' इति युच् ॥ ६१ ॥

विभिन्दता दुष्कृतिनीं मम श्रुतिं
दिगिन्द्रदुर्वाचिकसूचिसञ्चयैः ।
प्रयातजीवामिव मां प्रति स्फुटं
कृतं त्वयाऽप्यन्तकदूततोचितम् ॥६२॥

विभिन्दतेति ॥ त्वयाऽपि अतिसुन्दरेण नलतुल्याकारेणापि सता मां स्फुटमन्तकदूततोचितं यमदूतत्वोचितं कर्म कृतम् । किंभूतेन—आरोपितदिक्पालाभिलापवाणीसमाकर्णनाद्दुष्कृतिनीं दुष्कर्मकारिणीं मम श्रुतिं दिगिन्द्रा इन्द्रादिदिक्पालास्तेषां दुर्वाचिकानि दुष्टसंदेशवचनानि तद्रूपैः सूचिसञ्चयैः सूचिवृन्दैः कृत्वा विभिन्दता पीडयता । अत एव—प्रयातजीवामिव गतप्राणामिव मृतं पापिनं कर्णे सर्वत्र चाङ्गे सूचिसङ्घैर्यमदूतो यथा निष्ठुरं पीडयति । चतुर्णामपि दूतत्वाद्यमदूतत्वोचितमेव त्वया कृतमित्यर्थः । अतिसुन्दरस्य विशेषतो नलतुल्याकारस्य सौम्याकारस्य मां प्रत्यतिपीडाकारित्वमयुक्तमिति त्वयाऽपीत्यपिना सूचितम् । अन्योऽपि बौद्धादिरदुष्कृतिनीं दोषलेशरहितां श्रेयोरूपां श्रुतिं वेदं दुष्टवचनैर्दूषयति । सञ्चयैरित्यत्र 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति वार्तिकेनाभेदे तृतीया, धान्येन सधन इत्यादिवत् प्रयातो यातुमारब्धः, प्रशब्द आदिकर्मणि तत्रैव निष्ठा ॥ ६२ ॥

त्वदास्यनिर्यन्मदलीकदुर्यशो-
मषीमयं सालिपिरूपभागिव ।
श्रुतिं ममाविश्य भवद्दुरक्षरं
सृजत्यदः कीटवदुत्कटा रुजः ॥ ६३॥

उक्तमेवार्थं सोपस्करमाह—

त्वदास्येति ॥ अदः भवद्दुरक्षरं त्वयोक्तं दुष्टमक्षरं मम श्रुतिमाविश्य कीटवदुत्कटा दुःसहा रुजः पीडाः

१ अत्र दिवेति यमकम् प्रियेणेत्यादौ णकारानुप्रासः, अणनुरामणीयक इत्यादौ च। २अत्र श्रुतं चाश्रुतं चेति विरोधाभासः समुच्चयश्च । 'बहूनां युगपद्भावभाजां गुम्फः समुच्चयः । इति तल्लक्षणात्। स्फुटमित्युत्प्रेक्षा, आदरविडम्बनयोः श्रवणाश्रवणाभ्यां सह हेतुहेतुमद्भावेन क्रमानुगतात्सम्बन्धाद् यथासङ्ख्यं च । 'यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः ।' इति तल्लक्षणात्।

१ अत्रानुप्रासः स्वभावोक्तिश्च । २ जीवामिवेत्युपमा, बौद्धादिव्यवहारस्फूर्तेः समासोक्तिश्च ।

सृजति । किंभूतम्—तव आस्यान्निर्यन्निर्गच्छत् इन्द्राद्यनुरागरूपं मदलीकदुर्यशोरूपं मदीयमिथ्यापयशोरूपं मषीमयं मषीप्रचुरं सत् भवत् । अत एव लिपिरूपभागिव लेखनस्वरूपं भजदिव । सती चासौ लिपिश्च तद्रूपभाग् या । कीटो यथा कर्णं प्रविश्य दुःसहां पीडां करोति । अन्यदप्यक्षरं मषीभाजननिर्यन्मषीलिखितं लिपिरूपं भवति ॥ ६३ ॥

**तमालिरूचेऽथ विदर्भजेरिता**
**प्रगाढमौनव्रतयैकया सखी ।**
**त्रपां समाराधयतीयमन्यया**
**भवन्तमाह स्वरसज्ञया मया ॥ ६४ ॥**

तामिति ॥ अथ विदर्भजेरिता भैमीप्रेरिता आलिः सखी तम् ऊचे । हे दूत, इयं सखी भैमी प्रगाढमौनव्रतया दृढतरमौनलक्षणव्रतया एकया स्वस्य रसज्ञया जिह्वया त्रपां समाराधयति भजते, अन्यया मया मद्रूपया स्वस्य रसज्ञया जिह्वया, अथ च स्वरसं भैम्याभिलाषविषयं जानत्या मया, कृत्वा भवन्तमाह । इयं लज्जावशात्स्वाभिप्रायं त्वां साक्षान्न बोधयति तस्मादेतत्प्रेरिता अहमेतदभिप्रायमेव ब्रवीमि तमाकर्णयेति भावः । मया लक्ष्म्या सह वर्तमानः तत्संबुद्धिः सम । आवन्तं भैमीविशेषणं वा । अन्योऽपि मौनी कांचिद्देवतामाराधयति[2] ॥ ६४ ॥

**तमर्चितुं मद्वरणस्तजा नृपं**
**स्वयंवरः सम्भविता परेद्यवि ।**
**ममासुभिर्गन्तुमनाः पुरःसरै-**
**स्तदन्तरायः पुनरेष वासरः ॥ ६५ ॥**
**तदद्य विश्रम्य दयालुरेधि मे**
**दिनं निनीषामि भवद्विलोकिनी ।**
**नखैः किलाख्यायि विलिख्य पक्षिणा**
**तवैव रूपेण समः स मत्प्रियः ॥ ६६ ॥**

किमाहेत्याह—

तामिति । तदद्येति ॥ मद्वरणस्रजा मदीयवरणमधूकमालया कृत्वा तं नलनामानं नृपमर्चितुं परेद्यवि श्वः स्वयंवरः सम्यग्भविता । एष वासरः पुनः तस्य स्वयंवरस्यान्तरायो विघ्नरूपः । एतावानेव विलम्बोऽस्ति । किंभूतः—पुरःसरैः एतद्दिवसात्पूर्वमेव गन्तुकामैः मम असुभिः प्राणैः सह गन्तुमना जिगमिषुः । तस्मान्मया इन्द्रादयो न वरीतव्या इति भावः । अयं दिवसः कथं निर्विघ्नो यास्यतीति चिन्तया मम प्राणा अतिव्याकुलाः। यस्मात् तत्तस्मादद्य विश्रम्य मे मम त्वं दयालुरेधि भव । त्वय्यत्र स्थिते सति मम प्राणा अपि स्थास्यन्तीत्यर्थः । नो चेन्न । तदेवाह—भवद्विलोकिनी भवन्तमवलोकयन्ती सती वर्तमानं दिनं निनीषाम्यतिवाहयितुमिच्छामि । त्वदवलोकनवशात्प्राणधारणात्त्वया मम कृपा कृता भविष्यतीति भावः । परपुरुषविलोकनेन कथं पातिव्रत्यं तवेत्यत आह । किल यस्मात्पतत्रिणा राजहंसेन नलिनीदले नखैर्विलिख्य स मम प्रियो नलस्तवैव रूपेण समतुल्यः तादृशः सुन्दर आख्यायि कथितः । तस्मात्तव नलाकारत्वान्नलबुद्ध्यैव त्वदवलोकनान्मम प्राणधारणं त्वद्दर्शनेन पातिव्रत्यक्षतिर्मम नास्तीत्यर्थः । श्लोकद्वयमेकान्वयम् । अर्चितुम्, भौवादिकस्यार्चते रूपम् । 'सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ५ । ३ । २२' इति परेद्यवीति साधुः।पुरःसरैः'पुरोऽग्रतोऽग्रेषु सर्तेः३।२।१८' इति टः ॥ ६५ ॥ ६६ ॥

**दृशोर्द्वयी ते विधिनास्ति वञ्चिता**
**मुखस्य लक्ष्मीं तव यन्न वीक्षते ।**
**असावपि श्वस्तदिमां नलानने**
**विलोक्य साफल्यमुपैतु जन्मनः ॥६७॥**

---

१ दुर्यशोमषीति लिपिभागेति च रूपकम्, भागिवेति कीटवदिति चोपमा । २ अत्रानुप्रासः, स्वरसज्ञयेति श्लेषः, मौनी यथा कामपि देवतामाराधयति तथाविधव्यवहारस्फुरणात्समासोक्तिः ।

१ वरणस्रजेतिरूपकं,असुभिरित्यत्र'वृद्धो यूना तल्लक्षणश्चेदेवविशेषः १।२।६५' इति यूनेति निर्देशात्सहार्थे तृतीयेति सहोक्तिः अन्तराय इति रूपकम्, वासरो गन्तुमना इति जिगमिषूणां व्यवहारो व्यज्यत इति समासोक्तिः, वासरस्य गन्तुमनस्कत्वासम्भवेऽपि तथोक्तिरित्यतिशयोक्तिश्च । दिनं निनीषामीत्यनुप्रासः, तवैवेत्यनन्वयध्वनिः, त्वन्मत्पदवाच्यसम्बन्धिनोर्वास्तविकभिन्नत्वाभावान्नोपमा यद्वा—एतेन त्वं स इव, स त्वामिवेत्युपमेयोपमा ध्वन्यत इति, भवद्विलोकिनीत्यत्र नखैरित्याद्युक्तं हेतुरिति काव्यलिङ्गम्,'यं यं भावं स्मरन्वाऽपि त्यजत्यन्ते कलेवरम् । तं तमेवैति'इत्युक्त्या नलप्रतिमाध्यानं परस्मिञ्जन्मनि तत्सङ्गमाशिं प्रति हेतुरिति यथैवम्भूतोऽन्योऽपि तथेति व्यवहारस्फूर्तेः समासोक्तिश्च ।

अथ स्थितौ तवापि कार्यं स्यादित्याह—

दृशोरिति ॥ विधिना ब्रह्मणा दैवेन वा तव दृशोः द्वयी नेत्रद्वयी वञ्चिताऽस्ति । कथम्—यद्यस्मात् तवैवातिसुन्दरस्य मुखस्य लक्ष्मीं शोभां न वीक्षते आत्मना साक्षादित्यर्थः । आदर्शादौ तु प्रतिबिम्बस्यैव दर्शनात् । तत्तस्मादसावपि नेत्रद्वयी श्वो नलानने इमां त्वन्मुखशोभां विलोक्य जन्मनः साफल्यं कृतार्थत्वमुपैतु । सुन्दरवस्तुदर्शनेन नेत्रयोः साफल्यं भवति तस्मादद्यात्र स्थित्वा श्वो नलमुखलक्ष्मीविलोकनान्नेत्रसाफल्यं भविष्यति। त्वन्मुखं नलमुखसदृशमिति भावः । अथ च अहमेव इमां नलानने दृष्ट्वा जन्मसाफल्यं लप्स्ये इति न, किं त्वसावपि लप्स्यते इत्यपिशब्दार्थः ॥ ६७ ॥

**ममैव पाणीकरणेऽग्निसाक्षिकं**
**प्रसङ्गसम्पादितमङ्ग सङ्गतम् ।**
**न हा सहाधीतिधृतः स्पृहा कथं**
**तवार्यपुत्रीयमजर्यमर्जितुम् ॥ ६८ ॥**

कारणान्तरमप्याह—

ममेति ॥ अङ्ग दूत, मम पाणीकरण एव विवाहसमय एव अग्निः साक्षी यस्मिन्नग्निसाक्षिकमाग्निसमक्षं सङ्गतं मैत्रम्, अर्थान्नलेन सह त्वया प्रसङ्गसम्पादितमनायासमर्जितं स्यादिति शेषः । अन्यार्थमागतेनापि त्वयाऽद्यात्र स्थितेन प्रासङ्गिकी अग्निसाक्षिकत्वाद्दृढा नलेन सह मैत्र्यपि सम्पादिता स्यात् । तदर्थमप्यत्र स्थातव्यमित्यर्थः । तदीयमैत्र्या मम किं प्रयोजनमित्यत आह—हा खेदे । सहाधीतिधृतो लक्षणया कुलशीलरूपादिना सदृशस्य तव आर्यपुत्रीयं विशिष्टकुलोत्पन्नवीरसेनसुतसम्बन्धि अजर्यं मैत्रमर्जितुं सम्पादयितुं स्पृहाऽभिलाषः कथं न ? अभिलाषः किं न कर्तुं युक्तः ? किंतु युक्त एवेति भावः । सदृशयोर्मैत्री भवति, श्रेष्ठेन सह मैत्री प्रयत्नपूर्वकं सम्पादनीया, इयं त्वनायासेन लब्धा परित्यक्तुं न युक्तेति भावः । इति भिन्नवाक्यतयाऽन्वयः। एकवाक्यत्वे तु संगतं मैत्रम् । अजर्यमविनश्वरमिति

अजर्यं विशेषणं संगतशब्दस्येति वा । व्याख्यानान्तरं दुर्बोधत्वादुपेक्ष्यम् । पाणीकरण इति 'नित्यं हस्तेपाणावुपयमने' इति पाणावित्येवंरूपस्य निपातस्य गतिसंज्ञत्वात्समासः । आर्यपुत्रीयम्, 'वृद्धाच्छः ६।२।१४४' । अजर्यम्, नञ्पूर्वस्य जीर्यतेः सङ्गते कर्तरि 'अजर्यं संगतम् ३।१।१०५' इति निपातनात्साधुत्वम् ॥ ६८ ॥

**दिगीश्वरार्थं न कथंचन त्वया**
**कदर्थनीयास्मि कृतोऽयमञ्जलिः ।**
**प्रसद्यतां नाद्य निगाद्यमीदृशं**
**दृशौ दधे बाष्परयास्पदे भृशम् ॥६९॥**

पुनर्वागनवसरायाह—

दिगिति ॥ त्वया अस्मीत्यहं दिगीश्वरार्थं कथंचन केनापि प्रकारेण तद्वर्णनादिना तेषु मदनुरागाध्यारोपणादिना च न कदर्थनीया न पीडनीया । अयमञ्जलिः कृतः प्रसद्यतां ममोपरि त्वया प्रसन्नेन भूयताम् अद्य ईदृशं दिक्पालविषयं किंचित् न निगाद्यं न वाच्यम्। इदमेव तव प्रसन्नत्वम् पूर्वोक्तेनैव वाक्येन अहं दृशौ भृशं बाष्परयस्याश्रुवेगस्यास्पदे आधारभूते । अश्रुवेगपरिपूर्णे इत्यर्थः । दधे धारयामि । विवाहोत्सवे विशेषतोऽमङ्गलस्याश्रुपातस्य निषिद्धत्वान्मया चाधःपतनभीत्या नेत्रयोरेव स्तम्भितत्वात् । अतः परमपि त्वया किमपि न वक्तव्यमित्यर्थः । निगाद्यम् सोपसर्गत्वात् 'गदमदचरयमश्चानुपसर्गे ५।१।१००' इति यदभावाण्ण्यत्॥६९॥

**वृणे दिगीशानिति का कथा तथा**
**त्वयीति नेक्षे नलभामपीह या ।**
**सतीव्रतेऽग्नौ तृणयामि जीवितं**
**स्मरस्तु किं वस्तु तदस्तु भस्म यः॥७०॥**

पातिव्रत्यप्रौढिप्रकाशनेन दूत्यानवसरं व्यनक्ति—

वृण इति ॥ अहं दिगीशान्वृणे इति का कथा वार्ता । त्वया प्रवर्तिता स्वतः प्रवृत्ता वा दिगीशान् वृणे इति मनसापि न धार्यमित्यर्थः । याऽहं नलभां नलकान्तिमपि इहास्मिन्पुरोवर्तिनि त्वयि परपुरुषे वर्तमानामिति कारणात् तथा नले इव न ईक्षे न पश्यामि । यद्वा—त्वयि परपुरुषे नलकान्तिमपि तथा नल इव ईहया कटाक्षविक्षेपादिचेष्टया नेक्षे । तथा अनि-

१ परस्मिन् परधर्मासम्भवात् सत्त्वाश्च, 'प्रमाणमन्तःकरणप्रवृत्तयः' इत्याद्युक्त्या तस्य नलभिन्नत्वे एवं विधानुरागासम्भवेऽपि तथाऽनुरागोक्तेर्नल एव त्वं, किंतु छद्मना परमन्यमात्मानं ब्रूष इति छद्मनः परेद्युर्निवृत्तौ त्वमेव सत्यं नलोऽवस्यास्यस इति स्वभावोदयं प्रति हेतुः सूचितः ।

१ अत्रानुप्रासः । सहाधीतीत्युपमा लक्ष्या । २ अत्रानुप्रासः,

वीच्येयेहया महताऽनुरागेण तथा तादृशीं हंसालिखिततद्दृष्टां नलभामपि नावलोके इति वा । सा दिगीशान्वृणे इति का कथा । एवंविधायाः मम पुरस्तान्नलसदृशस्यान्यस्य पुरुषस्य कथा कर्तुमयुक्ता, किं पुनर्नलासदृशस्य । देवविषयं किमपि त्वया न वाच्यमित्यर्थः। कुमारिकया कामिन्या त्वया नलप्राप्त्यभावेऽन्योपि वरणीय इत्यत आह—सतीव्रते पतिव्रताव्रतरूपेऽमी,अथ च तीव्रतया सह वर्तमाने दारुणे वह्नौ जीवितम् प्राणानित्यर्थः । तृणयामि तृणवत्करोमि । नलप्राप्त्यभावेऽपि पातिव्रत्याद्यावदायुष्यं जीवितं नेष्यामि, न त्वन्यं वृणे इति दिगीशान्वृणे इति का वार्ता । वह्नौ पतितं तृणं क्षणादेव नश्यति यथा, तथा नलालाभे पातिव्रत्यवशाज्जीवितमपीति तृणपदेन सूचितम् । मदनप्राबल्यात्कथमन्यं न वरिष्यसीत्याशङ्क्याह—स स्मरः तु पुनः किं नु वस्तु अस्तु कीदृग्वस्तु भवतु । किमिति—यः कामो हरनेत्राग्निजनितं तत्प्रसिद्धं भस्म । अभावरूपः पदार्थः किमपि कर्तुं न शक्नोति । कामस्त्वभावरूपत्वादन्यस्यापि किमपि कर्तुं न शक्नोति किं पुनः पतिव्रताया ममेति भावः । यः पुनः स्मरो भस्म, तत्किं वस्त्वस्तु इति वान्वयः ॥ ७० ॥

न्यवेशि रत्नत्रितये जिनेन यः
स धर्मचिन्तामणिरुज्झितो यया ।
कपालिकोपानलभस्मनः कृते
तदेव भस्म स्वकुले स्तृतं तया ॥ ७१॥

मदनाधीनत्वे दोषमाह—

न्यवेशीति ॥ जिनेन बुद्धेन यो धर्मचिन्तामणिः धर्मरूपश्चिन्तामणिः सम्यग्दर्शन—सम्यग्ज्ञान—सम्यक्चारित्रलक्षणे रत्नत्रितये न्यवेशि चारित्रशब्दवाच्यो यः प्रक्षिप्तः स सकलाभिलाषपूरकत्वात्पातिव्रत्यलक्षणधर्मरूपश्चिन्तामणिः यया स्त्रिया कपाली हरस्तस्य कोपलक्षणोऽनलोऽग्निः तस्य भस्मनः कामस्य कृते कामनिमित्तम् उज्झितः परित्यक्तः, तया स्वकुले तद्भस्म एव स्तृतं विस्तारितम् । धर्मत्यागो नाम स्वकुले भस्मप्रक्षेपतुल्य इत्यर्थः । धर्मद्रोहिणा वाह्येनापि यो धर्मोऽङ्गीकृतः स मदनपीडितत्वेन यया परित्यज्यते, तया स्वकुलं सकलङ्कमेव क्रियत इति मदनभीत्या पातिव्रत्यं परित्यक्ष्यामीति दुराशां मा कृथा इति भावः । उन्मत्तेनापि भस्मार्थं चिन्तामणिर्न त्यज्यते, स यया त्यक्तः तया स्ववंशे भस्मैव क्षिप्तमिति युक्तम् । 'सद्दृष्टिज्ञानवृत्तानि धर्मं धर्मेश्वरा जगुः' इति बौद्धसिद्धान्ते रत्नत्रयमुक्तम् ॥ ७१ ॥

निपीय पीयूषरसौरसीरसौ
गिरः स्वकन्दर्पहुताशनाहुतीः ।
कृतान्तदूतं न तया यथोदितं
कृतान्तमेव स्वममन्यतादयम् ॥ ७२ ॥

निपीयेति ॥ असौ नलः पीयूषरसस्यौरस्यः पुत्र्योऽमृतरसोत्पन्नाः तद्वदतिमधुराः, अत एव स्वस्य नलस्य कंदर्प एव हुताशनोऽग्निस्तस्य आहुतीरुद्दीपिका गिरो निपीय सादरमाकर्ण्य स्वमात्मानं तया भैम्या यथा येन प्रकारेणोदितमुक्तम् कृतान्तदूतं यमदूतं नामन्यत किंतु अदयं निष्कृपं स्वं कृतान्तं यममेवामन्यत । अनयोक्तं यमदूतत्वं त्वया प्रकटीकृतमिति, तत्स्वल्पमुक्तम् । किंतु निर्दयत्वाद्यम एवाहमित्यमन्यत । मादृशः कोऽपि निर्दयो नास्तीति स्वात्मानं निन्दितवानित्यर्थः । निर्दयं दूत्ये कृतेऽपि इन्द्रादिष्वननुरागात्स्वस्मिंश्च तत्सत्त्वात्कामोद्दीपनत्वं युक्तम् । औरसीः उरसा निर्मिता इत्यर्थे 'उरसोऽण् च ४।४।९४' इत्यणन्तान्ङीप् ॥ ७२ ॥

स भिन्नमर्माऽपि तदार्तिकाकुभिः
स्वदूतधर्मान्न विरन्तुमैहत ।
शनैरशंसन्निभृतं विनिःश्वसन्
विचित्रवाक्चित्रशिखण्डिनन्दनः ७३॥

स इति ॥ तदार्तिः तस्या व्यथा तया व्यथया काकुभिर्दीनवाक्यैः भिन्नमर्माऽप्युत्पन्नकामोऽपि स नलः स्वदूतधर्मान्न विरन्तुमैहत ऐच्छत् । धीरोदात्तत्वात्स्वयमेव वरीतुं नैच्छदित्यर्थः । किं तर्हि चकारेत्याह—

१ अत्रानुप्रासः, नलभामपीहयेति श्लेषः । व्रतेऽग्नाविति रूपकम् तृणयामि जीवितमित्युपमा, भस्म य इत्यपि रूपकम् ।

१ अत्रानुप्रासः, कोपानलेत्यादौ रूपकं, प्रागुक्तमेवार्थं सम्भावयितुमिदं वाक्यमिति दृष्टान्तः, अप्रस्तुतप्रशंसा वा, 'अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया ।' इति तल्लक्षणात् ।२ अत्रानुप्रासो यमकं च शब्दालङ्कारौ । औरसीर्गिरः इति स्वकन्दर्पेत्यादौ च रूपकम्,अदयमिति परिकरः, कृतान्तत्वाभावेऽपि कृतान्तमेवेति वचनादतिशयोक्तिश्च ।

निभृतं तथा न ज्ञातव्यमिति गुप्तं यथा तथा कामपीडितत्वाद्विनिःश्वसन् शनैः पीडितत्वादेव मन्दमशंसदवोचत् । यतः—विचित्रवाचि नानाविधस्फूर्तियुक्तवाग्विषये चित्रशिखण्डिनन्दनो बृहस्पतिः बृहस्पतिरिव । 'वाचस्पतिश्चित्रशिखण्डिजः' इत्यमरः ॥ ७३ ॥

दिवो धवस्त्वां यदि कल्पशाखिनं
कदाऽपि याचेत निजाङ्गणालयम् ।
कथं भवेरस्य न जीवितेश्वरा
न मोघयाच्ञः स हि भीरु भूरुहः ॥ ७४ ॥

पूर्वसर्गे भैम्यां देवानुरागप्रतिपादनेन सामोक्त्वा अस्मिन्सर्गे–'अहो मनस्त्वाम्–' ( ९।३९ ) इत्यादिभिः सप्तभिः श्लोकैर्देवानुग्रहज्ञापनेन दानमुक्त्वा, 'यदि स्वमुद्बन्धुम्' ( ९।४६ ) इत्यादिश्लोकचतुष्केण भेदं प्रदर्श्य भेददण्डौ प्रतिपिपादयिषुरुपायचतुष्टयज्ञो नल आह—

दिव इत्यादि ॥ श्लोकचतुष्टयेन भेदः प्रतिपाद्यते, हे भैमि, दिवो धव इन्द्रः निजाङ्गणमेव आलयः स्थानं यस्य एवंभूतं कल्पशाखिनं यदि चेत्कदापि त्वां भैमी मह्यं दातव्येति याचेत तदा हे भीरु भयशीले । अस्येन्द्रस्य जीवितेश्वरा प्राणेश्वरा कथं न भवेः । अभीष्टदः स्वामिना च याचितः सदा संनिहितः सोऽस्मै त्वां दास्यत्येवेति भावः । हि यस्मात् स भूरुहः कल्पवृक्षः मोघा निष्फला याच्ञा यस्य एवंभूतो न भवति याचितमवश्यं ददात्येव । 'निजाजिरालयम्' इति वा पाठः । जीवितेश्वरेति समासो दिनेश्वरवज्ज्ञेयः । भीरु 'भियः क्रुक्लुकनौ ३।२।१३४' 'ऊङुतः ४।४ ६६' इत्यूङ् ॥ ७४ ॥

शिखी विधाय त्वदवाप्तिकामनां
स्वयंहुतस्वांशहविः स्वमूर्तिषु ।
क्रतुं विधत्ते यदि सार्वकामिकं
कथं स मिथ्याऽस्तु विधिस्तु वैदिकः ॥ ७५ ॥

शिखीति ॥ शिखी वह्निः त्वदवाप्तिकामनां त्वत्प्राप्त्यभिलाषं विधाय स्वमूर्तिषु स्वावयवेष्वाहवनीयादिषु स्वयमात्मनैव हुतम् 'अग्नये स्वाहा' इत्यादिमन्त्रेणान्यैर्यजमानैर्दत्तं स्वस्यांशभूतं हविर्येन एवंविधः सन् सार्वकामिकं सर्वकामप्रयोजनकम् । सर्वकामदातारमित्यर्थः । क्रतुं यदि विधत्ते स वैदिको विधिः तु पुनः मिथ्या असत्यः कथमस्तु । अन्येनानुष्ठितो यज्ञस्तस्मै सर्वान्कामान्ददाति, किं पुनर्वह्निनानुष्ठितः । तेन वह्नेस्त्वत्प्राप्तिर्भविष्यतीति भावः । सार्वकामिकम्, 'प्रयोजनम् ५।१।१०९' इति ठञ् ॥ ७५ ॥

सदा तदाशामधितिष्ठतः करं
वरं प्रदातुं चलिताद्बलादपि ।
मुनेरगस्त्याद्वृणुते स धर्मरा-
ड्यदि त्वदाप्तिं भण तत्र का गतिः ॥ ७६ ॥

सदेति ॥ स धर्मराट् यमः अगस्त्यान्मुनेः सकाशाद्भैमीं मह्यं देहीति त्वदाप्तिं यदि वृणुते तदा का गतिः कः प्रकार इति भण वद। अपितु न कोऽपि। किंभूतात्—सदा तदाशां यमदिशमधितिष्ठतः । तथा अत एव—वरमभीष्टलक्षणं श्रेष्ठं करं राजग्राह्यभागं यमाय प्रदातुं बलादपि स्वयमेव चलितात्प्रवृत्तात् । यमदिशि वसताऽस्मै राजभागोऽवश्यं देय इति स्वयमेव विचार्य स्वयमेव दातुमागतेन त्वां याचमानाय यमाय मुनित्वाद्यत्किंचिद्दातुं समर्थेनागस्त्येन त्वमवश्यं दातव्या । अगस्त्यनिवारकः कोऽपि नास्तीत्यर्थः । त्वदाप्तिमपि बलाद्यदि वृणुते इति वा बलादपि वृणुते इति वा । तदाशाम्, 'अधिशीङ्स्थासां कर्म्म १ । ४ । ४६' इति कर्मत्वम् ॥ ७६ ॥

क्रतोः कृते जाग्रति वेत्ति कः कति
प्रभोरपां वेश्मनि कामधेनवः ।
त्वदर्थमेकामपि याचते स चे-
त्प्रचेतसः पाणिगतैव वर्तसे ॥ ७७ ॥

क्रतोरिति ॥ हे भैमि ! अपां प्रभोर्वरुणस्य वेश्मनि क्रतोः कृते यागहविरर्थं कति कतिसङ्ख्याकाः कामधेनवो जाग्रति सन्तीति को वेत्ति । अपि त्वियत्तया ताः कोऽपि न जानातीत्यर्थः । ततः किमत आह—स

१ अत्रानुप्रासः, नन्दन इति रूपकम्, शनैः शंसनं प्रति निभृतविनिःश्वासस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् । २ अत्रानुप्रासः, कथं न भवेरित्यस्य न मोघेत्यस्य च हेतुहेतुमद्भावात् काव्यलिङ्गम् ।

१ हुतहविरित्यादावनुप्रासः, वाक्यस्यास्य प्रकृतार्थं प्रति हेतुत्वात् काव्यलिङ्गम् । २ सदेत्यादावनुप्रासः, अधितिष्ठत्त्वं मुनेर्श्लेटिति प्रसादनापादने हेतुरिति तथोक्तेः साभिप्रायत्वात् परिकरः पूर्ववत्, काव्यलिङ्गं चापि ।

वरुणः भैमी मह्यं दातव्येति त्वदर्थं तासु मध्ये एकामपि चेद्याचते तर्हि प्रचेतसो वरुणस्य पाणिगतैव हस्तप्राप्तैव वर्तसे । सर्वथा चतुर्षु मध्ये एको वरणीयः, नान्यः प्रकारोऽस्तीति भावः ॥ ७७ ॥

**स सन्निधात्री यदि विघ्नसिद्धये**
**पतिव्रता पत्युरनिच्छया शची ।**
**स एव राजव्रजवैशसात्कुतः**
**परस्परस्पर्धिवरः स्वयंवरः ॥ ७८ ॥**

दण्डमाह—

नेति ॥ शची इन्द्राणी भर्तुरन्यासक्तत्वेऽपि पतिव्रता पत्युरनिच्छया त्वत्कृतेन्द्रानादरेण । इन्द्राज्ञाव्यतिरेकेणेत्यर्थः । विघ्नसिद्धये यदि न सन्निधात्री सन्निहिता न भवेत् । भैमीस्वयंवरे ममानागमाद्विघ्नो भवत्विति । तर्हि स तव स्वयंवर एव राजव्रजस्य त्वदर्थमन्योऽन्यस्पर्धायुक्तस्य राजसमूहस्य वैशसात्कलहान्मरणाद्धेतोः कुतः क्व ? यतः—परस्परमन्योन्यं स्पर्धिनः वरा वरयितारो राजानो यत्र । स्वयंवर एव न भविष्यति, नलप्राप्तिस्तु दूरतो निरस्तेत्यर्थः । विवाहे गौर्याः सान्निध्यम्, स्वयंवरे शच्या इतीतिहासः ॥ ७८ ॥

**निजस्य वृत्तान्तमजानतां मिथो**
**मुखस्य रोषात्परुषाणि जल्पतः ।**
**मृधं किमच्छत्रकदण्डताण्डवं**
**भुजाभुजि क्षोणिभुजां दिदृक्षसे ॥७९॥**

तमेवार्थं सप्रपञ्चमाह—

निजस्येति॥ त्वं क्षोणिभुजां राज्ञां भुजाभ्यां भुजाभ्यां प्रहृत्येदं युद्धं प्रवृत्तं भुजाभुजि भग्नानां छत्राणामच्छत्रका ये दण्डास्तेषां ताण्डवं यस्यां क्रियायां यथा तथा युद्धं किं दिदृक्षसे द्रष्टुमिच्छसि । किंभूतानां राज्ञाम्—रोषात् मिथोऽन्योन्यं परुषाणि जल्पत आक्रोशं कुर्वतो निजस्य स्वीयस्य मुखस्य वृत्तान्तं व्यापारमजानतां कं प्रति किमहं ब्रवीमीत्यविदुषाम् । प्रायेण राजयुद्धदर्शनार्थिन्येव त्वं, न तु स्वयंवरार्थिनीत्यर्थः । शचीसन्निधानाभावाच्छत्रभङ्गाच्च राजव्रजवैशसमेव भवेत्, नतु स्वयंवर इत्यर्थः । भुजाभुजि, 'तत्र तेनेदमिति सरूपे २।२।२७' इति समासे 'इच् कर्मव्यतिहारे ५।४।१२७' इतीचि 'अन्येषामपि दृश्यते ६।३।१३७' इति दीर्घः । इचश्च तिष्ठद्ग्वादिषु पाठादव्ययत्वम् । दिदृक्षसे,'ज्ञाश्रुस्मृदृशां सनः१।३।५७' इति तङ् ॥ ७९ ॥

**अपार्थयन्याजकफूत्कृतिश्रमं**
**ज्वलेद्रुषा चेद्वपुषाऽपि नानलः ।**
**अलं नलः कर्तुमनग्निसाक्षिकं**
**विधिं विवाहे तव सारसाक्षि कम्॥८०॥**

अपेति ॥ अनलोऽग्निः याजकानां पुरोधसां वह्निसन्धुक्षणार्थं फूत्कृतिश्रममपार्थयन्व्यर्थीकुर्वन्सन् रुषा क्रोधेनैव चेज्ज्वलेत्, न तु वपुषा ज्वालारूपेण दीप्तो भवेत् । फूत्कृतेऽपि त्वयाऽनादृतत्वात्क्रोधवशात्सधूम एव भवेत् न तु ज्वालादीप्तः । तर्हि हे सारसाक्षि कमलनयने! तत्र विवाहे नलः अनग्निसाक्षिकं वह्निलक्षणसाक्षिरहितं कं विधिं लाजहोमादिकं कर्तुम् अलं समर्थो भवेत्। एवंसति कं वरिष्यसीति भावः । वैवाहिको विधिरग्निसाक्षिकः, न तु धूमसाक्षिक इत्यर्थः । 'सारसाक्षि किम्' इति पाठे विधिं कर्तुं किमलम् ? अपि तु नेत्यर्थः । अपिरेवार्थः॥८०

**पतिंवरायाः कुलजं वरस्य वा**
**यमः कमप्याचरिताऽतिथिं यदि ।**
**कथं न गन्ता विफलीभविष्णुतां**
**स्वयंवरः साध्वि समृद्धिमानपि ॥८१॥**

पतिमिति ॥ यमः पतिंवरायाः तव कमपि कुलजं वंशजं बन्धुं, वरस्य नलस्य वा कुलजं यदि चेदतिथिमाचरिता कर्ता । मारयेदित्यर्थः । हे साध्वि पतिव्रते, तर्हि समृद्धिमानपि स्वयंवरः विफलीभविष्णुतां निष्फलीभवनशीलत्वं कथं न गन्ता कथं न प्राप्स्यति ? अपि तु प्राप्स्यत्येव । मृतकाशौचनिमित्तात्प्रतिकूलत्वाच्च न भवेदेव । ततः कं वरिष्यसीति भावः । पतिं वृणीते पतिंवरा 'सञ्ज्ञायां भृतॄवृजिधारिसहितपिदमः ३।२।४६' इति खचि 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुम् । भविष्णु, पूर्ववत् ॥ ८१ ॥

---

१ अत्राप्यनुप्रासः, पूर्ववदेव परिकरः काव्यलिङ्गं च । २ अनुप्रासः ।

१ अत्रानुप्रासः, अजानत्त्वमेव तादृशताण्डवं प्रति हेतुरिति काव्यलिङ्गं, युद्धस्य ताण्डवत्वेन निरूपणाद्रूपकातिशयोक्तिश्च ।२"रुषा पुषा" इत्यादावनुप्रासः, सारसाक्षीत्युपमा । ३ अत्रानुप्रासः, कथमपि सुमनसोऽसौ वृणुयादितीष्टं विभीषिकया साधनम्मत्वा तथोक्तेः पर्यायोक्तिः 'पर्यायोक्तिस्तदप्याहुर्यद्व्याजेनेष्टसाधनम् ।'इति पूर्वाचार्योक्तेः।नव्यास्त्वेवंविधस्थले वस्तुध्वनिमेवामनन्ति

अपः प्रति स्वामितयाऽपरः सुरः
स तां निषेधेद्यदि नैषधक्रुधा ।
नलाय लोभात्ततपाणयेऽपि ते
पिता कथं त्वां वद सम्प्रदास्यते ॥८२॥

अप इति ॥ सः अपरोऽन्यः सुरो वरुणः अपः प्रति लक्षीकृत्य स्वामितया प्रभुत्वेन जलपतित्वेन त्वया स्वस्यानादृतत्वात्, नलस्य चादृतत्वात्, त्वन्निमित्तेनैव नलरोषेण कृत्वा नलस्य त्वया न भवितव्यमिति बुद्ध्या भवतीभिस्तत्र न गन्तव्यमिति ता अपः यदि निषेधेत् निवारयेत्, तर्हि ते पिता भीमः त्वदभिलाषेण त्वत्प्रतिग्रहाय लोभात् ततपाणये प्रसारितहस्ताय नलाय त्वां केन प्रकारेण संप्रदास्यते वद कथय । नलस्तु लोभेन जलं विनापि प्रतिग्रहीष्यति, स कथं दास्यतीत्यपिशब्दार्थः । केनापि प्रकारेण तव निस्तारो नेति भावः । 'अपां पतिः' इत्यपि पाठः । गान्धर्वादिविवाहेषु कन्यादाने जलपूर्वत्वे स्मृत्या निषिद्धे सत्यपि भैमीप्रतारणार्थमेवमुक्तमिति ज्ञेयम् ॥ ८२ ॥

इदं महत्तेऽभिहितं हितं मया
विहाय मोहं दमयन्ति चिन्तय ।
सुरेषु विघ्नैकपरेषु को नरः
करस्थमप्यर्थमवाप्तुमीश्वरः ॥ ८३ ॥

इदमिति ॥ हे दमयन्ति ! मया इदं ते तव महत् हितमभिहितमुक्तम् । त्वं मोहं विहाय चिन्तय अनेन हितमुक्तमहितं वेत्यादि विचारय । प्रतीकाराभावं विवृणोति—कः नरः सुरेषु विघ्नैकपरेषु सत्सु करस्थं हस्तस्थितमप्यर्थं वस्तु अवाप्तुम् ईश्वरः समर्थो भवेत् । मनुष्येऽपि विघ्नपरेऽन्येन प्रतिकर्तुं न शक्यते, किं पुनर्देवेष्विति त्वं विचारयेत्युत्तरार्धेन वा योजना । एकशब्दः केवलपर्यायः ॥ ८३ ॥

इमा गिरस्तस्य विचिन्त्य चेतसा
तथेति सम्प्रत्ययमाससाद सा ।
निवारितावग्रहनीरनिर्झरे
नभोनभस्यत्वमलम्भयद्दृशौ ॥ ८४ ॥

१ अत्रानुप्रासः । २ अत्र हितमिति यमकं, विहायेत्यादावनुप्रासः,सुरेष्वित्यर्थान्तरन्यासो विशेषेण सामान्यसमर्थनात्मा ।

इमा इति ॥ सा भैमी तस्य नलस्य इमाः पूर्वोक्ता गिरः चेतसा विचिन्त्य तथेति 'सुरेषु विघ्नैकपरेषु' इत्यादि सत्यमेव इति सम्प्रत्ययं विश्वासमाससाद प्राप । पश्चात् दृशौ नेत्रे नभोनभस्यत्वं बहुलजलत्वाच्छ्रावणभाद्रपदत्वमलम्भयत्प्रापयामास । किंभूते—निवारितो निषिद्धोऽवग्रहो वर्षप्रतिबन्धो यस्यैवंविधोऽप्रतिहतप्रसरो नीरनिर्झरो जलप्रवाहो ययोः । बहु रुरोदेत्यर्थः । श्रावणभाद्रपदयोर्वर्षप्रतिबन्धे जलवृष्टिर्न भवति,तदभावे भवतीत्यनेन बहुरोदनं सूचितम् ॥ ८४ ॥

स्फुटोत्पलाभ्यामलिदम्पतीव त-
द्विलोचनाभ्यां कुचकुड्मलाशया ।
निपत्य बिन्दू हृदि कज्जलाविलौ
मणीव नीलौ तरलौ विरेजतुः ॥८५॥

स्फुटेति ॥ कज्जलाविलौ कज्जलकलुषिताश्रुबिन्दू कुचकुड्मलाशया कुचरूपकलिकाभिलाषेणालिदम्पती इव भ्रमरस्त्रीपुंसाविव स्फुटोत्पलाभ्यां विकसितकमलरूपाभ्यां तस्या भैम्या विलोचनाभ्यां सकाशाद्धृदि निपत्य तरलौ स्फुरन्तौ हारमध्यवर्तित्वयोग्यौ नीलौ मणी इव विरेजतुः । कज्जलकलुषितत्वाद्वर्तुलत्वात् स्फुटोत्पलनेत्रनिर्गमनात्कुचकोरकौ प्रत्यागमनाच्च पूर्वं बिन्द्वोरलिस्त्रीपुंसतुल्यत्वम्, हृदिस्थत्वाच्च हारसांनिध्यात्स्वच्छत्वान्नीलमणितुल्यत्वं युक्तम् । नेत्रयोर्विकसितोत्पलतुल्यत्वं, कुचयोश्च कुड्मलतुल्यत्वं स्वभावसिद्धम् । अलिस्त्रीपुंसौ विलसितं कमलमुपभुज्य विकसिष्यत्कलिकाभिलाषिणौ भवतः । अलितुल्याविन्द्रनीलतुल्यौ चाश्रुबिन्दू हृदि निपतिताविति भावः । 'ईदूदेद्द्विवचनं प्रगृह्यम् १ । १ । ११' इति प्रगृह्यत्वस्य 'मणीवादेर्न' इति निषेधात्संधिः ॥ ८५ ॥

१ अन्यधर्मादातृत्वस्यासम्भवेऽपि दृशोर्नभोनभस्यत्वादानोक्तेरतिशयोक्तिः । २ अत्र दम्पती वेति, मणी वेति चोपमा। यत्तु व्याख्यात्रा 'मणीवादेर्न' इति निषेधात् सन्धिरित्युक्तं, तत्तु पाणिन्यागमाविरुद्धम् । 'मणीवादेर्न' इति हि न सूत्रं, न वा वार्तिकं, न वा महाभाष्यवचनम् । किं तु सारस्वते वार्त्तिकरूपेणोपलभ्यते । तथा च 'ईदूदेद्द्विवचनं प्रगृह्यम् १ ।१।११ ' इति प्रगृह्यत्वस्येति.वचनमुपन्यस्य' 'तथावचनमनुचितमेव ।' अत्र इवादेरिव वशब्दस्याप्युपमाद्योतकत्वेनैव समाधानमुचितम् । 'व वा यथा तथैवैवं साम्ये' इत्यमरः । कुचकुड्मलेति रूपकम्,कुड्मलाशयेति भ्रान्तिमान् ।

धुतापतत्पुष्पशिलीमुखाशुगैः
शुचेस्तदासीत्सरसी रसस्य सा ।
रयाय बद्धादरयाऽश्रुधारया
सनालनीलोत्पललोललोचना ॥ ८६ ॥

धुतेति ॥ सा भैमी आपतन्तः आगच्छन्तः पुष्पशिलीमुखस्य कामस्याशुगा बाणास्तैर्धुता कम्पिता पीडितेति यावत् । एवम्भूता सती तदा शुचेः रसस्य विप्रलम्भशृङ्गाररसस्य सरसी आसीत् । किंभूता—रयाय निरन्तरप्रवृत्तये बद्धादरया कृताभिनिवेशयाऽश्रुधारया कृत्वा सनालं यत् नीलोत्पलं तद्वत् लीला ययोरेवंभूते लोचने यस्याः सा । अथ च शुचेः ग्रीष्मसंबन्धिनी रसस्योदकस्य सरसी जाता । शुचेर्निर्मलस्य रसस्य जलस्य सरसी जातेति वा । यद्वा—पतद्भिः पक्षिभिः हंसादिभिः पुष्पसम्बन्धिभिः पुष्पेषु स्थितैर्वा शिलीमुखैर्भ्रमरैराशुगेन वायुना च धुता । तथा ग्रीष्मर्तावुदकस्याल्पत्वाद्दृश्यमाननालनीलोत्पला भवति । अथ च शुचेर्निर्मलस्य रसस्य जलस्य ग्रीष्मकालिकी सरसी बभूव । अथ च कामबाणपीडितत्वाच्छुचेः शोकस्य रसस्य नदी बभूव । बहु रुरोदेति भावः । नेत्रयोः स्वभावेन च नीलोत्पलतुल्यत्वम् । अच्छिन्नाश्रुधाराया नालद्वयतुल्यत्वम् । ग्रीष्मर्तावल्पजलत्वाद्वायुवशाच्चोद्दण्डनीलोत्पला सरसी भवति । ‘शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः स्मृतः । ग्रीष्मे हुतवहे वापि’ इति विश्वः । (शुचेः शोकस्य इति पक्षे इक् धातुनिर्देशे ) रयाय रयेण निर्गन्तुम् ‘तुमर्थाच्च भाववचनात् २।३।१५’ इति चतुर्थी । रयेण आयो निर्गमनं तत्र बद्धादरयेति वा ॥ ८६ ॥

अथोन्मदन्ती रुदती गतक्षमा
ससम्भ्रमा लुप्तरतिः स्खलन्मतिः ।
व्यधात्प्रियप्राप्तिविघातनिश्चया-
न्मृदूनि दूना परिदेवितानि सा ॥ ८७ ॥

अथेति ॥ सा भैमी मृदूनि श्रोतुः करुणोत्पादकानि परिदेवितानि विलापवचनानि व्यधात् । किम्भूता—प्रियस्य नलस्य प्राप्तेः विघातस्य मम नलप्राप्तिः सर्वथा न भवित्रीति निश्चयात् दूना दुःखिता । तथा—उद्भ्रमन्ती उन्मादवती । तथा—रुदती । तथा—गता क्षमा सहनशक्तिर्यस्याः सा । किमपि सोढुमसमर्था क्षणमपि जीवितुमसहा । तथा—ससम्भ्रमा अधुना मम जीवनं न स्यात्, दुःखरूपं वा भवेदिति भयसहिता । तथा—लुप्तरतिः गतसुखा । तथा—स्खलन्ती किंकर्तव्यतामूढा मतिर्बुद्धिर्यस्याः सा । विप्रलम्भाख्यशृङ्गाररसस्य पोषकं वचनमुवाचेत्यर्थः ॥ ८७ ॥

त्वरस्व पञ्चेषुहुताशनात्मन-
स्तनुष्व मद्भस्समयं यशश्चयम् ।
विधे परेहाफलभक्षणव्रती
पताद्य तृप्यन्नसुभिर्ममाफलैः ॥ ८८ ॥

त्वरस्वेति ॥ हे अतिसंतापकत्वात्पञ्चेषुहुताशन कामाग्ने, त्वं त्वरस्व सर्वगो भव । मां दग्ध्वा मद्भस्ममयम् आत्मनो यशश्चयं कीर्तिसमूहं तनुष्व विस्तारय शीघ्रं मारय । मा स्म पिपीड इति भावः । स्त्रीवधेन तव महद्यशो भविष्यतीति सोपहासम्, हे विधे धातः ! परस्य ईहा इच्छा तद्विषये यत् फलमभीष्टं तस्य भक्षणम् अन्तरायकरणादनिष्पादनं तदेव व्रतमस्यास्तीति पराभिलापहनने प्रयत्नशीलस्त्वम् अद्य नलप्राप्तेरभावादफलैर्व्यर्थैः ममासुभिः तृप्यन्सन् पत अधो गच्छ नरकं याहीत्यर्थः । तव परफलभक्षणव्रतं न तु प्राणभक्षणव्रतम् एतद्व्रतलोपेन पतितो भव । स्त्रीवधजनितात्पातकात्स्वर्गात्पतितो भवेत्याक्रोशः । एतच्चानर्थकत्वात्प्रलापरूपम् ॥ ८८ ॥

भृशं वियोगानलतप्यमान किं
विलीयसे न त्वमयोमयं यदि ।
स्मरेषुभिर्भेद्य न वज्रमप्यसि
ब्रवीषि न स्वान्त कथं न दीर्यसे ॥ ८९ ॥

भृशमिति ॥ हे भृशं सुतरां वियोगानलतप्यमान स्वान्त हृदय, त्वं यदि अयोमयं लोहरूपं, तर्हि किं न विलीयसे द्रवीभवसि । वह्निना भृशं तप्यमानं लोहं विलीयते त्वं चेत्तत् तर्हि किमिति न विलीयसे, न च विलीयसे, तस्माल्लोहादपि त्वमतिकठिनामित्यर्थः । हे स्मरेषुभिर्भेद्य, त्वं वज्रमपि नासि । त्वं तु पुष्पबाणैर्भेद्यत्वात्कथं न दीर्यसे न ब्रवीषि अपितु कथयेत्यर्थः । त्वं

---

१ अत्रानुप्रासो यमकं च । सा सरसीति रूपकम् । सनालेत्युपमा ।

१ अत्रानुप्रासः । २ अत्र पञ्चेषुहुताशनेत्यादौ रूपकम् ।

यदि वज्रमपि नासि तदा त्वं कथं न स्फुटसि तस्माद्वज्रमेव त्वमिति वा । दीर्यसे कर्मकर्तरि तङ् ॥ ८९ ॥

विलम्बसे जीवित किं द्रव द्रुतं
ज्वलत्यदस्ते हृदयं निकेतनम् ।
जहासि नाद्यापि मृषा सुखासिका-
मपूर्वमालस्यमिदं तवेदृशम् ॥ ९० ॥

विलम्बस इति ॥ हे जीवित जीव, किं विलम्बसे कालक्षेपं करोषि ? अपि तु मा कार्षीः । द्रुतं शीघ्रं द्रव गच्छ । अदः ते तव निकेतनं निवासस्थानं हृदयं ज्वलति मदनाग्निना दह्यते । अद्यापि गृहे दह्यमानेऽपि मृषा सुखासिकां सुखासनं निश्चिन्तत्वेनावस्थानं न जहासि न त्यजसि । अपितु गृहज्वलनेऽपि सुखासनरूपमपूर्वं लोकोत्तरं तव इदमालस्यम् । अत्यलसोऽप्यन्यो गृहे दह्यमाने सुखासनं हित्वा पलाय्य गच्छति त्वं तु ज्वलत्यपि गृहे बहिर्न निर्गच्छसि, अन्तरेव तिष्ठसि, एतत्तव लोकोत्तरमाश्चर्यकार्यालस्यमित्यर्थः । त्वयि निर्गते मम पीडा न भवेत्, तस्माच्छीघ्रं निर्गच्छेति भावः । आसिकाम्, 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इति ( वा. ) ण्वुल् ॥ ९० ॥

दृशौ मृषा पातकिनो मनोरथाः
कथं पृथू वामपि विप्रलेभिरे ।
प्रियश्रियः प्रेक्षणघाति पातकं
स्वमश्रुभिः क्षालयतं शतं समाः ॥९१॥

दृशाविति ॥ हे दृशौ, पातकिनो लोकानां सर्वदा प्रतारकत्वात्पातकयुक्ताः मनोरथाः पृथू अपि वां मृषाऽलीकेन कथं विप्रलेभिरे वञ्चितवन्तः । युवयोर्नलोऽस्माभिः प्रदर्श्यत इत्यसत्यरूपपातकोपेता वामपीति वा । मृषा व्यर्था वां मनोरथा वा । अपिविशालयोरपि युवयोस्तैः प्रतारणा कृतेत्यनुचितं कृतमित्यर्थः । विप्रलम्भकारणादपि तेषां पातकित्वम् । पातकी अवश्यं परं प्रतारयति । अल्पोऽपि प्रतारयितुमनर्हः किंपुनर्महानिति, नलदर्शनयोग्यत्वं च पृथू इत्यनेन सूचितम् । अणुत्वान्मनसो मनोरथैः प्रतारणा युक्ता, युवां तु पृथू, अतः प्रतारणाऽनुचितेति वा । इदानीं युवां प्रियश्रियः नलशोभायाः प्रेक्षणघात्यवलोकनविघ्नकारि स्वं स्वीयं सहजं पातकं मनोरथसंसर्गजनितं च शतं समाः । यावज्जीवमित्यर्थः । अश्रुभिः क्षालयतम् । यावत्पातकं तावन्नलदर्शनं नेति पातकं सर्वथा निराकुरुतमित्यर्थः । अन्यदपि मलिनमुदकेन क्षाल्यते, नलदर्शनं विना यावज्जीवं रोदनमेव युवयोः प्राप्तमिति भावः । मृषा निष्कारणं क्रीडादिना विना कथं विप्रलेभिरे क्रीडायां विप्रलम्भो युक्त इति वा योजनीयम् । शतं समाः । अत्यन्तसंयोगे द्वितीया ॥ ९१ ॥

प्रियं न मृत्युं न लभे त्वदीप्सितं
तदेव न स्यान्मम यत्त्वमिच्छसि ।
वियोगमेवेच्छ मनः प्रियेण मे
तव प्रसादान्न भवत्वसौ मम ॥ ९२ ॥

प्रियमिति ॥ हे मनः ! अहं त्वदीप्सितं प्रियं नलं न लभे, तदभावे त्वदीप्सितं मृत्युं च न लभे । किमिति त्वं यन्ममेप्सितमिच्छसि तदेवेप्सितं मम न स्यात् । नैव भवेदिति वा । तस्मात् त्वं प्रियेण नलेन सह मे वियोगमेव इच्छ । एवं सति तव प्रसादान्ममासौ वियोगो न भवतु । त्वं ममाभिलषितं यद्यद्वाञ्छसि तत्तन्न भवति । एवं सति वियोगमेवेच्छ यथा स न भवेदिति त्वां प्रार्थये । असौ मम 'सपूर्वायाः प्रथमाया विभाषा ८।१।२६ तति विकल्पान्मयादेशो न ॥ ९२ ॥

न काकुवाक्यैरतिवाममङ्गजं
द्विषत्सु याचे पवनं तु दक्षिणम् ।
दिशाऽपि मद्भस्म किरत्वयं तया
प्रियो यया वैरविधिर्वधावधिः ॥ ९३ ॥

नेति ॥ द्विषत्सु विरहिवैरिषु चन्द्रादिषु मध्ये काकुवाक्यैः दीनवचनैः कृत्वा अङ्गजं कामं न याचे नार्थये । यतोऽतिवाममतिसुन्दरम्, अतिवक्रं च,

---

१ अयोमयमिति रूपकम्, भेदनकारणसत्त्वेऽपि भेदनाभावाद्विशेषोक्तिः । 'भेद्य न वज्रमपि' इतिनिश्चयगर्भः ससन्देहश्च । २ अपूर्वमिति उपमानासम्भवद्योतनाद्व्यतिरेकः, हृदयं निकेतनमिति रूपकं, हृदयरूपनिकेतनस्य ज्वलनव्रास्तविकत्वासम्भवेऽपि ज्वलतीत्यतिशयोक्तिश्च ।

१ अत्रानुप्रासः । यथा वस्त्रे पङ्कादिदोषेण मालिन्ये संश्लिष्टे क्षालनं तथाविधव्यवहारस्य प्रकृते स्फुरणात्समासोक्तिः । २ अत्र काव्यलिङ्गम् । संयोगाय वियोगाभ्यर्थनाद्विचित्रं च ।'विचित्रं तत्प्रयत्नश्चेद्विपरीतफलेहया ।' इति चन्द्रालोकोक्तिः ।

अतिक्रान्ता वामाः स्त्रियो येन—स्त्रीवचनाकारिणं च। वैरिणामनेकत्वेऽप्यतिप्रगल्भत्वाद्भावितौ याचनयोग्यत्वेन सम्भावितौ कामो दक्षिणवायुश्च तत्र याचने दक्षिणत्वमेवोपयोगि, न तु सौन्दर्यं, न च प्रतिकूलत्वम्, न च स्त्रीकृतयाच्ञायां स्त्रीवचनाकारित्वमिति वैयर्थ्यभिया कामो याचितुमयोग्यः । अथ च रतिर्वामा स्त्री यस्य अथ च रतौ प्रीतौ वामं वक्रं विरहित्वात्प्रीतिविरोधिनमित्यर्थः । तस्मात्कामं नार्थये। तु पुनः किंतु दाक्षिणं पवनं याचे। यतः—परच्छन्दानुवर्तिनमुदारं च सरलमृजुगामिनं च मलयानिलं दीनवचनैर्याचे । दानशीलोत्पन्नत्वात्परवचनकारित्वात्स्वयंदातृत्वादृजुमार्गगामित्वात्पवित्रत्वाच्च मलयानिल एव याचितुं योग्य इत्यर्थः । अथ च अङ्गजः पुत्रोऽपि अतिवक्रो न याचितुमर्हः । द्विपन्नप्येतैर्गुणैर्दाक्षिणो याचितुमर्हः । दक्षिणहस्तस्य दानार्हत्वाद्याचनयोग्यत्वम् वामहस्तस्य दानानर्हत्वान्न याचनयोग्यत्वं यथा, तथा प्रकृतेऽपि। याच्ञामाह—अयं मलयानिलो यया दिशा प्रियो नलो लक्षितः यस्यां दिशि वर्तते, तया दिशा उपलक्षितं तस्यां दिशि मद्भस्मापि किरतु क्षिपतु । दक्षिणानिलः कुण्डिनपुरादुत्तरस्यां वर्तमानां नलराजधानीं प्रति मद्भस्म नयत्वित्यर्थः । मरणानन्तरं मद्भस्मनो नलसंबन्धं कुर्वीति मलयानिलं प्रार्थय इत्यर्थः । एतच्च कामेन कर्तुमशक्यम् । वैरी त्वद्वचनं कथं स करिष्यतीत्याशङ्क्याह—यतो वैरविधिर्वैरकरणं वधावधिर्मरणावधिः । वैरं मरणपर्यवसायि एतच्च कारणं सर्वत्र साधारणं दाक्षिणत्वं त्वसाधारणमिति ज्ञेयम् । मद्भस्मनो नलदिक्संबन्धे सति मम धन्यत्वं स्यादिति भावः । दिशापीति यथास्थितैव वा योजना । 'अङ्गजं रुधिरेऽनङ्गकेशपुत्रमदेऽङ्गजः' इति विश्वः ॥ ९३ ॥

**अमूनि गच्छन्ति युगानि न क्षणः**
**कियत्सहिष्ये न हि मृत्युरस्ति मे ।**
**न मां तु कान्तः स्फुटमन्तरुज्झिता**
**न तं मनस्तच्च न कायवायवः ॥ ९४ ॥**

अमूनीति ॥ अमूनि क्षणरूपाणि युगानि गच्छन्ति, न त्वयं क्षणलक्षणः कालः । अमूनि युगानि दुःखरूपाणि गच्छन्ति, न क्षण उत्सवरूपाणि गच्छन्तीति वा । एष क्षणो बहुयुगरूपतया गच्छतीत्यर्थः । सोऽपि न गतो, वर्तत एवेति लटा सूचितम् । कथं युगरूपत्वमित्याशङ्क्याह—कियत् किंपरिमाणं दुःखमहं सहिष्ये। अपितु तस्यावधिर्नास्तीत्यर्थः । जीवितावधि भविष्यतीत्यत आह—हि यस्मान्मे मृत्युर्नास्ति । ततश्च दुःखावधेरभावात्क्षणस्यापि युगरूपत्वं युक्तम् । मरणाभावः कथमित्यत आह—स्फुटं यस्मान्निश्चितं वा कान्तो नलः तु पुनरन्तः स्थूलशरीरमध्ये अहंशब्दवाच्यं मां नोज्झिता न त्यजति । मनः तं नलं न त्यजति प्राणाख्याः कायवायवः तच्च मनो न त्यजन्ति । एतावत्याः परम्पराया अविच्छेदे कथं मरणं स्यादित्यर्थः । उज्झिता उज्झिष्यतीति वा 'बुद्धीन्द्रियाणि खलु पञ्च तथाऽपराणि कर्मेन्द्रियाणि मनआदिचतुष्टयं च । प्राणादिपञ्चकमथो वियदादिकं च कामश्च कर्म च तमः पुनरष्टमी पूः ॥' इति वचनाल्लिङ्गशरीरस्योपलक्षकं मनः तद्यावल्लिङ्गशरीरम्, तावत्स्थूलशरीरं न त्यजति । जीवे ह्युत्क्रामतीन्द्रियाण्युत्क्रामन्ति, लिङ्गे चोत्क्रामति स्थूलशरीरं पाट्कौशिकं विच्छिद्यते । तथा च श्रुतिः—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमुत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति' इति । ततश्च क्षेत्रज्ञस्योत्क्रमणाभावे सर्वेषामनूत्क्रमणाभावान्मरणाभाव इत्यर्थः । अन्तरन्तःकरणे विद्यमानः कान्तो मां न त्यजति, अन्तःकरणं च तं त्यजतीति वा । यावज्जीवं नलेच्छानपगमान्नलप्राप्त्यभावाच्च क्षणोऽपि मया दुरतिक्रम इति भावः । उज्झिता, तृच् लुड्वा ॥ ९४ ॥

**मदुग्रतापव्ययशक्तशीकरः**
**सुराः स वः केन पपे कृपार्णवः।**
**उदेति कोटिर्न मुदे मदुत्तमा**
**किमाशु सङ्कल्पकणश्रमेण वः ॥९५ ॥**

मदिति ॥ हे सुराः । स प्रसिद्धो वो युष्माकं कृपार्णवः केन पपे पीतः । किंभूतः—मम उग्रतापः नलविरहजन्यः तस्य व्यये नाशे शक्तः शीकरो बिन्दुमात्रं यस्य सः । एकोऽर्णवोऽगस्त्येन पीतः, अयं केन पीतः, एतावन्निष्कृपत्वं किमिति कुरुथेति कथयतेति भावः । वो युष्माकं संकल्पकणश्रमेणेच्छालेशरूपेण आशु मदुत्तमा मत्सकाशाद्रूपादिभिरुत्तमा सुन्दरी अर्थात्स्त्रीणां कोटिमुदे

१ अत्रानुप्रासः । वामादेरनेकार्थकत्वाच्छ्लेषः, प्रियस्य वैरविधि त्वं विरुद्धमिवेति विरोधाभासः ।

१ अत्रानुप्रासः । एकस्य क्षणस्य युगानेकत्वे भ्रान्तिः, रूपकं च हेतूपन्यासेन वचनात् काव्यलिङ्गम्।

युष्माकं प्रतिये किं नोदेति जायते । उदेष्यतीत्यर्थः । भवतः संकल्पमात्रेण मत्सदृश्यो मदुत्तमाश्च परश्शताः स्त्रियः सुलभा इति कारणान्मदभिलापनिर्बन्धो न कार्यो भवद्भिः । इयमेव च महती कृपा । स्त्रीलोभान्मां किं संतापयथेत्यर्थः ॥ ९५ ॥

**ममैव वाऽहर्दिनमश्रुदुर्दिनैः**
**प्रसह्य वर्षासु ऋतौ प्रसञ्जिते।**
**कथं नु शृण्वन्तु सुपुष्य देवता**
**भवत्वरण्येरुदितं न मे गिरः ॥९६॥**

ममेति ॥ वा अथवा अहर्दिनं प्रत्यहं ममैवाश्रुदुर्दिनैः ( वा ) अविच्छिन्नाश्रुधारारूपमेघच्छन्नैर्दिवसैः प्रसह्य बलाद्वर्षासु ऋतौ वर्षर्तौ प्रसञ्जिते प्रवर्तिते सति देवता इन्द्रादयो देवाः स्वानिद्राकालत्वात् सुपुष्य सुप्त्वा मे गिरः कथं नु शृण्वन्तु । अत एव—अरण्येरुदितं न भवतु मद्वाक्यमिति शेषः । अपि तु भवत्विति काकुः । तेषां निद्रितत्वान्मच्छोकादिवाक्यमरण्यरुदिततुल्यत्वाद्व्यर्थमेवेत्यर्थः । वर्षर्तुर्देवरजनीति ज्योतिःशास्त्रम्। तस्यां च निद्रा युक्ता । यदि मया रोदनं न कृतं स्यात्तर्हि दुर्दिनत्वाभावाद्वर्षर्तुर्न स्यात् । तस्मान्ममैवापराध इत्येवकारेण सूचितम् । वर्षासु ऋतौ 'ऋत्यकः' इति प्रकृतिभावः । सुपुष्य, 'सुविनिर्दुर्भ्यः' इति षत्वम्। अरण्येरुदितमिव, 'क्षिपे' इति समासः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् ॥ ९६ ॥

श्लोकचतुष्टयेन नलं प्रति प्रलपति—

**इयं न ते नैषध दृक्पथातिथि-**
**स्त्वदेकतानस्य जनस्य यातना।**
**हृदे हृदे हा न कियद्भवेषितः**
**स वेधसाऽगोपि खगोऽपि वक्ति यः॥९७॥**

इयमिति ॥ हे नैषध नल ! त्वदेकनिष्ठस्य । त्वदेकजीवनोपायस्येत्यर्थः । मल्लक्षणस्य जनस्य इयं यातना तीव्रवेदना ते दृक्पथातिथिर्न दृग्गोचरो न इति प्रश्नकाकुः। हा कष्टं य इमां मदीयां वेदनां त्वां प्रति वक्ति स खगोऽपि हंसोऽपि वेधसा ब्रह्मणाऽगोपि आच्छादितः । गोपने हेतुमाह—यतः हृदे हृदे कियत्कृतिवारं न गवेषितम् अपि तु बहुवारमन्विष्टोऽपि न दृश्यते । कुत्रचित्त्वया न गन्तव्यमिति ब्रह्मणा निषिद्धः । कदाचिन्मदीयामवस्थां तुभ्यं चेत्कथयेत्, तदा तव दयोदयो भवेत् स मास्त्विति वेधसो वैधर्म्यमिति भावः । 'एकतानोऽनन्यवृत्तिः' इत्यमरः ॥ ९७ ॥

**ममापि किं नो दयसे दयाघन**
**त्वदङ्घ्रिमग्नं यदि वेत्थ मे मनः**
**निमज्जयन्संतमसे पराशयं**
**विधिस्तु वाच्यः क्व तवागसः कथा॥९८॥**

ममेति ॥ हे दयाघन नल! त्वं मम मनो यदि त्वदङ्घ्रिमग्नं त्वच्चरणशरणं वेत्थ जानासि तर्हि ममापि किं नो दयसे ममाप्युपरि कृपां किं न करोषि । दयाघनत्वात्कुर्वित्यर्थः । कृपाऽकरणे तवापराधो नास्तीत्याह—तु पुनः परस्याशयमन्तःकरणं संतमसेऽज्ञाने निमज्जयन्त्रुडयन् विधिः दैवं वाच्य उपालब्धव्यः । तव आगसोऽपराधस्य कथा क्व । तवापराधो नास्ति ममैवादृष्टं तथाविधमित्यर्थः । तवान्तःकरणं हंसनिषेधद्वारा मम दुःखबोधनमकुर्वन्ब्रह्मैवोपालब्धव्यो, न तु त्वामित्यर्थः, इति वा । मम 'अधीगर्थदयेशां कर्म्मणि २।३।५२' इति षष्ठी कर्मणि । संतमसम्, 'अवसमन्धेभ्यस्तमसः ५।४।७९' इत्यच् ॥ ९८ ॥

**कथावशेषं तव सा कृते गते-**
**त्युपैष्यति श्रोत्रपथं कथं न ते।**
**दयाणुना मां समनुग्रहीष्यसे**
**तदाऽपि तावद्यदि नाथ नाधुना॥९९॥**

कथेति ॥ सा भैमी तव कृते कथाऽवशेषं गता त्वय्यनुरक्ता सती त्वत्प्राप्त्यभावाज्जन्मान्तरेऽपि त्वत्प्राप्त्यर्थं मृतेति ते श्रोत्रपथं कथं नोपैष्यति जनमुखात्त्वमपि श्रोष्यस्येव । तदा श्रुतेऽपि किमित्यत आह—हे नाथ प्राणेश ! यद्यप्यधुना मां नानुगृह्णासि तथाऽपि तदाऽपि तस्मिन्नपि समये तावत् दयाणुना कृपालेशेन मां समनुग्रहीष्यसे । तावच्छब्दः सम्भावनायाम् । सा मदर्थं मृतेति यद्वदिष्यसि तेनैव कृपालेशेनाहं धन्या भविष्यामीति

१ अत्र किमित्युत्प्रेक्षा । २ अत्रानुप्रासः । अश्रुदुर्दिनद्वारत्वेन वर्षर्त्तोरसम्भवेऽपि तथोक्तिरतिशयोक्तिः । भवत्वरण्य इति निदर्शना, अरण्ये रुदितवद्वैफल्यद्योतन उपमा परिस्फूर्त्तेः ।

१ अत्रानुप्रासः काव्यलिङ्गं च ।२ अत्र विधिस्तु वाच्य इति व्याजनिन्दा, "विधिरेव विशेषगर्हणीयः करट त्वं रट कस्तवापराधः । सहकारतरौ चकार यस्ते सहवासः सरलेन कोकिलेन" इत्यादिवत् "निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते" इति तल्लक्षणात्।

भावः । अन्योऽपि स्वामी स्वीयं पूर्वमननुगृह्णन्नपि तदर्थे कष्टां दशां प्राप्तमनुगृह्णाति । अनुग्रहीष्यसे, स्वरितेत्वात्तङ्, 'ग्रहोऽलिटि दीर्घः ७।२।३७' इति दीर्घः॥९९॥

ममादरीदं विदरीतुमान्तरं
तदर्थिकल्पद्रुम किंचिदर्थये ।
भिदां हृदि द्वारमवाप्य मा स मे
हतासुभिः प्राणसमः समं गमः॥१००॥

ममेति ॥ मम इदमान्तरं हृदयं विदरीतुं स्फुटितुं यस्मादादरि सादरम्, तत्तस्मात् हे अर्थिनां कल्पद्रुम ! अहं किंचिदर्थये याचे। कल्पवृक्षत्वात्त्वया तद्दातव्यमित्यर्थः । किं तदित्याह—हृदि भिदां विदारणलक्षणं द्वारं मार्गमवाप्य मे हतैः विनष्टैः अथ च निष्फलैरसुभिः प्राणैः समं सार्धं प्राणसमः प्राणप्रियः स त्वं मा गमः । प्राणा मद्धृदयाद्गच्छन्तु, त्वं मा गमः । जन्मान्तरेऽपि मम त्वय्येवासक्त्या भवितव्यमिति त्वां प्रार्थय इति भावः विदरीतुम् 'वृतो वा ७।२।६८' इति दीर्घः ॥ १०० ॥

इति प्रियाकाकुभिरुन्मिषन्भृशं-
दिगीशदूत्येन हृदि स्थिरीकृतः।
नृपं स योगेऽपि वियोगमन्मथ
क्षणं तमुद्भ्रान्तमजीजनत्पुनः॥ १०१ ॥

इतीति ॥ दिगीशानां दूत्येन हृदि अस्थिरोऽप्येतावत्कालपर्यन्तं स्थिरीकृतः स दर्शनलक्षणे योगे सत्यपि भैमीविषयो नलस्य वियोगमन्मथः इति पूर्वोक्तैः प्रियायाः काकुभिर्दीनवचनैः कृत्वा भृशमुन्मिषन्नातितरामुद्बुद्धः सन् क्षणं तं नृपं पुनरुद्भ्रान्तमतिशयेन भ्रान्तमजीजनच्चकार । पूर्वमनेकवारं भ्रान्तः कृत एवेति पुनःशब्दार्थः ।उन्मादवशात्सोऽपि प्रलपति स्मेति भावः। संनिहितामपि भैमीं नाजानादित्यपि ॥ १०१ ॥

महेन्द्रदूत्यादि समस्तमात्मन-
स्ततः स विस्मृत्य मनोरथस्थितैः।
क्रियाः प्रियाया ललितैः करम्बिता
वितर्कयन्नित्थमलीकमालपत् ॥ १०२॥

पूर्वमेवार्थं सोपस्कारमाह—

महेन्द्रेति ॥ स नलः ततोऽनन्तरम् आत्मनः समस्तं महेन्द्रदूत्यादि स्वकर्तृकमिन्द्रदूत्यम् आदिशब्दाद्वह्न्यादिदूत्यं विस्मृत्य पूर्वं विप्रलम्भावस्थायां मनोरथस्थितैर्मनोरथकल्पितैः ललितैर्विलासैः करम्बिता मिश्रिताः प्रियाया भैम्याः क्रिया विलापचेष्टा वितर्कयन्नानाप्रकारेण तर्कयन्संभावयन् इत्थं वक्ष्यमाणप्रकारेणालीकमबुद्धिपूर्वं आलपदवोचत् । उन्मादवशात्प्रणयकलहादि संभावयन्भैमीं प्रति प्रलपति स्मेति भावः ॥ १०२ ॥

अयि प्रिये कस्य कृते विलप्यते
विलिप्यते हा मुखमश्रुबिन्दुभिः ।
पुरस्त्वयाऽऽलोकि नमन्नयं न किं
तिरश्चलल्लोचनलीलया नलः ॥१०३॥

अयीति ॥ अयि ! प्रिये कस्य कृते किमर्थं त्वया विलप्यते । अश्रुबिन्दुभिः कर्तृभिः करणैर्वा मुखं विलिप्यते व्याप्यते । हा कष्टम् । अमङ्गलमेतन्मा कार्षीरित्यर्थः । तिरश्चलन्ती सदा कटाक्षावलोकनाभ्यासेन वक्रगामिनी लोचनलीला यस्या एवंभूतया त्वया पुरोऽग्रे नमंस्त्वच्चरणशरणीभवन् अयं नलो नालोकि किमिति प्रश्नः। लोचनयोर्लीलया विलासेन कटाक्षेणेति वा । रोदनवशात्प्रायेण त्वयाहं न ज्ञातः किमित्यर्थः । प्रणयकलहं परित्यज्य चरणपतितं मामवलोकनेनानुगृहाण । रोदनं मा कार्षीरिति भावः । अत्र कुपितत्वादेव रोदनं नेत्रयोर्वक्रगामित्वं च ॥ १०३ ॥

चकास्ति बिन्दुच्युतकातिचातुरी
घनास्रुबिन्दुस्रुतिकैतवात्तव ।
मसारताराक्षि ससारमात्मना
तनोषि संसारमसंशयं यतः ॥ १०४ ॥

चकास्तीति ॥ घना येऽस्रुबिन्दवः तेषां स्रुतिश्च्यवनं तस्य कैतवाद्व्याजात्तव बिन्दुच्युतकाख्यस्य शब्दालंकारविशेषस्य विषयातिचातुरी महती चातुरी चकास्ति । बिन्दुच्युतकाख्यमलंकारं सम्यग्जानासि । अथ च

१ अत्रानुप्रासः । २ अत्रानुप्रासो यमकं च । कल्पद्रुमेति भिदां द्वारमिति च रूपकम् । ३ योगेऽपि वियोगेति विरोधाभासः ।

१ अत्रानुप्रासः । मनोरथस्थितकर्तृकविस्मरणकार्यस्य विरुद्धत्वप्रत्यायकत्वाद्विरोधाभासः । २ अत्रानुप्रासः । कविना विलापं पुरस्कृत्य साक्षात्स्वरूपाविष्करणाद्विवृतोक्तिभेदः,'विवृतोक्तिः श्लिष्टगुप्तं कविनाऽऽविष्कृतं यदि ।' इति पूर्वाचार्योक्तेः ।

बिन्दूनां च्युतमेव च्युतकम्, तद्विषयातिचातुरी घनाश्रुबिन्दुस्रुतिकैतवाच्छोभते । त्वादृशी कापि सम्यगलीकं रोदितुं न जानातीत्यर्थः । तदेवाह—हे मसारवदिन्द्रनीलवन्नीले स्निग्धे तारे कनीनिके ययोरेवंभूते अक्षिणी नेत्रे यस्यास्तत्संबुद्धिः, यतः कारणात्त्वम् असंशयं निश्चितं संसारं सकलं जगदात्मना ससारं तनोषि । बिन्दोरनुस्वारस्य च्यवनचातुर्याढ्चिना सानुस्वारस्य संसारस्य ससारत्वमनुस्वाररहितत्वं कथं कर्तुं शक्यामित्यर्थः । अथ च—आत्मना ससारं श्रेष्ठवस्तुसहितं करोषि । अस्मिन्संसारे त्वादृशी कापि कुशला नास्तीत्यलीकरोदनं कर्तुं त्वमेव जानासि नान्येत्यर्थः । अलीकरोदनेप्यतितरां शोभस इत्यर्थः । अनुस्वारच्यवनात्सारार्थान्तरप्रतीतिः तद्बिन्दुच्युतकम् । 'कान्तो नयनानन्दी बाले दुःखेन भवति तदा' इति तदुदाहरणम् । च्युतम्, 'नपुंसके भावे क्तः' स्वार्थे कन् ॥ १०४ ॥

अपास्तपाथोरुहि शायितं करे
करोषि लीलाकमलं किमाननम् ।
तनोषि हारं कियदश्रुणः स्रवै-
रदोषनिर्वासितभूषणे हृदि ॥ १०५ ॥

अपास्तेति ॥ अपास्तं विरहवशात्त्यक्तं पाथोरुट् लीलाकमलं येन एवंविधे करे शायितं चिन्तावशात्स्थापितमाननं लीलाकमलं किमिति करोषि । मुखमेव लीलाकमलस्थाने जातमित्यर्थः । तन्मा कुरु, लीलाकमलं गृहाण,चिन्तां मा कार्षीरिति भावः । तथा—अदोषाणि त्रासादिदोषरहितानि, अथ च अपराधेन विनैव विरहवशान्निर्वासितानि भूषणानि मुक्ताहारादीनि येन तादृशे हृदि अश्रुणः स्रवैरश्रुबिन्दुभिः कियत्किंपरिमाणं कियन्तं कालं च हारं मुक्ताहारं तनोषि । अपि नु मा स्म तानीः । अश्रुबिन्दवो हारस्थाने भवन्तीत्यर्थः । तन्मा कुरु, भूषणान्यङ्गीकुरु । रोदनं माकार्षीरिति भावः । अन्यत्र सापराधो निर्वास्यत इति दृष्टम् । कियत्, क्रियाविशेषणम् ॥ १०५ ॥

दृशोरमङ्गल्यमिदं मिलज्जलं
करेण तावत्परिमार्जयामि ते ।
अथापराधं भवदङ्घ्रिपङ्कज-
द्वयीरजोभिः सममात्ममौलिना ॥ १०६ ॥

दृशोरिति ॥ हे भैमि, अहं तावत्प्रथमतः करेण कृत्वा ते तव दृशोर्नेत्रयोः मिलत्सम्बद्धं निरन्तरं गलत् रुदनमङ्गल्यमनुभल्पं जलं बाष्पं परिमार्जयामि । प्रोञ्छामीत्यर्थः।अथ पश्चाद् भवत्या अङ्घ्रिपङ्कजद्वय्याः रजोभिः समं सह आत्ममौलिना स्वमस्तकेन स्वीयमपराधमपि प्रोञ्छामि । मत्कृतादपराधाद्यदि रोदिषि, तर्हि मङ्गल्यं रोदनमादावपनेष्यामि पश्चान्मस्तके तव चरणरजो यावल्लगति तावत्तव चरणौ शरणं प्रविश्यापराधमपनेष्यामि । प्रसन्ना भवेति भावः । मङ्गल्यम्, अर्हार्थे यत् । परिमार्जयामि, वर्तमानसामीप्ये लट् ॥ १०६ ॥

मम त्वदच्छाङ्घ्रिनखामृतद्युतेः
किरीटमाणिक्यमयूखमञ्जरी ।
उपासनामस्य करोतु रोहिणी
त्यज त्यजाकारणरोषणे रुषम् ॥ १०७ ॥

ममेति ॥ हे भैमि, मम रोहिणी रक्तवर्णा किरीटमाणिक्यमयूखानां मञ्जरीतुल्या दीर्घाकारा दीप्तिरस्य पुरोवर्तिनः तवाङ्घ्रिनखलक्षणस्यामृतद्युतेश्चन्द्रस्योपासनां सेवां करोतु । हे निष्कारणं रुष्यतीत्यकारणरोषणे भैमि, रोषं त्यज त्यज । सदाहं त्वच्चरणसेवकोऽस्मि । कोपं मुञ्च मुञ्चेति भावः । सौम्यस्य सेवा कर्तुं शक्या, न तु रोषणस्य । चन्द्रप्रिया रोहिणी तारका चन्द्रं सेवते, समीपवर्तिनी च भवतीत्युचितमेव । रोहिणी, 'वर्णादनुदात्तात्–' इति ङीप्नकारौ । त्यज त्यजेति संभ्रमे, 'नित्यवीप्सयोः' इति द्विरुक्तिः रोषणे' क्रुधमण्डार्थेभ्यश्च' इति युच् ॥ १०७ ॥

तनोषि मानं मयि चेन्मनागपि
त्वयि श्रये तद्बहुमानमानतः ।
विनम्य वक्त्रं यदि वर्तसे किय-
न्नमामि ते चण्डि तदा पदावधि ॥ १०८ ॥

१ अत्रानुप्रासः । अत्राहुर्जीवातुकाराः,–'अत्र कैतवशब्देनाश्रुबिन्दुच्युतेस्ताद्रूप्यापह्नवनेन वर्णात्मकबिन्दुच्युतकत्वारोपादपह्नवभेदः, तदुपजीवनेन ससारमिति श्लिष्टपदोपात्तप्रागुक्तार्थद्वयाभेदाध्यवसायेन बिन्दुच्युतकाल्यकार्यकारणोत्प्रेक्षणाच्छ्लेषमूला सापह्नवोत्प्रेक्षा, सा च 'असंशयम्' इति व्यञ्जकपदप्रयोगाद्वाच्या । इति । २ अत्र लीलाकमलमाननमिति रूपकगर्भोत्प्रेक्षा । एवं स्रवैर्हारमित्यत्रापि ।

१ अत्रानुप्रासः । रजोभिः सममिति सहोक्तिः । जलापराधयोः प्रकृतयोस्तुल्यकालं मार्जनात्तुल्ययोगिता च । २ अत्रानुप्रासो, यमकं च । नखामृतद्युतेरिति रूपकम् ।

तनोषीति ॥ त्वं मयि मनागपि अल्पमपि मानं चेत्तनोषि तर्हि आनतो नम्रः सन् अहं त्वयि बहुमानं महतीं पूजां मानापनयनार्थं श्रये कुर्वे । 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इति । हे चण्डि कोपने, रोषवशाद्वक्रं कियत्स्वल्पमेव विनम्य नम्रीकृत्य यदि चेद्वर्तसे, तदा तर्हि ते तव पदावधि चरणपर्यन्तं नमामि दण्डवन्नमस्कारेण रोषशेषमपनेष्यामि । बहुना मानेनाल्पमानं, बहुना नमनेन चाल्पं नमनमपनेष्यामीति भावः । विनम्य विनमय्येत्यन्तर्भावितण्यर्थे द्रष्टव्यम् ॥ १०८ ॥

प्रभुत्वभूम्नाऽनुगृहाण वा न वा
प्रणाममात्राधिगमेऽपि कः श्रमः ।
क याचतां कल्पलताऽसि मां प्रति
क दृष्टिदाने तव बद्धमुष्टिता ॥ १०९ ॥

प्रभुत्वेति ॥ मज्जीवितस्य त्वदधीनत्वान्मां प्रति तव प्रभुत्वसद्भावात्प्रभुत्वस्य प्रभुत्वशक्तेः भूम्ना बहुत्वेनानुगृहाण ममानुग्रहं कुरु, अथवा नानुगृहाण । परं प्रणाममात्राधिगमेऽपि मदीयकेवलप्रणामाङ्गीकारेऽपि तव कः श्रमः प्रयासः । प्रभुः स्वेच्छया सेवकं कदाचिदनुगृह्णाति, कदाचिन्नेति यद्यप्यस्ति तथाऽपि प्रणाममङ्गीकरोति, त्वं तु नेति मया किमपराद्धमिति कथयेति भावः । त्वं याचतां भिक्षुकाणामभिलाषपूरणसमर्थत्वात्कल्पलताऽसीति क, मां प्रति दृष्टिदानेऽप्यवलोकनमात्रेऽपि तव बद्धमुष्टिता कृपणत्वमिति क, अपितूभयमेतन्मिथो विरुद्धम् । कटाक्षावलोकनमात्रेण मामनुगृहाणेति भावः ॥ १०९ ॥

स्मरेषुमाथं सहसे मृदुः कथं
हृदि द्रढीयः कुचसंवृते तव ।
निपत्य वैसारिणकेतनस्य वा
व्रजन्ति बाणा विमुखोत्पतिष्णुताम् ११०

स्मरेष्विति ॥ हे भैमि, मृदुरतिमृद्वी त्वं स्मरेषुमाथं कामबाणव्यथां कथं सहसे । कामपीडा सह्येत्यतिमानं त्यजेति भावः । वा पूर्वपक्षापरितोपे । अथवा वैसारिणकेतनस्य मकरध्वजस्य कामस्य बाणास्तव द्रढीयांसौ कुचौ ताभ्यां संवृते हृदि निपत्य लगित्वा तत्रानिमज्ज्यैव विमुखाश्च ते उत्पतिष्णवश्च तेषां भावस्तत्तां पराङ्मुखोत्पतनशीलत्वं व्रजन्ति । पाषाणादौ बाणो निपत्य तत्रानिमज्ज्यैव पराङ्मुखस्तस्मादुच्चलति, तद्वत्तव कामबाणपीडा न भवतीति युक्तमिति भावः । कृतसंनाहस्य बाणपीडा न भवति 'मीनो वैसारिणोऽण्डजः' इत्यमरः । 'विसारिणो मत्स्ये' इत्यण् ॥ ११० ॥

स्मितस्य सम्भावय सृक्कणा कणा-
न्विधेहि लीलाचलमञ्चलं भ्रुवः ।
अपाङ्गरथ्यापथिकीं च हेलया
प्रसद्य सन्धेहि दृशं ममोपरि ॥ १११ ॥

स्मितस्येति ॥ हे भैमि, त्वं सृक्कणा ओष्ठप्रान्तेन स्मितस्येपद्धासस्य कणान्लेशान्सम्भावय धन्यान्कुरु । तथा—भ्रुवोऽञ्चलं प्रान्तं लीलया विलासेन चलं विधेहि । तथा—अपाङ्गरथ्याया नेत्रप्रान्तमार्गस्य पथिकीं नित्यचारिणीं दृशं च प्रसद्य प्रसन्नीभूय हेलया विलासेन ममोपरि संधेहि स्मितभ्रूचलनरूपैः प्रसद्य मां सविकासं कृपाकटाक्षैर्विलोकयेति भावः । प्रसह्येतिपाठान्तरे तु बलात्कृत्येत्यर्थः । पथिकीम्, 'पथः ष्कन्' षित्वान्ङीष् । 'उपर्युपरिष्टात्' इत्यतसर्थत्वादुपरियोगे 'षष्ठ्यतसर्थ' इति ममेति षष्ठी ॥ १११ ॥

समापय प्रावृषमश्रुविप्रुषां
स्मितेन विश्राणय कौमुदीमुदः ।
दृशावितः खेलतु खञ्जनद्वयी
विकासि पङ्केरुहमस्तु ते मुखम् ॥ ११२ ॥

समापयेति ॥ त्वम् अविच्छिन्नस्रावित्वादश्रुविप्रुषामश्रुबिन्दूनां प्रावृषं समापय । तथा अत्युज्ज्वलत्वादत्याह्लादकत्वाच्च स्मितेन कौमुदीमुदः चन्द्रिकासंबन्धिनो हर्षान्विश्राणय मह्यं वितर । तथा—अतिचञ्चलत्वात्खञ्जनाकारत्वाच्च दृशावेव खञ्जनद्वयी इतो मल्लक्षणेऽस्मिञ्जने खेलतु ममोपरि क्रीडतु । तथा—लक्ष्मीस्थानत्वाद्वर्तुलत्वाच्च ते मुखं विकासि विकस्वरं पङ्केरुहं कमल-

---

१ यदि मानं करोपि तदेत्यादेर्विरोधप्रत्यायकत्वाद्विरोधाभासः । २ कल्पलताऽसीति रूपकम् । क याचतामिति विषमश्च ।

१ अत्र मृदुत्वेऽपि स्मरेषुमाथसहनोक्तेर्विरोधाभासः । कथमित्याद्युक्तस्य हृदीत्यादिनाऽऽक्षेपणादाक्षेपश्च । २ अत्र अनुप्रासो यमकं च । कणानां स्मितसम्बन्धित्वसम्भावनाय स्मिते जलाशयत्वारोपो व्यङ्ग्यः । अपाङ्गरथ्येति रूपकं च ।

मस्तु भवतु । रोदनं त्यक्त्वा प्रसन्ना भूत्वा स्मितपूर्वकटाक्षविलोकनपूर्वं किंचिद् ब्रूहीति भावः । प्रावृषि गतायां शरदि कौमुदीमुदः खञ्जनक्रीडा कमलविकासश्च भवति ॥ ११२ ॥

सुधारसोद्वेलनकेलिमक्षर-
स्रजा सृजान्तर्मम कर्णकूपयोः ।
दृशौ मदीये मदिराक्षि कारय
स्मितश्रिया पायसपारणाविधिम् ॥ ११३ ॥

सुधेति ॥ हे भैमि, मम कर्णकूपयोरन्तर्मध्येऽक्षरस्रजा वर्णमालया वाक्यरचनया कृत्वा सुधारसस्यामृतरसस्योद्वेलना निर्मर्यादा या केलिः क्रीडा तां सृज रचय अतिमधुरवागमृतपूर्णौ मम कर्णौ विधेहि । किमपि ब्रूहीति भावः । कूपशब्दोऽत्र जलाशयाभिप्रायः । ततश्च वाप्यादौ स्वादूदकेन यथा तीरमतिक्रम्यते तथा क्रीडा क्रियत इति चोक्तिः । मदयत इति मदिरे उन्मादजनके आक्षिणी यस्यास्तत्संबुद्धिर्हे मदिराक्षि, मदीये दृशौ स्वीयया स्मितश्रिया कृत्वा पायसेन दुग्धसंस्कृतपायसेन कृत्वा या पारणा उपवासानन्तरभोजनं तस्य विधिं कारय । सितस्य शुभ्रत्वात्पायसत्वम् । उपोषितस्य पायसपारणया यथा तृप्तिः, तथा त्वदीयस्मितशोभावलोकनेन मन्नेत्रयोरिति स्मितपूर्वं किमपि ब्रूहि । मामनुगृहाणेति भावः । उद्गतो वेलामुद्वेलः, 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया—'इति समासः । तस्य करणमुद्वेलनम् । मदिर इत्यत्र 'इषिमदि—' इत्यादिनौणादिकः किरच्प्रत्ययः । रामायणे—'नार्यो मदिरलोचनाः' इति । दृशौ, 'हृक्रोरन्यतरस्याम् १ । ४ । ५३' इत्यणौ कर्तुर्णौ कर्मत्वम् । 'परमान्नं तु पायसम्' इत्यमरः । संस्कृतार्थेऽण् ॥ ११३ ॥

ममासनार्धे भव मण्डनं न न
प्रिये मदुत्सङ्गविभूषणं भव ।
अहं भ्रमादालपमङ्ग मृष्यतां
विना ममोरः कतमत्तवासनम् ॥ ११४ ॥

ममेति ॥ हे प्रिये, मम आसनार्धे सिंहासनार्धे मण्डनमलंकरणं भव । आसनस्येत्यर्थात् । एवं न न । अविचार्य मयैतदुक्तम् । किंतु त्वं मदुत्सङ्गविभूषणं भव । ममाङ्कं मण्डयेत्यर्थः । अङ्कापेक्षयार्धासनस्य निकृष्टत्वात्, तव चातिप्रियत्वान्ममाङ्क एवोपवेशनयोग्य इति भावः । अङ्ग भो! अहम् इत्येतद् भ्रमादुन्मादवशादालपम् । त्वया मृष्यतां क्षम्यताम् । यतः मम उरो विना कतमत् अङ्गं तव आसनं भवितुं योग्यम्, अपि तु न किमपि । अङ्कापेक्षयापि वक्षस उत्कृष्टत्वात्तत्रैवोपविश्यतामिति भावः । भ्रमात्कृतोऽपराधः क्षन्तुमर्हः । अङ्गेति कोमलामन्त्रणे । 'भ्रमाद् भ्रमात्' इति च पाठः । न न, भ्रमाद् भ्रमाद्, इति च संभ्रमे द्विरुक्तिः ॥ ११४ ॥

अधीतपञ्चाशुगबाणवञ्चने
स्थिता मदन्तर्बहिरेपि चेदुरः ।
स्मराशुगेभ्यो हृदयं बिभेतु न
प्रविश्य तत्त्वन्मयसम्पुटे मम ॥ ११५ ॥

अधीतेति ॥ हे कामपीडाया अदर्शनादधीताभ्यस्ता पञ्चाशुगस्य कामस्य बाणवञ्चना यया तत्संबुद्धिः, मदन्तः मन्मनसि स्थिता त्वं बहिर्देशेऽपि उरश्चेदेपि प्राप्नोषि तत् तर्हि कृतमदनबाणवञ्चनायास्तवोभयत्र वर्तमानत्वात्त्वन्मयसंपुटे त्वद्रूपे संपुटे मम हृदयं प्रविश्य स्मराशुगेभ्यो न बिभेतु । चिरकालं मनसि स्थितापि हृदयं बहिश्चेदालिङ्गसि तर्हि त्वदालिङ्गनवशान्मम कामज्वरोऽपि शान्तिमुपैष्यतीति भावः ॥ ११५ ॥

परिष्वजस्वानवकाशबाणता
स्मरस्य लग्ने हृदयद्वयेऽस्तु नौ ।
दृढा मम त्वत्कुचयोः कठोरयो-
रुरस्तटीयं परिचारिकोचिता ॥ ११६ ॥

परीति ॥ हे भैमि ! त्वं मां परिष्वजस्वालिङ्ग । किमिति—नौ आवयोः गाढालिङ्गनवशान्निरन्तरं मिथो लग्ने मिलिते हृदयद्वये वेध्ये स्मरस्य अनवकाशबाणता निरवकाशबाणत्वमस्तु । निबिडसंलग्ने वस्तुद्वये ह्यवकाशलेशोऽपि न लभ्यत इत्यर्थः । मम दृढातिकठोरा

---

१ अनुप्रासः । अश्रुविमुर्पा प्रावृष्ट्वासम्भवेऽपि तथोक्तेरतिशयोक्तिः । एवं स्मितेनेत्यादावप्यतिशयोक्तिः । समापयेत्यादीनां क्रियाणां सम्भोगरूपैककार्यपरत्वेन समुच्चयभेदः । २ अत्राक्षरस्रजेति रूपकम्, अक्षरस्रक्कर्तृकत्वेन सुधारसोद्वेलनकेलेरसम्भवेऽपि तथोक्तेरतिशयोक्तिः । एवं स्मितेत्यादावप्येवं ।

१ अत्र विभूषणं भवेति रूपकम् । विनेति विनोक्तिश्च ।२अन्तःस्थितायां बहिःस्थितत्वं विरुद्धमेव,अथापि तथोक्तेर्विरोधाभासः । चेत्सदेरयादिना हेतुहेतुमद्भावात् काव्यलिङ्गम् ।

विशाला चेयमुरस्तटी कठोरयोस्त्वत्कुचयोः परिचारिका सेवाकर्त्री समुचिता । तुल्ययोरेव सेव्यसेवकभावो घटत इत्यर्थः । आलिङ्गनयोग्यत्वमेव सूचितम् । द्वयोरपि यथा कामपीडा न भवति तथा विधेयम् । गाढालिङ्गनं देहीति भावः । परिष्वजस्वेति 'परिनिविभ्यः सेवसित-सयसिवुसहसुट्स्तुस्वञ्जाम् ८।३।७०।' इति षत्वम् ॥ ११६ ॥

तवाधराय स्पृहयामि यन्मधु-
स्रवैः श्रवःसाक्षिकमाक्षिका गिरः ।
अधित्यकासु स्तनयोस्तनोतु ते
ममेन्दुलेखाभ्युदयाद्भुतं नखः ॥ ११७ ॥

तवेति ॥ हे भैमि ! अहं तव तस्मै अधराय स्पृहयामि त्वदीयमधरमभिलषामि । तव गिरः यन्मधुस्रवैर्यस्याधरस्य मधुनिर्झरैः कृत्वा श्रवसी कर्णौ साक्षिणी यस्य तत् श्रवःसाक्षिकं तादृशं माक्षिकं मधु यासु एवंभूताः सन्ति ओष्ठस्यामृतरूपत्वात्तदुत्पन्ना वाण्यः कर्णयोरमृतरूपा भवन्तीत्यर्थः । तथा—मम नखः ते स्तनयोरधित्यकासूर्ध्वदेशेषु इन्दुलेखाया अभ्युदय उदयस्तेन यदद्भुतमाश्चर्यं तत् तनोतु करोतु । नखक्षतस्यार्धत्वाच्चन्द्रकलाकारत्वाच्च इयमत्र चन्द्रकलोदितेति सख्यादेर्बुद्धिर्भवत्वित्यर्थः । ओष्ठपाननखक्षतेच्छुरस्मीति भावः । अधित्यकेति स्तनयोरुदयशैलत्वाच्चन्द्रकलायास्तत्रोदयात्कलोदयसमये रक्ता भवति अधराय, 'स्पृहेरीप्सितः १।४।३६' इति सम्प्रदानत्वम् ॥ ११७ ॥

न वर्तसे मन्मथनाटिका कथं
प्रकाशरोमावलिसूत्रधारिणी ।
तवाङ्ग(—)हारे रुचिमेति नायकः
शिखामणिश्च द्विजराड्विदूषकः ॥ ११८ ॥

नेति ॥ हे भैमि ! प्रकर्षेण काशते शोभते प्रकाशा शोभमाना रोमावलिरेव सूत्रं धारयत्येवंशीला त्वं मन्मथनाटिका कामस्योन्मादयित्री कथं न वर्तसे । अपि तु कामं सहर्षं करोषि । अङ्ग संबोधने, तव हारे मुक्ताहारे नायको मध्यमणिः रुचिमेति देदीप्यते । च परम् उज्ज्वलतरत्वाद्वर्तुलतरत्वादाह्लादकतरत्वाच्च द्विजराड्विदूषकः चन्द्रतिरस्करणशीलः शिखामणिर्मुकुटमणिः शिखायां निबद्धो वा मणिरपि रुचिमेति । द्विजराड्विदूषकत्वमुभयोरपि वा । तव विलोकनान्मदीयः कामः सहर्षो भवति । वर्धतेतरामिति भावः । नाटिकापक्षे—प्रकाशरोमावलिरेव सूत्रधारो नान्दीश्लोकानन्तरसंचारी कथाप्रस्तावकः पात्रविशेषः सोऽस्या अस्तीति । तथा—तवाङ्गहारेऽङ्गविक्षेपे नृत्ये नायकः सभापती रुचिं प्रीतिमेति । तथा—द्विजराट् ब्राह्मण एव विदूषकश्च परिहासकं मित्रं रुचिमेति । शिखायां मणिरस्य विदूषकस्य नायकस्य वा सः । 'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः । 'पीठमर्दो विटश्चैव विदूषक इति त्रिधा' । 'हास्यकृच्च विदूषकः' इत्यालंकारिकाः ॥ ११८ ॥

शुभाष्टवर्गस्त्वदनङ्गजन्मन-
स्तवाधरेऽलिख्यत यत्र लेखया ।
मदीयदन्तक्षतराजिरञ्जनैः
स भूर्जतामर्जतु बिम्बपाटलः ॥ ११९ ॥

शुभेति ॥ हे भैमि ! तव अनङ्गस्य कामस्य जन्मन उत्पत्तेः शुभसूचकोऽष्टवर्गः ज्योतिःशास्त्रप्रसिद्धः स लेखया यत्र तवाधरेऽलिख्यत । ज्योतिर्विदा ब्रह्मणैवेत्यर्थः । बिम्बफलवत्पाटलवर्णः सोऽधरः मदीया दन्तक्षतराजिः तया कृत्वा रञ्जनानि, तैः कृत्वा भूर्जतामर्जतु । न अङ्गजन्माऽनङ्गजन्मा मानसः पुत्रः । तस्योत्तमत्वात्तज्जन्मपत्रिका ज्योतिर्विदा भूर्जपत्र एव लिख्यते । पुत्रे जाते ज्योतिर्विदा तस्य जन्मकालिकः शुभाष्टकवर्गो लिख्यते । त्वदोष्ठोऽष्टरेखावान् दन्तक्षतसुन्दरो भूर्जपत्रेणोपमीयते । अष्टकवर्गस्तु ज्योतिःशास्त्रोक्तो ज्ञातव्यः । लेखया । लेखाभिरित्यर्थः ॥ ११९ ॥

गिराऽनुकम्पस्व दयस्व चुम्बनैः
प्रसीद शुश्रूषयितुं मया कुचौ ।
निशेव चान्द्रस्य करोत्करस्य य-
न्मम त्वमेकाऽसि नलस्य जीवितम् १२०

गिरेति ॥ त्वं गिरानुकम्पस्वानुगृहाण । चुम्बनैर्दयस्वानुकम्पस्व । मया प्रयोज्येन कुचौ शुश्रूषयितुं प्रसीद ।

---

१ अत्रापि काव्यलिङ्गम् । २ अत्र गिरो माक्षिकेति रूपकम् । इन्दुलेखाऽभ्युदयस्य नरकर्तृकत्वायोगेऽपि तथोक्तेरतिशयोक्तिः ।

१ अत्र रोमावलिसूत्रेत्यादौ रूपकम्, कथमित्युत्प्रेक्षा । द्विजराड् विदूषक इति व्यतिरेक इति केचित्, उपमेत्यपरे । नायकशिखामण्यो रुचिरूपैककार्यानुगुण्यसम्भावनात्समुच्चयः । २ अत्रानुप्रासः । बिम्बपाटल इत्युपमा ।

यद्यस्मात्त्वम् एका केवला नलस्य मम जीवितमसि । कस्य केव—चान्द्रस्य करोत्करस्य किरणसमूहस्य निशेव रात्रिरिव । तस्य जीवनं नान्या तथेति पूर्ववत् । त्वदधीनजीवित एवाहम्, चुम्बनादिना मामनुगृहाण, अन्यथा जीवनमेव न भविष्यतीति भावः ॥ १२० ॥

मुनिर्यथाऽऽत्मानमथ प्रबोधवान्
प्रकाशयन्तं स्वमसाववुध्यत ।
अपि प्रपन्नां प्रकृतिं विलोक्य ता-
मवाप्तसंस्कारतयाऽसृजद्गिरः ॥ १२१ ॥

मुनिरिति ॥ अथ प्रबोधवान् गतभ्रान्तिरसौ नल इति 'नलोऽहं' नलत्वेन प्रकाशयन्तं कथयन्तं स्वमात्मानमबुध्यत जानाति स्म । आत्मानं कथयता मया दूतधर्मपरित्यक्तः अनुचितं कृतमित्यजानादित्यर्थः । नलत्वकथनमात्रेण तां च भैमीं प्रकृतिं रोदनात्पूर्वावस्थां प्रपन्नां प्राप्तां विलोक्य जातबोधत्वाद्दूतोऽहमित्यवाप्तसंस्कारतया प्राप्तबुद्धितया वक्ष्यमाणा गिरोऽपि असृजत् । नलत्वनिश्चयेन त्यक्तरोदनां तां दृष्ट्वा स्वात्मानमेवोद्दिश्य दूतधर्मोचितमाह स्मेत्यर्थः । नलत्वनिश्चयेन गतमोहत्वम्, तेन प्राप्तबोधतया प्रकृतिं प्रपन्नामिति वान्वयः । उद्बुद्धदूत्यसंस्कारत्वेन प्रपन्नां प्राप्तामागतां तां दूतधर्मयुक्तां स्वामेव प्रकृतिं विलोक्य दूतधर्मोचितमेवावोचदिति वा । मुनिर्यथा यतिरिव । वेदान्ताभ्यासेन शमदमादिद्वारा प्रबोधवान्संसारविनाशसमर्थप्रकृष्टज्ञानयुक्तो यतिः स्वप्रकाशं सच्चिदानन्दैकरसमात्मानम् 'अहं ब्रह्मास्मि' इति बुध्यते बुद्ध्वा च उद्बुद्धजन्मान्तरीयसंस्कारतया प्राप्तब्रह्मज्ञानतया वा तां प्रसिद्धां संसारजनिकां सत्त्वरजस्तमःसाम्यावस्थारूपां प्रकृतिमनादिमविद्यां प्रकर्षेण पन्नां पृथग्भूतां ज्ञात्वा 'अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्रः । अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यतामा' इत्यादि वामदेवऋषिवदित्यर्थः । मुनिरप्यात्मानं प्रकृतिं च विवेकेन ज्ञात्वा मुक्तः सन् वागादिव्यवहारान्सृजति मुञ्चतीति केचित् ॥ १२१ ॥

अये ययाऽऽत्मा किमनिह्नुतीकृतः
किमत्र मन्ता स तु मां शतक्रतुः ।
पुरः स्वभक्त्याऽथ नमन्ह्रियाऽऽविलो
विलोकिताहे न तदिङ्गितान्यपि १२२ ॥

अये इति ॥ मया नलोऽहमिति आत्मा किमिति अनिह्नुतीकृतः प्रकटीकृतः । अये खेदे । महदनुचितं कृतमित्यर्थः । अनात्मप्रकटनविषये स शतक्रतुस्तु पुनर्मां किं किंप्रकारं मन्ता ज्ञास्यति । मामच्छद्मैव ब्रूयादित्यर्थः, आपादानसामर्थ्यद्योतनाय शतक्रतुरिति पदम् । पुरः पूर्वं स्वभक्त्या नमन्सन् अथ पश्चात् ह्रिया अकृतकार्यत्वाल्लज्जया आविलः कलुषितः सन् । सुतरां नमन्नित्यर्थः । तदिङ्गितान्यपि कोपाविष्टस्येन्द्रस्य भ्रूभङ्गादीन्यपि न विलोकिताहे विलोकयिष्यामि । प्रसादलाभस्तु दूरतः । अन्योऽप्यपराधी स्वामिनः कोपचिह्नं भ्रुकुट्यादि न विलोकयति ॥ १२२ ॥

स्वनाम यन्नाम मुधाऽभ्यधामहो
महेन्द्रकार्यं महदेतदुज्झितम् ।
हनूमदाद्यैर्यशसा मया पुन-
र्द्विषां हसैर्दूत्यपथः सितीकृतः ॥ १२३ ॥

स्वनामेति ॥ नाम प्राकाश्ये खेदे वा । अहं यत् स्वनाम मुधा व्यर्थमेवाभ्यधाम् एतत् महत् महेन्द्रकार्यमुज्झितं त्यक्तम् । विनाशितमित्यर्थः । अहो महदनुचितमेतत् । अनुचितत्वमेवाह—हनूमदाद्यैः श्रीरामादिदूत्यकारिभिर्दूत्यपथो यशसा कीर्त्या सितीकृतः । कार्यस्य साधितत्वात् । मया पुनः द्विषां हसैर्हास्यैः सितीकृतः । तैस्तु यशो लब्धम् । मया इन्द्रदूत्यार्थं गतो नलः स्वीयमेव दूत्यं कृतवानित्यादि वैरिहास्यरूपमयशो लब्धम् । 'सितीकृतः' इति पाठे श्वेतीकृतः, श्यामीकृतश्चेति व्याख्येयम् ॥ १२३ ॥

धियाऽऽत्मनस्तावदचारु नाचरं
परस्तु तद्वेद स यद्वदिष्यति ।
जनावनायोद्यमिनं जनार्दनं
क्षये जगज्जीवपिबं शिवं वदन् ॥ १२४ ॥

धियेति ॥अहमात्मनो धिया बुद्ध्या तावदचारु इन्द्रादिप्रतिकूलं नाचरं न कृतवान् । किंतु उन्मादादेव

---

१ अत्र निशेवेत्युपमा, जीवितमसीति रूपकम्, करोत्करसम्बन्धित्वं निशाया असम्भवीति तथोक्तेरतिशयोक्तिः । २ अत्र यथेत्युपमा ।

१ अत्रानुप्रासः । २ अत्रानुप्रासः । हनूमदाद्यैरिति कविना नलसामयिकत्वं विस्मृत्यैवोक्तमिति बोध्यम् । दूत्यगतन्यूनताया आनुगुण्येनोपमेयाधिक्याद् व्यतिरेक इति प्रकाशकारानुमन्तारः ।

स्वनाम कथितमित्यर्थः । स प्रसिद्धः परोऽन्यो दुर्जनो वा तु पुनः यद्वदिष्यति तदहं वेद । दुर्जनो हि यथावृत्तं न वदति किंतु विपरीतमेव वदति, इति जाने इत्यर्थः । तदेव विशेषणेनाह—किंभूतः परः—जनानामवनाय पालनायोद्यमिनं कृतोद्यमं जनानर्दयति पीडयतीत्येवंशीलं वदन् । तथा—क्षये प्रलये जगज्जीवपिवं जगत्प्राणहरं महादेवं शिवं मङ्गलं वदन् । अनर्गलो लोक इत्यर्थः । लोकोक्तिर्निवारणे कश्चन प्रतीकारो नास्तीति भावः । नन्द्यादित्वाज्जनार्दनः । जीवपिवम्, 'पाघ्राध्माः ७।३।७८' इत्यादिना शः ॥ १२४ ॥

**स्फुटत्यदः किं हृदयं त्रपाभरा-**
**द्यदस्य शुद्धिर्विबुधैर्विबुध्यते ।**
**विदन्तु ते तत्त्वमिदं तु दन्तुरं**
**जनानने कः करमर्पयिष्यति ॥१२५॥**

स्फुटतीति ॥ आत्मप्रकाशनादकृतकार्यत्वाच्च त्रपाभरो लज्जाबाहुल्यं तस्मात् अदो हृदयं किमर्थं स्फुटति। यद्यस्मात् विबुधैर्देवैरस्य हृदयस्य शुद्धिः विबुध्यतां ज्ञायताम् । तु पुनस्ते विबुधा इदं दन्तुरं विषमं तत्त्वं मया बुद्धिपूर्वकं कृतम्, अबुद्धिपूर्वकं वेति विदन्तु जानन्तु । लोका जानन्तु वा मा जानन्तु । अत्र लौकिकमाभाणकमाह—जनानने कः करं हस्तमर्पयिष्यति त्वयैवं न वक्तव्यमिति मुखहस्तदानेन लोकं प्रतिषेद्धुं कः शक्नोति। अपितु न कोऽपि । लोको यत्किंचिद्वदतु नामेति भावः । हृदयस्फोटनाभावेऽपि ते देवास्तत्त्वं यथार्थं जानन्तु । अन्यदपि संदिग्धं प्रमेयं पण्डितैः परीक्ष्य तत्त्वतो निर्णीयते, न तु सामान्यलोकैः ॥ १२५ ॥

**मम श्रमश्चेतनयाऽनया फली**
**बलीयसाऽलोपि च सैव वेधसा ।**
**न वस्तु दैवस्वरसाद्विनश्वरं**
**सुरेश्वरोऽपि प्रतिकर्तुमीश्वरः ॥१२६ ॥**

ममेति॥अनया दूतोऽहमिति चेतनया प्रतिपत्त्या कृत्वा मम श्रम इत्थंलक्षणः फली सफलो जातः स्यात् ।बलीयसा वेधसा च दैवेन सैव चेतना अलोपि नाशिता । दैववशाद्भ्रान्त्यात्मककथनाच्छ्रमो व्यर्थ एव जात इत्यर्थः । चेतनारक्षणे त्वया यत्नः किमिति न कृत इत्यत आह—स्वश्चासौ रसश्च स्वरसः स्वेच्छा दैवस्य स्वरसात्स्वेच्छया विनश्वरं विनाशितं वस्तु प्रतिकर्तुं चिकित्सितुं सुरेश्वरोऽपि शक्रोऽपि ईश्वरो न किं पुनरन्यः । मयाऽबुद्धिपूर्वमेवात्मप्रकाशनं कृतमिति भावः । तस्मान्ममापराधो नास्तीत्यर्थः ॥ १२६ ॥

**इति स्वयं मोहमहोर्मिनिर्मितं**
**प्रकाशनं शोचति नैषधे निजम् ।**
**तथाव्यथामग्नतदुद्दिधीर्षया**
**दयालुरागाल्लघु हेमहंसराट् ॥ १२७॥**

इतीति ॥ नैषधे नले स्वयमात्मनैव मोहमहोर्मिनिर्मितं भ्रान्तिबाहुल्यवशात्कृतं निजं स्वीयं प्रकाशनं प्रकटमिति पूर्वोक्तप्रकारेण शोचति निन्दति सति तद्विषयं पश्चात्तापं कुर्वति सति दयालुः हेमहंसानां राट् राजा तथाऽनिर्वचनीया व्यथा पीडा तस्यां मग्नश्चासौ स च तस्योद्दिधीर्षयोद्धरणेच्छया लघु शीघ्रमागात् ॥ १२७ ॥

**नलं स तत्पक्षरवोर्ध्ववीक्षिणं**
**स एष पक्षीति भणन्तमभ्यधात् ।**
**नयादयैनामति मा निराशता-**
**मसून्विहातेयमतः परं परम् ॥ १२८॥**

नलमिति ॥ स हंसः तस्य हंसस्य पक्षरवः पक्षवातभवः शब्दस्तेन किमेतदायातीति बुद्ध्या ऊर्ध्ववीक्षिणमुपरिविलोकिनम्, अनन्तरं च इति भणन्तं तं नलमभ्यधादवदत् । इति किम्—कृतमहोपकारः स एवैष पक्षी हंस इति । हे अदय निष्कृप नल ! एनां भैमीं निराशतामाशारहितताम् अति अतितरां मा नय मा स्म नैषीः । स्वप्रकाशनकृतस्वनिन्दया मय्यस्यानुरागो न विद्यत इति प्रतीत्या एषा निराशा भविष्यति, तथा मा कार्षीरिति भावः । अस्या निराशत्वे जाते मम किमनिष्टमित्याशङ्क्याह, या त्वया निन्दा कृता सा कृतैव, अतः परं चेत्करिष्यसि तर्हीयं भैमी परं निश्चितमसून्प्राणान्विहाता त्यक्ष्यति तेन स्त्रीवधजन्यं पातकं तव कृत्वेत्यर्थः । सुरेषु देवविषये अनुचितमेतन्मया कृतं

---

१ अत्रानुप्रासः । हेतुहेतुमद्भावमादाय वदन् पर इत्युक्तेः काव्यलिङ्गम् । २ अत्रानुप्रासो रूपकं च ।

१ पूर्वार्द्धस्य परार्द्धेन समर्थनादर्थान्तरन्यासः । अनुप्रासो यमकं च । २ अत्र महोर्मियोग्यतासम्पत्तये मोहस्य समुद्रत्वं व्यज्यते,एवं व्यथायां मग्नत्वसम्पत्तयेऽपि समुद्रत्वमवसीयेत ।

भविष्यति, तस्मादेवं मा कार्षीरिति भावः । अतेरुपसर्गत्वात् 'ते प्राग्धातोः' इति नियमात्पूर्वमेव प्रयोगस्यौचित्येऽपि महाकविप्रयोगाद्व्यवहितानामपि प्रयोगः साधुः । अत एव, 'आविश्चक्षुषोऽभवदसाविव रागः' 'विलोलजिह्वायुगलीढोभयसृक्कभागमाविः' इत्यादयोऽपि प्रयोगा उपयुज्यन्ते । अतिशयिता मा शोभा राजलक्ष्मीर्वा यस्याः सा अतिमा इयमित्यस्य विशेषणम् । एनामनिराशतां नयेत्यन्वयः । हे अतिम अतिशयिता मा शोभा राज्यलक्ष्मीर्वा यस्येति । 'अतिसुन्दरत्वाद्बहुधनत्वाच्च त्वमेवास्या योग्यो नान्यः' इति सूचितम्, इति वा । अतिक्रान्ता माम् अतिसुन्दरी केवलमतः परं प्राणांस्त्यक्ष्यति त्वद्विना एवंविधं सुन्दरं वस्तु वृथैव यात्यतीति सूचितमिति वा । वस्तुतस्तु अतीति क्रियाविशेषणम्, 'अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽपि च' इति विश्वोक्तेरतेः प्रातिपदिकत्वात्ततः विहाता, लुट् ॥ १२८ ॥

सुरेषु पश्यन्निजसापराधता-
मियत्प्रयस्यापि तदर्थसिद्धये ।
न कूटसाक्षीभवनोचितो भवा-
न्सतां हि चेतः शुचितात्मसाक्षिका१२९

सुरेष्विति ॥ हे नल ! भवान् तेषां देवानामर्थसिद्धये प्रयोजनसिद्धये इयदेतावत्प्रयस्यापि बहुतरं प्रयासं कृत्वेत्यर्थः । सुरेषु देवविषये अनुचितमेतन्मया कृतमिति निजसापराधतां स्वीयमनुचितकारित्वं पश्यञ्जानन् कूटसाक्षीभवनोचितो न भवति कूटोऽसत्यश्चासौ साक्षीव सत्येऽपि परकीयेऽर्थेऽलीकं भाषते स कूटसाक्षी अकूटसाक्षिणः कूटसाक्षिणो यद्भवनं तत्कूटसाक्षीभवनम् । तद्नुचितो न भवतीत्यर्थः । हि यस्मात् सतां चेतःशुचिता आत्मैव साक्षी यस्यामेवंविधा, न तु परसाक्षिका मया निष्कपटं दूत्यं कृतमिति त्वं तावज्जानासि, सन्तश्चालीकं भाषितुमपि स्वचेतस एव लज्जन्ते।तव च सत्यत्वं लोकत्रयप्रसिद्धम् । देवा अपि सर्वसाक्षित्वात्त्वयमेव त्वदीयं शुद्धत्वं ज्ञास्यन्ति, किमनेन लोकेनेति भावः । आत्मसाक्षिका, 'शेषाद्विभाषा ५ । ४ । १५४' इति कप् ॥ १२९ ॥

इतीरिणाऽऽपृच्छ्य नलं विदर्भजा-
मपि प्रयातेन खगेन सान्त्वितः ।
मृदुर्बभाषे भगिनीं दमस्य स
प्रणम्य चित्तेन हरित्पतीन्नृपः॥१३०॥

इतीति ॥ स नृपः चित्तेन हरित्पतीन्प्रणम्य अतः परं मम करणीयमपि नावशिष्टम्, क्षम्यतामिति मनसैव देवान्नमस्कृत्य मृदुः सदयः सन् दमस्य भगिनीं बभाषे । किम्भूतः—इति पूर्वोक्तस्येरिणा ब्रुवाणेन नलं विदर्भजामपि आपृच्छ्य प्रयातेन यातुमारब्धेन खगेन हंसेन सान्त्वितः कृतसन्तोषः । प्रयातेन 'आदिकर्मणि क्तः कर्तरि च ३ । ४ । ७१' इति क्तः ॥ १३० ॥

ददेऽपि तुभ्यं कियतीः कदर्थनाः
सुरेषु रागप्रसवावकेशिनीः ।
अदम्भदूत्येन भजन्तु वा दयां
दिशन्तु वा दण्डममी ममागसा १३१॥

ददेऽपीति ॥ हे भैमि ! अहं तुभ्यमपि अतिनिर्दयदूत्यकरणजनिताः कियतीः कतिसङ्ख्याकाः कदर्थनाः पीडा अहं ददे ददामि, अतः परं तद्विषयं किमपि न वदिष्यामीत्यर्थः । यतः—सुरेषु रागोऽनुरागः, तल्लक्षणः, तस्य वा प्रसवोऽङ्कुर उत्पत्तिर्वा तस्यावकेशिनीर्निष्फलाः अनुरागानुत्पादिका इत्यर्थः । उद्यमः कार्यजनकश्चेद्भवति तर्हि दुःखमपि दातुमुचितम् । प्रकृते तावति दूत्ये कृतेऽपि तव तेष्वनुरागाङ्कुरोऽपि नोत्पन्नः तस्मात्तव पीडाकरमतः परं किमपि न वदिष्यामीति भावः । यत्राङ्कुरोत्पत्तिरपि नोदेति तत्र फलाशा कुतस्त्या । तव पीडादाने ममापि पीडा भवतीत्यपिशब्दार्थः । गर्हायां वाऽपिः अनुचितमेतादित्यर्थः। एवं सति अमी देवा अदम्भदूत्येन निष्कपटदूत्येन कृत्वा दयां मम कृपां वाभजन्तु कुर्वन्तु । कार्यासाधनरूपेणागसा अस्मदीयं कार्यं विनाश्य स्वीयं कृतमित्यपराधेन दण्डं शासनं वा दिशन्तु कुर्वन्तु । तत्कृतं दण्डमपि सहिष्ये, परं तुभ्यं दुःखं दातुं नोत्सहे इति भावः ॥ १३१ ॥

अयोगजामन्वभवं न वेदनां
हिताय मेऽभूदियमुन्मदिष्णुता ।

१ अत्रानुप्रासः । २ सतां हीत्यादिनोक्तार्थसमर्थनादर्थान्तरन्यासः ।

१ बभाषे भगिनीमित्यनुप्रासः । २ अत्र विकल्पालङ्कारः । 'विरोधे तुल्यबलयोऽर्विकल्पालङ्कृतिर्मता ।' इति तल्लक्षणात् ।

उदेति दोषादपि दोषलाघवं
कृशत्वमज्ञानवशादिवैनसः ॥ १३२ ॥

अयोगजामिति ॥ इयम् उन्मदिष्णुता मे मह्यं हितायाभूत् । यतः—अहम् अयोगजां विरहजां वेदनां नान्वभवम् किंतु परमानन्दमन्वभवम् । उन्मादेन सुखवशान्मया विरहपीडा विस्मृता तस्मादियमुन्मादिता मम गुणायैव जातेति भावः । अथ च न योगः अयोगः, तज्जां संसारसम्बधिनीं पीडां नान्वभवम् । किंतु परमानन्दमन्वभवमित्यर्थः । तत्रार्थान्तरन्यासं सोपमानमाह—दोषादपि दोषभूतादपि एकस्माद्धेतोः दोषभूतस्याप्यन्यस्य लाघवम् अल्पत्वलक्षणो गुण उदेति । कस्मात् कस्य किमिव—अज्ञानवशादज्ञानलक्षणदोषवशाद्दोषभूतस्याप्येनसः पातकस्य कृशत्वमल्पत्वमिव । अल्पत्वलक्षणो गुणो भवति । ज्ञानपूर्वं ब्रह्महत्यादौ 'कामात्तद्द्विगुणं भवेत्, इति बहुप्रायश्चित्तान्मानात्पातकगौरवमवगम्यते, अज्ञानकृते लघुप्रायश्चित्तान्मानात्पातकलाघवमिति ।अज्ञानलक्षणाद्दोषाद्दोषभूतस्य पातकस्य लाघवलक्षणो गुणो यथा लभ्यते, तथोन्मादलक्षणाद्दोषाद्विरहवेदनादोषस्य लाघवलक्षणो गुणो मयाऽपि लब्ध इति भावः । उन्मादितायां कियतोऽपि दुःखस्य शेषत्वसूचनार्थं वेदनापदम् । मे इति हितयोगे चतुर्थी । भावप्रत्ययान्तस्य गुणवाचिनः शब्दस्य 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २ । २।११'इति समासनिषेधाद्दोषलाघवमित्यत्र समासाप्राप्तेः 'तदशिष्यं संज्ञाप्रमाणत्वात् १ । २ । ५३' इति ज्ञापकाद् बुद्धिमान्द्यं, करणपाटवमित्यादिमहाकविप्रयोगदर्शनाच्च निषेधस्यानित्यत्वात्समासो द्रष्टव्यः । एवमेवमादिषु प्रयोगेषु ज्ञातव्यम् ॥ १३२ ॥

तवेत्ययोगस्मरपावकोऽपि मे
कदर्थनाऽत्यर्थतयाऽगमद्दयाम् ।
प्रकाशमुन्माद्य यदद्य कारय-
न्मयात्मनस्त्वामनुकम्पते स्म सः १३३

तवेति ॥ तव त्वत्सम्बन्धी त्वद्विषयो मन्निष्ठः स प्रसिद्धः पूर्वं कृतपीडः अयोगो वियोगस्तज्जनितः स्मरपावको ममैव कदर्थनात्यर्थतया पीडाबाहुल्येनाप्यतिपीडाकारित्वेनापि इति पूर्वोक्तप्रकारेण मे मम दयामगमत् । चकारेत्यर्थः । इति किम्—यद्यस्माद् अद्य त्वद्विलापसमये मामुन्माद्योन्मादं प्रापय्य मया प्रयोज्येनात्मनो ममैव नलोऽहमिति प्रकाशं प्राकट्यं कारयन् त्वामनुकम्पते स्म त्वयि विषये दयते स्म तेन ममैवोपरि कृपा कृतेत्यर्थः । त्वद्विषयो वियोगाग्निर्यदि ममातिपीडां नाकरिष्यत, तदोन्मादाभावान्मयाऽऽत्मप्रकाशनमपि नाकरिष्यत, ततश्च मत्प्राप्तिविघातनिश्चयात्त्वन्मरणमेव स्यात्, त्वद्वियोगान्ममापि मरणं स्यात् । तस्मात्पीडयोन्मादाधिक्यान्मयाऽऽत्मनः प्राकट्ये कृते मत्प्राप्तिनिश्चयात्त्वया प्राणा रक्षिताः, तस्माच्च मत्प्राणा अपि तेन रक्षिता इति स स्मराग्निर्मम दयामेव चकारेति भावः । कामाग्निः कदर्थनाऽत्यर्थतयाऽपि मे दयां चकार । कुतः तवेति, त्वदीयोऽहमिति त्वां पीडयत्येव, त्वत्सम्बन्धान्मामपि पीडयति । इयं तस्य कृपैव भैमी मामेव वरिष्यति, नान्यमिति निश्चयात् । योजनान्तरमुपेक्षणीयम् ॥ १३३ ॥

अमी समीहैकपरास्तवामराः
स्वकिंकरं मामपि कर्तुमीशिषे ।
विचार्य कार्यं सृज मा विधान्मुधा
कृतानुतापस्त्वयि पार्ष्णिविग्रहम्१३४॥

अमी इति ॥ अमी अमरास्तव समीहैकपरास्त्वदभिलाषकेवलनिष्ठाः त्वामेवाभिलष्यन्तीत्यर्थः । तव तेष्वनुरागो न । त्वं मामपि स्वकिंकरं कर्तुम् ईशिषे, मां स्वयं दासं कर्तुं त्वमेवेच्छसीत्यर्थः । ममानुरागोऽप्रयोजकः किंतु तव मय्यनुरागः प्रयोजक इति भावः। एवं सति त्वं कार्यं करणीयं विचार्य सृज । विचारे कारणमाह—कृतो यः पश्चात्तापः स त्वयि पार्ष्णेः पाश्चात्यस्य वैरिणो विग्रहं तद्वत्कलहम् दुःखमिति यावत् । मुधा वृथा मा विधान्मा कार्षीत् । अविचार्य देवे वृते नलमहं किमिति नावरिषम्, मयि वा वृते कश्चन देवं किमिति नावरिषमिति पश्चात्तापस्तव भविष्यति तस्माद्विचार्यैव विधेयं कुर्विति भावः । संधिमकृत्वा बहिर्निर्गते विजिगीषौ पार्ष्णिग्राहो वैरायते । ईशिषे, 'ईशः से ७ । २ । ७७' इतीट् । मा विधात्, भविष्यति 'माङि लुङ्' ३।३। १७५' 'न माङ्योगे ६।४।७४' इत्यडभावः ॥१३४॥

---

१ अत्र वशादिवेत्युपमा ।

१ अत्र कदर्थनया दयाकारित्वसम्भावनोक्तेः सम्पत्तये प्रकाशमित्याद्युक्तेः काव्यलिङ्गम् । २ अत्र परामरा इति रेफानुप्रासः ।

उदासितेनैव मयेदमुद्यसे
भिया न तेभ्यः स्मरतानवान्न वा।
हितं यदि स्यान्मदसुव्ययेन ते
तदा तव प्रेमणि शुद्धिलब्धये ॥१३५॥

उदासितेनेति ॥ हे भैमि! उदासितेनैवोदासीनेनैव मया 'अमी समीहैकपराः—' (९।१३४) इत्यादिना विचार्य सृज इत्येवमिदं मतमुद्यसे, तेभ्यो देवेभ्यो भिया देवान्वृणीष्वेति नोद्यसे। तथा—स्मरेण कृतं स्वस्य तानवं कार्श्यं, तस्माद्वा 'स्वकिंकरम्' (९।१३४) इत्यादिना मां वृणीष्वेति न वोद्यसे। भियेत्युभयत्र वा योज्यम्। त्वद्धितार्थमेव विचार्य कुर्विति मयोक्तम्। नत्वन्येनाशयेनेति भावः। मया देवे वृते सति मद्वियोगात्त्वन्मृतिरेव स्यादित्याशङ्कायामाह—मदसुव्ययेन मदीयप्राणनाशेन ते तुभ्यं यदि हितं स्यात्, तर्हि मय्येतावन्तं कालं यस्तव प्रेमाऽनुरागः तस्मिन्विषये एतदेव प्राणत्यजनमेव तव हितमेव वा शुद्धिलब्धय आनृण्यप्राप्तये स्यात्। ममेत्यर्थात्।—तव हिताय प्राणानपि त्यजामीत्यर्थः। मत्प्राणव्ययेन तव हिते जातेऽनृणित्वेन ममैव हितमित्यर्थः। उद्यसे वदेर्यकि यजादित्वात्संप्रसारणम्। 'उच्यते' इति च पाठः ॥ १३५ ॥

इतीरितैर्नैषधसूनृतामृतै-
र्विदर्भजन्मा भृशमुल्ललास सा।
ऋतोरधिश्रीः शिशिरानुजन्मनः
पिकस्वरैर्दूरविकस्वरैर्यथा ॥ १३६ ॥

इतीति ॥ सा विदर्भजन्मा 'ददेऽपि तुभ्यम्—' (९।१३१) इति ईरितैः पूर्वोक्तैर्नैषधस्य सूनृतामृतैः सत्यवचनामृतैः कृत्वा भृशमुल्ललास हर्षं प्राप। नलत्वनिश्चयात्, तेनात्मन्यनुरागस्य प्रकाशितत्वात्, तेभ्यो न विभेमीत्युक्तत्वाच्च। 'ईदृशैः' इति पाठे पूर्वोक्तैः इति वक्ष्यमाणप्रकारेणोल्ललासेति योज्यम्। शिशिरम् ऋतुमनुलक्षीकृत्य जन्म यस्य ऋतोर्वसन्तस्याधिका श्रीः दूरविकस्वरैरतिविकासिभिः पिकस्वरैः कोकिलालापैः कृत्वा यथा इवार्थः। उल्लसति। पिकस्वरसाम्येन नलवचसां मदनोद्दीपकत्वं सूचितम्। अन्यदापि पीयूषैर्जलैर्वा सोल्लासं भवति ॥ १३६ ॥

नलं तदाऽवेत्य तमाशये निजे
घृणां विगानं च मुमोच भीमजा।
जुगुप्समाना हि मनो धृतं तदा
सतीधिया दैवतदूतधावि सा ॥१३७॥

तमेवोल्लासमाह—

नलमिति ॥ सा भीमजा तदा तं दूतं निजे आशये मनसि नलं नलनामकं राजानमवेत्य निश्चित्य घृणां जुगुप्सां विगानं निन्दां च मुमोच अर्थान्मनस एव। निजाशये विषये घृणां विगानं च मुमोचेति वा योज्यम्। एतन्मनः स्वभावतोऽप्रशस्तमिति जुगुप्सा, अनुचितकारि चैतदिति निन्दा, यद्वा—नलप्राप्त्यनाशया शरीरे घृणा, परपुरुषसंवादशङ्कया निन्दा। कीदृशी—तदा नलज्ञानावसरे सतीधिया पातिव्रत्यबुद्ध्या धृतं नियमितं बलात्कारेण तस्मात्परावर्तितमित्यर्थः। दैवतदूतं प्रति धावि मनो हि निश्चयेन जुगुप्समाना निन्दन्ती। पतिव्रतया नियन्त्रितं मनो दूते धावतीति जुगुप्समाना निन्दन्तीत्यर्थः। यद्वा—हि यस्मात् सा तदा सतीधिया धृतं मनो दैवतदूतधावि जुगुप्समानाऽभूदिति योजना। नलान्यदेवदूतगामित्वादप्रशस्तमेतन्मदीयमन्तःकरणमनुचितकारि चेति पूर्वं यतो जुगुप्सितवती निन्दितवती च, नलनिश्चयानन्तरमत्रानुरक्तं यन्मदीयं मनस्तत्साध्वेव जातमिति जहावेति भावः ॥ १३७ ॥

मनोभुवस्ते भविनां मनः पिता
निमज्जयन्नेनसि तन्न लज्जसे।
अमुद्रि सत्पुत्रकथा त्वयेति सा
स्थिता सती मन्मथनिन्दिनी धिया १३८

मनोभुव इति ॥ भविनां प्राणिनां मनः मनोभुवः ते तव पिता। यतः—त्वं मन एव भूः उत्पत्तिस्थानं यस्य, तस्मान्मनस्तव पिता। हे काम! त्वं स्वपितृभूत तत् मनः एनसि परपुरुषाभिलापजनिते पातके निमज्जयन् न लज्जसे। काकुः। त्वया सत्पुत्रकथा सद्भिः पुत्रैः पितरः पुण्याँल्लोकान्यान्तीति कथा अमुद्रि समापिता। नलत्वनिश्चयात्पूर्वं धिया मनसा इति पूर्वोक्तप्रकारेण मन्मथनिन्दिनी सती पतिव्रता वा सा भैमी स्थिता नलत्वनिश्चयानन्तरं कामनिन्दनादुपरतेत्यर्थः ॥ १३८॥

१ अत्र नवेति यमकम्, यदीति यद्यतिशयोक्तिः। २ अत्रानुप्रासः, यथेत्युपमा।

१ अत्रानुप्रासः, घृणां च विगानं चेति तुल्ययोगिता, जुगुप्समाना हि इति काव्यलिङ्गम्। २ अत्रानुप्रासः।

प्रसूनमित्येव तदङ्गवर्णना
न सा विशेषात्कृतमत्तदित्यभूत् ।
तदा कदम्बं तदवर्णि लोमभि-
र्मुदस्रुणा प्रावृषि हर्षमागतैः ॥१३९॥

प्रसूनमिति ॥ पूर्वं सौकुमार्याद्भैमीशरीरं पुष्पमिति तदङ्गवर्णना सामान्याकारेणाभूत्, परं तु तत्पुष्पं कतमत्, किंजातीयमिति सा वर्णना विशेषात् विशेषाकारेण भैमीशरीरमेतज्जातीयमिति नाभूत् । तदा तदीयनलत्वनिश्चयसमये मुदस्रुणा प्रावृषि हर्षास्रुजनितवर्षाकाले हर्षमुन्निद्रत्वमागतैः प्राप्तैः लोमभिः भैमीरोमभिः कर्तृभिः तत् भैमीशरीरं पुष्पं वा कदम्बपुष्पमवर्णि कथितम् । कदम्बानि हि प्रावृट्काले विकसन्ति । भैम्यङ्गमुन्निद्रै रोमभिः कदम्बतुल्यमभूदित्यर्थः । हर्षवशादस्रुरोमाञ्चादि तस्यां जातमिति भावः ॥ १३९ ॥

मयैव सम्बोध्य नलं व्यलापि य-
स्त्वमाह मद्बुद्धमिदं विमृश्य तत् ।
असाविति भ्रान्तिमसाद्दमस्वसुः
स्वभाषितस्वोद्भ्रमविभ्रमक्रमः ॥१४०॥

मयेति ॥ स्वेन आत्मना भाषितः स्वोद्भ्रमस्य स्वभ्रान्तेः विभ्रमाणां विलासानां क्रमो येन, स्वोद्भ्रमविभ्रमयोः क्रमः 'अये मयाऽऽत्मा किमनिह्नुतीकृतः–' ( ९।१२२ ) इत्यादिश्लोकपञ्चकोक्तो येन वा सोऽसौ नलः दमस्वसुः इति एतादृशीं भ्रान्तिमसात्खण्डितवान् इति किम्—मयैव नलं सम्बोध्य 'इयं न ते–' ( ९।९७ ) इत्यादि श्लोकचतुष्टयेन नलसम्बोधनान्युक्त्वा यद्व्यलापि विलपितम् । असौ नलः तदिदं विलपितं विमृश्य विचार्य मद्बुद्धं मया ज्ञातं स्वमात्मानम् 'अयि प्रिये कस्य कृते विलप्यते–' ( ९।१०३ ) इत्यादिसप्तदशभिः श्लोकैराह अहमनया ज्ञातः तत्किमित्यहं न कथयामीत्यात्मानं कथितवान्, न तु स्वारस्येनेति । भ्रान्तेन मया स्वनाम कथितं, न तु त्वया ज्ञातमिति स्वभ्रान्तिवर्णनव्याजेन ज्ञापयति स्मेत्यर्थः । मदभिलाषजनितवेगभरभ्रान्तेनानेन स्वनामोक्तमिति ज्ञात्वा सा भैमी तुतोषेति भावः । असादिति 'षोऽन्तकर्मणि' 'विभाषा घ्राधेट्शाच्छासः २।४।७८' इति सिचो लुक् । अशादिति पाठे—तनूचकारेत्यर्थः । 'शो तनूकरणे' तेनैव सिचो लुक् ॥ १४० ॥

विदर्भराजप्रभवा ततः परं
त्रपासखी वक्तुमलं न सा नलम् ।
पुरस्तमूचेऽभिमुखं यदत्रपा
ममज्ज तेनैव महाह्रदे ह्रियः ॥ १४१ ॥

विदर्भेति ॥ ततः परं नलनिश्चयानन्तरं सा विदर्भराजप्रभवा भैमी त्रपासखी लज्जावती सती नलं वक्तुमलं समर्था नाभूत् । लज्जानुभाववशात्तूष्णीं बभूवेत्यर्थः । यतः—पुरः आदौ नलत्वनिश्चयात्पूर्वम् अत्रपा निर्लज्जा सती अभिमुखं समक्षं यत् तमूचे, तेनैव समक्षवचनेन हेतुना नलत्वनिश्चयानन्तरं ह्रियो महाह्रदे समुद्रे ममज्ज निमग्ना । लज्जाऽल्पत्वे किंचिद्वक्तुं शक्यते, इयं तु लज्जासमुद्रे मग्नेति वक्तुं समर्था नाभूदिति युक्तमेवेति भावः । सखीपदेन लज्जां क्षणमपि न त्यजतीति सूचितम् १४१

यदाऽपवार्यापि न दातुमुत्तरं
शशाक सख्याः श्रवसि प्रियस्य सा ।
विहस्य सख्येव तमब्रवीत्तदा
ह्रियाऽधुना मौनधना भवत्प्रिया ॥१४२॥

यदेति ॥ सा भैमी यदा अपवार्यापि जवनिकादिना व्यवधायापि रहस्यपि तिर्यग्वलितं कृत्वा सख्याः श्रवसि कर्णे प्रियस्य नलस्योत्तरं दातुं न शशाक । समक्षं वक्तुमशक्तैव परं व्यवधायापि एनं प्रत्येवं वदेति सखीकर्णेऽपि लगित्वा यस्मिन्काले वक्तुमशक्ताभूत् । तदा तस्मिन्काले सख्येव विहस्य इति तं नलमब्रवीत् । इति किम्—भवत्प्रिया अधुना ह्रिया मौनमेव धनं यस्याः सा मौनिनी वर्तते । चित्रलिखितं पुरःस्थितं च प्रति पूर्वं बहूक्तत्वादिदानीं मौनं व्यर्थमिति अधुनेत्यनेन परिहासः सूचितः । हास्यमप्यत एव कृतम् । अपवार्यापि सखीद्वारेणैव व्यवधायापि परम्परयापीत्यर्थ इति वा । 'त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योऽन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम् ॥' इति साहित्यदर्पणकारोक्त्या त्वपवार्योक्तिर्नाम जनान्तिकमुदुघ्यते ॥ १४२ ॥

१ अत्र मुदश्रुणा धारासम्पाताभेदप्रतीतेरतिशयोक्तिः, भैमीशरीरस्य कदम्बत्वेन स्थापनादपह्नुतिश्च ।

१ अत्रानुप्रासः। २त्रपासखीति रूपकम्, त्रपाया अमूर्तत्वेन सखीत्वेन रूपणादतिशयोक्तिरपि । ३ अत्र "धुना धना" इत्यनुप्रासः, मौनस्य धनत्वेन रूपणाद्रूपकम् ।

पदातिथेयाँल्लिखितस्य ते स्वयं
वितन्वती लोचननिर्झरानियम्।
जगाद यां सैव मुखान्मम त्वया
प्रसूनबाणोपनिपन्निशम्यताम् ॥१४३॥

पदेति ॥ हे नल ! इयं भैमी लोचननिर्झरानश्रुप्रवाहान् स्वयं स्वहस्तेन चित्रभित्तौ पटे वा लिखितस्य ते तव पदातिथेयान् चरणप्राघुणिकान्वितन्वती कुर्वती चरणपतनादिना वियोगजबाष्पनिर्झरेण क्षालनं कुर्वती सती यां प्रसूनबाणस्य कामस्योपनिषदं कामाद्वैतप्रकाशिकां जगाद लिखित्वा प्रत्युवाच सैव प्रसूनबाणोपनिपत् मम मुखात्त्वया निशम्यताम्। अनया कामपीडावशात्पूर्वमुक्तं मयोच्यते, न तु स्वस्फूर्त्या। सत्यं मत्वा समाकर्णयेत्यर्थः। रहस्यप्रतिपादको ग्रन्थविशेष उपनिषत्। निर्झरपदेनाश्रुबाहुल्यं सूचितम्[१] ॥ १४३ ॥

असंशयं स त्वयि हंस एव मां
शशंस न त्वद्विरहाप्तसंशयाम्।
क चन्द्रवंशस्य वतंस मद्वधा-
नृशंसता सम्भविनी भवादृशे ॥१४४॥

असंशयमिति॥ स हंस एव मां त्वद्विरहेणाप्तः प्राप्तः संशयो जीवसंदेहो यया एवंभूतां त्वयि त्वद्विषये तवाग्रेऽसंशयं निश्चितं न शशंस प्रायशो न कथितवान्। यतः—हे चन्द्रवंशस्य वतंसालंकार नल ! भवादृशे सौन्दर्यादिगुणयुक्तेऽतिशूरे महाकुलीने च मद्वधान्नृशंसता निर्दयता घातुकता क कुतः संभविनी युक्ता। पूर्वोक्तगुणयुक्तो हि निर्दोषं पुरुषमपि न हन्ति, किं पुनः स्त्रियमित्यर्थः। तस्मात् स एव प्राणपर्यवसायिनीं त्वद्विरहजन्यां मदीयामवस्थां तव पुरस्ताद् न कथितवानित्येव निश्चयः, अन्यथा त्वं मामन्वग्रहीष्ठा एव, तव न कोऽप्यपराध इति भावः। असंशयम्, अर्थाभावेऽव्ययीभावः। वतंस इति, 'वष्टि भागुरिरल्लोप' इत्यल्लोपः। भवादृशे 'त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६०' इति कञ्' आ सर्वनाम्नः ६।३।९१' इत्यात्वम्[२] ॥ १४४ ॥

जितस्तवास्येन विधुः स्मरः श्रिया
कृतप्रतिज्ञौ मम तौ वधे कुतः।
तवेति कृत्वा यदि तज्जितं मया
न मोघसङ्कल्पधराः किलामराः १४५

जित इति ॥ हे नल। त्वया आस्येन विधुर्जितः श्रियाङ्गकान्त्या स्मरो जितः। तौ चन्द्रस्मरौ मम वधे कुतो हेतोः कृतप्रतिज्ञौ वदेत्यर्थः। त्वदीयमुखकान्तिभ्यामेव त्वयैव वा तयोरपराद्धम्। तौ त्वां त्यक्त्वा निरपराधां मां किमिति पीडयतः, इति कथयेति भावः। स्वयमेव हेतुमाशङ्क्य वदति—तयोस्तव वा किमपि कर्तुमसमर्थौ अहं तव प्रियेति कृत्वा बुद्ध्या यदि चेन्मां पीडयतः, तर्हि मया जितम्। शकुनग्रन्थिरेव निबद्ध इति भावः। किल यस्मात् अमरा मोघसंकल्पधरा निष्फलमानसकर्मधारिणो न भवन्ति। यन्मनसि धारयन्ति तत्सत्यमेव भवति। तवाहमिति ताभ्यां यत्संकल्पितं तत्सफलं भविष्यति इति मया जितमित्यर्थः। अतिस्मरातिचन्द्रमुखत्वद्विहाराचन्द्रकामौ मां पीडयत इति भावः। अन्योऽपि साक्षाद्वैरिणोऽपकर्तुमशक्तस्तत्सम्बन्धिनमन्यमपकरोति। यौ त्वदवयवाभ्यां जितौ त्वदधीनभूतया मया जितावेवेत्यर्थ इति वा ॥ १४५ ॥

निजांशुनिर्दग्धमदङ्गभस्मभि-
र्मुधा विधुर्वाञ्छति लाञ्छनोन्मृजाम्।
त्वदास्यतां यास्यति तावतापि किं
वधूवधेनैव पुनः कलङ्कितः ॥ १४६ ॥

निजांशुनिर्दग्धेति ॥ विधुश्चन्द्रो निजांशुभिः स्वकिरणैः निर्दग्धं ममाङ्गं तस्य भस्मभिः कृत्वा लाञ्छनोन्मृजां स्वीयकलङ्कप्रोञ्छनं मुधा वृथा वाञ्छति। वैयर्थ्यमेवाह—तावतापि मदङ्गभस्मभिर्लाञ्छनप्रोञ्छने कृतेऽपि त्वदास्यतां त्वन्मुखत्वं यास्यति किम्? अपि तु न। किंतु गतेऽपि लाञ्छने वधूवधेन स्त्रीवधजनितपातकेन पुनः कलङ्कित एव। त्वन्मुखसादृश्यं कलङ्कित्वान्न प्राप्नोत्येवेत्यर्थः। चन्द्रोऽतितमां मा पीडयतीति भावः। अन्यस्याप्यादर्शादेर्मलिनस्य भस्मना लाञ्छनप्रोञ्छनं क्रियते। कलङ्कवान्कृतः। 'तत्करोति तदाचष्टे' इति

---

१ अत्र लोचनयोर्निर्झरत्वासम्भवेऽपि अश्रुषु निर्झरत्वं लक्ष्यं, तत्राश्रुणो निर्झरत्वेनैवोक्तेरविशयोक्तिः। २ एवं प्रसूनबाणस्योपनिषत्त्वसिद्धये प्रसूनबाणस्य परग्रहत्वमध्यवसायितमित्यतिशयोक्तिः, प्रत्यनीकं च, 'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः।' इति तल्लक्षणात्।

१ जित इत्यादावतिशयोक्तिः न मोघेति काव्यलिङ्गं च।

णिचि मतुब्लोपे निष्ठा। वधूवधेन कर्तरि तृतीया, करणे तु तारकादिः ॥ १४६ ॥

प्रसीद यच्छ स्वशरामन्मनोभुवे
स हन्तु मां तैर्धुतकौसुमाशुगः।
त्वदेकचित्ताहमसून्विमुञ्चती
त्वमेव भूत्वा तृणवज्जयामि तम् ॥ १४७ ॥

प्रसीदेति ॥ हे नल ! त्वं ममोपरि प्रसीद स्वशरान्मनोभुवे यच्छ देहि। स कामो धुतास्त्यक्ताः कौसुमा आशुगा बाणा येनैवम्भूतः सन् तैर्भवदीयैः शरैः मां हन्तु। कामबाणाः पीडयन्ति, नतु झटिति प्राणवियोगं कुर्वन्ति त्वदीया बाणा लोहत्वादतितीक्ष्णत्वाच्च झटिति प्राणवियोगं कुर्वन्ति, न तु पीडाम्, तस्मात्तान्मदनाय देहि एतावदेव तव प्रसन्नत्वम् तैर्बाणैर्मां मारयिष्यति। मरणे को लाभ इत्याशङ्क्याह—त्वदेकचित्ता असून्विमुञ्चती अहं त्वमेव त्वद्रूपैव भूत्वा तं कामं तृणवत् तृणमिवाप्रयासेन जयामि। त्वया सौन्दर्येण कामस्य जितत्वात्त्वद्रूपलाभात्स मया जेतुं शक्यत इत्यर्थः। 'मरणे यादृशी जन्तोर्भावना यस्य जायते। तादृशं लभते जन्म स भूयो हि स्वकर्मभिः॥' इति वचनात्, 'यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्।' इत्यादिभगवद्वचनप्रामाण्याच्च मम त्वद्रूपप्राप्तिरित्यर्थः ।मुञ्चती, मुचेस्तौदादिकत्वात् 'आच्छीनद्योर्नुम् ७। १। ८०' इति नुम्विकल्पान्नुमभावः ॥ १४७ ॥

श्रुतिः सुराणां गुणगायनी यदि
त्वदङ्घ्रिमग्नस्य जनस्य किं ततः।
स्तवे रवेरप्सु कृताप्लवैः कृते
न मुद्वती जातु भवेत्कुमुद्वती ॥ १४८ ॥

श्रुतिरिति ॥ श्रुतिर्वेदो यदि सुराणां देवानां गुणगायनी गुणवर्णनपरा, ततः तर्हि त्वदङ्घ्रिमग्नस्य, त्वच्चरणानुरागिणो मल्लक्षणस्य जनस्य ततो वेदकृताद्देवगुणवर्णनादपि किम्। अन्यत्रानुरक्तस्योत्तमेनान्यवर्णने कृतेऽपि तत्रानुरागो नोत्पद्यत इत्यर्थः। यतः—अप्सु कृताप्लवैः कृतस्नानैः पुरुषै रवेः सूर्यस्य स्तवे कृतेऽपि कुमुद्वती कुमुदिनी जातु कदाचिदपि मुद्वती सूर्यविषये हर्षवत्यनुरागिणी न भवेत्। तस्याश्चन्द्र एवानुरागात्, तद्वन्ममेत्यर्थः ॥ १४८ ॥

कथासु शिष्ये वरमद्य न म्रिये
ममावगन्तासि न भावमन्यथा।
त्वदर्थमुक्तासुतया सुनाथ मां
प्रतीहि जीवाभ्यधिकं त्वदेकिकाम् ॥ १४९ ॥

कथास्विति ॥ हे नल ! अद्य एतावत्यामपि पीडायां सत्यां कथासु शिष्ये गोष्ठीशेषीभवानि म्रिये। वरमेतन्मनागिष्टम्। न म्रिये न तिष्ठामि। न जीवामीत्यर्थः। अन्यथा मरणेन विना त्वं मम भावमनुरागं नावगन्तासि नावगमिष्यासि। अत एव सुनाथ सुस्वामिन्, अत एव जीवाभ्यधिक प्राणेभ्योऽप्यतिप्रिय ! त्वदर्थमुक्तासुतया त्वदर्थं त्यक्तप्राणतया कृत्वा मां त्वदेकिकां त्वम् एकः केवलो यस्या एवंविधां त्वदेकशरणां प्रतीहि जानीहि। यत्प्राणेभ्योऽधिकं तदर्थमेव प्राणास्त्यज्यन्ते। त्वं च मम प्राणाधिकः शोभनस्वामी च। शोभनश्च स्वामी सेवकं स्वार्थं त्यक्तप्राणं ज्ञात्वाऽनुकम्पत इत्यर्थः। त्वदर्थं भैम्या प्राणास्त्यक्ता इति लोकमुखादाकर्ण्य स्वस्मिन्ममानुरागं ज्ञास्यति नान्यथेति मरणमेव युक्तमिति भावः। असूनां नाथ, अत एव जीवाभ्यधिक, इति वा न सुनाथोऽसुनाथः। सुनाथः केनचिद्व्यापारेण सेवकं स्वानुरागिणं जानाति। त्वं तु असुनाथत्वात्प्राणव्ययेन विना न जानासीत्युपालम्भोऽपि सूचितः। आशु नाथ इति क्वचित्। शिष्ये, दैवादिकस्य शिषेर्लोडुत्तमैकवचनम्। म्रिये, लडुत्तमैकवचनम्। त्वदेकिकाम्, 'शेषाद्विभाषा ५।४।१५४' इति कप् ॥ १४९ ॥

महेन्द्रहेतेरपि रक्षणं भया-
द्यदर्थिसाधारणमस्त्रभृद्व्रतम्।
प्रसूनबाणादपि मामरक्षतः
क्षतं तदुच्चैरवकीर्णिनस्तव ॥ १५० ॥

महेन्द्रेति ॥ महेन्द्रहेतेरिन्द्रायुधादपि यद्भयं तस्माद्यद्रक्षणम्, यद्वा—भयहेतोर्वज्राद्रक्षणम्, तत् अस्त्रभृतां शूराणां व्रतम् अर्थिषु शरणागतेषु साधारणम्। पुरुषो रक्षणीयो, न तु स्त्रीति, स्त्री रक्षणीया, न तु पुमानिति पक्षपातरहितं क्षत्रियाणां व्रतं नियमः। तत् अवकीर्णिनो

१ अत्रानुप्रासः, विधोर्नलमुखसादृश्याय भैम्यङ्घ्रिसम्भिन्निजलाञ्छनमार्जनाद्वधूवधलाञ्छनप्राप्तिवचनादनर्थोत्पत्तिरूपो विषमालङ्कारः। २ तृणवदित्युपमा।

१ अत्र स्तव इत्यादावनुप्रासः न मुद्वतीति दृष्टान्तः। २ जीवतोऽभ्यधिकत्वोक्तिरित्यतिशयोक्तिः।

भग्नव्रतस्य तव व्रतमुच्चैरतितरां क्षतं विनष्टम् । यतः—प्रसूनवाणात्कामात्, प्रसूनरूपाद्वाणाद्वा मामरक्षतो रक्षणमकुर्वाणस्य । यः पुष्पादपि रक्षितुं न शक्नोति, स वज्रात्कथं रक्षितुं शक्ष्यतीति सम्भावनापि कुतस्त्येत्यपिशब्दार्थः ॥ १५० ॥

**तवास्मि मां घातुकमप्युपेक्षसे**
**मृषाऽमरं हाऽमरगौरवात्स्मरम् ।**
**अवेहि चण्डालमनङ्गमङ्ग तं**
**स्वकाण्डकारस्य मधोः सखा हि सः१ ॥१५१॥**

तवेति ॥ अहं तवास्मि त्वं तु मां घातुकं हन्तारं मृषाऽमरं मिथ्यादेवं स्मरममरगौरवात् देवत्वबुद्ध्या उपेक्षसे । हा कष्टम् । अनुचितमेतत् । देवत्वबुद्धिं त्यक्त्वा एनं मारयेति भावः । अन्योऽपि स्वीयं मारयन्तं नोपेक्षते, किं तु तं हन्ति एव । कामस्य मृषाऽमरत्वमाह—अङ्ग प्रियतम ! तम् अनङ्गं चण्डालमेवावेहि जानीहि । चण्डाले दया नोचिता, हि यस्मात् स कामः स्वकाण्डकारस्य स्वस्य काण्डाः पुष्पलक्षणा बाणास्तेषां निष्पादकस्य मधोर्वसन्तस्य सखा । वसन्ते पुष्पबाहुल्यात्स एव कामकाण्डकारः।चण्डाल एव काण्डकारो भवति।'तत्सं-, सर्गी च पञ्चमः' इति वचनात्कामस्यापि चण्डालत्वम्, तस्मान्मृषाऽमरत्वं कामस्य । अङ्गुल्याद्यङ्गकर्तनाच्चण्डालोऽप्यनङ्गो भवति । तस्मान्मारयैनमिति भावः। चण्डालोऽपि मारणार्थं विश्वासजनकं वेषं गृह्णाति । मां 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९' इति षष्ठीनिषेधः । काण्डकारः, 'कर्मण्यण् ३।२।१' ॥ १५१ ॥

**लघौ लघावेव पुरः परे बुधै-**
**र्विधेयमुत्तेजनमात्मतेजसः ।**
**तृणे तृणेढि ज्वलनः खलु ज्वल-**
**न्क्रमात्करीषद्रुमकाण्डमण्डलम् १५२॥**

लघाविति ॥ बुधैः पण्डितैः लघौ लघौ अल्पतरे परे शत्रौ पुरः प्रथममात्मतेजसः उत्तेजनं सन्धुक्षणं विधेयं करणीयम् । अल्पवैरिजयाभ्यासेन महान्वैरी जेतव्यः । अल्पतरः शत्रुः सर्वथा नोपेक्षणीय इत्यर्थः । खलु यस्माज्ज्वलनोऽग्निः तृणे निःसारेऽधिकरणे ज्वलन् क्रमात्परिपाट्या करीषं शुष्कगोमयचूर्णं द्रुमकाण्डमण्डलं वृक्षस्कन्धसमूहं च तृणेढि हिनस्ति ज्वलयति । यथा तेजस्विनामवधिरग्निरप्यादावल्पं शत्रुं नाशयति, पश्चान्महान्तमिति तथा त्वयापि कर्तव्यम् । मदनो नोपेक्षणीय इति भावः। तृणेढि, 'तृणह इम् ७ । ३ । ९२' ढत्वादि । हीनतयाऽपि कामस्यावगणना न कर्तव्येत्यर्थः ॥१५२॥

**सुरापराधस्तव वा कियानयं**
**स्वयंवरायामनुकम्पता मयि ।**
**गिराऽपि वक्ष्यन्ति मखेषु तर्पणा-**
**दिदं न देवा मुखलज्जयेव ते ॥ १५३ ॥**

सुरेति ॥ वा सम्भावनायाम् । स्वयं स्वानुरागेणवे या वृणुते, न तु केनचित्प्रेरिता तादृश्यां स्वयंवरायां मयि मदङ्गीकारलक्षणा याऽनुकम्पता दयालुत्वम् अयं तव सुरेषु विषयेऽपराधः कियान्वा । अपि त्वल्पतरः । मयि धर्मपत्न्यां मखेषु त्वत्कृतात्तर्पणात्तृप्तिहेतोः मुखलज्जयेव मुखदाक्षिण्येनेव ते देवा इदं त्वया दूत्येऽस्माकमपराद्धमितीदं गिराऽपि न वक्ष्यन्ति । अन्तःकरणे न धारयिष्यन्तीति किं वाच्यम् । मयैव स्वेच्छावरणात्स्वल्पोऽपि तवापराधो नास्तीत्यर्थः।सर्वथा त्वयाऽहमनुग्राह्येति भावः। ते तव मुखलज्जयेति वा । अन्योऽपि बहूपकारिणाऽल्पतरेऽपराधे कृतेऽपि तन्मुखदाक्षिण्यात्किमपि न वक्ति।स्वयंवरा, पचाद्यच् ॥ १५३ ॥

**व्रजन्तु ते तेऽपि वरं स्वयंवरं**
**प्रसाद्य तानेव मया वरिष्यसे ।**
**न सर्वथा तानपि न स्पृशेद्दया**
**न तेऽपि तावन्मदनस्त्वमेव वा ॥१५४॥**

व्रजन्त्विति ॥ ते देवा अपि स्वत्सम्बन्धिनं वरं श्रेष्ठं स्वयंवरदेशं वरं कामं वा व्रजन्तु । तानेवेन्द्रादीन्प्रसाद्य प्रसन्नान्कृत्वा मया त्वं वरिष्यसे । त्वद्वरणार्थमागतास्त्वया प्रत्युक्ताः कथं प्रसन्नाः स्युरित्यत आह—नेति । दया तानिन्द्रादीनपि सर्वथा लेशतोऽपि न स्पृशेदिति न, अपि तु स्पृशेदेव । ते मय्यल्पां दयां करिष्यन्त्येवेत्यर्थः । यतः—तेऽपि देवाः तावत् मदनो न भवन्ति, त्वमेव वा

१ अत्र त्वया सर्वथा रक्षणं विधेयमित्युक्तस्यार्थस्य समर्थनायैव परार्धोक्तिरिति काव्यलिङ्गम् । २ अत्रानुप्रासः, चण्डालं तमिति रूपकम्, तस्य च समर्थनाय स्वेत्याद्युक्तेः काव्यलिङ्गं च ।

१ अत्रानुप्रासो यमकं च । ज्वलनः खल्वित्युत्प्रेक्षेति केचित्, अर्थान्तरन्यास इत्यपरे । २ अत्र इदं नेत्यादौ काव्यलिङ्गम् ।

भवन्ति । जगति द्वावेव युवां निष्कृपौ युवां विना सकलं जगत् । सदयमेव । ते सकृपाः स्वयंवरे कौतुकावलोकनार्थं सुखेनागच्छन्त्विति भावः । त्वं वा नैवेति वान्वयः ॥ १५४ ॥

इतीयमालेख्यगतेऽपि वीक्षिते
त्वयि स्मरव्रीडसमस्ययाऽनया ।
पदे पदे मौनमयान्तरीपिणी
प्रवर्तिता सारघसारसारणी ॥ १५५ ॥

इतीति ॥ हे नल ! ( इति सखीवचनम् ) अनया भैम्या इयम् पूर्वोक्तप्रकारेण मयोदिता सरघाभिर्मधुमक्षिकाभिः कृतस्य मधुनः सारस्य श्रेष्ठविभागभूतस्यातिमधुरस्य सारणी नदी प्रवर्तिता । किंभूता—पदे पदे वचने वचनेऽन्तरायकारित्वान्मौनमयान्तरीपिणी मौनरूपद्वीपवती । किम्भूतयाऽनया—आलेख्यगते पटादिलिखितचित्रप्राप्ते चित्ररूपेऽचेतनेऽपि वीक्षिते त्वयि विषये स्मरव्रीडयोः कामलज्जयोः समस्या सङ्क्षेपो मिश्रीभावो यस्यां सा तया । कामलज्जावत्येवेत्यर्थः । कामवशाद्वक्ति, लज्जावशाच्च तूष्णीमास्त इति भावः । नद्यापि स्थाने स्थानेऽन्तरीपिणी भवति अनयाऽपि विषमया समस्यया पदे पदे मौनं भवति । चित्ररूपेऽचेतनेऽपि त्वयि दृष्टेऽनुरागिणोन्मादवशाद्यथैवमुक्तं,तस्याः सचेतनस्य तव साक्षात्कारे जाते सत्यन्यवरणे शङ्कापि कथंकारं कर्तुमर्हा । अपि तु न कथंचित् । तस्मादिन्द्रादिवरणाविषयमतः परं त्वयाऽपि किमपि न वाच्यमिति भावः । 'सरघा मधुमक्षिका' इत्यमरः । सरघाभिः कृतमित्यर्थे 'मक्षिकादिभ्योऽण्' इति प्रकृते 'तद्विशेषेभ्यश्च' इति वार्तिकायोगविभागाद्वाऽण् । सारयति पातयति तीरमिति सारणी । बहुलवचनात्कर्तरि ल्युट् ॥ १५५ ॥

चण्डालस्ते विषमविशिखः स्पृश्यते दृश्यते न-ख्यातोऽनङ्गस्त्वयि जयति यः किंतु कृत्ताङ्गुलीकः । कृत्वा मित्रं मधुमधिवनस्थानमन्तश्चरित्वा—सख्याः प्राणान्हरति हरितस्त्वद्यशस्तज्जुषन्ताम् ॥ १५६ ॥

१ अत्र यमकमनुप्रासश्च । अत्र विनोक्तिर्ध्वन्यते ।
२ अत्रानुप्रासो, यमकं च शब्दालङ्कारौ । समस्यया प्रवर्तितत्वासम्भवेऽपि तथोक्तेरतिशयोक्तिः ।

चण्डाल इति ॥ विषमविशिखः कामः ते तव त्वत्सम्बन्धी चण्डालः किंतु चण्डाङ्कुरान् शरान् आ समन्ताल्लाति आदत्ते । चाण्डालोऽपि विषमविशिखो भवति क्रूरबाणः । अथ च विषेण मीयन्ते इति विषमा विशिखा यस्य । विषलिप्तबाण इत्यर्थः । न स्पृश्यते न दृश्यते । यतः—त्वयि जयति सर्वोत्कर्षेण विद्यमाने । अथ च सौन्दर्येण पराभवितरि । सोऽनङ्ग इति ख्यातः । चण्डालत्वादनङ्गत्वाच्च न स्पृश्यते न दृश्यते । अनङ्गत्वमाह—यतः—कृत्ता छिन्ना कनिष्ठाङ्गुली यस्य छिन्नाङ्गुलीकः । चण्डालो हि च्छिन्नाङ्गुलीको भवतीति चण्डालजातिः । तस्य चण्डालकर्माह—अधिवनस्थानं वनस्थानमध्ये मधुं वसन्तं मित्रं कृत्वा वसन्तेनोद्दीपितः अन्तः हृदयं चरित्वा प्रविश्य, अथ च वनेषु मधुप्रधानं मद्यपं मित्रं कृत्वा स्वयं पीत्वा गृहमध्ये प्रविश्य, सख्या भैम्याः प्राणान्हरति । सख्या अन्तश्चरित्वेति वा । प्राणगमनपर्यवसायिनीं पीडां करोति, अथ च प्राणानेव मुष्णाति । तत्तस्माद् हरितो दिशः त्वद्यशो जुषन्तां सेवन्ताम् । त्वद्दासेन तेनैवं कृते सर्वदिग्व्यापिनी तव कीर्तिर्भवत्विति सोल्लुण्ठनं वचनम् । त्वय्यनुरागबाहुल्यात्त्वत्प्राप्त्यभावात्त्वद्विषयो मदनः सखीं पीडयतितराम् । ततश्च तवाकीर्तिर्भवति, तस्माद्यथाऽस्याः पीडा शाम्यति, तव चाकीर्तिर्न भवति तथैव त्वया विधेयम्, न त्वन्यथेति भावः । 'जगति' इति पाठे जगति अनङ्गः ख्यातः । तु पुनः अयि नल, इति पदम् ॥ १५६ ॥

अथ भीमभुवैव रहोऽभिहितां
नतमौलिरपत्रपया स निजाम् ।
अमरैः सह राजसमाजगतिं
जगतीपतिरभ्युपगत्य ययौ ॥ १५७ ॥

अथेति ॥ अथ स जगतीपतिर्ययौ जगाम । किं कृत्वा—देवैः सह त्वया आगन्तव्यमिति भीमभुवैव भैम्यैवाभिहितां रह एकान्ते उक्तां निजां स्वीयाममरैः सह राजसमाजं स्वयंवरदेशं प्रति गतिमभ्युपगत्याङ्गीकृत्य । किम्भूतः—अपत्रपया इन्द्रादिकार्याकरणाल्लज्जया नतमौलिरधोमुखः ॥ १५७ ॥

१ अत्र मन्दाक्रान्ता छन्दः, 'मन्दाक्रान्ता जलधिषडगैम्भौ नतौ ताद्गुरू चेत् ।' इति तल्लक्षणात् । अनुप्रासः शब्दालङ्कारः, विषमविशिखस्य चण्डालत्वरूपणाद्रूपकम् । निन्दाया निन्दयोक्त्या व्याजनिन्दा च ।
२ अत्र तोटकं छन्दः, 'यदि तोटकमम्बुधिसैः प्रथितम्' इति तल्लक्षणात् । राजसमाजेत्यादावनुप्रासः, अमरैः सहेति सहोक्तिश्च ।

श्वस्तस्याः प्रियमाप्तुमुद्धुरधियो धाराः सृजन्त्या रया-न्नम्रोन्नम्रकपोलपालिपुलकैर्वेतस्वतीरश्रुणः। चत्वारः प्रहराः स्मरार्तिभिरभूत्सापि क्षपा दुःक्षया-त्तत्तस्याः कृपयाऽखिलैव विधिना रात्रिस्त्रियामा कृता१५८

श्व इति॥ तस्या भैम्याश्चत्वारः प्रहराः सापि एकापि क्षपा चतुःप्रहररूपा रात्रिः वियोगस्य दुःसहत्वात्स्मरार्तिभिः कामपीडाभिः कृत्वा यस्मात् दुःक्षयाऽतिवाहितुमशक्याभूत्, तत्तस्माद्धेतोः विधिना ब्रह्मणा तस्यां भैम्यां कृपयेवाखिला चतुःप्रहराऽपि रात्रिः, अथ च प्रतिदिनभाविनी सर्वापि रात्रिः, त्रियामा त्रिप्रहरा कृता। रात्रेरेकः प्रहरो हृत इत्यर्थः। आद्यन्तयोश्चतसृषु घटीषु दिनव्यवहारात्त्रियामेति क्षीरस्वामी। सा सा रात्रिस्तया महता कष्टेनातिक्रान्तेति भावः। किम्भूतायास्तस्याः—श्वः परेद्यवि प्रियं नलमाप्तुं प्राप्तुमुद्धुरोत्कण्ठिता धीर्यस्या उत्सुकायाः। तथा—अश्रुणो धाराः सृजन्त्याः, वियोगवशाद्बाष्पधाराप्रवाहान् रयाद्वेगेन सृजन्त्याः विस्तारयन्त्याः। किम्भूता धाराः—नम्रोन्नम्रैरुन्नतानतैः कपोलपाल्याः पुलकैः रोमाञ्चैः कृत्वा वेतस्वतीर्बहुवेतसयुक्ताः। रयाद्वा नम्रोन्नम्रत्वम्। नदीष्वपि नम्रोन्नम्रा वेतसा भवन्ति। वेतस्वतीः 'कुमुदनडवेतसेभ्यो ड्मतुप् ४।२।९१' इति ड्मतुप्॥ १५८॥

तदखिलमिह भूतं भूतगत्या जगत्याः
पतिरभिलपति स्म स्वात्मदूतत्वतत्त्वम्।
त्रिभुवनजनयावद्वृत्तवृत्तान्तसाक्षा-
त्कृतिकृतिषु निरस्तानन्दमिन्द्रादिषुद्राक्॥

तदखिलमिति॥ जगत्याः पतिर्नल इह भैमीविषये भूतं जातमखिलं तत्स्वात्मदूतत्वतत्त्वं स्वीयं दूत्यं तस्य तत्त्वं याथार्थ्यं भूतस्य परमार्थस्वरूपभूतस्य वृत्तस्य गत्या प्रकारेण प्रथमं मया निष्कपटं दूत्यं कृतम्, अनन्तरमुन्मदिष्णुना मयात्मप्रकाशनं कृतमित्यादिस्वरूपेण भूतस्य सत्यस्य प्रकारेण वा इन्द्रादिषु द्राक् शीघ्रं निरस्तानन्दमकृतकार्यत्वाल्लज्जावशाच्च त्यक्तहर्षं यथा तथाभिलपति स्म कथयति स्म। यथावृत्तमेवाकथयदित्यर्थः, किंभूतेष्विन्द्रादिषु—त्रिभुवने जनानां यावान्वृत्तो निष्पन्नो वृत्तान्तः समाचारस्तस्य साक्षात्कृतौ प्रत्यक्षीकरणे कृतिषु कुशलेषु। त्रिभुवन—इत्यादिना निष्कपटं दूत्यं कृतमित्यादावेव तैर्ज्ञातमिति सूचितम्॥ १५९॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्। संदृब्धार्णववर्णनस्य नवमस्तस्य व्यरंसीन्महा-काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः॥ १६०॥

श्रीहर्षमिति॥ अर्धं पूर्ववत्। संदृब्धो गुम्फितः अर्णववर्णनाख्यो ग्रन्थो येन। अर्णववर्णनाख्योऽपि ग्रन्थस्तेन कृत इत्यर्थः। व्यरंसीत्, 'व्याङ्परिभ्यो रमः १।३।८३ (पा०)' इति परस्मैपदम्। 'यमरमनमातां सक् च' इतीट्सगागमौ॥ १६०॥

इति श्रीवेदरकरोपनामश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे नवमः सर्गः॥

## दशमः सर्गः।

इदानीं स्वयंवरस्य पूर्वरङ्गवर्णनार्थं दशमं सर्गमारभते—

रथैरथायुः कुलजाः कुमाराः
शस्त्रेषु शास्त्रेषु च दृष्टपाराः।
स्वयंवरं शंबरवैरिकाय-
व्यूहश्रियः श्रीजितयक्षराजाः॥ १॥

रथैरिति॥ अथ कुमाराः प्रादुर्भूततरुणिमानो राजानो रथैः कृत्वा प्रारब्धवरं स्वयंवरमायुराजग्मुः। किम्भूताः पूर्वमाकारिताः कुलजाः कुलीनाः शस्त्रेषु धनुरादिषु, शास्त्रेषु वेदादिशास्त्रेषु च दृष्टपाराः प्राप्तपर्यन्ताः समन्त्रकशस्त्रप्रयोगोपसंहारविदो वेदादिशास्त्रविदश्च तथा शम्बरवैरी कामस्तस्य कायव्यूहः शम्बरजयार्थं मायया गृहीतो यः शरीरसङ्घः तद्वच्छ्रीः शोभा येषाम्। कामशरीरसङ्घा एव ते युवान इत्यर्थः। तथा—श्रिया

१ अत्र शार्दूलविक्रीडितं वृत्तम्। अनुप्रासः शब्दालङ्कारः, रात्रेस्त्रियामात्वोत्प्रेक्षणादुत्प्रेक्षा, कृपयेवेत्युत्प्रेक्षायाः प्रतीतेरुत्प्रेक्षाध्वनिः।

१ अत्र मालिनी छन्दः, अनुप्रासो यमकं च शब्दालङ्कारौ।
२ अस्मिन् सर्गे प्राय उपेन्द्रवज्रेन्द्रवज्रयोर्लक्षणमेलनादुपजातिः, क्वचित्तयोर्भिन्नतयाऽपि सम्भवः।

लक्ष्म्या कृत्वा जितो यक्षराट् कुबेरो यैस्ते । कुबेरादप्यधिकसम्पद इति यावत् स्वयंवरस्थानं कुण्डिनं प्राप्ता इत्यर्थः । अन्यवाहनादिसद्भावेऽपि संपदाधिक्यसूचनार्थं महारथत्वादिप्रशंसासूचनार्थं च रथपदम् । एतैर्विशेषणैर्वरोचिता गुणाः कथिताः । यदुक्तम्—'कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥' प्रथमतः शास्त्रग्रहणं क्षत्रियाणां शास्त्रापेक्षयाऽभ्यर्हिततरत्वसूचनार्थम् । आयुः, आङ्पूर्वस्य यातेर्लङि ॥ १ ॥

**नाभूदभूमिः स्मरसायकानां**
**नासीदगन्ता कुलजः कुमारः ।**
**नास्थादपन्था धरणेः कणोऽपि**
**व्रजेषु राज्ञां युगपद्व्रजत्सु ॥ २ ॥**

नाभूदिति ॥ कुलजः कुलीनः कोऽपि कुमारः स्मरसायकानामभूमिरगोचरो नाभूत् । किंतु स्वयंवरश्रवणेन कामबाणपीडित एवाभूत् । तथा—अगन्ता नासीत् । सर्वेऽपि स्वयंवरे गता एवेत्यर्थः । राज्ञां व्रजेषु युगपद्व्रजत्सु सत्सु धरणेः पृथिव्याः कणोऽप्यणुरूपोऽपि देशः अपन्था नास्थान्न स्थितः किंतु बहुमार्गोऽभूदित्यर्थः । अस्थादिति 'गातिस्थाघुपाभूभ्यः—२। ४ ।' इति सिचो लुक् ॥ २ ॥

**योग्यैर्व्रजद्भिर्नृपजां वरीतुं**
**वीरैरनर्हैः प्रसभेन हर्तुम् ।**
**द्रष्टुं परैस्तान्परिकर्तुमन्यैः**
**स्वमात्रशेषाः ककुभो बभूवुः ॥ ३ ॥**

योग्यैरिति ॥ कुलादिना योग्यैर्नृपजां भैमीं वरीतुं व्रजद्भिर्नृपैः, तथा—अनर्हैः कुलादिना अयोग्यैः प्रसभेन हठेन हर्तुं व्रजद्भिः वीरैः शूरैः, तथा—स्वयंवरकौतुकं द्रष्टुं व्रजद्भिः परैरुदासीनैः, तथा—तान्सर्वानपि परिकर्तुं सेवितुं व्रजद्भिरन्यैः वेतनग्राहिभिः दासीभूतैर्जनैः कृत्वा तैर्निर्गमितैः ककुभो दिशः स्वमात्रशेषाः स्वमात्रावशिष्टाः बभूवुः । सर्वेऽपि जनाः स्वयंवरे गता इति भावः । 'अनुरोद्धुम्' इति पाठे स एवार्थः ॥ ३ ॥

**लोकैरशेषैरवनिश्रियं ता-**
**मुद्दिश्य दिश्यैर्विहिते प्रयाणे ।**
**स्ववर्तितत्तज्जनयन्त्रणार्ति-**
**विश्रान्तिमापुः ककुभां विभागाः ॥४॥**

पूर्वोक्तमेवार्थमाह—

लोकैरिति ॥ अशेषैः सकलैः दिश्यैर्दिग्भवैर्लोकैरवनेः पृथिव्याः श्रियं लक्ष्मीं तां भैमीमुद्दिश्य प्रयाणे विहिते सति ककुभां दिशां विभागाः स्वस्मिन्वर्तिनो वर्तमानाः *ते ते जना अनेकजातीया बहुसंख्याका ये जनास्तैः* कृत्वा या यन्त्राणां संकटजा तया आर्तिः पीडा ततो विश्रान्तिं सुखावस्थानमापुः । भाररहित्यात्सोच्छ्वासा जाता इत्यर्थः । दिश्यैः दिगादित्वाद्यत् ॥ ४ ॥

**तलं यथेयुर्न तिला विकीर्णाः**
**सैन्यैस्तथा राजपथा बभूवुः ।**
**भैमीं स लब्धामिव तत्र मेने**
**यः प्राप भूभृद्भवितुं पुरस्तात् ॥ ५ ॥**

तलमिति ॥ ऊर्ध्वं विकीर्णा अतिसूक्ष्मास्तिला अपि यथा तलं भूतलं न ईयुरधो न पेतुः, तथा सैन्यैः कृत्वा राजपथा राजमार्गा बभूवुः । सैन्यबाहुल्यादतिसंकीर्णा जाता इति भावः । तत्रातिसंकटेषु राजपथेषु यो भूभृत् राजा पुरस्तादग्रे भवितुं गन्तुं प्राप शशाक स भैमीं लब्धामिव लब्धप्रायाम् मेने । एते यावदागच्छन्ति तावत्पुरोगतं मामेव भैमी वरीष्यत इति मेने इत्यर्थः । सर्वोऽप्यहमहमिकयाऽग्रे गन्तुमैच्छादिति भावः । 'तथा पथाऽभावि महीमहेन्द्रैः' इति पाठे राजभिः पथा मार्गेण तथा जातमिति व्याख्येयम् ॥ ५ ॥

**नृपः पुरस्थैः प्रतिबद्धवर्त्मा**
**पश्चात्तनैः कश्चन नुद्यमानः ।**
**यन्त्रस्थसिद्धार्थपदाभिषेकं**
**लब्ध्वाप्यसिद्धार्थममन्यत स्वम् ॥ ६ ॥**

---

१ अत्रानुप्रासो यमकं च शब्दालङ्कारौ । व्यूहश्रिय इत्यादावुपमाऽतिशयोक्तिश्च सङ्कारात्मनाऽवस्थितावर्थालङ्कारौ । २ अत्रानुप्रासः, कणोऽप्यपन्था नाभूदित्यसम्भवेऽपि सम्भवोक्तिरतिशयोक्तिः ।

१ ककुभां स्वमात्रशेषत्वायोगेऽपि तथोक्तेरतिशयोक्तिः । २ अत्रानुप्रासः, अवनिश्रीत्वेन रूपणाद्रूपकम् । ३ यथेत्युपमा, लब्धामिवेत्युत्प्रेक्षा ।

नृप इति ॥ पुरःस्थैरग्रे स्थितैः मनुष्यादिभिः प्रतिवद्धवर्त्मा तथा पश्चात्तनैः पश्चात्स्थितैः नुद्यमानः पुरः प्रेर्यमाणः कश्चन नृपः यन्त्रस्थाः तैलाकर्षणयन्त्रस्थाः सिद्धार्थाः सर्षपास्तेषां पदे स्थानेऽभिषेकं लब्ध्वाप्यूर्ध्वाधःस्थितपाषाणनिष्पीडितसर्षपावस्थां लब्ध्वाऽपि स्वमात्मानमसिद्धार्थमकृतकार्यममन्यत सर्षपपदाभिषिक्तोऽपि सर्षपो न भवतीति विरोधद्योतकोऽपिशब्दः । कथञ्चिदपि पुरो गन्तुमशक्तत्वाद्भैमीप्राप्तिर्मम न भविष्यतीति मृतमायत्वाच्चातिदुःखितोऽभूदिति भावः । 'दक्षिणापश्चात्पुरसस्त्यक् ४ । २ । ९८' इति विशेषविहितेन त्यका टचुटचुलोर्बाधस्य युक्तत्वात्पाश्चात्यैरिति भाव्यम् । पश्चात्तनैरिति शिष्टप्रयोगदर्शनान्महाविभाषानुवृत्तेर्वा समर्थनीयम् ॥ ६ ॥

राज्ञां पथि स्त्यानतयाऽऽनुपूर्व्या
विलङ्घनाशक्तिविलम्बभाजाम् ।
आह्वानसञ्ज्ञानमिवाग्रकम्पै-
र्ददुर्विदर्भेन्द्रपुरीपताकाः ॥ ७ ॥

राज्ञामिति ॥ विदर्भेन्द्रपुरीपताका अग्रकम्पैः कृत्वा राज्ञामाह्वानसंज्ञानमाह्वानसंकेतं ददुरिव । झटित्यायात, विलम्बं मा कार्ष्टेत्यादिष्टवत्य इवेत्यर्थः । किंभूतानां राज्ञाम्—पथि स्त्यानतयाऽतिसंकटतया निमित्तभूतया कृत्वा आनुपूर्व्या कृत्वा या विलङ्घना गतिः, तत्राशक्त्याऽऽसामर्थ्येन विलम्बभाजाम् । अन्योऽपि विलम्बेन पश्चादायान्तं हस्तादिनाऽऽह्वयति । दूरात्कुण्डिननगरीपताकास्तैर्दृष्टा इति भावः । स्त्यानम्, 'स्त्यै शब्दसङ्घातयोः' इत्यस्य 'संयोगादेरातो धातोर्यण्वतः ८ । २ । ४३' इति निष्ठानत्वम् । पूर्वं पूर्वमनुगतोऽनुपूर्वः तस्य भाव आनुपूर्वी औचितीवत् ॥ ७ ॥

प्राग्भूय कर्कोटक आचकर्ष
सकम्बलं नागबलं यदुच्चैः ।
भुवस्तले कुण्डिनगामि राज्ञां
तद्वासुकेश्चाश्वतरोऽन्वगच्छत् ॥ ८ ॥

प्रागिति ॥ कर्कः श्वेतोऽश्वः, अटतीत्यटकः द्रुतगतिः सन्प्राग्भूय पुरो भूत्वा उच्चैरतिशयेन भुवस्तले भूपृष्ठे कुण्डिनगामि सकम्बलं नानावर्णकुथसहितं सप्रावरणं च यद् राज्ञां नागबलं हस्तिसैन्यमाचकर्ष । तन्नागबलमश्वतरो वेसरोऽन्वगच्छत् । करिसैन्यस्य पुरस्तात्पश्चाच्चाश्वा गच्छन्तीति सेनारीतिः । अथ च—कर्कोटकः सर्पविशेषः प्राग्भूय पुरस्तात् भूत्वा उच्चैः सकम्बलं कम्बलाख्येन सर्पेण सहितं भुवः तले पाताले स्थितं कुण्डिनगामि वासुकेः यन्नागबलं सर्पबलमाचकर्ष पातालतः कुण्डिनपुरमानीतवान् । अश्वतरनामा सर्पः तन्नागबलमन्वगच्छत् । सर्वं सर्पबलं वृद्धानुक्रमेण कुण्डिनमायातम् । सर्वेऽपि राजानो वासुकिप्रमुखाः सर्पाश्च स्वयंवरार्थं ससैन्याः कुण्डिनमागता इति भावः । 'कम्बलो नागभेदे स्यात्कुप्यप्रावारयोरपि' इति विश्वः । प्राग्भूय, च्व्यन्त ( गति ) समासत्वाल्ल्यप् । अश्वतरः, पक्षे 'वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे' इति तरप् । 'अधःस्वरूपयोरस्त्री तलं स्यात् ।' इत्यमरः ॥ ८ ॥

आगच्छदुर्वीन्द्रचमूसमुत्थै-
र्भूरेणुभिः पाण्डुरिता मुखश्रीः ।
विस्पष्टमाचष्ट हरिद्वधूनां
रूपं पतित्यागदशाऽनुरूपम् ॥ ९ ॥

आगच्छदिति ॥ हरिद्वधूनां दिग्वधूनां मुखश्रीः प्रारम्भशोभा मुखशोभा च पतिभिः कृतस्त्यागस्तेन या दशा तस्या अनुरूपं योग्यं रूपं विस्पष्टमाचष्ट । किम्भूता—आगच्छन्त्युर्वीन्द्रचमूस्तया समुत्थैर्भूरेणुभिः पाण्डुरिता । स्वप्रियत्यागेनैतादृश्यवस्था स्त्रीणां भवतीति । दिग्वधूनामिन्द्रादयो राजानश्च पतयः । सर्वा अपि दिशो राजशून्याः सैन्यबाहुल्याद्रजोधूसराश्च जाता इति भावः ॥ ९ ॥

आखण्डलो दण्डधरः कृशानुः
पाशीति नाथैः ककुभां चतुर्भिः ।
भैम्येव बद्ध्वा स्वगुणेन कृष्टैः
स्वयंवरे तत्र गतं न शेषैः ॥ १० ॥

पतित्यागमेव विवृणोति—

आखण्डल इति ॥ ककुभां चतुर्भिरिति एतत्सञ्ज्ञकैः नाथैः तत्र स्वयंवरे गतम्, शेषैरन्यैर्देवैः न । इति किम्—आखण्डल इन्द्रः, दण्डधरः यमः, कृशानुः अग्निः, पाशी वरुण इति । किम्भूतैरिवेन्द्रादिभिः—भैम्या सौन्दर्यादिना स्वगुणेन बद्ध्वा कृष्टैरिव । 'यये तद्धुद्याहरसान्न शेषैः' इति क्वचित् ॥ १० ॥

---

१ लब्ध्वाऽपीति विरोधाभासः । २ संज्ञानमिवेत्युत्प्रेक्षा । १ अत्र श्लेषः । २ विस्पष्टमित्युत्प्रेक्षा, हरिद्वधूनामिति रूपकम् । ३ भैम्येवेत्युत्प्रेक्षा ।

मन्त्रैः पुरं भीमपुरोहितस्य
तद्बद्धरक्षं विशति क्व रक्षः ।
तत्रोद्यमं दिक्पतिराततान
यातुं ततो जातु न यातुधानः ॥ ११ ॥

शेषानागमने हेतुमाह—

मन्त्रैरिति ॥ रक्षो राक्षसो भीमपुरोहितस्य मन्त्रैः वेदोक्तैः बद्धरक्षं कृतरक्षणं तत्पुरं कुण्डिनं क्व कथं विशति । अपितु कथंचिदपि न । ततः तस्माद्यातुधानो नैर्ऋतो दिक्पतिः जातु कदाचित्कथंचिदपि तंत्र यातुमुद्यमं नाततान ॥ ११ ॥

कर्तुं शशाकाभिमुखं न भैम्या
मृगं दृगम्भोरुहतर्जितं यत् ।
अस्या विवाहाय ययौ विदर्भा-
स्तद्वाहनस्तेन न गन्धवाहः ॥ १२ ॥

कर्तुमिति ॥ गन्धवाहो वायुस्तेन कारणेनास्या भैम्या विवाहाय परिणेतुं विदर्भान्न ययौ । यतः—स मृगो वाहनं यस्य । यत् यतः कारणात् मृगं भैम्या अभिमुखं कर्तुं न शशाक । यतः—किम्भूतं मृगम् । भैम्या दृगम्भोरुहाभ्यां नेत्रकमलाभ्यां तर्जितं भर्त्सितम् । दृगम्भोरुहतर्जितत्वाद्भीतस्य मृगस्य गन्तुमसामर्थ्यादन्यस्य वाहनस्याभावात्तेन तत्र न गतमिति भावः । अन्योऽपि तर्जितस्तर्जकसंमुखं गन्तुं न शक्नोति ॥ १२॥

जातौ न वित्ते न गुणे न कामः
सौन्दर्य एव प्रवणः स वामः ।
स्वच्छस्वशैलेक्षितकुत्सबेर-
स्तां प्रत्यगान्न स्त्रितमां कुबेरः ॥१३॥

जाताविति ॥ कामो मदनो जातौ प्रवणो न आसक्तो न । तथा—वित्ते द्रव्ये प्रवणो न । तथा—गुणे प्रवणो न, किंतु स कामः सौन्दर्य एव प्रवणः । यतो वामो वक्रगतिर्मनोहरश्चेति विचार्य स्वच्छे निर्मले स्वशैले कैलासे ईक्षितं कुत्सं कुत्सितं बेरं वपुः नेत्रं वा येन एवंभूतः कुबेरः तां स्त्रितमां नारीश्रेष्ठां प्रत्युद्दिश्य नागात् । 'कन्या वरयते रूपम्' इति कन्याया रूप एव तात्पर्यात्, स्वस्य रूपाभावात्, कामप्राधान्यात् कन्याया जात्यादावतात्पर्यात्कुबेरः स्वयंवरे नागत इति भावः ॥ १३ ॥

भैमीविवाहं सहते स्म कस्मा-
दर्धं तनुर्या गिरिजाऽऽत्मभर्तुः ।
तेनाव्रजन्त्या विदधे विदर्भा-
नीशानयानाय तयाऽन्तरायः ॥ १४ ॥

भैमीति ॥ या गिरिजा पार्वती आत्मभर्तुर्हरस्यार्धं तनुः सती सा हरकर्तृकं भैमीविवाहं कस्मात्सहते स्म । अपि तु न सहते स्म । विदर्भान् अव्रजन्त्या तया पार्वत्या ईशानयानाय हरगमनाय तेन कारणेनान्तरायो विघ्नो विदधे कृतः । शरीरार्धत्वात्पार्वत्याः, कथं स गच्छतु । 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः ॥ १४ ॥

स्वयंवरं भीमनरेन्द्रजाया
दिशः पतिर्न प्रविवेश शेषः ।
प्रयातु भारं स निवेश्य कस्मि-
न्नहिर्महीगौरवसासहिर्यः ॥ १५ ॥

स्वयंवरमिति ॥ अधरदिशः पतिः शेषः भीमनरेन्द्रजायाः स्वयंवरं न प्रविवेश । कुतः—स शेषः कस्मिन्स्वसदृशे पृथ्वीभारं निवेश्य प्रयातु । योऽहिः सर्पो महीगौरवं भृशं सहते इति महीगौरवसासहिः । सासहिवावदिचाचलिपापतिप्रभृतय इकारान्ता निपातिताः ॥ १५ ॥

ययौ विमृश्योर्ध्वदिशः पतिर्न
स्वयंवरं वीक्षितधर्मशास्त्रः ।
व्ययोकि लोके श्रुतिषु स्मृतौ वा
समं विवाहः क्व पितामहेन ॥ १६ ॥

ययाविति ॥ वीक्षितं पर्यालोचितं धर्मशास्त्रं येनैवंविध ऊर्ध्वदिशः पतिर्ब्रह्मा विमृश्य धर्मतत्त्वं विचार्य स्वयंवरं न ययौ । विचारमेवाह—पितामहेन, अथ च

---

१ अत्रानुप्रासः, बद्धरक्षमिति तत इति च काव्यलिङ्गम् । २ यदित्युत्प्रेक्षा, दृगम्भोरुहकर्तृकतर्जितत्वासम्भवेऽपि तथोक्तेरतिशयोक्तिः, तेनेति काव्यलिङ्गम् ।

१ न प्रत्यगादिति वचनस्य समर्थनाय तथोक्तेः काव्यलिङ्गम्, न जातावित्यादौ दीपकं च । २ अत्रानुप्रासः, तेनेति हेतोरुत्प्रेक्षणाद्धेतूत्प्रेक्षा । ३ अत्र वेश शेष इत्यादावनुप्रासः, कस्मिन्नित्यनेन प्रयाणाभावे हेतूपन्यासात् काव्यलिङ्गम् ।

पित्रापित्रा समं विवाहः क लोके श्रुतिषु स्मृतौ वा व्यलोकि । लोकश्रुतिस्मृतिविरुद्ध इत्यर्थः । 'असमानार्षगोत्रजाम्' इति स्मृतिनिषेधात्पितृपित्रा सह विवाहस्यानुज्ञातत्वात्पितामहेन तत्र न गतमिति भावः । मन्वादिद्वारा स्वयमेव धर्मशास्त्रं प्रणीय कथमेवं कुर्यादिति भावः ॥ १६ ॥

भैमीनिरस्तं स्वमवेत्य दूती-
मुखात्किलेन्द्रप्रमुखा दिगीशाः ।
स्यदे मुखेन्दौ च वितत्य मान्द्यं
चित्तस्य ते राजसमाजमीयुः ॥ १७ ॥

भैमीति ॥ ते इन्द्रप्रमुखा दिगीशा इन्द्रादयो दिक्पालाः दूतीमुखात्स्वमात्मानं भैम्या निरस्तं निराकृतं किल निश्चयेनावेत्य ज्ञात्वा स्यदे गमने किमर्थमस्माभिस्तव गन्तव्यमित्युत्साहभङ्गान्मुखेन्दौ च चित्तस्य मान्द्यमालस्यं वितत्य विस्तीर्य राजसमाजमीयुर्जग्मुः । 'चिरस्य' इति पाठे शनैः शनैः । स्यदे मान्द्यं शनैस्त्वम्, मुखेन्दौ मान्द्यं मलिनता । एतन्मान्द्यद्वयेन चित्तस्यापि मान्द्यं प्रकाशितमिति भावः । 'स्यदो जवे ६।४।२८' इति साधुः ॥ १७ ॥

नलभ्रमेणापि भजेत भैमी
कदाचिदस्मानिति शेषिताशा ।
अभून्महेन्द्रादिचतुष्टयी सा
चतुर्नली काचिदलीकरूपा ॥ १८ ॥

नलेति ॥ सा महेन्द्रादिचतुष्टयी काचिदनिर्वचनीयालीकरूपा मिथ्यास्वरूपा चतुर्नल्यभूत् । किंभूता— दूतीमुखात्त्वस्मिन् भैमीविरागमाकर्ण्यापि इति शेषिताशावशिष्टाशा । इति किम्—भैमी नलभ्रमेणाप्यस्मान्कदाचिद्भजेतेति संभावनयेत्यर्थः । नलानुरक्ता भैमी नलभ्रान्त्याऽस्मानपि वृणुयादिति मिथ्याचतुर्नलीरूपा भूत्वा चत्वारोऽपीन्द्रादयस्तत्रागता इति भावः ॥ १८ ॥

प्रयस्यतां तद्भवितुं सुराणां
दृष्टेन पृष्टेन परस्परेण ।
नैवानुमेने नलसाम्यसिद्धिः
स्वाभाविकात्कृत्रिममन्यदेव ॥ १९ ॥

प्रयस्यतामिति ॥ न सः असः स भवितुं तद्भवितुं नलीभवितुं प्रयस्यतां प्रयत्नं कुर्वतां सुराणां मध्ये अयं नलतुल्यो जातो न वा इति दृष्टेनावलोकितेन । तथा अहं नलतुल्यो जातो न वा, इति कथय इति पृष्टेन परस्परेणान्योन्येन नलसाम्यसिद्धिः परस्परनलतुल्यत्वसिद्धिः नैवानुमेने नानुमता । त्वं नलसदृशो नाभूः, त्वमपि नलसदृशो नाभूरिति परस्परमूचुरित्यर्थः । यतः—स्वाभाविकात्सहजात् कृत्रिममन्यदेव । सहजस्य कृत्रिमस्य च महदन्तरं यस्मात्, ते नलसदृशा न जाता इति भावः । सुराणां नलसाम्यसिद्धिरिति वाऽन्वयः । 'तद्वैतसिद्धिर्न बतानुमेने' इति पाठे—द्वितैव द्वैतम्, प्रज्ञादित्वात्स्वार्थेऽण् । तस्य नलस्य द्वैतं तद्वैतं तस्य सिद्धिर्लाभो नानुमेने । बत खेदे ॥ १९ ॥

पूर्णेन्दुमास्यं विदधुः पुनस्ते
पुनर्मुखीचक्रुरनिद्रमब्जम् ।
स्ववक्त्रमादर्शतलेऽथ दर्शं
दर्शं बभञ्जुर्न तथाऽतिमञ्जु ॥ २० ॥

पूर्णेन्दुमिति ॥ ते देवाः पूर्णेन्दुं पूर्णिमाचन्द्रं पुनः पुनः आस्यं मुखं विदधुः चक्रुः । तथा—अनिद्रं विकसितमब्जं पुनःपुनः मुखीचक्रुः पूर्वं पूर्णम् चन्द्रं मुखीचक्रुः । तमयोग्यमिति ज्ञात्वा पश्चाद्विकसितं कमलम्, तदप्ययोग्यं ज्ञात्वा पुनरपि चन्द्रम्, तदनन्तरं पुनरपि कमलं मुखीचक्रुरिति पुनःशब्दयोरर्थः । अथ एवं कृतेऽपि आदर्शतले दर्पणमण्डले स्ववक्त्रं दर्शं दर्शमादरात्परीक्षकदृष्ट्या दृष्ट्वा बभञ्जुः भग्नीचक्रुः । यतः तथा नलमुखवदतिमञ्जु अतिसुन्दरं नाभूत् । पूर्णचन्द्रविकसितकमलाभ्यामपि नलमुखमतिसुन्दरमिति भावः । दर्शं दर्शम्, 'आभीक्ष्ण्ये णमुल्च ३ । ४ । २२' इति णमुल्, 'नित्यवीप्सयोः ८ । १ । ४ इति द्वित्वं च ॥ २० ॥

तेषां तदा लब्धुमनीश्वराणां
श्रियं निजास्येन नलाननस्य ।
नालं तरीतुं पुनरुक्तिदोषं
बहिर्मुखानामनलाननत्वम् ॥ २१ ॥

---

१व्यलोकि लोकैरित्यादावनुप्रासः,काव्यलिङ्गं च,पितामहेनेति श्लेषः, न ययावित्यर्थस्य समर्थनाय पराद्योक्तिरित्यर्थान्तरन्यासश्च । २ स्यदे मुखेन्दौ चेति दीपकम्, मुखेन्दाविति रूपकम्, राजसमाजेत्यनुप्रासोऽपि । ३ अत्रानुप्रासः ।

१ अत्र स्वाभावादित्यर्थान्तरन्यासः । २ अत्रातिशयोक्त्यनुप्राणितं रूपकं, व्यतिरेकश्च ।

तेषामिति ॥ तदा नलरूपनिर्माणावसरे निजास्येन नलाननस्य श्रियं नलाननशोभां लब्धमनीश्वराणामसमर्थानां तेषां बर्हिर्मुखानां देवानामनलाननत्वमग्निमुखत्वं कर्तुम् अथ च नलाननतुल्याननत्वराहित्यं पुनरुक्तिलक्षणं दोषं तरीतुं परिहर्तुम् अलं समर्थं नाभूत् । 'अग्निमुखा वै देवाः' इति पूर्वं श्रुतिसिद्धम् । एवमेषां वह्निमुखत्वे पुनर्वह्निमुखत्वं पुनरुक्तम्, अथ च पूर्वमपि नलाननतुल्याननत्वराहित्ये सिद्धेऽलीकनलीभवनानन्तरं पुनरपि नलाननत्वराहित्यात्पुनरुक्तमेव जातम् । शब्दच्छलात्पौनरुक्त्यमित्यर्थः । त्वन्मुखं नलमुखसदृशं कथंचिदपि नाभूदिति भावः। अन्यस्याप्यसमर्थस्याप्रतिभस्याननं पुनरुक्तिदोषं परिहर्तुं न शक्नोतीत्युक्तिः । 'बर्हिः कुशहुताशयोः' इति विश्वः ॥ २१ ॥

**प्रियावियोगक्कथितादिवैला-**
**च्चन्द्राच्च राहुग्रहपीडितात्ते ।**
**ध्मातादवेन स्मरतोऽपि सारैः**
**स्वं कल्पयन्ति स्म नलानुकल्पम् ॥२२॥**

प्रियेति ॥ ते देवा प्रियावियोगेनोर्वशीविरहेण क्कथितादिव ऐलात्पुरूरवसः, तथा—राहुग्रहपीडितादिव चन्द्राच्च, तथा—ध्मातादिव ईश्वरेणेत्यर्थात् दग्धादिव स्मरतोऽपि गृहीतैः सारैः श्रेष्ठभागैः कृत्वा स्वमात्मानं नलानुकल्पं नलस्य प्रतिनिधिं कल्पयन्ति स्म । प्रियावियोगादयः साराकर्षणोपायत्वेनोत्प्रेक्षिताः । अन्यस्यापि सारः कथनपीडिताग्निदाहादिभिः समाकृष्यते । प्रियावियोगक्कथनरहितैल—ग्रहपीडनरहितचन्द्र—ईश्वरकृतदाहरहितकामतुल्यस्य नलस्य त्रिभ्योऽप्यधिकत्वादिति भावः ।'मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' इत्यमरः । 'किलैलात्' इति पाठे किल उत्प्रेक्षायाम् ॥ २२ ॥

**नलस्य पश्यात्वियदन्तरं तैर्भै-**
**मीति भूपान्विधिराहृतास्यै ।**

१ अत्र श्लेषः, देवानां वह्निमुखत्वसूचनाय तथोक्तिमुद्रा, 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।' इति चन्द्रालोकोक्तेः, तथा यतनेऽपि नलाननत्वमप्राप्यानलाननत्वप्राप्तेरेवोक्तत्वाद्विपादनम्, इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विपादनम् इति चन्द्रालोकोक्तेः ।२ क्कथितादिवेत्युत्प्रेक्षा, अनेकेषां प्रस्तुताप्रस्तुतानां हेतूनां कल्पकत्वरूपैकधर्मसम्बन्धोक्तेर्दीपकम् ।

**स्पर्धां दिगीशानपि कारयित्वा**
**तस्यैव तेभ्यः प्रतिमानमाख्यत् ॥२३॥**

ननु भैम्या नले निरतिशयमनुरागं ज्ञात्वा श्रुत्वा चेन्द्रादयो राजानश्च कथं तत्रागता इत्यत आह—

नलस्येति ॥ विधिः ब्रह्मा अस्यै भूपान् इति मनसि धृत्वा आहृत आनीतवान् । इति किम्—भैमी तैः भूपैः सह नलस्य इयत् अन्तरं हस्ताद्यभिनयमात्रेणानिर्वचनीयं विशेषतः पश्यतु । तथा—दिगीशानपि नलरूपधारणद्वारा नलस्य स्पर्धां कारयित्वा तस्यैव नलस्यैव प्रथिमानं तेभ्यो दिगीशेभ्य आख्यत् । भैमीं प्रतीत्यर्थात् । साक्षाद्दर्शनात्तारतम्यं ज्ञायते, नतु परोक्षमिति कारणाद्राजानः समाहृताः । अधिकेन सह स्पर्धा भवति । यतो दिगीशैर्नलत्वेन विना भैमीप्राप्त्यभावात्तत्प्राप्त्यर्थं नलरूपधारणान्नलाधिक्यमेव ब्रह्मणोक्तमित्यर्थः। उभयेभ्योऽपि नल एवाधिक इति भावः । नलरूपे धृतेऽपि तत्तुल्या न जाताः । 'इदमन्तरम्' इत्यपि पाठः । दिगीशान्, 'हृक्रोरन्यतरस्याम् १ । ४ । ५३' इति कर्मत्वम् ॥ २३ ॥

**सभा नलश्रीयमकैर्यमाद्यै-**
**र्नलं विनाभूद्धृतदिव्यरत्नैः ।**
**भामाङ्गणप्राघुणिके चतुर्भि-**
**र्देवद्रुमैर्द्यौरिव पारिजाते ॥ २४ ॥**

सभेति ॥ सा स्वयंवरसभा नलश्रियो यमकैः प्रतिनिधिभिः यमाद्यैश्चतुर्भिः नलं विना द्यौरिव अभूत् । किंभूता द्यौः—पारिजाते भामायाः सत्यभामाया अङ्गणस्य प्राघुणिकेऽतिथौ सति चतुर्भिर्मन्दार—संतान—कल्पवृक्ष—हरिचन्दन—संज्ञकैर्देवद्रुमैरुपलक्षिता । किंभूतैरुभयैः—धृतादिव्यरत्नैर्धृतदिव्यरत्नाभरणैः मूलादारभ्याग्रपर्यन्तं धृतमुक्तादिदिव्यरत्नैश्च । पारिजातं विना मन्दारादिषु सत्स्वपि यथा द्यौर्न शोभते, तथा नलरूपधारिष्विन्द्रादिषु सत्स्वपि मुख्यं नलं विना सभा न शुशुभे । इन्द्रादयः सभायामागताः, नलो नागत इति भावः ॥ २४ ॥

**तत्रागमद्वासुकिरीशभूषा-**
**भस्मोपदेहस्फुटगौरदेहः ।**

१ अत्राख्यदिवेत्युत्प्रेक्षा व्यङ्ग्या । २ अत्रानुप्रासः, द्यौरिवेत्युपमा ।

फणीन्द्रवृन्दप्रणिगद्यमान-

प्रसीदजीवाद्यनुजीविवादः ॥ २५ ॥

तत्रेति ॥ वासुकिस्तत्र स्वयंवरसभायामगमत्। किंभूतः—ईशस्य भूपार्थं भस्मैव उपदेहोऽङ्गरागः, तेन स्फुटं प्रकटं गौर उज्ज्वलो देहो यस्य । तथा—फणीन्द्रवृन्दैः कर्कोटकादिसर्पश्रेष्ठसमूहैः प्रणिगद्यमान उच्यमानः प्रसीद, जीव इत्यादिशब्दो यत्र ईदृशोऽनुजीविनां सेवकानां वादः कोलाहलो यस्य । 'प्राग्भूय'—इत्यनेन वासुकेः पातालाचलनमात्रमेवोक्तं, इदानीं तु सभागमनमिति न पौनरुक्त्यम्। 'ईशवासात्' इति पाठे ईश्वरशरीरे योगपट्टादिभवननिमित्तवसतेर्हेतोः २५॥

द्वीपान्तरेभ्यः पुटभेदनं तत्

क्षणादवापे सुरभूमिभूपैः।

तत्कालमालम्बि न केन यूना

स्मरेषुपक्षानिलतूललीला ॥ २६ ॥

द्वीपेति ॥ सुरभूमिषु देवभूमिषु द्वीपान्तरलक्षणासु ये भूपा राजानस्तैर्द्वीपान्तरेभ्यः प्लक्षादिभ्यः सकाशात्तत् पुटभेदनं नगरं कुण्डिनाख्यं क्षणाज्झटिति अवापे प्राप्तम्। क्षणमात्रागमने हेतुमाह—केन यूना तत्कालं तस्मिन् भैमीस्वयंवरसमये स्मरेषुपक्षानिलतूललीला कामबाणपक्षवातसंबन्धात्कार्पासविलासो नालम्बि नाङ्गीकृतः ? अपितु सर्वेणापि तूललीलाङ्गीकृता। वातेरितस्तूलो यथा दूराज्झटित्यायाति तथा तेऽपि कामपीडिताः सन्तः सर्वेऽपि झटित्यनायासेनायाता इति भावः ॥ २६ ॥

रम्येषु हर्म्येषु निवेशनेन

सपर्यया कुण्डिननाकनाथः।

प्रियोक्तिदानादरनम्रताद्यै-

रुपाचरच्चारु स राजचक्रम् ॥ २७ ॥

रम्येष्विति ॥ स कुण्डिनमेव नाकस्तस्य नाथो भीमो रम्येषु हर्म्येषु निवेशनेन स्थापनेन, तथा—सपर्ययातिथ्येन, तथा—प्रियोक्त्या प्रियवचनेन, दानेनोपस्काराददिानेन, आदरेण, नम्रतया च, आदरकृतया नम्रतया वा एतदाद्यैः कृत्वा चारु सम्यग्यथा तथा राजचक्रमुपाचरदतूतुषत् ॥ २७ ॥

चतुःसमुद्रीपरिखे नृपाणा-

मन्तःपुरे वासितकीर्तिदारे।

दानं दया सूनृतमातिथेयी

चतुष्टयी रक्षणसौविदल्ला ॥ २८ ॥

सार्वभौमेन तेन ते कथं पूजिता इत्याद्यङ्क्याह—

चतुरिति ॥ चतुर्णां समुद्राणां समाहारश्चतुःसमुद्री सा परिखा यस्य एवंविधे वासिता वसतिं कारिताः कीर्तय एव दारा यत्र एवंभूते नृपाणामन्तःपुरे भूलक्षणे विषये दानं, दया, सूनृतं प्रियसत्यवचनम्, आतिथेयी अर्घादिपूजा, एवंरूपा चतुष्टयी रक्षणार्थं सौविदल्लाः कञ्चुकिनः । दानादिचतुष्टयेन राज्ञां कीर्तिः परिपाल्यते, नान्ययेति हेतोः प्रभुणापि तेन कीर्तिरक्षणाय सपर्यादिभिः परितोषिता इति भावः । 'औदार्यदाक्षिण्यदयादमानाम्' इति च पाठः। अन्यत्राप्यन्तःपुरे परिखा भवति, दाराश्च तिष्ठन्ति, रक्षकाश्च भवन्ति ॥ २८ ॥

अभ्यागतैः कुण्डिनवासवस्य

परोक्षवृत्तेष्वपि तेषु तेषु।

जिज्ञासितस्वेप्सितलाभलिङ्गं

स्वल्पोऽपि नावापि नृपैर्विशेषः ॥२९॥

अभ्यागतैरिति ॥ अभ्यागतैः समागतैरतिथिभूतैर्वा नृपैः कुण्डिनवासवस्य भीमस्य तेषु तेषु परोक्षेष्वप्रत्यक्षेष्वानिर्वचनीयेषु परस्परेणाज्ञातेषु वृत्तेषु प्रियोक्त्याद्याचरणेष्वपि विषये, परोक्षं वृत्तेषु निष्पन्नेषु प्रियोक्त्यादिषु वा स्वल्पोऽपि विशेषः प्रियोक्त्यादौ तारतम्यं नालम्भि न प्राप्तः । किम्भूतः—जिज्ञासितस्य ज्ञातुमिष्टस्य स्वेप्सितस्य भैमीलक्षणस्य लाभः प्राप्तिः, तस्य चिह्नम्। अनेनैतस्य मदपेक्षया प्रियोक्त्यादि सादरं कृतं तर्हि भैमीमेतस्मै दास्यतीति विशेषतः कस्यानेन महानादरः क्रियत इति जिज्ञासायां विशेषस्तैर्न बुद्ध इत्यर्थः। प्रत्यक्षं यस्य प्रियोक्त्यादि कृतं तत्र विशेषो न प्राप्तः, किं पुनः परोक्षवृत्तेष्वित्यपिशब्दार्थः। सर्वेषामपि पूजादि सममेव कृतमिति भैमी ममैव भविष्यतीति सर्वेऽप्यमंसतेति भावः। 'जिज्ञासितः' इति सविसर्गोऽपि पाठः क्वचित् ॥ २९ ॥

१ अत्रानुप्रासः, देहस्फुटेति अपह्नुतिः । २ क्षणादवाप इत्यत्र हेतूपन्यासात् काव्यलिङ्गम्, तूललीलाऽऽलम्बनरूपस्यार्थस्य वर्जनकर्तृकत्वेनासम्भवेऽपि उपमाघटनाय तथोक्त्वान्निदर्शना । अतिशयोक्तिः पुनः स्फुटैव।

१ अत्रानुप्रासः । २ कीर्तिदार इति रूपकम् । ३ अत्रानुप्रासः ।

अङ्के विदर्भेन्द्रपुरस्य शङ्के
न सम्ममौ नैष तथा समाजः ।
यथा पयोराशिरगस्त्यहस्ते
यथा जगद्वा जठरे मुरारेः ॥ ३० ॥

अङ्क इति॥पयोराशिरगस्त्यहस्ते यथा ममौ, यथा वा मुरारेर्जठरे जगत्त्रैलोक्यं,तथा विदर्भेन्द्रपुरस्याङ्के मध्ये एप समाजो राजसङ्घो न संममाविति न किंतु तथैव संममावित्यहं शङ्के मन्ये । एतेन नगरस्यातिविस्तृतत्वमुक्तम् ॥ ३० ॥

पुरे पथि द्वारगृहाणि तत्र
चित्रीकृतान्युत्सववाञ्छयेव ।
नभोऽपि किर्मीरमकारि तेषां
महीभुजामाभरणप्रभाभिः ॥ ३१ ॥

पुर इति ॥ तत्र पुरे पथि राजमार्गसमीपे द्वारगृहाणि मुख्यपुरोभागे रचितानि द्वाराणि राजमार्गमुभयतो गृहाणि, यद्वा-पन्थानो राजमार्गा द्वाराणि गृहाणि च । यद्वा-पथिषु द्वाराणि येषां तानि गृहाण्युत्सववाञ्छया विवाहोत्सवाभिलापेण लेख्यादिना कृत्वा लोकेन चित्रीकृतान्येवाश्चर्यरूपाणि कृतान्येव । तत्राश्चर्यं न, किंतु तेषां महीभृतामाभरणप्रभाभिस्तत्रत्यं नभोऽप्याकाशमपि किर्मीरं नानावर्णमकारि कृतम् । गृहादीनि चित्रीकृतानीति किं वाच्यमित्यर्थः ॥ ३१ ॥

विलासवैदग्ध्यविभूषणश्री-
स्तेषां यथाऽऽसीत्परिचारकेऽपि ।
अज्ञासिषुः स्त्रीशिशुबालिशास्तं
यथाऽऽगतं नायकमेव कश्चित् ॥ ३२ ॥

विलासेति ॥ विलासः कटाक्षविक्षेपादिशृङ्गारचेष्टा, तथा—वैदग्ध्यं वक्रोक्त्यादिभाषणे चातुर्यम्, विभूषणं सुवर्णाद्यलङ्कारः, एतज्जनिता श्रीः शोभा तेषां राज्ञां परिचारके सेवकेऽपि तथाऽऽसीत् यथा येन प्रकारेण स्त्रीशिशुबालिशास्तं परिचारकमपि कंचिदागतं नायकमेव मुख्यं राजानमेवाज्ञासिषुर्बुध्यन्ते स्म । सेवकस्य विलासादिशोभां दृष्ट्वा अयं राजविशेष एवेति सेवके स्त्र्यादीनां भ्रान्तिरभूदिति भावः । 'शिशावज्ञे च बालिशः' इत्यमरः ॥ ३२ ॥

न स्वेदिनश्चामरमारुतैर्न
निमेषनेत्राः प्रतिवस्तुचित्रैः ।
म्लानस्रजो नातपवारणेन
देवा नृदेवा बिभिदुर्न तत्र ॥ ३३ ॥

नेति ॥ तत्र राजसमाजे देवा नृदेवा राजानो न बिभिदुः भेदं न प्रापुः।कथम्—स्वभावत एव न स्वेदिनश्चलच्चामरमारुतैरुपलक्षिताः।—तथा स्वभावतो न निमेषनेत्राः निर्निमेषा इत्यर्थः।प्रतिवस्तुचित्रैः वस्तुनि वस्तुन्याश्चर्यैरुपलक्षिताः । तथा—न म्लानस्रजः, आतपवारणेन छत्रेण उपलक्षिता एवंभूता इन्द्रादयः । राजानश्च चलच्चामरौघैः कृत्वा अस्वेदगात्राः प्रतिवस्तुचित्रैरनिमीलनेत्राः, विधृतातपत्रैरम्लानमालाः । सर्वथा राजानो देवतुल्या बभूवुरिति भावः । 'अस्वेदगात्राश्चलच्चामरौघैः अमीलनेत्राः प्रतिवस्तुचित्रैः' 'अम्लानमाला विधृतातपत्रैः' इत्यपि पाठः । 'भिदां न भेजुः' इति च पाठः ॥ ३३ ॥

अन्योन्यभाषाऽनवबोधभीतेः
संस्कृत्रिमाभिर्व्यवहारवत्सु ।
दिग्भ्यः समेतेषु नृपेषु तेषु
सौवर्गवर्गो न जनैरचिह्नि ॥ ३४ ॥

अन्योन्येति ॥ जनैः कुण्डिनस्थैर्लोकैः दिग्भ्यः समेतेषु समागतेषु नरेषु राजसु मध्ये सौवर्गवर्गः देवसमूहो नाचिह्नि नातर्कि । देवत्वेन न ज्ञात इत्यर्थः । किंभूतेषु नरेषु—अन्योन्यभाषाऽनवबोधात्परस्परभाषाबोधाभावात् या भीतिस्तस्या हेतोः संस्कृत्रिमाभिः प्रकृतिप्रत्ययनिर्वचनरूपेण संस्कारेण निर्वृत्ताभिः सर्वसाधारणीभिर्वाग्भिः कृत्वा व्यवहारवत्सु परस्परं व्यवहारं कुर्वत्सु । परस्परं देशभाषाऽनवबोधभयात्संस्कृतमेव वदन्ति । संस्कृतस्य देवमनुष्यसाधारणत्वात् एते देवाः, एते मनुष्या इति तत्रत्यैर्न ज्ञाता इति भावः । संस्कृत्रिमाभिः, 'सम्पर्युपेभ्यः' इति सुट् । गुणाधानस्य भूषणशब्दार्थत्वमत्र । स्वर्गे भवाः सौवर्गाः, भवार्थे 'तत्र भवः' इत्यण् । 'द्वारादीनां च' इत्यैजागमो वृद्धिनिषेधश्च । 'स्वर्गीय—' इति पाठे भवार्थे 'वा नामधेयस्य वृद्धसंज्ञा' इति वृद्धसंज्ञत्वात् 'वृद्धाच्छः' ॥ ३४ ॥

---

१ अत्रोपमा । २ वाञ्छयेवेत्युत्प्रेक्षा, अनुप्रासश्च । ३ परिचारके तथाविलासेत्याद्युक्तार्थताऽसम्भवेऽपि तथोक्तेरतिशयोक्तिः ।

१ अत्र समम् । 'समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः।' इति प्राचीनालङ्कारिकोक्तेः।अस्वेदगात्रादिपदार्थानां विशेषणसामर्थ्याद्देवाभेदप्रतीतेः पदार्थहेतुकं काव्यलिङ्गम् । २ अत्रानुप्रासः, न जनैरचिह्नीति सहेतुकमिति हेतुः ।

ते तत्र भैम्याश्चरितानि चित्रे
चित्राणि पौरैः पुरि लेखितानि।
निरीक्ष्य निन्युर्दिवसं निशां च
तत्स्वप्नसम्भोगकलाविलासैः ॥ ३५ ॥

त इति ॥ ते देवा राजानश्च तत्र पुरि तस्यां पुर्यां पौरैर्लोकैर्लिपिकरैः कृत्वा चित्रे लेखितानि चित्राणि नानाविधान्याश्चर्यरूपाणि वा भैम्याश्चरितानि निरीक्ष्य दिवसं निन्युः। तस्या भैम्याः स्वप्ने यः संभोगो रतं तत्संबन्धिभिः। कलाविलासैश्चुम्बनादिकलाकौशलैश्च निशां निन्युरतिवाहयांबभूवुः। स तैरहोरात्रः कथंचिदतिक्रान्त इति भावः। अस्वप्नानामपि देवानां कामभ्रान्तिरेव स्वप्नस्थाने द्रष्टव्या ॥ ३५ ॥

सा विभ्रमं स्वप्नगताऽपि तस्यां
निशि स्वलाभस्य ददे यदेभ्यः।
तदर्थिनां भूमिभुजां वदान्या
सती सती पूरयति स्म कामम् ॥ ३६ ॥

सेति ॥ तस्यां निशि स्वयंवरात्पूर्वदिनरात्रौ स्वप्नगता स्वप्नदृष्टा सा सती साध्वी भैमी एभ्यो देवेभ्यो राजभ्यश्च स्वलाभस्य स्वप्राप्तेर्विभ्रमं विलासम्। अथ च विशिष्टं भ्रमं भ्रान्तिम्। यत् ददे दत्तवती। तत् स्वयमेवार्थिनामर्थयमानानां भूमिभुजां देवानां राज्ञां च वदान्या दानशूरा सती कामं मदनमभिलाषं च पूरयति स्म। स्वलाभविभ्रमदानमेव कामपूरणमित्यर्थः। 'यत् यस्मात्, तत् तस्मात्' इति केचित्। पतिव्रतायाः सर्वकामपूरकत्वं विरुद्धम्। भ्रान्तिदृष्टाया अलीकत्वात्सर्वकामपूरणेऽपि दोषाभावात्परिहारः ॥ ३६ ॥

वैदर्भदूतानुनयोपहूतैः
शृङ्गारभङ्गीरनुभावयद्भिः।
स्वयंवरस्थानजनाश्रयस्तै-
र्दिने परत्रालमकारि वीरैः ॥ ३७ ॥

वैदर्भेति ॥ तैर्वीरैः शूरैः राजपुत्रैः परत्र परस्मिन्दिने स्वयंवरस्य स्थानं देशस्तस्य जनाश्रयो मण्डपः अलमकारि अलंकृतः। सर्वेऽपि वीरास्तत्रागता इति भावः। किंभूतैः—वैदर्भस्य भीमस्य दूतैः कर्तृभिरनुनयेन विनयेन कृत्वोपहूतैराकारितैः तथा—शृङ्गारभङ्गीः शृङ्गारप्रकारविशेषाननुभावयद्भिः प्रकाशयद्भिः। 'भङ्गीष्वनुभावविद्भिः' इति पाठे शृङ्गारविच्छित्तिषु निपुणैरित्यर्थः। 'अनुभावः प्रभावे स्यान्निश्चये भावसूचने' इति विश्वः। 'मण्डपोऽस्त्री जनाश्रयः' इत्यमरः ॥ ३७ ॥

भूपाभिरुच्चैरपि संस्कृते यं
वीक्ष्याकृत प्राकृतबुद्धिमेव।
प्रसूनबाणे विबुधाधिनाथ-
स्तेनाथ साऽशोभि सभा नलेन ॥ ३८ ॥

भूपाभिरिति ॥ अथ तेन नलेन सा सभाऽशोभि। स कः—विबुधाधिनाथ इन्द्रो यं नलं वीक्ष्य भूपाभिरलंकारैः उच्चैरतितरां संस्कृतेऽपि मण्डितेऽपि प्रसूनबाणे कामे विषये प्राकृतबुद्धिमेव नीचबुद्धिमेवाकृत उच्चैः प्राकृतबुद्धिमिति वा। सालंकृतो मदनोऽप्येतत्सदृशो नास्ति, किमन्य इति। नलोऽपि तत्रागत इति भावः। पण्डितोऽपि संस्कृते प्राकृतबुद्धिमकृतेति विरोधाभासः। 'प्राकृतश्च पृथग्जनः' इत्यमरः ॥ ३८ ॥

धृताङ्गरागे कलितद्युशोभां
तस्मिन्सभां चुम्बति राजचन्द्रे।
गता बताक्ष्णोर्विषयं विहाय
क क्षत्रनक्षत्रकुलस्य कान्तिः ॥ ३९ ॥

धृतेति ॥ धृताङ्गरागे कुङ्कुमचन्दनकृताङ्गानुलेपने तस्मिन् राजचन्द्रे नले कलिता हृता द्युशोभा स्वर्गशोभा यया एवंविधां सभां चुम्बति प्राप्ते सति क्षत्राण्येव नक्षत्राणि तेषां कुलस्य समूहस्य कान्तिः अक्ष्णोर्विषयं गोचरं विलङ्घ्य क कुत्र गता। बत खेदे। तन्न ज्ञायत इत्यर्थः। न क्षत्राणीति नञ्शब्देन समासः। क्षत्राणि नक्षत्राणि च। ये क्षत्रियाः, ये च नक्षत्रियाः क्षत्रियव्यतिरिक्ताश्च तेषां कुलमिति वा। उदयसमये आरक्तवर्णे चन्द्रे समीपस्थानि नक्षत्राणि यथा निःश्रीकाणि भवन्ति, तथा नलसमीपे तेऽपीत्यर्थः। अतिसुन्दरं नलं दृष्ट्वा भैमी एनमेव वरिष्यतीति निश्चित्य सर्वेऽपि निःश्रीका जाता इति भावः। कलिता व्याप्ता द्यौर्यया एवंविधा शोभा रक्तादिदीप्तिर्यस्या इति वा ॥ ३९ ॥

द्रागदृष्टयः क्षोणिभुजाममुष्मि-
न्नाश्चर्यपर्युत्सुकिता निपेतुः।

१ अनुप्रासः, दिवसं निशां च निन्युरिति तुल्ययोगिता। २ अत्रानुप्रासः, सतीसतीति यमकं, रूपकं च।

१ अनुप्रासोऽत्र। २ अत्राप्यनुप्रासः, ३ अत्रानुप्रासः, राजचन्द्र इत्युपमा।

अनन्तरं दन्तुरितभ्रुवां तु
नितान्तमीर्ष्याकलुषा दृगन्ताः ॥४०॥

द्रागिति॥ अतिसुन्दरत्वादाश्चर्येण पर्युत्सुकिता उत्कण्ठिताः क्षोणिभुजां राज्ञां दृष्टयः अमुष्मिन्नले द्राग्झटिति निपेतुः। प्रथमं दर्शनमात्रेणोत्कण्ठिताः सत्यः तस्मिन्नेव लग्नाः स्थिता इत्यर्थः। अनन्तरं तु क्रोधवशाद्दन्तुरितभ्रुवां कुटिलभ्रुवां तेषां दृगन्ता नेत्रप्रान्ता नितान्तमीर्ष्यया कलुषाः कषायिता निपेतुः। अतिसौन्दर्यादीर्ष्याराहित्येन प्रथमं तं दृष्ट्वानन्तरं भैम्यस्मान्विहायैनं वरीष्यतीतीर्ष्यया तं ददृशुरिति भावः। क्रुद्धो हि पूर्णया दृशा न पश्यति। अथवा—अनन्तरं राजभिरवलोकिते सति दन्तुरितभ्रुवां नारीणामहमहमिकया परस्परेर्ष्यावशात्कलुषाः कटाक्षा निपेतुः। सर्वाभिः स्त्रीभिरप्यनुरागवशात्कटाक्षैर्दृष्ट इति भावः। 'प्राग्दृष्टयः' इत्यपि पाठः ॥ ४० ॥

सुधांशुरेष प्रथमो भुवीति
स्मरो द्वितीयः किमसावितीमम्।
दस्रस्तृतीयोऽयमिति क्षितीशाः
स्तुतिच्छलान्मत्सरिणो निनिन्दुः॥४१॥

सुधांशुरिति॥ प्रश्नार्थस्य काक्वर्थस्य किमः प्रत्येकं संबन्धः। भुवि एष प्रथमो नूतनोऽवतीर्णः द्वितीयः सुधांशुः किमिति, तथा—भुवि असौ द्वितीयः स्मरः किमिति, तथा—भुवि अयम् तृतीयो दस्रो नासत्यः किमिति, स्तुतिच्छलान्मत्सरिण ईर्ष्यासहिताः क्षितीशाः राजानः ( केचन ) स्तुतिव्याजात् इमं नलं निनिन्दुः। किमः प्रश्नार्थत्वात्तुष्टुवुरित्यर्थः। अपरे मत्सरित्वात्किमः काक्वर्थत्वादयं सुधांशुः किम्। अपितु न भवतीति निनिन्दुः। एवं सर्वत्र एकेन भुव्ययं द्वितीयश्चन्द्र इति स्तुतौ कृतायामपरेणेर्ष्यावशाद्भुवि द्वितीयचन्द्रस्यासंभवान्नायं चन्द्र इति प्रतिषेधतो निन्द्यते स्मेति भावः। 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः। प्रश्नपक्षे किं निनिन्दुरिति वा योजना ॥ ४१ ॥

( आद्यं विधोर्जन्म स एष भूमौ
द्वैतं युवाऽसौ रतिवल्लभस्य।
नासत्ययोर्मूर्तिंद्वतीयताऽय-
मिति स्तुतस्तैः कृतमत्सरैः सः ॥४१॥

आद्यं विधोरिति ॥ द्वयोर्भावो द्विता, द्वितैव द्वैतम्। अयं श्लोको गतार्थत्वात्पुनरुक्तः ॥ ४१॥ )

मायानलोदाहरणान्मिथस्तै-
रूचे समाः सन्त्यमुना कियन्तः।
आत्मापकर्षे सति मत्सराणां
द्विषः परस्पर्धनया समाधिः॥ ४२ ॥

मायेति ॥ तं नलमसहमानैस्तै राजभिर्मिथः परस्परमित्यूचे। इति किम्—मायानलोदाहरणादिन्द्राद्यलीकनलदृष्टान्तेनामुना नलेन समास्तुल्याः कियन्तो बहवः सन्ति। एतेन तुल्या अन्येऽपि बहवोऽत्र विद्यन्ते, एतमेव पुनः पुनः किमिति वर्णययेति। अन्येषां तत्तुल्यत्वे स्वस्योत्कर्षः कथमित्याशङ्कायामाह—मत्सराणामीर्ष्यावतां द्विषः सकाशादात्मापकर्षे सति आत्मनो न्यूनत्वे सति शत्रोः परेण कृता या स्पर्धना तुल्यता तया समाधिः समाधानं परिहारो भवति। मत्सरिणामात्मापकर्षमविचार्य शत्रोः परेण तुल्यत्वप्रतिपादनात्स्वीयापकर्षपरिहारो भवति। अतिसुन्दरतया तस्यैव भैमीप्राप्तिसंभावनया सर्वेऽपि तं न सहन्ते स्मेति भावः। 'परस्पर्धितया' इति पाठे परः स्पर्धी यस्य तस्य भावस्तत्तेति व्याख्येयम्। 'इहेदृशाः सन्ति कतीति दुष्टैर्दृष्टान्तितालीकनलावली तैः' इत्यपि पाठः स्पष्टार्थः। मत्सरशब्दोऽर्शआदिर्द्रष्टव्यः। स्पर्धनं स्पर्धेति घञन्तात् 'तत्करोति—' इति ण्यन्तात्स्त्रियां भावे युच् ॥ ४२ ॥

गुणेन केनापि जनेऽनवद्ये
दोषान्तरोक्तिः खलु तत्खलत्वम्।
रूपेण तत्संसददूषितस्य
सुरैर्नरत्वं यददूषि तस्य ॥ ४३ ॥

गुणेनेति ॥ रूपेण सौन्दर्येण कृत्वा तस्यां संसदि तया संसदा सभया वा अदूषितस्यानिन्दितस्यातिसुन्दरस्य तस्य नलस्य सुरैः सुन्दरोऽपि मनुष्योऽयं ननु देव इति नरत्वं यददूषि निन्दितम् तत् खलत्वं खलु। तत्तैर्दौर्जन्यमेव कृतमित्यर्थः। खलत्वस्वरूपमेवाह—के-

---

१ पर्युत्सुकत्वकलुषत्वयोर्विरुद्धयोर्धर्मयोरकान्वयित्वोक्तेरननुरूपत्वात् विषमम्। २ उत्प्रेक्षाऽतिशयोक्तिरपह्नुतिश्चात्र।

१ अत्राप्यतिशयोक्तिः। २ आत्मापकर्षे सतीत्यस्य प्रागुक्तस्य समर्थनाय वचनादर्थान्तरन्यासः।

नापि लोकोत्तरेण गुणेन सौन्दर्यसुशीलत्वादिना कृत्वा अनवद्ये पूज्ये पुंसि दोषान्तरत्वोक्तिः दोषान्तरारोपणम् । यद्वा-सुरैस्तत्संसददूषितस्य तस्य नरत्वं रलयोरभेदात् नलस्य रूपेण स्वरूपेण नलत्वमदूषि तत्खलत्वम् । तेषां देवानां दौर्जन्यं खल्विति योजना । तत्खलत्वमेकं पदम् । अतिसुन्दरं तं दृष्ट्वा देवा अपि सेर्ष्या जाता इति भावः ॥ ४३ ॥

नलानसत्यानवदत्स सत्यः
कृतोपवेशान्सविधे सुवेषान् ।
नोभाविलाभूः किमु दर्पकश्च
भवन्ति नासत्ययुतौ भवन्तः ॥ ४४ ॥

नलानिति ॥ स सत्यो नलः सविधे समीपे कृतोपवेशान्कृतस्थितीन्सुवेषाञ्छोभनाकारान् असत्यान्नलानिन्द्रादीनित्यवदत् । इति किम्—भवन्तश्चत्वार एते न भवन्ति किमु । एते के—इलाभूः पुरूरवाः, दर्पकः कामश्च उभौ किमु । किंभूतावुभौ—नासत्ययुतौ आश्विनेयसहितौ । पुरूरवाः कामः अश्विनीकुमारौ च यूयमिति नलप्रश्नाः । यथा नलं दृष्ट्वाऽन्येषां विस्मयस्तथा नलस्यापि मिथ्यानलदर्शनेन विस्मयो जात इत्यर्थः ॥ ४४ ॥

अमी तमीदृग्जगुरत्र मध्ये
कस्यापि नोत्पत्तिरभूदिलायाम् ।
अदर्पकाः स्मः सविधे स्थितास्ते
नासत्यतां नात्र बिभर्ति कश्चित् ॥ ४५ ॥

अमी इति ॥ अमी मिथ्यानलास्तं सत्यं नलमीदृगेतादृशं जगुः—आहुः स्म वदन्ति स्म । यद्यस्मादत्रास्मासु मध्ये इलायां पृथिव्याम् । अथ च—इलायां पुरूरवसो मातरि कस्याप्युत्पत्तिर्नाभूत् । तथा—ते तव सविधे समीपे स्थिता वयमदर्पकाः दर्पकात्कामात् अन्ये । अथ च—अतिरमणीयत्वत्कान्तिदर्शनाद्दर्पो गर्वस्तद्रहितास्तिष्ठामः । तथा—अत्रास्मासु मध्ये कश्चित् नासत्यतामश्विनेयत्वम् । अथ च सत्यत्वम् । न बिभर्ति । अथवा—अस्मासु कश्चित् ना नरः सत्यतां न बिभर्ति । वयं त्वद्रूपधारणादसत्या एवेति छलेन पूर्वोक्तं नलप्रश्नमुत्तरयन्ति स्मेत्यर्थः । नात्र पुरूरवाः, कामः दस्रौ वाऽस्मासु सन्तीति । नासत्य इति 'नभ्राण्–' इत्यादिना प्रकृत्यां ॥ ४५ ॥

तेभ्यः परान्नः परिकल्पयस्व
श्रिया विदूरीकृतकामदेवान् ।
अस्मिन्समाजे बहुषु भ्रमन्ती
भैमी किलास्मासु घटिष्यतेऽसौ ॥ ४६ ॥

तर्हि के यूयमित्याशङ्क्याह—

तेभ्य इति ॥ त्वं श्रिया शोभया विदूरीकृतो जितः कामदेवो यैस्तान्नोऽस्मान्परिकल्पयस्व जानीहि । स्वशोभया वा । अत्रागमने कारणमाहुः—अस्मिन्समाजे बहुषु राजसु विषये भ्रमन्ती असौ भैमी किल संभावनायाम् अस्मासु घटिष्यते संयोगं यास्यति । अथच—सदृशेषु पञ्चसु भ्रमन्ती मुह्यन्ती । भैमी अस्मासु मध्ये कस्मिंश्चिद्घटिष्यते संयोगं यास्यतीति दुराशयाऽस्माभिरागतमिति भावः । किल हेतौ वा ॥ ४६ ॥

असाम यन्नाम तवेह रूपं
स्वेनाधिगत्य श्रितमुग्धभावाः ।
तन्नो धिगाशापतितान्नरेन्द्र
धिक्चेदमस्मद्विबुधत्वमस्तु ॥ ४७ ॥

असामेति ॥ नामेति सम्भावनायाम् । हे नरेन्द्र, साक्षात्स्वेन आत्मनैव तव रूपं सौन्दर्यमधिगत्य ज्ञात्वा दृष्ट्वा वा भैमी प्राप्तिदुराशावशाच्छ्रितमुग्धभावा अङ्गीकृतमौर्ख्याः सन्तो यद्यस्मादिह सभायामसाम तिष्ठाम । अथ च स्वेनात्मशरीरेण कृत्वा तव रूपं स्वरूपमधिगत्य प्राप्य त्वदाकारं स्वशरीरं धृत्वा श्रितमुग्धभावा अङ्गीकृतसौन्दर्यास्त्वदाकारधारणादेव श्रितसौन्दर्याः सन्तो यस्मादसाम तिष्ठामहे । तत्तस्मात् आशया भैमीप्राप्तिदुराशया आपतितान्नः अस्मान्धिक् । निन्द्या वयमित्यर्थः । अथवा—अस्माकमाशापतितां दिक्पतित्वं धिक् निन्द्यम् । अस्माकमाशामात्रेण पतितां भैमीपतित्वं धिगिति वा । तथा—अस्मद्विबुधत्वमस्माकं पण्डितत्वं धिक् । अथ च—देवत्वं धिगस्तु । अथ च स्वे आत्मनि स्वीयरूपे पूर्वं तव रूपं नाधिगत्य न प्राप्य किमिदानीं कर्तव्य-

---

१ अत्रानुप्रासः, दोषान्तरोक्तिः खलु खलत्वमिति रूपकम्, यददूषीत्यस्य प्रागुक्तस्य चार्थस्य हेतुहेतुमद्भावात् काव्यलिङ्गम् । २ अत्र नलीकृतात्मानोऽपि देवाः पुरूरवादिवदेव प्रतीता आसन्निति नलस्य ततोऽप्यतिशयसिद्धत्वाद् व्यतिरेको व्यज्यते ।

१ नलोक्तस्यैव वाक्यस्यान्यथाकरणोक्तेर्वक्रोक्तिः । २ विदूरीकृतेति व्यतिरेकः ।

मिति प्राप्तमौर्ख्यां भ्रान्तचित्ताः सन्तो मत्सरेण इह स्वयंवरे नल एवैको वरणयोग्य इति प्रसिद्धं तव नाम संज्ञां ख्यातिं वा वयमसाम नाशितवन्तः। स्वरूपधारणाच्चतुर्णामस्माकमपि नलत्वादित्यर्थः। तस्मान्नलभ्रान्त्याप्यस्मान्वरिष्यतीत्याशया आपतितानागतानस्मान्धिक। अस्माकं ज्ञातृत्वं देवत्वं वा धिगस्तु। अनिश्चितव्यापारकरणादित्यर्थः। अथ च स्वानां ज्ञातीनां मध्ये इनः श्रेष्ठः। यद्वा—धनानां स्वामिन्नरेन्द्र असाम, 'अस गतिदीप्त्यादानेषु' 'असँ भुवि' इत्यस्य लोङ्डुत्तमबहुवचनम्। पक्षे 'षोऽन्तकर्मणि' लुङि ॥ ४७ ॥

सा वागवाज्ञायितमां नलेन
तेषामनाशङ्कितवाक्छलेन।
स्त्रीरत्नलाभोचितयत्नमग्न-
मेनं हि न स्म प्रतिभाति किंचित् ४८

सेति ॥ अनाशङ्कितमननुसंहितं देवानां वाक्छलं येन तेन नलेन सा पूर्वोक्ता तेषां देवानां वाक् अवाज्ञायितमामतिशयेनावगणिता। कथं नाज्ञायीत्यत आह—स्त्रीरत्नं भैमी तस्या लाभ उचितो यत्न उपायस्तत्र मग्नं तत्परमेनं नलं प्रति लक्षीकृत्य हि यस्मान्न किंचित्प्रतिभाति स्म स्फुरति स्म। भैमीप्राप्त्युपायपरत्वात्तैः कथितमपि देवत्वं न ज्ञातमिति भावः[1] ॥ ४८ ॥

यः स्पर्धया येन निजप्रतिष्ठां
लिप्सुः स एवाह तदुन्नतत्वम्।
कः स्पर्धितुः स्वाभिहितस्वहानेः
स्थानेऽवहेलां बहुलां न कुर्यात् ॥४९॥

देववाक्यावज्ञायां हेत्वन्तरमाह—

य इति ॥ यः पुरुषो येन पुरुषेण सह स्पर्धया निजप्रतिष्ठां स्वस्य गौरवं लिप्सुः प्राप्तुमिच्छुः, स एव पुरुषः तस्योन्नतत्वं स्वस्मादाधिक्यं यस्मादाह ब्रूते तस्मात्स्वेनात्मनाभिहिता उक्ता स्वस्य हानिर्न्यूनता येनैवंविधस्य स्पर्धितुः स्थाने विषये बहुलामवहेलामवज्ञां को न कुर्यात्। अपितु सर्वेऽपि कुर्वन्त्येव। योऽन्यस्पर्धया स्वस्य प्रतिष्ठां लिप्सति स स्वस्य न्यूनतां तस्य चाधिकतां स्वयमेव वदति। अतोऽधिकेन हीनस्यावज्ञां कर्तुं युक्तैवेत्यर्थः। प्रकृते भैम्यर्थं नलरूपं दधद्भिर्देवैर्नलस्यैवाधिकता स्वस्य च न्यूनतोक्तैव। तस्मात्तेन नलेन तेषामवज्ञा युक्तैव कृतेति भावः[2]। स्थानेऽन्ययत्वादुचितमित्यर्थ इति वा। अवहेला इति क्षीरस्वामी। प्रतिष्ठामिति 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः ॥ ४९ ॥

गीर्देवतागीतयशःप्रशस्तिः
श्रिया तडित्वल्ललिताभिनेता।
मुदा तदाऽवैक्षत केशवस्तं
स्वयंवराडम्बरमम्बरस्थः ॥ ५० ॥

गीरिति ॥ केशवस्तदा समये तं स्वयंवरस्याडम्बरं संभ्रमं मुदा हर्षेणावैक्षत। किंभूतः—गीर्देवतया सरस्वत्या गीता कीर्तिता यशःप्रशस्तिर्यशोगौरवं यस्य। तथा—श्रिया लक्ष्म्या देहशोभया च कृत्वा तडित्वतो विद्युत्सहितसजलमेघस्य ललितं विलासस्तस्याभिनेताभिनयकारी। तादृशमेघतुल्य इत्यर्थः। तथा—अम्बरस्थो व्योमस्थः। स्वयंवरदर्शनार्थं विष्णुरपि तत्रागत इति भावः ॥ ५० ॥

अष्टौ तदाष्टासु हरित्सु दृष्टीः
सदो दिदृक्षुर्निदिदेश देवः।
लैङ्गीमदृष्ट्वाऽपि शिरःश्रियं यो
दृष्टौ मृषावादितकेतकीकः ॥ ५१ ॥

अष्टाविति ॥ सदः स्वयंवरसभां दिदृक्षुर्द्रष्टुमिच्छुः देवो ब्रह्मा तदाष्टासु हरित्सु दिक्षु अष्टौ दृष्टीर्नेत्राणि निदिदेशादिष्टवान्। किंभूतः—लैङ्गीं शिवसम्बन्धिनीं शिरःश्रियं मस्तकशोभामदृष्ट्वा अविलोक्यापि दृष्टौ लिङ्गशिरोदर्शनविषये मृषावादितानृतभाषणं कारिता केतकी येन। लिङ्गरूपस्य शिवस्य पादौ शिरश्चावलोकनार्थमहमधिकोऽहमधिक इति विवदमानौ विष्णुब्रह्माणौ पातालं सत्यलोकं च गतौ। विष्णुः पाताले गत्वा शिवचरणौ नापश्यत्। ब्रह्माऽपि शिरो नापश्यत्। अनन्तरं विष्णुना चरणौ नाद्राक्षमिति सत्यमुक्तम्। ब्रह्मणा तु शिरो दृष्टमित्यलीकमुक्तम्। तत्र साक्षित्वेन शिवशिरःस्थाहमानीतेति कूटसाक्षिणी केतकी कृतेति पौराणिकी कथा[3] ॥ ५१ ॥

---

१ अत्र काव्यलिङ्गम्। २ अत्रापि काव्यलिङ्गम्।

१ अत्रार्थान्तरन्यासः। २ अत्रानुप्रासः। ३ अत्रानुप्रासः।

एकेन पर्यक्षिपदात्मनाद्रिं
चक्षुर्मुरारेरभवत्परेण ।
तैर्द्वादशात्मा दशभिस्तु शेषै-
र्दिशो दशालोकत लोकपूर्णाः ॥५२ ॥

एकेनेति ॥ द्वादश आत्मानो देहा यस्य द्वादशदेहः सूर्य एकेनात्मना वपुषाद्रिं मेरुं पर्यक्षिपत्प्रदक्षिणीचकार । परेणात्मना देहेन मुरारेश्चक्षुर्दक्षिणनेत्रमभवत् । शेषैस्तु दशभिर्देहैः कृत्वा लोकैः पूर्णा दशापि दिश आलोकत । 'विधातृमित्रार्यमणो वरुणेन्द्रभगांशवः । पूषा विवस्वान्पर्जन्यस्त्वष्टा विष्णुर्दिनेश्वराः ॥' इति ॥ ५२ ॥

प्रदक्षिणं दैवतहर्म्यमद्रिं
सदैव कुर्वन्नपि शर्वरीशः ।
द्रष्टा महेन्द्रानुजदृष्टिमूर्त्या
न प्राप तद्दर्शनविघ्नतापम् ॥ ५३ ॥

प्रदक्षिणमिति॥सदैव दैवतानां हर्म्यं वसतिं स्थानम् अद्रिं मेरुं प्रदक्षिणं कुर्वन्नपि शर्वरीशश्चन्द्रो महेन्द्रानुजस्य मुरारेर्दृष्टिमूर्त्या वामनयनरूपेण द्रष्टा सन् तस्य स्वयंवरस्य दर्शने यो विघ्नस्तेन तापं दुःखं न प्रापे ॥ ५३ ॥

आलोकमाना वरलोकलक्ष्मीं
तात्कालिकीमप्सरसो रसोत्काः ।
जनाम्बुधौ यत्र निजाननानि
वितेनुरम्भोरुहकाननानि ॥ ५४ ॥

आलोकेति ॥ रसोत्का दर्शनरसोत्कण्ठितास्तात्कालिकीं स्वयंवरसमयजातां वरलोकलक्ष्मीं राजसङ्घशोभामालोकमाना विलोकयन्त्योऽप्सरसस्तत्र जनाम्बुधौ निजाननान्यम्भोरुहकाननानि कमलवनानि चक्रुः । अप्सरसोऽपि तं समाजं सादरं पश्यन्ति स्मेति भावः । जलाशयेऽपि कमलानि भवन्ति ॥ ५४ ॥

न यक्षलक्षैः किमलक्षि नो वा
सिद्धैः किमध्यासि समाप्तशोभा ।
सा किंनरैः किं न रसादसेवि
नादर्शि हर्षेण महर्षिभिर्वा ॥ ५५ ॥

नेति ॥ आप्तशोभातिसुन्दरा सा सभा यक्षलक्षैः रसात् प्रीत्या किं न अलक्षि दृष्टा । तथा—सिद्धैर्वा रसात्किं नोऽध्यासि । तथा—किंनरैः रसात् न असेवि । तथा—महर्षिभिर्वा हर्षेण न अदर्शि । रसादिति सिद्धे हर्षेणेति पदमनुप्रासार्थम् ॥ ५५ ॥

वाल्मीकिरश्लाघत तामनेक-
शाखत्रयीभूरुहराजिभाजा ।
क्लेशं विना कण्ठपथेन यस्य
दैवी दिवः प्राग्भुवमागमद्वाक् ॥ ५६ ॥

वाल्मीकिरिति ॥ स वाल्मीकिऋषिस्तां सभामश्लाघत अस्तौत् । स कः—दैवी वाक् पद्यमयी यस्य वाल्मीकेः कण्ठपथेन क्लेशं विना दिवः सकाशात् प्राक् 'मानिषाद–' इत्यादिरूपेण भुवमागमदागता । प्रथमं भूमौ यः संस्कृतप्रवर्तकः । किंभूतेन कण्ठपथेन—अनेकाः शाखा आश्वलायनादयो यस्याः सा वेदत्रयी तल्लक्षणा भूरुहास्तेषां राजिः पङ्क्तिस्तां भजते एवंभूतेन । सशाखवेदत्रयीपाठकेनेत्यर्थः । अन्येनापि बहुस्कन्धवृक्षयुक्तेन मार्गेण दूरदेशादप्यनायासेन गम्यते॥५६॥

प्राशंसि संसद्गुरुणाऽपि चार्वी
चार्वाकतासर्ववविदूषकेण ।
आस्थानपट्टं रसनां यदीयां
जानामि वाचामधिदेवतायाः ॥ ५७ ॥

प्राशंसीति ॥ चार्वी सुन्दरा संसत् सभा गुरुणा बृहस्पतिनाऽपि प्राशंसि । किंभूतेन—चार्वाकतया नास्तिकतया सर्वस्य वेदादेर्विदूषकेण खण्डकेन । अहं यदीयां रसनां जिह्वां वाचामधिदेवतायाः सरस्वत्या आस्थानपट्टं सिंहासनं जानामि मन्ये तस्य जिह्वाग्रे सरस्वती जागर्ति । नास्तिकप्रतारणार्थं बृहस्पतिना चार्वाकशास्त्रं प्रणीय वेदादि दूषितम् ॥ ५७ ॥

नाकेऽपि दीव्यत्तमदिव्यवाचि
वचःस्रगाचार्यकवित्कविर्यः ।
दैतेयनीतेः पथि सार्थवाहः
काव्यः स काव्येन सभामभाणीत् ॥५८॥

---

१ अत्र यथासङ्ख्यम् । २ अत्र न प्रापेत्यस्य द्रष्टेत्यनेन हेतुहेतुमद्भावात् काव्यलिङ्गम् । ३ अत्र यमकम् । लक्ष्मीत्वेन रूपणाद्रूपकम् ।

१ अत्रानुप्रासो विकल्पश्च ।२ वाल्मीक्यपेक्षया नलस्य प्राग्भवत्वादिदं वचनं समयभेदविस्मृतिमूलकम् । ३ अत्र रूपकं श्लेषश्च । ४ अत्रानुप्रासः, जानामीत्युत्प्रेक्षा ।

नाकेऽपीति ॥ स काव्यः शुक्रः दोषराहित्यप्रबन्धरूपेण काव्येन कृत्वा तां सभामभाणीदवर्णयत्। स कः—यः कविः प्रबन्धकर्ता, दीव्यत्तमा अतिविराजमाना दिव्या संस्कृतवाग्यस्मिन्नेवंभूतेऽपि नाके स्वर्गे वचःस्रजि वचनमालागुम्फने विषये आचार्यकं संस्कृतवचनचातुर्योपदेशः तं वेत्तीति तद्वित् । तथा—दैतेयनीतेः दैत्यनीतिशास्त्रस्य पथि मार्गे सार्थवाहः मार्गप्रदर्शकः । दैत्यनीतिशास्त्रप्रवर्तकः । सुरासुरमध्ये श्रेष्ठतम इत्यर्थः । आचार्यकम्, योपधाद्वुञ् । दैतेय इति 'कृदिकारादक्तिनः' इति (वा.) ङीपन्तात् 'स्त्रीभ्यो ढक् ४ । १ । १२० ' समर्थनर्यैः ॥ ५८ ॥

अमेलयद्भीमनृपः परं न
नाकर्षदेतान्दमनस्वसैव ।
इदं विधाताऽपि विचिन्त्य यूनः
स्वशिल्पसर्वस्वमदर्शयन्नः ॥ ५९ ॥

तदेव सभावर्णकं काव्यमाह—

अमेलयदिति ॥ भीमनृपः परं केवलमेतान्नृपान्भैमीस्वयंवरार्थं नामेलयत् ।तथा—दमनस्वसैव एतान्केवलं स्वगुणशीलादिना नाकर्षत् । किंतु विधातापि इदं स्वयंवरप्रस्तावादिकं विचिन्त्य स्वशिल्पसर्वस्वं स्वीयनिर्माणकौशलसारभूतानेतान् यूनस्तरुणानेकत्र स्थाने पुञ्जीकृत्य नोऽस्माकमदर्शयत् ॥ ५९ ॥

एकाकिभावेन पुरा पुरारि-
र्यः पञ्चतां पञ्चशरं निनाय ।
तद्भीसमाधानममुष्य काय-
निकायलीलाः किममी युवानः ॥ ६० ॥

एकेति ॥ यः पुरारिः हरः पुरा पूर्वमेकाकिभावेनासहायत्वेन पञ्चशरं कामं पञ्चतां निनाय मारयामास । अमुष्य कामस्य कायनिकायलीलाः शरीरसमूहकान्तयः अमी युवानस्तरुणाः तस्माद्धरात् भियो भयस्य समाधानं प्रतीकारः । किं वितर्के । असहायत्वात्पूर्वं कामस्य हराद्भयमभूत् । इदानीमेतद्रूपेण बहुत्वाद्भयं गतम् । सर्वेऽप्येते कामरूपा इति भावः ॥ ६० ॥

पूर्णेन्दुबिम्बाननुमासभिन्ना-
नस्थापयत्क्वापि निधाय वेधाः ।
तैरेव शिल्पी निरमादमीषां
मुखानि लावण्यमयानि मन्ये ॥ ६१ ॥

पूर्णेति ॥ विधिर्ब्रह्मा अनुमासभिन्नान्प्रतिमासं भिन्नान् पूर्णेन्दुबिम्बान्पूर्णचन्द्रबिम्बान्क्वापि कुत्रचित्प्रदेशे निधाय तिरोहितीकृत्यास्थापयत् । तैरेव पूर्णचन्द्रबिम्बैः कृत्वा अमीषां लावण्यमयानि मुखानि स शिल्पी ब्रह्मा निरमान्निर्ममे इत्यहं मन्ये । चन्द्रतुल्यान्येतेषां वदनानीति भावः । अन्योऽपि शिल्पी सुन्दरवस्तुनिर्माणार्थमपूर्वं वस्तु कुत्रचिद्गुप्तं स्थापयति ॥ ६१ ॥

मुधाऽर्पितं मूर्धसु रत्नमेभि-
र्यन्नाम तानि स्वयमेत एव ।
स्वतःप्रकाशे परमात्मबोधे
बोधान्तरं न स्फुरणार्थमर्थ्यम् ॥ ६२ ॥

मुधेति ॥ एभिर्नृपैः मूर्धसु रत्नं हीरकादि मुधा वृथा अर्पितं स्थापितम् । यद्यस्मात् एते एव स्वयं तानि रत्नानि नाम प्रसिद्धानि । रत्नानां शिरसि रत्नार्पणं वृथैवेत्यर्थः । अर्थान्तरन्यासमाह—स्वतःप्रकाशे स्वप्रकाशे परमात्मबोधे परमात्मज्ञाने सति स्फुरणार्थं तज्ज्ञानार्थं बोधान्तरं न अर्थ्यं न याचनीयम् । स्वप्रकाशत्वात्तस्येत्यर्थः । परमात्मज्ञाने जाते ज्ञानान्तरं यथा वृथा तथा रत्नानामुपरि रत्नान्तरारोपणमित्यर्थः । अतिसुन्दरा एत इति भावः परमात्मबोधस्य स्वतःप्रकाशत्वं वेदान्तेभ्योऽवसेयम् ॥ ६२ ॥

प्रवेक्ष्यतः सुन्दरवृन्दमुच्चै-
रिदं मुदा चेदितरेतरं तत् ।
न शक्ष्यतो लक्षयितुं विमिश्रं
दस्रौ सहस्रैरपि वत्सराणाम् ॥ ६३ ॥

प्रवेक्ष्यत इति ॥ दस्रौ अश्विनीकुमारौ मुदा उच्चैरुत्कृष्टं सहर्षमित्यर्थः । एवंभूतमिदं सुन्दरवृन्दं चेत्प्र-

---

१ अत्रानुप्रासः । २ अत्र विधातृकर्तृकत्वेन मेलनसपह्नुत्य तथोक्तेरपह्नुतिरित्येके विधात्रैव यद्यपि विधीयते, किं त्विदं मेलनं भैमीकृतमेवेति तादृशभ्रमापह्नवपूर्वं सत्यार्थस्थापनादपह्नुतिरित्यपरे, विधातुस्तथा सम्मेलने विचिन्तनासम्भवेऽपि तथोक्तेरतिशयोक्तिश्च ।

१ पुरेति, पञ्चेति, च कायेति च यमकम्, उत्प्रेक्षा च । २ मन्य इत्युत्प्रेक्षा । ३ अत्रानुप्रासः। स्वत इत्यादिना प्रागुक्तार्थसमर्थनादर्थान्तरन्यासः । मुधाऽर्पितत्वस्य द्युक्तिकं समर्थनात् काव्यलिङ्गम् ।

वेक्ष्यतः प्रविष्टौ भविष्यतः तत्तर्हि अनेन राजवृन्देन विशेषेण मिश्रं मिश्रितामितरेतरमन्योन्यं वस्त्राणां सहस्रैरपि लक्षयितुं विदितुं न शक्यतः समर्थौ न भविष्यतः। अयं मे भ्रातेति परस्परं ज्ञातुमसमर्थौ भविष्यतः। सर्वेषां दस्रतुल्यत्वादिति भावः॥ ६३॥

स्थितैरियद्भिर्युवभिर्विदग्धै-
र्दग्धेऽपि कामे जगतः क्षतिः का।
एकाम्बुबिन्दुव्ययमम्बुराशेः
पूर्णस्य कः शंसति शोषदोषम्॥६४॥

स्थितैरिति॥ विदग्धैश्चतुरैर्दाहरहितैर्वा इयद्भिर्ये-हुर्संख्याकैः स्थितैः विद्यमानैरेतैर्युवभिस्तरुणैः हेतुभिः हरेण एकस्मिन्कामे दग्धेऽपि जगतः का क्षतिः का हानिः। कामसदृशानामेतेषां बहूनां स्थितत्वात्। एतदेवार्थान्तरन्यासेन समर्थयते—कः पूर्णस्याम्बुराशेरेकाम्बुबिन्दुव्ययं शोषरूपं दोषं शंसति वदति। अपितु एकस्मिञ्जलकणे व्ययिते समुद्रः शुष्को जात इति न कोऽपि वदतीत्यर्थः॥ ६४॥

इति स्तुवन्हुंकृतिवर्गणाभि-
र्गन्धर्ववर्गेण स गायतेव।
ओंकारभूम्ना पठतेव वेदा-
न्महर्षिवृन्देन तथाऽन्वमानि॥ ६५॥

इतीति॥ इति पूर्वोक्तप्रकारेण स्तुवन् स शुक्रः गायतेव गानं कुर्वतेव गन्धर्वाणां वर्गेण समूहेन हुंकृतिवर्गणाभिर्हुंकारसमूहैः कृत्वा अन्वमान्यनुमतः। तथा—वेदान्पठता महर्षिवृन्देन ओंकारस्य भूम्ना बाहुल्येनान्वमानि अनुमतः। गन्धर्ववर्गेण महर्षिवर्गेण चोभाभ्यामनुमतः समीचीनं वदतीति। वर्गणा राशीकरणम्॥ ६५॥

न्यवीविशत्तानथ राजसिंहा-
न्सिंहासनौघेषु विदर्भराजः।
शृङ्गेषु यत्र त्रिदशैरिवैभि-
रशोभि कार्तस्वरभूधरस्य॥ ६६॥

न्यवीविशदिति॥ अथ विदर्भराजः तान्राजसिंहान् सिंहासनौघेषु न्यवीविशन्निवेशयामास। यत्र सिंहासनेषूपविष्टैरेभी राजसिंहैः कार्तस्वरभूधरस्य स्वर्णाचलस्य मेरोः शृङ्गेषूपविष्टैस्त्रिदशैर्देवैरिवाशोभि अदीपि। अत्युच्चत्वं हैममयत्वं सिंहासनानां, देवतुल्यत्वं च तेषां सूचितम्॥ ६६॥

विचिन्त्य नानाभुवनागतांस्ता-
नमर्त्यसंकीर्त्यचरित्रगोत्रान्।
कथ्याः कथंकारममी सुताया-
मिति व्यपादि क्षितिपेन तेन॥ ६७॥

विचिन्त्येति॥ तेन क्षितिपेन भीमेन इति पूर्वोक्तेन प्रकारेण व्यपादि विषण्णम्। किं कृत्वा—नानाभुवनेभ्यः स्वर्गमर्त्यपातालेभ्य आगतान् अमर्त्यैर्देवैः संकीर्त्यानि वर्णनीयानि चरित्रगोत्राणि शीलकुलानि येषां तान्। विचिन्त्य विचार्य। इति किम्—अमी पूर्वोक्ता राजसिंहाः सुतायां विषये कथंकारं केन प्रकारेण कथ्याः वर्णयितुं शक्या इति। एतेषां कुलशीलादि भैमीं कथं शास्यतीत्यर्थः॥ ६७॥

श्रद्धालुसंकल्पितकल्पनायां
कल्पद्रुमस्याथ रथाङ्गपाणेः।
तदाकुलोऽसौ कुलदैवतस्य
स्मृतिं ततान क्षणमेकतानः॥ ६८॥

श्रद्धेति॥ अथ तदा तस्मिन्समये आकुलः सचिन्तोऽसौ भीमः कुलदैवतस्य स्वीयवंशपरम्परापूज्यस्य रथाङ्गपाणेः श्रीविष्णोः स्मृतिं क्षणं मुहूर्तमात्रम् एकतानोऽनन्यवृत्तिः सन् ततान। किंभूतस्य विष्णोः—श्रद्धालोर्भक्तस्य संकल्पितं वस्तु तस्य कल्पनायां सिद्धौ कल्पद्रुमस्य सकलाभिलाषपूरककुलदैवतस्मरणं विनाऽन्यः को वाऽभिलाषपूरणं करोतीति विष्णुं सस्मारेत्यर्थः। 'एकतानोऽनन्यवृत्तिः' इत्यमरः॥ ६८॥

तच्चिन्तनानन्तरमेव देवः
सरस्वतीं सस्मितमाह स स्म।
स्वयंवरे राजकगोत्रवृत्त-
वक्त्रीमिह त्वां करवाणि वाणि॥ ६९॥

तदिति॥ स देवो विष्णुः तेन भीमेन कृतस्य स्वचिन्तनस्यानन्तरमेव सस्मितं सरस्वतीमिति प्राह स्म उवाच। इति किम्—हे वाणि सरस्वति, अहं त्वामिह

---

१ अत्र सौन्दर्यातिशयं द्योतयितुं परार्द्धवचनमित्यतिशयोक्तिः। २ अत्रानुप्रासः, अतिशयोक्तिः, अर्थान्तरन्यासालङ्कारः। ३ अत्र दीपकमर्थालङ्कारः, अनुप्रासः शब्दालङ्कारः।

१ अत्रानुप्रासः, उपमा च। २ अत्र हेतुमान्, अत्रानुप्रासश्च। ३ अत्रानुप्रास उपमा च।

स्वयंवरे राजकं राजवृन्दं तस्य गोत्रवृत्तवक्त्रीं कुलनामशीलादिवर्णयित्रीं करवाणि । राजवर्णनार्थं त्वया गन्तव्यमिति मम मनीषितम् । राजकम्, 'गोत्रचरणाद्वुञ् ४।३।१२६' इति वुञ् ॥ ६९ ॥

कुलं च शीलं च बलं च यूनां
जानासि नानाभुवनागतानाम् ।
एषामतस्त्वं भव वावदूका
मूकायितुं कः समयस्तवायम् ॥ ७० ॥

कुलमिति ॥ हे सरस्वति, त्वं नानाभुवनेभ्य आगतानामेषां यूनां कुलं च शीलं च बलं च यतो जानासि अतस्त्वमेव तेषां वावदूका अतितरां वर्णनशीला भव । मूकायितुमयं कः समयोऽवसरः । अपितु न कोऽपि । एषां कुलादि वर्णयेत्यर्थः । चाः परस्परसमुच्चयार्थाः । वदेर्यङ्लुगन्तादूकः । कुर्वादिगणे वावदूकशब्दस्य पाठो दृश्यत इति वदेर्यङन्तत्वे रूके वावदूक इति । 'वदेश्च' इति वार्तिकेन रूक इति तु न, तस्यैवादर्शनात् 'वावदूकस्तु वक्तरि' इति क्षीरस्वामी ॥ ७० ॥

जगत्त्रयीपण्डितमण्डितैषा
सभा न भूता च न भाविनी च ।
राज्ञां गुणज्ञापनकैतवेन
संख्यावतः श्रावय वाङ्मुखानि ॥ ७१ ॥

जगदिति॥हे सरस्वति, यस्माज्जगत्त्रयीसंबन्धिभिः पण्डितैर्मण्डिता एषा सभा पूर्वं न च भूता, पश्चात् न च भाविनी जनिष्यते । तस्माद्राज्ञां गुणानां ज्ञापनं बोधनं तस्य कैतवेन व्याजेन संख्यावतः पण्डितान्वाङ्मुखानि उपन्यासाञ्छ्रावय । 'उपन्यासस्तु वाङ्मुखम्' इत्यमरः । 'संख्यावान्पण्डितः कविः' इति च । शब्दकर्मत्वात्संख्यावत इति कर्मत्वम् ॥ ७१ ॥

इतीरिता तच्चरणात्परागं
गीर्वाणचूडामणिमृष्टशेषम् ।
तस्य प्रसादेन सहाज्ञयाऽसा-
वादाय मूर्ध्नाऽऽदरिणी बभार ॥ ७२ ॥

इतीति ॥ इति पूर्वोक्तप्रकारेण विष्णुना ईरितोक्ता असौ सरस्वती गीर्वाणानां देवानां चूडामणयो मुकुटरत्नानि तैर्मृष्टः प्रोञ्छितश्चासौ शेषोऽवशिष्टश्च तम्, तच्चरणाद्विष्णुचरणात्परागं रेणुं तस्य विष्णोराज्ञारूपेण प्रसादेन सह मूर्ध्ना आदाय आदारिण्यादरयुक्ता सती बभार । नमस्कारपूर्वं महान्प्रसाद इत्याज्ञामङ्गीचकारेति भावः । परागपदेन रूढया चरणस्य पद्मत्वं सूचितम् ॥ ७२ ॥

मध्येसभं साऽवततार बाला
गन्धर्वविद्याधरकण्ठनाला ।
त्रयीमयीभूतवलीविभङ्गा
साहित्यनिर्वर्तितदृक्तरङ्गा ॥ ७३ ॥

मध्येसभमिति ॥ सा सरस्वती बाला सती मध्येसभं सभामध्ये अवततार । बालस्त्रीरूपं धृत्वा तत्रागतेत्यर्थः । किंभूता—गन्धर्वविद्याया गीतविद्याया धरः कण्ठनालो यस्याः सा । गानप्रवीणकण्ठनालेत्यर्थः । तथा—त्रयीमयीभूतवलीविभङ्गा ऋक्सामयजूरूपत्रिसंख्यामयस्त्रयीमयः अत्रयीमयः त्रयीमयीभूतो वलीविभङ्गो वलीरचना यस्याः । तथा—साहित्येन महाकाव्यनाटकचम्पूप्रभृतिना शुक्लनीलरक्तवर्णसाहित्येन मेलनेन वा निर्वर्तिता निर्मिता अतिसलक्षणा दृक्तरङ्गाः कटाक्षविक्षेपा यस्याः सा । कण्ठस्य नालत्वेन मुखस्य पद्मत्वं व्यङ्ग्यम् । गन्धर्वाश्च विद्याधराश्च तद्रूपं कण्ठनालं यस्या इति वा ॥ ७३ ॥

आसीदथर्वा त्रिवलित्रिवेदी-
मूलाद्विनिर्गत्य वितायमाना ।
नानाभिचारोचितमेचकश्रीः
श्रुतिर्यदीयोदररोमरेखा ॥ ७४ ॥

वेदादिविद्यामयं सरस्वतीस्वरूपं वर्णयति—

आसीदिति ॥ अथर्वा श्रुतिः यदीया सरस्वतीसम्बन्धिनी उदररोमरेखा उदररोमावली आसीत् । किंभूता—तिसृणां वलीनां समाहारस्त्रिवलि । त्रिवलिरूपा या त्रिवेदी तल्लक्षणान्मूलाद्विनिर्गत्य ब्रह्मणा विनिर्गमय्य वितायमाना विस्तार्यमाणा । तथा—नानाऽभिचारैः अनेकमारणोच्चाटनाभिचारैः कृत्वा उचिता

---

१ अत्र यमकं शब्दालङ्कारः । उपमाऽर्थालङ्कारः । २ अत्र अनुप्रासः । कुलादीनामनेकेषामेकत्र कर्मत्वेनानुगतत्वे ज्ञेयत्वेनैकधर्मत्वमिति तुल्ययोगिता । जानासीति हेतुं निर्दिश्य परार्द्धोक्तेः समर्थनात् काव्यलिङ्गम् । ३ कैतवेनेत्यपह्नुतिः ।

१ अत्रानुप्रासः, सहोक्तिः । २ अत्रानुप्रासः, कण्ठनालेत्युपमा । वलीविभङ्गानां त्रयीमयत्वेन स्थापनादपह्नुतिः, साहित्येति श्लेषः ।

पापबाहुल्यात् योग्या मेचका श्रीः शोभा यस्याः सा । अथ च—अनाभिचारोचितमेचकश्रीर्न भवति किंतु नाभिसंचरणोचितमेचकश्रीः । अथवर्णः श्यामत्वं पुराणप्रसिद्धम्, अभिचारकर्तृकत्वं च । विनिर्गत्येत्यत्रान्तर्भावितण्यर्थो ज्ञेयः । वितायमाना, 'तनोतेर्यकि' इत्यात्वम् ॥ ७४ ॥

शिक्षैव साक्षाच्चरितं यदीयं
कल्पश्रियाकल्पविधिर्यदीयः
यस्याः समस्तार्थनिरुक्तिरूपै-
र्निरुक्तिविद्या खलु पर्यणंसीत् ॥ ७५ ॥

शिक्षेति ॥ यदीयं चरितमाचरणं वर्णानां स्थानोच्चारणबोधकं नारदादिप्रणीतं शिक्षैव पर्यणंसीत्परिणतम् । यदीयं चरितम् इत्यर्थः । अथ शिक्षैव । साक्षाल्लोकस्य हितोपदेश एवेत्यर्थः । कल्प इतिकर्तव्यताबोधको ग्रन्थस्तस्य श्रिया कृत्वा यदीय आकल्पविधिरलंकारविधिः पर्यणंसीत्परिणतः । यदीयान्यलंकरणानि कल्पेनैव रचितानीत्यर्थः।तथा—यस्याः समस्तार्थानां सकलाभिधेयानां निरुक्तिरूपैः निर्वचनस्वरूपैः कृत्वा वेदश्रोत्रस्थानीया निरुक्तिविद्या पर्यणंसीत्परिणता । खलु निश्चयार्थः सर्वत्र योजनीयः ॥७५ ॥

जात्या च वृत्तेन च भिद्यमानं
छन्दो भुजद्वन्द्वमभूद्यदीयम् ।
श्लोकार्धविश्रान्तिमयीभविष्णु-
पर्वद्वयीसन्धिसुचिह्नमध्यम् ॥ ७६ ॥

जात्येति ॥ जात्या मात्रावृत्तेन वृत्तेन वर्णवृत्तेन च भिद्यमानं द्विधाभूतं वेदचरणस्थानीयं छन्दः यदीयं भुजद्वन्द्वमभूत् । किंभूतं छन्दः—श्लोकार्धे विश्रान्तिः अवसानं तद्रूपो भविष्णुः श्लोकार्धविश्रान्तिमयीभाविष्णुः पर्वद्वयीसन्धिः पूर्वोत्तरपर्वद्वयसन्धिः स एव सुचिह्नं मध्ये यस्य । यस्या भुजपर्वद्वयीसन्धिरेखाद्वयं श्लोकार्धयोर्विच्छेदद्योतकेन रेखाद्वयेनैव रचितमित्यर्थः ॥ ७६ ॥

असंशयं सा गुणदीर्घभाव-
कृतां दधाना विततिं यदीया ।
विधायिका शब्दपरम्पराणां
किं वारऽचि व्याकरणेन काञ्ची ॥७७॥

असंशयमिति ॥ किंच अन्यच्च सातिप्रसिद्धा यदीया काञ्ची मेखलाऽसंशयं निश्चितं वेदमुखभूतेन व्याकरणेनारचि रचिता । किंभूता—गुणस्य पट्टसूत्रस्य दीर्घभावेन दैर्घ्येण कृतां विततिं विस्तारं दधाना । तथा—शिञ्जितरूपाणां शब्दपरम्पराणां विधायिका व्याकरणमपि—गुणाश्च दीर्घाश्च भावाश्च कृतश्च एतेषां विततिं दधानम् । भावा भावप्रत्ययाः, कृतः कृत्संज्ञकाः प्रत्ययाश्च । तथा शब्दानां रामकृष्णादीनां भवत्यादिशब्दपरम्पराणां च विधायकं साधकम् । अर्थवशाद्विभक्तिवचनविपरिणामः ॥ ७७ ॥

स्थितैव कण्ठे परिणम्य हार-
लता बभूवोदितताारवृत्ता ।
ज्योतिर्मयी यद्भजनाय विद्या
मध्येऽङ्गमङ्केन भृता विशङ्के ॥ ७८ ॥

स्थितेति ॥ ज्योतिर्मयी ज्योतीरूपा ग्रहनक्षत्रादिचारसहिता विद्या यद्भजनाय यस्या देव्याः सेवनाय कण्ठे स्थितैव परिणम्य रूपान्तरं प्राप्य हारलता बभूवेत्यहं विशङ्के । किंभूता—उदितमुक्तं तारं तारासंबन्धि वृत्तं शुभाशुभफलकथनरूपं यस्याम् । तथा—मध्येऽङ्गमङ्गानां शिक्षादीनां मध्येऽङ्केन गणनया भृता धृता । षडङ्गमध्ये गणितेत्यर्थः । हारलतापि—उदितः प्रकाशीभूतः तारो मध्यमणिर्यस्यां मुक्ताशुद्धिर्वा यस्यां सा एवंभूता चासौ वृत्ता च । वर्तुलमौक्तिकेत्यर्थः । तथा—मध्येऽङ्गं शरीरमध्ये अङ्केन क्रोडेन वक्षसा भृता धृता । तारणामिदं तारमित्यत्र 'तस्येदम् ४ । ३ । १२०' इत्यनेन सम्बन्धेऽण् । यद्वा द्वाविंशे सर्गे तारशब्दस्यापि लक्षत्रवाचित्वमुक्तम् । उदितं तारणां वृत्तं यस्यां, यया वा ॥ ७८ ॥

अवैमि वादिप्रतिवादिगाढ-
स्वपक्षरागेण विराजमाने ।
ते पूर्वपक्षोत्तरपक्षशास्त्रे
रदच्छदौ भूतवती यदीयौ ॥ ७९ ॥

१ अथर्वणास्त्रिवलित्वेन रूपणाद्रूपकम् । २ शिक्षाऽऽदेः साक्षात्त्वाभावेऽपि साक्षात्त्वेनोक्तेरतिशयोक्तिः । ३ पूर्ववदत्राप्यतिशयोक्तिः ।

१ किमित्युत्प्रेक्षा । २ विशङ्के इत्युत्प्रेक्षा ।

अवैमीति ॥ यदीयौ रदच्छदावोष्ठौ ते उभे प्रसिद्धे पूर्वपक्षोत्तरपक्षशास्त्रे भूतवती इत्यहमवैमि। किंभूते—वादिप्रतिवादिनोर्गाढो दृढः स्वपक्षरागः स्वस्वसिद्धान्तानुरागस्तेन विराजमाने । अधरावपि—वदत इति वादिनौ । प्रतिवदत इति प्रतिवादिनौ उक्तिप्रत्युक्तिचतुरौ ॥ ७९॥

ब्रह्मार्थकर्मार्थकवेदभेदा-
द्विधा विधाय स्थितयात्मदेहम् ।
चक्रे पराच्छादनचारु यस्या
मीमांसया मांसलमूरुयुग्मम् ॥ ८० ॥

ब्रह्मेति ॥ ब्रह्मैवार्थः, कर्मैवार्थः प्रतिपाद्यं प्रयोजनं ययोर्वेदयोस्तयोर्भेदाद्वैविध्याद्ब्रह्मकाण्डकर्मकाण्डसंज्ञकवेदविभागाद्धेतोरात्मदेहं द्विधा विधाय निर्माय स्थितया मीमांसया यस्या देव्या ऊरुयुग्मं चक्रे कृतम् । किंभूतमात्मदेहम्—परेषां वैशेषिकबौद्धादीनामाच्छादनेन निराकरणेन चारु, तत्र वा चतुरम् । तथा—मांसलं विचारपरिपुष्टम् । अथ च उत्तमवस्त्रेण रमणीयं, परिपुष्टं च । उत्तरमीमांसया पूर्वमीमांसया चोरुयुग्मं रचितमित्यर्थः ॥ ८० ॥

उद्देशपर्वण्यपि लक्षणेऽपि
द्विधोदितैः षोडशभिः पदार्थैः ।
आन्वीक्षिकीं यद्दशनद्विमालीं
तां मुक्तिकामाकलितां प्रतीमः ॥८१॥

उद्देशेति ॥ वयं यस्या दशनद्विमालीं दन्तपङ्क्तिद्वयीं तां प्रसिद्धामान्वीक्षिकीं तर्कविद्यां प्रतीमो जानीमहे । अनु पुनःपुनरीक्षणं प्रयोजनमस्याः सा आन्वीक्षिकी । कीदृशीम्—नामतः कथनमुद्देशः, तस्य पर्वण्यवसरेऽपि, समानासमानजातीयव्यवच्छेदो लक्षणं तस्मिन्नपि, द्विधा उद्देशतया लक्षणतया चोदितैर्निर्दिष्टैः षोडशभिः पदार्थैः प्रमाणादिभिर्निग्रहस्थानान्तैरुपलक्षिताम् । तथा मुक्तिकामैः 'एतेषां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इत्युक्त्वान्मुमुक्षुभिराकलितामभ्यस्ताम् । दन्तपङ्क्तिद्वयी च पर्वण्युदितोत्तेजिता भवति । तथा-लक्षणेऽपि सामुद्रिकशास्त्रेऽप्युदितोक्ता । द्विधोदितत्वेन द्वात्रिंशत्संख्याका भवति । दशनद्विमालीमाकलितां गुम्फितां मुक्तिकां प्रतीमःमौक्तिकान्येव जानीम इति वा । द्विरुक्तषोडशपदार्थैर्यस्या द्वात्रिंशद्दन्ता रचिता इति भावः । द्विमालीमिति टाबन्तत्स्त्रीत्वे 'द्विगोः४।१।२१॥' इति ङीप् ॥ ८१ ॥

तर्का रदा यद्वदनस्य तर्क्या
वादेऽस्य शक्तिः क्व तथाऽन्यथा तैः ।
पत्रं क्व दातुं गुणशालिपूगं
क्व वादतः खण्डयितुं प्रभुत्वम् ॥८२॥

तर्का इति ॥ 'यद्ययं निर्वह्निः स्यात्तर्हि निर्धूमोऽपि स्यात्' इत्यादयस्तर्का यद्वदनस्य रदा दन्तास्तर्क्या ऊह्याः । तैर्दन्तैः अन्यथा विना चेत्तर्का दन्ता नाभविष्यंस्तर्हि अस्य मुखस्य वादे कथाविशेषे, अथ च भाषणे। तथा शक्तिः क्व ? दन्तैर्विना वादः कर्तुं न शक्यते । तस्मात्तर्का एव रदास्तर्क्याः । 'कथमन्यथा' इति पाठो वा । अथ च वा च दश्च वादम् 'सर्वो द्वन्द्व—' इत्येकवद्भावः वाकारदकारयोरुच्चारणे विषये दन्तैर्विना शक्तिः कथं स्यात् ? वाकारस्य दन्त्यौष्ठ्यत्वात्, दकारस्य दन्त्यत्वादित्यर्थः। अन्यच्च—वादतो वादनिमित्तात्प्रतिवादिने पत्रं प्रतिपत्रं दातुं तस्योपरि पत्रालम्बनं कर्तुं प्रतिवादिनः प्रतिज्ञापत्रं दातुं खण्डयितुम् । अथ च—अदतो भक्षयतोऽस्य कटुरसत्वादिगुणशालि पत्रं नागवल्लीदलं खण्डयितुं तैर्विना क्व शक्तिः प्रभुत्वं सामर्थ्यम् ?। अपि तु न। तर्कबलेन विना पत्रादिखण्डनं कर्तुमशक्यमित्यर्थः । गुणैः कषायादिभिः शालते इति ईदृशं पूगं खण्डयितुं वा क्व शक्तिः । नहि दन्तहीनेन पर्णानि पूगानि च भक्षयितुं शक्यन्ते । अथ च वादतो वादेन गुणशालिनां विदुषां पूगं वृन्दं खण्डयितुं क्व सामर्थ्यम् । 'पदादयः पृथक् शब्दाः' इति मतेन न विद्यन्ते दतो दन्ता यस्य दन्तरहितस्य । नञा बहुव्रीहिणा द्वितीयपक्षे व्याख्येयम् । दन्तानां कर्कशत्वात्कर्कशैस्तर्कैर्निर्माणस्य युक्तत्वम् ।'पूगः क्रमुकवृन्दयोः' इत्यमरः ॥ ८२ ॥

सपल्लवं व्यासपराशराभ्यां
प्रणीतभावादुभयीभविष्णु ।
तन्मत्स्यपद्माद्युपलक्ष्यमाणं
यत्पाणियुग्मं ववृते पुराणम् ॥ ८३॥

१ अत्र वादीति यमकम्, अवैमीत्युत्प्रेक्षा। २ अत्रानुप्रासः।

१ प्रतीम इत्युत्प्रेक्षा। २ अत्रोत्प्रेक्षा।

सपल्लवमिति ॥ पुराणं तत्प्रसिद्धं यस्याः पाणियुग्मं वृत्ते जातम् । किंभूतम्—सपल्लवं कथाख्यायिकादियुक्तम् । अथ च सशृङ्गारम् । अलक्तकरागतुल्यमित्यर्थः । किसलयसदृशं वा । तथा—व्यासपराशराभ्यां मुनिभ्यां प्रणीतभावान्निर्मितत्वादुभयीमविष्णु पुराणोपपुराणतां प्राप्तं मत्स्यकूर्मपद्मवाराहादिपदैरुपलक्ष्यमाणं निर्दिश्यमानम् । अथ च रेखारूपमत्स्यपद्मचक्रादिसामुद्रिकलक्षणैर्लक्ष्यमाणम् । पुराणमेव करयुगाकारेण परिणतमित्यर्थः । तत्पुराणमिति वा । सपल्लवमिति पक्षे शब्दयेऽव्ययीभावः ॥ ८३ ॥

आकल्पविच्छेदविवर्जितो यः
स धर्मशास्त्रव्रज एव यस्याः।
पश्यामि मूर्धा श्रुतिमूलशाली
कण्ठस्थितः कस्य मुदे न वृत्तः ॥ ८४॥

आकल्पेति ॥ य आकल्पं विच्छेदविवर्जितः प्रलयपर्यन्तमुच्छेदरहितः । अथ च आकल्पोऽलंकारः तत्सहितः सर्वदा सालंकारः स धर्मशास्त्रस्य व्रजः समूह एव यस्याः सरस्वत्या मूर्धा कस्य मुदे प्रीत्यै न वृत्तः । अयच—वृत्तो वर्तुलः कस्य मुदे न । अपि तु सर्वस्यापि मुदे स्यादेवेत्यहं पश्यामि जाने । किंभूतः—श्रुतिः वेद एव मूलं तेन शालते । अथ च—श्रुत्योः कर्णयोमूले शोभते एवंशीलः । श्रुतिः शब्दः तस्य ग्रहणे मूलं कारणं कर्णौ ताभ्यां शालत इति वा। तथा—कण्ठस्योपरि स्थितः । अथ च—कण्ठे पाठतो न्यस्तः । धर्मशास्त्रमेव यदीयमूर्धाकारेण परिणतमिति भावः ॥ ८४ ॥

भ्रुवौ दलाभ्यां प्रणवस्य यस्या-
स्तद्बिन्दुना भालतमालपत्त्रम् ।
तदर्धचन्द्रेण विधिर्विपञ्ची-
निक्वाणनाकोणधनुः प्रणिन्ये ॥ ८५ ॥

भ्रुवाविति ॥ विधिः प्रणवस्योंकारस्य दलाभ्यां खण्डाभ्यां यस्या भ्रुवौ प्रणिन्ये निर्ममे । तद्बिन्दुना प्रणवानुस्वारेण भालतमालपत्त्रं ललाटतिलकम् । तदर्धचन्द्रेण यस्या विपञ्ची वीणा तस्या निक्वाणनार्थं वादनार्थं कोणधनुः कोणसंज्ञकं धनुः प्रणिन्ये । 'तमालपत्त्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । अत्र नागरलिप्या ओंकारो ज्ञातव्यः । 'कोणो वीणादिवादनम्' इति । कोणशब्देनैव गतार्थत्वात्पूर्वपदं प्रशंसार्थत्वादपुनरुक्तम् । पूर्वपदेनैव गतार्थत्वात्कोणपदं धनुःप्रशंसार्थम् ॥ ८५ ॥

द्विकुण्डली वृत्तसमाप्तिलिप्या
कराङ्गुली काञ्चनलेखनी नाम ।
कैश्यं मषीणां स्मितभा कठिन्याः
काये यदीये निरमायि सारैः ॥ ८६ ॥

द्विकुण्डलीति ॥ विधिना यदीये काये वृत्ता वर्तुला या समाप्तिज्ञापिका लिपिर्विसर्गलिपिः मातृकाग्रन्थस्य समाप्तिलिपिर्वा तस्याः सारैः श्रेष्ठभागैः कृत्वा द्विकुण्डली निरमायि निर्मिता । तथा—काञ्चनलेखनीनां सुवर्णमयलेखनीनां सारैः कराङ्गुली निर्मिता । मषीणां सारैः केशानां समूहः कैश्यं निर्मितम् । तथा—कठिन्याः खटिकायाः सारैः स्मितस्य भा शोभा निर्मिता । सर्वेषां तत्तदाकारत्वात्तदीयैरेव सारैर्निर्मितानीत्यर्थः । कराङ्गुलीति जातावेकवचनम् । यदुक्तम्—'शृङ्गवद्बालवत्सस्य बालिकाकुचयुग्मवत् । नेत्रवत्कृष्णसर्पस्य स विसर्ग इति स्मृतः' इति । 'खटिकायां तु कठिनी' इति विश्वः । कैश्यम् समूहार्थे 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति यञ् ॥ ८६ ॥

या सोमसिद्धान्तमयाननेव
शून्यात्मतावादमयोदरेव ।
विज्ञानसामस्त्यमयान्तरेव
साकारतासिद्धिमयाखिलेव ॥ ८७ ॥

येति ॥ या सरस्वती सोमसिद्धान्तः कापालिकदर्शनं तन्मयं तद्रूपम् । अथ च चन्द्रस्य याथार्थ्यं पूर्वपक्षभूतस्य पूर्णिमाजातस्य वा चन्द्रस्य सिद्धान्तरूपं दूषकत्वमाननं यस्या एवंभूतेव । तथा—शून्यात्मतावादो माध्यमिकदर्शनं तन्मयं तद्रूपमुदरं यस्याः सेव । आत्मानो न सन्तीति शून्यात्मतावादो बौद्धसिद्धान्तः । तथा—विज्ञानस्य विशिष्टज्ञानस्य सामस्त्यं संपूर्णत्वम् तन्मयं तद्रूपमान्तरं चित्तं यस्या एवंभूतेव । तथा—साकारविज्ञानवादी सौत्रान्तिकः, विज्ञानस्य साकारतासिद्धिस्तद्दर्शनम् । अथ च—सौन्दर्यलाभप्रचुरम् ।

१ मत्स्यादिपदानामनेकार्थकत्वेन श्लेषः, अभेदेन रूपणाद्रूपकम् । २ पश्यामीत्युत्प्रेक्षा ।

१ प्रणवदलादिना भ्रुवाद्यभेदोक्ते रूपकम्, अनुप्रासोऽपि शब्दालङ्कारः । २ निरमायीवेति प्रतीतेरुत्प्रेक्षा व्यज्यते ।

अखिलं समस्तं रूपं यस्या एवंभूतेव । सोमसिद्धान्तादिदर्शनैर्यदीया मुखादयोऽवयवा निर्मिताः । चन्द्रानना, अतिकृशोदरी, सर्वविज्ञानमयी, अतिसुन्दरी चेति भावः । इवशब्द उत्प्रेक्षायाम्, वाक्यालंकारे वा । एवंभूता मध्येसभमवततारेत्यादि कुलकम् । शून्यात्मतेत्यादौ 'नासिकोदर' इति वैकल्पिकत्वात् न ङीप् ॥ ८७ ॥

**भीमस्तयाऽगद्यत मोदितुं ते**
**वेला किलेयं तदलं विषद्य ।**
**मया निगाद्यं जगतीपतीनां**
**गोत्रं चरित्रं च विचित्रमेषाम् ॥ ८८ ॥**

भीम इति ॥ तया देव्या भीम इत्यगद्यत उक्तः । इति किम् । इयं वेलाऽयं समयस्ते मोदितुं हर्षं प्राप्तुमुचितः । किल यस्मात् । तत्तस्माद् विषद्य विषादं कृत्वाऽलं दुःखं न कार्यम् । मया एषां जगतीपतीनां राज्ञां विचित्रं गोत्रं चरित्रं च निगाद्यं गदितुमर्हम् । मोदितुम्, 'कालसमयवेलासु तुमुन् ३ । ३ । १६७' इति तुमुन् । अलं विषद्य 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३।४।१८' इति क्त्वा । ततः क्त्वो ल्यप् ॥ ८८ ॥

**अविन्दतासौ मकरन्दलीलां**
**मन्दाकिनी यच्चरणारविन्दे ।**
**अत्रावतीर्णा गुणवर्णनाय**
**राज्ञां तदाज्ञावशगाऽस्मि काऽपि ॥८९॥**

अविन्दतेति ॥ असौ मन्दाकिनी यस्य श्रीविष्णोः चरणारविन्दे मकरन्दलीलां पुष्परसशोभामविन्दत प्राप । कमले हि मकरन्दो युक्तः । तस्य श्रीविष्णोराज्ञावशगा निदेशकारिणी कापि राज्ञां गुणवर्णनायात्र स्वयंवरेऽवतीर्णा । तेन प्रेषिता तदाज्ञया च मम सामर्थ्यमपि युक्तमित्यर्थः । कापीत्यनेन मदधिकास्तन्निदेशकारिण्यो बह्वयः सन्तीति, स्वनाम्नोऽकथनीयत्वं च सूचितम् । 'विन्दत्यसव्ये' इति पाठे—असव्ये दक्षिणपादे विन्दति लभते ॥ ८९ ॥

**तत्कालवेद्यैः शकुनस्वराद्यै-**
**राप्तामवाप्तां नृपतिः प्रतीत्य ।**
**तां लोकपालैकधुरीण एष**
**तस्यै सपर्यामुचितां दिदेश ॥ ९० ॥**

तत्कालेति ॥ लोकपालानामेकधुरं वहतीति लोकपालतुल्य एष भीमनृपतिस्तस्यै देव्यै उचितां योग्यां सपर्यामर्घादिपूजां दिदेशाकृत । किं कृत्वा—तत्कालवेद्यैः तदागमज्ञेयैः शकुनस्वराद्यैः काकस्वरादिशकुननासिकास्वरदक्षिणचक्षुःस्पन्दाद्यैः कृत्वा तां देवीमाप्तामभीष्टाम् अवाप्तां प्राप्तां प्रतीत्य ज्ञात्वा । एकधुरीणः 'एकधुराल्लुक् च ४ । ४ । ७९' इति खः । आप्तागमनसमये भुजस्पन्दादयो भवन्ति ॥ ९० ॥

**दिगन्तरेभ्यः पृथिवीपतीना-**
**माकर्षकौतूहलसिद्धविद्याम् ।**
**ततः क्षितीशः स निजां तनूजां**
**मध्येमहाराजकमाजुहाव ॥ ९१ ॥**

दिगिति ॥ ततो देवीसपर्याऽनन्तरं स क्षितीशो भीमो निजां स्वीयां तनूजां भैमीं मध्येमहाराजकं राजसमूहमध्ये आजुहावाकारयति स्म । किंभूतां तनूजाम्—दिगन्तरेभ्यो दिक्प्रान्तेभ्यः सकाशात्पृथिवीपतीनामाकर्ष आकर्षणं तद्विषयं यत्कौतूहलं तस्य सिद्धविद्यां जपादिपुरश्चरणेनात्मवशीकृतमन्त्ररूपां स्वसौन्दर्येण सर्वाकर्षणकारिणीम् । राजन्—शब्दाद्वुञि 'महच्च तद्राजकं च' इति कर्मधारय एव । 'पारे मध्ये षष्ठ्या वा २।१।१८' इति मध्ये इत्यादि साधु । आजुहाव 'अभ्यस्तस्य च ६।१।३३' इति सम्प्रसारणम् ॥ ९१ ॥

**दासीषु नासीरचरीषु जातं**
**स्फीतं क्रमेणालिषु वीक्षितासु ।**
**स्वाङ्गेषु रूपोत्थमथाद्भुताब्धि-**
**मुद्वेलयन्तीमवलोककानाम् ॥ ९२ ॥**

इतःपरं षोडशभिः पद्यैः ( कुलकेन ) दमयन्तीं वर्णयति—

दासीष्विति ॥ नासीरचरीष्वग्रेसरीषु दासीषु चेटीषु विषये जातं पूर्वं समुत्पन्नम्, क्रमेणानन्तरं वीक्षितास्वालीषु सखीषु विषये स्फीतमभिवृद्धिं गतम्, अथ पश्चा-

---

१ इवेत्युत्प्रेक्षा । २ अत्रानुप्रासः । ३ अत्रानुप्रासः, चरणारविन्द इति रूपकम्, एवम्मन्दाकिन्या मकरन्दलीलाविन्दनोक्तेरैक्यारोपार्थत्वान्निदर्शना ।

१ अत्रानुप्रासः । २ अत्राप्यनुप्रासः । भैम्या आकर्षेत्याद्युक्तत्वासम्भवेऽपि तथोक्तेरतिशयोक्तिः ।

त्वाङ्गेषु भैम्यवयवेषु विषये रूपोत्थं सौन्दर्यादुत्थितं च- लितुमारब्धम् अवलोककानां प्रेक्षकाणामद्भुताब्धिमुद्वेल- यन्तीमतिक्रान्तमर्यादं कुर्वतीम् । दास्यादिक्रमेण सुन्दर- सुन्दरतर-सुन्दरतमत्वदर्शनेन राजानोऽतिशआश्चर्या जाता इति भावः । 'भैमीं पपावपाङ्गैरथ राजराजिः' ( १०। १०७ ) इतः षोडशेनान्वयः ॥ ९२ ॥

स्निग्धत्वमायाजललेपलोप-
सयत्नरत्नांशुमृजांशुकाभाम् ।
नेपथ्यहीरद्युतिवारिवर्ति-
स्वच्छायसच्छायनिजालिजालाम् ९३॥

स्निग्धेति ॥ किंभूताम्—स्निग्धत्वं तैलाभ्यक्ताभा- सत्वम्, मायाजलं कृत्रिमोदकम्, लेपः अधोभागी वर्णो- त्कर्षकारी द्रव्यान्तरसंयोगः, एतेषां त्रयाणां दोषाणां लोपे अभावे सयत्नानि कृतप्रयत्नानि । अपनीतदोषाणी- त्यर्थः । तेषां रत्नानामंशुमृजा किरणशुद्धिः सैवांशुकाभा वस्त्रदीप्तिर्यस्यास्ताम् । स्निग्धत्वाय नैर्मल्याय मायाजल- स्य कृत्रिमोदकस्य लेपः प्रक्षेपस्तस्य लोपेनापाकरणेन सयत्नानां कृतगुणाधानानां निर्मलानां नैर्मल्यार्थं पाणि- पादसंज्ञकमायाजलप्रक्षेपेण विनैव निर्मलानामिति यावत् । एवंभूतानां रत्नानामंशवः तद्वन्मृजा शुद्धिर्यस्या एवं विधा रत्नकिरणशुद्धियुक्ता या अंशुकाभा वस्त्रदीप्ति- र्यस्याः । एवंविधेनांशुकेनाभाति, एवंविधां वा । तथा—नेपथ्येष्वलंकारेषु हीराः षट्कोणमणयस्तेषां द्युतिरेव वारि तत्र वर्तत इति वर्ति स्वच्छायं भैम्या एव प्रतिबिम्बं तस्य सच्छायं समानच्छायं सदृशं तत्तुल्यं निजं स्वीयमालिजालं सखीवृन्दं यस्यास्ताम् । प्रतिबि- म्बतुल्यत्वाद्भैम्यपेक्षया हीनाः, अन्यापेक्षया चाधिकाः सख्यो यस्या एवंभूतामित्यर्थः । स्वच्छायं, 'विभाषा सेनासुराच्छायाशालनिशानाम् २ । ४ । २५' इति नपुंसकत्वम् । व्याख्यानान्तरं कष्टकल्पनया ग्रन्थ- गौरवभिया चोपेक्ष्यम् ॥ ९३ ॥

विलेपनामोदमुदागतेन
तत्कर्णपूरोत्पलसर्पिणा च ।

१ अत्रानुप्रासः शब्दालङ्कारः । रूपोत्थत्वा- सम्भवेऽपि तथोक्तेरतिशयोक्तिः । एकस्मिन्नश्चाद्भुताब्धौ बहूनां जातत्वादीनां क्रमेण वृत्तोक्तेः पर्यायः । २ अत्रानुप्रासो यमकं च । द्युतेर्वारित्वेन रूपणाद्रूपकम्, तयोक्तेश्च केवलमुत्प्रेक्ष्यमाणत्वेनोत्प्रेक्षा, स्वच्छायसच्छाये- त्यादिविशेषणावगत्याऽऽलीनामपि तत्सारूप्यं व्यज्यते ।

रतीशदूतेन मधुव्रतेन
कर्णे रहः किंचिदिवोच्यमानाम् ॥९४॥

विलेपनेति ॥ विलेपनस्य सकर्पूरचन्दनाद्यङ्गरा- गस्यामोदेन परिमलेन या मुत् हर्षस्तेन हेतुना आग- तेन । तथा—तस्या भैम्याः कर्णपूरोत्पले सर्पति एवं- शीलेन समीपगतेन च । तथा—रतीशदूतेन कामसंदे- शहरेण मधुव्रतेन भ्रमरेण रहः एकान्ते नल एव रम- णीयो वरणीयश्चेति कर्णे किंचिदुच्यमानामिव । अन्योऽ- पि दूतो रहसि कर्णे कथयति ॥ ९४ ॥

विरोधिवर्णाभरणाश्मभासां
मल्लाजिकौतूहलमीक्षमाणाम् ।
स्मरस्वचापभ्रमचालिते नु
भ्रुवौ विलासाद्वलिते वहन्तीम् ॥ ९५ ॥

विरोधीति ॥ विरोधिनोऽन्योन्यविरुद्धाः शुभ्रकृष्ण- नीलादयो वर्णा येषामाभरणाश्मनामलंकाररत्नानां या भासो दीप्तयस्तासां मल्लाजिकौतूहलं मल्लयुद्धकौतुक- मीक्षमाणाम् । परस्परोपमर्दं कुर्वती रत्नदीप्तीः विलो- कयन्तीमित्यर्थः । अन्योऽपि प्रभुर्मल्लयुद्धकौतुकमीक्षते । तथा—विलासात्कटाक्षविक्षेपवशाद्वलिते वक्रिते भ्रुवौ वहन्तीं धारयन्तीम् । किंभूते भ्रुवौ—स्मरेण सादृश्या- त्स्वचापभ्रमाच्चालिते नु वितर्के ॥ ९५ ॥

सामोदपुष्पाशुगवासिताङ्गीं
किशोरशाखाऽग्रशयालिमालाम् ।
वसन्तलक्ष्मीमिव राजभिस्तैः
कल्पद्रुमैरप्यभिलष्यमाणाम् ॥ ९६ ॥

सामोदेति ॥ तथा—अतिसुन्दरतल्लाभेन सामोदः सहर्षः पुष्पाशुगः कामस्तेन वासितमधिष्ठितमङ्गं यस्या- स्ताम् । अथ च—सामोदानि सुगन्धीनि पुष्पाणि, आशुगो मलयानिलस्तैर्वासिताङ्गीं सुरभीकृतस्वरूपाम् । तथा-किशोराणि सूक्ष्माणि शाखाग्राण्यङ्गुलयो येषामेवं- विधाः शया हस्ता यस्या एवंविधा आलिमाला सखी- समूहो यस्याः । यद्वा—नूतनशाखाग्रवद्बालपल्लववद- तिरक्ताः करा यस्या एवंभूता आलिमाला यस्यास्ताम् । अथ च—बालशाखाकिसलयशयालिमाला भ्रमरपङ्क्तिर्य- स्यां सा ताम् । तथा—तै राजभिरभिलष्यमाणाम् ।

१ अत्रानुप्रासः, किञ्चिदिवेत्युत्प्रेक्षा, मधुव्रतस्य दूत- त्वेन रूपणाद्रूपकम् । २ अत्रानुप्रासः, न्वित्युत्प्रेक्षा ।

कामिव स्थिताम्—कल्पद्रुमैरप्यभिलष्यमाणां वसन्तलक्ष्मीमिव स्थिताम्। वासित इति मतुबन्तात् 'तत्करोति तदाचष्टे' इति (वा.) ण्यन्ताद्वासश ब्दान्निष्ठा ९६॥

पीतावदातारुणनीलभासां
देहोपदेहात्किरणैर्मणीनाम्।
गोरोचनाचन्दनकुङ्कुमैण-
नाभीविलेपान्पुनरुक्तयन्तीम्॥ ९७॥

पीतेति॥ तथा—पीता अवदाता श्वेता अरुणा नोला च भा येषां, मणीनां किरणैः कृत्वा देहोपदेहाच्छरीरानुलेपनाद्धेतोः यथाक्रमं गोरोचना चन्दनं कुङ्कुमम् एणनाभी कस्तूरी चैताभिः कृतान्विलेपान्पुनरुक्तयन्तीम्। निरर्थकान्कुर्वतीमित्यर्थः। 'बहुष्वनियमः' इति नीलशब्दस्य पूर्वनिपाताभावः। गोरोचनेत्यादिषु चन्दनादिभिः पूर्वं समासः कार्यः॥ ९७॥

स्मरं प्रसूनेन शरासनेन
जेतारमश्रद्दधती नलस्य।
तस्मै स्वभूषादृषदंशुशिल्पं
बलद्विषः कार्मुकमर्पयन्तीम्॥ ९८॥

स्मरमिति॥ तथा—स्मरं प्रसूनेन कुसुमरूपेणातिपेशलेन शरासनेन धनुषा नलस्य जेतारं जैत्रमश्रद्दधतीमसम्भावयन्तीम्। अतः कारणात्तस्मै कामायातिदृढं बलद्विष इन्द्रस्य कार्मुकमर्पयन्तीं ददतीम्। किंभूतं कार्मुकम्—स्वभूषासु स्वीयकर्णाद्यलङ्कारेषु दृषदो रत्नानि तेषामंशवस्तेषां शिल्पं निर्माणरूपम् भैमीभूषाररत्नकिरणैरेव साधनैः स्मरेण नलो जय्यो नान्यैरित्यर्थः। नाना वर्णेन्द्रधनुर्वद्यदीया रत्नशोभेति भावः॥ ९८॥

विभूषणेभ्योऽवरमंशुकेषु
ततोऽवरं सान्द्रमणिप्रभासु।
सम्यक्पुनः क्वापि न राजकस्य
पातुं दृशा धातृधृतावकाशाम्॥ ९९॥

विभूषणेभ्य इति॥ तथा—विभूषणेभ्योऽवरमर्वाग्भागे वर्तमानेष्वंशुकेषु राजकस्य राजसमूहस्य दृशा पातुं न धात्रा धृतः कृतोऽवकाशोऽन्तरालं यस्यां सा। अनेनैव भूषणेष्वपि न धृतावकाशमित्यप्युक्तम्। तथा—ततः अंशुकेभ्योऽवरं सान्द्रमणिप्रभासु राजकस्य दृशा पातुं न धातृधृतावकाशाम्। एवं क्वापि कस्मिन्नप्यवयवप्रदेशे पुना राजकस्य दृशा सम्यक्सामस्त्येन यथावस्थितरूपेण च द्रष्टुं धातृधृतावकाशाम्। विभूषणांशुकमणिप्रभाच्छादितत्वात्किमप्यङ्गं राजदृष्टिगोचरो नाभूदित्यर्थः। यावद्यावद्वस्तु गोप्यते तावत्तावदवलोकनार्थमुत्कण्ठा भवतीति सर्वेऽपि तदवलोकनार्थं सोत्कण्ठा जाता इति भावः॥ ९९॥

प्राक्पुष्पवर्षैर्वियतः पतद्भि-
र्द्रष्टुं न दत्तामथ न द्विरेफैः।
तद्भीतिभुग्नेन ततो मुखेन
विधेरहो वाञ्छितविघ्नयत्नः॥ १००॥

प्रकारान्तरेणाप्यसुसमर्थमाह—

प्रागिति॥ तथा—वियतो गगनात्पतद्भिरतिसौन्दर्यदर्शनेन संतुष्टैर्देवैः भैमीशिरसि मुक्तैः पुष्पवर्षैः प्राक्प्रथमतः राजकस्य द्रष्टुं न दत्ताम्। अथ पश्चात्तदनुगामिभिर्द्विरेफैर्द्रष्टुं न दत्ताम्। ततोऽपि पश्चात्तेभ्यो भ्रमरेभ्यो भीत्या भयेन भुग्नं वक्रीकृतं तेन मुखेन द्रष्टुं न दत्ताम्। विधेर्वाञ्छितस्य विघ्ने यत्नः अहो आश्चर्यरूपः कष्टरूपो वा। ब्रह्मणा येनकेनचित्प्रकारेण सर्वाभिलाषं नाशयितुमेव प्रयत्यते असाधुर्विधिव्यापार इत्यर्थः॥ १००॥

एतद्वरं स्यामिति राजकेन
मनोरथातिथ्यमवापिताय।
सखीमुखायोत्सृजतीमपाङ्गात्
कर्पूरकस्तूरिकयोः प्रवाहम्॥ १०१॥

एतदिति॥ तथा सखीमुखाय अपाङ्गान्नेत्रप्रान्तात्कर्पूरकस्तूरिकयोः श्वेतश्यामकान्तिपूरमुत्सृजन्तीम्। कटाक्षैरवलोकयन्तीमित्यर्थः। किंभूताय सखीमुखाय—अहमेतत्सखीमुखं वरं मनागिष्टं स्यां भूयासमिति प्रत्येकं राजकेन मनोरथातिथ्यमभिलाषविषयमवापिताय प्रापि-

१अनुप्रासः, लक्ष्मीमिवेत्युपमा, कल्पद्रुमकर्तृकाभिलापविषयत्वासम्भवेऽपि तथोक्तेरतिशयोक्तिः। २अत्रानुप्रासः, गोरोचनाद्यनुलेपचतुष्टयस्य यथाक्रमं पीतादिमणिमयूखच्छलकथनात् यथासङ्ख्यसामान्ययोः सङ्करः। ३ भूषणरत्नकान्तीनां शिल्पस्य कार्मुकत्वेनोक्तावतिशयोक्तिः।

१अनुप्रासः, विभूषणानामुत्तरोत्तरमुत्कर्षमुखेन राजसमाजदृष्टक्रमेण भूषणाद्यनेकाधारसम्बन्धवचनात् सारः, 'उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते।' इति प्राचीनोक्तेः। २ विधेरहो इत्यर्थान्तरन्यासः, राजकर्तृकभैमीकर्मकादृष्टत्वस्यैकस्य धर्मस्यानेकसंश्रितत्वोक्त्या पर्यायः।

ताय । सखीमुखत्वेन विना भैमीकटाक्षलाभो न भवतीति राजत्वापेक्षया भैमीसखीमुखत्वमेवास्माकं वरं न राजत्वमित्यर्थः । कटाक्षस्य सितासितरूपत्वं कर्पूरकस्तूरिकापदेनोक्तम् ॥ १०१ ॥

स्मितेच्छुदन्तच्छदकम्पकिञ्चि-
द्दिगम्बरीभूतरदांशुवृन्दैः ।
आनन्दितोर्वीन्द्रमुखारविन्दै-
र्मन्दं नुदन्तीं हृदि कौमुदीनाम् ॥ १०२ ॥

स्मितेइति ॥ स्वस्मिन्प्रसादबुद्ध्याऽऽनन्दितानि उर्वीन्द्राणां राज्ञां मुखारविन्दानि यैरेवंभूतैः, स्मितेच्छू ईषद्धास्यं कर्तुकामौ दन्तच्छदावोष्ठौ तयोः कम्पेन किंचिच्चलनेन किंचिद्दिगम्बरीभूता ईषत्प्रकटीभूता रदा दन्तास्तेषामंशुवृन्दैः कृत्वा कौमुदीनां ज्योत्स्नानां हृदि स्थितं मन्दं नुदन्तीम् । अथ च—'अंशुर्लेशे रवौ रश्मौ' इत्यभिधानाद्रदा एवांशुवृन्दानि सूर्यसङ्घास्तैः नन्दितारविन्दत्वात्कौमुदीमदहरणं युक्तम् । ततोऽप्यधिककान्तित्वाच्च । सूर्येण हि कमलानामानन्दः, चन्द्रिकाणां च तदभावः क्रियते ॥ १०२ ॥

प्रत्यङ्गभूषाऽच्छमणिच्छलेन
यल्लग्नतन्निश्चललोकनेत्राम् ।
हाराग्रजाग्रद्गरुडाश्मरश्मि-
पीनाभनाभीकुहरान्धकाराम् ॥ १०३ ॥

प्रत्यङ्गेति ॥ प्रत्यङ्गं प्रत्यवयवं भूषाणां भूषणानामच्छा निर्मला मणयो रत्नानि तेषां छलेन व्याजेन यस्मिन्नवयवे लग्नानि तत्रैव निश्चलानि लोकनेत्राणि यस्याम् । यस्य यस्यावलोकस्य नेत्रे यत्र यत्र तदीयेऽवयवे लग्ने तत्रैव विलोकनविच्छेदभिया निमेषं परित्यज्य निश्चलीभूते यस्यामेवंभूतामित्यर्थः । दर्शनोत्सुकनेत्राण्येवैतानि, न तु रत्नानीत्यर्थः । अतिसुन्दरीं प्रत्यङ्गं रत्नैरलंकृतामिति भावः । तथा—हाराग्रे मुक्ताहारमध्ये जाग्रत्स्फुरन् गरुडाश्मा गरुडोद्गारमणिस्तस्य रश्मिभिः पीना वर्धिता आभा यस्य स, नाभीएव कुहरस्तस्य यान्धकारस्तिमिरं यस्या एवंभूताम् । एवमस्या गभीरत्वं सूचितम् ॥ १०३ ॥

तद्गौरसारस्मितविस्मितेन्दु-
प्रभाशिरःकम्परुचोऽभिनेतुम् ।
विपाण्डुतामण्डितचामराली-
नानामरालीकृतलास्यलीलाम् ॥ १०४ ॥

तदिति ॥ तथा—तस्या गौरवस्तु सारभूतमतिगौरं स्मितं तेन विस्मिता साश्चर्यीभूता इन्दुप्रभा तस्याः शिरःकम्परुचोऽभिनेतुं तत्स्मितदर्शनजनितविस्मयवशाच्चन्द्रदीप्तिरेवं शिरःकम्पं करोतीति दर्शयितुं विपाण्डुतया मण्डिताश्चामराल्यश्चामरपङ्क्तिरूपा नानामराल्योऽनेका हंस्यस्ताभिः कृता लास्यलीला यस्यास्ताम् । चन्द्रिकाचामरमरालतुल्यासितां चामरैर्वीज्यमानां चेति भावः ॥ १०४

तदङ्गभोगावलिगायनीनां
मध्ये निरुक्तिक्रमकुण्ठितानाम् ।
स्वयं धृतामप्सरसां प्रसादं
ह्रियं हृदो मण्डनमर्पयन्तीम् ॥ १०५ ॥

तदिति ॥ तथा—तस्या अङ्गानां भोगावलिः भुज्यन्त इति भोगाश्चन्दनाद्यस्तत्प्रतिपादको ग्रन्थस्तद्गायनीनां प्रारब्धस्तुतीनां मध्ये असमाप्तायामेव स्तुतौ निरुक्तिक्रमे निर्वचनपरिपाट्यां विषये कुण्ठितानां कतिपयानामेवाङ्गानां स्तुतिः कृता, अनन्तरं स्फूर्त्यभावाद्धतशक्तीनां तूष्णीम् भूतानां मेनकादीनामप्सरसां स्वयं स्वेन धृतां हृदः स्त्रीहृदयस्य मण्डनं भूषणीभूतां ह्रियं लज्जां प्रसादं लज्जारूपं प्रसादमर्पयन्तीं ददतीम् । अतिसौन्दर्यस्तुतिकरणाशक्तेरप्सरसोऽपि लज्जिता इति भावः । 'मध्ये उदरे विषये निरुक्तिक्रमकुण्ठितानां तद्वर्णयितुमशक्तानाम्' इति वा । अन्यापि भोगावली पाठकानां स्वयं धृतमुत्तमहारादि हृदयमण्डनमर्पयति । प्रसादमण्डनशब्दावाश्लिष्टलिङ्गौ ॥ १०५ ॥

तारा रदानां वदनस्य चन्द्रं
रुचा कचानां च नभो जयन्तीम् ।

१ दृष्टीनां सितासितत्वेनोक्तेरेव तन्निगरणे विषयिमात्रनिरूपणाद्भेदेऽप्यभेदोक्तिरूपाऽतिशयोक्तिः । २ अत्रानुप्रासः, मुखारविन्दैरिति रूपकम्, रदांशुवृन्दैः कौमुदीनां नोदनोक्तेरसम्भवेऽपि तथोक्तेरतिशयोक्तिः ।

१ अत्रानुप्रासः, छलेनेत्यपह्नुतिः । रश्मिभिराभायाः पीतत्वोक्तेस्तद्गुणः, यल्लग्नतच्छायस्यान्धकारसाम्योक्त्या सामान्यम् । नाभ्याः कुहरत्वेन रूपणाद्रूपकं च । २अनुप्रासः, रुचोऽभिनेतृकर्मत्वायोगेऽपि तथोक्तेरतिशयोक्तिः चामराणां मरालत्वेन रूपणाद्रूपकम् । ३ ह्रियो मण्डनत्वेन रूपणाद्रूपकम्, अर्पयन्तीमित्युत्प्रेक्षा ।

आकण्ठमक्ष्णोर्द्वितयं मधूनि
महीभुजः कस्य न भोजयन्तीम् ॥ १०६ ॥

तारा इति ॥ तथा—रदानां रुचा तारा:, वदनस्य रुचा चन्द्रम्, कचानां रुचा नभः, जयन्तीमिति सर्वत्रान्वयः। कस्य महीभुजः अक्ष्णोर्द्वितयं नयनद्वयं आकण्ठमुपचारादतितरां मधूनि न भोजयन्तीम्, अपि तु सर्वेषामपि महीभुजां मधूनि भोजयन्तीं पाययमानम्। अतिसुन्दर्यास्तस्या दर्शनेन राजनेत्राणाममृतेनेव तृप्तिर्जातेति भावः ॥ १०६ ॥

अलङ्कृताङ्गाद्भुतकेवलाङ्गीं
स्तवाधिकाध्यक्षनिवेद्यलक्ष्मीम् ।
इमां विमानेन सभां विशन्तीं
पपावपाङ्गैरथ राजराजिः ॥ १०७ ॥

अलंकृतेति ॥ तथा—अलंकृतादप्यङ्गादवयवादद्भुतमाश्चर्यरूपं केवलम् अनलंकृतमङ्गं यस्यास्ताम् ।तया—स्तवात्स्तुतेरधिका अध्यक्षनिवेद्या प्रत्यक्षदृश्या लक्ष्मीर्यस्यास्ताम् । स्तूयमानाया लक्ष्म्याः सकाशादनुभूयमाना लक्ष्मीरधिकेत्यर्थः । अथ विमानेन नरवाह्यचतुरस्रयानेन स्वयंवरसभां विशन्तीमिमां भैमीं राजराजी राजपङ्क्तिरपाङ्गैः कटाक्षैः पपौ सादरं पश्यति स्म । इति कुलकम् ॥ १०७ ॥

आसीदसौ तत्र न कोऽपि भूप-
स्तन्मूर्तिरूपोद्भवदद्भुतस्य ।
उल्लेसुरङ्गानि मुदा न यस्य
विनिद्ररोमाङ्कुरदन्तुराणि ॥ १०८ ॥

आसीदिति ॥ तस्या मूर्तिर्देहः तस्या रूपं सौन्दर्यं तद्विलोकनेनोद्भवज्जातमद्भुतमाश्चर्यं यस्य।एवंभूतस्य यस्याङ्गानि नोल्लेसुः हर्षं न प्रापुः असौ ईदृशः कोऽपि भूपः तत्र सभायां नासीत् । किंभूतान्यङ्गानि—मुदा अनुरागेण कृत्वा विनिद्रैः रोमाङ्कुरैः दन्तुराणि नतोन्नतानि । सर्वेऽपि तत्सौन्दर्यदर्शनात्साश्चर्याः सानुरागाश्च जाता इति भावः ॥ १०८ ॥

अङ्गुष्ठमूर्ध्ना विनिपीडिताया
मध्येन भागेन च मध्यमायाः ।
आस्फोटि भैमीमवलोक्य तत्र
न तर्जनी केन जनेन नाम ॥ १०९ ॥

अङ्गुष्ठेति॥तत्र केन नाम केन पुनः जनेन भैमीमवलोक्य तर्जनी दक्षिणकरप्रदेशिनी नास्फोटि, अपि तु सर्वेणास्फाल्यते स्म । किंभूताम्—अङ्गुष्ठस्य मूर्ध्ना अग्रेण मध्यमाया अङ्गुलेर्मध्येन भागेन च विनिपीडितं नम्रीकृतमग्रं यस्याः सा । लोकरीतिरियमनुभवैकवेद्या ॥ १०९ ॥

अस्मिन्समाजे मनुजेश्वरेण
तां खञ्जनाक्षीमवलोक्य केन ।
पुनःपुनर्लोलितमौलिना न
भ्रुवोरुदक्षेपितरां द्वयी वा ॥ ११० ॥

अस्मिन्निति ॥ अस्मिन्समाजे पुनः पुनः लोलितमौलिना कम्पितशिरसा केन वा केन पुनः मनुजेश्वरेण राज्ञा तां खञ्जनाक्षीं खञ्जरीटतुल्यनेत्रामवलोक्य भ्रुवोर्द्वयी नोदक्षेपितराम् । अतिशयेनोत्क्षिप्तेवेत्यर्थः । आश्चर्यवशाच्छिरःकम्पो भ्रुवोरुत्क्षेपश्च कृत इति भावः ॥ ११० ॥

स्वयंवरस्याजिरमाजिहानां
विभाव्य भैमीमथ भूमिनाथैः ।
इदं मुदा विह्वलचित्तभावा-
दवापि खण्डाक्षरजिह्मजिह्मम् ॥ १११ ॥

स्वयंवरस्येति ॥ अथ भूमिनाथैः राजभिः स्वयंवरस्याजिरमाजिहानामागतां भैमीं विभाव्य दृष्ट्वाऽनुरागवशाद्विह्वलचित्तभावाद्विकलचित्तत्वात्खण्डाक्षरैरर्धोक्तिरूपैर्हेतुभिः जिह्मा कुटिला जिह्वा यस्यां क्रियायां यथा तथा मुदा हर्षेण इदं वक्ष्यमाणमवादि उदितम् । भैमीदर्शनमात्रेण कामपरवशत्वाद्वक्तुमशक्नुवन्तोऽपि हर्षवशाद्वर्णयांबभूवुरित्यर्थः । आजिहानाम् 'भृञामित्' ७।४।७६ ॥१११ ॥

---

१ भोजयन्तीमिति रूपकम्, रुचा जेतृत्वभोजयितृत्वयोरुक्तेरतिशयोक्तिः । रदादेस्ताराऽऽदिजेतृत्वरूपैकधर्मोक्तेर्दीपकम् । रुचैककालं तारादेर्जितत्वोक्त्या तुल्ययोगिता,यस्या जेतृत्वं तस्या एव भोजयितृत्वं,तर्पयितृत्वञ्च विरुद्धमिवेति विरोधाभासो व्यज्यते, उत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वात् काव्यलिङ्गम् । २ स्तुतेर्गुणापेक्षयाऽधिकत्वोक्तिरूपत्वेऽपि ततोऽप्याधिकत्वेन निवेद्योक्तेरतिशयोक्तिः ।

१ अत्रानुप्रासः । २ अत्रानुप्रासः । ३ खञ्जनाक्षीमित्युपमा । ४ अत्रानुप्रासः । भावादित्यस्य खण्डत्वादिपदार्थहेतुत्वात् काव्यलिङ्गम् ।

रम्भाऽऽदिलोभात्कृतकर्मभिर्मा
शून्यैव भूर्भूत्सुरभूमिपान्थैः ।
इत्येतयाऽलोपि दिवोऽपि पुंसां
वैमत्यमत्यप्सरसा रसायाम् ॥ ११२ ॥

रम्भेति ॥ अत्यप्सरसा सान्दर्येणातिक्रान्ता अप्सरसो यया एवम्भूतया तयां भैम्या इति विचार्य दिवः स्वर्गस्य पुंसामिन्द्रादीनां रसायां वैमत्यमसम्मतिः अनिच्छा अचारुत्वमिति यावत् । इति इतीव अलोपि लुप्तम् । इतीवेति किम्—रम्भादिष्वप्सरःसु लोभादनुरागात्कृतं कर्म ज्योतिष्टोमसङ्ग्रामादि यैः सुरभूमिपान्थैः स्वर्गजिगमिषुभिः नरैः भूः शून्यैव मा भूदिति। स्वर्गेऽप्येतादृश्याः सुन्दर्या अभावादिन्द्रादयोऽपि स्वर्गं परित्यज्य भूमिमेव स्वर्गाधिकां मत्वाऽत्र समागताः । राजानस्तु ज्योतिष्ठोमादि परित्यज्य स्वर्गे न गता इति किं वाच्यमिति भावः ॥ ११२ ॥

रूपं यदाकर्ण्य जनाननेभ्य-
स्तत्तद्दिगन्तादयमागमाम ।
सौन्दर्यसारादनुभूयमाना-
दस्यास्तदस्माद्बहु नाकनीयः ॥११३॥

रूपमिति ॥ वयम् अस्या यद्रूपं जनाननेभ्य आकर्ण्य तस्मात्तस्मादतिदूराद्दिगन्तात्प्राच्यादिदिक्प्रान्तात्सकाशादागमाम आगतवन्तः, तत् अस्याः सौन्दर्यमनुभूयमानात्प्रत्यक्षदृश्यादस्मात्सौन्दर्यसारात् लावण्योत्कर्षाद्बहु अतिशयेनाकनीयो न कनीय एव । अन्यदीयं स्वल्पमपि लोकमुखाद्बहु श्रूयते, एतदीयं याथात्म्येन वर्णनाशक्तेर्बह्वपि सत् अल्पमेव श्रुतमित्याश्चर्यमिति भावः । आगमाम इति गमेः लृदित्वादङ् । कनीयः 'युवाल्पयोः कनन्यतरस्याम् ५ । ३ । ६४ इति कनादेशः ॥११३॥

रसस्य शृङ्गार इति श्रुतस्य
क्व नाम जागर्ति महानुदन्वान् ।
कस्मादुदस्थादियमन्यथा श्री-
र्लावण्यवैदग्ध्यनिधिः पयोधेः ॥११४॥

रसस्येति ॥ नवरसमध्ये शृङ्गार इति श्रुतस्य ख्यातस्य रसस्य महानुदन्वान्समुद्रः क्व जागर्ति कस्मिन्देशे विद्यते । नाम प्रश्ने अप्यर्थे वा—क्व नाम कस्मिन्नपि प्रदेशे सम्भावनायां वा । अस्ति इति कथमवगतमित्यत आह—अन्यथा शृङ्गाररससमुद्राभावे लावण्यस्य सौन्दर्यस्य वैदग्ध्यस्य निधिः इयं भैमी श्रीर्लक्ष्मीः कस्मात्पयोधिरुदस्थादुत्पन्ना । श्रीः समुद्रादुत्पन्नेति पुराणादौ प्रसिद्धम् । इयं तु श्रियोऽप्यधिका तस्माच्छृङ्गाररससमुद्रादुत्पन्ना, स क्वापि देशे विद्यत एव इति कार्यात्कारणानुमानमिति भावः ॥ ११४ ॥

साक्षात्सुधांशुर्मुखमेव भैम्या
दिवः स्फुटं लाक्षणिकः शशाङ्कः ।
एतद्भ्रुवौ मुख्यमनङ्गचापं
पुष्पं पुनस्तद्गुणमात्रवृत्त्या ॥ ११५॥

साक्षादिति ॥ भैम्या मुखमेव साक्षान्मुख्य उपमानभूतः सुधांशुरमृतांशुः कविसङ्केते उपमानत्वेन प्रसिद्धश्चन्द्रो भैमीमुखलक्षण एव । अतिवृत्तत्वाकलङ्कत्वाह्लादकत्वादधरलक्षणस्वादुतमसुधावत्त्वादिना चन्द्रादधिकत्वादित्यर्थः। यद्वा भैम्या एव मुखं साक्षात्सुधांशुरिति एवमन्यासां नायिकानां मुखस्य सुधांशुत्वोक्तिर्मृषैवेति सूचितम् । अथ च—साक्षात् प्रत्यक्षः संनिहिततर इति यावत् । अथ च—भैमीमुखमेव साक्षादभिधावृत्या सुधांशुः । ओष्ठलक्षणमुख्यसुधासम्बन्धात्सुधांशुपदेन भैमीमुखमेव मुख्यया वृत्त्याऽभिधेयमिति भावः । दिवः गगनसम्बन्धी शशाङ्कः स्फुटं निश्चितं लाक्षणिकः लक्ष्मणेन कलङ्केन संसृष्टः । अतः साक्षान्मुख्य उपमानभूतो न भवति, किंतु न्यूनगुणत्वादुपमेयमेवेत्यर्थः । अथ च—साक्षादसदादिरसनप्रत्यक्षग्रहणयोग्यसुधावत्वात् । दिवि स्थितस्तु चन्द्रो लाक्षणिक आनुमानिकः तदीयसुधाया देवैकभोग्यत्वादस्मदाद्यप्रत्यक्षत्वात् । प्रत्यक्षानुमानयोर्मध्ये प्रत्यक्षस्यैव बलवत्त्वादित्यर्थः । अथ च—लाक्षणिको लक्षणावृत्तिवशात्सुधांशुपदेनाभिधेयो, न त्वभिधावृत्त्या । एतन्मुखं सुधांशुपदेनाभिधावृत्त्याऽभिधेयम् । चन्द्रस्तु शशाङ्कपदेनाभिधीयत इत्यनयोर्महदन्तरमिति भावः । एतद्द्योतनार्थं सुधांशुशशाङ्कपदे। तथा-एतद्भ्रुवौ मुख्यमनङ्गस्य कामस्य चापमभिधावृत्त्या। अथ च—मुखे भवं मुख्यम् । भ्रूरूपं कामचापं मुखे

---

१ अनुप्रासः इतीवेत्युत्प्रेक्षा व्यङ्ग्या । २ अत्रानुप्रासः, अतिशयोक्तिरलङ्कारश्च ।

१ शृङ्गाररससमुद्रस्य सम्भावनायां भैमीसद्भावस्य हेतुत्वोक्त्याऽनुमानम्, इयं श्रीरिति प्रसिद्धलक्ष्म्यपेक्षया भेदेनानभिधानादतिशयोक्तिः । रसस्येति श्लिष्टम् । निधित्वेन रूपणाद्रूपकं च ।

भवत्वान्मुख्यम् । यत् पुनः पुष्पमनङ्गचापत्वेन व्यवह्रियते तत्तयोर्भ्रुवोर्वक्रत्वोन्मादकत्वलक्षणो यो गुणः, तन्मात्रस्य तदेकदेशभूतस्य उन्मादकत्वस्यैव वृत्त्या वर्तनेन । न तु तत्र वक्रत्वं वर्तते । ततश्चैकदेशसादृश्यलक्षणाद्गौणीनिमित्ताद्गौण्यैव वृत्त्याऽनङ्गचापत्वेन व्यवहर्तव्यम् । अथ च तत्पुष्पं पुनः दोरकमात्रे यद्वर्तनं तेन कामचापमित्युत्प्रेक्षते । मालारूपस्य कामचापस्य कविभिरुक्तत्वात्। अतस्तस्यानङ्गचापत्वं सापेक्षम् । भ्रुवोस्तु निरपेक्षम् । 'भ्रुवौ' इति द्विवचनेनासंलग्नत्वम्, चापमित्येकवचनेन समुदितयोश्चापत्वं न तु प्रत्येकमिति च सूचितम् । अथ च—गुणस्तन्तुः सौगन्ध्यादिर्वा, तन्मात्रस्य या वृत्तिस्तया पुष्पस्य गुणवत्त्वसद्भावाच्चापस्य गुणवत्त्वात्पुष्पं कामचापमित्युच्यत इत्यर्थः । अभिधावृत्तेर्लक्षणापेक्षयाभ्यर्हितत्वाद्गौण्यपेक्षया चाभ्यर्हिततरत्वान्मुख्यत्वम् । ततश्च 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति 'सापेक्षनिरपेक्षयोर्निरपेक्षं बलवत्' इति न्यायाद्भैमीमुखभ्रूयुगमेव मुख्यं चन्द्रानङ्गचापत्वाभिलापयोग्यम्, अतिसुन्दरं मदजनकं चेति भावः । 'तत्र मुख्यो व्यापारोऽस्याभिधोच्यते । अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' इति अभिधादीनां लक्षणम् । 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया' इति । लक्षणया लक्षणेनैव संसृष्ट इत्यर्थे 'संसृष्टे ४ । ४ । २२' इति ठक् । मुख्यम्, मुखमिव भवतीतीवार्थे 'शाखादिभ्यो यः ५ । ३।१०३' पक्षे 'शरीरावयवाच्च ४ । ३ । ५५' इति भवार्थेयः ॥ ११५ ॥

लक्ष्ये धृतं कुंडलिके सुदत्या
　ताटङ्कयुग्मं स्मरधन्विने किम् ।
सव्यापसव्यं विशिखा विसृष्टा-
　स्तेनानयोर्यान्ति किमन्तरेव ॥ ११६ ॥

लक्ष्ये इति ॥ सुदत्या भैम्या कर्णभूषणीभूतं ताटङ्कयुग्मं स्मरधन्विने कामधानुष्काय कुण्डलिके कुण्डलाकारे लक्ष्ये कृत्वा धृतं किम् । तेन कामेन सव्यापसव्यं विसृष्टा मुक्ता विशिखा अनयोः कुण्डलिकयोरन्तरेव मध्य एव यान्ति किं वितर्के । भ्रूचापयोजिताः कटाक्षबाणाः कर्णताटङ्ककुण्डलाभ्यन्तरेण निर्यान्तीति भावः । प्रवीणस्य धानुष्कस्य बाणा लक्ष्यस्यान्तरेव यान्ति । ताटङ्कयुग्मदर्शनमात्रेण कामोद्रेकादेवं संभाव्यत इति भावः । अन्तः एव इति पदच्छेदः । सव्यापसव्यं यथाकथंचित्क्रियाविशेषणम् ॥ ११६ ॥

तनोत्यकीर्तिं कुसुमाशुगस्य
　सैषा बतेन्दीवरकर्णपूरौ ।
यतः श्रवः कुण्डलिकापराद्ध-
　शरं खलः ख्यापयिता तमाभ्याम् ११७

तनोतीति ॥ सा एषा भैमी कुसुमाशुगस्य कामस्येन्दीवरयोर्नीलोत्पलयोः कर्णपूरौ श्यामत्वात्तथाभूताम्। अत एवाकीर्तिं तनोति बत आश्चर्ये । कर्णपूरत्वेनाभिमताया अकीर्तिरूपत्वमसम्भवमित्याश्चर्याविदनम् । खलो दुर्जनः पुरुष आभ्यां नीलोत्पलकर्णपूराभ्यां कृत्वा श्रवसोः कर्णयोः कुण्डलिकारूपाल्लक्ष्यद्वयात् अपराद्धौ च्युतौ शरौ नीलोत्पले एव बाणौ यस्य तं कामं ख्यापयिता कथयिष्यति । कर्णद्वये नीलोत्पलद्वयं कर्णपूरीकृतं, कुण्डलिके लक्ष्ये । कामस्य च पुष्पाशुगत्वादिन्दीवरयोस्तद्बाणत्वं युक्तम् । धानुष्कस्य बाणाभ्यां लक्ष्यस्यन्तरागन्तव्यम्, इन्दीवरलक्षणौ बाणौ कर्णयोरुपरि वर्तेते इति कामो लक्ष्याच्च्युतसायक इति खलो वदिष्यतीत्यपकीर्तिरूपौ जातावित्यर्थः । कर्णपूरदर्शनान्मदनोद्रेको भवतीति भावः ॥ ११७ ॥

रजःपदं षट्पदकीटजुष्टं
　हित्वाऽऽत्मनः पुष्पमयं पुराणम् ।
अधात्मभूराद्रियतां स भैम्या
　भ्रूयुग्ममन्तर्धृतमुष्टि चापम् ॥ ११८ ॥

रज इति ॥ स आत्मभूः कामो भैम्याः भ्रूयुग्ममेव अन्तः मध्ये आधेयत्वेन धृतो मुष्टिर्येन । मुष्टिना मध्ये धृतत्वाददृश्यमध्यम् । एवंभूतं चापमद्य आद्रियतां नूतनं धनुः करोतु । किं कृत्वा—पुष्पमयं पुराणं जीर्णमात्मनश्चापं हित्वा । यतः—रजःपदं परागस्थानं काष्ठचूर्णस्थानं च । तथा—षट्पदा एव कीटास्तैः सेवितं घुणा-

१ भैमीमुखस्य साक्षात्त्वस्थापनाय साक्षात्सुधांशोर्लाक्षणिकत्वोक्तिरित्यपह्नुतिः । एवं परार्द्धेऽप्येवैव ।

१ किमित्युत्प्रेक्षा । २ कर्णपूरयोरकीर्तिरूपत्वेन रूपणाद्रूपकम् । यत इत्यस्य पूर्ववाक्यहेतुत्वात् काव्यलिङ्गम् ।

दिक्कीटसेवितं च । पुष्पचापापेक्षया चास्याधिकसामर्थ्यान्नूतनत्वम् ॥ ११८ ॥

पद्मान्हिमे प्रावृषि खञ्जरीटा-
न्क्षिप्नुर्यमादाय विधिः क्वचित्तान् ।
सारेण तेन प्रतिवर्षमुच्चैः
पुष्णाति दृष्टिद्वयमेतदीयम् ॥ ११९ ॥

पद्मानिति ॥ विधिः ब्रह्मा पद्मेभ्यः, खञ्जरीटेभ्यः यं सारमादाय तान्प्रसिद्धान्नीलोत्पलादीन् हिमे शीतकाले, खञ्जरीटान्प्रावृषि वर्षाकाले क्वचिदनिरूपितस्थाने क्षिप्नुः क्षेपणशीलः सन् प्रतिवर्षं प्रतिसंवत्सरं तेन पद्मखञ्जनेभ्यो गृहीतेन सारेण एतदीयं दृष्टिद्वयमुच्चैरातितरां पुष्णाति वर्धयति । प्रतिवर्षं पद्माद्यभावान्नेत्रद्वये च शोभाधिक्या-त्तदीयेनैव सारेण शोभावृद्धिरिति भावः । पद्मानित्यादौ 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ११३।६९' इति षष्ठीनिषेधः । 'वा पुंसि पद्मं नलिनम्' इत्यमरः ॥११९॥

एतादृशोरम्बुरुहैर्विशेषं
भृङ्गौ जनः पृच्छतु तद्गुणज्ञौ ।
इतीव धाताऽकृत तारकालि-
स्त्रीपुंसमाध्यस्थ्यमिहाक्षियुग्मे॥१२०॥

एतादृशोरिति ॥ धाता इतीव हेतोः, अमुमर्थं कथयन्निवेति वा, अनेन कारणेन वा, इहास्मिन्नेत्रयुगे एवालिस्त्रीपुंसौ भ्रमरदंपती तारके तयोः माध्यस्थ्यं मध्यभागवर्तित्वम् । अथ च—साक्षित्वम् अकृत । इति किम्—जनः एतादृशोर्भैमीनेत्रयोः अम्बुरुहैः पद्मैः सह विशेषं तारतम्यं तयोः पद्मनेत्रयोः गुणज्ञौ तारतम्यवेदिनौ भृङ्गौ भृङ्गी च भृङ्गश्च तौ कमलानि रमणीयानि भैमीनेत्रे वा इति पृच्छतु । मध्यस्थो हि संशयं छिनत्ति । कमलानि परित्यज्यालिजायापत्योरागमान्नेत्रयोरेव रमणीयत्वं ताभ्यां कथितम् । भैमीदृशौ कमलादधिके अतिनीलकनीनिके चेति भावः । भृङ्गाविति 'पुमान्स्त्रिया१।२।२६॥'पृच्छिर्द्विकर्मा॥स्त्रीपुंस इति, 'अचतुर—' इति साधुः ॥ १२० ॥

ऽव्यधत्त सौधे रतिकामयोस्त-
द्भक्तं वयोऽस्या हृदि वासभाजोः ।
तदग्रजाग्रत्पृथुशातकुम्भ-
कुम्भौ न सम्भावयति स्तनौ कः॥१२१॥

व्यधत्तेति ॥ तयो रतिकामयोः भक्तं वयः यौवनं कर्तृ तस्या हृदि वासभाजो रतिकामयोः कृते सौधे द्वौ प्रासादौ कर्म व्यधत्त । द्वयोः सौधद्वयं युक्तम् । सौधद्वयकरणे प्रमाणमाह—यस्मात् कः पुरुषो भैम्याः स्तनौ तयोः सौधयोरग्रे उपरि जाग्रतौ प्रकाशमानौ पृथु पीवरौ शातकुम्भकुम्भौ सुवर्णकलशौ न सम्भावयति तर्कयति । किन्तु सर्वेऽपि संभावयन्त्येवेति भावः । अतो वयसा रतिकामार्थं पृथक् सौधे कृते एवेत्यर्थः । सौधयोरुपरि सुवर्णलकशाभ्यां भाव्यम् । तत्स्थाने कुचौ जाताविति भावः । अन्योऽपि भक्तः स्वर्णकलशभूषितौ प्रासादौ रचयति । सर्वदा रतिकामयुक्ता सुवर्णकुम्भतुल्यकुचा चेयमिति भावः ॥ १२१ ॥

अस्या भुजाभ्यां विजिताद्बिसार्त्कि
पृथक्करोऽगृह्यत तत्प्रसूनम् ।
इहेष्यते तन्न गृहाः श्रियः कै-
र्नगीयते वा कर एव लोकैः ॥ १२२ ॥

अस्या इति ॥ अस्या भुजाभ्यां पृथक्प्रत्येकं विजितादभिभूताद्बिसात्तत्प्रसूनं बिसप्रसूनं कमलमेव करो बलिरगृह्यत किं ? प्रत्येकं दण्डो गृहीतः किम् । अथ च—कमलमेव हस्तत्वेनाङ्गीकृतमिति वितर्कः । कुत एतदित्याशङ्क्याह—इह लोके भुजयोः तत्करभूतं कमलं कैः लोकैः श्रियो गृहाः वसतिस्थानत्वेन शोभालयत्वेन च न इष्यते । कैर्वा लोकैः कर एव करशब्देनैव न गीयते कीर्त्यते ?, अपि तु सर्वैरपि । भैमीहस्तयोः श्रीगृहत्वं करशब्दवाच्यत्वं च विद्यते कमलस्य श्रीगृहत्वं लोकप्रसिद्धम् । करत्वं च विजिताद्बिसाद्दण्डरूपत्वेन गृहीतं तद्युक्तमित्यर्थः । बिसकमलाभ्यामपि एतदीयं बाहुकरमतिसुन्दरतरमिति भावः । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः ॥ १२२ ॥

---

१ अत्र रजआदिपदानां श्लिष्टत्वेन श्लेषः, रजो रज इति रजसो भेदेऽप्यभेदोक्तिः श्लेषमूलेति श्लिष्टं रूपकम् । साक्षाच्चापस्य हेयत्वं समर्थ्य भ्रूयुगमस्य चापत्वेन स्थापनादपह्नुतिः, असौ च रूपकोपस्कृता । २ तथा पोषणासम्भवेऽपि तयोक्तेरतिशयोक्तिः । ३ इतीवेत्युत्प्रेक्षा । अक्ष्णोर्भ्रमरदम्पतित्वेन रूपणाद्रूपकम् ।

१ वयःकर्तृको रतिकामयोर्वासभवनविभागोऽनुपपन्नोऽपि तथोक्त इत्यतिशयोक्तिः । पूर्वमुक्तस्यान्यथात्वे हेतूपन्यासादनुमानम् । २ किमित्युत्प्रेक्षा, करस्य श्रीगृहत्वेन रूपणाद्रूपकम् ।

छद्मैव तच्छम्बरजं बिसिन्या-
स्तत्पद्ममस्यास्तु भुजाग्रसद्म ।
उत्कण्टकादुद्गमनेन नाला-
दुत्कण्टकं शातशिखैर्नखैर्यत् ॥ १२३ ॥

छद्मेति॥ तत् प्रसिद्धं शम्बरात् जलाज्जातं बिसिन्याः कमलिन्याः छद्मैवालीकमेव । अथ च—शम्बराद्दैत्यात् जातं छद्म मायारूपमेव असत्यमित्यर्थः । तर्हि तत् किं सत्यं तत्राह—अस्याः तु पुनः भुजाग्रे सद्म यस्य तत्पद्मं मुख्यम् । सत्यमित्यर्थः । कुत एतदित्याशङ्कयाह—यद्यस्मादुत्कण्टकादुद्गतरोमाञ्चात् । अथ च—उत्कृष्टशूकरूपकण्टकात् । नालाद् भुजदण्डादुद्गमनेन जातत्वेन शातशिखैस्तीक्ष्णाग्रैर्नखैः कृत्वा उत्कण्टकम् । पद्मं तूत्कण्टकनालादुद्गतमपि नोत्कण्टकम् । पद्मे कण्टकाभावात् । अतो न तत्पद्मम् । किं तु भैमीपाणिरेव । कार्ये हि कारणगता गुणा दृश्यन्ते । कमलाधिकौ तीक्ष्णनखौ चैतदीयहस्ताविति भावः । 'शम्बरो दैत्यभेदे स्यात्,' 'नीरक्षीराम्बुशम्बरम्' इत्यमरः ॥ १२३ ॥

जागर्ति मर्त्येषु तुलार्थमस्या
योग्येति योग्यानुपलम्भनं न ।
यद्यस्ति नाके भुवनेऽथ वाध-
स्तदा न कौतस्कुतलोकवातः ॥१२४॥

जागर्तीति ॥ अस्याः तुलाऽर्थे सादृश्यार्थे योग्या समुचिता मर्त्येषु मर्त्यलोकेषु न जागर्तीत्यर्थे ( अस्माकं राज्ञां) योग्यायाः सत्या अनुपलम्भनमनुपलब्धिरेव प्रमाणम् । यदि योग्या विद्येत तर्ह्युपलभ्येत नोपलभ्यते, तस्मान्मर्त्यलोके नास्तीति वाच्यमिति भावः । तर्हि स्वर्गे पाताले वा भवेदित्यत आह—यदि नाके, अथवा अधोभुवने पाताले एतत्सदृशी अस्ति, तदा कुतः कुत आगतः कौतस्कुतः तस्य सर्वतः समागतस्य लोकस्य स्वर्गपाताललोकाभ्यामपि समागतस्य देवनागलोकस्य वाधोऽतिसंमर्दो न स्यात्, जातश्च संमर्दः तस्माल्लोकत्रयेऽप्येतादृशी नास्ति । अन्यथा देवा नागाश्च नात्रागच्छेयुरिति भावः । कुतः कुत आगत इत्यर्थे 'तत आगतः४।३।७४'इत्यणि कस्कादित्वात्सः । 'तातस्तत—' इति पाठे ततस्तत आगत इत्यर्थे तेनैवाण् ॥ १२४ ॥

नमः करेभ्योऽस्तु विधेर्न वास्तु
स्पृष्टं धियाऽप्यस्य न किं पुनस्तैः ।
स्पर्शादिदं स्याल्लुलितं हि शिल्पं
मनोभुवोऽनङ्गतयानुरूपम् ॥ १२५ ॥

नम इति ॥ विधेः करेभ्यो नमः अस्तु, वा अथवा न अस्तु । कुतः—अस्य विधेः धिया बुद्ध्याऽपि ईदृशं शिल्पं न स्पृष्टं तैः हस्तैः न स्पृष्टमिति किं पुनर्वाच्यम् । श्रोत्रियत्वादीदृशशिल्पनिर्माणे स्फूर्तिरेव नाभूत् किमिति हस्तैः स्पृशेत् । अथ च—निरवयवया बुद्ध्या यन्न स्पृष्टं तत् सावयवैर्हस्तैः कथं स्पृश्येतेत्यर्थः । तैर्न स्पृष्टमित्यत्र हेतुः—हि यस्मादिदमतिमृदु शिल्पं हस्तस्पर्शाल्लुलितमतिघुष्टं स्यात् । तर्हि केन निर्मितमित्यत्राह—इदं शिल्पमनङ्गतया निरवयवतया मनोभुवः कामस्यानुरूपम् । काम एवास्य कर्ता, न विधिः तस्मात्कामायैव नमोऽस्त्वित्यर्थः ॥ १२५ ॥

इमां न मृद्वीमसृजत्कराभ्यां
वेधाः कुशाध्यासनकर्कशाभ्याम् ।
शृङ्गारधारां मनसा न शान्ति-
विश्रान्तिधन्वाऽध्वमहीरुहेण ॥ १२६ ॥

इमामिति ॥ वेधा मृद्वीमिमां कराभ्यां नासृजत् । यतः—कुशाध्यासनेन दर्भधारणेन कर्कशाभ्याम् । तर्ह्यियं मानसी स्यात्तत्राह—शृङ्गारधारां शृङ्गारनदीरूपामिमां मनसापि नासृजत् । यतः—शान्तिरसस्य विश्रान्त्यै धन्वाध्वा मरुदेशमार्गः, तत्र महीरुहेण वृक्षरूपेण । अतिनीरसेनातिकठिनेनेत्यर्थः । अतिकठिनेनातिमृद्वी शृङ्गाररसरूपा च निर्मातुमशक्येत्यर्थः ॥१२६॥

उल्लास्य धातुस्तुलिता करेण
श्रोणी किमेषा स्तनयोर्गुरुर्वा ।
तेनान्तरालैस्त्रिभिरङ्गुलीना-
मुदीतमध्यात्रिवलीविलासा ॥ १२७ ॥

उल्लास्येति ॥ एषा श्रोणी नितम्बदेशो गुरुः स्तनयोर्वा गुरुरिति गुरुत्वतारतम्यज्ञानार्थं धातुः करेण उल्लास्योत्क्षिप्य तुलिता किमिति तर्कः । श्रोणी किं गुरुः

१ अत्र सत्यभूतपद्मास्यासत्यत्वस्थापनादपह्नुतिः । तथोक्तेः सम्भावनामात्रत्वादुत्प्रेक्षेति, भैमीपाणिपद्मस्य प्रसिद्धपद्मापेक्षयाऽतिशयोक्तेर्व्यतिरेकश्च । २ अत्र यद्यर्थातिशयोक्त्यनुप्राणितो व्यतिरेकः ।

१ उत्प्रेक्षा, धियोऽपि सम्बन्धाभावोक्तेरतिशयोक्तिः । ४ अत्राप्युत्प्रेक्षा, कराभ्यां सर्जनाभावोक्तिसमर्थनाय कर्कशत्वोक्तेः परिकरः, एवं परार्द्धेऽपि । एतस्य चार्थस्योत्प्रेक्षामात्रत्वादुत्प्रेक्षा ।

स्तनयोर्वा किं गुरुरिति वा । तेनैव हेतुना चतसृणाम ङ्गुलीनां त्रिभिरन्तरालैरवकाशैः कृत्वा उदीतो मध्यदेशे त्रिवलीविलासो यस्याः सा । उदीतमध्यत्रिवलीविलासा किमिति वा किंशब्दो योज्यः । गुरुश्रोणी गुरुस्तनी चेयमिति भावः ॥ १२७ ॥

**निजामृतोद्यन्नवनीतजाङ्गी-**
**मेतां क्रमोन्मीलितपीतिमानम् ।**
**कृत्वेन्दुरस्या मुखमात्मनाऽभू-**
**न्निद्रालुना दुर्घटमम्बुजेन ॥ १२८ ॥**

निजेति ॥ इन्दुः एतां कृत्वा नवनीतेन इमां निर्माय आत्मना स्वेनैव रूपेणास्या मुखमभूत् । किम्भूतामेताम्—निजामृतात्स्वीयामृतात् उद्यत्समुत्पन्नं तत्क्षारभूतं नवनीतं तस्माज्जातम् अङ्गं यस्यास्ताम् । अत एव दिनवृद्धिक्रमेणोन्मीलितः प्रकटीकृतः पीतिमा गौरत्वं यस्यां ताम् । नवनीते हि क्रमेण पीतिमा भवति । तन्निर्मितत्वाच्चात्रापि पीतत्वं जातम् । यावद्यावत्तारुण्यं तावदस्यामधिकं गौरत्वं दृश्यत इत्यर्थः । यतः—चन्द्रकिरणसंबन्धान्निद्रालुना संकोचशीलेनाम्बुजेन कमलेन दुर्घटं दुष्करम् । कमलेन निर्माणे सर्वावयवानां चन्द्रकिरणैरेव निर्मितत्वात्तत्संबन्धात्कमलं सकुचदेव, अथ च—रात्रौ सर्वदा कमलसंकोचात्स्वेनैव वदनाकारेण जातम् । चन्द्र एवास्या निर्मातेत्यर्थः । अतिसुकुमारा, अतिगौरी, चन्द्रवदना चेयमिति भावः ॥ १२८ ॥

**अस्याः स चारुर्मधुरेव कारुः**
**श्वासं वितेने मलयानिलेन ।**
**अमूनि सूनैर्विदधेऽङ्गकानि**
**चकार वाचं पिकपञ्चमेन ॥ १२९ ॥**

अस्या इति ॥ स प्रसिद्धो मधुरेव वसन्त एवास्याः कारुः शिल्पी चारुर्योग्यो नान्यः । यतः—सः अस्याः श्वासं मलयानिलेन वितेने निर्ममे।तथा—अमूनि प्रत्यक्षदृश्यान्यतिमृदून्यङ्गकानि ह्रस्वान्यङ्गानि सूनैः चम्पकादिपुष्पैः विदधे निर्ममे । वाचं पिकस्य पञ्चमस्वरेण चकार। एतत्सर्वं वसन्ताधीनमेवेति तेनैवेयं निर्मिता । सुगन्धिश्वासा पुष्पवन्मृद्वङ्गी कोकिलालापा चेति भावः । 'षड्जं मयूरो वदति स चेन्मत्तस्तु पञ्चमम् । पुष्पसाधारणे काले पिकः कूजति पञ्चमम्' इत्यमरः' ॥ १२९ ॥

**कृतिः स्मरस्यैव न धातुरेषा**
**नास्या हि शिल्पीतरकारुजेयः ।**
**रूपस्य शिल्पे वयसाऽपि वेधा**
**निर्जीयते स स्मरकिङ्करेण ॥ १३० ॥**

कृतिरिति ॥ एषा स्मरस्यैव कृतिर्निर्माणं, न धातुः । हि यस्मादस्याः शिल्पी इतरकारुभिर्जेयो न । यतः—वेधाः रूपस्य शिल्पे निर्माणविषये स्मरस्य किङ्करेण वयसा कामोद्दीपकेन तारुण्येन नितरां जीयते । बाल्यापेक्षया तारुण्ये रामणीयकस्याधिक्यान्मदनेन जीयत इति किं वाच्यमित्यपेरर्थः । तस्मान्मदनस्यैव कृतिः, तारुण्येन समदनाऽतिरमणीया च कृतेयमिति भावः ॥ १३० ॥

**गुरोरपीमां भणदोष्ठकण्ठं**
**निरुक्तिगर्वच्छिदया विनेतुम् ।**
**श्रमः स्मरस्यैव भवं विहाय**
**मुक्तिं गतानामनुतापनाय ॥ १३१ ॥**

गुरोरिति ॥ इमां भैमीं भणद्वर्णयद् गुरोर्बृहस्पतेरपि ओष्ठकण्ठं अतिसौन्दर्याद्वर्णयितुमशक्तत्वाद्वस्तुनिर्वचनं कर्तुमहमेव कुशलं, न त्वन्यदिति निरुक्तौ निर्वचनविषये गर्वस्य छिदया निराकरणेन कृत्वा विनेतुं विनीतं कर्तुम्, अद्य प्रभृति त्वया निर्वचनं न कार्यमिति शिक्षयितुं भैमीनिर्माणरूपः स्मरस्यैव श्रमो, न विध्यादेः । तथा—भवं विहाय संसारं त्यक्त्वा मुक्तिं गतानां पुरुषाणामनुतापनाय स्मरस्यैव श्रमः भैमीसद्भावात्संसार एव मोक्षः, वयं संसारं त्यक्त्वा किमिति मुक्ता जाता इति तेषां पश्चात्तापः । अतिसौन्दर्याद्वाचस्पतेरपि वागगोचरः । अन्येनापि समर्थेन सगर्वस्य गर्वशातनं क्रियते । ओष्ठकण्ठम्, प्राण्यङ्गत्वादेकवद्भावः ॥१३१॥

**आख्यातुमाक्षिप्रजसर्वपीतां**
**भैमीं तदेकाङ्गनिखातदृक्षु ।**

---

१अत्र किमित्युत्प्रेक्षा,प्रागुक्तस्यसमर्थनाय परार्द्धस्य हेतुत्वेनोपन्यास इति काव्यलिङ्गम् । अत्रेन्दोर्मुखस्य चाभिन्नत्वसमर्थनाय तथा सम्भावनादतिशयोक्तिः, अम्बुजस्य मुखापेक्षयाऽवरत्वसाधनाद् व्यतिरेको व्यङ्ग्यः,तथोक्तेश्च सम्भावनामात्रत्वादुत्प्रेक्षा ।

१ रूपकं तावत् स्फुटम्।मध्वादेः कारुत्वसम्बन्धोक्तेरतिशयोक्तिः । २ धातारमपह्नुत्य स्मरस्य स्रष्टृत्वेनोक्तेरपह्नुतिः । ३ अत्रापि पूर्ववदपह्नुतिः । विनेतुमित्यस्य मुक्तानां पश्चात्तापं प्रति हेतुत्वेनोक्तेः काव्यलिङ्गम् ।

गाथासुधाश्लेषकलाविलासै-
रलंचकाराननचन्द्रमिन्द्रः ॥ १३२ ॥

आख्यातुमिति ॥ इन्द्रस्तस्या एकाङ्गे एकैकस्मिन्नवयवे निखाता समारोपिता दृक् दृष्टिर्यैस्तेषु राजसु मध्ये अक्षिव्रजैः सर्वाङ्गेषु पीतां दृष्टां नेत्रसहस्रेण दृष्टसर्वावयवां भैमीमाख्यातुं वर्णयितुं गाथा श्लोक एव सुधा तस्या आश्लेषाख्याः कला अलंकारविद्यास्तासां विलासैः श्लेषालंकारयुक्तश्लोकनिर्माणकौशलैः। अथ च—गाथारूपायाः सुधाया आ सामस्त्येन यः श्लेषः संबन्धस्तेन पञ्चदशकलाविलासैः सुधासंबन्धस्य कलानां च विलासैर्वा आननचन्द्रमलंचकार। वक्ष्यमाणप्रकारेण श्लेषेण वर्णयामासेत्यर्थः ॥ १३२ ॥

स्मितेन गौरी हरिणी दृशेयं
वीणावती सुस्वरकण्ठभासा ।
हेमैव कायप्रभयाङ्गशेषै-
स्तन्वी मतिं क्रामति मे न कापि१३३॥

स्मितेनेति ॥ इयं भैमी स्मितेन कृत्वा गौरी अप्सरोविशेषः पार्वती वा, तथा—दृशा हरिणी कुरङ्गी देवाङ्गना च, तथा—सुस्वरकण्ठभासाऽतिमधुरस्वरकण्ठश्रिया वीणावती देवाङ्गना वीणायुक्ता च, तथा—कायप्रभयाऽङ्गकान्त्या हेमा देवाङ्गना सुवर्णं च, तथा—अङ्गानामवयवानां शेषैर्भागैः । शिष्टैरवयवैरित्यर्थः । तैः कृत्वा मेनकाऽपि तन्वी सुन्दरी मतिं क्रामति बुद्धिस्था भवतीत्यर्थः। कापि तन्वी मे मतिं न क्रामति बुद्धिस्था न भवतीत्यर्थः । केनचिदंशेन कासांचित्साम्यम्, न तु सर्वथेति सर्वाभ्योऽप्यप्सरोभ्यः सकाशादियं रमणीयतमा। निरुपमेयमिति भावः ॥ १३३ ॥

इति स्तुवानः सविधे नलेन
विलोकितः शङ्कितमानसेन ।
व्याकृत्य मर्त्योचितमर्थमुक्ते-
राखण्डलस्तस्य नुनोद शङ्काम् १३४॥

इतीति ॥ आखण्डल इन्द्रः तस्य नलस्य समीपे इति एवं गौर्याद्यप्सरस्त्वेन भैमीं स्तुवानो वर्णयन् नूनमयं भैमीमप्सरस्त्वेन वर्णयति चेन्मदीयं रूपं गृहीत्वा भैमीप्राप्त्यर्थमागत इन्द्रोऽयमिति शङ्कितमानसेन नलेन विलोकितः सन् तस्य नलस्य इन्द्रोऽयमितीमां शङ्कां नुनोद स्फोटयामास । किं कृत्वा—उक्तेर्गौर्याद्यप्सरःप्रतिपादिकाया अर्थं मर्त्योचितं मनुष्ययोग्यं 'स्मितेन धवला' इत्यादिरूपमर्थं व्याकृत्य व्याख्याय । ममैवान्यथाबुद्धिर्जाता, न त्वयमिन्द्रः, किंतु कश्चन राजा इति तस्येन्द्रत्वशङ्कां दूरीकृतवानिति भावः ॥ १३४ ॥

स्वं नैषधादेशमहो विधाय
कार्यस्य हेतोरपि नानलः सन् ।
किं स्थानिवद्भावमधत्त दुष्टं
तादृक्कृतव्याकरणः पुनः सः ॥१३५॥

स्वमिति ॥ अहो आश्चर्ये विषादे वा । स इन्द्रः भैमीप्राप्तिलक्षणस्य कार्यस्य हेतोः स्वमात्मानं नैषधादेशं नैषधरूप आदेशो यस्य एवंविधं कृत्वा अनलो नलव्यतिरिक्तो न सन् अपि तु नल एव भवन् । अथ च—नलो ना मनुष्यो भवन्नपि स्थानिवदिन्द्रवद् दुष्टं भावमाशयं किं किमर्थमधत्त धृतवान् । कुतोऽवगतमित्यत आह—यतः स इन्द्रः पुनः पश्चान्नलशङ्कानन्तरं तादृक् मर्त्योचितं कृतं व्याकरणं व्याख्यानं येन सः । इन्द्रस्वरूपत्वे दुष्टाशयत्वं युक्तं सर्वदा तस्य प्रतारकस्वभावत्वात् । नलस्वरूपे धृतेऽपि यत्स्वीयं दुष्टाशयत्वमधत्त तदनुचितम् । नलस्यादुष्टाशयत्वात्तत्स्वरूपे धृतेऽदुष्टाशयत्वस्यैवाङ्गीकर्तुं युक्तत्वादित्यर्थः । नलरूपधारणेनान्यथाव्याख्यानेन च नलं वृथैव प्रतारितवानिति भावः । अथ च—सन् विद्वान् एष तादृक्कृतव्याकरणशास्त्रोऽपि स शक्रः स्वं निजकर्तृकं धादेशं 'नहो धः' इत्येवमादिमादेशं विधाय न अल् अनल्, न विद्यतेऽनल् यस्मिन्कार्ये तन्नानल् तस्य । अल्संबन्धिन इत्यर्थः । कार्यस्य कृते दुष्टं स्थानिवद्भावं किं नाधत्त? अपितु चकार । 'स्थानिवदादेशोऽनल्विधौ १ । १ । ५६' इत्यलाश्रितकार्ये स्थानिवद्भवो निषिद्धः । तेन 'पथिमथ्यृभुक्षामात् ७।१।८५' इत्यात्वे कृते आकारगतस्थानिवद्भावागतं हल्त्वमाश्रित्य 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६।१।६८' इति सुलोपो न भवति । विद्वानिन्द्रस्तु तत्रापि स्थानिवद्भावं व्यधत्तेत्याश्चर्यम् । अथ

१ आननचन्द्रमिति रूपकम्। २गौरीत्यादेरनेकार्थकत्वाच्छ्लेषः,एकस्या भैम्या गौर्याद्यनेकात्मनोद्भावनादुल्लेखः। 'एकेन बहुधोल्लेखेऽप्यसौ (उल्लेखः) विषयभेदतः' इति चन्द्रालोकोक्तेः ।

१ इति शङ्कां नुनोदेति काव्यलिङ्गम् ।

च—स इन्द्रो दुष्टं स्थानिवद्भावमादेशित्वं किमधत्त देवत्वं विहाय मनुष्यत्वं किमिति कृतवान् । कीदृशः—ना पुरुषः । तादृक् अपूर्वं कृतं विशिष्टमाकरणमाकारो येन सः । इन्द्रमूर्तिरेव नलरूपेण परिणतेत्यर्थः । किं कृत्वा—स्वमात्मानं नैषधादेशं कृत्वा । दमयन्तीप्राप्तिलक्षणकार्यस्य हेतोः । प्रयोजने सत्यप्ययुक्तं न कर्तव्यमिति भावः । कीदृशः सन्—नलः अनलः सन् । देवत्वं त्यक्त्वा मनुष्याकारादाश्चर्यम् । सर्वे देवत्वाय यतन्त इत्यादि यथाज्ञानं ज्ञातव्यम् ॥ १३५ ॥

इयमियमधिरथ्यं याति नेपथ्यमञ्जु-
विंशतिविशति वेदीसुर्वशी सेयमुर्व्याः ।
इति जनजनितैः साऽऽनन्दनादैर्विजघ्ने
नलहृदि परभैमीवर्णनाकर्णनाप्तिः ॥१३६॥

इयमिति ॥ जनजनितैः लोककृतैरिति. सानन्दैर्नादैः कर्तृभिः नलहृदि नलान्तःकरणे वर्तमाना परा श्रेष्ठा परैः कृता वा या भैमीवर्णना तस्या आकर्णनेन श्रवणेन या आप्तिः प्राप्तिः सा विजघ्ने विघ्निता । इति किम्—नेपथ्यमञ्जुः अलंकाररुचिरा इयमियमधिरथ्यं रथ्यायां याति गच्छति । सेयमतिप्रसिद्धा उर्व्याः उर्वशीदेवाङ्गना इवातिसुन्दरी वेदीं स्वयंवरभूमिं विशतिविशति । आनन्दयुक्तैर्नादैः सा परभैमीवर्णनाकर्णनाप्तिरिति वा । भैमीदर्शनविषये ससंभ्रमं लोकं दृष्ट्वा स्वयमपि ससंभ्रमो भूत्वा भैमीस्तुतिं नाशृणोदिति भावः । नलहृदीत्यनेनाकर्णितमपि हृदयस्यान्यत्र गतत्वादनाकर्णितप्रायमेवेति सूचितम् । इयमियमित्यादौ संभ्रमाद्विरुक्तिः ॥ १३६ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । तर्केष्वप्यसमश्रमस्य दशमस्तस्य व्यरंसीन्महा—काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १३७ ॥

श्रीहर्षमिति ॥ न केवलं काव्यनिर्माण एव कुशलः, किं तु तर्कशास्त्रेऽप्यसमः केनाप्यतुल्योऽभ्यासो यस्य ॥ १३७ ॥

---

१ अत्रोत्प्रेक्षा । २अत्र मालिनी वृत्तम् । यमकं शब्दालङ्कारः । भैम्या उर्वशीत्वेन रूपणाद्रूपकम् ।

इति श्रीवेदरकरोपनामकश्रीमन्नृसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे दशमः सर्गः ।

---

# एकादशः सर्गः ।

इदानीं राजवर्णनार्थमेकादशं सर्गमारभते—

तां देवतामिव मुखेन्दुवसत्प्रसादा-
मक्ष्णा रसादनिमिषेण निभालयन्तीम् ।
लाभाय चेतसि धृतस्य वरस्य भीम-
भूमीन्द्रजा तदनु राजसभां बभाज ॥ १ ॥

तामिति ॥ तदनु अनन्तरं भीमभूमीन्द्रजा भैमी चेतसि धृतस्य नलस्य लाभाय तां राजसभां देवतामिव इष्टदेवतामिव बभाज विवेश सिषेवे च । किंभूताम्—मुखेन्दुषु वसन्वर्तमानः प्रसादः प्रसन्नता यस्याः । भैम्यागमनात्सहर्षाम् । अथ च—मुखचन्द्रे वसन्वरदानलक्षणः प्रसादो यस्याः । तां वरं दातुमुद्यताम् । तथा—रसादनुरागादनिमेषेणाक्ष्णा भैमीं निभालयन्तीम् । अथ च देवतात्वात्स्वभावादेव निमेषरहितेन नेत्रेण रसात्स्नेहेन भक्तं विलोकयन्तीम् ॥ १ ॥

तन्निर्मलावयवभित्तिषु तद्विभूषा-
रत्नेषु च प्रतिफलन्निजदेहदम्भात् ।
दृष्ट्या परं न हृदयेन न केवलं तैः
सर्वात्मनैव सुतनौ युवभिर्ममज्जे ॥ २ ॥

तदिति ॥ तैर्युवभिः सुतनौ भैम्यां परं केवलं दृष्ट्या ममज्जे निमग्नमिति न । तथा—केवलं हृदयेन निमग्नमिति न । किंतु तस्याः निर्मलावयवभित्तिषु निर्मलाङ्गकुड्येषु तद्विभूषारत्नेषु च प्रतिफलन् प्रतिबिम्बितो निजदेहः तस्य दम्भाद्व्याजात् सर्वात्मनैव सर्वेणापि शरीरेण निमग्नम् । तेषां नयनमानसे एव तदायत्ते जाते इति न, किंतु सर्वमपि शरीरं तदायत्तं जातम्, तदीयावयवभूषारत्नेषु सर्वेषामपि शरीराणि प्रतिफलितानीति भावः । सर्वेऽपि सर्वथा तत्परवशा जाता इत्यर्थः । निर्मलत्वा-

---

१ अस्मिन्सर्गे प्रायः समाप्तिं यावद्वसन्ततिलका वृत्तम् । २ देवतामिवेति मुखेन्द्विति चोपमा । अनुप्रासोऽपि शब्दालङ्कारः ।

दवयवेष्वपि प्रतिबिम्बो युक्तः । भित्तिशब्दः प्रशंसार्थो वा ॥ २ ॥

द्यामन्तरा वसुमतीमपि गाधिजन्मा
यद्यन्यमेव निरमास्यत नाकलोकम् ।
चारुः स यादृगभविष्यदभूद्विमानै-
स्तादृक्तदभ्रमवलोकितुमागतानाम् ३॥

द्यामिति ॥ गाधिजन्मा विश्वामित्रो द्यां वसुमतीमपि अन्तरा स्वर्गभूम्योर्मध्ये यदि अन्यमेव नाकलोकं निरमास्यताकरिष्यत तर्हि स स्वर्गलोको यादृक् यादृशः चारुः सुन्दरोऽभविष्यत्, तर्हि स्वयंवरमवलोकितुमागतानां देवादीनां विमानैः कृत्वा तत् स्वयंवरदेशात् उपरि वर्तमानम् अभ्रं गगनं तादृक्तादृशमभूत् । गाधिजो यदि स्वर्गमर्त्यमध्येऽन्यं स्वर्गमकरिष्यत्तर्हि भुवि उत्कृष्टानि विमानानि भैमीवरणार्थभूमिमागतानां देवानां विमानानि तानि न भवन्ति अमूनि विमानानि अन्तरिक्षगानि । तैर्विमानैः कृत्वा तद्गगनं यादृक् चारु, तादृगभविष्यादिति वा । अन्तरिक्षनिर्मितस्वर्गतुल्यं तदाकाशमभूदिति भावः । पूर्वव्याख्याने विश्वामित्रोऽभूदित्यत्र क्रियातिपत्तौ लृङ् न, तावन्मात्रक्रियातिपत्तेः पर्यवसानात् ॥ ३ ॥

कुर्वद्भिरात्मभवसौरभसम्प्रदानं
भूपालचक्रचलचामरमारुतौघम् ।
आलोकनाय दिवि संचरतां सुराणां
तत्रार्चनाविधिरभूदधिवासधूपैः ॥ ४ ॥

कुर्वद्भिरिति ॥ तत्र स्वयंवरदेशे आलोकनाय दिवि संचरतां सुराणामधिवासार्थं सौगन्ध्यार्थं ज्वालितैः कामशरादिरूपैः कृत्वा अर्चनाविधिः पूजाविधानमभूत् । किम्भूतैः—भूपालानां चक्रं तस्य चलानि चामराणि तेषां मारुतौघं वायुसङ्घम् आत्मभवसौरभ्यसम्प्रदानं दानपात्रं कुर्वद्भिः । चलचामरवायुवशाद्गगनचारिभिर्धूपैर्देवाः परितुष्टा बभूवुरित्यर्थः ॥ ४ ॥

तत्रावनीन्द्रचयचन्दनचन्द्रलेप-
नेपथ्यगन्धवहगन्धवहप्रवाहम् ।
आलीभिरापतदनङ्गशरानुसारी
संरुध्य सौरभमगाहत भृङ्गवर्गः ॥५ ॥

तत्रेति ॥ तत्र स्वयंवरदेशे भृङ्गवर्गः भ्रमरसङ्घः सौरभं सौगन्ध्यमगाहत बुभुजे । किं कृत्वा—अवनीन्द्रचयस्य राजसमूहस्य चन्दनचन्द्रः चन्दनयुक्तः कर्पूरः । बहुकर्पूरं चन्दनमिति यावत् । तेन कृतं लेपनेपथ्यमङ्गरागभूषणं तस्य गन्धवहः सौगन्ध्यवाही यो गन्धवहो वायुस्तस्य प्रवाहं सङ्घम् आलीभिः स्वपङ्क्तिभिः संरुध्य कुत्रचिद्गन्तुमदत्त्वा । किंभूतः—आपतन्त आगच्छन्तो येऽनङ्गशरास्ताननुसरत्यनुकरोति एवंशीलः । आपतन्तः स्वर्गात्पतन्तः कामशराः पुष्पाणि तदनुगामी वा । सौगन्ध्यबाहुल्यात्सर्वत्र भ्रमरा विचरन्ति स्मेति भावः । अन्योऽपि वस्त्रादिना वायुं संरुध्य सौरभं गाहते । बद्धपङ्क्तीनां भ्रमराणां दैर्घ्यात्कामोद्दीपकत्वाच्च कामबाणतुल्यत्वम् ॥ ५ ॥

उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गी-
सर्वानुवादविधिबोधितसाधुमेधाः ।
सौधस्रजः प्लुतपताकतयाऽभिनिन्यु-
र्मन्ये जनेषु निजताण्डवपण्डितत्वम् ॥६॥

उत्तुङ्गेति ॥ सौधस्रजः धवलगृहपङ्क्तयः प्लुतपताकतया चलत्पताकतया जनेषु जनानां समीपे इत्यर्थः । निजताण्डवपण्डितत्वं स्वीयनृत्तचातुर्यमभिनिन्युरभिनयेन दर्शयामासुरित्यहं मन्ये । किंभूताः—उत्तुङ्गोऽतितारः मङ्गलमृदङ्गनिनादो विवाहमर्दलध्वनिस्तस्य भङ्ग्यः प्रकारविशेषास्तासां सर्वः सकलोऽनुवादविधिरनूच्चारणविधिः, सकलस्य मृदङ्गशब्दस्य यः प्रतिशब्दविधिरितियावत्, तेन बोधिता ज्ञापिता साध्वी मेधा लक्षणया गम्भीरता याभिः । अन्या अपि नर्तक्यो मङ्गलमृदङ्गनिनादभङ्गीनामनुवादेन स्वीयं नृत्तकौशलं हस्ताद्यभिनयेन लोकेषु प्रदर्शयन्ति । अन्यो मेधावी गुरुणा व्याख्यातस्यार्थस्यानुवादेन बोधितसाधुमेधः सन् जनेषु स्वीयं पाण्डित्यं प्रकाशयति । एतच्छ्लोकार्थोऽनुभवैकगम्यः । नञ्दुःसुभ्य एव परात् मेधाशब्दादसिच्, नान्येभ्यः परादिति नासिच् ॥ ६ ॥

सम्भाषणं भगवती सदृशं विधाय
वाग्देवता विनयबन्धुरकन्धरायाः ।

१ अत्र दम्भादित्यपह्नुतिः । तथोत्प्रेक्षणादुत्प्रेक्षा । २ तदानीं गगनस्य निरुपमत्वाभावेऽपि तथा सम्भावनाय यत्तद्भ्यां तथोक्तेरतिशयोक्तिः । अभूतोपमेति कश्चित् । ३ अधिवासधूपस्य सुराणामसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ।

४ अत्रानुप्रासः। भृङ्गवर्गस्यानङ्गशरोपमत्वोक्तेरुपमा । २ अनुप्रासः । मन्ये इत्युत्प्रेक्षा ।

ऊचे चतुर्दशजगज्जनतानमस्या
तत्राश्रिता सदसि दक्षिणपक्षमस्याः॥७॥

संभाषणमिति ॥ भगवती षड्गुणैश्वर्यसम्पन्ना । तया—चतुर्दशसु जगत्सु जनतया नमस्या पूज्या वाग्देवता तत्र सदसि अस्या भैम्या दक्षिणं पक्षं पार्श्वम् । अथ च—अनुकूलपक्षम् । आश्रिता सती ऊचे। किं कृत्वा—सदृशं देवादिवर्णनविषयं भैम्या सह सदृशमनुगुणं सम्भाषणं विधाय । किम्भूताया अस्याः—विनयेन बन्धुरा नम्रा कन्धरा शिरोधरा यस्याः । भगवती इत्यादिविशेषणैर्देवादिवर्णनसामर्थ्यं दक्षिणं पक्षमित्यनेन भैमीपक्षपातित्वं च सूचितम् ॥ ७ ॥

अभ्यागमन्मखभुजामिह कोटिरेषा
येषां पृथक्कथनमब्दशतातिपाति ।
अस्यां वृणीष्व मनसा परिभाव्य कञ्चिद्
यं चित्तवृत्तिरनुधावति तावकीना॥८॥

किमुवाचेत्याह—

अभ्यागमदिति ॥ हे दमयन्ति, इह स्वयंवरे मखभुजां देवानामेषा कोटिः अभ्यागमदाययौ । कोटिसंख्याका देवाः समागता इत्यर्थः । येषां देवानां पृथक्कथनं पार्थक्येन वर्णनम् अब्दशतं वर्षशतमातिपतत्यातिक्रामति इत्येवंशीलम्।वर्षशतेनापि कर्तुं न शक्यत इत्यर्थः। तस्मात् त्वं मनसा परिभाव्य विचार्य अस्यां देवकोटीमध्ये यं कञ्चित्तावकीना चित्तवृत्तिरनुधावत्यभिलष्यति तं वृणीष्व । मनसा विचार्य वृणीष्व वा । तावकीना, चित्तवृत्तिर्मनसा विचार्य इत्यनेन सरस्वत्या अनादरः सूचितः । तावकीना, 'युष्मदस्मदोरन्यतरस्यां खञ्च' ४। ३। ५ ' इति खञ् ' तवकममकावेकवचने ४ । ३ । ३ इति तवकादेशः ॥ ८ ॥

एषां त्वदीक्षणरसादनिमेषतैषा
स्वाभाविकाऽनिमिषतामिलिता यथाऽभूत्
आस्ये तथैव तव नन्वधरोपभोगै-
र्मुग्धे विधावमृतपानमपि द्विधाऽस्तु॥९॥

एषामिति ॥ ननु मुग्धे सुन्दरि, एषां देवानां त्वदीक्षणे रसात्प्रीतेर्हेतोः एषा प्रत्यक्षदृश्या अनिमेषता निर्निमेषता स्वाभाविकी सहजाऽनिमिषता तया मिलिता संयुक्ता सती यथा द्विधा द्विप्रकाराऽभूत् तथैवामृतपानमपि तवास्ये विधौ मुखचन्द्रेऽधरोपभोगैरधरचुम्बनैः कृत्वा द्विधा द्विप्रकारमस्तु भवतु । तथा देवा देवत्वादनिमिषा अपि त्वदवलोकनप्रसादात्पुनरप्यनिमिषा जाताः । तथा देवत्वात् चन्द्रामृतादा अपि त्वदधरामृतास्वादादमृतादाः । पुनरुक्ता भवन्त्वित्यर्थः । चन्द्रास्ययोस्तुल्यत्वं सूचितम्। मुखे त्वोष्ठोपभोगैः, चन्द्रे तु धराव्यतिरिक्तोपभोगैः—स्वर्गोपभोगैरित्यर्थः ॥ ९ ॥

एषां गिरेः सकलरत्नफलस्तरुः स
प्राग्दुग्धभूमिसुरभेः खलु पञ्चशाखः ।
मुक्ताफलं फलनसान्वयनाम तन्व-
न्नाभाति विन्दुभिरिव च्छुरितः पयोधेः१०

एषां गिरेरिति ॥ सकलानि रत्नान्येव फलानि यस्य तानि फलति इति वा । सकलरत्नफलः स प्रसिद्धः तरुः कल्पवृक्ष एषां देवानां गिरेः सुमेरोः पञ्चशाखः खलु हस्त इव आभाति शोभते । किंभूतस्य मेरोः—प्राक् पूर्वं दुग्धा भूमिरेव सुरभिर्धेनुः येन । धृतगोरूपा भूमिरेव रत्नादीनि दुग्धा येन तस्य । किंभूतस्तरुः—पयोधेः क्षीरसमुद्रस्य विन्दुभिः तत उत्पन्नत्वाच्छुरितः । 'पयोभिः' इति पाठे दुग्धरूपैर्विन्दुभिरिति व्याख्येयम् । उत्प्रेक्षते—मुक्ताफलं फलनेन सान्वयं सार्थकमेतदेव नाम यस्यैवंविधं तन्वन्निव । कस्यचित्फलं हि फलशब्देन व्यपदिश्यते, तथा मुक्ताफलस्यापि फलत्वं कल्पवृक्षत्वादिति भावः । प्रारब्धगोदोहनस्य पाणिना विना दोग्धुमशक्तः कल्पवृक्षो मेरोः करं आसीत् । दोहने दुग्धसंपर्कस्यापि संभवात्, तेन च रत्नानामेव दुग्धत्वादस्य च रत्नसहितत्वात्प्रायेण मेरोः पाणिरेवायमित्यर्थः । क्षीरोदात्तस्योत्पन्नत्वान्मुक्तादीनि रत्नानि दुग्धविन्दुतुल्यानि शोभन्त इत्यर्थः । अथ च—पञ्च शाखाः स्कन्धा यस्य स कल्पवृक्षः किल पञ्चशाखः । करोऽपि अङ्गुलीभिः पञ्चशाखः । पृथूपदिष्टा पृथ्वी मेरुणा रत्नानि महौषधीश्च दुग्धा इत्यागमः । फलनेन इष्टोत्पादनेन सान्वयं सयोगं नाम यस्य एवंविधं मुक्ताफलं संपादयन्निवेति वा । गोपालसहचारित्वादत्राप्यनादरः सूचितः ॥ १० ॥

वक्त्रेन्दुसन्निधिनिमीलदलारविन्द-
द्वन्द्वभ्रमक्षममथाञ्जलिनाऽऽत्ममौलौ ।

१ अत्र परिकरः । २ अनुप्रासः ।

१ अनिमिषत्वामृतपानयोर्भेदायोगोक्तेरतिशयोक्तिः ।
२ खल्वित्युत्प्रेक्षा, छुरित इवेत्युपमा ।

कृत्वाऽपराधभयचञ्चलमीक्षमाणा
साऽन्यत्र गन्तुममरैः कृपयाऽन्वमानि ११

वक्रेति ॥ अथ सरस्वतीवचनानन्तरममरैः सा भैमी अन्यत्र सर्पराजादिसमीपे गन्तुं कृपया अन्वमान्यनुज्ञाता । किंभूता—आत्ममौलावञ्जलिं कृत्वा देवान्नमस्कृत्य अवरणजन्योऽपराधस्तज्जनितं भयं शापादि तेन चञ्चलं यथा तथा देवानीक्षमाणा । किंभूतमञ्जलिम्—वक्रेन्दोर्मुखचन्द्रस्य संनिधिः, तस्मान्निमीलन्ति संकुचन्ति दलानि पर्णानि यस्य तदरविन्दद्वन्द्वं तस्य भ्रमे क्षमं समर्थम् । संकुचद्दलयुगतुल्यम् । स्वेष्वननुरागिणीं तां ज्ञात्वा यत्र तवानुरागस्तं वृणु, मा भैषीरिति देवैरनुज्ञातेति भावः । अन्योऽप्येवमीक्षमाणः सकृपैरनुकम्प्यते । निमीलन्ति निमीलानि । पचाद्यच् । 'निमीलिदल—' इति पाठे निमीलनशीलपत्रेत्यर्थः ॥ ११ ॥

तत्तद्विरागमुदितं शिबिकाधरस्थाः
साक्षाद्विदुः स्म न मनागपि यानधुर्याः ।
आसन्ननायकविषण्णमुखानुमेयः
भैमीविरक्तचरितानुमया तु जज्ञुः १२॥

तदिति ॥ यानधुर्याः शिबिकावाहिन उदितं समुत्पन्नं तेषु तेषु विरागम् । अर्थाद्भैम्याः साक्षात्प्रत्यक्षेण यद्यपि मनागपि लेशतोऽपि न विदुः स्म जानते स्म । यतः शिबिकाया अधरेऽधोदेशे तिष्ठन्ति शिबिकाधरस्थाः । तथाऽपि आसन्नाः सन्निहिता नायका देवादयस्तेषां विषण्णानि म्लानानि मुखानि तैः कृत्वानुमेयानि भैम्या विरक्तचरितानि नमस्कारादीनि तेषामनुमयाऽनुमानेन तर्केण तु पुनः जज्ञुर्जानते स्म । तुरवधारणे । वा जज्ञुरेव । यत एते विवर्णमुखास्तस्मादेतेषु विरक्तिं ज्ञात्वा अनु पश्चाद् यातेति वचनं विनैवान्यत्र जग्मुरिति तेषां पण्डितत्वं सूचितम् ॥ १२ ॥

रक्षःस्वरक्षणमवेक्ष्य निजं निवृत्तो
विद्याधरेष्वधरतां वपुषैव भैम्याः ।
गन्धर्वसंसदि न गन्धमपि स्वरस्य
तस्या विमृश्य विमुखोऽजनि यानवर्गः १३

रक्षस्स्विति ॥ यानवर्गः वाहकसार्थो रक्षस्सु निजमरक्षणमवेक्ष्य राक्षसा अस्मान् खादिष्यन्तीति भिया तेभ्यो निवृत्तः परावृत्तः । तथा—अश्वमुखनराङ्गेषु नरमुखाश्वाङ्गेषु विद्याधरेषु भैम्या वपुषैव कृत्वा अधरतां न्यूनतामवेक्ष्य विचार्य निवृत्तः । एते भैमीवरणयोग्या न भवन्तीति । तथा—गन्धर्वसंसदि गन्धर्ववर्गे तस्या भैम्याः स्वरस्य कण्ठमाधुर्यस्य गन्धमपि न विमृश्य नावेक्ष्य विमुखोऽजनि जातः । अधरतामवेक्ष्येत्यर्थः । राक्षसादीनामयोग्यत्वात्तान्प्रति न गच्छति स्मेति भावः ॥ १३ ॥

दीनेषु सत्स्वपि कृताफलवित्तरक्षै-
र्यक्षैरदर्शि न मुखं त्रपयैव भैम्याम् ।
ते जानते स्म सुरशाखिपतिव्रतां किं
तां कल्पवीरुधमधिक्षिति नावतीर्णाम् १४

दीनेष्विति ॥ यक्षैः त्रपयैव लज्जयैव भैम्यां विषये मुखं न अदर्शि न दर्शितम् । यतः—किम्भूतैः—दीनेषु दरिद्रेषु जनेषु सत्स्वपि कृता अफला वित्तरक्षा धनपालनं यैः । दीनेभ्योऽवितीर्णधनैः अतिकृपणैरित्यर्थः । 'भैम्याः' इति पाठे तस्याः सकाशाल्लज्जयेति योज्यम् । यक्षेषु धनाधिपत्वं प्रसिद्धं लज्जा किमिति जातेत्याशङ्क्याह—ते यक्षाः तां भैमीमधिक्षिति पृथिव्यामवतीर्णां सुरशाखिनः पत्युः कल्पवृक्षस्य पत्युरिव दानशूरत्वलक्षणं व्रतं यस्यास्तां कल्पवीरुधं स्त्रियं कल्पवल्लीमतिबहुदात्रीम् । अथ च सुरशाखी नल एव तस्य पतिव्रतां कल्पवल्लीम् । किं न जानते स्म । अतिवदान्यां तां प्रति अतिकृपणस्यात्मनोऽयोग्यत्वात्तैर्मुखं नादर्शीति भावः । अन्योऽपि कृपणो वदान्यमुखनिरीक्षणेऽपि लज्जते ॥ १४॥

जन्यास्ततः फणभृतामधिपः सुरौघा-
न्माञ्जिष्ठमाञ्जिमवगाहिपदोष्ठलक्ष्मीम् ।
तां मानसं निखिलवारिचयान्नवीना
हंसावलीमिव घना गमयांबभूवुः॥ १५॥

जन्यास्तत इति ॥ ततः जनीं वहन्तीति जन्या वाहकाः तां भैमीं सुरौघाद्देवसमूहात्सकाशात्फणभृताम-

१ अञ्जलौ वक्रेन्दुसन्निधिसङ्कुचितारविन्दद्वन्द्वभ्रमवर्णनाद्रूपकानुप्राणितो भ्रान्तिमान् । २विरागे मुदितत्वायोगेऽपि सन्धिवशात्तथाऽऽभासाद्विरोधाभास इति केचित्, वेत्तृत्वाभावेऽपि वेत्तृत्वोक्तेर्विरोधाभास इत्यपरे ।

१ अत्र राक्षसादीनां मध्ये तदननुरूपतायाः प्रकारान्तरेण वचनात् पर्यायोक्तम्, "पर्यायोक्तं तदप्याहुर्यद् व्याजेनेष्टसाधनम् ।" इति प्राचीनोक्तेः । २ अत्र नलस्य कल्पद्रुमत्वेन भैम्याः कल्पलतात्वेन च रूपणाद्रूपकम् ।

धिपं सर्पराजं वासुकिं गमयांबभूवुः प्रापयामासुः । किंभूताम्—मञ्जिष्ठया रक्तं वस्त्रं माञ्जिष्ठं तस्य मञ्जिमानं रम्यतामवगाहते एवंशीला पदोष्ठलक्ष्मीः चरणाधरशोभा यस्याः सा । के कस्मात्कां किमिव—नवीना नूतना घना मेघा निखिलवारिचयात्कृत्स्नजलौघात्सकाशाद्धंसावलीं हंसपङ्क्तिं मानसं सर इव । 'यान्याः' इति पाठे याने यानवाहने साधुरिति । माञ्जिष्ठम्, 'तेन रक्तं रागात् ४।२।१' इत्यण् ॥ १५ ॥

यस्या विभोरखिलवाङ्मयविस्तरोऽय-
माख्यायते परिणतिर्मुनिभिः पुनः सा ।
उद्गत्वरामृतकरार्धपरार्ध्यमालां
बालामभाषत सभासततप्रगल्भा १६ ॥

यस्या इति ॥ सा पुनः बालां भैमीमभाषत। किंभूता—सभायां सततं प्रगल्भा । सा का—मुनिभिर्दिव्यज्ञानशालिभिरयं वेदादिरखिलवाङ्मयविस्तरः विभोः सर्वव्यापिन्याः यस्या देव्याः परिणतिः परिणाम आख्यायते कथ्यते तद्रूपेणैव या व्यवस्थिता । किंभूताम्—उद्गत्वर उदयाचलस्थोऽमृतकरश्चन्द्रः तस्यार्धं तद्वत्परार्ध्यं तत्सदृशं भालं यस्यास्ताम् । भया दीप्त्या सह वर्तमानेति भिन्नं वा । वाङ्मयम् 'एकाचो नित्यम्' इति मयट् । 'गत्वरश्च ३।२।१६४' इति निपातनादुद्गत्वरः साधुः ॥ १६ ॥

आश्लेषलग्नगिरिजाकुचकुङ्कुमेन
यः पट्टसूत्रपरिरम्भणशोणशोभः ।
यज्ञोपवीतपदवीं भजते स शंभोः
सेवासु वासुकिरयं प्रसितः सितश्रीः १७

आश्लेषेति ॥ सोऽयं वासुकिः किंभूतः—शंभोः सेवासु प्रसित आसक्तः । तथा—सितश्रीः श्वेतशोभश्च । स कः—यः शंभोर्यज्ञोपवीतपदवीं लभते । किंभूतः—य आश्लेषेणालिङ्गनेन लग्नं यद्गिरिजाकुचकुङ्कुमं तेन कृत्वा पट्टसूत्रस्य परिरम्भणेनेव सम्बन्धेनेव शोणशोभो रक्तशोभः। यज्ञोपवीतमपि श्वेतं ग्रन्थिस्थाने पट्टसूत्रेण शोणशोभं भवति । सर्वदा शंभुसेवया संभोगाभावादेनं मा वृणीष्वेति भावः । पुराणे देवानां चातुर्वर्ण्याधिकारे 'ब्रह्मा विप्रः, रुद्रः क्षत्रियः, विष्णुर्वैश्यः, दस्रौ शूद्रौ ' ' माञ्जिष्ठं क्षत्रियः ' इति वचनाद्यज्ञोपवीतस्यारक्तत्वं कथितमिति वा । ' प्रथितः ' इति पाठे सेवासु ख्यातः ॥ १७ ॥

पाणौ फणी भजति कङ्कणभूयमैशे
सोऽयं मनोहरमणीरमणीयमुच्चैः ।
कोटीरबन्धनधनुर्गुणयोगपट्ट-
व्यापारपारगममुं भज भूतभर्तुः ॥१८॥

पाणाविति ॥ हे भैमि, सोऽयं फणीन्द्रो वासुकिः ऐशे शाम्भवे पाणौ कङ्कणभूयं कङ्कणत्वं भजति यातीत्यर्थः । किंभूतं कङ्कणत्वम्—उच्चैः मनोहरमणीभिः रमणीयम् । कङ्कणमपि रत्नैः रमणीयं भवति । त्वममुं भज । किंभूतम्—भूतभर्तुः शिवस्य कोटीरबन्धनं जटाजूटबन्धनं धनुर्गुणः धनुर्ज्या योगपट्टश्च तेषां व्यापारस्य भवनलक्षणस्य पारगं तत्र कुशलम् । कोटीरबन्धनं धनुर्गुणयोगपट्टीभूतम् । मनोहरमणिः सुन्दरफणरत्नमिति वा । हरस्य कोटीरादिविशेषणेन वरणाभावः सूचितः ॥ १८ ॥

धृत्वैकया रसनयाऽमृतमीश्वरेन्दो-
रप्यन्यया त्वदधरस्य रसं द्विजिह्वः ।
आस्वादयन्युगपदेष परं विशेषं
निर्णेतुमेतदुभयस्य यदि क्षमः स्यात् १९

धृत्वेति ॥ जटाजूटसंबन्धादेकया रसनया जिह्वया ईश्वरस्येन्दोश्चन्द्रस्यामृतं धृत्वा अन्यया द्वितीयया त्वदधरस्य रसमपि धृत्वा चन्द्रामृतमोष्ठामृतं च युगपदेककालमास्वादयन् पिबन् एतदुभयस्य चन्द्रामृतौष्ठरसलक्षणस्य द्वयस्य परं विशेषं तारतम्यं निर्णेतुं निश्चेतुं यदि क्षमः समर्थः स्यात्तर्हि अयमेव वासुकिरेव, नान्य इत्यर्थः । यतो द्विजिह्वः द्वे जिह्वे यस्य । युगपदास्वादने हेतुः । परं सूक्ष्मं विशेषं वा तर्हि परं केवलं वा इत्यन्वयः। राज्ञां वरणयोग्यत्वेऽपि चन्द्रामृतसंबन्धस्यासंभवाद्देवानां तत्पानसंभवे द्विजिह्वत्वासंभवात्समकालं पानासंभवात्, सर्पाणां द्विजिह्वत्वसंभवेऽपि चन्द्रामृतसंबन्धाभावात्, एतस्य तूभयसंभवाद्द्वयोर्विशेषनिर्णयेऽयमेव क्षमो नान्य इत्यर्थः ॥ १९ ॥

आशीविषेण रदनच्छददंशदान-
मेतेन ते पुनरनर्थतया न गण्यम् ।

---

१ अत्रानुप्रासः । हंसावलीमिवेत्युपमा । २ अत्रानुप्रासः । ३ अत्रानुप्रासः ।

१ अनुप्रासः शब्दालङ्कारः । एकस्य वासुकेरनेकेषु कोटीरादिषु क्रमेण वृत्तेः पर्यायभेदः । अनुभावविशेषाद् यौगपद्यासम्भवात्समुच्चयोऽपि ।२अत्र यद्यर्थातिशयोक्तिः।

बाधां विधातुमधरे हि न तावकीने
पीयूषसारघटिते घटतेऽस्य शक्तिः॥२०॥

आशीति ॥ 'आशी तालुगता दंष्ट्रा तया विद्धो न जीवति' इति वृद्धाः । आश्यां विषं यस्यैवंभूतेन एतेन वासुकिना कृतं रदनच्छददंशदानं त्वदधरखण्डनं ते तवानर्थतयाऽपमृत्युहेतुतया पुनर्न गण्यं न संभावनीयम् । एतस्य वरणे चुम्बने विषसंचारादपमृत्युभयेनैनं न वृणे इति न शङ्कनीयम् । हि यस्मात् पीयूषसारघटितेऽमृतसारसृष्टे त्वदीयेऽधरे बाधां विधातुम् अस्य दन्तच्छदस्य वासुकेर्वा शक्तिः सामर्थ्यं न घटतेन युज्यते । अमृते हि विषं न प्रभवतीत्यर्थः । आशिषि दंष्ट्रायां विषं यस्येति सकारान्तस्य पृषोदरादित्वात्सलोपो वा । ते, 'कृत्यानां कर्तरि वा।२।३।७१' इति षष्ठी ।गण्यं गणयतेर्यत् ॥२०॥

तद्विस्फुरत्फणविलोकनभूतभीतेः
कम्पं च वीक्ष्य पुलकं च ततोऽनु तस्याः।
संजातसात्त्विकविकारधियः स्वभृत्या-
न्नृत्यान्न्यषेधदुरगाधिपतिर्विलक्षः॥२१॥

तदिति॥ उरगाधिपतिः विलक्षः सलज्जः सन् स्वभृत्यान्स्वसेवकान्नृत्यान्नर्तितुमर्हाद्धस्तकादिपदार्थात्सकाशान्न्यषेधन्न्यवारयत् । किंभूतान्स्वभृत्यान्—तस्य वासुकेः विस्फुरतः फणस्य विलोकनाद् भूता संजाता या भीतिः तस्याः सकाशात्तस्याः कम्पं च वीक्ष्य,ततोऽनु अनन्तरम् । अविलम्बितमित्यर्थः । पुलकं च वीक्ष्य, संजाता सात्त्विकाविकारसंबन्धिनी धीर्बुद्धिः येषां तान् । भैम्याः कम्पं च पुलकं च दृष्ट्वा अस्मत्स्वामिन्यनुरक्तेयमिति विचार्य नृत्यं कुर्वत इत्यर्थः । 'तद्विस्फुरत्—' इति तस्यां विशेषणं वा । भूता भीतिर्यस्या इति विग्रहः । स्वाम्यभिलापे पूर्णे भृत्या नृत्यन्ति । 'भयेनास्याः कम्पादि प्रवृत्तम्, न त्वनुरागादिति नृत्यं मैवं कुरुध्वमिति न्यषेधदित्यर्थः । भृत्यमौर्ख्यात्, भैम्या चावृतत्वात्सलज्जत्वम् । 'फणा द्वयोः' इति फणशब्दः पुंलिङ्गेऽपि । ततोऽनु निपातसमुदायः, नृत्यात्, ऋदुपधात्क्यप्[1]॥२१॥

तद्दर्शिभिः स्ववरणे फणिभिर्निराशै-
र्निःश्वस्य तत्किमपि सृष्टमनात्मनीनम् ।
यत्तान्प्रयातुमनसोऽपि विमानवाहा
हा हा प्रतीपपवनाशकुनान्न जग्मुः॥२२॥

तद्दर्शिभिरिति ॥ तद्दर्शिभिरवृतस्वामिविलोककैर्वासुकिवैलक्ष्यदर्शिभिर्वा अत एव स्ववरणे निराशैः फणिभिः कर्कोटकादिभिः निःश्वस्य फूत्कृत्य तत् किमप्यपूर्वमात्मनीनं स्वीयमाहितं सृष्टं कृतम् । यत् तान्सर्पान्प्रयातुमनसोऽपि गन्तुकामा अपि विमानवाहाः । प्रतीपपवनः प्रतिकूलवातः तद्रूपं यदशकुनं तस्माद्धेतोः हा हा कष्टम् अशुभमेतदिति कृत्वा न जग्मुः । प्रतिकूलस्य वायोरशकुनत्वात्सर्पसंमुखं न जग्मुः । अयोग्यत्वान्न गता इति भावः । आत्मने हितमात्मनीनम्, 'आत्मन्विश्वजनभोगोत्तरपदात् खः ।५।१।९' इति खः ॥ २२ ॥

ह्रीसङ्कुचत्फणगणादुरगप्रधाना-
त्तां राजसङ्घमनयन्त विमानवाहाः ।
सन्ध्यानमद्दलकुलात्कमलाद्विनीय
कह्लारमिन्दुकिरणा इव हासभासम्॥२३॥

ह्रीति ॥ विमानवाहाः ह्रिया सङ्कुचत्फणगणं फणवृन्दं यस्य तस्मादुरगप्रधानात्सर्पराजाद्वासुकेः विनीयापनीय तां राजसङ्घमनयन्त प्रापयामासुः । के कस्मात्कां किमिव—इन्दुकिरणाः संध्यायां नमन्ति संकुचन्ति दलकुलानि पत्रसमूहा यस्य तस्मात्कमलाद्विनीय हासभासं विकसन्तीं दीप्तिं कह्लारं सौगन्धिकमिवे[2] ॥ २३ ॥

देव्याभ्यधायि भव भीरु धृतावधाना
भूमीभुजो भजत भीमभुवो निरीक्षाम् ।
आलोकितामपि पुनः पिबतां दृशैना-
मिच्छा विगच्छति न वत्सरकोटिभिर्वः॥२४॥

देव्येति ॥ सा भैमी देव्या अभ्यधायि वक्ष्यमाणमुक्ता । हे भीरु, चलत्फणदर्शनाद्भयशीले, त्वं धृतावधाना सावधाना भव।भयं परित्यज्य राज्ञो विलोकयेत्यर्थः। हे भूमीभुजो राजानः यूयं भीमभुवो भैम्याः निरीक्षां दर्शनं भजत भैमीं पश्यत । दृष्टायाः पुनर्दर्शनेन किमित्यत आह—आलोकितामप्येनां पुनर्दृशा पिबतां सादरं पश्यतां वो युष्माकमेतद्दर्शनेच्छा वत्सराणां वर्षाणां कोटिभिरपि न गच्छति न शाम्यति।अतः पुनर्यथेच्छं विलोकयतेत्यर्थः । 'त्यजत' इति पाठे भैमीविलोकनं मा कुरुध्वम् । युष्मासु पश्यत्सु लज्जावशादियं युष्मान्न पश्येत् । तस्माल्लज्जां विहाय यथा पश्यति तथा कुरुतेत्यर्थः । वर्णे

1 अत्र हेतुमान् । २ अत्र भैमीभयसात्त्विकभावेषु भृत्यानां शृङ्गारभ्रम इति भ्रान्तिमान् ।

1 अत्र हेतूत्प्रेक्षा गम्या । २ अत्रोपमाऽनुप्रासश्च ।

संदेहाद्दर्शनमपि कथं त्याज्यमित्यत आलोकितामिति वा ॥ २४ ॥

लोकेशकेशवशिवानपि यश्चकार
शृङ्गाररसान्तरभृशान्तरशान्तभावान् ।
पञ्चेन्द्रियाणि जगतामिषुपञ्चकेन
संक्षोभयन्वितनुतां विततुर्मुदं वः॥२५॥

लोकेशेति॥ यो वितनुः कामः, लोकेशो ब्रह्मा,केशवः, शिवश्च एतानपि त्रीन् शृङ्गारेण रसेन सान्तरो व्यवहितः भृशोऽतिशयित आन्तरो मानसः शान्तभावो विरक्तत्वं येषां तान्विरक्तानप्यनुरक्तांश्चकार स कामो वो युष्माकं मुदं विततुतां विस्तारयतु । किं कुर्वन्—इषुपञ्चकेन जगतां चक्षुरादीनि पञ्चेन्द्रियाणि क्षोभयन्विकारं प्रापयन् । सृष्टिस्थितिप्रलयकारिणो देवेशानपि यः स्ववशांश्चकार तस्य भवद्वशीकरणे कः प्रयास इति तदधीनाः सन्तः पुनः पुनर्यथेच्छमेनां विलोकयतेति भावः । सृष्ट्यादिक्रमेणाभ्यर्हितत्वात्पूर्वनिपातः । पञ्चकेन, पञ्च परिमाणमस्य सङ्घस्येत्यर्थे 'सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु ५।१।५८' इति कन् ॥ २५ ॥

पुष्पेषुणा ध्रुवममूनिषुवर्षजाप्ति-
हुङ्कारमन्त्रबलभस्मितशान्तशक्तीन् ।
शृङ्गारसर्गरसिकद्व्यणुकोदरि त्वं
द्वीपाधिपान्नयनयोर्नय गोचरत्वम् २६॥

पुष्पेति ॥ शृङ्गाररसस्य सर्गे निर्माणे रसिकं प्रीतिमत् पुनः पुनः तन्निर्माणशीलं द्व्यणुकं तद्वदतिकृशं तदेव वा उदरं यस्यास्तत्सम्बुद्धिः हे कृशोदरि, त्वम् अमून्द्वीपाधिपान्पुष्करादिसप्तद्वीपेश्वरान्राज्ञो नयनयोर्गोचरत्वं नय प्रापय । अनुग्रहबुद्ध्या विलोकयेत्यर्थः । किम्भूतान्—पुष्पेषुणा ध्रुवं निश्चितम् । इषुवर्षे बाणमोचने जप्यत इति जप्तिः जापितो हुङ्काररूपो मन्त्रः तस्य बलेन शक्त्या कृत्वा भस्मिता नाशिता शान्ता शक्तिः उपशमप्रभावो येषां तान् । जप्तिरित्येव युक्तः पाठः । अन्योऽपि हुंफडादिमन्त्रबलेन कस्यचिच्छक्तिं दूरीकृत्य वशीकरोति ॥ २६ ॥

स्वादूदके जलनिधौ सवनेन सार्धं
भव्या भवन्तु तव वारिविहारलीलाः ।
द्वीपस्य तं पतिममुं भज पुष्करस्य
निस्तन्द्रपुष्करतिरस्करणक्षमाक्षि॥२७॥

स्वाद्विति ॥ हे निस्तन्द्रस्य विकसितस्य पुष्करस्य कमलस्य तिरस्करणे जये क्षमे अक्षिणी लोचने यस्यास्तत्सम्बुद्धिः भैमि, स्वादूदके मधुरसलिले जलनिधौ समुद्रे सवनेन तन्नाम्नाऽनेन राज्ञा सार्धं तव वारिविहारलीला जलक्रीडाः भव्या रम्या भवन्तु । तस्मात्पुष्करस्य द्वीपस्य पतिं तं प्रसिद्धं सवननामानममुं राजानं भज वृणीष्व । 'तन्द्रा निद्राप्रमीलयोः' इत्यमरः ॥ २७ ॥

सावर्तभावभवदद्भुतनाभिकूपे
स्वर्भौममेतदुपवर्तनमात्मनैव ।
स्वाराज्यमर्जयसि न श्रियमेतदीया-
मेतद्गृहे परिगृहाण शचीविलासम्॥२८॥

सावर्तेति ॥ आवर्तेन दक्षिणावर्तेन सह वर्तमानः सावर्तस्तस्य भावस्तेन भवदुत्पद्यमानमद्भुतमाश्चर्यं यस्मादेवम्भूतो नाभिकूपो यस्यास्तत्सम्बुद्धिः सलक्षणगम्भीरनाभिकूपे भैमि, एतस्य सवनस्योपवर्तनं देशः आत्मनैव भौमं भूमौ भवं स्वः स्वर्गोऽस्ति । त्वमेतदीयामेतद्देशसम्बन्धिनीम् एतद्राजसम्बन्धिनीं वा श्रियमेव स्वाराज्यं स्वर्गराज्यं नार्जयसि ? अपि त्वर्जयस्येव त्वम्, एतद्गृहे शचीविलासं परिगृहाण । इन्द्रतुल्यमेनं शचीवत् त्वं वृणीष्वेति भावः । कूपस्य च सावर्तत्वमाश्चर्यकारि । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः ॥ २८ ॥

देवः स्वयं वसति तत्र किल स्वयम्भू-
र्न्यग्रोधमण्डलतले हिमशीतले यः ।
स त्वां विलोक्य निजशिल्पमनन्यकल्पं
सर्वेषु कारुषु करोतु करेण दर्पम्॥२९॥

देव इति ॥ तत्र पुष्करद्वीपे हिमवच्छीतलच्छाये न्यग्रोधमण्डलतले मण्डलाकारवटवृक्षाधःप्रदेशे यः स्वयम्भूर्ब्रह्मा देवः स्वयं साक्षात्स्वरूपेण किल प्रसिद्धं वसति, स ब्रह्मा त्वां त्वल्लक्षणमनन्यकल्पमनन्यसदृशं निजशिल्पं निजनिर्माणं विलोक्य सर्वेषु कारुषु शिल्पिषु विषये करेण दर्पं गर्वं करोतु । एवं सुन्दरतरशिल्पनिर्माणकुशलो मदन्यस्य हस्तो न विद्यत इति त्वां वी-

१ अत्रानुप्रासः । अतिशयोक्तिश्च । २ अत्रानुप्रासः ।
३ अत्र नयेति यमकम् ।

१ अनुप्रासः । पुष्करतिरस्करणक्षमाक्षीत्युपमा ।
२ शचीविलासमित्युक्त्यैतस्येन्द्रत्वं व्यज्यते ।

क्ष्य तस्य बुद्धिरुदेष्यतीति भावः । अन्येन कल्प्यते निर्मीयत इत्यन्यकल्पं तन्न भवति । अन्येन निर्मातुमशक्यमित्यर्थः । अन्यस्मादीषदूनमेवं न भवति । कल्पवृन्तं वा ॥ २९ ॥

**न्यग्रोधनादिव दिवः पततातपादे-**
**र्न्यग्रोधमात्मभरधारमिवावरोहैः ।**
**तं तस्य पाकिफलनीलदलद्युतिभ्यां**
**द्वीपस्य पश्य शिखिपत्रजमातपत्रम् ३०**

न्यग्रोधेति ॥ हे भैमि, त्वं तं न्यग्रोधं वटं तस्य द्वीपस्यातपत्रमिवातपत्रं छत्रतुल्यं पश्य । किम्भूतं न्यग्रोधम्—दिव आकाशात्पतत आतपादेरुष्णवृष्ट्यादेः न्यक् अधोदेशे रोधनान्निराकरणादिव न्यग्रोधं 'न्यक् रुणद्धि' इति न्यग्रोधः इति सान्वयम् । अतिशीतलच्छायमित्यर्थः । तथा—अवरोहैः शाखोत्पन्नमूलैः कृत्वा आत्मभरं धारयति एवंभूतमिव स्थितम् । किंभूतमातपत्रम् पाकीनि फलानि पक्कानि नीलानि दलानि पर्णानि च तेषां द्युतिभ्यां रक्तनीलशोभाभ्यां कृत्वा शिखिपत्रजं रक्तनीलमयूरपत्रविरचितम् । समस्तमपि द्वीपं तच्छाये वर्तत इति शेषः । अन्योऽपि बहुतरं भारं हस्तादिना धारयति । 'न्यग्रोधस्य च केवलस्य' १ । ३ । ५ । इति निपाताद्न्यग्रोधशब्दः साधुः ॥ ३० ॥

**न श्वेततां चरतु वा भुवनेषु राज-**
**हंसस्य न प्रियतमा कथमस्य कीर्तिः ।**
**चित्रं तु यद्विशदिमाद्वयमादशन्ती**
**क्षीरं च नाम्बु च मिथः पृथगातनोति ३१**

नेति ॥ अस्य राजहंसस्य राजसु श्रेष्ठस्य प्रियतमात्यन्तमभिमता कीर्तिः श्वेततां शुभ्रतां कथं न चरतु गच्छतु ? अपितु गच्छत्वेव । तथा—भुवनेषु लोकत्रयेऽपि कथं न गच्छतु । किन्तु गच्छत्वेव लोयत्रयमपि व्याप्नोत्वेव । यद्वा—कथं न श्वेततां चरतु ? श्वेता भवतु, अपितु श्वेता भवत्वेव। त्रैलोक्ये चरत्वेव । हंसस्यापि प्रियतमा योषिदपि श्वेता भवति । तथा—भुवनेषूदकेषु वा क्रीडति विषादि भक्षयति वा अत्र नाश्चर्यम् । विशदिम्नो[3] धवलताया अद्वयम् ऐक्यमादिशन्ती त्रैलोक्यं श्वेतीकुर्वती क्षीरं दुग्धं चाम्बु च मिथः परस्परस्मात्पृथक् नातनोति भिन्नं न करोति इदं तु चित्रम् । हंसी हि मिश्रं क्षीरनीरं विविक्तं करोति, इयं तु तयोरभेदं करोतीत्याश्चर्यम् । अतिशुभ्रा त्रैलोक्यव्यापिनी चास्य कीर्तिः,वदान्यश्चायमिति भावः । अद्वैते चाभेद एव युक्तः । 'जीवनं भुवनं वनम्' 'विष्टपं भुवनम्' इत्यमरः । पक्षे 'श्विता वर्णे' इत्यस्माल्लोटस्तङ् ॥ ३१ ॥

**शूरेऽपि सूरिपरिषत्प्रथमार्चितेऽपि**
**शृङ्गारभङ्गिमधुरेऽपि कलाकरेऽपि ।**
**तस्मिन्नवद्यमियमाप तदेव नाम**
**यत्कोमलं न किल तस्य नलेति नाम ३२**

शूर इति ॥ इयं भैमी तस्मिन्राज्ञि तदेवावद्यं दूषणं नामेति प्रसिद्धौ । आप । तत्किम्—यत्तस्य सवनस्य किलेति प्रसिद्धं नल इत्यामन्त्रणयोग्यं सम्बुद्ध्यन्तं कोमलं मधुराक्षरं नाम नास्तीत्येतदेव दूषणम् । किम्भूते--शूरेऽपि । तथा सूरिपरिषदि विद्वत्सभायां प्रथमार्चितेऽपि प्रथमगण्येऽपि । तथा शृङ्गारभङ्ग्या शृङ्गाररचनया मधुरे मनोज्ञेऽपि । यथा—कलानां गीतादिचतुःषष्टिकलानामाकरेऽपि । शौर्यपाण्डित्यशृङ्गारित्वकलाकौशलादिगुणयुक्तेऽपि । वरगुणेषु सत्स्वपि नलेऽनुरागात्तं नावरीष्टेति भावः ॥ ३२ ॥

**भ्रूवल्लिवेल्लितमथाकृतिभङ्गिमेषा**
**लिङ्गं चकार तदनादरणस्य विज्ञा ।**
**राज्ञोऽपि तस्य तदलाभजतापवह्नि-**
**श्विह्नीबभूव मलिनच्छविभूमधूमः॥ ३३॥**

भ्रूवल्लीति ॥ अथ विज्ञा ज्ञात्री एषा भैमी तदनादरणस्य सवनानादरणस्य लिङ्गं चिह्नं भ्रूवल्लिवेल्लितं भ्रूलताचेष्टितमेवाकृतिभङ्गिमाकारविच्छित्तिम् । यद्वा पूर्वं भ्रूवल्लिचेष्टितम् अथानन्तरं आकृतिभङ्गिमङ्गमोटनं च

---

१ दर्पकरणेनिजशिल्पस्यानन्यकल्पत्वेन जैस्यानिरूपणं हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् । २ न्यग्रोधनादिवेत्युत्प्रेक्षा।न्यग्रोधसञ्ज्ञयाः सार्थकत्वोक्तेर्मुद्राऽलङ्कारश्च । ३ अत्र इमनिच् चिन्त्यः, दृढादिषु पृथ्वादिषु चापि—विशदस्यापरिपाठात्।१ राजहंसस्येतिश्लिष्टम्,तेन तत्सम्बधिन्याः कीर्तेः प्रियतमात्वेन रूपणाद्धरटात्वे निरूपिते विशदिमाद्वयमादिशन्तीति सामान्यम्, पूर्वभागे श्लिष्टनीरक्षीरविवेचनौचित्यम्, अथापि तदभावोक्तेर्विरोधः स च विशदताकृत एवेति तदाभासमात्रत्वाद्विरोधाभासः। प्रकृतकीर्तिविशेषणसाम्याद्प्रकृतराजहंसप्रतीतेः श्लेषसङ्कीर्णा समासोक्तिश्च । २ अनुप्रासः । नलेति नामाभावस्यावद्यत्वेनरूपणाद्रूपकम्,नलमात्रानुरागित्वं च व्यङ्ग्यम्।

चकार । भ्रूचलनेनाङ्गमोटनेन च तं निराचकारेत्यर्थः । अप्रियं हि वस्तु दृष्ट्वा निरुक्तं लिङ्गं दृष्टचरमिति तथोक्तम् । तस्य राज्ञोऽपि मलिनच्छवेर्मलिनकान्तेः यो भूमा बाहुल्यमेव धूमस्तस्या अलाभाजातस्तापस्तल्लक्षणो वह्निस्तस्य चिह्नीबभूव लिङ्गमासीत् । श्यामशोभां दृष्ट्वा जनेन तस्य विरहज्वरोऽनुमित इत्यर्थः । धूमोऽग्नेर्लिङ्गम् ॥ ३३ ॥

राजान्तराभिमुखमिन्दुमुखीमथैनां
जन्या जनीं हृदयवेदितयैव निन्युः ।
अन्यानपेक्षितविधौ न खलु प्रधान-
वाचां भवत्यवसरः सति भव्यभृत्ये ३४

राजेति ॥ अथ जन्या यानवाहाः इन्दुमुखीमेनां जनीं वधूं हृदयवेदितयैव भैम्याशयज्ञातृतयैव 'पुरो गच्छत' इत्यादिभैमीवचनमन्तरेणैव राजान्तरस्याभिमुखं निन्युः । यतोऽभिप्रायज्ञाः । खलु यस्मादन्येन स्वामिवचनादिना स्वीयप्रवर्तनाविषयत्वेनानपेक्षितो विधिर्व्यापारो यस्यैवंविधे स्वामिवचनानपेक्षकारिणि भव्ये कुशलतरे भृत्ये सेवके सति प्रधानवाचां स्वामिवचसामवसरः प्रस्ताव एव न भवति । तस्मात्तदभिप्रायं ज्ञात्वान्यत्र निन्युरिति युक्तम् । अनपेक्षितमन्यत्स्वामिवचनादि येन एवंविधो विधिर्यस्येति वा । अन्यशब्दस्याहिताग्न्यादित्वात्पूर्वनिपातः ॥ ३४ ॥

ऊचे पुनर्भगवती नृपमन्यमस्यै
निर्दिश्य दृश्यतमतावमताश्विनेयम् ।
आलोक्यतामयमये कुलशीलशाली
शालीनतानतमुदस्य निजास्यबिम्बम् ३५

ऊच इति ॥ भगवती देवी दृश्यतमतया सुन्दरत्वेनावमतौ जितावाश्विनेयावश्विनीकुमारौ येन एवंभूतमन्यं नृपमस्यै निर्दिश्य दर्शयित्वा पुनरूचे । किमूचे इत्यत आह—अये भैमि, शालीनतया लज्जया आनतं नम्रं निजास्यबिम्बमुदस्योन्नमय्य कुलशीलाभ्यां शालत एवंभूतोऽयं राजा आलोक्यताम् ॥ ३५ ॥

१ यथोक्तलिङ्गेन तथाज्ञानादनुमानम् । २ इन्दुमुखीमित्युपमा । अन्येत्यादिना प्रागुक्तसमर्थनादर्थान्तरन्यासः । ३ अनुप्रासोयमकं च ।

एतत्पुरःपठदपश्रमबन्दिवृन्द-
वाग्डम्बरैरनवकाशतरेऽम्बरेऽस्मिन् ।
उत्पत्तुमस्ति पदमेव न मत्पदाना-
मर्थोऽपि नार्थपुनरुक्तिषु पातुकानाम् ३६

एतादिति ॥ हे भैमि, एतस्य पुरः पठत् अपश्रमं गतश्रमं यद्बन्दिवृन्दं तस्य वाग्डम्बरैर्वचनविलासैः कृत्वा अनवकाशतरेऽतितरां निरवकाशेऽस्मिन्नम्बरे आकाशे मत्पदानां मम एतद्वर्णनसम्बन्धिनां सुबन्ततिङन्तानां पदानामुत्पत्तुमुदेतुं पदमेवावकाश एव नास्ति आकाशाश्रिता हि शब्दास्तैस्तस्य च निरवकाशत्वान्मद्वचनानवकाशः । तथा—अर्थपुनरुक्तिषु पातुकानां मत्पदानामर्थोऽपि नास्ति । मयाऽभिधेयाः शब्दास्तेषामर्थाश्चैतदीयैर्मागधैरेवोच्यन्ते । ततश्च शब्दपौनरुक्त्यमर्थपौनरुक्त्यं च दोषो मम आपत्स्यत इत्यर्थः । एतद्वर्णनं ममापि संमतमित्येनं वृणीष्वेति भावः । बहुभिर्व्याप्तेऽन्यस्मिन्नपि स्थाने चरणावकाशो न भवति । उत्पत्तुम्, अनिटः पद्यतेस्तुमुन् ॥ ३६ ॥

नन्वत्र हव्य इति विश्रुतनाम्नि शाक-
द्वीपप्रशासिनि सुधीषु सुधीभवन्त्या ।
एतद्भुजाविरुदबन्दिजयानयाऽपि
किं रागि राजनि गिराऽजनि नान्तरं ते ३७

नन्विति ॥ ननु भैमि, ते आन्तरं मानसमेतस्य राज्ञो भुजयोर्विरुदं प्रतापः तस्य स्तुतिपाठका ये बन्दिनस्तेभ्यो जाता एवम्भूतयाऽप्यनया गिरा हव्य इति विश्रुतनाम्नि अत्रास्मिन्राजनि रागि अनुरागयुक्तं किं नाजनि । इति प्रश्नकाकुः । कुतो नाजनीति वा । किंभूते—शाकद्वीपप्रशासिनि शाकद्वीपाधिपे । किंभूतया गिरा । सुधीषु पण्डितेषु सुधीभवन्त्या अमृतीभवन्त्या । आकर्णयतां विदुषाममृतरूपया । विदुषामेवामृतरूपया, न त्वन्यजनानामिति विरागसूचनम् । भुजेति द्वौ परौ द्वयोः । 'भुजबाहू प्रवेष्टो दोः स्यात्' इत्यमराद्युक्त्या भुजशब्दस्य स्त्रीलिङ्गत्वं निर्बाधम् । यत्तु भुजशब्दस्य पुंस्त्वमेवेत्याहुस्तद्बालिशभाषितम् ॥ ३७ ॥

शाकः शुकच्छदसमच्छविपत्त्रमाल—
भारी हरिष्यति तरुस्तव तत्र चित्तम् ।

१ अनुप्रासः ।अम्बरेऽवकाशाभावासम्बन्धेऽपि तथोक्तेरतिशयोक्तिः २ सुधीति यमकम्, रागीत्यनुप्रासश्च ।

यत्पल्लवौघपरिरम्भविजृम्भितेन
ख्याता जगत्सु हरितो हरितः स्फुरन्ति ३८॥

शाक इति ॥ तत्र द्वीपे स शाकनामा तरुस्तव चित्तं हरिष्यति । किम्भूतः—शुकच्छदैः कीरपक्षैः समा छविर्येषामेवम्भूतानि पत्राणि तेषां मालां बिभर्तीति । स कः—यस्य शाकस्य पल्लवौघानां परिरम्भः संबन्धस्तस्य विजृम्भितेव विलसितेन हरितो नीलवर्णाः सत्यो जगत्सु हरित इति ख्याताः स्फुरन्ति । एतत्पत्रसम्बन्धेन दिशां हरित इति सान्वयं नाम जातमित्यर्थः । मालभारी, 'इष्टकेषिकामालानां चिततूलभारिषु ६।३।६५' इति ह्रस्वः ॥ ३८ ॥

स्पर्शेन तत्र किल तत्तरुपत्रजन्मा
यन्मारुतः कमपि सम्मदमादधाति ।
कौतूहलं तदनुभूय विधेहि भूयः
श्रद्धां पराशरपुराणकथान्तरेऽपि ॥ ३९ ॥

स्पर्शेनेति ॥ तत्र शाकद्वीपे स चासौ तरुश्च तत्तरुः शाकः तस्य पत्रेभ्यो जन्म यस्य एवंभूतो मारुतः स्पर्शेन कृत्वा कमप्यपूर्वं सम्मदं हर्षमादधाति करोतीति यत् किल श्रूयते त्वं तत् कौतूहलमनुभूय भूयः पुनः पराशरपुराणस्य पराशरेण प्रोक्तं पुराणं तस्य, विष्णुपुराणस्येत्यर्थः । कथान्तरेऽप्याख्यानान्तरेऽपि श्रद्धामास्तिक्यबुद्धिं विधेहि कुरु । 'यत्पत्रवातसंस्पर्शादाह्लादो जायते परः' इति विष्णुपुराणवचनम् । अस्य श्रवणात्सत्यत्वं विद्यते । अनुभवादपि सत्यत्वं जानीहीत्यपि भूयःशब्दार्थः । भूयसी चासौ श्रद्धा चेति वा ॥ ३९ ॥

क्षीरार्णवस्तव कटाक्षरुचिच्छटाना-
मन्वेतु तत्र विकटायितमायताक्षि ।
वेलावनीवनततिप्रतिबिम्बचुम्बि-
किर्मीरितोर्मिचयचारिमचापलाभ्याम् ॥ ४० ॥

क्षीरेति ॥ हे आयताक्षि विशालनयने, क्षीरार्णवः वेलावन्यां वेलाभूमौ वनततिर्वनपङ्क्तिः । तस्याः प्रतिबिम्बचुम्बी प्रतिबिम्बधारी । अत एव किर्मीरितः नानावर्णो जातः विचीचित ऊर्मिचयस्तरङ्गसङ्घस्तस्य चारिमा सौन्दर्यं चापलं चञ्चलत्वं च ताभ्यां कृत्वा तव कटाक्षस्य रुचीनां कान्तीनां छटाः परम्परास्तासां विकटायितं विलसितमन्वेत्वनुकरोतु । क्षीरमयत्वात्स्वतः शुभ्राः दीर्घवृक्षप्रतिबिम्बसंबन्धाच्च नीलाः क्षीरोदतरङ्गास्त्वदीयश्वेतनीलविशालकटाक्षकान्तितुल्या भवन्त्वित्यर्थः । विकटायितम्, लोहितादेराकृतिगणत्वात्क्यषन्ताद्भावे निष्ठा ॥ ४० ॥

कल्लोलजालचलनोपनतेन पीवा
जीवातुनाऽनवरतेन पयोरसेन ।
अस्मिन्नखण्डपरिमण्डलितोरुमूर्ति-
रध्यास्यते मधुभिदा भुजगाधिराजः ४१

कल्लोलेति ॥ अस्मिन्क्षीरोदे मधुभिदा श्रीविष्णुना भुजगाधिराजः शेषोऽध्यास्यतेऽधिष्ठीयते । किंभूतः शेषः—अनवरतेन भूयसा पयोरसेन दुग्धरसेन कृत्वा पीवा परिपुष्टः । किंभूतेन—कल्लोलजालस्य तरङ्गसङ्घस्य चलनेन कृत्वा उपनतेनान्तिकागतेन । तथा—जीवातुना प्राणधारणहेतुत्वाज्जीवनौषधभूतेन । किंभूतः—अखण्डं सर्वदा परिमण्डलिता उर्वी मूर्तिः शरीरं यस्य । श्रीविष्णुस्तत्र पूज्यो देव इत्यर्थः । पीवा, क्वनिपि 'घुमास्थागापाजहातिसां हलि ६।४।६६' इतीकारः ॥ ४१ ॥

त्वद्रूपसम्पदवलोकनजातशङ्का
पादाब्जयोरिह कराङ्गुलिलालनेन ।
भूयाच्चिराय कमला कलितावधाना
निद्राऽनुबन्धमनुरोधयितुं धवस्य ॥ ४२ ॥

त्वदिति ॥ हे भैमि, इह क्षीरोदे कमला श्रीः पादाब्जयोश्चरणकमलयोः कराङ्गुलिभिर्लालनेन संवाहनेन धवस्य श्रीविष्णोर्निद्राऽनुबन्धं निद्रानैरन्तर्यं चिरायानुरोधयितुं वर्धयितुं कलितावधानाङ्गीकृतावधाना सावधाना भूयाद्भवतु । किंभूता—त्वद्रूपस्य या सम्पत्तस्या अवलोकनेन जाता शङ्का भयं यस्याः । अयं श्रीविष्णुरिमां चेद्द्रक्ष्यति, तर्हि मां विहायास्यामनुरक्तो

१ हरितो हरित इत्यनुप्रासो यमकं च । समच्छवीति उपमा । विजृम्भितेन हरितां हरित्वायोगेऽपि तथोक्तेः श्लेषानुप्राणिताऽतिशयोक्तिः । स्फुरन्तीत्यनुक्त्वा विशुद्धमिति तु सुचारु २ पराशरस्यार्वाचीनत्वादिदं चिन्त्यम् । ३ मकाररकारानुप्रासः ।

१ अत्र किर्मीरितोर्मिचयस्य सितासितत्वसाम्यात्तद्विलासस्य कटाक्षविलासस्मारकत्वात् स्मृतिमान् । २ अनुप्रासोऽत्र स्फुटः ।

भविष्यति, तन्मा भूदिति भिया सुतरां निद्रागमनार्थं करतलेन चरणसंवाहनपरैव भवत्वित्यर्थः । भैम्या लक्ष्मीतोऽप्यतिसौन्दर्यं सूचितम् ॥ ४२ ॥

**बालातपैः कृतकगैरिकतां कृतां द्वि-**
**स्तत्रोदयाचलशिलाः परिशीलयन्तु ।**
**त्वद्विभ्रमभ्रमणजश्रमवारिधारि-**
**पादाङ्गुलीगलितया नखलाक्षयाऽपि ॥ ४३ ॥**

बालेति ॥ तत्र शाकद्वीपे उदयाचलाख्यस्य पर्वतस्य शिलाः बालातपैरुदयाचलस्थसूर्यकिरणैः, तथा नखलाक्षयापि कृतां कृतकगैरिकतां द्विः परिशीलयन्त्वनुभवन्तु । द्वाभ्यां प्रकाराभ्यां गैरिकतुल्या भवन्त्वित्यर्थः । किंभूतया नखलाक्षया—तव विभ्रमेण विलासेन भ्रमणं वनविहारस्तस्माज्जातं श्रमवारि खेदजलं तद्धारयन्त्येवंशीलाभ्यः पादाङ्गुलीभ्यो गलितया निःसृतया । एतस्मिन्वृते उदयाचले क्रीडिष्यसीति भावः ॥ ४३ ॥

**नृणां करम्बितमुदामुदयन्मृगाङ्क-**
**शङ्कां सृजत्वनघजङ्घि परिभ्रमन्त्याः ।**
**तत्रोदयाद्रिशिखरे तव दृश्यमास्यं**
**कश्मीरसम्भवसमारचनाभिरामम् ॥ ४४ ॥**

नृणामिति ॥ हे अनवजङ्घि सुन्दरजङ्घि, तत्र द्वीपे प्रसिद्धे वा उदयाद्रिशिखरे परिभ्रमन्त्यास्तव दृश्यं दर्शनयोग्यमास्यं मुखं करम्बितमुदां संजातानन्दानां नृणामुदयन्मृगाङ्क उदयावस्थश्चन्द्रस्तस्य शङ्कां भ्रमं सृजतु करोतु । किंभूतं मुखम्—कश्मीरसम्भवं कुङ्कुमं तस्य समारचनया उद्वर्तनेनाभिरामं रमणीयम् । उदयाचले आरक्तत्वदीयमुखदर्शनात् चन्द्र एवायमुदितः किमिति बुद्ध्या सर्वेषां हर्षो भविष्यति । तस्मादेनं वृणीष्वेति भावः । अनघजङ्घि, 'नासिकोदरोष्ठ—जङ्घादन्तकर्णशृङ्गाच्च ४ । १ । ५५ ' इति ङीप् ॥ ४४ ॥

**एतेन ते विरहपावकमेत्य ताव-**
**त्कामं स्वनाम कलितान्वयमन्वभावि ।**
**अङ्गीकरोपि यदि तत्तव नन्दनाद्यै-**
**र्लब्धान्वयं स्वमपि नन्वयमातनोतु ॥ ४५ ॥**

एतेनेति ॥ हे भैमि, एतेन राज्ञा ते तव विरहपावकमेत्य प्राप्य कामं निश्चितं तावत्प्रथमं हव्य इति स्वनाम कलितान्वयमनुगतार्थमन्वभाव्यन्वभूयत । हव्येनाग्निं प्राप्य यथाऽनुभूयते तद्वदनेनानुभूतमित्यर्थः । अतो हूयते इति हव्यम् । यदि अधुना त्वमेनमङ्गीकरोपि वृणुषे तत्तर्हि अयं तव नन्दनाद्यैः पुत्रपौत्राद्यैः कृत्वा स्वमात्मानमपि लब्धान्वयं ननु निश्चितं प्राप्तवंशमातनोतु ननु संम्बोधने वा । अन्वयः सम्बन्धो वंशश्च । यदीत्यनेन स्वीकारस्य पाक्षिकत्वं द्योतयति ॥ ४५ ॥

**लक्ष्मीलतासमयलम्बभुजद्रुमेऽपि**
**वाग्देवतायतनमञ्जुमुखाम्बुजेऽपि ।**
**साऽमुत्र दूषणमजीगणदेकमेव**
**नार्थी बभूव मघवा यदमुष्य देवः ॥ ४६ ॥**

लक्ष्मीति ॥ सा भैमी अमुत्र हव्ये एकमेव दूषणमजीगणत् । यत्—मघवा देवोऽमुष्य अर्थी याचको न बभूव । किम्भूते—लक्ष्मीरूपाया लतायाः समवलम्ब आधारभूतो भुजलक्षणो द्रुमो यस्य तस्मिन्समृद्धराज्येऽपि । तथा—वाग्देवतायाः सरस्वत्या आयतनं स्थानं मञ्जु सुन्दरं मुखाम्बुजं यस्य एवंविधेऽपि चतुःपष्टिकलाप्रवीणेऽपि । इन्द्रो नलस्य याचको जातो, न त्वस्येति नलस्यास्य च महदन्तरमित्यर्थः ॥ ४६ ॥

**लक्ष्मीविलासवसतेः सुमनःसु मुख्या-**
**दस्माद्विकृष्य भुवि लब्धगुणप्रसिद्धिम् ।**
**स्थानान्तरं तदनु निन्युरिमां विमान-**
**वाहाः पुनः सुरभितामिव गन्धवाहाः ॥ ४७ ॥**

लक्ष्मीति ॥ विमानवाहा अस्मत् राज्ञो विकृष्यापनीय तदनु तदनन्तरं पुनः स्थानान्तरम् इमां भैमीं निन्युरन्यं राजानं प्रापयामासुः । के कस्मात्कामिव—गन्धवाहा वायवः सुमनःसु पुष्पेषु मुख्यात्पद्माद्विकृष्य सुगन्धितामिव । यथा स्थानान्तरं नयन्ति तथेत्यर्थः । किम्भूतादस्मात्—लक्ष्मीविलासस्य वसतेर्गृहात् । पद्ममपि तथा । तथा—सुमनःसु पण्डितेषु मुख्यात् । किम्भूतामिमाम्—भुवि लब्धा गुणेन सौन्दर्यादिना प्रसिद्धिर्यया ॥ ४७ ॥

---

१ अत्राप्यनुप्रासः । २ अत्रानुप्रासः । ३ अत्रानुप्रासः। आस्यस्य मृगाङ्कशङ्काजनकत्वाचित्यायोदयाद्रिशिखरे दृश्यमिति विशेषणीकरणमिति परिकरः ।

१ न्वयमिति यमकम् । २ लक्ष्म्या लतात्वने भुजस्य द्रुमत्वेन च रूपणाद्रूपकम् । ३ सुरभितामिवेत्युपमा ।

भूयस्ततो निखिलवाङ्मयदेवता सा
हेमोपमेयतनुभासमभाषतैनाम्—
एतं स्वबाहुबहुवारनिवारितारिं
चित्ते कुरुष्व कुरुविन्दसकान्तिदन्ति ४८॥

भूय इति ॥ ततः सा निखिलवाङ्मयदेवता हेमा नाम देवाङ्गना तदुपमेया तत्सदृशी तनुभाः कायकान्तिर्यस्यास्तामेनां सुवर्णसदृशकायकान्तिं वा भैमीं भूयोऽभाषत ऊचे । हे कुरुविन्दैः माणिक्यमणिभिः सकान्तयः सदृशा दन्ता यस्यास्तत्संबुद्धिः, त्वं स्वबाहुभ्यां बहुवारं निवारिता अरयो येन तमेनं पुरोवर्तिनं नृपं चित्ते कुरुष्व वृणीष्वेत्यर्थः । 'स्वबाहु—' इत्यनेन परानपेक्षं शौर्यं सूचितम् । 'कुरुविन्द—' इत्यनेन बहुताम्बूलभक्षणाद्दन्तानामारक्तत्वं सूचितम् । सकान्तीत्यत्र सदृशशब्दपर्यायेण सहपदेनास्वपदविग्रहः समासः कार्यः । तत्र 'वोपसर्जनस्य ६ । ३ । ५२' इति सभावः । दन्ती इत्यत्र संयोगोपधत्वेऽपि 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ४।१।५५ इति ङीप् ॥ ४८ ॥

द्वीपस्य पश्य दयितं द्युतिमन्तमेनं
क्रौञ्चस्य चञ्चलदृगञ्चलविभ्रमेण ।
यन्मण्डले स परिमण्डलसन्निवेशः
पाण्डुश्चकास्ति दधिमण्डपयोधिपूरः ४९

द्वीपस्येति ॥ हे भैमि, त्वं क्रौञ्चस्य द्वीपस्य दयितं पतिं द्युतिमन्नामानम् । अथ च तेजस्विनं राजानं चञ्चलो यो दृगञ्चलः दिक्प्रान्तस्तस्य विभ्रमेण विलासेन कटाक्षेण पश्य । अनुरागेण पश्येत्यर्थः । यस्य राज्ञो मण्डले राज्ये क्रौञ्चद्वीपं परितो मण्डलो वर्तुलः संनिवेशोऽवस्थानं यस्य स प्रसिद्धः पाण्डुः शुभ्रो दधिमण्डसंज्ञकः पयोधिः तस्य पूरः प्रवाहश्चकास्ति । किल इति सर्वतः पुराणेषु श्रूयते—'क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च। आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः' इति विष्णुपुराणम् । मरीचशर्करादिमिश्रं मस्तु इत्यपरपर्यायं किंचिद्द्रवीभूतं दधि मण्डमित्युच्यते । 'मण्डं दधिभवं मस्तु' इत्यमरः ॥ ४९ ॥

तत्राद्रिरस्ति भवदङ्घ्रिविहारयाची
क्रौञ्चः स्फुरिष्यति गुणानिव यस्त्वदीयान्।

१ अत्रानुप्रासः । २ अत्रानुप्रासः परिकरश्च ।



हंसावली कलकलप्रतिनादवाग्भिः
स्कन्देषुवृन्दविवरैर्विवरीतुकामः ॥५०॥

तत्रेति ॥ तत्र द्वीपे स क्रौञ्चोऽद्रिः भवत्यास्तवाङ्घ्रिविहारश्चरणविलासगतिस्तं याचते एवंशीलोऽस्ति । स कः—यः त्वदीयान्गुणान्सौन्दर्यादीन् हंसावल्याः कलकलानां विरुतानां प्रतिनादः प्रतिशब्दः स एव वाग्येषामेवंभूतैर्मुखतुल्यैः स्कन्दस्य इषवो बाणास्तेषां वृन्दानि तैः कृतानि विवराणि छिद्राणि तैः कृत्वा विवरीतुकाम इव वर्णयितुकाम इव स्फुरिष्यति । स्कन्देन बाणैः पर्वते छिद्राणि कृतानि, तेन 'क्रौञ्चदारण' इति तस्य नाम जातमिति पुराणम् ॥ ५० ॥

वैदर्भि दर्भदलपूजनयाऽपि यस्य
गर्भे जनः पुनरुदेति न जातु मातुः ।
तस्यार्चनां रचय तत्र मृगाङ्कमौले-
स्तन्मात्रदैवतजनाभिजनः स देशः ५१

वैदर्भीति ॥ हे वैदर्भि भैमि ! जनो यस्य दर्भदलेन या पूजना तयाऽपि मातुर्गर्भे जातु कदाचिदपि पुनर्नोदेति नोत्पद्यते । तन्मात्रेणैव मुक्तत्वात्पुनः संसारं न यातीत्यर्थः । पुष्पादिपूजया पुनर्नोदेतीति किं वाच्यमित्यपेरर्थः । त्वं तत्र देवे तस्य हरस्यार्चनां पूजां रचय । यतः स एव तन्मात्रं शिवदैवतं येषां ते जनाश्च तेषामभिजन उत्पत्तिस्थानम् । तस्मात्त्वमपि तं पूजयेत्यर्थः । 'कुलेऽप्यभिजनो जन्मभूमावप्यथ हायनाः' इत्यमरः ॥ ५१ ॥

चूडाऽग्रचुम्बिमिहिरोदयशैलशील-
स्तेनाः स्तनंधयसुधाकरशेखरस्य ।
तस्मिन्सुवर्णरसभूषणरम्यहर्म्य-
भूभृद्घटा घटय हेमघटावतंसाः ॥ ५२ ॥

चूडाग्रेति ॥ तस्मिन्द्वीपे स्तनंधयो बालः सुधाकरश्चन्द्रः शेखरे मौलौ यस्य शिवस्य सुवर्णरस एव भूषणमेवंभूतानि अतएव रम्याणि यानि हर्म्याणि तान्येव भूभृतः पर्वतास्तेषां घटाः परम्पराः घटय रचय ।

१ अत्रानुप्रासो यमकं च । विवरीतुकाम इवेत्युपमा ।
२ अत्रानुप्रासः । दर्भदलैः पूजनमात्रेण मुक्तत्वोक्तेः 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्याद्यागमतोविरुद्धत्वमिव ।, पूजया झटिति ज्ञाने मुक्तत्वसम्पत्त्या विरुद्धत्वापायो बोध्यः ।

कम्भूताः—हेमघटावतंसाः उपरि सुवर्णकलशभूषिताः अत एव चूडाग्रचुम्बी शृङ्गाग्रे स्थितः सूर्यो यस्य एवंभूत उदयशैलस्तस्य शीलं स्वभावः स्वरूपं तस्य स्तेनाश्चौराः। शिवप्रीत्यर्थमुदयाचलतुल्यान्प्रासादान् रचयेति भावः। घट्येति मित्वाद्धस्वः॥ ५२॥

तस्मिन्मलिम्लुच इव स्मरकेलिजन्म-
घर्मोदबिन्दुमयमौक्तिकमण्डनं ते।
जालैर्मिलन्दधिमहोदधिपूरलोल-
कल्लोलचामरमरुत्तरुणि च्छिनत्तु॥५३॥

तस्मिन्निति॥ भो तरुणि, प्रादुर्भूतयौवने, तस्मिन्देशे जालैर्गवाक्षैः मिलन्नागच्छन् दध्नो महोदधिस्तस्य पूरः तस्य लोलाः कल्लोलास्त एव शुभ्रत्वाद्दैर्घ्याच्च चामराणि तेषां मरुत् मलिम्लुचश्चौर इव स्मरकेलेर्जन्म येषां ते घर्मोदबिन्दवः तन्मयानि मौक्तिकानि तद्रूपं मण्डनं छिनत्त्वपनयतु अपहरतु। शीतलवायुसंस्पर्शात्सुरतश्रमजातं घर्मोदकं शाम्यत्वित्यर्थः। चौरोऽप्यपरद्वारेण प्रविश्य मुक्ताद्याभरणं हरति। उदबिन्दित्यत्र 'मन्थौदन' इत्युदादेशः॥ ५३॥

एतद्यशो नवनवं खलु हंसवेषं
वेशन्तसन्तरणदूरगमक्रमेण।
अभ्यासमर्जयति सन्तरितुं समुद्रान्
गन्तुं च निःश्रममितः सकलान्दिगन्तान्॥५४॥

एतदिति॥ हंसस्य वेष आकारो यस्य नवनवं प्रतिदिनमपूर्वं भवत् एतस्य यशः वेशन्तस्य पल्वलस्य संतरणदूरगमनयोः क्रमेण परिपाट्या, पल्वलस्य संतरणे विषये दूरगमक्रमेण पूर्वं सरसोऽर्धं पश्चात्कियदधिकं ततोऽपि परतीरम् अनया परिपाट्या वा समुद्रान्संतरीतुमुत्तरीतुम् इतः समुद्रेभ्यः एतद्देशाद्वा निःश्रमं श्रमरहितं यथातथा सकलान्दिगन्तान्दिक्प्रान्तांश्च गन्तुं प्राप्तुमभ्यासमर्जयति। खलु निश्चये उत्प्रेक्षायां वा। श्वेतत्वाद्धंसानां तद्रूपं यशसा धृतम्। हंसा न भवन्ति किं त्वेतद्यश एव। अन्योऽपि महानद्यादितरणार्थं वाप्यादौ तरणेनाभ्यासं करोति। नवं चाभ्यासयोग्यं भवति बालाभ्यासो हि दृढतर इत्यर्थः। नवनवमिति प्रकारे द्विरुक्तिः। अर्जयतीति वर्तमानप्रयोगाद् यशसोऽल्पत्वसूचनादस्मिन्नादरः सूचितः॥ ५४॥

तस्मिन्गुणैरपि भृते गणनादरिद्रै-
स्तन्वी न सा हृदयबन्धमवाप भूपे।
दैवे निरुन्धति निबन्धनतां वहन्ति
हन्त प्रयासपरुषाणि न पौरुषाणि ५५

तस्मिन्निति॥ सा तन्वी भैमी गणनादरिद्रैरसंख्येर्गुणैः भृते पूर्णेऽपि तस्मिन्भूपे श्रुतिमाति हृदयबन्धं मनोऽभिलाषं नावाप। गुणवति तस्मिन्कथं न प्रापेत्यत आह—दैवे निरुन्धति कार्यप्रतिबन्धके सति प्रयासेन युद्धादियत्नेन परुषाणि दुःसहान्यपि पौरुषाणि पुरुषकाराः कार्यं प्रति निबन्धनतां कारणतां न वहन्ति न धारयन्ति। हन्त खेदे। दैवनिरोधाद्गुणवत्ताप्यनुरागहेतुर्नाभूदित्यर्थः। वागुरादिगुणेषु हरिणादिर्बन्धनं प्राप्नोति। अस्यास्तु हृदयं गुणेषु पतितमपि बन्धनं न प्रापेत्याश्चर्यमित्यर्थः॥ ५५॥

ते निन्यिरे नृपतिमन्यमिमाममुष्मा-
दंसावतंसशिबिकांशभृतः पुमांसः।
रत्नाकरादिव तुषारमयूखलेखां
लेखानुजीविपुरुषा गिरिशोत्तमाङ्गम्॥५६

त इति॥ अंसयोः स्कन्धयोरवतंसा भूषणीभूताः शिबिकांशास्तान्बिभ्रति ते पुमांसो यानवाहाः इमां भैमीममुष्माद्राज्ञः सकाशादन्यं नृपतिं निन्यिरे। तत्र दृष्टान्तः—लेखा देवा एवानुजीविपुरुषाः सेवकपुरुषा रत्नाकरात्तुषारमयूखलेखां चन्द्रकलां गिरिशोत्तमाङ्गं शंकरमूर्धानमिव। 'लेखा अदितिनन्दनाः' इत्यमरः॥ ५६॥

एकैकमद्भुतगुणं धुतदूषणं च
हित्वाऽन्यमन्यमुपगत्य परित्यजन्तीम्।
एनां जगाद जगदाश्रितपादपद्मा
पद्मामिवाच्युतभुजान्तरविच्युतां सा॥५७

१ अत्रानुप्रासः। २ अत्र बिन्दूनां मौक्तिकत्वेन रूपणाद्रूपकं मलिम्लुच इवेत्युपमा चार्थालङ्कारौ। अनुप्रासः पुनः शब्दालङ्कारः।

१ हंसवेषमित्युपमा। २ बन्धनाप्राप्तौ तन्वीत्वस्य विशेषणगत्या हेतुत्वोक्तेः काव्यलिङ्गं पदार्थहेतुकम्। ३ रत्नाकरादिवेत्युपमा।

एकैकमिति ॥ जगदञ्चितपादपद्मा त्रिलोकीपूजितचरणकमला सा सरस्वती एनां भैमीं जगाद । किंभूताम्—अद्भुता गुणा यस्य तम् , तथा—धुतदूषणं गतदूषणमेकैकं नृपं हित्वा अन्यमन्यं तादृशमेव नृपमुपगत्य प्राप्य परित्यजन्तीम् । तथा—अच्युतभुजान्तराद्विष्णुवक्षःस्थलाद्विच्युतां समागतां पद्मां लक्ष्मीमिव स्थिताम् । लक्ष्मीरपि चाञ्चल्यादेकैकं त्यक्त्वाऽन्यमन्यं प्राप्य तमपि त्यजति । यथा लक्ष्मीर्विष्णुं विनान्यत्र स्थिरा न तथा भैमी नलं विनान्यत्र स्थिरा नेति सूचितम् ॥ ५७ ॥

ईशः कुशेशयसनाभिशये कुशेन
द्वीपस्य लाञ्छिततनोर्यदि वाञ्छितस्ते।
ज्योतिष्मता सममनेन वनीघनासु
तत्त्वं विनोदय घृतोदतटीषु चेतः ५८॥

ईश इति॥ हे कुशेशयं कमलं तस्य सनाभी तत्तुल्यौ शयौ हस्तौ यस्याः तत्संबुद्धिः, कुशेन कुशस्तम्बेन लाञ्छिततनोः चिह्नितवपुषो द्वीपस्य ईशः स्वामी यदि ते तव वाञ्छितोऽभीष्टस्तर्हि त्वं ज्योतिष्मतानेन राज्ञा समं सह वनीभिर्वनैर्घनासु निबिडासु घृतोदो घृतसमुद्रस्तस्य तटीषु चेतो विनोदय हर्षय । निबिडच्छायेषु घृतसमुद्रतटेषु एतेन सार्धं विहर । एनं वृणीष्वेति भावः। घृतोद इति ' उदकस्योदः संज्ञायाम् ६ । ३ । ५७' इत्युदादेशः । कुशेशय इति ' शयवासवासिष्वकालात् ६।३।१८ ' इत्यलुक् ॥ ५८ ॥

वातोर्मिदोलनचलद्दलमण्डलाग्र-
भिन्नाभ्रमण्डलगलज्जलजातसेकः ।
स्तम्बः कुशस्य भविताम्बरचुम्बिचूड-
श्चित्राय तत्र तव नेत्रनिपीयमानः॥५९॥

वातेति ॥ हे भैमि, तत्र द्वीपे नेत्रनिपीयमानः नेत्राभ्यां सादरमवलोक्यमानः कुशस्तम्बः तव चित्रायाश्चर्याय भविता । किम्भूतः—अम्बरचुम्बिचूडो गगनलग्नशिखः । तथा—अत एव वातोर्मीणां वातपरम्पराणां यद्दोलनं तेन चलन्ति चञ्चलानि दलानि पत्राणि तान्येव मण्डलाग्राः खड्गास्तैर्भिन्नं विदारितं यदभ्रमण्डलं तस्माद्गलता स्रवता जलेन जातः सेकः सेचनं यस्य।दलमण्डलस्य दलसमूहस्य अग्रैरिति वा ॥ ५९ ॥

पाथोधिमाथसमयोत्थितसिन्धुपुत्री-
पत्पङ्कजार्पणपवित्रशिलासु तत्र ।
पत्या सहावह विहारमयैर्विलासै-
रानन्दमिन्दुमुखि मन्दरकन्दरासु ६०॥

पाथोधीति ॥ हे इन्दुमुखि, तत्र कुशद्वीपे त्वं मन्दरकन्दरासु पत्या सह विहारमयैः क्रीडाबहुलैः कटाक्षविक्षेपादिभिर्विलासैरानन्दमावह धारय । किंभूतासु—पाथोधेः समुद्रस्य माथसमये मन्थनकाले उत्थिता या सिन्धुपुत्री लक्ष्मीस्तस्याः पत्पङ्कजार्पणेन पवित्राणि शिलातलानि यासु । लक्ष्मीवत्त्वमपि शिलासोपानान्यलंकुर्वित्यर्थः । 'विहारभवैः' इति पाठे सुरतादिक्रीडासमुत्पन्नैरित्यर्थः ॥ ६० ॥

आरोहणाय तव सज्ज इवास्ति तत्र
सोपानशोभिवपुरश्मवलिच्छटाभिः ।
भोगीन्द्रवेष्टशतघृष्टिकृताभिरब्धि-
क्षुब्धाचलः कनककेतकगौत्रगात्रि ६१

आरोहणायेति ॥ हे कनककेतकं स्वर्णकेतकं तस्य गोत्रं सदृशं गात्रं यस्यास्तत्सम्बुद्धिः अतिगौरि, तत्र द्वीपे अब्धेः क्षुब्धाचलो मन्थाचलो मन्दरः तव आरोहणाय सज्जः सन्नद्ध इवास्ति । किम्भूतः—भोगीन्द्रो वासुकिस्तेन कृतं वेष्टशतं तेन कृता या घृष्टयः घर्षणानि तत्कृताभिरश्मवलिच्छटाभिः शिलाभङ्गिपरम्पराभिः कृत्वा सोपानैरिव शोभि वपुः स्वरूपं यस्य । आरोहणाय इवेति वा । ' क्षुब्धस्वान्त...१ । २ । १८ इति क्षुब्धः साधुः । गात्रीति, 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' (वा.) इति ङीष् ॥ ६१ ॥

मन्था नगः स भुजगप्रभुवेष्टघृष्टि-
लेखावलद्धवलनिर्झरवारिधारः ।
त्वन्नेत्रयोः स्वभरयन्त्रितशीर्षशेष-
शेषाङ्गवेष्टिततनुभ्रममातनोतु ॥ ६२ ॥

मन्था इति ॥ हे भैमि, स मन्था नगो मन्दरः त्वन्नेत्रयोः स्वस्य मन्दरस्य भरेण यन्त्रितान्याक्रान्तानि

१ पद्मामिवेत्युपमा । २ कुशेशयासनाभिशयइत्यत्रानुप्रासोपमयोः संसृष्टिः, कुशे इति यमकम्।

१ अत्रानुप्रासः । २ अत्रानुप्रास उपमा च । ३ सज्ज इवेत्युत्प्रेक्षा ।

शीर्षाणि मस्तका यस्य शेषो नागराजस्तस्य शेषेणावशिष्टेनाङ्गेन वेष्टिता तनुस्तस्य भ्रममातनोतु । किंभूतः—भुजगप्रभुर्वासुकिस्तस्य वेष्टेन घृष्टिर्घर्षणं तया कृतासु वलयाकारासु लेखासु वलयाकारेण वलन्त्यो धवलनिर्झरवारिधारा यस्मिन् । शेषस्य शुभ्रत्वाद्वारिधाराणां च रेखासु वलितत्वाद्भ्रान्तिः । शिरसि गाढं येनाक्रान्तः सर्पोऽवशिष्टेन तस्यैव जङ्घादि वेष्टयतीति सर्पजातिः । मन्थदोरकः शेष इति केचित् ॥ ६२ ॥

**एतेन ते स्तनयुगेन सुरेभकुम्भौ**
**पाणिद्वयेन दिविषद्द्रुमपल्लवानि ।**
**आस्येन स स्मरतु नीरधिमन्थनोत्थं**
**स्वच्छन्दमिन्दुमपि सुन्दरि मन्दराद्रिः ६३**

एतेनेति ॥ हे सुन्दरि स मन्दराद्रिः ते एतेन स्तनयुगेन कृत्वा सुरेभ ऐरावतस्तस्य कुम्भौ, तथा—पाणिद्वयेन दिविषद्द्रुमः कल्पवृक्षस्तस्य पल्लवानि, तथा—ते आस्येनेन्दुमपि स्वच्छन्दं यथेच्छं स्मरत्विति सर्वत्र संवन्धः । किम्भूतमेतत्सर्वम्—नीरधिमन्थनोत्थं समुद्रमन्थनादुत्थितम् । समुद्रमथनसमये एतत्सर्वं दृष्टमासीत् । इदानीं त्वां दृष्ट्वा तत्सर्वं स्मरतु । ऐरावतकुम्भसदृशौ ते स्तनौ, कल्पवृक्षपल्लवसदृशं ते पाणिद्वयं, चन्द्रसदृशं ते मुखमिति भावः । अतः सुन्दरीति संबोधनम् । स्वच्छन्दमिति सर्वत्र संवन्धः । 'छन्दः पद्येऽभिलाषे च' इत्यमरः । 'नपुंसकमनपुंसकेन १।२।६८' इत्येकवद्भावो नपुंसकत्वं च ॥ ६३ ॥

**वेदैर्वचोभिरखिलैः कृतकीर्तिरत्ने**
**हेतुं विनैव धृतनित्यपरार्थयत्ने ।**
**मीमांसयेव भगवत्यमृतांशुमौलौ**
**तस्मिन्महीभुजि तयानुमतिर्न भेजे ६४**

वेदैरिति ॥ तया भैम्या तस्मिन्महीभुजि अनुमतिः संमतिर्न भेजे । कया कस्मिन्निव—पूर्वमीमांसया भगवत्यमृतांशुमौलौ शिव इव । किंभूते—अखिलैर्वेदैर्वेदतुल्यैः सत्यैर्वचोभिः कृत्वा कृता कीर्तिः स्तुतिर्यस्य स कृतकीर्तिश्चासौ रत्नं चेति । कृतं कीर्तिरत्नं यस्येति वा । तथा—हेतुं कारणं विनैव धृतो नित्यं परार्थे परकार्ये यत्नो येन । स्वोपकारानपेक्षं कृतोपकारे । किंभूते शिवे—अखिलैश्चतुर्भिर्वेदैः वचोभिर्महावाक्यैः कृत्वा कृतं कीर्तिरत्नं यशोरत्नं यस्येति । तथा—हेतुं कारणमन्तरेण धृतनित्यपरार्थयत्ने । परमकारुणिक इत्यर्थः । मीमांसापि वेदं प्रति कर्तृत्वमात्रेणेश्वरमङ्गीकृतवती न तु सर्वथा नास्तीति । 'विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे । श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥' इति नमस्कारश्रवणात् ॥ ६४ ॥

**तस्मादिमां नरपतेरपनीय तन्वीं**
**राजन्यमन्यमथ जन्यजनः स निन्ये ।**
**स्त्रीभावधावितपदामविमृश्य याच्ञा-**
**मर्थी निवर्त्य विधनादिव वित्तवित्तम् ६५**

तस्मादिति ॥ अथ अनन्तरं स जन्यजनो वाहकलोकः स्त्रीभावेन स्त्रीत्वेन धावितपदां चालितचरणां गच्छतेति चरणचालनेन संज्ञापयन्तीमिमां तन्वीं कृशाङ्गीं भैमीं तस्मान्नरपतेरपनीयाकृष्य अन्यं राजन्यं निन्ये प्रापयामास । तत्र दृष्टान्तः—अर्थी याचकः अविमृश्य दातुं निर्धनत्वमविचार्य याच्ञां विधनाद्दरिद्रान्निवर्त्य वित्तेन धनेन वित्तं प्रसिद्धं धनिनम् । वित्तं प्रसिद्धं वित्तं यस्य इति वा । एवंभूतमिव प्रापयन्तीत्यर्थः । किंभूतां याच्ञाम् 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इत्यस्मिन्सूत्रे सर्वेषु पुँल्लिङ्गेषु पदेषु याच्ञाशब्दो नङन्तो व्युत्पादितः । शक्तिस्वाभाव्यात्स्त्रियां वर्तते इति स्त्रीस्वभावेन स्त्रीलिङ्गतया धावितं शोधितं पदं रूपं यस्यास्ताम् ॥ ६५ ॥

**देवी पवित्रितचतुर्भुजवामभागा**
**वागालपत्पुनरिमां गरिमाभिरामाम् ।**
**अस्यारिनिष्कृपकृपाणसनाथपाणेः**
**पाणिग्रहादनुगृहाण गणं गुणानाम् ६६**

देवीति॥ पवित्रितः शोभितः चतुर्भुजवामभागो यया एवंभूता वाग्रूपा देवी पुनरिमां भैमीमालपदुवाच । किंभूताम्—गरिम्णा कुलशीलसौन्दर्यादिगौरवेण सरस्वत्यागमनाद्वा गौरवेण अभिरामां मनोज्ञाम् । हे भैमि, अरिपु निष्कृपः कृपाणेन खड्गेन सनाथो युक्तः पाणिर्यस्य एवंभूतस्यास्य पाणिग्रहात्परिणयात्स्वीयं गुणानां । सौन्दर्यादीनां गणम् । अस्य गुणसङ्घं वानुगृहाण । तुल्यगुणस्यास्य लाभात् ॥ ६६ ॥

---

१ अत्रानुप्रासः । २ अत्र प्रौढोक्त्या सादृश्यस्मृतिमुपजीव्य स्मृतिमान् ।

१ मीमांसयेत्युपमा । २ अत्रानुप्रासः । विधनादिवेत्युपमा । ३ अत्रानुप्रासः ।

द्वीपस्य शाल्मल इति प्रथितस्य नाथः
पाथोधिना वलयितस्य सुराम्बुनाऽयम्।
अस्मिन्वपुष्मति न विस्मयसे गुणाब्धौ
रक्ता तिलप्रसवनासिकि किं नासि किं वा६७

द्वीपस्येति ॥ सुरा एव मदिरैवाम्बु यस्य एवंभूतेन पाथोधिनाऽब्धिना वलयितस्य वेष्टितस्य शाल्मल इति प्रथितस्य द्वीपस्य नाथः पतिरयम्, हे तिलस्य प्रसवः पुष्पं तत्समाननासिके, त्वं गुणाब्धौ गुणसमुद्रे वपुष्मन्नामानि । अथ च सुन्दरशरीरेऽस्मिन्राजनि न विस्मयसेऽद्भुतं किमिति न प्राप्नोषि । अपि त्वाश्चर्यं प्राप्तुमुचितम् । एवंविधेऽस्मिन् रक्ता वा किं नासि । अपि तु रक्ता भव । एनं वृणीष्वेत्यर्थः । सुरासमुद्रपतित्वं दोषः । शरीरधारिणि गुणसमुद्रे विस्मयो युक्तः । वपुष्मति, अतिशायने मतुप् । नासिकीति, '. नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ४।१।५५' इति ङीप् ॥ ६७ ॥

विप्रे धयत्युदधिमेकतमं त्रसत्सु
यस्तेषु पञ्चसु बिभाय न सीधुसिन्धुः।
तस्मिन्ननेन च निजालिजनेन च त्वं
सार्धं विधेहि मधुरा मधुपानकेलीः६८॥

विप्र इति ॥ यः सीधुसिन्धुः सुरासमुद्रः विप्रेऽगस्त्ये एकतमं क्षारजलधिं धयति पिबति सति तेषु पञ्चसु दधिमण्डादिसमुद्रेषु अस्मानयं पास्यतीति त्रसत्सु सत्सु न बिभाय न तत्रसे । ब्राह्मणस्य सुरापाननिषेधात् मां न पास्यतीति यो भयं तत्याज । त्वं तस्मिन्नक्षये सीधुसमुद्रेऽनेन च राज्ञा सार्धं निजालिजनेन च सार्धं मधुरा रम्या मधुपानकेलीः मधुपानक्रीडा विधेहि कुरु । एतद्वरणे मधुपानं सुलभम् ॥ ६८ ॥

द्रोणः स तत्र वितरिष्यति भाग्यलभ्य-
सौभाग्यकार्मणमयीमुपदां गिरिस्ते ।
तद्वीपदीप इव दीप्तिभिरौषधीनां
चूडामिलज्जलदकज्जलदर्शनीयः॥६९॥

द्रोण इति ॥ तत्र द्वीपे सञ्जीवनीनां भेषज्यानामुत्पत्तिमूलतया प्रसिद्धः । अतः परं लक्ष्मणविशल्यीकरणार्थं हनूमता नीलः इति पाठाधिक्यमुपलभ्यते । तच्च न सत्, तदवधि रामस्यावताराभावात्, तथात्वानुपपत्तेश्च । द्रोणनामा गिरिः भाग्येन सुकृतविशेषेण लभ्यं सौभाग्यसम्बन्धि कार्मणम् ओषधीभिर्मूलैः वशीकरणं तद्रूपामुपदामुपायनम् अन्यपरित्यागेन स्वयमेव पतिर्यथोपभुङ्क्ते तथा वशीकरणमौषधिरूपमुपहारं ते तुभ्यं वितरिष्यति । एवंविधमोषधं महता पुण्येन विना न लभ्यते तव तु तत्प्रियत्वादप्रयत्नेन तल्लाभो भविष्यति धन्या त्वमित्यर्थः । किंभूतः—ओषधीनां मृतसंजीवन्यादीनां दीप्तिभिः तस्य द्वीपस्य दीप इव स्थितः । यत्तश्चूडासु शिखरेषु मिलन्तः संलग्ना जलदा एव कज्जलं तेन दर्शनीयः सुन्दरः । 'मूलकर्म तु कार्मणम्' इत्यमरः । वशीकरणे कज्जलादि भवति ॥ ६९ ॥

तद्वीपलक्ष्मपृथुशाल्मलितूलजालैः
क्षोणीतले मृदुनि मारुतचारुकीर्णैः ।
लीलाविहारसमये चरणार्पणानि
योग्यानि ते सरससारसकोशमृद्वि७०॥

तदिति ॥ हे सरसं नूतनं सारसं कमलं तस्य कोशो मुकुलं राशिर्वा तद्वन्मृद्वि सुकुमाराङ्गि, मारुतेन चारु संनिवेशविशेषेण निविडं वा कीर्णैः प्रस्तारितैस्तस्य द्वीपस्य लक्ष्म चिह्नभूतः पृथुर्महाञ्शाल्मलिर्वृक्षस्तस्य तूलजालैः कार्पाससमूहैः कृत्वा मृदुनि क्षोणीतले लीलाविहारसमये विलासगमनकाले ते तव चरणार्पणानि योग्यानि । भवन्त्विति शेषः । अतिमृद्व्या हि अतिमृदुनि स्थले गतिर्युक्ता ॥ ७० ॥

एतद्गुणश्रवणकालविजृम्भमाण-
तल्लोचनाञ्चलनिकोचनसूचितस्य ।
भावस्य चक्रुरुचितं शिबिकाभृतस्ते
तामेकतः क्षितिपतेरपरं नयन्तः ॥७१॥

एतदिति ॥ ते शिबिकाभृतः भावस्य भैम्यभिप्रायस्योचितं योग्यं व्यापारं चक्रुः । किंभूतस्य—एतस्य राज्ञो गुणश्रवणकाले विजृम्भमाणा सा भैमी तस्या लोचनाञ्चलनिकोचनेन नेत्रप्रान्तसंकोचनेन सूचितस्य नृपालंकरणरत्नेषु दृष्टेन भैमीनेत्रसंकोचेन ज्ञापितस्य । किंभूतास्ते—एकतः क्षितिपतेरेकस्मान्नृपात् । अस्माद्वपुष्मत इत्यर्थः । तां भैमीमपरं राजानं नयन्तः प्रापयन्तः । नयतिर्द्विकर्मा ॥ ७१ ॥

---

१ अत्रानुप्रासः । २ अत्रानुप्रासो यमकं च ।

१ अत्र दीप इवेत्युत्प्रेक्षा, जलदकज्जलेति रूपकं च २ अत्रानुप्रासो यमकं च शब्दालङ्कारौ । अनुरूपसंयोगवचनात्समालङ्कारस्त्वर्थः । ३ अत्रानुप्रासः ।

तां भारती पुनरभाषत नन्वमुष्मि-
न्काश्मीरपङ्कनिभलग्नजनानुरागे ।
श्रीखण्डलेपमयदिग्जयकीर्तिराजि-
राजद्भुजे भज महीभुजि भैमि भावम्॥७२॥

तामिति ॥ भारती तां पुनरभाषत । ननु भैमि, त्वम् अमुष्मिन्महीभुजि भावमनुरागं भज कुरु । किंभूते—काश्मीरपङ्कनिभेन कुङ्कुमानुलेपनव्याजेन लग्नः जनानामनुरागो यस्मिन् । तथा—श्रीखण्डलेपमयी चन्दनानुलेपनरूपा दिग्जयजनिता कीर्तिराजिः कीर्तिपरम्परा तया राजन्तौ भुजौ यस्य । रागस्य लौहित्यात्कीर्तेश्च शुभ्रत्वात्कुङ्कुमत्वं चन्दनत्वं च युक्तम् । जनानुरागेणातिसमृद्धित्वं सूचितम्[1] ॥ ७२ ॥

द्वीपं द्विपाधिपतिमन्दपदे प्रशास्ति
प्लक्षोपलक्षितममुं क्षितिपस्तदस्य ।
मेधातिथेस्त्वमुरसि स्फुर सृष्टसौख्या
साक्षाद्यथैव कमला यमलार्जुनारेः॥७३॥

द्वीपमिति ॥ हे द्विपाधिपवन्मत्तमातङ्गराजवन्मन्दपदेऽलसगमने भैमि, क्षितिपः प्लक्षाख्येन वृक्षेणोपलक्षितं द्वीपं प्रशास्ति पालयतितराम् । तत्तस्मात् त्वमस्य मेधातिथिनाम्नो राज्ञ उरसि आलिङ्गनेन सृष्टसौख्या सती तथैव स्फुर राजस्व । यथा यमलार्जुनारेर्विष्णोरुरसि साक्षात्कमला सृष्टसौख्या सती स्फुरति । मेधा धारणावती बुद्धिरतिथिर्यस्य । अस्यैव त्वं योग्येत्येवकारो योज्यः । सृष्टसौख्यैवेति वा ॥ ७३ ॥

प्लक्षे महीयसि महीवलयातपत्रे
तत्रेक्षिते खलु तवापि मतिर्भवित्री ।
खेलां विधातुमधिशाखविलम्बिदोला-
लोलाखिलाङ्गजनताजनितानुरागे॥७४॥

प्लक्ष इति ॥ तत्र द्वीपे महीवलयस्यातपत्ररूपे छत्ररूपे महीयस्यातिमहति प्लक्षे ईक्षिते सति खलु निश्चितं तवापि खेलां दोलारूपां क्रीडां विधातुं कर्तुं मतिर्बुद्धिर्भवित्री भविष्यति । किंभूते—अधिशाखं शाखासु विलम्बिन्या दोलास्ताभिर्लोलम् अखिलमङ्गं यस्याः तया जनतया जनितोऽनुरागो यस्मिन् । तस्यां समुदितोऽनुरागो येन वा । लोकं दोलारूढं दृष्ट्वा दोलाक्रीडायां तवापीच्छा समुदेष्यतीत्यर्थः ॥ ७४ ॥

पीत्वा तवाधरसुधां वसुधासुधांशु-
र्न श्रद्दधातु रसमिक्षुरसोदवाराम् ।
द्वीपस्य तस्य दधतां परिवेषवेषं
सोऽयं चमत्कृतचकोरचलाचलाक्षि॥७५॥

पीत्वेति ॥ हे चमत्कृतो भीतश्चकोरः तद्वच्चलाचले चञ्चले अक्षिणी यस्यास्तत्संबुद्धिः । सोऽयं वसुधायां सुधांशुर्भूचन्द्रो राजा तवाधरसुधामोष्ठामृतं पीत्वा इक्षुरसोदवारामिक्षुरससमुद्रोदकानां रसं स्वादं न श्रद्दधातु नाभिलषतु । किंभूतानां वाराम्—तस्य द्वीपस्य परिवेषवेषं परिवेषाकारं दधतां बिभ्रताम् । अन्यत्र चकोराश्चन्द्रस्य सुधां पिबन्ति, अत्र चन्द्र एव चकोराक्ष्यास्तवाधरसुधां पिबतीति चमत्कृतेत्यनेन सूचितम्[1] ॥ ७५ ॥

सूरं न सौर इव नेन्दुमवीक्ष्य तस्मि-
न्नाश्नाति यस्तदितरत्रिदशानभिज्ञः ।
तस्यैन्दवस्य भवदास्यनिरीक्षयैव
दर्शेऽश्नतोऽपि न भवत्यवकीर्णिभावः॥७६॥

सूरमिति ॥ तस्मिन्द्वीपे यश्चन्द्रभक्तो जन इन्दुमदृष्ट्वा नाश्नाति । यतः तस्मादितरोऽन्यो यस्त्रिदशो देवस्तस्यानभिज्ञश्चन्द्रातिरिक्तदेवतानभिज्ञः । कः कमिव—सौरः सूर्यभक्तो जनः सूर्यव्यतिरिक्तदेवतानभिज्ञः सूरं सूर्यमदृष्ट्वा नेव नाश्नाति।तस्य ऐन्दवस्य इन्दुभक्तस्य चन्द्रलेखारहितेऽपि दर्शेऽश्नतोऽपि भुञ्जानस्यापि भवदास्यनिरीक्षयैव भवन्मुखचन्द्रदर्शनेनैवावकीर्णिभावो न भवति लुप्तव्रतत्वं न भवतु ।चन्द्राधिकं भवन्मुखं दृष्ट्वा भोजनादित्यर्थः । एतदेव चन्द्रस्थाने भविष्यतीति भावः । सौरः, ऐन्दवः, इत्यत्र 'भक्तिः ४।३।९५ ' इत्यण्[2] ॥ ७६ ॥

उत्सर्पिणी न किल तस्य तरङ्गिणी या
त्वन्नेत्रयोरहह तत्र विपाशि जाता ।
नीराजनाय नवनीरजराजिरास्ता-
मत्राञ्जसाऽनुरज राजनि राजमाने॥७७॥

---

१ अत्रानुप्रासः।कीर्तेः श्रीखण्डलेपमयत्वोक्तेरपह्नुतिः पकीमति त्वन्ये । २ अत्रानुप्रासः ।

१ महीति यमकं,लघादीनां साम्यबाहुल्यादनुप्रासश्च २ अनुप्रासो यमकं च । ३ अत्र व्रतभङ्गदोषाभावेनैव तन्मुखेन्दुभ्रमाद् भ्रान्तिमान् व्यज्यते स च यथोक्तवस्तुव्यङ्ग्यः ।

उत्सर्पिणीति ॥ तस्य द्वीपस्य या तरङ्गिणी विपाड्नाम्नी नदी प्रावृट्कालेऽप्युत्सर्पिणी कूलंकषा नेति अहह आश्चर्यं किलेति । अन्यद्वीपे प्रसरन्ती दृश्यते, अत्र तु नेति पुराणप्रसिद्धिः । तत्र तस्यां विपाशि नद्यां जाता नवा तत्कालं विकसिता नीरजराजिः कमलपङ्क्तिस्त्वन्नेत्रयोर्नीराजनायाऽऽस्तां भवतुत्वं राजमाने शोभमानेऽत्रास्मिन्राजनि अञ्जसा स्वत एवानुराज अनुरागं प्राप्नुहि । अस्यां नद्यां पूराभावात्सदा कमलानां सत्त्वान्नीराजनमप्याविच्छिन्नं भविष्यतीति नोत्सर्पिणीत्यनेन सूचितम् । अत एवैनं भजेत्यर्थः । नीराजनायेति नेत्रापेक्षया कमलानां हीनत्वं सूचितम् । अनुरज इति, 'रञ्जेश्च ६ । ४ । २६ ' इति नलोपः ॥ ७७ ॥

एतद्यशोभिरखिलेऽम्बुनि सन्तु हंसा
दुग्धीकृते तदुभयव्यतिभेदमुग्धाः ।
क्षीरे पयस्यपि पदे द्वयवाचिभूयं
नानाऽर्थकोषविषयोऽद्य मृषोद्यमस्तु ७८

एतादिति ॥ हंसा अखिलेऽम्बुनि एतद्यशोभिर्दुग्धीकृते सति तयोरुभयोः क्षीरनीरयोर्व्यतिभेदः परस्परविवेकस्तद्विषये मुग्धा मूर्खाः सन्तु । सर्वपयासि दुग्धरूपे जाते सति प्रतियोगिनोऽभावात्सर्वं दुग्धत्वेन जानन्त्वित्यर्थः । तथा—नानाऽर्थकोषविषयः नानार्थकोषसंग्राहिनिघण्टोरमरकोषादेर्विषयः । प्रतिपाद्यं क्षीरे पदे पयस्यपि पदे विषये द्वयवाचिभूयमुभयार्थवाचित्वम् । ' पयः क्षीरं पयोऽम्बु च ' इति । अद्य त्वया एतस्मिन्नङ्गीकृते सति मृषोद्यं मिथ्यावाच्यमस्तु भवतु । अस्य यशसा क्षीरनीरयोरेकत्वे कृते प्रतियोगिनो जलस्याभावाद्वितीयस्य अभिधेयस्याभावाद्द्व्यर्थवाचित्वमयुक्तमित्यर्थः । एवंविधं यशोऽन्यस्य कस्यापि न विद्यत इति भावः ७८

ब्रूमः किमस्य नलमप्यलमाजुहूषोः
कीर्तिं स चैष च समादिशतः स्म कर्तुम् ।
स्वद्वीपसीमसरिदीश्वरपूरपार-
वेलाचलाक्रमणविक्रममक्रमेण ॥ ७९ ॥

ब्रूम इति ॥ हे भैमि, वयं सर्वोत्कृष्टं नलमपि अलमत्यर्थमाजुहूषोः स्पर्धमानस्यास्य संबन्धि किं ब्रूमः।अस्य चरितं वागगोचरमित्यर्थः । स्पर्धामेवाह—स च नलः, एष च मेधातिथिश्चोभौ कीर्तीः स्वयशांस्यक्रमेण युगपत्स्वद्वीपयोर्जम्बूप्लक्षद्वीपयोः सीमायां मर्यादारूपो वा यः सरिदीश्वरः समुद्रस्तस्य पूरः प्रवाहस्तस्य पारवेलायां परतीरमर्यादायां योऽचलः पर्वतस्तस्याक्रमणविक्रमसारोहणलक्षणं पराक्रमं कर्तुं समादिशतः स्म संदिष्टवन्तौ । त्वदीया कीर्तिर्दूरगामिनी मदीया वेति निर्णेतुं युगपत्कीर्तिं प्रेषितवन्तावित्यर्थः । नलस्पर्धयैतस्य न्यूनत्वं सूचितम् । आह्वातुमिच्छाति, न त्वाह्वायते इति वा । 'वेलावला—' इति पाठे वेलाया वलेनाक्रमणमित्यर्थः । नलम्, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९ ' इति षष्ठीनिषेधः ॥ ७९ ॥

अम्भोजगर्भरुचिराऽथ विदर्भसुभ्रू-
स्तं गर्भरूपमपि रूपजितत्रिलोकम् ।
वैराग्यरूक्षमवलोकयति स्म भूपं
दृष्टिः पुरत्रयरिपोरिव पुष्पचापम् ८०

अम्भोजेति ॥ अथ अम्भोजस्य गर्भो मध्यस्तद्वद्रुचिरा सातिगौरी विदर्भसुभ्रूः रूपेण सौन्दर्येण जितत्रिलोकं गर्भरूपं वयः संधौ वर्तमानं युवानमपि तं भूपं वैराग्येणाननुरागेण रूक्षं यथा तथावलोकयति स्म । अनुरक्ता नासीदित्यर्थः । का कमिव—पुरत्रयरिपोर्हरस्य दृष्टिः पुष्पचापं काममिव । स्वप्रियनलस्पर्धितया सक्रोधत्वात्परुषेक्षणं ज्ञेयम् । ' द्विगोः ४।१ । २१ ' इति ङीब्विधेः संज्ञापूर्वकत्वेनानित्यत्वाद्बहुव्रीहिणा वा जितत्रिलोकमिति समर्थनीयम् ॥ ८० ॥

ते तां ततोऽपि चकृपुर्जगदेकदीपा-
दंसस्थलस्थितसमानविमानदण्डाः ।
चण्डद्युतेरुदयिनीमिव चन्द्रलेखां
सोत्कण्ठकैरववनीसुकृतप्ररोहाः ॥८१॥

त इति ॥ ते अंसस्थले स्थिताः समानास्तुल्या विमानदण्डा येषां ते शिविकाभृतः तां भैमीं तेजस्वित्वाज्जगदेकदीपाल्लोकत्रयैकदीपरूपात्ततोऽपि तस्मादपि राज्ञः सकाशाच्चकृपुः । अन्यं प्रापयामासुरित्यर्थः । के कस्मात्कामिव—सोत्कण्ठा उत्सुका कैरववनी कुमुदवनी तस्याः सुकृतप्ररोहाः पुण्याङ्कुराः चण्डद्युतेः सूर्याद्दर्शे

---

१ अत्रानुप्रासो यमकं च । २ अत्र यशोभिर्दुग्धीकृते इति तद्गुणः सामान्यं च ।

१ अत्रानुप्रासो यमकं च । २ अत्राप्यनुप्रासो यमकं च ।

सूर्यं प्रविष्टामुदयिनीमुदयोन्मुखां शुक्लपक्षे प्रतिपदादिक्रमेण चन्द्रलेखामिव समाकर्षन्ति ॥ ८१ ॥

भूपेषु तेषु न मनागपि दत्तचित्ता
विस्मेरया वचनदेवतया तयाऽथ।
वाणीगुणोदयतृणीकृतपाणिवीणा-
निक्काणया पुनरभाणि मृगेक्षणा सा ८२

भूपेष्विति ॥ अथ तया वचनदेवतया सरस्वत्या मृगेक्षणा पुनरभाणि उक्ता। किंभूता—तेषु भूपेषु मनागपि न दत्तचित्ता। अत एव किंभूतया—विस्मेरया विस्मितया। तया—वाण्याः गुणोदयेन माधुर्यादिगुणोदयेन कृत्वा तृणीकृतो जितः पाणौ स्थितायाः वीणाया निक्काणः स्वनो यया ॥ ८२ ॥

यन्मौलिरत्नमुदितासि स एष जम्बू-
द्वीपस्त्वदर्थमिलितैर्युवभिर्विभाति।
दोलायितेन बहुना भवभीतिकम्प्रः
कंदर्पलोक इव खात्पतितस्त्रुटित्वा॥८३॥

यन्मौलीति ॥ हे भैमि, यस्य मौलिरत्नं शिरोरत्नं त्वम् उदितासि उत्पन्नाऽसि, स एष जम्बूद्वीपः त्वदर्थमिलितैस्त्वदर्थमागतैर्युवभिः कृत्वा भवाद्धराद्भीत्या कम्प्रः कम्पनशीलः बहुना दोलायितेन दोलनेन कृत्वा त्रुटित्वा विच्छिद्य खात्पतितः कंदर्पलोक इव विभाति। सर्वेऽपि युवानः कामतुल्या इत्यर्थः। द्वीपे रत्नमुत्पद्यते। अन्यदप्यान्तरालिकं वस्तु बहुना दोलनेन गगनात्त्रुटित्वा पतति ॥ ८३ ॥

विष्वग्वृतः परिजनैरयमन्तरीपै-
स्तेषामधीश इव राजति राजपुत्रि।
हेमाद्रिणा कनकदण्डमहातपत्रः
कैलासरश्मिचयचामरचक्रचिह्नः॥ ८४॥

विष्वगिति ॥ हे राजपुत्रि, अयं जम्बूद्वीपः तेषां शाकद्वीपादीनामधीश इव राजेव राजति। राजचिह्नमेवाह—किम्भूतः—अन्तरीपैः सिंहलादिद्वीपैरेव परिजनैः सेवकैर्विष्वक् सर्वतो वृतः। तथा—हेमाद्रिणा मेरुणा कृत्वा कनकदण्डं सुवर्णदण्डं महातपत्रं महच्छत्रं यस्य। तथा—कैलासस्य रश्मिचयः किरणसमूहरूपं चामरचक्रं चामरसङ्घश्चिह्नं यस्य। अन्योऽपि राजा परिजनैः सेव्यते। कनकदण्डातपत्रश्च चामरचिह्नितश्च भवति ॥ ८४ ॥

एतत्तरुस्तरुणि राजति राजजम्बूः
स्थूलोपलानिव फलानि विमृश्य यस्याः।
सिद्धस्त्रियः प्रियमिदं निगदन्ति दन्ति-
यूथानि केन तरुमारुरुहुः पथेति॥८५॥

एतदिति ॥ हे तरुणि, एतस्य जम्बूद्वीपस्य चिह्नं तरू राजजम्बू राजति एष कः—सिद्धस्त्रियो यस्या जम्ब्वाः फलानि स्थूलोपलानिव स्थूलपाषाणतुल्यानि विमृश्य दृष्ट्वा प्रियं भर्तारं प्रति इदं इतीदृशं निगदन्ति पृच्छन्ति। इति किम्—हे प्रिय, दन्तियूथानि हस्तिसमूहाः केन पथा तरुं जम्बूवृक्षमारुरुहुरारूढाः। जम्बूसंबन्धादेवास्य जम्बूद्वीप इति नाम। राजजम्बूः, राजदन्तादित्वात्परनिपातः ॥ ८५ ॥

जाम्बूनदं जगति विश्रुतिमेति मृत्स्ना
कृत्स्नाऽपि सा तव रुचा विजितश्रि यस्याः।
तज्जाम्बवद्रवभवास्य सुधाविधाम्बु-
र्जम्बूसरिद्वहति सीमनि कम्बुकण्ठि ॥८६॥

जाम्बूनदमिति ॥ भोः कम्बुकण्ठि शङ्खवद्रेखात्रययुतकण्ठि, 'रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते' इति हलायुधः। सा जम्बूसरित् अस्य जम्बूद्वीपस्य सीमनि मर्यादायां वहति। किम्भूता—तस्या जम्ब्वाः जाम्बवानि फलानि तेषां द्रवो रसः तस्माद् भवा जाता। तथा—सुधाया विधा प्रकारो यस्य तादृशमम्बु यस्याः पीयूषतुल्यजला। सा का—यस्या जम्बूनद्याः कृत्स्ना सकलापि मृत्स्ना प्रशस्ता मृत्तिका जगति तव रुचा कान्त्या विजितश्रि जितशोभं जम्बूनद्या इदं जाम्बूनदं सुवर्णमिति विश्रुतिमेति। यन्मृत्तिका उत्तमं सुवर्णं, तदपि त्वदङ्गकान्त्या जितम्। 'प्रशस्ता तु मृत्स्ना मृत्स्ना च मृत्तिका' इत्यमरः। 'मृदस्तिकन्' 'सस्नौ प्रशंसायाम्' इति स्नप्रत्ययः। जाम्बवम्, 'जम्ब्वा वा ४।३।१६' इत्यण्। कम्बुकण्ठि 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीप् ॥ ८६ ॥

१ उदयिनीमित्युपमा। २ अत्रानुप्रासो यमकं च। ३ मौलिरत्नाभेदोक्तेः रूपकम्, कन्दर्पलोक इवेत्युत्प्रेक्षा।

१ अत्रानुप्रासो यमकं च। अधीश इवेत्युपमा। हेमाद्रेरातपत्रत्वेन परिणामोक्तेः परिणामः, एवं कैलासेत्यादौ च। २ अत्रानुप्रासो यमकं च। ३ अत्रानुप्रासो यमकं च।

अस्मिञ्जयन्ति जगतीपतयः सहस्र-
मस्रास्रुसार्द्ररिपुतद्वनितेषु तेषु ।
रम्भोरु चारु कतिचित्तव चित्तबन्धि-
रूपान्निरूपय मुदाऽहमुदाहरामि ॥८७॥

अस्मिन्निति ॥ अस्मिन्द्वीपे सहस्रमनेके जगतीपतयो राजानो जयन्ति सर्वोत्कर्षेण वर्तन्ते । हे रम्भोरु, अस्राश्रुभ्यां रक्तनेत्राम्बुभ्यां यथाक्रमं सार्द्रा रिपवस्तेषां वनिताश्च येषां तेष्वतिशूरेषु राजसु मध्येऽहं कतिचिद्राज्ञ उदाहरामि चारु वदामि । त्वं चारु वा तान् मुदा निरूपय पश्य । किंभूतान्—तव चित्तबन्धिरूपान्मनोहारिसौन्दर्यान् ॥ ८७ ॥

प्रत्यर्थियौवतवतंसतमालमालो-
न्मीलत्तमःप्रकरतस्करशौर्यसूर्ये ।
अस्मिन्नवन्तिनृपतौ गुणसंततीनां
विश्रान्तिधामानि मनो दमयन्ति किं ते॥८८॥

प्रत्यर्थीति ॥ हे दमयन्ति, गुणसंततीनां सौन्दर्यादिगुणसत्त्वानां विश्रान्तिधामानि विश्रान्तिस्थानेऽस्मिन्नवन्तिनृपतौ मनः किं वर्तत इति शेषः । किम्भूते—प्रत्यर्थिनां यौवतं स्त्रीसमूहः तस्य वतंसभूतास्तमालमाला एवोन्मीलन्ति प्रकटीभूतानि तमांसि तेषां प्रकरः समूहस्तस्य तस्करो विनाशकः शौर्यमेव सूर्यो यस्य । वैरिणां मृत्युरूपः।वीरानुरागिण्यो हि योषित इति प्रायेणास्मिन्ननुरक्ताऽसीति मम प्रतिभातीति युक्तमिति भावः ॥ ८८ ॥

तत्रानुतीरवनवासितपस्विविप्रा
शिप्रा तवोर्मिभुजया जलकेलिकाले ।
आलिङ्गनानि ददती भविता वयस्या
हास्यानुबन्धिरमणीयसरोरुहास्या॥८९॥

तत्रेति ॥ तत्र अवन्त्यां शिप्रा नदी तव वयस्या सखी भविता भविष्यति । किम्भूता—अनुतीरं तीरसमीपे वनेषु वासिनस्तपस्विनो विप्रा यस्याः । तथा—जलकेलिकाले जलक्रीडासमये ऊर्मिभुजया तरङ्गबाहुना तवालिङ्गनानि ददती । तथा—हास्यस्य विकारस्यानुबन्धो नैरन्तर्यं तेन रमणीयं सरोरुहं कमलमेवास्यं यस्याः। तीरमनु समया तीरवदायतानि वेति 'अनुर्यत्समया २ । १ । १५' 'यस्य चायामः २ । १ । १६' इति वाऽव्ययीभावः ॥ ८९ ॥

अस्याधिशय्य पुरमुज्जयिनीं भवानी
जागर्ति या सुभगयौवतमौलिमाला ।
पत्याऽर्धकायघटनाय मृगाक्षि तस्याः
शिष्या भविष्यसि चिरं वरिवस्ययाऽपि॥९०॥

अस्येति ॥ हे मृगाक्षि, या भवानी पार्वती अस्य उज्जयिनीं पुरमधिशय्याधिष्ठाय जागर्ति स्फुरद्रूपा वर्तते । किंभूता—सुभगं सुन्दरं यौवतं स्त्रीवृन्दं तस्य मौलिमाला शिरोमाला । त्वं तस्या भवान्या वरिवस्यया शुश्रूषया एतेन पत्या अर्धकायघटनाय शिष्याऽपि भविष्यसि । एतद्वरणेन प्राणेशार्धशरीरत्वं सुलभमित्यर्थः । रूपेण शिष्या जातैव सेवयापि शिष्या भविष्यसीति चापेरर्थः । स्वीयं प्राणेशार्धत्वं तवापि करिष्यतीत्यर्थः । पुरम् 'अधिशीङ्स्थासां कर्म्म १ । ४ । ४६' इत्याधारस्य कर्मत्वम् । भवानी 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४ । १ । ४९' इति पुंयोगे ङीषानुक्च ॥ ९० ॥

निःशङ्कमङ्कुरिततां रतिवल्लभस्य
देवः स्वचन्द्रकिरणामृतसेचनेन ।
तत्रावलोक्य सुदृशां हृदयेषु रुद्र-
स्तद्देहदाहफलमाह स किं न विद्मः ९१॥

निःशङ्कमिति तत्रोज्जयिन्यां स देवो रुद्रः स्वचन्द्रकिरणामृतसेचनेन सुदृशां हृदयेषु रतिमल्लभस्य कामस्य निशःङ्कं निर्भयमङ्कुरिततां प्रादुर्भावमवलोक्य तद्देहदाहस्य फलम् प्रयोजनं किमाह किं ब्रूते वयं तत् न विद्मः। तत्रत्याः स्त्रियः सर्वदा सकामा दृष्टा मया कृतः कामदाहो व्यर्थ एव जात इत्यर्थः । पुनः सहस्रधोत्पैतेः ॥ ९१ ॥

आगश्शतं विदधतोऽपि समिद्धकामा
नाधीयते परुषमक्षरमस्य वामाः ।
चान्द्री न तत्र हरमौलिशयालुरेका-
नध्यायहेतुतिथिकेतुरपैति लेखा ॥ ९२ ॥

---

१ अत्राप्यनुप्रासो यमकं च । २ अत्रानुप्रासो यमकं च ।

१ अत्रानुप्रासो रूपकं च । २ अत्रानुप्रासः । मौलिमालात्वेन भवान्या रूपणाद्रूपकम् । ३ स्वेन दाहं नीतस्यैव स्मरस्य स्वसंनिधावेव सहस्रधाऽऽविर्भावदर्शनाद्विषादनम् ।

आग इति ॥ वामाः स्त्रियः आगश्शतं सपत्नीसंभोगादिनाऽपराधसहस्रं विदधतोऽपि कुर्वतोऽप्यस्य राज्ञः परुषं निष्ठुरमक्षरं नाधीयते न ब्रुवते । यतः—समिद्धकामाः । सकामत्वादस्यापराधं न गणयन्तीति भावः । वामा इत्यनेन वक्रस्वभावत्वात्परुषभाषणयोग्यत्वेऽपि सकामत्वान्नोचुरित्यर्थः । अनध्याये हेतुमाह—तत्रोज्जयिन्यां हरमौली शयालुः स्थिता अनध्यायहेतुस्तिथिः प्रतिपत् तस्याः केतुश्चिह्नं चान्द्री एका लेखा कला नापैति न गच्छति । सदा तत्र शंभोः सत्त्वाच्चन्द्रकलाया अपि सत्त्वाच्चन्द्रकलादर्शनात्समुत्पन्नकामाः सत्यः परुषं न भाषन्त इति भावः । अथ च 'प्रतिपत्पाठशीलस्य' इति वचनात्सर्वानध्यायापेक्षया प्रतिपदो मुख्यत्वम् । सर्वास्वपि तिथिषु शुक्लप्रतिपद्बुद्धेरक्षरमपि न पठन्तीति युक्तमित्यर्थः। आगश्शतकारित्वमेवास्य दोषः ॥ ९२ ॥

भूपं व्यलोकत न दूरतरानुरक्तं
सा कुण्डिनावनिपुरन्दरनन्दिनी तम् ।
अन्यानुरागविरसेन विलोकनाद्धा
जानामि सम्यगविलोकनमेव रम्यम् ॥९३॥

भूपमिति ॥ सा कुण्डिनावनिपुरंदरस्य भीमस्य नन्दिनी पुत्री दूरतरं सुतरामनुरक्तम् अपि सानुरागमपि तं भूपं न व्यलोकत । वा यस्मादन्यस्मिन्नलेऽनुरागेण तदतिरिक्ते विरसेन विगतेन रसेन अननुरागेण विलोकनात् विलोकनापेक्षयाऽविलोकनं सर्वथानवेक्षणमेव रम्यं श्रेष्ठं जानामि मन्ये । यत्रानुरागो नास्ति तद्विलोकनेनापि प्रयोजनं नास्तीत्यर्थः ॥ ९३ ॥

भैमीङ्गितानि शिबिकामधरे वहन्तः
साक्षान्न यद्यपि कथञ्चन जानते स्म ।
जज्ञुस्तथाऽपि सविधस्थितसम्मुखीन-
भूपालभूषणमणिप्रतिबिम्बितेन ॥९४॥

भैमीमिं ॥ अधरेऽधोभागे शिबिकां वहन्तो दधाना भैमीङ्गितानि जृम्भणादीनि अननुरागचिह्नानि यद्यपि साक्षात् कथंचन केनापि प्रकारेण न जानते स्म, तथाऽपि सविधे समीपे स्थिताः संमुखीना भूपालास्तेषां भूषणानां मणिषु रत्नादिषु प्रतिबिम्बितेन हेतुना जज्ञुः । अननुरागचिह्नानि प्रतिबिम्बवशाज्जानते स्मेत्यर्थः । सम्मुखं दृश्यतेऽस्मिन्नित्यत्र प्रतिबिम्बाधिकरणे रत्नादौ 'यथामुखसम्मुखस्य दर्शनः खः ५ । २ । ६ ।' इति खः । भूषणमणीनां विशेषणं वा ॥ ९४ ॥

भैमीमवापयत जन्यजनस्तदन्यं
गङ्गामिव क्षितितलं रघुवंशदीपः ।
गाङ्गेयपीतकुचकुम्भयुगां च हार-
चूडासमागमवशेन विभूषितां च ॥९५॥

भैमीमिति ॥ जन्यजनः वाहकसङ्घः भैमीं तस्माद्न्यं नृपमवापयत । कः कां किमिव—रघुवंशदीपो भगीरथः गङ्गां क्षितितलमिव । किंभूतां भैमीं गङ्गां च—गाङ्गेयं सुवर्णं तद्वत्पीतं गौरं कुचकुम्भयुगं यस्याः । गाङ्गेयाभ्यां स्कन्दभीष्माभ्यां पीतं कुचकुम्भयुगं यस्याः उभयोः पुत्रत्वात् । तथा—हारो मुक्ताभूषणं कण्ठस्थितम्, चूडा बाहुभूषणं शिरःस्थितं वा भूषणं तयोः समागमवशेन विभूषितां शोभमानाम् । हरस्येयं हारी चूडा शिरोभागस्तस्याः समागमवशेन विभूषितामलंकृताम् । विशेषेण भुवि उषितां च । गाङ्गेयः, 'स्त्रीभ्यो ढक् ४ । १ । १२० हारी चासौ चूडा च । पुंवद्भावः ॥ ९५ ॥

तां मत्स्यलाञ्छनदराञ्चितचापभासा
नीराजितभ्रुवमभाषत भाषितेशा ।
व्रीडाजडे किमपि सूचय चेतसा चेत्
क्रीडारसं वहसि गौडबिडौजसीह ॥९६॥

तामिति ॥ भाषितस्य वाच ईशा वाणी तां भैमीमभाषत । किम्भूताम्—मत्स्यलाञ्छनेन कामेन दरम् ईषदाञ्चितस्याकृष्टस्य चापस्य भासा कान्त्या नीराजिते भ्रुवौ यस्यास्ताम् । किमुवाचेत्यत आह—हे व्रीडाजडे लज्जयाऽप्रगल्भे, इहास्मिन्गौडबिडौजसि गौडदेशाधीशे गौडेन्द्रे चेतसा चेत् क्रीडारसमुपभोगेच्छां वहसि लज्जया साक्षान्न कथयसि तथापि किमपि कटाक्षादिना मां सूचय बोधय । ततोऽहमेनं वर्णयिष्यामीति ॥ ९६ ॥

एतद्यशोभिरमलानि कुलानि भासां
तथ्यं तुषारकिरणस्य तृणीकृतानि ।
स्थाने ततो वसति तत्र सुधाऽम्बुसिन्धौ
रङ्कुस्तदङ्कुरवनीकवलाभिलाषात् ॥९७॥

---

१ अत्रानुप्रासः । आगःशतमित्यादौ विरोधाभासः २ न व्यलोकतेत्युक्तं समर्थयितुमेवान्येत्याद्युक्तमित्युत्प्रेक्षासङ्कीर्णोऽर्थान्तरन्यासः ।

१ अत्रानुप्रासः । काव्यलिङ्गम् । २ अत्रानुप्रासः । गङ्गामिवेति गाङ्गेयपीतेति चोपमा ३ अनुप्रासोऽत्र शब्दालङ्कारः। नासाभ्रुवोर्नीराजनपरिणमनोक्तेः परिणामः।

एतदिति ॥ हे भैमि, एतस्य यशोभिस्तुषारकिरणस्य इन्दोः भासां किरणानाममलानि शुभ्राणि कुलानि तृणीकृतानीति तथ्यं सत्यम् । ततस्तस्मादेव हेतो रङ्कुः चिह्नहरिणः सुधालक्षणमम्बु तस्य सिन्धौ समुद्रे तत्र तस्मिंश्चन्द्रे तेषां कान्तितृणानामङ्कुरास्तेषां वनी वृन्दं तस्याः कवलाभिलाषाद् ग्रासाभिलाषाद्वसति इदं स्थाने उचितम् । मृगो हि स्वादुजलतृणाङ्कुरबहुले देशे वसति, चन्द्ररूपे स्थाने इति वा । अतितरामयं यशस्वीति भावः ॥ ९७ ॥

आलिङ्गितः कमलवत्करकस्त्वयाऽयं
श्यामः सुमेरुशिखयेव नवः पयोदः ।
कंदर्पमूर्धरुहमण्डनचम्पकस्र-
ग्दामत्वदङ्गरुचिकञ्चुकितश्चकास्तु ९८

आलिङ्गित इति ॥ हे भैमि, त्वया आलिङ्गितोऽयं नृपः नवपयोदो मेघ इव चकास्तु भासताम् । किंभूतः—कमलं भाग्यचिह्नं तद्वान्करो यस्य । तथा—स्वभावाच्छ्यामः । तथा—कंदर्पस्य मूर्धरुहाः केशास्तेषां मण्डनं चम्पकपुष्पस्रग्दाम तद्वत् या त्वदङ्गरुचिः स्रग्दामरूपा मदनोदयकारिणी अतिगौरी त्वदीयाङ्गकान्तिर्वा । तया कञ्चुकितः संवलितः । मेघोऽपि—कमलं जलं तद्वत्यः करका वर्षोपला यस्य । तथा—सजलत्वान्नीलः । तथा—सुमेरुशिखया आलिङ्गितः संबद्धः । विद्युता संवलितश्च । गौरश्यामयोः सम्बन्धः सुतरां शोभते । स्रग्दामेति समुदितो मालावाचकः शब्दः ॥ ९८ ॥

एतेन सम्मुखमिलत्करिकुम्भमुक्ताः
कौक्षेयकाभिहतिभिर्विबभुर्विमुक्ताः ।
एतद्भुजोष्मभृशनिःसहया विकीर्णाः
प्रस्वेदबिन्दव इवारिनरेन्द्रलक्ष्म्या९९॥

एतेनेति ॥ हे भैमि, एतेन राज्ञा कौक्षेयकाभिहतिभिः खड्गप्रहारैः कृत्वा विमुक्ताः कुम्भस्थलेभ्यो भूमौ पातिताः संग्रामार्थं संमुखं मिलतामागच्छतां करिणां कुम्भस्थलस्था मुक्ता मुक्ताफलानि एतस्य राज्ञः भुजोष्मणो बाहुप्रतापस्य भृशम् अतिशयेन निःसहया सोढुमसमर्थया अतिनरेन्द्रा एतस्य वैरिणो राजानस्तेषां लक्ष्म्या विकीर्णा विसृष्टाः प्रस्वेदबिन्दवः इव विबभुः । हस्तियोधित्वादतिशूरोऽयमिति भावः । 'कौक्षेयको मण्डलाग्रः' इत्यमरः । कुक्षौ भवः 'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ४।२।९६' इति खड्गेऽभिधेये ढकञ् ९९

आश्चर्यमस्य ककुभामवधीनवाप-
दाजानुगाद् भुजयुगादुदितः प्रतापः ।
व्यापत्सदाशयविसारितसप्ततन्तु-
जन्मा चतुर्दश जगन्ति यशःपटश्च ॥१००॥

आश्चर्यमिति॥अस्य आजानुगाज्जानुपर्यन्तगामिनो दीर्घाद्भुजयुगात् उदितः प्रतापः ककुभां दिशामवधीन्प्रान्तानवापत्प्राप एतदाश्चर्यम् । तथा—संश्चासावाशयश्च तेन शुचिना चित्तेन विसारिताः कृताः सप्ततन्तवो मखास्तेभ्यो जन्म यस्य एवंभूतो यशःपटः चतुर्दश जगन्ति व्यापत् एतदप्याश्चर्यम् । अस्य राज्ञो दिक्प्रान्तगामि—चतुर्दशजगद्व्यापिनोः प्रतापयशःपटयोर्दर्शनादेवाश्चर्यम् । अथवा—कारणगुणानां कार्ये समवायस्यावश्यकत्वाज्जानुपर्यन्तगामिनो भुजयुगादुत्पन्नस्य प्रतापस्यातिदूरादिक्प्रान्तगामित्वादाश्चर्यम् । तथा—सदा सर्वदा शयेन हस्तेन प्रसारिताः सप्तसंख्यास्तन्तवस्तेभ्योऽल्पपरिमाणेभ्यः कारणेभ्यः समुत्पन्नस्य पटस्य चतुर्दशजगद्व्यापित्वान्महदाश्चर्यमित्यर्थः । एवंविधः प्रतापवान्यशस्वी चान्यः कोऽपि नास्तीति भावः । 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः ॥ १०० ॥

औदास्यसंविदवलम्बितशून्यमुद्रा-
मस्मिन्दृशोर्निपतितामवगम्य भैम्याः ।
स्वेनैव जन्यजनतान्यजीगमत्तां
सुज्ञं प्रतीङ्गितविभावनमेव वाचः ॥१०१॥

औदास्येति ॥ जन्यजनता जन्यजनसमूहः स्वेनैव वचनं विना आत्मनैव तां भैमीमन्यं नृपमजीगमत्प्रापयामास । किं कृत्वा—अस्मिन्नृपे निपतितां भैम्या दृशोरौदास्यस्य संवित् बुद्धिः इयति वर्णने कृतेऽप्यनवलोकनेनौदास्यज्ञानं तयावलम्बिता शून्यमुद्रा तां प्रेमराहित्यचिह्नं ताम् अवगम्य ज्ञात्वा । आज्ञां विना कथं नीतवान् । अत्रार्थेऽर्थान्तरन्यासमाह—सुज्ञं पण्डितं प्रति इङ्गित-

---

१ अत्रानुप्रासो यमकं च । यशःकर्तृकस्य भाःकुलसम्बन्धिनस्तृणत्वोपपादनस्य सादृश्यपर्यवसायित्वामित्युपमा । २ अत्रानुप्रासः । रूपकमुपमा च ।

१ अत्रानुप्रासः । बिन्दव इवेत्युपमा । २ अत्रानुप्रासः । यशःपट इति रूपकम् । अतिशयोक्तिस्तु स्फुटैव ।

विभावनं चेष्टितज्ञापनमेव वाच उपदेश्याः । उदास्त इत्युदासः पचाद्यजन्तः ब्राह्मणादित्वात्ष्यञ् ॥ १०१ ॥

एतां कुमारनिपुणां पुनरप्यभाणी-
द्वाणी सरोजमुखि निर्भरमारभस्व ।
अस्मिन्नसंकुचितपङ्कजसख्यशिक्षा-
निष्णातदृष्टिपरिरम्भविजृम्भितानि १०२॥

एतामिति वाणी सरस्वती कुमारी चासौ निपुणा च नलान्यतारतम्यज्ञा तामेतां पुनरपि इत्यमाणीत् । हे सरोजमुखि, अस्मिन्नृपे असंकुचितस्य विकसितस्य पङ्कजस्य सख्यशिक्षायां साहृश्याभ्यासे निष्णाता निपुणा दृष्टिः विकसितकमलतुल्येत्यर्थः।तया तस्या वा परिरम्भजृम्भितान्यालिङ्गनविलासान्निर्भरं सुतरामारभस्व । एनं सादरमवलोकयेति भावः ॥ १०२ ॥

प्रत्यर्थिपार्थिवपयोनिधिमाथमन्थ-
पृथ्वीधरः पृथुरयं मथुराधिनाथः ।
अश्मश्रुजातमनुयाति न शर्वरीशः
श्यामाङ्ककर्बुरवपुर्वदनाब्जमस्य १०३॥

प्रत्यर्थीति ॥ हे भैमि ! अयं पृथुनामा मथुराया अधिनाथो राजा । किंभूतः—प्रत्यर्थिपार्थिवाः शत्रुनृपास्त एव पयोनिधयस्तेषां माथे मथने मन्थपृथ्वीधरः मन्थशैलो मन्दरः । तया—शर्वरीशश्चन्द्रः अस्याश्मश्रुजातमनुत्पन्नश्मश्रु कचरहितं वदनाब्जं नानुयाति नानुकरोति । यतः—श्यामेनाङ्केन कलङ्केन कर्बुरं विचित्रं वपुर्यस्य । सकलङ्कश्चन्द्रः श्मश्रुरहिततन्मुखचन्द्रतुल्यो न भवतीत्यर्थः। वयःसंधौ वर्तत इति भावः । न जातं श्मश्रु यस्मिन्, 'वाहिताग्न्यादिषु २।२।३१' इति परनिपातः । पार्थिव इति, 'तत्र विदित इति च ५।१।४३' इत्यण् ॥ १०३ ॥

वालेऽधराधरितनैकविधप्रवाले
पाणौ जगद्विजयकार्मणमस्य पश्य ।
ज्याघातजेन रिपुराजकधूमकेतु-
तारायमाणमुपरज्य मणिं किणेन १०४॥

वाल इति ॥ हे अधरेणौष्ठेनाधरितानि जितान्यनेकविधानि नानाजातीयानि प्रवालानि पल्लवा विद्रुमा वा यया । तया—वाले, त्वम् अस्य राज्ञः पाणौ जगद्विजयस्य कार्मणं वशीकरणं मणिं कङ्कणरत्नं पश्य । किंभूतं मणिम्—ज्याघातजेन किणेनोपरज्य श्यामीभूय रिपुराजकस्य रिपुनृपवृन्दस्य तदर्थं धूमकेतुतारायमाणं धूमकेतुनक्षत्रवदाचरितम् । धूमकेतुनक्षत्रमुदितं तद्यथा राजक्षयं करोति तथेति । नैकविधं विविधं प्रवालं ययेति वा । रिपवश्च तद्राजकं च । अन्यथा आदिवृद्धिः स्यात् । संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः ॥ १०४ ॥

एतद्भुजारणिसमुद्भवविक्रमाग्नि-
चिह्नं धनुर्गुणकिणः खलु धूमलेखा ।
जातं ययाऽरिपरिपन्मशकार्थयाऽश्रु-
विश्राणनाय रिपुदारदृगम्बुजेभ्यः १०५

एतदिति ॥ धनुर्गुणकिणः ज्याघातजः किणः एतस्य भुज एवारणिर्वह्न्युत्पत्तिकाष्ठं तस्मात्समुद्भवविक्रमाग्निः समुत्पन्नप्रतापवह्निस्तस्य चिह्नं चिह्नभूता धूमलेखा खलु निश्चये । यया धूमोऽग्नेर्लिङ्गम् । यया धूमलेखया रिपूणां दारास्तेषां दृगम्बुजेभ्योऽश्रुविश्राणनाय रोदनवितरणाय जातम् । पतिवधादित्यर्थः । किंभूतया—अरिपरिषद्रिपुसंघस्तल्लक्षणा मशकास्तन्निवृत्तिरूपोऽर्थः: प्रयोजनं यस्याः सा तया । अत्रार्थशब्दो निवृत्तिवचनः । धूमलेखा हि दृशां चाश्रूणि जनयति । अतिशूरोऽयमिति भावः । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः ॥ १०५ ॥

श्यामीकृता मृगमदैरिव माथुरीणां
धौतैः कलिंदतनयामधिमध्यदेशम् ।
तत्रात्तकालियमहाह्रदनाभिशोभा
रोमावलीमिव विलोकयितासि भूमेः १०६

श्यामीति ॥ तत्र मथुरायाम् अधिमध्यदेशे कलिंदतनयां यमुनां भूमे रोमावलीमिव त्वं विलोकयितासि । किंभूताम्—माथुरीणां मथुरास्त्रीणां धौतैर्जलक्रीडाक्षालितैर्मृगमदैः कस्तूरीभिरिव श्यामीकृतां न तु स्वतः श्यामामित्यर्थः । तया—आत्ता प्राप्ता कालियस्य सर्पराजस्य महाह्रदेन कृत्वा नाभिशोभा यया ताम् । रोम-

१ अनुप्रासोऽत्र शब्दालङ्कारः । सुष्ठं प्रतीत्यर्थान्तरन्यासः।२ अत्रानुप्रासः उपमा च । ३ अत्रानुप्रासः।पार्थिवानां पयोनिधित्वेन रूपणाद्रूपकम् । वदनाब्जमित्युपमा, नानुयातीति व्यतिरेकश्च ।

१ अनुप्रासोऽत्र शब्दालङ्कारः। अधराधरितेति प्रतीपम्, धूमकेतुतारायमाणमित्युपमा । २ अनुप्रासः । भुजारणीत्याद्युक्तौ उपमा, खल्वित्युत्प्रेक्षा च ।

राजिः स्वतः श्यामापि मृगमदैः श्यामतरा, कालियमहाह्रदवद्गभीरया नाभ्या प्राप्तशोभा च, मध्यप्रदेशो च भवति । अनेन सह कालिन्द्यां जलक्रीडां कुर्वेति भावः ॥ १०६ ॥

गोवर्धनाचलकलापिचयप्रचार-
निर्वासिताहिनि घने सुरभिप्रसूनैः ।
तस्मिन्ननेन सह निर्विश निर्विशङ्कं
वृन्दावने वनविहारकुतूहलानि ॥१०७॥

गोवर्धनेति ॥ हे भैमि ! तस्मिन् श्रीकृष्णक्रीडयातिप्रसिद्धे स्त्रीसरूपं वृन्दमवतीति वृन्दावनं मथुरासमीपवनं तस्मिन् । वृन्दस्य गोपालसङ्घस्य वने वा । त्वम् अनेन राज्ञा सह निर्विशङ्कं सर्पादिभयरहितं यथा तथा पुष्पावचयादीनि वनविहारकुतूहलानि वनक्रीडाकौतुकानि निर्विशोपभुङ्क्ष्व । किंभूते—गोवर्धननामाचलो गिरिस्तत्र वर्तमानाः कलापिचया मयूरसङ्घास्तेषां प्रचारेण संचरणेन निर्वासिता निष्कासिता अहयः सर्पा यस्मात् । तथा—घने निबिडच्छाये । तथा—सुरभीणि सुगन्धीनि प्रसूनानि पुष्पाणि यस्मिन् । वृन्दावने 'वनगिर्योः सञ्ज्ञायां कोटरकिंशुलुकादीनाम् ६।७।१७' इति कोटरादित्वाद्दीर्घः ॥ १०७ ॥

भावी करः करुहाङ्कुरकोरकोऽपि
तद्वल्लिपल्लवचये तव सौख्यलक्ष्यः ।
अन्तस्त्वदास्यहृतसारतुषारभानु-
शोभानुकारिकरिदन्तजकङ्कणाङ्कः १०८

भावीति ॥ हे भैमि ! तस्य वृन्दावनस्य वल्लिपल्लवचये लताकिसलयवृन्दमध्ये कररुहा एव नखा एवाङ्कुरास्त एव कोरका यस्य एवंभूतस्तव करः सौख्येनानायासेन लक्ष्यो ज्ञेयः भावी भविष्यति । रक्तत्वादतिमृदुत्वात्कोरकाकारनखरूपकोरकयुक्तत्वाच्च किमयं कोरकयुक्तः पल्लवः, अथवा नखयुक्तो भैमीकर इति संदेहविषयत्वयोग्योऽपीत्यपिशब्दार्थः । यतः—अन्तः मध्ये त्वदास्येन हृतसारस्त्वदीयमुखनिर्माणार्थे हृतः मध्यदेशसंबन्धिश्रेष्ठभागो यस्य एवंभूतो वा तुषारभानुश्चन्द्रस्तस्य शोभानुकारित्वात्तदाकारं करिदन्तजकङ्कणं तदेवाङ्कश्चिह्नं यस्य । हस्तिदन्तवलययुक्तो भैमीकरः, तद्राहितश्च पल्लव इति पल्लवमध्ये करः सुखेन ज्ञास्यत इत्यर्थः । तत्रत्याः स्त्रियः प्रायशो दन्तवलयानि बिभ्रति ॥ १०८ ॥

तज्जः श्रमाम्बु सुरतान्तमुदा नितान्त-
मुत्कण्टके स्तनतटे तव सञ्चरिष्णुः ।
खञ्जन्प्रभञ्जनजनः पथिकः पिपासुः
पाता कुरङ्गमदपङ्किलमप्यशङ्कम् १०९॥

तज्ज इति ॥ हे भैमि, तज्जः वृन्दावने जातः प्रभञ्जनजनो वायुसङ्घः, वायुलक्षणो वा जनः कुरङ्गमदेन कस्तूरिकया पङ्किलं कलुषमपि श्रमाम्बु सुरतश्रमजनितं घर्मोदकम् अशङ्कं निःशङ्कं पाता पास्यति । अपनेष्यतीत्यर्थः । किंभूतः—सुरतान्तमुदा सुरतावसानहर्षेण नितान्तमुत्कण्टके रोमाञ्चिते तव स्तनतटे संचरिष्णुः संचरणशीलः । तथा—खञ्जन्वृक्षादिबाहुल्येन मन्दीभवन् । पथिको नित्यं मार्गस्थः । अत एव पिपासुस्तृषार्तः । अन्योऽपि पान्थः कण्टकिते देशे संचरिष्णुः । अत एव भग्नकण्टकत्वात्पङ्गुर्भवन्नुदकपानेच्छुर्निर्मलोदकप्राप्त्यभावात्कर्दमयुक्तमपि जलं निर्विचारं पिबतीति ॥ १०९ ॥

पूजाविधौ मखभुजामुपयोगिनो ये
विद्वत्कराः कमलनिर्मलकान्तिभाजः ।
लक्ष्मीमनेन दधतेऽनुदिनं वितीर्णै-
स्ते हाटकैः स्फुटवराटकगौरगर्भाः ११०

पूजेति ॥ ये विदुषां पण्डितानां करा मखभुजां देवानां पूजाविधावुपयोगिनः तत्पराः । तथा—कमलेन दानसंबन्धिना जलेन निर्मलकान्तयः । अथ च पद्मतुल्याः । ते विद्वत्करा अनेन राज्ञानुदिनं प्रतिदिनं वितीर्णैः दत्तैर्हाटकैः सुवर्णैः कृत्वा लक्ष्मीं दधते धारयन्ति । किंभूताः—सुवर्णधारणादेव स्फुटः प्रकटः वराटकास्तद्वद्गौरगर्भा गौरमध्याः । पद्मा अपि देवपूजाविधावुपयोगिनः, स्फुटेन बीजकोशेन गौरमध्याः । अतितरां दातारमिति भावः । 'बीजकोशो वराटकः' इत्यमरः । कमलमध्यस्थिता पीतवर्णा वर्णिकेत्यर्थः ॥ ११० ॥

वैरिश्रियं प्रतिनियुद्धमनाप्नुवन्यः
किंचिन्न तृप्यति धरावलयैकवीरः ।

---

१ रोमावलीमिवेत्युत्प्रेक्षा । मृगमदैरिवेति चाप्युत्प्रेक्षैव । २ अनुप्रासः । निर्विशङ्कं निर्विशेत्यत्र गोवर्धनेत्यस्य हेतुत्वात् काव्यलिङ्गम् । विशेषणस्य साभिप्रायत्वात्परिकरश्च ।

१ अनुप्रासो यमकं च शब्दालङ्कारौ । रूपकं त्वर्थालङ्कारः । २ अत्रानुप्रासः, । प्रभञ्जनस्य जनत्वेनरूपणाद्रूपकम् । ३ अत्रानुप्रासः उपमा च ।

स त्वामवाप्य निपतन्मदनेषुवृन्द-
स्यन्दीति तृप्यतु मधूनि पिबान्निवायम्१११

वैरीति ॥ यः राजा वैरिश्रियं वैरिराजलक्ष्मीं प्रति लक्षीकृत्य वैरिभिः सह नियुद्धं नितरां युद्धमनाप्नुवन्नप्राप्नुवन् किंचित्किमपि न तृप्यति न तुष्यति । यतः—धरावलये एको वीरः शूरः । युद्धमकृत्वैव वैरिभिर्दत्ताः श्रियो लब्ध्वापि युद्धेच्छामप्राप्यातृप्तः । सोऽयं अद्य त्वामवाप्य त्वद्विषये एनमुद्दिश्य नितरां पतन्तो मदनेषवः पुष्पाणि तेषां वृन्दानि तेभ्यः स्यन्दीनि मधूनि पुष्परसान्पिबन्निव तृप्यतु । स्वतुल्यमदनयुद्धलाभादित्यर्थः । एनं वृणुष्वेति भावः । 'अनावप्नुन्' इति पाठे प्रति नियुद्धं युद्धं युद्धं प्रति युद्धमात्रे वैरिश्रियः प्राप्नुवन्न तृप्यति स त्वां प्राप्य तृप्यतु । श्रीभ्योऽपि त्वमधिकेत्यर्थः । अन्योऽपि मद्यपानेन पूर्वमसंतोषहेतुं विस्मरन्संतुष्यति ॥ १११ ॥

तस्मादियं क्षितिपतिक्रमगम्यमान-
मध्वानमैक्षत नृपादवतारिताक्षी ।
तद्भावबोधबुधतां निजचेष्टयैव
व्याचक्षते स्म शिबिकानयने नियुक्ताः११२

तस्मादिति ॥ तस्मान्नृपादवतारिताक्षी इयं भैमी क्षितिपतिभी राजभिः क्रमेण परिपाट्या गम्यमानं राजसंबन्धिनं क्रमेण गम्यमानं वा अध्वानमैक्षत । शिबिकानयने नियुक्ता जन्याः निजचेष्टयैवान्यप्रापणरूपेण स्वव्यापारेणैव नृपरत्नेषु प्रतिबिम्बवशेन तस्या भैम्याः भावोऽभिप्रायस्तस्य बोधो ज्ञानं तेन बुधतां पण्डिततां व्याचक्षते स्म ज्ञापितवन्तः । तामन्यं नृपं प्रापयामासुरित्यर्थः । अन्योऽपि भावबोधेन निजं पाण्डित्यं प्रकटयति॥११२॥

भूयोऽपि भूपमपरं प्रति भारती तां
त्रस्यच्चमूरुचलचक्षुषमाचचक्षे ।
एतस्य काशिनृपतेस्त्वमवेक्ष्य लक्ष्मी-
मक्ष्णोः सुखं जनय खञ्जनमञ्जुनेत्रे॥११३॥

भूय इति ॥ भारती त्रस्यन् यश्चमूरुर्मृगः तद्वच्चलचक्षुषं चञ्चलनेत्रां तां भैमीं प्रत्यपरं भूयोऽप्याचचक्षे । हे खञ्जननेत्रवन्मञ्जुनेत्रे सुन्दरनेत्रे, त्वम् एतस्य काशिनृपतेर्लक्ष्मीं कायकान्तिमवेक्ष्य अक्ष्णोः सुखं जनय । एतदीयाक्षिलक्ष्मीमवेक्ष्येति वा । काशिका इत्यादिप्रयोगदर्शनाङ्ख्योऽपि काशिशब्दः ॥ ११३ ॥

एतस्य सावनिभुजः कुलराजधानी
काशी भवोत्तरणधर्मतरिः स्मरारेः ।
यामागता दुरितपूरितचेतसोऽपि
पापं निरस्य चिरजं विरजीभवन्ति॥११४॥

एतस्येति ॥ हे भैमि, या काशी स्मरारेर्हरस्य भवोत्तरणेऽस्य संसारसमुद्रस्य तरणे मूल्यानपेक्षत्वाद्धर्मतरिः, सा एतस्यावनिभुजो राज्ञः कुलराजधानी वंशपरम्परानिवासस्थानम् । संसारोत्तारणत्वमेवाह—यां काशीमागताः प्राप्ताः दुरितपूरितचेतसोऽप्यतिपापिनोऽपि चिरजं चिरकालसंचितं पापं निरस्य विरजीभवन्ति विगतरजस्का भवन्ति विगतरजोगुणाः सत्त्वप्रधानाः भवन्ति । मोक्षं लभन्त इत्यर्थः । धर्मतरीत्यनेन सर्वस्याप्यनिवारणं सूचितम् । अविरजसोऽपि विरजसो भवन्ति । 'अरुर्मनः—' इति च्विः । सलोपश्च ॥ ११४ ॥

आलोक्य भाविविधिकर्तृकलोकसृष्टि-
कष्टानि रोदिति पुरा कृपयैव रुद्रः ।
नामेच्छयेति मिषमात्रमधत्त यत्तां
संसारसागरतरीमसृजत्पुरीं सः॥ ११५॥

आलोक्येति ॥ रुद्रः भावीनि भविष्यन्ति विधिकर्तृकाया ब्रह्मकर्तृकाया लोकसृष्टेः कष्टानि दुःखान्यालोक्य विचार्य पुरा कृपयैव रोदिति अरोदीत् । ब्रह्मललाटादुत्पन्नो रुदन् ब्रह्मणा किमिति रोदिषीति पृष्टः सन् नामेच्छया रोदिमीत्युक्तेन ब्रह्मणा कृतं नामेति । नामेच्छया मिषमात्रमधत्त । वस्तुतस्तु लोकानां दुःखं दृष्ट्वाऽरुदत्, नतु रुद्रनामेच्छयेत्यर्थः । यत् यतः स रुद्रः तां पुरीं संसारसागरतरीं संसारसमुद्रतारणनौकां मोक्षदायिनीमसृजत् । काशीमागतस्य संसारदुःखानि पराभवं कर्तुं न शक्नुवन्ति । मोक्ष एव भवतीति भावः । पुरा रोदिति, 'पुरि लुङ् चास्मे ३।२।१२२' इति लट् ॥ ११५ ॥

---

१ अत्रानुप्रासः । पिबन्निवेत्युपमा । २ अत्रानुप्रासो विशेषणानां साकूतत्वात्परिकरश्च ।

१ अनुप्रासः । खञ्जनमञ्जुनेत्रे इत्युपमा । २ अनुप्रासः, काश्यास्तरित्वेन रूपणाद्रूपकम्, तत्ररूपणेऽनुरूपविशेषणोपन्यासात्परार्द्धे परिकरश्च । ३ अत्रानुप्रासः । पुर्यास्तरित्वेव रूपणाद्रूपकम् । मिषमात्रमधत्त, वस्तुतस्तु लोकानां दुःखान्यवलोक्यैवेत्यपह्नुतिः ।

वाराणसीं निविशते न वसुंधरायां
तत्र स्थितिर्मखभुजां भुवने निवासः ।
तत्तीर्थमुक्तवपुषामत एव मुक्तिः
स्वर्गात्परं पदमुदेतु मुदे तु कीदृक् ११६

वाराणसीति ॥ हे भैमि, वाराणसी वसुंधरायां न निविशते न विद्यते । तत्र मखभुजां देवानां या स्थितिः सा भुवने स्वर्गलक्षणे निवासः । तत्र या स्थितिः लोकानां सा देवानां भुवने स्वर्गे निवास इति वा । स्वर्ग एव काशी न तु भूमिरित्यर्थः । अत एव काश्याः स्वर्गरूपत्वादेव हेतोस्तस्मिन्काशीलक्षणे तीर्थे तत्संबन्धिनि मणिकर्णिकादौ तीर्थे मुक्तवपुषां त्यक्तकलेवराणां नृणां मुक्तिः मोक्षो भवति । यदि काशी तीर्थमात्रमेव स्यात्, तर्हि तत्र त्यक्तशरीराणां नृणां स्वर्गलक्षणमेव फलं भवेन्न तु मुक्तिः मुक्तिस्तावद्भवतीति पुराणप्रामाण्यादवसीयते । अन्यथा स्वर्गात्परमधिकं मुदे मुक्तिव्यतिरिक्तहर्षार्थं कीदृक् तु पुनः पदं स्थानं, कीदृग्वा हेतुः उदेतु उत्पद्यताम् । अपि तु मुक्तिव्यतिरिक्तमन्यन्नास्तीत्यर्थः । भूलोके तीर्थादौ मृतानां सुखाय स्वर्गाप्तिः फलम् । इयमपि अन्यभूतीर्थतुल्या चेद्भवेत् तर्हि अत्रापि मृतानां स्वर्ग एव न तु मुक्तिः । मुक्तिस्तावद्भवति । तस्मात्स्वर्गरूपैवेयम् । स्वर्गेऽपि त्यक्तदेहानां तदधिकं मुक्तिलक्षणं फलं युक्तमिति भावः । एतन्महिमा काशीखण्डादौ पुराणे ज्ञातव्यः ॥ ११६ ॥

सायुज्यमृच्छति भवस्य भवाब्धियाद-
स्तां पत्युरेत्य नगरीं नगराजपुत्र्याः ।
भूताभिधानपटुमद्यतनीमवाप्य
भीमोद्भवे भवतिभावमिवास्तिधातुः ११७

सायुज्यमिति ॥ हे भीमोद्भवे भैमि, भवाब्धिः संसारसमुद्रस्तस्य यादो जन्तुः नगराजपुत्र्याः पार्वत्याः पत्युः भवस्य सायुज्यं ऐक्यमिच्छति प्राप्नोति । किं कृत्वा—तां नगरीमेत्य प्राप्य । सह युनक्तीति सयुक् तस्य भावः सायुज्यम् । किंभूताम्—भूतस्य सत्यस्य तारकब्रह्मण अभिधाने उपदेशे समर्थाम् । कः कमिव—अस्तिधातुः 'अस भुवि' इति धातुः भूताभिधानपटुमतीतकालार्थाभिधानसमर्थामद्यतनीं लुङ्विभक्तिं प्राप्य भवतिभावमिव । 'अस्तेर्भूः' इत्यनुशासनाद् भूधातुत्वं यथा प्राप्नोति । अद्यतनीति लुङ्विभक्तेः कौमाराणां संज्ञा। देहान्ते देवः परं तारकं ब्रह्मोपदिशतीति भवाब्धियादसश्च भवसायुज्यं युक्तम् ॥ ११७ ॥

निर्विश्य निर्विरति काशिनिवासि भोगा-
न्निर्माय नर्म च मिथो मिथुनं यथेच्छम् ।
गौरीगिरीशघटनाधिकमेकभावं
शर्मोर्मिकञ्चुकितमश्नुते पञ्चतायाम् ११८

निर्विश्येति ॥ काश्यां निश्चयेन वसतीत्येवंशीलं काशिनिवासि मिथुनं स्त्रीपुंसयुग्मं कर्तृ मिथो रहसि परस्परं निर्विरति वैराग्यरहितं सानुरागं यथा तथा यथेच्छं यावदभिलाषं भोगान्स्रक्चन्दनादीन्निर्विश्यानुभूय । तथा—मिथः यथेच्छं नर्म वचनविहारादिक्रीडां च यावज्जीवं निर्माय विधाय पञ्चतायां देहान्तसमये अर्धकायसंयोजनरूपाद्गौरीगिरीशयोर्घटनादप्यधिकं शर्मोर्मिकञ्चुकितं शर्मणां सुखानामूर्मयस्तरङ्गास्त इवोपलक्षणेनोत्तरोत्तरं सम्पत्तयस्तैः कञ्चुकितं तदभिन्नकञ्चुकं धृतवदिति—सुखपरम्परासंवलितमेकभावं तादात्म्यमश्नुते प्राप्नोति । 'शर्म्मशातसुखानि च' इत्यमरः । शिवयोर्हि संयोगे शरीरद्वैतं स्फुरति, काशिवासिमिथुनस्य शिवतादात्म्यात्तदपि नास्तीत्याधिक्यम् । स्वर्गादिसुखपरित्यागं ध्यानादियोगं च विना काशिनिवासमात्रेण परमानन्दरूपब्रह्मसायुज्यं भवति । तस्मात् सर्वाभिलाषसिद्ध्यर्थमेनं वृणीष्वेति भावः । काशीति 'काश्यादिभ्यष्ठञ्ञिठौ ४।२।११६' इति काश्यादिगणे ह्रस्वेकारान्तकाशिशब्दपाठाद् यथोक्तं साधु ॥ ११८ ॥

न श्रद्दधासि यदि तन्मम मौनमस्तु
कथ्या निजाप्ततमयैव तवानुभूत्या ।
न स्यात्कनीयसितरा यदि नाम काश्या
राजन्वती मुदिरमण्डनधन्वना भूः॥ ११९॥

नेति ॥ हे भैमि,यदि काश्याः स्वर्गापेक्षयाऽधिकवर्णनेन मद्वचने न श्रद्दधासि न विश्वसिषि तर्हि मम मौनमस्तु । तर्हि तव मौनित्वे काशीमहिमानं का कथयिष्यतीत्यत आह—मुदिराणां मेघानां मण्डने

२ अत्रानुप्रासो यमकं च शब्दालङ्कारौ । अत एवेति हेतुहेतुमद्भावेनोक्तेः काव्यलिङ्गमर्थालङ्कारः ।

१ अत्र भवेत्याद्यनुप्रासो नगेति यमकं च । इवेत्युपमा ।
२ अत्रानुप्रासः । यथेच्छं मिथो नर्मनिर्म्माणायोगाद्गौरीगिरीशघटनाया न्यूनत्वमिति हेतुहेतुमतोरेकार्थघटकत्वात् काव्यलिङ्गम् ।

धन्नुः यस्य तेनेन्द्रेण राजन्वती सौराज्यवती भूः अमरावती काश्याः सकाशाद्यदि नाम चेत्कनीयसितरा अल्पीयसितरा हीनतरा न स्यान्न भवेत्तर्हि तव निजया आत्मीयया आंततमयाऽतितरां हितया अनुभूत्याऽनुभवेनैव कथ्या कथनीया । काशीतः स्वर्गभूमिरतिहीनेत्यस्मिन्नर्थे तवानुभव एव प्रमाणमित्यर्थः । एतद्वरणेन काशीमनुभूय काश्यमरावत्योर्विशेषं ज्ञास्यसि । तस्मादेनं वृणीष्वेति भावः । अतिशयेन अल्पा कनीयसी इति ईयसुनि 'युवाल्पयोः कनन्यतरस्याम् ५।३।६४' इति कनादेशेऽतितरां कनीयसी कनीयसितरा इति 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६।३।४३' इति ह्रस्वः । काश्याः, 'पञ्चमी विभक्ते २।३।४२' इति पञ्चमी ॥ ११९ ॥

**ज्ञानाधिकाऽसि सुकृतान्यधिकाशि कुर्याः**
**कार्यं किमन्यकथनैरपि यत्र मृत्योः ।**
**एकं जनाय सतताभयदानमन्य-**
**द्धन्ये वहत्यमृतसत्रमवारितार्थि ॥ १२० ॥**

ज्ञानेति ॥ हे धन्ये, त्वं ज्ञानेनाधिका उत्कृष्टासि ईदृशी काचिद्विदुषी नास्ति तस्मात्त्वम् अधिकाशि काश्यां सुकृतानि पतिपरिचर्यादीनि पुण्यानि कुर्याः । अन्यकथनैरपि 'एवंविधा एवंविधा काशी' इति प्रत्येकं काशीमाहात्म्यकथनेन किं कार्यं किं प्रयोजनम् । काशीमाहात्म्यकथनेऽन्यमाहात्म्यकारणकथनैः किमपि प्रयोजनं नास्तीत्यर्थः । अन्यस्य वस्तुनः कथनैरिति वा । यत्र काश्यां मृत्योः सकाशाज्जनाय सततं सर्वदा अभयदानम् एकममृतसत्रं मोक्षरूपं सत्रं वहति वर्तते । न वारिता अर्थिनो (जल)याचका यत्र एवंभूतमन्यद्द्वितीयममृतसत्रमुदकसत्रं भागीरथीरूपं वहति वर्तते । यत्र स्थित्वा यत्रत्यं गङ्गोदकं पीत्वा च मृत्योरपि भयं जनस्य नास्तीति । अन्यत्र मृत्योर्भयं भवति, अत्र तु मरणानन्तरं शिवसाम्यप्राप्तिनिश्चयात् 'कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्' इति वचनान्मृत्योरपेक्षितत्वाद्भयाभावः । वहतिरत्राकर्मा ॥ १२० ॥

**भूभर्तुरस्य रतिरेधि मृगाक्षि मूर्ता**
**सोऽयं तवास्तु कुसुमायुध एव मूर्तः ।**
**भातं च ताविव पुरा गिरिशं विराद्ध-**
**माराद्धुमाशु पुरि तत्र कृतावतारौ ॥ १२१ ॥**

भूभर्तुरिति ॥ हे मृगाक्षि, अस्य भूभर्तुः मूर्ता साक्षाद्रतिः कामप्रिया एधि भव । सोऽयं नृपस्तव मूर्तः शरीरधारी कुसुमायुध एवास्तु भवतु । त्वय्यस्य रतिवृद्धिर्भवतु, अस्मिंश्च तव कामवृद्धिर्भवत्वित्यर्थः । अथ च शरीरधारिणी प्रीतिरेव भव । अयं च तव मदनोदयकारित्वान्मूर्तोऽनुराग एव भवतु । परस्परस्मिन्नतितरामनुरक्तौ भवेतामित्यर्थः । युवां ताविव रतिकामाविव भातं शोभेतम् । किंभूतौ युवाम्— पूर्वं विराद्धं प्रकोपितं गिरिशमाशु आराद्धुं तदीयं क्रोधं परिचर्यया शीघ्रमपनेतुं तत्र तस्यां पुरि काश्यां कृतावतारौ कृतनिवासौ । अतिसुन्दरौ युवां दृष्ट्वा काशीस्थो लोक एवमेव संभावयत्वित्यर्थः । अवतीर्यतेऽनेनेत्यवतारो देहः । कृतो धृतो देहो याभ्यामिति वा । 'अवे तॄस्त्रोर्घञ् ३।३।१२०' इति करणे घञ् । एवमन्यत्रापि ज्ञेयम् ॥ १२१ ॥

**कामानुशासनशते सुतरामधीती**
**सोऽयं रहो नखपदैर्महतु स्तनौ ते ।**
**रुष्टाद्रिजाचरणकुङ्कुमपङ्कराग-**
**संकीर्णशंकरशशाङ्ककलाऽङ्ककारैः १२२**

कामेति ॥ हे भैमि, कामानुशासनस्य वात्स्यायनादिशास्त्रस्य शते सुतरामधीतमध्ययनमस्यास्तीत्यधीती सोऽयं राजा रहः नखपदैस्ते स्तनौ महतु पूजयतु । कीदृशैः—रुष्टायाः क्रुद्धाया अद्रिजायाश्चरणयोः कुङ्कुमपङ्करागः कुङ्कुमलौहितिमा तेन संकीर्णाया मिश्रितायाश्चरणपतितस्य शंकरस्य चरणाघातवशेन कुंकुमसंबन्धाल्लोहितायाः शशाङ्ककलायाश्चन्द्रकलाया अङ्ककारैः प्रतिमल्लैः । अङ्कं द्वन्द्वयुद्धं कुर्वन्तीत्यङ्ककाराः । वक्रत्वादारक्तत्वाच्च तत्सदृशैः । एनं वृणीष्वेति भावः । 'कलाङ्कुरामैः' इति वा पाठः । अधीतमनेनेत्यधीती, 'इष्टादिभ्यश्च ५।२।८८' इतीनिः । तद्योगे शासनशते इत्यत्र 'क्तस्येन्विषयस्य कर्मण्यपि (वा.)' इति सप्तमी ॥ १२२ ॥

---

१ अनुप्रासः । भुदिरमण्डनधन्वत्वामिन्नराजन्वतीत्वेन स्वर्भूमेर्वर्णनेनेन्द्रस्याडम्बरमात्रत्वं सूचितम् । अत एव कनीयसितरत्वमिति बोध्यम् । २ अत्रानुप्रासः परिकरश्च ।

१ अत्रानुप्रासः । मूर्ता रतिस्त्वमिति रूपकम्, तेन च रतेरमूर्तत्वात्तत्पदार्थस्य च मूर्तत्वात्ततोऽपि त्वमभ्यधिकेति व्यतिरेको व्यज्यते । २ अनुप्रासः ।

पृथ्वीश एष नुदतु त्वदनङ्गताप-
मालिङ्ग्य कीर्तिचयचामरचारुचापः ।
सङ्ग्रामसङ्गतविरोधिशिरोधिदण्ड-
खण्डिक्षुरप्रशरसम्प्रसरत्प्रतापः॥ १२३॥

पृथ्वीश इति ॥ एष पृथ्वीशस्त्वामालिङ्ग्य त्वदनङ्गतापं त्वदीयं मदनज्वरं त्वद्विषयं स्वीयं वा, त्वदिति पृथक्कृत्य त्वद्धेतुकमिति वा, नुदतु हरतु । किंभूतः— कीर्तेश्चापसमुत्पन्नत्वात्कीर्तिचयचामरेण कीर्तिसमूहरूपचामरेण चारु चापं यस्य सः । तथा—सङ्ग्रामे सङ्गता मिलिता विरोधिनो वैरिणस्तेषां शिरोधिदण्डाः कन्धरा एव दण्डास्तान् खण्डयन्त्येवंशीलाः क्षुरप्राख्याः शरास्तैः तेभ्यो वा सम्यक्प्रसरन्नितितरां विवृद्धः प्रतापो यस्य । 'वीरानुरागिण्यो हि योषितः' इति न्यायात् । अतियशस्विनः प्रतापवतश्चास्य लाभेन तव मदनज्वरः शाम्यत्वित्यर्थः । अथ च विरुद्धप्रतापालिङ्गनेन तापशान्तिराश्चर्यकारिणी । अतिधनुर्धरस्य चापे चामरं भवति । 'शिरोधिः कंधरेत्यपि' इत्यमरः ॥ १२३ ॥

वक्षस्त्वदुग्रविरहादपि नास्य दीर्णं
वज्रायते पतनकुण्ठितशत्रुशस्त्रम् ।
तत्कन्दकन्दलतया भुजयोर्न तेजो
वह्निर्नमत्यरिवधूनयनाम्बुनाऽपि १२४॥

वक्ष इति ॥ तव उग्रो दुःसहो विरहो वियोगानलस्तस्मादपि न दीर्णम् अस्य वक्षः वज्रायते वज्रवदाचरति अविदीर्णत्वाद्वज्रवदतिकठिनं भवति । यतः— पतनेन कुण्ठितानि भग्नानि शत्रुशस्त्राणि यस्मिन् । कुलिशमपि वह्निसंबन्धाद्विदीर्णं न भवति । पतनकुण्ठितशत्रुशस्त्रं च भवति । अस्मादेतद्वक्षो वज्रतुल्यम् । अथ च हीरकवदाचरति । हीरकोऽपि वह्निसंबन्धान्न स्फुटतीति प्रसिद्धिः । शस्त्राणि च कुण्ठयति । 'पृथिव्यां यानि रत्नानि ये चान्ये लोहजातयः । तानि वज्रेण लिख्यन्ते वज्रं नान्येन लिख्यते ' इत्यादि ज्ञातव्यम् । सामुद्रिकलक्षणयुक्तमेतद्वक्ष इत्यर्थः । अत एव एतस्य भुजयोस्तद्वक्षोलक्षणो यः कन्दो मूलं तस्य कन्दलौ नवाङ्कुरौ तयोर्भावस्तत्ता तया वज्रीभूतवक्षःस्थलमूलप्रकाण्डतया हेतुना भुजसमुत्पन्नस्तेजोवह्निः प्रतापरूपोऽग्निः अरिवधूनां नयनाम्बुना नेत्रबाष्पेणापि न नमाति न शाम्यति । विद्युद्वह्नेरम्बुना शान्त्यभावात्कारणगुणानां च कार्ये समवायात् विद्युद्रूपवक्षःस्थललक्षणस्य भुजकारणस्य गुणोऽद्भिः शान्त्यभावलक्षणः तत्कार्यभूते प्रतापाग्नावपि वर्तते । यतः स वैरिवनिताश्रुणापि न शाम्यतीति युक्तं वक्षसो वज्रत्वम् । अतिकठिनवक्षःप्रभवबाहुसमुत्पन्नोऽत्युद्भटो यस्य प्रतापो वैरिणो हत्वापि न शाम्यति । वैरिविषये निष्कृपोऽयमिति भावः । त्वदुग्रविरहविदारिहृदयावस्थमेनमनुगृहाणेति भावः । 'कन्दलं तु कपाले स्यादुपरागे नवाङ्कुरे' इति विश्वः ॥१२४॥

किं न द्रुमा जगति जाग्रति लक्षसङ्ख्या-
स्तुल्योपनीतपिककाकफलोपभोगाः ।
स्तुत्यस्तु कल्पविटपी फलसम्प्रदानं
कुर्वन्स एष विबुधानमृतैकवृत्तीन् १२५

किमिति ॥ तुल्यः समान उपनीतो दत्तः पिकानां कोकिलानां काकानां फलैः कृत्वा उपभोगो जीवनवृत्तिर्यैरेवंविधा आम्रादयो लक्षसंख्या द्रुमाः जगति भुवनमध्ये किं न जाग्रति न विद्यन्ते ? अपितु विद्यन्त एव,परं वर्णनीया न भवन्तीत्यर्थः । तु पुनः अमृतैकवृत्तीन्सुधैकजीविनो विबुधान्देवान्फलसम्प्रदानं स्वीयफलानां दानपात्रं कुर्वन्स एष कल्पविटपी स्तुत्यः स्तोतुमर्हः । अतिप्रसिद्धत्वेन कल्पवृक्षः पुरः स्थित इव एष इत्यभिनयनिर्दिष्टः । उत्तमजातीयानामुत्तमफलवृत्तीनां पिकानां हीनजातीयानां कदर्यवृत्तीनां काकानां च तुल्यदानात्साम्यापादनादतिमूर्खत्वादाम्रादयो न स्तुत्याः । कल्पवृक्षस्तु रसाधिकामृतजीवनेभ्यो देवेभ्य एव स्वफलानि ददानो विशेषज्ञत्वात्स्तोतुमर्ह इत्यर्थः । अथ च—पण्डितेषु मूर्खेषु च तुल्यदानास्तारतम्याज्ञानादचेतनद्रुमतुल्या बहवो राजानः कति न सन्ति, परं यशैकवृत्तीनयाचितवृत्तीन्वा मोक्षैकवृत्तीन्मुमुक्षून्वान्नादिदानपात्रं कुर्वन्नतिवितरणशीलत्वात्कल्पवृक्षतुल्यः काशीश्वर एव विशेषज्ञः स्तोतव्य इति भङ्ग्याभिहितम् । सर्वनृपेभ्योऽधिकः सर्वेभ्यो दाता पण्डितश्चायं तस्मादेनं वृणीष्वेति भावः । 'द्वे याचिताया चितयोर्यथासंख्यं मृतामृते'. 'अमृतं यज्ञशेषे स्यात्' इत्यमरः ॥ १२५ ॥

१ अत्रानुप्रासः । कीर्तिचयस्य चामरत्वेन रूपणाद्रूपकम् । शिरोधिदण्डेत्यत्रापि रूपकम् ।

१ अत्रानुप्रासो यमकं च । अम्बुनाऽपीति विरोधाभासः ।
२ अत्राप्रकृतसुरतरुप्रशंसनापेक्षया प्रकृतनृपतिप्रशंसनप्रतीतेरप्रस्तुतप्रशंसा ।

अस्मै करं प्रवितरन्तु नृपा न कस्मा-
दस्यैव तत्र यदभूत्प्रतिभूः कृपाणः ।
दैवाद्यदा प्रवितरन्ति न ते तदैव
नेदंकृपा निजकृपाणकरग्रहाय ॥१२६॥

अस्मा इति ॥ सर्वे नृपाय करं बलिं कस्मात्कथं न प्रवितरन्तु प्रयच्छन्तु । अथ च-दासभूतत्वात्स्वामिनेऽस्मै हस्तं कथं न वितरन्तु।दासेन हि स्वामिने हस्तो दीयते। यद्यस्मात् तत्र द्विविधेऽपि करदाने कृपाणः खड्गः अस्यैव प्रतिभूरभूत् । ते राजानो दैवाद्विनाशकाले विपरीतदैववशाद्यदा न द्विविधमपि करं प्रवितरन्ति ददति तदा निजस्य कृपाणस्य करेण हस्तेन ग्रहाय धारणाय इदंकृपा अस्य कृपा नैव भवति तदा क्रुद्धः सन् खड्गतोलनेन तान्निहत्य बलात्करं गृह्णात्येव । तदैवेत्यविलम्बार्थ एवकारो वा । हस्ते गृहीतखड्गमेनं दृष्ट्वा भीताः सन्तस्ते बलिमस्मै प्रयच्छन्ति । अथ च—दासा भूत्वा हस्तदानं प्रयच्छन्ति ।-उभयविधकरदाने तव खड्गस्य प्रतिभूत्वात्ते चेन्न प्रयच्छन्ति तर्हि त्वत्त एवोभयविधं करं गृह्णामीत्युक्त्वा बलात्करं गृह्णातीति भावः । लोके ऋणी चेन्न प्रयच्छति तदा बलात्कारेण लग्नक एव गृह्यते । अस्य कृपा इति षष्ठीसमासः ॥ १२६ ॥

एतद्बलैः क्षणिकतामपि भूखुराग्र-
स्पर्शायुषां रयरसादसमापयद्भिः ।
दृक्पेयकेवलनभःक्रमणप्रवाहै-
र्वाहैरलुप्यत सहस्रदृगर्वगर्वः ॥ १२७ ॥

एतदिति ॥ एतद्बलैरेतस्य सैन्यभूतैर्वाहैरश्वैः सहस्रदृगिन्द्रः तस्य अर्वाश्व उच्चैःश्रवास्तस्य गर्वः खुराग्रैर्भूमिं न स्पृशामि, गगने चरामि, वेगवांश्च मादृशोऽन्यो न विद्यत इत्येवंरूपः अलुप्यत लुप्तो विनाशितः । किम्भूतैर्वाहैः—भुवः खुराग्रैः कृत्वा यः स्पर्शस्तद्रूपाणि यान्यायूंषि स्थितयस्तेषां क्षणिकतामपि क्षणमात्रं या स्थापिता तामपि रयरसाद्वेगाभिनिवेशादसमापयद्भिः । क्षणमात्रमपि खुराग्रैर्भूमिमस्पृशद्भिरित्यर्थः । तथा—दृग्भिः नेत्रैः पेयाः सादरमवलोकनीयाः केवलं नभःक्रमणप्रवाहाः गगनगमनपरम्परा येषाम् । वेगवशादलक्ष्यभूगमनैः । केवलं नभसि क्रमणं येषां तेषां वायूनां प्रवाहाः सङ्घाः । दृक्पेया दृश्याश्च ते वायुसङ्घाश्च तद्रूपैरिति वा । वायोः सवेगत्वेऽप्यचाक्षुषत्वादेतेषां तत्तुल्यवेगत्वेऽपि चाक्षुषत्वाच्चाक्षुषवायुरूपैः वायोरप्यधिकैरेवंविधैर्वा । 'सहस्ररुगर्वगर्वः' इति पाठे सूर्याश्वानामित्यर्थः ॥ १२७ ॥

तद्वर्णनासमय एव समेतलोक-
शोभाऽवलोकनपरा तमसौ निरासे ।
मानी तया गुणविदा यदनादृतोऽसौ
तद्भूभृतां सदसि दुर्यशसैव मम्लौ ॥ १२८ ॥

तद्वर्णनेति ॥ तस्य काशीश्वरस्य वर्णनासमय एव समेताः समागता लोका नूतनराजलोकास्तेषां शोभा तस्या अवलोकनपरा असौ भैमी तं काशीश्वरं निरासे निराचकार । अन्यावलोकनेनैव निराकरणं जातमित्यर्थः । तया गुणविदातिविदुष्या भूभृतां सदसि राजसभायां यद्यस्मान्मानी अभिमानवान् असावनादृतोऽवशातः, तत्तस्मात् दुर्यशसेवाकीर्त्येव मम्लौ । लज्जावशात्कालिमानं प्राप्त इत्यर्थः । गुणिना हि राजसमक्षं कृताऽवज्ञाभिमानिनो दुर्यशसे भवति, न तु मुर्खेण कृता । निरासे, 'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्' इति तङ् । 'परासे' इति क्वचित्पाठः ॥ १२८ ॥

सानन्तानाप्य तेजःसखनिखिलमरुत्पार्थिवान्दिष्टभाजा श्चित्तेनाशाजुषस्तान्सममसमगुणन्मुञ्चती गूढभावा ।पारेवाग्वर्तिरूपं पुरुषमनुचिदम्भोधिमेकं शुभाङ्गी—निःसीमानन्दमासीदुपनिषदुपमा तत्परीभूय भूयः १२९

सेति ॥ सा भैमी एवंभूतं नललक्षणं पुरुषमनुलक्ष्यीकृत्य भूयोऽतिशयेन बहु अत्यर्थं तत्परीभूय नल एव तात्पर्यं यस्या एवंविधा भूत्वा उपनिषदो रहस्यभूतायाः श्रुतेरुपमा यस्या एवंविधा उपनिषत्तुल्या आसीत् ।किम्भूता सा—तेजसः सखायस्तेजःसखाः तेजस्विनो निखिलाः सकला मरुतश्च देवाः पार्थिवाश्च राजानस्तानाप्य प्राप्य एतत्समीपं गत्वा समं युगपत्यजन्ती । यतो—गूढभावा गूढाशया नलविषयमनुरागं गोपायन्ती । किंभूतांस्तान्—अनन्ताननवधीन्गणयितुमशक्यान् । तथा—दिष्टभाजः स्वयंवरकाले समागतान्दैवभाजो बहुसंपदो वा । तथा—चित्तेन चेतसा आशाजुषो भैमीप्राप्त्यभि-

१ अत्रानुप्रासः, कृपेति यमकं च । करमिति श्लेषः ।

१ अत्राप्यनुप्रासः, गर्वेति यमकं च । २ अत्राप्यनुप्रासः, दुर्यशसेवेत्युत्प्रेक्षा ।

लापिणः स्वस्मिन्नभिलाषिणः । तथा—असमगुणानतुल्यसौन्दर्यादिगुणान्परस्माद्गुणैरधिकान् । पुनः किम्भूता सा—शुभाङ्गी सुन्दरी । किंभूतं पुरुषम्—पारेवाग्वर्तिरूपम् वाचः पारे परतीरे वर्तमानशीलं वागगोचरो वर्णयितुमशक्यं सौन्दर्यं यस्य । अतिसुन्दरम् । तथा —चिदम्भोधिं ज्ञानसमुद्रं सकलशास्त्रपारगम् । तथा —निःसीमानन्दमपरिमितानन्दं, सदोत्साहशक्तियुक्तं, भैमीप्राप्तिनिश्चयाद्वा निःसीमानन्दम् । एकं मुख्यम् । निःसीमानन्दं यथा तथा तत्परीभूयेति वा । समं प्राप्येति वा । सममाप्ताजुष इति वा । मया राज्यलक्ष्म्या सह वर्तमानमिति पुरुषविशेषणं वा । उपनिपदपि—अनन्तेनाकाशेन सहितान्सानन्तान् । तथा—दिष्टभाजः कालसहितान्, चित्तेन मानसा समं सार्धमाप्ताजुषो दिग्भाजो दिङ्मनोयुक्तान्, असमगुणानतुल्यसंख्यरूपरसगन्धादिगुणयुक्तान् । तथा—वैशेषिकादिप्रक्रियासिद्धा आप्या उदकजन्याः पदार्थाः, तेजः तैजसपदार्थाश्च, आप्यतेजसां सखाय आप्यतेजःसखाः आप्यतैजसपदार्थसहिता निखिलाः सकला ये मरुतो वायवः पृथिवीसंबन्धिनः पार्थिवाश्च पदार्थास्तान् । यद्वा अनन्तान्विनाशरहितान् आप्यतेजांसि च खेनाकाशेन सहिताश्च ते निखिलमरुत्पार्थिवाश्च तान् । पृथिव्यप्तेजोवाय्वाकाशकालदिङ्मनोलक्षणानष्टौ पदार्थान्युगपदद्वैतप्रतिपादनेन निराकुर्वती । अविद्यमानोऽन्तो विनाशो येषां तेऽनन्ता नित्याः सामान्यविशेषसमवायास्तैः सहितानाप्यादीनष्टौ पदार्थान् । तथा—न सममसमं पञ्चसंख्यायोगित्वाद्विषमसंख्यं कर्म च गुणाश्च रूपादयस्तांश्च षडपि पदार्थान् हेयत्वेन प्रतिपादयन्ती वा । तथा—गूढभावा अतिगहनत्वाद्दुर्ज्ञेयाभिप्राया । गूढस्तिरस्कृतो भावः सत्ता यया कस्यापि वस्तुनः सत्त्वमनङ्गीकुर्वतीति वा । गूढो रक्षितः ब्रह्मणः सत्तालक्षणो भावो ययेति वा । तथा—शुभाङ्गी व्यकरणादिषडङ्गयुक्ता । उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गयुक्ता वा । यमनियमाद्यङ्गोपेता वा । 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिप्रामाण्याद्वागगोचरस्वरूपम् । तथा—चितो ज्ञानस्य समुद्रम् । चिच्चासावम्भोधिश्चेति वा । निःसीमश्चासावानन्दश्च एवंभूतं परमानन्दसात्मलक्षणनवमद्रव्यपदार्थरूपम् । 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतिप्रामाण्याददद्वितीयम् एकं ब्रह्मरूपं परमपुरुषमुद्दिश्य अत्यर्थं तत्रैव परब्रह्मस्वरूपपरमपुरुषे तात्पर्यं यस्या एवंभूता भवति। 'अनन्तं सुरवर्त्म खम्' इत्यमरः । आप एव आप्यमिति चातुर्वर्ण्यादित्वात्ष्यञ् । शुभाङ्गी, 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीष् । उपनिषत्पक्षे शुभाङ्गीव शुभाङ्गी ॥ १२९ ॥

**श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं—श्रीहिरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । शृङ्गारामृतशीतगावयमगादेकादशस्तन्महा—काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः १३०॥**

श्रीहर्षमिति ॥ शृङ्गारलक्षणस्यामृतस्य शीतगौ चन्द्ररूपे । शीतगौ भाषितपुंस्कम् ॥ १३० ॥

इति श्रीवेदरकरोपनामकश्रीमन्नृसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे एकादशः सर्गः ॥

## द्वादशः सर्गः ।

इदानीं नूतनसमागतराजवर्णनार्थं द्वादशं सर्गमारभते—

**प्रियाह्रियाऽऽलम्ब्य विलम्बमाविला
विलासिनः कुण्डिनमण्डनायितम् ।
समाजमाजग्मुरथो रथोत्तमा
तमा समुद्रादपरेऽपरे नृपाः ॥ १ ॥**

प्रियेति ॥ अथो अनन्तरं अपरे अपरे अन्ये अन्ये नृपाः आ समुद्रात्समुद्रमवधीकृत्य । दिगन्तेभ्यः सकाशादित्यर्थः । कुण्डिनस्य मण्डनायितं भूषणवदाचरितम् अलंकारकं समाजं स्वयंवरसभामाजग्मुः । किंभूताः—प्रियाभ्यः स्वनायिकाभ्यः सकाशाद्या ह्रीः तया तासामनुरागजनितमुखदाक्षिण्येन कृत्वा विलम्बं स्थैर्यमालम्ब्य आविला व्याकुलान्तःकरणाः । प्रियामुखदाक्षिण्यानुरोधेनास्माकं विलम्बे जाते भैमीस्वयंवरो जातो मा भूदिति बुद्ध्या नातिसोत्साहाः । तथा—विलासिनः शृङ्गारभङ्गीसहिताः । तथा—रथोत्तमाः श्रेष्ठरथाः । इत्यनेन विलम्बे जातेऽपि शीघ्रागमनं सूचितम् । विलासिनः, 'वौ कप-

१ अत्र स्रग्धरा वृत्तम् । अनुप्रासः शब्दालङ्कारः, उपमेत्युपमाऽर्थालङ्कारः । २ अस्मिन् नैकं वृत्तम् । तत्र तावदष्टमपद्यावधि वंशस्थविलं वृत्तम्, 'जतौ तु वंशस्थविलं जरौ मतम् ।' इतितल्लक्षणात् ।

लसकत्थलम्भः । ३ । २ ।४२ ' इति घिनुण् । रयैरु-त्तमा इति समासः। अपरे अपरे,वीप्सायां द्विरुक्तिः॥१॥

ततः स भैम्या ववृते वृते नृपै-
विनिःश्वसद्भिः सदसि स्वयंवरः।
चिरागतैस्तर्कितताद्विरागितैः
स्फुरद्भिरामन्दमहार्णवैर्नवैः ॥ २ ॥

तत इति ॥ ततः सदसि समाजे स भैम्याः स्वयंवरो ववृते । किम्भूते सदसि—भैम्याः स्वस्मिन्वैराग्येण विनिश्वसद्भिर्विशेषेण मुक्तश्वासैः श्चिरागतैः पूर्वमायातैर्नृपैः वृते । तथा—तर्किता ऊहिता तेषु पूर्वागतेषु राजसु विरागिता । अर्थाद्भैम्याः । यैस्तैः, स्फुरद्भिः शृङ्गारभङ्ग्या प्रकाशमानैः । तथा—एते न वृताः स्वयंवरेऽपि प्राप्तानस्मानियं प्रायेण वरिष्यतीति बुद्ध्या आनन्दस्य महार्णवैरगाधसमुद्रैः प्रमुदिततरैर्नवैस्तत्कालागतैर्नृपैः वृते॥२॥

चलत्पदस्तत्पदयन्त्रणेङ्गित-
स्फुटाशयामासयति स्म राजके।
श्रमं गता यानगतावपीयमि-
त्युदीर्य धुर्यः कपटाज्जनीं जनः ॥ ३ ॥

चलदिति ॥ चलन्ति पदानि यस्य पुरस्ताद्गच्छन् धुरं वहति धुर्यः शिविकादण्डवाही जनः जनीं भैमीं राजके राजसङ्घमध्ये आसयति स्म आसापयत् । किं कृत्वा—यानगतौ अपि शिविकारोहणेनापि गमने सत्यपि इयं भैमी श्रमं गता निःसहा जातेति कपटाद्व्याजादुदीर्य उक्त्वा । किंभूताम्—शिविकापटान्तारितेन तत्पदेन भैमीचरणेन यत् यन्त्रणं यन्त्रणा वा पीडनं धुर्यजनस्य तदेव यद् इङ्गितमवस्थापनसूचिका चेष्टा तेन स्फुट आशयो नवनृपदिदृक्षामात्रविषयोऽभिप्रायो यस्यास्ताम् । जनी जायतेऽस्यां गर्भ इति, 'जनिघसिभ्यां च' इति इण्प्रत्यये 'जनिवध्योश्च ७ । ३ ।३५।' इति वृद्धिनिषेधे 'कृदिकारादक्तिनः' इति ( वा. ) ङीप् ॥ ३ ॥

नृपानुपक्रम्य विभूषितासनान्
सनातनी सा सुषुवे सरस्वतीः।
विहारमारभ्य सरस्वतीः सुधा-
सरःस्वतीवार्द्रतनूरनूत्थिताः ॥ ४ ॥

नृपानिति ॥ सा सनातनी नित्या सरस्वती देवता विभूषितं स्वीयसौन्दर्येणालंकृतमासनं यैस्तान्नृपानुपक्रम्य उद्दिश्य सरस्वतीः वाचः सुषुवे । उवाचेत्यर्थः । किंभूता वाचः—सुधासरःसु अमृतसमुद्रेषु विहारं जलक्रीडामारभ्य कृत्वा अतीवातितरामार्द्रतनूः । तथा—अनु पश्चादविलम्ब्यैवोत्थिताः तस्मान्निर्गताः । अतिमधुरा इत्यर्थः । सनातनी, अव्ययत्वाट्ट्युस्तुट् च ॥ ४ ॥

वृणीष्व वर्णेन सुवर्णकेतकी-
प्रसूनवर्णाहृतपर्णमादृतम्।
निजामयोध्यामपि पावनीमयं
भवन्मयो ध्यायति नावनीपतिः ॥ ५ ॥

वृणीष्वेति ॥ गौरत्वलक्षणेन वर्णेन सुवर्णकेतकीप्रसूनस्य गौरत्वलक्षणाद्वर्णादादृतं प्रेमास्पदीकृतं तस्मादधिकं वा अतिगौरं सुकुमारशरीरमृतुपर्णनामानं नृपं त्वं वृणीष्व । अयम् अवनीपतिः भवन्मयस्त्वदेकचित्तः सन् निजामात्मीयां परम्परायातां पावनीं पवित्रीकरणशीलामयोध्यां मुक्तिपुरीमपि न ध्यायति न स्मरति । परमानन्दरूपत्वान्मुक्तेः सकाशादपि तव प्राप्तिरेतस्याधिकेत्यर्थः। अन्योऽपि विलासी गुणवतीमपि निजां प्रियामाचिन्तयन्नन्यामेव ध्यायतीत्युक्तिः । त्वय्यतितरामनुरक्तोऽयमेनं वृणीष्वेति भावः । वर्णात्, 'पञ्चमी विभक्ते २।३।४२' इति पञ्चमी । भवन्मयः, 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्भावः ॥ ५ ॥

न पीयतां नाम चकोरजिह्वया
कथं चिदेतन्मुखचन्द्रचन्द्रिका।
इमां किमाचामयसे न चक्षुषी
चिरं चकोरस्य भवन्मुखस्पृशी ॥ ६ ॥

नेति ॥ हे भैमि, चकोरजिह्वया एतस्य ऋतुपर्णस्य मुखमेव चन्द्रस्तस्य चन्द्रिका प्रसन्नतारूपा ज्योत्स्ना कथंचित्केनापि प्रकारेण न पीयतां नाम । चकोरजिह्वया सत्यचन्द्रचन्द्रिका पीयते, इयं त्वलीकमुखचन्द्रिकेति

---

१ अत्रानुप्रासः । तमा इति पर इति च यमकं च । आविलत्वे विलासित्वासम्भवेऽपि तथोक्तेर्विरोधाभासः, अपेरभावाच्च व्यङ्ग्यः । २ अत्राप्यनुप्रासः, वृत इति यमकं च । विरागितत्वेऽपि स्फुरत्त्वाद्युक्तिर्विरुद्धेवेति विरोधाभासोऽपेरप्रयोगेऽपि व्यज्यते ।

१ अत्राप्यनुप्रासः, सनेति यमकं च । सरस्वतीवेत्युपमा । २ अत्राप्यनुप्रासः, मयोध्येति यमकं च । पावनीत्वं ध्येयत्वे हेतुः तत्सत्त्वेऽपि ध्यानरूपकार्यानुक्तेर्विशेषोक्तिः ।

पीयतां मा वा । अत्रास्माकमौदासीन्यमित्यर्थः । परंतु चिरं भवन्मुखस्पृशी त्वदीयमुखसेवनतत्परे चकोरस्य चक्षुषी इमामेतन्मुखचन्द्रचन्द्रिकां किमिति नाचामयसे पाययसे अपि तु पाययस्व । अलीकत्वात्तादृग्रसाभावाच्चकोरजिह्वया पानेऽकृतेऽपि तथा सुन्दरत्वाद्वर्णनायामस्मदादीनामशक्तत्वेऽपि तादृगाह्लादकत्वस्य सौन्दर्यस्य च प्रत्यक्षेण द्रष्टुं शक्यत्वादेतन्मुखचन्द्रचन्द्रिकां चक्षुषी पाययस्वेत्यर्थः । अथ च–चकोरजिह्वया भवन्मुखसेवाया अकृतत्वादेतन्मुखचन्द्रचान्द्रिकापानं कर्तुमशक्यमिति युक्तम् । तदीयचक्षुर्भ्यां तु चिरकालमुत्तमस्य भवन्मुखस्य सेवनात्तयोरेतन्मुखचन्द्रचान्द्रिकापानं युक्तम् । उत्तमसेवया हि दुष्प्रापमपि वस्तु सुप्रापं भवतीत्याशयः । चिरकालमेतन्मुखकान्तिं सादरं किं न पश्यसि ? अपितु पश्य, एनं वृणीष्वेति भावः । यद्वा–जिह्वया अल्प एव स्वादे सामर्थ्यादेतन्मुखचन्द्रचन्द्रिकायाश्चातिबहुत्वाच्चकोरजिह्वयेयं कथंचिन्न पीयतां नाम । त्वन्मुखस्पृशोश्चकोरनेत्रयोस्तु पानं युक्तम् । अल्पीयसोरपि नेत्रयोर्भूयसो विषयस्य ग्रहणे सामर्थ्यसद्भावात् । किं पुनर्विशालयोरनयोरिति भावः । एते चकोरस्यैव नेत्रे भवन्मुखं स्पृशत इति नेत्रयो रमणीयत्वं चन्द्रिकापानयोग्यत्वं विलोकनचातुर्यं च सूचितम् । अत्राचमेः प्रत्यवसानार्थत्वात् 'गतिबुद्धि—' इत्यादिना चक्षुषोः कर्मत्वम् । 'णिचश्च' इति कर्त्रभिप्राये क्रियाफले विवक्षायामात्मनेपदे प्राप्तेऽपि 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदप्राप्तेः आचामयसे इति चिन्त्यम् । एवं सति चकोरस्य चक्षुषी चिरं भवन्मुखस्पृशी वर्तेते । यतस्त्वन्मुखसेवां बहुकालं कुर्वत ( वर्तेते ) इत्यर्थः । अत एव इमामेतन्मुखचन्द्रिकां किं न आचामयसे । सामर्थ्यात् चक्षुर्भ्यामिति शेषः । इति तु समाधानम्—आचमनमाचामः सोऽस्या अस्तीत्याचामवती करोति इत्यर्थे 'तत्करोति–' इति ण्यन्तस्य लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तप्रत्यवसानार्थत्वाभावात्परस्मैपदाभावः । निगरणादिसूत्रेणानुवृत्तपरस्मैपदसंज्ञया परस्मैपदस्य विधानात् 'संज्ञापूर्वको विधिरनित्यः' इति परिभाषयात्र परस्मैपदं न भवतीति वा । आचाम इति, 'न कम्यमिचमाम्' इति ( वा० ) मित्त्वनिषेधाद्ध्रस्वत्वाभावः ॥ ६ ॥

१ अत्रानुप्रासः, मुखचन्द्रेति रूपकम्, भैम्याश्चकोरजिह्वया पानकर्तृत्वायोगेऽपि ऐक्यारोपार्थं तथोक्तेर्निदर्शना ।

अपां विहारे तव हारविभ्रमं
करोतु नीरे पृषदुत्करस्तरन् ।
कठोरपीनोच्चकुचद्वयीतट-
त्रुटयत्तरः सारवसारवोर्मिजः ॥ ७ ॥

अपामिति ॥ हे भैमि, आरवेण सहिताः सारवाः सरय्वा इमे सारवाः एवंभूता ऊर्मयस्तेभ्यो जातः पृषदुत्करो बिन्दुसमूहः अपां विहारे अनेन सह जलक्रीडायां सत्यां तव हारविभ्रमं त्वत्सम्बन्धिहारविलासं करोतु । किम्भूतः—नीरे तरन्प्लवमानः । तथा–कठोरातिकठिना पीना उच्चा त्वदीया कुचद्वयी तस्यास्तटे परिसरे त्रुट्यत्तरोऽतिशयेन त्रुट्यन्विशीर्यमाणतरः । जलक्रीडावशाद्विच्छिन्नस्त्वदीयो मुक्ताहार इव शोभताम् । अथ च–पश्यतो लोकस्य भैमीहारः किमयमिति विशिष्टां भ्रान्तिं जनयतु । विगतहारे देशे हारविलास इति विरोधश्च । अथ च–पृषदुत्करः हरिणसङ्घः क्रीडाप्रदेशे क्रीडां करोतु युक्तम् । सरयूक्रीडाप्राप्त्यर्थमेनं वृणीष्वेति भावः । 'देविकायां सरय्वां च भवे दाविकसारवौ' इत्यमरः । दाण्डिनायनादिसूत्रेण साधुः ॥ ७ ॥

अखानि सिन्धुः समपूरि गङ्गया
कुले किलास्य प्रसभं स भन्त्स्यते ।
विलङ्घ्यते चास्य यशःशतैरहो
सतां महत्सम्मुखधावि पौरुषम् ॥ ८ ॥

अखानीति ॥ अस्य कुले वंशे पूर्वजैः सगरपुत्रैरिन्द्रनीताश्वहरणार्थं सिन्धुः समुद्रः पातालपर्यन्तमखानि खातः । कपिलशापदग्धानां तेषामेवोद्धरणार्थं भगीरथेनानीतया गङ्गया समपूरि पूर्णः कृतः । तथा–श्रीरघुनाथेन रावणवधार्थं प्रसभं हठेन स सिन्धुः भन्त्स्यते बन्धनं नेष्यते । किलेति पुराणप्रसिद्धमेतत् । स एव इदानीमस्य यशःशतैर्विलङ्घ्यते च । सर्वे समुद्रमेव प्रति पौरुषं किमिति कृतवन्त इत्यत आह–अहो युक्तमेतत्सतां महतां पौरुषं महतामेव संमुखं धावति प्रसरतीत्येवंशीलम् । क्षुद्रान्कृपयोपेक्षत एवेत्यर्थः । एवंविधा अस्य पूर्वजाः, श्रीरघुनाथश्च यस्मिन्वंशे समुत्पत्स्यते, तस्मिन्वंशे समुत्पन्नोऽयम् । अस्य यशांसि समुद्रपारगाणीत्येन

१ अत्रानुप्रासः, सारेति यमकं च । पृषदुत्करस्य हारविभ्रमकर्तृत्वोक्तेः सादृश्यारोपार्थत्वान्निदर्शना ।

वृणीष्वेति भावः । मन्त्स्यते वन्वेः कर्मणि लृटि भष्भावे चर्त्वे च रूपम् ॥ ८ ॥

एतद्यशःक्षीरधिपूरगा हि
पतत्यगाधे वचनं कवीनाम् ।
एतद्गुणानां गणनाङ्कपातः
प्रत्यर्थिकीर्तीः खटिकाः क्षिणोति॥९॥

एतदिति ॥ एतस्य यशस एव क्षीरधेर्यः पूरस्त गाहते एवंशीलम् एतदीययशोवर्णकं कवीनां वचनम् अगाधेऽतलस्पर्शे स्थाने पतति निमज्जति । श्रोतुमसामर्थ्याद्वागगोचरोऽस्य यश इत्यर्थः । अन्योऽपि समुद्रप्रवाहावगाही अगाधे ब्रुडति । तथा—एतस्य शौर्यादीनां गुणानां गणनार्थमङ्कपातोऽङ्कविन्यासः प्रत्यर्थिनां वैरिणां कीर्तीरेव खटिकाः क्षिणोति हिनस्ति । बह्वङ्कविन्यासे हि खटिकाक्षयो भवति । एतद्गुणा अप्यतिभूयस्त्वाद्गणयितुमशक्याः । एतद्गुणानां पुरस्तादरिकीर्तिर्न प्रतिभासत इत्यर्थः।एनं वृणीष्वेति भावः क्षिणोति, लघूपधत्वाद् गुणप्रसक्तावपि संज्ञापूर्वकविधेरनित्यत्वाद् गुणाभावः ॥ ९ ॥

भास्वद्वंशकरीरतां दधदयं वीरः कथं कथ्यतामघ्युष्टाऽपि हि कोटिरस्य समरे रोगाणि सत्त्वाङ्कुराः। नीतः संयति वन्दिभिः श्रुतिपथं यन्नामवर्णावली—मन्त्रः स्तम्भयाति प्रतिक्षितिभृतां दोःस्तम्भकुम्भीनसान् ॥ १०॥

भास्वदिति ॥ हे भैमि, भास्वतः वंशः तस्य करीरतां तदङ्कुरत्वं दधद्दधानः सूर्यवंशोत्पन्नः वयःसंधौ वर्तमानः । वंश च मुक्तायुक्तत्वाद्भास्वान् यो वंशो वेणुस्तदङ्कुरत्वं दधत् अतितेजस्वी अयमृतुपर्णनामा वीरः कथं केन प्रकारेण कथ्यतां वर्ण्यताम् । अपितु वर्णयितुं न शक्यत इत्यर्थः । हि यस्मात् समरे वर्तमानस्याध्युष्टापि सार्धत्रयीति प्रसिद्धापि कोटिः सार्धत्रयकोटीनि भानुषशरीरे स्थितानि रोमाणि सत्त्वस्यान्तरवीररसोत्सेकस्याङ्कुरा इवाङ्कुराः । वीररसोत्साहेन संग्रामे रोमाञ्चयुक्तोऽयं भवतीत्यर्थः । तथा यस्य नामवर्णावलीमन्त्रः ऋतुपर्ण इति नामाक्षरपंक्तिरूपो मन्त्रः संयति वन्दिभिः श्रुतिपथं कर्णपथं नीतः प्रापितः सन् प्रतिक्षितिभृतां रिपूणां दोषो बाहव एव स्तम्भास्त एव क्रौर्यादैर्घ्याच्च ये कुम्भीनसाः सर्पास्तांस्तम्भयति । एतन्नाममात्राकर्णनाद्भीतानां शत्रूणां बाहवो युद्धाय न प्रसरन्तीत्यर्थः । सिद्धवैदिकमन्त्रश्रवणाच्च फणिनां स्तम्भो भवति । अध्युष्टेति सार्धकोटित्रयस्य संज्ञा । अङ्कुरो नित्यपुल्लिङ्गः । 'कुम्भीनसो लेलिहानः' इत्यमरः ॥ १० ॥

तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृतां शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाडवः । व्योमव्यापिविपक्षराजकयशस्ताराः पराभावुकः कासामस्य न स प्रतापतपनः पारं गिरां गाहते ॥ ११ ॥

तादृगिति॥हे भैमि,अस्य राज्ञः स प्रताप एव तपनः सूर्यः कासां गिरां पारं परतीरं न गाहते । न कस्यापि वर्णयितुं स शक्य इत्यर्थः । स कः अहं तादृक् दीर्घं चतुर्दशमन्वन्तरपरिमितत्वान्महापरिमाणं विरिञ्चिवासरं ब्रह्मदिनं तस्य विधौ करणे यस्य यदीयक्षात्रतेजोरूपस्य सूर्यस्य कर्तृतां निर्मातृतां जानामि । सूर्यस्य दिनकर्तृत्वाद्ब्राह्ममपि दिनं दिनत्वात्सूर्येण कर्तव्यम् । तच्चतुर्युगसहस्रपरिमाणत्वादेतद्दिननिर्मात्रा सूर्येण निर्मातुमशक्यमिति तद्विलक्षणेन चिरकालावस्थायिनाऽतिदीप्रेणैतदीयप्रतापतपनेनैव निर्मातुं शक्यं न त्वन्येनेत्यहमुत्प्रेक्ष इत्यर्थः । तथा— अहम् अम्बुधिपयःपूरे प्रवाहमध्ये वाडवो वडवानलो यस्य एतदीयप्रतापतपनस्य प्रतिबिम्बरूप इति शङ्के । जलानलयोः सहावस्थानविरोधाद्वाडवोऽग्निर्न भवति । किंभूतः सः—व्योमव्यापिन्यो विपक्षराजकस्य रिपुराजकस्याल्पत्वाद्यशांस्येव तारा नक्षत्राणि स्वप्रभावेण पराभावुकस्तिरस्कर्ता । सूर्येणापि व्योमव्यापिवैरिचन्द्रस्य चन्द्रिकारूपं यशो नक्षत्राणि च पराभूयन्ते । एतत्प्रतापसूर्यस्य पुरस्ताद्वैरियशांसि न प्रसरन्तीत्यर्थः । पराभावुकः, 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ३।२।१५४' इत्युकञ् । तद्योगे, 'न लोकाव्ययनिष्ठा-

१ अत्राप्यनुप्रासः, समिति यमकं च । सिन्धुरित्येककारकत्वेऽपि नवानीत्यादीनामनेकासां क्रियाणां निबन्धनाद् दीपकम् । २ अत्र यशःक्षीरेत्यादौ रूपकम् । प्रत्यर्थिकीर्तीनां खटिकात्वेन विधेयतोक्तिः सारोपनिरूपणार्थेति निदर्शना च ।

१ अत्र शार्दूलविक्रीडितं वृत्तम् । वंशवंशयोर्भेदेपि श्लेषेण तयोक्तेः श्लिष्टरूपकं, दोःस्तम्भकुम्भीनसानिति चाश्लिष्टं रूपकम् ।

खलर्थतृनाम् ' २।३।६८' इति षष्ठीनिषेधात्तारा इति द्वितीया ॥ ११ ॥

**द्वेष्याकीर्तिकलिन्दशैलसुतया नद्याऽस्य यद्दोर्द्वयी-कीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे । तत्तस्मिन्विनिमज्य बाहुजभटैरारम्भि रम्भापरी-रम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ १२ ॥**

द्वेष्येति ॥ अस्य राज्ञः दोर्द्वयी बाहुद्वयं तया जनिता कीर्तिश्रेणिः कीर्तिपरम्परा, तन्मयी तद्रूपा श्वेतत्वाद्गङ्गा द्वेष्याणां रिपूणां पलायनाज्जनिता अकीर्तिः सैव कलिन्दशैलसुता यमुना तया नद्या सह यद्यस्माद्रणप्राङ्गणे संग्रामभूमौ समागममगात्संयोगं प्राप तत्तस्मात्कारणात् तस्मिन्प्रयागसंज्ञके गङ्गायमुनासंगमे बाहुजभटैः क्षत्रिययोधैः विशेषेण निमज्ज्य लक्षणया देहं त्यक्त्वा रम्भापरीरम्भानन्दस्य निकेते नन्दनवने देवोद्याने क्रीडायां य आदर आसक्तिस्तस्य आडम्बरो बाहुल्यमारम्भि आरब्धम् । योऽपि प्रयागे निमज्जति सोऽपि 'सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति।ये वै तन्वां विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते,इति श्रुत्या नन्दनवने रम्भाद्यप्सरोभिः सह क्रीडति । 'बाहुजः क्षत्रियो विराट्' इत्यमरः । आरम्भि, 'रभेरशब्लिटोः ७।२।६३' इति नुम् । परीरम्भ इति, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः ॥ १२ ॥

**इति श्रुतिस्वादिततद्गुणस्तुतिः**
**सरस्वतीवाङ्मयविस्मयोत्थया ।**
**शिरस्तिरःकम्पनयैव भीमजा**
**न तं मनोरन्वयमन्वमन्यत ॥ १३ ॥**

इतीति ॥ भीमजा शिरसः तिरःकम्पनयैव वक्र च लनयैव तं मनोरन्वयं सूर्यपुत्रमनुवंशसमुत्पन्नम् ऋतुपर्णं नान्वमन्यत नाङ्गीचकार । किम्भूता—इति पूर्वोक्तप्रकारेण श्रुतिभ्यां कर्णाभ्यां स्वादिता सादरमाकर्णिता तद्गुणस्तुतिर्यया । किम्भूतया कम्पनया—सरस्वत्या वाङ्मयेन जनितो विस्मय आश्चर्यं तस्मादुत्थयोत्पन्नया । शिरःकम्पस्योभयसूचकत्वादाश्चर्याभिनयकृतः कम्पस्तन्निराकरणार्थो जात इत्यर्थः । अस्य मनुवंशत्वात्स्वस्य सोमवंशे साभिलाषत्वात्कन्याभिलषितसौन्दर्याद्यवर्णनाद्वाननुरागः ॥ १३ ॥

**युवान्तरं सा वचसामधीश्वरा**
**स्वरामृतन्यक्कृतमत्तकोकिला ।**
**शशंस संसक्तकरैव तद्दिशा**
**निशापतिज्ञातिमुखीमिमां प्रति ॥१४॥**

युवेति ॥ सा वचसामधीश्वरा सरस्वती निशाकरस्य ज्ञातिः सदृशं मुखं यस्यास्तां चन्द्राननामिमां प्रति युवान्तरमन्यं वरं शशंस वर्णयामास । किंभूता— स्वरामृतेन न्यक्कृतस्तिरस्कृतो मत्तो वसन्तहृष्टः कोकिलो यया । तथा—तद्दिशा यस्यां दिशि वर्णनीयो युवा तिष्ठति तद्दिशा तदीयया दिशाभिमुख्येन संसक्तकरैव संबद्धहस्ता । हस्तेन तं निर्दिश्येति यावत् । सरस्वतीवाणी माधुर्येणैवाश्लृणोन्न तु राजन्यानुरागेणेति स्वरामृतपदेन सूचितम् । ईश्वरेति, 'स्थेशभासपिसकसो वरच् ३।२।१७५' इति वरच् । अथ प्राणेश्वरीत्यादेः कथं साधुत्वम् । 'अन्येभ्योऽपि दृश्यन्ते ३।२।७५' इतीशेर्वनिपि ङीन्रयोः सतोरित्यवेहि ॥ १४ ॥

**न पाण्ड्यभूमण्डनमेणलोचने**
**विलोचनेनापि नृपं पिपाससि ।**
**शशिप्रकाशाननमेनमीक्षितुं**
**तरङ्गयाऽपाङ्गदिशा दृशोस्त्विषः ॥ १५ ॥**

नेति ॥ हे एणलोचने मृगाक्षि, त्वं पाण्ड्यभूमण्डनं पाण्ड्यदेशस्य चूडामणिं मुकुटरत्नभूतं नृपं विलोचनेन पिपासस्यपि न, न पश्यसि तावत् । परं पातुमिच्छस्यपि नेत्यपेरर्थः । अनुचितमेतदित्यर्थः । अधरेण तावन्न पिपाससि, परं विलोचनेनापि न पिपाससीति । द्वाभ्यां नेत्राभ्यां न पिपाससि परमेकेनापि न पिपाससीति

१ अत्रापि शार्दूलविक्रीडितं वृत्तम् । प्रतापतपन इति रूपकम् । यशस्तारा इति च रूपकं, शङ्क इत्युत्प्रेक्षा । २ अत्रापि शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः, रम्भेति यमकं च । गङ्गायाः कीर्तिश्रेणित्वेन, अकीर्तेः कालिन्दीत्वेन तयोः समागमेन रणप्राङ्गणस्य प्रयागतीर्थत्वेन च रूपणाद्रूपकम् । किंतु रणप्राङ्गण इति रूपकं न पूर्ववच्छब्दोपात्तम्,भेदनिगरणपूर्वमभेदाध्यवसायमूलातिशयोक्तिसङ्कीर्णम् ।

१ इतः प्रभृति पद्यपञ्चके वंशस्थविलं छन्दः । अत्रानुप्रासः।२अत्र ज्ञातिमुखीमित्युपमा, न्यक्कृतेति प्रतीपम् ।

वा तस्मात्वं शशिवत्प्रकाशं प्रसन्नमाननं यस्य तम्, एनं नृपमीक्षितुं दृशोस्त्विषो नेत्रकान्तीनपाङ्गदिशा नेत्रप्रान्तदेशेन तरङ्गय । अतिसुन्दरमेनं कटाक्षैर्विलोकयेति भावः ॥ १५ ॥

**भुवि भ्रमित्वानवलम्बमम्बरे**
**विहर्तुमभ्यासपरम्परापरा ।**
**अहो महावंशममुं समाश्रिता**
**सकौतुकं नृत्यति कीर्तिनर्तकी ॥ १६ ॥**

भुवीति ॥ हे भैमि, महावंशं महाकुलीनममुं समाश्रिता । एतदीयेति यावत् । एवंविधा कीर्तिरूपा नर्तकी सकौतुकं यथा तथा घनाभिलापराहित्येन नृत्यति । अहो आश्चर्यम् । ( आश्चर्यं ) लोकगतं कौतुकं नर्तकीगतमिति न पौनरुक्त्यम् । किंभूता—पूर्वं भ्रमित्वा । सकलं भूमण्डलं व्याप्येत्यर्थः । पश्चादवलम्बं यथा तथा अम्बरे गगने विहर्तुं संचरणायाभ्यासपरम्परायां परा आसक्ता । अभ्यासपरम्परायां वा परा उत्कृष्टा । एतदीया कीर्तिर्भूलोकं पूर्वमभिव्याप्य लोकान्तरं व्याप्नोतीत्यर्थः । सेनाद्यनवलम्बेन सदोत्साहवन्तममुमिति वा । नर्तक्यपि पूर्वं भूमौ भ्रमित्वा निराश्रयं गगने नर्तितुमभ्यासपरा सती महान्तं वेणुमाश्रित्य वेणोरुपरि सकौतुकं नृत्यति । अथ च महान्तं पृष्ठवंशमाश्रिता नर्तकीति वा । या हि झटिति भूमावपि गन्तुमपि न शक्नोति सा निरालम्बं महान्तं वेणुमाश्रित्य नृत्यतीत्यतिचित्रमित्यादि ज्ञातव्यम् । 'वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि च' इति विश्वः ॥ १६ ॥

**इतो भिया भूपतिभिर्वनं वना-**
**दटद्भिरुच्चैरटवीत्वमीयुषी ।**
**निजापि सावाऽपि चिरात्पुनः पुरी**
**पुनः स्वमध्यासि विलासमन्दिरम् १७॥**

इत इति ॥ इत अस्माद्राज्ञः सकाशाद्भिया भयेन वनाद्वनान्तरमटद्भिर्गच्छद्भिर्भूपतिभिः उच्चैरतिशयेन अटवीत्वमरण्यानीत्वमीयुषी प्राप्ता सा प्रसिद्धा निजा स्वीयाऽपि पुरी चिराद्वनान्तरभ्रमात्पुनः अवापि प्राप्ता । तथा—पुर्यां स्वीयं विलासमन्दिरं रतिगृहं पुनरप्यधिष्ठितम् ।अध्यासि वनबुद्ध्यैवेत्यर्थः। राज्यभ्रंशदशाऽपेक्षयाऽनेकवारं तत्रागत्य पुनरन्यत्र गत्वा पुनस्तत्रागच्छन्तीत्यर्थः। अनेन वैरिनगराण्युद्वासितानीति भावः । 'उपेयिवाननाश्वाननूचानश्च ३।२।१०९इत्यत्र सूत्रे उपसर्गस्यातन्त्रत्वादीयुषीत्यत्र कर्तुः ॥ १७ ॥

**आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्तिः-सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः । वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपातिभूय-श्चूडारत्नोडुपत्नीकरपरिचरणामन्दनन्दन्नखेन्दुः ॥ १८ ॥**

आसीदिति ॥ हे भैमि, अस्माद्वीरात्पर उत्कृष्टः अन्यो वा क आसीद्वा । अपि तु एवंविधोऽयमेव, न त्वन्यः कश्चिदित्यर्थः । किंभूतः—सीमां समुद्रलक्षणाम् आ अभिव्याप्य सीमासहितं भूवलयं तस्य मलयजालेपनेपथ्यं चन्दनाङ्गरागरूपं नेपथ्यं भूषणं तादृश कीर्तिर्यस्य । यदीयकीर्तिचन्दनधवलितसमुद्रमण्डितमण्डलम् । तथा—सप्तानामकूपारपाराणां समुद्रपरतीराणां समाहारः सप्ताकूपारपारी सैव सदनं निवासस्थानं यस्य सप्तसमुद्रपरतीरवासी यो जनो लोकस्तेन घनमविच्छिन्नं उद्गीत उच्चैर्गीयमानश्चापप्रतापो यस्य,चापश्च प्रतापश्च वा यस्य सः । तथा पदयुगे चरणयुगले युगपत्समकालमेव पातिनः पतनशीला नमस्कारकारिणो भूपास्तेषां अतिभूयांस्यतिबहूनि यानि चूडारत्नानि तान्येव वर्तुलत्वादुडुपत्न्यो नक्षत्ररूपाश्चन्द्रस्त्रियस्तासां कराणां किरणानां परिचरणं सर्वतः संचरणं तेन।अथ च तासां हस्तैर्यत्परिचरणं चरणसेवा तया कृत्वा अमन्दं नन्दन्तोऽतितरां समृद्धकान्तयो नखा एवेन्दवश्चन्द्रा यस्य । चरणपतितसकलराजशिरोमणिकिरणसंवर्धितनखकान्तिः । यशस्वी प्रतापवानत एव सर्वनृपतिवन्द्यचरण एतादृशः कोऽपि नास्ति तस्मादेनं वृणीष्वेति भावः । अन्योऽपि पत्नीकरकृतचरणसंवाहनेन नन्दति ॥ १८ ॥

१ अत्रानुप्रासः, लोचन इति यमकं च । एणलोचन इति शशिप्रकाशाननमिति चोपमा । २ अत्राप्यनुप्रासः । परेति यमकं च । कीर्तिनर्तकीति महावंशमिति च रूपकम् ।

१ अत्रानुप्रासः । भीतानां दशाऽनुरूपक्रियोक्तेः स्वभावोक्तिः । एकस्य भूपतिवर्गस्य क्रमेणानेकास्वटवीषु, तथाभूतासु पुरीषु च पुरीत्वाटवीत्वयोः सम्बन्धोक्त्या पर्यायम् । २ अत्र स्रग्धरा वृत्तम् । अत्रानुप्रासः,लयेत्यादौ यमकं च । नखेन्दुरिति रूपकम् ।

भङ्गाकीर्तिमषीमलीमसतमप्रत्यर्थिसेनाभट-श्रेणीतिन्दुककाननेषु विलसत्यस्य प्रतापानलः । तस्मादुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं—भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारिदम्भोलयः ॥ १९ ॥

भङ्गेति ॥ अस्य प्रतापानलो भङ्गेन पराजयेन जनिता अकीर्तिः सैव श्यामत्वान्मषी तया मलीमसतमा अतितरां मलिनीभूताः प्रत्यर्थिसेनाभटाः शत्रुसैनिकशूरास्तेषां श्रेणी समूहः सैव श्यामत्वात्तिन्दुककाननानि तेषु विलसति विशेषेण दीप्यते । तस्मादेतदीयात्प्रतापानलादुत्पतिता उत्थिता भालाल्ललाटादुद्भूतं भवाक्षि हरतृतीयनेत्रं, भानुः सूर्यः, हुतभुग्वह्निः, जम्भारेरिन्द्रस्य दम्भोलिर्वज्रः,एते स्फुलिङ्गाः स्फुटम् अग्निकणा इव जगदुत्सङ्गे जगतां भूम्यादीनां मध्ये स्फुरन्ति शोभन्ते । तिन्दुकवनानि हि श्यामानि भवन्ति । तत्र पतितो वह्निश्चटचटाशब्दं कुर्वन्स्फुलिङ्गान्मुञ्चति । महत्स्वपि हरनेत्रादिषु स्फुलिङ्गत्वारोपेण प्रतापानलस्यातितरां माहात्म्यं सूचितम्—यस्य कणा एवंभूताःस कथंभूतो भवतीति ॥१९॥

एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं—सङ्ग्रामाङ्गणसीम्नि जङ्गमगिरिस्तोमभ्रमाधायिभिः । पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपनम्रामर—श्रेणीमध्यचरः पुनः क्षितिधरक्षेपाय धत्ते धियम् ॥ २० ॥

एतदिति ॥ हे भैमि, एतस्य पाण्डयस्योग्रसमरस्य प्रेक्षायै उपनम्रा समागता अमरश्रेणी देवसङ्घः तन्मध्यचरो मध्ये वर्तमानः । देवत्वं प्राप्त इति यावत् । एवंभूतः पृथुर्वैन्यः पृथ्वीन्द्रः पुनः क्षितिधराणां पर्वतानां क्षेपाय प्रोत्सारणाय धियं बुद्धिं धत्ते । किं कृत्वा—सङ्ग्रामाङ्गणस्य सीम्नि मर्यादायां जङ्गमानां स्थानात्स्थानान्तरं गच्छतां गिरीणां स्तोमस्य भ्रमाधायिभिर्भ्रान्तिं कुर्वाणैश्चलदुच्चतरगिरितुल्यैरेतस्य दन्तिबलैर्निखिलां भुवमालिङ्गिताङ्गीं व्याप्तप्रदेशां विलोक्य । पूर्वं पृथुना स्वधनुष्कोट्या जङ्गमपर्वतानुत्सार्य क्षेत्रादिविभागः कृतः एतद्गजान्दृष्ट्वा सङ्ग्रामदर्शनार्थमागतेन एते पर्वता इति बुद्ध्वेतदुत्सारणे पुनरपि बुद्धिः कृतेत्यर्थः । उच्चतरगजबाहुल्यं दारुणरणरसिकत्वं च सूचितम् ॥ २० ॥

शशंस दासीङ्गितविद्विदर्भजा-
मितो ननु स्वामिनि पश्य कौतुकम् ।
यदेष सौधाग्रनटे पटाञ्चले
चलेऽपि काकस्य पदार्पणग्रहः ॥२१॥

शशंसेति ॥ इङ्गितविद्भैम्याभिप्रायज्ञा काचिद्दासी विदर्भजां शशंस बभाषे। यद्वाङ्गिविदिदासीत्येकं पदम् । दासीभूतेङ्गितवेत्त्रीत्यर्थः । दासीभूता यानीङ्गितानि तानि वत्तीति तथोक्ता । शाकपार्थिवादित्वान्मध्यमपदलोपः । एवं चेदमपि तस्या एव वक्त्र्या विशेषणमुपपाद्यम् । ननु हे स्वामिनि, इतः अस्यां दिशि त्वं कौतुकं पश्य । किं तत्—सौधः सुधाधवलितगृहं तस्याग्रमूर्ध्वदेशस्तत्र वर्तमाने नटे चलत्वान्नर्तकतुल्ये वायुवशाच्चलेऽपि पटाञ्चले पताकावसनाञ्चले यत् एष काकस्य पदार्पणे चरणस्थापने ग्रहस्तत्रोपवेशनार्थं पौनः पुन्येन प्रवृत्तिर्निर्बन्धः। तत् कौतुकं पश्येति संबन्धः । अननुरक्तायां भैम्यां शृङ्गारचेष्टां भावयतः पाण्ड्यस्यायं यथापटाञ्चले उपवेशनार्थं नाकस्याग्रहोऽनुचितः, तथैतस्य पाण्ड्यस्यायं भैम्यां दुरभिनिवेश इति सूचनार्थं सरस्वतीकृततद्वर्णननिवारणार्थं वेयमुक्तिः इत एतद्वर्णनकौतुकात्सकाशादिति वा ॥ २१ ॥

ततस्तदप्रस्तुतभाषितोत्थितैः
सदस्तदश्वेति हसैः सदःसदाम् ।
स्फुटाऽजनि म्लानिरतोऽस्य भूपतेः
सिते हि जायेत शितेः सुलक्ष्यता २२

तत इति ॥ ततस्तस्या दास्याः पूर्वोक्तमप्रस्तुतभाषितं वचनं तस्मादुत्थितैः सदःसदां सभ्यानां हसैर्हसितैस्तत् सदः सा सभा अश्वेति श्वेतीकृतम् । तद्वचनं श्रुत्वा सभ्या हसन्ति स्मेत्यर्थः । अतः सदा श्वेतीकरणाद्धेतोरस्य भूपतेर्म्लानिः लज्जा वैवर्ण्यं स्फुटाऽजनि । अत्रार्थान्तरन्यासमाह—हि यस्मात् सिते शुभ्रवस्तुनि शितेः कृष्णवर्णस्य सुलक्ष्यता प्रकटता जायते । सभ्य-

---

१ अत्र शार्दूलविक्रीडितं वृत्तम् । भङ्गाकीर्तिमषीत्यादौ रूपकम्, स्फुटमित्युत्प्रेक्षा ।

१ अत्रापि शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः । धियं धत्ते किमिति प्रतीत्युत्थापितोत्प्रेक्षा-व्याङ्ग्या भ्रमेति भ्रान्तिमांश्च। २ इतः प्रभृति पद्यसप्तकस्य वंशस्थबिलमेव वृत्तम् । अत्रानुप्रासः, चल इति यमकम् । पटाञ्चलस्य सौधाग्रनटस्वरूपणाद्रूपकम्।

हास्यवशात्सोऽधिकं विवर्णो जात इत्यर्थः । स स्वत एव श्यामः सभ्यहास्यवशादधिकः श्यामो जात इति वार्थः । अश्वेति, 'श्विताङ् शौक्ल्ये' इत्यस्माण्ण्यन्तात्कर्मणि लुङ्ङात्मनेपदम् ॥ २२ ॥

ततोऽनु देव्या जगदे महेन्द्रभू-
पुरंदरं सा जगदेकवन्द्यया ।
तदार्जवावर्जिततर्जनीकया
जनी कयाचित्परचित्स्वरूपया ॥२३॥

तत इति ॥ ततः कयाचिल्लोकोत्तरयाऽनिरूपितरूपया देव्या वाण्या महेन्द्रभुवो महेन्द्रनामकपर्वतसम्बन्धिनो देशस्य पुरंदरं स्वामिनम् अनु लक्षीकृत्य सा जनी स्वयंवरा जगदे उक्ता । किम्भूतया—जगतः एका देवतान्तरपरित्यागेन वन्द्या तया । यतः परा श्रेष्ठा चित् ज्ञानलक्षणं स्वरूपं यस्यास्तया । तथा तस्या भैम्या यदार्जवम् ऋजुत्वं तेनावर्जिता वर्णनार्थमूर्ध्वीकृता तर्जनी यया । तस्मिन्वर्णनीये नृपे विषये वा । देव्या एव वा यदार्जवं कृपा तया । जगदे कर्मणि तङ् । 'वाचंयमपुरंदरौ च' इति निपातनात्पुरंदरः साधुः । तर्जनीक इति- 'नद्यृतश्च ५।४।१५३' इति कप् । अनोर्लक्षणे कर्मप्रवचनीयत्वात्पुरंदरमिति द्वितीया[1] ॥ २३ ॥

स्वयंवरोद्वाहमहे वृणीष्व हे
महेन्द्रशैलस्य महेन्द्रमागतम् ।
कलिङ्गजानां स्वकुचद्वयश्रिया
कलिं गजानां शृणु तत्र कुम्भयोः॥२४॥

स्वयमिति ॥ हे भैमि, स्वयंवरेण उद्वाहस्तल्लक्षणे महे उत्सवे आगतं महेन्द्रशैलस्य महेन्द्रं स्वामिनं वृणीष्व त्वं तत्र पर्वतोपलक्षिते देशे कलिङ्गदेशे जातानां गजानां कुम्भयोः स्वकुचद्वयश्रिया सह कलिं समानशोभाख्यद्रव्याभिलाषनिमित्तं कलहं शृणु । हस्तिकुम्भास्त्वत्कुचसाम्यमभिलषिष्यन्ति, परं न प्राप्स्यन्तीति भावः। स्वयंवरोद्वाह एव मह उत्सवो यस्यास्तत्संबुद्धिरिति वा[3] ॥ २४ ॥

अयं किलायात इतीरिणैरवा-
ग्भयादयादस्य रिपुर्वृथा वनम् ।
श्रुतास्तदुत्स्वापगिरस्तदक्षराः
पठद्भिरत्रासि शुकैर्वनेऽपि सः ॥ २५ ॥

अयमिति ॥ अयं कलिङ्गदेशाधिप आयातः किल श्रूयते इति ईरयन्तीति ईरिणः पौरास्तेषां वाक् तस्याः सकाशाद्भयं तस्माद्धेतोः अस्य रिपुः यत् वनमयात्पलाय्य गतवान् तद्वृथा । रिपुरिति जात्येकवचनम् । वैयर्थ्ये हेतुमाह—तान्येव अयं समायात इत्येवंरूपाण्यक्षराणि यासु ताः श्रुताः शुकैरेवाकर्णितास्तस्य एतदीयरिपोः उत्स्वापगिरोऽतिशयितनिद्राप्रलापवाचः एकस्याप्यक्षरस्य व्यत्यासं विना पठद्भिः शुकैर्वनेऽपि स रिपुरत्रासि भीषितः । पलाय्य वने गतानामपि रिपूणामुत्स्वप्नलपितास्ता गिरो बहुशः पठद्भिः शुकैर्वनेऽपि त्रासिता वैरिणः स्थातुं न शक्नुवन्तीत्यर्थः । अतिशूरोऽयमिति भावः[1] ॥ २५ ॥

इतस्त्रसद्विद्रुतभूभृदुज्झिता
प्रियाऽथ दृष्टा वनमानवीजनैः ।
शशंस पृष्टाऽद्भुतमात्मदेशजं
शशित्विषः शीतलशीलतां किल॥२६॥

इत इति ॥ इतः अस्माद्राज्ञः सकाशात्त्रसन्तो भीता अत एव विद्रुताः पलायिताः भूभृतो राजानस्तैः परित्यक्ता प्रिया स्वस्वप्राणेश्वरी वनमानवीजनैर्भिल्लीजनैर्दृष्टा । अथ पश्चादात्मदेशजं अद्भुतम् पृष्टा सती भवत्या देशे किमपूर्वमिति, शशित्विषश्चन्द्रस्य शीतलशीलतां किल प्रसिद्धं हिमस्वभावत्वमेव स्वदेशजातमाश्चर्यं शशंसाकथयत् । स्वदेशे वियोगाभावाच्चन्द्रकराणां शीतलत्वं, वने च वियोगादुष्णत्वमित्यर्थः । प्रियेति जात्येकवचनम् । भर्तृत्यक्ता वियोगज्वरभराक्रान्ता सती वने चन्द्रकान्तिमुष्णामनुभवतीत्यर्थः[2] ॥ २६ ॥

इतोऽपि किं वीरयसे न कुर्वतो
नृपान्धनुर्बाणगुणैर्वशंवदान् ।
गुणेन शुद्धेन विधाय निर्भयं
तमेनमुर्वीवलयोर्वशी वशम् ॥ २७ ॥

१ अत्राप्यनुप्रासः, सशयोरभेदात् सित इति यमकं च । प्रागुक्तस्यार्थस्य समर्थनाय सिते हीत्युपन्यास इत्यर्थान्तरन्यासः । २ अत्राप्यनुप्रासः, जनीकयेति यमकं च । ३ अत्राप्यनुप्रासः, मह इति यमकं च । श्रिया सहेति सहोक्त्यनुप्राणितोपमा ।

१ अत्रानुप्रासः, यादेति यमकं च तथा त्रासासंभवेऽपि तथोक्तेरतिशयोक्तिः । २ अत्रानुप्रासः ।

इत इति ॥ हे भैमि, त्वम् इतोऽपि राज्ञः सकाशात् किमिति न वीरयसे शूरा न भवसि ? अपितु अस्मादपि शूरा भव । किं वीरा न भवसि, अपि तु वीरा भवस्येवेति वा । किम्भूतादितः—नृपाञ्शत्रून् धनुश्च वाणाश्च गुणाश्च तैः चापशरमौर्वीरूपैर्बहुभिरुपकरणैः कृत्वा वशंवदान्वश्यान्कुर्वतः । किंभूता त्वम्—उर्वीवलये उर्वशीरूपातिसुन्दरी । किं कृत्वा—तमेनं बहुभिर्धनुरादिभिरुपकरणैर्विद्विषां जैत्रं शुद्धेन केवलेन चापादिलेशसंस्पर्शरहितेन सौन्दर्यादिना गुणेन मौर्व्या च कृत्वा निर्भरमतितरामायासरहितं वा यथा तथा वशं विधाय । बहुसाधनैः पराञ्जयतोऽस्यैकेनैव साधनेन जयकरणादित्यर्थः । मौर्वीमात्रेण जयादाश्चर्यं च । अयं सर्वेभ्योऽपि वीरः अस्मादपि त्वमित्यपेरर्थः । वीरयसे, 'शूर वीर विक्रान्तौ' इति चुरादिः ॥ २७ ॥

**एतद्भीतारिनारी गिरिबिलविगलद्वासरा निःसरन्ती—स्वक्रीडाहंसमोहग्राहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा । आक्रन्दद्भूरि यत्तन्नयनजलमिलच्चन्द्रहंसानुबिम्ब—प्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसीन्न्यश्वसच्च ॥२८॥**

एतदिति ॥ एतस्माद्भीतानामरीणां नारी, एतस्माद्भीता अरिनारी वा गिरिबिले पर्वतकंदरायां विगलद्वासरातिवाहितदिवसा । तथा—रात्रौ निःसरन्ती बिलाद्बहिर्निर्गच्छन्ती । तथा—तदनन्तरं स्वः स्वकीयो मदीयः क्रीडाहंस एवायमिति मोहो भ्रान्तिस्तया ग्रहिलो मदीयमेनं हंसं देहीत्याग्रहवान् शिशुस्तेन भृशं प्रार्थितो याचित उन्निद्रश्चन्द्रो याम् एवंभूता सती चन्द्रदाने सामर्थ्याभावात्तदाग्रहशान्त्यभावाद् दुःखवशाद्यस्माद्भूरि बहु आक्रन्ददुरोद । तस्माद्धेतोः बहुतरे नयनजले मिलन्प्रतिबिम्बरूपेण संघट्टमानो यश्चन्द्ररूपो हंसस्तस्य योऽनुबिम्बः, मिलन्यश्चन्द्रहंसस्यानुबिम्बो वा, तस्य प्रत्यासत्त्या सामीप्येन मदीयः क्रीडाहंसोऽयमागत इति बुद्ध्या प्रहृष्यतो मोदमानस्य तनयस्य पुत्रस्य विहसितैर्हासैः कृत्वा तदाग्रहशान्तैः आश्वसीदाश्वासं प्राप । परित्यक्तस्वीयसंपत्स्मरणात्क तव हंसः वृथैव भ्रान्तोऽसीति न्यश्वसच्च शोकनिश्वासं चामुञ्चत् । आश्वसीत्, लुङि 'रुदश्च पञ्चभ्यः' इत्यपृक्तसार्वधातुकस्येडागमः । लुङि वा 'ह्ययन्तक्षणश्वसजागृणिश्व्येदिताम् ७।२।५' इति वृद्धिनिषेधे रूपम् । न्यश्वसत्, लङि 'अड्गार्ग्यगालवयोः' इत्यपृक्तसार्वधातुकस्याडागमः ॥ २८ ॥

**अस्मिन्दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायिनी—कम्पं सात्त्विकभावमञ्चति रिपुक्षोणीन्द्रदारा धरा । अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्ध्वं निजः—पन्था भास्वति दृश्यते बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥२९॥**

अस्मिन्निति ॥ हे भैमि, अस्मिन्राज्ञि दिग्विजयोद्यते सति रिपवश्च ते क्षोणीन्द्रा राजानस्तेषां दाराः प्रिया वशवर्तिनी धरा पृथ्वी अयं राजा मे पतिः स्वामी स्ताद्भूयादिति ध्यायिनी चिन्तयन्ती सती सात्त्विकेषु मध्ये कम्पलक्षणं सात्त्विकभावमञ्चति गच्छति । अन्यस्वामिसूचकं भूकम्पलक्षणं भौममुत्पातं प्राप्नोति । तथा—समरेऽस्यैवाभिमुखं शस्त्राघातैर्निपत्य ऊर्ध्वमूर्ध्वदेशम् । अथ च—उत्तमं स्वर्गलोकं यास्यद्भिर्गमिष्यद्भिः प्रत्यर्थिभिः पार्थिवैः भास्वति सूर्यमण्डलमध्ये निजः स्वीयो बिलमयः पन्था दृश्यते । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति वचनात् । अथ च—सूर्ये बिलरूपो व्युत्पातश्च म्रियमाणैर्दृश्यते । अतिशूरोऽमिति भावः ॥ २९ ॥

**विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुनः—कोपात्कोऽपि निवर्तते यदि भटः कीर्त्या जगत्युद्भटः । आगच्छन्नपि सम्मुखं विमुखतामेवाधिगच्छत्यसौ—द्रागेतच्छुरिकारयेण ठणिति च्छिन्नापसर्पच्छिराः ॥ ३० ॥**

विद्राण इति ॥ त्रस्ते भीते अत एव रणचत्वराद्रणाङ्गणाद्विद्राणे पलायिते समस्तेऽरिगणे मध्ये कोऽपि भटः शूरः कोपाद्यदि पुनः निवर्तते । यतो जगति कीर्त्या यशसा उद्भटः ख्यातः । असौ भटः अस्य संमुखमागच्छन्नपि विमुखतामेव विगतमुखत्वमधिगच्छति

१ अत्रानुप्रासः । वलयोर्वशीति रूपकम् ।

१ अत्र स्रग्धरा वृत्तम् । अनुप्रासोऽत्र शब्दालङ्कारः, नारीशिशोश्चन्द्रबिम्बे तत्प्रतिबिम्बे च विसम्मतसादृश्याद्धंसभ्रमानिबन्धनाद् भ्रान्तिमान् । २ अत्र शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः, आत्मीयोर्ध्वगमनमार्गोत्प्रेक्षणादुत्प्रेक्षा, किंतु इवादेरभावाद्गम्या ।

प्राप्नोति । अथ च—संमुखमागच्छन्नपि पराङ्मुखो जात इति विरोधाभासः । यतः—द्राक् शीघ्रमेतस्य छुरिकाया रयेण 'ठण्' इति यथा तथा खण्डितमपसर्पद्धः पतच्छिरो यस्य सः । 'ठण्' इति लोहकण्ठास्थिसंघट्टजशब्दानुकरणम् । अतिशूरोयमिति भावः ॥ ३० ॥

ततस्तदुर्वीन्द्रगुणाद्भुतादिव
स्ववक्त्रपद्मेऽङ्गुलिनालदायिनी ।
विधीयतामाननमुद्रणेति सा
जगाद वैदग्ध्यमयेङ्गितैव ताम् ॥ ३१ ॥

तत इति ॥ ततः सा भैमी तां वाणीं प्रति वचनमन्तरेणैव इति जगाद । इति किम्—आननमुद्रणा मौनं विधीयतामिति । किंभूता—तस्य उर्वीन्द्रस्य गुणाकर्णनसमुत्पन्नात् अद्भुतादाश्चर्यादिव स्ववक्त्रपद्मे अङ्गुलिरूपं नालं तस्य दायिनी । अत एव वैदग्ध्यमयम् एतच्चातुर्यबहुलमिङ्गितं चेष्टितं यस्याः सा । वचननिषेधार्थम्, आश्चर्याभिनयार्थं च मुखे अङ्गुलिर्दीयते । वर्णननिषेधार्थं दत्ताङ्गुलिस्तद्गुणाद्भुतादिवेति लोकैरुत्प्रेक्षितमित्यर्थः । पद्मे च नालं भवति ॥ ३१ ॥

अनन्तरं तामवदन्नृपान्तरं
तदध्वदृक्तारतरङ्गरङ्गणा ।
तृणीभवत्पुष्पशरं शरस्वती
स्वतीव्रतेजःपरिभूतभूतलम् ॥ ३२ ॥

अनन्तरमिति ॥ अनन्तरं तद्वर्णननिषेधानन्तरं सरस्वती नृपान्तरं तां भैमीं प्रत्यवदत् । किंभूता—तस्य वर्णनीयनृपान्तरस्याध्वनि तद्दिशि दृशः ताराणामतिविशालानां तरङ्गाणां दृग्व्यापाराणां रङ्गणं गतिर्यस्याः । दृग्व्यापारदर्शितवर्णनीयनृपान्तरा । किंभूतं नृपान्तरम्—तृणीभवन् दीनो भवन् पुष्पशरः कामो यस्मात् । तया—स्वतीव्रतेजसा परिभूतं वशीकृतं भूतलं भूमण्डलं येन । 'रिङ्गणा' इति च पाठः ॥ ३२ ॥

१ अत्र शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः । सम्मुखमागच्छतां पराङ्मुखं गमनं विरुद्धमिवेति विरोधाभासः । तत्रापसर्पच्छिरा इति विशेषणगत्या हेतूपन्यासद्योतनेन काव्यलिङ्गम् । परिकरश्च । २ इतः प्रभृति पद्यपञ्चकस्य वंशस्थविलमेव च्छन्दः । इवेत्युत्प्रेक्षा । मयेङ्गितेति रूपकम् । ३ अत्रानुप्रासः, तरमिति रङ्गेति भूतेति च यमकम् ।

तदेव किं न क्रियते नु का क्षति-
र्यदेष तद्दूतमुखेन काङ्क्षति ।
प्रसीद काञ्चीमयमाच्छिनत्तु ते
प्रसह्य काञ्चीपुरभूपुरन्दरः ॥ ३३ ॥

तदिति ॥ नु भैमि, एष काञ्चीपुरस्य सम्बन्धिन्या भुवः पुरंदरस्त्वां प्रति प्रहितस्य दूतस्य मुखेन संदेशवचनेन कृत्वा यत्त्वदीयवरणादि काङ्क्षति तदेव किं न क्रियते । अपि तु तदेव क्रियताम् । एतदुक्तं कुर्वत्यास्तव का क्षतिर्हानिः ? अपि तु न कापि, आसिन्प्रसीद । अयं नवरते लज्जया अमन्यमानाया अपि ते काञ्चीं मेखलाबन्धं प्रसह्य हठादाच्छिनत्तु शिथिलयतु । अधीरतया ग्रन्थेरुन्मोचनमसहमानस्त्रोटयतु वा । एवं वृणीष्वेति भावः ॥ ३३ ॥

मयि स्थितिर्नम्रतयैव लभ्यते
दिगेव तु स्तब्धतया विलङ्घ्यते ।
इतीव चापं दधदाशुगं क्षिप-
न्नयं नयं सम्यगुपादिशद्द्विषाम् ॥ ३४ ॥

मयीति ॥ चापं दधत्, आशुगं वैरिषु क्षिपन् अयं राजा इति पूर्वोक्तं द्विषां नयं नीतिं सम्यगुपादिशदिव। इति किम्—हे द्विषः, मयि मत्समीपे नम्रतयैव विनीततयैव स्थितिर्निवासः, । अथ च—स्वराज्ये स्थितिः, लभ्यते, स्तब्धतयाऽविनीततया तु पुनर्दिगेव विलङ्घ्यतेऽतिक्रम्यते चेन्मयि नम्रा भविष्यथ तर्हि चापवास्थितिं प्रलप्स्यथ । अन्यथा बाणवद्दिगन्तं यास्यथ इति वचनं विनैवोक्तवानित्यर्थः । नम्रस्तब्धशब्दयोर्वक्रावक्रविनीताविनीतार्थपरतयोत्प्रेक्षा ॥ ३४ ॥

अदःसमित्सम्मुखवीरयौवत-
त्रुटद्भुजाकम्बुमृणालहारिणी ।
द्विषद्गणस्त्रैणदृगम्बुनिर्झरे
यशोमरालावलिरस्य खेलति ॥ ३५ ॥

अद इति ॥ अस्य राज्ञः यशोरूपा मरालावलिर्हंसपङ्क्तिः द्विषतां भटानां सङ्घास्तेषां स्त्रैणं स्त्रीवृन्दं तस्य दृगम्बुनिर्झरे नेत्रबाष्पप्रवाहे खेलति । किम्भूता—अदःसमिति अमुष्य रणे संमुखागता ये वीरास्तेषां यौवतं

१अत्राप्यनुप्रासः, क्षतीति काञ्चीति पुरेति च यमकम् । २ अत्रानुप्रासः, नयंनयमिति यमकं च । इतीवेत्युत्प्रेक्षा

स्त्रीसमूहस्तस्य वैधव्यवशात्त्रुटन्तो ये भुजाकम्बवः शङ्खवलयानि त एव मृणालानि हरत्यपनयति भक्षयति वेत्येवंशीला । हंसावली हि मृणालाहारा निर्झरोदके क्रीडति । रणे संमुखागतानां शत्रूणां वधात्तत्स्त्रियः शङ्खवलयानि स्फोटयन्ति रुदन्ति च तेन चास्य कीर्तिर्भवति ॥ ३५ ॥

**सिन्दूरद्युतिमुग्धमूर्धनि धृतस्कन्धावधिश्यामिके-व्योमान्तःस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति । जानीमो नु यदि प्रदोषतिमिरव्यामिश्रसंध्याधिये-ऽस्तं यान्ति समस्तबाहुजभुजातेजःसहस्रांशवः ॥ ३६ ॥**

सिन्दूरेति ॥ नु भैमि, समरस्य आरम्भे उद्धुरे उद्युक्ते अस्य सिन्धुरे गजे धावति सति समस्ता बाहुजाः क्षत्रियास्तेषां भुजातेजांस्येव सहस्रांशवः सूर्या यदि यत् अस्तं विनाशं अस्ताचलं च यान्ति गच्छन्ति । तत् प्रदोषतिमिरेण रजनीमुखसंबन्धिना तमसा व्यामिश्रा मिलिता या संध्या तस्या धिया बुद्ध्या भ्रान्त्येवेति वयं जानीमः । वाक्यार्थः कर्म । दिवारजन्योः संधौ भवः सांध्यो रागः तद्भ्रान्त्येत्यर्थः । किम्भूते सिन्धुरे—सिन्दूरद्युत्या मुग्धो मनोज्ञो मूर्धा यस्य । तथा—धृता स्कन्धावधीकृत्य श्यामिका स्वभाविकी कज्जललेपमण्डनजा वा कालता येन । तथा—उच्चतया व्योमान्तःस्पृशि गगनमध्यस्पर्शिनि । तथा—समरारम्भाद्रणतूर्यश्रवणात्कोपदुःसहे वा । यदि अस्तं यान्ति तर्हि सायंकालतिमिरसंपृक्तसंध्याधियेति वा । संध्यापि किंचित्कज्जलतुल्यतिमिरयुक्ता सिन्दूरवच्च स्वतो रक्ता वरुणादिगन्तस्पर्शिनी चेति पूर्वोक्तविशिष्टहस्तिदर्शने सति इयं सायंसंध्येति बुद्ध्यैव तेजःसूर्याणामस्तगमनं युक्तम् । एवंविधं गजं दृष्ट्वा सर्वेऽपि पलायन्त एवेत्यर्थः । 'जानीमोऽथ तदा' इति पाठे अथशब्दो यादित्यर्थे, तदा तादित्यर्थे ज्ञेयः । श्यामेव श्यामिकेति स्वार्थे कप्रत्यये 'प्रत्ययस्थात्—' इतीत्त्वम् ॥ ३६ ॥

**हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फुटा-सीदन्मर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तुभम् । उज्झित्वा निजसद्म पद्ममपि तद्व्यक्तावनद्धीकृतं—लूतातन्तुभिरन्तरद्य भुजयोः श्रीरस्य विश्राम्यति ॥ ३७ ॥**

हित्वेति ॥ श्रीः लक्ष्मीः अद्यास्य भुजयोरन्तः मध्ये विश्राम्यति शोभते । किं कृत्वा—दैत्यरिपोर्विष्णोः स्वभवनं स्वस्य गृहम् उरः हित्वा । तथा—तत् निजसद्म पद्ममप्युज्झित्वा । किंभूतमुरः—लक्ष्म्या त्यक्तत्वाच्छून्यत्वलक्षणेन दोषेण स्फुटमासीदन्तः स्थिरीभवन्तो मर्कटकीटा ऊर्णनाभकीटास्तेषां करणेन निर्वृत्तं तै रचितं कृत्रिमं सितच्छत्त्रमिव सितच्छत्त्रं मण्डलाकारं श्वेतं गर्भाण्ड ( न्तः ) स्थापनस्थानं तद् भवंस्तद्रूपी भवन्कौस्तुभाख्यो मणिर्यत्र । किंभूतं पद्मम्—लूतातन्तुभिः मर्कटीसूत्रैर्मर्कटसदृशैः । कमलसूत्रैरित्यर्थः । व्यक्तं प्रकटमवनद्धीकृतं बद्धम् । बिसतन्तूनामेव लूतातन्तुत्वेनोक्तिः । परस्परमातिदूरे द्वे अपि भवने प्रति गतागताभ्यां श्रान्ता सती गृहद्वयं परित्यज्य अतिसमीपवर्तिनोरस्य भुजयोरेव भवनयोः सुखेन निषीदति । अत्रैव स्थिरा भवतीत्यर्थः । कौस्तुभस्य धवलत्वाल्लूताच्छत्त्रत्वेन, कमलसूत्राणां च सादृश्याल्लूतातन्तुत्वेनोत्प्रेक्षा । 'लूता स्त्री तन्तुवाये स्यात्' इत्यमरः ॥ ३७ ॥

**सिन्धोर्जैत्रमयं पवित्रमसृजत्तत्कीर्तिपूर्ताद्भुतं—यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः । यद्बिन्दुश्रियमिन्दुरश्नाति जलं चाविश्य दृश्येतरो—यस्यासौ जलदेवतास्फटिकभूर्जागर्ति यागेश्वरः ॥ ३८ ॥**

सिन्धोरिति ॥ अयं सिन्धोर्जैत्रं समुद्रस्य जेतृ पवित्रमुज्ज्वलं पावनं च तत्कीर्तिपूर्ताद्भुतं यशोरूपतडागाश्चर्यमसृजन्निर्ममे । यत्र कीर्तितडागे जगन्ति स्नान्ति उज्ज्वलीभवन्ति स्नानं च कुर्वन्ति । यद्वर्णनविषये के वा कवयः स्फुरन्नूतनार्थसार्था अपि वाचंयमा मौनिनो न सन्ति । अपि तु सर्वेऽपि मौनिन एव भवन्तीत्यर्थः । अथ च—के वयो जलपक्षिणः के वा तापसा न सन्ति । अपि तु तडागे बहवः पक्षिणस्तापसाश्च विद्यन्ते । इन्दुः यस्य कीर्तितडागस्य बिन्दुश्रियमश्नाति प्राप्नोति ।

१ अत्रानुप्रासः, यशोमरालेति रूपकम् । २ इदमारभ्य पद्यत्रये शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः, धुरे इति यमकं च । धियेवेत्युत्प्रेक्षा ।

१ अत्रानुप्रासः, एकस्याः श्रियः क्रमेणानेकाधारवृत्तिवचनात् पर्यायविशेषः । तेन च तद्भुजयोः श्रीरञ्जने विष्णूरःपद्माभ्यामप्यातिशायितमिति वस्तु व्यज्यत इत्यलङ्काराद्वस्तुध्वनिः ।

यदपेक्षया चन्द्रोऽल्पीयानित्यर्थः । अथ च—महतस्तडागस्य जलबिन्दुशोभामिन्दुरश्नाति । यदीयो बिन्दुरेवेन्दुरित्यर्थः । यस्य च जलमाविश्य प्रविश्येव दृश्येतरः अस्मदादिनेत्रयोरविषयभूतः असौ जगति विद्यमानः स्फटिक एव भूः यस्य स कैलास एव यागेश्वरः स्फाटिकश्रीशिवलिङ्गरूपी जलदेवता जागर्ति । स्फुरति । समच्छायत्वाज्जले क्षिप्तः स्फटिको न दृश्यते । इयमेव स्फटिकपरीक्षा । उज्ज्वलतरैतत्कीर्तिकल्लोलप्लावित इव कैलासो न दृश्यते । इन्दुर्जले चाविश्य जले प्रतिबिम्बितः सन् यद्बिन्दुश्रियमश्नातीति वा । असौ इन्दुरेव यस्य जलमाविश्यादृश्यः स्फटिकनिर्मितो यागेश्वरः सन् जलदेवता जागर्ति । कीर्तिमध्यपाती चन्द्रोऽपि समच्छायत्वान्न दृश्यत इत्यर्थ इति वा । 'यागेश्वरः स्फाटिकः ' इति प्रसिद्धिः । समुद्रादाधिक्यं तु ' सागरं पर्वणि स्पृशेत् ' इति वचनात्पर्वातिरिक्ते काले समुद्रस्यास्पृश्यत्वादस्य तु सर्वदा पवित्रत्वात् । समुद्रस्य भूलोकस्थस्यैव कतिपयस्यैव जनस्य स्नानार्हत्वादस्य तु लोकत्रयस्य स्नानार्हत्वात् । तस्य वर्णयितुं शक्यत्वादस्य चाशक्यत्वात् । तस्य च चन्द्रैकसर्वस्वत्वादस्य च बिन्दुरूपचन्द्रत्वात् समुद्रे च श्रीविष्णुरूपाया जलदेवतायाः सुप्तत्वदत्र च यागेश्वरस्य जाग्रत्त्वात् । एवंविधो यशस्वी कोऽपि नास्तीति भावः । यागेश्वर इति । असौ जलदेवता जागर्ति । असौ का—या स्फटिकभूः अगेश्वरः कैलासो जागर्तीति वा । 'वाचि यमो व्रते ३।२।४०' इति खचि 'वाचंयमपुरंदरौ च ६।३।६९' इति साधुः ॥ ३८ ॥

**अन्तःसंतोषबाष्पैः स्थगयति न दृशस्ताभिराकर्णयिष्य—न्नङ्गे नानास्तिरोमा रचयति पुलकश्रेणिमानन्दकन्दाम् । न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः शृण्वन्नेतस्य कीर्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥ ३९ ॥**

अन्तरिति ॥ यस्माद् उरगपतिः शेषः अन्तःसंतोषबाष्पैरानन्दाश्रुभिः कृत्वा दृशो नेत्राणि न स्थगयत्याच्छादयति । यतः—ताभिर्दृग्भिः एतद्गुणानाकर्णयिष्यन्सन् । चक्षुःश्रवत्वादश्रुभिर्नेत्राच्छादनेन गुणानाकर्णनशङ्कया आनन्दाश्रुभिर्दृशौ नाच्छादयति । तथा—आनन्द एव कन्दो मूलं यस्यास्तां पुलकश्रेणिं रोमाञ्चपङ्क्तिमपि अङ्गे न रचयति करोति । यतः—अनस्तिरोमाऽविद्यमानरोमा । तथा—संतोषाच्छिरःकम्पनं न करोति । यतः—क्षोणीभङ्गभीरुः यद्यहं मूर्धानं कम्पयिष्यामि तर्हि भूमिः पतिष्यतीति भिया । तस्मात्कारणादेतस्य कीर्तीः शृण्वन् शेषोऽन्तःकरणे समुत्पन्नां प्रीतिं कथं केनान्येन प्रकारेणाविष्करोति प्रकटयति वयं तत् न विद्मः । आश्चर्यरूपकीर्तिरयमिति भावः । सहस्रमुखत्वाद् दृश इति बहुत्वम्[१] ॥ ३९ ॥

**आचूडाग्रममज्जयज्जयपटुर्यच्छल्यदण्डा—नयं—संरम्भे रिपुराजकुञ्जरघटाकुम्भस्थलेषु स्थिरान् । सा सेवास्य पृथुः प्रसीदति तया नास्मै कुतस्त्वत्कुच—स्पर्धागार्धिषु तेषु तान्धृतवते दण्डान्प्रचण्डानपि ॥ ४० ॥**

आचूडेति ॥ संरम्भे युद्धसम्भ्रमे सति जये पटुः रयं राजा रिपवश्च ते राजानश्च तेषां कुञ्जरघटाकुम्भस्थलेषु दूरनिखाततया स्थिरान् शल्यस्य अग्रलोहस्य सम्बन्धिनो दण्डाञ्शरान्प्रासान्वा आचूडाग्रं पुङ्खाग्रं मर्यादीकृत्य यदमज्जयन्निचखान सा अस्य एतत्कर्तृका त्वदीया पृथुर्महती सेवा । तया सेवया त्वम् अस्मै कुतो न प्रसीदसि । यतः—किम्भूताय—तव कुचस्पर्धागर्धिषु कुचसाम्याभिलाषिषु तेषु कुम्भस्थलेषु तान्पूर्वोक्तान्प्रचण्डान्दण्डान्धृतवतेऽपि कृतवतेऽपि । येन हि महती सेवा क्रियते तस्मै प्रसन्नीभूयते । अतिशूरोऽयं तस्माद्वृणीष्वेत्यर्थः ॥ ४० ॥

**स्मितश्रिया सृक्कणि लीयमानया**
**वितीर्णया तद्गुणशर्मणेव सा ।**
**उपाहसत्कीर्त्यमहत्त्वमेव तं**
**गिरां हि पारे निषधेन्द्रवैभवम् ॥ ४१ ॥**

स्मितेति ॥ सा भैमी स्मितश्रिया तं राजानमुपाहसदुपहसितवती । यतः—कीर्त्यं वर्णयितुं शक्यं महत्त्वं यस्य एवंभूतमेव । हि यस्मात्—निषधेन्द्रवैभवं

---

१ अत्रानुप्रासः, कीर्तेः पूतत्वेन रूपणाद्रूपकम्, एकस्य कीर्तिपूतस्य स्नानाद्यनेकाधारतयोक्तेः पर्यायः ।

१ अत्र स्रग्धरा वृत्तम् । अत्रानुप्रासः, विशेषणानां साभिप्रायत्वात् परिकरः ।२ अत्र शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः, स्पर्धागर्धिष्वित्युपमा ।

नलसामर्थ्यं गिरां पारे वागगोचरः । वर्णयितुमपि न शक्यत इत्यर्थः । नलादेतस्य न्यूनत्वादुपहास इत्यर्थः । किंभूतया स्मितश्रिया—तद्गुणशर्मणा तदीयगुणाकर्णनसमुत्पन्नेन सुखेन वितीर्णयेव दत्तयेव कृतयेव । तथा—सृक्कणि ओष्ठप्रान्ते लीयमानया संसर्गिण्या । कीर्त्यमित्यसद्गुणारोपणार्थसूचकं पदम् ॥ ४१ ॥

निजाक्षिलक्ष्मीहसितैणशावका-
मसावभाणीदपरं परंतपम् ।
पुरैव तद्दिग्वलनश्रियां भुवा
भ्रुवा विनिर्दिश्य सभासभाजितम् ॥ ४२ ॥

निजेति ॥ असौ वाणी अपरमन्यं परंतपं राजानं भ्रुवा पुरैव पूर्वमेव विनिर्दिश्य दर्शयित्वा तां भैमीमभाणीदुवाच । किंभूता—निजाक्ष्णोर्लक्ष्म्या नेत्रकान्त्या हसित एणशावको मृगशिशुर्यया । किंभूतया भ्रुवा—तस्य वर्णनीयस्य राज्ञो दिशा तत्संमुखं वलनेन दक्पातेन कृत्वा याः श्रियस्तासां भुवा स्थानभूतया । किंभूतमेनम्—सभया सभास्थैः मनोज्ञतया सभाजितं दृष्टं पूजितं वा रिपुतापकरत्वादन्वर्थनामानं वा ॥ ४२ ॥

कृपा नृपाणामुपरि क्वचिन्न ते
नतेन हा हा शिरसा रसादृशाम् ।
भवन्तु तावत्तव लोचनाञ्चला
निपेयनेपालनृपालपालयः ॥ ४३ ॥

कृपेति ॥ हे भैमि, ते तव नृपाणां मध्ये क्वचिदप्युपरि कस्याप्युपरि कृपा नास्ति । हा हा कष्टं कष्टम् । कमप्यवलोकयस्यपि नेति न युक्तमित्यर्थः । किंभूतानाम्—त्वत्कृतावज्ञावशाल्लज्जया नतेन शिरसा रसायां भूमौ दृग्येषाम् । रसां पश्यन्तीति वा । अन्यत्र कृपा मा भून्नाम तावत् । किंतु तव लोचनाञ्चला अपाङ्गदंशाः निपेयः सादरावलोकनार्हो यो नेपालानां देशानां नृपालो राजा तं पिबन्ति सादरं पश्यन्ति एवंभूता अलयो भ्रमरभूता भवन्तु । एनं तावत्कटाक्षैर्विलोकयेत्यर्थः ॥ ४३ ॥

ऋजुत्वमौनश्रुतिपारगामिता
यदीयमेतत्परमेव हिंसितुम् ।
अतीव विश्वासविधायि चेष्टितं
बहुर्महानस्य स दाम्भिकः शरः ॥ ४४ ॥

ऋजुत्वेति ॥ ऋजुत्वमवक्रता नम्रत्वप्रियवादित्वादिरूपा विनीतता च । तथा—मौनं निःशब्दत्वं वाङ्नियमश्च । श्रुतिपारगामिता आकर्णपूर्णता वेदपारगामिता चाऽएवंरूपम् अतीवातितरां विश्वासकारि विगतश्वासकारि मनसि हितप्रत्ययकारकं च अलीकपवनाभ्यासवशाद्वा श्वासाभावकारि यदीयमेतच्चेष्टितं परं शत्रुं स्वव्यतिरिक्तं च सर्वं जनं हिंसितुमेव हन्तुमेव प्राणप्रियधनग्रहणार्थमेव च न तु लक्षव्यधनमात्रप्रयोजनं,न चार्जवादिगुणार्जनं प्रयोजनम् । सः अस्य बहुरसंख्यः महानक्षयोऽतिदीर्घश्च शरः दाम्भिकः । ' दम्भेन चरति ' इति रूपम् । अतिशूरोऽयमिति भावः । दाम्भिके यावद्वृत्तं तत्सर्वमेतस्य शरे विद्यत इत्यर्थः । दाम्भिकेन यत्क्रियते तदेतच्छरेण क्रियत इत्यर्थः । इति वा । दम्भो हिंसा माया च प्रयोजनमस्य, ' प्रयोजनम् ५।१।१०९ ' इति ठक् । तेन चरति वा, ' चरति ४।४।८ ' इति ठक् ॥ ४४ ॥

रिपूनवाप्यापि गतोऽवकीर्णिता-
मयं न यावज्जनरञ्जनव्रती ।
भृशं विरक्तानपि रक्तवत्तरा-
न्निकृत्य यत्तानसृजासृजद्युधि ॥ ४५ ॥

रिपूनिति ॥ यावन्तो जनास्तावतां रञ्जनं तदेव व्रतं तदस्यास्तीति एवंभूतोऽयं राजा रिपूनप्यवाप्य । रिपून्प्राप्यापि वा । अवकीर्णितां क्षततव्रत्वं न गतः प्राप्तः । यत् यस्मात्स्वशरीरादिविषये भृशं विरक्ताननुरागिणोऽपि । अथ च—एनं दृष्ट्वा विगतरुधिरानपि तान्रिपून् युधि निकृत्य बाणैश्छित्त्वा असृजा रुधिरेण कृत्वा रक्तवत्तरान्रक्तवन्तोऽनुरागिणः । अथ च रक्तं विद्यते येषु ते रक्तवन्तः अतिशयेन रक्तवन्तो रक्तवत्तराः एवंभूतांस्तानसृजचकार । वैरिणामपि रञ्जनात्क्षतव्रतत्वं न जातमित्यर्थः । रक्तवत्तरान् क्तवतुमतुप् च ॥ ४५ ॥

पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा
पतङ्गः स्यादङ्गीकृततमपतङ्गापदुदयः ।

---

१ इतः प्रभृति पद्यपञ्चके वंशस्थविलं छन्दः । अत्रानुप्रासः, गिरां हीत्यर्थान्तरन्यासः, शर्म्मणेवेत्युत्प्रेक्षा २ अत्रानुप्रासः, परमिति सभेतिच यमकं च । श्रियां भूत्वेन भ्रुवो रूपणाद्रूपकम् । ३ अत्रानुप्रासः । रसेति पालेति च यमकम् ।

१अत्रानुप्रासः । दाम्भिकः शर इति रूपकम् । जीवातुकारास्तु शरो दाम्भिक इवेत्युत्प्रेक्षा गम्यत इत्याहुः ।

यशोऽमुष्येवोपार्जयितुमसमर्थेन विधिना
कथञ्चित्क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः॥

पततीति ॥ पतङ्गः सूर्यः एतस्य तेज एव हुतभुगग्निस्तस्मिन् यदि कदाचित्कस्मिन्नपि समये पतति तदा तर्हि अङ्गीकृततमः भृशमङ्गीकृतः पतङ्गानां शलभानां देहदाहलक्षणाया आपद उदयो येन एवम्भूत एव स्यात् । एतत्तेजसाऽतितरां संतापवशात्पीडितः स्यात् । एतत्तेजोऽपेक्षया सूर्यो हीनः वह्न्यपेक्षया शलभतुल्य इत्यर्थः । तथा—अमुष्य यशः कथंचित्केनापि प्रकारेणोपार्जयितुमसमर्थेनेव विधिना ब्रह्मणा अतिमहान्क्षीराम्भोनिधिरपि तस्य एतदीययशसः प्रतिनिधिरनुकल्पः कृतः । कथंचित्कृत इति वा । यश एव यशःसदृशमिति वा । मुख्याभावे हि प्रतिनिधिरपि क्रियते।क्षीरादप्युज्ज्वलमस्य यश इत्यर्थः । एवंविधः प्रतापवान्यशस्वी च कोऽपि नास्तीति भावः । मुख्यापेक्षया प्रतिनिधेर्न्यूनत्वादेकद्वीपव्यापिनः क्षीरोदादशेषद्वीपव्यापिन्याः कीर्तेराधिक्याच्च ॥ ४६ ॥

यावत्पौलस्त्यवास्तूभवदुभयहरिल्लोमलेखोत्तरीये—सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्तिः । यावत्प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रा—वद्रीसंध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ४७॥

यावदिति ॥ हे भैमि, सेतुप्रालेयशैलौ श्रीरघुनाथकृतः सेतुः प्रालेयशैलश्च हिमाचलः तौ यावत् यावन्तं देशमभिव्याप्य तिष्ठतः यावत्कालं तौ वर्तेते वा । एतस्य नरपतेः कीर्तिस्तावत्पर्यन्तं चरति भ्रमति । किंभूतौ शैलौ—पुलस्त्यगोत्रापत्ययो रावणकुबेरयोः अवास्तू अगृहभूमिभूते अपि वास्तू भवन्त्यौ गृहभूमित्वं प्राप्ते उभे द्वे अपि ये हरितौ दक्षिणोत्तरे दिशौ तयोः क्रमेण श्यामत्वाच्छुभ्रत्वाच्च रोमरेखा रोमावली उत्तरीयं पूर्वकायावरणवस्त्रं तद्रूपौ । समुद्रबन्धनशिलापरम्परा दक्षिणदिशो रोमस्थानीया । हिमाचलश्चोत्तरदिग्वस्त्रस्थानीयः । तथा—प्राक्च प्रत्यक्च आशे प्राचीप्रतीच्यौ दिशौ तयोः परिवृढौ स्वामिनौ इन्द्रवरुणौ तयोः ये नगरे तयोर्यदारम्भणमारम्भस्तस्मिन् । स्तम्भयोरिव सुन्दरी मुद्रा आकारो ययोस्तौ उभावद्री उदयास्ताचलौ च यावन्तं देशमभिव्याप्य तिष्ठतः । पूर्ववत् । किंभूतावद्री—प्रातःसायंसंध्ये एव रक्तत्वात्पताकारुची ताभ्यां रचिता निर्मिता शिखायां शिखरे शोणा रक्ता शोभा ययोस्तौ । पौलस्त्य इति गोत्रापत्ये गर्गादित्वाद्यञ् । वास्तूभवादिति, 'च्वौ च ७।४।२६' इति दीर्घः । उभौ अवयवौ ययोस्ते उभय्यौ ते च ते हरितौ चेति समासे पुंवद्भाव इष्टे वा ॥ ४७ ॥

युद्धा चाभिमुखं रणस्य चरणस्यैवादसीयस्य वा—बुद्ध्वाऽन्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः । छिन्नं वावनतीभवन्निजभियः खिन्नं भरेणाथ वा राज्ञानेन हठाद्विलोठितमभूद्भूमावरीणां शिरः ॥ ४८ ॥

युद्धेति ॥ अनेन राज्ञा अरीणां शिरः भूमौ हठाद्बलात्कारेण विलोठितं झटिति छेदात्स्फुरद्भ्रमणमभूत् । किंभूतानामरीणाम्—अदसीयस्यामुष्यायम् अदसीयस्तस्य रणस्याभिमुखं संमुखम् । प्रारम्भमभि लक्ष्यीकृत्य वा । बाणावलीः शरपंक्तीरुन्मुच्य मुक्त्वा युद्ध्वा वा निपतताम् । बाणपंक्तिवर्षणेन युद्धं कृत्वा रणभूमौ पततामिति यावत् । अथ च—अन्तःकरणे स्वपरान्तरं स्वस्य आत्मनः परस्य चान्तरं न्यूनाधिकत्वतारतम्यं बुद्ध्वा वा अदसीयस्य चरणस्यैवाभिमुखं बाणावलीरुन्मुच्य निरायुधीभूय निपतताम् । एतच्चरणयोर्दण्डवन्नमस्कारं कुर्वताम् । किंभूतं शिरः–( रणसंमुखपक्षे ) छिन्नं वा बाणैः खण्डितं सत् वा अवनतीभवत् नतग्रीवं भूमौ पतितं सत् । तथा—( चरणपक्षे )—अथवा निजभियो भरेण स्वीयभयबाहुल्येन वा खिन्नं सत् अवनतीभवत् । ( द्वितीयपक्षे ) बलाद्विलोठितं वामदक्षिणभागस्पर्शकारीकृतम् । वैरिणो यदि युध्यन्ते तर्हि म्रियन्त एव । ये तु विचारका भीरवश्च, ते शस्त्राणि परित्यज्य एनमेव शरणं गच्छन्ति जीवन्तीति । एवकारेणान्यः शरण्यो न

१ अत्र शिखरिणी छन्दः, 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति तल्लक्षणात् । तेजसो हुतभुक्त्वेन रूपणाद्रूपकम्, सूर्यस्यापि तत्तेजःकर्तृकत्वेन दाहसम्बन्धासम्भवेऽपि तथोक्तेरतिशयोक्तिः । एवं परार्द्धेऽपि ।

१ अत्र स्रग्धरा वृत्तम् । रामापेक्षयैतस्य नृपस्य पूर्ववर्तित्वादिदमयुक्तमिव तदा वक्तुमिति विभाव्यम् । अत्रानुप्रासः, रूपकं च ।

विद्धत इति सूचितम् । अन्यदपि भाराक्रान्तं नम्रं भवति । वाशब्दः प्रत्येकविकल्पे ॥ ४८ ॥

न तूणादुद्धारे न गुणघटने नाश्रुतिशिखं समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि । नृणां पश्यत्यस्य क्वचन विशिखान्किं तु पतित-द्विषद्वक्षःश्वभ्रैरनुमितिरसून्गोचरयति ॥ ४९ ॥

नेति ॥ युद्धकौतुकदर्शिनां नृणां मनुष्याणां दृष्टिः अस्य विशिखान् क्वचन कस्मिन्नपि तूणादुद्धारे निष्कासने उपादानकाले न पश्यतीति सर्वत्र संबन्धः । तथा— कस्मिन्नपि गुणघटने मौर्व्यां संधानकाले न । आश्रुतिशिखं कर्णाग्रमर्यादीकृत्य समाकृष्टौ कस्मिन्नपि सम्यगाकर्षणकाले न । तथा—मोचनानन्तरं वियति कस्मिन्नपि गगनदेशे न।तथा—शत्रून्निर्भिद्य ततो निर्गत्य भुवि कस्मिन्नपि भूप्रदेशे पतितान्न पश्यति । तर्हि किंतु पतितानां बाणाघातकृतमर्मवेधवशाद्गतप्राणानां भूयिष्ठानां द्विषतां वक्षसः श्वभ्रैर्दृढं प्रहृत्य बहिर्निर्गतशरकृतच्छिद्रैः कृत्वा या अनुमितिरनुमानज्ञानम् असून्बाणान्गोचरयति ज्ञापयति । चेदनेन बाणा न मुक्तास्तर्ह्येतेषां वक्षसि छिद्राणि कथं भवेयुरित्याद्यनुमितिः । 'चक्षुःश्वभ्रैः' इति पाठे चक्षुष्येव विध्यतीति भावः ॥ ४९ ॥

दमस्वसुश्चित्तमवेत्य हासिका
जगाद देवीं कियदस्य वक्ष्यसि ।
भण प्रभूते जगति स्थिते गुणै-
रिहाप्यते सङ्कटवासयातना ॥ ५० ॥

दमेति ॥ हासयतीति हासिका अतिनीचा चेटी दमस्वसुः चित्तं तद्वर्णनबाहुल्यनिरपेक्षं तस्मिन्ननुरक्तं न्वावेत्य ज्ञात्वा देवीं सरस्वतीं जगाद। हे देवि,अस्य कियत् एतदीयं कियच्चरितं वक्ष्यसि वर्णयिष्यसि। अपि तु बहुत्वात्प्रत्येकं वर्णयितुं न शक्यत इत्यर्थः । गुणैः सौन्दर्यादिभिः प्रभूते महति जगति स्थितेऽपि इह नृपे सङ्कटवासरूपा सम्मर्दवसतिरूपा यातना सङ्कटवासेन वा यातना तीव्रवेदना आप्यते प्राप्यत इति भण कथय । सर्वे गुणाः सर्वं जगत्परित्यज्यास्मिन्नेव संमर्देन निवसन्तीत्येकेनैवाकारेण वर्णय । पृथग्वर्णनासामर्थ्यादित्यर्थः । वाक्यार्थः कर्म । अथ च भूयसि वर्तमाने जगति मध्ये गुणैरिहैव कष्टरूपा वसतिपीडा प्राप्यते न त्वन्यत्र । एतन्निवासे गुणा उद्विजन्त एवानर्हत्वादेकोऽपि गुणोऽत्र नास्तीति भणेत्युपहासः । अस्य कियद्वक्ष्यसि कथय । अतः परं मा स्म वादीः । तस्मान्निर्गुणमेनं गुणित्वेन कियन्तं कालं वर्णयिष्यसीति कथयेति वा । 'स्थितैः' इति पाठे गुणविशेषणम् । प्रभूतैरिति च ॥ ५० ॥

ब्रवीति दासीह किमप्यसङ्गतं
ततोऽपि नीचेयमतिप्रगल्भते ।
अहो सभा(ऽ) साधुरितीरिणः क्रुधा
न्यषेधदेतत्क्षितिपानुगाञ्जनः ॥ ५१ ॥

ब्रवीतीति ॥ जनः प्रेक्षकः क्रुधा स्वस्वामिवर्णनविघातसमुत्पन्नेन क्रोधेन इतीरिणो भाषमाणान् एतस्य क्षितिपस्यानुगाननुचरान् न्यषेधन्निवारयामास । इति किम्—इह सभायां भैम्या दासी किमपि असंगतमयुक्तं ब्रवीति 'चलेऽपि काकस्य' इत्यादि भाषते । ततोऽपि सकाशान्नीचा इयं चेटी अतिप्रगल्भते नितरां धृष्टतया भाषते । नियामकः कोऽपि नास्ति । अहो अयुक्तवादाश्चर्यं साधुः सभा । विरुद्धलक्षणया काक्वा अकारप्रश्लेषेण वाऽसाधुरेतादृशी सभा न कुत्रापीति । ब्रवीति, वर्तमानसामीप्ये भूते लट् । 'शशंस' इति वा पाठः समीचीनः । गल्भङ् धृष्टत्वे ॥ ५१ ॥

अथान्यमुद्दिश्य नृपं कृपामयी
मुखेन तद्दिङ्मुखसम्मुखेन सा ।
दमस्वसारं वदति स्म देवता
गिरामिलाभूवदतिस्मरश्रियम् ॥ ५२॥

अथेति ॥ अथ कृपामयी बहुलकृपा सा गिरां देवता मुखेन अन्यं नृपमुद्दिश्य निर्दिश्य दमस्वसारं वदति स्म । किंभूतेन—तस्योद्देश्यस्य नृपस्य दिङ्मुखं दिग्विभागस्तस्य संमुखेन । किंभूतं नृपम्—इलाभूवत्पुरूरवसमिव अतिक्रान्तस्मरा श्रीर्यस्य तम् ॥ ५२ ॥

१ अत्र शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः,रणेति यमकं च। अरीणां शिरसो विलुण्ठनविकल्पनात्कोर्विकल्पः। २ अत्र शिखरिणी छन्दः,अत्रानुप्रासः, वेगातिशयोक्तिश्च ।

१ इतः प्रभृति पद्यषट्के वंशस्थविलं छन्दः,२ कृपामयीति रूपकम् । अतिस्मरेतिव्यतिरेकः ।

विलोचनेन्दीवरवासवासितैः
सितैरपाङ्गाध्वगचन्द्रिकाञ्चलैः ।
त्रपामपाकृत्य निभान्निभालय
क्षितिक्षितं भालयमालयं रुचः ॥५३॥

विलोचनेति ॥ भैमि, त्वम् अपाङ्गाध्वगाया नेत्रप्रान्तरूपमार्गगामिन्याश्चन्द्रिकाया नेत्रमध्यगनीलगोलकस्य अञ्चलैरिवाञ्चलैरतिदीर्घैर्विलोकनव्यापारैः । कटाक्षैरिति यावत् । तैः कृत्वा निभाद्वस्त्वन्तरविलोकनव्याजात्त्रपामपाकृत्य मालयं मलयाद्रिस्वामिनं मायाः संपद्रूपाया लक्ष्म्या आलयं वा क्षितिक्षितं निभालय विलोकय । किंभूतैरञ्चलैः—विलोचने एव इन्दीवरे नीलोत्पले नीलोत्पलतुल्ये नेत्रे तयोर्मध्ये वासः स्थितिस्तया वासितैर्भावितैः। नयननीलिम्ना नीलीकृतैरित्यर्थः । तथा—सितैः शुभ्रैर्नीलश्वेतकान्तिभिः । कटाक्षैर्विलोकयेत्यर्थः । अथ च—विलोचनतुल्यानां नीलोत्पलानां वासेन परिमलेन सुगन्धीकृतैः सितैस्तिर्यगायतत्वीलत्वादपाङ्गतुल्यमार्गगामिन्या ज्योत्स्नाया अञ्चलैः करैरुपलक्षितम् । तथा—कान्तेः स्थानम् । तथा–मः शिव आलयो यस्य । शिवमौलिनिवासिनं चन्द्रमेवैनं राजानं त्रपामपाकृत्य पश्येत्यर्थः । 'मः शिवे मा च पद्मायाम्' इति विश्वः । निभालय, चुरादावात्मनेपादिनः पाठात्परस्मैपदं चिन्त्यम् । निभालनं निभालस्तद्वान्निभालवान् तादृशं कुर्विति 'तत्करोति तदाचष्टे' इति णिचि मतुब्लोपे साधनीयम् ॥ ५३ ॥

इमं परित्यज्य परं रणादरिः
स्वमेव भग्नः शरणं मुधाविशत् ।
न वेत्ति यत्त्रातुमितः कृतस्मयो
न दुर्गया शैलभुवाऽपि शक्यते॥५४॥

इममिति ॥ हे भैमि, रणाद्भग्नः पलायितः कृतस्मयः कृतगर्वोऽरिः एतस्य शत्रुः परं शत्रुभूतम् । अथ च महान्तम् । इमं परित्यज्य स्वमेव स्वमेव शरणं गृहं मुधा वृथा अविशत् । त्वदीयोऽहं मां रक्षेत्युक्त्वा एनमेव शरणं रक्षितारं कृतगर्वत्वादप्राप्य स्वगृहं वृथैव गत इत्यर्थः । यद्यऽस्मात् दुर्गया विषमया शैलस्य भूतया । गिरिदुर्गेणेत्यर्थः।तयाऽपि इतोऽस्मान्नृपात्त्रातुं न शक्यत इति न वेत्ति । गिरिदुर्गं प्रविष्टोऽपि बलात्ततोऽपकृष्य हन्यते । स्वगृहं प्रविष्टो हन्यत इति किं वाच्यम् । अतः स्वगृहप्रवेशो व्यर्थ इत्यर्थः । अथ च पर्वतपुत्र्या दुर्गयाऽपि त्रातुं न शक्यते, धृतदर्पं हन्त्येव, शरणागतं रक्षत्येवायमिति भावः । 'शरणं गृहरक्षित्रोः' इत्यमरः ५४

अनेन राज्ञार्थिषु दुर्भगीकृतो
भवन्घनध्वानजरत्नमेदुरः ।
तथा विदूराद्रिरदूरतां गमी
यथा स गामी तव केलिशैलताम् ॥५५॥

अनेनेति ॥ एतद्वरणेन सः अतिप्रसिद्धो विशेषेण दूरोऽद्रिः । अथ च विदूरनामा रोहणाचलः । तथा तेन प्रकारेणादूरतां सामीप्यं गमी गन्ता । यथा येन प्रकारेण तव केलिशैलतां क्रीडापर्वतत्वं गामी गमिष्यति । किंभूतः—अतिवदान्येनानेन राज्ञार्थिषु याचकेषु विषये दुर्भगीकृत उपेक्षाविषयतामयाचनीयतां वा प्रापितः। अत एव व्ययाभावान्नवा घना मेघास्तेषां ध्वानः शब्दस्तस्माज्जातै रत्नैर्मेदुरः परिपुष्टो भवन् । विदूराद्रौ हि नवमेघशब्दाद्रत्नशलाका उत्पद्यन्ते ताश्च याचकैर्नीयन्ते । अस्मिंस्तु बहुप्रदे सति तत्र कस्यापि याचकस्यागमनाद्व्ययाभावाद्रत्नैः कृत्वा त्वदुपवनं यावन्मेदुरो भवति स एव रत्नमयत्वात्तव क्रीडापर्वतस्थाने भविष्यति । अतिवदान्योऽयमिति भावः । 'भवद्घनध्वान–' इति पाठे भवद्भ्य उत्पन्नेभ्यो धनध्यानेभ्य इति व्याख्येयम् । गमी गामी इति पूर्ववत् ॥ ५५ ॥

नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गजात–च्छायान्तःपातचन्द्रायितचरणनखश्रेणिरैणेयनेत्रे । दृप्तारिप्राणवातामृतरसलहरीभूरिपानेन पीनं–भूलोकस्यैष भर्ता भुजभुजगयुगं सांयुगीनं बिभर्ति ॥ ५६ ॥

नम्रेति ॥ हे ऐणेयो हरिणपोतस्तन्नेत्रवन्नेत्रे यस्यास्तत्संबुद्धिः एण्यवयवभूते नेत्रे वा यस्याः, भूलोकस्य भर्ता एष राजा संयुगे साधु सांयुगीनं रणरसिकं भुजद्वयरूपं भुजगयुगं सर्पद्वयं बिभर्ति । किंभूतः—नम्राः प्रत्यर्थिपृथ्वीपतयः शत्रुनृपास्तेषां मुखान्येव कमलानि तेषां लज्जया म्लानता तद्रूपा भृङ्गेभ्यो जाता छाया भ्रमरसंबन्धिनी या शोभा कृष्णता तस्या अन्तःपातेन नखमध्ये

१ अत्रानुप्रासः,मालेति निभेति च यमकं च विलोचनेन्दीवरेति, चन्द्रिकाऽञ्चलैरिति च रूपकम् ।

१ अत्रानुप्रासः, प्रागुक्तस्य परार्द्धेन समर्थनादर्थान्तरन्यासः । २ अत्राप्यनुप्रासः ।

प्रतिविम्बितेन चन्द्रायिता चन्द्रवदाचरिता चरणनखश्रेणिर्यस्य । किंभूतम्—दष्टानां सदर्पाणामरीणां प्राणाख्या वाता एवातिप्रियत्वादमृतरसस्तस्य लहरीणां तरङ्गाणां भूरि अतितरां पानेन पीनं पीवरं सगर्वनृपप्राणवियोगकरणेनोर्जस्वि । समानाकारत्वादतिक्रूरकर्मत्वाच्च भुजयोः सर्पत्वम् । सर्पाणां च पवनाशनत्वात्प्राणाख्यैः पवनैः पीनत्वं युक्तम् । दर्परहितांश्चरणपातिनो वैरिणो रक्षति, सदर्पाननम्रान्मारयत्ययमिति भावः ।ऐणेयम् एण्या अपत्यम्, 'स्त्रीभ्यो ढक् । ४ । १ । १२०' एण्या अवयवा इत्यर्थे 'एण्या ढञ् । ४ । १ । १५९' सांयुगीनम्, साध्वर्थे प्रतिजनादित्वात्खञ् ॥ ५६ ॥

**अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेषस्याहेर्भूयःफणसमुचितः काययष्टीनिकायः । दुग्धाम्भोधेर्मुनिचुलकनत्रासनाशाभ्युपायः कायव्यूहः क्व जगति न जागर्त्यदःकीर्तिपूरः ॥ ५७ ॥**[1]

अध्याहार इति ॥ अमुष्य कीर्तिपूरः क्व कस्मिञ्जगति लोके न जागर्ति प्रकाशते। अपि तु स्वर्गपातालमर्त्यलोकेषु स्फुरति । लोकत्रयव्यापित्वं क्रमेणाह—किम्भूतः—स्मरहरशिरसि यश्चन्द्रस्तस्य यः शेष एककला तस्या अध्याहारो लक्षणया पञ्चदशकलाभिः पूरकः । स्वर्गं गत्वा शिवशिरःस्थितश्चन्द्रो येन षोडशकलः क्रियत इत्यर्थः । अन्यत्राप्यपूर्णवाक्ये किमपि योग्यं पदान्तरमध्याहृत्य वाक्यपूरणं क्रियते । तथा शेषस्याहेः सर्पराजस्य भूयांसः सहस्रसंख्याकाः फणास्तेषां समुचितो योग्योऽतिदीर्घः काययष्टिनिकायः शरीरदण्डिकासमूहः । फणसहस्रस्य शरीरसहस्रेण भवितव्यम् । पातालं गत्वा तदीयशिष्टशरीरपूरणं क्रियते इत्यर्थः ॥ तथा—मुनेरगस्त्यस्य चुलकनं संकुचितहस्तपानं तस्माद्यस्त्रासो भयं तस्य नाशे निरासे आभि, सामस्त्येनोपायः साधनम् । दुग्धाम्भोधेः कायव्यूहः शरीरसङ्घः । पूर्वमेकाकित्वेन पानाद्भयमभूत्, इदानीमेतद्यशोरूपानेकशरीरधारणात् । एकस्यानेकपाने सामर्थ्याभावाजलमात्रस्य च क्षीरतापादनाद्दुग्धयशसोश्च सरूपत्वाद्दुग्धे यशोभ्रमः यशसि दुग्धभ्रम इति दुग्धयशसोर्निर्णेतुमशक्यत्वात्पानाभावाद्भयाभावसाधनभूतः क्षीरोदधेः कायव्यूह इत्यर्थः ॥ ५७ ॥

**राज्ञामस्य शतेन किं कलयतो हेतिं शतघ्नीं कृतं—लक्षैर्लक्षभिदो दशैव जयतः पद्मानि पद्मैरलम् । कर्तुं सर्वपरिच्छिदः किमपि नो शक्यं परार्धेन वा—तत्सङ्ख्यापगमं विनाऽस्ति न गतिः काचिद्द्वतैतद्द्विषाम् ॥ ५८ ॥**[2]

राज्ञामिति ॥ नाम्ना शतघ्नीं चतुःशतीलोहकण्टकसंचितां हेतिं शस्त्रं कलयतो धारयतोऽस्य राज्ञां शतेन किम् । तेन शस्त्रेण मारणात्तैरनेकैरप्यस्य किमपि कर्तुं न शक्यत इत्यर्थः । अथ च यः शतमारणसमर्थं शस्त्रं गृह्णाति तस्य शतसंख्यामितैः राजभिः किमपि कर्तुं न शक्यते । तथा—राज्ञां लक्षैः पूर्यताम् । यतः—लक्षं वेध्यं भिनत्तीति लक्षभित्तस्य लक्षभिदः । यो हि कुत्रचिदप्यप्रतिहतसायकस्तस्य लक्षसंख्यैरपि किमपि कर्तुं न शक्यत इत्यर्थः । तथा—राज्ञां पद्मैः पद्मसख्यै राजभिरपि किम्। तैरप्यस्य किमपि कर्तुं न शक्यते।यतः—दशैव पद्मानि कमलानि पद्मसंख्याकान्वैरिणश्च जयतः । यो हि कमलतुल्यनेत्रस्तस्य शत्रुतः पराभवो न । अथ च भ्रूक्षेपमात्रेण पद्मसंख्यापरिमितान्राज्ञो जयति तस्य पद्मसंख्यै राजभिः किमपि कर्तुं न शक्यते । तथा—वा समुच्चये । राज्ञां परार्धेनापि परार्धसंख्यै राजभिरस्य किमपि कर्तुं नो शक्यम् । यतः—सर्वे च ते परे शत्रवश्च तांश्छिनत्ति तस्य । यो हि वैरिमात्रहनने समर्थस्तस्य परार्धसंख्याः शत्रवः किं कुर्वन्तु । तत्तस्मात् एतस्य द्विषां संख्याग्रहणादपगमं पलायनम् । अथ च—परार्धरूपायाः संख्याया अप्यपगमं परित्यागम् असंख्यत्वं विना काचिद्गतिः प्रकारो नास्ति बत खेदे । असंख्येयाश्चेदभविष्यंस्तर्ह्यजीविष्यन् । असंख्येयं नास्ति तस्मात्पलायनमेव जीवनोपायः । पलायितान्न हन्तीत्यर्थः । 'लक्षं शरव्ये सङ्ख्यायाम्' । शतघ्नीम्, 'अमनुष्यकर्तृके च । ३ । २ । ५३' इति टक् ॥ ५८ ॥

---

[1] अत्र स्रग्धरा वृत्तम् ।

[2] अत्र मन्दाक्रान्ता छन्दः, अनुप्रासः, शेषेति कायेति च यमकम् । कीर्तिपूरस्य विष्वक्त्वायोगेऽपि तथोक्तेरतिशयोक्तिः, असौ च चन्द्रे शेषाध्याहारत्वादिरूपकोत्थापिता । २ अत्र शार्दूलविक्रीडितं वृत्तम् । अनुप्रासः, द्विपद्गतिमत्त्वस्य सङ्ख्याऽपगमतदपगमयोरुभयोः प्राप्तस्य पूर्वत्वनिषेधस्य नियमनात् परिसङ्ख्या 'एकस्यानेकत्रनियमनं परिसङ्ख्या' इत्यलङ्कारसर्वस्वकारोक्तेरिति जीवातौ स्पष्टम् ।

वयस्ययाऽऽकूतविदा दमस्वसुः
स्मितं वितत्याभिदधेऽथ भारती ।
इतः परेषामपि पश्य याचतां
भवन्मुखेन स्वनिवेदनत्वराम् ॥ ५९ ॥

वयस्ययेति ॥ अथ दमस्वसुः आकूतविदाऽभिप्रायज्ञया वयस्यया सख्या स्मितं वितत्य हसितं कृत्वा भारती इत्यभिदधे उक्ता । इति किम्—हे भारति,त्वं भवन्मुखेन त्वन्मुखेन स्ववर्णनं याचतां प्रार्थयमानानाम् इतोऽस्मान्नृपात्परेषामन्येषां स्वनिवेदने स्ववर्णने एव त्वरां कालविलम्बासहत्वं पश्य । एतद्वर्णनाद्विरमेति भावः । अन्यानपि वर्णयेत्यर्थः ॥ ५९ ॥

कृताऽत्र देवी वचनाधिकारिणी
त्वमुत्तरं दासि ददासि कासती ।
इतीरिणस्तन्नृपपारिपार्श्विकान्
स्वभर्तुरेव भ्रुकुटिर्न्यवर्तयत् ॥ ६० ॥

कृतेति ॥ स्वभर्तुः स्वस्वामिन एव भ्रुकुटिः कोपवशाद् भ्रूभङ्ग इति पूर्वोक्तम् ईरिणो भाषमाणान् तान्नृपपारिपार्श्विकान्निजसेवकान् न्यवर्तयन्न्यषेधयत् । भ्रूक्षेपमात्रेण तेनैव ते निवारिता इत्यर्थः । इति किम्—हे दासि, अत्र राजवर्णने वचनाधिकारिणी भाषणाधिकारिणी देवी कृता, त्वं का सती का भवन्ती केन प्रयुक्ता सती । अथ च–असती कुलटा का त्वमुत्तरं ददासि अत्र वक्तुमयोग्येति । पारिपार्श्विकान्, परिपार्श्वे वर्तन्ते पारिपार्श्विकाः 'परिमुखं च । ४ । ४ । २९ ।' इति चकाराट्ठक् ॥ ६० ॥

धराधिराजं निजगाद भारती
तदुन्मुखेषद्वलिताङ्गसूचितम् ।
दमस्वसारं प्रति सारवत्तरं
कुलेन शीलेन च राजसूचितम् ॥ ६१ ॥

धरेति ॥ भारती दमस्वसारं प्रति धराधिराजं नृपं निजगाद कथयति स्मेत्यर्थः । किंभूतम्—तस्य वर्णनीयनृपस्योन्मुखं संमुखम् ईषद्वलितेन किंचित्परिवर्तितेनाङ्गेन करादिना सूचितं ज्ञापितम् । तथा—कुलेन शीलेन स्वभावेनाचरणेन वा राजसु मध्ये उचितं योग्यं श्रेष्ठम् । कुलशीलाभ्यां सारवत्तरं श्रेष्ठतरं वा ॥ ६१ ॥

१ अत्रानुप्रासः, दासीति यमकम् । २ अत्रानुप्रासः ।

कुतः कृतैवं वरलोकमागतं
प्रति प्रतिज्ञाऽनवलोकनाय ते ।
अपीयमेनं मिथिलापुरंदरं
निपीय दृष्टिः शिथिलाऽस्तु ते वरम् ६२

कुत इति ॥ हे भैमि, ते त्वया स्वयंवरार्थमागतं वरलोकं परिणेतृवृन्दं प्रति लक्षीकृत्य एवममुना दृश्यमानप्रकारेण अनवलोकनायादर्शनाय प्रतिज्ञा कुतः कस्मात्कारणात्कृता । अपि त्वयुक्तमेवैतत् । 'वा' इति पाठे कुतो वेत्यन्वयः । अनवलोकनायैवेत्यवधारणार्थो वा । न केवलमवरणायैव, किंतु—अनवलोकनायापीत्यप्यर्थो वा । किं तर्हि कर्तव्यमित्यत आह—हे भैमि, ते इयं दृष्टिः एनं मिथिलानगर्याः पुरंदरं स्वामिनं निपीयैव शिथिलाऽस्तु । एतद्वरम् । सर्वथानवलोकनाद्विलोकनं वरमिति राजान्तरवदननुरागेणाप्येनं विलोकयेत्यर्थः । अन्ये यद्यपि नावलोकितास्तथाप्येनं विलोकय। विलोकनेनाप्येनं सम्भावयेत्यर्थः । पूर्वश्लोके सामान्यत उक्तत्वादन्वादेशे एनमिति समर्थनीयम् ॥ ६२ ॥

न पाहि पाहीति यदब्रवीरमुं
ममौष्ठ तेनैवममूदिति क्रुधा ।
रणक्षितावस्य विरोधिमूर्धभि-
र्विदश्य दन्तैर्निजमोष्ठमास्यते ॥ ६३ ॥

न पाहीति ॥ अस्य विरोधिमूर्धभिर्वैरिशिरोभिः इति क्रुधा रणक्षितौ निजमोष्ठं दन्तैर्विदश्य विशेषेण दष्ट्वा आस्यते स्थीयते । इति किम्—हे ओष्ठ, त्वम् अमुं नृपं प्रति पाहि पाहीति यत् नाब्रवीः तेन कारणेन ममैवं भूमौ विलुण्ठनपूर्वं मरणमभूदिति । पाहि पाहीति यो वदति तमयं रक्षति । पाहीति पदोच्चारणे प्रथमं तवैव सामर्थ्यम् । पकारस्यौष्ठ्यत्वात् । त्वया च सदर्पत्वादनुच्चारणान्मामयं मारितवानिति त्वमेवापराधीत्यर्थः । शवमुष्टिन्यायेनाधरोष्ठो दष्ट एव तिष्ठति न तु मुक्त इति आस्यते इत्यनेन सूचितम् ॥ ६३ ॥

भुजेऽपसर्पत्यपि दक्षिणे गुणं
सहेपुणाऽऽदाय पुरःप्रसर्पिणे ।
धनुः परीरम्भमिवास्य सम्मदान्
महाहवे दित्सति वामबाहवे ॥ ६४ ॥

१ अत्रानुप्रासः, प्रतीति यमकं च । २ अत्रानुप्रासः । इति क्रुधेत्युत्प्रेक्षा ।

भुज इति ॥ महाहवे महति रणसम्मर्दे दक्षिणेऽपसव्ये । अथ च—सरलेऽनुकूलेऽपि भुजे इषुणा सह गुणं मौर्वीमप्यादाय गृहीत्वा अपसर्पति कर्णपश्चाद्देशं गच्छति सति पुरः प्रसर्पिणे रिपुसंमुखं यायिने दृढतरमुष्टयेऽस्य वामबाहवे सव्यभुजाय धनुः संमदादिव दृढतरत्वजाताद्दर्पादिव परीरम्भमालिङ्गनं दित्सति दातुमिच्छति दिरसतीवेति वा । अस्मिन्नपि गुणिनि विश्वासपात्रे सङ्ग्रामात्स्वजनमादाय पलायिते सति सङ्ग्रामं कर्तुं संमुखाय वामाय दुष्टायापि अयमेव साधुरिति मत्वा सुवंशजेन केनचिन्मध्यस्थेनालिङ्गनं दीयते । दृढमुष्टिरतिशूरोऽयमित्यर्थः । सङ्ग्रामे कर्णान्तपर्यन्तमात्रकर्षणाद्धनुश्चक्रीकृत्य शरान्मुञ्चन्नेवास्त इति भावः । वामबाहवे ददातियोगाच्चतुर्थी ॥ ६४ ॥

**अस्योर्वीरमणस्य पार्वणविधुद्वैराज्यसज्जं यशः—सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् । तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः—पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवादः किमु ॥ ६५ ॥**

अस्येति ॥ अस्य उर्वीरमणस्य राज्ञो यत् यश एतादृशम् । कीदृशं यशः—पर्वणि भवः पार्वणः पूर्णो विधुश्चन्द्रस्तस्य द्वैराज्ये द्वयो राज्ञोः कर्म तत्र सज्जं तत्परम् । पार्वणचन्द्रसदृशमित्यर्थः । तथा—सर्वेष्वङ्गेषूज्ज्वलस्य धवलस्य शर्वपर्वतस्य हरनिवासभूतकैलासस्य सितश्रीः श्वेतकान्तिस्तद्विषये यो गर्वस्तस्य निर्वासि निराकारकम् । कैलासादपि धवलतरम् । एवंभूतं यद्यशः । तत्कम्बुप्रतिबिम्बितं समुद्रशङ्खप्रतिबिम्बः किमु । तथा—शरदि पर्जन्यराजिर्मेघपङ्क्तिस्तस्या श्रीः धवलिमशोभा तस्याः पर्यायः किमु । शब्दस्य शब्दान्तरेणोच्चारणं पर्यायः । तथा—दुग्धसिन्धोः क्षीरोदस्य पयसां दुग्धानां सर्वेण प्रकारेणानुवादः पुनरभिधानं किमु । चन्द्रादितुल्यमेतद्यश इति भावः । अन्योऽप्यधिष्ठितद्वैराज्यः प्रतिपक्षं निरस्यति ॥ ६५ ॥

**निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटावट—स्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नायं करः । उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरंगक्षुरा—क्षुण्णासु क्षितिषु क्षिपन्निव यशः—क्षोणीजबीजव्रजम् ॥ ६६ ॥**

निस्त्रिंशेति ॥ अस्य नृपस्यायं दृश्यमानः करः कैः एवंभूत इव नोन्नीतो न तर्कितः । अपि तु सर्वैरप्येवमेव तर्कितः । कीदृशः करः निस्त्रिंशेन खड्गेन कृत्वा त्रुटितायाः खण्डनं प्राप्तायाः अरिवारणघटाया वैरिगजपरम्परायाः कुम्भानां गण्डस्थलानामस्थिकूटा अस्थिसमूहास्तेषामवटस्थाने गर्तलक्षणस्थाने स्थायुकः स्थितिशीलो मौक्तिकोत्करो मुक्तासङ्घस्तस्य किरः विक्षिपः । तथा—चत्वारि करिनररथतुरगलक्षणान्यङ्गानि येषामेवंभूतानि सैन्यानि येषु ते समराः सङ्ग्रामास्तेषु त्वङ्गन्तश्चित्रं गच्छन्तः तुरंगास्तेषां क्षुरैः चरणाग्रनखतीक्ष्णभागैः क्षुण्णासु विदलितासु कृष्टासु क्षितिषु रणक्षेत्रभूमिषु यशोलक्षणस्य क्षोणीजस्य वृक्षस्य तदुत्पादकं बीजव्रजं बीजसङ्घं क्षिपन्निव वपन्निव । यशोवृक्षस्य शुभ्रत्वात्तत्कारणेन बीजेन शुभ्रेणैव भवितव्यम् । अरिकरिकुम्भस्थमुक्ताफलानि बीजस्थाने जातानीत्यर्थः । अन्योऽपि पात्रस्थं बीजसङ्घं करेणाकृष्य हलकृष्टासु भूमिषु वपति । वैरिकरिणां हननादेतस्य बहु यशो जातमिति तैक्ष्ण्यात्क्षुरा इव क्षुराः खुरा इति, लक्षणाशब्दः । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः इति, 'डच्प्रकरणे 'संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम्' इति डच् । स्थायुकम्, 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् । ३ । २ । ५४ ।' इत्युकञ् । किरतीति किरः, 'इगुपधज्ञाप्रीकिरः कः' इति कः ॥ ६६ ॥

**अर्थिभ्रंशबहूभवत्फलभरव्याजेन कुब्जायितः सत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः । आस्ते निर्व्ययरत्नसम्पदुदयोदग्रः कथं याचक—श्रेणीवर्जनदुर्यशोनिबिडितव्रीडस्तु रत्नाचलः ॥ ६७ ॥**

अर्थीति ॥ स कल्पद्रुमः प्रसिद्धः केवलं कल्पितप्रदः, अस्मिन्राजनि अतिदानमतिशयितं दानं भजति सति अकल्पितमपि ददति सति अर्थिभ्रंशाद्याचकैर्वर्जनात्पूर्वम् अल्पान्यपि व्ययाभावाद्बहूभवन्ति बहूनि जायमानानि यानि फलानि तेषां भरव्याजेन भारगौरवमिषेण कुब्जायितः

---

१ अत्रानुप्रासः, हव इति यमकम् । इवेत्युत्प्रेक्षा ।
२ इतः प्रभृति पद्यत्रये शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः, उत्प्रेक्षा च ।

१ अत्रानुप्रासः उत्प्रेक्षा च ।

खर्वंवदाचरितोऽतिनम्रः सन् कथमप्यास्तां महता क्लेशेन। अथ च—लज्जागोपनप्रकारेणापि तिष्ठतु । कालं वाऽतिवाहयतु । नम्रत्वेन लज्जागोपनं युक्तमिति भावः । तु पुनः रत्नाचलो याचकश्रेण्या वर्जनात्परित्यागाज्जातेन दुर्यशसाऽपकीर्त्या निबिडिता घनीकृता व्रीडा लज्जा यस्य एवंभूतोऽपि याचकाभावात् निर्व्ययया ऽक्षयया रत्नसंपदा कृत्वा य उदयोऽनुस्यूता वृद्धिस्तेन उदग्र उच्चशिखरः । अथ च—अनम्र एव कथमास्ते । अपितु—लज्जितस्यानम्रत्वमयुक्तमेवेत्यर्थः । कल्पवृक्षस्य स्वर्गस्थितत्वाद्दुष्प्रापतया फलभारव्याजेन नम्रतया वा लज्जापरिहारः संभवी । रोहणाद्रेस्तु एतल्लोकनिवासाद्दुष्प्रापत्वाभावेऽपि याचकैर्वर्जनाल्लज्जातिशयान्नम्रत्वं युक्तं, तत्तु तस्य नास्तीत्याश्चर्यम् । कल्पवृक्षमेरुभ्यामप्ययमधिको दानशूर इति भावः । कुब्जायितः, लोहितादेराकृतिगणत्वादाचारे क्यष् ॥ ६७ ॥

सृजामि किं विघ्नमिदंनृपस्तुता-
वितीङ्गितैः पृच्छति तां सखीजने ।
स्मिताय वक्त्रं यदवक्रयद्वधू-
स्तदेव वैमुख्यमलक्षि तन्नृपे ॥ ६८ ॥

सृजामीति ॥ वधूः भैमी सखीजने इङ्गितैर्भ्रूभङ्गादिचेष्टितैः कृत्वा तां भैमीमिति पृच्छति सति स्वाभिप्रायज्ञापनार्थं स्मिताय वक्त्रं यत् अवक्रयद्वक्रं चक्रे । तत् वदनवक्रणमेव तन्नृपे तस्मिन्राज्ञि वैमुख्यं पराङ्मुखत्वमलक्षि लक्षितम् । अन्यतो विलोकनादेवात्रानादरोऽस्या इति सखीभिः लोकेन, तेन राज्ञा वा तर्कितमित्यर्थः । इति किम्—हे भैमि, अहम् अयं चासौ नृपश्च इदंनृपः तस्य स्तुतौ विघ्नं सृजामि किम् । 'वैलक्ष्यम्' इति पाठे असावधानतया यस्मान्मुखमवक्रयत् । तस्मादेव नृपगतमेव वैलक्ष्यं मालिन्यं लोकैर्लक्षितमित्यर्थः। स्मिताय स्मितं कर्तुम्, 'क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः २।३।१४' इति चतुर्थी ॥ ६८ ॥

दृशाऽस्य निर्दिश्य नरेश्वरान्तरं
मधुस्वरा वक्तुमधीश्वरा गिराम् ।
अनूपयामास विदर्भजाश्रुती
निजास्यचन्द्रस्य सुधाभिरुक्तिभिः ६९ ॥

दृशेति ॥ अथ मधुस्वरा मधुरस्वरा गिरामधीश्वरा वक्तुं वर्णयितुं दृशा नेत्रव्यापारेण नरेश्वरान्तरं नृपान्तरं निर्दिश्य दर्शयित्वा विदर्भजाश्रुती भैमीकर्णौ निजास्यं स्वीयं वदनमेव चन्द्रस्तस्य सुधाभिरमृतरूपाभिरुक्तिभिः कृत्वा अनूपयामास परिपूर्णे चकार । उवाचेत्यर्थः । अनुगता आपो यत्र अनूपो देशः, 'ऋक्पूरब्धूःपथामानक्षे ६।३।९८' इति समासान्ते 'ऊदनोर्देशे' इत्यूकारः । अनूपे जलप्लुते चकार 'तत्करोति तदाचष्टे' इति णिच् । लक्षणया मधुरस्वराकर्णनस्तिमिते चकारेत्यर्थः । 'अपूपुरद्भीमभुवः श्रुती पुनः' इति पाठे 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इत्युपधाह्रस्वः ॥ ६९ ॥

स कामरूपाधिप एष हा त्वया
न कामरूपाधिक ईक्ष्यतेऽपि यः ।
त्वमस्य सा योग्यतमाऽसि वल्लभा
सुदुर्लभा यत्प्रतिमल्लभा परा ॥ ७० ॥

स इति ॥ स एष कामरूपस्य देशविशेषस्य अधिपः । अथ च मदनरूपस्यापि स्वामी । तद्रूपधारणादित्यर्थः । स कः—यः त्वया ईक्ष्यतेऽपि न । न अभिलप्यत इति तु किं वाच्यमित्यर्थः । हा कष्टम् अनुचितमेतत् । यतः—कामाद्रूपेणाधिकोऽतिसुन्दरः । अथ वा कामाद्रूपेणाधिको नेति काकुर्वा । यतः—अयं कामादधिकस्तस्मादस्य सा त्वं योग्यतमा वल्लभासि नितरामुचिता प्रेयसी भवसि । सा का—परा उत्कृष्टा यस्यास्तव प्रतिमल्ला तुल्या भा कान्तिः सुतरां दुर्लभा । यस्याः सदृशी कान्तिः कस्यांचिदपि न दृष्टचरी । अस्यातिसुन्दरत्वादित्यर्थः । अथ च—पराऽन्या स्त्री यस्यास्तुल्यकान्तिर्दुर्लभा, सातिसुन्दरी त्वमित्यर्थः । त्वमतिसुन्दरी अस्य सुतरामयोग्येत्यर्थ इति वा । व्याख्यानान्तरं क्लिष्टत्वादुपेक्ष्यम् । सुदुर्लभा, 'न सुदुर्भ्यां केवलाभ्याम् ७।१।६८' इति नुम्निषेधः ॥ ७० ॥

अकर्णधाराशुगसम्भृशाङ्गतां
गतैररित्रेण विनाऽस्य वैरिभिः ।

---

१अत्रानुप्रासः। द्रुमशैलयोर्लज्जासम्बन्धायोगेऽपि तयोक्तेरतिशयोक्तिः । कल्पद्रुमाद्यपेक्षयाऽपि अतिशयवर्णनादतिशयोक्तिश्च । २ यत्तद्वाच्ययोर्भेदेऽपि तदनुक्तेरतिशयोक्तिः ।

१ अत्रानुप्रासः, निजास्यचन्द्रस्येति सुधाभिरुक्तिभिरिति च रूपकम् । २ अत्र कामरूपेति लभेति च यमकम् । सुदुर्लभा यदित्यर्थान्तरन्यासः ।

विधाय यावत्तरणेर्भिदामहो
निमज्ज्य तीर्णः समरे भवार्णवः ॥७१॥

अकर्णेति ॥ अस्य वैरिभिः समरे निमज्ज्य निपत्य यावान्सकलस्तरणिः सूर्यस्तस्य तन्मण्डलस्येत्यर्थः । भिदां भेदं विधाय कृत्वा भवः संसार एव दुस्तरत्वादर्णवः तीर्णः । मोक्षप्राप्तेरपुनरावृत्तेरित्यर्थः । अहो आश्चर्यम् । शूरतरोऽयमित्यर्थः । किंभूतैः—अरिभ्यस्त्रायत इत्यरित्रं कवचं तेन विना । अथवा—अरेः अस्मात्सकाशाद्रक्षकेणान्येन शूरतरेण विना । न विद्यन्ते कर्णाः कर्णाकारा लोहकण्टका यासां एवंविधा धारा येषामेवंभूताः । कर्णान्धरन्ति कर्णधाराः न कर्णधारा अकर्णधारा एवंभूता वा । ये आशुगा वाणा अदुष्टाः शरास्तैः संभृतानि प्रोतान्यङ्गान्यवयवा येषां तेषां भावस्तत्तां गतैः प्राप्तैः । प्रत्यवयवं विद्धैरित्यर्थः । यावत् साकल्ये । अथ च—कर्णधारो नाविकः, आशुगो वायुः ताभ्यां कृत्वा संभृतानि परिपुष्टान्यङ्गानि रज्जुस्तम्भादीनि तरणोपायभूतानि च येषाम् । कर्णधारानुकूलवायुना वा संभृतान्यङ्गानि येषामेवंभूता ये न भवन्ति तद्भावं गतैः । अरित्रेण जलक्षेपणकाष्ठेन विना तस्याप्यभावे यावत्तरणेः सकलाया नौकाया भेदं विधाय सकलां नौकां स्फोटयित्वा निमज्ज्य त्रुडित्वाऽर्णवस्तीर्णः । हे भव शिव, अहो अत्याश्चर्यम् । कर्णधाराद्यभावे नौकायाश्च भेदे त्रुडित्वा तरणं तत्रापि समुद्रस्येत्यत्याश्चर्यम् । अघटमानघटनेन चाश्चर्यसूचकं शिवनामोच्चारणं क्रियते । 'कर्णधारस्तु नाविकः' 'नौकादण्डः क्षेपणी स्यादरित्रम्', 'स्त्रियां नौस्तरणिस्तरिः', 'द्युमणिस्तरणिर्मित्रः' इति चामरः ॥ ७१ ॥

यदस्य भूलोकभुजो भुजोष्मभि-
स्तपर्तुरेव क्रियतेऽरिवेश्मनि ।
प्रपां न तत्रारिवधूस्तपस्विनी
ददातु नेत्रोत्पलवासिभिर्जलैः ॥ ७२ ॥

यदिति ॥ भूलोकभुजो भूपालस्यास्य भुजोष्माभिर्बाहुप्रतापैः अरिवेश्मनि अतिसंतापकारित्वात्तपर्तुरेव ग्रीष्मर्तुरेव यद्यस्मात्क्रियते तस्मात्तत्र ग्रीष्मर्तौ तपस्विनी दीना अरिवधूः नेत्राण्येवोत्पलानि तेषु वासिभिर्जलैरश्रुभिः । अथ च—नेत्रतुल्यकमलानां यो वासः परिमलः स विद्यते येषु तैर्जलैः कृत्वा प्रपां पानीयशालां न ददातु । अपितु ददात्येव । तपस्विनी ग्रीष्मर्तौ सुगन्धिभिरुदकैः प्रपां करोति । अनेन पतिमारणाच्छोकव्याप्ता सर्वाऽप्यरिनारी रुरोदैवेति भावः । 'प्रपा पानीयशालिका' इत्यमरः ॥ ७२ ॥

एतद्दत्तासिघातस्रवदसृगसुहृद्वंशसार्द्रेन्धनैत-द्दोरुद्दामप्रतापज्वलदनलमिलद्भूमधूमभ्रमाय । एतद्दिग्जैत्रयात्राऽसमसमरभरं पश्यतः कस्य नासी—देतन्नासीरवाजिव्रजखुररजरजोराजिराजिस्थलीषु ॥ ७३ ॥

एतदिति ॥ आजिस्थलीषु संग्रामभूमिषु एतन्नासीरस्य एतत्सेनामुखस्य पुरो गच्छन्तो वाजिव्रजा अश्वसङ्घास्तेषां खुरेभ्यश्चरणाग्रेभ्यो जाता तैरुद्धूलिता रजोराजी रेणुपङ्क्तिः एतस्य दिग्जैत्रयात्रा दिग्जयकारिण्यो या यात्रा वैरिसम्मुखगतयस्तासु असममतुल्यं समरस्य भरं सम्मर्दं पश्यतः कस्य जनस्य । एतेन राज्ञा दत्तेभ्योऽसिघातेभ्यः स्रवत असृग्रक्तं येषाम् । एतेन दत्तोऽसिघातो येभ्यः अत एव स्रवदसृजो वा असुहृद्वंशा अरिसङ्घाः । अथ च—तद्रूपा वेणवः । त एव सार्द्राणीन्धनानि दाह्यकाष्ठानि यस्य एवंभूत एव दोष्णोर्बाह्वोरुद्दामप्रतापस्तीक्ष्णप्रतापः स एव ज्वलन् देदीप्यमानोऽनलः तस्य मिलन्संभवन् भूमा बाहुल्यं यस्य एवंभूतो बहुतरो धूमस्तस्य भ्रमाय सादृश्याद्धूमेऽपि रजसि 'धूमः' इति बुद्धये नासीत् । अपि तु सर्वस्यापि । आर्द्रवेणुरूपेन्धनं दहतो वह्नेर्भूयान्धूमो भवति । सर्वेऽप्यरय एतत्प्रतापवह्निना दग्धाः । अश्वपतिश्चायमिति भावः । आर्द्रं सार्द्रं पर्यायः । 'मिलद्धूमभूम—' इति पाठे मिलतो धूमस्य बाहुल्यं तद्भ्रान्तये ॥ ७३ ॥

क्षीरोदन्वदपः प्रमथ्य मथितादेशेऽमरैर्निर्मिते—स्वाकम्र्यं सृजतस्तदस्य यशसः क्षीरोदसिंहासनम् । केषां नाजनि वा जनेन जगतामेतत्कवित्वामृत—स्रोतःप्रोतपिपासुकर्णकलशीभाजाभिषेकोत्सवः ॥ ७४ ॥

१ अत्र व्याजस्तुतिः । भवार्णव इति रूपकं च । निमज्ज्य तीर्ण इति विरोधाभासश्च ।

१ अत्र भुजो इति यमकम् । अत्रापि व्याजस्तुतिः ।
२अत्र स्रग्धरा छन्दः, अत्रानुप्रासः।नासीत्यादौ यमकं च। वंशेत्यादौ श्लिष्टं रूपकम्, दोरित्यादावश्लिष्टं रूपकम् ।

क्षीरेति ॥ केषां जगतां भुवनानां सम्बन्धिना जनेनास्य राज्ञो यशसोऽभिषेक एवोत्सवो नाजनि नाकारि । अपि तु स्वर्गादिस्थितेन सर्वेणापि लोकेन एतदीययशसोऽभिषेकः कृतः । विशेषणेनाधिष्ठान-माह—किम्भूतस्य यशसः—क्षीरोदन्वदपाः क्षीरो-दन्वान्क्षीरसमुद्रस्तस्य अपो जलानि दुग्धरूपाणि प्रमथ्य मन्दराचलेन कृत्वा प्रकर्षेण विलोड्य अमरैर्देवैः मथन-क्रियायोगात् मथितमिति आदेशे संज्ञायां निर्मिते कृतायाम्। अथ च–निर्जलं मन्थमथितं दधि मथितमित्युच्यते । ततश्च क्षीरस्यापि मथनक्रियायोगादस्तेर्भूवन्मथितरूपे आदेशे निर्मिते सति । जले स्थित्यसम्भवात्क्षीरोदन्वदुदके दुग्धरूपेऽतिघने कृते सतीत्यर्थः । क्षीरोदरूपं सिंहासनं शुभ्रवस्तुमात्रापेक्षया तस्यातिशुभ्रत्वाद्यद्भद्रपीठं तत् स्वेना-त्मना । अथ च—सुखेनायासरहितं यथा तथा । आक्रम्यसुपवेशनयोग्यं सृजतः कुर्वतः क्षीरोदपदमधि-तिष्ठत इत्यर्थः । किंभूतेन जनेन—एतद्रचितं कवित्वम् एतत्संबन्धि कविभिर्निर्मितं कीर्तिवर्णनरूपं वा कवित्वं तदेव स्वादुतरत्वादमृतं तस्य स्रोतासि प्रवाहे प्रोतौ स्यूतौ धृतौ सादरमाकर्णनेच्छू । अथ च—जलभरणेच्छू । कर्णाविव कलशौ महान्तौ भजतीति भाजा भजता । लोके हि कस्मिंश्चिद्राजनि केनचिन्मथिते तदीयं सिंहा-सनमधितिष्ठतोऽन्यस्य केनचिद्वारिपूर्णेन कलशेनाभिषेकः क्रियते । घनीरूपतयोपवेशनयोग्यतां सूचयितुं मथिता-देशे कृते सतीत्युक्तम् । जलेोपर्युपवेशनासंभवात् । क्षीरोदादपि विमलतरं महीयश्चैतद्यशो वैदेशिकैर्लोकत्रय-संचारि कृतमिति भावः । 'तक्रं ह्युदश्विन्मथितं पादा-म्ब्वर्धाम्बु निर्जलम्' इत्यमरः। क्षीरोदन्वदपाः 'उदन्वा-नुदधौ च' ८।२।१३' इति साधुः । 'ऋक्पूरब्धूःपथा-मानक्षे ५।४।१४' इत्यप्रत्ययः । स्वाक्रम्यम्, 'पोरदुप-धात् ३।१।९८'इति यत् । अजनि कर्मणि चिण्॥७४॥

सामिति पतिनिपाताकर्णनद्रागदीर्ण-
प्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु ।
रचितलिपिरिवोरस्ताडनव्यस्तहस्त-
प्रखरनखरटङ्कैरस्य कीर्तिप्रशस्तिः॥७५॥

समितीति ॥ अस्य राज्ञः कीर्तिप्रशस्तिर्वर्णनपङ्क्तिः सामिति सङ्ग्रामे पतीनां स्वामिनां निपातो मरणं तस्य आकर्णनेन द्राक् शीघ्रम् अदीर्णानि प्रतिनृपतिमृगाक्षीणां लक्षस्य वक्षांसि तान्येव तत्क्षणमेवाविदीर्णत्वाच्छिला-स्तासु शोकवशादुरस्ताडने व्यस्तयोर्दृढनिवेशितयोर्हस्तयोः प्रखरा अतितीक्ष्णा नखरा नखा एव टङ्काः पाषाणदारणलो-हविकारास्तै रचितलिपिरिव रचितलेखनेव अस्तीति शेषः।अन्यस्यापि कीर्तिप्रशस्तिः शिलासु टङ्किकाभिरुत्कीर्य लिख्यते । सर्वेऽप्यरयोऽनेन हताः तन्नार्यश्च शोकवशा दुरस्ताडनं कुर्वन्ति । अतिशूरत्वादस्य कीर्तिर्भवतीत्यर्थः। दृढशोकेऽप्यदीर्णत्वाच्छिलात्वम् । शोकातुरस्योरस्ताडनं जातिः ।'टङ्कः पाषाणदारणः'इति,'समित्याजिसमिद्युधः' इति चामरः ॥ ७५ ॥

विधाय ताम्बूलपुटीं कराङ्कगां
बभाण ताम्बूलकरङ्कवाहिनी ।
दमस्वसुर्भावमवेत्य भारतीं
नयानया वक्रपरिश्रमं शमम् ॥ ७६ ॥

विधायेति ॥ ताम्बूलस्य करङ्कः सुवर्णरचितहंसा-द्याकारं ताम्बूलधारणपात्रम् 'पेटी' इति लोके, तस्य वाहिनी धारिणी काचित्सखी दमस्वसुर्भावं तद्वर्णननिषे-धरूपमवेत्य ज्ञात्वा इति बभाण ।किं कृत्वा–ताम्बूलपुटीं पूगीफलचूर्णखादिरपर्णानि यत्रैकत्र क्रियन्ते तां यां मध्यदेशे भाषया 'गुलवडा' इति व्यवहरन्ति तां देव्यै दातुं कराङ्कगां स्वीयकरतलमध्यगतां, देवीकरतलमध्य-गतां वा कृत्वा । कराङ्के गृहीत्वेत्यर्थः । इति किम्—हे देवि, त्वम् अनया वीटिकया एतदीयबहुवर्णनजनितं वक्रस्य सकलं परिश्रमं शमं नय बहुवर्णनजनितं रोषं शान्तिं प्रापयेति। एतत्स्तुतेर्विरमेत्यर्थः । अन्योऽपि शुष्क-मुखो वीटिकया श्रमं शमयति ॥ ७६ ॥

समुन्मुखीकृत्य बभार भारती
रतीशकल्पेऽन्यनृपे निजं भुजम् ।
ततस्त्रसद्बालपृषद्विलोचनां
शशंस संसज्जनरञ्जनीं जनीम् ॥ ७७ ॥

सामिति ॥ भारती रतीशकल्पे कामतुल्येऽन्यनृपे निजं बाहुं सम्यगुन्मुखीकृत्य बभार भैम्यै तं दर्शयितुं तदभिमुखं चकार।ततोऽनन्तरं त्रसद्बालपृषद्विलोचनां भीत-

१ अत्र शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः, क्षीरोदेत्यादौ रूपकम् ।

१ अत्र मालिनी छन्दः । अनुप्रासः शब्दालङ्कारः, लिपिरिवेत्युपमा । २ इत आरभ्य पद्यपञ्चके वंशस्थविलं छन्दः । नयेति यमकम् ।

बालहरिणनेत्रां संसज्जनानां सभ्यानां रञ्जनीमनुरागजनिकां जनीं वरार्थिनीं तां भैमीं शशंसाभाणीत् । 'रतीशतुल्ये' इति वा पाठः । रञ्जनीं मृगरमणाभावान्नलोपाभावः ॥ ७७ ॥

अयं गुणौघैरनुरज्यदुत्कलो
भवन्मुखालोकरसोत्कलोचनः ।
स्पृशन्तु रूपामृतवापि नन्वमुं
तवापि दृक्तारतरङ्गभङ्गयः ॥७८ ॥

अयमिति ॥ हे भैमि, गुणौघैः सौन्दर्यादिगुणौघैः अनुरज्यन्तोऽनुरक्ता भवन्तः उत्कला लक्षणया तद्देशनिवासिनो लोका यत्र । अथ च गुणौघैः सौन्दर्यादिगुणौघैरनुरज्यन्त उत्कृष्टाश्चतुःषष्टिकला यत्र तैरुपलक्षितो वा अयं नृपः यस्माद्भवन्मुखालोके रसेनानुरागेणोत्कलोचन उत्कण्ठितनेत्रः। अस्तीति शेषः।तस्मात् ननु हे रूपामृतवापि सौन्दर्यामृतदीर्घिके सुन्दरि तवापि दृशोस्तारा उज्ज्वलविशालाः चञ्चला वा तरङ्गाः पुनःपुनर्व्यापाररूपाः कल्लोलास्तेषां भङ्गयः प्रकारविशेषाः अमुं स्पृशन्तु । अयं त्वां पश्यति, त्वमप्येनं कटाक्षैः पश्य योग्यत्वादिति भावः। अनुरज्यदुत्कल इत्यनेन जनानुरञ्जनात्स्वपदाधिक्यं सूचितम् अन्यस्यामापि जलवाप्यां चञ्चलतरङ्गभङ्गयो भवन्ति । अनुरज्यदिति, श्यनो ङित्वान्नलोपः ॥ ७८ ॥

अनेन सर्वार्थिकृतार्थताकृता-
हृतार्थिनौ कामगवीसुरद्रुमौ ।
मिथः पयःसेचनपल्लवाशने
प्रदाय दानव्यसनं समाप्नुतः ॥ ७९ ॥

अनेनेति ॥ कामगवीसुरद्रुमौ कामधेनुकल्पवृक्षौ मिथः अन्योन्यं क्रमेण पयःसेचनपल्लवाशने दुग्धसेचनपल्लवभोजने प्रदाय प्रकर्षेण दत्त्वा दानस्य व्यसनमतिथये प्रत्यहमवश्यकरणीयतया प्राप्तस्याग्रहं समाप्नुतः समाप्तिं नयतः । कस्मादित्यत आह—किंभूतौ—सर्वार्थिनां सर्वयाचकानामभीष्टदानात् या कृतार्थता जन्मसाफल्यं कृतार्थत्वं तां करोत्येवंभूतः कृत् तेन । अनेनातिदानात्त्वं प्रति आहृता आनीता अर्थिनो याचका ययोस्तौ।अर्थ्यन्तराभावात्कामगव्या कल्पवृक्षस्य दुग्धसेकः कृतः, तेन च स्वपल्लवा भक्षयितुं तस्यै दत्ता इत्यर्थः । दानशूरोऽयमिति भावः ॥ ७९ ॥

नृपः कराभ्यामुदतोलयन्निजे
नृपानयं यान्पततः पदद्वये ।
तदीयचूडाकुरुविन्दरश्मिभिः
स्फुटेयमेतत्करपादरञ्जना ॥ ८० ॥

नृप इति ॥ अयं नृपः निजे पदद्वये प्रणामवशात्पततो नम्रान्यान्नृपान्कराभ्यां कृपया शिरसि धृत्वा उदतोलयदुत्थापयामास तदीया राजकीया याः चूडा मुकुटास्तासां कुरुविन्दरश्मिभिर्माणिक्यशोणशोभाभिः कृत्वा इयमेतस्य करपादयोः रञ्जना रक्तिमा स्फुटा दृश्यत इति शेषः ॥ ८० ॥

यत्कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बते—जातं यद्घनकाननैकशरणप्राप्तेन दावाग्निना । एषैतद्भुजतेजसा विजितयोस्तावत्तयोरौचिती—धिक्तं वाडवमम्भसि द्विषि भिया येन प्रविष्टं पुनः ॥ ८१ ॥

यदिति ॥ भानुमान् सूर्यः कस्यामपि ककुभि दिशि स्थेमानं स्थिरत्वं यत् नालम्बते नाऽङ्गीकरोति किंतु सर्वदा परिभ्रमत्येव । दावाग्निना वनवह्निना च घनम् अतिगहनं काननं तल्लक्षणम् एकं केवलं शरणं रक्षितारं प्राप्तेन तदेकाश्रयेण यत् जातम् । एतस्य भुजतेजसा विशेषेण जितयोस्तयोः सूर्यदावानलयोः तावन्निश्चितम् एषा औचिती युक्ततरता । भीतस्य व्याकुलता वनाश्रयणं च युक्तमित्यर्थः । मानी हि जितः सन् लज्जया मुखमदर्शयन्पुनर्दर्शने भयेनैकस्मिन्देशे वासं त्यक्त्वा सर्वत्र परिभ्रमति । सर्वथाऽन्यस्य प्रवेष्टुमशक्यं घनं वनं वा विशति । ताभ्यां युक्तमेव कृतमित्यर्थः । तं वाडवं वडवानलं पुनः धिक् । येन अस्माद्भिया द्विषि सहजशत्रौ अम्भसि समुद्रजले प्रविष्टं निमग्नम् । मानी पराजितोऽपि वैरिणं शरणं नैति, अयं तु गत इत्यभिमानित्वाभावान्निन्द्य एवेत्यर्थः । अथ च

१ अत्रानुप्रासः, भारेति शंसेति जनीमिति च यमकम् । २ अत्रानुप्रासो, वापीति यमकम् । तरङ्गभङ्गय इति पुनरुक्तवदाभासः ।

१ अत्रानुप्रासः, कृतेति यमकम् । कामगव्याः सुरद्रुमस्य च सेचनाशनप्रदाने क्रमेण निर्दिष्टे इति यथासङ्ख्यम् । २ अत्रानुप्रासः, अत्र नखगतरक्तिमानमपह्नुत्या राजमण्डनगतमाणिक्यप्रभास्थापनादपह्नुतिः, स्फुटेत्युत्प्रेक्षा ।

वाडवो ब्राह्मणः । ततश्च ब्राह्मणत्वाच्छत्रावपि भयेन प्रवेशो युक्तः । शत्रुणा च तस्य रक्षणं युक्तमिति सूचितम् । सूर्यादेरप्येतदीयं तेजोऽधिकमिति भावः । स्थेमा इति, स्थिरशब्दाद्भावे पृथ्वादित्वादिमनिचि 'प्रियस्थिरस्फिरोरु—६।४।१५७।' इत्यादिना स्थादेशः । शरणं प्राप्तेन, 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२४।' इति समासः ॥ ८१ ॥

**अमुष्योर्वीभर्तुः प्रसृमरचमूसिन्धुरभवै-**
**र्रवैमि प्रारब्धे वमथुभिरवश्यायसमये ।**
**न कम्पन्तामन्तः प्रतिनृपभटा म्लायतु न त-**
**द्वधूवक्त्राम्भोजं भवतु न स तेषां कुदिवसः॥८२॥**

अमुष्येति ॥ अमुष्य उर्वीभर्तुः रणसम्भवात् । प्रसृमरा प्रसरणशीलाश्चमूसिन्धुराः सेनागजास्तेभ्यो भवैः समुत्पन्नैर्वमथुभिः करिकराग्रजातैर्मदजलबिन्दुभिः, जलबिन्दुभिः, वा अवश्यायसमये नीहारकाले वा हिमर्तौ प्रारब्धे निर्मिते सति प्रतिनृपभटा वीरा अपि रिपुनृपा अन्तः तन्मध्ये स्वीये मनसि वा न कम्पन्ताम् । अपि तु अस्माद्भयेन युक्त एव कम्पस्तेषाम् । तथा—तेषां वध्वो रमण्यस्तासां वक्त्राम्भोजं न म्लायतु । अपितु भाविनः प्राणेशवधस्य निश्चितत्वात्तासां मुखस्य म्लानिरुचितैव । तथा—स प्रसिद्धो रणवासरस्तेषां वैरिणां तत्स्त्रीणां च कुत्सितो दिवसोऽशुभरूपो वासरो न भवतु । अपितु भवत्येव । वधनिश्चयाद्वैरिणां तत्स्त्रीणां च शोकवत्त्वादित्यहमवैमि । हिमर्तौ शरीरकम्पः कमलग्लानिर्दुर्दिनं च भवति शूरतरोऽयं गजपतीरिति भावः। सिन्धुरभरैः—इति पाठे गजसङ्घैः कर्तृभिर्वमथुभिः कृत्वेति व्याख्येयम् । 'वमथुः करशीकरः', 'अवश्यायस्तु नीहारः' इति । प्रसृमर इति, 'सृघस्यदः क्मरच् ३।२।१६०।' इति क्मरच् । अवश्याय इति 'श्याद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च ३।१।१४१।' इति णः । तेषां 'पुमान्स्त्रिया १।२।६७।' इत्येकशेषः ॥ ८२ ॥

**आत्मन्यस्य समुच्छ्रितीकृतगुणस्याहोतरा-**
**मौचिती—यद्गात्रान्तरवर्जनादजनयद्भूजा—**
**निरेप द्विपाम् । भूयोऽहं क्रियते स्म येन च**
**हृदा स्कन्धो न यश्चानम—त्तन्मर्माणि दलं**
**दलं समिदलंकर्मीणबाणव्रजः ॥ ८३ ॥**

आत्मनीति ॥ आत्मनि स्वीये स्वरूपे समुच्छ्रितीकृतगुणस्य मेलितसौन्दर्यादिसर्वगुणस्यास्य अहोतरामतिशयेनौचितीयम् । यत् एष भूजानिर्भूपतिः द्विषां गात्रान्तराणां हृत्स्कन्धेतराणां वर्जनादवयवान्तरं परित्यज्येत्यर्थः । येन च हृदा भूयः पुनःपुनः अतितराम् अहम् अहंकारः क्रियते स्म । अहंकारिणा जातमित्यर्थः । यश्च स्कन्धः नानमत् नम्रो न भूतः तस्यैव हृत्स्कन्धस्यैव मर्माण्यतिमृदूनि जीवस्थानानि खण्डं खण्डमजनयच्चकार नान्येषाम्। किंभूतः—समिति सङ्ग्रामे अलङ्कर्मणे अलंकर्मीणः अरिमारणसमर्थः बाणव्रजो यस्य। अपराधी हि राज्ञा दण्ड्यः नत्वनपराधीति हृत्स्कन्धस्यैवापराधो नान्येषां तस्यैव दण्डं कृतवान्, नान्येषामित्यतितरामस्यौचितीत्यर्थः । अयं च सगुणः सदर्पाननम्रांश्च मारयति, शरणागतांस्तु रक्षतीति भावः । 'कर्मक्षमोऽलंकर्मीणः' इत्यमरः । अलं कर्मणे,'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति समासेऽलंकर्मशब्दात् 'आषडक्षाशितंग्वलंकर्मालम्पुरुषाध्युत्तरपदात् खः ५।४।७।' इति खः ॥ ८३ ॥

**दूरं गौरगुणैरहंकृतिभृतां जैत्राङ्कारे चर-**
**त्येतद्दोर्यशसि प्रयाति कुमुदं विभ्यन्न**
**निद्रां निशि धम्मिल्ले तव मल्लिकासुमनसां**
**माल्यं भिया लीयते-पीयूषस्रवकैतवाद्रधृत-**
**दरः शीतद्युतिः स्विद्यति ॥ ८४ ॥**

दूरमिति ॥ गौरगुणैर्धवलवर्णैः कृत्वा दूरं भृशम् अहंकृतिभृतामहंकारवतां वस्तूनां जैत्रं च तदङ्कारं च तस्मिञ्जयकारिणि वामचरणे तृणकाष्ठादिनिर्मितशत्रुप्रतिमाधारिणि सकलधवलवस्तुषु विरुदावलीधारिणि एतद्दोर्यशसि एतस्य बाहुयशसि सकलेषु जगत्सु चरति प्रसरति सति । अथ च—स्वप्रतिमल्लगवेषणाय भुवनं परिभ्रमति सति बिभ्यत् भीतं कुमुदं

1 अत्र शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः, भुजतेजसा सूर्यदावानलयोर्जितत्वायोगेऽपि तथोक्तेरतिशयोक्तिः । 1 अत्र शिखरिणी छन्दः । करशीकरादौ नीहारादि रूपणाद्रूपकम् ।

1 अतः प्रभृति पद्यत्रयं यावत् शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः, दलमिति यमकं च । राज्ञो नीत्युचितदण्डदानादिव्यहारप्रतीतेः समासोक्तिः । स्वभावोक्तिश्चैत्यनयोरङ्गाङ्गिभावात्संकरः ।

निशि निद्राम् । अथ च—संकोचम् न प्रयाति । तथा—मल्लिकासुमनसां माल्यं माला अस्माद्धिया ते तव धम्मिल्ले केशपाशग्रन्थिविशेषे लीयते आत्मानं गोपायते अथ च—अदृश्यं तिष्ठति । तथा—शीतद्युतिश्चन्द्रो धृतदरः प्राप्तभयः सन् पीयूषस्रवकैतवादमृतस्रवणव्याजात्स्विद्यति स्वेदं मुञ्चति । अथ च—हिमकणान्मुञ्चति । 'एकयोद्धा अङ्ककारः' इति वा । कुमुदादिभ्योऽभ्याधिकं धवलमेतदीयं यश इति भावः । 'दिहिनं धारयेन्माल्यम्' इति केशान्तर्गतमाल्यधारणाद्भैम्याः सदाचारत्वं सूचितम् ॥ ८४ ॥

एतद्गन्धगजस्तृषाम्भासि भृशं कण्ठान्तमज्जत्तनुः फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशःस्पर्धिभिः । दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः करम्भोवमिराव्याजादभ्रमुवल्लभेन विरहं निर्वापयत्यम्बुधेः ॥ ८५ ॥

एतदिति ॥ एतस्य गन्धगजः यः सप्तसु स्थानेषु स्रवति स गन्धजः । स्वदानमलमूत्रादिगन्धेन जितान्यकरी विरोधिकरिगन्धमसहमान इति वा गन्धगजः । कराम्भोवमिव्याजाच्छुण्डादण्डाग्रेण मुखधृतगण्डूपजलवमनमिषादम्बुधेः समुद्रस्य अभ्रमुनाम्न्याः करिण्याः वल्लभस्य ऐरावणस्य विरहं पुत्रवियोगजनितं शोकं निर्वापयति शमयाति । किंभूतः—भृशं नितरां तृषा पिपासया सफेनत्वात्क्षीरबुद्ध्या पुरःपुरः प्रसर्पणेन कण्ठान्तं ग्रीवां मर्यादीकृत्य मज्जन्ती जले क्रीडन्ती जलप्रवेशाददृश्यमाना तनुर्देहो यस्य एवंभूतः । तथा—स्वकीया दिक् प्राची तस्याः करी ऐरावणः, अन्ये वा तत्रत्याः करिणस्तेषां जयक्रीडा तया उपार्जितैः यशोभिः सह स्पर्धिभिः तद्वदुज्ज्वलैः फेनैः जलावगाहनोद्गतैर्निमग्नदेहोर्ध्वदेशे पाण्डुरितो धवलितः । तथा—दन्तद्वन्द्वस्य दन्तद्वयस्य जलेऽनुबिम्बनं प्रतिबिम्बस्तेन कृत्वा चत्वारो दन्ता यस्य सः । जलमध्ये विद्यमानत्वाद्धवलत्वाच्चतुर्दन्तत्वाच्च ऐरावण एवायमिति भ्रान्त्या समुद्रः सुखी भवतीत्यर्थः । आसमुद्रं दिग्विजयीत्यर्थः ॥ ८५ ॥

अथैतदुर्वीपतिवर्णनाद्भुतं
न्यमीलदास्वादयितुं हृदीव सा ।
मधुस्रजा नैषधनामजापिनी
स्फुटीभवद्ध्यानपुरःस्फुरन्नला ॥ ८६ ॥

अथेति ॥ अथ सा भैमी न्यमीलदक्षिपक्ष्मसंकोचं चकार । किम्भूता—अतिप्रीत्या मधुस्रजा वरणमधूकमालया नैषधस्य नाम जपति तच्छीला ।अत एव स्फुटीभवन्प्रत्यक्षायमाणः ध्यानेन चिन्तनातिशयेन पुरःस्फुरन्नग्रस्थिततयावभासमानो नलो यस्याः सा । तत्रोत्प्रेक्षते—एतस्योर्वीपतेर्वर्णनया समुत्पन्नमद्भुतमाश्चर्यं हृदि विद्यमानम् आस्वादयितुमनुभवितुमिव । आश्चर्यस्य चेतसि वर्तमानत्वात्तदनुभवार्थं नेत्रे अप्यन्तः प्रविष्टे इवेत्यर्थः । नले एवानुरक्ता सती नेत्रनिमीलनेनैव तं नृपं निराचकारेति भावः । अन्योऽपि जपमालयाभीष्टदेवतामन्त्रजपं कुर्वंस्तां साक्षात्कर्तुं नेत्रे निमील्य ध्यानेन तां साक्षात्करोति ॥ ८६ ॥

प्रशंसितुं संसदुपान्तरञ्जिनं
श्रिया जयन्तं जगतीश्वरं जिनम् ।
गिरः प्रतस्तार पुरावदेव ता
दिनान्तसंध्यासमयस्य देवता ॥ ८७ ॥

प्रशंसितुमिति ॥ दिनान्तसंध्यासमयस्य देवता सरस्वती पुरावदेव पूर्ववदेव ताः अतिगम्भीरमधुरा गिरः प्रतस्तार उवाच । किं कर्तुम्—संसदः सभाया उपान्तावुभयपार्श्वौ रञ्जयत्येवंशीलं श्रिया शरीरशोभया कृत्वाऽतिसुन्दरं जिनं बुद्धदेवं जयन्तं जगत्याः पृथिव्या ईश्वरं राजानं प्रशंसितुं वर्णयितुम् । श्रिया संसदुपान्तरञ्जिनं जयन्तं जगति शौर्यादिना इन्द्रपुत्रतुल्यं कीकटदेशप्रभुत्वाज्जिनं बौद्धं राजानमिति वा । जयन्तनामानं वा । 'जगदीश्वरम्' इति पाठे जिनविशेषणम् ॥ ८७ ॥

तथाऽधिकुर्या रुचिरे चिरेप्सिता
यथोत्सुकः सम्प्रति सम्प्रतीच्छति ।
अपाङ्गरङ्गस्थललास्यलम्पटाः
कटाक्षधारास्तव कीकटाधिपः ॥ ८८ ॥

तथेति ॥ हे रुचिरे सुन्दरि, त्वं तथा तेन प्रकारेण अधिकुर्या अधिकारं कुर्याः । तथा कथम्-यथा येन प्रकारेण कीकटाधिपः मगधदेशस्वामी त्वत्कटाक्षेषूत्सुकः सन् चिरेप्सिताः तव कटाक्षधाराः तिर्यगवलोकनपर-

१ अत्रानुप्रासः, कैतवादित्यपह्नुतिः। २ अत्रानुप्रासः, व्याजादित्यपह्नुतिः, निर्वापयतीवेत्युत्प्रेक्षा गम्या ।

१ इतः आरभ्य पद्यपञ्चके वंशस्थविलं छन्दः । हृदीवेत्युत्प्रेक्षा । २ अनुप्रासः, जिनमिति देवतेति च यमकम् । श्रिया जयन्तमिति व्यतिरेकः, श्लेषश्च ।

म्पराः संप्राति इदानीं संप्रतीच्छति अङ्गीकरोति । किंभूता धाराः—अपाङ्गो नेत्रप्रान्तस्तल्लक्षणं रङ्गस्थलं नाट्यशाला तत्र लास्ये सविलासमन्दगतौ लम्पटाः । चिरोषितात्व-मिति वा। चिर इत्यकारान्तमप्यव्ययं तेन समासः । एव-मेवंजातीयेऽन्यत्रापि ज्ञातव्यम् ॥ ८८ ॥

**इदं यशांसि द्विषतः सुधारुचः**
**किमङ्गमेतद्द्विषतः किमाननम् ।**
**यशोभिरस्याखिललोकधाविभि-**
**र्विभीषिता धावति तामसी मसी॥८९॥**

इदमिति ॥ अखिलेषु लोकेषु धाविभिः प्रसरणशीलैः लोकत्रयमुज्ज्वलं कुर्वाणैरस्य यशोभिर्विशेषेण भीषिता लोकत्रयान्निर्वासिता सती तामसी कृष्णपक्षरात्रिः एव मसी इदं यशांसि अस्य कीर्तीर्द्विषतः असहमानस्य सुधारुचेश्च-न्द्रस्य अङ्गं कलङ्कम्,अथच-संनिधिं धावति शीघ्रं गच्छति प्रविशति । किम् । किं वा एतद्द्विषतः एतच्छत्रोः आननं प्राप्नोतीति संशयः । एतद्यशोभिश्चन्द्राङ्कशत्रुमुखातिरि-क्तस्य सकलस्यापि जगतः श्वेतीकरणमाश्रयतीत्यर्थः।अयम-तितरां यशस्वीति भावः।अन्योऽपि भीषितः स्वगोत्रं याति, श्यामस्य च श्यामं वस्तु सगोत्रमिति । तामसी तमःसंबन्धिनी रात्रिः, मसी श्यामवस्तुमात्रगता श्यामिका च यथाक्रमं चन्द्राङ्कं शत्रुमुखं धावति किमिति वा । निरन्तरोद्द्योतकरणादेतत्कीर्त्या निष्कासितेव तामसी स्त्रीस्वभावभीरुर्भर्तुश्चन्द्रस्योत्सङ्गं गता अत एव रात्रिका-लिमा चन्द्राङ्के दृश्यते । सर्वस्यापि श्वेतीकरणाच्छ्यामि-कापि निर्वासितान्यत्र स्थातुमशक्तत्तथैव रिपुमुखं गता । अत एव विवर्णीभूतेषु वैरिमुखेषु कालिमा दृश्यते । एतद्द्विषतः 'द्विषः शतुर्वा ' इति षष्ठ्या समासः ॥८९॥

**इदं नृपप्रार्थिभिरुज्झितोऽर्थिभि-**
**र्मणिप्ररोहेण विवृध्य रोहणः ।**
**कियद्दिनैरम्बरमावरिष्यते**
**मुधा मुनिर्विन्ध्यमरुन्धभूधरम् ॥ ९०॥**

इदमिति ॥ अतिवदान्यस्य अस्य नृपस्य प्रार्थनशी-लैरर्थिभिः याचकैः अनेनैव सकलकामानां पूरितत्वादु-ज्झितः परित्यक्तः । अत एव रत्नव्ययाभावात् मणिप्ररो-हेण विवृध्य अङ्कुरोत्पत्त्या विशेषेण वृद्धिं प्राप्य रोहणो मेरुः कियद्भिः कतिपयैरल्पैरेव दिनैरम्बरमाकाशम् आवरिष्यते आच्छादयिष्यति यतः, यस्मात् मुनिरगस्तिः विन्ध्यनामानं भूधरं मुधैवारुन्ध मदागमनपर्यन्तं त्वया न वर्धितव्यमिति नियमेन वृथैव वाग्बद्धमकरोत् । तद्बृ-द्धयभावेऽपि रोहणेनैव सूर्यगतेः प्रतिबन्धस्य करिष्यमा-णत्वादगस्त्यप्रयासस्य वैयर्थ्यमेव जातमित्यर्थः । अग-स्त्येन विन्ध्यरोधस्तु पुराणप्रसिद्धः । आवरिष्यते, वृक-ल्पत्वादिटो दीर्घो न । अरुन्ध, लङ्यात्मनेपदे ॥ ९० ॥

**भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमा-देतस्य स्तुमहे महेभरदनस्पर्धीनि-कैरक्षरैः । लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशःपारदै-रस्य स्वर्णगिरिः प्रतापद-हनैः स्वर्णं पुनर्निर्मितः ॥ ९१ ॥**

भूशक्रस्येति ॥ वयं विक्रमस्य भरेण बाहुल्येन क्रमात्परिपाट्या उपार्जितानि एतस्य भूशक्रस्य पृथ्वी-न्द्रस्य यशांसि कैरक्षरैर्वर्णैः स्तुमहे वर्णयामः । यशसां भूयस्त्वाद्वर्णानां पञ्चाशत्त्वात्स्तोतुं न शक्नुमः । सामा-न्याकारेण कथंचिद्वर्ण्यन्त इत्यर्थः । किंभूतानि—महेभाः षष्टिहायना गजाः, ऐरावतो वा तेषां दशनैः सह स्पर्धन्ते एवंशीलानि तद्वद्गौराणि । स्वर्णगिरिर्मेरुः अन्येषां राज्ञां मेरुमेव लिम्पद्भिः यशोलक्षणैः पारदै रसैः कृतकमसत्यं रजतं रूप्यं कृतोऽपि प्रलेपनिर्मितपाण्डुद्युतितां नीतोऽपि सन् अस्य प्रतापरूपैर्दहनैः अग्निभिः पुनः स्वर्णं निर्मितः कृतः । प्रतापस्य गीतत्वात्स्वर्णरूपतां प्रापितः । पारद-लेपेन सुवर्णं श्वेतीभवति, वह्नितापने चोड्डीने पारदे पुनः काञ्चनमेव भवतीत्यर्थः । एतत्प्रतापाग्रे परेषां यशांसि न प्रसरन्ति । यशस्वी प्रतापवांश्चान्यः कोऽपि नास्ती-त्यर्थः ॥ ९१ ॥

**यद्भर्तुः कुरुतेऽभिषेणनमयं शक्रो भुवः सा ध्रुवं-दैग्दाहैरिव भस्मभिर्मघवता वृष्टैर्धू-तोद्धूलना । शंभोर्मा बत सांधिवेलनटनं भाजि व्रतं द्रागिति-क्षोणी नृत्यति मूर्तिर-ष्टवपुषोऽसृग्वृष्टिसंध्याधिया ॥ ९२ ॥**

१ अत्रानुप्रासः, चिरेति यमकम् । २ अनुप्रासः, द्विषतः इति मसीति च यमकम् ।

१ अत्रानुप्रासः, रोहणस्याम्बरावरणायोगेऽपि तथो-क्तेरतिशयोक्तिः । २ अत्र रदनस्पर्धीनीत्युपमा । अति-शयोक्तिः पुनः स्फुटैव ।

यदिति ॥ अयं भुवः शक्रो भूमीन्द्रः यस्या भूमेर्भर्तुः अभिषेणनं सेनयाभिगमनं कुरुते सा क्षोणी भूमिः इति मनसि कृत्वा लोहितत्वेनौत्पातिकी असृग्वृष्टी रुधिरवृष्टिस्तद्रूपा या सायंसंध्या तस्या धिया भ्रमबुद्ध्या द्राक् शीघ्रं नृत्यति गात्रविक्षेपं करोति कम्पते इत्यर्थः । बत खेदे । ध्रुवमुत्प्रेक्षे । किंभूता सा भूः—दाहात् इन्धनज्वलनाद्भस्मसंभवाद्दैग्दाहैरिव दिग्दाहा दिशामौत्पातिकैर्निर्हेतुकलोहितदीप्तैः प्रभवैरिव मघवता इन्द्रेण वृष्टैर्मौक्तिकैर्भस्मभिः कृत्वा धृतं कृतमुद्धूलनमङ्गलेपो यया सा । इति किम्—शंभोः दिनरात्रिसंधिरूपायां वेलायां काले भवं सांधिवेलं सायंसंध्याकालसमुचितं नटनं नृत्तरूपं व्रतं नियमो मा भाजि भग्नो मा भूदिति स्वयं नृत्यतीत्यर्थः । यतः—अष्टमूर्तेर्जलाद्यष्टमूर्तेः शंभोरेका मूर्तिः पृथिवी । शिवो हि संध्यासमये नृत्यं करोति तन्मूर्तित्वात्तयापि नृत्तमारब्धमित्यर्थः । यमुद्दिश्य अयं प्रयाणं करोति तस्मिन्देशे दिग्दाहभस्मवृष्टिभूकम्परक्तवृष्टिलक्षणास्तत्पराजयसूचका उत्पाता भवन्ति । अयमेव विजयत इत्यर्थः । '.जलार्केन्द्वात्मखम्वाग्निवायवः शिवमूर्तयः' । 'यत्सेनयाऽभिगमनमरौ तदभिषेणनम्' इत्यमरः । यद्भर्तुः, भर्तृशब्दस्य पदात्यर्थत्वाद्याजकादित्वात्समासः । सेनयाभिगमनमभिषेणनम्, 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३।१।२५' इति णिचि ल्युट् । 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ८।३।६५' इति षत्वम् । दैग्दाहैरित्यत्र 'तस्येदम् ४।३।१२०' इत्यण् । संधिवेलायां भवं सांधिवेलम्, 'संधिवेलाद्यृतुनक्षत्रेभ्योऽण् ४।३।१६' इत्यण् । इन्द्रः शिवस्य भस्माहरणेऽधिकारी । अत एव दिशां दाहं कृत्वा भस्मार्पितवानिति केचित् ॥ ९२ ॥

**प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समस्तत्विषां—कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः । निःशेषद्युतिमण्डलव्ययवशादीषल्लभैरेष वा—शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ ९३ ॥**

प्रागिति ॥ प्राक् सर्गादौ अगाधे जगतीशिल्पेऽप्यमर्यादत्रैलोक्यनिर्माणविषयेऽपि यस्त्विषां समस्तः सकलः कोशो भाण्डागारसंचयः नाल्पयितोऽल्पवन्नाचरितः, किंतु तावानेवाक्षयः स्थितः आमुखेन्दु मुखचन्द्रमभिव्याप्य एतस्य वपुः सृजतः स्रष्टुर्ब्रह्मणः सवर्णो स त्विषां समस्तः कोशः शोषं समाप्तिमगात्प्राप क्षयितः । यतः—चरणप्रभृतिमुखपर्यन्तावयवनिर्माणार्थमेव पूर्णो न तु केशनिर्माणार्थं ततस्तस्मात्कान्तिक्षयाद्धेतोः केशमयः केशप्रचुरः केशरूपोऽस्य एष शेषो भागः निःशेषं द्युतिमण्डलं समस्तः तेजोराशिः तस्य व्ययवशान्नाशवशात् 'भाभावस्तमः' इति न्यायात् । ईषल्लभैः सुप्रापैः सुलभैरन्धतमसस्तोमैर्गाढान्धकारसङ्घैः कृत्वा किं वा निर्मित इत्युत्प्रेक्षा । सुन्दरतरोऽयं केशाश्चातिनीला घनाश्चेति भावः । ईषल्लभैः अकृच्छ्रार्थे खल् । 'उपसर्गादेव खल्घञोः, नान्यत्र' इति नियमान्नुमभावः । अन्धतमसम्, 'अवसमन्धेभ्यस्तमसः' इत्यच् ॥ ९३ ॥

**तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धुतैरन्धकारं—निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभिः । भूगोलच्छायमायामयगणितविदुन्नेयकायोऽभियाभूदेतत्कीर्तिप्रतानैर्विधुभिरिव युधे राहुराहूयमानः ॥ ९४ ॥**

तदिति ॥ एष राजा तासां तासां प्राच्यादीनां सर्वासां दिशां जैत्रा जयकारिण्यो यात्रास्तासूद्धुरा उत्साहवन्तोऽतिबलिनस्तुरगास्तेषां खुराग्रै रुद्धते रजोभिः कृत्वा अन्धकारं सृजति । कथंभूतमिव—निर्वाणः शान्तोऽरिप्रतापानलस्तस्मादनन्तरं जातमिव । अन्धकारं सूर्यप्रकाशस्याच्छादितत्वात्तमः सृजति । अनले शान्ते भाभावरूपोऽन्धकारो भवति । एतस्य दिग्जययात्रायां प्रारब्धायां सर्वेषामपि वैरिणां प्रतापः शान्तो भवतीति भावः । तुरंगबाहुल्यं च । तथा—एतस्य कीर्तिप्रतानैर्यशोविस्तारैरेव विधुभिर्बहुभिश्चन्द्रैः युधे युद्धार्थमाहूयमानः स्पर्धापूर्वमाकारित एव राहुः भियेव भयेनेव भूगोलस्य भूमण्डलस्य छायायां मायामयेन मायारूपेण व्याजेन गणितविद्भिर्ज्योतिषिकैर्गणितशास्त्रप्रामाण्येनोन्नेयस्तर्क्यः कायः शरीरं यस्य एवंभूतोऽभूत् । एतत्कीर्तिसमूहचन्द्रान्दृष्ट्वा एकस्य चन्द्रस्य जेतुं शक्यत्वादेषां तु बहूनां जेतुमशक्यत्वाद्राहुणा स्वं गोपायितुं भूगोल-

१ इतः प्रभृति त्रिषु पद्येषु शार्दूलविक्रीडितं वृत्तम् । अत्रोत्प्रेक्षाः ।

१ अत्रानुप्रासः, अतिशयोक्तिः, मुखेन्दुरिति रूपकं च किमित्युत्प्रेक्षा च ।

च्छायरूपं मायामयं शरीरं धृतमित्यर्थः । ज्योतिःशास्त्रे च भूगोलच्छायैव राहुत्वेनोक्ता । अन्योऽपि शत्रोर्भीतः स्वं गोपायितुं रूपान्तरं धारयति । एतादृशो यशस्वी कोऽपि नास्तीति भावः । निर्वाण इति, 'निर्वाणोऽवाते' इति निपातः । 'च्छायमाया-' इत्यत्र 'विभषा सेना-' इति क्लीवत्वम् ॥ ९४ ॥

**आस्ते दामोदरीयामियमुदरदरीं याव-लम्ब्य त्रिलोकी-संमातुं शक्नुवन्ति प्रथिम-भरवशादत्र नैतद्यशांसि । तामेनां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्म-च्छद्माप-न्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ ९५ ॥**

आस्ते इति ॥ येयं त्रिलोकी लोकत्रयी दामोदरीयामुदरदरीं श्रीविष्णोर्जठरकंदरामवलम्ब्याश्रित्य आस्ते अत्रास्यां दामोदरोदरस्थितायां त्रिलोक्यां प्रथिमभरवशान्महत्त्वबाहुल्यादतिसंमर्दात् संमातुं सुखेन स्थातुं न शक्नुवन्त्यसमर्थानि सन्ति, तान्यतिप्रसिद्धानि द्विपदशनैः सनाभीनि सदृशान्यतिगौराणि एतस्य यशांसि तामेतां विष्णूदरदरीस्थितां तत्साहितां त्रिलोकीं पूरयित्वावशिष्टानि तामुदरदरीं तत्स्थां त्रिलोकीं च परिपूर्य अवशिष्टा वा पाण्डुपद्मच्छद्मापन्नानि नाभिसमुत्पन्नधवलकमलव्याजमापन्नानि तदाकाराणि सन्ति मधुध्वंसिनो विष्णोर्नाभीरूपेण पथा मार्गेण निरगुरिव निर्जग्मुरिव । संकटवासयातनाभिया बहिर्निर्गतानीव । श्रीविष्णोर्नाभौ धवलं कमलमन्यथोत्प्रेक्षितम् । पाण्डुरं पद्मं न किंत्वेतद्यशांस्येव । करिदन्तधवलकमलतुल्यान्यतिभूयांसि चास्य यशांसीति भावः । दामोदरीयाम्, 'वृद्धाच्छः' । पृथ्वादित्वात्प्रथिमा नाभीपथेन ऋगादिना समासान्तः ॥ ९५ ॥

**अस्यासिर्भुजगः स्वकोशसुषिराकृष्टः स्फुरत्कृष्णिमा-कम्पोन्मीलदराललीलवलनस्ते-षां भिये भूभुजाम् । सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः-पर्वास्ये विनिवेश्य जाङ्गुलिकता येनाम नालम्बिता ॥ ९६ ॥**

अस्येति ॥ अस्य असिरेव भुजगस्तेषां भूभुजां राज्ञां भिये भवतीति शेषः । किंभूतः-स्वकोश एव चर्ममयं पिधानं तदेव सुषिरं वल्मीकविवरं तस्मादाकृष्टो बहिः कृतः सद्यो धृतश्च । तथा स्फुरन्प्रकाशमानः उत्तमलोहजातिविशेषत्वात्कृष्णिमा श्यामत्वं यस्य । सर्पोऽपि सद्योधृतत्वात्स्फुरत्कालिमा । तथा-कम्पेन तलहस्तान्दोलनेन कृत्वा उन्मीलन्त्यः प्रकटीभूता अराला वक्रा लीला येषु तादृशानि वलनानि गतिविशेषा यस्य । सर्पोऽपि वक्रगतिर्भवति । तेषां केषाम्-यैः सङ्ग्रामेषु निजाङ्गुलीमय्याः स्वीयाङ्गुलीरूपाया महासिद्धौषध्या वीरुधो वल्लयाः स्पर्शमात्रेण विषघ्न्याः पर्वग्रन्थिमङ्गुष्ठाग्रपर्वग्रन्थिद्वयं चास्ये मुखे विनिवेश्य जाङ्गुलिकता विषवैद्यता गारुडिकता नालम्बिता नाङ्गीकृता । नाम प्रसिद्धौ । सर्पोऽपि येन स्वमुखे सिद्धौषधीपर्व न निक्षिप्यते तमेव यथा मारयति, तथा एतदीयः खड्गोऽपि ये शस्त्राणि त्यजन्ति दैन्याच्च मुखे अङ्गुलीपर्व न धारयन्ति तानेव हन्ति नान्यान्भीताञ्शरणागतांश्च । 'विषवैद्यो जाङ्गुलिकः' इत्यमरः ॥ ९६ ॥

**यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रता-मस्मिन्नेव बिभर्ति यश्च किरति क्रूरध्वनिं निष्ठुरः । दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणं-विख्यातः स्फुटमेक एष नृपतिः सीमा गुणग्राहिणाम् ॥ ९७ ॥**

य इति ॥ अरिभटश्रेणीषु शूरतरवैरिसङ्घेषु विषये यः पृष्ठं दर्शयति पराङ्मुखः पलायते । अथ च-यं प्रत्याकृष्यते तस्य स्वभावात्पृष्ठं दर्शयति । यः अस्मिन्स्वस्वामिन्येव नृपे वक्रतामनृजुत्वं स्वाश्रय एव कृतघ्नत्वं बिभर्ति । अथ च-अन्यस्यैतादृग्बलाभावादस्मिन्नेव वक्रतां बिभर्ति । नान्येन नम्रीकर्तुं शक्यत इत्यर्थः । तथा-यो निष्ठुरो निर्दयो दाक्षिण्यरहितः

१ अत्राग्रिमे पद्ये च स्रग्धरा वृत्तम् । अनुप्रासः, अत्राहुर्जीमूतकाराः, 'ज्योतिःशास्त्रप्रमाणकं यद्राहोर्भूच्छायात्मकत्वं, तदेतःकीर्तिचन्द्रभियेत्युत्प्रेक्षा, तया च राहुभीपंकत्वेन कीर्तिचन्द्राणां प्रसिद्धचन्द्राद् व्यतिरेको व्यज्यते ।' इति । २ अत्रानुप्रासः, पद्मच्छद्मना निरगुरिवेति सापह्नवोत्प्रेक्षा, सा च त्रिलोकीयशसोराधारधेययोरानुरूप्याविलक्षणालंङ्कारोत्थापितेति सङ्करः । ' इति जीवातौ स्पष्टम् ।

१ अतः प्रभृति पद्यचतुष्टये शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः, असिर्भुजग इति निजाङ्गुलीमयेत्यादौ च रूपकम् ।

सन् क्रूरध्वनिमनेन सहाप्रियभाषणं किरति । अथ च—परिणतदृढवंशजन्मा क्रूरं वैरिणां भयावहं शब्दं क्रेङ्कारं क्षिपति । दोषं दूषणम् । अथ च—बाहुं भजतस्तथाविधस्य तस्य चापस्य तथाविधस्यान्यस्य वा कस्याचिद्गुणं श्रुतशौर्यादिकं गृह्णन्वर्णयन् । अथ च—मौर्वीमाकर्षन् एष एको नृपतिः स्फुटं निश्चिते गुणग्राहिणां परदोषख्यापननिवृत्तानां दोषेऽपि गुणारोपणं कुर्वतां सज्जनानाम् । अथ च—मौर्वीग्राहिणां धनुर्धराणां सीमा पर्यन्तावधिः स्फुटं विख्यातः प्रसिद्धः । एवंविधो धनुर्धरः सज्जनश्च कोऽपि नास्तीत्यर्थः धनुःपृष्ठदर्शनेनैतस्य पलायनाभावः सूचितः ॥ ९७ ॥

**अस्यारिप्रकरः शरश्च नृपतेः संख्ये पतन्तावुभौ—सीत्कारं च न संमुखौ रचयतः कम्पं च न प्राप्नुतः । तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयो—रेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥ ९८ ॥**

अस्येति ॥ अस्य नृपतेः उभौ संख्ये सङ्ग्रामे क्रमेण संमुखौ एतत्संमुखं वैरिसंमुखं च पतन्तौ सन्तौ सीत्कारं दुःखाभिव्यञ्जकं दन्तमध्यनिर्गतं पक्षवातजनितं च ध्वनिविशेषं यत्र रचयतः न कुरुतः । यच्च मरणभीतिजनितं दुर्निर्गतत्वजनितं च कम्पं न प्राप्नुतः । उभौ कौ—अरिप्रकरो वैरिसङ्घः, शरश्च एतौ द्वौ । तथा—मुक्तयोः प्राप्तमोक्षधनुश्च्युतयोः यत् पुनर्निवृत्तिः जन्म प्रत्यागमनं च न जागर्ति भवति तत्सर्वं युक्तम् उचितमेव । द्वयोरपि तुल्यधर्मत्वात् । तर्हि विलक्षणं किमित्याशङ्कायामाह—तत्र तयोर्द्वयोर्मध्ये एको वैरिसङ्घः मित्रं सुहृदम् । अथ च—सूर्यं भिनत्ति । अपरश्च शरोऽमित्रं सूर्यव्यतिरिक्तम् । अथ च—वैरिणं भिनत्ति द्विधाकरोतीत्यद्भुतमाश्चर्यम् । तुल्यकर्मणोरतुल्यकर्मारम्भकत्वस्य विरुद्धत्वादित्यर्थः । चावन्योन्यसमुच्चये । दुःखभयराहित्येन रणे संमुखः पतितः शत्रुसङ्घः 'द्वाविमौ पुरुषौ लोके' इति वचनात्सूर्यमण्डलं भित्त्वा मुक्तिं प्राप्तः । अदृढमुष्टितया मुक्तो बाणः कम्पसीत्कारौ रचयति । तदकरणाच्च दृढमुष्टितास्य सूचिता । दृढमुष्टित्वेन मुक्तो वैरिमध्ये न पुनरायाति वैरिणं हन्तीत्यर्थः । शूरतरोऽयं शत्रुमात्रं हत्वानिति भावः । बाणपक्षे—सम्यक् मुखं पुङ्खमग्रं वा यस्येति ॥ ९८ ॥

**धूलीभिर्दिवमन्धयन्बधिरयन्नाशाः खुराणां रवै—र्वातं संयति खञ्जयञ्जवजवैः स्तोतॄन्गुणैर्मूकयन् । धर्माराधनसंनियुक्तजगता राज्ञाऽमुनाऽधिष्ठितः—सान्द्रोत्फालमिषाद्विगायति पदा स्प्रष्टुं तुरंगोऽपि गाम् ॥ ९९ ॥**

धूलीभिरिति ॥ धर्माराधने सम्यक् नियुक्तं प्रेरितं जगत् येन एवंभूतेनामुना राज्ञाधिष्ठित आरूढस्तुरंगोऽपि पशुरपि धूलीभिः खुरजरजोभिर्दिवं स्वर्गलोकमन्धयन्नन्धं कुर्वन् । चक्षुःप्रविष्टाद्रजस एव निमीलितनयनं कुर्वन्नित्यर्थः । तथा—खुराणां रवैः समुच्चलनशब्दैः कृत्वा आशा दिक्प्रान्तनिवासिनो जनान्बधिरयन्बधिरतया शब्दान्तरग्रहणाशक्तान्कुर्वन् । तथा—संयति संग्रामे जवस्य वातवेगस्य जवैर्वायोः सकाशादतिवेगतया वातं खञ्जयन्पङ्गुं कुर्वन् । तथा—गुणैर्हेतुभिः स्तोतॄनश्वजयरूपलक्षणादिवर्णनकारिणो जनान्मूकयन् गुणाधिकत्वेन सामस्त्येन स्तोतुमसमर्थान्मूकानिव कुर्वन् । एवंभूतः सन् अनन्तरं सान्द्राणां निरन्तराणामुत्फालानां चतुर्भिश्चरणैरुत्पतनानां मिषात्पदा एकेनापि चरणेन गां भुवम् । अथ च—धेनुं स्प्रष्टुं तस्याः स्पर्शनं कर्तुं विगायति विशेषेण जुगुप्सते । धार्मिको राजा निषिद्धमाचरतः स्वाधीनान्पापिनो दण्डयति । अहं तु तदधिष्ठितः पदा गोः स्पर्शलक्षणं पापं कुर्वन्दण्ड्यः स्यामिति बुद्ध्या पदा न स्पृशतीवेत्यर्थः । धार्मिको जवनाश्वश्चायमेवेत्यर्थः । अन्धयन्नित्यादौ 'तत्करोति तदाचष्टे' इति णिजन्ताच्छतृ ॥ ९९ ॥

**एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां—कष्टं द्रष्टैव नाभूद्भुवि समरसमालोकिलोकास्पदेऽपि । अश्वैरस्वैरवेगैः कृतखुरखुरलीमङ्क्षुविक्षुद्यमान—क्ष्मापृष्ठोत्तिष्ठदन्धंकरणरणधुरारेणुधारान्धकारात् ॥ १०० ॥**

---

१ अत्र व्याजस्तुतिः । गुणग्राहिसीमात्वस्य पूर्ववाक्यार्थहेतुकत्वाद् वाक्यार्थहेतुकं काव्यलिङ्गं च ।

१ अत्रानुप्रासः, अरिप्रकरः शरश्चेत्यादौ समुच्चयः । मित्रं भिनत्तीति श्लेषमूलया व्याजनिन्दया प्रकृतराजस्तुतिरिति व्याजस्तुतिः । २ अत्रानुप्रासः, अन्धयन्नित्यादीनामेककालावच्छेदेन निदर्शनात् प्रकृतत्वाच्च तुल्ययोगिता ।

एतेनेति ॥ समरसमालोकिनो ये लोकास्तेषामास्पदे स्थानभूतायामपि भुवि संग्रामभूमौ समरसमालोकिलोकानां देवानामास्पदे गगनेऽपि वा एतेन राज्ञा उत्कृत्तकण्ठाच्छिन्नग्रीवाः कबन्धरूपाः प्रतिसुभटा रिपुवीरास्त एव नटा नर्तकास्तैरारब्धानां नाट्यादद्भुतानां नृत्ताश्चर्याणां द्रष्टा नाभूदेव । कष्टमतिदुःखमेतत् । तत्र हेतुः—अस्वैरवेगैः शीघ्रजयैरश्वैः कृता खुरैः कृत्वा खुरली अभ्यासभूमिः पुनः पुनः न्यासो वा तया मङ्क्षु मनोज्ञं शीघ्रं वा विशेषेण क्षुद्यमानं चूर्णीभवत्क्ष्मापृष्ठं भूतलं तस्मादुत्तिष्ठन्नुत्पतन् अनन्यमन्धंकरण एवंभूतो रणधुरारेणू रणप्रारम्भ एव समुत्पन्नो रेणुस्तस्य धाराः प्रवाहास्तज्जनितादन्धकारात् । रणविलोकनार्थमागतैरपि मानवैर्देवैरप्यश्वखुरोत्थितरजःपूरितनेत्रैः कबन्धनृत्तं नालोकीत्यर्थः । 'मन्दस्वच्छन्दयोः स्वैरम्' । 'एतत्कृत्तोत्तमाङ्ग—'इति पाठः साधीयान् । द्रष्टा तृच् । रणधुरा, ऋगादिना अः । धुरा भर इति वा ॥ १०० ॥

**उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर-क्रोडक्रीडद्द्विजालीगरुदुदितमरुत्स्फालवाचालवीचिः । एतेनाखानि शाखानिवहनवहरित्पर्णपूर्णद्रुमाली-व्यालीढोपान्तशान्तव्यथपथिकदृशां दत्तरागस्तडागः १०१॥**

उन्मीलदिति ॥ एतेन राज्ञा एतादृशस्तडागोऽखानि निष्पादितः । किंभूतः—उन्मीलन्ती विकसन्ती लीला विलासो येषां तानि नीलोत्पलानि तेषां दलानि पत्राणि तेषां दलनं विकसनं तदुद्भवेन आमोदेन परिमलेन मेदस्वी पुष्टो बहुलपरिमलः पूरः प्रवाहस्तस्य क्रोड उत्सङ्गे क्रीडन्ती द्विजालिर्हंसादिपङ्क्तिस्तस्या गरुभ्यः पक्षेभ्य उदित उत्पन्नो मरुद्वायुस्तस्य स्फालः सवेगगमनं संघट्टो वा तेन वाचालाः शब्दायमाना वीचयस्तरङ्गा यस्य । तथा—शाखानिवहेन नवहरित्पर्णैर्नूतनश्यामपर्णैश्च पूर्णा द्रुमाल्यो वृक्षपङ्क्तयस्ताभिर्व्यालीढो व्याप्त उपान्तस्तीरप्रदेशस्तेन शान्ता व्यथा ग्रीष्मोष्मपीडा यासां तासां पथिकदृशां—ग्रीष्मोष्मपीडा येषां पथिकानां वा दृशस्तासां दत्तो रागः संतोषो येन । तडागस्यातिरमणीयत्वं सुखजनकत्वमस्य च धार्मिकत्वं सूचितम् ॥ १०१ ॥

**वृद्धो वार्धिरसौ तरङ्गवलिभं बिभ्रद्वपुः पाण्डुरं—हंसालीपलितेन यष्टिकलितस्तावद्वयोवंहिमा । बिभ्रच्चन्द्रिकया च कं विकचया योग्यस्फुरत्संगतं स्थाने स्नानविधायिधार्मिकशिरोनत्यापि नित्यादृतः ॥ १०२ ॥**

वृद्ध इति ॥ असौ अनेन निर्मितस्तडागः वृद्धो महान्वार्धिः समुद्रः । समुद्रापेक्षयापि महानित्यर्थः । अथ च—असौ (वार्) वारि धीयतेऽस्मिन्वार्धिः वारिस्थानं तडाग एव वृद्धोऽतिप्रवयाः । किंभूतः—तरङ्गैः कृत्वा वलिभं वलियुक्तम् । तरङ्गा एव वार्धकसंकुचत्स्थूलशरीरावयवविशेषस्थाने जाता यस्येत्यर्थः । तादृशतरङ्गरूपाभिर्वलिभिर्भातीति वा । हंसालीपलितेन हंसपङ्क्तिरूपेण जराशौक्ल्येन पाण्डुरं धवलं प्रवाहरूपं वपुर्बिभ्रत् । तथा—यष्ट्या मध्यनिक्षिप्तकीर्तिस्तम्भरूपया कलितो ज्ञातपरिमाणः । अलंकृत इत्यर्थः । अथ च—स्खलच्छरीरधारणार्थं दण्डेन युक्तः । धृतशरीर इत्यर्थः । तथा तावतामतिबहूनां नानाजातीयानां वयसां पक्षिणां वंहिमा बाहुल्यं यत्र । अथ च—तावतः शतसमीपवर्तिनो वयसो वार्धकस्य वंहिमा यस्य । तथा—विकचयातिप्रकाशमानया चन्द्रिकया योग्यं समुचितं स्फुरत्प्रकाशमानं संगतं मैत्रं यस्य । ज्योत्स्नावन्निर्मलम् । अथ च—समुद्रत्वादेतज्जलं ज्योत्स्नामैत्र्यामुचितं कं जलं बिभ्रत् । अथ च—विगतकेशया चन्द्रिकया खालित्येन 'चान्दी' इति कान्यकुब्जभाषायाम् । तया उचितं स्फुरन्मैत्रं कं शिरो बिभ्रत् । यद्वा—केशरहितेन खालित्येनोपलक्षितम् । तथा—वार्धकोचितं प्रकटं सम्यग्गतं कम्पनं यस्य शिरसः तत् । तथा—स्नानविधायिभिर्धार्मिकैः शिरोनत्यापि यत् नित्यमादृतः तत् स्थाने उचितम् ॥ धार्मिकैश्च स्नानादौ तीर्थं नमस्क्रियते । वृद्धस्यापि समुद्रस्य पर्वण्येव स्पर्शयोग्यत्वादेतस्य सर्वदेत्याधिक्यं समुद्रात् । वलिभमिति मत्वर्थे 'तुन्दिवलि' इति भः । द्वितीयव्याख्याने पचाद्यच् । बहुलस्य भावः, पृथ्वादित्वादिमनिचि 'प्रियस्थिर' इति वंहिरादेशः । धार्मिकः, 'धर्मं चरति' इति ठक् ॥ १०२ ॥

---

१ अत्राग्रिमे च पद्ये स्रग्धरा वृत्तम् । अत्रानुप्रासः, खुरेत्यादौ यमकम् । सुभटनटेत्यादौ रूपकम् च ।

१ अत्रानुप्रासः, दलेत्यादौ यमकं च । अतिशयोक्तिश्च । २ अत्र शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः शब्दालङ्कारः, असौ वार्धिरित्यादौ रूपकम् ।

**तस्मिन्नेतेन यूना सह विहर पयःकेलिवेलासु बाले-नालेनास्तु त्वदक्षिप्रतिफलनभिदा तत्र नीलोत्पलानाम् । तत्पाथोदेवतानां विशतु तव तनुच्छायमेवाधिकारे तत्फुल्लाम्भोजराज्ये भवतु च भवदीयाननस्याभिषेकः ॥१०३॥**

तस्मिन्निति ॥ हे बाले, तस्मिन् तडागे त्वम् एतेन यूना सह विहर क्रीड । तथा—तडागे पयःकेलिवेलासु जलक्रीडावसरेषु ग्रीष्मर्तौ वा तत्रैव नालस्य दृश्यत्वात् । प्रतिग्रीष्माभिप्रायं बहुवचनम् । नीलोत्पलानां तव अक्षिप्रतिफलनान्नेत्रप्रतिबिम्बात्सकाशाद्भिदा भेदः नालेन कमलदण्डेनास्तु । अतिसादृश्यात् इदं त्वन्नेत्रं वा नीलोत्पलम्, इदं वा इति संदेहे ' सनालं यत्तन्नीलोत्पलम्, अनालं च त्वन्नेत्रम्' इति नालमेव निर्णायकं भवतीत्यर्थः । तथा—तस्य पाथो जलं तस्य देवतानामधिकारे व्यापारे आधिपत्ये वा तव तनुच्छायं तव शरीरप्रतिबिम्बमेव विशतु । तज्जलदेवतास्थाने त्वच्छरीरप्रतिम्बिमेव भवत्वित्यर्थः । तथा—तस्य फुल्लानां विकसितानामम्भोजानां राज्ये खण्डे । अथ च—आधिपत्ये । भवदीयाननस्य त्वदीयमुखकमलस्य च जलक्रीडावशादभिषेकः । अथ च—पट्टाभिषेकः भवतु । नीलोत्पलजलदेवताफुल्लकमलापेक्षया भैमीनेत्रशरीराननमधिकामिति सूचितम् । तनुच्छायम्, ' विभाषासेनासुराच्छायाशालानिशानाम् २।४।२५' इति क्लीबत्वम् ॥ १०३ ॥

**एतत्कीर्तिविवर्तधौतनिखिलत्रैलोक्यनिर्वासितै-र्विश्रान्तिः कलिता कथासु जगतां श्यामैः समग्रैरपि । जज्ञे कीर्तिमयादहो भयभरैरस्मादकीर्तिः पुनः—सा यन्नास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम् ॥ १०४ ॥**

एतदिति ॥ जगतां स्थावरजङ्गमात्मकानां भुवनानां सम्बन्धिभिः समग्रैरपि श्यामैः कृष्णैः कज्जलादिपदार्थैर्गुणैर्वा कथासु वार्तासु एव विश्रान्तिः कलिता आश्रयोऽङ्गीकृतः । किंभूतैः श्यामैः—एतस्य कीर्तेर्यशसः विवर्तेन परिणामेन विशेषेण वर्तनं विवर्तः स्थितिर्वा तेन धौताद्धवलीकृतान्निखिलात् त्रैलोक्यात्कंदरादिसहितात् निर्वासितैर्निष्कासितैः कीर्त्या लोकत्रयस्य श्वेतीकरणात्तत्तच्छ्यामगुणानां सांप्रतमदर्शनात् 'पूर्वं श्यामानि वस्तून्यभूवन्' इति वार्तामात्रशेषाणि श्यामानि जातानि सार्वथा न सन्तीत्यर्थः । तथा—कीर्तिमयात् कीर्तिप्रचुरादस्माद्राज्ञः अकीर्तिः पुनः भयभरैर्भीतिबाहुल्यैर्जज्ञे जातम् । अहो आश्चर्यम् । कीर्तेरकीर्तेश्च विरोधात्कीर्तिरूपादस्मादकीर्तेर्भयं युक्तमित्यर्थः । एतत्कुतः—यद्यस्मात् मलिनच्छायाऽतिकृष्णा सा अपकीर्तिः अस्य कथापथेऽपि स्थितिमाश्रयं न बबन्ध नाकरोत् । एतत्कथाप्रारम्भेऽकीर्तिलेशस्याप्यभावात्कीर्तिरेव वर्ण्यत इत्यर्थः । यश्च यस्माद्बिभेति स तदीयकथाप्रारम्भ एव मलिनो भूत्वाऽन्यत्रैव गच्छति । अविद्यमानमपि शशविषाणादि वचनादिगोचरो भवति, अकीर्तिस्तु वचनगोचरोऽपि नाभूदित्याश्चर्यम् । अचेतनाया अप्यकीर्तेर्भयोत्पादनादपि चित्रम् । 'जरताम्' इति पाठे वृद्धानां कथास्विति व्याख्येयम् । जज्ञे, भावे लकारः ॥ १०४ ॥

**अथावदद्भीमसुतेङ्गितात्सखी**
**जनैरकीर्तिर्यदि वाऽस्य नेष्यते ।**
**मयाऽपि सा तत्खलु नेष्यते परं**
**सभाश्रवःपूरतमालवल्लिताम् ॥ १०५ ॥**

अथेति ॥ अथ सखी भीमसुताया इङ्गितादनुरागसूचकात् भ्रूवेल्लनादिचेष्टितात्सरस्वतीमित्यवदत् । इति किम्—हे वाणि, जनैः अस्याकीर्तिर्यदि नेष्यते वा नाभिलष्यत एव तर्हि मयाऽपि सा अस्य अकीर्तिः खलु निश्चितं नेष्यते नाभिलष्यते । यद्यपि तुल्यं तथाऽपि परं कश्चिद्विशेषोऽस्ति सभायाः सभालोकस्य श्रवःपूरतमालवल्लितां कर्णाभरणतमालवल्लित्वं नेष्यते प्रापयिष्यते । जनानामसंमतां शशविषाणादिवदसतीमप्यस्याकीर्तिमेव सर्वां सभां श्रावयिष्यामीत्यर्थः । वाण्यास्तद्वर्णननिवारणं चकारेति भावः । अकीर्तेर्नीलत्वात्तमालवल्लित्वम् । इष्यते, इषेः कर्मणि । नेष्यते, णीञः प्रधानकर्मणि लृट् ॥ १०५ ॥

**अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः सङ्ख्यया—प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्र-**

---

१ अत्र स्रग्धरा छन्दः । अनुप्रासः, भवेति यमकम् ।

१ अत्र शार्दूलविक्रीडितं वृत्तम् । अत्र कीर्तिमयादित्यतिशयोक्त्यनुप्राणितं रूपकम्, अकीर्तेर्मलिनच्छायेत्याद्ययोगेऽपि तथोक्तेरतिशयोक्तिश्च । २ अत्र वंशस्थविलं छन्दः । अनुप्रासः श्रवःपूरतमालेति रूपकम् ।

रुयाः किलाकीर्तयः । गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरान्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥१०६॥

अकीर्तिमेव वर्णयति—

अन्वेति ॥ हे वाणि, मूकानां प्रकरेणास्य क्षोणिपतेरकीर्तयः किल प्रसिद्धं निश्चितं वा कूर्मरमणी कच्छपिका तस्या दुग्धादुत्पन्नस्योदधे रोधसि तीरे गीयन्ते । किंभूताः—परार्धोद्गणितावधेः सकाशात्परयाधिकया संख्यया लक्षीकृता गणिता परार्धादप्यधिकाः । तथा—प्रज्ञाचक्षुर्भिः जात्यन्धैरवेक्ष्यमाणं दृश्यमानं तिमिरं तत्प्रख्यास्तत्तुल्या अतिश्यामाः । किंभूतेन प्रकरेण—अष्टमं स्वरं निषादादिसप्तस्वरातिरिक्तं कलयताङ्गीकुर्वता । तथा—वन्ध्योदराज्जातेन । एवमस्याकीर्तयः सन्तीत्येतदकीर्तीः सभा श्राविता । परार्धाधिका संख्या, अन्धस्य दर्शनशक्तिः, तिमिरस्य चाक्षुषरूपत्वं, स्वरस्याष्टमत्वं, वन्ध्योदराजन्म, कच्छपिकादुग्धं, एतानि सर्वथा यथा न सन्ति तथैतद्विशेषणयुक्ता अस्याकीर्तयोऽपि न सन्तीति विपर्यवसानवृत्त्या वर्णनैव कृता । उपहासार्थं त्वसंगतोक्तिः । आ सामस्त्येन कीर्तयः आकीर्तयः पूर्वोक्तविशेषणविशिष्टा अस्य समस्ताः कीर्तयो गीयन्ते किल । पर्यवसानवृत्त्या अस्य कीर्तयो न सन्त्येवेति निन्दैव कृतेति वा । कच्छपी च दर्शनेनैवापत्यानि पालयति न दुग्धेनेति प्रसिद्धिः । प्रज्ञाचक्षुषो योगिनो ज्योतिर्विलोकननिष्ठास्तिमिरं न पश्यन्तीति वा । तिमिरवत्प्रख्यायन्ते।मूलविसुजादित्वात्कः॥१०६॥

तदक्षरैः सस्मितविस्मिताननां
निपीय तामीक्षणभङ्गिभिः सभाम् ।
इहास्य हास्यं किमभून्नवेति तं
विदर्भजा भूपमपि न्यभालयत् ॥१०७॥

तदक्षरैरिति ॥ विदर्भजा इहास्यां सभायाम् एतदीयवचनविषये वा अस्य वर्णितस्य नृपस्य हास्यं किमभूत्कि वा नाभूदिति कारणात्सभावत्तमपि भूपं न्यभालयदौदासीन्येन संमुखदृष्ट्या ददर्श नत्वनुरागादित्यर्थः । किं कृत्वा—अनुरागाभावेऽपि हासरसकृताभिरीक्षणभङ्गीभिरवलोकनप्रकारविशेषैस्तां सभां निपीय सादरमवलोक्य । किंभूतां सभाम्—विप्युपक्रमैर्निषेधे पर्यवसितैः पूर्वोक्तैरक्षरैः कृत्वा सस्मितानि सविस्मितानि साश्चर्याणि वा आननानि यस्यास्ताम् । इह नृपे आस्यहास्यं जातं न वेति वा । स्मितसहितानां विगतस्मितत्वं विरुद्धम् । विरोधाभासः ॥ १०७ ॥

पतिव्रताया भैम्या नलान्यावलोकनमनुचितमित्याशङ्कां परिहरन्नुत्तरसर्गे वर्णयिष्यमाणस्य नलस्य प्रस्तावनां करोति—

नलान्यवीक्षां विदधे दमस्वसुः
कनीनिकागः खलु नीलिमालयः ।
चकार सेवां शुचिरक्ततोचितां
मिलन्नपाङ्गः सविधे तु नैषधे ॥१०८॥

नलेति ॥ दमस्वसुः कनीनिका नेत्रतारा नलादन्यस्य नृपस्य वीक्षामवलोकनरूपम् आगः अपराधं विदधे चक्रे । किंभूता—खलु यस्मात् नीलिम्नः कालिम्न आलयः स्थानम् । मलिनो हि निषिद्धमाचरति । अपाङ्गस्तु कटाक्षः पुनः सविधे द्वितीयपङ्क्तौ त्रिचतुरेभ्योऽनन्तरमुपविष्टे नैषधे सत्यनले मिलन्संबद्धः सन् शुचिरक्ततोचितां धवलरक्तत्वयोग्यां सेवां चकार । धवलरक्तत्वलक्षणसामुद्रिकलक्षणयुक्तोऽपाङ्गस्तु नल एव संलग्नोऽभूदित्यर्थः । अथ च—शुचेः पापभीरोरनुरक्तस्य च भावेन स्वामिभक्त्योचितामिति वा । स्वामिभक्तो हि स्वामिनमेव सेवते नत्वन्यमित्यर्थः । कटाक्षेणान्यावलोकने दोषः ऋजुदृष्ट्या त्वन्यविलोकने दोषो नेति न पातिव्रत्यक्षतिः क्वापि । नलमेव कटाक्षैर्विलोकयति स्मेति भावः । इन्द्रादिषु चतुर्ष्वलीकनलेषु सत्स्वपि सत्यनलत्वेऽज्ञातेऽपि तत्रैव सत्यनल एवानुरागबाहुल्याददृष्टवशात्कटाक्षनिरीक्षणं युक्तम् ॥ १०८ ॥

इदानीं श्लोकचतुष्टयेन परस्परानुरागं वर्णयति—

दृशा नलस्य श्रुतिचुम्बिनेपुणा
करेऽपि चक्रच्छलनम्रकार्मुकः ।
स्मरः पराङ्गैरनुकल्प्य धन्वितां
जनीमनङ्गः स्वयमार्दयत्ततः ॥१०९॥

---

१ अत्र शार्दूलविक्रीडितं वृत्तम्। निन्दया स्तुतेः प्रतीतिरिति व्याजस्तुतिः।

१ अत्राग्रिमे च पद्ये वंशस्थविलं छन्दः । अनुप्रासः, सभाया ईक्षणभङ्गिकर्तृकपानोक्तेरसम्भवार्थत्वादतिशयोक्तिः । २ अत्र खल्वित्युत्प्रेक्षा, नीलिमाऽऽलय इति परिकरश्च ।

दृशेति ॥ ततो भैमीकटाक्षविलोकनानन्तरं स्वयमनङ्गोऽङ्गरहितः । अत एव नलस्य दृशा नेत्रव्यापारेणैव श्रुतिचुम्बिनापाऽङ्गसंचारिणा कटाक्षरूपेण कर्णपूर्णेनेपुणा कृत्वा स्मरः परस्य नलस्यैव दृगादिभिरङ्गैरवयवैः धन्वितां धनुर्धरत्वमनुकल्प्य जनीं भैमीमार्दयदपीडयत् । किंभूतः स्मरः—करे नलस्यैव हस्ते रेखामयराज्यलक्षणरूपचक्रच्छलेन नम्रं चक्राकारं कार्मुकं यस्य सः । नलेक्षिता सती कामातुरा जातेति भावः । मुख्याङ्गाभावे चानुकल्पोऽप्यङ्गीक्रियते । आर्दयत्, 'अर्द हिंसायाम्' ण्यन्ताल्लङ् । 'आर्दिदत्' इति पाठे लुङ् ॥ १०९ ॥

उत्कण्टका विलसदुज्ज्वलपत्रराजि-
रामोदभागनपरागतराऽतिगौरी ।
रुद्रक्रुधस्तदरिकामधिया नले सा
वासार्थितामधृत काञ्चनकेतकीव ११० ॥

उत्कण्टकेति ॥ सा भैमी रुद्रक्रुधः रुद्रकृतशापपरित्यागसमुद्भवात्कोपाद्धेतोः तस्य रुद्रस्यारिः कामः तस्य धिया अयं काम एवेति बुद्ध्या नले विषये वासस्य स्वयंवरेण स्थितेरर्थितामभिलाषुकत्वमधृत दधार । नले साभिलाषा जातेति भावः । स्वशत्रुसमाश्रयणं च युक्तम् । केव—काञ्चनकेतकीव । किंभूता सा केतकी च—उत्कण्टका उदितरोमाञ्चा ऊर्ध्वीभूतसूचीतुल्यशूकाग्रा च । तथा—विलसन्ती शोभमाना नीलपीतादिभिर्वर्णैरुज्ज्वला प्रकाशमाना, उज्ज्वलेन शृङ्गारेण वा प्रकाशमानो विलोककानां शृङ्गारो यया एवंभूता वा, कस्तूर्यादिरचिता कपोलवक्षोजादौ पत्रराजिः पत्रवल्ली पत्रपङ्क्तिर्यस्याः । शोभमानोज्ज्वलवर्णपङ्क्तिश्च यस्याः । तथा—आमोदं विलेपनजं सुरभिगन्धं हर्षं वा, स्वाभाविकं परिमलं च भजतीति भाक् । तथा—अपगतोऽनुरागो यस्याः एवंभूता न भवति अतितरामनपरागतरा । नयेऽतितरामनुरागिणी । न विद्यते परागः पुष्परजो यस्याम् । एवंविधा न भवति । नितरामनपरागा अनपरागतरा । अतितरां परागसहिता । तथा—अतितरां गौरी गौरवर्णा उभय्यपि । गौरीं पार्वतीमतिक्रान्ता वा भैमी । सुवर्णकेतकी यथा रुद्रकोपस्य वसत्यभिलाषुकत्वं दधार तस्य स्थानं बभूवेत्यर्थः । तथा भैम्यपि नलविषये नलवैरिकामबुद्ध्या नलशत्रुः काम एव नलसंबन्धित्वेन मां पीडयतीति धिया रुद्रकोपस्यात्मनि यो वासस्तदर्थितां दधार रुद्रकोपस्य स्थानं जाता । नितरां सकोपा जातेत्यर्थः । कामसाम्यं नलस्योक्तम् । नलेन कटाक्षवीक्षणे कृते साऽतितरां कामपीडिता जातेति भाव इति वा । गौरीमतिक्रान्तेति तत्पुरुषे 'गोस्त्रियोरुपसर्जनस्य १ । २ । ४८ ।' इति ह्रस्वप्राप्तेरतिगौरिरिति स्यात् । तथाऽपि 'सर्वतोऽक्तिन्नर्थात्' इति ह्रस्वान्तादपि पक्षे ङीषि अतिगौरीति संगच्छेते ॥ ११० ॥

तन्नालीकनले चलेतरमनाः साम्यान्मनागप्यभू–
दप्यग्रे चतुरः स्थितान्न चतुरा पातुं दृशा नैषधान् ।
आनन्दाम्बुनिधौ निमज्ज्य नितरां दूरं गता तत्तला–
लंकारीभवनाज्जनाय ददती पातालकन्याभ्रमम् ॥ १११ ॥

तदिति ॥ न अलीको नालीकः स चासौ नलश्च नालीकनलः सत्यनलः तस्मिन्नदृष्टवशघटितदुर्घटदर्शने सत्यनले चलेतरत् निश्चलं मनो यस्याः सा तत्रैवानुरक्ता सती सा भैमी अग्रे स्थितानपि चतुरश्चतुःसंख्याकानलीकान्नैषधान्नलान् साम्यात्सत्यनलसाम्येन दृशा नयनव्यापारेण पातुं कटाक्षैर्विलोकयितुं मनागल्पमपि चतुरा कुशला नाभूत् । किंभूता—आनन्दाम्बुनिधावानन्दरूपे समुद्रे निमज्ज्य ब्रुडित्वा । नलावलोकनान्निश्चला भूत्वेति यावत् । नितरां दूरं गता हर्षस्य परमकाष्ठां प्राप्ता, तलं गता च । तथा—तस्य आनन्दसमुद्रस्य तलं तस्यालंकारीभवनाज्जनाय पातालकन्याभ्रमम् अतिसौन्दर्यादानन्दवशाच्च निर्निमेषतया समुद्रे निमज्ज्य तलगमनेन च किमियं नागकन्येति भ्रमं बुद्धिं ददती जनयन्ती । 'अलंकारीभवते' इति पाठे तस्य तलस्य भूतलस्योपवेशनेन अलंकारभूतायेन्द्रादिलोकाय नललक्षणाय जनाय वा । पातालतलस्यालंकारीभवते वासुक्यादिनागलोकाय वा । पुरःस्थितान्नलाकारानपीन्द्रादीनन्यराजवत् ऋजुदृष्ट्यैव विलोकयति स्म । अदृष्टवशाच्च व्यवहितमपि सत्यनलं कटाक्षैर्विलोकयति स्मेति भावः । 'तन्नल–' इति पाठे तेषामलीकनलानां स्वीयेन रूपेणालंकारभूताय जनाय । सत्यनलायेत्यर्थः ॥ १११ ॥

१ चक्रच्छलेत्यपह्नुतिः ।

१ अत्र वसन्ततिलका वृत्तम् । अनुप्रासः, केतकीवेति पूर्णोपमा । २ अत्र शार्दूलविक्रीडितं वृत्तम् । अनुप्रासः, 'चतु' इति यमकम् ।

सर्वस्वं चेतसस्तां नृपतिरपि ददृशे प्रीतिदायं प्रदाय-प्रापत्तद्दृष्टिमिष्टातिथिममरदुरापामपाङ्गोत्तरङ्गाम् । आनन्दान्ध्येन वन्ध्यानकृत तदपराकूतपातान्स रत्याः–पत्या पीयूषधारावलनविरचितेनाशुगेनाशु लीढः ॥

सर्वस्वमिति ॥ स नृपतिः नलोऽपि चेतसः सर्वस्वं प्राणवल्लभियां तां भैमीं ददृशे स्वनेत्राय प्रीतिदायं संतोपजनितं दानं प्रदाय प्रकर्षेण दत्त्वा कटाक्षेण तां सादरं दृष्ट्वा अमरदुरापामिन्द्रादिभिर्दुर्लभां लोकोत्तरस्वरूपाम् । अथ च—तेषां कटाक्षेणानवलोकनात्तैर्दुरापाम् । अपाङ्गे नेत्रप्रान्ते उत्तरङ्गां चलत्कल्लोलामतिचञ्चलां कटाक्षरूपां तद्दृष्टिं भैमीदृष्टिमेव इष्टातिथिं प्रियमभ्यागतं प्रापल्लेभे । भैम्या पूर्वं कटाक्षैर्विलोकितः, अनन्तरं तेन सावलोकिता, अनन्तरं पुनरपि तया विलोकित इत्यर्थः । अनन्तरं च रत्याः पत्या कामेन पीयूषधारारूपमतिनिर्वापकत्वादमृतरूपं यद्वलनं भैमीकृतं वलितग्रीवमवलोकनं तेन कृत्वा विरचितेनाशुगेन भैमीकटाक्षरूपेण बाणेन आशु शीघ्रं लीढो विद्धः स नलः तस्या भैमीदृष्टेरपरेऽन्ये तृतीयादयो ये आकूतपाता अनेकभावाभिव्यञ्जका व्यापारविशेषास्तान् आनन्दान्ध्येन हर्षाश्रुपरिपूर्णनेत्रतया यदान्ध्यमदर्शनं तेन वन्ध्यान्निष्फलानकृत । भैमीद्वितीयकटाक्षवीक्षणेनैव अतितृप्तः कामविवशः सन् तस्याः तृतीयादिकटाक्षनिरीक्षणानि न ददर्शेति भावः । अन्योऽपि तुष्टः कस्मैचित्सर्वस्वं ददाति प्रियं चातिथिं प्राप्यानन्दबाष्पाम्बुपूर्णो भवतीति ॥ ११२ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । तस्य द्वादश एष मातृचरणाम्भोजालिमौलेर्महा–काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ ११३ ॥

श्रीहर्षमिति ॥ माता वागीश्वरी जननी च तस्याश्चरणौ एवाम्भोजे, तयोरलिरूपो भ्रमररूपो मौलिर्यस्य । यद्वा—मातृचरणसंबन्धिनी पूजार्थं चरणयोरुपढौकिता अम्भोजालिः कमलमाला तद्युक्तो मौलिर्यस्य । वागीश्वर्या जनन्या वा प्रसादरूपेण धृतनिर्माल्यकमलस्येत्यर्थः । द्वादशानां पूरणः सर्गः व्यगलत्समाप्तः ॥ ११३ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे द्वादशः सर्गः ॥

---

## त्रयोदशः सर्गः ।

इदानीमिन्द्रादिपञ्चनलीसंज्ञं त्रयोदशं सर्गमारभते—

कल्पद्रुमान्परिमला इव भृङ्गमालामात्माश्रयामखिलनन्दनशाखिवृन्दात् ।
तां राजकादपगमय्य विमानधुर्या निन्युर्नलाकृतिधरानथ पञ्च वीरान् ॥ १ ॥

कल्पद्रुमेति ॥ अथ विमानधुर्याः शिबिकावाहिनः तां भैमीं राजकाद्राजसमूहादपगमय्य निवर्त्य नलाकृतिधरान्नलवेषधारिणः पञ्च वीरान्नलसहितानिन्द्रादीन्निन्युः प्रापयामासुः । शिबिकावाहिनां तेषु पञ्चसु नलोऽस्ति न वेत्यपरिज्ञानान्नलस्यापि नलरूपधारकत्वं घटते । यस्य यद्रूपं तद्धारित्वं तस्यापि युक्तमेवेति कव्यपेक्षयापि युज्यते । वीरपदेन शौर्यं नायकगुणः । के कस्मात्कां कानिव–परिमला मनोहरगन्धा अखिलाः समस्ता नन्दनशाखिनो देवोद्यानतरवः तेषां वृन्दादात्माश्रयां परिमलाश्रितां भृङ्गमालां भ्रमरपङ्क्तिं परावर्त्य अतिशयात्कल्पद्रुमानिव । कल्पद्रुमा नन्दनस्थितवृक्षापेक्षयाधिकाः, तथान्यराजापेक्षया तेऽपीत्यर्थः । सर्वाभिलाषपूरकत्वसाम्यान्मन्दारादिष्वपि चतुर्षु कल्पद्रुमशब्दप्रयोगः । भैम्यप्यात्माश्रया विमाने स्थितत्वात् । नयतिर्द्विकर्मा ॥ १ ॥

साक्षात्कृताखिलजगज्जनताचरित्रा तत्राधिनाथमधिकृत्य दिवस्तथा सा ।
ऊचे यथा स च शचीपतिरभ्यधायि प्राकाशि तस्य न च नैषधकायमाया ॥ २ ॥

साक्षादिति ॥ सा देवी तत्र तेषु मध्ये प्राधान्यान्निवेशनक्रमाच्च दिवोऽधिनाथमिन्द्रमधिकृत्योद्दिश्य तथा तेन

---

१ अत्र स्रग्धरा छन्दः अनुप्रासः शब्दालङ्कारः, परिकरोऽर्थालङ्कारश्च ।

१ अत्र वसन्ततिलका छन्दः प्रायः सर्गान्तम् । उक्ता वसन्ततिलका तभजा जगौ गः । इति च तल्लक्षणम् । २ परिमलाइवेत्युपमा ।

प्रकारेणोचे अचकथत् । यथा येन प्रकारेण स शचीपतिरिन्द्रश्चाभ्यधायि उक्तो भवति । तस्य नैषधकायस्य माया छद्म न च प्राकाशि प्रकटितं भवति । किंभूता— साक्षात्कृतं अखिलजगतां जनताचरित्रं जनसमूहवृत्तान्तो यया सा । यथा इन्द्रादीनां प्राकट्यं न, विष्णोराज्ञया वर्णनं च, मौनित्वे प्रतिभाक्षयो न, तथाऽवोचदिति भावः। साक्षादिति विशेषणेन नलरूपं कृत्वाऽऽगतानामिन्द्रादीनां ज्ञानौचित्यं सूच्यते ॥ २ ॥

**ब्रूमः किमस्य वरवर्णिनि वीरसेनो-**
**द्भूतिं द्विषद्बलविजित्वरपौरुषस्य ।**
**सेनाचरीभवदिभाननदानवारि-**
**वासेन यस्य जनितासुरभीरणश्रीः॥३॥**

ब्रूम इति ॥ हे वरवर्णिनि उत्तमे भैमि, वयम् अस्येन्द्रस्य वीरयुक्तायाः वीराणां वा सेनायाः सैन्यस्योद्भूतिमुत्कृष्टैश्वर्यं सामर्थ्यं वाहुल्यं वा किं ब्रूमो वर्णयामः। वर्णनाशक्यत्वाद्वागगोचर इत्यर्थः। किंभूतस्य— द्विषन् अमित्रो यो बलनामा दैत्यः तस्य विजित्वरं जयनशीलं पौरुषं पराक्रमो यस्य । यस्य रणश्रीः सेनाचरीभवन्ती सैनिकी भवन्ती याविभाननदानवारी गणेशनारायणौ तयोर्वासेनाधिष्ठानेन कृत्वा जनिता कृता असुरभीर्दैत्यभयं यया । असुरेभ्यो देवानां या भीः तस्या ईरणं क्षेपणं तेन या श्रीः सा यस्य जनितेति वा । वागगोचरमस्य चरितमित्यर्थः ॥

नलपक्षे तु—अस्य वीरसेनाख्यनृपादुत्पत्तिं किं कथयामः । अपि तु न । अकथनेऽपि लोकत्रये प्रसिद्धत्वात्स्वगुणैरेवास्य ख्यातत्वाद्वा । यो हि स्वयं न प्रसिद्धः, तस्य पित्रादिप्रसिद्ध्या वर्णनं क्रियते । अयं तु न तथेति भावः । किंभूतस्य—द्विषतां बलस्य सैन्यस्य, आङ्गिकस्य सत्त्वस्य वा, जित्वरं पौरुषं पराक्रमो यस्य । यस्य रणश्रीः सेनाचरीभवन्तः सैनिका इभास्तेषामाननदानवारि मुखदानोदकं तस्य वासेन गन्धेन सुरभिर्जनिता । रलयोः सावर्ण्यात् सेनायामचलीभवतां पर्वतायमानानामिभानामिति वा। मत्तगजबाहुल्यमनेन सूच्यते। एवमिन्द्रनलयोरभेदबुद्धिर्यथा तस्या भवति तथा देव्योक्तम्। रणशब्दो लक्षणया रणभूमौ वर्तते । इतः 'श्लोकादारभ्य 'अत्याजि–' ( १३।२८ ) इति यावत्प्रथममिन्द्रादिवर्णनं पश्चान्नलवर्णनम् । 'अत्याजि–' इत्यादौ नलवर्णनं प्राथम्येन, दिक्पालवर्णनं पश्चादिति ज्ञेयम् । 'श्लोकादिह प्रथमतः–' ( १३ । ३२ ) इति श्लोकेन नलस्य प्राधान्येन निर्देशात् । 'हरिणा' ( १३ । ३२ श्लोके ) इत्यादितृतीयया दिक्पालानामप्रधान्येन निर्देशात् । 'यौवनोष्मवती शीते शीतस्पर्शा च यातपे । भर्तृभक्ता च या नारी सोच्यते वरवर्णिनी ' इति वृद्धाः । ' उत्तमा वरवर्णिनी ' इत्यमरः । वरो वर्णो यस्यां इत्यतिशायने ' धर्मशीलवर्णान्ताच्च ' इतीनिः ॥ ३ ॥

**शुभ्रांशुहारगणहारिपयोधराङ्क-**
**चुम्बीन्द्रचापखचितद्युमणिप्रभाभिः ।**
**अन्वास्यते समिति चामरवाहिनीभि-**
**र्यात्रासु चैष बहुलाभरणार्चिताभिः॥४॥**

शुभ्रेति ॥ एष इन्द्रः समिति च यात्रासु विलासगतिषु च दण्डयात्रासु वा अमरवाहिनीभिः सुरसेनाभिरन्वास्यतेऽनुगम्यते । किंविधाभिः—शुभ्रांशुश्चन्द्रः, हरसंबन्धिनो हारा एकादश रुद्रास्तेषां गणः समूहः हरसंबन्धिनो वा ये गणा नन्दिप्रभृतयः, तान् सर्वानपि हरन्ति आत्मना सह नयन्ति। तत्सहिता इति यावत् । एवंविधाः पयोधरा मेघाः । हरस्यापत्यं हारिः स्कन्दो गणपतिः मेघश्चेति वा।तेषामङ्कचुम्बी स्वामित्वान्मध्यवर्ती यः इन्द्रः। शुभ्रांशुहारगणान्हरति आत्मना सह नयति एवंशीलः, पयोधराङ्कचुम्बी च एवंविधो वा य इन्द्रस्तस्य चापं तेन खचिता संबद्धा द्युमणिप्रभा सूर्यशोभा यासु ताभिः । शुभ्रांश्वादिभिः शक्रधनुर्व्योम्नि सूर्येण च भान्ति ताभिर्वा। तथा—बहुः प्रचुरो लाभो धनादिप्राप्तिर्येषु तेषु रणेष्वर्चिताभिः पूजिताभिः । दैत्यजयाद्बहुला आभा दीप्तिर्यासां ताश्च ता रणार्चिताश्चेति वा। मेघानामपि कामरूपत्वात्सैनिकत्वं युज्यते । चन्द्रादिभिः विशिष्टेन्द्रचापेन च खे आकाशे चिता वृद्धिं प्रापिता सूर्यशोभा यास्विति वा । तैः कृत्वा वृद्धिं प्राप्ता वा चन्द्रादयस्तेजस्विनः तत्तेजःसंबन्धेन सूर्यतेजः प्रचुरं यत्र जातमित्यर्थः ॥

नलपक्षे—एष नलः सभायां दण्डयात्रासु च चामरधारिणीभिरन्वास्यते सेव्यते । किंभूताभिः । शुभ्राः सिताः अंशवो यस्य तेन हारगणेन मुक्ताहारसमूहेन कृत्वा हारी सुन्दरः पयोधराङ्कः स्तनमध्यः तच्चुम्बिनी

१ अत्र कायमायेत्यनुप्रासः ।

१ अत्र श्लेषः ।

तत्संबद्धा इन्द्रचापसंबद्धसूर्यप्रभेव प्रभा यासां ताभिः । चोऽप्यर्थः । यात्रास्वपीति योजना । हारमध्यमणीनामनेकवर्णत्वादिन्द्रचापसंबद्धसूर्यप्रभासाम्यम् । तथा—अत एव बहुलानि प्रचुराणि आभरणानि तैरर्चिताभिरलंकृताभिः । प्राधान्याद्धाराणां ग्रहणं, आभरणग्रहणं तद्व्यतिरिक्तालंकाराणाम्, अतो न पौनरुक्त्यम् । एतेन यथा सभायां निर्भय आस्ते तथा संग्रामयात्रास्वपीति व्यज्यते । 'शुभ्र उद्दीप्तशुक्लयोः', 'द्युमणिस्तरणिर्मित्रः', 'समिद्युधः' इति चामरः । हरशब्दात् 'तस्येदम् । ४।३।१२०' इत्यण् । हारि, ताच्छील्ये णिनिः । अपत्ये वा 'अत इञ् ४।१।९५' यद्वा—शुभ्रांशुहारगणेन हारिणः पयोधराः स्तना मेघास्तेषामङ्कः पार्श्वप्रदेशस्तच्चुम्बी इन्द्रचापो नखपदविशेषः तेन संबद्धा दिव्यरत्नप्रभा यासां ताभिः । इंद्रचापवदाकाशंव्याप्ता दिव्यमणिप्रभा यासां ताभिरिति वा चित्रमणिप्रभासंवलिताः शक्रधनुःसदृश्यो भवन्तीति बहुलैराभरणैर्भूपिताभिरित्यर्थः । 'खच दीप्तिसंवरणयोः' ॥४॥

क्षोणीभृतामतुलकर्कशविग्रहाणा-
मुद्दामदर्पहरिकुञ्जरकोटिभाजाम् ।
पक्षच्छिदामयमुदग्रबलो विधाय
मग्नं विपज्जलनिधौ जगदुज्जहार ॥५॥

क्षोणीति ॥ अयं क्षोणीभृतां पर्वतानां पक्षच्छिद विधाय कृत्वा विपज्जलनिधावापत्समुद्रे मग्नं जगदुज्जहार उच्चकर्पेत्यर्थः । पर्वतपक्षच्छेदनाद्विपद्रहितं कृतवानिति भावः । किंभूतानाम्—अतुला अत्युच्चाः कर्कशाश्च विग्रहा देहा येषाम् । तथा—उद्दामदर्पाणामत्युद्भटानां हरिकुञ्जराणां सिंहहस्तिनां कोटिं भजताम् । एकस्मिन्प्रदेशेऽनेकसिंहानाम् अन्यस्मिंश्चात्युद्भटानेककुञ्जराणामित्यर्थः । किंभूतोऽयम्—बलाद्दैत्यादुदग्र उदग्रबलः । यद्वा—उदग्रं पौरुषं यस्य सः ॥

नलपक्षे—अतुलानत्युच्चान्सलक्षणांश्च कर्कान्श्वेताश्वान् श्यन्ति मारयन्ति एवंविधा विग्रहाः शरीराणि वैरं वा येषाम् । तथा—उद्दामदर्पा हरयोऽश्वा गजाश्च तेषां कोटिं भजताम् । वैरिनृपाणां पक्षच्छिदां सहायच्छेदं कुक्षिच्छेदं वा कृत्वा उदग्रं बलं पौरुषं सैन्यं वा यस्य । अयं नलो वैरिकृतापत्समुद्रे मग्नं जगदुज्जहार । वैरिणं हत्वा विपद्रहितमकरोदित्यर्थः ॥ ५ ॥

१ अत्र श्लेषः । २ अत्रापि श्लेषः ।

भूमीभृतः समिति जिष्णुमपव्यपायं
जानीहि न त्वमघवन्तममुं कथंचित् ।
गुप्तं घटप्रतिभटस्तनि बाहुनेत्रं
नालोकसेऽतिशयमद्भुतमेतदीयम् ६॥

भूमीभृत इति ॥ हे घटस्य प्रतिभटौ स्पर्धिनौ स्तनौ यस्याः तत्संबुद्धिः भैमि, त्वं समिति संग्रामे भूमीभृतः पर्वतान् जिष्णुं जेतारम् । तथा—न विद्यते पवेर्वज्रस्यापायो नाशो यस्य तममुम् अमघवन्तमनिन्द्रं न तु नैव जानीहि । अपि तु इन्द्र एवायम् । इन्द्रस्य सहस्रनेत्रत्वान्नायं तथेत्यत आह—त्वम् एतदीयं शयं पाणिमतिक्रान्तं प्रसृतादपि दीर्घमत एवाद्भुतमाश्चर्यकारि कथंचिद् गुप्तं नलरूपधारणाच्छादितं बहुनेत्रस्य भावो बाहुनेत्रं न आलोकसे न पश्यसि । गुप्तत्वात्, न त्वविद्यमानत्वादित्यर्थः । शयादतिक्रान्तम् । हस्ततलयोर्नेत्राणि न सन्तीत्यर्थः इति वा । बहुनेत्रसमूहं वा । बहुनेत्रसंबन्धिनमेतदीयमद्भुतमतिशयमुत्कर्षं वा आश्चर्यमिति वा ॥

नलपक्षे—त्वम् अमुम् अघवन्तं सपापं न जानीहि पुण्यश्लोकत्वात् । रणे राज्ञो जेतारम् । तथा—अपगतो विशिष्टोऽपायो यस्मात्तम् अपगतो व्यपायः पलायनं यस्य अपलायमानमित्यर्थः । एतदीयमतिशयमपरिमितहस्तपरिमाणमाश्चर्यरूपं प्रावरणवशाद्बाहौ हस्ते स्थितं नेत्रं चीनांशुकं गुप्तं यथा द्रव्यान्तरविलोकनव्याजेन न आलोकसे । अपि तु आलोकयेत्यर्थः । बाहू च नेत्रे च बाहुनेत्रं शयमतिक्रान्तम् । बाहू हस्तपरिमाणाधिकपरिमाणौ, नेत्रे च प्रसृतादप्यधिके इत्यर्थः । तद् गुप्तं यथा तथा नालोकसे । अपि त्वालोकयेति वा । अतिशयं बाहुनेत्रम् । बाहू अतिशयितौ वदान्यौ शयौ ययोस्तावतिशयौ । नेत्रे च शयमतिक्रान्ते । अतिशयौ च अतिशये चेति नपुंसकैकशेषेण वा व्याख्येयम् । एतदीयं गुप्तमनेन पालितम् । बहवश्च ते नेतारश्च बहूनां वा नेतारस्तेषां समूहम् । अतिशयितः शयो हस्तो यस्य लक्षणया वदान्यमुत्कृष्टमालोकय । शूरा वदान्या अप्यनेन पोषिता इत्यस्योत्कृष्टत्वं व्यज्यते । 'कुलिशं भिदुरं पविः' इत्यमरः । 'नेत्रं मथिगुणे वस्त्रे' इति च । जिष्णु, 'ग्लाजिस्थश्च ग्स्नुः' इति ताच्छील्ये ग्स्नुः । तद्योगे भूमीभृत इति, 'न लोका—' इति षष्ठीनिषे-

धाद्वितीया । बहुनेत्रशब्दाद्भावसमूहसंबन्धेष्वण् । पक्षे प्राण्यङ्गत्वादेकवद्भावः ॥ ६ ॥

लेखा नितम्बिनि बलादिसमृद्धराज्य-
प्राज्योपभोगपिशुना दधते सरागम् ।
एतस्य पाणिचरणं तदनेन पत्या
सार्धं शचीव हरिणा मुदमुद्वहस्व ॥७॥

लेखा इति ॥ हे नितम्बिनि अतिपृथुनिबिडनितम्बे भैमि, बलवृत्रनमुचिप्रभृतीनां समृद्धं संपूर्णं राजभावस्तस्य प्राज्यो बहुरुपभोगस्तस्य पिशुनास्तदसहमाना लेखा देवा एतस्येन्द्रस्य पाणी च चरणौ च पाणिचरणं सरागं सानुरागं यथा तथा दधते धारयन्ति । हस्तदानात्पाणिम्, नमस्कारार्थं च चरणावित्यर्थः । तत्तस्मात् अनेन हरिणा इन्द्रेण पत्या सार्धं शचीव मुदमुद्वहस्व धारयस्व ॥

नलपक्षे—सरागमरुणम् एतस्य पाणिचरणं कर्तृ सैन्यस्वाम्यमात्यादिभिः पड्विधेन वा बलेन समृद्धस्य राज्यस्य प्राज्य उपभोगस्तस्य सूचिकाः सामुद्रिकोक्तलक्षणभूताः चक्रध्वजादिलेखाः कर्मभूताः दधते धारयति । 'दध धारणे' एकवचनान्तमस्मिन्पक्षे रूपम् । तस्मादनेन पत्या नलेन सह हर्षं धारयस्व । केन केव—हरिणा इन्द्रेण शची इव । 'लेखा अदितिनन्दनाः' 'पिशुनौ खलसूचकौ' इति चामरः । नितम्बशब्दादतिशयार्थादिनिः । पाणिचरणम्, प्राण्यङ्गत्वादेकवद्भावे क्लीबत्वम् ॥ ७ ॥

आकर्ण्य तुल्यमखिलां सुदती लगन्ती-
माखण्डलेऽपि च नलेऽपि च वाचमेताम् ।
रूपं समानमुभयत्र विगाहमाना
श्रोत्रान्न निर्णयमवापदसौ न नेत्रात् ॥८॥

आकर्ण्येति ॥ असौ सुदती भैमी एतां पूर्वोक्तामखिलां वाचमाखण्डलेऽपि च नलेऽपि च तुल्यं लगन्तीं समानसंबन्धामाकर्ण्य उभयत्र इन्द्रे च समानं रूपमैक्यरूपं च विगाहमाना जानती विशेषावलोकनादपि विशेषमनुपलम्भमाना यथाक्रमं श्रोत्राच्छ्रावणेन्द्रियात् नेत्राच्चक्षुरिन्द्रियाच्च निर्णयं नावापन्न प्राप । अनयेन्द्रः स्तुतः किं वा नलः, तयोः सरूपत्वादयमिन्द्रो नलो वेति नाज्ञासीदित्यर्थः । अपिचेति निपातसमुदायौ परस्परसमुदायवाचकौ । अवापत् लृदित्वादङ् ॥ ८ ॥

शक्रः किमेष निषधाधिपतिः स वेति
दोलायमानमनसं परिभाव्य भैमीम् ।
निर्दिश्य तत्र पवनस्य सखायमस्यां
भूयोऽसृजद्भगवती वचसः स्रजं सा ९ ॥

शक्र इति ॥ सा भगवती सरस्वती भूयः पुनरपि वचसः स्रजं वाङ्मालामसृजत् । किं कृत्वा—तत्र तेषु मध्येऽस्यां भैमीसमीपे पवनस्य सखायमग्निं निर्दिश्योद्दिश्य । पुनः किं कृत्वा—भैमीमिति दोलायमानं मनो यस्यास्तां परिभाव्य संचिन्त्य । इति किम्—एष किं शक्रः, स दूत्यदृष्टः निषधाधिपतिः नलो वेति । दोला इवाचरति 'कर्तुः क्यङ् सलोपश्च ३।१।११' इति क्यङि शानचि दोलायमानमिति । अस्याम्, सामीपिक आधारः ॥ ९ ॥

एष प्रतापनिधिरुद्गतिमान्सदाऽयं
किं नाम नार्जितमनेन धनं(-)जयेन ।
हेम प्रभूतमधिगच्छ शुचेरमुष्मा-
दास्येव कस्यचन भास्वररूपसंपत् १० ॥

एष इति ॥ हे भैमि, एष प्रतापस्य निधिः प्रकृष्टोष्णस्पर्शस्थानम् । तथा—अयं सदा उद्गतिमानूर्ध्वगमनयुक्तः । ऊर्ध्वज्वलनोऽयमित्यर्थः । धनंजयेन वह्निनाऽनेन किं नाम का संज्ञा नार्जितं न प्राप्ता । 'अग्निर्वैश्वानरो वह्निः—' इत्यादिकं नाम निर्वचनयोगात् प्राप्तमित्यर्थः । सर्वेषां नाम्नां निर्वचनमस्त्येव । नाम संभावनायाम् । अग्निनाऽनेन किं नाम वस्तु न प्राप्तम् । तैजसानां परमाणूनां सर्वत्राविरलत्वेन विद्यमानत्वादिति वा । अनेन धनंजयशब्देन कृत्वा सार्थकं नाम किं न अर्जितमिति वा । धनंजयत्वादेव शुचेरप्येतस्मादमुष्मादग्नेः प्रभूतं हेम स्वर्णमधिगच्छ प्राप्नुहि 'धनमिच्छेद्धुताशनात्' इत्युक्तेः । 'अग्नेः प्रजातं परि यद्धिरण्यम्' इति श्रुतेरस्मात्सुवर्णमुत्पन्नम् । अस्यैवाग्नेरिव कस्यचन कस्यापि भास्वरा देदीप्यमाना रूपसंप-

१ अत्र श्लेषः । २ अत्रापि श्लेषः ।

१ अत्र प्राङ्निर्दिष्टेन श्लेषमूलेन गुम्फनेन सममनुरूपायाः संशयनक्रियाया वर्णनात्स्वभावोक्तिः । २ अत्रानुप्रासः भगवतीति परिकरः ।

नास्ति। तेजोमात्रविवक्षया। तेजोव्यतिरिक्तस्य कस्यचन शुक्लं भास्वरं रूपं न दृष्टमित्यर्थः ॥

नलपक्षे ॥ एष नलः क्षात्रतेजःस्थानम्। तथा—सदा उदयवान्। तथा अनेन जयेन कृत्वा किं नाम धनं नार्जितम्। वैरिणो विजित्य धनमर्जितम्। सदा अयः शुभावहो विधिर्यस्मादिति वा। शुचेः स्वधर्मोपार्जितद्रव्यादमुष्मात्प्रचुरं सुवर्णं प्राप्नुहि। शुचेः शृङ्गाररूपादिति वा। अस्य नलस्येव भास्वरा कायकान्तिसमृद्धिः कस्यापि अन्यस्य नास्ति। भा दीप्तिः, स्वरः कण्ठशब्दः, रूपं सौन्दर्यं तेषां संपद् अस्येव कस्यापि नास्तीति वा। तेजस्वी मधुरस्वरः सुन्दरश्चेत्युक्तम्। 'वीतिहोत्रो धनंजयः' 'शुचिरप्यित्तम्' इति चामरः। धनंजयः, 'संज्ञायां भृतॄवृजिधारिसहितपिदमः ३।२।४६' इति खच्। 'अरुर्द्विषदजन्तस्य मुम् ६।३।६७' इति मुम्। भास्वरः 'स्थेशभासपिसकसो वरच् ३।२।१७२' इति वरच् ॥ १० ॥

अत्यर्थहेतिपटुताकवलीभवत्त-
त्तत्पार्थिवाधिकरणप्रभवाऽस्य भूतिः।
अप्यङ्गरागजननाय महेश्वरस्य
संजायते रुचिरकर्णि तपस्विनोऽपि ॥११॥

अत्यर्थेति ॥ हे रुचिरकर्णि शोभनश्रवणेन्द्रिये भैमि, अस्याग्नेः अत्यर्थातिशयिता हेतिपटुता ज्वालापाटवं तस्यां कवलीभवन्ति ग्रासीभवन्ति तानि तानि पार्थिवानि पृथिवीकार्याणि तृणकाष्ठकरीषादीनि तान्येवाधिकरणं भस्मन एवाधारः ततः प्रभव उत्पत्तिर्यस्या एवंविधा भूतिर्भस्म तपस्विनोऽपि पाशुपतादिव्रतनिष्ठस्य महेश्वरस्य शिवस्याङ्गरागजननायोद्धूलनेनाङ्गानां विशिष्टवर्णोत्पत्तये संजायते संपद्यते। एतत्संबन्धि भस्मापीश्वरस्य तपस्विनोऽप्युपकृत्यै प्रभवति। अन्यस्य भवतीति किं वक्तव्यमिति स्तुतिः। रुचिरकर्णीति श्लेषोक्तिचातुरीविषये सावधाना भव इति व्यज्यते। एतद्वरेण भस्मैव केवलम्, नान्यदिति विचार्य तूष्णीम्भवेति व्यज्यते ॥

नलपक्षे—अङ्ग रुचिरकर्णि, अस्य नलस्य भूतिः संपत् महेश्वरस्य महाधनिकस्यापि त्यक्तसर्वसङ्गस्य मुनेरपि च अभिलाषसमुद्भूतये संपद्यते। ममेदृक् संपद् भूयादिति धनिको मुनुक्षुश्चाप्यस्य भूतये स्पृहयतीत्यर्थः। धनिकस्य तपस्विनोऽपि ईर्ष्याजननाय संपद्यत इति वा। किंभूता संपत्—अतिशयेनास्त्रपटुतया मोक्षोपसंहारादिमन्त्रप्रयोगसामर्थ्येन ग्रासीभवन्तस्ते ते च पृथ्वीश्वराश्च तेषामधिको रणस्तस्मादुत्पन्ना। स प्रभव उत्पादको यस्या इति वा। क्षात्रतेजसोपार्जितेत्यर्थः। रागोऽनुरक्ते मात्सर्ये। हेतिर्ज्वाला आयुधं च। पार्थिवेऽपि, 'ईश्वरः' इत्यधिकारे 'सर्वभूमिपृथिवीभ्यामणञौ ५।१।४१' इत्यण्। पक्षे संबन्धेऽण्। रुचिरकर्णीति, 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ४।१।५५' इति ङीप् ॥ ११ ॥

एतन्मुखा विबुधसंसदसावशेषा
माध्यस्थ्यमस्य यमतोऽपि महेन्द्रतोऽपि।
एनं महस्विनमुपेहि सदारुणोच्चै-
र्येनामुना पितृमुखि ध्रियते करश्रीः ॥१२॥

एतदिति ॥ हे पितृमुखि, असौ अशेषा सर्वा अग्नौ विबुधसंसद्देवसभा एष मुखं यस्याः सा। 'अग्निमुखा वै देवाः' इति श्रुतेः। अस्याग्नेर्यमतोऽपि महेन्द्रतोऽपि माध्यस्थ्यमासनापेक्षया दिगपेक्षया च मध्ये विद्यमानत्वमस्ति। त्वं महस्विनं तेजोयुक्तं महस्तु तेजस्तु विद्यते एनं स्वामिनं वा एनमुपेहि। येन सदारुणा काष्ठदाहितेनामुना करश्रीः किरणशोभा उच्चैरत्यर्था रक्ता न ध्रियते। पितृमुखीति संबुद्ध्या धन्यत्वं व्यज्यते। 'धन्या पितृमुखी कन्या धन्यो मातृमुखः सुतः' इति सामुद्रिकोक्तिः॥

नलपक्षे ॥ असौ जगति प्रसिद्धा पुरो दृश्यमाना च निखिला विद्वत्सभा एतन्मुखा एतत्प्रधाना। यथा सर्वाङ्गेषु मुखं प्रधानं तथा विद्वत्सभायामसौ। 'के विबुधाः' इति पृष्टे प्रथममसौ गण्यत इत्यर्थः। पुण्यश्लोकत्वादेव मुखे यस्यास्तादृशी इति वा। अस्य यमतः समवर्तिनोऽपि इन्द्रादप्यधिकं माध्यस्थ्यं पक्षपातराहित्यम्। शत्रुमित्रयोस्तुल्यो दण्ड इत्यर्थः। तसेः सार्वविभक्तिकत्वात्। लोकपालांशत्वादिन्द्रयमयोरेतन्मध्यवर्तित्वमिति केचित्। तेजस्विनमेनं प्राप्नुहि। येनानेन सदा सर्वदा हस्तशोभा अतिशयेनारुणा रक्ता धार्यते। स्विनं शोभनं पतिमेनं मह पूजय। तथा—एनमुपेहि एतत्समीपं गच्छेति वा। महस्विनमुत्सववन्तं वा। विश्वप्रकाशे सकारान्तस्य महःशब्दस्य पाठात्।

१ अत्र श्लेषः।

१ अत्र श्लेषः।

'मुखं मुख्ये च वक्त्रे स्यात्' इत्यजपालः । पिता मुखं यस्या इति समासः । मुखेनैव मुखस्य सादृश्यात्पितृमुखमिव मुखं यस्या इत्यत्र पर्यवस्यति ॥ १२ ॥

नैवाल्पमेधसि पटो रुचिमत्त्वमस्य
मध्येसमिन्निवसतो रिपवस्तृणानि ।
उत्थानवानिह पराभवितुं तरस्वी
शक्यः पुनर्भवति केन विरोधिनायम् ॥ १३ ॥

नैवेति ॥ एधसि काष्ठे पटोर्ज्वल्यमानस्याग्नेः रुचिमत्त्वं दीप्तियुक्तत्वमल्पं नैव । किंतु बहित्यर्थः । जाज्वल्यमानस्यास्य इन्धने दीप्तिमत्त्वमल्पं नैव । तत्संबन्धादधिकं दीप्तिमानयं भवतीत्यर्थ इति वा । तथा—मध्येसमित् समिधां काष्ठानां मध्ये निवसतो विद्यमानस्यास्य तृणानि रिपवः शत्रवः। रिपुनाशो यथा वगेन क्रियते,तथा समृद्धेनानेन क्षणमात्रेण तृणानि दह्यन्त इत्यर्थः। प्रादेशमात्राणां पलाशशम्यादिकाष्ठानां मध्ये इति वा । इह लोके समिन्मध्ये वोत्थानवानूर्ध्वज्वलनवान् तरस्वी वेगवानयं विरोधिना केनोदकेन पुनः पराभवितुं शक्यो भवति । तेनैव शान्तिर्नान्येनेत्यर्थः । जय्यो भवति । अपि तु न वेगेनोत्थितस्यास्य वारिणापि शान्तिः कर्तुमशक्येत्यर्थ इति वा ॥

नलपक्षे॥पटोः ग्रहणधारणादिसमर्थस्यास्य अल्पमेधसि मन्दप्रज्ञे रुचिमत्त्वं प्रीतियुक्तत्वं नैव ।अयोग्य त्वात्तस्येत्यर्थः । तथा—मध्येसमित् सङ्ग्राममध्ये निवसतोऽस्य रिपवस्तृणानि अकिंचित्करा इत्यर्थः ।इह रणे भूलोके वा तरस्वी उत्थानवान्वेगवान्बलवान्वा अयं केन पुना रिपुणा जेतुं शक्यः। अपि तु न केनापि । कस्याप्यजय्योऽयमित्यर्थः। उत्थानमुदयः । एतत्सदृक्कोऽप्युदयी बलवांश्च नास्तीत्यर्थः । भवतीति संबोधनं वा । 'तरो बले च वेगे च', 'इध्ममेधः समित्' इति चामरः । अल्पमेधसि'नित्यमसिच् प्रजामेधयोः५।२।१२२' इत्यत्र नित्यग्रहणादन्यस्मादपि भवतीति वृत्तिकारोक्तेः प्रयोगानुसारेणासिच् । मध्येसमित्,'पारे मध्ये षष्ठ्या वा२।१।१८'इत्यव्ययीभावे निपातनादेत्वम्।'क्षयः ५।४।१११' इति वैकल्पिकत्वादजभावः।पराभवितुम्, 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्'इत्यक्रियार्थत्वेऽपि शकियोगे तुमुन्[१][२]॥१३॥

साधारणीं गिरमुपर्बुधनैषधाभ्या-
मेतां निपीय न विशेषमवाप्तवत्याः ।
ऊचे नलोऽयमिति तं प्रति चित्तमेकं
ब्रूते स्म चान्यदनलोऽयमितीदमीयम्[१] ॥ १४ ॥

साधारणीमिति ॥ उपर्बुधनैषधाभ्यामग्निनलाभ्यां साधारणीं समामेतां गिरं निपीयाकर्ण्य इदमीयमनयोः संबन्धिनं विशेषं तारतम्यं नावाप्तवत्या न ज्ञातवत्या भैम्याः पुरोवर्तिनं तं प्रति एकं चित्तं मनः अयं नल इत्यूचे । अन्यदपरं चित्तम् अयमनल इति ब्रूते स्म । नलव्यतिरिक्तो वह्निरित्यकथयत् । युगपदालोचनस्मृतिप्रसङ्गान्मनसः प्रतिशरीरमेकत्वस्य साधितत्वादेकस्मिन्नपि मनसि क्रियाभेदादवस्थान्तरप्राप्तेर्भेद इवोपचर्यते । यद्वा— एकमेव तं पुरोवर्तिनं क नल इति प्रत्यूचे । अकारप्रश्लेषेणानलोऽयमिति ब्रवीति स्म मनः । तथा—अयमन्यान्वैरिणो द्यति अवखण्डयतीत्यन्यदः स चासौ नलश्च अन्यदनल इति ब्रूते स्म । अत्र व्याख्याने प्रथमभङ्गोऽपि न भवति । एकस्य द्वैरूप्याद्विरोधाभासश्च । 'शोचिष्केश उपर्बुधः' इत्यमरः । उपसि बुध्यते इति उपर्बुधः । 'इगुपधज्ञाप्रीकिरः कः' इति कः । 'अहरादीनाम्—' इति रेफः । 'तुल्यार्थैः—' इति तृतीया । 'अन्यद—' इति पक्षे कः । समानं धारणमस्य साधारणम् । अनेकं प्रत्यविशिष्टबन्धम् । पृषोदरादिः । ततः स्त्रियां 'पादार्घाभ्यां च ५।४।२५' इत्यत्र 'अग्नीध्रसाधारणादञ्' इति वक्तव्यादञि ङीप् । तत्प्रकरणाच्च साधारणभूमिरित्याद्यपि घटते । इदमीयम्, त्यदादित्वात् 'वृद्धाच्छः ४।२।१०४' ॥ १४ ॥

एतादृशीमथ विलोक्य सरस्वती तां
संदेहचित्रभयचित्रितचित्तवृत्तिम् ।
देवस्य सूनुमरविन्दविकासिरश्मे-
रुद्दिश्य दिक्पतिमुदीरयितुं प्रचक्रे ॥ १५ ॥

एतादृशीमिति ॥ अथ सरस्वती अरविन्दविकासिनः कमलविलासकरा रश्मयः किरणा यस्य देवस्य रवेर्दिक्पतिं दक्षिणदिशः पतिं सूनुम् अन्येषां पुत्राणां दिक्पतित्वाभावाद्यममुद्दिश्य उदीरयितुं वक्तुं प्रचक्रे आरेभे । किं कृत्वा—एतादृशीमुक्तसंशयास्पदीभूताम् । तथा— नलनिश्चयाभावात्संदेहः,तुल्यरूपदर्शनाद्देव्युक्तिवैचित्र्याद्

[१] अत्र श्लेषः । [२] अत्र श्लेषः ।

[१] अत्र नलोऽयं नलोयमिति यमकम् ।

चित्रम्, नलनिश्चयाभावात्नलप्राप्तिविघ्नात्रासः तैः संशया-श्चर्यत्रासैः चित्रिता नानाविधा कृता चित्तवृत्तिर्यस्याः सा एवंविधां तां भैमीं विलोक्य । 'चित्तभित्तिम्' इति पाठे चित्तमेव भित्तिर्यस्याः । भित्तौ हि चित्रं युक्तमित्यर्थः । एषेव दृश्यत इति 'त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६०' इति कञि 'आ सर्वनाम्नः ६।३।९१ इत्यात्वे 'टिड्ढा ४।१।१५'इति ङीपि एतादृशी ॥ १५॥

दण्डं बिभर्त्ययमहो जगतस्ततः स्या-
त्कम्पाकुलस्य सकलस्य न पङ्कपातः ।
स्वर्वैद्ययोरपि मदव्ययदायिनीभि-
रेतस्य रुग्भिरमरः किमु कश्चिदस्ति१६

दण्डमिति ॥ अहो संबोधने,अयं यमो दण्डं स्वायुधं बिभर्ति । ततस्तस्माद्धेतोः पुराणादिदर्शनेन कम्पाकुलस्य पापभीरोः सकलस्य जगतो भुवनस्य पङ्कात्पापात्पातो ब्रुडनं न स्याद्भवेत् । पङ्के महारौरवादौ नरके वा । एतद्भयात्पापं कोऽपि न करोतीत्यर्थः । अहो आश्चर्यम्। अन्यो यष्टिं धारयति अन्यस्य च कम्पमानस्य कर्दमपातो न भवतीत्यसंगतेः । तथा—चिकित्सासमर्थयोः स्वर्वैद्ययोर्दस्रयोरपि मदव्ययदायिनीभिः गर्वक्षयं कुर्वाणाभिः एतस्य रुग्भिः प्राणिकर्मविपाकदर्शनेनानेन प्रेरिताभिः पीडाभिः न म्रियत इत्यमरः कश्चित्किमस्ति । अपितु न कोऽप्यस्ति कर्मजरोगाणां तयोरप्यचिकित्स्यत्वादित्यर्थः । स्वर्वैद्ययोरिति नाम रुजापनयनसामर्थ्यसम्भावनासूचनार्थम् ॥

नलपक्षे—अयं नलो दण्डं शासनं यतो बिभर्ति तस्मात्कम्पाकुलस्य सकलस्यापि लोकस्य एनःपातो न भवेत्पूर्ववदेतस्माद्भयात् । अयम् दण्डं चतुरङ्गसैन्यं बिभर्ति ततः शत्रुभयात्कम्पाकुलस्य लोकस्य दुःखपातो न भवेत् । सैन्येनैव वैरिणां निहतत्वाल्लोकस्य दुःखनाश इति वा । सौन्दर्येण प्रसिद्धयोर्नासत्ययोरपि गर्वक्षयकारिणीभिरेतस्य रुग्भिः कायकान्तिभिरुपलक्षितो देवोऽपि कश्चिदस्ति किमु । अपितु नास्ति । देवेषु मध्ये दस्रावेव सुन्दरतमौ तावप्यनेन जितौ यतः । ये त्वेतत्समीपस्था रमणीयाः त एतद्रूपधारणादेव, न तु स्वभावेनेत्यर्थः । 'पङ्कोऽस्त्री शादकर्दमौ,' 'अस्त्री पङ्कं पुमान्पाप्मा', 'स्त्री रुग्रुजा', 'रुक् प्रभा रुग्' इति चामरः । दायिनीभिरिति ताच्छील्ये णिनिः ॥ १६ ॥

मित्रप्रियोपजननं प्रति हेतुरस्य
संज्ञा श्रुतासुहृदयं न जनस्य कस्य ।
छायेदृगस्य च न कुत्रचिदध्यगायि
तप्तं यमेन नियमेन पतोऽमुनैव ॥१७॥

मित्रेति ॥ अस्य यमस्योपजननमुत्पत्तिं प्रति संज्ञानाम्नी मित्रप्रिया सूर्यपत्नी हेतुर्निमित्तं श्रुता आकर्णिता । छायानाम्नी तु कुत्रचित् कुत्रापि पुराणादौ ईदृगस्योत्पत्तिं प्रति हेतुः नाध्यगायि नाश्रावि । किंतु शनैश्चरस्यैवेत्यर्थः। 'यमो यमी श्राद्धदेवः संज्ञायास्तनयास्त्रयः' इति पुराणम्। अयं यमः कस्य जनस्यासुहृत्प्राणहर्ता न । अपि तु सर्वस्यापि प्राणहर्ता । अमुना यमेनैव नियमेन नक्तोपवासादिव्रतेन तपः तप्तं धर्मः कृतः । अत एवास्य पुनस्त्वं धर्मराजत्वं चेत्यर्थः ॥

नलपक्षे—अस्य नलस्य संज्ञा नाम श्रुता सती मित्रप्रियस्य सुहृदिष्टस्योपजननं प्रत्युत्पादनं प्रति हेतुः अस्य संज्ञा सुहृदिष्टजननं प्रति हेतुः श्रुता ख्यातेति वा । पुण्यश्लोकत्वात् । अयं कस्य जनस्य सुहृन्मित्रं न । अपि तु सम्यक्परिपालनादुपकारित्वाद्वा सर्वस्यापि सुहृदेव । ईदृगप्रत्यक्षदृश्या अस्य छाया कायकान्तिः कुत्रापि नरसुरोरगेषु नाध्यगायि न दृष्टा । सुन्दरतरोऽयमित्यर्थः । छाया रीतिः लोकपरिपालनमित्यर्थः इति वा ।अस्यैव जगत्पालनं कोऽपि न करोतीत्यर्थः । अमुना नलेनैव यमेन ब्रह्मचर्यादिना, नियमेन नक्तादिव्रतेन च तपः तप्तम् । त्वदर्थमिति शेषः । 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः' । 'तपश्चान्द्रायणादौ स्याद्धर्मे' इति विश्वः । अध्यगायीति इङो गाङादेशे कर्मणि चिण् । यमेनेति पक्षे हेतौ तृतीया ॥ १७ ॥

किंच प्रभावनमिताखिलराजतेजा
देवः पिताम्बरमणी रमणीयमूर्तिः ।
उत्क्रान्तिदा कमनु न प्रतिभाति शक्तिः
कृष्णत्वमस्य च परेषु गदान्वियोक्तुः॥१८॥

किंचेति ॥ केवलं संज्ञास्य जननीत्येव न । किंच अन्यच्च प्रभया दीप्त्यावनमितं तिरस्कृतमखिलं राजश्चन्द्रस्य तेजो येन सः, तथा रमणीयमूर्तिरम्बरमणिः सूर्यो

१ अत्र श्लेषः ।

१ अत्र श्लेषः । २ अत्र श्लेषः ।

देवः अस्य पिता । अस्य यमस्योत्क्रान्तिनामिका । अथ च मरणदा शक्तिरायुधविशेषः कमनु लक्षीकृत्य न प्रतिभाति समर्था न भवति । अपि तु सर्वमनु समर्थैव । परेष्वन्येषु जनेषु गदान्रोगान्नियोक्तुः प्रेरयितुः अस्य [1]कृष्णत्वं श्यामत्वं च । परपीडाजननेनापयश इत्यर्थः । अस्य कृष्णत्वं लोहवत्कठिनान्तःकरणत्वमित्यर्थं इति वा ॥

नलपक्षे—प्रभावेण पराक्रमेण नमितसकलभूपप्रतापः, अम्बरमणिः सूर्यः, इः कामः तद्वद्रमणीयमूर्तिः, देवो राजा वीरसेनोऽस्य पिता । देवो विजिगीषुरिति वा । अम्बरमणीभिर्वस्त्ररत्नैः कृत्वा रमणीयमूर्तिरिति वा । मणीशब्द ईबन्तोऽपि । अम्बेति संबोधनम् । रमणीनां स्त्रीणां रमणयोग्या मूर्तिर्यस्येति वा । अस्य शक्तिरायुधविशेषः कं वैरिणमनूत्क्रान्तिदा मरणप्रदा न प्रतिभाति । अस्य शक्तिः सामर्थ्यं कं यमनूत्क्रान्तिदा मरणप्रदा न प्रतिभाति । अपितु संभाव्यत एव । यमादन्येषां भयं तस्याप्यस्माद्भ म् । शूरत्वातिशयो द्योत्यत इति वा । तथा शत्रुषु गदां शस्त्रविशेषं प्रयोक्तुरस्य कृष्णत्वं देवकीनन्दनत्वम् । गदायुद्धप्रावीण्याच्छ्रीकृष्णसमानत्वमित्यर्थः । परा उत्कृष्टा इषुसंबन्धिनो गदा रोगाः दुःसहबाणजनिताः पीडा इति यावत् । तानर्थाद्वैरिषु प्रयोक्तुरस्य कृष्णत्वमर्जुनत्वम् । बाणयुद्धप्रवीणार्जुनतुल्योऽयामित्यर्थ इति वा । 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः,' 'को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च,' 'शक्तिर्बले प्रभावादौ शक्तिप्रहरणान्तरे' इत्यादि विश्वः ॥ १८ ॥

एकः प्रभावमयमेति परेतराजौ
तज्जीवितेशधियमत्र निधत्स्व मुग्धे ।
भूतेषु यस्य खलु भूरियमस्य वश्य-
भावं समाश्रयति दस्रसहोदरस्य ॥ १९ ॥

एक इति ॥ अयम् एकः परेताः प्रेतास्तेषां राजौ [1]उक्ती विषये प्रभावं सामर्थ्यम् एति तत्तस्मात् अत्रास्मिञ्जीवितेशधियमन्तकबुद्धिं कुरु । हे मुग्धे, उभयोर्भेदमजानाने संशागर्भजातत्वाद्दस्रसहोदरस्याश्विभ्रातुः यस्य यमस्य भूतेषु भूरि प्रचुरं भूतं वश्यभावमधीनत्वं समाश्रयति प्राप्नोति । प्राणिषु मध्ये प्रचुरं भूतं यस्य यमस्य वशि वशवर्ति सत् अभावं विनाशमेवाश्रयतीति वा । मुमुक्षवः कतिपये, तदपेक्षया भूतानां प्राचुर्यम् । खलु निश्चये । सर्वप्राणिनाश एतदधीन इति निश्चयेनायमन्तक इति किं न जानासीत्यर्थः ॥

नलपक्षे ॥ पराश्च इतरे आत्मीयाश्च तेषामाजिः । पराञ्श्रेष्ठांस्तेजस्विनोऽपि इतरयन्ति क्षोदीयसः कुर्वन्ति ये तेषामाजिरिति वा । परा उत्कृष्टा या इतरेषां वैरिणामाजिरिति वा । तस्याम् अयं नल एक एव प्रभावमेति । तथा—भूतेषु पृथिव्यप्तेजोवाय्वाकाशेषु मध्ये इयमित्यभिनयेन सकला भूः सौन्दर्येण दस्रसहोदरस्याश्वितुल्यस्य यस्यास्य वश्यत्वमाश्रयति । तत्तस्मान्मुग्धे सुन्दरि, अस्मिन्प्राणेशबुद्धिं निधेहि । तथा—समा सश्रीका त्वं यस्य एतद्वरणे प्रयत्नं कुरु । एवंविधः शूरः प्रभुशक्तियुक्तः सुन्दरश्च कोऽपि नास्तीत्येनमेव वृणीष्वेति भावः । इतरशब्दात्पक्षे 'तत्करोति तदाचष्टे' इति णिचि पचाद्यचि णिलोपः ॥ १९ ॥

गुम्फो गिरां शमननैषधयोः समानः
शङ्कामनेकनलदर्शनजातशङ्के ।
चित्ते विदर्भवसुधाधिपतेः सुताया
यन्निर्ममे खलु तदेव पिपेष पिष्टम् ॥ २० ॥

गुम्फ इति ॥ शमननैषधयोर्यमनलयोर्विषये समानस्तुल्यः पूर्वोक्तो गिरां गुम्फो देव्या वाणीसंदर्भः विदर्भवसुधाधिपतेः सुताया भैम्याश्चित्ते यच्छङ्कां संशयं निर्ममे तत्खलु निश्चितम् एष पिष्टं पिपेष । चूर्णमेव चूर्णितवानिति दृष्टान्त इत्यर्थः । चूर्णचूर्णनं यथा वृथा तथेदमपीत्यर्थः । किम्भूते—चित्ते—अनेकेषां नलानां दर्शनेन जातशङ्के उद्भूतसंशये । 'गुम्फः स्याद्गुम्फने' इति विश्वः ॥ २० ॥

तत्रापि तत्रभवती भृशसंशयालो-
रालोक्य सा विधिनिषेधनिवृत्तिमस्याः ।
पाथःपतिं प्रति धृताभिमुखाङ्गुलीक-
पाणिः क्रमोचितमुपाक्रमताभिधातुम् ॥ २१ ॥

तत्रेति ॥ तत्रभवती पूज्या सा भगवती सरस्वती क्रमोचितं क्रमप्राप्तं परिपाटीयोग्यं यथा तथा वा, अभिधातुं वक्तुमुपाक्रमत । किं कृत्वा—तत्र यमेऽपि भृशमत्यर्थं संशयालोः संदिहानाया अस्या भैम्या

१ अत्र श्लेषः ।

१ अत्र श्लेषः ।

विधिनिषेधाभ्यां सकाशान्निवृत्तिः प्रवृत्तिनिवृत्त्योरभावमालोक्य । किंभूता—पाथसां पयसां पतिं प्रभुं वरुणं प्रति धृतोऽवस्थापितोऽभिमुखाङ्गुलीकः संमुखकरशाखः पाणिर्यया । तत्रभवच्छब्दः पूजार्थः । अङ्गुलीक इति 'नद्यृतश्च ५।४।१५३' इति कप् । उपाक्रमत, 'प्रोपाभ्यां युजेरयज्ञपात्रेषु ३।१।६४' इति तङ् । अभिधातुं क्रमियोगे 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ३।४।६५।' इति तुमुन् ॥ २१ ॥

**या सर्वतोमुखतया व्यवतिष्ठमाना**
**यादोरणैर्जयति नैकविदारका या ।**
**एतस्य भूरितरवारिनिधिश्चमूः सा**
**यस्याः प्रतीतिविषयः परतो नरोधः २२**

येति ॥ एतस्य वरुणस्य भूरितरा वारिनिधयः समुद्रा यस्यां सा चमूर्जयति सर्वोत्कर्षेण वर्तते । सा का—यस्याः परतो रोधः परं तीरं प्रतीतिविषयो दृग्गोचरो न । सेनायां समुद्राणामपि मिलितत्वात्परं पारं न दृश्यत इत्यर्थः । सा का—या सर्वतोमुखस्य जलस्य भावेन व्यवतिष्ठमाना व्यवस्थिता । जलमयीत्यर्थः । या यादोरणैर्जलजन्तुशब्दैस्तत्सङ्ग्रामैर्वा उपलक्षिता । तथा—या नैकविदारका अनेककूपका । नैकान्विदारयति नैकविदारः कस्य उदकस्य आय आगमनं यस्यां वा । स्ववेगेन सर्वनाशकरमुदकं यस्यामस्तीत्यर्थ इति वा । या नैकविदारं कं यस्यामेवंभूता वा । यस्याः परतो वरिणोऽन्यस्माद्वा रोध आवरणं न ज्ञानगोचरः।निम्नाभिमुखस्य पयसः कस्यापि निवारयितुमशक्यत्वादिति वा । यस्याः परतः परप्रदेशात्पाति संमुखमितिर्गमनं तस्य विषयो गोचरो नरो मनुष्य अधोऽधस्तादेव । प्रवाहवेगेनाध एव गच्छतीति भाव इति वा ॥

नलपक्षे ॥ एतस्य भूराणां तरवारीणामेकधारयवनखड्गानां निधिः स्थानं सा चमूर्विजयते । या सर्वस्मादपि लोकात्सर्वसेनाभ्यो वा मुखतया श्रेष्ठतया व्यवतिष्ठते।मुखशब्दो लक्षणया श्रेष्ठवाचकः । सर्वतः सर्वादिक्षु मुखं यस्यास्तद्भावेन व्यवतिष्ठत इति वा । अनेकानेकदिग्व्यापित्वात्सेनायाः प्राचुर्यं सूच्यते।यादोरणैर्बाहुयुद्धैर्भुजास्फालनशब्दैर्वोपलक्षिता दोरणैर्जयतीति वा।या अदोरणैरमुष्य सङ्ग्रामैः सिंहनादैर्वा जयति । सेनाजयेनास्य व्यपदेशो न । किंतु स्वयमेवासौ युद्धं कुरुते । तेनोभयथा नलवर्णने तात्पर्यम् । तथा—नैके विदारका योद्धारो यस्यां सा दोरणैः कृत्वा नैकविदारकः कायो यस्याः सेति वा । यस्याः परस्माच्छत्रोः सकाशाद्रोध आवरणं न ज्ञानगोचरः केनापि रोद्धुं न शक्यत इत्यर्थः, परस्मात्प्रतीतिविषयः संमुखमागच्छन्नरो मनुष्यः अधो हीन एवेति वा । 'पुष्करं सर्वतोमुखम्', 'कूपकास्तु विदारकाः','कायो देहः,''कूलं रोधश्च' इति चामरः । व्यवतिष्ठमानेति,'समवप्रविभ्यः स्थः'इति तङ् । अत्र ग्रन्थभूयस्त्वभयाद्व्याकरणं न लिख्यते ॥ २२ ॥

**नासीरसीमनि घनध्वनिरस्य भूया-**
**न्कुम्भीरवान्समकरः सहदानवारिः ।**
**उत्पद्मकाननसखः सुखमातनोति**
**रत्नैरलंकरणभावमितैर्नदीनः ॥ २३ ॥**

नासीरेति ॥ नदीनामिनः स्वामी समुद्रो नासीरसीमनि जलमयसेनामुखविभागे स्थितः ८९ करणभावे साधकतमत्वमितैर्गतै रत्नैर्मुक्तादिभिः अलमतिशयेनास्य वरुणस्य सुखमातनोत्युत्पादयति सुखजनने रत्नानि करणभूतानि । स्वामिनेऽस्मै रत्नानि दत्त्वा प्रीतिमुत्पादयतीत्यर्थः । करणे देहे भावं सत्त्वमितैः प्राप्तैः । स्वदेहोत्पन्नैरित्यर्थ इति वा । अलंकरणभूतत्वाद्वरुणदेहस्थितैरिति वा । एवंविधै रत्नैरुपलक्षितो वा । अलंकरणभावमलंकरणत्वं गतैरत एव तैः सुखमातनोतीति वा । किंभूतो नदीनः—घनध्वनिर्निबिडशब्दः । तथा—भूयान्प्रचुरतरः दीर्घपरिमाणत्वात्, सप्तसंख्यत्वाद्वा । तथा—कुम्भीरा नक्रास्तद्वान् । तथा–मकरा मत्स्यविशेषास्तद्युक्तः । तथा—सहदानवारिः पुण्डरीकाक्षयुक्तः । (तथा–) उच्छब्द उदयार्थः । उद्गतानि विकसितानि पद्मानि येषु तानि काननानि तेषां सखा । तद्युक्त इत्यर्थः । उत्कृष्टा पद्मा लक्ष्मीः येषामेवंविधैः काननैर्युक्त इति वा। उत्कृष्टा पद्मा लक्ष्मीः स्वकन्या यस्मिन्स चासौ वनसखश्चेति वा । श्रीविष्णोस्तत्र विद्यमानत्वाल्लक्ष्मीयुक्तत्वम् । नासीरसीमपदेन तीरं लक्ष्यते, तत्र निबिडध्वनिरिति वा । जलस्य तीरे प्रतिघातात् ॥

१ अत्र तत्र तत्रेति यमकम् ।

१ अत्र श्लेषः ।

नलपक्षे—भूयान्बहुतरः कुम्भी गजो नासीरमुखे सेनामुखविभागे सुखमनायासेन रवाञ्शब्दान्विस्तारयति । किंभूतः कुम्भी—घनवद्ध्वानिर्यस्य । तथा—समः आनुपूर्व्या वृत्तः सलक्ष्मीको वा करः शुण्डादण्डो यस्य । तथा—दानवारिणा मदजलेन सहितः । तथा—उद्गतानि पद्मकानि कुम्भस्थले पद्मबिन्दुजालकानि यस्मिन्नेवंविधं यदाननं मुखं तद्युक्तः । तथा—अलंकारत्वं प्राप्ते रवेः दीनो न । किंतु संभृतः 'सेनामुखं तु नासीरम्', 'नक्रस्तु कुम्भीरः,' 'पद्मकं बिन्दुजालकम्' इति चामरः ॥ २३ ॥

**सस्यन्दनैः प्रवहणैः प्रतिकूलपातं**
**का वाहिनी न तनुते पुनरस्य नाम ।**
**तस्या विलासवति कर्कशताश्रिता या**
**ब्रूमः कथं बहुतयासिकता वयं ताः २४**

सेति ॥ हे विलासवति भैमि, नाम शिरश्चालने । अस्य वरुणस्य का नाम वाहिनी नदी सस्यन्दनैः सवेगैर्निर्झरोदकसहितैर्वा प्रवहणैः प्रवाहैः कृत्वा कूलं तीरं प्रत्यनुपातं गमनं न तनुते । अपितु सर्वापि तनोति । वयं तस्यास्ताः सिकता वालुका बहुतया प्रचुरत्वेन कथं केन प्रकारेण ब्रूमः कथयामः । अतिबहुत्वेनेयत्तया वक्तुं न शक्यत इत्यर्थः । ताः काः—याः कर्कशतां काठिन्यं श्रिताः । कर्को जलजन्तुविशेषः तच्छतैराश्रिता इति वा ॥

नलपक्षे—अस्य नलस्य का नाम वाहिनी सेना सस्यन्दनैः सरथैः प्रकृष्टैर्वाहनैरश्वादिभिः कृत्वा प्रतिकूला वैरिणस्तान्प्रति पातं गमनं न करोति । अपि तु चतुर्विधापि सेना करोत्येव । प्रतिकूलानां वैरिणां पातं हननमिति वा । का सेना अस्य नाम ख्यातिं प्रातिकूलाञ्छत्रून्पातयित्वा शत्रुमात्रं हत्वा न तनुते । सेनास्य ख्यातिं करोतीत्यर्थ इति वा । सवेगैः क्रीडारथैः कृत्वा वैरिणां प्रतिगमनं करोतीति वा । अनेन सेनाया निर्भयत्वं रणेऽपि क्रीडारथारोहणात् । कर्काः श्वेताश्वास्तेषां शतैराश्रितायास्तस्या बहुतया बाहुल्येन ताः भूयस्त्वेन प्रसिद्धा वालुका वयं किं ब्रूमः । ताभ्योऽपि सेना प्रचुरतरेत्यर्थः । तस्याः सकाशात्ता वालुका बहुतया किं ब्रूमः । वालुकाः कथमपि संख्यातुं शक्यन्ते, सा तु न कथंचिदित्यर्थ इति वा । असिः प्रहरणमेषां ते आसिकास्तेषां भाव आसिकता । याः श्वेताश्वशताधिरूढास्ता आसिकताः असिप्रहरणान्पुरुषानिति यावत् । तान्बहुतया किं वर्णयामः । अतिबहुत्वेन वक्तुं न शक्यन्त इत्यर्थः । बहून् तयन्ते गच्छन्ति ता, रक्षन्ति वा ये ते बहुतयाः ते च ते आसिकाश्च तेषां भावानिति वा । 'कर्णीरथः प्रवहणम्', 'सांयात्रिकः पोतवणिक्' इति चामरः । 'पोतः प्रवहणं स्मृतम्' इति हलायुधः । प्रवहणैः, 'कृत्यचः ८ । ४ । २९ ।' इति णत्वम् । प्रतिकूलपातम्, पक्षे द्रव्यवीप्सायां 'विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ३ । ४ । ५६ ।' इत्यादिना णमुल् । तृतीयाप्रभृतीन्यन्यतरस्याम् २ । २ । २१ ।' इति पाक्षिकः समासः । असिः प्रहरणमेषाम्, 'प्रहरणम् ४ । ४ । ५७ ।' इति ठक् । असिभिर्जयन्तीत्यासिकाः, 'तेन दीव्यति खनति । ४ । ४ । २ ।' इति वा ठक्[1] ॥ २४ ॥

**शोणं पदप्रणयिनं गुणमस्य पश्य**
**किंचास्य सेवनपरैव सरस्वती सा ।**
**एनं भजस्व सुभगे भुवनाधिनाथं**
**किं वा भजन्ति तमिमं कमलाशया न २५**

शोणमिति ॥ हे सुभगे सौभाग्यवति भैमि त्वम् एनं भुवनस्य जलस्याधिनाथमधिपतिं वरुणं भजस्व वृणीष्व । जलपतित्वमेवाह । त्वं गुणमप्रधानं सेवकं शोणं नाम नदम् अस्य पदप्रणयिनं चरणानुरागिणं पश्य । किंचेत्याधिकोक्तौ । शोणोऽस्य चरणप्रणयी इति किं वक्तव्यम् । सा प्रसिद्धा सरस्वती नदी अस्य सेवनपरैव चरणसंवाहनादिपरैव । पूर्वोक्तापरितोषे वाशब्दः । के कमलस्य जलस्य आशया आधाराः समुद्रादिपल्वलान्ताः पद्माकरा वा तमिमं न भजन्ति सेवन्ते । अपि तु सर्वेऽपि क्षीरोदादयः । क्षीरोदादयः सर्वेऽपि यस्यानुचराः, तस्य शोणाद्यनुचरत्वे का कथा । तस्मात्सलिलपतिरयमित्यर्थः । कमलाशया जलाभिलाषेण के वा लोका इमं न सेवन्ते स्तुवन्तीत्यर्थो वा । शोणादीनां तत्तदभिमानिन्यो देवता लक्ष्यन्ते, अतस्तेषां सेवकत्वं युज्यते ॥

नलपक्षे—त्वं जगत्पतिमेनं नलं पतित्वेन स्वीकुरु । स्वीकारयोग्यत्वमेव द्रढयति—त्वं शोणं रक्तं गुणमस्य पदप्रणयिनं पश्य । किंच अन्यच—सा सरस्वती वाग्देवता सकलशास्त्राध्ययनाध्यापनरूपा अस्य राज्ञो नलस्य सेवनपरैव चित्तमध्यस्थितैव । तमिमं कमलायाः संपद्

---

1 अत्र श्लेषः ।

1 अत्र श्लेषः ।

आशयाऽभिलाषेण के वा लोका न सेवन्ते । अपि तु—धनप्राप्त्यभिलाषेण सर्वेऽपि सेवन्त इत्यर्थः । वा अप्यर्थे । कमलाशया लक्ष्मीनिधयो धनिका अपि लोकास्तमिमं न भजन्ति, अपि तु भजन्त्येवेति वा अत्र प्रथमद्वितीयतृतीयाविशेषणैः क्रमेण सौन्दर्यकलाकौशलौदार्याणि द्योत्यन्ते । 'शोणो हिरण्यवाहः स्यात्', 'शोणः कोकनदच्छविः', 'जीवनं भुवनं वनम्', 'विष्टपं भुवनं जगत्' 'सलिले कमलं जलम्', 'कमला श्रीः' इति चामरः । आशयाः''अधिकरणे शेतेः ३।२।१५'इत्यच् ॥ २५ ॥

**शङ्कालताततिमनेकनलावलम्बां**
**वाणी नवर्धयतु तावदभेदिकेयम् ।**
**भीमोद्भवां प्रति नले च जलेश्वरे च**
**तुल्यं तथाऽपि यदवर्धयदत्र चित्रम् ॥२६॥**

शङ्केति ॥ इयं पूर्वोक्ता वाणी भीमोद्भवां प्रति लक्षीकृत्य । भैम्या इति यावत् । अनेकनलावलम्ब्यां नानानैषधविषयां शङ्कालताततिं संशयवल्लीपरम्परां न वर्धयतु तावन्न पूरयतु तावत् । अपि तु पूरयत्येव । नवा ऋद्धिर्यस्याः सा नवर्धिः । नवर्धिं करोतु नवर्धयतु । भैमीं प्रति संदेहपरंपरां नूतनसमृद्धिमतिवृद्धां करोत्वित्यर्थ इति वा । तावच्छब्दोऽनुमतौ, अवधारणे वा । यतः—अभेदिका विशेषप्रतिपादनमकुर्वती । समानधर्मदर्शनाद्धि संशय उपचीयते, विशिष्टधर्मदर्शनात्तु व्यावर्तत इत्यर्थः। यद्यप्यत्र विषये चित्रं नास्ति तथाऽपि नले जलेश्वरे च तुल्यमेककालं यत् संशयवल्लीपरंपरामवर्धयत्पूरयति स्म । अत्र विषये चित्रमाश्चर्यम् । नहि विषयस्यैव संदिहानत्वमुपपद्यते । यतो लोके दूरस्थिते पुरुषे पुरुषत्वं स्थाणुत्वं वाऽनुपलभ्य, ऊर्ध्वत्वमात्रं स्थाणुसाधर्म्यमुपलभ्य तटस्थः स्थाणुर्वा पुरुषो वेति संदिग्धे । न तु पुरुष एवात्मानमूर्ध्वमवलोक्य अहं वा स्थाणुर्वेति । तस्मान्नलजलेश्वरविषयो भैम्याः संशयो युक्तः । विषयभूतयोरेव तु संशये महदाश्चर्यमिति भावः । विरोधपरिहारस्तु—तुल्यकालं यथाक्रमं नले शं सुखम्, जलेश्वरे कालताततिं कालिमातिशयं पूरयति स्म । तथा हि—यदि देवी एवं नल एवायमित्यकथयिष्यत्तदा मय्यनुरक्ता भैमी मामकभ्रमेणैनमेवावरीष्यत् तत्तु देव्या न कृतं वरुणश्लेषेण वर्णितत्वादिति नले सुखं जनितम् । यदि वाणी मां नल एवायमित्यकथयिष्यत्तदा नलबुद्ध्या भैमी मामेवावरिष्यत् तत्तु तया न कृतं मच्छ्लेषेणैव वर्णितत्वादिति विषादाद्वरुणे कालिमातिशयो जनितः कालताततिरप्यनेकनलावलम्बिनी चतुर्णामप्यवरणात् । अथ च—मत्संदेहाद्वरुणं भजेत्, नलसंदेहान्मां भजेदिति क्रमेण नलवरुणयोः संशयपरंपरां पूरयति स्म । अनेकनलावलम्ब्यां भैम्याः संशयवल्लीपरंपरां न वर्धयतु न छिनत्तु । 'वर्धकः पूर्तिच्छिदोः' । यतो—विशेषमप्रतिपादयन्ती । या हि छेदासमर्था छुरिकादिः साऽनेकतृणविशेषावलम्बनां लताततिं न छिनत्ति इति नाश्चर्यम् । तथापि भैमीं प्रति नले च जलेश्वरे च संशयवल्लीपरम्परामेककालमेव यदच्छिनत्तच्चित्रम् । या हि न छिनत्ति सा छिनत्तीति चित्रमिति भावः । मत्संदेहादेनं भैमी भजेदिति नलभ्रान्तिः । नलसंदेहान्मां भजेदिति वरुणभ्रान्तिः वरुणवाचिशब्दसद्भावाच्छ्लेषवक्रोक्त्यादिज्ञानचतुरा भैमी वरुणं न वरिष्यतीति निश्चयेन नलभ्रमनाशः नलेऽनुरक्ता भैमी मत्प्रतिपादकशब्दसद्भावान्मां न वरिष्यतीति निश्चयेन वरुणभ्रमनाश इति वा । विशेषमप्रतिपादयन्ती वाणी सरस्वती वा । देव्या नामग्राहमहं वर्णितः, अतो मां वरिष्यति न वेति वरुणस्य संदेहो गतः । इदानीमवशिष्टोऽहमेव मय्येवानुरक्तेति मां वरिष्यति न वेति नलसंदेहो गत इति भाव इति वा । इत्यादि व्याख्याविशेषो विचार्याङ्गीकरणीयः ॥ २६ ॥

**बालां विलोक्य विबुधैरपि मायिभिस्तै-**
**रच्छद्मितामियमलीकनलीकृतस्वैः ।**
**आह स्म तां भगवती निषधाधिनाथं**
**निर्दिश्य राजपरिषत्परिवेषभाजम् ॥ २७ ॥**

बालामिति ॥ इयं भगवती सरस्वती निषधाधिराजमुद्दिश्य तां बालां भैमीमाह स्मोवाच । किं कृत्वा—तां भैमीम् अलीकनलीकृतस्वैरसत्यनैषधीकृतात्मभिर्मायिभिश्छलपरैरपि तैर्विबुधैर्देवैरच्छद्मितामप्रतारितां विलोक्य। किंभूतं नलम् । राज्ञां परिषत्सभा तस्याः परि समीपे वेषं शृङ्गारं भजति तम् । 'परिवेष—'इति पाठे परिवेष उपान्तः । बालामपि, विबुधैरपीत्यपिरुभयत्र संबध्यते । बाला हि प्रतार्यते,इयं बालापि न प्रतारिता तेष्वेकस्याप्यवरणात् । ये च विबुधा ज्ञातारस्ते मायिनः खलाः। कथं मायिभिरपि बालापि न प्रतारितेत्यप्याश्चर्यम्।

१ अत्र श्लेषः ।

१ अत्र न वर्धयत्विति अवर्धयदिति च विरुद्धमिवेति विरोधाभासः ।

राजपरिषदः परिवेषरूपणान्नलस्य चन्द्रत्वं ध्वनितम् । परिषत्, 'सदिरप्रतेः ८ । ३ ६६ ।' इति षत्वम्॥२७॥

अत्याजिलब्धविजयप्रसरस्त्वया किं
विज्ञायते रुचिपदं न महीमहेन्द्रः।
प्रत्यर्थिदानवशताहितचेष्टयासौ
जीमूतवाहनधियं न करोति कस्य॥२८॥

अत्याजीति ॥ त्वया मह्या महेन्द्रो नलः किं न ज्ञायते, अपि तु विशेषेण इन्द्रादिभ्यो भेदेन सत्यत्वेन जानीहीत्यर्थः। किंभूतः। अतिशयेन आजौ सङ्ग्रामे, अतिशयिते वा आजौ लब्धः प्राप्तो विजयस्यारिपराभवनस्य प्रसरो बाहुल्यं येन। तथा—रुचेरनुरागस्य कान्तेर्वा पदं स्थानम्। तथा—असौ अर्थिनमर्थिनं प्रतीति प्रत्यर्थि या दानवशता दानपरता तया, दानेष्वर्थिनं प्रत्येव वा वशतया जितेन्द्रियतया वा आहिता कृता या चेष्टा याचकानुकूलव्यापारः तेन परदारदर्शनादिनिवृत्तव्यापारेण च जीमूतवाहनस्य आर्थिहेतोः प्राणानपि तृणवद्ददतो राजविशेषस्य धियं बुद्धिं दानातिशयेनाधिपरतन्त्रतया च जितेन्द्रियतया च किमयं जीमूतवाहन इति धियं कस्य न करोति। दानशूरत्वादित्रयमस्य सूचितम्। प्रत्यर्थिनो वैरिणो घ्नन्ति प्रत्यर्थिदा जनाः प्राणा येषां ते अतिशूराः ते वशा अधीना यस्य तस्य भावस्तत्ता तया कृत्वा कृता या चेष्टा तया शत्रुवशीकरणव्यापारेणेन्द्रबुद्धिं कस्य न करोति। अपि तु सर्वस्यापि करोति। इन्द्रो यथा शत्रून्वशीकरोति तथायमपीति वा॥

इन्द्रपक्षे—अयं महेन्द्रः त्वया किं न विज्ञायते। अपि तु—इन्द्रत्वेन निश्चेयः। किंभूतः—अतिशयित आजिः सङ्ग्रामो यस्य। तथा—लब्धो विजयेनार्जुनेन कृत्वा प्रसरो वंशविस्तारो येन। ततः कर्मधारयः। 'प्रसवः' इति पाठे नलपक्षे—जयलाभः। इन्द्रपक्षे—लब्धो विजयोऽर्जुनो, विजयत इति विजयो जयन्तो वा, प्रसवः पुत्रो येन। तथा—रुचिपदं तेजःस्थानम्। तथा—मही उत्सववान्। तथा–अयं प्रत्यर्थिनां दानवानां शतेष्वहिता प्रतिकूला चेष्टा, अहितस्य शत्रोर्वा चेष्टा शत्रुत्वकृतः तन्नाशकरो व्यापारस्तेन इन्द्रबुद्धिं कस्य न करोति। अथवा—अयं महेन्द्रस्त्वया किमित्यत्याजि केन हेतुना त्यक्तः अयं न विज्ञायते विज्ञ इवाचरति विज्ञायते एवंभूतो न भवति। अपि तु विद्वानेवेत्यर्थः। तथा—रुचिपदं कान्तिस्थानं न तथा—मही नेति नञावृत्त्या काका व्याख्येयम्। एवंगुणविशिष्टस्य परित्यागे किंचिदपि कारणं न पश्याम इति भावः। महेन्द्रस्त्वया विज्ञाय किमित्यत्याजि उचितमेव कृतमित्यर्थः। किम् प्रश्ने संभावनायां वा। त्यागे कारणमाह—लब्धो विना पक्षिणा गरुडेनामृताहरणसमये जयस्य प्रसरो विस्तारो यस्य। गरुडेन पराजित इत्यर्थः। तथा—अरुचिपदमननुरागस्थानम्। तथा—न मही उत्सवरहितः सदा दैत्यभयात्। अरुचिस्थानं महेन्द्रः त्वया किं न विज्ञायते अपि तु ज्ञात एव। यतः—अत्याजि त्यक्त इति वा। अस्मिन्पक्षे न महीत्यत्र नञ आवृत्तिः। अतिशयितरणे लब्धो विना जयप्रसरो यस्येति वा। 'विजयस्तु जये पार्थे' इत्यमरः। विज्ञायते, 'उपमानादाचारे ३। १। १०'। 'कर्तुः क्यङ् स लोपश्च ३।१।११'॥ २८॥

येनामुना बहुविगाढसुरेश्वराध्व-
राज्याभिषेकविकसन्महसा बभूवे।
आवर्जनं तमनु ते ननु साधु नाम-
ग्राहं मयानलमुदीरितमेवमत्र॥ २९॥

येनेति ॥ येनामुना नलेन बहुतिशयेन विगाढः सेवितः सुरेश्वरस्याध्वा मार्गः त्रिलोकीप्रतिपालनलक्षणो येन। तथा—राज्ये योऽभिषेको मङ्गलस्नानं तेन कृत्वा विकसन्महो यस्य। एवंविधेन बभूवे जातम्। पूर्वेण कर्मधारयः। बहुवारं सेवितो देवेन्द्रेण मार्गो लोकपालनप्रकारो यस्येति वा। पश्चात्कर्मधारयः। इन्द्रेण लोकपरिपालनमस्माच्छिक्षितमित्यर्थः। ननु भैमि, अत्र पञ्चसु मध्ये स्वयंवरे वा नामग्राहं नाम गृहीत्वा एवममुना पूर्वोक्तेन प्रकारेण मयोदीरितमुक्तं तं नलमनुलक्षीकृत्य ते तव आवर्जनं पतित्वेनाङ्गीकरणं साधु शुभम्। सत्यनलमेनं सर्वथा वृणीष्वेति भावः॥

वह्निपक्षे ॥ येनानेन वह्निनाऽनेकवारमनुभूतो यः सुरेश्वराध्वरेषु देवेन्द्रयज्ञेष्वाज्याभिषेको घृताप्लवस्तेन कृत्वा विकस्वरतेजसा जातम्। बहु वारंवारं विगाढ आवर्तितः 'इन्द्र आयाहि' इत्यादिना आहूतः सुरेश्वरो यत्र तादृशेषु यागेष्वाज्याभिषेकस्तेन कृत्वा विकस्वरतेजसा जातमिति वा। ननु भैमि, अत्र पञ्चसु

१ अत्रानुप्रासः,

१ अत्र श्लेषः।

मध्ये नाम गृहीत्वा एवं पूर्वोक्तप्रकारेण मयोक्तं तम् अनलमग्निं प्रति ते वर्जनं साधु । अपि तु न साधु । आ इति खेदे । आवर्जनं पतित्वेनाङ्गीकरणं साध्विति वा । नु भैमि, तमनु ते वर्जनं न साध्विति वा । पूर्वार्धेन सर्वदा परान्नभोजनेनैव परिपुष्टोऽयमिति त्यागः सूचितः । तथा—ननु भैमि, मया नाम गृहीत्वा कथितमनलं नलान्यं, अथ च—वह्निमनु ते वर्जनं साधु भद्रम् । आ हर्षे । नु भैमि, तमनु ते आवर्जनं सामस्त्येन वर्जनं न साधु, अपि तु साध्वेवेति वा । आ आवर्जनं सामस्त्येनाङ्गीकरणं तव न साधु, किंतु वर्जनमेव साध्विति वा । नामग्राहम्, 'द्वितीयायाम्' इत्यनुवृत्तौ 'नाम्न्यादिशिग्रहोः ३ । ४ । ५२' इति णमुल् ॥ २९ ॥

**यच्चण्डिमारणविधिव्यसनं च तत्त्वं**
**बुद्ध्वाशयाश्रितममुष्य च दक्षिणत्वम् ।**
**सैषा नले सहजरागभरादमुष्मि-**
**न्नात्मानमर्पयितुमर्हति धर्मराजे ॥ ३० ॥**

यदिति ॥ चोऽवधारणे । यस्य चण्डिमा क्रूरत्वं रणविधौ सङ्ग्रामविधाने । व्यसनमेव वैरिणां विगतासुकरणमेवेत्यर्थः । सर्वानपि वैरिणो मारयत्येवेति भावः । रणविधौ व्यसनमिव व्यसनम् । यच्चण्डिमा क्रौर्यम्, यच्च रणकर्मणि व्यसनमिति वा । सा एषा त्वम् अमुष्याशयमभिप्रायमाश्रितं मनसि स्थितं दक्षिणत्वं सरलत्वं च तत् सर्वं बुद्ध्वा ज्ञात्वा, शयं पाणिम् आश्रितं दानशूरत्वं वा ज्ञात्वा धर्मसहिते राजनि धर्मेण राजमाने वा अमुष्मिन्नले सहजरागभरादकृत्रिमानुरागबाहुल्यादात्मानमर्पयितुं योजयितुमर्हसि न । अपि तु योग्या भवस्येवेति वा। सर्वथाऽयं वरणीय एव त्वयेति भावः । एतेन शूरत्वदातृत्वधार्मिकत्वान्यस्योक्तानि ॥

यमपक्षे ॥ हे चण्डि कोपने, यत् च अमुष्य यमस्य मारणविधिव्यसनं प्राणिप्राणहरणशीलत्वम् आशया दिशा च दाक्षिणत्वमाश्रितं तत्तत्त्वं निरुपाधिरूपं ज्ञात्वा सैषा त्वम् अनले नलान्यस्मिन् नलसदृशे चास्मिन्धर्मराजे यमे अकृत्रिमप्रेमरसबाहुल्यात्त्वंयोजयितुमर्हसि । सर्वप्राणा एतदधीनाः, दक्षिणदिक्पतिश्चायं तस्मादादरणीय इति भावः। चण्डि नलान्यनामधेयश्रवणमात्रात्कोपने । सर्वदा सर्वप्राणिप्राणहरणमेव व्यसनं दोषम् अमुष्य दिशा दाक्षिणत्वं छलेन सरलत्वमुदारत्वं चाश्रितं न त्वनेनेत्यर्थः । तत् सर्वं तात्त्विकं बुद्ध्वा सैषा त्वं नलादन्यस्मिन् अस्मिन्नात्मानं योजयितुं योग्या न भवसि।अमुष्य यत् मारणविधिव्यसनं तत् तत्त्वं सत्यं,दक्षिणत्वं तु दिगाश्रितं दक्षिणदिक्पतित्वात्। दक्षिण इति देशनिमित्तास्य समाख्या,तदेतद् बुद्ध्वा सैषा त्वम् आत्मानमर्पयितुं न अर्हसीति वा योजना। एवंविधो न वरणीय इति भावः । अन्यच्च कारणम्—असहजरागभरात् असहजानुरागबाहुल्याच्चेत्यर्थः । यत्रानुरागो नास्ति, स न वरणीय इति भावः ॥ ३० ॥

**किं ते तथा मतिरमुष्य यथाशयः स्या-**
**त्त्वत्पाणिपीडनविनिर्मितयेऽनपाशः ।**
**कान्मानवानवति नो भुवनं चरिष्णू-**
**न्नासावमुत्र नरता भवतीति युक्तम् ३१**

किमिति ॥ अमुष्य नलस्य आशयोऽभिप्रायः तव पाणिपीडनस्य पाणिग्रहणस्य विनिर्मितये निष्पत्तये[1] अनपाशः अपगता आशा यस्मादपाशः एवंविधो न भवतीत्यनपाशः तत्परो यथा स्यात्तथा किं ते मतिर्बुद्धिः । किंशब्दः सम्भावनायाम् । यथायं त्वद्वरणायाभिलाषपूहितान्तःकरणो भवेत्तथा त्वं प्रायेण करिष्यसीति गम्यत इत्यर्थः । असौ नलो भुवनं जगत् चरिष्णून्संचरणशीलान्कान्मानवान्मनुष्यान् नोऽवतिनो रक्षति अपि तु सर्वानप्ययमेव रक्षति । मानावानभिमनी नलः कान्न रक्षतीति वा । तस्मादमुत्र नले भवती रता नेति न युक्तम् । किंत्वस्मिन्रता भवेरर्थः । असौ ना पुरुषश्रेष्ठः अतो नरता पुरुषश्रेष्ठत्वममुत्र भवतीति युक्तं न त्वेतोऽस्त्यर्थ इति वा । असौ ना, अमुत्र भवती रता नेति युक्तम्, अपि तु नेति वा । असौ ना पुरुषश्रेष्ठः, अतोऽमुत्र भवती रक्तानुरक्तेति किं न युक्तम्, अपि तु युक्तमेवेति वा । भवतीति वा । भवतीति संबुद्धिर्वा ॥

वरुणपक्षे—अमुष्य वरुणस्य शयः पाणिर्येन प्रकारेण त्वत्पाणिग्रहणनिष्पत्तयेऽनपाशः न विद्यते पाशो यस्मिन्नेवंविधः पाशरहितो यथा भवेत्तथा ते बुद्धिः किम्। किं प्रश्ने । पाशं त्यक्त्वा त्वत्पाणिग्रहणं करिष्यतीत्यर्थः । त्वत्पाणिग्रहणनिष्पत्तयेऽस्य शयः करः स्यात् पाशो न । त्वत्पाणिग्रहणं शयेन करिष्यति पाशं त्यक्ष्यतीति भयं मा यासीरित्यर्थ इति वा । असौ भुवनमुदकं तत्संचरणशीलान्मनुष्यान्कान्नोऽवति । अपितु जलप्रविष्टान् ब्रुडनादि-

1 अत्र श्लेषः ।

[1] अत्र श्लेषः ।

प्रमादाद्वरुण एव रक्षति । उदकसंचरणशीलान्मनुष्यानूकान्नो अवति अपि तु रक्षतीति वा। नोऽस्माकं भुवनं पृथ्वीलोकः तत्र संचरणशीलान्मनुष्यान् कादुदकाद्धेतुभूताद्रक्षति। सर्वेषां ह्युदकं जीवनमिति वा। अमुत्र भवती न रता नानुरक्तेति न युक्तम्। अमुत्र नरता मनुष्यत्वं न भवतीति युक्तम्। देवोऽयमित्यर्थ इति वा। अमुत्र नरता नलत्वं न भवतीति युक्तमिति वा। असौ ना न पुरुषो न भवति, अतोऽमुत्र भवती रतेति युक्तम्, अपि तु नेति वा। अमुत्र भवती न रता नानुरक्तेति न युक्तम्, अपि तु युक्तमेवेति वा॥ ३१॥

श्लोकादिह प्रथमतो हरिणा द्वितीयाद्
धूमध्वजेन शमनेन समं तृतीयात्।
तुर्याच्च तस्य वरुणेन समानभावं
सा जानती पुनरवादि तया विमुग्धा३२

श्लोकादिति॥ इह चतुर्षु 'अत्याजि—' इत्यादिश्लोकेषु मध्ये 'अत्याजि—' ( १३।२८ ) इति प्रथमतः श्लोकाद्धरिणा इन्द्रेण समं सह, 'येनामुना—' ( १३।२९ ) इति द्वितीयाच्छ्लोकाद्धूमध्वजेनाग्निना सह, 'यचण्डिमा—' ( १३।३० ) इति तृतीयाच्छ्लोकाच्छमनेन यमेन सह, 'किं ते—' ( १३।३१ ) इति तुरीयाच्छ्लोकाद्वरुणेन सह, तस्य नलस्य समानभावं तुल्यरूपत्वं जानती अत एव विमुग्धा विशेषेण भ्रान्ता भैमी तया देव्या वक्ष्यमाणं पुनरवादि॥ ३२॥

त्वं याऽर्थिनी किल नले न शुभाय तस्याः
क्व स्यान्निजार्पणममुष्य चतुष्टये ते।
इन्द्रानलार्यमतनूजपयःपतीनां
प्राप्यैकरूप्यमिह संसदि दीप्यमाने ३३

त्वमिति॥ या त्वं किल नले विषयेऽर्थिनी साभिलाषा तस्यास्ते तव अमुत्र नले निजार्पणं स्वसमर्पणं शुभाय कल्याणाय तुष्टये च संतोषाय च क्व न स्यात्कुतो न भवेत्, अपि तु स्यादेव। किंविधेऽमुत्र—इन्द्रश्चानलश्चार्यमतनूजो यमश्च पयःपतिर्वरुणश्चेत्येषामैकरूप्यं सारूप्यं दिक्पालांशत्वात्सरूपत्वं प्राप्य इहास्यां संसदि सभायां दीप्यमाने। तस्मादयं वरणीय इत्यर्थः। अथवा—या त्वं नले न साभिलाषा, तस्यास्तवामुत्र नले निजार्पणं शुभाय कुतः स्यात्, अपि तु न कुतोऽपि। किमित्यत आह—इन्द्राग्नियमवरुणानां चतुष्टये ऐकरूप्यं प्राप्य नलसारूप्यं प्राप्य इह सभायां ज्वलति सति। एतान्प्रसन्नानकृत्वा यन्नलवरणं तच्छुभाय न भवेदेव, शापं दास्यन्तीत्यर्थ इति वा। या त्वं नले विषयेऽर्थिनी एवं वर्ण्यमानमप्येनं नलं न वृणोषि। यतः—तस्यास्ते नलसारूप्यं प्राप्य इह सभायां प्रकाशमाने इन्द्रादीनां चतुष्टये मध्ये क्व कस्मिन् इन्द्रेऽग्नौ यमे वरुणे वा निजार्पणं शुभाय स्यात्कथय। मया बहुशः प्रोच्यमानाऽपि यन्नलं न वृणुषे तर्ह्येषु सुन्दरतमेषु चतुर्षु मध्ये कं वृणुष इति कथय इत्यर्थ इति वा। अनेनात्रेन्द्रादयो वर्तन्ते न वेति संदेहो निरस्तः। परं तु के ते कश्च नल इति विशेषो नोक्तः। अत्रेन्द्रादीनां चतुर्णां त्यागोऽपि प्रतीयते। या त्वं नलेऽर्थिनी, तस्याः ते नलस्वरूपतां प्राप्य इह सभायां दीप्यमान इन्द्रादिचतुष्टये निजार्पणं शुभाय क्व स्यात्। अपि तु न कुतोऽपि। या ह्यन्यत्रानुरक्ता, तस्या अन्यत्र निजार्पणे शुभं कथं भवेत्। अन्यच्च नलरूपधारणादेते प्रकाशन्ते न त्वेषां सहजं सौन्दर्यमस्ति। अतोऽप्येते न वरणीया इति भावः॥ ३३॥

देवः पतिर्विदुषि नैषधराजगत्या
निर्णीयते न किमु न व्रियते भवत्या।
नायं नलः खलु तवातिमहानलाभो
यद्येनमुज्झसि वरः कतरः परस्ते॥ ३४॥

देव इति॥ हे विदुषि श्लेषोक्तिचातुरीपरिज्ञानचतुरे भैमि, एष पुरोवर्ती देवः स्वर्गे क्रीडाकारी अमरश्च धराजगत्या भूलोकस्य पतिः पालयिता न किंतु अर्थात्स्वर्लोकस्य पतिरिन्द्रस्त्वया किमु किमिति न निर्णीयते इन्द्रत्वेन किमिति न निश्चीयते। अपि तु निश्चेय इत्यर्थः। किमिति वा न व्रियते अपि तु वरणीयश्चेत्यर्थः। मया न निश्चित इति कुतोऽवसितं भवत्येति शङ्कायां सत्यामाह—यतो न व्रियते इति हेतूपन्यासः सरस्वत्या कृतः। अयमिन्द्र इति चेत्तव निश्चयः स्यात्तर्हि मनुष्यापेक्षयाधिकत्वादयं वृत एव स्यात्तत्तु न कृतम्। अत इन्द्रत्वेन त्वयाऽयं न निश्चित इत्यर्थ इति वा। धराणां पर्वतानामजनम् आजः क्षेपणं तत्र गतिरुपायभूतो वज्रस्तेन कृत्वाऽयं ना पुरुषः साम-

१ अत्र श्लेषः। २ जानतीति विमुग्धेति च विरुद्धमिवेति विरोधाभासः।

१ अनुप्रासः।

र्य्यवान्वज्रायुधो देव इन्द्रः पतिर्भर्ता भर्तृत्वेन किं न निश्चीयते, निश्चितश्चेत्किं न व्रियत इति वा । धराजगत्या वज्रस्य पतिः एष देवः त्वया न निश्चीयत इति न, अपि तु निश्चित एव ज्ञात एव किमु न व्रियत इति वा । उशब्दः संबोधने । धरान्पर्वतानजति क्षिपतीति धराज इन्द्रः स एव गतिः शरणं यस्याः प्राच्या दिशः पतिर्देव इन्द्रो न निर्णीयते इति न, परं किं न व्रियत इति वा । इन्द्रश्चेन्नल इव कथं दृश्यत इत्यत आह—अयं खलु निश्चयेन नलो भवति, तव नलवदाभातीति नलाभः । अत्र हेतुमाह—यतः अतिशयितं महस्तेजो यस्य । मनुष्यापेक्षया बहुतेजा इत्यर्थः । अत एव वरणीयः । अथवा—अयं नलस्तृणविशेषः तत्तुल्योऽसारभूतो न भवति । किं त्वतिबलः, अतोऽपि वरणीय इत्यर्थः । अस्य वरणे निश्चितम् अतिशयिता ये महा नन्दनवनक्रीडादय उत्सवाः, अननम् आनः प्राणनं च, तेषां लाभः प्राप्तिस्तव भविष्यतीति शेषः । इन्द्रवरणे नन्दनवनक्रीडाः सुधापानेनामरत्वं च त्वया प्राप्स्यन्ते इत्यर्थः । अतिमहतश्चिरकालस्य प्राणनस्य लाभो भविष्यतीति वा । एवंगुणविशिष्टमेनम् अस्य विष्णोर्वा इनं ज्येष्ठभ्रातृत्वेन स्वामिनमिन्द्रं चेत्त्यजासि तर्हि परोऽन्यः को वरः, अपि तु न कोऽपि । मद्वचनविश्वासादेनमेव वृणीष्वेति भावः । अथ च—यद्येनं त्यजसि, तर्हि तव कतरोऽभीष्टो भवेत् न कोऽपि। किंतु परः शत्रुरेव भवेदित्यर्थः । अथ च—यद्येनं त्यजसि, तर्हि तव परोऽन्यः एतदनन्तरः केन वायुना तरति प्लवते, केन जलेन तीर्यते शान्तिं प्राप्यते वा यः स कतरोऽग्निः वरो भवितेत्यर्थः ॥ * ॥ अत्रेन्द्रत्यागोऽपि सूचितः । तथा हि—एष भूलोकस्य रक्षको देवो राजा नलो नेति निर्णीय निश्चित्य तेन नलत्वाभावलक्षणेनैव कारणेन न व्रियते किम्विति प्रश्नः । युक्तमेवैतत्कृतमिति शेषः । धराज इन्द्र एव गतिर्जीवनोपायो यस्याः शच्याः पतिः देवो न निश्चीयत इतिं न, अपि तु निश्चित एव । न व्रियते किम्विति वा । संशयलेशस्यापि निरासार्थं देवी पुनस्तत्त्वमाह—अयं त्वत्संबन्धी त्वच्चित्तानुरञ्जकोऽतिमहान् नितरां तेजस्वी नलो न भवत्येव । यत् त्वया निश्चितं तत्तथ्यमेवेत्यर्थः । किं तु नलवदाभासत इत्येव । नलाकारधारणादेवास्याभा, न तु सहजेत्यर्थः । यद्वा—यतोऽयं नलाख्यतृणविशेषवन्निःसार आभाति तस्मान्नितरां तेजस्वी नलो न भवतीत्यर्थः। यदि चैनं त्यजसि तर्हि ते श्रेष्ठाः के सुखे तरतीति कतरः सुखसमुद्ररूपो नलो वरो भवितेत्यर्थः । यद्वा—नैषधराजो नल एव गतिर्जीवनोपायो यस्या एवंविधया त्वया देव इन्द्रो न निश्चीयते किम् । अपि तु निश्चित एव । यतः—पतिर्न व्रियते । नलानुरागिणी त्वम्, इन्द्रोऽयमिति ज्ञात्वैव पतित्वेन नाङ्गीकरोषीत्यर्थः । यस्मात्—दैत्यैरतिक्रान्तं महो यस्य तस्मादसारभूतः । यदि चैनं त्यजसि तर्हि तव लाभो न । अपि तु लाभ एवेति वा ॥

वह्निपक्षे—धरतीति धरो वाहनं स चासावजश्च मेषः, धर इव पर्वततुल्यो वा यो मेषस्तेन कृत्वा या गतिः, धरायां भूमौ अजेन कृत्वा या गतिस्तयोपलक्षितः, पाकादिकरणद्वारा त्रैलोक्यलक्षणात्पत्तिः, देवो द्युतिमानमरश्च वह्निः न निश्चीयत इति न । अपि तु निश्चीयत एव । परम् एवंगुणाविशिष्टो ज्ञात्वापि न व्रियते । अपि तु अग्नित्वेन निश्चित्य वरणीय एवेत्यर्थः । धरो वाहनमजो यस्य स धराजो ? वह्निः स एव गतिः शरणं यस्या आग्नेय्या दिशः पतिर्देवोऽग्निः किं न निर्णीयते । निर्णीतश्चेत्किमु न व्रियते इति वा । अग्निश्चेन्नलत्वेन किमित्याभातीत्यत्राह—अयं निश्चितं नलो न किं तु ततोऽप्यतितेजस्वी तव नलवदाभातीति वा । अयं त्वत्संबन्धी नलो न भवति, किंत्वनल एवेत्यर्थं इति वा । एवंगुणविशिष्टमेनं यदि त्यजसि, तर्हि अग्नेः परः अन्यः श्रेष्ठश्च ते को भर्ता भविता । अपि त्वेतत्सदृशोऽतितेजस्वी कोऽपि नास्तीत्यर्थः । अथ च—तव कोऽभीष्टः । अपि तु न कोऽपि । किं तु परः शत्रुरेवेत्यर्थः ॥ * ॥ अत्राऽपि त्यागः सूचितः । तथा हि—एष ना मनुष्यो न किंतु धराजगत्या आग्नेय्या दिशः पतिः देवो वह्निरिति भवत्या निर्णीयते किम् । यतो न व्रियते । त्वया सत्यमेव निश्चितमित्याह—अयं त्वच्चित्तानुरञ्जकोऽतितेजस्वी नलो न, किंतु तदाकारधारणान्नलाभः । सहजेयं कान्तिर्न भवतीत्यर्थः । नले तृणविषये आभा यस्य । यस्य तेजस्वित्वं तृणं प्रत्येव न तु दैत्यान्प्रतीत्यर्थं इति वा । नैषधराजो गतिर्यस्यास्तया भवत्या एष दीप्यमानोऽग्निः किमु न निर्णीयते । अपि तु निर्णीयत एव । यतो न व्रियते । अयं तव पतिर्नलो न भवति किंतु दैत्यैराक्रान्ततेजास्तृणविशेषनलतुल्य इति वा ॥

यमपक्षे—एष धरान्पर्वताञ्श्रृङ्गाभ्यां खुरैर्वा अजति क्षिपति धराजो महिषस्तस्य गत्या तेन वा या गतिस्तयोपलक्षितः धर्मरूपत्वात्पतिः पालयिता देवः क्रीडापरो-

ऽमरश्च यमो न निर्णीयत इति न। अपि तु निश्चित एव, परं किमु न म्रियते। एष देवः धराजेन महिषेण कृत्वा अर्थाद्यमस्य गतिर्यस्यामेवंभूताया दक्षिणदिशः पतिर्न। अपि तु भवत्येवेति किमु न निर्णीयते किं वा न म्रियते अपि तु यमत्वेन निर्णयो वरणीयश्चेत्यर्थ इति वा। अग्नितेजस्त्वयं निश्चितं नलो गहनो न। अपि तु धर्मरूपत्वाद्दहन एव। 'नल गहने' इत्यस्य पचाद्यचि रूपम्। यदि चैनं त्यजसि तर्हि तव लाभो न किंतु हानिरेव।यतः—तव एतदन्यः श्रेष्ठश्च कतरो वरः अपि तु नास्त्येवेत्यर्थः।अयं नलो न किंतु तवातिमहतामनानां प्राणानां लाभो यस्मात्सोऽतिमहानलाभः। सर्वेषां प्राणा एतदधीना अतस्त्वया त्वस्मिन्वृते तव चिरकालं प्राणनं भविष्यतीत्यर्थः। यद्वा—धर्मरूपत्वादतिशयितो महः पूजा यस्य स चासौ अनलाभश्च तेजस्वित्वाद्वह्नितुल्य इत्यर्थः। यदि चैनं त्यजसि, तर्हि तव वरः श्रेष्ठः परः शत्रुः कतरः। अपि तु एतस्मिन्परित्यक्तेऽयमेव महाञ्शत्रुरित्यर्थ इति वा। अथ च—के जले तराति, कानि जलानि तरन्त्यस्मिन्निति वा कतरो वरुणो वरो भविता॥ * ॥ अत्रापि त्यागः सूचितः।तथाहि—एष धराजगत्या दक्षिणादिशः पतिर्देवो यमो न। अपि तु यम एव इति निश्चित्य तेन कारणेन न म्रियते किम्। धर्मराजबुद्ध्या देवो न निर्णीयते इति न। किन्तु निर्णीयत एव। अत एव पतिर्न म्रियते किमिति वा। अयं दैत्यैः आक्रान्ततेजा नलः पितृदेवो यमो न। अपि तु यम एव। परं तव नलवदाभाति नलाकारधारणादित्यर्थ इति वा। यदि चैनं त्यजसि तर्हि श्रेष्ठः सुखसमुद्रो नलो वरो भविता॥

वरुणपक्षे—एष धराजगत्या भूलोकस्य पतिर्न। किंत्वर्थात्पातालस्य अत एव देवः कान्तिमानमरश्च वरुणः किं न निश्चीयते किं वा न म्रियते। अयं नलो न किंतु अति महः नलवदतिशाता कान्तिर्यस्य सोऽतिमहाः तव नलाभो भातीति शेषः। यदि चैनमुज्झसि, तर्ह्येतदन्यः श्रेष्ठश्च तव को वरो भर्ताऽपि तु एतत्सदृशोऽन्यो नास्तीत्यर्थः। धरायां जायन्ते धराजानि स्थावरजङ्गमानि भूतानि तेषां गतिर्जीवनोपायो जलं तस्य पतिः न। अपि तु अपां पतिर्वरुणो देवः किं न निर्णीयते किं वा न म्रियते। अपि तु निर्णयो वरणीयश्चेत्यर्थः। अतिमहस्य अतिपूज्यस्यानलस्याग्नेरभा कान्त्यभावो यस्माद्धेतोर्वरुणो हि जलरूपत्वादग्निविरोधीत्यर्थ इति वा। यदैवं त्यजसि, तदा तव वरः श्रेष्ठः कः परः शत्रुः। अपि तु अयमेव शत्रुरित्यर्थ इति वा। धरतीति धरो धर्ता जगतः पोषकः स चासावजश्च तस्य धराजस्य श्रीविष्णोर्गतिः प्रथममयनमाधारो जलं तस्य पतिर्न। अपि तु तत्पतिर्वरुणः किं न निर्णीयते। उदकम् 'आपो नाराः' इत्यादिना श्रीविष्णोराश्रयः। अथ च—यदि त्वमेनम् अः श्रीविष्णुः इनः स्वामी यस्य तं श्रीविष्णुभक्तं त्यजसि, तर्हि तव लाभो न, किंतु हानिरेव। तस्मात्तव कतरो वरुण एव परः श्रेष्ठो वर इति वा॥ * ॥ अत्राऽपि त्यागः सूचितः। तथा हि—एष धराजगत्याः पूर्वोक्तप्रकारेण उदकस्य प्रतीच्या दिशो वा पतिर्वरुणो देवो न। अपि तु स एवेति निर्णीयते किमु। अपि तु निश्चित एव। यतो न म्रियते। नायं नल इत्यादि तुल्यम्। यद्येनं त्यजसि तर्हि तवापि महतामनानां प्राणानां लाभः जीवितासीत्यर्थः। यस्मात्ते सुखसमुद्ररूपः श्रेष्ठो नलो वरो भविता। नलप्राप्तावेव तव प्राणनं, नान्यथेति भाव इत्यादिव्याख्या सुधिया योजनीया। ग्रन्थविस्तरभयान्न लिखिता॥

नलपक्षे—अयं नैषधराजस्य निषधदेशसंबन्धिनो राज्ञः, निषधदेशोद्भवानां लोकानां यो राजा तस्य वा, गत्या ज्ञानेन कृत्वा पतिः स्वामी देवः क्रीडादियुक्तः, राजा वा, ना मनुष्यो नलः किं न निश्चीयते किं वा न म्रियते। अपि तु निषधाधिपो मर्त्य एवायं पञ्चमो नल एवायमिति निश्चेतव्यो वरणीयश्चेत्यर्थः। खलु यस्मात् तवातिमहानलाभो विष्णुलाभः। 'नाविष्णुः पृथिवीपतिः' इति नलस्य विष्णुत्वादित्यर्थः। यदि चोत्कृष्टवराकाङ्क्षया एनं त्यजसि तर्हि को वरोऽस्मात्परोऽधिकः।अपितु नास्तीति नलमेव वृणीष्वेति भावः। नलस्यावरणेऽभर्तृकैव स्यास्यसीत्यर्थः। एष धराजगत्या भूलोकस्य पतिः स्वामी ना मनुष्यो नलो देवो राजा न, अपि तु नल एवेति किं न निश्चीयते किं वा न म्रियते। अपि तु निश्चेयो वरणीयश्च। यस्मान्नलवरणे तवातिमहतो जीवनस्य लाभः। नलप्राप्तावेव तव जीवनं भविष्यतीत्यर्थः। यदि च अयं शुभावहदेवरूपमेनं त्यजसि तर्हि तव कः श्रेष्ठो वरः। अपि त्वन्यो नास्तीत्यर्थ इति वा। नैषधराज एव गतिर्यस्यास्तया भवत्या मनुष्योऽयं नलो

१ अनानामित्यवाचकम् 'अन प्राणने' इत्यत्रापि प्रपूर्वस्यैवास्य निर्देशात् प्रपूर्वकस्य एव स्वार्थवाचित्वम्। अथापि श्लेषचमत्कारकत्वेन न तथा दुष्टम्।

राजा पतिः, किं न निश्चीयते किं वा न व्रियते। अपि तूभयमपि कर्तव्यम्। यद्येनमुज्झसि तर्हि तव निश्चितमति महानलाभोऽपि महदभाग्यम्। यस्मादेतादृशोऽन्यः कतरो वरः, अपि तु नास्त्येवेत्यर्थ इति वा। एष देवो न इन्द्रादिरमरो न, किंतु भूलोकस्य पतिर्मनुष्यो नल इति किं न निश्चीयते, किं वा न व्रियते। यदि चायं देवरूपमेनं त्यजासि तर्हि तव लाभो न, किं तु हानिरेव। धरायां जायन्ते धराजा मनुष्यास्तेषां गत्या प्रकारेण सनिमेषनेत्रत्वादिलिङ्गेन एष देवो नेति किमु न निर्णीयते। तथा—पतिरिति किमिति न व्रियते निश्चितं ना मनुष्यो नलोऽयम्। यदि चैनं त्यजासि तर्हि तव परोऽन्यो वरः श्रेष्ठः कतरो लाभः। अपि तु एतद्वरणात्परः श्रेष्ठो लाभो नास्तीत्यर्थः। एष धरायां भूलोकेऽतिसौन्दर्यादजः काम इति बुद्ध्या प्राणेशो मनुष्यो नलो न तु देवः कश्चिदिति किं न निर्णीयते किं वा न व्रियते। निकटस्थानामेषां चतुर्णामेतदाकारधारणात्कृत्रिमं सौन्दर्यम्, अस्य तु सहजमिति दर्शनमात्रेण तारतम्यं ज्ञात्वा एष नलो निश्चेयो वरणीयश्चेत्यर्थः। खलु यस्मात्तदाकारधारणेनातिमानामतिलक्ष्मीकाणामिन्द्रादीनां हाने परित्यागे लाभः। तव कपटसौन्दर्यास्ते न वरणीया इत्यर्थः। इत्यादिव्याख्या यथाबुद्धि ज्ञातव्या। '·नलः पोटगले राशि पितृदेवे कपीश्वरे।' इत्यादि विश्वः ॥३४॥

> इन्द्राग्निदक्षिणदिगीश्वरपाशिभिस्तां
> वाचं नले तरलिताऽथ समां प्रमाय।
> सा सिन्धुवेणिरिव वाडववीतिहोत्रं
> लावण्यभूः कमपि भीमसुता तापम् ३५

इन्द्रेति ॥ अथ लावण्यभूः परमसौन्दर्योत्पत्तिस्थानं सा भीमसुता नले विषये तां पूर्वोक्तां 'देवः पतिः–' [१३।३४] इत्यादिवाचमिन्द्राग्निदक्षिणदिगीश्वरपाशिभिः समां सह तुल्यां श्लेषेण तेषामपि वर्णयित्रीं प्रमाय निश्चित्य तरलिता संदेहवशान्नलनिश्चयाभावाद्दोलायमानमनाः सती कमप्यनिर्वाच्यमतिदुःसहं तापमाप। का कमिव—सिन्धुवेणिर्गङ्गासागरसंगमो वाडववीतिहोत्रमिव वडवानलमिव यथा प्राप्नोति। नलनिश्चयाभावाद्वडवानलमिव दुःसहं संतापं प्रापेति भावः। नले तरलिता सोत्कण्ठेति वा ॥ ३५ ॥

१ अत्र श्लेषः। २ इवेत्युपमा।

> साम्रुं प्रयच्छति न पक्षचतुष्टये तां
> तल्लाभशंसिनि न पञ्चमकोटिमात्रे।
> श्रद्धां दधे निषधराड्विमतौ मताना-
> मद्वैततत्त्व इव सत्यतरेऽपि लोकः ३६॥

साम्रुमिति ॥ सा भैमी निषधराजो नलस्य संवन्धिन्यां विविधायां मतौ बुद्धौ सत्याम्। नलविषये संदेहे सतीति यावत्। पञ्चमी चासौ कोटिश्च पञ्चमकोटावेव पञ्चमकोटिमात्रे पञ्चमभागरूपे।पञ्चमस्थानस्थित इति यावत्। एवंभूते पञ्चानां मध्ये सत्यतरे अतितरां सत्येऽपि नले विषये श्रद्धामास्तिक्यं न दधे। सत्यनलेऽपि नलोऽयमेवेति तस्या बुद्धिर्नोदभूदित्यर्थः। क्व सति—तल्लाभशंसिनि भैमीप्राप्त्यभिलाषिणि पक्षचतुष्टये पक्षाणां समीपवर्तिनां सहायानां सदृशानामिन्द्रादीनां चतुष्टये तां श्रद्धां सत्यनलविषयं निश्चयमाप्तुं प्राप्तुं न प्रयच्छति सति। भैमीप्राप्त्यभिलाषेणातिसुन्दररूपधारणात्कृत्रिमरत्नादिष्विव मायानलेषु बहुरूपातिशयदर्शनान्नलनिश्चयं प्रतिषेधति सति। कः कस्मिन्निव—मतानां सांख्यादिषड्दर्शनानां मध्ये 'एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किंचन' इत्यादिश्रुतिभिः सत्यतरे परमार्थतो विद्यमानेऽप्यद्वैतरूपे तत्त्वे स्वरूपे ब्रह्मैक्यबोधे वा विषये लोकोऽविद्यावान्युक्तायुक्तविचारशून्यो जनो यथा श्रद्धां न धत्ते। क्व सति—पक्षचतुष्टये अनेकात्मवादिसांख्यादिदर्शनचतुष्के तामद्वैतश्रद्धां प्राप्तुं न ददाति सति। नानात्मत्वसाधकयुक्तिसहस्रैरैकात्म्यनिषेधके सतीति यावत्। तस्य तत्पदवाच्यस्य लाभः तच्छंसिनीत्यद्वैततत्त्वस्य विशेषणम् ॥ * ॥ सांख्या हि प्रतिशरीरं पुरुषबहुत्वमङ्गीकुर्वन्ति। नैयायिकाश्च 'नानात्मानो व्यवस्थिताः' इति वचनादात्मनां नानात्वमङ्गीकुर्वन्ति। आर्हताश्च देहप्रमाणात्मस्वीकारमङ्गीकुर्वन्ति। बौद्धाश्च सिद्धान्तसिद्धानेकयुक्तिभिरनेकात्मनामेव चित्ततिबाहुल्यमङ्गीकुर्वन्ति ॥*॥ सत्, असत्, सदसत्, सदसद्विलक्षणमिति पक्षचतुष्टयम् ॥*॥ सद्वादिनः सांख्याः। असद्वादिनो बौद्धाः। सदसद्वादिनो नैयायिकाः। प्रपञ्चनित्यत्ववादिनो वेदान्तिनः। न सत् बाधानुपपत्तेः। न हि सद्रजतं गगनादिकं वा बाध्यते। नचासत् प्रतिभासानुपपत्तेः। न ह्यत्यन्तासच्छशशृङ्गं कदाचिदप्यवभासते। न च सदसदात्मकमुभयरूपं परस्परविरोधात्। न ह्यसतसद्वाऽसद्भवितुमर्हति। उभयरूपमपि न भवतीत्यपि वक्तुमयुक्तमित्या-

द्यपि ज्ञातव्यम् ॥ * ॥ सांख्या हि प्रतिशरीरं भिन्नाञ्शुद्धज्ञानस्वभावान्बहूनात्मन इच्छन्ति नैयायिका अपि प्रतिशरीरं भिन्नान्सर्वव्यापकाञ्ज्ञानादिनवविशेषगुणवत आत्मन इच्छन्ति । आर्हतास्तु प्रतिशरीरं भिन्नान्देहपरिमाणान्संकोचविकासशीलान्बहूनात्मनोऽङ्गीकुर्वन्ति । बौद्धाश्च प्रतिदेहं भिन्नान्क्षणिकज्ञानसंततिरूपान्बहूनेवात्मन इच्छन्ति ॥ * ॥ भैमीप्राप्त्यभिलाषिणि सत्यतरे नले नलसंबन्धिन्यां विमतौ सत्यामपि सा श्रद्धां न दधे । अपि तु दधावेव । अनेकनलदर्शने सत्ये पञ्चमकोटिस्थले सत्ये नले । 'अविज्ञातेऽपि बन्धौ हि बलात्प्रह्लादते मनः' इति न्यायेनायमेव प्रायेण सत्यनलो भविष्यतीति तस्या मनसि बुद्धिरुदभूदित्यर्थः।मतानां विमतावपि सत्यतरेऽद्वैततत्त्वे लोक इव ।लोकः परीक्षको जनो यथा श्रद्धां धत्ते तथेति संबन्धः। 'प्राप्तुम्'इति पाठे निषधराट् नल इन्द्रादिचतुष्टये भैमीप्रतारणार्थं स्वीयस्वरूपधारणात्तां स्वस्मै प्राप्तुं न यच्छति सति तल्लाभशंसिनि भैमीप्राप्त्यभिलाषिणि पञ्चमकोटिस्थे अर्थादात्मनि श्रद्धां निश्चयं न दधे । अर्थाद्भैमीं प्राप्तुम् । एतस्मिंश्चतुष्टये प्रतिबन्धके सति इयं मया कथंकारं प्राप्यते । अपि तु नेति तस्य बुद्धिरुदभूदित्यर्थः ।'मतानां विमतौ सत्यां सदसदादिपक्षचतुष्टये तां सम्यक्प्रतीतिं निषेधति सति अभेदसिद्धिशंसिनि पञ्चमकोटिमात्रे चतुष्कोटिविनिर्मुक्ते सत्यतरेऽप्यद्वैततत्त्वे यथा लोकः श्रद्धां न धत्त इति व्याख्येयम् । लोकः कौतुकदर्शी सभास्थो [1]जन इयमेनं वरिष्यतीति निश्चयमयं पञ्चमः सत्यनल इति वा निश्चयं न दधे । पञ्चमकोटिमात्रे, 'पुंवत्कर्मधारयजातीयदेशीयेषु ६।३।४२' इति पुंवत् ॥ ३६ ॥

कारिष्यते परिभवः कलिना नलस्य
तां द्वापरस्तु सुतनूमदुनोत्पुरस्तात् ।
भैमीनलोपयमनं पिशुनौ सहेते
न द्वापरः किल कलिश्च युगे जगत्याम् ३७

उक्तिविशेषेण पुनरपि संदेहजनितं संतापं वर्णयति—कारिष्यत इति ॥ कलिना चतुर्थयुगेन नलस्य परिभवः कारिष्यते करिष्यते । द्वापरस्तु अयं वा नलः, अयं वा नल इति संदेहः पुनः । अथ च शब्दच्छलेन तृतीयं युगं पुनः तां सुतनूं सुन्दरीं पुरस्तात्कलेः पूर्वमेवादुनोदपीडयत् । कलिर्वरणानन्तरं नलपराभवं करिष्यति, द्वापरस्तु भैम्यै नलं वरीतुमेव नादादित्यर्थः । तयोर्विरोधित्वे कारणमाह—किल यस्मात्कारणाद्द्वापरः कलिश्च द्वावपि युगे जगत्यां भूलोके भैमीनलयोरुपयमनं विवाहं न सहेते । जातं तयोर्विवाहं कलिर्यथा न सोढा, तथा भाविनं द्वापरोऽपि न सेहे । यतः—पिशुनौ खलौ । निश्चिते नले विवाहो भवत्येव, संदेहस्तु प्रतिबन्धकः । तस्मात्कलिवद्द्वापरस्यापि विरोधित्वात्तेन सा पीडितेत्यर्थः। द्वापरे कलौ च भैमीनलयोरभावात्तयोर्विवाहं न सहेतां तावित्यर्थः । नलनिश्चयाभावात्साऽतितमां संतापमापेति भावः। शब्दश्लेषबलेनेयमुक्तिः । कारिष्यते, 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ६।४।६२' इतीटश्चिण्वद्भावात् 'अचोऽञ्णिति ७।२।११५' इति वृद्धिः । परिभवः, 'परौ भुवोऽवज्ञाने ३।३।५७' इति घञो विकल्पितत्वात् 'ॠदोरप् ३।३।५७' ॥ ३७ ॥

उत्कण्ठयन्पृथगिमां युगपन्नलेषु
प्रत्येकमेषु परिमोहयमाणबाणः ।
जानीमहे निजशिलीमुखशीलिसंख्या-
साफल्यमाप स तदा यदि पञ्चबाणः ३८

उत्कण्ठयन्निति ॥ परिमोहयमाणा मोहजनका बाणा यस्यैवंभूतः, अत एव इमां भैमीं प्रत्येकम्, एष्विन्द्रादिनलपदेषु युगपदेकस्मिन्नेव काले पृथक् पार्थक्येनोत्कण्ठयन्सोत्कण्ठां कुर्वन्; अयं वा नल इति बुद्ध्यैवैकस्मिन्विषये तुल्यकालं पृथक्प्रकारेणोत्कण्ठयन् । पृथक्प्रयत्नसाध्यामन्यादृशीमुत्कण्ठामस्या जनयन्निति यावत् । एवंभूतः स पञ्चबाणो निजाः स्वीयाः शिलीमुखा बाणाः ताञ्शीलयत्यभ्यस्यति । स्वीयबाणाश्रितेति यावत् । एवंभूता पञ्चसंख्या तस्याः साफल्यं सप्रयोजनत्वं यद्यपि, तर्हि तदा तस्मिन्नेवावसरे, नत्वन्यदेति वयं जानीमह उत्प्रेक्षामहे । एकस्मिन्नलेऽनुरागस्य पर्यायेणैकेनैव बाणेन जनने शेषाणां चतुर्णां वैयर्थ्यमेव स्यात् । किमयं नलः, किमयं नल इति नलत्वेनोपलक्षितेषु पञ्चस्वपि प्रत्येकं पञ्चभिरेव बाणैः पृथक्प्रयत्नेन युगपदनुरागजनने पञ्चानामपि बाणानां साफल्यं तदेव जातमित्यर्थः । पृथगित्यस्योत्कण्ठाविशेषणत्वात्, प्रत्येकमित्यस्येन्द्रादिविशेषणत्वात्संबन्धभेदान्नार्थपौनरुक्त्य-

१ अद्वैततत्त्व इवेत्युपमा ।

१ अत्रानुप्रासः ।

म् । नलेषु युगपदिमां पृथगुत्कण्ठयन्, तथा प्रत्येकमेषु नलेष्वेव युगपत्परिमोह्यमाणा अर्थाद्भैम्यां विषयेऽनुरागजनका बाणा यस्य स मदनः यदि निजबाणसंख्यासाफल्यमाप तर्हि तदेव नान्यदा । पञ्चस्वपि तस्या युगपत्पृथगनुरागजननात्, तस्यामपि पञ्चानामपि तेषां प्रत्येकं युगपदनुरागजननाच्च स्वीयबाणसंख्यायाः साफल्यमापेत्यर्थ इति वा । नलेषु तां पृथक्सोत्कण्ठां कुर्वन् । तथा एषु नलेष्वेव प्रत्येकमुत्कण्ठां जनयन् अर्थाद्भैमीं प्रति । यतः—परिमोह्यमाणबाण इत्युभयत्रापि हेतुगर्भं विशेषणम् । सा भैमी पञ्चस्वपि नलबुद्ध्यैव सानुरागाभूदिति भावः । तेऽपि तस्यामित्यपि च भावः । पञ्चस्वनुरागात्पातिव्रत्यभङ्गप्रसङ्ग इति तु न।पञ्चस्वपि परपुरुषतापरिहारेण नलबुद्ध्यैवानुरागात्परिहारः । उत्कण्ठयन्—इयमुत्कण्ठते, कामश्चैनामुत्कण्ठयति, हेतुमण्णिच् शता । पक्षान्तरे तु—उत्कण्ठां कुर्वन्निति 'तत्करोति तदाचष्टे' इति णिच् ॥ ३८ ॥

देवानियं निषधराजरुचस्त्यजन्ती
रूपादरज्यत नले न विदर्भसुभ्रूः ।
जन्मान्तराधिगतकर्मविपाकजन्मै-
वोन्मीलति क्वचन कस्यचनानुरागः ॥३९॥

देवानिति ॥ इयं विदर्भसुभ्रूः भैमी नले रूपात्सौन्दर्यान्नानुरज्यत नानुरक्ता । नलेऽनुरक्ता, परं रूपाद्धेतोर्नेत्यर्थः । यतो—निषधराजरुचो नलतुल्यकान्तीन्देवानिन्द्रादींस्त्यजन्ती । यदि नले रूपाद्धेतोररज्यत तर्हि तुल्यरूपानिन्द्रादीन्नात्यक्ष्यत्, ते तावत्त्यक्तास्तस्मान्नलानुरागे रूपं हेतुर्न भवतीत्यर्थः । तर्हि कथमनुरक्तेत्याशङ्क्याह—जन्मान्तरेऽधिगतं पूर्वकृतं कर्म तस्य यो विपाकः फलजननोन्मुखता तज्जन्मा तदुत्पन्न एव कस्यचन कस्यापि प्राणिनोऽनुरागः क्वचन कस्मिंश्चित्प्राणिन्युन्मीलत्युत्पद्यते । पूर्वकृतकर्मवशादेव कोऽपि कस्मिंश्चित्प्रीतिं बिभर्ति । तथा च पूर्वजन्मकृतसुकृतविशेषादेवानपेक्षितान्यकारणविशेषो नलेऽनुरागस्तस्याः समभूदित्यर्थः । नलनिश्चयाभावेऽपि रूपसाम्ये सत्यपि नल एवानुरक्ततया नलाद्विशिष्टरूपोऽप्यस्तन्यदीयानुरागविषयो नाभूत्, किंतु नल एवेत्यर्थान्तरन्यासतात्पर्यम् । अनुरागजनने उभयोरपि पूर्वकर्मविपाको हेतुर्ज्ञेयः । अरज्यत, श्यन्विकरणाद्रज्यतेः स्वरितेत्त्वात्कर्त्रभिप्रायक्रियाफलविवक्षायां तङ् ॥ ३९ ॥

क्व प्राप्यते स पतगः परिपृच्छ्यते यः
प्रत्येमि तस्य हि पुरेव नलं गिरेति ।
सस्मार सस्मरमतिः प्रति नैषधीयं
तत्रामरालयमरालमरालकेशी ॥ ४० ॥

क्वेति ॥ सस्मरा कामतरलाऽधीरा मतिर्यस्याः सा अरालकेशी कुटिलकेशी भैमी तत्र सभायां संदेहावसरे वेति मनसि विचार्य नैषधीयं नलसंबन्धिनं नलदूत्यकारिणममरालयं मरालं स्वर्गनिवासिनं देवाश्रयं वा हंसं प्रत्युद्दिश्य इति सस्मार । इति किम्—स पतगो हंसः क्व कस्मिन्स्थाने प्राप्यते । स कः—यो हंसः मया परितः सामस्त्येन एषु मध्ये सत्यं नलं मह्यं कथयेति विश्वास्यतया पृच्छ्यते । स एव किमिति प्रष्टव्य इति चेदाह—हि यस्मात्तस्य हंसस्य गिरा पुरेव संघटनाकाल इव नलं प्रत्येमि निश्चिनोमि । अदृष्टमज्ञातमपि च नलं दूत्यावसरे यथा हंसवचनेनाहं ज्ञातवती, तथाधुनापि नलनिश्चयाभावे परमाप्तस्य तस्य वचनान्नलं निश्चिनोमीति । मदनपरवशत्वेनाधीरत्वान्नलस्य निश्चयार्थमाप्ततमं हंसं सस्मारेत्यर्थः । प्राप्यत इत्यादि, 'वर्तमानसामीप्ये—' इति लट् । निषधसंबन्धि नैषधीयं नलवरणलक्षणं कार्यमुद्दिश्य हंसं सस्मारेति वा योजना । 'किल नैषधीयम्' इति पाठे नलं किल निश्चितं प्रत्येमीति योजना । 'प्रियदूतभूतम्' इति पाठो वा ॥ ४० ॥

एकैकमैक्षत मुहुर्महता(ऽऽ)दरेण
भेदं विवेद न च पञ्चसु कंचिदेषा ।
शङ्काशतं वितरता हरता पुनस्त-
दुन्मादिनेव मनसेयमिदं तदाह ॥४१॥

एकैकमिति—एषा भैमी महता आदरेण प्रयत्नेन मुहुरेकैकमिन्द्रादीनैक्षतालोकत । विशेषजिज्ञासया पुनः पुनः साभिप्रायं ददर्शेत्यर्थः । अथ च—महता दरेण भयेन पतिव्रतेयं पञ्चापि सादरं कथं पश्यतीत्यविदितसादरावलोकनकारणेभ्यो जनेभ्योऽपवादभयेनेत्यर्थः ।

१ अत्रानुप्रासः, जानीमह इत्युत्प्रेक्षा ।

१ जन्मान्तरेत्यादिना प्रागुक्तस्य समर्थनादर्थान्तरन्यासः । २ अत्रानुप्रासः, यमकं च ।

परं पञ्चसु मध्ये कंचिदल्पीयांसमपि भेदं विशेषं नच नैव विवेद । अनन्तरं च वक्ष्यमाणप्रकारेण शङ्काशतं वितरता तन्वता, वितीर्य च पुनः तच्छङ्काशतं हरता वक्ष्यमाणप्रकारानेकयुक्तिभिर्नाशयता, मनसेयं भैमी इदं वक्ष्यमाणं बभाषे । चेतस्येव व्यचारयदित्यर्थः । उत्प्रेक्षते—उन्मादिना इव उन्मादवानपि भूयसा आदरेण भयेन वा प्रत्येकमीक्षते, तारतम्यं न जानातीति शङ्काशतं च करोति, पुनस्त्यजति, ददाति च पुनरादत्ते च, इत्येवमव्यवस्थितचित्तो भवति । तथेयमप्यव्यवस्थितचित्ताभूदिति भावः । वेद स्मेति पाठे भूते 'लट् स्मे ३।२।११८' इति लट् ॥ ४१ ॥

अस्ति द्विचन्द्रमतिरस्ति जनस्य तत्र
भ्रान्तौ दृगन्तचिपिटीकरणादिरादिः ।
स्वच्छोपसर्पणमपि प्रतिमाऽभिमाने
भेदभ्रमे पुनरमीषु न मे निमित्तम् ॥४२॥

तमेव विचारमाह—

अस्तीति॥ जनस्य द्विचन्द्रमतिः द्वौ चन्द्राविति बुद्धिः प्रसिद्धास्ति । परं तत्र भ्रान्तौ प्रमाणप्रमितैकत्वे एकस्मिन्नेव चन्द्रे विषये योऽनेकत्वप्रत्ययस्तस्मिन्विषये दृगन्तयोर्नेत्रप्रान्तयोर्यच्चिपिटीकरणं अचिपिटयोः चिपिटयोः करणमङ्गुल्यग्रेण निपीडनं तदादिर्यस्य काचकामलादिदोषस्य स दृगन्तचपिटीकरणादिदोष आदिः प्रथमो हेतुरस्ति । चन्द्रद्वयभ्रान्तौ चिपिटादिर्हेतुर्युक्तः । तथाहि—प्रतिमाया आदर्शादौ दृश्यमानस्य मुखादिप्रतिबिम्बस्याभिमानेऽपि प्रतिबिम्बस्फुरणरूपे भ्रान्तिज्ञानेऽपि स्वच्छस्यादर्शादेरुप समीपे यत्सर्पणं प्रापणं दर्पणसंनिधानं तन्निमित्तमस्तीति शेषः । दर्पणादिस्वच्छवस्तुसंनिधानादलीकमपि प्रतिबिम्बं भासत इत्यर्थः । मे मम पुनरमीषु दृश्यमानेषु भेदभ्रमे एकस्मिन्नले विषये यः पञ्चत्वसंख्याविशिष्टो बोधस्तस्मिन्विषये निमित्तं कारणं नास्ति । द्विचन्द्रभ्रान्तौ कारणमस्तीति भ्रान्तिर्युक्ता, एको नलः पञ्चधाऽवभासत इति मदीया भ्रान्तिः कारणाभावान्न युक्ता । तस्मादन्य एवैते केचन भविष्यन्तीति स्वयमेव संशयं चकार परिजहार चेति भावः । 'अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः' इति निघण्टुः॥४२॥

किं वा तनोति मयि नैषध एव काय-
व्यूहं विधाय परिहासमसौ विलासी ।
विज्ञानवैभवभृतः किमु तस्य विद्या
सा विद्यते न तुरगाशयवेदितेव ॥४३॥

पक्षान्तरमाह—

किं वेति ॥ वा पक्षान्तरे । असौ प्रत्यक्षदृश्यो नैषध एव कायव्यूहं शरीरसमूहं विधाय निर्माय मयि परिहासं प्रतारणक्रीडां तनोति किम् । यतो—विलासी । एकोऽप्यसौ नल एव मयि क्रीडावशात्कायव्यूहं तनोति, न त्वन्ये केचन सन्तीत्यर्थः । 'किं नो तनोति' इति पाठे काकुः । कायव्यूहरचनेऽस्य शक्तिः कथमित्यत आह—विशिष्टस्य ज्ञानस्य, विशिष्टं ज्ञानं यैरेवंविधा ये कलाग्रन्थास्तेषां वा वैभवं बाहुल्यं तद्बिभ्रतस्तस्य नलस्य तुरगाशयवेदितेवाश्वहृदयज्ञातृतेव सा कायव्यूहविधानरूपा विद्या किमु न विद्यते । अपि तु सापि विद्यत एवेति सम्भावना। 'विज्ञानवैभवभुवः' इति पाठे भुवः स्थानभूतस्येत्यर्थः । परिहासः, 'उपसर्गस्य घञ्यमनुष्ये बहुलम् ६।३।१२२' इति सूत्रे बहुलग्रहणाद्दीर्घाभावः ॥ ४३ ॥

एको नलः किमयमन्यतमः किमैलः
कामोऽपरः किमु किमु द्वयमाश्विनेयौ।
किं रूपधेयभरसीमतया समेषु
तेष्वेव नेह नलमोहमहं वहे वा ॥४४॥

एक इति ॥ वा पक्षान्तरे । इह एषु पञ्चसु मध्ये अयमेको नलः किम्, अन्यतमो द्वितीय ऐलः पुरूरवाः किम्, अपरस्तृतीय कामः किम्, शिष्टं द्वयमाश्विनेयावश्विनीकुमारौ किमु, एवमुक्तेषु तेषु पञ्चस्वेवाहं नलमोहं किं न वहे । अपि तु तेष्वेव नलबुद्धिं धारयामि, न तु कायव्यूहरचनादेक एव नलः पञ्चधा जात इत्यर्थः । यतः—रूपधेयभरस्य सौन्दर्यबाहुल्यस्य सीमतया परमकाष्ठात्वेन समेषु सदृशेषु । सादृश्याद्धि मोहो युक्तः । अन्यतमः, स्वार्थे तमप् । सीमशब्दो नान्तः स्त्रीलिङ्गः ॥ ४४ ॥

पूर्वं मया विरहनिःसहयाऽपि दृष्टः
सोऽयं प्रियस्तत इतो निषधाधिराजः ।
भूयः किमागतवती मम सा दशेयं
पश्यामि यद्विलसितेन नलानलीकान् ४५॥

---

१ अत्राप्यनुप्रासः, तरोति यमकं च । उन्मादिनेवेत्युत्प्रेक्षा । २ अत्रानुप्रासः ।

१ अत्रानुप्रासः, ससंशयश्च । २ अत्रापि ससंशयः ।

पूर्वमिति ॥ विरहनिःसहया वियोगविह्वलया मया सोऽयं निषधाधिराजः प्रियः प्राणेश इतस्ततः सर्वासु दिक्षु पूर्वमपि स्वयंवरसमयात्प्रागपि दृष्टः । य इदानीं दृश्यते स मोहवशात्सर्वत्र पूर्वमपि दृष्ट इत्यर्थः । प्रकृते किमित्यत आह—मम इयं भूयः पुनरपि सैव विरहोद्भ्रान्ततारूपा दशा आगतवती किम् । यद्विलसितेन यस्याः सामर्थ्येनालीकानसत्यान्नलान्पश्यामि। अपिः पूर्वमित्यनेन, भूय इत्यनेन वा योजनीयः ॥ ४५ ॥

मुग्धा दधामि कथमित्थमथापशङ्कां
संक्रन्दनादिकपटः स्फुटमीदृशोऽयम् ।
देव्याऽनयैव रचिता हि तथा तथैषां
गाथा यथा दिगधिपानपि ताः स्पृशन्ति४६

मुग्धेति ॥ अथ पक्षान्तरे । अथवा मुग्धा मोहवशा सत्यहमित्थम् 'अस्ति द्विचन्द्र–' ( १३।४२ ) इत्याद्यनेकरूपामपशङ्कां दुःशङ्कां कथं दधामि । अपि त्वेतदयुक्तमित्यर्थः । यतः—स्फुटं निश्चितमयमीदृशो नलबाहुल्यज्ञानरूपः संक्रन्दनादीनामिन्द्रादीनां चतुर्णां कपटः। तेषां मायैवैषेत्यर्थः । हि यस्मादनया देव्यैव सरस्वत्यैव एषां पुरोऽवस्थितानां संबन्धिन्यो गाथाः' ब्रूमः–' इत्यादिवर्णनश्लोकास्तथा तेन तेन प्रकारेण रचिताः । यथा येन येन प्रकारेण ता गाथा दिगधिपानिन्द्रादीनपि स्पृशन्ति श्लेषशक्त्या अभिधावृत्त्या वदन्ति, न केवलं नलमित्यपेरर्थः । तस्मादिन्द्रादिभिरेव मत्प्रतारणार्थं मायया नलरूपं धृतमित्येव बुद्धिर्युक्ता, न तु पूर्वसंशयरूपेत्यर्थः । तथाशब्दस्य द्विरुपादानाद्यथाशब्दोऽपि द्विर्ज्ञातव्यः । 'कपटोऽस्त्री–' इत्यमरः ॥ ४६ ॥

एतन्मदीयमतिवञ्चकपञ्चकस्थे
नाथे कथं नु मनुजस्य चकास्तु चिह्नम्।
लक्ष्माणि तानि किममी न वहन्ति हन्त
बर्हिर्मुखा धुतरजस्तनुतामुखानि॥४७॥

एतदिति ॥ एतस्मिन्मदीयाया बुद्धेर्वञ्चके भ्रामके पञ्चके इन्द्रादिसमूहे तन्मध्ये स्थिते नाथे मम प्राणेशे मनुजस्य मनुष्यस्य चिह्नं स्वेदनिमेषरजःस्पर्शम्लानकुसुमत्वादि लिङ्गं कथं नु कथमिव चकास्तु प्रकाशताम् । अपि तिवन्द्रादिमायया नलस्थस्यापि चिह्नस्याच्छादितत्वात्तत्र प्रकाशत इति युक्तमित्यर्थः । नलस्य स्वयमवञ्चकत्वेऽपि 'छत्रिणो गच्छन्ति' इति न्यायाच्चतुर्णामेव वञ्चकत्वेऽपि तत्सिद्धिः । परिहासवशाद्वा नलस्यापि वञ्चकत्वं युक्तम्। एतद्राजसु दृश्यमानं स्वेदादिचिह्नमिति भिन्नपदं वा । हन्त खेदे । अमी बर्हिर्मुखा देवाः धुतं त्यक्तं रजो रेणुस्पर्शो यया एवंभूता तनुर्येषां तेषां भावो धुतरजस्तनुता रेणुस्पर्शराहिततनुता मुखम् आदिर्येषां तानि स्वेदराहित्याम्लानपुष्पत्वानिर्निमेषत्वादीनि देवत्वव्यञ्जकानि तानि प्रसिद्धानि चिह्नानि किमिति न वहन्ति न धारयन्ति । मयि कृपया तावद्वोढुं युक्तानि परं तु नोह्यन्ते । कष्टमित्यर्थः । बर्हिर्मुखपदं कृपाराहित्यसूचकम्। नलचिह्नानामस्फुटत्वेऽपि यदि देवचिह्नानि स्फुटान्यभविष्यंस्तर्हि पारिशेष्यान्नलनिश्चयोऽप्यभविष्यत्, तान्यपि त्वस्फुटानित्युभयथापि मया नलो निश्चेतुं न शक्यत इति भावः ॥ ४७ ॥

याचे नलं किममरानथवा तदर्थं
नित्यार्चनादपि ममाफलिनैरलं तैः।
कंदर्पशोषणशिलीमुखपातपीत-
कारुण्यनीरनिधिगह्वरघोरचित्तैः॥४८॥

याच इति ॥ अहं मह्यं यूयं नलं प्रयच्छतेत्यमरान्नलं याचे किम् । अथवा पूर्वापरितोषे । तदर्थं नलप्राप्त्यर्थं तेषां नित्यार्चनादपि ममाफलिनैः प्रार्थितमददद्भिस्तैर्देवैरलं पूर्यताम्। एतावन्ति दिनानि नित्यपूजनादपि ये नलं न प्रायच्छंस्तेऽधुना प्रार्थनमात्रेण कथं दास्यन्तीति वृथैव तत्प्रार्थनमित्यर्थः । किंविधैस्तैः— कंदर्पस्य शोषणाख्यः शिलीमुखो बाणस्तेन पातात्पतनात्पीतः शोषितः कारुण्यनीरनिधिः कृपासमुद्रो येषां तानि अत एव गह्वराणि गभीरबिलरूपाणि घोराणि कठिनानि चित्तानि येषामेवंभूतैः । यस्मात्कृतेऽपि पूजने कामायत्ततया निष्कृपत्वादफलिनैरित्यर्थः । याचिर्द्विकर्मा । फलशब्दादस्त्यर्थे 'फलबर्हाभ्यामिनन्' इति इनन् । ततो नञ्समासः 'नदत्तफलैः' इति वा पाठः ॥ ४८ ॥ ।

१ अत्रानुप्रासः । ससंशयश्च ।२ अत्रानुप्रासः, ईदृशोऽयमित्यस्य हेतुत्वेन परार्द्धोक्त्या काव्यलिङ्गम् ।

१ अत्रानुप्रासः, चकेति यमकं च । निश्चयान्तोत्प्रेक्षा ससंशयः । २ अत्रानुप्रासः, परिकरश्च ।

ईशा दिशां नलभुवं प्रतिपद्य लेखा-
वर्णश्रियं गुणवतामपि वः कथं वा ।
मूर्खान्धकूपपतनादिव पुस्तकाना-
मस्तं गतं बत परोपकृतिव्रतत्वम् ॥ ४९ ॥

देवानुपालभते—

ईशा इति ॥ हे दिशामीशाः दिक्पाला लेखा देवाः, नलो भूः स्थानं यस्यास्तां नलप्रभवां वा वर्णश्रियं रूपशोभां प्रतिपद्य प्राप्य गुणवतां सौन्दर्यादिगुणयुक्तानामपि वो युष्माकं परेषामुपकृतिरुपकार एव व्रतं तद्विद्यते येषां ते व्रतिनस्तेषां भावस्तत्त्वं कथं वा कुतो वा हेतोरस्तं गतं नष्टम् । स्वयमुपकारकत्वाभावेऽपि स्वाभिलषितायामपि मयि भवदर्थे दूत्यकारिणो नलस्याप्याकारे धृते सौन्दर्यादिगुणागमनात्परोपकारित्वमप्यागतं तन्माद्विषये कथं विनष्टमित्यर्थः । नलाकारधारणादेतावती मत्प्रमारणा किमिति क्रियत इति भावः । केषामिव— मूर्खा अश्रुतशास्त्राः पुरुषा एवाज्ञानवशादन्धाः त एव कूपा अतिगभीरा मूर्खरूपाः कूपास्तेषु पतनात्तदधीनत्वात्तृणविशेषलेखनीभूतनलप्रभवां लेखावर्णश्रियं लिप्यक्षरशोभां प्राप्य शुद्धत्वादिगुणयुक्तानां दोरकयुक्तानां च पुस्तकानां यथा वाचकपाठकाद्युपकारित्वमस्तं गच्छति । मूर्खस्य मूर्खत्वादेवोपकाराभावादन्येषां चासमर्पणादित्यर्थः । कूपपतितानामपि पुस्तकानामनुपकारित्वमेव । 'प्रतिपद्य स्थितानाम्' इति समानकर्तृकत्वम् ॥ ४९ ॥

यस्येश्वरेण यदलेखि ललाटपट्टे
तत्स्यादयोग्यमपि योग्यमपास्य तस्य ।
का वासनाऽस्तु बिभृयामिह यां हृदाऽहं
नार्कातपैर्जलजमेति हिमैस्तु दाहम् ॥ ५० ॥

यस्येति ॥ ईश्वरेण यस्य प्राणिनो ललाटपट्टे यदयोग्यमनुचितमप्यलेखि लिखितं तदयोग्यमपि तस्य योग्यमुचितमर्थमपास्य प्रतिक्षिप्य स्याद्भवेत् । योग्यमर्थं परित्यज्य तत्परिहारेण स्वयमेवायोग्यमपि भवेदिति यावत् । अतो योग्यतया कार्यकारणाभावे सति इह नलानेकत्वसंदेहेन निश्चयार्थं यां वासनां युक्तिमहं हृदा बिभृयां धारयेयं सा का वासना युक्तिरस्तु भवतु । अपि तु एवंविधा युक्तिर्नास्ति । चित्तेनान्यथाकर्तुं विचारितेऽपि ललाटपट्टे लिखितादन्यथा न भवतीत्यर्थः । योग्यमप्यपास्यायोग्यमेव भवतीत्यत्र दृष्टान्तमाह—यतः जलजमम्भोजम् अर्कातपैरुष्णैरपि सूर्यकिरणैर्दाहं न एति, हिमैस्तु पुनर्दाहं गच्छति । उष्णस्पर्शो दाहकः, शीतस्पर्शस्तु दाहशमक इति लोके दृष्टम्, तदिदं विपरीतं जातं विरुद्धकार्योत्पत्तेर्विषमम् । नलस्य मम वा ललाटे यदीश्वरेणायोग्यमेव लिखितम्, तर्हि परस्परयोग्यं परस्परं विहाय तस्य मम चायोग्यमेव भविष्यतीति कं प्रकारं चित्ते धारयिष्यामि । अपि तु न कमपीति देवानां न कोऽप्यपराध इति भावः ॥ ५० ॥

इत्थं यथेह मदभाग्यमनेन मन्ये
कल्पद्रुमोऽपि स मया खलु याच्यमानः ।
संकोचसंज्वरदलाङ्गुलिपल्लवाग्र-
पाणीभवन्भवति मां प्रति बद्धमुष्टिः ॥ ५१ ॥

तर्हि कल्पद्रुमो याच्यतामित्यत आह—

इत्थमिति ॥ इह नलैकत्वेऽपि समये वा इत्थमनेन नलानेकत्वभवनप्रकारेण यथा यादृक् ममाभाग्यं नलानिश्चयाद्यथा दैवाभावो दृश्यते अनेन हेतुना प्रकारेण वा सोऽतिवदान्यः कल्पद्रुमोऽपि खलु निश्चितं मया नलं याच्यमानः सन् मां प्रति बद्धमुष्टिरतिकार्पण्यसंकुचत्करो भवतीत्यहं मन्ये । किंभूतः—संकोच एव संज्वरः संतापो येषामेवंविधानि दलानि किसलयान्येवाङ्गुलयो येषामेवंभूताः पल्लवा एवाग्रपाणयो हस्ताग्राणि यस्य एवंभूतोऽनेवंभूत एवंभूतो भवन् । अन्यस्यापि बद्धमुष्टेरङ्गुलयः संकुचिता भवन्ति । कल्पवृक्षः कल्पितदानशीलोऽपि मदभाग्यवशान्मां प्रत्यदातैव भवेदिति भावः । अदातृत्वनिश्चयात्'भवति' इति वर्तमानवत्प्रत्ययः ॥ ५१ ॥

देव्या करे वरणमाल्यमथार्पये वा
यो वैरसेनिरिह तत्र निवेशयेति ।
सैषा मया मखभुजां द्विषती कृता स्यात्
स्वस्मै तृणाय तु विहन्मि न बन्धुरत्नम् ॥ ५२ ॥

देव्या इति ॥ अथवा इह स्वयंवरे एतेषु पञ्चसु मध्ये वा यो वैरसेनिः सत्यनलः तं त्वं तावज्जानासि अतस्तत्र

---

१ पतनादिवेत्युपमा ।

१ अत्रानुप्रासः, दाहमिति यमकं च । यस्येश्वरेणेति लोकोक्तिः, 'लोकप्रवादानुकृतिर्लोकोक्तिरिति गीयते ।' इति तल्लक्षणात् । २ अत्र मन्य इत्युत्प्रेक्षा, वितर्को वेति तयोः सन्देहसङ्करश्च ।

एतां मालां निवेश्य निक्षिपेत्युक्त्वा देव्याः सरस्वत्याः करे वरणमाल्यं वरणमधूकमालामर्पये ददामीति संभावना। स्वयमेव तद् दूषयति—एवं क्रियमाणे सा एषा देवी मया मखभुजां देवानामिन्द्रादीनां द्विषती वैरिणी कृता स्यात्। तन्मायाप्रकटनादित्यर्थः। भवतु नाम सा तद्वैरिणी स्वकार्यसिद्धिस्तु साध्येत्यत आह—तु पुनः तृणायातिनिःसाराय स्वस्मै स्वरूपाय अकिंचित्करात्मकार्यसिद्धये बन्धुरत्नं सुहृन्मध्येऽतिश्रेष्ठां देवीं न विहन्मि। मम यत्किंचिद्भवतु, परं तु देवद्वेषरूपं मित्रविघातं न करोमीत्यर्थः। अन्योऽपि सुज्ञस्तृणार्थं रत्नं न विनाशयति। द्विषती, 'द्विषोऽमित्रे ३।२।१३१' इति शतरि, उगित्वान्ङीप्। मखभुजाम्, 'द्विषः शतुर्वा' इति षष्ठी ॥ ५२ ॥

यः स्यादमीषु परमार्थनलः स माला-
मङ्गीकरोतु वरणाय ममेति चैनाम्।
तं प्रापयामि यदि तत्तु विसृज्य लज्जां
कुर्वे कथं जगति शृण्वति ही विडम्बः॥५३॥

य इति॥ अमीषु पञ्चसु भवत्सु मध्ये यः परमार्थनलः सत्यनलः स्यात् स मम वरणाय मालामङ्गीकरोत्वित्येवंप्रकारेण इत्युक्त्वा चेति वा। यदि एनां च मालां तत्र तेषु मध्ये तं सत्यनलं प्रापयामि, तत्पुनर्लज्जां विसृज्य कथं कुर्वे। अपि त्वेवं कर्तुमयुक्तम्। यतः—जगति सर्वस्मिन्सभाजने शृण्वति सति ही कष्टं विडम्बः। लज्जात्यागादतिपरिहासो भविष्यतीति शेषः। सर्वेषां समक्षमेवं लज्जात्यागात्सर्वेऽप्युपहसिष्यन्तीत्यर्थः। ही इति खेदे। हियैस्मादर्थे, इः खेदे इति वा। इति चेति समुदायः प्रकारे। यदि चेति वा ॥ ५३ ॥

इतरनलतुलाभागेष शेषः सुधाभिः
स्नपयति मम चेतो नैषधः कस्य हेतोः।
प्रथमचरमयोर्वा शब्दयोर्वर्णसख्ये
विलसति चरमेऽनुप्रासभासां विलासः॥

इतरेति॥ इतरैश्चतुर्भिर्नलैस्तुलां साम्यं भजत इति भाग् एष शेषः पञ्चसु मध्ये अन्त्यः पञ्चमो नैषधः मम चेतः कस्य हेतोः केन कारणेन सुधाभिरमृतैः स्नपयति आप्लुतामिव करोति। रूपसाम्ये सत्यप्येष एव मम मनसे यतो रोचते, तस्मादयमेव सत्यनलो भविष्यतीत्याशयः। सत्यनलत्वज्ञापकं निरुपाधिकपरमप्रेमसंवादं दृष्टान्तेन प्रथयति—प्रथमेति। वाऽथवा युक्तमेतत्। प्रथमचरमयोरादिमान्त्ययोः शब्दयोर्वर्णैरक्षरैः सख्ये मैत्र्यां सत्यामपि चरमे पाश्चात्ये शब्देऽनुप्रासभासां छेदकानुप्रासवृत्त्यनुप्रासलाटानुप्रासाख्यशब्दालंकारकान्तीनां विलास उल्लासश्चमत्कारो विलसति विशेषेण शोभते। वर्णसाम्ये सत्यपि प्रथमस्यानायासगतत्वात्, द्वितीयस्य तु सदृशस्य पश्चाद्भूरिप्रयत्नसाध्यत्वाच्चरमे यद्यनुप्रासत्वं स्फुरति, तथापि द्वितीयसाहित्ये प्रथमेऽपि यथा अनुप्रासत्वमस्ति तथा सुन्दरान्तराविच्छेदेन पश्चादवलोक्यमानतयैव पञ्चमश्चेतसे रोचते, न त्वत्र सत्यत्वं प्रयोजकम्। अतः सर्वेऽपि तुल्या एवेति भावः। अत्रायमेव श्लोको दृष्टान्तः। अत्रत्ययोरेव प्रथमचरमशब्दयोर्वर्णसाम्ये सत्यपि चरमे चरमशब्द एवानुप्रासातिशयः न प्रथमशब्दे प्रथम इत्युक्ते नानुप्रासः। प्रथमचरमयोरित्युक्ते तु चरम एवानुप्रासातिशयो दृश्यते न तथा प्रथम इत्यर्थ इति वा। यद्वा—आद्यपादचतुर्थपादयोर्वर्णसाम्ये सत्यपि चरमे चतुर्थपादेऽनुप्रासभासां विलासो विलसति। उभयोरनुप्रासत्वे सत्यपि चतुर्थेऽनुप्रासभासां विलास इत्युक्तेस्तत्रैवानुप्रासत्वम्, न तु प्रथमे। 'स्नपयति' इति मित्त्वपक्षे ह्रस्वः। कस्य हेतोः, 'षष्ठी हेतुप्रयोगे २।३।२६' इति षष्ठी ॥ ५४ ॥

इति मनसि विकल्पानुद्यतः संत्यजन्ती
क्वचिदपि दमयन्ती निर्णयं नाससाद।
मुखमथ परितापास्कन्दितानन्दमस्या
मिहिरविरचितावस्कन्दमिन्दुं निनिन्द॥

इतीति॥ इत्युक्तप्रकारेण मनसि उद्यत उत्पद्यमानान्विकल्पाननेकशङ्कावलम्बनबोधान्दोषोद्भावनेन संत्यजन्ती दमयन्ती क्वचिदपि निर्णयं निश्चयं नाससाद। पञ्चसु मध्ये कस्मिन्नपि पुंसि नलनिश्चयं न प्रापेति वा। अथ पश्चान्नलनिश्चयाभावात्परितापेनास्कन्दितोऽभिभूत आनन्दो यस्य। परितापेन कृत्वा आस्कन्दितोऽप्राप्त आनन्दो येनैवंभूतं वाऽस्या मुखं कर्तृ मिहिरेण सूर्येण विरचितोऽवस्कन्दः पराभवो यस्यैवंविधमिन्दुं निनिन्द। निष्प्रभचन्द्रसदृशमभूदित्यर्थः। आस्कन्दनमास्कन्दः पराभवः। परितापेन य आस्कन्दः स संजातो यस्य एवंविध आनन्दो यस्येति कारकादित्वाद्रूपसिद्धिः॥५५

१ अत्रानुप्रासः। २ संशयानाया आनुरूप्योक्तेः। स्वभावोक्तिः।

१ अत्राग्रिमे च पद्ये मालिनी छन्दः। २ अत्रानुप्रासः।

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं-श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्। स्वादूत्पादभृति त्रयोदशतयाऽऽदेश्यस्तदीये महा-काव्येऽयं व्यरमन्नलस्य चरिते सर्गो रसाम्भोनिधिः ५६

श्रीहर्षमिति ॥ अर्धं पूर्ववत् । स्वादूत्पादभृति सहृदयहृदयाह्लाददायित्वात्स्वादुरसोत्पत्तिधारकेऽत्यन्तमधुरनवार्थसहिते त्रयोदशतया आदेश्योऽभिधेयः सर्गो व्यरमत्। समाप्त इत्यर्थः । व्यरमत्, 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ॥ ५६ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे त्रयोदशः सर्गः॥

## चतुर्दशः सर्गः ।

अथ नलस्य स्वयंवरणमाह—

अथाधिगन्तुं निषधेश्वरं सा
प्रसादनामाद्रियतामराणाम् ।
यतः सुराणां सुरभिर्नृणां तु
सा वेधसाऽसृज्यत कामधेनुः ॥ १ ॥

अथेति ॥ अथ विकल्पदूषणानन्तरं सा भैमी निषधेश्वरं नलमाधिगन्तुं निश्चेतुं प्राप्तुं च षोडशोपचारैरमराणां प्रसादनां परितोषणमाद्रियत आदरेण चकार । यतो वेधसा सुराणां कामधेनुरभिलाषप्रसूः सुरभिर्गौरसृज्यत सृष्टा, नृणां तु पुनः कामप्रसूः सा देवप्रसादना सृष्टा । तस्मान्नलस्य निश्चयार्थं प्राप्त्यर्थं च देवपरितोषणं चकारेति युक्तमित्यर्थः ॥ १ ॥

प्रदक्षिणप्रक्रमणालवाल-
विलेपधूपाचरणाम्बुसेकैः ।
इष्टं च मृष्टं च फलं सुवाना
देवा हि कल्पद्रुमकाननं नः ॥ २ ॥

पूर्वोक्तार्थसमर्थनार्थमर्थान्तरन्यासमाह—

प्रदक्षिणेति ॥ हि यस्मात् देवा नोऽस्माकं मनुष्याणां कल्पद्रुमकाननं बहवः कल्पवृक्षा एवेति कवेरुक्तिः । किंभूता देवाः—प्रदक्षिणं प्रक्रमणं वलयाकारं परिभ्रमणं तदेवालवालं वृक्षमूले जलधारणार्थं वलयाकारः सेतुः स च विलेपश्चन्दनादिलेपश्च धूपो दशाङ्गादिस्तेषामाचरणानि करणानि तान्येवाम्बुसेकाः तैः प्रदक्षिणाद्याचरणं चोदकस्नपनानि च तैर्वा । कृत्वा इष्टमभिलषितं मृष्टं च स्वभावसुन्दरं सुस्वादु च फलं मनोरथरूपमाम्रादिकं च सुवाना उत्पादयन्तः । वृक्षा अप्यालवालवृक्षायुर्वेदोक्ततरुदोषनाशक विडङ्गादिलेपदोहदधूपाम्बुसेकैरिष्टं मृष्टं च फलं सुवते । 'आवरण—' इति पाठे अङ्गप्रत्यङ्गदेवतापूजा कण्टकावृतिश्चेति व्याख्येयम् ॥ २ ॥

श्रद्धामयीभूय सुपर्वणस्ता-
न्ननाम नामग्रहणाग्रकं सा ।
सुरेषु हि श्रद्दधतां नमस्या
सर्वार्थसिद्ध्यङ्गमिथःसमस्या ॥ ३ ॥

पूजाप्रारम्भार्थं प्रथमं नमस्कारमाह—

श्रद्धेति ॥ सा श्रद्धामयीभूय आस्तिक्यप्रचुरा भूत्वा तान्नलवेषधारिणः सुपर्वणो देवान्नामग्रहणाग्रकमिन्द्राय नम इत्यादिनामग्रहणपूर्वकं ननाम ववन्दे । हि यस्मात्सुरेषु श्रद्दधतां श्रद्धावतां नमस्या नमस्कार एव सर्वार्थसिद्धेः यान्यङ्गानि साधकानि तेषां मिथःसमस्या परस्परपूरणहेतुः श्रद्धापूर्वं देवनमस्कार एव कारणसामग्रीसंपादकः, तस्माद्देवं नमस्कृतवतीत्यर्थः । समस्याऽपि पदानां परिपूरणं करोति । श्रद्धामयी, प्रकृतवचने मयट् । अग्रकम्, 'शेषाद्विभाषा ५।४।१५४' इति कप् । नमस्करणं नमस्या, 'नमोवरिवश्चित्रङः क्यच् ३।१।१९' इति क्यच् ॥ ३ ॥

यत्तान्निजे सा हृदि भावनाया
बलेन साक्षादकृताखिलस्थान् ।

१ अस्मिन्सर्गे प्राय उपेन्द्रवज्रेन्द्रवज्रयोर्मेलनादुपजातिश्छन्दः । २ अत्र प्रसादनाया कामधेनुत्वेन रूपणाद्रूपकम् । इतः परम् 'अथाधिगन्तुं निषधेशमेषां प्रसादनं दानवशात्रवाणाम् । अचेष्टतासौ महतीष्टसिद्धिराराधनादेव हि देवतानाम् ॥' इतीदमपि पद्यं क्वचिदुपलभ्यते, किंतु एतस्यैव पाठान्तररूपम् ।

१ अत्रानुप्रासः, परिकरश्च । प्रदक्षिणप्रक्रमणाद्यालवालावयवरूपणाद् देवेषु कल्पद्रुमत्वरूपणाच्च समस्तवस्तुवर्ति रूपकं च । २ अत्र नामेति यमकम्, सुरेषु हीति सामान्येन प्रागुक्तस्य विशेषस्य समर्थनादर्थान्तरन्यासश्च ।

अभूदभीष्टप्रतिभूः स तस्या
वरं हि दृष्टा ददते परं ते ॥ ४ ॥

देवपूजाङ्गध्यानं प्रथममाह—

यदिति ॥ सा अखिलस्थान्सर्वगतांस्तानिन्द्रादीन्भावनाया ध्यानस्य वलेन सामर्थ्येन निजे हृदि यत्साक्षादकृत प्रत्यक्षीचकार । सर्वगतानपि ध्यानवलेनैकत्रानीय ददर्शेत्यर्थः । स साक्षात्कार एव तस्या भैम्या अभीष्टस्य नलप्राप्तिलक्षणस्य प्रतिभूर्दानविश्वयकर्ता अभूत् । हि यस्माद् दृष्टास्ते देवाः परं श्रेष्ठं वरमभीष्टं परिणेतारं च ददते प्रयच्छन्ति । न हि देवदर्शनं निष्फलं भवतीत्यर्थः ॥ ४ ॥

सभाजनं तत्र ससर्ज तेषां
सभाजने पश्यति विस्मिते सा ।
आमुद्यते यत्सुमनोभिरेवं
फलस्य सिद्धौ सुमनोभिरेव ॥ ५ ॥

इदानीं देवपूजामाह—

सभाजनमिति ॥ सा तत्र स्वयंवरस्थाने अकस्मादेव देवपूजारम्भादत्यादरेण च पूजनाद्विस्मिते साश्चर्ये सभाजने सभालोके पश्यति सति, तमनादृत्य वा । तेषां देवानां सभाजनं प्रीत्याऽऽराधनं ससर्ज चक्रे । यद्यस्मात्फलस्याभीष्टस्य सिद्धौ दाने सुमनोभिः शोभनचित्तैरेवंभूतैरेव सद्भिः सुमनोभिर्देवैरेवमत्यादरपूजनेन कृत्वा आमुद्यते हृष्टैर्भूयते । तस्मादेवमपूजयदित्यर्थः । एवमेव एवं सत्येवेत्येवकारयोजना वा । पुष्पैरपि फलसिद्ध्यर्थमामुद्यते विकस्वरीभूयते । सभाजने, 'यस्य च भावेन भावलक्षणम् २ । ३ । ३७' इति, 'षष्ठी चानादरे २ । ३ । ३८' इति वा सप्तमी ॥ ५ ॥

वैशद्यहृद्यैर्म्रदिमाभिरामै-
रामोदिभिस्तानथ जातिजातैः ।
आनर्च गीत्यन्वितषट्पदैः सा
स्तवप्रसूनस्तवकैर्नवीनैः ॥ ६ ॥

वैशद्येति ॥ अथ सा नवीनैर्नवैः स्तवैः स्तुतिश्लोकरूपैः प्रसूनस्तवकैः पुष्पगुच्छैः स्तुतिश्लोकैः पुष्पगुच्छैश्च वा तानिन्द्रादीनानर्च । किंविधैः—वैशद्येन स्पष्टतया प्रसादगुणेन हृद्यैः सहृदयप्रियैः । अथ च—शुभ्रत्वेन मनोज्ञैः । तथा—म्रदिम्ना निष्ठुरटवर्गादिवर्णरहितश्रुतिमधुरवर्णरचनजनितेन माधुर्येण । अथ च—सौकुमार्येण अभिरामैः । अत एव—आमोदिभिर्हर्षजनकैः । अथ च—सौगन्ध्यसहितैः । तथा—जातैः षड्विंशत्यक्षरजनितचरणान्तायाः, अनुष्टुबादिजातेर्वा जातैः निष्पन्नैः । अथ च—मालतीसंभवैः । तथा–(विशेषरूपया–) गीत्या अन्विता युक्ताः षट्पदाः षट्चरणाः श्लोका यत्र । अथ च—गुञ्जन्मधुकरैः । वैशद्यं शब्दार्थालंकारापशब्दभावदोषराहित्यं तेन मनोज्ञैर्वा । 'जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः', 'गीतिश्छन्दसि गाने च' इति च विश्वः । हृद्येति, 'हृदयस्य प्रियः' इति यत् । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृत् । अभिरम्यते यैस्तैरभिरामैः 'अकर्तरि च कारके–' इति चकारादसंज्ञायामपि करणे घञ् । जात्यादिलक्षणं छन्दोग्रन्थेभ्यो ज्ञातव्यम् । 'न वा कैः' इति पाठे कैः वा स्तवस्तवकैः न आनर्च अपि तु नानाप्रकारैः स्तवप्रसूनस्तवकैरपुपूजदित्यर्थः ॥ ६ ॥

हृत्पद्मसद्मन्यधिवास्य बुद्ध्या
दध्यावथैतानियमेकताना ।
सुपर्वणां हि स्फुटभावना या
सा पूर्वरूपं फलभावनायाः ॥ ७ ॥

पूजाऽनन्तरं पुनरपि ध्यानमाह—

हृदिति ॥ अथ पूजानन्तरमियमेकतानाऽनन्यवृत्तिस्तत्परा सती हृदेव पद्मं तद्रूपे सद्मनि गृहे एतानिन्द्रादीन्बुद्ध्याधिवास्याधिष्ठाप्य दध्यौ । सर्वगतानामपि देवानां हृदये बुद्ध्या समारोपितं रूपं ध्यानेन साक्षादकृतेति यावत् । हि यस्मात्सुपर्वणां देवानां या स्फुटा भावना ध्यानवलेन प्रत्यक्षता सा फलभावनायाः कार्यसिद्धेः पूर्वरूपं प्रथमं स्वरूपम् । कारणस्य कार्यापेक्षया नियतप्राग्भावित्वाद्देवानां प्रत्यक्षतायाः कार्यमात्रं प्रति कारणत्वात्कारणसामग्रीरूपां देवप्रत्यक्षतां ध्यानेनाकृतेत्यर्थः । पूजायाः पूर्वम-

१ अखिलस्थान् निजे हृद्यकृतेति विरोधाभासो द्योतकाभावाद् व्यङ्ग्यः । २ अत्रोभयेषामपि सुमनसामुभयोरप्यामोदरूपयोः फलयोश्चाभेदाध्यवसायेन वचनादर्थान्तरन्यासः, श्लेषश्च ।

१ अत्र स्तवप्रसूनस्तवकैरिति रूपकम् । स्तवानां प्रसूनस्तवकानां च पूजनोपयोगावहत्वसाम्येन प्रस्तुतानां धर्म्मसाम्येनोपमा गम्यत इति तुल्ययोगिता च ।

नन्तरं च ध्यानस्यैष्टत्वात् 'यत्तान्' (१४।४) इत्यस्य,अस्य (१४।७) च श्लोकस्य न पौनरुक्त्यम् ।'उपान्वध्याङ्वसः १।४।४८' इत्यत्राण्यन्तस्य वसेर्ग्रहणात् 'स्वहस्तदत्ते मुनिमासने' इतिवण्यन्तस्य वसेः प्रकृत्यन्तरत्वात् हृत्पद्मसद्मनीत्याधारस्य न कर्मत्वम् ॥ ७ ॥

**भक्त्या तयैव प्रससाद तस्या-**
**स्तुष्टं स्वयं देवचतुष्टयं तत् ।**
**स्वेनानलस्य स्फुटतां यियासोः**
**फूत्कृत्यपेक्षा कियती खलु स्यात् ॥८॥**

भक्त्येति ॥ तस्याः पातिव्रत्यादिगुणैरादावेव भक्तिनिरपेक्षं स्वयमात्मनैव तुष्टं तदिन्द्रादिदेवचतुष्टयं तस्यास्तयैवाल्पीयस्यापि भक्त्या पुनः प्रससाद प्रसन्नमभूत् । अल्पीयस्या भक्त्या प्रसन्नतायां दृष्टान्तमाह—खलु यस्मात्स्वेनात्मनैव स्फुटतां प्राकट्यं यियासोर्यातुमिच्छतो लब्धबहुसंधुक्षणतया आसन्नप्रज्वलनस्यानलस्य वह्नेः कियती संधुक्षणार्थं फूत्कृतेर्मुखपवनस्यापेक्षा स्याद्भवेत् । अपि त्वल्पैव । तादृशोऽग्निर्द्वित्रैरेव फूत्कारैः संधुक्षितो दीप्यतेतरामित्यर्थः । तस्मात्स्वतःप्रसन्नस्याल्पयापि भक्त्या पुनः प्रसन्नत्वं युक्तमित्यर्थः । 'तस्याश्चरित्रादथ ते पवित्रात्प्रागेव हृष्टा झटिति प्रसेदुः' इत्यपि पाठः स्पष्टार्थः ॥ ८ ॥

**प्रसादमासाद्य सुरैः कृतं सा**
**सस्मार सारस्वतसूक्तिसृष्टेः ।**
**देवा हि नान्यद्वितरन्ति किंतु**
**प्रसद्य ते साधुधियं ददन्ते ॥ ९ ॥**

प्रसादफलमाह—

प्रसादमिति ॥ सा भैमी सुरैः कृतं प्रसादमासाद्य सरस्वत्या इमाः सारस्वत्यस्ताश्च ताः सूक्तयश्च शोभनोक्तयः श्लेषवाक्यानि तासां सृष्टेर्निर्माणस्य । रचनामित्यर्थः । सस्मार । श्लेषार्थे संदेहं परित्यज्य गाथाक्रमेणेन्द्रादींश्चतुरोऽपि ज्ञात्वा अयं पञ्चमो नल इत्यजानादित्यर्थः । देवीवचनस्मरणरूपः को नाम प्रसाद इत्यत आह—हि यस्माद्देवा अन्यत्किंचिन्न वितरन्ति ददति किंतु देवाः प्रसद्य प्रसन्ना भूत्वा साध्वीं कार्यसाधिकां धियं बुद्धिमेव ददन्ते । तदुक्तं भारते—'न देवा दण्डमादाय रक्षन्ति पशुपालवत् । यं तु रक्षितुमिच्छन्ति सुबुद्ध्या योजयन्ति तम् ॥' इति । तस्मादयमेव प्रसादो युक्त इत्यर्थः । सृष्टेः, 'अधीगर्थदयेशां कर्म्मणि २।३।५२' इति कर्मणि षष्ठी । ददन्ते, 'दद दाने' इत्यस्य रूपम् ॥ ९ ॥

**शेषं नलं प्रत्यमरेण गाथा**
**या या समर्था खलु येन येन**
**तां तां तदन्येन सहालगन्तीं**
**तदा विशेषं प्रतिसंदधे सा ॥ १० ॥**

स्मरणमेव विशदयति —

शेषमिति ॥ शेषं पञ्चमं सत्यनलं प्रति लक्ष्यीकृत्य 'ब्रूमः किम्—' ( १३ स. ३ श्लो. ) इत्यादिः 'आकर्ण्य–' (१३।८.) इति यावत्, 'एष' (१३।१०) इत्यादिः 'साधारणीम्–' ( १३।१४ ) इति यावत् 'दण्डम्–' (१३।१६) इत्यादिः 'गुम्फः–'(१३।२०) इति यावत्, 'या सर्वतः–' ( १३।२२ ) इत्यादिः 'शङ्का–' ( १३ । २६ ) इति यावत्, या या गाथा प्रसादात्पूर्वं येन येनेन्द्रादिदेवेन सह समार्था तुल्यार्था [ 'सरस्वत्योक्ता' इति शेषः ] सा भैमी तां तां 'ब्रूमः–' ( १३।३ ) इत्यादिगाथां तदा प्रसादानन्तरं तदन्येन तस्मात्तस्मादिन्द्रादिरूपान्मुख्यादर्थादन्येन श्लेषशक्त्या प्रतिभासमानेन नलरूपेणार्थेन सह खलु निश्चितमलगन्तीमसंबद्धार्थां विशेषं प्रति स्वस्वाकारधारणाद्भिन्नमिन्द्रादिदेवं प्रति संदधे योजयामास । इयमेतस्य गाथा इयमेतस्य गाथेति संबन्धं चकारेत्यर्थः । 'ब्रूमः–' ( स. १३ श्लो. ३ ) इत्यादौ 'बालां विलोक्य—' (१३।२७)इति यावन्नलस्य सर्वत्रानुस्यूतत्वादिन्द्रादीनां तु चतसृषु चतसृष्वेव स्वस्वगाथास्वनुस्यूतत्वात्तां तामिन्द्रादिगाथां तदन्येन वह्न्यादिना सह अलगन्तीं विशेषमजानात् । या इन्द्रेण नलेन च सामानार्था तामिन्द्रविषयामेव सस्मार । एवमितरदेवत्रितयेऽपि प्रत्येकं गाथामेकविषयामेव ससार । एवं चतसृष्वपि गाथासु

---

१ अत्र हृत्पद्मसद्मनीति रूपकम् । ध्यानौचित्यं सम्भावयितुमेव परार्द्धार्थावधारणात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । २ अत्र पूर्वोत्तरभागयोर्भक्तिफूत्कृत्योः कार्यानपेक्षितत्वरूपसमानधर्मस्यैव कारको यच्छब्दार्थाभ्यां बिम्बप्रतिबिम्बतया वचनाद् दृष्टान्तः ।

१ सा सस्मारेत्युक्तस्य समर्थनाय देवा हीत्युक्तमित्यत्र सामान्येन विशेषसमर्थनात्मार्थान्तरन्यासः ।

नलस्यानुवृत्तेरिन्द्रादीनां च व्यावृत्तेरावापोद्वापाभ्यम् एते देवाः अयमेव नलः, इत्यज्ञासीदित्याशय इति वा प्रतिश्लोकं गाथात्वेऽपि चतुर्भिश्चतुर्भिः श्लोकैरेकैकस्य प्रतिपादनादेकगाथात्वसमारोपात्प्रत्येकपर्यवसनाद्वैकवचनम् । यद्वा—पञ्चमं नलं प्रति या या 'अत्याजि' ( १३।२८ ) 'येनामुना' ( १३।२९ ) 'यचण्डिमा' ( १३।३० ) 'किं ते तथा—' ( १३।३१ ) इत्यादिका गाथा येन येन इन्द्रादिना सह संबद्धार्था तदन्येन वह्न्यादिना सहालगन्तीं तां गाथामेव विशेषं भेदं जानाति स्म । एकैकस्या गाथाया एकैकदेवपर्यवसानाच्चतसृणामपि गाथानां नले पर्यवसानात्परिशेषप्रमाणात् अयं पञ्चम एव नल इति विशेषमज्ञासीदित्यर्थः । अस्मिन्पक्षे—अमुमेवार्थमुक्तिविशेषेण प्रकटयितुमाह—एकैकेतीत्युत्तरश्लोकस्यावतारिका कर्तव्या ॥ १० ॥

एकैकवृत्तेः प्रतिलोकपालं
पतिव्रतात्वं जगृहुर्दिशां याः ।
वेद स्म गाथा मिलितास्तदाऽसा-
वाशा इवैकस्य नलस्य वश्याः॥ ११ ॥

एकैकेति ॥ या गाथा एकैकवृत्तेरेकैकस्मिन्नेकस्मिन्निन्द्रे, अग्नौ, यमे, वरुणे च वर्तमानत्वात्प्रतिलोकपालमेकैकदिक्पालं प्रति दिशामैन्द्र्यादीनां पतिव्रतात्वं जगृहुरङ्गीचक्रुः । प्राच्यादीनामिन्द्रादिप्रतिनियतदेववृत्तितया यत्पातिव्रत्यं तत्पातिव्रत्यं, तेनैवाकारेण या 'अत्याजि—' ( १३ सर्गे २८ श्लोक ) इत्यादिगाथा अङ्गीचक्रुरित्यर्थः । ता गाथा मिलिताश्चतस्रोऽपि तदा प्रसादानन्तरमसावेकस्य केवलस्य नलस्य वश्या नलैकप्रवणा नलैकाभिधायिनीरेव वेद स्म अज्ञासीत् । का इव—आशा इव । मिलिता दिशो यथा नलस्य वश्याः ऐन्द्र्यादीनां दिशामिन्द्राद्येकैकप्रवणत्वेऽपि सर्वासां दिशां चक्रवर्तिनलैकवश्यत्वं यथा, तथा गाथानामपीत्यर्थः । आशा अर्थिनां मनोरथाः वदान्यतया नलस्य यथा वश्या इति वा । 'दासाः' इति वा पाठः । भ्रान्तिदशायामुभयार्थत्वम् । प्रसादानन्तरं तु नलैकार्थत्वं वेद स्मेति भावः । दिशां पातिव्रत्यं गाथाभिर्गृहीतमित्यर्थः ॥ ११॥

१ शेषं नलमित्यत्र नलस्य श्वेतिमादिसाम्येनाविवक्षितोऽपि अभेदो निरूप्यमाण इव प्रतीयत इति रूपकं व्यङ्ग्यम् । २ इहोपमाऽलङ्कारः ।

या पाशिनैवाशनिपाणिनैव
गाथा यमेनैव समाग्निनैव ।
तामेव मेने मिलितां नलस्य
सैषा विशेषाय तदा नलस्य ॥ १२ ॥

योति 'किं ते—' ( १३।३१ ) इत्यादिर्या गाथा पाशिनैव वरुणेनैव समा तुल्यार्था न त्वन्येनेन्द्रादिना, या च 'अत्याजि—' ( १३ । २८ ) इत्यादिर्गाथा अशनिपाणिना इन्द्रेणैव समा न त्वन्येन देवेन, या च 'यचण्डिमा—'(१३।२९)इत्यादिर्गाथा यमेनैव समा नत्वन्येन, या च 'येनामुना—' ( १३ । ३० ) इत्यादिरग्निनैव तुल्या न त्वन्येन, नलस्य संबन्धिनीं मिलितां समुदितां चतुष्टयरूपां तां गाथामेव तदा देवप्रसादादनन्तरं सैषा भैमी नलस्य विशेषायेन्द्रादिभ्यो भेदज्ञानाय मेने । इन्द्रादीनामेकैकस्यामेव गाथायां वर्तमानत्वात्, नलस्य तु सर्वत्रानुगतत्वात् 'अत्याजि—' इत्यादिगाथाचतुष्टयप्रतिपाद्यः, स एव नल इति तामेव गाथां मिलितां नलस्य भेदज्ञापिकामज्ञासीदिति भावः । या नलस्य गाथेति वा संबन्धः । या पाशिनैवेन्द्रेणैव, यमेनैवाग्निनैव समा गाथा नलस्य संबन्धिनीं मिलितां तामेवानलस्य नलव्यातिरिक्तस्य इन्द्रादेर्भेदाय मेने । मिलितया तया कृत्वा नले निश्चिते सति नान्तरीयकत्वात्तदितरे देवा अपि तयैव निश्चिता इति भाव इति वा । मिलितां तामेव गाथां नलस्य विशेषाय तथा नलेतरस्येन्द्रादेर्भेदाय मेने इति वा व्याख्येयम् । या पाशिनैवेत्यादेरेवकारान्परस्परसमुच्चयार्थानप्यङ्गीकृत्य या नलसंबन्धिनी गाथा पाशिनापि, इन्द्रेणापि, यमेनापि 'अग्निनापि, तुल्यार्थाभूत् तां देवः पतिः' ( १३ । ३४ ) इत्यादिं मिलितां पञ्चार्थां गाथां देवप्रसादादनन्तरं नलस्यैव विशेषाय मेने । देवैः प्रसन्नैः स्वीयस्वीयाकारेषु धृतेषु पूर्वं पञ्चार्थत्वेन प्रतिभातामपीदानीमेकस्य नलस्यैव प्रतिपादिकामज्ञासीदिति भाव इति । 'देवः पतिः—' ( १३ । ३४ ) इतीयमेव गाथा विषय इति ज्ञेयम् अवधारणार्थेष्वप्येवकारेष्वियमेव गाथा विषय इति व्याख्येयम् । अयं श्लोकः 'शेषं नलम्' 'एकैकवृत्तेः' ( १४ । ११ ) इति द्वाभ्यां श्लोकाभ्यां समानार्थः । अनलस्येति प्रत्येकपर्यवसायित्वादेकवचनम् ॥ १२ ॥

१ अत्रानुप्रासः, यमकं च ।

निश्चित्य शेषं तमसौ नरेशं
प्रमोदमेदस्वितरान्तराऽभूत् ।
देव्या गिरां भावितभङ्गिराख्य-
च्चित्तेन चिन्तार्णवयादसेदम् ॥ १३ ॥

निश्चित्येति ॥ असौ भैमी शेषमवशिष्टं तं पञ्चमं पूर्वोक्तप्रकारेण नरेशं नलं निश्चित्य प्रमोदेन प्रकृष्टहर्षेण मेदस्वितरमत्यन्तपरिपुष्टं सोल्लासमान्तरं मानसं यस्या एवंभूताऽभूत्।नले निश्चिते सति नितरां हृष्टाऽभूदित्यर्थः। रलयोः सावर्ण्यान्नलश्चासावीशश्च तमिति वा । अनन्तरं च देव्याः सरस्वत्याः गिरां वचनानां भाविता पर्यालोचिता भङ्गिः प्रकारो यया विज्ञाताशया । गिरः देव्याः सरस्वत्या वा विज्ञातवचोरचनाविशेषा सती नलनिश्चयात्पूर्वं चिन्तार्णवयादसा चिन्तासमुद्रजलजन्तुरूपेण नलनिश्चये सत्यपि तत्प्राप्त्युपायचिन्तासमुद्रजलचरेण वा चित्तेन मनसा इदं वक्ष्यमाणप्रकारमाख्यवूचे । मनस्येवैवमचिन्तयदिति भावः । 'चित्रार्णव-'इति पाठे विचित्रदेवीवचनानुस्मरणजनिताश्चर्यसमुद्रजलचरणातिसाश्चर्येणेत्यर्थः ॥ १३ ॥

सा भङ्गिरस्याः खलु वाचि काऽपि
यद्भारती मूर्तिमतीयमेव ।
श्लिष्टं निगद्यादृत वासवादीन्
विशिष्य मे नैषधमप्यवादीत् ॥ १४ ॥

किमाख्यदित्याह—

सेति ॥ खलु निश्चितं सा प्रसिद्धा मूर्तिमती भारती सरस्वती देवी इयमेव 'इयं मूर्तिमती सा भारत्येव' इति भारतीत्वं विधेयम्। यद्यस्मादस्या वाचि काऽपि लोकोत्तरा भङ्गिः रचनाऽस्ति तस्मादित्यर्थः । यस्मादियमेव मूर्तिमती भारती तस्मादस्या वचने निश्चितं सा काऽपि भङ्गिरस्तीति वा । तामेव भङ्गीमाह—यत् श्लिष्टमुभयसंबद्धं वचो निगद्यास्पष्टमुक्त्वा वासवादीनादृत गौरवेणावर्णयत् । विशिष्य विशेषं कृत्वा तेभ्यो विशिष्य वा । यत् 'अत्याजि' ( १३ । २८ ) इत्यादिश्लोकचतुष्टयेन मे मम मह्यं वा नैषधमप्यवादीत् । सर्वलोकपालांशस्य नलस्यैव वर्णनं युक्तमिति भावः ॥ १४ ॥

१ यादोरूपेण चित्तस्यरूपणाद्रूपकम् । २ तस्यां भारत्यां मूर्तिमत्त्वसाधनादपह्नुतिः।

जग्रन्थ सेयं मदनुग्रहेण
वचःस्रजः स्पष्टयितुं चतस्रः ।
द्वे ते नलं लक्षयितुं क्षमेते
ममैव मोहोऽयमहो महीयान् ॥ १५ ॥

जग्रन्थेति ॥ सेयं वाणी मयि मम वाऽनुग्रहेण कृपया स्पष्टयितुं नलं स्पष्टं ज्ञापयितुं याः चतस्रः 'अत्याजि—' (१३।१८) इत्यादीर्वचःस्रजः वचनमाला जग्रन्थ ससर्ज, तासु मध्ये ते द्वे वचःस्रजौ 'नामग्राहं मया नलमुदीरितम्' ( १३।२९ ) 'न मे सहजरागभरात्' ( १३।३० ) इत्येवंरूपे, 'महीमहेन्द्रः' ( १३।२८ ) 'नलमुदीरितम्' ( १३।२९ ) इत्येवंरूपे वा नलं लक्षयितुं ज्ञापयितुं क्षमेते समर्थे भवतः। अहो आश्चर्यं—मम एवायमेतावन्तं कालं महीयान्मोहः अबोधः । 'नले स्पष्टं कथितेऽप्येतावन्तं कालं मम निश्चयो नाभूदित्याश्चर्यमित्यर्थः । पूर्वोक्ता एव चतस्रो वचःस्रजः स्पष्टयितुं तदर्थं स्पष्टीकर्तुं ये द्वे ते वचःस्रजौ 'त्वं याऽर्थिनी' ( १३।३३ ) 'देवः पतिः'( १३।३४) इत्येवंरूपे सेयं देवी जग्रन्थ, ते द्वे वचःस्रजौ नलं लक्षयितुं क्षमे समर्थे । 'त्वं यार्थिनी' ( १३।३३ ) इत्यनेन प्रथमव्याख्याने स्फुटं नलस्यैव प्रतिपादनाद्व्याख्यानान्तरे च देवान्परितोष्य संत्यज्य वा नल एव स्वीकरणीय इति यावदर्थं नलस्यैव प्रतिपादनात् 'देवः पतिः–'( १३।३४ ) इत्यनेनापि लोकपालांशत्वान्नलस्यैव पञ्चरूपत्वसंभवादिन्द्रादेश्चासंभवान्नलादन्यस्तव कतरो वरः, अपि तु 'अन्यो नास्ति' इत्यपि नलस्यैव प्रतिपादनादित्यर्थं इति वा । अत्र पूर्वस्तच्छन्दो विशेष्यवचःस्रक्परामर्शार्थः । उत्तरस्तु तत्परामर्शकोऽपि विधेयसंस्पर्शी । यत्तदोश्च नित्यसंबन्धाद्यच्छब्दः संबध्यते । 'श्रन्थिग्रन्थिदम्भिस्वञ्जां चेति वक्तव्यम्' इति नित्यमपितो लिटः कित्त्वविधानात् 'जग्रन्थ' इति रूपम्। 'संयोगात्परस्य लिटो कित्त्वमिति केचित्' इति अपितो लिटः कित्त्वविधानाद्वा नलोपाभावः समर्थनीयः । युक्त्यन्तरेण वा समाधातव्यम् ॥ १५ ॥

श्लिष्यन्ति वाचो यदमूरमुष्याः
कवित्वशक्तेः खलु ते विलासाः ।
भूपाललीलाः किल लोकपालाः
समाविशन्ति व्यतिभेदिनोऽपि ॥ १६ ॥

१ अ त्रानुप्रासः स्पष्टः।

श्लिष्यन्तीति ॥ अमुष्या देव्याः अमूः पूर्वोक्ता वाचः यदनेकार्थतया श्लिष्यन्ति श्लेषं भजन्ते तत्तु निश्चितं कवित्वशक्तेः काव्यनिर्माणसहजप्रतिभायाः विलासा विजृम्भणानि । कवित्वशक्तिं विना श्लेषवचोरचना निर्मातुमशक्येत्यर्थः । किल यस्माद्व्यक्तिभेदिनोऽपि परस्परापेक्षया नलापेक्षया वा विशेषेण सहस्रनेत्रत्वादिनाऽतितरां भिन्ना अप्यमी लोकपाला भूपालस्य नलस्य लीला विलासान्यमाविशन्त्यनुभवन्ति नलाकारं बिभ्रति ।अथ च नलवर्णकेषु श्लोकेषु मूर्तीभूय प्रतिष्ठा एव दृश्यन्त इत्यर्थः । अतः श्लेषवशान्मम भ्रमोऽभूदिति भावः । 'श्लेषवशान्नललीलाः सन्तो लोकपाला गाथाः समाविशन्ति' इति वा । अन्योऽन्यं भिन्ना अपि लोकपाला नललीलाः सन्तोंऽशेन नृपत्वं प्राप्ताः सन्तः किल एकीभवन्ति । अतो नलस्यैव लोकपालांशतया तत्र प्रयुक्तानि देवीवचांसि श्लेषं वदन्तीति कवित्वशक्तिविलासा एवे ॥ १६ ॥

त्यागं महेन्द्रादिचतुष्टयस्य
किमभ्यनन्दत्क्रमसूचितस्य ।
किं प्रेरयामास नले च तन्मां
सा सूक्तिरस्या मम कः प्रमोहः ॥१७॥

त्यागमिति॥इयं देवी'अत्याजि'(१३।२८)'येन'(१३। २९)इत्यादिना श्लोकचतुष्टयेन 'त्वं यार्थिनी '(१३। ३३ ) 'देवः पतिः–'( १३।३४ ) इत्यादिगाथाद्वयेनापि क्रमेण सूचितस्य प्रत्यायितस्येन्द्रादिनलचतुष्टयस्य पूर्वव्याख्यानप्रकारेण परित्यागं किं कथमभ्यनन्दत् । युक्तमेतदिति स्तौति स्मेत्यर्थः । नले मां पूर्वव्याख्यानप्रकारेण प्रेरयामास च ।किं, कथं प्रेरयामास । एकेनैव वाक्येन द्वयमपि कथं चकार । आश्चर्यमेतदित्यर्थः । किंशब्दावत्राश्चर्ये । नले चेति चकारो नल एवेति अवधारणार्थो वा । तत्तस्मात्कारणादस्या देव्याः का सूक्तिः शोभनवचननिर्माणचातुरी । अपि तु लोकोत्तरा। मम प्रकृष्टो मोहश्च कः, अपि तु सोऽपि लोकोत्तरः । अस्या इयमुक्तिः क्व, मम मोहश्च क्वेत्यर्थः । एवं देव्या इन्द्रादिचतुष्टयस्य स्पष्टं परित्यागेऽभ्यनुज्ञाते नलस्य च वरणेऽभ्यनुज्ञाते ममैवं मोहो न युक्त इत्यर्थः । पूर्वं मोहोऽभूदिदानीं तु निवृत्त इत्याशयः । इन्द्रादित्यागं किमर्थमभ्यनन्दत्, नले च मां किमर्थं प्रेरयामास, उभयमपि तावच्चकार तदेतन्मदनुग्रहार्थमेवेति भाव इति वा । त्यागम्, 'चजोः कुघिण्ण्यतोः ७।३।५२' इति कुत्वम् ॥ १७ ॥

परस्य दारान्खलु मन्यमानै-
रस्पृश्यमानाममरैर्धरित्रीम् ।
भक्त्यैव भर्तुश्चरणौ दधानां
नलस्य तत्कालमपश्यदेषा ॥ १८ ।

एवं विचारानन्तरं किमभूत्तदाह—

परस्येति॥एषा भैमी तत्कालं देवप्रसादसमये एवंभूतां धरित्रीं पृथ्वीमपश्यत् । किंभूताम्—परस्य नलस्य दारान्पत्नीं मन्यमानैरिव परनारीबुद्ध्येव अमरैरिन्द्रादिभिरस्पृश्यमानाम् । खलुरिवार्थे । तथा—भूपतित्वाद्भर्तुर्नलस्य भक्त्यैव सेवाबुद्ध्येव चरणौ दधानां धारयन्तीम् । अन्यापि भक्त्या भर्तुश्चरणौ धारयति देवत्वात्सहजो भूम्यस्पर्शो मनुष्यत्वात्सहजो भूमिस्पर्शोऽन्ययोत्प्रेक्षितः । देवमनुष्यचिह्ने दर्शिते । 'दारानिव' इति वा पाठः ॥ १८ ॥

सुरेषु नापश्यदवेक्षताक्ष्णो-
र्निमेषमुर्वीभृति संमुखी सा ।
इह त्वमागत्य नले मिलेति
सञ्ज्ञानदानादिव भाषमाणम् ॥ १९ ॥

सुरेष्विति ॥ सा भैमी संमुखी सती बुद्धिपूर्वं विलोकयन्ती सती सुरेषु अक्ष्णोर्निमेषं नेत्रपक्ष्मसंकोचं नापश्यत्, उर्वीभृति नले त्ववैक्षत । देवानामनिमेषत्वान्मनुष्याणां च सनिमेषत्वादित्यर्थः । तमेवोत्प्रेक्षते—किंभूतं निमेषम्—संज्ञानदानादाकारणसूचकाक्षिपक्ष्मचेष्टाकरणादिति भाषमाणमिव । इति किम्—हे भैमि, त्वम् आगत्य इह मया चिह्निते नले मिल संयुक्ता भवेति ॥ १९ ॥

नाबुद्ध बाला विबुधेषु तेषु
क्षोदं क्षितेरैक्षत नैषधे तु ।
पत्ये सृजन्त्याः परिरम्भमुर्व्याः
सम्भूतसम्भेदमसंशयं सा ॥ २० ॥

नेति ॥ सा तेषु विबुधेषु क्षितेः क्षोदं भूरेणुं लग्नं नाऽबुद्ध न ददर्श नैषधे त्वैक्षत ददर्श । देवानां

१ अर्थान्तरन्यासोऽत्रालङ्कारः ।

१ अत्रानुप्रासः । २ अत्रोत्प्रेक्षा ।३ दानादिवेत्युपमा ।

रजःसम्बन्धाभावान्नराणां तत्संबन्धादित्यर्थः । तत्रासंशयमुत्प्रेक्षते—किंभूतम् पत्ये नलाय परिरम्भमालिङ्गनं सृजन्त्या ददत्या उर्व्याः सकाशात्संभूतसंभेदमिव संजातसंबन्धमिव । आलिङ्गनवशाद् भूरेणुर्नले लग्न इवेत्यर्थः । पत्ये 'क्रियया यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानत्वम् ॥ २० ॥

**स्वेदः स्वदेहस्य वियोगतापं**
**निर्वापयिष्यन्निव संसिसृक्षोः ।**
**हीराङ्कुरश्चारुणि हेमनीव**
**नले तयाऽऽलोकि न दैवतेषु ॥ २१ ॥**

स्वेद इति ॥ तया नले स्वेद आलोकि, न दैवतेषु देवेषु । किं करिष्यन्निव—संसिसृक्षोः भैम्यालिङ्गनं कर्तुमिच्छोः स्वदेहस्य नलशरीरस्य वियोगतापं भैमीवियोगजनितं ज्वरं निर्वापयिष्यन्निव शमयिष्यन्निव भैम्यालिङ्गनोत्सुकनलदेहस्य तापनाशकरत्वादित्यर्थः । उदकं हि तापं शमयति । नलालिङ्गनोत्सुकस्य भैमीदेहस्य वा । देवेषु स्वेदस्याभावात्, नरेषु च तत्सद्भावात् सात्त्विकस्वेदयुक्तो नलो मया प्राप्त एवेति भैम्या विरहज्वरशान्तिः । उत्प्रेक्षते—चारुण्यत्युत्तमे हेमनि सुवर्णे खचितो हीराङ्कुरः इव । अतिगौरदेहरोमकूपस्थस्वेदजलकणझणत्कारो हेमस्थवज्राङ्कुरत्वेनोत्प्रेक्षितः । देवता एव दैवतानि । प्रज्ञादित्वात्स्वार्थेऽण् 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति क्लीवत्वम् ॥ २१ ॥

**सुरेषु मालाममलामपश्य-**
**न्नले तु बाला मलिनीभवन्तीम् ।**
**इमां किमासाद्य नलोऽद्य मूर्ध्नी**
**श्रद्धास्यते मामिति चिन्तयेव ॥ २२ ॥**

सुरेष्विति ॥ सा बाला सुरेषु मालाममलां निर्मलामम्लानां चापश्यत्, नले तु मलिनीभवन्तीं पूर्वमम्लानां कालक्षेपेणोष्मणा च म्लानां मलिनां च जायमानामपश्यत् । सुराणामम्लानकुसुमत्वादित्यर्थः । उत्प्रेक्षते—इति चिन्तयेव मलिनीभवन्तीम् । इति किम्—नलोऽद्य स्वयंवरदिनेऽतिमूर्ध्नी मत्सकाशादप्यतिमूद्धङ्गीमिमां भैमीमासाद्य प्राप्य मां मालां श्रद्धास्यते किमादरेणाङ्गीकरिष्यति ? अपि तु नेति ॥ २२ ॥

**श्रियं भजन्तां कियदस्य देवा-**
**श्छाया नलस्यास्ति तथापि नैषाम् ।**
**इतीरयन्तीव तया निरैक्षि**
**सा नैषधे न त्रिदशेषु तेषु ॥ २३ ॥**

श्रियमिति ॥ देवा अस्य नलस्य श्रियं कियद्भजन्तामाश्रयन्तु, अपि तु न किंचिदपि । यस्मादेषां देवानां नलस्य संबन्धिनी तथा तादृशी अतिप्रसिद्धाछायापि कान्तिलेशोऽपि नास्ति । येषां यदीयकान्तिलेशोऽपि नास्ति ते तदीयां शोभां कथमाश्रयन्तामपि तु न कथंचिदित्यर्थः । अथ च—येषां नलसंबधिनी आदर्शादिस्थिता छाया प्रतिविम्बमपि नास्ति । प्रतिबिम्बतुल्यास्ते न भवंतीति यावत् । यदीयप्रातिविम्बेनापि न साम्यं ते तदीयविम्बश्रियं कथं लभन्तामित्यर्थः । अथ च—अस्य श्रियं किंचिद्भजन्तां नटवन्नलरूपधारणात्किंचिच्छोभन्ताम् । तथापि स्वाभाविकी नलस्य कान्तिरेषां नास्ति । अथ च—अस्य संपदं बहु भजन्तां तथापि नलस्य कान्तिरेषां नास्ति । संपदा तुल्यत्वेऽपि कान्त्या तुल्यत्वं नास्तीत्यर्थः । अथ च—अस्य श्रियं कियद्बहु भजन्ताम् । तथापि भूमौ तमःप्रकृतिश्छाया देहव्यवहितरविप्रभोपलक्षितः श्यामाकारो नलस्यास्ति एषां तेजोरूपत्वेन नास्ति । तेजोराहित्येन च नराणां विद्यत इत्यर्थः । तया भैम्या इति पूर्वोक्तप्रकारेण ईरयन्तीव कथयन्तीव, यत्राहं वर्ते स एव नल इति प्रकाशयन्तीव सा छाया नैषधे निरैक्षि दृष्टा तेषु त्रिदशेषु न । छायापि स्वभावभावाभ्यां देवत्वनरत्वव्यञ्जिका जातेत्यर्थः । कियदिति क्रियाविशेषणम् ॥ २३ ॥

**चिह्नैरमीभिर्नलसंविदस्याः**
**संवादमाप प्रथमोपजाता ।**
**सा लक्षणव्यक्तिभिरेव देव-**
**प्रसादमासादितमप्यबोधि ॥ २४ ॥**

चिह्नैरिति ॥ अस्या भैम्याः प्रथमोपजाता दूत्यकालोत्पन्ना, 'इतरनलतुलाभाक्—' (१३।५४) इति पूर्वसर्गो-

---

१ अत्रानुप्रासः । २ निर्वापयिष्यन्निवेत्युत्प्रेक्षा ।

१ अत्रापि चिन्तयेवेत्युत्प्रेक्षा । २ अत्र श्रियमिव श्रियमिति छायवे छायेति च सादृश्याक्षेपान्निदर्शनाद्वयी, तया च इतीरयन्तीवेत्युत्प्रेक्षायाः साङ्कर्यम् ।

क्ततर्कोत्पन्ना वा, देवीश्लोकानुसंधानोत्पन्ना वा, अयमन्य एव नल इति संविद्बुद्धिरमीभिः पूर्वोक्तैर्भूस्पर्शादिभिश्चिह्नैः संवादं स एवायं नल इत्यनुव्यवसायरूपमाप । पूर्वं मम 'नलोऽयम्' इति प्रत्ययो युक्त एव जात इति एतैः चिह्नैर्निश्चितवतीत्यर्थः। अनन्तरं च सा भैमी देवत्वनरत्वज्ञापकानां लक्षणानां निमेषत्वभूस्पर्शादिचिह्नानां व्यक्तिभिः प्रकटैरेवासादितं प्राप्तं देवप्रसादमप्यबोधि। एतावत्पर्यन्तं भूस्पर्शादिचिह्नानि न दृष्टानि, इदानीं तु दृश्यन्ते, तस्मान्मम पूजया देवाः प्रसन्ना इत्यप्यजानादित्यर्थः २४

नले निधातुं वरणस्रजं तां
स्मरः स्म रामां त्वरयत्यथैनाम् ।
अपत्रपा तां निषिषेध तेन
द्वयानुरोधं तुलितं दधौ सा ॥२५॥

नल इति ॥ अथ स्मरःतां वरणस्रजं वरणमधूकमालां नले निधातुं निक्षेप्तुमेनां रामां भैमीं त्वरयति स्म शीघ्रं प्रेरयामास । अपत्रपा अन्यतो लज्जा च तां भैमीं निषिषेध निवारयामास सर्वस्मिञ्जने पश्यति सति कथमहमेनं वृण इति लज्जावशात्तस्या बुद्धिरुदभूदित्यर्थः । तेन कारणेन सा भैमी द्वयानुरोधं स्मरलज्जयोराज्ञां प्रवृत्तिनिवृत्तिसंदेहं तुलितं समानमेव दधौ । भावसंधिवशादुत्कण्ठापत्रपाभ्यां मालानिक्षेपानिक्षेपदोलायिताभूदित्यर्थः । अन्योऽपि तुल्याभ्यां द्वाभ्यां विरुद्धकार्यद्वयार्थं प्रेषितो द्वयोरनुरोधादौदासीन्यमेवावलम्बते । तामिति पुनरुपादानं वाक्यान्तरत्वामत्सर्थनीयम् । निषिषेध, 'स्थादिष्वभ्यासेन चाभ्यासस्य ८।३। ६४ इति षत्वम् ॥ २५ ॥

स्रजा समालिङ्गयितुं प्रियं सा
रसादधत्तेव बहुप्रयत्नम् ।
स्तम्भत्रपाभ्यामभवत्तदीये
स्पन्दस्तु मन्दोऽपि न पाणिपद्मे ॥२६॥

स्रजेति ॥ सा भैमी रसात्प्रीत्या स्रजा मधूकमालया प्रियं नलं समालिङ्गयितुं बहुप्रयत्नं भूयांसमुद्योगमधत्तेव चकारेव । तु पुनस्तदीये पाणिपद्मे स्तम्भत्रपाभ्यां हेतुभ्यां मन्दोऽल्पल्पोऽपि स्पन्दश्चलनं नाभवत् ॥ २६॥

तस्या हृदि व्रीडमनोभवाभ्यां
दोलाविलासं समवाप्यमाने ।
स्थितं धृतैणाङ्ककुलातपत्रे
शृङ्गारमालिङ्गदधीश्वरश्रीः ॥ २७ ॥

तस्या इति ॥ अधीश्वरी समर्था भूयसी अधीश्वरस्य कस्यचिद्राज्ञो वा श्रीर्लक्ष्मीस्तस्या भैम्या हृदि स्थितं वर्तमानं शृङ्गारं शृङ्गाररसमालिङ्गत् । किम्भूते हृदि—व्रीडमनोभवाभ्यां दोलाविलासमान्दोलजनितां क्रीडां समवाप्यमाने प्राप्यमाणे । कोटिद्वयसंबन्धात्प्रवृत्तिनिवृत्तिसंदेहं प्राप्त इत्यर्थः । तथा एणाङ्कश्चन्द्रस्तस्य कुलं कुलोत्पन्नो नल इत्यर्थः । स एवातपत्रं, धृतमेणाङ्ककुलातपत्रं येन तास्मिन् । शृङ्गाररस एव सम्राट् भैमीहृदयमेव सिंहासनं नल एव छत्रं लज्जाकामौ दोलाया उभयपार्श्वत आन्दोलनार्थं स्थितौ चामरधारिणौ वा । तस्या भावसंधिसंवलितः शृङ्गारो राजवदुज्जृम्भित इति भावः। दोलान्दोलने च भोगास्त्रियः प्रियमालिङ्गन्ति । अधीश्वरस्य नलस्य श्रीरिति वा । अत्र पक्षे ह्रीकामाभ्यां दोलायमानां भैमीं दृष्ट्वा म्लानो नलः पूर्वं विप्रलम्भशृङ्गारं प्राप्तः ततः साऽपि तं तादृशं दृष्ट्वा तदीयशोभाङ्गीकारात्स्वयमपि तादृशी बभूवेति भावः । आन्दोलिकाछत्रचामरैरयं प्रभुरिति विज्ञायत इत्यर्थः। 'श्रितम्' इति पाठे हृदीति विषयसप्तमी ॥ २७ ॥

करः स्रजा स्रसतरस्तदीयः
प्रियोन्मुखः सन्विरराम भूयः।
प्रियाननस्यार्धपथं ययौ च
प्रत्याययौ चातिचलः कटाक्षः ॥ २८॥

कर इति ॥ स्रजा स्रजतरो नितरां स्रजः कण्ठे निक्षेप्तुमुच्चैःकृतमालः तदीयः करः प्रियोन्मुखो नलसंमुखं गन्तुं सोद्योगः सन्भूयः पुनः लज्जावशाद्विरराम निवृत्तः। तदीयोऽतिचलः कटाक्षश्च प्रियाननस्यार्द्धपथं ययौ च प्रत्याययौ च । दिदृक्षावशादर्धमार्गं गतोऽपि लज्जावशान्मध्येमार्गं नलकटाक्षसंबन्धाच्च पुनः प्रत्यावृत्त इति भावः। अन्योऽप्यतिचलो गतागते करोति ॥ २८ ॥

तस्याः प्रियं चित्तमुपेतमेव ,
प्रभूवभूवाक्षि न तु प्रयातुम्।

---

अत्र निश्चयान्तः ससन्देह इत्याहुः।२ अत्र विषमः। ३ अत्रोपमा।

१ अत्रैणाङ्ककुलस्यातपत्रत्वेन रूपकम् । २ अत्र स्वभावोक्तिः।

सत्यः कृतः स्पष्टमभूत्तदानीं
तयाऽक्ष्णि लज्जेति जनप्रवादः ॥ २९ ॥

तस्या इति ॥ तस्याश्चित्तं प्रियमुपेतमेव प्राप्तमेव । अक्षि तु पुनः नलं प्रयातुं प्राप्तुं न प्रभूवभूव समर्थं नाभूत् । स्पष्टमुत्प्रेक्षते—अक्ष्णि नेत्रे लज्जेति जनप्रवादो लोकाभाणकः तया तदानीं नलवरणसमये सत्यः कृतोऽभूत् । अन्यथा लज्जायाश्चित्तधर्मत्वे चित्तस्य नलप्राप्तिरयुक्ता, नेत्रस्य च नलप्राप्तिर्युक्तेत्यर्थः । प्रीत्या चित्तं नल एव वर्तते परं लज्जावशात्कटाक्षेण विलोकयितुं नाशकदिति भावः । प्रभूवभूव, च्वौ दीर्घः ॥२९॥

कथं कथंचिन्निषधेश्वरस्य
कृत्वाऽऽस्यपद्मं दरवीक्षितश्रि ।
वाग्देवताया वदनेन्दुबिम्बं
त्रपावती साकृत सामिदृष्टम् ॥ ३० ॥

कथमिति ॥ त्रपावती सा भैमी निषधेश्वरस्याऽऽस्यपद्मं मुखकमलं कथंचिन्महता कष्टेन लज्जाविगमसाहसेन दरवीक्षितश्रि ईषद्विलोकितशोभं कृत्वा वाग्देवताया वदनेन्दुबिम्बं लज्जया सामिदृष्टमर्धदृष्टमकृत । किंचिद् दृष्ट्वा पुनर्व्यावृत्तत्वाददृष्टसकलशोभं चकारेत्यर्थः । 'त्रपावती' इत्युभयत्र हेतुः । एतां मालां नलकण्ठे स्थापयेत्याशयेन देवीमुखमर्धवीक्षितं चकारेति भावः ॥३०॥

अजानतीवेदमवोचदेना-
माकूतमस्यास्तदवेत्य देवी ।
भावस्त्रपोर्मिप्रतिसीरया ते
न दीयते लक्षयितुं ममाऽपि ॥ ३१ ॥

अजानतीति ॥ देवी अस्या भैम्याः तत्पूर्वश्लोकसूचितमाकूतमाशयमवेत्य ज्ञात्वा अप्यजानतीव एनां भैमीं प्रति इदमवोचत् । इदं किम्—हे भैमि, त्रपोर्मिप्रतिसीरया लज्जाकल्लोलरूपया जवनिकया ते तव भाव आशयो ममापि सरस्वत्या अर्थे च विश्वास्यसखीभूताया अपि लक्षयितुं ज्ञातुं न दीयते । त्वल्लज्जावशादतिमूढं यत्सूचयसि तन्मयाऽपि न ज्ञायते । ततः किंचिल्लज्जां त्यक्त्वा स्पष्टं कथयेति परिहासबुद्ध्या तामेव स्वाशयं वादयितुमवोचदित्यर्थः । अन्यदपि जवनिकाच्छादितं न ज्ञायते । 'वितीर्यते लक्षयितुं न मेऽपि' इति पाठे मे मह्यम् । 'प्रतिसीरा जवनिका' इत्यमरः ॥ ३१ ॥

देव्याः श्रुतौ नेति नलार्धनाम्नि
गृहीत एव त्रपया निपीता ।
अथाङ्गुलीरङ्गुलिभिर्मृशन्ती
दूरं शिरः सा नमयांचकार ॥ ३२ ॥

देव्या इति ॥ देव्याः श्रुतौ कर्णे 'न' इति नलस्यार्धे नाम्नि गृहीत एव भैम्या उच्चारित एव त्रपया निपीता व्याप्ता सा भैमी 'ल' इति द्वितीयमक्षरमुच्चारयितुमशक्ता सती अथानन्तरं स्वस्या अङ्गुलीर्देव्या वाऽङ्गुलीः स्वीयाङ्गुलिभिरेव मृशन्ती स्पृशन्ती निबिडं पीडयन्ती शिरो दूरमत्यर्थं नमयांचकार । अभिलाषप्रतिबन्धे दुःखितस्याङ्गुलिमेलनं स्वभावोक्तिः ॥ ३२ ॥

करे विधृत्येश्वरया गिरां सा
पान्था पथीन्द्रस्य कृता विहस्य ।
वामेति नामैव बभाज सार्थं
पुरन्ध्रिसाधारणसंविभागम् ॥ ३३ ॥

कर इति ॥ गिरामीश्वरया वाग्देव्या विहस्याज्ञाननाटनाद्धास्यं कृत्वा तां करे विधृत्य इन्द्रस्य पथि पान्था पथिका कृता इन्द्रं प्रति वरणार्थं नीता सा भैमी पुरन्ध्रीणामन्यस्त्रीणां साधारणः स मानः संविभागोंऽशो यस्य । पुरंध्रिषु वा । एवंभूतं सर्वस्त्रीवाचकं 'वामा' इत्येव नाम वक्रार्थत्वात्सार्थं बभाज भेजे । इन्द्रं प्रति देव्या नीयमाना वक्राऽभूदिति भावः । सार्थमेवेति वा । पान्थेति पूर्ववत् । 'पाथा' इति पाठे 'पथे गत्याम्' इति धातोर्ज्वलादित्वाण्णे पथि गन्त्री कृतेत्यर्थः । पुरन्ध्रीति पूर्ववत् ॥ ३३ ॥

विहस्य हस्तेऽथ विकृष्य देवी
नेतुं प्रयाताऽभि महेन्द्रमेताम् ।
भ्रमादियं दत्तमिवाहिदेहे
ततश्चमत्कृत्य करं चकर्ष ॥ ३४ ॥

तमेवार्थमुक्तिविशेषेण पुनराह—

विहस्येति ॥ वाग्म्यानन्तरं देवी विहस्य किंचिद्धसित्वा एतां भैमीं स्वहस्तेन विकृष्य महेन्द्रमाभि लक्ष्मी-

---

१ भूवेति यमकम् । २ आस्यपद्ममिति, वदनेन्दुबिम्बमिति च रूपकम् ।

१ अजानतीवेत्युपमा । २ अत्र स्वभावोक्तिः ।

कृत्य नेतुं प्रयाता प्रस्थिता इन्द्रं प्रापयितुं निर्गता। तत इन्द्रादिगमनोद्योगानन्तरमियं भैमीं चमत्कृत्य किमियमिन्द्रवरणे मां प्रवर्तयतीति बुद्ध्या भीत्वा करं स्वहस्तं चकर्ष आचकर्ष। किंभूतमिव करम्—भ्रमादज्जुभ्रान्तेरहिदेहे सर्पशरीरे दत्तमिव स्थापितमिवेत्युत्प्रेक्षा। सर्पदेहे भ्रमाद्दत्तं हस्तं यथा कश्चित्कर्षति तथेत्युपमा वा। ततो देवीकरादिति वा ॥ ३४ ॥

भैमीं निरीक्ष्याभिमुखीं मघोनः
स्वाराज्यलक्ष्मीरभृताऽभ्यसूयाम्।
दृष्ट्वा ततस्तत्परिहारिणीं तां
व्रीडां विडौजःप्रवणाऽभ्यपादि ॥३५॥

भैमीमिति ॥ स्वाराज्यलक्ष्मीर्विडौजःप्रवणा इन्द्रेऽत्यन्तमनुरक्ता स्वर्गाधिपत्यश्रीर्भैमीं मघोन इन्द्रस्याभिमुखीं निरीक्ष्य सपत्नीबुद्ध्या भैम्यामभ्यसूयामसहनत्वमभृत दधार। ततोऽनन्तरं तां तत्परिहारिणीमिन्द्रत्यागिनीं दृष्ट्वा इन्द्रेऽनुरक्ता सती व्रीडां लज्जामभ्यपादि प्राप। इयमिन्द्रं नाभिलषति वृथैव मयेर्ष्या कृतेति लज्जेत्यर्थः। इयं भैमी स्त्रीरत्नभूता सती निर्गुणतयैनं परिहराति तस्याऽहं प्रिया जातेति लज्जितेत्यर्थः। अभ्यपादि, कर्तरि चिण् ॥ ३५ ॥

त्वत्तः श्रुतं नेति नले मयाऽतः
परं वदस्वेत्युदिताऽथ देव्या।
ह्रीमन्मथद्वैरथरङ्गभूमी
भैमी दृशा भाषितनैषधाऽभूत् ॥३६॥

त्वत्त इति ॥ अथ देव्या इत्युदिता परिहासवशादुक्ता भैमी दृशा दृष्ट्यैव भाषितनैषधाऽभूत्। इति किम्—हे भैमि, मया त्वत्तो नलविषये 'न' इति श्रुतं निषेधार्थो नकारः श्रुतः। अतः कारणात्परं नलादन्यदभीष्टं वदस्व कथय। अथ च—नलविषये 'नलः' इति पदे 'न' इति नलनाम्नोऽर्धं श्रुतम्। अतो नकारात्परमनन्तरमक्षरं कथयेति। किंभूता—ह्रीमन्मथयोर्लज्जाकामयोर्द्वैरथस्य द्वाभ्यां रथाभ्यां प्रवृत्तस्य युद्धस्य रङ्गभूमी नृत्तस्थानं समवलज्जाकामवशीकृता। आसिन्नले मालां मया क्षेपयेति दृष्ट्यैव नलं निर्दिष्टवती न त्वन्यं, न च साक्षाल्लकारमुच्चारयति स्मेत्यर्थः। उदिता, अथ पश्चादिति वा। वदस्व, 'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः १।३।४७' इति भासने उत्साहे वा तङ्। द्वैरथं द्विरथसंबन्धीति, 'तस्येदम् ४। ३। १२०' इति सम्बन्धेऽण् ॥ ३६ ॥

हसत्सु भैमीं दिविषत्सु पाणौ
पाणिं प्रणीयाऽप्सरसां रसात्सा।
आलिङ्ग्य नीत्वाऽकृत पान्थदुर्गां
भूपालदिक्पालकुलाध्वमध्यम् ॥ ३७ ॥

हसत्स्विति ॥ सा देवी भैमीमालिङ्ग्याङ्कपालिकया धृत्वा भूपालस्य नलस्य दिक्पालकुलस्य च इन्द्रादिचतुष्टयस्य पुरःसरोऽध्वा मार्गस्तन्मध्यं नीत्वा प्रापय्य पान्थदुर्गां पथिकसिन्दूरादिपूजितशिलामयकल्पितमार्गदेवतामकृत चकार। इन्द्रादिपञ्चकमध्ये नीत्वा मुमोचेत्यर्थः। लज्जाभरनिश्चलत्वाददतिसौन्दर्याच्च देवतात्वम्। केषु सत्सु—रसादुभयाशयपरिज्ञानाद्भैम्याश्च देव्याशयापरिज्ञानात्प्रीतेर्वाऽप्सरसामुर्वशीप्रभृतीनां पाणौ पाणिं प्रणीय निर्माय तालिकादानपूर्वं दिविषत्स्विन्द्रादिषु हसत्सु सत्सु। उत्सवादौ मञ्चके दुर्गामारोप्य राजवीथिषु भ्राम्यते, तथैनामपि चलद्दुर्गां चकारेत्यर्थ इति वा। दिविषत्सु, 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ३।२।६१' इति क्विप्, 'हृद्द्युभ्यां च' इति सप्तम्या अलुक्, 'हलदन्तात् सप्तम्याः सञ्ज्ञायाम् ६।३।९' इति वा। सुषामादित्वात्षत्वम्। पान्थानां दुर्गा, पान्था चासौ दुर्गा चेति वा ॥ ३७ ॥

आदेशितामप्यवलोक्य मन्द-
मन्दं नलस्यैव दिशा चलन्तीम्।
भूयः सुरानर्धपथादथासौ
तानेव तां नेतुमना नुनोद ॥ ३८ ॥

आदेशितामिति ॥ अथाऽसौ देवी भूयः पुनरर्धपथात्सकाशान्नलं विहाय तानेव सुरानिन्द्रादीन्नेतुमनाः प्रापयितुकामा सती तां भैमीं नुनोद। इतश्चलेति प्रेरयति स्मेत्यर्थः। किं कृत्वा—इन्द्रादिसम्मुखमागच्छेत्यादेशितामादिष्टामपि तथा मन्दमन्दं नलस्यैव दिशा नलसम्मुखमेव चलन्तीं गच्छन्तीं विलोक्य। आदेशःसंजातोऽस्याः।

---

१ दत्तमिवेत्युत्प्रेक्षा। २स्वाराज्यलक्ष्म्या अभ्यसूयाकरत्वं सम्भावितमित्युत्प्रेक्षा व्यज्यत इति केचित्।

१ अत्र रूपकम्। २ अत्रानुप्रासः।

'अदेशितताम्' इति पाठे नलं प्रति गच्छेत्यप्रेरितामपीत्यर्थः ॥ ३८ ॥

मुखाब्जमावर्तनलोलनालं
कृत्वालिहूंहूंरवलक्ष्यलक्ष्यम् ।
भीमोद्भवा तां नुनुदेऽङ्कपालीं
देव्या नवोढेव दृढां विवोढुः ॥ ३९ ॥

मुखेति ॥ भीमोद्भवा देव्यास्तामङ्कपालीं नुनुदेऽमुञ्चत् । केव—विवोढुः परिणेतुर्दृढां प्रथमसुरतारम्भनिर्भरामङ्कपालीं नवोढा नववधूरिव । अङ्कपालीमोचनमात्रेण साम्यं विवक्षितं,न तु लिङ्गम् । किं कृत्वा—परिहासवशान्नलसंमुखगमननिषेधिकानामालीनां सखीनां निवारणव्यञ्जको 'हूं हूं' इति रवः शब्दस्तद्रूपैर्लक्ष्यैश्चिह्नैर्लक्ष्यं ज्ञेयं, तेषां वा लक्ष्यं विषयभूतम् । यद्वा—अर्थान्नलवरणनिषेधिकास्वालिषु कोपवशाद्भैम्या एव हूंहूंकारास्तद्रूपैश्चिह्नैर्लक्ष्यम् । अथ च—अलीनां भ्रमराणामिव ये हूंहूंरवाः । यद्वा—पद्मिनीत्वाद् भ्रमराणां हूंहूंरवैर्लक्ष्यम् । आवर्तने परावर्तने लोलं चञ्चलं कण्ठदण्ड एव नालं यस्य एवंभूतं मुखाब्जं कृत्वा । नवोढाऽपि आलिङ्गनादि कुर्वित्युपदिशतीनां तासु वा हूंहूंरवचिह्नलक्ष्यं मुखाब्जमावर्तयति । अब्जमपि लोलनालं भ्रमरहूंहूंरवलक्ष्यं च भवति । 'रवलक्ष' इति पाठे लक्षसंख्येत्यर्थः ॥ ३९ ॥

देवी कथंचित्खलु तामदेव-
द्रीचीं भवन्तीं स्मितसिक्तसृक्का ।
आह स्म मां प्रत्यपि ते पुनः का
शङ्का शशाङ्कादधिकास्यबिम्बे ॥४०॥

देवीति ॥ देवी तां भैमीमित्याह स्म । किंभूताम्—कथंचिन्महताङ्कपालीमोचनादिप्रकारेण कष्टेन खलु निश्चितम् । अदेवद्रीचीं भवन्तीं न देवानञ्चति देवान् प्रति गच्छति एवंविधां भवन्तीं ताम्।किंभूता—स्मितेन ईषद्धासेन सिक्तसृक्का सिक्तोष्ठप्रान्ता स्वाभिप्रायापरिज्ञानात्किंचित्कृतहासा । इति किम्—हे शशाङ्कादधिकं सुन्दरमाह्लादकमास्यबिम्बं यस्या एवंभूते भैमि, सखीप्रायां मामपि प्रति इयं प्रतार्य इन्द्रादिवरणार्थं मां नयतीति ते तव पुनः का शङ्का । अपि त्वेवं शङ्का न कार्या मा भैषीरिति । देवानञ्चति देवद्रीची, 'विष्वद्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ६ । ३ । ९२' इति टेरद्र्यादेशे उगित्वान्ङीपि 'अचः ६।४।१३८' इत्यकारलोपे 'चौ ६ । ३ । १३८' इति पूर्वस्याणो दीर्घः । पश्चान्नञ्समासः । 'अदेवद्रीचीभवन्तीम्' इति पाठः सभ्यः । अदेवद्रीचीं देवद्रीचीं भवन्तीं च्विप्रत्ययः । ततो नञ्समासः। शशाङ्कात् 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी २।३।९' इति ज्ञापकात्पञ्चमी ॥ ४० ॥

एषामकृत्वा चरणप्रणाम-
मेषामनुज्ञामनवाप्य सम्यक् ।
सुपर्ववैरे तव वैरसेनिं
वरीतुमीहा कथमौचितीयम् ॥ ४१ ॥

चेन्न प्रतारयसि तर्हि पुनःपुनरिन्द्रादिसंमुखं नकिमिति नयसीत्याशङ्कायामाह—

एषामिति॥एषामिन्द्रादीनां चरणयोः प्रणाममकृत्वा, तथा—एषां सम्यक् व्यथा भवति तथाऽनुज्ञां नलवरणानुमतिमप्राप्य निजचिह्नप्रकटमात्रानुमितप्रसादेन लब्धप्रायामपि साक्षाच्छिरःकम्पादिसूचितामनुज्ञामलब्ध्वा सुपर्ववैरे स्वावज्ञानादिन्द्रादिभिः सह विरोधे सति येयं तव वैरसेनिं नलं वरीतुमीहा चेष्टाऽभिलाषो वा सा कथमिवौचिती । अपि तु न कथंचित् । स्वावज्ञानाद्विरुद्धाः सन्तः शापं दास्यन्तीति तान्प्रति नीयसे न तु वरणार्थमिति भावः । इयमौचिती वा । 'कतमौचिती' इत्यपि पाठः ॥ ४१ ॥

इतीरिते विश्वसितां पुनस्ता-
मादाय पाणौ दिविषत्सु देवी ।
कृत्वा प्रणम्रां वदति स्म सा तान्
भक्तेयमर्हत्यधुनाऽनुकम्पाम् ॥ ४२ ॥

इतीति ॥ सा देवी इति पूर्वोक्तमीरिते सति विश्वसितां तां भैमीं पाणौ पुनरादाय धृत्वा दिविषत्सु देवेषु विषये नमस्कारवशात्प्रकर्षेण नम्रां कृत्वा तान्देवानिति वदति स्म । इति किम्—भवद्भक्तेयं भैम्यधुना नलवरणानुमतिरूपामनुकम्पां कृपामर्हतीति ॥ ४२ ॥

युष्मान्वृणीते न बहून्सतीयं
शेषावमानाच्च भवत्सु नैकम् ।

---

१ अत्रानुप्रासः । २ मुखाब्जमिति, नवोढेवेति चोपमा ।

१ अत्रानुप्रासः । २ अत्राप्यनुप्रासः ।

तद्वः समेतान्नृपमेनमंशान्
वरीतुमन्विष्यति लोकपालाः ॥ ४३ ॥

एतद्वरणार्थमागतानामस्माकं पुरो नलवरणानुमतिर्दीयतामिति कथमुच्यत इत्याशङ्कां परिहरति—

युष्मानिति ॥ हे लोकपालाः, इयं भैमी यस्मात्सती पतिव्रतैकभर्तृकैव तस्माद्बहून्युष्मान्न वृणीते पतित्वेन नाङ्गीकरोति। भवत्सु मध्ये शेषावमानाच्च एकं न वृणीते। तत्तस्मात्सर्वैकवरणपक्षयोर्दोषदर्शनाद्धेतोरेकत्र नलस्वरूपे समेतान्मिलितानंशानंशभूतान्वो युष्मानेव एनं नृपम् 'अष्टानां लोकपालानां वपुर्धारयते नृपः' इति वचनाद्युष्मद्रूपमेवैनं नलं नृपं वरीतुमन्विष्यति विचारयति। नले वृते पूर्वोक्तोभयदोषाभावान्नलमेव वरीतुं वाञ्छतीत्यर्थः। वो युष्माकं समेतानंशानेनं नृपमिति वा॥४३॥

भैम्या स्रजः सञ्जनया पथि प्राक्
स्वयंवरं सञ्जनयाम्बभूव।
सम्भोगमालिङ्गनयाऽस्य वेधाः
शेषं तु कं हन्तुमियद्यतध्वे ॥ ४४ ॥

परदारत्वादपीयं भवद्भिर्नाभिलषणीयेत्याह—

भैम्या इति ॥ हे लोकपालाः, वेधाः मातृसेवानन्तरं स्वमन्दिरागमनवेलायां पथि स्रजो मालायाः सञ्जनया सङ्गेन षष्ठे सर्गे 'प्रसूनप्रसादाधिगता—' ( ४९ ) इत्यादिकथितप्रकारेण भ्रान्तिदृष्टनलेषु मध्येऽस्य दूत्यगतस्य सत्यनलस्य कण्ठे निक्षेपणया कृत्वा भैम्याः स्वयंवरं प्राक्पूर्वमेव सञ्जनयाम् बभूवाकृत। तथा तत्रैव सर्गे 'तथ्यं मिथस्ती—' ( ५३ ) इत्याद्युक्तप्रकारेणास्य नलस्यालिङ्गनयालिङ्गनेन भैम्याः संभोगं बाह्यरतिमपि व्यधत्त। अस्य संभोगमिति वा। अस्य स्वयंवरस्य संभोगं फलमालिङ्गनेन चकार। तस्मात्कं तु पुनः शेषं संभोगं हन्तुं विनाशयितुमियन्नलाकारधारणादिप्रकारेण यतध्वे प्रयत्नं कुरुथ। अपि तु न कोऽप्यवशिष्टोंऽशः। तस्माद्वृथा प्रयासो न कार्यः। किं त्वाशैव दातव्येत्यर्थः। बाह्यरतस्यैवाभ्यर्हितत्वात्तत्राप्यालिङ्गनस्याभ्यर्हिततरत्वात्तस्य च संवृत्तत्वात्कं पुनः शेषं संभोगं हन्तुमियद्यतध्व इति वा। 'किम्' इति पाठे 'शेषा तु लोकस्थितिः' इति कामशास्त्रोक्तन्यायेन शेषं लोकस्थितिरूपं संभोगं पुनर्हन्तुमियत्किं यतध्व इति व्याख्येयम्। 'सञ्जना, आलिङ्गना' इत्यत्र ण्यन्तत्वाद्युच्। ॥ ४४ ॥

वर्णाश्रमाचारपथात्प्रजाभिः
स्वाभिः सहैवास्खलते नलाय।
प्रसेदुषो वेदृशवृत्तभङ्ग्या
दित्सैव कीर्तेर्भुवमानयद्वः ॥ ४५ ॥

इदानीं युक्त्यन्तरेण देवान्सान्त्वयति—

वर्णेति ॥ वा पूर्वापरितोषे। पूर्वमसंभावितमेवोक्तं मया। किंतु नलाय कीर्तेर्दित्सैव वो युष्मान्भुवमानयत्। भैमीस्वयंवरदर्शनव्याजेन नलाय कीर्तिं दातुमेवात्रागमनं युष्माकं न तु भैमीवरणार्थमित्यर्थः। यतः—किंभूताय—स्वाभिः प्रजाभिः सह वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां स्मृत्युक्तादाचारपथात्सकाशादस्खलतेऽच्युताय। किंभूतान् वः—ईदृग्वृत्तभङ्ग्या प्रसेदुषः स्वाचाराचरणादेव निष्कपटदूत्यकरणाद्वा प्रसन्नान्। भैम्या इन्द्रादीन्विहाय सौन्दर्यादिना गुणेन नल एव वृत इति कीर्तिः ॥ ४५ ॥

इति श्रुतेऽस्या वचसैव हास्यात्
कृत्वा सलास्याधरमास्यबिम्बम्।
भ्रूविभ्रमाकूतकृताभ्यनुज्ञे-
ष्वेतेषु तां साऽथ नलाय निन्ये ॥ ४६॥

इतीति ॥ इति पूर्वोक्ते देवीवचने श्रुते सत्यस्या देव्या वचसैव जाताद्धास्यात्स्मिताद्धेतोरास्यबिम्बं मुखचन्द्रं सलास्याधरं चञ्चलोष्ठं कृत्वा एतेषु देवेषु भ्रूविभ्रमरूपेणाकूतेनाशयज्ञापकेनेङ्गितेन कृताऽभ्यनुज्ञा नलवरणानुमतिर्यैस्तेषु, सत्सु। अथानन्तरं सा देवी तां नलाय नलं प्रापयितुं नलार्थं वा निन्ये। पुनर्नलसंमुखीं चकारेत्यर्थः ॥ ४६ ॥

मन्दाक्षनिस्पन्दतनोर्मनोभू-
दुष्प्रेरमप्यानयति स्म तस्याः।
मधूकमालामधुरं करं सा
कण्ठोपकण्ठं वसुधासुधांशोः ॥ ४७ ॥

मन्दाक्षेति ॥ सा देवी मधूकमालया मधुरं सुन्दरं तस्याः करं वसुधासुधांशोः भूचन्द्रस्य नलस्य कण्ठोपकण्ठं

---

१ अत्र काव्यलिङ्गम्।

१ अत्रानुप्रासः। २ अत्र काव्यलिङ्गमित्येके, अनुमानमित्यपरे। उत्प्रेक्षेत्यन्ये। ३ अत्रानुप्रासः।

कण्ठसमीपमानयति स्म प्रापयति स्म । किंभूतायाः—मन्दाक्षेण लज्जया निस्पन्दा निश्चला तनुर्यस्याः। सस्तम्भाया इत्यर्थः। किंभूतं करम्—मनोभुवा नलविषयकामेन दुष्प्रेरमपि कामेनापि प्रेरयितुमशक्यम्।'निष्पन्द-' इति पाठे पूर्ववत्सत्वम्। 'दुष्प्रेरमपि प्रेरयाति स्म इति विरोधाभासः॥ ४७॥

अथाभिलिख्येव समर्प्यमाणां
राजिं निजस्वीकरणाक्षराणाम्।
दूर्वाङ्कुराढ्यां नलकण्ठनाले
वधूर्मधूकस्रजमुत्ससर्ज॥ ४८॥

अथेति॥ अथ करस्य नलकण्ठसमीपनयनानन्तरं वधूर्भैमी दूर्वाङ्कुराढ्यां मधूकस्रजं नलकण्ठनाल उत्ससर्ज निक्षिप्तवती। उत्प्रेक्षते—अभिलिख्य समर्प्यमाणां दीयमानां निजेनात्मना स्वीकरणं तत्संबन्धिनामक्षराणाम्'मया त्वं निश्चितं वृतोऽसि' इत्येवंरूपाणां वर्णानां राजिमिव। निश्चयज्ञापनार्थं हि पत्रं दीयते तदिवेत्यर्थः। मालासञ्जनानन्तरं वाङ्गीकारे निश्चयो जातः। दूर्वाङ्कुराणां श्यामत्वादक्षरसाम्यम्। मधूकानि लिखिताक्षरसंधिस्थानीयानि। कण्ठस्य नालत्वान्मुखस्य कमलत्वम्[१]॥ ४८॥

तां दूर्वया श्यामलयाऽतिवेलं
शृङ्गारभासान्निभया सुशोभाम्।
मालां प्रसूनायुधपाशभासं
कण्ठेन भूभृद्बिभरांबभूव॥ ४९॥

तामिति॥ भूभृन्नलः तां मालां कण्ठेन बिभरांबभूव दधौ। किंभूताम्—श्यामलया अत एव शृङ्गाररसस्य भया कान्त्या संनिभया तुल्यया दूर्वयाऽतिवेलमातितरां सुशोभां शोभनदीप्तिम्। तथा—प्रसूनायुधस्य कामस्य पाशभासं पाशसदृशीम्। मालानिक्षेपानन्तरमेव कामपरवशत्वान्मालायाः कामपाशत्वम्। 'श्यामो भवति शृङ्गारः' इति भरतवचनाच्छृङ्गारस्य श्यामत्वम्। भूभृत्पर्वतोऽपि। बिभरांबभूव 'भीह्रीभृहुवां श्लुवच्च ३।१।३९' इत्याम् 'कृञ्चानुप्रयुज्यते लिटि ३।१।४०' इति भुवोऽनुप्रयोगः[२]॥ ४९॥

दूर्वाग्रजाग्रत्पुलकावलिं तां
नलाङ्गसङ्गाद् भृशमुल्लसन्तीम्।
मानेन मन्ये नमिताननाः सा
सासूयमालोकत पुष्पमालाम्॥ ५०॥

दूर्वेति॥ मानेन ईर्ष्याजनितकोपेन नमिताननां सा भैमी सासूयं गुणवत्यामपि तस्यां दोषारोपसहितं यथा तथा। सेर्ष्यमिति यावत्। पुष्पमालामालोकतेत्यहं मन्ये शङ्के। किंभूताम्—दूर्वाग्राण्येव दूर्वाङ्कुरा इव वा जाग्रती स्फुरन्ती पुलकावलिर्यस्यास्ताम्। तथा—नलाङ्गसङ्गाद् भृशमुल्लसन्तीं शोभमानां सहर्षां च। लज्जानम्रमुखी सत्येव मालासहितं नलं वक्षः—कटाक्षैर्विलोकितवती। अन्यापि नायिका एवंविधां सपत्नीं मानेन नम्रमुखी सती सेर्ष्यमालोकते। 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' ॥५०॥

कापि प्रमोदास्फुटनिर्जिहान-
वर्णेव या मङ्गलगीतिरासाम्।
सैवाननेभ्यः पुरसुन्दरीणा-
मुच्चैरुलूलुध्वनिरुच्चचार॥ ५१॥

कापीति॥ प्रमोदाद्धर्षवशात्कण्ठस्य सगद्गदत्वादस्फुटा अप्रकटा निर्जिहाना निर्गच्छन्तो वर्णा अक्षराणि यस्यामेवंविधैव या विलोकयितुमागतानां पुरसुन्दरीणामाननेभ्यः कापि लोकोत्तरा मङ्गलरूपा धवलादिगीतिरासीत्। सैवोच्चैरुलूलुध्वनिरुच्चचार उदलसत्। विवाहाद्युत्सवे स्त्रीणां धवलादिमङ्गलगीतिविशेषो गौडदेशे 'उलूलुः' इत्युच्यते। सोऽप्यव्यक्तवर्ण उच्चार्यते। स्वदेशरीतिः कविनोक्ता॥ ५१॥

सा निर्मले तस्य मधूकमाला
हृदि स्थिता च प्रतिबिम्बिता च।
कियत्यमग्ना कियती च मग्ना
पुष्पेषुबाणालिरिव व्यलोकि॥ ५२॥

सेति॥ तस्य नलस्य निर्मले हृदि स्थिता चान्तः प्रतिबिम्बिता च सा मधूकमाला कियती किंचिदमग्ना

१ अत्रानुप्रासः। २ अभिलिख्येवेत्युत्प्रेक्षा। ३ पाशभासमित्युपमाऽनुप्रासयोः संसृष्टिः।

१ अत्र दूर्वाग्रेत्यादिप्रकृतमालाविशेषणसादृश्येनाप्रकृतसपत्नीप्रतीतेः समासोक्तिः, तदुपजीवनेन लज्जाहेतुकनलाननालोकने मानकृतासूयाहेतुकत्वोत्प्रेक्षणमित्युत्प्रेक्षा च, अनयोश्चाङ्गाङ्गिभावात्सङ्करः। ५ अत्रोत्प्रेक्षा।

अत्रुडिता कियती च मम्रा त्रुडिता पुष्पेषुः कामस्तस्य बाणालिः शरपङ्क्तिरिव व्यलोकि वीक्षिता । लोकैरिति शेषः । मधूकप्रतिबिम्बानां किंचिदन्तःप्रविष्टपुष्परूपबाणांशसाम्यम्, उपरि स्थितानां चामग्नबाणांशसाम्यम् । मालास्पर्शान्नलोऽपि कामपरवशो जात इत्यर्थः ॥ ५२ ॥

रोमाणि सर्वाण्यपि बालभावा-
द्वरश्रियं वीक्षितुमुत्सुकानि ।
तस्यास्तदा कण्टकिताङ्गयष्टे-
रुदग्रीविकादानमिवान्वभूवन् ॥ ५३ ॥

रोमाणीति ॥ तदा तस्मिन्समये कण्टकिता संजातरोमाञ्चा अङ्गयष्टिः शरीरं यस्यास्तस्या भैम्याः वयसोर भेदाद्बालभावात्केशत्वात्, अथ च शिशुत्वात् । वरस्य नलस्य श्रियं शोभां वीक्षितुमुत्सुकानीव सर्वाण्यपि रोमाणि उत् उच्चैः ग्रीवा यस्यां क्रियायां सा उदग्रीविका क्रिया तस्या आदानमङ्गीकरणमन्वभूवन्निव । सात्त्विको रोमाञ्चः स्तम्भश्च तस्या जात इत्यर्थः । बालाश्च वरश्रियं वीक्षितुमुत्कण्ठिताः खर्वत्वादुदग्रीवा भवन्ति । कण्टकस्तारकादिः । उदग्रीविका, बहुव्रीहौ कप्[1] ॥ ५३ ॥

रोमाङ्कुरैर्दन्तुरिताखिलाङ्गी
रम्याधरा सा सुतरां विरेजे ।
शरव्यदण्डैः श्रितमण्डनश्रीः
स्मारी शरोपासनवेदिकेव ॥ ५४ ॥

रोमेति ॥ रोमाङ्कुरैर्दन्तुरितमुन्नतानतीकृतमखिलाङ्गं यस्याः सा रोमाञ्चयुक्ता । तथा रम्याधरा बिम्बोष्ठी सा भैमी स्मारी कामसंबन्धिनी शरोपासनवेदिकेव बाणाभ्यासशालेव सुतरां विरेजे । किंभूता वेदिका—शरव्यदण्डैर्लक्ष्यभूतैर्दण्डैः श्रिता मण्डनश्रीरलंकारशोभा यया सा । रोमाङ्कुराः शरव्यदण्डस्थानीयाः । भैम्यपि श्रितमण्डनश्रीः । रोमाञ्चितां तां दृष्ट्वा सर्वेऽपि कामपरवशा जाता इति भावः । 'शराभ्यास उपासनम्' इत्यमरः । दन्तुरं कृतं दन्तुरितम्[3] ॥ ५४ ॥

चेष्टा व्यनेशन्निखिलास्तदास्याः
स्मरेषुवातैरिव ता विधूताः ।
अभ्यर्थ्य नीताः कलिना मुहूर्तं
लाभाय तस्या बहु चेष्टितुं वा ॥ ५५ ॥

चेष्टा ॥ इति तदा तस्मिन्कालेऽस्या निखिलाश्चेष्टा व्यनेशन्विनष्टाः । उत्प्रेक्षते—स्मरेषुवातैः कामबाणपुङ्खवायुभिर्विधूता इव भ्रमणवशान्नीता इव । वाशब्द उत्प्रेक्षान्तरसमुच्चये इवार्थे वा । तस्या लाभाय भैम्याः प्राप्त्यै प्रकारैश्चेष्टितुमभ्यर्थ्य भैमीमेव याचित्वा मुहूर्तं घटिकाद्वयं क्षणमात्रं वा कलिना युगेन नीता इव । भैम्याः कामुकेन कलिना स्वस्याल्पविलासितया भैमीमलभमानेन बहुविलाससंपत्तये भैमीविलासा एव याचितकमण्डनार्थं नीता इवेति भावः । याचितमपि क्षणमात्रमेव नीयते । सात्त्विकस्तम्भेन कटाक्षादिव्यापाररहिता सा जातेति भावः । 'व्यनेशन्' इत्यत्र पुषादित्वादङि 'नशिमन्योरलिट्येत्वं वक्तव्यम्' इत्येत्वम् । भाष्यकारस्य कैयटस्य पदमञ्जरीकारस्यापि मते छन्दस्येवैत्वं नशिमन्योः, न भाषायाम् अत एव कवेः प्रमाद एवायामिति महाभाष्यप्रदीपोद्द्योतेऽपि नागेशेनोक्तम् । 'अनेशन्नस्येपवः—' इत्युदाहरणात् 'नशेरप्येत्वं छन्दस्येव' इत्यवसीयते । वृत्तिकृता तु नशिमन्योर्भाषाविषयत्वमङ्गीकृत्य, अमिपचोश्छन्दोविषयत्वमङ्गीकृत्यैत्वं समर्थितम् ॥ ५५ ॥

तन्न्यस्तमाल्यस्पृशि यन्नलस्य
स्वेदं करे पञ्चशरश्चकार ।
भविष्यदुद्वाहमहोत्सवस्य
हस्तोदकं तज्जनयाम्बभूव ॥ ५६ ॥

इदानीं नलस्य सात्त्विकभावान्वर्णयति—

तदिति ॥ पञ्चशरः कामस्तया भैम्या निक्षिप्तं माल्यं मालामनुरागवशात्पुनःपुनः स्पृशतीति स्पृक् तस्मिन्नलस्य करे यत्सात्त्विकं स्वेदं घर्मजलं चकार, तत्, भविष्यत उद्वाहरूपस्य महोत्सवस्य सम्बन्धि नियतपरस्वत्वापादनहेतुभूतं हस्तोदकं कन्यादानजलमेव जनयाम्बभूव । नलस्यापि सात्त्विकः स्वेदः प्रवृत्त इति भावः । इदं स्वेदजलं न भवति किंतु हस्तोदकमिति[2] ॥ ५६ ॥

तूलेन तस्यास्तुलना मृदोस्तत्
कम्प्राऽस्तु सा मन्मथबाणवातैः ।

१ अत्रोत्प्रेक्षा तुल्ययोगिता च । २ अत्रोत्प्रेक्षा । ३ अत्र वेदिकेत्युपमा ।

१ वातैरित्युत्प्रेक्षा । २ अत्र स्वेदजलमिदं न, किं तु वधूपितृदत्तं कन्यादानसम्बन्धि जलमिति प्रतीतेरपह्नुतिर्ध्वन्यते ।

चित्रीयितं तत्तु नलो यदुच्चै-
रभूत्स भूभृत्पृथुवेपथुस्तैः ॥ ५७ ॥

तूलेनेति ॥ मृदोरतिसुकुमार्यास्तस्या भैम्यास्तूलेन कार्पासेन मृदुतया तस्मात्तुलना साम्यमस्तीति शेषः । तत्तस्मात्सा मन्मथबाणवातैः कामशरपुङ्खवायुभिः पवनकृतपुष्पक्षोभैरिति भावः, कम्प्रा सकम्पा अस्तु भवतु । कार्पासो हि लघुत्वाद्वातेन सकम्पो भवति, सा च तथा कुसुमघातादपि कम्पत इति तत्तुल्या, अतस्तस्याः कामबाणवातैः सकम्पत्वं युक्तमेवेत्यर्थः । तत्तु पुनश्चित्रीयितमाश्चर्यं कृतं यदुच्चैर्भूभृन्महाराजो धीरोऽपि स नलस्तैः कामबाणवातैः कृत्वा पृथुर्महान्वेपथुः कम्पो यस्यैवंविधोऽभूत् । तत्तैः कामबाणैश्चित्रं कृतम् । आश्चर्यं कृतमित्यर्थः । तूलस्य तूलतुल्यस्य वा वातैः कम्पो युक्तः । अत्युच्चस्य पर्वतस्य तु वातैः कम्पोऽतितरामाश्चर्यकारीत्यर्थः । उभावपि तुल्यानुरागौ सात्त्विककम्पयुक्तौ जाताविति भावः । चित्रीयितम् 'नमोवरिवश्चित्रङः क्यच् ३।१।१९' इति क्यजन्तात् क्तः । 'क्याचि च' ३।४।३३' इतीत्वमकारस्य ॥ ५७ ॥

दृशोरपि न्यस्तमिवास्त राज्ञां
रागाद् दृगम्बुप्रतिबिम्बिमाल्यम् ।
नृपस्य तत्पीतवतोरिवाक्ष्णोः
प्रालम्ब्यमालम्बनयुक्तमन्तः ॥ ५८ ॥

दृशोरिति ॥ दृशोरम्बुनि क्रोधजनितेऽश्रुणि प्रतिबिम्बोऽस्यास्तीति एवंशीलं माल्यं सा मधूकमाला रागान्नलविषयात्क्रोधात् । अथ च तज्जनितान्नेत्रलौहित्यात् हेतोः सभासदां राज्ञां दृशोरपि न्यस्तमिव येन केन चिन्निक्षिप्तमिवास्त अतिष्ठत । नेत्रलौहित्यदर्शनादेवं ज्ञातमासीदिति यावत् । यथा कश्चित्क्रुद्धः सन्कस्यचिन्नेत्रे बलादङ्गुल्यादि शल्यं निक्षिपति, तदीयनेत्रस्य च लौहित्यं भवति, अश्रु च निर्गच्छति । तथा क्रोधाद्दर्शनमात्रेण तन्माल्यमेव तेषां द्वयोरपि नेत्रयोर्निक्षिप्तं शल्यमिवाभवत् । अत एव तयोर्लौहित्यमश्रु च जातमित्यर्थः । अर्थादयुक्तमेतत् । न केवलमन्तःकरणे शल्यं निक्षिप्तं किंतु दृशोरपीत्यपिशब्दार्थः । अथ च—रागान्नलप्रीत्या भैम्या माल्यं यथा नलकण्ठे न्यस्तं तथा रागात्क्रोधान्नलस्पर्धिनां संमुखं पश्यतां राज्ञां नेत्रयोरपि शल्यमिव क्षिप्तमभूत् । यतो दृगम्बुप्रतिबिम्बितमसहमानाः सर्वेऽपि राजानो माल्यदर्शनमात्रेण क्रोधेर्ष्यावशाः संकुचितनेत्राः पराङ्मुखाः सन्तस्तां न पश्यन्ति स्मेति भावः । नृपस्य नलस्याक्ष्णोरन्तर्मध्यः कर्तृभूतः प्रालम्ब्यं प्रलम्बत्वं हर्षविस्फारितत्वमालम्बताङ्गीचकार । एतद्युक्तम् । हर्षवशाद्धि नेत्रयोर्विस्फारित्वं भवति । 'प्रालम्बम्' इति पाठे प्रालम्बनं प्रालम्बः स एवार्थः । उत्प्रेक्षते—किंभूतयोरक्ष्णोः—तत्पीतवतोरिव माल्यं सादरं विलोकमानयोरिव । हर्षजनितं विस्फारित्वं विलोकनजत्वेनोत्प्रेक्षितम् । यद्वा—नलनेत्रमध्यस्तन्माल्यमेव प्रालम्बमृजुलम्बिनं हारविशेषमङ्गीचकार । सादरविलोकनान्नलयोरन्तः प्रतिबिम्बिताया मालाया ऋजुलम्बित्वं नेत्रयोर्विस्फारित्वमन्तरेण न घटत इति तदेवाक्षिपति—नलस्तु तां मालां विलोकयन्हर्षवशाद्विस्फारितनेत्रो जात इति भावः। तन्माल्यं रागाद् दृशोर्न्यस्तमिवास्त नेत्रमध्ये निक्षिप्तं यच्छल्यादि तदिवाभूत् । युक्तमेतत् । क्रोधाद्धि दृष्टमात्रं वस्तु शल्यमिव भवति, नेत्रयोश्च लौहित्यमश्रु च भवतीति युक्तमित्यर्थः। तन्माल्यं पीतवतोरिव नलनेत्रयोरन्तः रागात्प्रीतेर्दैर्घ्यत्वं प्राप । एतदपि युक्तम् । प्रीतेर्हि हर्षो भवतीत्यपि युक्तमेवेत्यर्थ इति वा । प्रालम्ब्यम्, गुणवचनात्ष्यञ् । 'प्रालम्बम्' इति पाठे 'प्रालम्बो हारभेदे स्यात्' इति विश्वः । 'राज्ञा' इति पाठे आनन्दाश्रुणि प्रतिबिम्बितं माल्यं राज्ञा नलेनानुरागाद् दृशोरपि न्यस्तमिवास्त । न केवलं हृदि, किंतु नेत्रयोरपि धृतमित्यर्थः । अत एव तन्माल्यं पिवतोर्नलनेत्रयोर्मध्यः प्रलम्बत्वमालम्बतेति युक्तम् । दीर्घाया मालाया अन्तर्धारणार्थं नेत्रमध्योऽपि दीर्घो जात इति भावः ॥ ५८ ॥

स्तम्भस्तथालम्भितमां नलेन
भैमीकरस्पर्शमुदः प्रसादः ।
कन्दर्पलक्ष्यीकरणार्पितस्य
स्तम्भस्य दम्भं स चिरं यथापत् ॥ ५९ ॥

---

१ तुलनेत्युपमा, भूभृदिति श्लेषः । चित्रीयितमित्यनेन तथ्यार्थगोपनाद्व्याजोक्तिः, 'व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ।' इति पूर्वाचार्योक्तेः ।

१ अत्र न्यस्तमिवेत्युत्प्रेक्षया नेदं दृशोर्न्यस्तम्माल्यं, किंतु नलेन क्रोधाच्छल्यमेव दृशोर्निक्षिप्तमित्यपह्नुतिर्व्यज्यते । एवं, यथा रागान्नलस्य दृशोः ( सम्मुखं ) माल्यं न्यस्तं, तथा रागात् (क्रोधात्) राज्ञामपि न्यस्तमिवासीदित्युपमया यन्नलस्य प्रेममाल्यं, तदेवान्येषां क्रोधमूलं जातमिति च व्यज्यते ।

स्तम्भ इति ॥ मालीनिक्षेपसमयजातो भैमीकरस्य स्पर्शस्तेन जाता मुद्धर्पस्तस्य प्रागल्भ्यरूपः स्तम्भः सात्त्विकभावो नलेन तथाऽवलम्बितमा[?]तरां प्राप्तः । तथा स नलः कंदर्पस्य लक्ष्यीकरणार्थं शरव्यार्थमर्पितस्यारोपितस्य स्तम्भस्य दम्भं व्याजं वेध्यकाष्ठसादृश्यं चिरमापत् ।: कामवेध्यस्तम्भवद्भैमीकरस्पर्शजातसात्त्विकस्तम्भवशान्नितरां निर्व्यापारो जात इति भावः । नितरां कामपीडा सूचिता ॥ ५९ ॥

उत्सृज्य साम्राज्यमिवाथ भिक्षां
तारुण्यमुल्लङ्घ्य जरामिवारात् ।
तं चारुमाकारमुपेक्ष्य यान्तं
निजां तनूमाददिरे दिगीशाः ॥ ६० ॥

इदानीमिन्द्रादिभिः स्वरूपं धृतमित्याह—

उत्सृज्येति॥ अथ नलवरणानन्तरमिन्द्रादयो दिगीशा दिक्पाला यान्तं गच्छन्तं चारुं सुन्दरं तमलीकमाकारमुपेक्ष्योन्मुच्य निजां सहस्रनेत्रत्वादिलक्षणां स्वीयां तनूमारान्नलसमीप एवाददिरेऽङ्गीचक्रुः । कः कामिव—कश्चिद्राजा साम्राज्यमुत्सृज्य क्षीणपुण्यतया चक्रवर्तिपदं त्यक्त्वा भिक्षामिव । तथा—कालवशाद्गच्छत्तारुण्यमुल्लङ्घ्यातिक्रम्य कश्चिज्जरामिव । उपमाद्वयेनेन्द्राद्याकाराणां नलाकारादतिहीनत्वं सूचितम् । साम्राज्यादिपरित्यागेन भिक्षाद्यङ्गीकारे यावद्दुःखं भवति तावन्नलाकारपरित्यागेन स्वाकाराङ्गीकारे तेषां जातमिति भावः । तत्र निजत्वमेव हेतुः । अन्योऽपि विद्वानसमीचीनमपि स्वीयमङ्गीकरोति,न तु समीचीनमपि परकीयम् । 'यातुम्' इति पाठे स्वर्गमिति शेषः । आददिरे, 'आङो दोऽनास्यविहरणे १।३।२०' इति तङ् ॥ ६० ॥

मायानलत्वं त्यजतो निलीनैः
पूर्वैरहम्पूर्विकया मघोनः ।
भीमोद्भवासात्त्विकभावशोभा
दिदृक्षयेवाविरभावि नेत्रैः ॥ ६१ ॥

यथाक्रमं तेषामाकारस्वीकारमाह—

मायेति ॥ मायानलत्वमलीकनलत्वं त्यजतो मघोनो निलीनैः पूर्वं निजशक्त्या गोपितैः पूर्वैर्नेत्रैर्नलाङ्गसङ्गजनिता भीमोद्भवायाः सात्त्विकभावशोभा रोमाञ्चादिलक्ष्मीस्तस्या दिदृक्षयेव दर्शनेच्छयेव अहं पूर्वमहं पूर्वमिति यथा भवति तथा । यद्वा—अहं पूर्वमहं पूर्वमिति यस्यां क्रियायां सर्वे ब्रुवते साहंपूर्विका स्पर्धोत्सुक्याभ्यामाविरभावि वेगेन प्रकटीभूतम् । इन्द्रेण स्वनेत्रसहस्रं प्रकटितमिति भावः । अन्योऽपि दर्शनोत्सुकोऽहंपूर्विकया प्रकटो भवति । 'अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम्' इत्यमरः । अहंपूर्विकया, स्वार्थे कः । मत्वर्थीयष्ठन्वा ॥ ६१ ॥

गोत्रानुकूलत्वभवे विवाहे
तत्प्रातिकूल्यादिव गोत्रशत्रुः ।
पुरश्चकार प्रवरं वरं य-
मायन्सखायं ददृशे तया सः ॥ ६२ ॥

गोत्रेति ॥ तया स इन्द्रसखः प्रवरो ददृशे दृष्टः । स कः—गोत्रशत्रुरिन्द्रो यं वरं श्रेष्ठं प्रवरमेतन्नामानं सखायं पुरश्चकार पूजितवान् ।अथ च अग्रेसरमकरोत्। किं कुर्वन्—वशिष्ठकश्यपाद्योर्वंश्यादिपुरुषयोरनुकूलत्वेनासमानत्वेन विवाह्यत्वेन वा भवे जायमाने। अथ च—गोत्रयोर्जन्मकाल्पिकनाम्नोरानुकूल्येन तृतीयैकादशचतुर्थदशमादिज्योतिःशास्त्रोक्तसद्राशिकूटसंभवेन जायमाने । विवाहे विषये । विवाहार्थमिति यावत् । आयन्स्वर्गात्स्वयंवरार्थमायन्भुवमागच्छन् । एतावन्तं कालमदृष्टोऽभूदिदानीं प्रकटो जात इत्यर्थः।सखायमिन्द्रमायन्प्राप्नुवन्स प्रवरस्तया दृष्ट इति वा ।प्रवरशब्दच्छलेन प्रवरपुरस्कार उत्प्रेक्ष्यते—तस्य गोत्रानुकूलत्वविशिष्टस्य विवाहस्य प्रातिकूल्याद्विरुद्धत्वादिव । यतोऽयं गोत्रशत्रुरिति च्छलम् । नलभैमीगोत्रयोरनुकूलत्वेन जायमाने विवाहे स्वयमिन्द्रस्तत्प्रातिकूल्यं कृतवान्।ततश्च विशिष्टस्यापि प्रातिकूल्ये गोत्रयोरपि प्रातिकूल्यं जातम् । देवत्वाद्गोत्राराहित्याच्च स्वगोत्रभैमीगोत्रयोरप्यनुकूलत्वाभावाद्प्रातिकूल्यम्। ततश्च गोत्रयोःप्रातिकूल्येऽपि श्रेष्ठप्रवराङ्गीकरणेनापि यथाकथंचिद्विवाहो घटिष्यत इति बुद्ध्या प्रवरमार्षेयं पुरश्चकारेत्यर्थः । यद्वा—गोत्रानुकूलत्वभवे विवाहे तस्य प्रातिकूल्याद्धेतोः प्रवरं पुरश्चकार । समानप्रवरत्वेनापि विवाहनिषेधादित्यर्थः । नाम्नोराद्यक्षरयो राशिकूटसूचकयोर्गणनायां षडष्टकाद्यसद्राशिकूटादिव गोत्रशत्रुरित्यादि ज्योतिःशास्त्राद्बूह्यम् । प्रवरमिन्द्रमित्रम् ॥ ६२ ॥

---

१ दम्भमित्यपह्नुतिः । २ भिक्षामिवेति जरामिवेति चोपमा ।

१ दिदृक्षयेत्युत्प्रेक्षा।२ इवेत्युत्प्रेक्षा । वरमिति यमकम्।

स्वकामसंमोहमहान्धकार-
निर्वापमिच्छन्निव दीपिकाभिः।
उद्गत्वरीभिश्छुरितं वितेने
निजं वपुर्वायुसखः शिखाभिः ॥ ६३ ॥

स्वकामेति ॥ वायुसखोऽग्निः निजवपुरुद्गत्वरीभिरुदित्वरीभिः शिखाभिर्ज्वालाभिः छुरितं वितेने व्याप्तं चकार। भैम्यभिलाषं परित्यज्य पुनरपि ज्वालाव्याप्तं शरीरमङ्गीचकारेत्यर्थः। किं कुर्वन्निव—दीपिकाभिर्वस्त्राग्निज्वलितशिखाभिः स्वस्य कामेन संमोहोऽविवेकरूपस्तल्लक्षणो महान्धकारस्तस्य निर्वापं शान्तिमिच्छन्निव। उद्गत्वरीभिः, 'गत्वरश्च ३।२।१६४' इति क्वरबन्तात् 'टिड्ढा–४।१।१५'इति ङीप् ॥६३॥

पत्यौ वृते भीमजया न वह्ना-
वह्ना स्वमह्नाय निजुह्नुवे यः।
जनादपत्रप्य स हा सहाय-
स्तस्य प्रकाशोऽभवदप्रकाशः ॥ ६४ ॥

पत्याविति ॥ यः प्रकाशः पूर्वं वह्नेरलीकनलत्वाङ्गीकारसमये स्वमात्मानमह्नाय शीघ्रं निजुह्नुवे गोपितवान्स तस्य वह्नेः सहायः सखा प्रकाशो दीप्तिः सद्योऽह्ना दिवसेन हेतुनाऽप्रकाशोऽप्रकटोऽभवत्। प्रकटीभूतोऽपि सूर्यप्रभाच्छादितत्वादप्रकटो जात इत्यर्थः। हा कष्टम्। पत्यौ स्वस्वामिति वह्नौ भीमजया न वृते सति जनाल्लोकादपत्रप्य लज्जित्वैव प्रकटो नाभूदिति गम्योत्प्रेक्षा। अन्योऽपि स्वस्वामिनोऽपकर्षे लज्जया निलीयते। ज्वालास्वङ्गीकृतास्वपि रात्रिवत्प्रकाशाभावाद्वह्निर्निष्प्रभ एवाभूदिति भावः ॥ ६४ ॥

सदण्डयालक्तकनेत्रचण्डं
तमःकिरं कायमधत्त कालः।
तत्कालमन्तःकरणं नृपाणा-
मध्यासितुं कोप इवोपनम्रः ॥ ६५ ॥

सदण्डमिति ॥ कालो यमः सदण्डं लोहयष्ट्या सह वर्तमानमलक्तकेन रक्तं वस्त्रमालक्तकं तद्वदारक्ते नेत्रे ताभ्यां चण्डमतिभयंकरम्, तथा—तमःकिरमन्धकारमुद्गिरन्तं कालत्वात्। यद्वा स्वीयश्यामत्वातिशयेन तमसो विक्षेपकम्। एवंविधं कायं देहमधत्त प्रकटितवानित्यर्थः। उत्प्रेक्षते—तत्कालं तस्मिन्नलवरणानन्तरसमये नृपाणामन्तःकरणमध्यासितुमधिष्ठातुमुपनम्र आसन्नीभूतः कालः श्यामः कोप इव। मूर्तः कोप एव राज्ञां प्रकटो जात इति भावः। कुपितोऽप्येवंविधो भवति। आलक्तके, 'तेन रक्तं रागात् ४।२।१' इत्यण्। तमःकिरम्, 'इगुपधज्ञाप्रीकिरः कः ३।१।१३५' इति कः। अन्तःकरणम्, 'अधिशीङ्स्थासां कर्म्म १।४।४६' इति कर्मत्वम् ॥ ६५ ॥

दृग्गोचरोऽभूदथ चित्रगुप्तः
कायस्थ उच्चैर्गुण एतदीयः।
ऊर्ध्वं तु पत्रस्य मषीद एको
मषेर्ददच्चोपरि पत्रमन्यः ॥ ६६ ॥

दृगिति ॥ एतदीयो यमसंबन्धी उच्चैर्नितरामुन्नतो वा गुणः सेवकः उच्चैर्गुणो यस्यैवंविधो वा। कायस्थो राजसेवको गणकजातिविशेषश्चित्रगुप्तनामा लेखको दृग्गोचरः प्रकटोऽभूत्। अथ च—काये देहे तिष्ठतीति कायस्थ एतदीयो नितरां प्रसिद्धः चित्रेणाश्चर्यभूतेन नलाकारेण गुप्तः छादित एवंभूतो गुणः श्यामवर्णः प्रकटोऽभूत्। एवं शब्दश्लेषसायेन सूचितयोर्द्वयोर्विशेषमाह—तत्र एको गणकस्तालपत्रस्योर्ध्वं चोपरि मषीं द्रव्यान्तरेण द्रवीभूतं कज्जलं ददाति एवंभूतः। प्राणिनां शुभाशुभकर्मगणनार्थं मष्या विलिखन्नित्यर्थः। अन्यः कृष्णगुणस्तु मषेरुपरि पत्रं ददत् मषेः सकाशादहं काल इति पत्रालम्बनं कुर्वन्प्रकटोऽभूदित्यन्वयः। अतिश्याम इत्यर्थः। चौ परस्परसमुच्चये त्वर्थे वा ॥ ६६ ॥

तस्यां मनोबन्धविमोचनस्य
कृतस्य तत्कालमिव प्रचेताः।
पाशं दधानः करबद्धवासं
विभुर्बभावाप्यमवाप्य देहम् ॥ ६७ ॥

तस्यामिति ॥ तस्मिन्काले नलवरणानन्तरं विभुः स्वामी प्रचेता वरुण आप्यं पार्थिवतैजसाद्यवयवोपष्टब्ध-

---

१ इच्छन्निवेत्युत्प्रेक्षा अनुप्रासोऽपि शब्दालङ्कार इति त्वन्यत्। २ वह्नेति सहेति च यमकम्, अनुप्रासश्च। प्रकाशोऽप्यप्रकाश इति विरोधाभासः।

१ काल इति यमकम्, कोप इवेत्युत्प्रेक्षा। २ परार्द्धे आगच्छतश्चित्रगुप्तस्य स्वरूपवर्णनात्स्वभावोक्तिः।

प्रचुरतरजलावयवनिर्मितमुपभोगयोग्यमम्मयं देहमवाप्य बभौ । किंभूतः—तस्यां भैमीविषये कृतस्य मनोवन्धविमोचनस्यान्तःकरणवन्धनोन्मोचनस्य [ पूर्वं भैमीविषये पाशेन बद्ध्वा निश्चलीकृत्य याक्षिप्तं मनः, तत्तया नले वृते सति प्रकृतचेतस्त्वात्पुनस्तत्क्षणमेवोन्मोचितम् ] ( तत् ) तदीयमोचनस्येव ( तत् ) संबन्धिनमिव करे बद्धवासं कृतवसतिं पाशं स्वायुधं दधानः । अन्यस्यापि तत्कालमेव कृतवस्त्रादिवन्धनविमोचनस्य हस्ते पाशो बन्धनरज्जुर्भवति । आप्यं पूर्ववत् ॥६७॥

सहद्वितीयः स्त्रियमभ्युपेया-
देवं स दुर्बुध्य नयोपदेशम् ।
अन्यां सभार्यः कथमृच्छतीति
जलाधिपोऽभूदसहाय एव ॥ ६८ ॥

सहेति ॥ स जलाधिपो वरुणः । अथ च—जडस्वामी मूर्खतमः । इति विचार्यासहाय एवाभूत् । इति किम्—सहद्वितीयः ससहायः स्त्रियमभ्युपेयात्, किं पुनरन्यामित्येवंरूपं नयोपदेशं नीतिमार्गं दुर्बुध्य दुष्टमिदमिति विचार्य । 'मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥' तथा—'कामिनी कामयेदेव निर्जने पितरं सुतम् । सद्वितीयोऽभ्युपेयात्तामतः परिणतामपि ॥' इत्यादिवाक्यरूपं स्त्रीपुरुषयोरेकान्ते मदनसंभवादेकेन स्त्रियं प्रति न गन्तव्यम्, किंतु ससहायेनैवेति प्रतिपादनपरं नीत्युपदेशं द्वितीयया सहधर्मिण्या वर्तमानः स्त्रियमुपेयादित्युपदेशपरं बुद्ध्वा । सभार्योऽन्य कथमृच्छति प्राप्नोति, अपि तु न कथंचित् । न ह्यन्यस्यामनुरक्तमन्यानुसरति, न चान्यानुसृतमन्या वृणोतीति नयस्य पूर्वमर्थं त्यक्त्वा द्वितीयमङ्गीकृत्यासहाय एवागत इत्यर्थः।अन्योऽपि जडो नयोपदेशं विपरीतमेव बुध्यते ' द्वितीया सहधर्मिणी ' इत्यमरः । सहद्वितीयः, विकल्पत्वात्सत्वाभावः ॥ ६८ ॥

देव्यापि दिव्याऽनु तनुः प्रकाशी-
कृता मुदश्चक्रभृतः सृजन्ती ।
अनिह्नुतैस्तामवधार्य चिह्न-
स्तद्वाचि बाला शिथिलाऽद्भुताऽभूत् ६९

इदानीं देव्यापि स्वाकारो धृत इत्याह—

१ वाप्येति यमकम् । २ अत्र जलाधिपस्य श्लेषमहिम्ना जडाग्रगणत्वव्यवहारः प्रतीयत इति समासोक्तिः।

देव्येति ॥ अन्विन्द्रादीनां स्वाकारधारणानन्तरं देव्या अपि सरस्वत्या अपि चक्रभृतः श्रीविष्णोः मुदो हर्षान्सृजन्ती प्रेयसितरा दिव्या तनुः सुन्दरा मूर्तिः प्रकाशीकृता । देव्याऽपि स्वाकारो धृत इत्यर्थः । अनन्तरं च बाला भैमी अनिह्नुतैः प्रकटितैर्वीणाहंसादिभिश्चिह्नैस्तां सरस्वतीमवधार्य ज्ञात्वा तद्वाचि श्लेषवक्रोक्त्यादिरूपायां तस्यां वाण्यां विषये शिथिलाद्भुता परित्यक्ताश्चर्याऽभूत् । पूर्वं तु मानुषीयमीदृशं कथं वदतीति साश्चर्याऽभूत् । संप्रति सरस्वतीं दृष्ट्वा अस्या एवमुक्तौ किमाश्चर्यमपि तु न किंचिदिति त्यक्ताश्चर्या जातेत्यर्थः ॥ ६९ ॥

विलोकके नायकमेलकेऽस्मि-
न्रूपान्यताकौतुकदर्शिभिस्तैः ।
बाधा बतेन्द्रादिभिरिन्द्रजाल-
विद्याविदां वृत्तिवधाद्व्यधायि ॥ ७० ॥

विलोकक इति ॥ अस्मिन्नानादेशेभ्यः समागते नायकमेलके राजसंघे विलोकके विलोकयति सति रूपान्यतया नलाकारं परित्यज्य सहस्रनेत्राद्याकारधारणे कौतुकं दर्शयितुं शीलमेषामेवंभूतैर्देवीसहितैरिन्द्रादिभिर्निर्जले जल... दर्शनादिरूपामिन्द्रजालविद्यां ये विदन्ति जानन्ति तेषां वृत्तिवधाज्जीवनोपायस्य स्वयमङ्गीकरणेन नाशाद्बाधाद् व्यधायि पीडा विहिता । बताश्चर्यं कष्टं वा । स्वयंवरमध्य इन्द्रजालं प्रकटयतामैन्द्रजालिकानां विलोककेऽस्मिन् राजसङ्घे तैर्वृत्तिवधात्तेषां बाधा व्यधायि । ऐन्द्रजालिकान् परित्यज्येन्द्रादीनामेव विलोकनादित्यर्थ इति तत्त्वार्थो वा । रूपान्तरं धारयमाणानिन्द्रादीन्दृष्ट्वा सर्वेऽपि साश्चर्या जाता इति भावः । तैः सा च ते च 'पुमान्स्त्रिया १।२।६६' इत्येकशेषः ॥ ७० ॥

विलोक्य तावाप्तदुरापकामौ
परस्परप्रेमरसाभिरामौ ।
अथ प्रभुः प्रीतमना बभाषे
जाम्बूनदोर्वीधरसार्वभौमः ॥ ७१ ॥

विलोक्येति ॥ अथ जाम्बूनदस्य सुवर्णस्योर्वीधरः पर्वतो मेरुस्तस्य सार्वभौमश्चक्रवर्ती अत एव प्रभुः समर्थ इन्द्रः प्रीतमनाः सन् तौ भैमीनलावेतादृशौ विलोक्य बभाषे । किंभूतौ—आप्तोऽन्योन्यप्राप्तिरूपो दुरापोऽन्येन

१ अत्रानुप्रासः । २ अत्राप्यनुप्रासः ।

प्राप्तुमशक्यः कामोऽभिलाषो याभ्याम् । अत एव— परस्परप्रेमरसेनाभिरामौ स्तम्भस्वेदादिसात्त्विकभावयुक्तौ। 'प्रभुः, जाम्बूनदोर्वीधर—' इत्यादिना वरदानसामर्थ्यं सूचितम् । 'प्रीतमनाः' इत्यनेन च स्वेच्छयैव वरं दातुमारब्धवान्न तु याचितः सन्निति प्रतारणाभावं सूचयति । सार्वभौमः । 'तस्येश्वरः ५।४।४२' इत्यण् । अनुशतिकादित्वादुभयपदवृद्धिः ॥ ७१ ॥

वैदर्भि ? दत्तस्तव तावदेष
वरो दुरापः पृथिवीश एव ।
दूत्यं तु यत्त्वं कृतवानमायं
नल प्रसादस्त्वयि तन्ममायम् ॥ ७२ ॥

किमाह स, इत्यत आह—

वैदर्भीति ॥ हे वैदर्भि, मया तावत्प्रथममेष पृथिवीश एव नल एव त्वत्संबन्धी वरः । अथ च देवप्रसादः । अर्थात्तुभ्यं दत्तः । किंभूतः—भूयोभिरपि तपोभिर्दुरापः । दत्तस्तावद्दत्त एवेति वा । इति भैमीमुक्त्वा नलमाह—हे नल, त्वं तु भैमीविषयेऽस्मत्संबन्धि दूत्यं यद्यस्मादमायं व्याजरहितं मनःशुद्ध्या कृतवान्, तत्तस्मात्त्वयि विषये ममाऽयं वक्ष्यमाणः प्रसादः । वरदानमित्यर्थः ॥ ७२ ॥

प्रत्यक्षलक्ष्यामवलम्ब्य मूर्तिं
हुतानि यज्ञेषु तवोपभोक्ष्ये ।
संशेरतेऽस्माभिरवीक्ष्य भुक्तं
मखं हि मन्त्राधिकदेवभावे ॥ ७३ ॥

प्रत्यक्षेति ॥ हे नल, अहं प्रत्यक्षेण लक्ष्यां नेत्रदृश्यां मूर्तिं तनुमवलम्ब्य धृत्वा तव यज्ञेषु हवींषि पुरोडाशादीन्युपभोक्ष्ये । ईदृशेन वरेण मम को लाभ इत्यत आह—हि यस्माद्विद्वांसो यजमानादयश्च मखं यज्ञमस्माभिः साक्षाद्भुक्तमवीक्ष्य मन्त्रादधिकोऽतिरिक्तो देवस्तस्य सद्भावे विषये संशेरते । मीमांसका मन्त्रातिरिक्ता कर्मसमवायिनी देवता नास्त्येवेति वेदान्तिभिः सह विप्रतिपद्यन्ते । तस्मात्तद्विप्रतिपत्तिनिरासद्वारा तुभ्यं कीर्तिं दातुं त्वदीययज्ञेषु हुतं प्रत्यक्षेणैव शरीरेण भोक्ष्य इति भावः । अग्नौ प्रक्षिप्तस्य हविषो भस्मसाद्भावभात्रस्य दर्शनान्मन्त्रप्रकाश्येन्द्रादीनां चादर्शनात्किमयं यज्ञः सत्योऽसत्यो वेति संदेहे प्रत्यक्षशरीरेण मखभोजने त्वयं संदेहो गमिष्यति । कस्मिन् सति—मन्त्रादधिके देवेषु भावे विश्वासे सति । 'मन्त्रमयी देवता' इत्येतत्पक्षापेक्षया प्रत्यक्षायां देवतायामधिकस्य मनोविश्वासस्य युक्तत्वादित्यर्थः । संशयनिवृत्तिरेव महांस्तव लाभो भविष्यतीति भावः । उपभोक्ष्ये, 'भुजोऽनवने १।३ ६६' इति तङ् । अस्माभिरिति वहुवचनं देवतान्तराभिप्रायम् ॥ ७३ ॥

भवानपि त्वद्दयिताऽपि शेषे
सायुज्यमासादयतं शिवाभ्याम् ।
प्रेत्यास्मि कीदृग्भवितेति चिन्ता
संतापमन्तस्तनुते हि जन्तोः ॥ ७४ ॥

भवानिति ॥ हे नल, भवानपि त्वद्दयिता भैम्यपि युवां शेषे भूलोकभोगनिमित्तस्य कर्मणः शेषेऽस्तमये सति शिवाभ्यामीश्वरपार्वतीभ्यां सायुज्यं सह ऐक्यमासादयतं प्राप्नुतम् । भवाञ्शिवेन, भैमी च शिवया सहैक्यं गच्छत्वित्यर्थः । स्वकर्मप्राप्तमिदं स्वयमेव भविष्यति किं वरदानेनेत्यत आह—हि यस्मात्प्रेत्य मरणं प्राप्याहं कीदृक्प्रेतो देवो मनुष्यो वा, स्वर्गस्थो नारकी वा भविता अस्मि भविष्यामीत्यादिश्चिन्ता जन्तोः प्राणिनोऽन्तःकरणे संतापं महान्तमाधिं जनयति । वरदाने चिन्तानिवृत्तेर्मनस्तापनाशः फलमित्यर्थः । शिवाभ्याम्, 'पुमान्स्त्रिया १ । २ । ६७ ।'इत्येकशेषः, । 'अस्मि' इत्यहमर्थेऽव्ययं वा ॥ ७४ ॥

तवोपवाराणसि नामचिह्नं
वासाय पारेसि पुरं पुरास्ति ।
निर्वातुमिच्छोरपि तत्र भैमी-
सम्भोगसङ्कोचभियाऽधिकाशि ॥७५॥

तवेति ॥ हे नल, निर्वातुमिच्छोरपि मुमुक्षोरपि तव वासाय वसत्यर्थमुपवाराणसि काशीसमीपे पारेसि असिनद्याः परतीरे नामचिह्नं त्वन्नामाङ्कितं तत्प्रसिद्धं पुरं नलपुरमिति यावत् । पुराऽस्ति भविष्यति । इदानीमन्यत्र निवासेऽप्यतः परं तत्पुरं राजधानी भविष्यति । मुमु-

१ अत्रमायमिति यमकम् ।

१ उपभोक्ष्य इत्यत्र परार्द्धार्थौ हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम् । २ अत्रापि पूर्ववत् काव्यलिङ्गम् ।

क्षोऽपि ते पुरं काशीमधिकृत्य न कृतमित्यर्थः । किमिति न कृतमित्यत आह—भैम्या सह सम्भोगः सुरतादिसुखं तस्य संकोचोऽल्पत्वं तस्माद्भिया भयेन अधिकाशि पञ्चक्रोशपरिमितायां काश्यां मुक्तिपुर्यां ब्रह्मचर्यादिनियमे भोगसंकोचभिया तत्पुरं न कृतम्, किंतु तत्समीप इति भावः । उपवाराणसि, वाराणस्याः समीप इति सामीप्येऽव्ययीभावः। पारेऽसि,'पारेमध्ये षष्ठ्या वा२।१।१८।' इत्येदन्तत्वं च तत एव निपातनात् । पुरास्ति,'यावत्पुरानिपातयोर्लट् ३ । ३।४। इति लट् । अधिकाशि, सप्तम्यर्थेऽव्ययीभावः ॥ ७५ ॥

धूमावलिश्मश्रु ततः सुपर्वा
मुखं मखास्वादविदां तमूचे ।
कामं मदीक्षामयकामधेनोः
पयायतामभ्युदयस्त्वदीयः ॥ ७६ ॥

धूमेति ॥ ततो धूमावलिरेव श्मश्रु यत्रैवंविधं मखास्वादविदां यज्ञरसाभिज्ञानां देवानां मुखं सुपर्वा देवोऽग्निरिति तं नलमूचे । इति किम्—हे नल, त्वदीयोऽभ्युदयस्त्वत्समृद्धिः कामं नितरां ममेक्षामयी विलोकनमयी विलोकनरूपा कामधेनुस्तस्याः पयायतां दुग्धमिवाचरतु तद्वदपरिमितो भवत्विति । मद्विलोकनमात्रेण तव समृद्धिरनन्तास्त्विति तस्मै वरं दत्तवानित्यर्थः । अन्यत्रापि मुखस्य भापणं श्मश्रु च युक्तम् । कामधेनोः पयो युक्तम् । धूमावलिरूपेण श्मश्रुणा ततो व्याप्त इति वा । पयायताम् । आचारे, 'कर्तुः क्यङ् स लोपश्च' इति क्यङ्सलोपौ ॥ ७६ ॥

या दाहपाकौपयिकी तनुर्मे
भूयात्त्वदिच्छावशवर्तिनी सा ।
तया पराभूततनोरनङ्गात्
तस्याः प्रभुः सन्नधिकस्त्वमेधि ॥७७॥

येति ॥ हे नल, स्फोटादिजनितो दाहः, तण्डुलादेः पाकः, तयोरौपयिकी कारणभूता मे या तनुर्मूर्तिः सा तवेच्छाया वशे वर्तत इत्येवंशीला भूयात् । निरग्निकेऽपि देशे यत्र त्वमभिलषिष्यसि तत्र दाहपाकयोग्या मम मूर्तिः प्रकटा भवत्वित्यर्थः । अत एव वशवर्तित्वात्तस्या मदीयमूर्तः प्रभुः स्वामी संस्त्वं शिवनेत्रज्वालारूपया तया मदीयमूर्त्या पराभूततनोर्दग्धशरीरादनङ्गादधिक एधि भव। पूर्वमेव सुन्दरत्वेन कामादधिकः, इदानीं तु मत्तन्वास्त्ववशवर्तित्वात्त्वद्दासीभूतया कामे पराभूते प्रकारान्तरेणाप्यधिकतरो भवेति भावः ॥ ७७ ॥

अस्तु त्वया साधितमन्नमीन-
रसादि पीयूषरसातिशायि ।
यद्भूप विद्मस्तव सूपकार-
क्रियासु कौतूहलशालि शीलम् ॥७८॥

वरान्तरमाह—

अस्त्विति ॥ हे नल, त्वया साधितं राद्धमन्नं तण्डुलादि, मीना मत्स्याः, रसाः प्रपानकादयो दुग्धादयो वा त आदयो मुख्या यस्य एवंभूतमन्यदपि पाकयोग्यं भक्ष्यं पीयूषरसममृतास्वादमप्यतिशेतेऽतिक्रामति तच्छीलमेवंभूतमस्तु भवतात् । यद्यस्माद्धे भूप, तव सूपकारक्रियासु पाचकनिष्पादितान्नरन्धनकृतिषु कौतुकेन शालते तच्छीलमेवंविधं शीलं स्वभावं विद्मो जानीमः । तस्मात्तुभ्यमीदृशो वरो दत्त इत्यर्थः । 'चित्तम्' इत्यपि पाठः । विद्मः 'अस्मदो द्वयोश्च' इति बहुवचनम् ॥ ७८ ॥

वैवस्वतोऽपि स्वत एव देव-
स्तुष्टस्तमाचष्ट धराधिराजम् ।
वरप्रदानाय तवावदानै-
श्चिरं मदीया रसनोद्धुरेयम् ॥ ७९ ॥

वैवस्वतोऽपीति ॥ वैवस्वतः सूर्यपुत्रो यमोऽपि देवः स्वत एव स्वयमेव तुष्टः सन् धराधिराजं नलमित्याचष्टावोचत् । इति किम्—हे नल, तवावदानैर्द्यूत्यादिकर्मभिर्यागीयपशोरङ्गभावैर्वा निमित्तैरियं मदीया रसना जिह्वा वरप्रदानाय तुभ्यं वरं दातुं चिरमुद्धुरोत्सुका कदा वरं दास्यामीति सोत्कण्ठा विद्यत इति । अहं वरं ददामीत्यर्थः ॥ ७९ ॥

सर्वाणि शस्त्राणि तवाङ्गचक्रे-
राविर्भवन्तु त्वयि शत्रुजैत्रे ।
अवाप्यमस्मादधिकं न किंचि-
ज्जागर्ति वीरव्रतदीक्षितानाम् ॥ ८० ॥

१ अत्ररूपकम् ।

१ अत्रानुप्रासः ।

सर्वाणीति ॥ हे नल, सर्वाणि मन्त्रप्रयोज्यब्रह्मास्त्रादिसहितान्यभ्याससाध्यानि कुन्तखड्गादीनि शस्त्राण्यङ्गानां मोक्षोपसंहारादीनां मन्त्रदेवतादीनां चक्रैः समूहैः त्वय्याविर्भवन्तु प्रकटीभवन्तु। मन्त्रशस्त्रादीनि त्वमेव जानीहीति भावः। यतः—सर्वजैत्रे शत्रूणां जेतरि। किमित्येवं वरदानमित्याशङ्क्याह—संग्रामादपलायनलक्षणे वीराणां व्रते दीक्षितानां गृहीतनियमानां शूराणामस्मात्सर्वशस्त्रज्ञानादधिकमुत्कृष्टं किञ्चिदवाप्यं प्राप्यं न जागर्ति न स्फुरति नास्ति। किंत्वेतदेव तेषां परमं प्राप्यम्। तस्मादयं वरो युक्त एवेत्यर्थः। दीक्षितानाम्, 'कृत्यानां कर्तरि वा २।३।७१' इति षष्ठीः ॥ ८० ॥

कृच्छ्रं गतस्यापि दशाविपाकं
धर्मान्न चेतः स्खलतु त्वदीयम्।
अमुञ्चतः पुण्यमनन्यभक्तेः
स्वहस्तवास्तव्य इव त्रिवर्गः ॥ ८१ ॥

कृच्छ्रमिति ॥ हे नल, कृच्छ्रमतिकष्टं दशाविपाकमवस्थापरिवर्तं गतस्यापि प्राप्तस्यापदि पतितस्यापि तव चेतो धर्मान्न स्खलतु। किंभूतं चेतः—त्वदीयं त्वदायत्तम्। आपदि सर्वैरप्यधर्म एव क्रियते, तव तु चित्तमापद्यपि धर्मपरमेव भूयादिति वरो मया दीयत इत्यर्थः। एतस्य वरस्य दाने हेतुमाह—यस्मात्पुण्यममुञ्चतोऽनन्यभक्तेः पापानासक्तस्य केवलधर्मैकसेविनः पुरुषस्य धर्मार्थकामलक्षणस्त्रिवर्गः स्वहस्ते वसति एवंभूत इव भवति। अत्यक्ते धर्मे तदायत्तावर्थकामावपि प्राप्येते। कृच्छ्रमित्यादिना भविष्यत्कलिप्रभावः सूचितः। 'स्खलतात्त्वेदम्' इति पाठः। अन्यस्य भक्तिर्भजनं तदभावोऽनन्यभक्तिर्धर्मातिरिक्तभजनाभावाद्धेतोरिति वा वसतीति वास्तव्यः 'वसेस्तव्यत्कर्तरि णिच्च' इति तव्यत्। वर्गः सङ्घः। 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः ॥ ८१ ॥

स्मिताञ्चितां वाचमवोचदेनं
प्रसन्नचेता नृपतिं प्रचेताः।
प्रदाय भैमीमधुना वरौ तु
ददामि तद्यौतककौतुकेन ॥ ८२ ॥

स्मितेति ॥ प्रसन्नचेताः संतुष्टः प्रचेता वरुण एनं नृपतिं प्रति स्मिताञ्चितां हासविशदां वाचमवोचत्—हे नल, अहं भैमीं प्रदायाधुना तस्या भैम्या यौतकं युतकयोर्वधूवरयोः संबन्धि पारिबर्हं वस्त्राभरणादि तस्य कौतुकेन तु पुनः द्वौ वरौ ददामि। 'कन्यां प्रदाय यत्किंचिद्वरायात्र प्रदीयते। वेदिकायां स्थितायैव तद्यौतकमिति स्मृतम् ॥' इति। युग्मं युतमेव युतकं युतकसंबन्धि देयं यौतकम्। 'दायजा' इति कान्यकुब्जभाषायाम् ॥ ८२ ॥

यत्राभिलाषस्तव तत्र देशे
नन्वस्तु धन्वन्यपि तूर्णमर्णः।
आपो वहन्तीह हि लोकयात्रां
यथा न भूतानि तथाऽपराणि ॥ ८३ ॥

यत्रेति ॥ ननु हे नल, यत्र धन्वनि निर्जले मरावपि देशे तव जलाभिलाषः, तत्र देशे त्वदिच्छामात्रेण तूर्णं शीघ्रमर्णो जलमस्तु भवतु। जलस्यैव वरदाने हेतुमाह—हि यस्मादिह लोके पञ्चसु भूतेषु वा मध्ये आपो जलानि यथा लोकयात्रां लोकजीवनहेतुत्वं वहन्ति प्राप्नुवन्ति, तथाऽपराणि भूतेजोवाय्वाकाशलक्षणानि भूतानि लोकजीवनहेतवो न भवन्ति। 'पानीयं प्राणिनां प्राणा विश्वमेतच्च तन्मयम्।' इति। उदकस्येच्छानुसारित्वं परमः पुरुषार्थ इत्यर्थः। 'यात्रा तु जीवनोपाये' इति विश्वः ॥ ८३ ॥

प्रसारितापः शुचिभानुनाऽस्तु
मरुः समुद्रत्वमपि प्रपद्य।
भवन्मनस्कारलवोद्गमेन (-)
क्रमेलकानां निलयः पुरेव ॥ ८४ ॥

प्रसारीति ॥ हे नल, मरुर्निर्जलो देशो भवतो मनस्कारोऽभिलाषस्तस्य लवो लेशस्तस्योद्गमेनोदयेन बहूदकात्समुद्रत्वं प्रपद्य प्राप्यापि पुरेव निर्जलत्वदशायां यथाऽऽसीत् तथैवास्तु। किंभूतः—(पूर्वम्) शुचिभानुना ग्रीष्मसम्बन्धिना सूर्येण प्रसारी विस्तृतस्तापः संतापो यस्य। इदानीमपि समुद्रत्वाच्छुभ्रकिरणेन चन्द्रेण प्रसारिता विस्तारिता आपो यस्य। शुचेर्वडवाग्नेः किर-

१ अवाप्यमित्यादिना सामान्येनार्थेन सर्वाणीत्याद्युक्तस्य विशेषार्थस्य समर्थनादर्थान्तरन्यासः। २ अत्रापि त्रिवर्गसिद्धिरूपेण कार्येण धर्मात्यागरूपहेतुसमर्थनात् कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः।

१ अत्राप्यनुप्रासः। ४ अत्रानुप्रासः। नन्वस्त्वित्याद्युक्तस्य विशेषस्यापो वहन्तीत्यादिना सामान्येन समर्थनादर्थान्तरन्यासश्च। यथेत्युपमा च।

-णेन ज्वालया विस्तारितः संतापो यस्येति वा। चन्द्रोदये समुद्रवृद्धिः, समुद्रे वडवाग्निर्युक्तः। तथा—पूर्वम् क्रमेलकानामुष्ट्राणां निलयः स्थानभूतः। बाहुल्येन तेषां तदुद्भवत्वात्। इदानीम् भवन्मनस्कारोऽभिलापस्तस्य लवो लेशस्तदुद्गमे सति नक्राणां यादोविशेषाणां ये मेलकाः सङ्घास्तेषां निलयः। क्रमेलकानां निलयो मरुर्भवन्मनस्कारलवोद्गमे सति समुद्रत्वं प्रपद्यापि पुरेव शुचिभानुना प्रसारितापो नास्तु, अपि तु भवत्वेवेति वा। प्रसारिता आपो यस्येति, 'ऋक्पूरब्धूःपथामानक्षे ५। ४। ७४।' इत्यप्रत्ययः। मनस ऐकाग्र्यकरणं मनस्कारः। चित्तस्यैकाग्र्येण चिन्तनमिच्छाविशेषः। 'चित्ताभोगो मनस्कारः' इत्यमरः। 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८। ३। ४६।' इति सत्वम्॥ ८४॥

अम्लानिरामोदभरश्च दिव्यः
पुष्पेषु भूयाद्भवदङ्गसङ्गात्।
दृष्टं प्रसूनोपमया मयाऽन्य-
न्न धर्मशर्मोभयकर्मठं यत्॥ ८५॥

वरान्तरमाह—

अम्लानिरिति॥ हे नल, भवदङ्गसङ्गाद्धेतोः पुष्पेष्वम्लानिरसंकुचद्वर्णावयवत्वम्, आमोदभरश्च दिव्यः स्वर्गीयः परिमलातिशयश्च भूयात्। यद्यस्मात्प्रसूनोपमया पुष्पसादृश्येन। पुष्पसदृशामित्यर्थः। धर्मस्य पुण्यस्य शर्मणः सुखस्य चोभयस्य पुण्यसुखलक्षणस्य द्वयस्य कर्मठं करणे समर्थमन्यत्पुत्रादिकं वस्तु मया न दृष्टम्। किंतु पुष्पमेव। देवादिपूजनेन धर्मं, शिरसि धारणेन परिमलेन वा सुखं च करोति। कर्मणि घटते 'कर्मणि घटोऽठच् ५। २। ३५।'॥ ८५॥

वाग्देवताऽपि स्मितपूर्वमुर्वी-
सुपर्वराजं रभसाद्बभाषे।
त्वत्प्रेयसीसंमदमाचरन्त्या
मात्किं न किंचिद्ग्रहणोचितं ते॥ ८६॥

वागिति॥ वाग्देवता सरस्वत्यपि स्मितपूर्वम्। प्रसन्नत्वात्किंचित्स्मितं कृत्वेत्यर्थः। उर्व्याः सुपर्वराजं भूमीन्द्रं रभसाद्धर्षादिति बभाषे। इति किम्—हे नल, तव प्रेयसी भैमी तस्यास्त्वत्प्राप्तिजनितं संमदं हर्षमाचरन्त्याः कुर्वत्या मन्मत्तः सकाशात् किंचित्ते तव ग्रहणोचितं ग्रहीतुं योग्यं किं न। अपि तु मत्सकाशादपि किंचिद्ग्रहीतुमुचितमेव। त्वत्प्रियामित्रभूतया मया यद्दीयते तदप्यङ्गीकुर्विति। 'रभसो हर्षवेगयोः' इति विश्वः। सम्मदम्, 'प्रमदसम्मदौ हर्षे ३।३।६५ इति साधुः॥ ८६॥

अर्थो विनैवार्थनयोपसीदन्
नाल्पोऽपि धीरैरवधीरणीयः।
मान्येन मन्ये विधिना वितीर्णः
स प्रीतिदायो बहु मन्तुमर्हः॥ ८७॥

गर्वपरिहारपूर्वं स्ववरस्य ग्रहणयोग्यत्वमेव समर्थयते—

अर्थ इति॥ त्वया मत्समीपमागन्तव्यमिति या अर्थना तया विनैव उपसीदन्समीपमागच्छन्स्वयमेव वा भवन्नल्पोऽप्यर्थः। अर्थ्यतेऽर्थः फलं स धीरैर्मनीषिभिः न अवधीरणीयो नावज्ञेयः किंत्वङ्गीकरणीय एव। यस्मान्मान्येन मानमर्हता पूज्येन विधिना ब्रह्मणा दैवेन वा वितीर्णो दत्तो याच्ञामन्तरेण लब्धत्वात्स प्रीतिदायः प्रीत्या दानम्। अल्पोऽपि बहु मन्तुं गौरवेणाङ्गीकर्तुमर्ह उचित इत्यहं मन्ये। तस्मात्त्वयापि मया योऽल्पोऽप्यर्थो दीयते स ग्रहीतव्य एवेति भावः। रैरल्पोऽप्यर्थो नावज्ञायते किं पुनर्महानित्यपेरर्थः। महतोऽपि वरस्याल्पत्वोक्तेर्गर्वपरिहारः। प्रीत्या दायः 'कर्तृकरणे कृता बहुलम् २।१।३२।' इति समासः। दीयते दायः कर्मणि घञ्॥ ८७॥

अवामावामर्धे सकलमुभयाकारघटना-
द्विधाभूतं रूपं भगवदभिधेयं भवति यत्।
तदन्तर्मन्त्रं मे स्मरहरमयं सेन्दुममलं
निराकारं शश्वज्जप नरपते सिध्यतु स ते॥ ८८॥

तमेव वरमाह—

अवामेति॥ शश्वज्जपो यस्य तत्संबोधनम्, तादृश भो नरपते नल, मे मन्त्रं गोप्यं मदीयरहस्यभूतं सेन्दुमिन्दोर्मा चन्द्रकान्तिस्तत्सहितम्। ईशभागे—चन्द्र-

१ पुरेवेत्युपमा। २ अत्रानुप्रासः। दृष्टमित्यादिनाऽम्लानिरित्यादेः समर्थनादर्थान्तरन्यासः।

१ अत्रानुप्रासः। २ अत्राप्यनुप्रासः। दास्यमानस्य वरस्योपादेयतासमर्थनायार्थ इत्याद्युक्तेरर्थान्तरन्यासः।

कान्त्या युतं चन्द्रकलोपेतम् । पार्वतीभागे—भूषणीभूतार्धचन्द्रयुतम् । उत्करीत्या निश्चित आकारः स्वरूपं यस्य । यद्वा—ईहामात्रेण साकारम्, विचारे क्रियमाणे अविद्यमानाकारम् । तथा—स्मरमयं कामतत्त्वरूपम्, हरमयं शिवतत्त्वरूपं क्रमेण भुक्तिमुक्तिदायि एवंभूतं तद्रूपमन्तःकरणे सते साधवे । अर्थात्तुभ्यम् । यद्वा—हे नरप, (.स–) ते साधवे ते तुभ्यम् । अलमत्यर्थं सिध्यतु । समाधिदशायां साक्षाद्भवत्वित्यर्थः । मे तद्रूपमिति वा । मे मम प्रसादादिति शेष इति वा । स्त्रीणां कामप्रधानत्वात्स्मरपदेन स्त्रीभागो लक्ष्यते । तथा च पूर्वोक्तगुणविशिष्टं स्मरहरमयं शक्तिशिवरूपं तन्मे रूपं तवान्तः सिध्यत्विति वा । पूर्वोक्तं हरमयं मे स्वरूपमलमन्तः स्मर चिन्तय तद्रूपं सते ते सिध्यत्विति वा । तद्रूपमलमन्तः स्मर, तथा शश्वजप स्तुहि, तच्च सिध्यत्विति वा शश्वजपनं जपो यस्य तादृश हे नल, सेन्दुममलं कर्पूरगौरं हरमयं शुभावहविधिभूतं तन्मे विशिष्टं रूपं स्मर, रपते भाषमाणाय स्तुवते सते साधवे तुभ्यं सिध्यतु वा । रपते ते स हरः सिध्यतु साक्षात्कर्मसाधको भवत्विति वा । स्तुवते ते तद्रूपं हरो वा सते शोभमानायाभीष्टाय सिध्यतु । यद्वा—स्मरहरं शिवं शिवरूपं शश्वजप सदा स्तुहि, सोऽयं स्मरहरस्ते सिध्यतु साक्षाद्भवत्विति वा । अन्तर्मध्ये मन्त्राः शैवाः शाक्ताश्च यस्य तादृशमिति वा । तत्किं—यद्रूपं शब्दरूपत्वाद्भगवती च भगवांश्च भगवन्तौ पार्वतीपरमेश्वरावभिधेयं यस्य । यद्वा—भगवच्छब्दवाच्यमर्धनारीश्वरम् । भवति इत्यर्थः । कथम्—यतः द्विधा स्त्रीपुंसरूपौ द्वौ भागौ रूपं भूतम् । प्राप्तमिति वा । एतत्कुत इत्यत आह—यतोऽर्धे दाक्षिणभागे अ[1] वामा न स्त्री, किंतु पुरुष इत्यर्थः । अर्धे वामभागे वामा स्त्री चेति सामर्थ्यादर्धशब्दावृत्त्या योज्यम् । एवं द्विधाभूतमित्यर्थः । अवामं दक्षिणम्, आ सामस्त्येन वामम् आवामम दक्षिणं च अवामावामे च ते अर्धे च समौ भागौ भूतं प्राप्तं सद्द्विधा भवतीति वा । परमुभयोरकारयोः स्वरूपयोर्घटनान्मेलनात्सकलं संपूर्णैकरूपमित्यर्थः । यद्रूपमर्धे वामभागेऽवामा अप्रतिकूला प्रसादावदातकान्तमुखी वामा स्त्री भवति । पार्वतीरूपं भवतीत्यर्थः । तद्धरमयं रूपमित्युक्ते सामर्थ्याद्दक्षिणार्धे महेशः पुरुषरूपं भवति । एतेन शक्त्युद्रेकः सूच्यते । कीदृशं हरं, स्मरहरं वा—सेन्दुम् । तथा—अमलम् । सेन्दुत्वेऽपि कलङ्करहितम् । यत—सकलं कलामात्रचन्द्रयुतम्—कलामात्रं निष्कलङ्कं भवतीत्यर्थ इति वा । कलाभिरणिमाद्यैश्वर्यैः चतुःषष्टिकलाभिश्चोपेतामिति वा । यद्रूपमर्धे अश्चासौ वामा चावामा शक्त्यात्मको विष्णुः । अर्धं मा वा लक्ष्मीश्च वा स्वार्थे । यद्वा—अवतीत्यवा रक्षिका मा लक्ष्मीः । लक्ष्मीनारायणात्मकं भवति । तद्वामनेत्रस्येन्दुरूपतया सेन्दुमम् । ध्याने चन्द्रकलोपेतत्वात्सेन्दुमम् । लक्ष्मीभागे च भूषणीभूतार्धचन्द्रयोगात्सेन्दुमम् । शिवादभिन्नत्वाद्धरमयं लक्ष्मीनारायणात्मकं तन्मे रूपं स्मर जप स्तुहि । यद्रूपमरूपा विष्णुरूपधारिणी वामा शक्तिर्वामार्धे सव्यभागे भवति । तद्धरमयं सामर्थ्याद्दक्षिणभागे शिवरूपमेवंभूतं हरिहरात्मकं मे रूपं स्मर । अन्यत्पूर्ववदिति वा । अर्धे पूर्वभागे अवा ओकारेण तथा—अमा अनुस्वारेण, मा पवर्गपञ्चमव्यञ्जनेन वा । प्रणवेनेत्यर्थः । तथा—उत्तरभागे अवा ओकारेण, तथा—अमा अनुस्वारेण व्यञ्जनमकारेण वा प्रणवेनोपलक्षितम् । प्रणवद्वयसंपुटितमित्यर्थः । हरमयं हर इति नामरूपं मे मन्त्रं मया जप्यमानं रहस्यं स्मर चिन्तय जप । शिष्टं पूर्ववत् । हरस्य पक्षे तु—तन्मे रूपं मन्त्रमन्तर्मनसि स्मर शश्वजपं च । स च ते सिध्यतु । कीदृशं मन्त्रम्—हरमयं हकाररेफरूपम् । तथा—निराकारं अश्च अश्च औ तयोः आकारः स्वरूपम्, स्वरूपे च आकारौ, निर्गतावाकारौ यस्मात्तन्निराकारम् । हकाररेफयोरुच्चारणार्थं यदकारद्वयं तद्रहितं 'ह्र' इति व्यञ्जनमन्त्रं हकाररेफमयमित्यर्थः । तथा—सेन्दुम् इ च इन्दुश्च ताभ्यां सह वर्तमानम् । ईकारेण, अर्धचन्द्रेण च युक्तम् । तथा—सकलं कला अनुस्वारस्तत्सहितम् । ह्रींकाररूपमित्यर्थः । सकलं चन्द्रकलोपेतम् । सेंदुमम् ईकाराविन्दुयुतमिति वा । अमलं शाक्तादिदोषरहितम् । तत्किम्—यद्रूपमर्धे पूर्ववद्दक्षिणवामभागयोः अवा मा, अवा मा च, उपलक्षितं प्रणवद्वयसंपुटितम् । तथा—यत्पूर्वमुभयोर्हकाररेफयोर्घटनात्संबन्धाद्द्विधाभूतं पृथग्भूतमसंयुक्तं ( अव्यवहितं ) सद्भगवान्हरोऽभिधेयो वाच्यो यस्य तादृग्भवति । प्रत्येकमकारयोगात् हर इति शिवनाम यद्भवति । यद्वा—पूर्वं 'हर' इति द्विधाभूतम्

[1] 'अभावे नह्यनो' इत्यमरोक्त्या 'अः स्वल्पार्थेऽप्यभावेऽपि' इत्यव्ययकाण्डे हैमोक्त्या 'अशब्दः स्यादभावेऽपि स्वल्पार्थप्रतिषेधयोः । अनुकम्पायां च तथा वासुदेवे त्वनव्ययः ॥' इति मेदिन्युक्त्या चाशब्दोऽत्र निषेधार्थेऽव्ययरूपः ।

अनन्तरमकारद्वयव्यतिरेकेण व्यञ्जनरूपतया संयोगात्सकलम् । एकीभूतमित्यर्थः । तथा—भगवती भुवनेश्वरी अभिधेया यस्य तादृशमिति वा । 'शिवान्यो वह्निसंयुक्तो ग्रहद्वितयमन्तरा । तुरीयस्वरशीतांशुरेखातारासमन्वितः ॥ एष चिन्तामणिर्नाम मन्त्रः सवार्थसाधकः । जगन्मातुः सरस्वत्या रहस्यं परमं मतम् ॥' इत्यागमात्प्रणवद्वयसंपुटितभुवनेश्वरीरूपं चिन्तामण्याख्यं मे सरस्वत्याः स्वरूपं मन्त्रं स्मर जप । स च मन्त्रस्ते सिध्यतु। शैवादिचिन्तामणिमंत्रसंभवान्म इति विशेषणम् । हश्च रश्च मश्च ईश्च तादृशं हकाररेफमकारेकारसमाहाररूपम्, यद्यपीकारः पश्चान्निर्दिष्टस्तथापि मकारात्पूर्वमेव ज्ञातव्यः। तस्य पश्चान्निर्देशो मन्त्रगोपनार्थः । तथा—सेन्दुं सचन्द्रं निराकारं निर्गताकारचतुष्टयस्वरूपं तादृशं मे मंत्रं स्मर। इतरत्पूर्ववदिति वा । अत्र पक्षे आकाररहितो मन्त्रः सकलं कश्च लश्च कलौ ताभ्यां सहितम्। अत्रापि निराकारं सेन्दुमिति सम्बध्यते । उभयाकारघटनादित्यादि पूर्ववत् । तथा च 'क्लीम्' इति कामराजबीजं सिध्यति । अस्मिञ्श्लोके टीकान्तरकृतो बहूनां शैववैष्णवादिमंत्राणामुद्धारो विज्ञेयः । अत्र ग्रन्थविस्तरभिया कष्टकल्पनया च नोक्तः ॥८८॥

**सर्वाङ्गीणरसामृतस्तिमितया वाचा स वाचस्पतिः—स स्वर्गीयमृगीदृशामपि वशीकाराय मारायते । यस्मै यः स्पृहयत्यनेन स तदेवाप्नोति किं भूयसा—येनायं हृदये स्थितः सुकृतिना मन्मन्त्रचिन्तामणिः॥८९॥**

मन्त्रफलमाह—

सर्वेति । अयं पूर्वश्लोकोपदिष्टो मन्मंत्रश्चासौ चिन्तामणिश्च । चिन्तामणिसंज्ञको मन्मन्त्र इत्यर्थः । सर्वकामदत्वान्मन्मन्त्र एव चिन्तामणिः।चिन्तामणितुल्यो मन्मंत्र इत्यर्थः।स पुरश्चरणादिना क्षीणपापेन सुकृतिना येन साधकेन जपादिना हृदये चित्ते कृतः, स साधकः सर्वाङ्गानि व्याप्नुवन्ति सर्वाङ्गीणानि तैः शृङ्गारादिरसैरेवातिस्वादुत्वादमृतैः स्तिमितया आर्द्रया काव्यादिरूपया वाचा वाचस्पतिर्वागीशो भवति । तथा—स साधकः स्वर्गीयमृगीदृशां दिव्यानां मृगाक्षीणां रम्भादीनामपि वशीकाराय मारायते कंदर्पायते । तं दृष्ट्वा उर्वशीप्रभृतयो देवाङ्गनाः कामपरवशा भवन्तीत्यर्थः । किं च—यः पुरुषः कृतपुरश्चरणोऽपि यस्मै फलाय स्पृहयति फलमभिलष्यति, सोऽनेन सकृत्पठितमात्रेण मन्त्रेण हेतुना तत्प्राप्नोत्येव । किं भूयसा कथनेन, मन्त्रविशेषेण वा । नात्र संदेहः । तस्मात्त्वयाऽयमेव मन्त्रो हृदये धार्य इति भावः । 'सर्वाङ्गीण' इत्यत्र 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ५।२।७' इति खः । वाचस्पतिः, 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ८ । ३ ।५३' इति सत्वम् । 'स्वर्गीय' इति नामधेयत्वात् 'वृद्धाच्छः ४।२।१४४' मारायते 'कर्तुः क्यङ् स लोपश्च ३।१।११' इति क्यङ् । यस्मै 'स्पृहेरीप्सितः १।४।३६' इति सम्प्रदानत्वम्। भूयसा 'बहोर्लोपो भू च बहोः ६।४।१५८'॥८९ ॥

**पुष्पैरभ्यर्च्य गन्धादिभिरपि सुभगैश्चारुहंसेन मां चे-**
**न्निर्यान्तीं मन्त्रमूर्तिं जपति मयि मतिं न्यस्य मय्येव भक्तः।**
**तत्प्राप्ते वत्सरान्ते शिरसि करमसौ यस्य कस्यापि धत्ते**
**सोऽपि श्लोकानकाण्डे रचयति रुचिरान् कौतुकं दृश्यमस्याः ॥ ९० ॥**

पुष्पैरिति ॥ यः साधकश्चारुणा हंसेन निर्यान्तीं गच्छन्तीमुह्यमानाम् । हंसवाहनामित्यर्थः । मन्त्रमूर्तिं यन्त्रमध्यस्थितमन्त्रवर्णरूपेण परिणमदाकारां मन्त्रस्थान्तरशरीरां वा मां देवीं सुभगैरतिमनोहरैः सुकुमारैः सुगन्धिभिश्च पुष्पैः गन्धधूपादिभिः षोडशोपचारैरप्यभ्यर्च्य, तथा—मयि मतिं न्यस्य विषयान्तरादाकृष्य ध्यानबलेन स्थिरीकृत्य देवतान्तरपरिहारेण मय्येव भक्तः सर्वात्मकतया मामेव सेवमानः सन् चेद्यदि जपति, तत्तर्ह्यसौ जापको वत्सरान्ते वत्सरावसाने प्राप्ते जाते सति यस्य कस्यापि स्त्रीबालमूकादेरपि शिरसि करं धत्ते स्थापयति सोऽपि स्त्रीबालादिरप्यकाण्डेऽसमयेऽकस्माद्वा रुचिरान्रसभावगुणालंकारयुतानदोषाञ्श्लोकान्रचयति । यस्तु सिद्धमन्त्रः, स विविधाञ्श्लोकान्रचय-

---

१ अत्र शिखरिणी वृत्तम् । वामेति यमकम् ।

१ अत्र च पद्ये शार्दूलविक्रीडितं वृत्तम् । अत्रानुप्रासः । मन्त्रप्रभावस्य 'सर्वार्थसाधकत्वोक्तेरुदात्तम् । 'उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम् । इति तल्लक्षणात् ।

वीति किं वाच्यमित्यपरेऽर्थः । एतदस्याः कौतुकं द्रश्यम्। अनुभवेनायमस्याश्चमत्कारो द्रष्टव्य इत्यर्थः । एवं संपूज्य हंसवाहनादिध्यानपूर्वमेकाग्रेण मनसा चेज्जपाति, तर्हि वत्सरमात्रेण सिद्धमन्त्रः सन्नेवविधं सामर्थ्यं लभत इति भावः ॥ ९० ॥

**गुणानामास्थानीं नृपतिलक नारीति विदितां**
**रसस्फीतामन्तस्तव च तव वृत्ते च कवितुः।**
**भवित्री वैदर्भीमधिकमधिकण्ठं रचयितुं**
**परीरम्भक्रीडाचरणशरणामन्वहमहम् ॥९१॥**

गुणानामिति ॥ हे नृपतिलक राजश्रेष्ठ नल, अहं, वैदर्भी भैमीम् । अथ च—वैदर्भीसंज्ञां रीतिमल्पपदसमासमसमासं वा रचनाविशेषं क्रमेण तव च नलस्य तव च वृत्ते त्वत्सम्बन्धिनि चरित्रे विषये कवितुः काव्यकरणोद्युक्तस्य श्रीहर्षादेश्चाधिकण्ठम् कण्ठेऽन्वहं सदा परीरम्भस्यालिङ्गनस्य चुम्बनादिविलासस्य यदाचरणं करणं तदेव शरणं जीवनोपायो यस्या एवं भूताम् । परीरम्भक्रीडया वा हेतुभूतया त्वच्चरणशरणमालिङ्गनप्रार्थनार्थं त्वच्चरणयोः पतन्तीम् । अथ च—परीरम्भस्य श्लेषालंकारस्य क्रीडाया वक्रोक्तिविलासस्य आ सामस्त्येन यच्चरणं ज्ञानं तदेव शरणं यस्यामेवंविधाम् । अधिकं यथा तथा नितरां रचयितुं कर्तुं भवित्री भविष्यामि । किंभूताम्—गुणानां सौन्दर्यपातिव्रत्यादीनाम् । अथ च—श्लेषप्रसादादीनाम् । आस्थानीं सभारूपामवस्थितिभूताम् । तथा—नारी इति स्त्री इति विदितां नारी चेत्, तर्हि भैम्येव नान्येति प्रसिद्धाम् । अथ च—रीतिषु पाञ्चाल्यादिषु विदिता, तथा न इत्यरीतिविदिता तथाविधापि न इति नारीतिविदिता तादृशीम् । पाञ्चाल्यादिषु रीतिषु मध्येऽतिप्रसिद्धामिति यावत् । तथा—तवान्तः हृदये रसेन स्वीयसौभाग्येन नलविषयानुरागेण स्वस्मिन्नलानुरागेण वा स्फीतामतिपुष्टाम् । अथ च—अन्तः श्लोकमध्ये रसः श्रृङ्गारादिभिः परिपुष्टाम् । एवंभूतां भैमीत्वत्कण्ठालिङ्गनपरां त्वच्चरणशरणां त्वदेकवश्यां प्रत्यहमहं करिष्यामि । त्वच्चरितवर्णयितुश्च कण्ठे एवंभूतां वैदर्भीं रीतिमधिकं च रचयिष्यामि । वैदर्भीमेव रमणीयां रीतिमवलम्ब्य त्वच्चरितवर्णको यथा भवति तथाहं करिष्यामीति भावः । एतदपि वरदानम् ।'नर' इति संबुद्ध्यन्तं पृथक्कृत्य राजश्रेष्ठ नः पुरुष इति संबोध्य पातिव्रत्यादिरीत्या विदितां पाञ्चाल्यादिरीतिषु च विदितामिति वा । 'श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ।' इत्यालंकारिकाः । 'आस्थानी क्लीबमास्थानम्' इत्यमरः ।आतिष्ठन्त्यस्याम् इत्यधिकरणे ल्युट् । टित्वान्ङीप् । 'ना रीति–' इत्यत्र पक्षे 'ढ्रलोपे पूर्वस्यदीर्घोणः६।३।१११ इति दीर्घः । कवितुः, 'कवृ वर्णने' 'कवृङ् स्तुतौ' इत्यस्य वा । अधिकण्ठं सप्तम्यर्थेऽव्ययीभावः ॥ ९१ ॥

**भवद्वृत्तस्तोतुर्मदुपहितकण्ठस्य कवितु-**
**र्मुखात्पुण्यैः श्लोकैस्त्वयि धनमुदेयं जनमुदे।**
**ततः पुण्यश्लोकः क्षितिभुवनलोकस्य भविता**
**भवानाख्यातः सन्कलिकलुषहारी हरिरिव९२**

वरान्तरमाह—

भवदिति ॥ मदुपहितकण्ठस्य मयाऽधिष्ठितस्वकण्ठस्य भवतो वृत्तस्य चरित्रस्य स्तोतुः कवितुः कवेः मुखात्सकाशात्त्वयि विषये पुण्यैश्चारुभिरमलैश्च श्लोकैः पद्यैर्यशोभिश्च घनं निबिडं यथा तथा जनानां मुदे हर्षाय उदेयमुदेतव्यम् । ततोऽनन्तरं तस्माद्वा हेतोर्भवान् क्षितिभुवनलोकस्य भूविष्टपजनस्य कलियुगसंबन्धिकलुषहारी पातकहरणशीलः सन् हरिः श्रीविष्णुरिव पुण्यश्लोकः पुण्यश्लोक इति ख्यातो भविता भविष्यति । यद्वा—पुण्यश्लोकः सन् क्षितिभुवनलोकस्य कलिकलुषहारी हरिरिव भविता । पुण्यौ चारू निर्मलौ श्लोकौ पद्ययशसी यस्येति विग्रहः । 'पुण्यश्लोको नलो राजा' इति पुण्यश्लोकत्वम् । 'कर्कोटकस्य नागर्षेः' इत्यादिना कलिनाशकत्वमुक्तम् । 'पद्ये यशसि च श्लोकः' इत्यमरः । उदेयम्,'अचो यत् ३।१।९१' इति यत्॥९२॥

**देवी च ते च जगदुर्जगदुत्तमाङ्ग-**
**रत्नाय त कथय कं वितराम कामम्।**
**किंचित्त्वया नहि पतिव्रतया दुरापं**
**भस्मास्तु यस्तव बत व्रतलोपमिच्छुः ९३**

देवीति॥देवी च ते चन्द्रादयो भैमीं जगदुरिति ऊचुः। इति किम्—हे भैमि, वयं जगतस्त्रैलोक्यस्योत्तमाङ्गं शिरस्तस्य रत्नाय भूषणमणिभूतायै अतिसुन्दर्यै ते तुभ्यं कं

१ अत्रानुप्रासः । स्रग्धरा छन्दः ।

१ अत्राग्रिमे च पद्ये शिखरिणी छन्दः । अत्रानुप्रासः । वैदर्भीमित्यादौ श्लेषः । २ अत्रानुप्रासः, उपमा च ।

कामं वितराम ददाम । अपि तु किमप्यस्मद्दानयोग्यं नास्तीत्यर्थः । हि यस्माद्यद्यपि पतिव्रतया त्वया किंचिदपि वस्तु दुरापं न, किंतु पातिव्रत्यात्सर्वमपि त्वया सुप्रापमेव, तथापि यस्तव पातिव्रत्यलोपं पातिव्रत्यभङ्गमिच्छुरभिलष्यति त्वया सह रन्तुमिच्छेत्स भस्मैवास्तु । बत कष्टम् । अनुचितकर्मा स इत्यर्थः । कामम्, 'अकर्तरि च कारके' इति कर्मणि घञ् । त्वया, खलर्थयोगे षष्ठीनिषेधात्तृतीया । व्रतलोपम्, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधाद्द्वितीया ॥ ९३ ॥

कूटकायमपहाय नो वपु-
र्बिभ्रतस्त्वमसि वीक्ष्य विस्मिता ।
आप्नुमाकृतिमतो मनीषितां
विद्यया हृदि तवाप्युदीयताम् ॥ ९४ ॥

वरान्तरमाह—

कूटेति ॥ हे भैमि, त्वं नोऽस्मान्वीक्ष्य यतो विस्मिताऽसि, अतो मनीषितामाकृतिमाकारं स्वेच्छाशरीरं प्राप्तुं तवापि हृदि मनसि विद्यया नानादेहस्वीकारहेतुभूतया मन्त्रादिशक्त्या उदीयतामुत्पद्यताम् । अस्माकं हृदि यथोदितं तथा तवापीत्यपिशब्दार्थः । अपिशब्दान्नलस्यापीति केचित् । किंभूतान्नः—कूटकायं स्वेच्छामात्रेण धृतं मायानलशरीरमपहाय त्यक्त्वा पुनर्दिव्यं निजं वपुर्बिभ्रतो धारयतः । अन्योऽपि प्रभुर्यद्वस्तुदर्शनात्सेवकादिः साश्चर्यो भवति तद्वस्तु तस्मै प्रयच्छति । उदीयतामिति भावे लिः ॥ ९४ ॥

इत्थं वितीर्य वरमम्बरमाश्रयत्सु
तेषु क्षणादुदलसद्विपुलः प्रणादः ।
उत्तिष्ठतां परिजनालपनैर्नृपाणां
स्वर्वासिवृन्दहतदुन्दुभिनादसान्द्रः ॥ ९५ ॥

इत्थमिति ॥ इत्थं पूर्वोक्तप्रकारेण नलाय भैम्यै च वरं वितीर्य दत्त्वा देवीसहितेषु तेष्विन्द्रादिष्वम्बरं स्वर्गं प्रति गन्तुमुद्यतेषु प्रारब्धगमनोद्योगेषु सत्सु क्षणात्क्षणमात्रेणोत्तिष्ठतां स्वं स्वं शिविरं प्रति गन्तुमुत्थितानां नृपाणां परिजनालपनैः सेवकसंभाषणैर्जयजीवादिशब्दैः । राज्ञमेव वाऽश्वाद्यानयनार्थं परिजनान्प्रतिभाषणैः कृत्वा विपुलो दशदिग्व्यापी प्रणाद उदलसत् । उदित इत्यर्थः । कीदृशः—भैमीनलविवाहोत्सवदर्शनात्, आगच्छन्नायिकानायकावलोकनहर्षाद्वा, स्वर्वासिवृन्दैर्देवसङ्घैर्हतानां दुन्दुभीनां नादैः सान्द्रो निबिडीभूतः । देवेषु निर्गतेषु राजानोऽभ्युत्थिताः, तेषां तत्सेवकानां च महान्कलकलश्च संजातः, देवैश्च दिव्यवाद्यान्याहतानीत्यर्थः । वरम्, जात्यभिप्रायेणैकवचनम् । सा च ते च तेषु, 'पुमान्स्त्रिया १।२।६७' इत्येकशेषः । उत्तिष्ठतामूर्ध्वकर्मत्वात्तङ् न ॥ ९५ ॥

न दोषं विद्वेषादपि निरवकाशं गुणमये
वरेण प्राप्तास्त्रे न समरसमारम्भसदृशम् ।
जगुः पुण्यश्लोके प्रतिनृपतयः किंतु विदधुः
स्वनिश्वासैर्भैमीहृदयमुदयन्निर्भरदयम् ९६॥

नेति ॥ प्रतिकूला नृपतयः पुण्यश्लोके विद्वेषाद्भैमीप्राप्तिजनितविशिष्टमत्सरादपि हेतोरसुन्दरदुःशीलनादिकं दोषं न जगुर्न जगदुः । यतो—नले निरवकाशमसन्तम् । यतः—गुणमये सौन्दर्यशीलादिगुणबहुले पुण्यश्लोके च । वैरिणापि सन्नेव दोषः प्रकाश्यते न त्वसन् । सुहृदा तु सन्नपि दोषो गोप्यते । तथा च—विद्वेषे सत्यपि गुणमयत्वाद्दोषलेशसंभावनाया अप्यभावाद्दोषं नोचुरित्यर्थः । तथा—बलाद्भैमीहरणार्थं समरसमारम्भः, तस्य सदृशं तद्योग्यमधिक्षेपपरुषभाषणादिकमपि नोचुः । यतः—यमवरेण प्राप्तास्त्रे लब्धदिव्याग्नेयाद्यस्त्रे स्वतः शूरे वरेण च नितरां दुर्धर्षे । तस्मादसामर्थ्यात्किंचिन्नोचुरित्यर्थः । किंतु—गत्यन्तररहिताः सन्तो निजासामर्थ्यकृपास्पदत्वसूचकैः स्वनिश्वासैः कवोष्णैर्निजमुखनासिकानिःश्वसितैः कृत्वा भैमीहृदयम् उदयन्ती निर्भरा बहुला दया यस्यैवंभूतमतिसकृपं विदधुश्चक्रुः । अतिदीनांस्तान्दृष्ट्वा भैमी नितरां सकृपाऽभूदिति भावः । भैम्या हृदयभूतं प्राणभूतं नलं स्वनिश्वासैः सकृपं चक्रुरिति वा ॥ ९६ ॥

भूभृद्भिर्लम्भिताऽसौ करुणरसनदीमूर्तिमद्देवतात्वं तातेनाभ्यर्थ्य योग्याः सपदि निजस-

१ अत्र वसन्ततिलका वृत्तम् । अत्रानुप्रासः । २ अत्र रथोद्धता वृत्तम् । 'रान्नराविह रथोद्धता लगौ' इति तल्लक्षणात् । अत्रानुप्रासः ।

१ अत्र वसन्ततिलका वृत्तम् । अनुप्रासः शब्दालङ्कारश्च । २ अत्र शिखरिणी वृत्तम् । अनुप्रासश्चालङ्कारः ।

खीदर्पयामास तेभ्यःवैदर्भ्यास्तेऽप्यलाभात्कृतगमनमनःप्राणवाञ्छां विजघ्नुः सख्यः संशिक्ष्य विद्याः सततधृतवयस्यानुकाराभिराभिः ॥ ९७ ॥

भूभृद्भिरिति ॥ भूभृद्भी राजभिः शोकस्थायिभावस्य करुणाख्यस्य रसस्य । अथ च—जलस्य । नदी तस्या मूर्तिमत्या देवताया भावं लम्भिता प्रापिता जलदेवतास्थाने स्थापिता तन्निःश्वासैः करुणरसार्द्रीकृतचित्ता सती असौ भैमी सपदि ममाद्याप्राप्तेः एते नितरां दुःखिताः । तस्मादतिसुन्दरीर्मत्सखीरेतेभ्यो देहीत्यञ्जलियोजनेन । अर्थात्तातमेव । अभ्यर्थ्य संप्रार्थ्य निजसखीः स्वसहचरीर्योग्या रूपकुलशीलादिना तेषां भार्यात्वे समुचितास्तेन पित्रा तेभ्यो राजभ्यो दापयामास । तेभ्यः सखीदाने भीमं प्रावर्तयदित्यर्थः । ते राजानोऽपि वैदर्भ्या अलाभात्कृतं गमने देहत्यागविषये मनो यैस्तेषां प्राणानां वाञ्छामाभिः सखीभिर्विजघ्नुः । भैमीसखीलाभात्प्रारब्धगमनान्प्राणान्पुनः स्ववर्तयन्नित्यर्थः । यतः—किंभूताभिः—भैम्याः सकाशादिन्द्रादिदेवेभ्यो वरप्राप्तां यादृच्छिकशरीरनिर्माणादिरूपां विद्यां संशिक्ष्य सम्यगभ्यस्य सततं प्रत्यहं धृतो वयस्याया भैम्या अनुकारो याभिः । तुल्यशरीरकलाकौशलाभिरित्यर्थः । ततश्च भैमीप्राप्तिबुद्ध्यैव स्वप्राणान् रक्षितवन्त इति भावः । लम्भिर्द्विकर्मा । सख्याः, 'आख्यातोपयोगे १।४।२९ इत्यपादानत्वम् ॥ ९७ ॥

अहह सह मघोना श्रीप्रतिष्ठासमाने
निलयमभि नलेऽथ स्वं प्रतिष्ठासमाने ।
अपतदमरभर्तुर्मूर्तिबद्धेव कीर्तिर्गलदलिमधुबाष्पा पुष्पवृष्टिर्नभस्तः ॥९८॥

अहहेति ॥ अथ राजभ्यः सखीदानानन्तरं मघोना इन्द्रेण सह श्रीः संपत्प्रतिष्ठा माहात्म्यं ताभ्यां समाने स्वं निजं निलयं स्थानमभि लक्षीकृत्य प्रतिष्ठासमाने जिगमिषति नले नभस्तो गगनात्पारिजातादिदेववृक्षाणां पुष्पवृष्टिरपतत् । अहहेति हर्षे । भैम्या नले वृते हृष्टैर्देवैर्नलस्योपरि पुष्पवृष्टिः कृतेत्यर्थः । उत्प्रेक्षते—बद्धा धृता मूर्तिर्यया सा मूर्तिबद्धा । यद्वा मूर्त्या बद्धा युता साकारा । गलन्तः पतन्तोऽलयो भ्रमरा यत्र एवंविधं मधु एव बाष्पा यस्याः अधःपतनजनितदुःखमुक्तसनिःश्वासजलाश्रुविन्दवो यस्या एवंभूता । अमरभर्तुरिन्द्रस्य कीर्तिरिव । पुष्पाणां शुभ्रत्वात्कीर्तित्वम् । भैम्या चावृतत्वादिन्द्रस्य कीर्तिर्गलितेति युक्तम् । स्वर्गादधःपाते दुःखादश्रु च युक्तम् । स्त्रीणां चाश्रु सकज्जलं भवति । मकरन्दो बाष्पस्थाने, तदनुगता भ्रमराः कज्जलस्थाने । समानशब्दस्य समासान्तर्गतत्वात्साक्षात्तुल्यार्थयोगाभावात् 'मघोना' इति तृतीयार्थमनुप्रासार्थं च साक्षात्सहशब्दप्रयोगः । प्रतिष्ठासमाने इति, 'समवप्रविभ्यः स्थः १।३।२२' इति तङो विधानात् 'पूर्ववत्सनः १।३।६२' इति तङ् ॥ ९८ ॥

स्वस्यामरैर्नृपतिमंशममुं त्यजद्भि-
रंशाच्छिदाकदनमेव तदाऽध्यगामि ।
उत्का स्म पश्यति निवृत्य निवृत्य यान्ती
वाग्देवताऽपि निजविभ्रमधाम भैमीम् ९९॥

स्वस्येति ॥ तदा स्वर्गगमनसमये अमुं नृपतिं नलं त्यजद्भिरमरैरंशस्य स्वावयवस्य छिदा कर्तनं तया यत्कदनं दुःखं तदेवाध्यगामि प्रापि । यतः—स्वस्य इन्द्रादेरंशम् । लोकपालांशत्वाद्राज्ञः । स्वहस्तादिकर्तने यादृग्दुःखं भवति, तादृशमेव तेषां नलपरित्यागे जातमिति भावः । यान्ती स्वर्गं प्रति गच्छन्ती वाग्देवतापि भैमीं निवृत्य निवृत्य पुनः पुनः व्याघुट्य वलितग्रीवं यथ तथा पश्यति स्म । किंभूताम्—निजविभ्रमाणां स्वीयवचनचातुर्यादिविलासानां धाम स्थानभूताम् । किंभूता—उत्का कियत्सहवासमात्रानुभूतगुणगणप्रेमभरतया सोत्कण्ठा । परित्यक्तुमशक्तेत्यर्थः । अन्योऽप्यन्यत्र गच्छन्निजं विलासगृहमुत्कः सन्निवृत्य पश्यति । पुरुषाणां पुरुषेषु,स्त्रीणां च स्त्रीषु सौहार्दमिति नलपरित्यागे तेषाम्, भैमीपरित्यागे च देव्याः सोत्कण्ठता युक्ता।निजं सारस्वतं विलासगृहं यान्ती इति वा । छिदा इति 'पिद्भिदादिभ्योऽङ् ३।३।१२४'॥ ९९ ॥

---

१ अत्र स्रग्धरा छन्दः । अत्राप्यनुप्रासः, वयस्यानुकारेत्युपमा च ।

१ अत्र मालिनी वृत्तम् । प्रतिष्ठासमाने इति यमकम् । मूर्तिबद्धेवेत्युत्प्रेक्षोपमयोः सन्देहसङ्करः, गलदित्यादौ रूपकं च । २ अत्र वसन्ततिलका वृत्तम् । अनुप्रासः, निवृत्त्येति यमकमिति तु न भ्रमितव्यं, पृथगर्थकत्वाभावात् ।

सानन्दं तनुजाविवाहनमहे भीमः स भूमीपति–र्वैदर्भीनिषधेश्वरौ नृपजनानिष्टोक्तिनिर्मृष्टये। स्वानि स्वानि धराधिपाश्च शिबिराण्युद्दिश्य यान्तः क्रमा–देको द्वौ बहवश्चकारसृजतः स्मातेनिरे मङ्गलम् १००॥

सानन्दमिति ॥ स भीम एको भूमिपती राजा तनुजाया भैम्या विवाहनं पाणिग्रहणं तल्लक्षणे महे महोत्सवे विषये माङ्गलिकतूर्यवादनादिकं मङ्गलं सानन्दं सहर्षं यथा तथा चकार । वैदर्भीनिषधेश्वरौ च द्वौ क्षणमात्रं तत्र स्थितावेवासूयका नृपजना राजसंघाः । नृपाणां वा ये जनाः सेवकास्तेषामनिष्टोक्तयः कर्णकठोराणि यानि मृषादोषारोपणवचनानि तासां नितरां मृष्टये परिमार्जनायाशुभवचनानाकर्णनाय नृत्तगीतवाद्यबहुलं प्रेक्षणीयकादिदर्शनश्रवणादिरूपं मङ्गलं सृजतः स्म चक्राते। 'अमङ्गलं नाकर्णनीयम्' इति वैदर्भीनिषधेश्वरौ गीतवाद्याद्याकर्णनव्याजेनामङ्गलपरिहारं चक्रतुः । बहवः सर्वे धराधिपाश्च राजानोऽपि स्वानि स्वानि शिबिराणि सेनानिवेशानुद्दिश्य लक्षीकृत्य यान्तो गच्छन्तः सन्तः प्राप्तभैमीसदृशदयिताः पटहनिस्वनादिरूपं मङ्गलमातेनिरे चक्रुः। वाद्यानि वादयामासुरित्यर्थः । एतच्च सर्वं क्रमात्। पूर्वं भीमश्चकार, अनन्तरं भैमीनलौ चक्राते, ततो राजानश्चक्रुरिति क्रमः। किंच––एकः, द्वौ, बहवः, इति क्रमः । तथा––चकार, सृजतः स्म, आतेनिरे इति च क्रमः । सानन्दमिति सर्वत्र वा संबन्धनीयम् । श्रेष्ठजामातृलाभाद्भीमस्य हर्षः परस्परं लाभाद्भैमीनलयोः सुन्दरभैमीसखीलाभाद्राज्ञामिति ज्ञेयम् । विवाहनं, ण्यन्तान्नपुंसके भावे 'ल्युट् च ३।३।११९' इति ल्युट् ॥ १०० ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं-श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । यातस्तस्य चतुर्दशः शरादिजज्योत्स्नाच्छसूक्तेर्महा–काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः १०१

श्रीहर्षमिति ॥ शरादिजा शरत्कालिकी , ज्योत्स्ना चन्द्रिका तद्वदच्छा निर्मला निर्दोषा प्रसन्ना आह्लादजनिका च शोभना उक्तिर्यस्य तस्य श्रीहर्षस्य कवेः कृतौ महाकाव्ये चतुर्दशानां पूरणः सर्गः समाप्तः । चतुर्दशानां पूरणः इत्यर्थे 'तस्य पूरणे डट्' इति डट् । 'शरदिजा' इति 'सप्तम्यां जनेर्डः ३ । २ । ९७' इति डप्रत्यये 'प्रावृट्शरत्कालदिवां जे ६।३।१५' इति सप्तम्या अलुक् ॥ १०१ ॥

१ अत्राग्रिमे च पद्ये शार्दूलविक्रीडितं वृत्तम् । अनुप्रासः शब्दालङ्कारश्च ।

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे चतुर्दशः सर्गः ॥

---

## पञ्चदशः सर्गः ।

अथ नैषधस्य विवाहं वर्णयितुमुपक्रमते––

अथोपकार्यां निषधावनीपति-
र्निजामयासीद्वरणस्रजाश्रितः ।
वसूनि वर्षन्सुबहूनि बन्दिनां
विशिष्य भैमीगुणकीर्तनाकृताम्॥ १ ॥

अथेति ॥ अथ एवं देवान्प्रसाद्य भैम्या नले वृते ताभ्यां वरान्दत्त्वा देवेषु प्रारब्धस्वर्गगमनेषु सत्सु, अनन्तरं भैम्या स्वयंवरे वरणस्रजा मधूकमालयाश्रितः पूजितः स निषधावनीपतिः नलोऽपि भीमेन स्वनिवासार्थं रचितां निजां स्वीयां नलेनैव वा कारितां पटमयद्रव्यादिरूपम् उपकार्यामयासीत् ययौ । किं कुर्वन्––अन्येषां बन्दिनां सुबहूनि वसूनि वर्षन् । भैमीगुणानां कीर्तनम् । आसामस्त्येन कुर्वन्तीति कृतः तेषां तु बन्दिनां, विशिष्य विशेषं कृत्वा वर्षणान्यापेक्षया तेभ्योऽधिकं प्रयच्छन् । बन्दिनां, संबन्धसामान्ये षष्ठी ॥ १ ॥

तथा पथि त्यागमयं वितीर्णवान्
यथाऽतिभाराधिगमेन मागधैः ।
तृणीकृतं रत्ननिकायमुच्चकै-
श्चिकाय लोकश्चिरमुञ्छमुत्सुकः ॥ २ ॥

धनदानस्य सुबहुत्वमेव विवृणोति––

तथेति ॥ अयं नलः पथि त्यागं कीर्त्यर्थं साधारण्येन दीयमानं धनं तथा तेन प्रकारेण वितीर्णवान्, यथा येन

१ अस्मिन् सर्गे प्रायः समाप्ति यावद्वंशस्थं छन्दः।
२ अत्रानुप्रासः ।

प्रकारेण मागधैर्वन्दिजातिविशेषैरतिभाराधिगमेनातिशयगुरुत्वप्राप्त्या वहुतरं लब्धं धनं वोढुमशक्तेः परिपूर्णत्वाच्च निरपेक्षत्वात्तृणीकृतं तृणवत्त्यक्तं रत्ननिकायं रत्नसंमूहमुच्चकैः नितरामुत्सुकोऽहमहमिकया ग्रहीतुं प्रवृत्तो लोकः उञ्छं भूपतितमणुकणगणं चिरं वहुकालं चिकाय उच्चित्य आददे । रत्ननिकायमेव उञ्छमिति रूपकम् । उच्चकैर्वहुमूल्यं रत्ननिकायमिति वा । अनेनास्य दानशूरत्वमुक्तम् । उञ्छो धान्यस्य कणश आदानम् । रत्नादाने त्वौपचारिकः प्रयोगः । त्यज्यते त्यागः । कर्मणि घञ् । 'वितेनिवान्' इति पाठे त्यागमिति भावे घञ् । दानं चकारेत्यर्थः । निकायमिति, 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३ । ३ । ४१ ।' इति घञ्, आदेश्च कः । चिकायेति, 'विभाषा चेः' ६ । २ । १६४ ।' इति कुत्वम् ॥ २ ॥

त्रपाऽस्य न स्यात्सदसि स्त्रियाऽन्वयात्
कुतोऽतिरूपः सुखभाजनं जनः ।
अमूदृशी तत्कविवन्दिवर्णनै-
रवाक् कृता राजकराञ्जिलोकवाक् ॥३॥

त्रपेति ॥ असाविव दृश्यत इति अमूदृशी एतत्सदृशी अन्याऽपि भैम्यवृत्तानि राजकानि नृपसङ्घास्तानि रञ्जयतीत्येवंशीलास्तदनुजीविनो लोकास्तेषां मृषावाक् दोषारोपणरूपा तस्य नलस्य तयोर्वा भैमीनलयोः कवयः प्रवन्धकर्तारः, वन्दिनश्च प्राकृतादिभाषावर्णनचतुराः, तेषां वर्णनैः कर्तृभिरवाक् कृता तिरस्कृता । तेषां प्रचुरतारस्वरवर्णनतिरोहितत्वात्सा वाक् ताभ्यां नाकर्णितैवेत्यर्थः । वाक् अवाक् कृता अशब्दरूपा कृता ध्वनिमात्रं श्रुतम्, न त्वर्थव्यञ्जकः शब्दः श्रुत इति वा । असौ का—सदसि नानादेशमिलितजनसमाजे तत्समक्षं स्त्रिया अन्वयात्सम्वन्धादस्य नलस्य लज्जा न स्यात् । अपि तु लज्जया भवितुं युक्तम् । न च तया जातम् इति निर्लज्जोऽयमित्येका वाक् । तथा—अतिरूपः सुन्दरो जनः श्रीरामचन्द्रजानकीवत्कुतः सुखभाजनं सुखस्थानम् । अपि तु—रूपवाञ्जनो दुःख्येवेति दृष्टत्वात्सुरूपयोरनयोरपि दुःखं भवितैवेत्यन्या वाक् अवाक् कृतेति विरोधाभासः । सदसि स्त्रिया अन्वयाद्धेतोर्लज्जाऽस्य न स्यादेवेत्ययं निर्लज्जः । अतिसुरूपश्च भवादृशो जनो भैमीप्राप्तिजनितसुखभाजनं कुतः, अपि तु न । रूपवान्हि रम्यां प्रियां न लभते अतो रूपवन्तो भवन्तोऽपि रम्यां प्रियां नालभन्त इति स्वं स्वं प्रति सेवकवचनमिति वा । अतिरूपो भैमीलक्षणो जनः कुतः सुखभाजनम् । अपि तु न । एवंभूतानां राज्ञामप्राप्तेरिति वा । अमूदृशी, अदस्शब्दे उपपदे 'त्यदादिषु दृशः ३ । २ । ६० ।' इति कञि दृग्दृशवतुषु 'आ सर्वनाम्नः' इत्यात्वे 'अदसोऽसेर्दादु दो मः ८ । २ । ८० ।'इत्यूत्वे मत्वे च 'टिड्ढाणञ् ४ । १ । १५ ।' इति ङीप् । अवाक् कृता इति पदद्वयम् ॥ ३ ॥

अदोषतामेव सतां विवृण्वते
द्विषां मृषादोषकणाधिरोपणाः ।
न जातु सत्ये सति दूषणे भवे-
दलीकमाधातुमवद्यमुद्यमः ॥ ४ ॥

राजकीयैर्निन्दायां कृतायामपि तयोर्निर्दोषत्वमाह—

अदोषतामिति ॥ द्विषां मृषा अविद्यमानस्य दोषकणस्य दोषलेशस्य अधिरोपणा आरोपाः सतामदोषत्वमेव विवृण्वते प्राकट्येन कथयन्ति । कथम्—यतः सत्येन दूषणे सति विद्यमाने अलीकमसत्यमवद्यम् आधातुमारोपयितुं खलानां जातु कदाचिदपि उद्यमः प्रयत्नारम्भो न भवेत् । सति दोषे विद्यमानत्वादेव नारोपः । अयं तावदारोप्यते, ततश्चासति दोषे तदारोपणं निर्दोषतामेव व्यनक्तीत्युभयथापि परदोषोद्घाटनमनुचितमित्यर्थः । सर्वथा तौ निर्दोषावेव इति भावः । सत्ये दूषणे सति खलानामलीकं दोषमाधातुमुद्यमः कदाचिन्न भवेत् । अपि तु सत्यदोषाभावे अलीकमपि दोषं वदन्ति । ततश्च निर्दोषत्वमेवागतमित्यर्थ इति वा । अथ च—सत्ये परब्रह्मस्वरूपे श्रीरघुनाथे विषये असत्यसाधौ दूषणाख्ये राक्षसे अवद्यमलीकं दुष्टमप्रियं कर्तुमुद्यमः किं कदाचिन्न भवेत् ? अपि तु—श्रीरामचन्द्रे विषयेऽपि दूषणाख्येन राक्षसेनाप्रियं कर्तुमुद्यमः कृत एव । तथापि यथा स निर्दोषः, तथा तैर्निन्दायां कृतायामपि निर्दोषावेव तावित्यर्थः । यद्वा—वह्नौ सीतायाः पातिव्रत्यपरीक्षणादपरीक्ष्य परिग्रहादिदोषेऽसत्यपि परब्रह्मस्वरूपे श्रीरघुनाथे कदाचित्तमेकं दोषमाधातुं प्रयत्नः किं न स्यात् । अपि तु लोकः प्रयतत एव । तथापि यथा तत्त्वतः स

१ अत्रोदात्तमर्थालङ्कारः, रत्ननिकायस्य तृणीकरणायोगेऽपि तथोक्तेरतिशयोक्तिश्च ।

१ वागवाक् कृतेत्यत्रापेरभावाद्विरोधाभासो व्यज्यते ।

निर्दोष एव तथा तावपीति भावः । वैरिभिः सत्यमप्युक्तमलीकं भवति मृषोद्यं तु किमुतेति सूचितम् । द्विषाम्, कर्तरि षष्ठी ॥ ४ ॥

विदर्भराजोऽपि समं तनूजया
प्रविश्य हृष्यन्नवरोधमात्मनः ।
शशंस देवीमनुजातसंशयां
प्रतीच्छ जामातरमुत्सुके नलम् ॥ ५ ॥

विदर्भेति ॥ विदर्भराजोऽपि उत्तमजामातृप्राप्त्या हृष्यन्सन् तनूजया समं सह आत्मनोऽवरोधमन्तःपुरं प्रविश्य भैमी नलं वरिष्यति, अन्यं वेति अनुजातः पुनः पुनर्जातः संशयो यस्यास्तां देवीं भैमीमातरं शशंस इत्यवोचत् । इति किम्—हे उत्सुके, जामातरि नले उत्कण्ठिते, त्वं नलं जामातरं भैमीपतिं प्रतीच्छ जानीहि ॥ ५ ॥

तनुत्विषा यस्य तृणं स मन्मथः
कुलश्रिया यः पविताऽस्मदन्वयम् ।
जगत्त्रयीनायकमेलके वरं
सुता परं वेद विवेक्तुमीदृशम् ॥ ६ ॥

नामग्रहणमात्रेण सूचितस्य नलस्य गुणगणं वर्णयति—तन्विति ॥ यस्य तनुत्विषा कायकान्त्या हेतुना स सौन्दर्येण प्रसिद्धो मन्मथः तृणमिवाकिंचित्करः । तथा—यः कुलश्रिया वंशपरिशुद्ध्या कृत्वा कौलीन्यात्प्रसिद्धतराणामस्माकमप्यन्वयं पविता पावनं कर्ता । अस्मत्तोऽपि महाकुलीन इत्यर्थः । जगत्त्रय्या नायकमेलके वरसमूहमध्ये ईदृशमदृग्गुणं नायकरत्नं वरं परिणेतारं विवेक्तुं निर्णेतुं परं केवलं तव सुता वेद जानाति नान्योऽस्मदादिः । न विद्यते परः श्रेष्ठो यस्मादिति वरविशेषणं वा । पविता लुट् ॥ ६ ॥

सृजन्तु पाणिग्रहमङ्गलोचिता
मृगीदृशः स्त्रीसमयस्पृशः क्रियाः ।
श्रुतिस्मृतीनां तु वयं विदध्महे
विधीनिति स्माह च निर्ययौ च सः ॥ ७ ॥

१ अत्र पूर्वार्द्धस्य परार्द्धेन समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः । २ मन्मथस्तृणमिति रूपकम्, मन्मथस्य तृणत्वाभावेऽपि तथोक्तेर्निदर्शना चेत्यनयोरङ्गाङ्गिभावात्मा सङ्करश्च ।

सृजन्त्विति ॥ स भीम इत्याह स्म च, निर्ययौ चान्तःपुरान्निरगाच्च । चकारो विवाहत्वरां द्योतयति । इति किम्—हे मृगीदृशो हरिणेक्षणाः सुवासिन्यः, भवत्यः पाणिग्रहो विवाहस्तद्रूपे मङ्गले उचिताः । तथा—स्त्रीणां समय आचारः तं स्पृशन्ति ता योषिदाचारप्राप्ता दुर्गादिकुलदेवतापूजातैलयवारम्भादिक्रियाः सृजन्तु कुर्वन्तु । वयं तु पुनः श्रुतिस्मृतीनां विधीन् शूर्पेण जुहोतीत्यादीन्; मधुपर्कादिकांश्च, वैदिकान्, स्मार्तांश्च विधीन्विदध्महे कुर्महे इति । एवमादिश्य तदानीमेव निर्गत इत्यर्थः । पाणिग्रहमङ्गलोचितयोषिदाचारज्ञा वृद्धाः, सुवासिनीविशेषणं वा । समयस्पृशः, 'स्पृशोऽनुदके क्विन् ३।२।५८' इति क्विन् । वयं, 'अस्मदो द्वयोश्च १।२।५९' इति बहुवचनम् ॥ ७ ॥

निरीय भूपेन निरीक्षितानना
शशंस मौहूर्तिकशंसदंशकम् ।
गुणैररीणैरुदयास्तनिस्तुषं
तदा स दातुं तनयां प्रचक्रमे ॥ ८ ॥

निरीयेति ॥ भूपेन भीमेन निरीय अन्तःपुरान्निर्गत्य निरीक्षितानना मौहूर्तिकानां ज्योतिषिकाणां संसत्सभा अंशकं वैवाहिकं लग्नं शशंस । स च भीमस्तदा तस्मिन्नंशके तनयां नलाय दातुं प्रचक्रमे मुहूर्तविलम्बानुरोधेन प्राक्कालिकाञ्श्रौतान्स्मार्तांश्च विधीनचीकरदित्यर्थः । किंभूतमंशकम्—अरीणैः सम्पूर्णैः जामित्रगुणैरुपलक्षितम् । तथा—शुक्रगुर्वाद्युदयास्तमयप्रयुक्तदोषैर्निस्तुषं रहितम् । ग्रहाणां गुणदोषादिकं ज्योतिःशास्त्रादवगन्तव्यम् । निरीय, 'ईङ् गतौ' । मौहूर्तिकाः, 'मुहूर्तं वेद' इत्यर्थे 'क्रतूक्थादि-' इत्युक्थादित्वाट्ठक् । अंशमेव अंशकम् स्वार्थे कन् । अरीणैः, स्वादित्वात् 'ओदितश्च ८।२।४१' इति निष्ठानत्वम् । निर्गतं तुषात् । तुषो दोषलेशः ॥ ८ ॥

अथावदद् दूतमुखः स नैषधं
कुलं च बाला च ममानुकम्प्यताम् ।
स पल्लवत्वद्य मनोरथाङ्कुर-
श्चिरेण नस्त्वच्चरणोदकैरिति ॥ ९ ॥

अथेति ॥ अथ लग्नांशके सन्निहिते दूतः एव मुखं यस्य स भीमः नैषधमित्यवदत् । इति किम्—भवता मम

१ अत्रानुप्रासः ।

कुलं च बाला च कृपया अनुकम्प्यतामङ्गीक्रियताम्। बालायामनुगृहीतायां सर्वोऽपि मम वंशोऽनुगृहीतः स्यादित्यर्थः। तथा—चिरेण चिरंतनो नोऽस्माकं सर्वेषां स प्रसिद्धः त्वत्संबन्धविषयो मनोरथरूपोऽङ्कुरोऽद्यास्मिन्दिने त्वच्चरणोदकैस्त्वदीयचरणक्षालनोदकैः पल्लवतु पल्लव इवाचरतु। पल्लवितो भवत्वित्यर्थः। पल्लवसहितो भवत्वेकं वा पदम्। कश्चन संदेशहरं प्रेष्य तं सविनयमाकारयति स्मेति भावः। अन्यत्रापि चिरसंचितोऽङ्कुरो जलैः पल्लवितो भवति। स(-) पल्लवतु आचारे क्विप्॥ ९॥

तथोत्थितं भीमवचःप्रतिध्वनिं
निपीय दूतस्य स वक्त्रगह्वरात्।
व्रजामि वन्दे चरणौ गुरोरिति
ब्रुवन्प्रदाय प्रजिघाय तं बहु॥ १०॥

तथेति॥ स नलो दूतस्य वक्त्रादेव गह्वरात्कन्दरात्तथा पूर्वोक्तप्रकारेण यथा भीमेनोक्तं तथैवोत्थितं भीमवचसः प्रतिध्वनिं प्रतिशब्दं निपीय सादरमाकर्ण्येति ब्रुवंस्तस्मै दूताय बहु प्रचुरं वस्त्रालंकारादि प्रदाय तं प्रजिघाय प्राहिणोत्। इति किम्—हे दूत, अहं व्रजामि इदानीमेव गच्छामि गत्वा च गुरोः श्वशुरस्य चरणौ वन्दे नमस्करोमीति। प्रतिशब्दत्वरूपणेन राजादेशानुवादस्य न्यूनाधिकत्वशङ्का परिहृता। व्रजामि वन्दे च, 'वर्तमानसामीप्ये वर्तमानवद्वा ३। ३। १३१' इति भविष्यति लट्॥ १०॥

निपीतदूतालपितस्ततो नलं
विदर्भभर्ताऽऽगमयाम्बभूव सः।
निशाऽवसाने श्रुतताम्रचूडवा-
ग्यथा रथाङ्गस्तपनं धृतादरः॥ ११॥

निपीतेति॥ ततो दूतप्रत्यागमनानन्तरं निपीतं सादरं श्रुतं दूतालपितं दूतवचनं येन स विदर्भभर्ता भीमो धृतादरः सादरः सन् नलमागमयांबभूव प्रतीक्षितवान्। पुनरपि दूतैरानाययति स्मेति वा। यथा निशावसाने ब्राह्मे मुहूर्ते श्रुता प्राभातिकी ताम्रचूडस्य कुक्कुटस्य वाक् येन स रथाङ्गश्चक्रवाको धृतादरः सन् तपनं सूर्यं प्रतीक्षते कदा वा उदेष्यतीति। 'कृकवाकुस्ताम्रचूडः' इत्यमरः॥ ११॥

क्वचित्तदालेपनदानपण्डिता
कमप्यहंकारमगात्पुरस्कृता।
अलम्भि तुङ्गासनसंनिवेशना-
दपूपनिर्माणविदग्धयाऽऽदरः॥ १२॥

क्वचिदिति॥ तदा नलागमनसमये क्वचित्स्थाने लेपनदाने सुधालेपचित्रादिकर्मणि पण्डिता कुशला काचिद्रमणी पुरस्कृता तन्निर्माणार्थमेव सम्माविता सती स्वप्रार्थनावशात्कमप्यहङ्कारमभिमानमगात्प्राप। अनिर्वचनीयं गौरवं धृत्वा सुधालेपादि चकारेत्यर्थः। चतुष्कनिर्माणार्थं हरिद्राचूर्णमिश्रितं तण्डुलपिष्टं तस्य दाने आलेपकरणे कुशला। क्वचिद्विजने रमणीये वा प्रदेशे तस्या भैम्या आलेपनदाने अङ्गोद्वर्तने कुशलेति वा। तयोर्भैमीनलयोर्वा। तथा—क्वचित्प्रदेशेऽपूपनिर्माणे मण्डकरचनायां विदग्धया चतुरया कयाचित्तुङ्गासन उच्चचतुरङ्गाद्यासने संनिवेशनादुपवेशनाद्धेतोरादरो गौरवमलम्भि प्राप्तम्। उच्चासनसंनिवेशनाददरो वह्नितापभयाभावः प्राप्तः इति वा। जातावेकवचनम्। काश्चिच्चित्रादिकर्म काश्चिच्चापूपादिनिर्माणं चक्रुरिति भावः॥ १२॥

मुखानि मुक्तामणितोरणोद्गतै-
र्मरीचिभिः पान्थविलासमाश्रितैः।
पुरस्य तस्याखिलवेश्मनामपि
प्रमोदहासच्छुरितानि रेजिरे॥ १३॥

मुखानीति॥ तस्य पुरस्य, तथा तत्सम्बन्धिनामखिलवेश्मनामपि मुखानि द्वारोपान्तरूपाण्याननानि मुक्तायुक्तानां मणीनां रत्नानाम्, मुक्तानां च मणीनां च वा, तोरणास्तेभ्य उद्गतैर्निर्गतैरत एव पान्थविलासमुत्थाय दूरं प्रसर्पणशीलानां पान्थानां विलासमाश्रितैर्मरीचिभिः किरणैः कृत्वा वरागमनसमये प्रमोदहासेन हर्षजहास्येन छुरितानि मिश्रितानीव रेजिरे। सर्वाण्यपि पुरद्वाराणि गृहद्वाराणि च मुक्तामणितोरणैरलंकृतानि। सर्वं च पुरं सानन्दमभूदिति भावः। हास्यं मुखे भवति। तस्य पुरस्य सम्बन्धिनां वेश्मनामिति व्याख्याने न केवलं पुरलोकानां मुखानि प्रमोदहासच्छुरितानि, किंतु गृहा-

१ अत्र दूतमुख इति मनोरथाङ्कुर इति च रूपकम्। २ गह्वरादिति रूपकम्।

१ अत्रोपमा। २ अत्रानुप्रासः। स्वभावोक्तिश्च।

णामपीत्यपेरर्थः । 'तोरणात्तदा' इति पाठे तोरणात्पान्थविलासमाश्रितैरुत्थाय दूरं प्रसर्पणशीलैरिति व्याख्येयम् ॥ १३ ॥

पथामनीयन्त तथाधिवासनात्
मधुव्रतानामपि दत्तविभ्रमाः ।
वितानतामातपनिर्भयास्तदा
पटच्छिदाकालिकपुष्पजाः स्रजः ॥ १४ ॥

पथामिति ॥ पटच्छिदाभिर्वस्त्रच्छेदैर्निर्मितान्याकालिकान्यसमयजानि यस्मिन्काले यानि न भवन्ति तादृशानि पुष्पाणि तेभ्यो जातास्तन्निर्मिताः स्रजो मालास्तदा वरागमनसमये पथां पुरमार्गाणां वितानतामुल्लोचतामनीयन्त प्रापिताः । किंभूताः—यथा मालत्यादिपुष्पाणां वासः, तथाऽधिवासनात्सुगन्धिद्रव्यैः परिमलारोपणान्मधुव्रतानामपि दत्तो विशिष्टो भ्रमो याभिः । सर्वदा मधुन्येव ये निवसन्ति तेषामपि अकृत्रिमाण्येवैतानि पुष्पाणीति तेषामपि दत्तभ्रान्तयः किमुतान्येषामिति मधुव्रतपदेन सूचितम् । तथा—वस्त्रमयत्वादातपनिर्भया ऊष्मजम्लानिरहिताः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । 'छिदा' 'आकालिक' इति च पूर्ववत् ॥ १४ ॥

विभूषणैः कञ्चुकिता बभुः प्रजा
विचित्रचित्रैः स्नपितत्विषो गृहाः ।
बभूव तस्मिन्मणिकुट्टिमैः पुरे
वपुः स्वमुर्व्याः परिवर्तितोपमम् ॥ १५ ॥

विभूषणैरिति ॥ तस्मिन्पुरे प्रजाः पौरा जानपदाश्च विभूषणैरलंकारैः कञ्चुकिता नानारत्नकान्तिच्छादितसर्वावयवाः सन्तो बभुः शुशुभिरे । तथा—वर्णमात्रकल्पितेषु निर्जीवेष्वपि रूपकेषु जीवभ्रमापादनादिचमत्कारकरणाद्विचित्रचित्रैराश्चर्यकारिभिः कुड्यलिखितनानावर्णरूपकैः स्नपितत्विष उज्ज्वलीकृतदीप्तयो गृहा बभुः । एवं जंगमस्थावररूपान्यतया तथा मणिकुट्टिमैश्च मणिबद्धभूमिभिः कृत्वा उर्व्याः स्वं सहजं मृन्मयं वपुः केनापि ब्रह्मादिना परिवर्तिता उपमा यस्य तद्रूपान्तरं प्रापितमिव बभूव । पातालस्य रम्यतरत्वात्पातालमुपरिजातमिवेत्यर्थ इत्युत्प्रेक्षा। परिवर्तिता विनिमयिता उपमा उपमानं स्वर्गादि येन । उपमानत्वेन प्रसिद्धस्य स्वर्गस्योपमेयत्वं कृतम् । स्वयं च तस्योपमानं जातमित्यर्थ इति वा । 'स्वरुर्व्याः' इति पाठ स्वर्गात्सकाशात्परिवर्तितोपममिव बभूवेत्यर्थः । मणिकुट्टिमैरुपलक्षिते पुरे वा । सर्वमपि तदा सालंकारं जातमिति भावः । कञ्चुकस्तारकादिः ॥ १५ ॥

तदा निसस्वानतमां घनं घनं
ननाद तस्मिन्नितरां ततं ततम् ।
अवापुरुच्चैः सुषिराणि राणिता-
ममानमानद्धमियत्तयाध्वनीत् ॥ १६ ॥

तदेति ॥ तदा नलागमनसमये तस्मिन्पुरे घनं कांस्यतालादिवाद्यं घनं निबिडं यथा तथा निसस्वान शब्दं चकार । तथा—ततं वीणादिवाद्यं ततं विस्तृतं यथा तथा नितरां ननाद शब्दं चकार । तथा—सुषिराणि सच्छिद्राणि वंशादिवाद्यानि उच्चैर्नितरां राणितां शब्दकृत्त्वम् अवापुः । तथा—आनद्धं मुरजादिवाद्यमियत्तया इदंपरिमाणत्वेनामानमपरिच्छेद्यं यथा तथाऽध्वनीत् । घनं दृढावयवं बहुसंख्यं वेति घनविशेषणं वा । तथा—ततं स्वरूपेण विस्तृतं बहुसंख्याकं वेति ततविशेषणं वा । तथा—इयत्तया अमानं बहुसंख्यमित्यानद्धविशेषणं वा । चतुर्विधमपि वाद्यं तत्र वादितमित्यर्थः । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम्' इत्यमरः । राणिताम्—अवश्यं रणन्तीति 'आवश्यकाधमर्ण्ययोर्णिनिः ३।३।१७०' इति णिनौ राणीनि तेषां भावस्तत्ता ताम् । अध्वनीत्, 'अतो हलादेर्लघोः ७।२।७' इति वृद्धिविकल्पः ॥ १६ ॥

विपञ्चिराच्छादि न वेणुभिर्न ते
प्रणीतगीतैर्न च तेऽपि झर्झरैः ।
न ते हुडुक्केन न सोऽपि ढक्कया
न मर्दलैः साऽपि न तेऽपि ढक्कया ॥ १७ ॥

विपञ्चिरिति ॥ वेणुभिर्वंशध्वनिभिर्विपञ्चिर्वीणाध्वनिर्न आच्छादि । ते च वेणुध्वनयः प्रणीतं प्रारब्धं गीतं यैर्द्रुतमध्यादिमूर्च्छनापूर्वमुच्चैर्गायद्भिर्गायकैर्गायकगीतैः न

१ पुरमुखानां प्रमोदहासच्छुरितत्वासम्भवेऽपि तथोक्तिः साम्योपनिबन्धनार्थेति निदर्शनाऽतिशयोक्त्यनुप्राणिता । २ अत्रानुप्रासः ।

१ परिवर्तितोपमामिवेति प्रतीतेरुत्प्रेक्षाध्वनिः । २ अत्रानुप्रासो यमकं च ।

आच्छादिषतेति सर्वत्र विपरिणामेन व्याख्येयम् । झर्झरैर्झर्झराख्यैः कांस्यमयैर्वाद्यविशेषैर्ध्वनिभिः कृत्वा तेऽपि गायकध्वनयोऽपि न च नैवाच्छादिषत । हुडुक्केन लघीयसा कांस्यमयवाद्यविशेषेण ते झर्झरध्वनयो नाच्छादिताः । ढक्कया वादित्रविशेषेण सोऽपि हुडुक्कध्वनिर्नाच्छादि । मर्दलैर्मृदङ्गध्वनिभिः सा ढक्काऽपि नाच्छादि । ढक्कया तेऽपि मर्दला अपि नाच्छादिताः। अनपेक्षितगौरवलाघवं वाद्यमात्रं तत्र मिलितम् समश्रुतितालमाना अपि विपञ्च्यादिध्वनयो वादकौशलात्प्रव्यक्तं भेदेनोपलब्धा इति भावः । विपञ्च्यते स्वरोऽस्यां विपञ्चिः, औणादिक इन्प्रत्ययः ॥ १७ ॥

विचित्रवादित्रनिनादमूर्च्छितः
सुदूरचारी जनतामुखारवः ।
ममौ न कर्णेषु दिगन्तदन्तिनां
पयोधिपूरप्रतिनादमेदुरः ॥ १८ ॥

विचित्रेति ॥ विचित्राणि नानाविधानि वादित्राणि तेषां निनादैर्मूर्च्छितो वर्धितः । तथा—सुतरां दूरचारी दूरसञ्चरणशीलो जनता जनसङ्घस्तस्य मुखारवो मुखशब्दः पयोधिपूरे समुद्रप्रवाहे प्रतिनादेन प्रतिशब्देन, पयोधिपूरस्य तटे प्रतिशब्दस्तेन वा मेदुरः परिपुष्टः सन् दिगन्तदन्तिनां दिक्प्रान्तवर्तिदिक्पालहस्तिनां कर्णेषु न ममौ । तत्कर्णानपि परिपूर्य बहिर्गत इत्यर्थः । नानाजातीयमिश्रणादेकीभूतो जनशब्दो दिगन्तपर्यन्तं समुल्लासेति भावः । 'स दूर-' इति पाठे सः।अतिमहानित्यर्थः ॥ १८ ॥

उदस्य कुम्भीरथ शातकुम्भजा-
श्चतुष्कचारुत्विषि वेदिकोदरे ।
यथाकुलाचारमथावनीन्द्रजां
पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम् ॥ १९ ॥

उदस्येति ॥ अथ सर्ववाद्यवादनानन्तरं पुरन्ध्रिवर्गः स्त्रीसमयज्ञकुलवृद्धसुवासिनीसमूहश्चतुष्कसंज्ञेन नानावर्णकल्पितस्वस्तिकसर्वतोभद्रादिमण्डलेन चार्वी रमणीया त्विट् कान्तिर्यस्य एवंभूते कूर्मपृष्ठचतुरस्रहस्तमात्रोच्छ्रितत्वादिसुकल्पिते वेदिकाया उदरे मध्ये शातकुम्भजा सुवर्णघटिताः कुम्भीरुदस्य उत्क्षिप्य यथाकुलाचारं स्त्रीणां भैम्याश्च कुलाचारानतिक्रमेणाथ मङ्गलं मङ्गलगीतपूर्वं यथा तथा तामवनीन्द्रजां भैमीं स्नपयाम्बभूव । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति वचनात् एकोऽथशब्द आनन्तर्ये, द्वितीयस्तु मङ्गल इति ज्ञेयम् । 'यथाविधानं नरनाथनन्दनीम्' इति च पाठः । स्नपयाम्बभूव, मित्त्वाद्धुपधाह्रस्वः ॥ १९ ॥

विजित्य दास्यादिव वारिहारिता-
मवापितास्तत्कुचयोर्द्वयेन ताः ।
शिखामवाक्षुः सहकारशाखिन-
स्त्रपाभरम्लानिमिवाननैर्मुखैः ॥ २० ॥

विजित्येति॥ताःकुम्भ्यस्तस्या भैम्याः कुचयोर्द्वयेन गौरत्वकाठिन्यादिगुणातिशयेन विजित्य दास्यादिव वारिहारितां जलवाहित्वमवापिताः । प्रापिता इव वा सत्य आननैर्मुखैः सहकारशाखिन आम्रवृक्षस्य शिखां त्रपाभरेण जनितां म्लानिं वैवर्ण्यकालिमानामवाक्षुर्वहन्ति स्म । पराजितोऽपि ह्रीभरेण नम्रमुखो वारिहारितां प्रापितः सन् म्लानिं धत्ते।कलशीमुखे माङ्गलिकाश्चूतपल्लवा निक्षिप्यन्त इत्याचारः । अवाक्षुः । 'वह प्रापणे' लुङि ॥ २० ॥

असौ मुहुर्जातजलाभिषेचना
क्रमाद्दुकूलेन सितांशुनोज्ज्वला ।
द्वयस्य वर्षाशरदां तदातनीं
सनाभितां साधु बबन्ध सन्ध्यया ॥ २१ ॥

असाविति ॥ मुहुर्जातं जलाभिषेचनं यस्या असौ भैमी क्रमात्सितांशुना सिततन्तुना दुकूलेन क्षौमाम्बरेणोज्ज्वलिता भूषिता सती वर्षाश्च शरदश्च तासां द्वयस्य संध्यया संधिना तदातनीं तदाभवां तात्कालिकीं सनाभितां तुल्यतां साधु सम्यक् बबन्ध दधौ । वर्षाश्च कृतजलाभिषेकाः, शरच्च सितांशुना चन्द्रेणोज्ज्वला द्वयोः संधिरुभयगुणोपेतः । वस्त्रपरिधानात्पूर्वं प्रावृट्सदृशी, अनन्तरं शरत्सदृशी जातेत्यर्थः ॥ २१ ॥

पुरा प्रभिन्नाम्बुददुर्दिनीकृतां
निनिन्द चन्द्रद्युतिसुन्दरीं दिवम् ।

---

१ अत्रैकावली, 'स्थाप्यतेऽपोह्यते वाऽपि यथा पूर्वं तथा परम्। विशेषणतया यत्र वस्तु सैकावली स्मृता ॥' इति तल्लक्षणात् । २ अत्रानुप्रासः न ममावित्यत्र हेतुः पयोधीत्यादिरिति काव्यलिङ्गम् ।

१ ग्लानिमिवेत्युत्प्रेक्षा । २ अत्रोपमा ।

शिरोरुहौघेण घनेन वर्षता
क्वचिद्दुकूलेन सितांशुनोज्ज्वला ॥२२॥

पुरेति ॥ सा दिवं निनिन्द । तत्तुल्या जातेत्यर्थः । किम्भूताम्—पुरा वर्षासु प्रभिन्नैरतिघनैः । क्षरद्भिर्वा । अम्बुदैर्दुर्दिनीकृतां जलप्लाविताम् । अनन्तरं शरदारम्भे चन्द्रद्युतिसुन्दरीम् । किंभूता—क्वचिद्वर्षता शिरोरुहौघेण केशपाशरूपेण घनेन मेघेनोपलक्षिता । तथा—दुकूलेनैव सितांशुना चन्द्रेणोज्ज्वला । प्रभिन्नाम्बुदस्थानेऽतिनिविडकेशपाशः । चन्द्रचन्द्रिकास्थाने दुकूलम् ॥ २२ ॥

विरेजिरे तच्चिकुरोत्कराः किराः
क्षणं गलन्निर्मलवारिविप्रुषाम् ।
तमःसुहृच्चामरनिर्जयार्जिताः
सिता वमन्तः खलु कीर्तिमुक्तिकाः २३

विरेजिर इति ॥ तस्याश्चिकुरोत्कराः केशसङ्घा विरेजिरे । किंभूताः—गलतां निर्मलानां वारिविप्रुषामुदबिन्दूनां क्षणं किरन्तीति किरा विक्षेपकाः । उदबिन्दून्मुञ्चन्त इत्यर्थः । किंभूता इव—तमसः सुहृन्दि सदृशान्यतिश्यामानि चामराणि तेषां निर्जयेनार्जिताः स्वीकृत्य संगृहीताः सिताः शुभ्राः कीर्तिरूपा मुक्तिका वमन्तः खलु । इवार्थे खलुशब्दः । कृष्णचामरादप्यतिसुन्दरस्तत्केशपाश इति भावः । विप्रुषाम्, कर्मणि षष्ठी ॥२३॥

म्रदीयसा स्नानजलस्य वाससा
प्रमार्जनेनाधिकमुज्ज्वलीकृताः ।
अदभ्रमभ्राजत साश्मशाणनात्
प्रकाशरोचिःप्रतिमेव हेमजा ॥ २४ ॥

म्रदीयसेति ॥ सा भैमी अदभ्रमधिकमभ्राजताशोभत। किंभूता सा—स्नानजलस्य प्रमार्जनेन प्रोञ्छनकारिणा म्रदीयसा कोमलतरेण वाससा कर्तृणा । स्नानजलस्य प्रमार्जनेन करणेन वा । पूर्वापेक्षयाऽधिकं यथा तथा उज्ज्वलीकृता । केव—अश्मशाणनात् शिलोत्तेजनाद्धेतोः प्रकाशं पूर्वापेक्षयाऽतिदीप्रं रोचिर्दीप्तिर्यस्याः सा हेमजा सौवर्णी देवादीनां प्रतिमेव । शिलाघर्षणात् 'ओपिता' इति सुवर्णकारपरिभाषा । प्रमार्जनेन, प्रथमपक्षे नन्द्यादित्वात्कर्तरि ल्युः । द्वितीयपक्षे भावे ल्युट् । 'शाण तेजने' भौवादिकस्तस्माल्ल्युट् ॥ २४ ॥

तदा तदङ्गस्य बिभर्ति विभ्रमं
विलेपनामोदमुचः स्फुरद्रुचः ।
दरस्फुरत्काञ्चनकेतकीदलात्
सुवर्णमभ्यस्यति सौरभं यदि ॥ २५ ॥

तदेति॥ सुवर्णं दरमीषत्स्फुटद्विकसत्काञ्चनकेतकीदलं तस्मात्सौरभं सौगन्ध्यं यदि अभ्यस्यति शिक्षते, तदा तर्हि तदङ्गस्य भैमीशरीरस्य विभ्रमं विलासं विशिष्टां भ्रान्तिं वा बिभर्ति । किंभूतस्य—विलेपनस्य यक्षकर्दमादेरङ्गरागेणामोदं मुञ्चति तस्य । तथा—स्फुरन्ती रुग् दीप्तिर्यस्य । स्वाभाविकगौरकान्तिनः । अभ्यङ्गानन्तरमङ्गरागः कृत इति भावः । 'यदि तर्हि' इति संबन्धात् 'अभ्यस्यति बिभर्ति' इति लिङर्थे लट् । क्रियाऽनिष्पत्तिस्तु न विवक्षणीया ॥ २५ ॥

अवापितायाः शुचिवेदिकान्तरं
कलासु तस्याः सकलासु पण्डिताः ।
क्षणेन सख्यश्चिरशिक्षणैः स्फुटं
प्रतिप्रतीकं प्रतिकर्म निर्ममुः ॥ २६ ॥

अवापिताया इति ॥ सकलासु गीतालंकरणादिषु कलासु विद्यासु पण्डिताः कुशलाः सख्यः शुचि गोमयाद्यनुलिप्तं सर्वतोभद्रादिभूषितं वेदिकाया अन्तरं मध्यं शृङ्गारस्थानमवापितायाः प्रापितायास्तस्या भैम्याः प्रतिप्रतीकं प्रत्यवयवं चिरशिक्षणाद्बहुकालाभ्यासात्स्फुटं निरतिशयमत एव क्षणेन प्रतिकर्मालंकरणं निर्ममुश्चक्रुः॥२६॥

विनाऽपि भूषामवधिः श्रियामियं
व्यभूषि विज्ञाभिरदर्शि चाधिका ।
न भूषयैषाऽधिचकास्ति किं तु साऽनयेति कस्यास्तु विचारचातुरी॥२७॥

विनेति ॥ भूषां मण्डनं विनाऽपि श्रियां कान्तीनामवधिः परमसीमा इयं भैमी विज्ञाभिरलंकारचतुराभिः

---

१ प्रक्षिप्तोऽयं श्लोकः । अत्र च शिरोरुहौघेण घनेनेति दुकूलेन सितांशुनेति च रूपकम् । चन्द्रद्युतिसुन्दरीं दिवमित्यत्र रूपकं प्रतीयते, दिवि च सुन्दरीत्वप्रतीत्या समासोक्तिरित्यनयोश्चैकाङ्गाश्रयत्वात्सङ्करः। २अत्रानुप्रासः। खलिवत्युत्प्रेक्षा ।

१ अत्रानुप्रासः । प्रतिमेवेत्युपमा । २ अत्र यथार्थातिशयोक्तिः । ३ अत्रानुप्रासः ।

सखीभिर्व्यभूषि विशेषेणामण्डि अधिका अनलंकृताङ्गका-न्तितोऽधिककान्तिरदर्शि च । परामिति विचारचातुरी एकतरानिश्चयरूपे विचारे प्रावीण्यं कस्य अस्तु, न कस्यापि । इति किम्—एषा भूषया पूर्वापेक्षयाप्याधिकं न चकास्ति, किंतु सा भूषाऽनया भैम्या कृत्वाऽधिकं शोभते । भैम्या भूषणानां च परस्परसंपर्काच्छोभातिशयो दृश्यते । तत्र भूषणैर्भैम्याः शोभातिशयो न जातः, किं तु भैम्या भूषणानामिति विवेकः कस्यापि नाभूदित्यर्थः । पूर्वापेक्षयाधिकं वा शोभते स्मेति भावः । भूषां विनापि श्रियामवधिरियं विज्ञाभिर्विशेषेण बहुना प्रयासेनाभूषि पूर्वापेक्षया इयमधिका किमिति तारतम्यज्ञानार्थं पुनः पुनः विलोकिता च परमियं भूषया नाधिचकास्ति, किं तु साऽनयेति तात्त्विकविचारचातुरी कस्यास्तु पुनः सख्या जाता इत्यर्थादपि तु न कस्याश्चित् । प्रयासेनालंकृत्य पुनः पुनः विलोक्यापि विज्ञाभिरपि अनया मण्डनं मण्डितम्, मण्डनैर्वा इयं मण्डितेति तारतम्यं न ज्ञातमेव । परं भूषणानां वैयर्थ्यम्, साधारणत्वं वेति किमपि न निश्चितम् । किं तु भ्रान्ता एव जाता इत्यर्थ इति वा । तस्या निरतिशया कान्तिर्जातेति भावः । पूर्वोक्ता विचारचातुरी कस्यास्तु कस्याश्चिदेव विदुष्याः,न तु सर्वासाम्, इति वा । अलंकृतं तद्वपुषैव मण्डनमिति विचारचातुरी कस्यचिन्मल्लक्षणस्य महाप्राज्ञस्य, कस्य ब्रह्मणो वास्तु । मया श्रीहर्षेण ब्रह्मणा वैष निर्णेतुं शक्यते नान्येनेत्यर्थं इति वा । कस्य पुनर्न जाता, अपि तु सर्वस्यापीति वा ॥ २७ ॥

**विधाय बन्धूकपयोजपूजने**
**कृतां विधोर्गन्धफलीबलिश्रियम् ।**
**निनिन्द लब्धाधरलोचनार्चनं**
**मनःशिलाचित्रकमेत्य तन्मुखम् ॥ २८ ॥**

तिलकप्रसाधनं वर्णयति—

विधायेति ॥ लब्धं प्राप्तमधराभ्यां लोचनाभ्यां चार्चनं पूजनं येन । ओष्ठनेत्रेण रमणीयमिति यावत् । एवंविधं तन्मुखं भैमीमुखं कर्तृ माङ्गलिकं मनःशिलाख्यगौरधातुविशेषनिर्मितं चित्रकं तिलकमेत्य प्राप्य बन्धूकेन पयोजाभ्यां नीलोत्पलाभ्यां च पूजने पूजाद्वयं कृत्वाऽनन्तरं कृतां विधोश्चन्द्रसम्बन्धिनीं गन्धफल्या चम्पककलिकया बलिः पूजातज्जनितां श्रियं कान्तिं निनिन्द। यदि कोऽपि बन्धूकोत्पलैश्चन्द्रस्य पूजां कृत्वा चम्पककलिकां चन्द्रस्य शिरसि न्यस्यति, तदा तां चन्द्रलक्ष्मीं न्यक्करोतीत्यभूतोपमेत्यर्थः । बन्धूकस्याधरस्य, नीलोत्पलयोर्लोचनयोः, चम्पककलिकाया मनःशिलातिलकस्य, चन्द्रस्य वदनस्य चोपमोपमेयभावः । 'चम्पको हेमपुष्पकः । एतस्य कलिका गन्धफली' इत्यमरः ॥ २८ ॥

श्लोकत्रयेण केशप्रसाधनं वर्णयति—

**महीमघोनां मदनान्धतातमी-**
**तमःपटारम्भणतन्तुसंततिः ।**
**अबन्धि तन्मूर्धजपाशमञ्जरी**
**कयाऽपि धूपग्रहधूमकोमला ॥ २९ ॥**

महीति ॥ कयापि केशप्रसाधनचतुरया सख्या तस्याः भैम्याः मूर्धजपाशः केशपाशस्तद्रूपा सौगन्ध्याद्दैर्घ्याच्च मञ्जरी प्रथमोद्भिन्नकलिकाङ्कुरदण्डोऽबन्धि संयता । किंभूता मञ्जरी—महीमघोनां भूमीन्द्राणां मदनेन कामविकारेणान्धता विवेकशून्यता सैव तमी तामसी रात्रिस्तस्यास्तमोरूपस्य पटस्य आवरकत्वादविवेकरूपस्य आरम्भणे निर्माणे विषये तन्तुसंततिः सूत्रपरम्परा संतानकरूपा । तथा—धूपग्रहस्य धूपग्रहणसाधनस्य सच्छिद्रस्य धातुमयस्य करण्डकादेः सम्बन्धिना दह्यमानकर्पूरागरुचन्दनादिपरिमलबहुलेन धूमेन कोमला ईषच्छुष्का तद्वदतिसुन्दरी नितरां श्यामा । राजानो रात्रौ नीलं पट्टवस्त्रादिकं परिधाय विचरन्तीति वा । नलपराया अपि तस्याः केशपाशं दृष्ट्वा राज्ञां विवेकशून्यता भवतीति भावः ॥ २९ ॥

**पुनःपुनः काचन कुर्वती कच-**
**च्छटाधिया धूपजधूमसंयमम् ।**
**सखी स्मितैस्तांकिततन्निजभ्रमा**
**बबन्ध तन्मूर्धजचामरं चिरात् ॥ ३० ॥**

पुनःपुनरिति ॥ काचन सखी तस्या भैम्याः मूर्धजः केशपाशस्तल्लक्षणं सूक्ष्मघनप्रलम्बकृष्णत्वसाम्याच्चामरं

---

१ अत्रानुप्रासः श्रियामवधिभूताया विभूषणीयत्वायोगेऽपि अधिकतया विभूषणोक्तिरतिशयोक्त्यात्मिकैव । विरोधाभासश्च तया व्यज्यत इत्यलङ्कारादलङ्कारध्वनिः । पराद्धेन पुनः पूर्वार्द्धोक्तेस्तिरस्करणात् आक्षेपश्च ।

१ तन्मुखकर्तृकनिन्दनस्यासम्भवेऽपि तथोक्तेर्निदर्शना ।
२ अत्रानुप्रासः । रूपकं,धूमेन कोमलत्वोक्तिरिवेति विरोधाभासो व्यङ्ग्यः ।

चिराद्बहुना कालेन बबन्ध । चिरकाले हेतुमाह—किंभूता—कचच्छटाधिया भैमीकेशपाशभ्रान्त्या सादृश्याद्धूपजस्य धूमस्य मुहुः संयमं बन्धनं कुर्वती । तथा—तद्भ्रान्तिदर्शिनीनां सखीनां स्मितैरन्योन्यमुखविलोकनपूर्वविलसदीपद्धास्यैः कृत्वा तर्कितः स केशपाशभ्रमेण धूपजधूमसंयमनरूपो निजः स्वीयो भ्रमो यया ॥ ३० ॥

बलस्य कृष्टेव हलेन भाति या
कलिन्दकन्या घनभङ्गभङ्गुरा ।
तदार्पितैस्तां करुणस्य कुड्मलै-
र्जहास तस्याः कुटिला कचच्छटा ॥ ३१ ॥

बलस्येति ॥ कुटिलातिवक्रा तस्या या कचच्छटा कुन्तलश्रेणिर्बलस्य बलभद्रस्य हलेन आकृष्टा सती घनैर्निबिडैर्भङ्गैस्तरङ्गैर्भङ्गुरा उच्चावचा कलिन्दस्य पर्वतस्य कन्या यमुनेव भाति । सा कचच्छटा तां यमुनां तदा तस्मिन्समयेऽर्पितैः शिरसि न्यस्तैः करुणाख्यवृक्षस्य कुड्मलैः कलिकाभिर्जहास । यमुना पराकर्षणकृतेन महीयसा भङ्गेन पराभवेन भग्ना पुष्परहिता च । इयं तु स्वभावकुटिला पुनरपि कुसुमैरञ्चिता चेति हासो युक्त इत्यर्थः। श्यामाऽतिवक्रा पुष्पालंकृता च तस्याः कुन्तलश्रेणिर्नितरां शोभते स्मेति भावः । पूर्वं तु तत्तुल्याभूत्, इदानीं त्वधिका जातेति भावः । जहासेवेति वा । यमुनाकर्षणं हरिवंशादौ ज्ञेयम् ॥ ३१ ॥

धृतैतया हाटकपट्टिकालिके
बभूव केशाम्बुदविद्युदेव सा ।
मुखेन्दुसंबन्धवशात्सुधाजुषः
स्थिरत्वमूहे नियतं तदायुषः ॥ ३२ ॥

ललाटप्रसाधनं वर्णयति—

धृतेति ॥ एतयाऽलिके ललाटे या हाटकस्य सुवर्णस्य पट्टिका धृता सा केशाम्बुदानां कुन्तलरूपजलदानां तेषु वा विद्युदेव बभूव । क्षणप्रभायास्तस्याः कथं स्थिरत्वमित्यत आह—मुखेन्दोः संबन्धवशाद्धेतोः सुधाजुषोऽमृतं सेवमानस्य तदायुषो विद्युदवस्थानस्य स्थिरत्वं नियतं निश्चितमहमूहे तर्कयामि । अमृतपानादमरत्वं तस्या जातमित्यर्थः । सुवर्णपट्टिकया ललाटमलंकृतमिति भावः । 'यदायुषः' इति वा पाठः। ऊहे, 'ऊह वितर्के' ॥ ३२ ॥

ललाटिकासीमनि चूर्णकुन्तला
बभुः स्फुटं भीमनरेन्द्रजन्मनः ।
मनःशिलाचित्रकदीपसम्भवा
भ्रमीभृतः कज्जलधूमवल्लयः ॥ ३३ ॥

कुन्तलान् वर्णयति—

ललाटिकेति ॥ ललाटे रचिताया रेखाकाराया ललाटिकायाः पत्रपाश्याया अलंकारविशेषस्य सीमनि पर्यन्तप्रदेशे भीमनरेन्द्रजन्मनो भैम्याश्चूर्णकुन्तला वक्रकुण्डलीभूताः केशाः कज्जलरूपस्य धूमस्य वल्लयः श्रेण्यः स्फुटमिव बभुः । किंभूता वल्लयः—मनःशिलायांश्चित्रकं तिलकस्तद्रूपो दीपस्तस्मात् संभवो यासां ताः । तथा—भ्रमीः संकुच्य वक्रीभावान्बिभ्रति ता बिभ्रत्यो धारयन्त्यः । नलस्य मनःशिलातिलकेनैव कामोद्दीपनात्तस्य दीपत्वम् । दीपधूमसंभवा कज्जलश्रेणिः भ्रमियुक्ता भवति । 'पत्रपाश्या ललाटिका' इति युवः । 'कर्णललाटात्कनलंकारे ४।३।६५' इति कन् ॥ ३३ ॥

श्लोकचतुष्टयेन कज्जलालंकारं वर्णयति—

अपाङ्गमालिङ्ग्य तदीयमुच्चकै-
रदीपि रेखा जनिताञ्जनेन या ।
अपाति सूत्रं तदिव द्वितीयया
वयःश्रिया वर्धयितुं विलोचने ॥ ३४ ॥

अपाङ्गमिति॥ अञ्जनेन जनिता या रेखा सा तदीयमपाङ्गमालिङ्ग्य स्पृष्ट्वा उच्चकैर्नितरामदीपि शुशुभे । द्वितीयया तारुण्यवयःश्रिया कर्त्र्या विलोचने भैमीनेत्रे वर्धयितुं शैशवापेक्षया विशाले कर्तुं तद्रेखादीपनं सूत्रमिव अपाति । प्राच्यो हि सुन्दर्यो विलोचने नेत्रप्रान्तनिर्गतया कर्णोपान्तस्पर्शिन्याऽञ्जनरेखया भूषयन्ति । शिल्पिनश्च किमपि लेखितुं वर्धयितुं वा लिख्यमानस्य वर्ध्यमानस्य वाऽऽकारवक्रिमपरिहाराय मषीखटिकाद्युपदिग्धस्य सूत्राभिघातेन रेखापातनं कुर्वन्ति । यद्यपि नेत्रयो-

१ अत्रानुप्रासः, रूपकम्, धियेति भ्रान्तिमांश्च । २ कृष्टेवेत्युपमा । कुड्मलैर्जहासेत्यस्यार्थस्यायोगेऽपि तयोक्तिः सादृश्यार्थेति निदर्शना।

१ विद्युदेवेत्युत्प्रेक्षा । २ अत्रानुप्रासो रूपकं चोत्प्रेक्षा च ।

ततो रसिकत्वादेवापरावृत्य लगित्वा संबध्य स्थिते स्थिरतरे इत्युत्प्रेक्षा । कश्चिद्विलासी भैम्याः कर्णौ प्रथममेव दृष्टवान् । ततस्तस्य नेत्रे कर्णयोरेव लग्ने स्थिते, नोत्पलद्वयमित्यर्थः । नेत्रगमनादेवास्यान्ध्यम् । अन्यदपि पतितं वस्तु कुत्रापि लगित्वा तिष्ठति ॥ ३९ ॥

विदर्भपुत्रीश्रवणावतंसिका-
मणीमहःकिंशुककार्मुकोदरे ।
उदीतनेत्रोत्पलबाणसम्भृति-
र्नलं परं लक्ष्यमवैक्षत स्मरः ॥ ४० ॥

रत्नावतंसं वर्णयति—

विदर्भेति ॥ स्मरः नलं परं केवलं श्रेष्ठं वा लक्ष्यमवैक्षत । आगच्छन्तं प्रतीक्षितवानित्यर्थः । किम्भूतः—विदर्भपुत्रीश्रवणयोरुपर्यवतंसिकाया मण्यो भूषणभूता माणिक्यादिरत्नखचितसुवर्णकम्बिकास्तत्सम्बन्धीनि माणिक्यादिरत्नानि तासां महस्तेजस्तदेव किंशुककार्मुकं पलाशकुसुमधनुस्तस्योदरे विषय उदीता समुत्पन्ना नेत्रयोरवतंसोत्पलयोश्च तद्रूपाणां चतुर्णां बाणानां संभृतिः सामग्री । नेत्ररूपाभ्यां वा नीलोत्पलाभ्यां बाणसामग्री यस्य एवंविधः । चापे समारोपितबाण इत्यर्थः । स्वलंकृतकर्णकवलाञ्छितनेत्रसौन्दर्यविलोकनमात्रेण नलः कामपरो भविष्यतीति भावः । अवतंसिकापदेन श्रवणलग्धावप्यतिसंनिधिसूचनार्थं श्रवणपदप्रयोगः । युक्तलक्ष्यस्य स्मरणात्स्मरः ॥ ४० ॥

श्लोकद्वयेन कुण्डलप्रसाधनमाह—

अनाचरत्तथ्यमृषाविचारणां
तदाननं कर्णलतायुगेन किम् ।
बबन्ध जित्वा मणिकुण्डले विधू
द्विचन्द्रबुद्ध्या कथितावसूयकौ ॥ ४१ ॥

अनाचरदिति ॥ सादृश्यात्स्फुरितया द्विचन्द्रबुद्ध्या द्वौ चन्द्राविति भ्रान्तिज्ञानेन एतौ द्वौ चन्द्रौ तवोत्कर्षं न सहेते इति भैम्यास्तदाननस्य वा पुरस्तादसूयकौ स्पर्धाकारिणौ कथितौ प्रतिपादितौ । मणिकुण्डले रत्नखचिते सुवर्णताटङ्के एव विधू द्वौ चन्द्रौ जित्वा तदाननं कर्तृ कर्णलतायुगेन कृत्वा बबन्ध किम् । ननु द्विचन्द्रबुद्धेरेव स्वरूपेणासत्यत्वात्स्त्रीत्वाच्च तदुक्तेऽर्थे कथं तस्य प्रवृत्तिरित्याशङ्क्याह—किंभूतम्—तथ्यमृषाविचारणामनया कथितं सत्यम्, असत्यं वेति विमर्शनम् अनाचरदकुर्वाणम् । शोभासंपन्मदेन मत्तत्वादित्यर्थः । किं किमिति बबन्ध, अपि त्वनुचितमेतत्कृतम् । यतः सत्यासत्यविचारणाभावादिति भाव इति वा । अन्योऽपि दुर्मदः सत्यासत्यविचारमकुर्वन्कस्यचिदसूयकस्य वचनादनपराधिनमपि कंचित्पाशादिना बध्नाति । चन्द्राकारे मणिताटङ्के तया धृत इति भावः ॥ ४१ ॥

अवादि भैमी परिधाप्य कुण्डले
वयस्ययाऽऽभ्यामभितः समन्वयः ।
त्वदाननेन्दोः प्रियकामजन्मनि
श्रयत्ययं दौरुधरीं धुरं ध्रुवम् ॥ ४२ ॥

अवादीति ॥ कयाचिद्वयस्यया सख्या कुण्डले परिधाप्य कर्णयोर्निक्षिप्य भैमी अवादि इत्युक्ता । इति किम्—भैमी त्वदाननेन्दोराभ्यां कुण्डलाभ्यामभित उभयपार्श्वयोरयं समन्वयः समीचीनः संबन्धः प्रियस्य नलस्य कामो रत्यभिलाषस्तस्य जन्मन्युत्पत्तौ विषये दौरुधरीं पूर्वापरराशिस्थगुरुशुक्रयोर्मध्यराशिस्थचन्द्रस्य दुरुधराख्यस्य महायोगस्य संबन्धिनीं धुरं भारं ध्रुवं निश्चितमाश्रयतीति । ध्रुवमुत्प्रेक्षायां वा । दुरुधराख्ये महायोगे जातः पुत्रादिर्यथा वृद्धिं प्राप्नोति, तथा कुण्डलालंकृतमुखचन्द्रदर्शनमात्रेण नलस्य रमणाभिलाषो वृद्धिं प्राप्स्यतीति भावः । 'गुरुभार्गवयोर्योगश्चन्द्रेणैव यदा भवेत् । तदा दुरुधरायोगः—' इति ज्योतिःशास्त्रादवगन्तव्यम् ॥ ४२ ॥

निवेशितं यावकरागदीप्तये
लगत्तदीयाधरसीम्नि सिक्थकम् ।
रराज तत्रैव निवस्तुमुत्सुकं
मधूनि निर्धूय सुधासधर्मणि ॥ ४३ ॥

अधरप्रसाधनमाह—

निवेशितमिति ॥ तदीयोऽधरोष्ठस्तस्य सीम्नि ऊर्ध्वदेशे यावकस्यालक्तकस्य रागो लोहितिमा तस्य

---

१ अत्र कश्चिदित्यादिन्याख्यातृनिर्दिष्टव्यवहारप्रतीतेः समासोक्तिः । दृशाविवेत्युत्प्रेक्षा च । २ अत्र रूपकम् ।

१ अत्रापि रूपकम् । २ अत्रानुप्रासः । त्वदाननेन्दोरिति रूपकम् ।

दीप्तये प्रकाशनाय निवेशितं न्यस्तं यच्चानेन लग्नसंलग्नं सिक्थकं मधूच्छिष्टं स्वस्य जनकानि मधूनि हीनरसतया परित्यज्य माधुर्यातिशयात्सुधाया अमृतस्य सधर्मणि तुल्यायां तत्रैवाधरसीम्नि निवस्तुं नित्यं स्वातुमुत्सुकमुत्कण्ठितमिव रराज । सुधया सिक्थकस्य कदाचिदप्यसंबन्धात्तदधरलतां परित्यक्तुमशक्तमिव तत्रैव स्थितमित्यर्थः । प्रसाधिका अलक्तकस्य स्थित्यर्थमधरे सिक्थकं निवेशयन्ति । अधरस्य मधुनोऽधिकत्वं सूचितम् । अन्यदपि हीनमाश्रयं परित्यज्योत्तममाश्रयति । गम्योत्प्रेक्षा । सधर्मा, 'धर्मादनिच् केवलात् ५।४।१२४' इत्यनिच् । 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ६।३ । ८४' इत्यत्र योगविभागात्समानस्य सादेशः । सुधावत्समानो धर्मो यस्याः सा सधर्मा तस्याम्, 'मनः ४।१।११' इति न ङीप् ॥ ४३ ॥

स्वरेण वीणेत्यविशेषणं पुरा
स्फुरत्तदीया खलु कण्ठकन्दली ।
अवाप्य तन्त्रीरथ सप्त मुक्तिका-
सरानराजत्परिवादिनी स्फुटम् ॥ ४४ ॥

कण्ठप्रसाधनमाह—

स्वरेणेति ॥ तदीया कण्ठ एव कन्दली अतिसौकुमार्यादिगुणत्वाद्दृढोद्गतप्रथमाङ्कुरदण्डोऽतिमधुरेण स्वरेण पुरा पूर्वमविशेषणं विशेषणरहितं यथा तथा सामान्येन वीणेत्येव खलु निश्चितमस्फुरदभासत, न तु रुद्रवीणादिबहुवीणाभेदेषु विशिष्टतया इयमिदंसंज्ञेत्यर्थः । अथालंकारसमये सप्त मुक्तिकासरान्सूत्रप्रोतमौक्तिकहारानेव तर्जनीमध्यमध्यमाभिघातोत्पद्यमानध्वनिव्यञ्जितपञ्चमादिरागाः पट्टसूत्रादिरचितसप्ततन्त्रीरवाप्य 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरवचनात्स्फुटं प्रकटं परिवादिनी इति विशिष्टसंज्ञा सती अराजदशोभत । स्फुटमुत्प्रेक्षायां वा । वीणाभ्योऽपि मधुरस्वरा कण्ठकन्दली सप्तसरमुक्ताहारालंकृता चेति भावः ॥ ४४ ॥

उपास्यमानाविव शिक्षितुं ततो
मृदुत्वमप्रौढमृणालनालया ।
विरेजतुर्माङ्गलिकेन संगतौ
भुजौ सुदत्या वलयेन कम्बुनः ॥ ४५ ॥

भुजप्रसाधनमाह—

उपेति ॥ मङ्गलं प्रयोजनमस्य मङ्गलार्थं रचितेन कम्बुनः शङ्खस्य वलयेन कङ्कणेन संगतौ युक्तौ सुदत्या भैम्या भुजौ विरेजतुः शुशुभाते । उत्प्रेक्षते—अप्रौढा बाला मृणालनाला तया बिसदण्डेन ततो भुजाभ्यां सकाशान्मृदुत्वं शिक्षितुमुपास्यमानाविव सेव्यमानाविव । मृणालादपि कोमलतरौ भुजावित्यर्थः । गौडदेशे विवाहकाले शङ्खवलयधारणमाचारः । बालेन चाभ्यासः सुकर इत्यप्रौढपदम् । 'नाला नालमथास्त्रियाम्' इत्यपि क्वचित्पाठान्महाकविप्रयोगान्नालशब्दोऽप्यावन्तः । ततः,'आख्यातोपयोगे' इत्यपादानत्वम् । माङ्गलिकेन, 'प्रयोजनम्' इति ठक् । रराजतुरिति पाठान्तरे तु,'फणां च सप्तानाम्' इत्येत्वाभ्यासलोपौ वैकल्पिकत्वान्न भवतः ॥ ४५ ॥

श्लोकद्वयेन पदप्रसाधनमाह—

पदद्वयेऽस्या नवयावरञ्जना
जनैस्तदानीमुदनीयतार्पिता ।
चिराय पद्मौ परिरभ्य जाग्रती
निशीव विश्लिष्य नवा रविद्युतिः ॥ ४६ ॥

पदेति ॥ तदानीं तस्मिन् प्रसाधनसमये अस्याः पदद्वयेऽर्पिता रचिता नवा आर्द्रा यावरञ्जना अलक्तकरञ्जना जनैर्नवोदयसमये जाताऽतिरक्ता रविद्युतिरिवोदनीयततर्क्यत । किंभूता रविद्युतिः—निशि रात्रौ सूर्यस्यास्तमयवशात्पद्माभ्यां सह विश्लिष्य दिने पुनः पद्मौ चिराय परिरभ्य जाग्रती तिष्ठन्ती । रविद्युतिर्यथा पद्मेषु श्रियमधिकां करोति तथा यावकरञ्जना तत्पदयोरिति । भैमीचरणौ पद्मतुल्याविति भावः । चिराय विश्लिष्येति वा चिरवियुक्तावन्योन्यं प्राप्य गाढमालिङ्ग्य तिष्ठत इत्युक्तिः ॥ ४६ ॥

कृतापराधः सुतनोरनन्तरं
विचिन्त्य कान्तेन समं समागमम् ।
स्फुटं सिषेवे कुसुमेषुपावकः
स रागचिह्नश्चरणौ न यावकः ॥ ४७ ॥

कृतेति ॥ पूर्वं विरहावस्थायां बहुसंतापकारित्वात्सुतनोर्भैम्याः कृतोऽपराधो येन स कुसुमेषुः काम एव

---

१ सुधासधर्मणीत्युपमा । २ खल्विति स्फुटमिति चोत्प्रेक्षा ।

१ उपास्यमानाविवेत्युत्प्रेक्षा । २ अत्रापि निशीवेत्युत्प्रेक्षा ।

पावकोऽग्निरनन्तरमधुना कान्तेन नलेन समं सह भैम्या समागमं विचिन्त्य स्फुटं निश्चितं चरणौ सिषेवे । अपराधमार्जनायेत्यर्थः । कामस्याग्नित्वे हेतुमाह—यतः सोऽग्नी रागचिह्नो रागो लोहितिमैव चिह्नं यस्य रक्तिम्ना वह्निरयमिति ज्ञायते । अथवाऽनुराग एव चिह्नं यस्य । अनुराग एव हि काममनुमापयति । तस्मात्कामाग्निरेवायं, नत्वयं यावकोऽलक्तकः । स यावको नेति वा । अन्योऽपि प्रोषितभर्तृकायाः कस्याश्चित्कृतापराधः संस्त-त्प्रियागमनं विचिन्त्यापराधमार्जनाय तत्पादयोः पतति । सालक्तकतत्पददर्शनादेव नलस्य कामोद्रेको भवितेति भावः ॥ ४७ ॥

स्वयं तदङ्गेषु गतेषु चारुतां
परस्परेणैव विभूषितेषु च ।
किमूचिरेऽलंकरणानि तानि त-
द्वृथैव तेषां करणं बभूव यत् ॥ ४८ ॥

सहजशोभामाहात्म्यं वर्णयति—

स्वयमिति ॥ स्वयं भूषणं विनैव परस्परानपेक्षं च तस्या भैम्या अङ्गेषु मुखाद्यवयवेषु प्रत्येकं स्वीयस्वीयसौष्ठववशा-त्तरुणिमारोहवशाच्च चारुतां गतेषु प्राप्तेषु सत्सु परस्परे-णैवान्योन्येनैव च विशेषेण भूषितेषु प्रत्येकं सौन्दर्ये सत्य-प्यन्योन्यसाहचर्यवशात्करानुगुणौ भुजौ भुजानुगुणौ करा-वित्येकस्याङ्गस्यापरेण च तेनैव सर्वाङ्गयोग्याङ्गसामग्रीसं-घट्टनात्सुन्दरतरेषु सत्सु तानि मनःशिलादितिलकादीन्य-लंकरणानि किमूचिरे, अपि तु—स्वकरणप्रयोजनं न किंचिदूचुः । यद्यस्मात्तेषामलंकरणानां तत्पूर्वोक्तप्रकारं करणं निर्माणं वृथैव बभूव । दुःखवशान्न किंचिदूचुः, किमप्यधिकं न चक्रुरित्यर्थः । आश्रितत्वादनिराकार्यत्वेन स्थितान्येवेति भावः । यत्तेषां करणं तद्वृथैवाभूत् । अत एव करणमलमित्यन्वयेन नाम सान्वयं जातमिति भावः । अलं वृथा करणं येषामिति बहुव्रीहिणापि सान्वयं जातमि-त्यर्थः । पूर्वमलंशब्दस्य भूषणार्थत्वम्, पश्चादप्रयोजकत्वा-न्निषिद्धार्थमिति चेत्यर्थः । 'किमूहिरे' इति पाठे किमर्थं धृतानि न जाने इति शेष इति वा ॥ ४८ ॥

क्रमाधिकामुत्तरमुत्तरं श्रियं
पुपोष यद्भूषणचुम्बनैरियम् ।
पुरः पुरस्तस्थुपि रामणीयके
तया ववाधेऽवधिबुद्धिधोरणिः ॥४९॥

भूषणकान्त्युत्कर्षं वर्णयति—

क्रमेति ॥ इयं दमयन्ती भूषणचुम्बनैर्भूषणसम्बन्धैः कृत्वा उत्तरमुत्तरं यथा स्यात्तथा अग्रेऽग्रे क्रमेण पूर्व-भूषणापेक्षया उत्तरोत्तरभूषणेनाधिकामतिशयितां यां श्रियं पुपोष तयाऽलंकारशोभया रामणीयके सौन्दर्ये पुरः पुरस्तस्थुषि स्थिरतरे सति अवधिबुद्धेरियत्ताबुद्धेर्धोरणिः परम्परा ववाधे बाधिता । इतोऽन्यद्रामणीयकं नास्तीति यदि बुद्धिर्भवेत्, तदावधिर्भवेत् । पूर्वपूर्वरामणीयकेय-त्ताबाधेन रामणीयकान्तरे पुरः पुरः स्फुरत्यवधिर्बाधित इत्यर्थः । तस्या भूषणशोभा निरवधिरभूदिति भावः । धोरणिरिति देश्यशब्दः ॥ ४९ ॥

मणीसनाभौ मुकुरस्य मण्डले
बभौ निजास्यप्रतिबिम्बदर्शिनी ।
विधोरदूरं स्वमुखं विधाय सा
निरूपयन्तीव विशेषमेतयोः ॥५०॥

मणीति ॥ मणी सनाभी मौक्तिकादिरत्नतुल्येऽतिस्वच्छे मुकुरस्य मण्डले दर्पणतले पुनर्निजास्यस्य स्वमुखस्य दर्प-णसंक्रान्तप्रतिबिम्बं पश्यतीत्येवंशीला दर्शिनी सा भैमी स्वमुखं विधोर्दर्पणरूपस्य, प्रतिबिम्बरूपस्य वा, चन्द्रस्यादूरं निकटवर्ति विधाय कृत्वा एतयोर्मुखचन्द्रयोर्विशेषं तारत-म्यं निरूपयन्तीव विचारयन्तीव बभौ। संनिधौ हि विशेषः स्फुरति। बिम्बापेक्षया प्रतिबिम्बस्य न्यूनत्वात्तस्यैव चन्द्रत्व-मिति विशेषो निरूपित इति भावः । भूषणानन्तरमादर्श-विलोकनमिति जातिः । प्रतिबिम्बदर्शिनी, 'बहुल-माभीक्ष्ण्ये ३।२।८१' इतिणिनिः ॥ ५० ॥

जितस्तदास्येन कलानिधिर्दधे
द्विचन्द्रधीसाक्षिकमायकायताम् ।
तथापि जिग्ये युगपत्सखीयुग-
प्रदर्शितादर्शबहूभविष्णुना ॥ ५१ ॥

जित इति ॥ तस्या आस्येन जितः कलानिधिश्चन्द्रो नेत्रचि-पिटीकरणादिनिमित्ताद्वस्तस्थितादर्शनिमित्ताद्वा द्वौ चन्द्रा-विति धीर्यस्य पुरुषस्य स एव साक्षी साक्षाद्द्रष्टा यस्याः

१ अत्रापि स्फुटमित्युत्प्रेक्षा । २ किमित्युत्प्रेक्षा ।

१ अत्रानुप्रासः । २ निरूपयन्तीवेत्युत्प्रेक्षा ।

सा माया यस्यैवंभूतः कायो यस्य चन्द्रस्य तस्य भावस्तत्ता तां दधे बभार । एकत्वादहं भैमीमुखेन जित इति मायामयानेककायत्वं चन्द्रेण धृतमित्यर्थः । अत्र पूर्वोक्तप्रकारद्वयेन साक्षिणौ द्वौ चन्द्राविति बुद्धिरेव प्रमाणम् । कलानिधिपदेनानेकशिल्पज्ञत्वान्मायिककायव्यूहनिर्माणकर्मापि वेत्तीति सूचितम् । द्वाभ्यामेकजयस्य सुकरत्वात्करस्थितादर्शच्छलेनानेककायत्वं यद्यप्यङ्गीकृतम्, तथापि युगपत्समकालं सखीयुगेन प्रकर्षेण दर्शिताभ्यामादर्शाभ्यां कृत्वा तयोर्वा अबहुना एकेनापि बहूभविष्णुना बहूभवनशीलेन सता तन्मुखेन चन्द्रो जिग्ये जित एव। हस्तस्थदर्पणसाहितसखीदर्पणद्वयप्रतिफलितमुखप्रतिबिम्बैः सह बिम्बभूतस्य मुखस्यानेकत्वान्मुखतुल्यदर्पणद्वयेन सह बिम्बभूतस्य मुखस्य स्वसदृशैरादर्शैः स्वप्रतिबिम्बैश्च सह वाऽनेकत्वात्पञ्चपैर्द्वयोर्विजयस्य सुकरत्वादित्यर्थः । पूर्वं शोभया जितोऽपि संख्याधिक्येन मुखं जेतुमारब्धवान्, तथापि मुखस्याधिकतरसंख्यत्वान्न शशाङ्केति भावः ।, 'बहूभविष्णुना' इत्यत्र च्विः ॥ ५१ ॥

किमालियुग्मार्पितदर्पणद्वये
तदास्यमेकं बहु चान्यदम्बुजम् ।
हिमेषु निर्वाप्य निशासमाधिभि-
स्तदीयसालोक्यमितं व्यलोक्यत५२॥

किमिति ॥ आलियुग्मेनार्पिते दर्शिते दर्पणद्वये बहुषु बिम्बप्रतिबिम्बेषु मध्ये एकमेकसंख्यायोग्यम् अथ च मुख्यम् । तदास्यं भैमीमुखम्, अन्यच्च हिमेषु शिशिरर्तुषु। अथ च काम्येषु केदारादिहिमेषु निर्वाप्य निर्वाणं विनाशम् । अथ च मोक्षम् । कृत्वा प्राप्येति यावत् । निशासमाधिभी रात्रिसंबन्धिभिः संकोचैः । अथ च परमात्मदर्शनोपायैः कृत्वा तदीयं भैमीमुखसंबन्धि सालोक्यं सादृश्यम् । अथ च सालोक्यलक्षणां मुक्तिम् । इतं प्राप्तं बहु अनेकमम्बुजं किं लोकैर्व्यलोक्यत । किमुत्प्रेक्षायाम् । भैमीमुखप्रतिबिम्बान्निहीनत्वात्पद्मैः केदारादिहिमचूर्णनादितपस्तप्त्वा तन्मुखप्रतिबिम्बस्य समीपे स्थितं किमित्यर्थः । पद्मेभ्यो मुखमधिकमिति भावः । अम्बुजामीति जातावेकवचनम् । निर्वपणं निर्वापस्तत्करोतीति ण्यन्ताल्ल्यपि निर्वाप्येति । हिमेष्वात्मानं विनाशयेत्यर्थः । सालोक्यं, 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ६।३।८४' इति योगविभागात्सः ॥ ५२ ॥

पलाशदामेति मिलच्छिलीमुखै-
र्वृता विभूषामणिरश्मिकार्मुकैः ।
अलक्षि लक्षैर्धनुषामसौ तदा
रतीशसर्वस्वतयाऽभिरक्षिता ॥ ५३ ॥

पलाशेति ॥ असौ भैमी पलाशानां किंशुकानां दाम माला इयमिति भ्रान्त्या मिलन्त आगच्छन्तः शिलीमुखा भ्रमरा यत्रैवंभूतैः । अथ च किंशुकानां धनुराकारत्वान्मिलद्बाणैः विभूषामणीनां विशिष्टालंकारसंबन्धिमाणिक्यादिरत्नानां रश्मिरूपैः कार्मुकैरिन्द्रधनुर्भिर्वृता वेष्टिता सती तदा भूषणानन्तरकाले रतीशस्य कामस्य सर्वस्वतया परमधनत्वेन हेतुना धनुषां लक्षैर्लक्षसंख्यैर्धनुर्भिराभि सामस्त्येन रक्षितेव लोकैरलक्षि तर्किता, कुन्ताः प्रविशन्तीतिवत् धनुषां धनुर्धराणामित्यर्थः । कान्तिसाम्यान्मित्रतया नलसर्वस्वं भैमीं कामो रक्षतीत्यर्थः ॥ ५३ ॥

विशेषतीर्थैरिव जह्नुनन्दिनी
गुणैरिवाजानिकरागभूमिता ।
जगाम भाग्यैरिव नीतिरुज्ज्वलै-
र्विभूषणैस्तत्सुषमा महार्घताम् ॥५४॥

विशेषेति ॥ तस्या भैम्याः सुषमा स्वाभाविकी परमा शोभा विभूषणैर्विशिष्टैर्भूषणैः कृत्वा महार्घतामतिश्रेष्ठ्यं जगाम । का कैरिव—जह्नुनन्दिनी स्वत एव श्रेष्ठाऽपि गङ्गा विशेषतीर्थैः प्रयागादिभिरिव । तथा—आजानिकरागभूमिता ( जननं जनः न जनोऽजनः अजनेन निर्वृत्तः स्वभावेन संभूतः आजानिकः'तेन निर्वृत्तम्'इति ठक् । जनेर्जन्मन आ आजनि आजनि भवोऽध्यात्मादित्वाट्ठञ् । इकादेशः । अनुशतिकादित्वादुभयपदवृद्धिः । ) आजानिकः सहजो रागः, तस्य भूमिः स्थानं पुत्रादिः, तस्य भावस्तत्ता सहजा स्नेहपात्रता गुणैः शीललावण्यादिभिरिव । तथा—नीतिः उज्ज्वलैर्नीतिसाधितफलप्रतिबन्धनाशनात्प्रकाशैर्भाग्यैः पूर्वकृतशुभकर्मभिरिव भागी-

---

१ विशेषकः, 'भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ' इति लक्षणानुसारं तथाऽपीत्यादिना विशिष्य निर्दिष्टत्वात् ।

१ अत्रोत्प्रेक्षा । २ अत्र भ्रान्तिमान्, रक्षितेवेति प्रतीत्या चोत्प्रेक्षा व्यङ्ग्या ।

रथी सर्वत्र श्रेष्ठैव, परं प्रयागादौ माहात्म्यातिशयः। यत्रानुरागस्तत्र श्रेष्ठ्यम्, परं शीलादिनाऽनुरागस्य निरतिशयत्वम् । तथा—नीतिमार्गानुसरणं श्रेष्ठमेव, परं तूज्ज्वलैर्माग्यैरनुगृहीतं श्रेष्ठतरं भवतीत्यर्थः। मण्डनैस्तस्या निरतिशया शोभाऽभूदिति भावः। उज्ज्वलैरित्युपमानोपमेयैः संबन्धनीयम्। अशुभकर्मणोऽपि भाग्यस्याभिधायकत्वात्तन्निवृत्त्यर्थं भाग्यविशेषणमेव वा। उपमानत्रयेण क्रमेण पावित्र्यं, गुणवत्त्वं, भाग्यवत्त्वं च सूचितम्। विशिष्यन्ते विशेषैः ॥ ५४ ॥

**नलात्स्ववैश्वस्त्यमनाप्तुमानता**
**नृपस्त्रियो भीममहोत्सवागताः ।**
**तदङ्घ्रिलाक्षामदधन्त मङ्गलं**
**शिरःसु सिन्दूरमिव प्रियायुषे ॥ ५५ ॥**

नलादिति ॥ नलात्सकाशात्स्वस्यात्मनो वैश्वस्त्यं वैधव्यमनाप्तुमप्राप्तुमानता भैमीचरणप्रणामप्रवणा भीमस्य कन्यास्वयंवररूपे महोत्सवे आकारिताः सत्य आगता नृपप्रिया अन्यराजमहिष्यः प्रियायुषे स्वप्राणेशचिरंजीवनाय मङ्गलरूपं सिन्दूरमिव स्वशिरःसु तस्या भैम्या अङ्घ्र्योश्चरणयोर्लाक्षामलक्तकमदधन्त अधारयन् । पत्युरायुर्वृद्धये अन्याः स्त्रियस्ता एव वा यथा शिरःसु सिन्दूरं धारयन्ति, तथा प्रणामप्रसन्नया भैम्या एतदीयाः प्राणेशा रक्षणीया इति प्रार्थितो नलः स्वप्राणेशान्नक्षिष्यतीति बुद्ध्या स्वभर्तृचिरजीवनाय भैमीचरणयोः प्रणामं कृतवत्य इति भावः । प्रणामादेव वाऽऽर्द्रा लाक्षा लग्ना । 'विश्वस्ताविधवे समे' इत्यमरः । शाक्षणादित्वाद्वैश्वस्त्यम्। अदधन्त 'दध धारणे' लङि । 'हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा । कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् ॥ केशसंस्कारकबरीकरकर्णविभूषणम् । भर्तुरायुष्यमिच्छन्ती दूरयेन्न पतिव्रता ॥' इति स्कान्दवचनम् ॥ ५५ ॥

**अमोघभावेन सनाभितां गताः**
**प्रसन्नगीर्वाणवराक्षरस्रजाम् ।**
**ततः प्रणम्राऽधिजगाम सा ह्रिया**
**गुरुर्गुरुब्रह्मपतिव्रताशिषः ॥ ५६ ॥**

अमोघेति ॥ ततो मण्डनानन्तरं प्रणम्रा कृतगुर्वादिचरणप्रणामा सती ह्रिया गुरुः । अधिकलज्जेत्यर्थः । सा भैमी गुर्वोः पूज्यतमयोः पित्रोः ब्रह्मणां ब्राह्मणानां, वाङ्मनःकायकर्मभिः पतिमव्यभिचरन्तीनां पतिव्रतानां वृद्धशोभनसुवासिनीनां च आविधवा सुभगा सुपुत्रा भवेति आशिषोऽधिजगामालभत । किंभूता आशिषः—अमोघभावेन सफलत्वेन प्रसन्नानां गीर्वाणानां देवानां पूर्वोक्ता वरास्तत्सम्बन्धिन्योऽक्षरस्रजो वर्णमालास्तासां सनाभितां बन्धुत्वं गताः प्राप्ताः सत्यत्वेन तत्तुल्याः ॥ ५६ ॥

**तथैव तत्कालमथानुजीविभिः**
**प्रसाधनासञ्जनशिल्पपारगैः ।**
**निजस्य पाणिग्रहणक्षणोचिता**
**कृता नलस्यापि विभोर्विभूषणा ॥ ५७ ॥**

तथैवेति ॥ तथैव भैम्या वेदिकोदरे यथा मङ्गलस्नानादि कृतम्, तेनैव प्रकारेण च तत्कालं तस्मिन्नेव काले अथ मङ्गलस्नानानन्तरं प्रसाधनासञ्जनं भूषणकरणं तत्संबन्धि शिल्पं विज्ञानकौशलं तस्य पारगैः अशेषविशेषज्ञैः शृङ्गारिभिरनुजीविभिः सेवकैर्निजस्य स्वस्य विभोः स्वस्वामिनो नलस्यापि पाणिग्रहणक्षणोचिता विवाहकालयोग्या विवाहरूपोत्सवयोग्या वा विभूषणा कृता रचिता । निजस्येति स्वयं प्रवृत्तिः सूचिता । विभोरित्यविलम्बः सूचितः । भूषयतिश्चुरादिः तस्माद्युच् ॥ ५७ ॥

श्लोकद्वयेन केशप्रसाधनमाह—

**नृपस्य तत्राधिकृताः पुनः पुन-**
**र्विचार्य तान्बन्धमवापिपन्कचान् ।**
**कलापलीलोपनिधिर्गुरुत्यजः**
**स यैरपालापि कलापिसम्पदः ॥ ५८ ॥**

नृपस्येति ॥ तत्र केशप्रसाधने अधिकृता नापितादयः पुनः पुनर्विचार्य धूपजधूमसंशोषणपुरःसरं कङ्कतिकादिना प्रसाधनं कृत्वा । अथ च धूपजधूमस्यापि विद्यमानत्वात्पुनःपुनस्तद्भ्रान्तिवशात् एते केशा एव न धूम इति चिरान्निश्चित्य, कानि पुष्पाणि कुत्र स्थाप्यानीति योग्यायोग्यभावं विचार्य वा नृपस्य तान् कचान् धम्मिल्लादिरचनाविशेषग्रन्थिरूपं बन्धमवापिपन्नापयामासुः । तान्कान्—यैः कचैः शरादि गरुतः

1 स्त्रोपमा। २ अत्र सिन्दूरमिवेत्युत्प्रेक्षा ।

1 सनाभितामित्युपमा। २ अत्रानुप्रासः ।

पक्षान् त्यजाति गरुत्त्यक् तस्य कलापिसङ्घस्य संबन्धी कलापलीलोपनिधिः कलापलीलाया उपनिधिः साम्यमपालापि आच्छादितः । तदपेक्षयाऽधिकेर्जातामित्यर्थः । कलापलीलारूपो य उपनिधिः कविसमयसिद्धः प्रतिनिधिः स यैराच्छादि । जित इवेत्यर्थ इति वा । नलकेशैर्विलासस्य गृहीतत्वान्निर्विलासतया निरर्थकं बर्हभारं त्यजतीति सूचनाद् गरुत्त्यज इति पदं साभिप्रायम् । यैः केशैः पक्षत्यागिन्या मयूरसंहतेः कलापशोभानिक्षेपः अपालापि गृहीत्वा नास्तीत्यपलापितः । यः परस्य निक्षेप गृहीत्वा न दत्ते परं प्रतारयति स राज्ञोऽधिकृतैः पुरुषैः पश्चाद्बद्धा शिक्षणीयो भवति । मयूराः शरदि पक्षान्मुञ्चन्ति । 'पुमानुपनिधिर्न्यासः' इत्यमरः । अवापिपन्, आप्नोतेर्ण्यन्तात्लुङि द्वितीयस्यैकाचो द्वित्वम् । गत्यर्थत्वादणो कर्तुर्णौ कर्मत्वम् । 'अलम्भयन्' इति च पाठः ॥ ५८ ॥

पतत्रिणां द्राघिमशालिना धनु-
गुणेन संयोगजुषां मनोभुवः ।
कचेन तस्यार्जितमार्जनश्रिया
समेत्य सौभाग्यमलम्भि कुड्मलैः[१]॥५९॥

पतत्रिणामिति ॥ अर्जिता लब्धा मार्जनश्रीरभ्यङ्गजनिता स्निग्धशोभा येन । तथा—द्राघिम्नातिदीर्घत्वेन शालते एवंशीलेन तस्य नलस्य कचेन केशपाशेन सह समेत्य संबन्धं प्राप्य कुड्मलैर्मल्लिकादिकोरकैः कर्तृभिः द्राघिमशालिना तयार्जितमार्जनश्रिया पुनःपुनरङ्गुल्यादिना घर्षणाल्लब्धमार्जनसंबन्धिस्निग्धशोभेन भ्रमरमालारूपेण धनुर्गुणेन संयोगजुषां सहितानां मनोभुवः कामस्य पतत्रिणां बाणानां सौभाग्यं सादृश्यमलम्भि । केशपाशस्य भ्रमरमालारूपेण कामधनुर्गुणेन साम्यम्, कोरकाणां च पुष्परूपैर्बाणैः नलस्य च कामेनेत्यर्थः । अतिविशालनीलतरकलिकालंकृतनलकेशपाशदर्शनमात्रेण भैमी कामवशा भवितेति भावः । कचेन, जातावेकवचनम् ॥ ५९ ॥

अनर्घ्यरत्नौघमयेन मण्डितो
रराज राजा मुकुटेन मूर्धनि ।
वनीपकानां स हि कल्पभूरुह-
स्ततो विमुञ्चन्निव मञ्जुमञ्जरीम्[१]॥६०॥

मूर्धप्रसाधनमाह—

अनर्घ्येति ॥ अनर्घ्यरत्नौघमयेनामूल्यदिव्यमाणिक्यादिरत्नघटितेन मुकुटेन मूर्धनि मण्डितो राजा स नलो हि यस्माद्वनीपकानां याचकानामतिधनदानात्कल्पभूरुहः कल्पवृक्षः, ततो हेतोर्मञ्जुमञ्जरीं कल्पवृक्षत्वोचितां रम्यां रत्नाङ्कुरपरम्परां विमुञ्चन्नुद्गिरन्निव रराज । वृक्षो हि बालपल्लवपुष्पफलयुक्तां मञ्जरीमुद्गिरति । कल्पवृक्षस्य च मञ्जरी रत्नफलत्वाद्रत्नमयी । मञ्जरीस्थाने मुकुटः, तत्किरणा वा । मञ्जर्याकारा मुकुटमणिकिरणा ऊर्ध्वं निर्गच्छन्तीत्यर्थः । अर्घमर्हतीत्यर्थे दण्डादित्वाद्यत् । 'मञ्जरीः' इति च पाठः ॥ ६० ॥

नलस्य भाले मणिवीरपट्टिका-
निभेन लग्नः परिधिर्विधोर्बभौ ।
तदा शशाङ्काधिकरूपतां गते
तदानने मातुमशक्नुवन्निव[२] ॥ ६१ ॥

भालप्रसाधनमाह—

नलस्येति ॥ रत्नखचिताया वीरसम्बन्धिन्या वीरपुरुषधार्याया वीरपट्टिकानाम्ना चाख्यातायाः सुवर्णपट्टिकायाः श्रवणयुगपश्चाद्भागमात्रव्यापिन्या निभेन व्याजेन नलस्य भाले ललाटे लग्नः सन् विधोश्चन्द्रस्य परिधिः परिवेषो बभौ । मुखचन्द्रेऽपि चेत्परिवेषः, संपूर्णमण्डलः किमिति न दृश्यत इत्यत आह—किं कुर्वन्निव । तदा प्रियासंगमकाले भूषणकाले च हर्षवशाद्भूषणवशाच्च शशाङ्कादधिरूपतां चन्द्रापेक्षयाऽधिकसौन्दर्यम् । अथ च—आधिकपरिमाणत्वं गते प्राप्ते तदानने मातुं तुल्यप्रमाणतां च प्राप्तुमशक्नुवन्निव । अल्पपरिमाणस्य यदलंकरणं तदधिकपरिमाणस्यैकदेश एव तिष्ठति न तु सर्वं मण्डयितुं शक्नोति । तस्मान्मुखैकदेशो भाल एव परिधिः स्थित इति युक्तमिति भावः । मणिकिरणानां मण्डलाकारत्वे न पट्टिकायाः परिवेषाकारत्वं युक्तम् । 'अशक्तिमुद्वहन्' इति च पाठः ॥ ६१ ॥

---

१ अत्रानुप्रासो यमकं च । २ अत्र कचे समेत्येत्युक्त्या तावत् कुड्मलत्वं परं सञ्ज्ञयाऽऽसीदिति गम्यते, न हि कामबाणा कुड्मलातिरिक्ताः । एतेन च कचस्य तेभ्योऽतिरेक इति सूचनात् व्यतिरेको व्यज्यते ।

१ सहीति स एवेत्युक्त्या यावन्न वनीपकास्तावदेव प्रसिद्धस्यान्यस्य कल्पभूरुहत्वं, न तु ततः परम्, अत एष एव स इति अपह्नुतिर्व्यज्यते विमुञ्चन्निवेत्युत्प्रेक्षा । २ अशक्नुवन्निवेत्युत्प्रेक्षा । निभेनेत्यपह्नुतिश्च ।

श्लोकत्रयेण तिलकं वर्णयति—

बभूव भैम्याः खलु मानसौकसं
जिघांसतो धैर्यभरं मनोभुवः।
उपभ्रु तद्वर्तुलचित्ररूपिणी
धनुःसमीपे गुलिकेव सम्भृता ॥ ६२ ॥

बभूवेति ॥ मनोभुवो धनुः समीपे सम्भृता सज्जीकृता उपभ्रु भ्रुवोः समीपे तस्य नलस्य वर्तुलं चित्रं तिलकस्तद्रूपिणी गुलिकेव मृन्मयो गोलक इव बभूव। किंभूतस्य—भैम्या मानसौकसम्। मनसि धैर्यभरं धैर्यबाहुल्यम् अथ च धैर्यभरमेवमानससरोनिवासिनं हंसम्। पक्षित्वान्न विद्यते धैर्यभरो यस्यैवंविधं वा। हंसं जिघांसतो हन्तुमिच्छतः। भ्रुवोः कामधनुष्ट्वम्, तिलकस्य च गुलिकात्वम्। भ्रूसमीपस्थितवर्तुलतिलकदर्शनमात्रेण भैमी कामवशा भविष्यतीति भावः। अन्योऽपि हंसं हन्तुमिच्छन्क्षत्रियो धनुषि गुलिकां संधत्ते। 'राज्ञश्च तिलको वृत्तो वर्तुलो नृपवैश्ययोः' इति वचनात्। मानसौकस्त्वोत्प्रेक्षायां खलु। 'चित्रं स्यादद्भुतालेख्यतिलकेषु' इति विश्वः। चित्रं च तद्रूपं चेति कर्मधारयादिर्निर्वा। 'चित्ररूपता' इति पाठः। तिलकस्वरूपेत्यर्थः ॥ ६२ ॥

अचुम्बि या चन्दनबिन्दुमण्डली
नलीयवक्त्रेण सरोजतर्जिना।
श्रियं श्रिता काचन तारकासखी
कृता शशाङ्कस्य तयाऽङ्कवर्तिनी॥६३॥

अचुम्बीति ॥ वृत्तत्वादिना गुणेन सरोजतर्जिना कमलजैत्रेण तदधिकेन। अथ च कमलतर्जनवशादेव चन्द्ररूपेण नलीयेन वक्त्रेण या चन्दनबिन्दुमण्डली मण्डलाकारश्चन्दनतिलकोऽचुम्बि धृता। तया चन्दनबिन्दुमण्डल्या चन्दनस्यैव सखीं श्रियं श्रिता सलक्ष्मीका काचन रोहिण्यादिमध्ये तारका शशाङ्कस्याङ्कवर्तिनी मध्यवर्तिनी कृता। तया चन्द्रमध्यवर्तिनी काचन सश्रीका स्वस्य सखी सहचरी कृता। सा तत्तुल्या जातेत्यर्थ इति वा। का च कापि तारका असखी न कृता, किंतु या काचन चन्द्राङ्कवर्तिनी भवेत्, सा सर्वापि सख्येव कृतेति वा। सरोजतर्जिनश्चन्द्रस्य मध्यवर्तिनी रोहिण्यादिर्यदि भवेत्, तर्हि चन्दनवृत्ततिलकयुक्तः सरोजतर्जी नलमुखचन्द्रस्तत्तुल्यो भवेत्, न त्वेवमित्यर्थः। तदा तन्मुखं पद्मचन्द्राभ्यामधिकतमं जातमिति भावः। 'कांचन' इति पाठेऽतिशयितश्रियं श्रितोः ॥ ६३ ॥

न यावदग्निभ्रममेत्युदूढतां
नलस्य भैमीति हरेर्दुराशया।
स बिन्दुरिन्दुः प्रहितः किमस्य सा
न वेति भाले पठितुं लिपीमिव ॥६४॥

नेति ॥ हरेरिन्द्रस्य इति एवंरूपया दुराशयानुपद्यमानासंभावितचिन्तया 'अस्य नलस्य भाले ललाटे सा भैमी किमस्ति न वा' इति संदेहरूपां ब्राह्मीं लिपीमक्षरपङ्क्तिं संदेहनिरासाय स्पष्टं पठितुं वाचयितुं स चन्दनतिलकबिन्दुरेव इन्दुश्चन्द्रः प्रहितः प्रेषित इवेत्युत्प्रेक्षा। इति किम्—भैमी यावदग्निभ्रममग्निप्रदक्षिणीकरणपर्यन्तं नलस्योदूढतां परिणीततां भार्यात्वं न एति न गच्छतीति। यद्यपि स्वयंवरो जातः, तथापि यावत्सप्तपदी नास्ति तावद्भैमी नलस्य भार्या न भवतीति दुराशया स बिन्दुश्चन्द्र एव प्रहितः किम्। 'पतित्वं सप्तमे पदे' इति स्मृतिप्रामाण्याद्यावदग्निभ्रमणं नास्ति तावद्भैमी नलस्त्वां नेति। ब्रह्मलिपेर्निश्चयं चन्द्रद्वारा बुद्ध्वा तत्प्राप्त्यर्थं वयं प्रयतामह इति दुराशया लिपिवाचनार्थं प्रेषितश्चन्द्रो ललाटे स्थितः। चन्द्र इव तिलको रेज इति भावः। यावदग्निभ्रमम्, अव्ययीभावः। लिपी, 'कृदिकारादक्तिनः' इतीकारः ॥ ६४ ॥

कपोलपालीजनिजानुबिम्बयोः
समागमात्कुण्डलमण्डलद्वयी।
नलस्य तत्कालमवाप चित्तभू-
रथस्फुरच्चक्रचतुष्कचारुताम् ॥६५॥

कर्णभूषणं वर्णयति—

कपोलेति ॥ तत्कालं तस्मिन्मण्डनसमये नलस्य कुण्डलमण्डलद्वयी कर्णभूषणीभूतमण्डलाकारकुण्डलद्वयी कपोलपाल्यां प्रशस्तातिस्वच्छनलकपोलयुगे जातौ निजौ स्वीयावनुबिम्बौ तयोः समागमात्संबन्धाद्धेतोश्चित्तभूरथे कामरथे स्फुरल्लसच्चक्रचतुष्कं तस्य चारुतां सौन्दर्यमवाप। रथश्चतुश्चक्रो भवति। पाली फलकम्। चतुष्कं परिमाणोपाधिके सङ्ख्यार्थे 'संख्यायाः संज्ञासङ्घसूत्रा-

१ खलिवत्युत्प्रेक्षा, गुलिकेवेत्युपमा।

१ अत्रानुप्रासः। सरोतर्जिनेति व्यतिरेकः। तारकासखी कृतेत्युपमा। २ किमित्युत्प्रेक्षा, लिपीमिवेत्युत्प्रेक्षा। अनुप्रासोऽत्र शब्दालङ्कारोऽपि।

ध्ययनेषु ५।१।५८' इति कन् । तत्र प्राणिसङ्घे यद्यपि प्रत्ययः, तथाऽप्यत्रौपचारिकः प्रयोगः ॥ ६५ ॥

**श्रिताऽस्य कण्ठं गुरुविप्रवन्दनाद्**
**विनम्रमौलेश्चिबुकाग्रचुम्बिनी ।**
**अवाप मुक्तावलिरास्यचन्द्रमः-**
**स्रवत्सुधातुन्दिलबिन्दुवृन्दताम् ॥६६॥**

श्रितेति ॥ अस्य कण्ठं श्रिता मुक्तावलिर्मौक्तिकहारलता आस्यमेव चन्द्रमास्तस्मात्स्रवन्ती सुधा तस्यास्तुन्दिलं स्थूलं विन्दुवृन्दं तस्य भावस्तत्ता तामवाप । किंभूतस्य—गुरूणां पित्रादीनां विप्राणां च वन्दनया विनम्रो मौलिर्यस्य । अत एव ( किंभूता हारलता—) चिबुकाग्रचुम्बिनी हन्वग्रस्पर्शिनी । मुक्तानां स्थूलत्वं च सूचितम् । पूर्णचन्द्रदर्शनवन्नलदर्शनाद्गुर्वादीनां प्रीतिर्जातेति भावः ॥ ६६ ॥

श्लोकत्रयेण भुजभूषणं वर्णयति—

**यतोऽजनि श्रीर्बलवान्बलं द्विषन्**
**बभूव यस्याजिषु वारणेन सः ।**
**अपूपुरत्तान्कमलार्थिनो घनान्**
**समुद्रभावं स बभार तद्भुजः ॥ ६७ ॥**

यत इति ॥ स तद्भुजो नलभुजो मुद्राभिरङ्गुलीयकैः सहितः समुद्रस्तस्य भावस्तम्। अथ च दण्ड्यदण्डनादिराजधर्मपरिपालनान्मुद्रा नियमस्तत्साहित्यम् । बभार भेजे। ऊर्मिका दधारेति भावः । स कः—यतो यस्माद्भुजाद्धेतोः श्रीः शोभा, राज्यलक्ष्मीर्वा । अजन्युत्पन्ना । तथा—आजिषु यस्य भुजस्य वारणेन यत्कर्तृकेण शत्रुविमर्दनेन कृत्वा बलं शत्रुसैन्यं द्विषन्पराभावुकः सन् स नलो बलवानुत्साहयुक्तः शक्तियुक्तो वा बभूव । यत्कृतनिवारणेन बलवान्सन् शत्रुसैन्यं पराभावुकोऽभूदिति वा । वाशब्दश्चार्थे । ततश्च—आजिषु बलं द्विषन् स नलो यस्य च यत्कर्तृकेण रणेन सङ्ग्रामेण बलवानभूदिति वा । शत्रुसैन्यं द्विषन्स प्रसिद्धोऽतिबलोऽपि शत्रुः सङ्ग्रामेषु यस्य कर्मभूतस्य वारणे निराकरणे बलवान्न बभूवेति वा । आजिषु बलं द्विषन्स प्रसिद्धः शत्रुर्यस्य सङ्ग्रामे विषये बलवान्नाभूदिति वा । वारणानामिनः स्वामी वारणेनश्चासौ स चातिप्रसिद्ध ऐरावतः स वारणेनसो यस्य नलभुजस्य बलं द्विषन् यद्बलेन सह स्पर्धमानः सङ्ग्रामेषु बलवानभूत् । हीनबलोऽप्युत्तमैतद्भुजबलस्पर्धया बलवत्त्वप्रतिष्ठां लेभे ।'वरं विरोधोऽपि समं महात्मभिः' इति न्यायादिति भावः । सङ्ग्रामेषु बलं दैत्यं पराभावुकः स इन्द्रोऽपि यस्याजिषु येन भुजेन सह सङ्ग्रामे बलवान्नाभूत् । इन्द्रादप्ययं बलीति भाव इति वा । बवयोरभेदाद्वलनं वलः पलायनं तद्वान् । सङ्ग्रामे यत्कृतेन निवारणेन स बलारातिरतिबलवान्पलायनपरोऽभूत्, न तु स्थातुं शक्त इति वा।यः करस्तानतिप्रसिद्धान् घनान्बहून्कमलां लक्ष्मीमर्थयन्त एवंशीलान्याचकानपूपुरत्पूर्णींचकार। अतिवदान्य इत्यर्थः । बहून्सुन्दरवधूकाङ्क्षिणो वरान् यः पपार । बहवो ब्राह्मणा येन विवाहिता इत्यर्थ इति वा । अथ च—सागरत्वं भेजे । यस्मात्सागराल्लक्ष्मीर्जाता । यदुत्पन्नेन वारणेनैरावताख्येन स बलारातिराजिषु बलवानभूत्, यश्च वृष्ट्यर्थं जलाभिलाषिणो मेघान्पूरयति । रामनामाद्यङ्किता मुद्रोक्ता । 'यदुद्गता', 'पपार यस्तान्' इति वा पाठः । 'सलिलं कमलं जलम्' इत्यमरः । 'कमला श्रीवरश्रियोः' इति विश्वः । वलनं वलः । घञर्थे कविधानात्कः । अपूपुरदिति पूरयतेर्लुङि 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इति ह्रस्वे 'दीर्घो लघोः ७।४।९४' इत्यभ्यासस्य दीर्घः । पूपार, पधातोः पूरणार्थाल्लिट् । इत्वं चोत्वं च बाधित्वा पूरत्वावृद्धिः ॥ ६७ ॥

**कृतार्थयन्नर्थिजनाननारतं**
**बभूव तस्यामरभूरुहः करः ।**
**तदीयमूले निहितं द्वितीयवद्-**
**ध्रुवं दधे कङ्कणमालवालताम् ॥६८॥**

कृतेति ॥ तस्य करोऽमरभूरुहः कल्पवृक्षो यतो बभूव ।किं कुर्वन्—अर्थिजनान् याचकलोकान् बहुधनदानादनारतं सदा कृतार्थयन्प्राप्तप्रयोजनान्कुर्वन् । तस्मान्मणिबन्धरूपे तदीयकरमूले निहितं स्थापितं द्वितीयवद्द्वितीयेन वैवाहिकेन, सूत्रमयेन माङ्गलिकेन कङ्कणेन युक्तं सौवर्णं कङ्कणमालवालतां दधे । तदीयकरकल्पतरोः कङ्कणमालवालस्थाने जातमित्यर्थः । वृक्षमूले आलवालद्वयं भवति । मिलितमुद्रिकाद्वयवद्वयोर्मिलित-

---

१ अत्रानुप्रासः, अवापेत्युपमा, अपापेवेति प्रतीतावुत्प्रेक्षा गम्याऽपि ।२ अत्रापि पूर्ववदनुप्रासः । उपमोत्प्रेक्षा गम्या च ।

१ अत्रापि अनुप्रासः,पूर्ववच्च बभारेत्युपमा, बभारेवेति प्रतीतावुत्प्रेक्षा गम्याऽपि ।

योर्घटनाद्द्वितीयवदिति वा । ध्रुवमुत्प्रेक्षायाम् । 'विनिवेशितं तदा' इति पाठः साधुः ॥ ६८ ॥

रराज दोर्मण्डनमण्डलीजुषोः
स वज्रमाणिक्यसितारुणत्विषोः ।
मिषेण वर्षन्दशदिङ्मुखोन्मुखौ
यशःप्रतापाववनीजयार्जितौ ॥ ६९ ॥

रराजेति ॥ स नलो रराज । किं कुर्वन्निव—दोर्मण्डनं बाहुभूषणं तस्य मण्डली श्रेणी तां जुषेते इति जुषौ तयोरङ्गदादिवर्तुलबाहुभूषणाश्रययोर्वज्रमाणिक्यानां क्रमेण सितारुणत्विषोः श्वेतरक्तदीप्त्योर्मिषेण ऊर्ध्वाधोदिक्सहितप्राच्यादिदशदिङ्मुखानामुन्मुखौ तत्र प्रसरन्तावनीजयेनार्जितौ क्रमेण यशःप्रतापौ वर्षन्प्रसारयन्निव । हीरकमाणिक्यानां मण्डनाश्रितत्वात्तद्दीप्त्योरपि मण्डनाश्रितत्वं युक्तम् । यशःप्रतापौ सितरक्तशोभाविति कविसंकेतः । इवाध्याहारः ॥ ६९ ॥

वने समस्तापघनावलम्बिनां
विभूषणानां मणिमण्डले नलः ।
स्वरूपरेखामवलोक्य निष्फली-
चकार सेवाचणदर्पणार्पणम् ॥ ७० ॥

घन इति ॥ नलः समस्ता येऽपघना हस्तमस्तकाद्यङ्गानि तानवलम्बत एवंशीलानि तत्र स्थितानि तेषां विभूषणानां घने सान्द्रे मणिमण्डले रत्नसङ्घे स्वरूपस्य स्वाकारस्य रेखां परमां शोभां स्वलावण्यपरमां मर्यादां वाऽवलोक्य सेवया वित्ताः प्रसिद्धाः सेवाचतुरा नापितादयस्तेषां दर्पणार्पणां प्रतिबिम्बदर्शनार्थं मुकुरार्पणां निष्फलीचकार । आदर्शकृत्यस्य रत्नैरेव कृतत्वादिति भावः । मङ्गलमादर्श इति बुद्ध्या तैर्दर्पण आनीतः । तेन च विलोकित इति तेषां सेवाचातुर्यम् । सेवाचणेति 'तेन वित्तश्चुञ्चुप्चणपौ ५।२।२६' इति चणप् ॥७०॥

व्यलोकि लोकेन न केवलं चल-
न्मुदा तदीयाभरणार्पणाद्युतिः ।
अदर्शि विस्तारितरत्नलोचनैः
परस्परेणैव विभूषणैरपि ॥ ७१ ॥

व्यलोकीति॥चलन्ती व्याप्नुवत्युत्पाद्यमाना मुद्यस्य तेन निरन्तरहर्षेण लोकेन तदीयानां नलीयानामाभरणानामर्पणाद्युतिः संस्थानविशेषे स्थापनजनिता शोभा केवलं न व्यलोकि, किंतु विस्फारितानि प्रसारितकिरणानि रत्नान्येव लोचनानि येषामेवंविधैः । विस्फारितैः रत्नलोचनैः कृत्वा वा । अचेतनैर्विभूषणैरपि परस्परेणान्योन्यस्य द्युतिरदर्शीव विलोकितेव । अन्योन्यशोभाविलोकनार्थमचेतनैरपि तैर्नेत्राणि प्रसारितानीत्यर्थः । आभरणशोभा सर्वैर्विलोकिता । मण्डनमात्रं च खचितरत्नमित्यर्थः ॥ ७१ ॥

ततोऽनु वार्ष्णेयनियन्तृकं रथं
युधि क्षितारिक्षितिभृज्जयद्रथः ।
नृपः पृथासूनुरिवाधिरूढवान्
सजन्ययात्रामुदितः किरीटवान् ॥७२॥

तत इति ॥ ततो भूषणधारणादनु पश्चात्स नलो नृपो वार्ष्णेयनामा नियन्ता सारथिर्यस्य । अथ च—कृष्णः सारथिर्यस्य । तं रथं किरीटवान्सहजकिरीटयोगात्किरीटनामा पृथासूनुरर्जुन इवारूढवान् । किंभूतो नलोऽर्जुनश्च—युधि क्षिता भङ्गं प्रापिता अरिक्षितिभृतां वैरिनृपाणां जयन्तो जयदातारोऽपि रथा येन । क्षितवैरिनृपश्चासौ जयद्रथो यस्येति वा । क्षिता वैरिनृपाणां जयन्तो रथा लक्षणया अर्शआदित्वाद्वा महारथातिरथाधिरथप्रमुखा योधा येनेति वा।अर्जुनपक्षे—युद्धे हतोऽभिमन्युवधादरिः शत्रुभूतः क्षितिभृद्राजा जयद्रथो येन । क्षितोऽरीणां कौरवाणां संबन्धी राजा जयद्रथो येनेति वा । तथा—जनीं वधूमर्हति जन्यो वरस्तत्संबन्धिन्यां यात्रायां मुदितो हृष्टः । जन्या वरपक्षीयास्तैः सह यात्रया वा हृष्टः । अथ च—युद्धसंबन्धिन्यां विजययात्रायां हृष्टः । तथा—मुकुटेन मण्डितः । वरयात्रार्थं निर्गत इत्यर्थः । वार्ष्णेयः, वृष्णेरपत्यम्, 'इतश्चानिञः' इति ढक् । नियन्तृकम्, 'नद्यृतश्च' इति कप् ॥ ७२ ॥

---

१ अत्राप्यनुप्रासः, ध्रुवमित्युत्प्रेक्षा, रुहः कर इति रूपकम्, दध इत्युपमा च । २ मिषेणेत्यपह्नुतिः । वर्षन्निवेति प्रतीत्योत्प्रेक्षा गम्यते । ३ अत्रानुप्रासः । दर्पणादिसाधनीयस्य कर्मणो रत्नसन्निधानात्साधु निष्पादितत्वोक्तेः समाधिः । 'समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः' इति तल्लक्षणात् ।

१ अत्रानुप्रासः अदर्शीवेत्युत्प्रेक्षा परस्परेणेत्यन्योन्यालङ्कारश्च २ पृथासूनुरिवेत्युपमा । तदानीं यावत्पृथासूनोरजातत्वात्तत्सादृश्योक्तेरुपमायां कालवैपरीत्यदोष इति त्वन्यत् ।

विदर्भनाम्नस्त्रिदिवस्य वीक्षितुं
रसोदयादप्सरसस्तमुज्ज्वलम् ।
गृहाद्गृहादेत्य धृतप्रसाधना
व्यराजयन्राजपथानथाधिकम् ॥ ७३ ॥

इदानीं वरसंदर्शनार्थं पुरनारीसंभ्रममाह—

विदर्भेति ॥ अथ रथारोहणनान्तरं विदर्भेति नाम्नस्त्रिदिवस्य कुण्डिनरूपस्य स्वर्गस्याप्सरसः सुन्दरनार्य एव स्वर्वेश्या उज्ज्वलं प्रकाशमानं मूर्तं शृङ्गाररूपं वा तं नलं रसोदयाद् दर्शनादनुरागाभिवृद्धिहेतोर्वीक्षितुं विशेषेण द्रष्टुं धृतप्रसाधना धृतालंकाराः सत्यो गृहाद्गृहादेत्यागत्य निसर्गरम्यान्राजपथानधिकं नितरां व्यराजयन् ।[१] तद्योगात्तेऽप्यधिकं शुशुभिर इत्यर्थः। तासामतिसौन्दर्यमुक्तम्। सर्वा अपि तद्दर्शनार्थमागता इति भावः ॥ ७३ ॥

अजानती काऽपि विलोकनोत्सुका
समीरधूतार्धमपि स्तनांशुकम् ।
कुचेन तस्मै चलतेऽकरोत्पुरः
पुराङ्गना मङ्गलकुम्भसम्भृतिम् ॥ ७४ ॥

अजानतीति ॥ नलस्य विलोकनोत्सुका अत एव समीरणेन धूतार्धं कम्पितार्धमपि स्तनांशुकं चोलकाख्यं कुचावरणवस्त्रमजानत्यनावृण्वती काऽपि पुराङ्गना चलते वरयात्रोन्मुखाय तस्मै नलाय पुरोऽग्रभागे कुचेन कृत्वा मङ्गलकुम्भस्य शुभसूचकशकुनरूपपूर्णकुम्भस्य सम्भृतिं सम्भारमुपदामकरोत् । समीरधूत इत्यनेनाचेतनस्याप्यनुरागोत्पादना, कुचस्यातिसौन्दर्यमिति च व्यज्यते । वरस्य च पुरः पूर्णकलशदर्शनं शुभाय भवति । तस्मै, 'क्रियया यमभिप्रैति स संप्रदानम्' इति सम्प्रदानत्वम्[२] ॥ ७४ ॥

सखीं नलं दर्शयमानयाऽङ्कतो
जवादुदस्तस्य करस्य कङ्कणे ।
विषज्य हारैस्त्रुटितैरतार्कितैः
कृतं कयाऽपि क्षणलाजमोक्षणम् ॥ ७५ ॥

सखीमिति ॥ सोऽयं नलः समागच्छतीत्येवं करेण सखीं नलं दर्शयमानया दर्शयन्त्या कयाऽपि प्रदर्शनार्थमेवाङ्कत उत्सङ्गात्सकाशाज्जवाद्वेगादुदस्तस्योत्क्षिप्तस्य करस्य सुवर्णहीरकधारातीक्ष्णाग्रभागे कङ्कणाख्ये भूषणे विषज्य वेगाभिघातवशाल्लगित्वा त्रुटितैश्छिन्नैर्हारैर्नलविलोकनरसादतर्कितैरज्ञातविच्छेदादधः पतनैर्हारैस्तदीयमुक्ताफलैः कृत्वा क्षणं क्षणमात्रम् । क्षण उत्सवस्तत्सम्बन्धि वा । लाजमोक्षणं कृतम् । अन्यरमणीनिरन्तरक्रियमाणलाजमोक्षणमध्ये मौक्तिकमोक्षणमपि क्षणं तद्भ्रमकार्यभूदित्यर्थः । दर्शयमानया, 'णिचश्च १।३।७४' इति कर्त्रभिप्राये क्रियाफले शानचि 'हृक्रोरन्यतरस्याम् १।४।५३' इत्यत्र 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' इति वक्तव्याद्द्विकर्मकत्वात्सखीमिति कर्मत्वम् । 'सखीः' इति च पाठः ॥ ७५ ॥

लसन्नखादर्शमुखाम्बुजस्मित-
प्रसूनवाणीमधुपाणिपल्लवम् ।
यियासतस्तस्य नृपस्य जज्ञिरे
प्रशस्तवस्तूनि तदेव यौवतम् ॥ ७६ ॥

लसदिति ॥ तद्युवतीनां समूहो यौवतमेव यियासतो वरयात्रोन्मुखस्य तस्य नृपस्य प्रशस्तवस्तूनि शुभसूचकमङ्गलद्रव्याणि जज्ञिरे । किम्भूतम्—नखा एवादर्शाः, मुखान्येवाम्बुजानि, स्मितान्येव प्रसूनानि पुष्पाणि, वाण्य एव मधूनि, पाणय एव पल्लवानि, इतरेतरयोगः समाहारो वा। लसन्तः स्फुरत्कान्तयो नखादर्शादयो यस्य तत्। एवंविधपुरनारीदर्शनाद्भैमीपाणिग्रहो नितरां मम शुभायैव भवितेति तस्य बुद्धिरभूदिति भावः । अतिसौन्दर्यं तासां सूचितम् । 'दध्याज्यादर्शादिदर्शनं शुभावहम्' इति वसन्तराजग्रन्थाज्ज्ञातव्यम् । आरोप्यमाणस्य प्राधान्याज्जज्ञिरे इति बहुवचनम्[१] ॥ ७६ ॥

करस्थताम्बूलजिघत्सुरेकिका
विलोकनैकाग्रविलोचनोत्पला ।
मुखे निचिक्षेप मुखद्विराजता-
रुषेव लीलाकमलं विलासिनी ॥ ७७ ॥

करेति ॥ एकिका काऽपि विलासिनी पुरनारी करस्थं ताम्बूलं जिघत्सुर्भक्षयितुमिच्छुः सती करस्थं लीलाकमलं मुखे निचिक्षेप । यतो नलविलोकने विषये एकाग्रे तत्परे विलोचनोत्पले यस्याः सा । ताम्बूलभ्रान्त्या कमलं मुखे निक्षिप्तमित्यर्थः । कयेव—मुखलक्षणे राजनि

१ विदर्भनाम्न इत्यत्र नामेति च्छलार्थः शब्दः, तेनापह्नुतिः,अन्यथा तु रूपकम् । २ अत्र ससम्भ्रमं विलोकनानुरूपवर्णनात्स्वभावोक्तिः ।

१ अत्रापि स्वभावोक्तिः । २ अत्रानुप्रासो रूपकं च ।

विद्यमाने कमलस्य द्वितीया राजता तया जाता या रुट् क्रोधस्तयेव । उत्तमेन मन्मुखेन सहैतत्स्पर्धत इति क्रोधादिव मुखे कमलं निक्षिप्तमित्यर्थः । नलसौन्दर्यातिशयदर्शनेन विमनस्कतोक्ता । जिघत्सुः, 'लुङ्सनोर्घस्लृ २।४।३७' इत्यदेर्घस्लादेशे, 'घस्लृ अदने' इत्येतस्माद्वा सन्नन्तादुः । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधात्ताम्बूलं जिघत्सुरिति द्वितीयायाम्, 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२४' इति योगविभागात्समासः ॥ ७७ ॥

कयाऽपि वीक्षाविमनस्कलोचने
समाज एवोपपतेः समीयुषः ।
घनं सविघ्नं परिरम्भसाहसैः
तदा तदालोकनमन्वभूयत ॥ ७८ ॥

कयेति ॥ कयाऽपि स्वैरिण्या वीक्षया नलदर्शनेन विमनस्के त्यक्तविषयान्तरे लोचने यस्मिंस्तस्मिन्समाजे जनसङ्घ एव समीयुषः समागतस्योपपतेर्जारस्य परिरम्भ आलिङ्गनविषये साहसैर्निर्विचारनिर्भयप्रवर्तनैः कृत्वा तदा नलविलोकनसमये तदालोकनं नलदर्शनं घनं नितरां सविघ्नं यथा तथाऽन्वभूयताऽनुभूतम् । जारकर्तृकैर्जारकर्मकैर्वा आलिङ्गनैर्व्यवधानात्तया नलः सम्यङ् नादर्शीत्यर्थः । तदा तदा कदाचित्कदाचित् मक्तत्वान्नलस्य आलोकनं कृतम्, न तु निरन्तरमिति वा । देवयात्रावरयात्रादिको जारादीनां कामशास्त्रे समय उक्तः ॥ ७८ ॥

दिदृक्षुरन्या विनिमेषवीक्षणां
नृणामयोग्यां दधती तनुश्रियम् ।
पदाग्रमात्रेण यदस्पृशन्महीं
न तावता केवलमप्सरोऽभवत् ॥ ७९ ॥

दिदृक्षुरिति ॥ नलं दिदृक्षुः, अत एव दर्शनानुरागवशेन विगतपक्ष्मसंकोचे वीक्षणे विनिमेषेताम् नेत्रे यस्याः । तथा—नृणां भूलोकवासिनामयोग्यां दिव्यां तनुश्रियं दधती अन्या काचिन्नारी इत्थं प्राप्तदेवाङ्गनासाम्याऽपि दर्शनौत्सुक्यात्पदाग्रमात्रेणैव यद्यस्मान्महीमस्पृशत्तावता केवलं तावन्मात्रेणैव नाप्सरोऽभवत् । अप्सरसोऽप्यनिमिषनेत्रा मनुष्यानर्हा दैवकभोग्यां कायकान्तिं बिभ्राणाः केवलं पदैक देशेनाऽपि भूमिं न स्पृशन्ति । इयं तु निर्निमेषदर्शनोत्सुकतयाऽङ्गुष्ठादिमात्रेण स्पृशती तेनैव धर्मेण तत्तुल्या नाभूत् । अन्यत्सर्वं सादृश्यमेवेत्यर्थः । अप्सरोऽभवादिति च्विः । अप्सरःशब्दस्य बहुत्वेऽपि अन्या इत्यपेक्षयाऽभवदित्येकवचनमपि युक्तम् । 'आपः सुमनसो वर्षा अप्सरः सिकतासमाः । एताः स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरं त्रयम् ॥' इति वचनादेकवचनान्ताप्सरःशब्दाच्विः । बहुजनपृष्ठवर्तिनो भित्त्यदिव्यवहिता वा पादाङ्गुष्ठमात्रेण भुवं स्पृशन्तः प्रोन्नमिताङ्गाः पश्यन्तीति दिदृक्षूणां स्वभावः ॥ ७९ ॥

विभूषणस्रंसनशंसनार्पितैः
करप्रहारैरपि धूननैरपि ।
अमान्तमन्तः प्रसभं पुरापरा
सखीषु समापयतीव सम्मदम् ॥ ८० ॥

विभूषणेति ॥ अपराऽन्तःकरणे शरीरमध्येऽमान्तं संमर्दं शरीरमानादधिकमानं बहिरवस्थितं नलदर्शनजं प्रमोदं विभूषणानां स्रंसनस्य शंसने तव मण्डनं गलितम् तव मण्डनं गलितमिति प्रत्येकं कथने विषयेऽर्पितैर्दत्तैः करप्रहारैरपि धूननैरपि तच्छरीरकम्पनैश्च कृत्वा प्रसभं बलात्कारेण स्वसखीषु पुरा संमापयतीव प्राविशादिव । विचित्तत्वेन शब्दमशृण्वन्, करेण ताड्यते, पतितविस्मृतभूषणादिसंवेदनाय कम्प्यते चेति । तथा—अन्यदपि कुसूलादावमाद्धोधूमादि बहिरेव संस्थितं सद्बलात्कारेण करताडनैः करकृतैर्धूननैश्चान्तर्भाव्यत इति च लौकिकी रीतिः । नलदर्शनानुरागादतिविमनस्कास्ता जाता इति भावः । पुरा संमापयतीति 'पुरि लुङ् चास्मे' इति लट् ॥ ८० ॥

वतंसनीलाम्बुरुहेण किं दृशा
विलोकमाने विमनीबभूवतुः ।
अपि श्रुती दर्शनसक्तचेतसां
न तेन ते शुश्रुवतुर्मृगीदृशाम् ॥ ८१ ॥

विभूषणभ्रंशः शब्देन किमिति न ज्ञापित इत्यत आह—वतंसेति ॥ नलदर्शने सक्तं चेतो यासां मृगीदृशां श्रुती कर्णावपि वतंसनीलाम्बुरुहेण कर्णभूषणनीलोत्पले-

१ अत्रानुप्रासः, विलो इति यमकं च, विलोचनोत्पलेष्वुपमा, रुषेवेत्युत्प्रेक्षा च । २ अत्रानुप्रासः, तदेति यमकं च ।

१ अत्राप्सरःसाम्योक्तेरुपमा । २ अत्रानुप्रासः, सम्मापयतीवेत्युत्प्रेक्षा च ।

नैव दृशा नेत्रेण नलं विलोकमाने सत्यौ यस्माद्विमनीबभूवतुर्व्याकुले जाते तेन ते श्रुती किं भूषणसंछवनं शुश्रुवतुः । चक्षुषी किल श्रवणानर्हत्वान्नाशृणुताम्, कर्णौ तु श्रोतुं योग्यावेवेत्यपेरर्थः । ताः सुदृशो यथा नलविलोकने विमनस्का जातास्तथा कर्णावपि विमनस्कौ जाताविति वापेरर्थः । विमनीबभूवतुः, 'अरुर्मनश्चक्षुः-' इति च्विः सलोपश्च ॥ ८१ ॥

**काश्चिन्निर्माय चक्षुःप्रसृतिचुलुकितं तास्वशङ्कन्त कान्ता-मौग्ध्यादाचूडमोघैर्निचुलितमिव तं भूषणानां मणीनाम्। साहस्रीभिर्निमेषाकृतमतिभिरयं दृग्भिरालिङ्गितः किं ज्योतिष्टोमादियज्ञश्रुतिफलजगतीसार्वभौमभ्रमेण ॥ ८२ ॥**

काश्चिदिति ॥ पश्यन्तीषु तासु मध्ये कान्ताः सुन्दर्यः काश्चित्पुरनार्यो भूषणानां ये मणयस्तेषां भूषणभूतानां वा मणीनां रत्नानामोघैः समूहैराचूडं शिखामभिव्याप्य निचुलितमाच्छादितमिव तत्र मुद्रितमिव तं नलं चक्षूरूपाभ्यां प्रसृतिभ्यामर्धसंकुचितकरकुड्मलाभ्यां चुलुकितं पीतं निर्माय कृत्वा प्रसृतिप्रमाणाभ्यामतिविशालाभ्यां चक्षुर्भ्यां सादरदृष्टं कृत्वा इति मौग्ध्यादनैपुण्यादशङ्कन्त तर्कयामासुः। इति मौग्ध्यं किम्—निमेषे पक्ष्मसंकोचेऽकृतमतिभिरनिमिषाभिः साहस्रीभिः सहस्रसंख्याभिर्दृग्भिर्दृष्टिभिर्ज्योतिष्टोमराजसूयादियज्ञानां वेदाच्छ्रुतं यत्फलं साध्यं तद्रूपा या जगती भुवनं स्वर्गस्तस्याः सार्वभौमश्चक्रवर्तीन्द्रस्तस्य भ्रमेणायं नल आलिङ्गितःश्लिष्टः किम् । अचेतनैरपि रत्ननेत्रसहस्रैर्वैभववशादिन्द्रोऽयमिति भ्रान्त्येन्द्रस्य सहस्रनेत्रत्वादनेनास्माभिः संबन्धुं युक्तमिति बुद्ध्वा समालिङ्गिताः किमित्युत्प्रेक्षा । एतदेव मौर्ख्यम् । सौन्दर्यं रत्नबाहुल्यं चोक्तम् । सहस्रशब्दः पक्षेऽपरिमितसंख्यावाची । सहस्रं परिमाणमासां ताः साहस्र्यः, तदस्य परिमाणम् इत्यर्थे ' शतमानविंशतिकसहस्रवसनादण्' इत्यण् ॥ ८२ ॥

**भवन्सुद्युम्नः स्त्री नरपतिरभूद्यस्य जननी तमुर्वश्याः प्राणानपि विजयमानस्तनुरुचा । हरारब्धक्रोधेन्धनमदनसिंहासनमसा-वलंकर्मीणश्रीरुदभवदलंकर्तुमधुना ॥ ८३ ॥**

भवन्निति ॥ सूर्यनप्ता मनोः पुत्रःसुद्युम्नाख्यो नरपती राजा पार्वतीवनप्रवेशनिमित्तेन शिवशासनेन हेतुना इलाख्यः स्त्री भवन्स्त्रीत्वं प्राप्तः सन् बुधाद्गर्भधारणेन यस्य जनन्यभूत् । उर्वश्याः प्राणान्रूपातिशयात्सर्वस्वभूतायाः प्राणभूतं प्राणवत्प्रियमतिसुन्दरं तं पुरूरवसमपि तनुरुचा कायकान्त्या विजयमानः पराभावुकोऽसौ नलोऽधुनेदानीं हरेणारब्धः कृतः क्रोधस्तस्येन्धनं दाह्यो मदनस्तस्य सिंहासनं दग्धत्वात्कामेन शून्यमलंकर्तुं योग्यतया भूषयितुमलंकर्मीणा कर्मक्षमाऽतिसमर्था स्वाभाविकी भूषणजनिता च श्रीः शोभा यस्यासौ एवंभूत उदभवज्जात इति 'पौरास्त्रिय आलेपुः' ( ९२ ) इत्यन्तिमश्लोकेन संबन्धः । जीर्णः कामो दग्धः । पुरूरवास्त्वनेनैव जितः । तस्माच्छून्यं कामसिंहासनं भूषयितुमयं काम एवोत्पन्नः । अतिसुन्दरोऽयमिति भावः । कृतयुगादौ त्विलो नाम राजा मृगयासङ्गाद्धरनिवारितमुमावनमेकाकी प्रविष्टः स्त्री बभूव । तामेकाकिनीं सुन्दरीं दृष्ट्वा चन्द्रपुत्रो बुधःकामातुरः सन्स्वाश्रमं नीत्वा तस्यां पुरूरवोनामानं पुत्रमजीजनदिति भविष्योत्तरादिपुराणकथा । विजयमानः, 'वि पराभ्यां जेः १ । ३ । १९ । इत्यात्मनेपदे शानच् । 'कर्मक्षमोऽलंकर्मीणः' इत्यमरः ॥ ८३ ॥

**अर्थी सर्वसुपर्वणां पतिरसावेतस्य यूनः कृते—पर्यत्याजि विदर्भराजसुतया युक्तं विशेषज्ञया । अस्मिन्नाम तया वृते सुमनसः सन्तोऽपि यन्निर्जरा—जाता दुर्मनसो न सोढुमुचिता तेषां तु सा नौचिती ॥ ८४॥**

अर्थीति ॥ विशेषज्ञया गुणानामधिकतरत्वं विदुष्या विदर्भराजसुतया अर्थी मां वृणीष्वेत्यर्थयमानः सानुरागोऽप्यसौ सर्वसुपर्वणां सर्वदेवानां पतिरिन्द्रोऽप्येतस्य प्रत्यक्षलक्ष्यातिसौन्दर्यस्य यूनः पूर्णतारुण्यस्य नलस्य निमित्तं पर्यत्याजि सानुरागत्वेन प्रभुत्वेऽपि सौन्दर्यादिगुणानां न्यूनत्वाद्यत्परित्यक्तस्तद्युक्तमुचितमेव कृतमित्यर्थः । नाम प्रकाश्ये । तु पुनः निर्जरा इन्द्रादयश्चत्वारोऽपि देवाः शिष्टा नाम प्रसिद्धाः सुमनसः शोभनान्तः-

१ अत्रानुप्रासः, किमित्युत्प्रेक्षा च । २ अत्र स्रग्धरा छन्दः, अत्रानुप्रासः, निचुलितमिवेत्युत्प्रेक्षा, किमित्यपि सैवोत्प्रेक्षा ।

१ अत्र शिखरिणी छन्दः, मदनस्येन्धनत्वेन रूपणात् क्रोधस्याग्नित्वेन रूपणमप्यर्थतं उक्तमित्युभयत्र रूपकम् । अत्रनुप्रासश्चात्र शाब्दाऽलङ्कारः ।

करणा अपि । सुमनसः प्रसिद्धाः सन्तोऽपि वा । सुमनस इति संज्ञया ख्याताः सन्तोऽपि । तया भैम्याऽस्मिन्नले वृते सति यद्दुर्मनसः सविषादमनसो जाताः सा तेषामनौचित्यमनुचितकारिता सोढुं क्षन्तुं नोचिता युक्ता । न हि साधुभिः कार्यवशादपि स्वधर्मः परित्यज्यते, एतैस्तु परित्यक्तः, तद्वयं न सहामह इत्यर्थः । कृतेऽव्ययम् ॥ ८४ ॥

**अस्योत्कण्ठितकण्ठलोठिवरणस्रक्साक्षिभिर्दिग्भटैः—स्वं वक्षःस्वयमस्फुटन्न किमदः शस्त्रादपि स्फोटिकम्।व्यावृत्त्योपनतेन हा शतमखेनाद्य प्रसाद्या कथं—भैम्यां व्यर्थमनोरथेन च शची साचीकृतास्याम्बुजा ॥ ८५ ॥**

अस्येति॥अस्य नलस्य चिरकालं वरणमालाश्लेषार्थमुत्कण्ठिते कण्ठे लोठिन्याश्चलन्त्या हृदयावलम्बिन्या वरणस्रजःसाक्षिभिः प्रत्यक्षदर्शीभिर्दिग्भटैश्चतुर्भिरिन्द्रादिभिर्दिक्पालैस्त्रपाभावात्स्वयमस्फुटदविदीर्यमाणमपि स्वं वक्षोऽमुष्य नलस्य शस्त्रादपि हेतोःकिमिति न स्फोटितं विदारितम् । नलेन सार्धं भैम्यर्थं युद्धमपि कृत्वा किमिति न मृतम् । शूराणां रणे मरणमपि यशसे भवति, न लज्जापरित्याग इति भावः । छुरिकादिप्रक्षेपेण स्वयमेव वा किमिति न स्फोटितमिति वा । अग्न्यादयस्तावत्तिष्ठन्तु।हा सोपहासं कष्टम् । अद्य भैम्यां विषये व्यर्थमनोरथेन सता व्यावृत्य परावृत्य उपनतेन शचीसमीपे प्रणामवशान्नम्रेण शतमखेन शतयज्ञकरणलब्धस्वर्गाधिपत्वेन देवेन्द्रेणापि शची चेन्द्राण्यपि कथं प्रसद्यानुनेतुं शक्या । यतः—कोपवशादज्ञानवशाद्वा साचीकृतं वक्रीकृतमास्यमेवाम्बुजं यया—सम्मुखानवलोकनात्प्रसादनार्थमनेन कृतमपि प्रणामाञ्जल्यादिकं न द्रक्ष्यति, ततः कथं प्रसाद्या । भैमी न लब्धा, शची च रुष्टा, अयशोऽपि जातमितीन्द्रस्य महत्कष्टं जातमिति भावः । दिक्षु भटैः शूरैर्नृपैः स्वं वक्षः किमिति न स्फोटितम् । नृपा मनुष्यास्तिष्ठन्तु, देवेन्द्रस्यापीदृशी दशा जातेति वा। 'उपगतेन' इति पाठे शचीसमीपे गतेन ॥ ८५ ॥

१ इतः परं सर्गान्तं शार्दूलविक्रीडितं वृत्तम् । सुमनसोऽपीति विरोधाभासः । २ अत्रानुप्रासः । उपमा ।

**मा जानीत विदर्भजामविदुषीं कीर्तिं मुदः श्रेयसीं—सेयं भद्रमचीकरन्मघवता न स्वं द्वितीयां शचीम् । कः शच्या रचयाञ्चकार चरिते काव्यं स नः कथ्यता—मेतस्यास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः॥८६॥**

मा जानीतेति ॥ भोः सख्यः! यूयं विदर्भजां मुदो हर्षात्सकाशात्कीर्तिं श्रेयसीं श्रेष्ठतरामविदुषीमजानतीं मा जानीत । किंतु हर्षापेक्षया कीर्तिः प्रशस्यतरेति भैमी वेत्त्येवेति जानीत । यद्यस्मात्सेयं भैमी मघवता प्रयोज्येन स्वमात्मानं द्वितीयां शचीं भद्रं साधु नाचीकरत् न कारयामास । इन्द्रे वृते तत्पत्नीत्वाच्छचीशब्दवाच्यत्वं भवेन्न त्वसौ वृतस्तस्माद्वितीया शची नाभवदिति युक्तमेवानया कृतमित्यर्थः। इन्द्रे वृते कीर्तिर्भविष्यतीत्याशङ्क्य नेत्याह—शच्याश्चरिते कः कविः सर्गबन्धादिरूपेण वर्णनात्मकं काव्यं प्रबन्धं रचयांचकार स शचीवर्णनकारी नोऽस्माकमग्रे । अस्मभ्यं वा । कथ्यतां यद्यस्ति, अपि तु अनिरूपाणान्नास्त्येव । एतस्यास्तु भैम्याः पुना रसानां शृङ्गारादीनामेव रसानां जलानां धुनी नदी तरङ्गाः पात्रे स्थानभूते ।अथ च—रसनदीप्रवाहरूपे गुणशीलादिचरित्रे विषये कैः पराशरव्यासशुकादिभिः काव्यं न करिष्यते, अपि तु तैरपि भारतादौ तद्वर्णनकाव्यं करिष्यते,किं पुनः श्रीहर्षादिकविभिरित्यर्थः । इन्द्रवरणेन यद्यपि स्वर्गसुखप्राप्तिस्तथाऽपि तत्पत्नीत्वाच्छचीत्वेऽपि तस्याः कुत्रचित् केनाप्यवर्णितत्वात् । इन्द्रापेक्षयाधिककीर्तेर्नलस्य वरणे पुण्यश्लोकत्वात्सर्वैरपि वर्णनीयत्वात्तत्प्रसङ्गात्स्वस्यापि वर्णनीयत्वान्महती कीर्तिर्भविष्यति । सा च स्वर्गमुदः सकाशाच्छ्रेयसी । इति विचार्य इन्द्रपरित्यागद्वारा स्वर्गसुखमपि परित्यज्य भैम्या नलो वृत इति युक्तकारित्वादेतादृशी काऽपि विदुषी नास्तीति भावः । 'दिवः' इति पाठे स्वर्गसुखादित्यर्थः । करिष्यते, ऋदन्तत्वादिट् ॥ ८६ ॥

**वैदर्भीबहुजन्मनिर्मिततपःशिल्पेन देहश्रिया नेत्राभ्यां स्वदते युवाऽयमवनीवासः प्रसूनायुधः । गीर्वाणालयसार्वभौमसुकृतप्राग्भारदुष्प्रापया-योगं भीमजयाऽनुभूय भजताम-द्वैतमद्य त्विषाम् ॥ ८७ ॥**

१ अत्रानुप्रासः ।

वैदर्भीति ॥ हे सख्यः! अवन्त्यां वासः स्थितिर्यस्य सः प्रसूनायुध इव कामरूपोऽयं नलनामा युवा तरुणो देहश्रिया कायकान्त्या कृत्वा पश्यन्तीनामस्माकं नेत्राभ्यां स्वदते रोचते । किंभूतया—वैदर्भ्या बहुजन्मभिरनेकजन्मसु वा निर्मितस्य कृच्छ्रचान्द्रायणादिजन्यस्य तपसः सुकृतस्य शिल्पेन फलभूतया । अतिसुन्दरममुं प्रीत्यास्मन्नेत्रे पश्यत इत्यर्थः । विशिष्टया देहश्रियोपलक्षितो वा । अशरीरोऽपि भैमीपुण्यबाहुल्यवशात्सशरीरः काम इवेति भाव इति वा । सोऽयं नलः अद्य भीमजया सह योगं दाम्पत्यसंबन्धमनुभूय त्विषां कान्तिभराणामन्यत्रात्यन्तासत्त्वेनाद्वैतं सामस्त्यं भजतामाश्रयतु । उभयोरेकत्र मेलनादयमेव कान्तीनामाश्रयः कान्तिस्वरूपो वा भवतु नान्य इत्यर्थः । किंभूतया—गीर्वाणालये स्वर्लोके सार्वभौम इन्द्रस्तस्य सुकृतप्राग्भारः पुण्यराशिस्तेनापि दुष्प्रापयाऽलभ्यया । शतमखीजन्येन पुण्येन स्वर्गचक्रवर्तित्वं येन लब्धं तेनापि दुष्प्रापत्वाद्भैम्याः सौभाग्यातिशयो नलस्य चेन्द्रापेक्षया सौभाग्यातिशयः पुण्यातिशयश्च 'गीर्वाणालय—' इत्यादिना सूचितः । अन्योऽप्यष्टाङ्गयोगमनुभूय बहुपुण्यदुष्प्रापयापि भीमाद्धराज्जातया ईश्वरप्रसादलब्धया विद्ययाऽद्वैतं परमात्मस्वरूपं भजति । नेत्राभ्याम्, 'रुच्यर्थानां प्रीयमाणः १ । ४ । ३३' इति संप्रदानत्वम् । प्राग्भारदुष्प्रापयेति, 'तृतीया तत्कृतार्थेन गुणवचनेन २ । १ । ३०' इत्यतस्तृतीयेति योगविभागात्समासः ॥ ८७ ॥

**स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभू—दभ्यासः परिपाकिमः किमनयोर्दाम्पत्यसम्पत्तये । आसंसारपुरन्ध्रिपूरुषमिथःप्रेमार्पणक्रीडया-ऽप्येतज्जम्पतिगाढरागरचना प्राकर्षि चेतोभुवः ॥ ८८ ॥**

स्त्रीपुंसेति ॥ स्त्रीपुंसयोः[1] सर्वयोर्व्यतिषञ्जनं विशेषेणातितरां संमेलनं जनयतः कुर्वतः प्रजानां पत्युर्ब्रह्मणः पुनः पुनः संयोजनशिक्षणलक्षणोऽभ्यासोऽनयोर्नलभैम्योर्दाम्पत्यसंपत्तये जायापतिभावस्योत्कर्षाय परिपाकिमः परिपाकेन निर्वृत्तः स्वारस्येन परिणतपाकोऽभूत्किम् । सर्वस्त्रीपुंसयोजनाभ्यासोऽत्युत्तमानुरूपैतदुभयसंघटने फलितः किमित्यर्थः । तथा—चेतोभुवः कामस्यापि आसंसारं संसारं मर्यादीकृत्य सर्गादिमारभ्य प्रलयपर्यन्तं पुरन्ध्रिपूरुषयोः स्त्रीपुंसयोर्मिथःप्रेमान्योन्यानुरागस्तस्यार्पणमासञ्जनं तदेव सदा मनोविनोदनरूपा क्रीडा लीला तयाऽपि एतज्जम्पत्योरनयोर्नलभैमीरूपयोर्दम्पत्योर्गाढस्येन्द्रेणाप्यनपनेयस्य मिथोऽनुरागस्य रचनाज्जननाद्धेतोः प्राकर्षि प्रकृष्टकाष्ठापन्नया जातम् । अनुरागजननक्रीडायाः प्रकर्षोऽत्रैव विश्रान्तः । उत्तरत्राप्येवमनुरागस्याभावादित्यर्थः । एतादृशौ सरूपौ चान्यौ स्त्रीपुंसौ कालत्रये न स्त इति भावः । व्यतिषञ्जनम्, 'उपसर्गात्सुनोति- ८ । ३ । ६५' इति षत्वम् । परिपाकिमः, 'भावप्रत्ययान्तादिमप्' इति वक्तव्यादिमप् । जम्पतिः, जायाया जम्भावः ॥ ८८ ॥

**ताभिर्दृश्यत एष यान्पथि महाज्यैष्ठीमहे मन्महे—यद्दृग्भिः पुरुषोत्तमः परिचितः प्रागभ्रमभ्रङ्कृतः । सा स्त्रीराट् पतयालुभिः शितिसितैः स्यादस्य दृक्चामरैः सस्त्रे माघमघातिघातियमुनागङ्गौघयोगे यया ॥८९॥**

ताभिरिति ॥ महत्या अतिप्रसिद्धाया ज्येष्ठानक्षत्रयुक्ताया ज्यैष्ठपूर्णिमायाः संबन्धिनि मह उत्सवे । महत्यतिप्रसिद्धे वा ज्यैष्ठीमहे । यद्दृग्भिर्यासां नेत्रैः प्रागजन्मान्तरे । अथ च—अन्यापेक्षया प्रथमं मञ्चं पर्यङ्कमञ्चन्प्राप्तो मञ्चस्थः पथि मार्गे यान् गच्छन् श्रीपुरुषोत्तमः परिचितो बहुवारं दृष्टः कृतस्ताभिरेव स्त्रीभिः पथि वरयात्रायां यानरथस्य आगच्छन्नेष नलो दृश्यते । एतादृक्पुण्यं ताभिरस्मादृशीभिरर्जितं ताभिरेवायं द्रष्टुं शक्यो, न त्वन्याभिरित्यर्थः। अथ च याभिः पुरुषोत्तमो दृष्टस्ताभिरेव तत्तुल्योऽयमपीति ज्ञातुं शक्यते,न त्वन्याभिरित्यर्थः। ताभिरेव साभिलाषं कटाक्षैर्दृश्यते,याभिरेवं सुकृतं कृतम्। अन्याभिस्तु कौतुकेनापि वीक्षितुं न शक्यः, किं पुनः सानुरागं कटाक्षैरिति । 'ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा ज्येष्ठमासस्य महाज्यैष्ठीति कीर्तिता' इति । पुरुषोत्तमतुल्योऽयमिति मन्महे । जानीमह इति भावः । वाक्यार्थः कर्म । उत्कलदेशे ज्येष्ठपूर्णिमायामिन्द्रनीलगिरिनिवासिनः श्रीपुरुषोत्तमस्य महोत्सवः क्रियते। तत्र श्रीकृष्णबलभद्रप्रमुखप्रतिमाधिष्ठिता विरचितसप्तभूमिका मञ्चाः पृथक् निर्गच्छन्ति । तस्य दर्शनं भूयसे श्रेयसे भवतीति पौराणिकाः । यदाहुः—'दोलारूढं तु गोविन्दं मञ्चस्थं मधुसूदनम् । रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते ॥' इति । तथा—यया स्त्रिया अघातिघातिनि

1 अत्र किमित्युत्प्रेक्षा ।

पातकविनाशिनि यमुनागङ्गौघयोर्योगे संगमे प्रयागाख्ये माघं सस्ने मकरस्थे रवौ माघे मासाविच्छेदेन स्नानं कृतम्, सास्य नलस्य पतयालुभिरतिचञ्चलैः शितिसितैः कृष्णधवलैर्दृक्चामरैर्नेत्रैरेव चामरैर्नेत्रव्यापाररूपैश्चामरैः स्त्रीराट् स्त्रीराजैव स्याद्भवेदिति मन्महे । राजा हि कृष्णधवलैश्चामरैर्वीज्यते । प्रयागे माघस्नानजन्यसुकृतात्स्त्री राजत्वं प्राप्नोति तत्र स्नानेन । 'सितासिते तु यैः स्नातं माघमासे युधिष्ठिर । न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥' इति वचनात् । स्त्रीषु श्रेष्ठा सैव भवेदित्यर्थः । अयं च कटाक्षैर्यां पश्यति सा तु सर्वाभ्योऽप्यधिका । सा च भैम्येव नान्या । भैम्या च प्रयागे सकलमाघस्नानफलं लब्धम् । भैमीसदृशी कापि कुत्रापि नास्तीति भावः । ज्यैष्ठीति, ज्येष्ठानक्षत्रयुक्ता पौर्णमासीति 'नक्षत्रेण युक्तः कालः' इत्यणि वृद्धिः । तद्युक्तमासाभिधायित्वेऽपि 'सास्मिन्पौर्णमासी—' इत्यादिना ज्यैष्ठ इत्येव भवति । 'ज्येष्ठी इति पाठे वृद्ध्यभावश्चिन्त्यः । संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावः कथंचित्समर्थनीयः । 'स्त्रीराट्' इति संबन्धषष्ठ्या निर्धारणसप्तम्या वा समासः।पृथग्वा पदम्—राजैव सा स्त्रीत्यर्थः। 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' इति वचनान्माघस्य कालवाचित्वात्कर्मत्वे धातोः कर्मणि विहितेन तङा तस्याभिहितत्वान्माघः सस्ने इति प्राप्ते माघमिति, द्वितीया चिन्त्या । अत्रार्थे हरदत्तमिश्रैः—'गतिबुद्धि—' इत्यादिसूत्रे 'अकर्मकाणामिति कालभावाध्वदेशव्यतिरिक्तकर्मरहितानाम्' इत्यर्थो ग्राह्यः—इति सिद्धान्तितम् । एवं 'लः कर्मणि च भावे चाकर्मकेभ्यः ३ । ४ । ६८' इत्यादावपि यत्राकर्मकग्रहणं तत्र सर्वत्र द्रष्टव्यम् । तेनात्र माघस्य कर्मत्वे 'सस्ने' इति लिट् सिद्धो भवति । यद्वा—मा अघं यस्यां क्रियायां यथा तथा स्नाताया मम सर्वपापक्षयपूर्वकसर्वमनोरथसिद्धिर्भवत्विति संकल्प्येत्यर्थः । 'कलुषं वृजिनैनोऽघम्' इत्यमरः । यमुनागङ्गेति पूर्वनिपातानियमः पूर्ववत्परिहरणीयः ॥ ८९ ॥

**वैदर्भीविपुलानुरागकलनात्सौभाग्यमत्राखिल—क्षौणीचक्रशतक्रतौ निजगदे तद्वृत्तवृत्तक्रमैः । किंचास्माकनरेन्द्रभूसुभगतासम्भूतये लग्नकं—देवेन्द्रावरणप्रसादितशचीविश्राणिताशीर्वचः ॥ ९० ॥**

वैदर्भीति ॥ हे सख्यः, तस्य नलसंबन्धीनि वृत्तान्यधीतानि यानि वृत्तानि पद्यानि तेषां क्रमैर्नलविषये कविभिः कृतैरस्मदादिभिश्च पठितैः काव्यैः । तस्या भैम्या वृत्तैरतीतैः सकलद्वीपाधिराजेन्द्रदेवेन्द्रादिदिक्पालपरित्यागरूपस्य चरित्रस्य क्रमैः परिपाटीभिर्वा । कृत्वा वैदर्भ्या भैम्या विपुलस्य नलविषयानुरागस्य कलनज्ज्ञानादखिलक्षौणीचक्रे शतक्रताविन्द्रेऽस्मिन्नले स्त्रीसंबन्धिसकलवरप्रेमास्पदत्वादिलक्षणं सौभाग्यं निजगदे स्पष्टं कथितम् । निश्चितमस्माभिरिति यावत् । अतिसुन्दरीयमिन्द्रादीन्परित्यज्य यस्मादेनमवृत, तस्मादयमेव सुभगतमो नान्य इति सर्वैर्निश्चितमित्यर्थः । भैमीकृतान्नलविषयविपुलानुरागस्याङ्गीकरणाद्धेतोस्तस्या एव वृत्तस्य भूतस्य चक्षुःप्रीत्यादिकामदशास्फुटविरहव्यथानुरूपस्य वृत्तस्य चरित्रस्य क्रमैः । तेऽतिप्रसिद्धा ये वृत्तक्रमास्तैर्वा निगदितम् । भैम्याः अप्येतद्विषयमहानुरागजनितपूर्वोक्तविरहव्यथाभिरेव अयं सकलसौभाग्यनिधानमिति सर्वेषां पुरस्तात्कथितमिति भाव इति मुख्योऽर्थः। वैदर्भ्या विपुलानुरागेण नलस्य बन्धनात् इति वा । किं चान्यत्र—अस्माकमयमास्माकः स चासौ नरेन्द्रश्च भीमस्तत्साद्भवतीति भूः भैमी तस्याः सुभगता सौभाग्यं तस्याः संभूतय उत्पत्तये महासमृद्ध्यर्थं वा । इन्द्रस्यावरणेन त्यागेन सापत्न्याभावेन प्रसादितया संतोषितया शच्या विश्राणितं दत्तं 'सुभगा पुत्रवत्यविधवा भव ' इत्यादिकमाशीर्वचो लग्नकं प्रतिभूरभूत् । शचीदत्ताशीःसहस्रबलाद्भैम्यपि सुभगेति निश्चितमित्यर्थः । ' आशीःश्रुतिः' इति पाठे आशिषां श्रवणम्। अथवा—आशिष एव सत्यत्वाच्छ्रुतिर्वेद इत्यर्थः । अयं तु पाठः साधीयान् । अनयोरन्योन्यमनुरागोचितं सौभाग्यमपि भविष्यतीत्यनुमानम् । वृत्तम्,' णेरध्ययने वृत्तम् ' इति साधुः । ' आस्माक ' इति सम्बन्धेऽणि ' तस्मिन्नणि च' युष्माकास्माकौ ४ । ३ । २' इत्यस्माकादेशः । लग्नकशब्दो नपुंसकेऽपि । तस्या भैम्या वृत्तानां जातानां वृत्तानां हंसप्रेषणादिचरितानां क्रमाः परिपाट्यस्तैर्निजगद इति वा ॥ ९० ॥

**आसुत्रामममपासनान्मखभुजां भैम्यैव राजव्रजे—तादर्थ्यागमनानुरोधपरया युक्ताजि**

१ अत्रानुप्रासः, मह इति यमकम् । मन्महे इत्युत्प्रेक्षा ।

लज्जामृजा । आत्मानं त्रिदशप्रसादफलतां पत्ये विधायानया—ह्रीरोषापयशःकथानवसरः सृष्टः सुराणामपि ॥ ९१ ॥

आसुत्राममिति ॥ भैम्या एव आसुत्राममिन्द्रमभिव्याप्य मखभुजां देवानामपासनात्त्यागाद्धेतो राजव्रजे विषये लज्जाया मृजा परिमार्जनं युक्ता आर्जि कृता।यत्कृतं तद्युक्तमित्यर्थः । यतः—तस्यै इदं तदर्थं तस्य भावस्ता दर्थ्यं तेन भैमीनिमित्तेन राज्ञामागमनं तन्निमित्तोऽनुरोधो दाक्षिण्यं तत्र परया । यो हि यदर्थमागच्छति स तस्य दाक्षिण्यं कुर्वल्लँज्जां मार्ष्टीत्युचितमेवेत्यर्थः । मदर्थमागतानामेषां मत्प्राप्तिर्नाभूत्, लज्जा च जातेत्ययुक्तमेतदिति राजसु सकृपत्वेनेन्द्रादीनापि भैमी नावृणोत् ।ततश्च यत्रेन्द्रादयोऽपि त्यक्तास्तत्र मानुषाणामस्माकं का कथेति तेषां लज्जामार्जनं भैम्यैव युक्तं कृतामिति भावः । स नलोऽर्थः प्रयोजनं यस्य तस्य भावस्तादर्थ्यं तेन नलप्रयोजनत्वेन नलवरणार्थं यदागमनं तत्र यः पक्षपातस्तन्निष्ठया नलानुरक्तया । अत एवेन्द्रादीनां त्याग इति चा । तर्हीन्द्रादीनां लज्जा रोषोऽकीर्तिश्च कृतेति देवद्रोहादशुभाशङ्कां परिहराति—अनया भैम्या पत्ये नलायात्मानं त्रिदशप्रसादस्य देवप्रसादस्य फलत्वरूपत्वं विधाय सुराणामिन्द्रादीनामपि ह्रीरोषापयशसकथायाः कथामात्रस्याप्यनवसरोऽवकाशाभावः सृष्टः कृतः । अस्मान्नावृणोदिति सजातीयान्प्रति स्वस्त्रियश्च प्रति लज्जा । अस्माकं पश्यतां नलमवृणोदिति रोषः । नलं स्वीकृत्य देवानपमानितवतीत्यपयशः । देवैः प्रसन्नीभूय वरत्वेन नलाय भैमी दत्ता । एतदर्थमेव भूम्यामागताः, न भैम्यभिलाषेणेति लोकप्रतीतेः । भैम्या देवानामपि लज्जादिमार्जनं कृतामिति सर्वानुरागादनयोः शुभपरम्परैव भविता न त्वशुभशङ्कालेशोऽपीति भावः । 'पत्ये नयन्त्या' इति पाठः समीचीनः । आत्मानं त्रिदशप्रसादफलतां नयन्त्या प्रापयन्त्येत्यर्थः । आसुत्रामम्, अत्राभिविधावव्ययीभावे 'अनश्च ५।४।१०८' इति टच् । मृजा, भिदादित्वादङ् ॥ ९१ ॥

इत्यालेपुरनुप्रतीकनिलयालंकारसारश्रिया-ऽहंकुर्वत्तनुरामणीयकममूरालोक्य पौरप्रियाः । सानन्दाः कुरुविन्दसुन्दरकरस्यानन्दनं स्यन्दनं—तस्याध्यास्य यतः शतक्रतुहरित्क्रीडाद्रिमिन्दोरिव ॥ ९२ ॥

इतीति ॥ अमूः पौराणां प्रिया इति पूर्वोक्तप्रकारेण यथास्फूर्ति यथाभिप्रायमन्योन्यमालेपुः संवादं चक्रुः । किंभूताः—कुरुविन्दवत्पद्मरागवत्सुन्दरौ रक्तौ करौ यस्य । आनन्दनं वेगवत्त्वादिगुणयोगादानन्दकारिणं स्यन्दनं रथमध्यास्य यतो गच्छतस्तस्य नलस्यानुप्रतीकं प्रत्यवयवं निलयः स्थानं येषां तेषामलंकाराणां सारश्रिया श्रेष्ठशोभया कृत्वा करसौन्दर्यादहमधिकमिति हस्तसौन्दर्यं वदाति, हस्तसौन्दर्यादहमधिकमिति करसौन्दर्यमित्येवं प्रत्येकमहंकुर्वदहंकारं कुर्वत्तनुरामणीयकं शरीरसौन्दर्यमालोक्य सानन्दा हर्षपराः । कस्येव—पद्मरागवद्रक्तकिरणस्य नन्दनवनमभिव्याप्य मर्यादीकृत्य वा स्थितं नन्दनवनसमीपे स्थितं शतक्रतोर्हरित् दिक् प्राचीदिक् तस्याः क्रीडाद्रिमुदयाचलमधिष्ठाय गच्छत उदितवरस्येन्दोरिव तत्कायकान्तिं विलोक्य यथा सानन्दा भवन्ति तथेत्यर्थः । चन्द्रोदये स्त्रीणां हर्षः । स्यन्दनम्, 'अधिशीङ्स्थासांकर्म्म १।४।४६' इत्याधारस्य कर्मत्वम् । यतः, इणः शतरि रूपम् ॥ ९२ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं—श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । यातः पञ्चदशः कृशेतररसस्वादाविहायं महा—काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ९३ ॥

श्रीहर्षमिति ॥ कृशेतरेणातिभूयसा रसेन स्वादावमृतरूपे नलीयचरिते पञ्चाधिकानां दशानां पूरणः पञ्चदशः । 'स्वादौ' इति भाषितपुंस्कम् ॥ ९३ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे पञ्चदशः सर्गः ॥

## षोडशः सर्गः ।

अथ राजप्रासादावासवर्णनमारभते—

वृतः प्रतस्थे स रथैरथो रथी
गृहान्विदर्भाधिपतेर्धराधिपः[1] ।
पुरोधसं गौतममात्मवित्तमं
द्विधा पुरस्कृत्य गृहीतमङ्गलः ॥ १ ॥

1 युक्तत्वेनोत्प्रेक्षणादुत्प्रेक्षा ।

1 अस्मिन् सर्गेऽपि प्रायः सर्गान्तं वंशस्थविलं छन्दः ।

वृत इति ॥ अथो रथारोहणानन्तरं रथैः 'कुन्ताः प्रविशन्ति' इतिवद्रथिभिः वृतः । तथा—रथी प्रशस्तरथोपेतः स धराधिपो नलो विदर्भाधिपतेर्गृहान् प्रति प्रतस्थे ययौ । किंभूतः—आत्मवित्तमं ब्रह्मज्ञानिमध्ये श्रेष्ठं गौतमं गौतमगोत्रमेतन्नामानं वा पुरोधसं द्विधा द्वाभ्यां प्रकाराभ्यां पुरस्कृत्याग्रे कृत्वा संपूज्य च विवाहकार्यभारं तस्मिन्नारोप्य वा गृहीतानि स्वीकृतानि दध्यक्षतपूर्णकलशादीनि येन । रथैः सह वर्तमानैः पुरुषैर्वा । प्रतस्थे, 'समवप्रविभ्यः स्थः १ । ३ । २२' इति तङ् ॥ १ ॥

**विभूषणांशुप्रतिबिम्बितैः स्फुटं**
**भृशावदातैः स्वनिवासिभिर्गुणैः ।**
**मृगेक्षणानां समुपासि चामरै-**
**र्विधूयमानैः स विधुप्रभैः प्रभुः ॥ २ ॥**

विभूषणेति ॥ मृगेक्षणानां चामरधारिणीनां विधुप्रभैश्चन्द्रधवलैः । तथा—विधूयमानैश्चाल्यमानैश्चामरैः स प्रभुर्नलः समुपासि वीज्यते स्म । स्फुटमुत्प्रेक्षते—विभूषणानां रत्नखचितनिजमण्डनानामंशुषु किरणेषु प्रतिबिम्बितैः । तथा—भृशावदातैरत्युज्ज्वलैः स्वस्मिन्निवसन्त्येवंशीलैः श्रुतशीलसौन्दर्यादिभिर्गुणैरिव । प्रत्यक्षीभूतैर्नलगुणैरिव चामरैरुपासीत्यर्थः । चामराण्यपि विभूषणरश्मिप्रतिबिम्बितानि । स्फुटं निश्चितम् । ईदृशैश्चामरैरेव गुणैरिति वा ॥ २ ॥

**परार्ध्यवेषाभरणैः पुरःसरैः**
**समं जिहाने निषधावनीभुजि ।**
**दधे सुनासीरपदाभिधेयतां**
**स रूढिमात्राद्यदि वृत्रशात्रवः ॥ ३ ॥**

परार्ध्येति ॥ निषधावनीभुजि नले पारार्ध्यानि श्रेष्ठानि वेषाभरणानि रूपालंकारा येषां तैः पुरःसरैः समं सह जिहाने चलति सति स वृत्रशात्रव इन्द्रः सुनासीर इति पदस्याभिधेयतां वाच्यत्वं यदि दधार तर्हि रूढिमात्राद्धार, न तु शोभनं नासीरं सेनामुखं यस्येति यौगिकतया, मुख्यवृत्त्या मुख्यया वृत्त्या नल एव दृश्यते, न त्विन्द्रे । त्रिविधाः शब्दाः—केवलयौगिकाः, केवलरौढिकाः, योगरूढाश्च । तत्र—पाचकादयो यौगिकाः, तैलपायिकादयो रौढिकाः, आतपत्रादयो योगरूढाः । तदेवमेतादृशाग्रेसराभावादिन्द्रस्य सुनासीरपदवाच्यत्वं यद्यस्ति तर्हि रूढ्यैव । व्युत्पत्त्या तु नल एवोचितमित्यर्थः । इन्द्रादप्यधिको नलः, तत्पुरःसराश्चेन्द्रपुरःसरदेवेभ्योऽप्यधिका इति भावः । परार्धे भवानि, 'अर्धाद्यत् ४ । ३ । ५' 'परावराधमोत्तमपूर्वाच्च' इति यत् । शत्रुरेव शात्रवः । 'प्रज्ञादिभ्यश्च ५।४।३५' इति प्रज्ञादित्वात्स्वार्थेऽण् । 'वृद्धश्रवाः सुनासीरः' इत्यमरः ॥३॥

**नलस्य नासीरसृजां महीभुजां**
**किरीटरत्नैः पुनरुक्तदीपया ।**
**अदीपि रात्रौ वरयात्रया तया**
**चमूरजोमिश्रतमिस्रसम्पदा ॥ ४ ॥**

नलस्येति॥तया वरस्य भैमीवरस्य नलस्य यात्रया । वरा वा यात्रा तया । रात्रावदीपि शुशुभे । किंभूतया—नलस्य नासीरसृजां सेनायामग्रेसरीभूतानां महीभुजां राज्ञां किरीटरत्नैः स्वेनैवान्धकारनिराकरणात्पुनरुक्ता व्यर्थीकृता दीपा यस्यां तया । तथा—चमूरजोभिर्मिश्रा बहूकृता तमिस्रसंपत्तिमिरसंघो यया । महान्धकारेऽपि रत्नदीपप्रकाशैर्भूयिष्ठप्रकाशत्वाददीपीत्यर्थः । महान्धकार एव हि दीपाः शोभन्त इत्यर्थः । राज्ञां सेनामुखाग्रवर्तित्वेन नलस्य चक्रवर्तित्वं सूचितम् । अदीपि, भावे लः ॥४॥

**विदर्भराजः क्षितिपाननुक्षणं**
**शुभक्षणासन्नतरत्वसत्वरः ।**
**दिदेश दूतान्पथि यान्यथोत्तरं**
**चमूममुष्योपचिकाय तच्चयः ॥ ५ ॥**

विदर्भेति ॥ विदर्भराजो यान्क्षितिपानेव दूताननुक्षणं वारंवारं नलाकारणार्थं दिदेश प्राहिणोत्, तेषां चयः पूर्वमेकः प्रेषितः तदनन्तरमन्यः तदनन्तरं चान्यः, एवमुत्तरोत्तरमनतिक्रम्य पथ्यमुष्य नलस्य चमूमुपचिकाय भूयसीमकृत । किंभूतः—शुभस्य क्षणस्य लग्नसमयस्यासन्नतरत्वेन नैकट्येन सत्वरो वेगवान् । भूयांसो नृपा दूताः प्रेषिता इत्यनेनादरातिशयः सूचितः ॥ ५ ॥

---

१ अत्रानुप्रासः । २ स्फुटमित्युत्प्रेक्षा विधुप्रभैरित्युपमा च ।

१ अत्र सुनासीरपदाभिधेयता वास्तविकत्वेन नलस्यैवेति तदपेक्षया व्यतिरेकोऽवगम्यते । २ अत्रानुप्रासः । ३ अत्रानुप्रासः । उद्वाहलग्नमापगमोदिति भीमस्य त्वराऽतिशयोक्तिः ।

**हरिद्विपद्वीपिभिरांशुकैर्नभो**
**नभस्वदाध्मापनपीनितैरभूत ।**
**तरस्वदश्वध्वजिनीध्वजैर्वनं**
**विचित्रचीनाम्बरवल्लिवेल्लितम् ॥ ६ ॥**

हरीति ॥ तरस्वतां वेगवतामश्वानां ध्वजिनी सेना । तरस्वन्तोऽश्वा यस्यां सा वा । तस्या ध्वजे ध्वजभूतैरांशुकैर्वस्त्रनिर्मितैः । तथा—नभस्वता वायुना कृतं यदाध्मापनं परिपूर्णं तेन पीनितैः पुष्टीकृतैः सजीवसिंहादितुल्यैर्हरिभिः सिंहैः, द्विपैर्हस्तिभिः, द्वीपिभिर्व्याघ्रैः कृत्वा तत्सेनाया उपरितनं नभ आकाशं—वनं विपिनतुल्यमभूदजनि । किंभूतं वनम्—विचित्राणि नानावर्णानि चीनदेशोत्पन्नानि सूक्ष्माणि ध्वजसंबन्धीनि चाम्बराणि वस्त्राणि तान्येव वल्लयो लतास्ताभिर्वेल्लितं वेष्टितम् । वनेऽपि सिंहादयो वृक्षा लताश्च सन्ति । ध्वजपदेन वृक्षा अपि लक्ष्यन्ते । तरस्वन्तोऽश्वा यस्य नलस्य । तरस्वदश्वा वा या ध्वजिनी । प्रकृतत्वात्तस्यैव । सा ध्वजिनी नभसि नभस्वदाध्मापनपीनितैरांशुकैर्ध्वजैः पताकाभिः कृत्वा वनमभूत् । किंभूता ध्वजिनी—हरिभिरश्वैः, द्विपैर्हस्तिभिः, द्वीपिभिर्द्वीपान्तरवासिभिः सेनाचरीभूतैः राजभिरुपलक्षिता । वनमपि सिंहादिभिरुपलक्षितम् । विचित्रेति पूर्ववदिति वा । वनपक्षे—चीनो मृगविशेषः । ऊर्ध्वविस्तृतत्वादम्बरगामिन्यो वल्लयः ॥ ६ ॥

**भ्रुवाऽऽह्वयन्तीं निजतोरणस्रजा**
**गजालिकर्णानिलखेलया ततः ।**
**ददर्श दूतीमिव भीमजन्मनः**
**स तत्प्रतीहारमहीं महीपतिः ॥ ७ ॥**

भ्रुवेति ॥ ततः प्रस्थानानन्तरं स महीपतिर्नलस्तस्य भीमस्य प्रतीहारमहीं द्वारभूमिं भीमजन्मनो भैम्या दूतीमिव ददर्श किंभूताम्—द्वारे निबद्धा गजास्तेषामालिः पङ्क्तिस्तस्याः कर्णानिलेन कृत्वा खेलति चलतीति खेला तया निजया स्वीयया (पुष्पाम्रदलरचितया) तोरणस्रजा तल्लक्षणया भ्रुवाऽनुरागातिशयोत्सुकतया आह्वयन्तीं शीघ्रमागच्छेति भ्रूसंज्ञयाऽऽकारयन्तीम् । दूत्यपि वलन्त्या भ्रुवाऽऽह्वयति । राजगृहद्वारदर्शनेनातिसत्वरोऽभूदिति भावः । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । खेलया, पचाद्यच् । प्रतीहारः, 'उपसर्गस्य घञ्यमनुष्ये बहुलम् ६।३।१२२' इति दीर्घः ॥ ७ ॥

**श्लथैर्दलैः स्तम्भयुगस्य रम्भयो-**
**श्चकास्ति चण्डातकमण्डिता स्म सा ।**
**प्रियासखीवास्य मनःस्थितिस्फुरत्-**
**सुखागतप्रश्नितसूर्यनिःस्वना ॥ ८ ॥**

श्लथैरिति ॥ सा द्वारभूमिः रम्भयोः कदल्योर्द्वारमण्डनार्थं शकुनार्थं च रोपितस्य स्तम्भयुगस्य च्छेदवशाद्वायुवशाद्वा श्लथैर्दलैः पत्रैः कृत्वा नीललम्बमानेन चण्डातकसंज्ञकेन वस्त्रेण मण्डिता भूषिताऽस्य नलस्य प्रियाया भैम्याः सखीव चकास्ति स्म । किंभूता सा—अनुरागवशान्मनस्यन्तःकरणे या नलस्य स्थितिस्तया स्फुरन्सदा चित्तनिवासेनोल्लसन्यः सुखागतस्य सुखेनागतस्यागमनस्य संबन्धी प्रश्नः सुखेनागत इत्येवंरूपः स कृतः प्रश्नितः सुखागतप्रश्नतां प्रापितस्तूर्यनिःस्वनो यया । चिरप्रोषिते हि नायके समागच्छति सति प्रेयस्यां त्रपया तूष्णीं स्थितायां चण्डातकमण्डिता तत्सखी सुखागतप्रश्नं करोतीति स्थितिः । अत्र दलानि चण्डातकस्थाने, तूर्यनिःस्वनाश्च सुखागतप्रश्नस्थाने, कदलीस्तम्भावूरुस्थानीयौ । 'अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्' इत्यमरः । नृत्तोपयुक्तं पुरः पश्चाच्च प्रलम्बिवर्तुलभागद्वयं कदलीसदृशं वस्त्रं नर्तकीभिरन्तः परिधीयमानं चण्डातकम् । प्रश्नितेति, 'तत्करोति तदाचष्टे' इति ण्यन्तान्निष्ठा, न तारकादिः ॥ ८ ॥

**विनेतृभर्तृद्वयभीतिदान्तयोः**
**परस्परस्मादनवाप्तवैशसः ।**
**अजायत द्वारि नरेन्द्रसेनयोः**
**समागमः स्फारमुखारवोद्गमः ॥ ९ ॥**

विनेत्रिति ॥ नरेन्द्रौ भीमनलौ तयोः सेने तयोः समागमो द्वारि राजगृहद्वारि एवंभूतोऽजायत जातः।किंभूतयोः—विनेतृ शासकं नलभीमलक्षणं भर्तृद्वयं तस्माद्भीतिस्तया दान्तयोः शान्तयोः । ताभ्यां नियमितत्वादकृतकलहादिसम्बन्धयोः । अत एव परस्परस्मादन्योन्यस्मादनवाप्तमलब्धं वैशसं मरणं येन । सैन्यद्वयमेलने हि कलहो भवति, परं सौहार्दान्नियमितत्वात्तयोर्नाभूदित्यर्थः । तथा—स्फारोऽतिमहान्मुखारवस्यास्फुटवर्णविशेषस्य मुखध्वनेरुद्गम उदयो यत्र ॥ ९ ॥

---

१ अत्रानुप्रासः ।

१ अत्रोत्प्रेक्षा । २ सखीवेत्युपमा । ३ अत्रानुप्रासः ।

निर्दिश्य बन्धूनित इत्युदीरितं
दमेन गत्वाऽर्घपथे कृतार्हणम् ।
विनीतमा द्वारत एव पद्गतां
गतं तमैक्षिष्ट मुदा विदर्भराट् ॥ १० ॥

निर्दिश्येति ॥ विदर्भराट् भीमो मुदा उचितो जामातेति हर्षेण तमैक्षिष्ट नलमद्राक्षीत् । किंभूतम्—भीमेनैवं समुखं गत्वा बन्धून्सुहृदो भ्रातृन्वा स्वमातापितृसंबन्धिनो निर्दिश्याज्ञाप्य प्रस्थाप्य इतोऽनेन पथा आगम्यतामित्यादिप्रकारैरुदीरितमुक्तम् । बन्धुमुखेन ज्ञापितमार्गम् । तथा—दमाख्येन भैमीभ्रात्राऽर्धपथे कृताऽर्हणा अर्घ्यादिना पूजा यस्मै तम् । तथा—अनुद्धतवेषत्वाद्विनीतम् । अत एव—द्वारत आ द्वारसीमामेवावधीकृत्य रथादुत्तीर्य पद्गतां पादचारित्वं गतं प्राप्तम् । दमेनैव बन्धून्पुरः प्रस्थाप्य इत इत्युदीरितामिति वा । आ द्वारतः, पदद्वयम् । पद्ग इति, 'पादस्य पदाज्यातिगोपहेषु ६ । ३ । ५२ ।' इति पादस्य पेत् ॥१०॥

अथायमुत्थाय विसार्य दोर्युगं
मुदा प्रतीयेष तमात्मजन्मनः ।
सुरस्रवन्त्या इव पात्रमागतं
भृताभितोवीचिगतिः सरित्पतिः ॥ ११ ॥

अथेति ॥ अथ नलदर्शनानन्तरमयं भीम उत्थाय प्रत्युत्थानं कृत्वा आत्मजन्मनो भैम्याः पात्रं योग्यमागतं तं नलं दोर्युगं विसार्य प्रसार्य मुदा प्रतीयेषाऽऽलिलिङ्ग । कः कमिव—सरित्पतिः सुरस्रवन्त्या भागीरथ्या आगतं पात्रं प्रवाहमिव । नौकादिकं वा । किंभूतः—भृते धृतेऽभितः पार्श्वद्वये वीचिगती तरङ्गपरम्परे येन । 'वीचितातिः' इत्यपि पाठः ॥ ११ ॥

यथावदस्मै पुरुषोत्तमाय तां
स साधुलक्ष्मीं बहुवाहिनीश्वरः ।
शिवामथ स्वस्य शिवाय नन्दनां
ददे पतिः सर्वविदे महीभृताम् ॥ १२ ॥

यथावदिति ॥ अथालिङ्गनानन्तरं महीभृतां राज्ञां पतिर्बहुवाहिन्या ईश्वरः स्वामी स भीमः सर्वविदे सर्वविद्याविज्ञाय शिवाय शुभश्रवणकीर्तनाय अत एव पुरुषोत्तमाय पुरुषश्रेष्ठायास्मै नलाय साधुलक्ष्मीं समीचीनकायकान्तिम्, अत एव शिवां शुभरूपां तां भैमीं स्वस्य नन्दनां कन्यां यथावद्वेदोक्तविधिना ददे । 'मधुपर्कपूर्वं कन्यादानम्' इति शिष्टाचारः । मधुपर्कादिविधिपूर्वं ददे दातुमारब्धवानिति वा । अथ च—बहुनदीश्वरः समुद्रः पुरुषोत्तमाय तां स्वकन्यां लक्ष्मीं यथावद्ददे तत्साधु । तथा—पर्वतराजो हिमालयः सर्वज्ञाय श्रीमहादेवाय स्वपुत्रीं पार्वतीं ददे तदपि साधु । यद्वा—मैनाकादिपर्वतानां पालयिता समुद्रः शिवस्वरूपाय विष्णवे शुभरूपां लक्ष्मीं ददे तत्साधु । अथ च—बहुनदीयुक्तो हिमालयः पुरुषोत्तमरूपाय श्रीहराय श्रीपार्वतीं ददे । पार्वतीरूपां लक्ष्मीम्, लक्ष्मीरूपां पार्वतीमिति वा । नलाय पुरुषोत्तमायेव शिवायेव भैमीं लक्ष्मीमिव भीमः समुद्र इव हिमवानिवेत्युपमालंकारो व्यज्यते । साधुलक्ष्मीमित्यत्र समासान्तविधेरनित्यत्वात्कबभावः ॥१२॥

असिस्वदद्यन्मधुपर्कमर्पितं
स तद्व्यधात्तर्कमुदर्कदर्शिने ।
यदेष पास्यन्मधु भीमजाऽधरं
मिषेण पुण्याहविधिं तदाऽकृत ॥ १३ ॥

इदानीं विवाहविधिमाह—

असिस्वददिति ॥ स नलः अर्पितं भीमेन दत्तं सहमिश्रितकांस्यपात्रस्थदधिमधुघृतरूपं मधुपर्कं यदसिस्वददास्वादितवांस्तदुदर्कदर्शिने विवाहोत्तरफलपरिपाकभूताधरचुम्बनादिविचारिणे लोकायेति तर्कमूहं व्यधाच्चक्रे । इति किम्—यद्यस्मादेष नलो भीमजाधररूपं मधु पास्यन्पास्यति तस्मात्तदा मधुपर्कदानावसरे मधुपर्कास्वादनमिषेण पुण्याहविधिं शुभनक्षत्रादियुक्तपुण्यदिनकृत्यं मङ्गलपूर्वमुपक्रममकृत । अन्योऽपि यथा शुभकार्यं करिष्यञ्शुभविवाहदिनादौ तदीयमारम्भं करोति तथा अनेनापि भैम्यधरपाने मुहूर्तश्चक्रे इति जनेन तर्कितमित्यर्थः । अधरस्यातिस्वादुत्वमुक्तम् । 'असिस्वदत्' इति चौरादिकात्स्वदेश्चङ् । ये तमपि षोपदेशं मन्यन्ते तैः षत्वाभावश्चिन्त्यः । 'असिष्वदत्' इति पाठाभावादणिजर्थस्य दुर्योजत्वाच्च चौरादिक एव । पास्यन्, 'लृटः सद्वा ३ । ३ । १४' इति शता । पुण्यं

१ अत्र स्वभावोक्तिः । २ अत्रोपमा ।

१ अत्र नलस्य विशेषणसाम्याद्विष्णुशङ्कराभिन्नत्वं व्यज्यते ।

च तदहश्च, 'राजाहःसखिभ्यष्टच्' इति टचि 'पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा' इति पुण्याहं तत्र विधिरिति विग्रहः ॥ १३ ॥

वरस्य पाणिः परघातकौतुकी
वधूकरः पङ्कजकान्तितस्करः।
सुराज्ञि तौ तत्र विदर्भमण्डले
ततो निबद्धौ किमु कर्कशैः कुशैः॥१४॥

वरस्येति ॥ वरस्य पाणिः परघातकौतुकी शत्रुमारणकुतूहली। वधूकरः पङ्कजकान्तितस्करः कमलश्रीचौरो यस्मात्तस्मात्कारणात्किमु सुराज्ञि भीमेन राजन्वति तत्र तस्मिन्विदर्भमण्डले विदर्भराष्ट्रे तौ वरवधूकरौ कर्कशैः कुशैर्नितरां बद्धौ। उभयहस्तयोः कुशबन्धनपूर्वं पाणिग्रहणमभूत्। तत्र कुशबन्धने कारणोत्प्रेक्षा क्रियते। एको हिंस्रः, अपरश्चौर इति सापराधत्वात्किमु बद्धावित्यर्थः। अन्यत्रापि सौराज्ये अन्यघातकतस्करौ कठिनदोरकैर्बध्येते। पाणिग्रहणं जातमिति भावः। कुशैः पाणिबन्धनं देशाचारः। यथाक्रमं करयोः शौर्यं मार्दवं च सूचितम्। सुराज्ञि, 'राजाहः—' इत्यस्य नियततत्पुरुषविषयत्वात्, अत्र बहुव्रीहिविषयत्वाट्टच्प्राप्त्यभावः॥१४॥

विदर्भजायाः करवारिजेन यन्
नलस्य पाणेरुपरि स्थितं किल।
विशङ्क्य सूत्रं पुरुषायितस्य तद्
भविष्यतोऽस्मायि तदा तदालिभिः ॥१५॥

विदर्भेति ॥ विदर्भजायाः करवारिजेन यत्तदा पाणिग्रहणसमये नलस्य पाणेरुपरि स्थितम्। तदुपरि स्थानं किल निश्चितं विपरीतरते भविष्यतः पुरुषायितस्य पुरुषवदाचरितस्य विपरीतरतस्येति यावत्। सूत्रं सूचनाकारि विशङ्क्य विशेषेण संभाव्य कौतुकविलोकनार्थं निकटस्थिताभिस्तदालिभिर्भैमीसखीभिरस्मायि ईषद्धसितम्। विपरीतरते हि स्त्रीपाणिरुपरि भवति। विवाहे वधूकरो वरकरस्योपरि भवति। 'सूत्रं तु सूचनाग्रन्थे' इति विश्वः॥ १५ ॥

इदानीमित आरभ्य 'न तेन वाहेषु—' ( १६।३४ ) इति यावद्विवाहोचितं यौतकं प्रतिपादयति—

सखा यदस्मै किल भीमसंज्ञया
स यक्षसख्याधिगतं ददौ भवः।
ददौ तदेष श्वशुरः सुरोचितं
नलाय चिन्तामणिदाम कामदम्॥१६॥

सखेति ॥ भीमसंज्ञया 'भीम' इति नाममात्रेण सखा स्वस्यापि भीमनामत्वात् किलोत्प्रेक्षायाम्। भवो महेश्वरोऽस्मै भीमाय यक्षेण कुबेरेण सह यत्सख्यं मैत्री तेनाधिगतं प्राप्तं यच्चिन्तामणीनां दाम मालां ददौ, एष श्वशुरो भीमस्तत्कामदं सकलाभिलषितदायि सुराणामुचितं देवधार्यं चिन्तामणिदाम नलाय ददे। उत्प्रेक्षायामेव तात्पर्यम्। 'सुतोचितम्' इति पाठे भैम्युचितम् ॥ १६ ॥

बहोर्दुरापस्य वराय वस्तुन-
श्चितस्य दातुं प्रतिबिम्बकैतवात्।
बभौ तरामन्तरवस्थितं दध-
द्यदर्थमभ्यर्थितदेयमर्थिने ॥ १७ ॥

तदेव वर्णयति—

बहोरिति ॥ यच्चिन्तामणिदाम बभौतराम्। किंभूतम्—बहोरपरिमितस्य, तथा—दुरापस्य दुर्लभस्य दिव्यस्य वराय जामात्रे दातुं चितस्य पुरः पुञ्जीकृतस्य रत्नहेमवसनहस्त्यश्वादेर्वस्तुनः पदार्थसमूहस्य स्वस्मिन्प्रतिबिम्बस्य कैतवाद्व्याजादन्तरवस्थितं स्वस्य मध्ये स्थितमर्थिने याचकायाभ्यर्थितं सत्तदानीमेव दातुमर्हमर्थं वस्तुजातं दधद्धारयदिव। तद्ददाविति पूर्वेणान्वयः। यदा यो याचिष्यते तदेव तद्वस्तु तस्मै दातव्यम् इति बुद्ध्या स्वनाम सार्थकीकर्तुं वस्तुजातमन्तः स्थापितमिवेत्यर्थः। बहोरिति भाषितपुंस्कम् ॥ १७ ॥

असिं भवान्याः क्षतकासरासुरं
वराय भीमः स्म ददाति भासुरम्।
ददे हि तस्मै धवनामधारिणे
स शंभुसंभोगनिमग्नयानया ॥ १८ ॥

असिमिति ॥ भीमः क्षतो हतः कासराख्यो महिषाख्योऽसुरो येन तं भासुरं देदीप्यमानं भवान्या दुर्गाया असिं खड्गं वराय ददाति स्म। तस्याः खड्गस्तेन कथं प्राप्त इत्यत आह—हि यस्मात्स्फुटं वा शंभुना सह संभोगस्तत्र निमग्नया सुरतरसासक्तयानया दुर्गायां आत्मवैरिदलनान-

१ मिषेणेत्यपह्नुतिः। २ कान्तितस्कर इत्युपमा। ३ अत्र करवारिजेनेत्युपमा, तदेति यमकं च।

न्तरं स्वस्य प्रयोजनाभावात्सुरतासक्तत्वे खङ्गधारणस्य रसभङ्गजनकत्वाच्च धवनामधारिणे 'भीम' इति शिवनामधारकाय शंभुसेवकाय तस्मै भीमाय ददे। शंभौ सम्यगविच्छेदेन निरन्तरं भोगाय निमग्नया दक्षिणार्धेन प्रविष्टया वा। तत्त्वतस्तु तया प्रसाद्य दत्तः। 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः। भासुरः 'भञ्जभासीमदो घुरच् ३। २। १६१।' इति घुरच्॥ १८॥

अधारि यः प्राङ् महिषासुरद्विषा
कृपाणमस्मै तमदत्त कूकुदः।
अहायि तस्या हि धवार्धमज्जिना
स दक्षिणार्धेन पराङ्गदारणः॥ १९॥

अधारीति॥ महिषासुरद्विषा दुर्गया प्राग्यः खङ्गोऽधारि। कूकुदः कन्यादाता भीमस्तं कृपाणं खड्गं सत्कारपूर्वं सालंकारमस्मै अदत्त। कथं तेन लब्ध इत्याशङ्क्याह—हि यस्मादर्धनारीश्वरत्वाद्धवस्य भर्तुः शिवस्यार्धमज्जिनार्धप्रविष्टेन तस्याः पार्वत्या दक्षिणार्धेन शरीरदक्षिणभागेन पराङ्गदारणो वैर्यङ्गदारणः स खड्गोऽहायि त्यक्तः। सखड्गेन धववामार्धं विशता मदीयदक्षिणार्धेन तद्विदारिष्यत इति भिया त्यक्तः। 'अदायि' इति पाठेऽनर्थो न। तस्या दक्षिणार्धेन तस्मै यस्माददायीत्यर्थः। अयं पाठः साधीयान्। 'सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः' इत्यमरः॥ १९॥

उवाह यः सान्द्रतराङ्गकाननः
स्वशौर्यसूर्योदयपर्वतव्रतम्।
सनिर्झरः शाणनधौतधारया
समूढसंध्यः क्षतशत्रुजासृजा॥ २०॥

उवाहेति॥ यः खड्गः स्वस्य भीमस्य खड्गस्यैव वा शौर्यं प्रतापरूपो यः सूर्यस्तस्योदयस्तत्संबन्धी पर्वत उदयाचलस्तस्य व्रतं नियमं सदासूर्योदयकारित्वलक्षणमुवाहाधृत। किंभूतः—सान्द्रतराण्यल्पानि सूक्ष्माण्यङ्गान्यङ्कानि मुद्रपत्रीवल्लीरूपाणि तेषामननं जीवनं यत्र। तदाधार इति यावत्। सान्द्रतराणां पूर्वोक्तानामेवाङ्गानां काननं समूहो यत्र। उदयाचलपक्षे—सान्द्रतराण्यङ्गेपूर्ध्वाधोभागेषु काननानि वनानि यस्य। तथा—शाणनेन लोहकारचक्रघर्षणेन धौतयोज्ज्वलीकरणेन दत्तपानयिकया धारया कृत्वा सनिर्झरः सप्रवाहः। धारैव निर्झरीभूतेत्यर्थः।उदयाचलोऽपि सनिर्झरो भवति।तथा—क्षतेभ्यः खण्डितेभ्यः शत्रुभ्यो जातेनासृजा रक्तेन कृत्वा सम्यक् रूढा प्राप्ता संध्या येन। प्रातःसंध्यास्थाने रक्तमेव येन धृतमित्यर्थः। सम्यग्धृता संध्या त्सरुफलकसंधिर्येन। अतिदृढसंधिरित्यर्थ इति वा। यद्वा—क्षतशत्रुजासृजा समूढः प्राप्तः संधिर्यस्य। त्सरुफलकसंधिपर्यन्तं शत्रुशरीरे निमग्न इत्यर्थः। उदयाचलोऽप्यूढप्रातःसंध्यः। उदयाचलतुल्योऽभूदित्यर्थः। 'तमदत्त' इति पूर्वेण संबन्धः। 'अङ्गक–' इति पक्षे 'अल्पे ५। ३। ८५।' इति कन्॥ २०॥

यमेन जिह्वा प्रहितेव या निजा
तमात्मजां याचितुमर्थिना भृशम्।
स तां ददेऽस्मै परिवारशोभिनीं
करग्रहार्हामसिपुत्रिकामपि॥ २१॥

यमेनेति॥ स भीमस्तामसिपुत्रिकां छुरिकामप्यस्मै ददे। न केवलं खड्गमित्यपेरर्थः। न केवलं पुत्रीमपि तु छुरिकामपि। तां काम्—भृशमर्थिना भैम्यामनुरागिणा यमेन तं भीमं भैमीं मह्यं देहीत्यात्मजां याचितुं दूतीप्रेषणावसरे निजा स्वीया प्रहिता प्रेषिता जिह्वेव। नियतं प्राणहारित्वाद्यमजिह्वातुल्यातितीक्ष्णा। शौर्येण तुष्टो यमो यां भीमाय दत्तवान्। किंभूताम्—परिवारशालिनीं चर्मकोशेन शोभमानाम्। अथ च—सखीलक्षणपरिजनशोभिनीम्। करग्रहार्हां हस्तग्रहणयोग्याम्। साधुमुष्टिदेशाम्। पूर्वं यद्यपि भैमी दत्ता, तथापि परिवारसाहित्येनेदानीं दत्तेत्यर्थः।छुरिकां सखीश्च यौतकत्वेन ददाविति भावः। 'छुरिका चासिपुत्रिका' इत्यमरः। याचिर्द्विकर्मा॥ २१॥

यदङ्गभूमी बभतुः स्वयोषिता-
मुरोजपत्रावलिनेत्रकज्जले।
रणस्थलस्थण्डिलशायिताव्रते
गृहीतदीक्षैरिव दक्षिणीकृते॥ २२॥

यदिति॥ यस्याः शव्या अङ्गभूमी पट्टिकाया उर्ध्वाधोदेशौ स्वयोषितां स्वस्वस्त्रीणामुरोजपत्रावलिः कस्तूरिकालिखितस्तनपत्रवल्ली नेत्रकज्जलं च एते इव बभतुः शुशुभाते। किंभूते—रणस्थले या स्थण्डिलशायिता। व्रतवशाद्यो वेदिकायां शेते स स्थण्डिलशायी तद्भाव एव व्रतं तत्र विषये गृहीता दीक्षा यैः स्वीकृतनियमविशेषेण

भूपतिते: शत्रुभिर्दक्षिणीकृते प्रताङ्गदक्षिणात्वेन शय्यै दत्ते। दीक्षोपदेशिने हि स्त्रीणामलंकारादि दक्षिणात्वेन दीयते। छुरिकयैव स्वकृतमारणद्वारा शत्रूणां रणस्थलस्थण्डिलशायितादिमतमुपदिष्टम्, तस्मात्तस्यै ते दक्षिणात्वेन दत्ते। पलवल्लीकज्जले इव। लोहमुद्गरश्यामवर्णौ स्तेनपलवल्लीनेत्रकज्जलत्वेनोत्प्रेक्षितौ। इयं छुरिका निश्चितपरविदारणा। वैरिनार्यश्च वैधव्यात्त्यक्तकज्जलपत्रावल्य इत्यर्थः। स्थण्डिल एव व्रतवशाच्छेत इति, 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८ इत्यनुवृत्तौ 'व्रते ३।२।८०' इति णिनिः ॥ २२ ॥

पुरैव तस्मिन्समदेशि तत्सुता-
भिकेन यः सौहृदनाटिनाऽग्निना।
नलाय विश्राणयति स्म तं रथं
नृपः सुलङ्घ्याद्रिसमुद्रकापथम् ॥२३॥

पुरेति ॥ तस्य भीमस्य सुतायामभिकेनानुरागिणा। तथा—'भैमी दातव्येति बुद्ध्यायं न प्रेषितः किन्तु शत्रुभराक्रान्तभूभारनिराकरणद्वारा त्वमस्माकं सुहृदिति प्रेषितः' इति सौहार्दं स्नेहं नाटयति एवंशीलेनाग्निना पुरैव दूतीप्रेरणावसर एव यो रथस्तस्मिन्भीमे समदेशि प्रेषितो दत्तः। नृपो नलाय तं रथं विश्राणयति स्म। किंभूतम्—सुलङ्घ्या अनायासेनातिक्रमणीया अद्रयोऽत्युच्चाः पर्वताः, समुद्राः, कापथा विषमा निम्नगर्तरूपा मार्गाश्च यस्य। सर्वत्र संचरणसमर्थम्। 'कदध्वा कापथः समौ' इत्यमरः। कापथ इति 'का पथ्यक्षयोः ६।२।१०४' इति कादेशः। 'ऋक्पूरब्धूःपथामानक्षे ५।४।७४' इति समासान्तः ॥ २३ ॥

प्रसूतवत्ता नलकूबरान्वय-
प्रकाशितास्यापि महारथस्य यत्।
कुबेरदृष्टान्तबलेन पुष्पक-
प्रकृष्टतैतस्य ततोऽनुमीयते ॥ २४ ॥

तमेव वर्णयति—

प्रसूतेति ॥ अस्यापि भीमेन नलाय दत्तस्यापि महतो जवादिगुणयुक्तस्य रथस्य प्रकृष्टा सूतवत्ता सूतो विद्यते यस्य स सूतवान् तद्भावः सूतवत्ता सारथिमत्ता प्रकृष्टश्चासौ सूतश्च तद्वत्ता वा। यद्यस्मान्नलस्य कूबरेण युगंधरेण सह योऽन्वयः संबन्धः। नलेन सह वा यः कूबरस्यान्वयः। तेन प्रकाशिता प्रकटीकृता शोभिता च। ततस्तस्माद्धेतोरेतस्य महारथस्य पुष्पकवत्कामगाभिधनदविमानवत्प्रकृष्टतोत्कृष्टगुणयुक्तता। पुष्पकात्सकाशाद्वा जवादिगुणैरधिकता। कुबेरस्य दृष्टान्त उदाहरणं तस्य बलेन सामर्थ्येनानुमीयतेऽनुमानजन्यज्ञानस्य विषयीक्रियते। न केवलं कुबेरस्य महारथस्य, किंत्वस्यापीति समुच्चयेन व्याप्तिप्रदर्शनपुरःसरमुपनयनिगमने सूचयत्यपिशब्दः। कुबेरस्यापि महारथस्यायुतसंख्ययोधसहयुध्वनः पुष्पकविमानेन कृत्वा प्रकृष्टता प्रकृष्टवस्तुमत्ता प्रकृष्टेन कृष्टता। तेनोह्यमानता वा भवति एवं कुबेरदृष्टान्तबलेनात्र एतस्य पुष्पकप्रकृष्टता भविष्यतीत्यनुमीयते। यतोऽस्यापि कुबेरस्य नलकूबराख्येनान्वयेन संतानेन पुत्रेण प्रकाशिता प्रकटिता शोभिता प्रसूतवत्ता जनयितृता इति साधर्म्यदृष्टान्तः श्लेषबलेन। अनुमानं त्वेवम्—विमतो महारथः पुष्पकप्रकृष्टो भवितुमर्हति नलकूबरान्वयप्रकाशितप्रसूतवत्तावत्त्वात्। यो यो नलकूबरान्वयप्रकाशितप्रसूतवत्तावान्स स पुष्पकप्रकृष्टः यथा कुबेर इत्यनुमानवशादेतत्सर्वमुच्यत इति यथाकथंचिच्छ्लोको व्याख्येयः। प्रकृष्टः सूतः पुत्र इति वा। पुष्पकस्य नलः सारथिर्नास्ति इति तेन तुल्यता नास्ति। किंतु तत्पतिना कुबेरेणेति। अस्य तु नलः सारथिरस्तियं रथो रमणीय इति भावः। 'कूबरस्तु युगंधरः' इत्यमरः ॥ २४ ॥

महेन्द्रमुच्चैःश्रवसा प्रतार्य यन्
निजेन पत्याऽकृत सिन्धुरन्वितम्।
स तद्ददेऽस्मै हयरत्नमर्पितं
पुराऽनुबन्धुं वरुणेन बन्धुताम् ॥२५॥

महेन्द्रमिति ॥ सिन्धुः समुद्रः नाम्ना उच्चैःश्रवसा। अथ च उन्नतकर्णेन सल्लक्षणेन। अथ च-दीर्घकर्णेन दुर्लक्षणेन अश्वेन महेन्द्रं प्रतार्य यद्धयरत्नं निजेन पत्या स्वस्वामिना वरुणेनान्वितं युक्तमकृत। वरुणायादत्तेत्यर्थः। स भीमस्तदश्वरत्नमस्मै नलाय ददे। अनेन कथं लब्धमित्यत आह—किंभूतम्—वरुणेन बन्धुतामलीकमैत्रीमनुबन्धुं वर्धयितुं पुरा दूतीप्रेषणावसरेऽर्पितं भीमाय दत्तम्। उच्चैःश्रवसोऽप्यधिकमश्वं तस्मै ददाविति भावः ॥२५॥

---

१ अत्रानुप्रासः। दीक्षैरिवेत्युत्प्रेक्षा च। २ अत्रानुप्रासः। उदात्तमलङ्कारश्च।

१ अत्रानुमानम्। २ अत्र हयस्योच्चैःश्रवस्त्वाऽभेदसमर्थनात् काव्यलिङ्गम्।

जवादवारीकृतदूरदृक्पथ-
स्तथाक्षियुग्माय ददे मुदं न यः ।
ददद्दिदृक्षादरदासतां यथा
तथैव तत्पांसुलकण्ठनालताम् ॥ २६ ॥

जवादिति ॥ योऽश्वो लोकानामाक्षियुग्माय नेत्रद्वयाय दिदृक्षायाः स्वीयरूपदर्शनेच्छाया आदरस्तस्य दासतां वशत्वं ददद्दानः पारवश्यं कुर्वञ्जवाद्वेगाद्धेतोरवारीकृतोऽर्वाक्तीरीकृतो दूरो बहुयोजनो दृक्पथो नेत्रपथो येन । दूरं गतत्वान्नेत्रयोरविषय इति यावत् । एवंविधः सन् यथा नेत्रयुगाय मुदं प्रीतिं न ददे । दर्शनाभावात्प्रीतिं नोत्पादितवानित्यर्थः । तथा पुनरागमनसमयेऽपि तथैव दिदृक्षादरदासतया तस्य नेत्रयुगस्य पांसुलं रेणुयुक्तं कण्ठनालं तस्य भावस्तत्ता तां लक्षणया उत्कण्ठितत्वं ददत् मुदं न ददे । तमश्वं दद इति पूर्वेण संबन्धः । यथातथाशब्दौ व्यत्यस्तौ योज्यौ । रूपादिविलोकनकौतुकिभिः यावदश्वो द्रष्टुमारब्धः, तावद्वेगवशाद्दूरं गतत्वान्न दृष्टः । इदानीं यद्यपि न दृष्टः, तथापि व्याघुट्यागमनेऽवश्यं द्रक्ष्याम इति बुद्ध्या व्यापारान्तरत्यागपुरःसरं तद्रूपादिविशेषदर्शनादरान्नेत्रे प्रसार्य तत्रैव यावत्स्थिताः, तावत्पुनरागमनसमयेऽपि खुरपुटक्षुण्णक्षोणीरेणुसंबन्धान्न दृष्टः, तथापि दर्शनाभावादुत्कण्ठाया अपरिपूर्णत्वान्नेत्रयुगस्य हर्षो नाभूदित्यर्थः। जवादप्रतिषिद्धो दूरो दृक्पथो येन अतिदूरं नेत्राभ्यामनुगतमार्ग इति यावत् । एवंभूतो योऽक्षियुगाय दर्शनहर्षं तथा नादत्त यथा दिदृक्षादरदासतां ददानः सन् तथैव तस्य नेत्रयुगस्य द्रष्टुर्वा । शुष्ककण्ठत्वं ददे । निरन्तरदर्शनाभावात्तादृशी प्रीतिर्न जाता, किंतु—पूर्वोक्तप्रकारेण नेत्रयोर्द्रष्टुर्वा भूरेणुसंबन्धाच्छुष्ककण्ठत्वमेव जातमित्यर्थः। द्रष्टव्यदर्शनाद्धि दृङ्मार्गस्य प्रतिषेधो भवति। अत्र तु वेगातिशयाद्दर्शनाभावादप्रतिषेधस्तस्येति वा । अथ च—जलरहितः कृतो दूरो दृष्टिगोचरो यो मार्गः स पिपासोर्नेत्रयुगाय हर्षं न ददाति । किंतु जलावलोकने पारवश्यम् । तथापि पिपासोः शुष्ककण्ठत्वं चेत्युक्तिरिति वा। आदरदाशताम् इति पाठे दिदृक्षादरस्य दानपात्रत्वं ददावित्यर्थः । 'दाशृ दाने' 'दाशगोघ्नौ संप्रदाने' इति निपातनाद्दाश्यतेऽस्मै दाशो दानपात्रम् 'पारावारे परार्वाची तीरे' इत्यमरः । पक्षे—नास्ति वारि यस्मिन्नसाववारिः । पक्षे—वारणं वारः ण्यन्ताद्घञ् स नास्त्यस्यासाववारः । अवारशब्दाद्,अवारिशब्दाच्च च्विः ॥ २६ ॥

दिवस्पतेरादरदर्शिनादरा-
दढौकि यस्तं प्रति विश्वकर्मणा ।
तमेकमाणिक्यमयं महोन्नतं
पतद्ग्रहं ग्राहितवान्नलेन सः ॥ २७ ॥

दिवस्पतेरिति ॥ दिवस्पतेरिन्द्रस्य भैम्यनुरागवशात् भीमं आदरदर्शिना विश्वकर्मणा यस्तं भीमं प्रत्युद्दिश्याऽदरादढौकि उपदारूपेण प्रेषितः स भीमस्तमेकं महापरिमाणं माणिक्यं तन्मयं तद्रूपं तन्निर्मितं वा महोन्नतमत्युच्चं पतद्ग्रहं पतद्गण्डूषजलताम्बूलोद्गारादि गृह्णातीति तं नलेन प्रयोज्येन ग्राहितवानङ्गीकारितवान् । नलाय ददे इत्यर्थः । प्रभोर्यस्मिन्नादरः, तं तदनुजीविनः स्वस्वशिल्पेन सेवन्त इति लोकरीतिः । 'पतद्ग्राहः पतद्ग्रहः' इत्यमरः।दिवस्पतेः,'तत्पुरुषे कृति बहुलम् ६।३।१४' इति बाहुलकात्षष्ठ्या अलुकि कस्कादित्वाद्विसर्जनीयस्य सः । 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ८।३।५३' इत्यस्य छन्दोविषयत्वात् । ढौकेर्गत्यर्थत्वात्सकर्मकत्वात् कर्मणि चिण् । गृह्णातीति पचाद्यचि, पततो ग्रह इति समासः ॥ २७ ॥

नलेन ताम्बूलविलासिनोज्झितै-
र्मुखस्य यः पूगकणैर्भृतो न वा ।
इति व्यवेचि स्वमयूखमण्डला-
दुदञ्चदुच्चारुणचारुणश्रिरात् ॥ २८ ॥

नलेनेति ॥ उदञ्चदुच्चारुणचारुण उदित्वरोन्नतगरुडाग्रजवत्,उदित्वरोन्नतसूर्यवद्वा सुन्दरादतिरक्तात् । ऊर्ध्वं प्रसरत्किरणोऽतिशयितो यः स्वीयो रक्तरूपगुणस्तेन चारोर्वा रक्ततरात्स्वमयूखस्य मण्डलात्संघाद्धेतोस्ताम्बूलविलासिना ताम्बूलरसमात्रग्राहिणा पूगनागवल्लीदलखण्डत्यागिना नलेन गृहीतरसत्वादुज्झितैस्त्यक्तैर्माणिक्यशकलसदृशैर्मुखोद्गाररूपैः पूगकणैः क्रमुकाल्पशकलैरयं भृतः पूरितो न वा पूरित इति यः पतद्ग्रहाश्रिराद्भूयसा कालेन सूक्ष्मेक्षिकया क्रमेण मुक्तसंशयैर्लोकैर्व्यवेचि निश्चितः । तं ग्राहितवानिति पूर्वेण सम्बन्धः । समीपं गत्वा सूक्ष्मे-

१ अत्रावारीकरणाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरिति जीवातौ स्पष्टम् । २ अत्रानुप्रासः, उदात्तं च ।

क्षिकया अयमिदानीं पूगकणैर्भृत इति निश्चितः, कदाचिच्च इदानीं न भृत इत्यपि निश्चित इत्यर्थः। भृताभृतत्वसंदेहे रक्तमयूखमण्डलं हेतुः। माणिक्यमयत्वादतिरिक्त इत्यर्थः। इदानीं ताम्बूलस्यानवसराद्भाविन्यपि भूतत्वदुपचारः। यद्वा—तस्यैवातिरक्तत्वाजनस्योद्गारत्याग्भ्रमः। अमी पूगकणाः किं वा किरणसमूह इति संदेहश्चिरान्निर्णीत इति वा ॥ २८ ॥

मयेन भीमं भगवन्तमर्चता
नृपेऽपि पूजा प्रभुनाम्नि या कृता।
अदत्त भीमोऽपि स नैषधाय तां
हरिन्मणेर्भोजनभाजनं महत् ॥ २९ ॥

मयेनेति ॥ भगवन्तं षड्गुणैश्वर्यसंपन्नं भीमं शिवमर्घ्यादिभिरुपचारैरर्चता पूजयता शैवेन मयनाम्नाऽसुरेण प्रभुनाम्नि शिवनामधारके नृपेऽपि भीमेऽपि पूजा कृताऽकारि, स भीमोऽपि तां पूजां पूजारूपं हरिन्मणेर्गरुडमणिसम्बन्धि विषापहारसमर्थमतिविस्तृतं भोजनार्थं भाजनं नैषधायादत्त। मयेन तस्मै दत्तम्, सोऽपि नलायादत्तेत्यपिशब्दः समुच्चयार्थः। अर्चतिर्भौवादिकः॥२९॥

छदे सदैव च्छविमस्य बिभ्रतां
न केकिनां सर्पविषं विसर्पति।
न नीलकण्ठत्वमधास्यदत्र चेत्
स कालकूटं भगवानभोक्ष्यत ॥ ३० ॥

छद इति ॥ अस्य भोजनपात्रस्य छविं नीलां द्युतिं सदैव छदे पिच्छे बिभ्रतां केकिनां मयूराणां सर्पविषं न प्रसर्पति। तच्छरीरं नाक्रामतीत्यर्थः।स भगवान् शिवोऽत्र पात्रे एतदाधारत्वेन कालकूटं चेदभोक्ष्यत[1] तर्हि नीलकण्ठत्वं नाधास्यत्। अत्र पात्रे विषभक्षणे कृते सति तज्जीर्णतया नीलकण्ठत्वं न स्यादित्यर्थः। क्रियाऽतिपत्तौ लृङ्। 'भुजोऽनवने, १। ३। ६६' इति तङ् ॥ ३० ॥

विराध्य दुर्वाससमस्खलद्दिवः
स्रजं त्यजन्नस्य किमिन्द्रसिन्धुरः।
अदत्त तस्मै स मदच्छलात्सदा
यमभ्रमातङ्गतयैव वर्षुकम् ॥ ३१ ॥

विराध्येति ॥ स भीमस्तस्मै नलाय मदच्छलाद्दानजलव्याजात्सदा वर्षुकं वर्षणशीलं यं हस्तिनमदत्त। स दुर्वाससं विराध्य रोषयित्वा तच्छापादिन्द्रसिन्धुर ऐरावतो दिवः सकाशादस्खलत्पतितः किम्। भुवमागत ऐरावणः किमित्यर्थः। विराधे हेतुः—अस्य दुर्वाससः स्रजं मालां त्यजन्भुवि क्षिपन्। अत्र पौराणिकी कथा—कदाचिदैरावतमारुह्य गच्छत इन्द्राय दुर्वाससा प्रसादेन मन्दारपुष्पमाला दत्ता, सा चेन्द्रेण करीन्द्रकुम्भे स्थापिता, स तां शुण्डादण्डेनाधश्चिक्षेप, ततः कुपितेन मुनिना त्वमपि मालावदधः पतेति शप्तः। तन्मूलेयमुत्प्रेक्षा। वर्षुकत्वेन पुनरुत्प्रेक्षते—अभ्रमातङ्गतया ऐरावतत्वेनेव। ऐरावतो हि सदा मदजलं वर्षति, अयमपि तावत्स्वर्गाद् भ्रष्टः स एव इति सदा दानजलं मुञ्चतीत्यर्थः। अभ्रवन्मातङ्गस्तत्तया वा। श्यामत्वात्सजलघनतुल्य इत्यर्थः। अस्य भीमस्य सम्बन्धित्वेन अस्खलत् किमिति वा। वर्षुकम् 'लषपतपद—३।२।१५४' इत्युकञ् ॥ ३१ ॥

मदान्मदघ्ने भवताऽथवा भिया
परं दिगन्तादपि यात जीवत।
इति स्म यो दिक्करिणः स्वकर्णयो-
र्विनैव वर्णस्रजमागतैर्गतैः ॥ ३२ ॥

मदादिति ॥ यो गजः स्वकर्णयोरागतैर्गतैरागमनैर्गमनैश्च कृत्वा वर्णस्रजं वर्णमालां विनैव दिक्करिणो दिग्गजान्प्रति इति स्म इत्याह स्मेव[2]।इति किम्—भो दिग्गजाः, भवतां बलाभिमानश्चेदस्ति तर्हि मदाद्युद्धं कर्तुं यूयं मदघ्ने भवत मम पुरस्तात्तिष्ठत। अथवा चेन्मदो नास्ति, तर्हि भिया दिगन्तस्था यूयं दिगन्तादपि परं दूरं यात गच्छत, पलायितांश्च सन्तस्तत्रैव सुखेन जीवत स्वप्राणान्रक्षतेति ॥ ३२ ॥

बभार बीजं निजकीर्तये रदौ
द्विषामकीर्त्यै खलु दानविप्लुषः।
श्रवःश्रमैः कुम्भकुचां शिरःश्रियं
मुदे मदस्वेदवतीमुपास्त यः ॥ ३३ ॥

बभारेति ॥ यो गजो निजकीर्तये रदौ दन्तौ बीजं कारणं बभार। द्विषामकीर्त्यै दानविप्लुषो दानोदबिन्दूनेव कारणं बभार। खलूत्प्रेक्षायाम्। दन्ताभ्यां परविदारणात्स्वयशःसमुत्पत्तेस्तयोः कीर्तिकारित्वम्। अथ च—

१ अत्रानुप्रासो यमकं च। २ अत्रानुप्रासः।

१ अत्र किमित्युत्प्रेक्षा।२इत्याह स्मेवेत्युत्प्रेक्षा प्रतीयते।

कीर्तिलक्षणस्य कार्यस्य शुभ्रत्वात्कारणेनापि तादृशेनैव भवितुं युक्तमिति कीर्तिबीजभूतकन्दादिव । मदजलगन्धाघ्राणमात्रेण परगजानां भङ्गाद्दानबिन्दूनां तदकीर्तिकारणत्वम् । कार्यस्य श्यामत्वात्कारणेनापि तादृशेनैव भवितु युक्तमिति श्यामदानबिन्दव एवाकीर्तेर्बीजमिवेत्युत्प्रेक्षा । तथा—मुहुर्मुहुर्गतागतैः श्रवःश्रमैः कर्णप्रयासैरेव व्यजनचालनैः कृत्वा कुम्भावेव कुचौ यस्यास्तां मदस्वेदवतीं दानरूपघर्मोदकयुक्तां शिरःश्रियं घर्मजलापहरणद्वारा तस्या एव मुदे हर्षायोपास्त सिषेवे । एवंभूतं शिरो दधानः प्रीतिमुदपादयादित्यर्थः । कामकेलिखिन्नां कुम्भकुचां कामिनीं स्वेदमपनयन्कामी तालवृन्तचालनेन वीजयतीति मदस्य स्वेदरूपेण शिरःश्रियः स्त्रीत्वरूपणम् । अधत्तेति, 'मुदा' इत्यपि पाठः ॥३३॥

न तेन वाहेषु विवाहदक्षिणी-
कृतेषु संख्यानुभवेऽभवत्क्षमः ।
न शातकुम्भेषु न मत्तकुम्भिषु
प्रयत्नवान्कोऽपि न रत्नराशिषु ॥३४॥

नेति ॥तेन भीमेन नलाय विवाहे दाक्षिणीकृतेषु कन्यादानदक्षिणात्वेन दत्तेषु वाहेषु रथादिषु तुरगेषु वा संख्यानुभवे संख्याज्ञाने प्रयत्नवानपि कोऽपि कश्चिदपि क्षम इयन्तो वाहा दत्ता इत्येवं संख्यापरिच्छेदे समर्थो नाभवत् । तथा—शातकुम्भेष्वनेकभूषणभूतघाटिताघाटितकाञ्चनेषु न । तथा—मत्तकुम्भिषु गलन्मदमातङ्गेषु च न । तथा—रत्नराशिषु न । क्षमोऽभवदिति सर्वत्र विवाहदक्षिणीकृतेष्विति च । बहुतरं यौतकं दत्तमिति भावः ॥ ३४ ॥

करग्रहे वाम्यमधत्त यस्तयोः
प्रसाद्य भैम्याऽनु च दक्षिणीकृतः ।
कृतः पुरस्कृत्य ततो नलेन स
प्रदक्षिणस्तत्क्षणमाशुशुक्षणिः ॥ ३५ ॥

करेति ॥ य आशुशुक्षणिरग्निस्तयोः करग्रहे विवाहे विषये वाम्यं वक्रत्वमधत्त भेजे । भैम्यभिलाषान्नलाकारधारणादिद्वारा पूर्वं विरुद्धोऽभूत्, अनु पश्चान्नलवरणावसरे भैम्या स्तुतिध्यानादिना प्रसाद्य संतोष्य दक्षिणीकृत आनुकूल्यं नीतः सोऽग्निस्ततः पाणिग्रहणानन्तरं नलेन पुरस्कृत्योल्लेखनादिसंस्कारपूर्वमग्रे प्रतिष्ठाप्य तत्क्षणं तस्मिन्विवाहसमये प्रदक्षिणः प्रकर्षेणापसव्यः कृतो दक्षिणभागेन वलयाकारेण वेष्टितः । अथ च—यः पूर्वं यौतकदानकाले वामभागेऽभूत्, पश्चाद्भैम्या फूत्कारादिना प्रबोध्यानुकूलः कृतः । अथ च—दक्षिणभागे कृतः सोऽर्चनादिभिः संपूज्य नलेन सुतरामनुकूलः कृतः । अथ च प्रदक्षिणे प्रकर्षेण दक्षिणभागे कृतः । अन्योऽपि यो महान्पूर्वं विरोध्यते स विवाहादौ प्रसाद्यानुकूलः क्रियत इत्युक्तिः । अत्र क्वचित्क्वचिद्विधिक्रमभङ्गो देशाचाराच्छाखाभेदात्कुलाचारविशेषाद्वा बोद्धव्यः । न पुनः श्रीहर्षकवेरज्ञानलेशोऽपि । अत एव पूर्वं यथाविधीति प्रायुङ्क्त । आशोष्टुमिच्छति, 'आङि शुषेः सनश्छन्दसि इत्यग्निः । शिष्टप्रयुक्तत्वाद्भाषायामपि साधुत्वं ज्ञेयम् ॥ ३५ ॥

स्थिरा त्वमश्मेव भवेति मन्त्रवा-
गनेशदाशास्य किमाशु तां ह्रिया ।
शिला चलेत्प्रेरणया नृणामपि
स्थितेस्तु नाचालि विडौजसापि सा ॥३६॥

स्थिरेति ॥ हे भैमि, 'इममश्मानमारोह' इत्युच्चार्य 'त्वमश्मेव स्थिरा भव' इति नलेनोच्चारिता मन्त्ररूपा वाक्तां भैमीमाशास्य शिलावन्निश्चला भवेति तस्यै आशिषं दत्वा आश्वनेशन्ननाश । वर्णा उच्चारिताः प्रध्वस्ता भवन्ति । तत्रोत्प्रेक्षते—ह्रिया किम् । किमिति तस्या लज्जेत्यत आह—शिला अल्पतेजसां नृणामपि प्रेरणया करचरणव्यापारमात्रेण चलेत्स्वस्थानादन्यत्र गच्छेत् । सा तु भैमी पुनरतिप्रभाविणा विडौजसेन्द्रेणापि स्थितेर्मनोन्यापारमात्रस्वीकृतनलपतित्वरूपाया मर्यादायाः सकाशान्नाचालि पतिव्रतां सीमा न त्याजितेति । स्थिरतरत्वेनाधिकाया भैम्या अहं हीनेति स्वदोषं विचिन्त्य लज्जयैव नष्टेत्यर्थः । वैधमश्मारोहणं तेन कारितामिति भावः। 'नश अदर्शने ' अस्माल्लुङि पुषादित्वादङि 'नशिमन्योरलिट्येत्वम्' ( वार्ति० ) इत्येत्वे रूपम् ॥ ३६ ॥

प्रियांशुकग्रन्थिनिबद्धवाससं
तदा पुरोधा विदधे विदर्भजाम् ।
जगाद विच्छिद्य पटं प्रयास्यतो
नलादविश्वासमिवैष विश्ववित् ॥३७॥

---

१ खल्वित्युत्प्रेक्षा । २ सङ्ख्यासम्बन्धेऽपि तदनुक्तेरतिशयोक्तिः ।

१ अत्रानुप्रासः । २ अत्र स्वभावोक्तिः । पूर्वोत्तरवाक्यार्थयोर्हेतुहेतुमद्भावात् काव्यलिङ्गं च ।

प्रियेति॥ तदा वांग्दर्शननिकाले पुरोधा गौतमो विदर्भजां भैमीं प्रियस्य नलस्यांशुकेन सह ग्रन्थिना निबद्धं वासो यस्यास्तामेवंविधां विदधे चकार । उत्प्रेक्षते—पटं विच्छिद्य कर्तितवाऽरण्ये भैमीं विहाय प्रयास्यतो गमिष्यतो नलात्तत्काशादेव पुरोधा अविश्वासं विश्वासाभावं जगाद्वेव यत्त्रं छित्वा त्वां हित्वाऽयं गमिष्यतीत्येतस्य विश्वासो न कार्यं इत्यस्य वस्त्रेण सह स्वयन्नस्य ग्रन्थिं दत्तवानेन सह विचरणीयमित्युवाचेवेत्यर्थः । कथमेतज्ज्ञातमत आह—यतो विश्वं सर्वं वेत्तीति । कालत्रयज्ञ इत्यर्थः । तस्माद्भविष्यदपि तेन ज्ञातमित्यर्थः । 'कलिना पराभूतो नलो द्यूतहारितसर्वस्वः स्वीयैस्त्यक्तो द्वापरेण कलिना पक्षिरूपेण तद्धारणार्थं क्षिप्तस्य वस्त्रस्यापहाराद्वस्त्रान्तराभावाद्भैमीवस्त्रार्धधारी सुनिद्राणायास्तस्या वस्त्रार्धं विच्छिद्य तां महारण्ये तत्याज' इति महाभारते कथा । वेषनुभयवस्त्रग्रन्थिबन्धनं तेन कृतमिति भावः । 'विदधत्' इति पाठे कुर्वन्नुक्तिमिति योजना ॥ ३७ ॥

ध्रुवावलोकाय तदुन्मुखभ्रुवा
निर्दिश्य पत्याऽभिदधे विदर्भजा ।
किमस्य न स्यादणिमाक्षिसाक्षिक-
स्तथाऽपि तथ्यो महिमागमोदितः ३८

ध्रुवेति ॥ तस्य ध्रुवस्य दर्शनार्थमुन्मुखी भ्रूर्यस्य तेन पत्या नलेन विदर्भजा निर्दिश्याज्ञाप्य ध्रुवस्यावलोकनार्थमाभिदधे उक्ता । तदुन्मुख्या भुवा कृत्वा संज्ञाप्येति वा । ननु स्थूलस्य ध्रुवस्य स्वयंदर्शनयोग्यत्वात्सा स्वयमेव तं पश्येत्, तेन किमिति दर्शनं कारितमित्यत आह—अस्य ध्रुवस्याणिमा सूक्ष्मप्रमाणत्वमक्षिसाक्षिको नेत्रगोचरः किं न स्यात्, अपि तु स्यादेव यद्यपि, तथापि स्वयंदर्शनयोग्यत्वेऽप्यागमोदितो महिमा वेदोक्तं गौरवं सत्यः । अस्त्विति शेषः । श्रुत्युक्तं हि प्रमाणमित्यर्थः । श्रुतिर्हि ततो वधूं प्राति 'ध्रुवमुदीक्षस्व' इति ध्रुवे दर्शिते 'ध्रुवं पश्यामि प्रजां विन्देय' इति सा ब्रूयात् । तस्मात्स्वं द्रष्टुं शक्यत्वेऽपि नल एवादर्शयदिति युक्तमित्यर्थः । वैधं ध्रुवदर्शनं कारितमिति भावः । एतत्सर्वं कविवचनः । अथ च—यद्यप्यणुत्वं स्वयं प्रत्यक्षदृश्यं तथाऽपि ज्योतिःशास्त्रोक्तं ध्रुवमण्डलस्य महापरिमाणत्वं सत्यमेवं ॥३८॥

१ अत्र इवेत्युत्प्रेक्षा, विश्ववेदिति परिकरः। २ किमित्युत्प्रेक्षा ।

धवेन साऽदर्शि वधूररुन्धतीं
सतीमिमां पश्य गतामिवाणुताम् ।
कृतस्य पूर्वं हृदि भूपतेः कृते
तृणीकृतस्वर्गपतेर्जनादिति ॥ ३९ ॥

धवेनेति ॥ सा वधूर्धवेन नलेनाणुतामतिसूक्ष्मत्वं गतामिमां सतीं पतिव्रतामरुन्धतीं त्वं पश्येत्युक्त्वादर्शि दर्शिता तत्राणुत्वे उत्प्रेक्षते—वरणात्पूर्वमेव हृदि कृतस्य मनोरथमन्त्रेण हृदये कृतस्य भूपतेः कृते तृणीकृतस्वर्गपतेस्तृणवल्लाघवेन त्यक्त इन्द्रो येन एवंभूताज्जनादिव । लज्जयेति शेषः । अहं हि परिणीता सतीन्द्रं तृणप्रायमकरवम्, भैमी तु हृदि धारणमात्रादेवेति मत्तोऽप्यधिका सतीति भैम्याः सकाशाल्लज्जयेव कृशामित्यर्थः । स्वतः कृशत्वमेवमुत्प्रेक्षितम् । भूपतेः,जनादिति शब्दद्वयं सामान्यवाच्यपि नलभैमीलक्षणे विशेषे पर्यवस्यति । वैधमरुन्धतीविलोकनं कारितमिति भावः । अदर्शि ण्यन्तात्कर्मणि । 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' इति (वा.) अणौ कर्तुर्णौ कर्मत्वम् । तस्य चाभिहितत्वाद्द्वितीयाभावः ॥ ३८ ॥

प्रसूनता तत्करपल्लवस्थिते-
रुडुच्छविर्व्योमविहारिभिः पथि ।
मुखेऽमराणामनले रदावले-
रभाजि लाजैरनयोज्झितैर्द्युतिः ॥ ४०॥

प्रसूनतेति ॥ तस्या भैम्याः करयोरेव पल्लवयोः स्थितैर्वर्तमानैर्लाजैः प्रसूनता पुष्पत्वमभाजि प्राप्ता। पल्लवेषु च पुष्पाणि युक्तानि । तथा—अनया भैम्योज्झितैः करान्मुक्तैर्व्योम्नि विहरणशीलैः सद्भिः पथि मार्गान्तराललग्ने मार्गे उडुच्छविर्नक्षत्रशोभा भेजे । व्योम्नि नक्षत्राणि युक्तानि । तथा—अमराणां मुखेऽनलेऽग्नावनया हुतैः रदावलेर्दन्तपङ्क्तेर्द्युतिः शोभा भेजे । मुखे च दन्तपङ्क्तिर्युक्ता । वैधो लाजहोमस्तया कृत इति भावः ॥ ४० ॥

१ गतामिवेत्युत्प्रेक्षा । २ अत्रैकस्य लाजपदार्थस्य करपल्लवादीनामनेकेषामाधारवृत्तित्वेन क्रमादभिधानमिति पर्यायः, साम्येन च लाजपदार्थस्य प्रसूनादिरूपेणापरथाऽभिधानाद्विदर्शना चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ।

तया प्रतीष्टाहुतिधूमपद्धति-
गता कपोले मृगनाभिशोभिताम् ।
ययौ दृशोरञ्जनतां श्रुतौ श्रिता
तमाललीलामलिकेऽलकायिता ॥४१॥

तयेति ॥ तया भैम्या प्रतीष्टा करकुड्मलाभ्यां स्वीकृता आहुतिधूमपद्धतिर्हूयमानलाजादिद्रव्यसंबन्धिनी धूमपरम्परा कपोले मृगनाभिशोभितां कस्तूरीशोभां गता प्राप्ता । तत ऊर्ध्वं गच्छन्ती दृशोश्चक्षुषोरञ्जनतां ययौ प्राप । ततोऽप्यूर्ध्वं गच्छन्ती श्रुतौ कर्णयोस्तमाललीलां वतंसभूततमालदलसादृश्यं श्रिता । ततोऽप्यूर्ध्वतरं गच्छन्ती अलिके ललाटेऽलकायिता चूर्णकुन्तलवदाचरिता । तत्तुल्या जातेत्यर्थः । कपोले कस्तूरी, दृशोरञ्जनम्, श्रुतौ तमालम्, ललाटे चालका इति युक्तम् । वैधं धूमग्रहणं कृतमिति भावः । मृगनाभिशोभिनीति 'कर्तर्युपमाने ३ । २ । ७९ ।' इति णिनौ मृगनाभिशोभिनी तस्या भावस्तत्ता 'त्वतलोर्गुणवचनस्य' इति पुंवत् ॥ ४१ ॥

अपह्नुतः स्वेदभरः करे तयो-
स्त्रपाजुषोर्दानजलैर्मिलन्मुहुः ।
दृशोरपि प्रस्रुतमस्रु सात्त्विकं
घनैः समाधीयत धूमलङ्घनैः ॥ ४२ ॥

अपहुत इति ॥ त्रपाजुषोर्लज्जावतोस्तयोः करे वर्तमानः स्वेदभरः सात्त्विकधर्मजलसङ्घो दानजलैर्ब्राह्मणेभ्यो दक्षिणादानार्थमुत्सृष्टैः संकल्पजलैर्मुहुर्वारंवारं मिलन्संवन्धं प्राप्नुवन्सन् अपह्नुतोऽपलपितः । दानजलयोगात्सात्त्विकः स्वेदोऽयमिति लोकेन न ज्ञात इत्यर्थः । करे मुहुर्मिलन्पुनः पुनरुद्भवन्दानजलैरपह्नुत इति वा । तत्रापि कामविकारवशात्स्वेदं लोको ज्ञास्यतीति भिया वा । दृशोरपि प्रस्रुतं गलितं सात्त्विकं कामविकारजमस्रु घनैः सान्द्रैर्धूमलङ्घनैर्धूमाक्रमणैः कृत्वा समाधीयत परिहृतं ताभ्यामित्यर्थात् । तैरेव कर्तृभिरपलपितं वा । परस्परसंस्पर्शात्तयोः स्वेदादयः सात्त्विका भावा प्रवृत्ता इति भावः ॥ ४२ ॥

बहूनि भीमस्य वसूनि दक्षिणां
प्रयच्छतः सत्त्वमवेक्ष्य तत्क्षणम् ।
जनेषु रोमाञ्चमितेषु मिश्रतां
ययुस्तयोः कण्टककुड्मलश्रियः ॥४३॥

बहूनीति ॥ बहूनि वसूनि दक्षिणां प्रयच्छतो दक्षिणात्वेन ददतो भीमस्य सत्त्वं दानशौण्डत्वमवेक्ष्य तत्क्षणं तस्मिन्नेव क्षणे आश्चर्यातिशयाद्रोमाञ्चमितेषु प्राप्तेषु जनेषु मध्ये तयोर्भैमीनलयोः कण्टककुड्मलश्रियः कण्टककलिकाशोभा मिश्रतामैक्यं ययुः प्रापुः । सात्त्विकोऽपि रोमाञ्चोऽन्यजनवदाश्चर्यादयं जात इत्यपलपित इति भावः ४३ ॥

बभूव न स्तम्भविजित्वरी तयोः
श्रुतिक्रियारम्भपरम्परात्वरा ।
न कम्पसंपत्तिमलुम्पदग्रतः
स्थितोऽपि वह्निः समिधा समेधितः ४४

बभूवेति । श्रुतिक्रियाया वेदविहितलाजहोमाग्निपरिभ्रमणादिकाया आरम्भस्य परम्परा एकस्मादनन्तरमन्यस्यारम्भः, तस्मादनन्तरमन्यस्य, एवमव्यवहितो न उत्तरोत्तरभावस्तद्विषया त्वरा वेगिता तयोः सात्त्विकभावजनितस्याङ्गाचलनात्मकस्य स्तम्भस्य विजित्वरी जयनशीला न बभूव । तं नापललापेत्यर्थः । अवश्यापेक्षितायामपि कर्मवेगितायां सात्त्विकस्तम्भवशात्तौ किमपि कर्म शीघ्रं कर्तुं समर्थौ नाभूतामिति भावः तथा— समिधा काष्ठैः समेधितः संवर्धितद्युतिरप्यग्रतः स्थितोऽपि तयोः कम्पसंपत्तिं सात्त्विकं कम्पबाहुल्यं नालुम्पन्न शमयति स्म । शीतजं हि कम्पं विशिष्टोऽग्निः शमयति, न तु सात्त्विकम् । तस्य तत्रासमर्थत्वादित्यर्थः । तयोरन्यसात्त्विकापलापेऽपि स्तम्भकम्पौ लोकैर्ज्ञातावेवेति भावः ।

---

१ अत्राप्येकस्या धूमपद्धतेः कपोलादीनामनेकेषामाधारवृत्तित्वेन क्रमादभिधानमिति पर्यायः, साम्येन च तस्यैव धूमस्यानेकमृगमदादिरूपेणावस्थाऽभिधानान्निदर्शना च, एतयोश्चाङ्गाङ्गिभावात्मा सङ्करः ।

१ अत्र स्वेदस्याश्रुणश्च स्वाभाविकयोरागन्तुकसम्प्रदानजलधूमाभ्यामभिवान्मीलितम्, ' मीलितं यदि सादृश्याद् भेद एव न लक्ष्यते ।' इति तल्लक्षणात्। २कण्टकानां ( रोमाञ्चानां) कुड्मलत्वेन रूपणाद्रूपकं, मिश्रतां ययुरिति सामान्यम्, रोमाञ्चकण्टकयोरभेदेऽपि भेदेनोक्तिस्तु तत्सम्बन्धित्वे वैलक्षण्यसूचनार्थाएवं च परेषामाश्रयेण तयोश्च सात्त्विकभावेन रोमोद्गम इत्युक्तमूह्यम् ।

'अवर्ततास्तम्भ' इति पाठे न स्तम्भविजित्वरीति नञ्समासः। अलुम्पत्, 'शे मुचादीनाम् ७।१।५९' इति नुम्॥ ४४॥

दमस्वसुः पाणिममुष्य गृह्णतः
पुरोधसा संविदधेतरां विधेः।
महर्षिणेवाङ्गिरसेन साङ्गता
पुलोमजामुद्वहतः शतक्रतोः॥ ४५॥

दमेति॥ दमस्वसुः पाणिं गृह्णतोऽमुष्य नलस्य संबन्धिनो वैवाहिकस्य श्रौतस्य विधेः साङ्गता अङ्गसाहित्यं पुरोधसा संविदधेतरां नितरां साकल्येन चक्रे। प्रधानमात्रं नलेन कृतम्, अङ्गानि तु पुरोधसा कृतानीति भावः। कस्य केनेव—पुलोमजामुद्वहतः परिणयतः शतक्रतोः सम्बन्धिनो विधेः साङ्गता आङ्गिरसेन महर्षिणा बृहस्पतिनेव॥ ४५॥

स कौतुकागारमगात्पुरंध्रिभिः
सहस्ररन्ध्रीकृतमीक्षितुं ततः।
अधात्सहस्राक्षतनुत्रमित्रता-
माधिष्ठितं यत्खलु जिष्णुनाऽमुना ४६॥

स इति॥ ततो वैवाहिकविधेरनन्तरं स नलः पुरन्ध्रिभिरन्तःपुराङ्गनाभिरीक्षितुं वधूवरचेष्टादिदर्शनार्थं सहस्ररन्ध्रीकृतं तृणकाष्ठादिरचितबहुच्छिद्रगवाक्षं वधूवरसंवेशार्थं रचितशृङ्गारवेदिकं कौतुकागारं कुतूहलावहं दूर्वायवाङ्कुरादिनवमङ्गलद्रव्यसहितं गृहमगाचयौ। यद्गृहं जिष्णुना जयशीलेनामुना नलेनाधिष्ठितं सद्विलोकितुं नेत्रसहस्रावकाशरन्ध्रधारिणा सहस्राक्षस्य तनुत्रेण कवचेन सह मित्रतां साम्यमधाद्बभार। तदपि जिष्णुनेन्द्रेणाधिष्ठीयते। खलूत्प्रेक्षायां निश्चये वा॥ ४६॥

तथाशनाया निरशेषि नो ह्रिया
न सम्यगालोकि परस्परक्रिया।
विमुक्तसम्भोगमशायि सस्पृहं
वरेण वध्वा च यथाविधि त्र्यहम्॥४७॥

तथेति॥ वरेण वध्वा चाशनाया बुभुक्षा ह्रिया कृत्वा तथा पूर्ववन्नो निरशेषि न निरशेपिता आतृप्ति न भुक्तमित्यर्थः। तथा—परस्परक्रियाऽन्योन्यं चेष्टादिव्यापारोऽपि ह्रियैव सम्यक्सम्मुखदर्शनेन नालोकि न विलोकितः। किन्तु दृगन्तमात्रेणेत्यर्थः। तथा—त्र्यहं दिनत्रयं यथाविधि विमुक्तसम्भोगं त्यक्तसुरतं यथा तथा परं सस्पृहं सुरतेच्छासहितं यथा तथाशायि शयितम्। त्र्यहमिति सर्वत्र योज्यम्। विध्यतिक्रमभयाद्दिनत्रयं ताभ्यां सह भुक्तम्, अन्योन्यं विलोकितम्, सह निद्रितं च। परं लज्जया न यावत्तृप्ति भुक्तम्, नाशेषाङ्गं दृष्टम्, न च चुम्बनालिङ्गादिपूर्वं शयितमित्यर्थः। 'एकत्र शयनं त्रिरात्रं ब्रह्मचर्यं च' इति विधिः। अशनाया, 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ७।४।३४' इति साधुः। त्र्यहं, समाहारे द्विगौ 'राजाहःसखिभ्यष्टच् ५।४।९१' इत्यनेन टच्। 'न सङ्ख्यादेः समाहारे ५।४।८९' इत्यह्नादेशाभावः। 'रात्राह्नाहाः पुंसि २।४।२९' इति पुंस्त्वम्। 'कालाध्वनोरत्यन्तसंयोगे २।३।५' इत्यत्यन्तसंयोगे द्वितीया। त्र्यहं विमुक्तसंभोगमिति योजना॥ ४७॥

कटाक्षणाज्जन्यजनैर्निजप्रजाः
क्वचित्परीहासमचीकरत्तराम्।
धराप्सरोभिर्वरयात्रयाऽऽगता-
नभोजयद्भोजकुलाङ्कुरः क्वचित् ४८॥

कटाक्षेति॥ भोजकुलस्य भीमपूर्वजभोजाख्यक्षत्रियवंशस्याङ्कुर इवाङ्कुरो बालो दमः क्वचिद्भीमदृक्पथागोचरे कस्मिंश्चिद्देशे जन्यजनैर्वरयात्रिकैर्नलपक्षीयैः सह निजाः प्रजाः परिहासपात्रभूतपौरवारस्त्रीमुख्यास्ताभिः प्रयोज्याभिरित्यर्थः। कटाक्षणान्नेत्रसंज्ञया परीहासं श्लेषवक्रोक्त्यादिनार्थान्तरोपदर्शनरूपमुपहासमचीकरत्तरामतितरां कारयामास। तथा—क्वचिच्च वरयात्रया निमित्तेनागतान्नलपक्षीयानन्यान्राजलोकान्धराप्सरोभिर्दासीस्वैरिणीसैरन्ध्रिप्रभृतिभिः पुरसुन्दरीभिर्वाराङ्गनाभिरभोजयद्भोजनमकारयत्। परिवेषणार्थं काश्चित्सहभोजनार्थं काश्चिदादिष्टवानित्यर्थः। विवाहे कनीयसामेवोप-

१ अत्र कर्मत्वरासमृद्धाग्निरूपकारणसत्त्वेऽपि स्तम्भकम्पनिवृत्तिरूपकार्यानुत्पत्तेर्विशेषोक्तिः। समेधितोऽपि नालुम्पदित्यपरभावे विरोधाभासो ध्वन्यते च। तेनालङ्कारेणालङ्कारध्वनिः। स्तम्भकम्पयोः सात्त्विकासात्त्विकत्वाभ्यां भेदेऽपि अभेदोक्तिस्तु अत्र चमत्काराधानार्था। २ आङ्गिरसेनेवेत्युपमा। ३ अत्र जिष्णुनेति श्लेषवशाद् गवाक्षस्येन्द्रकवचस्य च साम्योक्तेरुपमा।

१ अत्रानुप्रासः, विधेः शासनकर्म कार्यकरणोक्त्या तयोर्धार्मिकत्वं,स्वभावोक्तिश्च ततः पर्यवसीयते।

हासकारणयोग्यत्वादङ्कुरपदप्रयोगो युक्तः। कटाक्षशब्दात् 'तत्करोति०' इति ण्यन्ताल्ल्युट्। निजप्रजाः, 'हृक्रोः–' इति कर्मत्वम्। आगतान्, भुजेः प्रत्यवसानार्थत्वात् 'गतिबुद्धि०' इति कर्मत्वम्। अभोजयत्, 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदम्॥ ४८॥

**स कश्चिदूचे रचयन्तु तेमनो-**
**पहारमत्राङ्ग(–)रुचेर्यथोचितम्।**
**पिपासतः काश्चन सर्वतोमुखं**
**तवार्पयन्तामपि काममोदनम्॥४९॥**

तमेव प्रकारमाह—

स इति॥ स दमः कश्चित् नलपक्षीयमेवमूचे। स्वजनमुखेनेति शेषः। अङ्ग हे वारयात्रिक, अत्र पात्रे। आसु परिवेषिकासु मध्ये वा। काश्चन स्त्रियस्तव रुचेरभिलापस्य यथोचितमुचितानतिक्रमेण तेमनाख्यस्य व्यञ्जनस्योपहारमानयनं रचयन्तु कुर्वन्तु यावदभिलाषं तेमनमानयन्तु किमिति प्रश्नकाकुः, एता एवं कुर्वन्तु,त्वं भुङ्क्ष्वेति भोजनोपदेशो वा। एवमुत्तरत्रापि। तथा—पिपासतस्तृषालोस्तव पानार्थं सर्वतोमुखं जलमप्यर्पयन्तां ददतु। तथा—ओदनमपि कामं यथेच्छमर्पयन्ताम्।

परिहासस्तु॥ अत्र आसु मध्ये। विविक्ते स्थाने वा। अङ्गरुचेः स्तनजघनाद्यङ्गानां रुचेर्दर्शनाद्यभिलाषस्योचितं यथा भवति तथा तव मानसोऽपहारमपहरणं रचयन्तु। स्तनादिदर्शनादिनाऽन्तःकरणहरणं कुर्वन्त्वित्यर्थः। कायकान्तेर्हेतोः सौन्दर्यातिशयान्मनोहरणं कुर्वन्त्विति वा। तथा—पिपासतश्चुम्बनेच्छोस्तव सर्वतो नेत्रादिचुम्बनस्थाने दर्शनमात्रेण कामस्य हर्षकरं सुखमर्पयन्ताम्। बहूनां चुम्बनस्थानानामेकत्र मुखे वर्तमानत्वान्मुखमेव तव ददत्वित्यर्थः। अथ च–कामस्य हर्षकरं वराङ्गमपि चुम्बनार्थमर्पयन्ताम्। अथ च—मुखं पिपासतस्तव सर्वदा वराङ्गमेव ददतु। 'स्यात्तेमनं तु निष्ठानम्' इत्यमरः। पूर्वव्याख्याने तवेत्युभयत्र योज्यम्। मुखं सर्वत इति, 'उभसर्वतसोः कार्या' इति द्वितीया। तव, ते इति च संबन्धसामान्ये षष्ठी॥ ४९॥

**मुखेन तेऽत्रोपविशत्वसाविति**
**प्रयाच्य सृष्टानुमतिं खलाहसत्।**
**वराङ्गभागः स्वमुखं मतोऽधुना**
**स हि स्फुटं येन किलोपविश्यते॥५०॥**

मुखेनेति॥ काचित्खला वक्रोक्त्यादिभाषिणी हे वारयात्रिक, असौ मत्सखी पुरुषो वात्र स्थाने ते तव मुखेनोपलक्षितत्वात्। संमुखमिति यावत्। त्वदुपायेन वा। त्वदाज्ञयेति यावत्। त्वया सह भोजनार्थं तव पुरस्ताद्वा। भोजनार्थमुपविशत्विति प्रयाच्य संप्रार्थ्य मुखेनोपविशत्विति सृष्टा दत्तानुमतिरनुज्ञा येन तं वारयात्रिकं पश्चादहसत्। हासे कारणमाह—हि यस्माद्येन साधनेन किलोपविश्यते स हि वराङ्गभागो गुह्यदेशः अमुना जनेन स्वस्यात्मनो मुखं स्फुटं निश्चितं मतः। मुखेन करणेनोपविशत्वित्येवमर्थपरं तद्वचनमज्ञात्वा तेनानुज्ञायां दत्तायां कटिदेशाधःप्रदेशेन किलोपविश्यते इत्येवं वदतानेन स्वमुखं वराङ्गत्वेन मतं यस्मात्, तस्माद्धास्यं युक्तमित्यर्थः। सर्वजनबोधपुरःसरं जहासेति वा। अथ च—ते मुखेनोपविशतु, अपितु पुरीषोत्सर्गार्थमुपविशत्विति प्रयाच्य तदीयं जुगुप्सितमर्थमगृहीत्वा सृष्टानुमतिं तमहसत्। 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति विश्वः॥५०॥

**युवामिमे मे स्त्रितमे इतीरिणो**
**गले तथोक्त्वा निजगुच्छमेकिका।**
**न भास्यदस्तुच्छगलो वदन्निति**
**न्यधत्त जन्यस्य ततः पराकृषत्॥५१॥**

युवामिति॥ इमे पुरोवर्तिन्यौ युवां मे मम स्त्रितमे उत्तमे स्त्रियौ भवादृशे स्त्रीरत्ने न दृष्टे इतीरिणो वदतः स्तुवतः। अथच—मत्सम्बन्धिन्यौ प्रियतमे भवेतामिति वा परिहासाद्वदतः। कदाचिज्जनस्य वरपक्षीयस्य गले तथा यथा त्वयोच्यते तथेत्युक्त्वा तयोर्द्वयोर्मध्ये एकिका एकैव निजगुच्छं रज्जुस्थाने हारविशेषमेवेत्युक्त्वा न्यधत्त। इतीति किम्—हे जन्य, त्वमदः पूर्वोक्तम् इमे मे इति शब्दं वदन्कुर्वन्, तु पुनश्छगलश्छागो न भासि। अपितु एवं शब्दं कुर्वञ्छाग एव स्फुरसि। अथच—तुच्छः स्तनशून्यो गलः कण्ठो यस्य एवम्भूतो न भासि। अजस्य गले स्तनौ तिष्ठतः, त्वं तु तादृक्शब्दोऽपि स्तनशून्य इति कारणान्न शोभसे। अथच रज्जुरहितकण्ठो न भासीति रज्जुस्थाने

---

१ अत्राप्यनुप्रासः, स्वभावोक्तिः, विवाहे हि एवं सर्वैरनुष्ठीयते। २ अत्रोभयोरभिधेययोः प्रकृतत्वात् केवलप्रकृतश्लेषः।

हारं धत्ते स्मेत्युभयतो लम्बमानो हार एव गलस्तनस्थाने भवत्वित्यर्थः । ततोऽनन्तरं परा द्वितीया रज्जुवद्धारमेव धृत्वाऽजमिव तमाकृषत्कण्ठे वद्ध्वा दूरं निनाय । अजो हि मिमेमेशब्दो रज्ज्वा कण्ठे वद्ध्वा कृष्यते इति परिहासः । अथच—रिक्तकण्ठो ग्रासरहितो न भासीति निजगुच्छं स्वहस्तस्थितं पल्लवस्तबकं गले मुखान्तः न्यधत्त नितरां वलाच्चिक्षेप, द्वितीया च दत्तपल्लवग्रासं छागमिव चकर्षेति परिहासः । अथच—एवमस्मत्स्तुतिं कुर्वन् तुच्छगलो हाररहितकण्ठो न भासीति वदन्ती गले हारं परितोषवशाच्चिक्षेपेति वा । यद्वा अस्मत्प्रेम्णा भवत्यौ मे प्रियतमे इति वदन् त्वं शून्यकण्ठो न भासि मयाऽपि त्वं वरणीय इति मालास्थाने हारमेव चिक्षेप । परा च तत्रैव धृत्वा परिहासमिषेण सम्भोगार्थमेव चकर्षेति भावः । मिमेमे इति परिहासपक्षे युवामिति विन्दुच्युतकेन एवं वदन् युवा तरुणश्छगल इति वा योज्यम् । अकृषत् लङ् ॥ ५१ ॥

नलाय वालव्यजनं विधुन्वती
दमस्य दास्या निभृतं पदेऽर्पिताद् ।
अहासि लोकैः सरटात्पटोज्झिनी
भयेन जङ्घायतिलङ्घिरंहसः ॥५२॥

नलायेति ॥ नलाय नलार्थं वालव्यजनं मयूरपिच्छ-तालवृन्तं चामरं वा विधुन्वती कम्पयन्ती नलसेवापरा काचित्सुन्दरी दमस्य दास्या निभृतं गुप्तं यथा तथा पश्चादागत्य पदे चरणसमीपेऽर्पितान्मुक्तात्सरटात्कृकला-साद्भयेन पटमुज्झतीत्येवंशीला, त्यक्तवस्त्रा दिगम्बरीभूता सती लोकैरहासि हसिता । जनहासे हेतुरभूदित्यर्थः । कंभूतात्सरटात् । जङ्घाया आयतिर्दैर्घ्यं तल्लङ्घयत्येवं-शीलं रंहो वेगो यस्य तस्मात् । अत एव भयहेतोः सरटस्योर्ध्वारोहणं जातिस्वभावः ॥ ५२ ॥

पुरःस्थलाङ्गूलमदात्खला बृसी-
मुपाविशत्तत्र ऋजुर्वरद्विजः ।
पुनस्तदुत्थाप्य निजामतेर्वदा-
ऽहसच्च पश्चात्कृतपुच्छतत्प्रदा ॥५३॥

पुर इति ॥ काचित्खला धूर्ता समागताय कस्मैचि-द्द्विजाय पुरःस्थमग्रे स्थितं लाङ्गूलं पुच्छं यस्यां क्रियायां तद्यथा तथा कूर्माकारां बृसीमृषीणामासनमदा-द्दत्तवती । वरः श्रेष्ठः । वरस्य नलस्य वा । द्विजस्तत्र तस्यां पुरःस्थलाङ्गूलायामेव बृस्यामुपाविशदुपविष्टः । यतः—ऋजुस्तस्याः कौटिल्यमजानानः । सा च खला निजामतेः स्वीयाज्ञानस्य आसनं मया भ्रान्त्याऽन्यथा स्थापितम् इति वदा । स्वाज्ञानं नाटयन्तीत्यर्थः । तं पुनरुत्थाप्य पश्चात्कृतं पुच्छं यस्याः सा एवंभूता चासौ सा च बृसी तां प्रददाति प्रददत्येवंभूता सत्यहसत् । उपविष्टस्योरुद्वयमूलान्तरे स्थितमासनपुच्छं शिश्नमिव भविष्यति इति बुद्ध्वा मया पुरो लाङ्गूलमासनं क्षिप्तम्, अयं तु मदभिप्रायमजानानोऽचतुरः पशुतुल्यः । पशोश्च पश्चादेव पुच्छेन भवितव्यमिति ज्ञापयितुं परिहासबुद्ध्यैव तां पश्चात्पुच्छं ददानाऽहसदिति भावः । अज्ञया मयो-पहासनानर्हस्योपहासाय प्रवृत्तमिति केचित् । आसन-स्थापनानभिज्ञाया निजायाः स्वसख्या अमतेर्वदेति वा । 'ऋषीणमासनं बृसी' इत्यमरः ॥ ५३ ॥

स्वयं कथाभिर्वरपक्षसुभ्रुवः
स्थिरीकृतायाः पदयुग्ममन्तरा ।
परेण पश्चान्निभृतं न्यधापय-
द्ददर्श चादर्शतलं हसन् खलु ॥ ५४ ॥

स्वयमिति ॥ कश्चित्खलः परिहासचतुरः स्वयं स्वेनैव कथाभिर्हंसदूत्यादिवार्ताभिः स्थिरीकृतायाः कथाश्रवण-प्रवणीकृताया वरपक्षसुभ्रुवो नलपक्षीयायाः सुन्दर्याः । वरस्य पक्षे पार्श्वे स्थिताया वा । पदयुग्ममन्तरा चरण-द्वयमध्ये परेण स्वसखेन प्रयोज्येन निभृतं गुप्तं यथा तथा पश्चाद्भागेनादर्शतलं दर्पणं न्यधापयदस्थापयत् । हसन् सन् प्रतिविम्बितोरुजघनकामसदनं तं दर्पणं ददर्श च । भगादिदर्शनादेव हासः । पश्चादनन्तरं ददर्शेति वा । पदयुग्मम् । 'अन्तरान्तरेण युक्ते २।३।४' इति द्वितीया ॥ ५४ ॥

अथोपचारोद्धुरचारुलोचना
विलासनिर्वासितधैर्यसम्पदः ।
स्मरस्य शिल्पं वरवर्गविक्रिया
विलोककं लोकमहासयन्मुहुः ॥ ५५ ॥

---

१ अत्रैवंपरिहासोक्तेः स्वाभाविकत्वात्स्वभावोक्तिः, साम्यप्रतीतेश्चोपमा व्यङ्ग्या।परिहासेन च स्वानुरागापह्नव-पूर्वं मालानिधानोक्तेरपह्नुतिर्व्यङ्ग्या । २ अत्र परिकरः स्वभावोक्तिश्च ।

१ अत्रापि परिकरःस्वभावोक्तिश्च।२अत्र स्वभावोक्तिः।

अथेति ॥ अथ कामरहितकेवलपरिहासानन्तरं वरवर्गाणां नलपक्षीयराजसङ्घानां विक्रिया मनोविकारो याभ्यस्ताः । यासां दर्शनेन नलपक्षीयाणां कामविकारो भवति ता वराङ्गना विलोककं द्रष्टारं लोकं मुहुरहासयन्। तद्रूपादिदर्शनसमुत्पन्नकामविकारं वरलोकं दृष्ट्वा लोकोऽहसदिति भावः । कीदृश्यः—उपचारे कटाक्षक्षेपादिना स्वानुरागज्ञापके प्रीतिविलोकने विषये उद्धुराण्युत्सुकानि चारूण्यतिविशालानि चतुराणि लोचनानि यासां ताः । तथा—विलासैः कटाक्षविक्षेपादिभिः कृत्वा निर्वासितास्त्याजिता धीराणां विलासिनां धैर्यसम्पदो याभिस्ताः । तथा—स्मरस्य शिल्पं कृतिरतिसुन्दर्यः । उपचारे परिवेषणादावुद्धुराश्च ताश्चारुनेत्राश्चेति वा । उपचारोद्धुरचारुलोचनानां विलासैस्त्याजिता धैर्यसंपद्येन तस्य स्मरस्य शिल्पं विलसितं कर्तृ वरवर्गविकारदर्शिनं लोकं मुहुरहासयदिति वा । स्वाशयज्ञापनोत्सुकानि चारूणि नेत्राणि यासु । तथा—विलासैः पूर्वोक्तैरेव त्याजिता धैर्यसम्पद्याभिः, यासु वा । तथा—कामजनिता वरवर्गस्य विक्रिया विकाराः कन्यो विलोककं लोकं मुहुरहासयन्निति वा । इदानीं कामचेष्टापुरःसरं परिहासः प्रवृत्त इति भावः ॥ ५७ ॥

**तिरोवलद्वक्त्रसरोजनालया**
**स्मिते स्मितं यत्खलु यूनि बालया ।**
**तया तदीये हृदये निखाय त-**
**द्व्यधीयतासम्मुखलक्ष्यवेधिता ॥५६॥**

तदेवाह—

तिर इति ॥ कस्मिंश्चिद्यूनि तरुणे स्मिते सानुरागं हसिते सति कयाचिद्बालया तिरो वक्रं यथा तथा वलद्वक्त्रसरोजनालया वलितः वलन् मुखकमलस्य दण्डो ग्रीवा यस्याः एवंभूतया सत्या यत्स्मितमीषदहासि । तया बालया तदीये हृदये हसितुर्वक्षसि तत्स्मितमेव निखाय खनित्वा आरोप्यासंमुखस्य लक्ष्यस्य वेध्यस्य वेधिता वेधकता व्यधीयत कृता । खलूत्प्रेक्षे । पराङ्मुखलक्ष्यवेधकत्वं धनुर्विद्यायां निपुणस्यैव भवति । यः पराङ्मुखः सँल्लक्ष्यं विध्यति । पराङ्मुख्यापि तस्मिन्नात्मानुरागो निवेशित इत्यर्थः । स्मितं लज्जा चानुरागसूचिका, मया स्वानुरागद्योतनार्थं हास्ये कृतेऽनया हास्यपूर्वं लज्जितं चेत्तर्हीयं मय्यनुरक्तेति निश्चितवन्तं तत्स्मितमेव कामबाणीभूय न्यपीडयदिति भावः । बालत्वादपि वलितग्रीवत्वम् । प्रौढा तु संमुखमेव हसति । स्मिते, स्मितमिति 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ३ । ४ । ७१' इति कर्तरि 'नपुंसके भावे क्तः ३।३।११४' इति भावे च क्तः।विधिता,विधिस्तौदादिकात् 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति ताच्छील्ये णिनिः ॥ ५६ ॥

**कृतं तदन्यत्करणोचितत्यजा**
**दिदृक्षु चक्षुर्यदवारि बालया ।**
**हृदस्तदीयस्य तदेव कामुके**
**जगाद वार्तामखिलां खलं खलु ॥५७॥**

कृतमिति ॥ करणस्य कर्तव्यस्योचितं परिवेषणादि त्यजति तया बालया यदन्यदप्रस्तुतं व्यापारान्तरं कृतम्। तथा—पुनः पुनः दिदृक्षु दर्शनेच्छु किंचिद्दृगन्तमात्रेण द्रष्टुं प्रवृत्तमपि चक्षुर्यदवारि अर्थात्परावर्तितम् । तदेवान्यकरणचक्षुर्वारणरूपं द्वयमेव कामुके विषये तदीयस्य हृदो बालासंबन्धिनो मनसोऽखिलां वार्तामाशयं जगाद । यतः । खलं सूचकम् । खलूत्प्रेक्षा निश्चितं वा । दुर्जनो ह्यन्यदीयमनोगतमन्यस्मै निवेदयति ।लज्जानुभाववशादियं मय्यनुरक्तेति सोऽज्ञासीदिति भावः ।'खले' इति पाठे स्वाशयद्योतनपरेङ्गितज्ञानचतुरे इति कामुकविशेषणम् ॥ ५७ ॥

**जलं ददत्याः कलितानतेर्मुखं**
**व्यवस्यता साहसिकेन चुम्बितुम् ।**
**पदे पतद्वारिणि मन्दपाणिना**
**प्रतीक्षितोऽन्येक्षणवञ्चनक्षणः ॥ ५८ ॥**

जलमिति ॥ कंचित्पिपासुं जलं पाययमानायाः पादप्रक्षालनार्थं वा कस्मैचिज्जलं ददत्याः । अत एव कलितानतेर्नम्रीभूतायाः कस्याश्चित्सुन्दर्याः समीपवर्ति मुखं जनमध्ये चुम्बितुं व्यवस्यता कृतोद्यमेन । अत एव साहसिकेनाविचार्यकारिणा केनचित्कामुकेन पतद्वारिणि पदे मन्दपाणिना विलम्बार्थं विरलाङ्गुलिपङ्गलज्जलपाणिना सता । पादप्रक्षालनालसपाणिना वा सता ।

---

१ अत्रानुप्रासः, लोकेति यमकं च ।

१ अत्राप्यनुप्रासः, वक्त्रसरोजेत्युपमा, खल्वित्युत्प्रेक्षा च ।
२ अत्र खल्वित्युत्प्रेक्षा ।

अन्यस्यां चुम्बनसामग्र्यां सत्यामेकपङ्क्तिनिविष्टानामन्येषां तत्र विचरतां वा । ईक्षणस्य दर्शनस्य ईक्षणानां नेत्राणां वा वञ्चनार्थं प्रतारणार्थमनीक्षणार्थं क्षणोऽवसरः प्रतीक्षितो विलम्बेन गवेषितः । पानपक्षे—पदे चरणे निरलाङ्गुलिभ्यः पतद्वारि यस्मिन्नेवंभूते । पादप्रक्षालनपक्षे—पतद्वारिणिपदे मन्दपाणिनेति योज्यम् । अन्यनिरीक्षणावसरं प्रतीक्ष्य तन्मुखं चुचुम्बेति भावः ॥ ५८ ॥

युवानमालोक्य विदग्धशीलया
स्वपाणिपाथोरुहनालनिर्मितः ।
श्लथोऽपि सख्यां परिधिः कलानिधौ
दधावहो तं प्रति गाढबन्धताम् ॥ ५९ ॥

युवानमिति ॥ विदग्धशीलया चतुरया कयाचित्सुन्दर्या युवानं कंचित्तरुणमालोक्य कलानां सकलविद्याचातुर्याणां निधौ स्थानभूतायां स्वाशयज्ञायां प्रियसख्याम् । अथ च—सखीरूपे चन्द्रे स्वपाणिभ्यामेव पाथोरुहनालाभ्यां कमलनालाभ्यां निर्मितो रचितः कण्ठाश्लेषरूपः परिधिः श्लथोऽपि शिथिलबन्धोऽपि तं नेत्रलक्ष्यं युवानं प्रति लक्ष्यीकृत्य गाढबन्धतां दृढबन्धनत्वं दधौ बभार । अहो आश्चर्ये । कलानिधौ कलायास्तादृश्याश्चेष्टाया निधौ निधानकर्म्मणि तथा कलानां निधौ चन्द्रे च परिधिः परिधानं च परिवेषो युक्तः । श्लथस्य गाढत्वविरोधात्सख्यां चन्द्रे वा कृतस्यालिङ्गनस्य परिधेश्च बन्धनस्वरूपत्वादाश्चर्यम् । मदालिङ्गनेच्छुरियं स्वाशयज्ञापनाय सखीमालिङ्गितवती मामेवालिलिङ्गेति तदाशयमज्ञासीदिति भावः ॥ ५९ ॥

नतभ्रुवः स्वच्छनखानुबिम्बन-
च्छलेन कोऽपि स्फुटकम्पकण्टकः ।
पयो ददत्याश्चरणे भृशं क्षतः
स्मरस्य बाणैः शरणे न्यविक्षत ॥ ६० ॥

नतेति ॥ स्मरस्य बाणैर्भृशं क्षतो नितरां पीडितः । अत एव स्फुटः प्रकटः सात्त्विकः कम्पः कण्टका रोमाञ्चाश्च यस्य स कोऽपि कामी स्वच्छनखेषु तदीयनिर्मलनखेष्वनुबिम्बनच्छलेन प्रतिबिम्बव्याजेन पयो दुग्धं जलं वा परिवेषयन्त्याः पाययमानायाः कस्याश्चिन्नतभ्रुवश्चरणे एव शरणे रक्षितृणी न्यविक्षत प्राविशत् । कामपीडाशान्त्यर्थं चिरं चरणावलोकनव्याजेन प्रार्थनप्रणतिसंज्ञामकार्षीदिति भावः । भीतः सकम्पो बाणैः सशल्यः सन् कंचिच्छरणं विशति, क्षत इवेति लुप्तोत्प्रेक्षा वा । 'चरणोऽस्त्रियाम्' इत्यमरोक्तेश्चरणे द्वितीयाद्विवचनान्तम् । 'चरणौ' इति च पाठः । 'शरणम्' इति पाठे चरणद्वयरूपं रक्षितारमिति व्याख्येयम् । न्यविक्षत, 'नेर्विशः १।३।१७' इति तङ् ॥ ६० ॥

मुखं यदस्मायि विभुज्य सुभ्रुवा
ह्रियं यदालम्ब्य नतास्यमासितम् ।
अवादि वा यन्मृदु गद्गदं युवा
तदेव जग्राह तदाप्तिलग्नकम् ॥ ६१ ॥

मुखमिति ॥ तयैवान्यया वा सुभ्रुवा मुखं विभुज्य वक्रीकृत्य यदस्मायीषद्धासि । तथा—ह्रियमालम्ब्य लज्जामाश्रित्य नतास्यं नम्रमुखं यथातथा यदासितं स्थितम् । मृदु मञ्जुलं गद्गदमस्पष्टवर्णं यथा तथा यदवादि । युवा तदेव त्रयं तस्या आप्तिस्तस्या लग्नकम् । प्रातिनिश्चायकमित्यर्थः । जग्राह । ज्ञातवानित्यर्थः । स्मितायनुभाववशादियं मया लब्धैवेति निश्चिकायेति भावः । वा समुच्चये ॥ ६१ ॥

विलोक्य यूना व्यजनं विधुन्वती-
मवाप्तसत्त्वेन भृशं प्रसिष्विदे ।
उदस्तकण्ठेन मृषोष्मनाटिना
विजित्य लज्जा ददृशे तदाननम् ॥ ६२ ॥

विलोक्येति ॥ यूना व्यजनं विधुन्वतीं चालयन्तीं सुन्दरीमकस्माद्विलोक्य तद्दर्शनादेवाप्तसत्त्वेन प्राप्तसात्त्विकभावेन सता भृशं प्रसिष्विदे । सात्त्विकः स्वेदः प्राप्त इत्यर्थः । आनन्दोद्रिक्तो मनोविकारः सत्त्वम् । तमेव प्रस्वेदं निह्नोतुं मृषा अलीकमूष्माणं प्रस्वेदनिमित्तं संतापं नाटयति एवंशीलेनाभिनयता स्वेदापाकरणव्याजेनोदस्तकण्ठेनोर्ध्वीकृतमुखेन सता लज्जां विजित्य परित्यज्य तदाननं तस्या मुखं ददृशे । स्वकामपीडाज्ञापनार्थं

---

१ अत्र मन्दपाणिनेत्यादौ परिकरः, स्वभावोक्तिश्च । २ अत्र पाणिपाथोरुहेत्युपमा, कलानिधाविति परिधिरिति च श्लेषः ।

१ छलेनेत्यपह्नुतिः, न्यविक्षतेवेति प्रतीतिरुत्प्रेक्षा व्यज्यते । स्मरस्य बाणैरिति चरणापेक्षया प्रसूनानां तिरस्कारप्रत्यायनाद् व्यतिरेकध्वनिश्च । २ अत्र स्मयनादेराप्तिलग्नकत्वेनोक्ते रूपकम् ।

तयापश्यदिति भावः । प्रसिष्विदे, पोपदेशत्वात्पत्वम् । 'प्रसिस्विदे' इति पाठश्चिन्त्यः ॥ ६२ ॥

स तत्कुचस्पृष्टकचेष्टिदोर्लता-
चलद्दलाभव्यजनानिलाकुलः ।
अवाप नानानलजालशृङ्खला-
निबद्धनीडोद्भवविभ्रमं युवा ॥ ६३ ॥

स इति ॥ स पूर्वोक्तो युवा व्यजनं चालयन्त्यास्तस्याः पूर्वोक्तायाः स्त्रियाः कुचयोः स्पृष्टकाल्यमालिङ्गनं चेष्टते करोति एवंशीला दोर्लता बाहुवल्ली तस्याः सम्बन्धि चलद्दलाभं चपलपर्णतुल्यं व्यजनं तालवृन्तं तस्यानिलेन कम्पनसंजातवायुना आकुलो विवशीकृतः स्तनस्पर्शिभुजचालितव्यजनविलोकनमात्रसंजातानुरागतरलः सन् नानानलानामनेकशरकाण्डानां जालस्य सङ्घस्य नलनालानां नलदण्डानां वा या शृङ्खला निर्बन्धनहेतुत्वात्तेषां परस्परग्रथननिर्मितः पञ्जरस्तया नितरां बद्धः सङ्कुचितप्रचारीकृतो यो नीडोद्भवः पक्षी तस्येव विभ्रमः पञ्जरमध्य एव यद्विशिष्टं भ्रमणम् । अथ च—तस्य विलाससाम्यमवाप । जनसंमर्देऽप्यनुरागातिशयाद्व्यजनचालनचलद्भुजान्तर्वर्तितत्कुचयोः परम्परयापि संस्पर्शे सांसर्गिकप्रीत्या साक्षादिव तत्कुचस्पृष्टकालिङ्गनमनुभवञ्जनशङ्कया यथेष्टं चेष्टितुमशक्तः कामातुरः पञ्जरबद्धपक्षिनिर्बन्धमिवानुबभूवेति भावः । लतायाश्चञ्चलदलत्वं युक्तम् । व्यजनचालनव्याजाचलवो भुजस्यापि स्तनसंस्पर्शे स्पृष्टकालिङ्गनत्वं युक्तम् । 'नलजाल-' इति पाठः । 'गलनाल-' इति पाठे नानाविधाः कण्ठनालसम्बन्धिन्यः कण्ठबन्धनकारिण्यः शृङ्खला इत्यर्थः ॥ ६३ ॥

अवच्छटा कापि कटाक्षणस्य सा
तथैव भङ्गी वचनस्य काचन ।
यथा युवभ्यामनुनायने मिथः
कृशोऽपि दूतस्य न शेषितः श्रमः ॥ ६४ ॥

अवेति ॥ सा कापि वर्णयितुमशक्या भावोल्लसनचतुरा कटाक्षणस्य नेत्रप्रान्तवक्रवीक्षणस्यावच्छटा भाङ्गीपरम्परा वा । तथैव तदुचितैव सा काचन कापि वक्रोक्त्यादिरूपा वचनस्य भङ्गी रचनाप्रभूदिति शेषः । सा का—यया कटाक्षावच्छटया वचनभङ्ग्या च कर्त्र्या युवभ्यां मिथः परस्परमनुनायनेऽन्योन्यप्रार्थने विषये कृशोऽप्यल्पोऽपि दूतस्य श्रमः प्रयासो न शेषितोऽवशिष्टीकृतः । यया कृत्वा युवभ्यां न शेषित इति वा । आत्मनैव चेष्टाविशेषरचनाद्वारा त्वं किमेष्यसि, अहं वैष्यामीत्यादिप्रश्ननिश्चयाद्दूतस्यानवसर इति भावः । यूनोर्वैदग्ध्यं सूचितम् । 'युवतिश्च युवा च' इत्यत्र'पुमान् स्त्रिया १ । २ । ६७ ।' इत्येकशेषः । कर्तरि तृतीया चतुर्थी वा । शेषितः, 'तत्करोति तदाचष्टे' इति ण्यन्तान्निष्ठा ॥ ६४ ॥

पपौ न कोऽपि क्षममास्यमेलितं
जलस्य गण्डूषमुदीतसंमदः ।
चुचुम्ब तत्र प्रतिबिम्बितं मुखं
पुरः स्फुरन्त्याः स्मरकार्मुकभ्रुवः ॥ ६५ ॥

पपाविति॥कश्चित्कोऽपि युवा आस्येन मुखेन मेलितं योजितं करपुटे पानार्थं धृतं जलस्य गण्डूषं पेयं जलं क्षणमात्रं न पपौ । यतः उदीतसंमद उत्पन्नानुरागः । तथापि किमिति न पपावित्यत आह—तत्राधरसंपृक्ते करपुटे धृते प्रतिबिम्बितं पुरः स्फुरन्त्या विलसन्त्याः स्मरकार्मुकवद्भ्रुवौ यस्यास्तस्या मुखं चुचुम्ब उदीतसंमदः सन्वा चुम्बितवान् । जले पीते प्रतिबिम्बासंभवात्पानार्थं गृहीते जले तस्या मुखप्रतिबिम्बे प्रतिबिम्बितनिजमुखचुचुम्बनदर्शनकौतूहलवाशात्तस्या यावदवस्थानं तावन्न पपौ। गतायां तु प्रतिबिम्बाभावात्पपाविति भावः।पङ्क्तिस्थान्वेक्षणवञ्चनं यावन्न पपौ, तैरीक्षिते तु जलं पपौ । पुरः स्फुरन्त्या जलं ददत्या एव मुखमिति वा ॥ ६५ ॥

हरिन्मणेर्भोजनभाजनेऽर्पि-
तं पुरःस्थापिते प्रकोपं किल वारयात्रिकाः ।
भृतं न शाकैः प्रवितीर्णमस्ति व-
स्त्विषदमेवं हरितेति बोधिताः ॥ ६६ ॥

हरिदिति॥ हरिन्मणेर्नीलमणेर्भोजनार्थं भाजने पात्रेऽर्पिते पुरःस्थापिते सति पत्रावलीभ्रान्त्या शाकपूर्णत्वभ्रान्त्या वा किल स्फुटं प्रकोपं नितरां रोषं प्राप्ता वारयात्रिका वरपक्षीया राजानो भीमसंबन्धिभिर्लोकैरिति बोधिताः । इति किम्—इदं वो युष्मभ्यं प्रवितीर्णं

१ अत्रागन्तुकेन स्वेदेन सात्त्विकस्वेदगूहनोक्तेर्मीलितम् । उदस्तेरयादौ परिकरः; नृपेष्मनादित्वरूपेणच्छलेन दर्शनक्रियानिष्पादनोक्त्या पर्यायोक्तं च ।२ अत्रानुप्रासः, अवापेत्युत्प्रेक्षा व्यङ्ग्या, परिकरश्च ।

१ अत्रानुप्रासः।२ अत्रानुप्रासः, कार्मुकभ्रुवइत्युपमा च।

पात्रं शाकैः पलाशादिवृक्षपलाशैर्वास्तुकादिश्यामव्यञ्जनैरेव वा न भृतं तद्राचितं पूर्णं वा । किंत्वोदनादियुक्तमपि हरिता नीलया त्विषा भृतम्, न पलावली, नापि शाकेत्येवं ज्ञापिताः ततस्तुष्टा इत्यर्थः । वारयात्रिकाः वरयात्रा प्रयोजनमेषाम्, 'प्रयोजनम् ५।१।१५' इति ठक् ॥६६॥

ध्रुवं विनीतः स्मितपूर्ववाग्युवा
किमप्यपृच्छन्नविलोकयन्मुखम् ।
स्थितां पुरः स्फाटिककुट्टिमे वधूं
तदङ्घ्रियुग्मावनिमध्यबद्धदृक् ॥६७॥

ध्रुवमिति ॥ विनीतो ध्रुवमाचारवानिव स्मितपूर्ववाग्मुखं नविलोकयन्नपश्यन् युवा तस्या अङ्घ्रियुग्मस्यावनिमध्ये भूमिभागे बद्धदृग्योजितनेत्रः सन् पुरः स्फटिकनिबद्धभूमौ स्थितां वधूं किमप्यपृच्छत् । अत्र स्फटिककुट्टिमप्रतिविम्बततद्भगदर्शनसंजातस्मितः पुनरपि भगदर्शनार्थमेव गोष्ठीमिषेण तां स्थिरीचकारेति भावः अधोदर्शनार्थमेव मुखं न विलोकितम्। अयंश्लोकः क्वचित् ॥ ६७ ॥

अमी लसद्बाष्पमखण्डिताखिलं
वियुक्तमन्योन्यमसुक्तमार्दवम् ।
रसोत्तरं गौरमपीवरं रसा-
दभुञ्जतामोदनमोदनं जनाः ॥ ६८ ॥

अमी इति ॥ अमी जना रसात्स्वादविशेषानुरागादोदनमभुञ्जत । किंभूतम्—लसद्बाष्पं विद्यमानोष्माणमीषदुष्णम् । तथा—अखण्डितश्चासावखिलः संपूर्णश्च तम् । पाकेऽप्यविच्छिन्नतण्डुलमिति यावत् । अभग्नमखिलं स्वरूपं यस्येति वा । तथा—पाकसमयेः नवनीतक्षेपादियुक्तमसंलग्नसिक्थम् । तथा—असुक्तमत्यक्तं मार्दवं येन सुजातिशालिवीजत्वादतिकोमलम् । तथा—रसोत्तरं स्वादुबहुलम् । तथा—गौरं चन्द्रधवलम् । तथा—अपीवरं जीरकादिसुजातिशालिवीजत्वात्सूक्ष्ममदीर्घतण्डुलम् । अत एव—आमोदनं हर्षहेतुम् । परिमलवाहुल्याद्वा आमोदनम् । अणुत्वे चागलद्बाष्पत्वम्, मार्दवत्यागेऽन्योन्यं वियुक्तत्वम्, अन्तःकरणमार्दवे परस्परविरोध इति च विरोधाभासः ॥ ६८ ॥

वयोवशस्तोकविकस्वरस्तनीं
तिरस्तिरश्चुम्बति सुन्दरे दृशा ।
स्वयं किल स्रस्तमुरःस्थमम्बरं
गुरुस्तनी ह्रीणतरा परादधे ॥ ६९ ॥

वय इति ॥ सुन्दरे जन्यजने दृशा वयोवशेन निर्गच्छदागच्छच्छैशवतारुण्यपारतन्त्र्येण स्तोकमीषद्विकस्वरामुकुलायितमण्डली स्तनौ यस्यास्तां वयःसंधौ वर्तमानां मुग्धां तिरस्तिरो वक्रं यथा तथा दृशा चुम्बति पश्यति सति सानुरागकटाक्षमात्रेणापि चुम्बनजन्यं सुखमनुभवति । गुरुस्तनी तारुण्यभरपीवरदृढतरकुचा अपरान्या स्त्री तदनुरागाद्ध्रीणतराऽतिसलज्जा सती यथास्थानस्थितमपि स्वयमात्मनैव स्रस्तं स्थानच्युतं जातमिवोरःस्थमम्बरं हृदयावरणवस्त्रं बलाद्विगलितं कृत्वा पुनस्तदाच्छादनायाददेऽङ्गीचकार । मुग्धां प्रत्यनक्षरं हृदयावरणसंज्ञानं चकार । विदग्धस्त्रीरीतिरीदृशी । अथ च—त्वमिमामल्पस्तनीं त्वत्संभोगासहनां किं पश्यसि किंतु पीनघनस्तनीं त्वत्संभोगक्षमां मां पश्येति स्वाशयज्ञापनायादृष्टमपि पीनघनस्तनयुगमदर्शयदिति भावः । ह्रीणतरा, 'तसिलादिष्वाकृत्वसुचः ६।३।३५'। इति पुंवद्भावः ॥ ६९ ॥

यदादिहेतुः सुरभिः समुद्भवे
भवेद्यदाज्यं सुरभिध्रुवं ततः ।
वधूभिरेभ्यः प्रवितीर्य पायसं
तदोघकुल्यातटसैकतं कृतम् ॥ ७० ॥

यदिति॥सुरभिः कामधेनुर्गौर्वा । अथ च—सौरभ्ययुक्तः पदार्थः । समुद्भव उत्पत्तिविषये यस्यादिहेतुर्दुग्धादिद्वारा परम्परया मूलकारणं ततो ध्रुवं तस्मादिव सौरभ्यधर्मयुक्तकारणादिव यदाज्यं सुरभि भवेत्स्यात् 'कारणगुणा हि कार्ये समवयन्ति' इति सुरभि भवितुमर्हति । तदाज्यमेभ्यो जन्यजनेभ्यो वधूभिः प्रवितीर्य परिवेष्य पायसं क्षीरपक्वतण्डुलमन्नं तदोघकुल्यानां घृत-

१अत्र कल्पितसाम्यान्मरकतपात्रेपत्रपात्रभ्रमाद् भ्रान्तिमान् ।२अत्र यूनः स्त्रीसम्भाषणे पाददर्शनेनाननदर्शनादितिरस्करणरूपधर्मसंयोगाद्विनीतत्वमुत्प्रेक्षितमित्युत्प्रेक्षा ।

१ अत्र विरोधाभास इति दर्शितमेव व्याख्याकृता । किंत्वपरभावाद् व्यङ्ग्योऽयम् अनुप्रासः, मोदेति यमकं चेति शब्दालङ्कारद्वयम् ।२ अत्र स्तनयोर्विकस्वरत्वोक्त्या कुड्मलत्वं व्यंग्यम्, किलेत्युत्प्रेक्षा, ह्रीणतरेति परिकरश्च ।

प्रवाहरूपाणां कृत्रिमाल्पसरितां तटयोः सैकतं कृतम् । पूर्वं पायसं परिवेष्य तस्योपरि धाराप्रवाहरूपे घृते क्षिप्ते द्विधाभूय घृतमभितः स्थितं पायसं शुभ्रत्वाद् घृतकुल्यासैकतमिव शोभते स्मेति भावः । आज्यसौरभ्यबाहुल्यमुक्तम् । यदाज्यमित्येव पाठः ॥ ७० ॥

यदप्यपीता वसुधालयैः सुधा
तदप्यदः स्वादु ततोऽनुमीयते ।
अपि क्रतूपर्बुधदग्धगन्धिने
स्पृहां यदस्मै दधते सुधान्धसः ॥७१॥

यदपीति ॥ यदपि यद्यपि वसुधालयैर्मनुष्यैः सुधाऽमृतं न पीता तदपि तथापि सुधारसाज्ञानेऽपि अदः आज्यं ततोऽमृतादपि सकाशात्स्वादु मिष्टमित्यनुमीयते । यद्यस्मात्सुधान्धसोऽमृताशा देवा अपि क्रतावुपर्बुधेनाग्निना दग्धगन्धिने विनाशितसौरभाय अप्यस्मै घृताय स्पृहामिच्छां दधते । यागे हि हुतं घृतं देवा भुञ्जते । यद्यमृतादधिकरसं नाभविष्यत्, तर्ह्यमृतादा अपि देवा यागानलविकृतगन्धमप्येतत्सानुरागं कथमभ्यवाहरिष्यन्। अभ्यवहरन्ति तावत् । तस्मादमृतादपि विकृतगन्धमपि घृतमधिकरसम्, किमुत स्पष्टसौरभमिमिति भावः-मनुष्यैरपि सुधा यस्मान्न पीता, अमृतान्धसोऽपि विशिष्य। अस्मै यस्मात्स्पृहयन्ति, तस्मादपि हेतोरदो घृतं सुधायाः स्वादुतरमनुमीयते । एकेऽल्परसत्वाद्बुद्धिपर्वममृतं नास्वादयन्त्येव, अन्ये च नित्यप्राप्तामृता अपि यस्माद्व्राय स्पृहयन्ति, तस्माद्वितुद्वयादमृतादप्यधिकमेतदप्यनुमीयत इति वा । क्रतूपर्बुधेन दग्धश्चासौ गन्धश्च सोऽस्त्यस्येति कर्मधारयादिनिः। 'स्पृहेरीप्सितः १।४।३६' इति संप्रदानत्वम् ॥ ७१ ॥

अबोधि नो ह्रीनिभृतं मदिङ्गितं
प्रतीत्य वा नादृतवत्यसाविति ।
लुनाति यूनः स्म धियं कियद्गता
निवृत्य बालादरदर्शनैपुणा ॥ ७२ ॥

अबोधीति ॥ असौ बाला ह्रीनिभृतं बालत्वाल्लज्जावशादविस्पष्टमितीव हेतोर्भावबोधकं भ्रूविक्षेपादि मम चेष्टितं नो अबोध्यज्ञासीत्किम् । वाऽथवा प्रतीत्य ज्ञात्वाप्यनुरागान्नादृतवतीत्येवंरूपां पुनःपुनर्जायमानां यूनो धियं संशयबुद्धिं कियन्तं मार्गं गता अपि बाला निवृत्य परावृत्यादरदर्शनं सादरकटाक्षविलोकनं तद्रूपेणैपुणा लुनाति स्म चिच्छेद । तदिङ्गितज्ञानपुरःसरं स्वानुरागं प्रकटीचकारेत्यर्थः । तादृग्विलोकनान्मदिङ्गितं ज्ञात्वा इयं मय्यनुरक्तेति युवा निश्चिकायेति भावः । कियद्गतेति,' द्वितीयाश्रितातीतपतितगतात्यास्तप्राप्तापन्नैः २ । १ । २४' इति समासः।कियद्यथा तथा गतेति क्रियाविशेषणं वा॥७२

न राजिकाराद्धमभोजि तत्र कै-
र्मुखेन सीत्कारकृता दधद्दधि ।
धुतोत्तमाङ्गैः कटुभावपाटवा-
दकाण्डकण्डूयितमूर्धतालुभिः ॥ ७३ ॥

नेति ॥ युग्मम् । तत्र भीमगृहे भोजनावसरे वा राजिकाभी राद्धं साधितं दधि दधद्दधिमिश्रितं व्यञ्जनं तैक्ष्ण्यातिशयात्सीत्कारकृता मुखेन कैर्जन्यजनैर्नाभोजि अपि तु सर्वैरपि तु भुक्तम् । किंभूतैः कैः—कटुभावपाटवात्कटुत्वातिशयाद्धुतोत्तमाङ्गैः कम्पितशिरोभिः । तथा—भोजनकाले शिरःकण्डूयनस्य स्मार्तवचनैर्निषिद्धत्वादकाण्डे काले कण्डूयिते मूर्धतालुनी यैस्तैः । मुखस्यैव भोजनसाधनत्वे सिद्धेऽपि सीत्कारादिविशिष्टत्वद्योतनार्थं मुखेनेत्युक्तम् । राजिकाराद्धभोजिनामियं जातिः ॥ ७३ ॥

वियोगिदाहाय कटूभवत्त्विषः
स्तुषारभानोरिव खण्डमाहृतम् ।
सितं मृदु प्रागथ दाहदायि त-
त्खलः सुहृत्पूर्वमिवाहितस्ततः ॥ ७४ ॥

वियोगीति ॥ वियोगिनां स्त्रीपुंसानां पीडार्थं कटूभवन्त्यस्त्विषो दीप्तयो यस्यास्तस्मादीप्तेस्तुषारभानोश्चन्द्रस्याहृतं खण्डमिव सितं श्वेतम् । तथा प्राक्प्रथमं मृदु प्रथमस्पर्शसमये कोमलम् अथ पश्चान्मुखप्रक्षेपानन्तरं तालुजिह्वादेस्तैक्ष्ण्यातिशयाद्दाहदायि दाहकारि आनीतम् । तद्राजिकाराद्धमभोजीति पूर्वेणान्वयः । तुषारभानोः सका-

१ अत्रानुप्रासः, सुरभिरिति यमकं च । भुर्वीमित्युत्प्रेक्षा तत इत्यनुमानं च । २ सुधापानाभावे सुधास्वादज्ञानास्याप्यभावः स्वाभाविकः, अथापि सुधापानास्वादतोऽपि तत्तदास्वादावधारणादनुमानम्। सुधेति यमकं च शब्दालङ्कारः ।

१ अत्रानुप्रासःनिश्चयान्तः ससन्देहः। २ अत्रानुप्रासः। परिकरश्च ।

शादाहृतमिति वा । क इव—खल इव । किंभूतः—पूर्वं सुहृदापातरमणीयः, ततोऽनन्तरमहितो वैरी । 'रायी' इति कान्यकुब्जभाषायाम् ॥ ७४ ॥

नवौ युवानौ निजभावगोपिना-
 वभूमिषु प्राग्विहितभ्रमिक्रमः ।
दृशोर्विधत्तः स्म यदृच्छया किल
 त्रिभागमन्योन्यमुखे पुनः पुनः ॥७५॥

नवाविति ॥ वयःसंधौ वर्तमानौ नवावप्रगल्भावत एव निजभावगोपिनौ स्वानुरागापह्नवपरौ कौचिद्युवानावभूमिषु लोकव्यवहारायोग्येषु स्वायोग्येषु वानुद्देश्येषु वा वस्तुषु प्राक्पूर्वं विहितः कृतो भ्रमेर्निरर्थकभ्रमणस्य क्रमः परम्परा यत्र येन वा एवंभूतं दृशोर्नेत्रयोस्त्रिभागं तृतीयांशरूपं कटाक्षमन्योन्यमुखे पुनः पुनर्विधत्तः स्म चक्रतुः । यदृच्छया किल । अन्यविलोकनवत्स्वेच्छामात्रेण क्रमप्राप्तमन्योन्यमुखविलोकनं कुरुतः, नत्वनुरागेणेति लोकप्रतीतिर्यथा स्यादेवं वस्त्वन्तरविलोकनव्याजेनान्योन्यमुखं पुनः पुनः कटाक्षैर्वीक्षांचक्राते इति भावः। त्रिभागमिति पूर्ववत्समर्थनीयम् ॥ ७५ ॥

व्यधुस्तमां ते मृगमांससाधितं
 रसादशित्वा मृदु तेमनं मनः ।
निशाधवोत्सङ्गकुरङ्गजैरदः
 पलैः सपीयूषजलैः किमश्रपि ॥ ७६ ॥

व्यधुरिति ॥ ते जन्यजना मृगमांसैः साधितं राद्धं संस्कृतं मृदु तेमनाख्यं व्यञ्जनविशेषं रसात्प्रीत्या भुक्त्वेति मनो व्यधुस्तमां नितरां चक्रुः । इति किम्—अदस्तेमनं निशाधवश्चन्द्रस्तस्योत्सङ्गे वर्तमानः कुरङ्गो हरिणस्तस्माज्जातैः पीयूषजलैरमृतरूपैर्जलैः सह वर्तमानैः पलैर्मांसैरश्रपि किमपाचि किम् । रसातिशयान्मनस्येवं तर्कितवन्त इत्यर्थः । तेमनस्यातितरां स्वादुत्वमुक्तम् । अश्रपि, 'श्रा पाके' इत्यस्मात्,कर्मणि चिणि घटादित्वान्मित्वाद्रस्वः॥ ७६ ॥

१ खण्डमिवेति खल इवेति चोपमा । २ किलेत्युत्प्रेक्षा ।यदृच्छयेत्यादिना भावगोपनाक्रियाया अपह्नवनोक्तेर्विवृतोक्तिभेदः । 'विवृतोक्तिः श्लिष्टगुप्तं कविनाऽऽविष्कृतं यदि ।' इति तल्लक्षणात् । ३ अत्रानुप्रासः, किमित्युत्प्रेक्षा । अशित्वेत्यशनकरणहेतुनाभिधीयमानत्वात् काव्यलिङ्गं पदार्थहेतुकम् ।

परस्पराकूतजदूतकृत्ययो-
 रनङ्गमाराद्धुमपि क्षणं प्रति ।
निमेषणेनैव कियच्चिरायुषा
 जनेषु यूनोरुदपादि निर्णयः ॥ ७७ ॥

परस्परेति ॥ परस्परस्याकूताच्चेष्टाविशेषादेव जातं दूतकृत्यं संभोगसंमतिर्ययोः कयोश्चिद्यूनोः स्त्रीपुंसयोरनङ्गमाराद्धुं सुरतं कर्तुं यः क्षणः समयस्तं प्रत्युद्दिश्य सदा क्रियमाणनिमेषापेक्षया कियच्चिरायुषा किंचिदधिककालमायुर्वर्तमानता यस्यैवंभूतेन कियच्चिरकालस्थायिना निमेषणेनैवाक्षिपक्ष्मसंकोचेनैव कर्तृणा करणेन वा जनेषु मध्ये बहुषु जनेषु वर्तमानेषु सत्स्वपि निर्णयो निश्चय उदपादि कृतः जातो वा कदा संभोग इतीङ्गितेन पृष्टे सति नेत्रे निमील्य कंचित्कालं स्थित्वा जने निद्राणे सत्यागन्तव्यमिति रात्रिसंकेतसमय इति निरणायीति भावः । उदपादि, 'चिण् ते पदः ३।१।६' इति कर्तरि कर्मणि वा चिण् ॥ ७७ ॥

अहर्निशा वेति रताय पृच्छति
 क्रमोष्णशीतान्नकरार्पणाद्विटे ।
ह्रिया विदग्धा किल तन्निषेधिनी
 न्यधत्त संध्यामधुरेऽधरेऽङ्गुलिम् ॥७८॥

अहरिति ॥ विटे कामुके रताय आवयोः संभोगं कर्तुमहः, निशा वेति उष्णकरघर्मोपलक्षितं दिनं वा, शीतांशुकरशैत्योपलक्षिता रात्रिर्वा समय इति क्रमेण उष्णशीतयोरन्नयोरुपरि करार्पणादेव चेष्टितात्कामपि पृच्छति सति विदग्धा चतुरा तत्प्रश्नाशयं ज्ञात्वा ह्रिया उपलक्षिता अनक्षरमिङ्गितेनैव तन्निषेधिनी तयोर्दिननिशयोर्निषेधं कुर्वाणा संध्यावन्मधुरे रमणीयेऽधरे स्वीयोष्ठे अङ्गुलिं न्यधत्तास्थापत् । अनभिमतमर्थं निषेधन्त्यः स्त्रियो मातः किमित्येवं जातमित्याद्यभिधायाधरेऽङ्गुलिं स्थापयन्तीति जातिः । किल प्रसिद्धम्-लोके चैवमेव प्रतीतिर्जाता, सा तु तन्निषेधव्याजेन दिने रात्रौ चानवसरः, सन्ध्यैव रतसमय इत्यकथयदिति भावः । यद्वा—दिने सूर्यालोकात्, रात्रौ चन्द्रालोकात्, तद्द्वयमनुचितम्, किंतु सदान्धकारमलिना सन्ध्यैव रन्तुं योग्येति भावः ॥ ७८ ॥

१ अत्रविवृतोक्तिः । २ अत्र विवृतोक्तिः ।

क्रमेण कूरं स्पृशतोऽमणः पदं
सितां च शीतां चतुरेण वीक्षिता।
दधौ विदग्धारुणितेऽधरेऽङ्गुली-
मनौचितीचिन्तनविस्मिता किल ७९॥

क्रमेणेति ॥ अयं श्लोकः क्षेपकः । कूरं भक्तम्। सितां शर्कराम्। किमिदमनेनानुचितं क्रियत इत्यनौचितीचिन्तनेन विस्मिता किल विस्मितेव । अरुणिते। यावकेनेत्यर्थः। भावः स एव ॥ ७९ ॥

कियत्त्यजन्नोदनमानयन्कियत्
करस्य पप्रच्छ गतागतेन याम्।
अहं किमेष्यामि किमेष्यसीति सा
व्यधत्त नम्रं किल लज्जयाऽऽननम् ८०

कियदिति॥कृतसुरतकालनिर्णयः स एव युवा कियदल्पमोदनं पुरःस्थां तां वीक्ष्य त्यजन् पात्रे स्थापयन्, कियदोदनं स्वं प्रति पुनरानयन्सन्, करस्य भक्तपुरस्त्यागवशात्पुरोगमनेन स्वं प्रति भक्तानयनवशादागमनेन च, क्रमेण त्वां प्रत्यहं किमेष्यामि, त्वं वा मां प्रति किमेष्यसीति या पप्रच्छ । सा आननं नम्रं व्यधत्त लज्जया किल । किलेत्यलीके । लोकप्रतीतौ अनया लज्जया मुखं नम्रीकृतमिति । तत्त्वतस्तु मुखनम्रीकरणेनाहमागमिष्यामीति स्वं दर्शितवतीति भावः। तं वीक्ष्य मुखं नम्रीकृत्यस्वचरणौ पश्यन्ती त्वमेवागत्य मच्चरणयोः पतेति वा भावः। भोजनसमये भोक्ता कियन्तमोदनमग्रे विभज्य स्थापयति, कियन्तं दध्यादिना सह भोक्तुं गृह्णातीति जातिः। कियन्तं त्यजन्बहुत्वात्पुनर्ददानः, कियन्तं च पुनः पात्रे प्रत्यानयन्निति वा ॥ ८० ॥

यथाऽऽमिषे जग्मुरनामिषभ्रमं
निरामिषे चामिषमोहमूहिरे।
तथा विग्दधैः परिकर्मनिर्मितं
विचित्रमेते परिहस्य भोजिताः ॥८१॥

यथेति ॥ वारयात्रिका यथा येन प्रकारेणाऽऽमिषे मांसेऽप्यमांसस्य माषाद्यन्नस्य भ्रमं जग्मुः, यथा येन प्रकारेण निरामिषे मांसलेशवर्जितेऽपि तेमनादौ रूपस्वादादिभिः आमिषमोहं मांसभ्रममूहिरे तर्कितवन्तः, तथा तेन प्रकारेण विदग्धैः नितरां कुशलैः सूपकारैः कर्तृभिरेते वारयात्रिकाः परिकर्मभिः साधनद्रव्यैर्निर्मितं विचित्रमन्नं परिहस्य विहस्य पूर्वोक्तभ्रमनिमित्तपरिहासं भोजिताः ॥ ८१ ॥

नखेन कृत्वाऽधरसन्निभां निभाद्
युवा मृदुव्यञ्जनमांसफालिकाम्।
ददंश दन्तैः प्रशशंस तद्रसं
विहस्य पश्यन्परिवेषिकाधरम् ॥ ८२ ॥

नखेनेति ॥ कश्चिद्युवा मृद्वीं व्यञ्जनमांसस्य फालिकां खण्डं नखेन कृत्वा निभाद्व्याजादधरसंनिभामोष्ठाकारां द्विधा कृत्वा, पूर्वमधरसदृशीमपि ( नखेन द्विधा कृत्वा ) मध्ये नखेन रेखाकरणान्नितरां मध्यस्थितरेखाधरसदृशीं वा कृत्वा, दन्तैर्ददंश। परिवेषिकाधरं मांसव्यञ्जनपायिन्या अधरं पश्यन्विहस्य एतादृशी स्वादुतरा मांसफालिका कदापि नोपभुक्तेत्यादिप्रकारैस्तस्याः फालिकाया रसं स्वादुतरं प्रशशंसास्तावीच । स्वादुतरं त्वदीयाधरमेव दशामीति हसंस्तस्मिन्मांसखण्डे तदधरतामारोपयन्स्वाशयं तामज्ञापयदिति भावः ॥ ८२ ॥

अनेकसंयोजनया तथाकृते-
र्निकृत्य निष्पिष्य च तादृगर्जनात्।
अमी कृताकालिकवस्तुविस्मयं
जना बहु व्यञ्जनमभ्यवाहरन् ॥ ८३॥

अनेकेति ॥ अमी जना वारयात्रिका बहु मूलकन्दपुष्पपत्रफलादिरूपं शाकादि व्यञ्जनमभ्यवाहरन्बुभुजिरे। किंभूतम्—अनेकेषां नानाविधमरीच्यादिद्रव्याणां संयोजनया संबन्धेन तथाकृतेर्वस्त्वस्यैव ( स्येव ) गन्धरसादिकरणात्तादृग्रसादिनिर्माणात्तद्यथातथा निकृत्य नितरां कर्तित्वा निष्पिष्य चूर्णीकृत्य च आकारसाम्यादिना तादृगर्जनात्तद्वस्त्वन्तरसादृश्यसंपादनाद्रूपान्तरगन्धान्तरादिकरणाद्धेतोः कृत अकालिके असमयप्रभवे वस्तुनि विस्मय आश्चर्यं येन। क्रियाविशेषणं वा। तथा आकृते राकारादिति वा। फलानि कर्तित्वा राजिकादध्यादिसंयोगाद्रसान्तरापत्तिः, तथा रूपान्तरापत्तिश्च । गोधूमादिपिष्टशर्करासंयोगाद्रसान्तरोत्पत्तिरित्यादिविदग्ध्याद्योक्तृ-

१ अत्र किलेत्युत्प्रेक्षा, वीक्षिता दधाविति विवृतोक्तिश्च। २ अत्रानुप्रासः, विवृतोक्तिश्च।

१ अत्रानुप्रासः, यथेत्युपमा च । २ अत्राप्यनुप्रासो विवृतोक्तिश्च।

णां विस्मयः । अधिवासनाविशेषाचाकालिकत्वभ्रमो युक्तः ॥ ८३ ॥

पिपासुरस्मीति विबोधिता मुखं
निरीक्ष्य बाला सुहितेन वारिणः ।
पुनः करे कर्तुमना गलन्तिकां
हसात्सखीनां सहसा न्यवर्तत ॥ ८४

पिपासुरिति ॥ वारिणोऽम्बुना सुहितेन तृप्तेन विटेन मुखं निरीक्ष्य अहं पिपासुः पातुमिच्छुरस्मीति बोधिता विज्ञापिता बाला मुग्धवक्रोक्त्याद्यभिप्रायविशेषा प्रौढा पुनरपि करे गलन्तिकां सुवर्णभाजनं कर्तुमनाः धर्तुमनाः सती तदाशयज्ञानामतिचतुराणां सखीनां हसाद्धास्याद्धेतोः सहसा झटिति सुप्तप्रबुद्धवज्जलपायनारम्भसंभ्रमान्न्यवर्तत परावृत्ता । सहसा सस्मिता सतीति वा । कर्मान्तरपरित्यागेन सामान्येन पिपासुरस्मीति वदन् अयमेतदीयाधरं पिपासुरस्तीत्येतदाशयमियं नाजानादिति कृताद्धास्यादियमपि तदाशयं ज्ञात्वा गलन्तिकां पुनरस्थापयदिति भावः । 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २ । २ । ११' इति सुहितार्थयोगे षष्ठीसमासनिषेधादेवं वारिण इति षष्ठी ॥ ८४ ॥

युवा समादित्सुरमत्रगं घृतं
विलोक्य तत्रैणदृशोऽनुविम्बनम् ।
चकार तन्नीविनिवेशिनं करं
बभूव तच्च स्फुटकण्टकोत्करम् ॥८५ ॥

युवेति ॥ अमत्रगं पात्रस्थं घृतं समादित्सुर्ग्रहीतुकामः कश्चिद्युवा तत्र घृते एणदृशः पुरःस्थाया मृगाक्ष्याः परिवेषिकाया अनुविम्बनं प्रतिविम्बं विलोक्य करं स्वहस्तं तस्य विम्बस्य नीविषु भङ्गीनिवद्धनाभिचुम्बितविवस्त्रविच्छित्तिषु निवेशनशीलं चकार । तत्रास्थापयदित्यर्थः । तच्च तस्याः प्रतिविम्बं स्फुटाः कण्टकोत्करा यस्मिन् । सरोमाञ्चमभूदित्यर्थः । स्वप्रतिविम्बनीविग्रन्थिविमोचनार्थं नाभिनीविसविधे स्पर्शकारिणस्तत्करस्य चेष्टां दृष्ट्वा तस्य स्वसंभोगवासनां ज्ञात्वा तदानीमेतस्मिन्ननुरागाद्रोमाञ्चिताभूत्, तादृश्याश्च प्रतिविम्बितत्वात्प्रतिविम्बमपि रोमाञ्चितमभूदिति भावः । द्वयोरप्यनुरागस्तुल्यो जात इति भावः ॥ ८५ ॥

प्रलेहजस्नेहधृतानुविम्बनां
चुचुम्ब कोऽपि श्रितभोजनच्छलः ।
मुहुः परिस्पृश्य कराङ्गुलीमुखै-
स्ततो नु रक्तैः स्वमवापितैर्मुखम् ॥८६॥

प्रलेहेति ॥ कोऽपि विटो लिह्यते इति लेहः, प्रकृष्टो लेहः प्रलेहः सूरणादिद्रव्ययुक्त आर्द्रकादिसंस्कृततक्रादिनिर्मितो द्रवद्रव्यविशेषस्तस्माज्जाते स्नेहे तैलादौ धृतमनुविम्बनं यया । धृतं स्थितमनुविम्बनं यस्या वा । एवंविधां पुरस्थां सुन्दरीं श्रितं भोजनच्छलं येन एवंविधः सन् प्रतिविम्बितां तामेव कराङ्गुलीनां मुखैरग्रैर्मुहुः परिस्पृश्य स्पृष्ट्वा चुचुम्ब । कीदृशैः—स्वमुखं समवापितैः प्रापितैः । तथा—रक्तैः अरुणैः स्वभावात्, उष्णस्य तस्य स्पर्शाद्वा । ततो नु तस्मादनुरागात्किम्, अङ्गुल्यग्रे रक्तत्वादनुरागाच्चुम्बिता किमित्युत्प्रेक्षा । 'रिक्तैः' इति पाठे मुहुः परिस्पृश्य ततो नु तदनन्तरमेव रिक्तैः प्रलेहशून्यैः स्वमुखं प्रापितैः कराङ्गुलीमुखैश्चुचुम्बेत्यर्थः । प्रलेहे वटकादिनिक्षेपात्तैलादिविन्दवस्तरन्ति तत्र जातं प्रतिविम्बमङ्गुल्या स्पृशति प्रलेहचलनात्प्रतिविम्बभङ्गभयादङ्गुल्यग्रे लेहनच्छलात्परम्परया चुम्बितवानिति भावः । तां प्रति स्वानुरागमदर्शयदिति च भावः ॥ ८६ ॥

अराधि यन्मीनमृगाजपत्त्रिजैः
पलैर्मृदु स्वादु सुगन्धि तेमनम् ।
अशाकि लोकैः कुत एव जेमितुं
न तत्तु सङ्ख्यातुमपि स्म शक्यते ८७

अराधीति ॥ मीनेभ्यो मत्स्येभ्यः, चित्रकादिमृगेभ्यः, अजेभ्यश्छागेभ्यः, पत्त्रिभ्यस्तित्तिरिलावकादिभक्ष्यपक्षिभ्यश्च जातैः पलैर्मांसैर्मृदु स्वादु सुगन्धि पाकेन परिमलविशेषयुक्तं च यत्तेमनाख्यं व्यञ्जनं सूपकारैरराधि साधितम् । तद्बाहुल्याल्लोकैः संख्यातुमपि न शक्यते स्म । जेमितुं तु पुनः कुत एवाशाकि । अपि तु भोक्तुं शक्यं नाभूदेव । जेमितुम्, 'जिमु अदने' ॥ ८४ ॥

कृतार्थनाश्चाटुभिरिङ्गितैः पुरा
परासि यः किञ्चन कुञ्चितभ्रुवा ।

१ अत्रानुप्रासः। २। अत्राम्बुनोऽमृततुल्यत्वं व्यङ्ग्यम् ।

१ मिषेणेत्यपह्नुतिः, व्यतरदिति विवृतिश्च । २ अत्रोत्प्रेक्षा ।

क्षिपन्मुखे भोजनलीलयाऽङ्गुलीः
पुनः प्रसन्नाननयाऽन्वकम्पि सः ॥ ८८ ॥

कृतेति॥ किंचन किञ्चित्कुञ्चिते वक्रीकृत्योत्क्षिप्ते भ्रुवौ यया कयाचिदिङ्गितैरञ्जलिबन्धादिचेष्टितैश्चाटुभिः प्रियवचनैश्च कृता अर्थना संम्भोगप्रार्थना येन तथाविधो यो विटः पुरा पूर्वं परासि निरस्तः, प्रसन्नाननया सरसदृष्टिव्यञ्जितप्रसादमुख्या तया भोजनलीलया ग्रासमिषेण मुखेऽङ्गुलीः क्षिपन्नङ्गुलीसंस्पर्शेन तां प्रति दीनत्वं सूचयन्स पुनरन्वकम्प्यनुगृहीतः । तद्दैन्यं दृष्ट्वा सम्भोगस्तयानुमत इति भावः ॥ ८८ ॥

अकारि नीहारनिभं प्रभञ्जना-
दधूपि यच्चागुरुसारदारुभिः ।
निपीय भृङ्गारकसङ्गि तत्र तै-
रवर्णि वारि प्रतिवारमीदृशम् ॥ ८९ ॥

अकारीति ॥यद्वारि प्रभञ्जनाद्व्यजनादिवायुसंयोगाद्धेतोर्नीहारनिभं तुषारतुल्यमकारि, यच्चागुरुसारस्य कृष्णागुरोर्दारुभिरधूपि धूपितम्, भृङ्गारके सुवर्णपानपात्रे सङ्गः स्थितिर्यस्यास्तीति, तद्वारि तत्र भोजनावसरे, भीमगृहे वा । निपीय नितरां पीत्वा तैर्जनैः प्रतिवारं पुनः पुनरीदृशं वक्ष्यमाणप्रकारेणावर्ण्यस्तावि । प्रतिवारं निपीयेति वा । 'अगुरु' इत्येव पाठः। 'भृङ्गारः कनकालुका' इत्यमरः । अल्पत्वे कन् ॥ ८९ ॥

त्वया विधातर्यदकारि चामृतं
कृतं च यज्जीवनमम्बु साधु तत् ।
वृथेदमारम्भि तु सर्वतोमुख-
स्तथोचितः कर्तुमिदंपिबस्तव ॥ ९० ॥

जलवर्णनमेवाह—

त्वयेति ॥ हे विधातः ! त्वयाऽम्बूदकं यदमृतसंज्ञं यच्च जीवनसञ्ज्ञमकारि कृतं तद्द्वयमपि साध्वेवोचितमेव कृतम् । अमृततुल्यरसत्वात्, प्राणधारणहेतुत्वाच्चान्वर्थत्वाद्युक्तमेवैतत्तस्य संज्ञाद्वयमित्यर्थः। तु पुनरिदं सर्वतोमुखसंज्ञं वृथा आरम्भि कृतम् । अन्वर्थत्वाभावान्निरर्थकमेतत्कृतम् । यस्मादिदं जलं पिबतीदंपिबोऽस्मदादिः पुरुषस्तथा सर्वतः सर्वदिक्षु मुखानि यस्य एवंविधिस्तव कर्तुमुचितः । अस्मदादेर्बहूनि मुखानि सर्वेष्वप्यवयवेषु त्वं चेदकरिष्यः, तर्ह्यस्मदादिरिदमातृप्ति पातुमशक्ष्यत् नत्वेकेन मुखेनेति । नितरां शैत्यमाधुर्यादिगुणयुक्तमेतदिति भावः । चौ तुल्ययोगत्वद्योतकौ । 'पयः कीलालममृतं जीवनम्' 'पुष्करं सर्वतोमुखम्' इत्यमरः । इदंपिबः, पाघ्राध्माधेट्दृशः शः ॥ ९० ॥

सरोजकोशाभिनयेन पाणिना
स्थितेऽपि कूरे मुहुरेव याचते ।
सखि त्वमस्मै वितर त्वमित्युभे
मिथो न वादाद्ददतुः किलौदनम् ॥ ९१ ॥

सरोजेति॥ उभे सख्यौ इति मिथो वादाद्विमत्यात्किलौदनं न ददतुः । किलेति व्याजे । इति किम्—हे सखि ! त्वं पात्रमध्य कूरे ओदने स्थितेऽपि मुहुरेव वारं वारम् सरोजकोशवदभिनय आकारो यस्य स्तनवराङ्गप्रार्थनासूचकेन पाणिना कूरं याचतेऽस्मै कामुकाय कूरं वितर देहि। द्वितीया वदति त्वं वितर इति विवदमाने तत्प्रार्थितस्तनवराङ्गदानेऽन्योन्यं प्रवर्तयन्त्योर्मिथ्येऽन्योन्यलज्जावशादेकतरा रिरंसुरपि नाङ्गीचकारेति भावः । 'अनुवादात्' इति पाठे उक्तरूपानुवादादुभे अपि स्वल्पमोदनं किल ददतुरित्यर्थः । ओदनदानव्याजेन तत्प्रार्थितदानमङ्गीचक्रुरिति भावः ॥ ९१ ॥

इयं कियच्चारुकुचेति पश्यते
पयःप्रदाया हृदयं समावृतम् ।
ध्रुवं मनोज्ञा व्यतरद्यदुत्तरं
मिषेण भृङ्गारधृते करद्वयी ॥ ९२ ॥

इयमिति ॥ पयःप्रदायाः समावृतं वस्त्राच्छन्नमपि हृदयमिति विचार्य पश्यते पृच्छते कामुकाय ध्रुवं निश्चितं मनोज्ञा । अथ च—पराशयज्ञैव । तस्याः करद्वयी भृङ्गारस्य धृतेर्धारणस्य मिषेण यद् यस्मादुत्तरं तदीयप्रश्नस्य प्रतिवचनं व्यतरद्दौ । इति किम्—इयं स्त्री कियन्तौ किंप्रमाणौ चारू सुन्दरौ च कुचौ यस्याः सेति । स्वर्णकलशीपरिमाणौ स्वर्णवर्णौ चैतस्याः कुचाविति तं प्रत्यसूचयादित्यर्थः । उभावपि मिथोऽ-

१ अत्रानुप्रासः । कृतेति परिकरः, स्पष्टमचोरीत्युत्प्रेक्षा च।

१अत्रानुप्रासो, विवृतोक्तिश्च।२अत्र विलोक्य करं चकारेति भ्रान्तिमान्, बभूवेति विवृतोक्तिश्च ।

नुरागादन्योन्यावलोकनपरावेव तस्थतुरिति भावः। अन्योऽन्याभिप्रायशः केनचिन्निमिषेण प्रश्नस्योत्तरं ददातिं९२

अमीभिराकण्ठमभोजि तद्गृहे
तुषारधारामृदितेव शर्करा।
हयद्विषद्वष्कयणीपयःसुतं
सुधाह्रदात्पङ्कमिवोद्धृतं दधि ॥ ९३ ॥

अमीभिरिति ॥ अमीभिर्जन्यजनैस्तद्गृहे भीमगृहे आकण्ठमतिबहु यथा तथा शर्कराभोजि भुक्ता। तुषारधारया हिमोदकेन मृदितेव मिश्रितेव। तथा—हयं द्विषन्त्या अश्ववैरिण्या महिष्या वष्कयण्याश्चिरप्रसूतायाः पयो दुग्धं तस्मात्सुतं जातं दुग्धपरिणामभूतं दध्यप्यभोजि। सुधाह्रदादमृतस्यागाधजलाशयादुद्धृतं पङ्कमिवेत्युत्प्रेक्षा। शर्करातिशीता शुभ्रा च, दध्यप्यमृतवत्स्वादु शुभ्रं घनं चेति भावः। तद्गृहेऽमीभिर्विशिष्टं दध्यभोजि। तुषारधारया मृदिताऽल्पकणत्वं प्रापिता शर्करेव, सुधाह्रदादुद्धृतं पङ्कमिव इति दधिविषयमेवोत्प्रेक्षाद्वयं वा। दध्नः शैत्यं शौक्ल्यं स्वादुत्वं घनत्वं सूचितमेतेन। 'पयःश्रृतम्' इति पाठे शर्कराऽभोजि। श्रृतं पक्वं तप्तं महिषीपयश्चाभोजि। दधि चाभोजीति संबन्धः। 'चिरसूता वष्कयणी' इत्यमरः। महिष्या दधि स्वादुतरं भवति। 'द्विषः शतुर्वा' इति (वा.) वचनात् 'हयं द्विषाति' इति द्वितीयया 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२४।' इति योगविभागात्समासः। द्विषद्वष्कयणीति 'पुंवत्कर्मधारयजातीयदेशीयेषु ६।३।४२।' इति पुंवद्भावः। 'श्रृतम्' इति 'श्रृतं पाके ६।१।२७' इति साधु ॥ ९३ ॥

तदन्तरन्तः सुषिरस्य बिन्दुभिः
करम्बितं कल्पयता जगत्कृता।
इतस्ततः स्पष्टमचोरि मायिना
निरीक्ष्य तृष्णाचलजिह्वताभृता ॥९४॥

तदन्तरिति ॥ तद्दधि निरीक्ष्य रसातिशयात्तृष्णया ग्रासवासनया चला चञ्चलाधरप्रान्तलेहिनी गलजला जिह्वा यस्य तस्य भावस्तत्ता तां बिभ्रता। तथा—अन्तरन्तर्मध्ये मध्ये सुषिरस्य छिद्रस्य बिन्दुभिः करम्बितं मिश्रितं व्याप्तं तद्दधि कल्पयता कुर्वता जगत्कृता इतस्ततः सर्वप्रदेशेभ्यः तद्दधि स्पष्टमचोरि प्रकटमपहृतम्। स्पष्टं संभावनायाम्। अपहृतमिवेत्यर्थः। अपहरन्कथं न दृष्ट इत्यत आह—यतो मायिना। अदृश्यतयाऽपहृतमित्यर्थः। सफेनक्षीरस्य दध्याकारेण परिणामे दधनि छिद्राणि दृश्यन्ते ब्रह्मणाऽदृश्यतया दधनि वर्तमानः सारो भोक्तुमिच्छया गृहीतः। अन्यथा छिद्राणि कथं दृश्यन्ते। अन्येन ग्रहीतुं न शक्यते। तत्रोत्प्रेक्षा—येन निर्मितं तस्य ब्रह्मणोऽपि जिह्वाचाञ्चल्यनिर्माणात्स्वादुतमं दधीति ध्वन्यते ॥ ९४ ॥

ददासि मे तन्न रुचेर्यदास्पदं
न यत्र रागः सितयाऽपि किं तया।
इतीरिणे बिम्बफलं पलच्छला-
ददायि बिम्बाधरयाऽरुचच्च तत्॥९५॥

ददासीति ॥ बिम्बफलतुल्योऽधरो यस्यास्तया सुन्दर्या पलव्याजान्मांसव्याजाद्बिम्बसंज्ञं फलं परिवेषितं मांसखण्डमेव बिम्बाकारं कृत्वा इतीरिणेऽधरचुम्बनवासनया भाषमाणाय विटायादायि दत्तम्। तद्बिम्बाकारं फलं तस्मै अरुचच्च। स्वादितमित्यर्थः। मदभिलाषं ज्ञात्वा स्वीकारपुरःसरं पलरूपबिम्बव्याजान्निजाधरदानमेवानया प्रतिज्ञातमिति संतुष्टोऽभूदिति भावः। इति किम्—हे बिम्बोष्ठि, तद्रुचेः प्रीतेरास्पदं न भवति, तन्मह्यं ददासि। तथा—मम यस्यां रागः प्रीतिर्नास्ति तया सितयाऽपि शर्करयापि किम्। अपि तु—न किंचित्प्रयोजनम्। माधुर्यमर्यादया शर्करयापि प्रयोजनं नास्ति, अभिलाषाभावात्। अन्येन नास्तीति किं वाच्यमित्यपिना सूच्यते। अथ च—यत्र लौहित्यं नास्ति तया श्वेतया प्रकरणाच्छर्करयापि किम्। तस्माद्यत्र मेऽनुरागो रक्तिमकान्तिश्च, तन्मह्यं देहीति। 'कृतं तया' इति पाठे तया पूर्यताम्। 'फलच्छलात्' इति पाठे फलदानप्रसङ्गव्याजात्। बिम्बाकारोऽधरो यस्या इति 'सप्तम्युपमानपूर्वस्योत्तरपदलोपः' इत्युत्तरपदलोपी समासः। अरुचत्, पुषादित्वादङ्। 'द्युद्भ्यो लुङि १।३।९१' इति परस्मैपदम् ॥ ९५ ॥

---

१ अत्र 'छलेत्यपह्नुतिः' खल्वित्युत्प्रेक्षा। २ अत्र कृत इत्यादावर्थापत्तिः 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते।' इति तल्लक्षणात्।

१ अत्र विवृतोक्तिः। अत्रानुप्रासः। २ अत्र तयेति यमकम्, फलच्छलादित्यपह्नुतिः।

समं ययोरिङ्गितवान् वयस्ययो-
स्तयोर्विहायोपहृतप्रतीङ्गिताम् ।
अकारि नाकूतमवारि सा यया
विदग्धयाऽराञ्जि तयैव भाववित् ॥९६॥

सममिति ॥ यो ययोर्वयस्ययोः सख्योर्विषये स्वाभिप्रायज्ञापनार्थं समं युगपदिङ्गितवान्भ्रूक्षेपादिचेष्टितवानभूत्, स तयोर्मध्य उपहृतं कृतं प्रतीङ्गितं तदभिलापस्वीकारसूचकप्रतिचेष्टितं यया तामेकां विहाय स्थितः सन् तयैवाराञ्जि द्वितीययैव प्रत्यनुरञ्जितः । तया कया—यया चतुरया विदग्धया आकूतं प्रतीङ्गितं नाकारि । प्रतीङ्गितं कुर्वाणा सैव सखी जनसमक्षमिङ्गितकरणमयुक्तमित्यवारि निषिद्धा । यतो भाववित्वैदग्ध्यस्य वेत्ता । द्वितीया तदिङ्गितदर्शनात्तस्मिन्ननुरागाल्लज्जित्वा प्रतीङ्गितं नाकरोत् । जनसमक्षमेतदनुचितमिति व्याजेन मत्प्रियं प्रतीयमिङ्गितं किमिति करोतीति सापत्न्येर्ष्यया च तां वारितवती इति तस्या वैदग्ध्यम् । स च तदीयगुणभावज्ञानाद्भाववित् । सहचरीसमक्षमिङ्गितं कुर्वाणेयमचतुरा, द्वितीया इङ्गितं नाकरोत्, तां च न्यवारयदितीयमेव चतुरा मय्यनुरक्ता चेति चतुरो द्वितीयस्यामेवानुरक्तोऽभूदिति भावः । विहाय स्थितः सन् इति योजना । अन्यथा हानस्य पुरुषः कर्ता, रञ्जनस्य स्त्री, इति भिन्नकर्तृकत्वात् क्त्वा न स्यादिति । अराञ्जि, ण्यन्ताच्चिण् ॥ ९६ ॥

सखीं प्रति स्माह युवेङ्गितेक्षिणी
क्रमेण तेऽयं क्षमते न दित्सुताम् ।
विलोम तद्व्यञ्जनमर्प्यते त्वया (–)
वरं किमस्मै न नितान्तमर्थिने ॥ ९७॥

सखीमिति ॥ यून इङ्गितं चेष्टामीक्षते एवंशीला काचित्स्वसखीं प्रत्याह स्म, अवोचत् । हे सखि, यस्मादयं क्रमेण परिपाट्या ते दित्सुतां त्वत्कर्तृकां व्यञ्जनस्य दातुमिच्छुतां न क्षमते । तस्मात्त्वया नितान्तमतिचञ्चलतयाऽर्थिने याचमानायास्मै यूने वरं श्रेष्ठमभीष्टं तत्तेमनादिव्यञ्जनं विलोम विपरीतं क्रमरहितं यथा तथा किं नार्प्यते दीयते । अपितु ललजिह्वायास्मै युगपत्क्षिप्यतामिति छलोक्तिः । अयमालिङ्गनचुम्बनादिवाहरतपरिपाट्या तव वराङ्गदानेच्छुतां न सहते । तस्मादतितरलतयाऽर्थिने संभोगविलम्बमसहमानायास्मै वरं केवलं, श्रेष्ठं वा न विद्यते वरं श्रेष्ठं यस्मात्तदवरमतिश्रेष्ठं वा । अवरमधोदेशे वर्तमानं वा । रोमरहितं तद्भगलक्षणं व्यञ्जनमवयवः किमिति त्वया नार्प्यते । अपि त्वर्पयेत्युपहासः । अतिसंभोगान्नितरां तान्तं ग्लानमिति व्यञ्जनविशेषणं वा । 'व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि' इत्यमरः । नितरां तान्तमिति पक्षे 'अनुनासिकस्य क्विझलोः क्ङिति६।४।१५' इति दीर्घः ॥ ९७ ॥

समाप्तिलिप्येव भुजिक्रियाविधे-
र्दलोदरं वर्तुलयाऽऽलयीकृतम् ।
अलंकृतं क्षीरवटैस्तदश्नतां
रराज पाकार्पितगैरिकाश्रिया ॥ ९८ ॥

समाप्तीति ॥ क्षीरवटैः दुग्धमध्यक्षिप्तैर्मोप्रसाधितैर्वटकाख्यैः पक्वान्नविशेषैः स्वसंबन्धादलंकृतं तत्पूर्वोक्तं वटकव्यतिरिक्तं व्यञ्जनं वर्तुलया वृत्ताकारया पाकेन तप्तस्नेहद्वारकाग्निसंयोगेनार्पितया निर्मितया गैरिकश्रिया शैलरक्तधातोः श्रिया वटकानामेव शोभया रराज रराजेव विशिष्टवटकसंबन्धाद्व्यञ्जनान्तरमिव रेजे इत्यर्थः । विशिष्टया श्रियोपलक्षितैः क्षीरवटैरलंकृतं सद्रेजे इति वा । क्षीरवटैः कर्तृभिः श्रिया कृत्वा अलंकृतं सद्रेजे इति वा । किमिव—अश्नतां भुञ्जानानां तेषां भुजिक्रियाविधेर्भोजनविधेः समाप्तेः वटकदर्शनमात्रेणान्यत्र रुच्यभावाद्व्यञ्जनान्तरतो विरतेः संबन्धिन्या लिप्या समाप्तिसूचिकया छकाररूपपुष्पिकारूपया आलयीकृतम् आस्पदीकृतं दलोदरं श्रीतालादिपत्रमध्यमिव इत्युपमोत्प्रेक्षा वा । वृत्तया समाप्तिलिप्या श्रितं पाकेन बालकेनार्पितया गैरिकश्रियाऽलंकृतं दलोदरमिति वा योज्यम् । 'पोतः पाकोऽर्भकः' इत्यमरः । ग्रन्थलेखनसमाप्तिपत्रे समाप्तिसूचकं छकारादिवर्तुलमक्षरं क्रियते, गैरिकचिह्नितं च क्रियते । एवं भोजनसमाप्तिसूचकं क्षीरवटकादि ॥ ९८ ॥

चुचुम्ब नोर्वीवलयोर्वशीं परं
पुरोऽधिपारि प्रतिबिम्बितां विटः ।
पुनःपुनः पानकपानकैतवा-
च्चकार तच्चुम्बनचुंकृतान्यपि ॥९९ ॥

चुचुम्बेति ॥ कश्चिद्विटः पुरोऽग्रेऽधिपारि पानकरसपूर्णे सुवर्णादिपानपात्रे प्रतिबिम्बितामुर्वीवलये उर्वशी-

१ अत्र भावविदिति परिकरः, विवृतोक्तिश्च ।

१ अत्र श्लेषः । २ समाप्तिलिप्येवेत्युत्प्रेक्षा, गैरिकश्रिया रराजेवेति प्रतीयुत्प्रेक्षा व्यङ्ग्या च ।

मिवातिसुन्दरीं कांचित्परं केवलं चुचुम्बेति न, किंतु पुनः-पुनः पानकस्य द्राक्षादिसाधितस्य मधुररसप्रधानस्य पेयद्रव्यविशेषस्य यत्पानं तस्य कैतवात् छलात् प्रतिबिम्बितायास्तस्याश्चुम्बनस्य संबन्धीनि चुंकृतानि 'चुम्' इति पानकानुकरणशब्दस्तस्य करणान्युच्चारणानि तान्यपि चकार । चुम्बनादिना तस्यां स्वानुरागं प्रकटीचकारेति भावः । 'झल्लुरी वर्वरी पारी पानपात्रम्' इति क्षीरस्वामी । 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २ । १ । ६' इति सप्तम्यर्थेऽव्ययीभावः । चुंकृतानि, 'नपुंसके भावे क्तः ३ । ३ । ११४' इति भावे क्तः ॥ ९९ ॥

**घनैरमीषां परिवेषकैर्जनै-**
**रवर्षि वर्षोपलगोलकावली ।**
**चलद्भुजाभूषणरत्नरोचिषा**
**धृतेन्द्रचापैः श्रितचान्द्रसौरभा ॥ १०० ॥**

घनैरिति ॥ घनैर्निबिडैर्लक्षणया बहुभिः परिवेषकैरनेकव्यञ्जनदायिभिर्जनैः । तैरेव घनैर्मेघैरमीषां भुञ्जानानां राज्ञां कृते वर्षोपलाः करकास्तत्तुल्यानामेलाकर्पूरशर्करालवङ्गतण्डुलपिष्टैः रचितानां गोलकानामतिवृत्तानां लड्डुकविशेषाणाम् । अथ च—करकारूपाणां गोलकानाम् आवली पङ्क्तिरवर्षि वितीर्णा वृष्टा च । कीदृशैः—परिवेषणकर्मवशाच्चलन्त्यो या भुजास्तासां भूषणेषु रत्नानि तेषां रोचिषा कान्त्या धृतमिन्द्रचापं यैः । नानाप्रकारकान्तिभिरित्यर्थः, अथ च—तदेवेन्द्रचापो येषु । कीदृशी—श्रितं चान्द्रं कर्पूरसंबन्धि सौरभं सौगन्ध्यं यया । अथच—'चन्द्र एव चान्द्रः, सूर एव सौरः' तयोर्भा चान्द्रसौरभा, श्रिता चान्द्रसौरभा यया सा । शीतत्वदीप्तत्वाभ्यां चन्द्रसूर्यसदृशीत्यर्थः । रात्रिदिनयोर्जायमानत्वाद्वा क्रमेण तत्कान्तिसदृशी । चन्द्रसंबन्धिनश्चान्द्राश्चन्द्रकान्ताः, एवं सौराः सूर्यकान्ताः तेषां भा श्रिता यया वा । चन्द्रसंबन्धि मनोज्ञत्वं सादृश्यं श्रितं ययेति वा । 'सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति । चम्पके च वसन्ते च तथा जातिफले पुमान् ॥ स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु । विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम् ॥' इति मेदिन्युक्त्या सुरभिशब्दो मनोज्ञवाची ॥ १०० ॥

१ अत्र कैतवादित्यपह्नुतिः । २ अत्र घनैर्जनैरित्यादौ श्लेषानुप्राणितं रूपकम् ।

**कियद्बहु व्यञ्जनमेतदर्प्यते**
**ममेति तृप्तैर्वदतां पुनः पुनः ।**
**अमूनि संख्यातुमसावढौकि तै-**
**श्छलेन तेषां कठिनीव भूयसी ॥ १०१ ॥**

कियदिति ॥ एतत्तेमनादिव्यञ्जनं मम कियत्किंपरिमाणं बहर्प्यते । अपितु तृप्ता वयमिति नार्पणीयमिति तृप्तेर्हेतोः पुनः पुनः वदतां तेषां जन्यानां 'कियत्संख्यं बहु एतद्व्यञ्जनमर्प्यते' इति 'एतद्बहुत्वसंख्येयत्ता भवद्भिः पृच्छ्यते किम्' इति च्छलेनामूनि व्यञ्जनानि संख्यातुं गणयितुमसौ गोलकावली भूयसी बहुतरा कठिनी खटिका इव तैः परिवेषकैरढौकि अर्पिता । भवद्भिर्व्यञ्जनसंख्या पृष्टा, तद्गणनया कठिन्या एतानि गणयेति कठिनीवार्पितेत्युत्प्रेक्षिता । इति वदताममूनि संख्यातुमिव व्याजेनासौ बहुतरा कठिन्यर्पितेति वा योज्यम् । कठिन्या च संख्यायते । एतद्व्यञ्जनम् अमूनीति, ममेति अमीषामिति चैकवचनबहुवचनानि जातिव्यक्तिविवक्षयेति ज्ञातव्यानि ॥ १०१ ॥

**विदग्धबालेङ्गितगुप्तिचातुरी**
**प्रवह्लिकोत्पाटनपाटवे हृदः ।**
**निजस्य टीकां प्रबबन्ध कामुकः**
**स्पृशद्भिराकूतशतैस्तदौचितीम् ॥ १०२ ॥**

विदग्धेति ॥ कश्चित्कामुकः विदग्धायाश्चतुराया बालाया मुग्धाया इङ्गितगुप्तौ चेष्टितगोपनविषये चातुरी यत्कौशलं सैव दुर्ज्ञेयत्वात्प्रवह्लिका गुप्ताभिप्रायः प्रबन्धविशेषस्तस्या उत्पाटने भेदने ज्ञानविषये यत्पाटवं सामर्थ्यं प्रावीण्यं तत्र विषये तदौचितीं विदग्धबालेङ्गितानामानुगुण्यं स्पृशद्भिः गतैस्तदनुरूपैराकूतशतैर्बहुभिरिङ्गितैः कृत्वा निजस्य हृदः स्वीयाभिप्रायस्य टीकां विवरणं प्रबबन्ध प्रकर्षेण कृतवान् । गुप्तान्यपि मदिङ्गितानि ज्ञातवान्, अतिचतुरोऽयं मय्यनुरक्तश्चेति तदनुगुणैः स्वीयचेष्टितैस्तां स्वाशयं बोधितवानिति भावः । बालाया अपि विदग्धसखीशिक्षया वैदग्ध्यादिङ्गितकरणम्, सहजमौग्ध्यात्सलज्जया तद्गोपनं च युक्तम् । विदग्धः युवा कश्चन, बाला च काचन, तयोरिङ्गितगुप्तिर्वा । यद्वा—विदग्धस्येङ्गितं बालायाश्च गुप्तिः अर्थादिङ्गितस्यैव । तयोर्विषये या चातुरी तत्र, प्रवह्लिकोत्पाटनपाटवे विषये, तयोरी-

१ छलेनेत्यपह्नुतिः । सङ्ख्यातुमिवेत्युत्प्रेक्षा च ।

चित्तीं स्पृशद्भिः । अत्र द्वयोरपि भवतोराशयो मया ज्ञात इतीङ्गितैस्तज्ज्ञापनद्वारातिचतुरोऽहमेव त्वया भजनीय इति बालां प्रति स्वाशयं ज्ञापितवानिति भावः । अन्योऽपि विदग्धोऽतिगहनायाः प्रवह्लिकाया भेदने विषयेऽनेकैराशयैर्व्याख्यां करोति ॥ १०२ ॥

घृतप्लुते भोजनभाजने पुरः
स्फुरत्पुरन्ध्रिप्रतिबिम्बिताकृतेः ।
युवा निधायोरसि लड्डुकद्वयं
नखैर्लिलेखाथ ममर्द निर्दयम् ॥१०३॥

घृतेति ॥ कश्चिद्युवा घृतप्लुत आज्यपूर्णे प्रसृतघृते वा भोजनभाजने पुरः स्फुरन्त्या विलसन्त्याः पुरन्ध्र्याः प्रतिबिम्बिता या आकृतिस्तस्या उरसि लड्डुकद्वयं मोदकयुगं निधाय नखैर्लिलेख । अथ पश्चान्निर्दयं ममर्द।यदाऽऽवयोः संयोगो भावी, तदैवं तव कुचावुपचारिष्यामीति त्वत्कुचनखक्षतविमर्देच्छुरस्मीति वा, स्वाशयं बोधितवानिति भावः । घृतेन प्लुतम् । घृतं प्लुतं यस्मिन्निति वा । 'वाहिताग्न्यादिषु २।२।३७' इति परनिपातः ॥१०३॥

विलोकिते रागितरेण सस्मितं
ह्रियाऽथ वैमुख्यमिते सखीजने ।
तदालिरानीय कुतोऽपि शार्करीं
करे ददौ तस्य विहस्य पुत्रिकाम् १०४

विलोकित इति ॥ रागितरेण केनचित्कामुकेन सखीरूपे जने सस्मितं विलोकिते सति अथ विलोकनानन्तरं ह्रिया वैमुख्यं पराङ्मुखत्वमिते गते सति तस्य सखीजनस्याऽऽलिः सखी कुतोऽपि कस्मादपि स्थानाच्छार्करीं शर्करावन्धनिर्मितां पुत्रिकामानीय विहस्य वैमुख्यासंदिहानस्य तस्य करे ददौ । अधरादिचुम्बनायाङ्गेषु शर्करातुल्यरसामेनामप्यहमेव दास्यामि । स्वहस्तस्थितामेनां जानीहीति संज्ञां चकारेति भावः। सखीसमूहे वैमुख्यं विमुखतामिते प्राप्ते सति तासां सखीनां मध्ये काचित्सखी तदन्तर्वर्तिनी, अन्या वा, शार्करीं पुत्रिकां ददौ । शर्करापुत्रिकापरिवेषणमिषेण अहं त्वां भजामीति स्वदानसंज्ञानमकरोदिति भाव इति वा । शार्करीमिति विकारप्रत्ययः । पुत्रिका, 'इवे प्रतिकृतौ ५।३।९३ कन् ॥ १०४ ॥

निरीक्ष्य रम्याः परिवेषिका ध्रुवं
न भुक्तमेवैभिरवाप्ततृप्तिभिः ।
अशक्नुवद्भिर्बहुभुक्तवत्तया
यदुज्झिता व्यञ्जनपुञ्जराशयः ॥१०५॥

निरीक्ष्येति ॥ बहुभुक्तवत्तयाल्पाऽऽहारेणाशक्नुवद्भिर्भोक्तुमसमर्थैरेभिर्वरयात्रिकैर्यद्यस्माद्व्यञ्जनपुञ्जानां राशयः परम्परा उज्झितास्त्यक्ताः, तस्माद्रम्याः परिवेषिका निरीक्ष्यावाप्ततृप्तिभिर्गतबुभुक्षैरेतैर्भुक्तमेव नेति ध्रुवमहं मन्ये । यावत्क्षिप्तं तावत्तस्थैव दर्शनादियमुत्प्रेक्षा । एता निरीक्ष्यावाप्ततृप्तिभिरेतैर्ध्रुवं निश्चितं नैव भुक्तमिति वा । यथा लोको मन्यत इति शेषः । यथा व्यञ्जनपुञ्जपरम्परास्त्यक्ताः यथैभिर्न भुक्तमिति लोको मन्यत इत्यर्थः इति वा ॥ १०५ ॥

पृथक्प्रकारेङ्गितशंसिताशयो
युवा यथोदासि तथापि तापितः ।
ततो निराशः परिभावयन् परा-
मये तयाऽतोपि सरोषयैव सः ॥१०६॥

पृथगिति ॥ पृथक्प्रकारैर्नानाविधैरिङ्गितैश्चेष्टितैः कृत्वा शंसितः कथित आशयोऽभिप्रायो येन स युवा यया स्त्रिया उदास्युदासीनः प्रतीङ्गितेन न सम्भावितः, तया तापितो व्यथितः । उदासीनो हि दुःखं न जनयति । अनयाऽपि तु तादृश्यापि दुःखं जनितमिति विरोधार्थोऽपिशब्दः । ततोऽनन्तरं तस्यां निराशः, तस्याः सकाशान्निराशो निर्गताभिलापः सन् परां तदन्यां परिभावयन्निङ्गितेनानुकूलयन्सानुरागं पश्यन्स युवा सरोषया तयैव पूर्वमुदासीनयैवातोपि परितोषितः, न तु द्वितीययेत्यर्थः । अये आश्चर्ये । सरोषो हि दुःखं जनयति, न सुखम् । तयाऽपि तादृश्यापि सुखं जनितमिति विरोधादाश्चर्यम् । जनसमक्षमिङ्गितकरणमयुक्तमिति तयेङ्गितं पूर्वं न कृतम् । स तु तदाशयमजानानोऽननुरागेणेयं प्रतीङ्गितं

---

१ अत्र पाटेति यमकम्, विघृतोक्तिश्च । २ अत्रानुप्रासः, विवृतोक्तिश्च ।

१ अत्र पिहितम्, 'पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितम् ।' इति तल्लक्षणात् । २ अत्रानुप्रासः । ध्रुवमित्युत्प्रेक्षा, तृप्त्यवाप्तत्वेऽपि अभुक्तत्वोत्प्रेक्षणाद्विरोधाभासो व्यज्यते । नह्यत्र तद्वाचकोपादानं, येन तस्य वाच्यत्वं सम्पद्येतेति भावः ।

नाकरोदिति बुद्ध्याऽन्यामपश्यत् । ततश्च सा सपत्नीबुद्ध्या सेर्ष्या जातेति मय्यनुरक्तैवेयम् । पूर्वं तु गाम्भीर्यादिङ्गितं नाकरोत् । सानुरागैव च सरोषा भवतीति रोषादनुरागमनुमाय संतुष्ट इति भावः । 'उपेतया' इति पाठे रोषात्तदपसारणार्थं समीपमागतयेत्यर्थः ॥ १०६॥

पयःस्मिता मण्डकमण्डनाम्बरा
वटाननेन्दुः पृथुलड्डुकस्तनी ।
पदं रुचेर्भोज्यभुजां भुजिक्रिया
प्रिया बभूवोज्ज्वलकूरहारिणी ॥१०७॥

पय इति ॥ भुजिक्रिया भोजनक्रिया भोज्यभुजां भक्ष्यं भुञ्जानानां तेषां प्रिया तृप्तिजननी । अथ च स्त्री बभूवेव किंभूता—पयो दुग्धमेव स्मितं हासो यस्याः । तथा—क्वचिन्मृदुसूक्ष्माः, क्वचिदत्यन्ताग्निसंयोगेन शोणविन्दवो मण्डका अपूपा एव पट्टसूत्रादिरचितरूपकरूपमण्डनयुक्तान्यलंकारभूतानि वाऽम्बराणि वस्त्राणि यस्याः । तथा—अतिवृत्तमाषसाधितवटकरूपः कुङ्कुमोद्वर्तनरक्तभावेन आह्लादक आननेन्दुर्मुखचन्द्रो यस्याः । तथा—पृथुलड्डुकस्तनी स्थूलातिकठिनमोदकरूपी स्तनौ यस्याः सा । तथा—उज्ज्वलकूरहारिणी विविक्तशुभ्रौदनरूपमौक्तिकमालावती । अथ च—उज्ज्वलकूरेण मनोहारिणी । यतः रुचेर्ग्रासाभिलाषस्य । अथ च—कान्तेः, अनुरागस्य च । पदं स्थानम् । प्रियापि पूर्वोक्तगुणसहिता रुचेः पदं बभूव । यतः प्रिया इति वा । 'भोज्यं भक्ष्ये ७ । ३ । ६९' इति साधुः ॥ १०७ ॥

चिरं युवाऽऽकूतशतैः कृतार्थन-
श्चिरं सरोषेङ्गितया च निर्धुतः ।
सृजन्करक्षालनलीलयाऽञ्जली-
नसेचि किंचिद्विधुताम्बुधारया १०८

चिरमिति ॥ कयाचिच्चेट्या कश्चिद्युवा किंचिद्विधुतया वक्रचालितयाम्बुधारया कृत्वाऽसेचि सिक्तः । किंभूतः—आकूतशतैरिङ्गितसहस्रैश्चिरं कृतार्थनः कृतप्रार्थनः सन् चिरं सरोषं कोपव्यञ्जि इङ्गितं यस्यास्तयैव वारंवारं निर्धुतो निराकृतः सन्नपि । तथा—करक्षालनस्य लीलया व्याजेन प्रसादप्रार्थनासूचकानञ्जलीन्करयुगसंपुटान्सृजन्रचयन् । अञ्जलीनिति वचनेन वारंवारमञ्जलेः करणं सूचितम् । वारिधाराकम्पनेन त्वत्प्रार्थना मयाङ्गीकृता, करयुगयोजनाद्विरमेति सूचितम् । इयं स्वीकारचेष्टा । करक्षालनं भुजिक्रियासमाप्तिं द्योतयति ॥ १०८ ॥

न षड्विधः षिङ्गजनस्य भोजने
तथा यथा यौवतविभ्रमोद्भवः ।
अपारशृङ्गारमयः समुन्मिषन्
भृशं रसस्तोषमधत्त सप्तमः ॥ १०९ ॥

नेति ॥ षड्विधो मधुराम्ललवणतिक्तकटुकषायास्वादरूपः षट्प्रकारो रसः षिङ्गजनस्य रसिककामुकसङ्घस्य भोजने विषये तथा तोषं नाधत्तोदपादयत् । यथा—यौवतं स्त्रीसङ्घस्तस्य विभ्रमो विलासस्तस्मादुद्भवो यस्य स भृशं समुन्मिषन्वर्धमानोऽपारशृङ्गारमयो निर्मर्यादानेकविधविभावानुभावव्यभिचारिसंयोगजन्यशृङ्गाररूपः सप्तमो रसः तोषमधत्त। सप्तमत्वं मधुराद्यपेक्षया ज्ञेयं, न तु नाट्यरसापेक्षया । षड्भ्यो रसेभ्योऽन्यस्याभावाद्भोजने सप्तमरसस्य सद्भावादाश्चर्यम् ॥ १०९ ॥

मुखे निधाय क्रमुकं नलानुगै-
रथौज्झि पर्णालिरवेक्ष्य वृश्चिकम् ।
दमार्पितान्तर्मुखवासनिर्मितं
भयाविलैः स्वभ्रमहासिताखिलैः ११०॥

मुखे इति॥अथ हस्तक्षालनानन्तरं नलानुगैस्तैः राजभिः क्रमुकं पूगफलं मुखे निधाय वृश्चिकमवेक्ष्य दमेनार्पिता दत्ता पर्णालिर्नागवल्लीदलपङ्क्तिरौज्झि त्यक्ता । किंभूतं वृश्चिकम्—अन्तर्मुखवासेन कर्पूरकस्तूरीखदिरसारादिरूपेण मुखसौगन्ध्यकारिणा निर्मितम् । किंभूतैः—भयेन दशनभिया आविलैर्व्याप्तैः । अतएव स्वभ्रमेणावृश्चिके वृश्चिकबुद्ध्या हासिता हासं प्रापिता अखिला द्रष्टारो यैः । दमेनार्पितः । पर्णमध्ये वर्तमानो योऽन्तर्मुखवासस्तेन निर्मितमिति वा ॥ ११० ॥

अमीषु तथ्यानृतरत्नजातयो-
र्विराटराट्चारुनितान्तजारुणोः ।

१ अत्रानुप्रासः, सूक्ष्मपिहितयोः सङ्करः ।'सूक्ष्मं पराशयाभिज्ञेतरसाऽऽकूतचेष्टितम् ।' इति सूक्ष्मलक्षणम् । २ अत्र रूपकम्, बभूवेति प्रतीत्योत्प्रेक्षा व्यङ्ग्या ।

१ अत्र विवृतोक्तिः ।२ सप्तमत्वमुत्प्रेक्ष्योक्तम्,तेन तस्य लोकोत्तरत्वं व्यङ्ग्यम्,तेन च लौकिकेभ्यो व्यतिरेको व्यज्यत इति बोध्यम् । ३ अत्र भ्रान्तिमान् ।

स्वयं गृहाणैकमिहेत्युदीर्य त-
द्वयं ददौ शेषजिघृक्षवे हसन् ॥१११॥

अमीष्विति ॥ वराटराट् राजा दमो वा क्रमेण चारु सुन्दरं नितान्तचार्वतिसुन्दरं च तयोरिहैतयोस्तथ्यानृतयोः सत्यासत्ययो रत्नजातयोर्मध्ये एकं तव प्रियं रत्नजातं त्वं स्वयमेव गृहाणेति अमीषु वारयात्रिकेषु विषये उदीर्य कृत्रिमत्वादतिरमणीयकान्तिविशेषमलीकरत्नजातं जिघृक्षवे ग्रहीतुमिच्छवे वारयात्रिकाय हसंस्तदज्ञानहेतोः किंचिद्धास्यं कुर्वंस्तयोः सत्यासत्ययो रत्नजातयोर्द्वयं युगं तद्रूपं वा द्वयं ददौ।अमीषु मध्ये शेषजिघृक्षवे इति वा।इह द्वयोर्मध्ये शेषजिघृक्षवे इति वा। शेषजिघृक्षवे, 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२४' इति'द्वितीयायोगविभागात्समासः।वस्तुतस्तु, अयमर्थः वराटराट् चारु रमणीया कपर्दिका, नितान्तचारु—स्वाभाविककान्त्या सुन्दरं चेति तथ्यानृतरत्नजातयोः तथ्यरत्नजातेऽनृतरत्नजाते च। एकं स्वयमिह गृहाणेत्यमीषूदीर्य स्थितौ शेषजिघृक्षवे नितान्तचारु तथ्यं रत्नमेव ग्रहीतुमिच्छवे हसन् तद्विज्ञत्वं सम्भाव्य तुष्ट इव स्वयं द्वयं ददौ। इति।द्वयोर्दानं च, तथ्यातथ्यत्वयोर्विषये त्वत्पाटवमिति तत्प्रशंसनद्योतनार्थम्। तथ्येति पूर्वनिपातो वृत्तानुरोधादेवेत्र विवक्षितः। इति ॥ १११ ॥

इति द्विकृत्वः शुचिमृष्टभोजिनां
दिनानि तेषां कतिचिन्मुदा ययुः।
द्विरष्टसंवत्सरवारसुन्दरी-
परीष्टिभिस्तुष्टिमुपेयुषां निशि ॥११२॥

इतीति ॥ इति पूर्वोक्तप्रकारेण द्विकृत्वो द्विवारं दिवा रात्रौ च शुच्यदोषं मृष्टं स्वादु च भोजिनां भुञ्जानानां तेषां वारयात्रिकाणां कतिचित्पञ्चषाणि दिनानि मुदा ययुः। पञ्चषाणि दिनानि सहर्षास्तत्रोषुरित्यर्थः। किंभूतानाम्—निशि द्विः द्वौ वारावष्टौ द्विरष्टौ षोडश संवत्सरा यासां ताः वारस्य सङ्घस्य सुन्दर्यो वेश्यादास्यादयस्तासां परीष्टिभिश्चुम्बनादिसेवाभिस्तुष्टिं संतोषमुपेयुषां प्राप्तवताम्। 'द्विरष्ट'इतिवत्सुचः कृत्वसुचो बाधकत्वात् 'द्विः' इति प्राप्ते 'द्विकृत्वः' इत्यत्र 'अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः' इति परिभाषया यथाकथंचित्परिहर्तव्यम् ॥ ११२ ॥

उवास वैदर्भगृहेषु पञ्चषा
निशाः कृशाङ्गीं परिणीय तां नलः।
अथ प्रतस्थे निषधान्सहानया
रथेन वार्ष्णेयगृहीतरश्मिना ॥ ११३ ॥

उवासेति ॥ नलः कृशाङ्गीं तां परिणीय वैदर्भगृहेषु पञ्च षड् वा प्रमाणमासां ता निशा उवास। पञ्चपाणि दिनानि तत्र स्थितवानित्यर्थः। अथ सप्तमे दिनेऽनया भैम्या सह रथेन निषधान्प्रतस्थे। किंभूतेन—वार्ष्णेयनाम्ना सारथिना गृहीता रश्मयो यस्य। पञ्चषाः,'सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये २।२।२५' इति समासे 'बहुव्रीहौ संङ्ख्येयडजबहुगणात् ५।४।१३' इति डच्, टिलोपः। निशाः, अत्यन्तसंयोगे द्वितीया ॥ ११३ ॥

परस्य न स्प्रष्टुमिमामधिक्रिया
प्रिया शिशुः प्रांशुरसाविति ब्रुवन्।
रथे स भैमीं स्वयमध्यरूरुह-
न्न तत्किलाश्लिक्षदिमां जनेक्षितः॥११४॥

परस्येति ॥ इति ब्रुवन्स नलो भैमीं स्वयमात्मनैव रथेऽध्यरूरुहदध्यारोपयामास। इति किम्—इमां पतिव्रतां भैमीं स्प्रष्टुं स्पर्शनेन्द्रियविषयीकर्तुं परस्य मदन्यस्य नाधिक्रिया नाधिकारः, प्रिया भैमी शिशुरल्पप्रमाणा, असौ रथश्च प्रांशुः उच्चतर इति स्वयमारोढुमसमर्थेति। ततस्माद्धेतोर्जनेक्षितो लोकैर्विलोकितः सन्निमां भैमीं नालिलिङ्ग। किलेति व्याजे। तत्त्वतस्तु जनसमक्षमालिलिङ्गेव। किन्त्वेवं ब्रुवन्धाष्टर्यं परिजहारेति भावः। कर्मत्वस्याविवक्षितत्वाद्रथे इत्यधिकरणे सप्तमी। अध्यरूरुहत्, 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इत्युपधाह्रस्वत्वे 'दीर्घो लघोः ७।४।९४' इत्यभ्यासदीर्घत्वम्। आश्लिक्षत्, 'श्लिष आलिङ्गने' इति क्सः। 'आश्लिष्यत्' इति पाठे लङ् ॥ ११४ ॥

इति स्मरः शीघ्रमतिश्चकार तं
वधूं च रोमाञ्चभरेण कर्कशौ।

---

१ अत्रानुप्रासः।

१ वार्ष्णेयेतिपदवैशिष्ट्येन नलस्य वसुदेवत्वं वार्ष्णेयस्य कंसत्वं व्यज्यते। सङ्ग्रामोत्तरमवशिष्टया सनया सहागच्छतोः पार्थकृष्णयोः साम्याभिव्यञ्जनमिति वाऽत्र समासोक्तिः। २ अत्र पदार्थहेतुकं काव्यलिङ्गम्।

स्खलिष्यति स्निग्धतनुः प्रियादियं
म्रदीयसी पीडनभीरुदोर्युगात् ॥ ११५ ॥

इतीति ॥ इति हेतोः शीघ्रमतिस्त्वरितबुद्धिः शीघ्रमुचितोपायस्फुरणशीलस्तयोरन्योन्यविषयः स्मरस्तं नलं वधूं भैमीं च्चोभौ रोमाञ्चानां भरेण बाहुल्येन कर्कशत्वचौ चकार । अन्योन्यसंस्पर्शादुत्पन्नसात्त्विकरोमाञ्चौ तौ जाताविति भावः । इति किम्—म्रदीयसी स्निग्धतनुर्नितरां कोमला सस्नेहाङ्गी चेयं भैमी । अतः प्रियान्नलात्सकाशात्स्खलिष्यति निःसरिष्यति । यतः पीडने निविडधारणे भीरु दोर्युगं बाहुयुगं यस्य तस्माच्छिथिलधारिणः इति ॥ 'इतीवे तं शीघ्रमतिः स्वरोऽकरोद्वधूम्' इति पाठः ॥ ११५ ॥

तथा किमाजन्मनिजाङ्कवर्धितां
प्रहित्य पुत्रीं पितरौ विषेदतुः ।
विसृज्य तौ तं दुहितुः पतिं यथा
विनीततालक्षगुणीभवद्गुणम् ॥ ११६ ॥

तथेति ॥ तौ पितरौ तं दुहितुः पतिं जामातरं नलं विसृज्य संप्रेष्य यथा विषेदतुः विषण्णौ बभूवतुः, तथा आजन्म जन्मनः प्रभृति निजाङ्कयोः स्वीयोत्सङ्गयोर्वर्धितां वृद्धिं प्रापितां प्रहित्य प्रस्थाप्य विषेदतुः किम् । अपितु नेति वैधर्म्योपमा । यतः—किंभूतम्–विनीततया स्वविनयत्वेन लक्षगुणीभवन्तः शौर्यादयो गुणा यस्य तम् । सुतावियोगादपि सगुणजामातृवियोगो नितरां तयोर्दुःसहो जात इत्यर्थः । प्रहित्य, 'हि गतौ' क्त्वो ल्यपि तुक् । विषेदतुः, सदेरेत्वाभ्यासलोपौ । 'सदिरप्रतेः ८।३।६६' इति षत्वम् ॥ ११६ ॥

निजादनुव्रज्य स मण्डलावधे-
र्नलं निवृत्तौ चटुलापतां गतः ।
तडागकल्लोल इवानिलं तटा-
द्धृतानतिर्व्यावृते वराटराट् ॥ ११७ ॥

निजादिति ॥ स वराटराट् भीमो नलमनुव्रज्यानुगम्य निजान्मण्डलावधेः सकाशान्निवृत्तौ परावृत्तिसमये चटु प्रियवचनं लपति भाषत इति चटुलापस्तद्भावं गतः प्राप्तः प्रियं भाषमाणो धृताङ्गीकृता नलकृता आनतिर्नमस्कारो येन स एवंभूतः सन् व्यावृते निजगृहान्प्रति परावृत्तः । क इव—तडागकल्लोल इव । यथाऽनिलं वायुमनुव्रज्य तटान्निवृत्तो चटुला आपो यस्य तद्भावं गतः सन् तीरात्सकाशात्तडागतरङ्गो व्यावर्तत इत्युपमा । चटुलाप इत्यत्र 'कर्मण्यण् ३ । २ । १' पक्षे 'ऋक्पूरब्धूःपथामानक्षे ५ । ४ । ७४' इत्यनेन समासान्तः । स तु तत्पुरुष एवेति कश्चित्तदुपेक्ष्यम् ॥ ११७ ॥

पिताऽऽत्मनः पुण्यमनापदः क्षमा
धनं मनस्तुष्टिरथाखिलं नलः ।
अतः परं पुत्रि ! न कोऽपि तेऽहमि-
त्युदस्रुरेष व्यसृजन्निजौरसीम् ॥ ११८ ॥

पितेति ॥ इत्युक्त्वा उद्गतान्यस्रूणि यस्य स एष भीमो निजामौरसीं स्वीयक्षेत्रबीजाभ्यामुत्पादितां भैमीं व्यसृजत्प्राहिणोत् । इति किम्—हे पुत्रि ! आत्मनस्तव पुण्यं धर्म एव पिता हितकारित्वात्, अहितनिवारकत्वाच्च । तथा—तव क्षमाः सहनशक्तयोऽनापदो न विद्यन्त आपदो याभ्यस्ताः । आपन्नाशिका इत्यर्थः । तव मनसस्तुष्टिः संतोषोऽलुब्धत्वमेव धनम् । अथानन्तरमखिलमपि तवेष्टं नल एव । किं बहुना—एतदतिरिक्तसकलाभीष्टदत्वात्सर्वं नल एवेत्यर्थः । अतः परमद्यतनदिनप्रभृत्यहं भीमस्ते कोऽपि संबन्धी बान्धवो न भवामीति ॥ ११८ ॥

प्रियः प्रियैकाचरणाच्चिरेण तां
पितुः स्मरन्तीमचिकित्सदाधिषु ।
तथाऽऽस्त तन्मातृवियोगवाडवः
स तु प्रियप्रेममहाम्बुधावपि ॥ ११९ ॥

प्रिय इति ॥ प्रीणाति हर्षं जनयतीति प्रियो नलः पितुः स्मरन्तीं तां भैमीं प्रियस्य मनीषितस्य एकस्य वस्तुन आचरणात्करणान्मनीषितस्य यदेकं मुख्यं केवलं वा करणं तस्मादाधिषु पितृवियोगजमानसपीडासु सत्सु चिरेण बहुना कालेनाचिकित्सदुपचचार । कस्याचिदिष्टस्य मेलनात्पितृवियोगजन्यदुःखं चिरेणात्याजयादित्यर्थः । चिरकालं पितुः स्मरन्तीमिति वा । स सर्वजनप्रसिद्धस्तस्या मातृवियोग एवासह्यतरत्वाद्वाडवो वडवानलः । तु पुनः प्रियस्य नलस्य प्रेमा निरुपाधिकः स्नेहस्तद्रूपे महाम्बुधौ सत्यपि तथाप्रत्युतप्राच्यरूप एवास्त

१ इतीव इति पाठान्तरे त्वत्रोत्प्रेक्षा । २ अत्र स्नेहातिरेकानुगुणचेष्टितोक्त्या स्वभावोक्तिः ।

१ अत्रोपमा । २ अत्र पुण्यादेः पितृत्वादिना रूपणाद्रूपकम् ।

स्थितवान्। तस्मिन्नतिप्रियं कुर्वत्यपि स स्तोकमपि न शान्त इत्यर्थः। पितृवियोगदुःखान्मातृवियोगस्य गौरवं सूचितम्। विशेषतश्च कन्यानाम्। अपिरीचित्ये। जलानलयोर्विरोधेऽपि वाडवस्याम्बुधावेव स्थितिर्युक्तेत्यर्थः। 'शश्राम इतितृतीयचरणे' 'न तु प्रिय—' इतिचतुर्थचरणे च पाठः स्पष्टार्थः। पितुः, 'अधीगर्थदयेशां कर्म्मणि २।३।५२' इति षष्ठी। अचिकित्सत्। 'कित निवासे रोगापनयने च' इत्यस्मात् 'गुप्तिज्किद्भ्यः सन् ३।१।५' इति रुक्प्रतीकारे स्वार्थे सन्। कितेश्चोदात्तेत्सु पाठात् सन्नन्तादपि परस्मैपदमेव, न त्वात्मनेपदमिति सिद्धान्तः॥ ११९॥

असौ महीभृद्बहुधा(—) तु(—) मण्डित-
स्तया निजोपत्यकयेव कामपि।
भुवा कुरङ्गेक्षणदन्तिचारयो-
र्बभार शोभां कृतपादसेवया॥ १२०॥

असाविति॥ असौ महीभृन्नलस्तु पुनर्बहुधानेकप्रकारं मण्डितो नानारत्नादिभिरलंकृतस्तया भैम्या कामप्यातिशयितां शोभां बभार। किंभूतया—कुरङ्गवद्धरिणवदीक्षणं विलोकनम्, दन्तिवद्धस्तिवच्चारो गतिः, तयोर्भुवा स्थानभूतया हरिणाक्ष्या गजगत्या च। तथा—कृता भर्तुः पादसेवा यया। कया क इव—निजोपत्यकया पर्वतासन्नभूम्या महीभृत्पर्वत इव। बहुभिर्गैरिकादिधातुभिर्मण्डितः। किंभूतयोपत्यकया—हरिणानामीक्षणस्य, हस्तिनां भक्षणस्य गमनस्य वा स्थानभूतया। तथा—कृता प्रत्यन्तपर्वतानां सेवा आश्रयणं यया। कृता प्रत्यन्तपर्वतैः सेवा यस्या इति वा॥ १२०॥

तदेकतानस्य नृपस्य रक्षितुं
चिरोढया भावमिवात्मनि श्रिया।
विहाय सापत्न्यमरञ्जि भीमजा
समग्रतद्वाञ्छितपूर्तिवृत्तिभिः॥१२१॥

तदिति॥ चिरोढया चिरकालं ध्रियमाणया। अथ च—चिरपरिणीतया श्रिया राज्यलक्ष्म्या तदेकतानस्य तदेकनिष्ठस्य भैमीतत्परस्य नृपस्यात्मनि स्वविषये भावमनुरागं रक्षितुं स्थिरीकर्तुमिव सापत्न्यमेकभर्तृकस्त्रीद्वयान्योन्येर्ष्यां विहाय समग्राणां तस्या भैम्या वाञ्छितानां पदार्थानां पूर्तिः पूरणं तस्यां वृत्तिभिर्वर्तनैरुपायैः कृत्वा भीमजाऽरञ्जि प्रीणिता। संपद्वैभवेन दुर्लभान्यपि तद्वाञ्छितानि नलेन पूरितानि, ततश्च सा परितुष्टेति भावः। अन्याऽपि चिरपरिणीता विदुषी नवोढायामनुरक्तस्वामिन आत्मन्यनुरागरक्षणार्थं सापत्न्यं त्यक्त्वाऽऽत्मनो ज्यैष्ठ्यं रक्षयन्ती सती नवोढाया हितकरणेन प्रीतिं जनयति॥ १२१॥

मसारमालावलितोरणां पुरं
निजाद्वियोगादिव लम्बितालकाम्।
ददर्श पश्यामिव नैषधः प्रिया-
मथाश्रितोद्ग्रीविकमुन्नतैर्गृहैः॥ १२२॥

मसारेति॥ अथ बहुमार्गलङ्घनानन्तरं नैषधः पुरं प्रियामिव ददर्श। किंभूतां पुरम्—मसारमालावलिरिन्द्रनीलमालापरम्परा एवाम्रदलादिरचितमालारूपाणि तोरणानि यस्याम्। इन्द्रनीलमालावलियुक्तानि तोरणानि बहिर्द्वाराणि यस्यास्ताम्। तथा—अत एव—निजाद्वियोगाल्लम्बितालकामिव प्रसाधितचूर्णकुन्तलामिव। था—उन्नतैरत्युच्चैर्गृहैः कृत्वा आश्रिताङ्गीकृता उद्ग्रीविका ऊर्ध्वीकृतकण्ठतया विलोकनं यथा स्यादेवं पश्यामिव विलोकिकामिव। उच्चगृहत्वाद् दूरत एव दृष्टवानित्यर्थः। 'पथाम्' इति पाठे मार्गाणां पश्यामिव। अन्यापि नायिका प्रोषिते नायकेऽप्रसाधितालका सती उद्ग्रीविकया प्रियागमनमार्गान्पश्यति। मसाराणां नीलत्वादलकत्वम्। पश्यामिति, 'कर्तृकर्मणोः कृति २।३।६५' इति कर्मणि षष्ठी॥ १२२॥

पुरीनिरीक्षान्यमना मनागिति
प्रियाय भैम्या निभृतं विसर्जितः।
ययौ कटाक्षः सहसा निवर्तिना
तदीक्षणेनार्धपथे समागमम्॥ १२३॥

पुरीति॥ अयं मत्प्रियो मनाक् ईषत्पुरीनिरीक्षया अन्यमना दत्तचित्त इति हेतोरस्मिन्नवसरेऽयं सम्यङ् निरीक्षितुं शक्यत इति बुद्ध्या भैम्या प्रियाय प्रियं वीक्षितुं निभृतं गुप्तं यथा तथा विसर्जितः प्रेपितः निजः कटाक्षः सकलां पुरीमविलोक्यैव किंचिन्निरीक्ष्य भैम्यनुराग-

---

१ वियोगस्य वाडवत्वेन रूपणात् मातृपुत्रीसम्बन्धस्य समुद्रत्वं व्यज्यते, तेन रूपकेण रूपकध्वनिः। २ इवेत्युत्प्रेक्षा।

१ इवेत्युत्प्रेक्षा। २ अत्र श्लिष्टोपमा।

बाहुल्यात्सहसा असमय एव पुरीनिरीक्षणान्निवर्तिना शीघ्रं परावृत्तेन तदीक्षणेन नलकटाक्षेण सहार्धपथ एव समागमं संबन्धं ययौ । उभावपि परस्परानुरागेण क्षणमात्रमप्यवलोकनान्तरायं न सहेते स्मेति भावः । नितरामनुरागः सूचितः । 'पुरीं निरीक्ष्य' इति पाठे पुरीं निरीक्ष्य ईषदन्यमनाः किमिति बुद्ध्वा प्रेषितः । रहस्यं ज्ञातुं दूतोऽपि गुप्तं प्रेष्यते । प्रियाय, 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः ५ । २ । ३ । १४ ।' इति चतुर्थी ॥ १२३ ॥

**अथ नगरधृतैरमात्यरत्नैः**
**पथि समियाय स जाययाऽभिरामः ।**
**मधुरिव कुसुमश्रिया सनाथः**
**क्रममिलितैरलिभिः कुतूहलोत्कैः १२४॥**

अथेति ॥ अथ पुरसमीपप्राप्त्यनन्तरं जायया कृत्वाभिरामो मनोहरः स नलो नगरे धृतैः स्थापितैरमात्यरत्नैः सह पथि समियाय मेलनं प्राप । किंभूतैः—कुतूहले भैमीसहितनलदर्शनकौतुके विषय उत्कैरुत्कण्ठितैः । तेन वा उदूर्ध्वं कं शिरो येषाम् ऊर्ध्वीकृतशिरोभिः । कः कैरिव—कुसुमश्रिया चम्पकादिपुष्पशोभया सनाथो रमणीयो मधुर्वसन्तः क्रमेण वसन्तागमपरिपाट्या मिलितैर्मध्वास्वादकौतुकेनोत्कण्ठितैरलिभिर्भ्रमरैरिव । यथा संयुज्यते तथेत्युपमा ॥ १२४ ॥

**कियदपि कथयन्स्ववृत्तजातं**
**श्रवणकुतूहलचञ्चलेषु तेषु ।**
**कियदपि निजदेशवृत्तमेभ्यः**
**श्रवणपथं स नयन्पुरीं विवेश १२५॥**

कियदिति ॥ स नलः पुरीं विवेश । किं कुर्वन्—स्वयंवरवृत्तान्तश्रवणकुतूहलचञ्चलेषु तेषु मन्त्रिप्रवरेषु कियदपि स्वसम्बन्धि वृत्तजातं स्वदूत्येन्द्रादिमायाप्रभृतिरूपं मुख्यं वृत्तान्तं संक्षेपेण कथयन् । तथा—कियदपि निजदेशवृत्तं स्वराष्ट्रे जातमेभ्योऽमात्येभ्यः सकाशाच्छ्रवणपथं नयन्नाकर्णयन् । ग्रामगतजातिः । 'अमुत्र—'इति पाठे 'अदः परस्मिन्नत्रापि' इति वचनादमुत्रेत्यनेन व्यवहितोऽपि स्वयंवरः परामृश्यते ॥ १२५ ॥

**अथ पथि पथि लाजैरात्मनो बाहुवल्ली-**
**मुकुलकुलसकुल्यैः पूजयन्त्यो जयेति ।**
**क्षितिपतिमुपनेमुस्तं दधाना जनाना-**
**ममृतजलमृणालीसौकुमार्यं कुमार्यः १२६॥**

अथेति ॥ अथ पुरप्रवेशानन्तरं जनानां कुमार्योऽकृतविवाहाः कन्यास्तं क्षितिपतिमुपनेमुः समीपमागत्य नमश्चक्रुः । किंभूताः—पथि पथि प्रतिमार्गमात्मनो बाहुवल्लीनां भुजरूपलतानां मुकुलकुलेन कलिकावृन्देन सकुल्यैस्तत्तुल्यैर्लाजैर्मङ्गलद्रव्यतया शकुनदर्शनेन जय सर्वोत्कर्षेण वर्तस्वेति शब्दपूर्वं पूजयन्त्यः । तथा—अमृतजलैः जाताया मृणाल्या बिसस्येव सौकुमार्यं मार्दवं दधानाः । पुरप्रवेशे शकुनार्थं कुमार्य इत्युक्तम् । सकुल्यैः दिगादित्वाद्यत् ॥ १२६ ॥

**अभिनवदमयन्तीकान्तिजालावलोक-**
**प्रवणपुरपुरन्ध्रीवक्त्रचन्द्रान्वयेन ।**
**निखिलनगरसौधाट्टावलीचन्द्रशालाः**
**क्षणमिव निजसंज्ञां सान्वयामन्वभूवन् १२७**

अभीति ॥ निखिलानां नगरसंबन्धिनां सौधानां सुधाधवलितगृहाणामट्टावल्य उपरितनगृहविशेषपङ्क्तयस्तासामप्युपरि चन्द्रशालास्तृतीयशिरोगृहाः । अट्टावलीनां गवाक्षविवराणि वा । ता अभिनवा नवोढा दमयन्ती तस्याः कान्तिजालस्यादृष्टपूर्वस्यावलोके प्रवणानामुत्सुकानां पुरपुरन्ध्रीणां वक्त्रचन्द्रस्यान्वयेन संबन्धेन कृत्वा क्षणमिव क्षणमात्रं यावत्तन्मुखसंबन्धस्तावत्पर्यन्तं निजसंज्ञां स्वीयं नाम मुखचन्द्रसंबन्धतया सान्वया चन्द्रयुक्ताः शालाः गृहाणि चन्द्रशालाः, चन्द्राणां वा संबन्धिन्यः शालाः इति योगसहितामन्वभूवन् । सान्वयामिवेति वोत्प्रेक्षा । सर्वा अपि पुरनार्यो गवाक्षविवरैर्भैमीमपश्यन् । तानि च तन्मुखचन्द्रसंबन्धेन यौगिकत्वेन कविनोत्प्रेक्षितानि ॥ १२७ ॥

---

१ अत्र मनोति यमकम्, तदीक्षणेनेति सहोक्तिः । विशेषणसाम्यात्पुर्याः कान्तात्वं व्यज्यत इति समासोक्तिः । २ अत्राग्रिमे च पद्ये पुष्पिताग्रा छन्दः, 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा, इति तल्लक्षणात् । मधुरिवेत्युपमा ।

१ अत्र परिकरः, स्वभावोक्तिर्वा । २ अतः प्रभृति पद्यपञ्चके मालिनीवृत्तम् । अन्यधर्मस्यान्यत्रायोगेऽपि तथोक्तिः साम्यावसायिकेति दधाना इति निदर्शना । ३ क्षणमित्यभूतोपमा, चन्द्रशालानामभेदेऽपि तथोक्ताभेदाध्यवसायादतिसाम्यं व्यज्यते ।

निषधनृपमुखेन्दुश्रीसुधां सौधवाता-
यनविवरगरश्मिश्रेणिनालोपनीताम् ।
पपुरसमपिपासापांसुलत्वोत्परागा-
ण्यखिलपुरपुरन्ध्रीनेत्रनीलोत्पलानि २८

निषधेति॥अखिलानां सकलानां पुरपुरन्ध्रीणां नगरस्त्रीणां नेत्राण्येव नीलोत्पलानि निषधनृपस्य मुखेन्दुश्रीस्तल्लक्षणां सुधाममृतं पपुः सादरमालोकन्त। किंभूतां सुधाम्—सौधवातायनानां विवरेभ्यश्छिद्रेभ्यो गच्छन्त्यो बहिर्निर्गच्छन्त्यो रश्मिश्रेणयो नयनकिरणपङ्क्तयस्तद्रूपा ये नाला बिसयुक्तत्वादल्पजलपानसाधनभूताः कमलनालदण्डास्तैरुपनीतां नेत्रसमीपं प्रापिताम् । किंभूतानि नीलोत्पलानि—असमयाऽतुल्ययाऽतिभूयस्या पिपासया पानेच्छया पांसुलत्वं शुष्कत्वं सोत्कण्ठतरत्वं च तेनैवोत्कृष्टा उत्पतन्तो वा परागाः कौसुमरजांसि येषु तानि । गवाक्षविवरैः कृत्वा नलमुखशोभां सर्वा अपि सादरं ददृशुरित्यर्थः। कुमारीणां समीपगत्या, पौरस्त्रीणां च गवाक्षान्तर्गत्या, कौतुकमात्रेण, दृष्टेरार्जवेन कनीनिकानीलरश्मीनां नालारूपाणामुचिततरत्वमुक्तम्। अन्योऽपि पिपासात्यन्तशुष्ककण्ठो दूरस्थं कूपाद्युदकं सच्छिद्रकमलनालादिना पिबति । नत्वेकवारमेव बहु पिबत्यन्तर्हृद्रयपीडाभियो ॥ १२८ ॥

अवनिपतिपथाट्टस्त्रैणपाणिप्रवाल-
स्खलितसुरभिलाजव्याजभाजः प्रतीच्छन् ।
उपरि कुसुमवृष्टीरेष वैमानिकाना-
मभिनवकृतभैमीसौधभूमिं विवेश १२९

अवनीति ॥ एष नलोऽभिनवकृतस्य नूतननिर्मितस्य भैमीसंबन्धिनः सौधस्य शान्तिहोमाद्यलंकृतां भूमिमुपरितनीं वा भूमिं विवेश । किं कुर्वन्—कौतुकविलोकनार्थं गगने स्थितानां वैमानिकानां देवानां कुसुमवृष्टीरुपरि शिरस्यादरेण प्रतीच्छन्स्वीकुर्वन् । किंभूता वृष्टीः—अवनिपतिपथे राजमार्गेऽट्टेषु विपणिस्थेष्वट्टालकेषु वर्तमानानां स्त्रैणानां स्त्रीवृन्दानां पाणिप्रवालेभ्यः स्खलिताः सुरभयः पङ्कजपरिमलविशेषयुक्ता लाजास्तेषां व्याजं मिषं भजन्ति । शकुनार्थं विकीर्यमाणानां लाजानां शुभ्रत्वादूर्ध्वदेशलंघनाच्च पुष्पवृष्टित्वम् । ता अपि पल्लवेभ्यो निर्गच्छन्ति । वैमानिकाः, 'चरति ४।४।८०' इति ठक् ॥ १२९ ॥

इति परिणयमित्थं यानमेकत्र याने दरचकितकटाक्षप्रेक्षणं चानयोस्तत्। दिवि दिविपदधीशाः कौतुकेनावलोक्य प्रणिदधुरिव गन्तुं नाकमानन्दसान्द्राः ॥ १३० ॥

इतीति ॥ दिविषदां देवानामधीशा इन्द्रादयश्चत्वारो देवा नाकं स्वर्गं प्रति गन्तुं प्रणिदधुरिव गन्तुमचिन्तयन्निव । तत्त्वतस्तद्विहाय वाञ्छा नास्त्येवेतीवशब्दः सूचयति । किंभूताः—अनयोर्भैमीनलयोरिति पूर्वोक्तप्रकारं परिणयं विवाहमित्थमुक्तरीत्या च एकत्रैकस्मिन्याने रथे यानं स्थित्वा गमनम्, तथा—दरचकितमीषत्सभयं सलज्जं यत्कटाक्षैरन्योन्यविलोकनं, तच्च एतत्सर्वं दिव्याकाशे स्थित्वा कौतुकेनावलोक्यानन्देन परमहर्षेण सान्द्राः पूर्णाः । 'प्रणिदधुरथ—' इति पाठे तयोर्गृहप्रवेशानन्तरमित्यर्थः। स्वयंवरानन्तरमेव देवा निर्गता इति चतुर्दशे सर्गे यद्यप्युक्तं तथापि भूमेर्निर्गत्य नलपुरप्रवेशपर्यन्तं नलभैमीकौतुकविलोकनार्थं गगने स्थिता इति दिविषदेन सूचितम् । इदानीं पुनः स्वर्गं प्रति निर्गता इत्युक्तेर्न कोऽपि विरोधः । किंचानन्तरसर्गसंगत्यै कलिनलद्वेषारम्भस्याप्रस्तुततां परिहर्तुं नलः पुरं प्रविष्टः, देवाश्च स्वर्गं जग्मुः । गच्छतां च तेषां मध्येमार्गं कलेरुत्तरप्रत्युत्तरदानादिप्रसक्तानुप्रसक्त्यवतरणाय युक्तमुक्तम् ॥ १३० ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्। काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महाकाव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत्षोडशः ॥ १३१ ॥

श्रीहर्षमिति ॥ पूर्वार्धः पूर्ववत् । किंभूते काव्ये—चतुर्दशतयीं विद्यां विदद्भिर्जानद्भिः सरस्वतीजाग्रदधिष्ठानकाश्मीरदेशोद्भवैरपि विद्वद्भिः परीक्षापूर्वं महिते

---

१ अत्र पुरेति यमकं, रूपकम्। इदं तु चिन्त्यम्, नेत्राणां नीलोत्पलत्वेन रूपणं प्रकृते मुखेन्दोः सुधापाने कथमिवोपयुज्यते इति तेन चन्द्रोदयविकासिकमलविशेषाणामेव तथा रूपणं न्याय्यम् । नीलोत्पलानां कैरवकमलोभयस्य साधारणेन वाचित्वमादायेदमुक्तमिति समादधति केचित् । 'दृक्स्फुरत्कैरवाणि' इति पठितुं युक्तमिति परे ।

१ व्याजेत्यपह्नुतिः। २ अत्रानुप्रासः, दिवीति यमकम्, दधुरिवेति चोत्प्रेक्षा।

पूजिते । दोषलेशेनापि रहिते सर्वगुणपूर्णे । तथा—तद्भुवि तस्माच्छ्रीहर्षाद्भवतीति तद्भु । तस्माद्भूरुत्पत्तिर्यस्यैवंविधे वा । 'नैषधेश—' इति पाठे नैषधश्चासावीशश्चेति व्याख्येयम् । काश्मीरैरिति पूजार्थक्तयोगे 'क्तस्य च वर्तमाने' इति षष्ठीविधानात्तृतीया चिन्त्या । 'पूजितो यः सुरैरपि' इत्यादिशिष्टप्रयोगदर्शनाद् 'वर्तमानेऽर्थे विहितस्य क्तस्य योगे षष्ठी भवति, चकारात्प्रयोजनानुरोधेनान्यापि' इति सूत्रार्थं निर्वर्ण्य, 'चतुर्थ्यर्थे बहुलं छन्दसि २ । ३ । ६२' इत्यतो बहुलग्रहणं वानुवर्त्य, काश्मीरैः करणभूतैः, महः पूजा संजातास्येति महित इति तारकादेराकृतिगणत्वात् क्तान्तत्वाभावं वा संपाद्य, क्तान्तत्वेऽपि 'कलहंसरागमहित' इत्यादौ भट्टिप्रयोगे समासदर्शनात्, 'मतिबुद्धिपूजार्थेभ्यश्च ३ । २ । १८८' इति चकाराद् भूतेऽपि शिष्टप्रयोगानुसारेण क्तप्रत्ययमङ्गीकृत्य, 'क्तस्य च वर्तमाने २ । ३ । ६७' इति षष्ठीप्राप्त्यभावात्कर्तरि तृतीयैवेति वा यथाकथंचित्समर्थनीयम्। चतुर्दशतयीमिति 'संख्याया अवयवे तयप् ५।२।४२' इति तयपि 'टिड्ढाणञ्०—४।१।१५' इति ङीप् । विद्वां विदद्भिः 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः । तद्भुवि, भाषितपुंस्कत्वान्नुमभावः । षोडशः पूर्ववत् ॥ १३१ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे षोडशः सर्गः ॥

## सप्तदशः सर्गः ।

अथ नगरीविलासं वर्णयन् पूर्वोत्तरपक्षाभ्यामिव समस्तशास्त्रतत्त्वं निर्णीय सम्भावयति—

अथारभ्य वृथाप्रायं
धरित्रीधावनश्रमम् ।
सुराः सरस्वदुल्लोल-
लीला जग्मुर्यथागतम् ॥ १ ॥

अथेति ॥ अथ स्वर्गगमनचिन्तनानन्तरं धरित्रीं प्रति धावनेन जनितं प्रयासं वृथेव वृथाप्रायं व्यर्थमिवारभ्य विधाय गाधत्वेनानुपलक्षितहर्षविषाद तया । अथ च—तटभूमिं प्रति निष्प्रयोजनभावगमनेन ततः पुनर्यथागतं व्यावर्तनेन च । सरस्वतः समुद्रस्योल्लोलास्तरङ्गास्तद्वल्लीला येषां तत्तुल्याः सुरा आगतमनतिक्रम्य यथागतं स्वर्गं जग्मुः । भैमीमप्राप्यैवं जग्मुरित्यर्थः । भैम्यलाभाच्छ्रमस्य वैयर्थ्यम् । नलभैमीवरदानद्वारात्मगौरवरक्षणात्प्रायशब्दः प्रायोजि, न तु वृथैवेत्युक्तम् । वृथा वृथात्वं प्रायते प्राप्नोति वा वृथाप्रायम् । यथागतम्, अव्ययीभावः । यथा आगतं तथा जग्मुरिति वा ॥ १ ॥

भैमीं पत्ये भुवस्तस्मै
चिरं चित्ते धृतामपि ।
विद्यामिव विनीताय
न विषेदुः प्रदाय ते ॥ २ ॥

तदेवाह—

भैमीमिति ॥ ते देवाश्चिरं चित्ते धृतामपि भैमीं तस्मै भुवः पत्ये नलाय प्रदाय दत्त्वा न विषेदुः पश्चात्तापं न प्राप्ता इत्यर्थः । कस्मै कामिव—विनीताय शिष्याय चिरं चित्ते धृतामभ्यस्तां विद्यामिव । दत्तापि विद्या चित्ताद्यथा नोपरमति, तथा तस्मै दत्तापि सा सगुणतया तेषां चित्तान्नोपरतेति ॥ २ ॥

कान्तिमन्ति विमानानि
भेजिरे भासुराः सुराः ।
स्फटिकाद्रेस्तटानीव
प्रतिबिम्बा विवस्वतः ॥ ३ ॥

कान्तीति ॥ भासुरास्तेजोरूपाः सुराः कान्तिमन्ति रत्नैर्दीप्राणि विमानानि यदृच्छया गामिनो रथान्भेजिरे आरुरुहुः । के कानीव—विवस्वतः सूर्यस्य भासुराः प्रतिबिम्बाः स्फटिकाद्रेः कैलासस्य तटानीव । प्रतितटं प्रतिफलितत्वात्प्रतिबिम्बानां बहुत्वम् । भासुराः 'भञ्जभासमिदो घुरच् ३।२।१६१' इति घुरच् ॥ ३ ॥

जवाज्जातेन वातेन
बलाकृष्टबलाहकैः ।
श्वसनात्स्वस्य शीघ्रत्वं
रथैरेषामिवाकथि ॥ ४ ॥

१ अत्र सर्गे प्रायः समाप्त्यन्तं पथ्यावक्त्रं छन्दः, अस्यैव श्लोकसञ्ज्ञाऽपि 'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥' इत्युक्तेः 'युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्' इति ।

१ सरस्वदित्युपमा । २ विद्यामिवेत्युपमा ।३ अत्र सुरा इति यमकं, तटानीवेत्युपमा ।

-जवादिति ॥ जवाभिजवेगाज्जातेन वातेन कृत्वा बलादाकृष्टाः सहचरीकृता मेघा यैरेषां देवानां रथैः श्वसनाद्वायोः सकाशात्स्वस्यात्मनः शीघ्रत्वं शीघ्रगामित्वं द्रष्टॄणामग्रेऽकथीव कथितमिव। आकृष्टबलाहकस्य वायोः पश्चाद्गामित्वात्पुरश्चलितानां रथानां शीघ्रत्वमित्यर्थः। शीघ्रशब्दोऽत्र धर्मिवचनः। वेगजेन वातेन गमनेनेति वा। वाधातोः 'नपुंसके भावे क्तः ३।३।११४।' इति भावे क्तः। श्वसनात्, 'पञ्चमी विभक्ते २।३।४२।' इति पञ्चमी। अकथीत्यत्र कथयतेरदन्तत्वान्न वृद्धिः[1] ॥ ४ ॥

क्रमाद्दवीयसां तेषां
तदानीं समदृश्यत।
स्पष्टमष्टगुणैश्वर्यात्
पर्यवस्यन्निवाणिमा ॥ ५ ॥

क्रमादिति ॥ क्रमाद्गमनाद्दवीयसां दूरतराणां तेषां तदानीमणिमाणुत्वं स्पष्टं प्रकटं समदृश्यत। किंभूत इव —अष्टानां गुणानामणिमादीनामैश्वर्यादाधिपत्यात्पर्यवस्यन्निव[2]। पृथग्भूत इव। सर्वेभ्यो महिमादिभ्यो गुणेभ्यः पृथग्भूतत्वादिव स्पष्टं दृष्ट इत्यर्थः। स्थूलमपि वस्तु दूरत्वात्सूक्ष्मं दृश्यते। तेषामष्टौ गुणा विद्यन्ते तन्मध्येऽणिमैव तस्मिन्समये स्पष्टो दृष्टः, नत्वन्य इत्यर्थः। तस्मिन्काले पर्यवस्यन्स्फुटीभवन्निति वा। स्पष्टमुत्प्रेक्षे। तेषां रथानामिति वा देवानामष्टगुणैश्वर्यात्तत्संबन्धाद्रथेष्वप्यणिमा समागत इति व्याख्येयम्। दवीयसामातितरां दूराणाम्, ईयसुनि 'स्थूलदूर०–६।४।१५६' इति परयणादिलोपे पूर्वस्य गुणः। अणिमा पृथ्व्यादिः ॥ ५ ॥

ततान विद्युता तेषां
रथे पीतपताकताम्।
लब्धकेतुशिखोल्लेखा
लेखा जलमुचः क्वचित्[1] ॥ ६ ॥

ततानेति ॥ क्वचित्कस्मिंश्चिदाकाशप्रदेशे लब्धः केतुशिखया ध्वजाग्रेणोल्लेखो योगो यया तत्संबन्धात्कृतविद्युत्प्राकट्येति यावत्। एवंविधा जलमुचो मेघस्य लेखा पङ्क्तिस्तेषां देवानां रथे विद्युता कृत्वा पीता पताका यस्य तद्भावं ततान ध्वजाग्रसंबन्धात्प्रकटिता विद्युद् ध्वजाग्रे पीता पताकेवाभूदित्यर्थः ॥ ६ ॥

पुनःपुनर्मिलन्तीषु
पथि पाथोदपङ्क्तिषु।
नाकनाथरथालम्बि
बभूवाभरणं धनुः ॥ ७ ॥

पुनरिति ॥ इतस्ततो गमनवशात्पथि पुनः पुनः मिलन्तीषु सम्बध्यमानासु पाथोदा मेघास्तेषां पङ्क्तिषु वर्तमानं धनुरिन्द्रधनुर्मार्गसंबन्धवशान्नाकनाथरथमालम्बते एवंशीलं सम्बद्धं सदिन्द्ररथस्यैवाभरणं भूषणं बभूव[2]। इन्द्ररथे वर्तमानं धनुरागच्छन्तीषु मेघपङ्क्तिषु क्षणं भूषणमभूदिति वा। मेघा हि सेन्द्रचापाः शोभन्ते इति 'तथोक्तम्' ॥ ७ ॥

जले जलदजालानां
वज्रिवज्रानुबिम्बनैः।
जाने तत्कालजैस्तेषां
जाताऽशनिसनाथता ॥ ८ ॥

जल इति ॥ जलदजालानां जले तस्मिन्काले इन्द्रादिगमनसमये जातैर्वज्रिणो वज्रस्तस्यानुबिम्बनैः प्रतिबिम्बैः कृत्वा तेषां मेघजलानामशनिना वज्रेण सनाथता सस्वामिकता सदृशता च जातेति जाने। ततस्तस्मात्कालात्' प्रभृति प्रायेण मेघानां सवज्रत्वमित्युत्प्रेक्षा ॥ ८ ॥

स्फुटं सावर्णिवंश्यानां
कुलच्छत्रं महीभुजाम्।
चक्रे दण्डभृतश्चुम्बन्
दण्डश्चण्डरुचिं क्वचित् ॥ ९ ॥

स्फुटमिति ॥ दण्डभृतो यमस्य दण्डः क्वचिदाकाशदेशे चण्डरुचिं सूर्यं चुम्बन्स्पृशन्सन् तं सूर्यमेव सावर्णेर्मनोर्वंशे जातानां महीभुजां कुलच्छत्रं कुलश्रेष्ठम्, अथ च—कुलक्रमायातं राजचिह्नं स्फुटमिव चक्रे स्वयं वृतत्वात्, अधो दण्डसंबन्धात्, छत्रमिवेत्युत्प्रेक्षा

[1] अत्रानुप्रासः, अकथीवेत्युत्प्रेक्षा च। [2] पर्यवसन्निवेत्युत्प्रेक्षा।

[1] अत्रानुप्रासः, 'लेखा' इति यमकं च। शिखोल्लेखा इत्युपमा च। [2] बभूव, न तु ततः पूर्वं तदात्मकमभूदित्युत्प्रेक्षा गम्या। जीवातुकारास्तु 'तादृशासम्बन्धे सम्बन्धोक्तातिशयोक्तिरलङ्कारः। इत्याहुः। [3] अत्र श्लेषानुप्राणितोत्प्रेक्षा।

ते सूर्यमण्डलं प्राप्ता इति भावः । उदये अस्तमये च समानो वर्णोऽस्य स सवर्णः सूर्यस्तस्यापत्यं सावर्णिः, 'अत इञ् ४।१।९५' । वंश्यः, 'दिगादिभ्यो यत् ४।३।५४०' इति ॥ ९ ॥

नलभीमभुवोः प्रेम्णि
विस्मितायां दधौ दिवः ।
पाशिपाशः शिरःकम्प-
स्रस्तभूषाश्रवःश्रियम् ॥ १० ॥

नलेति ॥ पाशिपाशो वरुणपाशो नलभीमभुवोरनन्यतुल्ये प्रेम्णि विषये विस्मिताया दिवो विस्मयवशादेव शिरःकम्पेन स्रस्ता भूषा भूषणं यस्मादेवंविधस्य श्रवसः कर्णस्य श्रियं लक्ष्मीं दधौ । तस्यास्ताटङ्करहितः कर्ण इव शुशुभ इत्यर्थः । अनेन दिवो नायिकात्वं व्यज्यते ॥ १० ॥

पवनस्कन्धमारुह्य
नृत्यत्तरकरः शिखी ।
अनेन प्रापि भैमीति
भ्रमं चक्रे नभःसदाम् ॥ ११ ॥

पवनेति ॥ पवनस्य चन्द्रसूर्याद्याधारेष्वावहादिषु सप्तसु स्कन्धेषु मध्ये ताराचक्राधारभूतं स्कन्धमारुह्य नृत्यत्तरा उद्गच्छन्तः कराः किरणा ज्वालारूपा यस्य स शिखी वह्निरनेनाग्निना भैमी प्रापीति नभःसदां देवानां भ्रमं चक्रे । भैमीप्राप्तिहर्षादयं नृत्यति किमिति सर्वेषां देवानां भ्रान्तिर्जातेत्यर्थः । अन्योऽपि नववधूलाभे कस्यचिन्मित्रस्य स्कन्धमारुह्य नृत्यत्करो भवति ॥ ११ ॥

तत्कर्णौ भारती दूनौ
विरहाद्भीमजागिराम् ।
अध्वनि ध्वनिभिर्वैणै-
रनुकल्पैर्व्यनोदयत् ॥ १२ ॥

तत्कर्णाविति ॥ भारती वाणी भीमजागिरां भैमीवाणीनां विरहाद्दूनौ संतप्तौ तेषां देवानां कर्णावध्वनि मार्गेऽनुकल्पैर्भैमीवाण्याः सकाशान्न्यूनैर्वैणैर्वीणासंबन्धिभिर्ध्वनिभिर्व्यनोदयत्सुखिनौ चकार । मुख्याभावेऽनुकल्पोऽपि कार्यार्थमङ्गीक्रियते । 'स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण' इति वचनात्कर्णाविति प्रतिनियतापेक्षं द्विवचनम् ॥ १२ ॥

अथायान्तमवैक्षन्त
ते जनौघमसित्विषम् ।
तेषां प्रत्युद्गमप्रीत्या
मिलद्व्योमेव मूर्तिमत् ॥ १३ ॥

अथेति ॥ अथ वाणीवीणाक्वणितश्रवणानन्तरं ते देवीदेवा असित्विषं खड्गतुल्यकान्तिमायान्तं संमुखमागच्छन्तं जनौघमवैक्षन्तापश्यन् । उत्प्रेक्षते—तेषां देवानां प्रत्युद्गमनस्य प्रीत्या वाञ्छया मिलद्युज्यमानं मूर्तिमत्सशरीरं व्योमाकाशमिव । यतः—सशरीरस्य क्रियावत्त्वं युक्तम् । 'जनौघं मषीत्विषम्' इत्यपि पाठः ॥ १३ ॥

अद्राक्षुराजिहानं ते स्मरमग्रेसरं सुराः ।
अक्षाविनयशिक्षार्थं कलिनेव पुरस्कृतम् ॥ १४ ॥

अद्राक्षुरिति ॥ ते सुरा अग्रेसरं पुरःसरमाजिहानमागच्छन्तं स्मरमद्राक्षुः । उत्प्रेक्षते—तज्जनौघस्वामिना कलिनाक्षाणामिन्द्रियाणाम् । अथ च—द्यूतपाशकानाम् । संबन्धिनोऽविनयस्याविनीतत्वस्य शिक्षार्थं पुरस्कृतमिवाग्रेकृतमिव । अथ च—पूजितमिव । स्मरो हीन्द्रियवैकृतं कर्तुं जानातीतीन्द्रियार्थाक्षशब्दच्छलेन द्यूते पाशकेषु विषये नलमविनयं शिक्षयितुं पाशकाज्ञानद्वारा नलं निग्रहीतुं कलिना पूजितः पुरः प्रेषितश्च । प्रायेणेत्युत्प्रेक्षा ॥ १४ ॥

अगम्यार्थं तृणप्राणाः पृष्ठस्थीकृतभीह्रियः ।
शम्भलीभुक्तसर्वस्वा जना यत्पारिपार्श्विकाः ॥

अगम्येति ॥ एवंभूता जना यस्य कामस्य परितः पार्श्वयोश्चरन्तीति पारिपार्श्विकाः । वयस्या इत्यर्थः । सेवका वा । किंभूताः—गन्तुमशक्यानामनर्हाणां राज्ञ्यादीनां मात्रादीनां च संभोगार्थं तृणमिवानायासत्याज्या प्राणा येषां ते । अत एव—पृष्ठस्थीकृते पश्चात्कृते परित्यक्ते भीह्रियौ यैस्ते । वधभयं पापभयं लोकलज्जा च, तत्सर्वं यैस्त्यक्तं ते तादृशाः । निर्भया निर्लज्जाश्चेत्यर्थः । तथा—अप्राप्याभेद्यस्त्रीभेदनकृतप्रतिज्ञाभिः शम्भलीभिः कुट्टनीभिर्भुक्तं सर्वस्वं येषां ते । सन्तीति शेषः । पारिपार्श्विकः पूर्ववर्ती ॥ १५ ॥

---

१ स्फुटमित्युत्प्रेक्षा, अनुप्रासश्च । २ अत्राप्यनुप्रासः । ॰श्रियं दधावित्युपमा गम्या । ३ चक्र इवेत्युत्प्रेक्षा गम्या ।

१ अनुकल्पैरिति व्यतिरेकः । २ मूर्तिमदिवेत्युत्प्रेक्षा । ३ पुरस्कृतमिवेत्युत्प्रेक्षा । ४ तृणप्राणा इत्युपमा ।

विभर्ति लोकजिद्भावं बुद्धस्य स्पर्धयेव यः ।
यस्येशतुल्यैवात्र कर्तृत्वमशरीरिणः ॥ १६॥

विभर्तीति ॥ यः स्मरो लोकाञ्जयतीति लोकजित्तस्य भावं सर्वजनविजयितां विभर्ति । उत्प्रेक्षते—बुद्धस्य स्पर्धयेव । जिनो हि माराजिदिति स्वशत्रुस्पर्धयेव 'मारजिल्लोकजिज्जिनः' इत्यभिधानाल्लोकजित्पदवाच्यत्वं बिभर्तीत्यर्थः । तथा—यस्याशरीरिणः शरीररहितस्य दग्धदेहत्वादनङ्गस्यात्र लोके कामिनां मनोविकारं प्रति मैथुनद्वारा सर्वजनान्प्रति वा कर्तृत्वं स्रष्टृत्वम् । अत्राप्युत्प्रेक्षते—विश्वकर्तुरीशस्य तुल्ययेव स्पर्धयेव । ईश्वरो हि स्मरहरत्वात्स्मरस्य शत्रुः । तस्मात्तत्स्पर्धयेव तस्याशरीरकर्तृत्वं स्वयमविनवेनाङ्गीकृतमित्यर्थः । यथा—अशरीरिण एवेश्वरस्य कर्तृत्वमिति न्यायविदः, तथा—अयमप्यनङ्ग एव सत्कार्यकारीत्यर्थः । जिनमहेशाभ्यां जितोऽपि लोकजित्त्वेनाशरीरकर्तृत्वेन च यः पुनस्ताभ्यां समः । एवंविधोऽतिबलवानिति भावः ॥ १६ ॥

ईश्वरस्य जगत्कृत्स्नं
सृष्टिमाकुलयन्निमाम् ।
अस्ति योऽस्त्रीकृतस्त्रीक-
स्तस्य वैरं स्मरन्निव ॥ १७ ॥

ईश्वरस्येति ॥ अस्त्रीकृताः शस्त्रीकृताः स्त्रियो येन एवंविधो यः कामः स ईश्वरस्य इमां सृष्टिमीश्वरेण निर्मितं कृत्स्नं जगदाकुलयन्नन्यवृत्ति चेतः स्ववशं कुर्वन् । अथ च—पीडयन् । अस्ति । उत्प्रेक्षते—तस्येश्वरस्य देहदाहजनितं वैरं स्मरंश्चिन्तयन्निव । देहदाहो ममानेन कृतः तस्मादेतेन रचितमेतदीयं जगत्पीडयिष्यामीति बुद्ध्येश्वरस्य किंचिदपकर्तुमसमर्थः तदा जगत्स्त्रीरूपेण शस्त्रेण पीडयंस्तेन सह स्पर्धते इत्यर्थः । प्रत्यनीकाग्रे अस्त्री कृता। आयुधीकृता स्त्री येनेति स्त्रिया अस्त्रीत्वकरणे विरोधाभासश्च । अथवा—या ईश्वरेण स्त्री कृता सानेनास्त्री कृतेत्यपि प्रतिकूलाचरणेनेश्वरेण सह स्पर्धते । अथवा—ईश्वरेणापि त्रिपुरवधे मोहिनी स्त्री शस्त्रीकृतानेनापि स्त्री शस्त्रीकृतेत्येकविषयतया स्पर्धा । शक्तिरूपो हि श्रीविष्णुस्त्रिपुरवधे भगवता शरतां नीत इत्यागमः । 'अनुस्मरन्' इति पाठे गम्योत्प्रेक्षा । सृष्टिशब्दो नियतस्त्रीलिङ्गः । तत्परामर्शार्थं इमामिति निर्देशः । अस्त्रीकृतेत्यत्रानन्तरमस्त्रं कृतास्त्री कृतेति 'च्वौ च ७।४।२६' इतीकारः । पक्षे—न स्त्री अस्त्री, अस्त्रीकृता स्त्री येनेति समासः । 'नद्यृतश्च ५।४।१५३' इति कप् । इति कुलकम् ॥ १७ ॥

चक्रे शक्रादिनेत्राणां
स्मरः पीतनलश्रियाम् ।
अपि दैवतवैद्याभ्या-
मचिकित्स्यमरोचकम् ॥ १८ ॥

चक्र इति॥ स्मरः कामः पीतनलश्रियां सादरदृष्टनलशोभानां शक्रादिनेत्राणामिन्द्राग्न्यादिनेत्राणां दैवतवैद्याभ्यां नासत्याभ्यामपि न चिकित्स्यं प्रतिकर्तुमशक्यमरोचकं रुच्यभावं चक्रे । अधिकरूपस्य नलस्य दृष्टत्वात्, तद्धीनरूपे स्मरे दृष्टे तन्नेत्राणां प्रीतिर्न जाता । न केवलं स्मरं दृष्ट्वा न प्रीतास्ते, किंतु दस्रावपि । तयोरपि नलाद्धीनत्वादित्यर्थः । स्मरदस्रेभ्योऽपि नलोऽधिक इति ध्वन्यते । स्मरमनादृत्य पुरश्चलिता इति भावः।अथवा—अरोचकं सर्वथान्नादिरुच्यभावो रोगविशेषः । स कर्मजत्वाद्देववैद्याभ्यामपि चिकित्सितुमशक्यः किं पुनर्नृवैद्यैरिति समासोक्तिः । भङ्ग्यन्तरेण नलरूपातिशयप्रकाशे तात्पर्यमुक्तम् । उपमानतिरस्कारात्प्रतीपं च । पीतनलश्रियामिति 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ७।१।७५' इति पुंवद्भावान्नपुंसकह्रस्वत्वाभावान्नुडभावः। अचिकित्स्यमिति शक्यार्थे 'अचो यत् ३।१।९७' इति यत्। 'दुश्चिकित्स्यम्' इति पाठे कर्मणि खल् । दुर्नञर्थः खलर्थयोगात् 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ ।६९' इति षष्ठीनिषेधात् 'वैद्याभ्याम्' इति तृतीया । अरोचकमिति रोगाख्यायां बाहुलकादस्त्रियामपि ण्वुल्॥१८॥

यत्तत्क्षिपन्तमुत्कम्प-
मुत्थायुकमथारुणम् ।
बुबुधुर्विबुधाः क्रोध-
माक्रोशाक्रोशघोषणम् ॥ १९ ॥

यत्तदिति ॥ अथ स्मरदर्शनानन्तरं यत्तत्किंचिल्लोष्टकाष्ठपाषाणादि क्षिपन्तम् परप्रहारार्थं मुञ्चन्तम् । नितरां सर्वाङ्गकम्पिनम् जनैर्वार्यमाणम् उत्कम्पं अथापि उत्थायुकम् आवेशातिशयात्केशाकेशि योद्धुं पौनःपुन्येनोत्तिष्ठन्तम्

---

१ स्पर्धयेवेत्युत्प्रेक्षा ।

---

१ स्मरन्निवेत्युत्प्रेक्षा । २ श्रीपानायोगेऽपि तथोक्तेरतिशयोक्तिः । एवं दैवतवैद्याभ्यामप्यरोचकस्याचिकित्स्य-

अरुणं लोहितीभूतसर्वाङ्गम्, क्रोशं मर्यादीकृत्याभिव्याप्य वा आक्रोशस्य घोषणं परनिन्दावाक्यस्य उच्चैर्घुष्टं यस्य । अतिदूरश्रूयमाणपरुषभाषिणमिति यावत् । एवंभूतं (सशरीरं) क्रोधं (तत्र जनौघे) विबुधाः ते देवा बुबुधुः बुबुधिरे । एतैश्चिह्नैः क्रोधोऽयमिति ज्ञातवन्त इत्यर्थः । क्रोधाक्रान्तस्य जातिरियम् । 'आक्रोशाक्रोशभूषणम्' इति चतुर्थपादपाठे आक्रोशं क्रोशपर्यन्तं य आक्रोशः दुर्भाषणं स भूषणं यस्येत्यर्थः । उत्थायुकामिति पूर्ववत् ॥ १९ ॥

यमुपासन्त दन्तोष्ठ-
क्षतासृक्शिष्यचक्षुषः ।
भ्रुकुटीभुजगीनाद-
निभनिश्वासफूत्कृतः ॥ २० ॥

यमिति ॥ दन्तैरोष्ठयोर्यो व्रणस्तज्जं यद्रक्तं तस्य शिष्यभूते तस्मादिव संक्रान्तलौहित्ये लक्षणया तत्तुल्ये नेत्रे येषां ते । तथा—भ्रुकुटी भ्रुवोराक्षेपः संकोचः सैव भुजगी तस्या नादः फूत्कारस्तत्तुल्याः संरम्भनिर्गच्छन्नासापवनानां फूत्कारा येषामेवंभूता जना यं सेवन्ते । तं बुबुधिरे इति पूर्वेण सम्बन्धः । क्रोधवशाद्दन्तैरोष्ठौ दश्येते नेत्रे रक्ते जायेते । तेन श्वासफूत्काराश्च निर्गच्छन्ति । यस्य सेवका एवंविधा इत्यर्थः । रूपकम् । क्षतशोणितस्य, चक्षुःस्थितेस्तद्गुणः ॥ २० ॥

दुर्गं कामाशुगेनापि
दुर्लङ्घ्यमवलम्ब्य यः ।
दुर्वासोहृदयं लोका-
न्सेन्द्रानपि दिधक्षति ॥ २१ ॥

दुर्गमिति ॥ यः क्रोधो मदनबाणेनापि लङ्घयितुमशक्यमत एव दुर्गम् । अथ च—गिर्यादिविषमदुर्गरूपम् । एवंभूतं रुद्ररूपस्य दुर्वाससो मुनेर्मानसमाश्रित्य शक्रादिसहितान्सप्तापि लोकाञ्शापाग्निना दग्धुमिच्छति । दुर्वासा हि सर्वदा क्रोधाविष्टः सर्वमपि शापाग्निना दग्धुमिच्छति । अन्योऽपि क्षुद्रो बाणेनाप्राप्यमतिविषमं गिर्यादिदुर्गमाश्रित्य सर्वानपि पीडयति । रूपकं, समासोक्तिश्च ॥ २१ ॥

वैराग्यं यः करोत्युच्चै रञ्जनं जनयन्नपि ।
सूते सर्वेन्द्रियाच्छादि प्रज्वलन्नपि यस्तमः ॥

वैराग्यमिति ॥ यः क्रोधो नितरां मुखादिलौहित्यं कुर्वन्यावत्स्वकार्यं करोति तावदुद्वेगमपि जनयति । तथा नितरां प्रदीप्तोऽभिवृद्धोऽभिभवेच्चक्षुरादीनि सर्वाणि बाह्याभ्यन्तरेन्द्रियाण्याच्छादयत्येवंशीलमज्ञानमप्युत्पादयति । प्रसिद्धं तम आलोकाभावाच्चक्षुरिन्द्रियमेवाच्छादयति रूपाग्रहणात्, नतु रसादीनि । तमस्यपि रसगन्धादीनां ग्रहणस्य सर्वसाक्षिकत्वात् । इदं तु क्रोधवशान्मनसोऽनवस्थानात्सहकारिसंनिधानाभावाच्चक्षुरादीनां रूपादिस्वविषयग्रहणासामर्थ्यजननात्सर्वेन्द्रियाच्छादि । एवमाश्चर्यजनकं तमश्च यः सूत इत्यर्थः । अपी परस्परसमुच्चयार्थौ । अथ च—यो हिंसादौ प्रीतिं जनयन्महानिष्टोत्पादनानुशयात्प्रायश्चित्तार्हत्वनिदानभूतं वैराग्यं जनयति । अथ च पूर्वोक्तप्रकारेण वैराग्यं फलभूतं जनयितुं रञ्जनं करोति । प्रज्वलितुं च तमः सूत इति वा यथाकथंचिद्धेतौ शत्रा व्याख्येयम् । अथवा—अपी विरोधार्थौ । यो लौहित्यं च जनयति, यश्च प्रीतिमुत्पादयति स एवाप्रीतिमिति कथम् । यश्च प्रकर्षेण दीपस्तेजोरूपः सोऽन्धकारं रञ्जनं च कथं सूते, तत्रापि सर्वेन्द्रियाच्छादिनमिति विरोधाभासौ वैराग्यशब्दस्य लौहित्याभावप्रीत्यभावार्थश्लेषात्, तमःशब्दस्य चान्धकारार्थश्लेषात् । तत्परिहारस्तूक्तप्रकारेण ॥ २२ ॥

पञ्चेषुविजयाशक्तौ भवस्य क्रुध्यतो जयात् ।
येनान्यविगृहीतारिजयकालनयः श्रितः ॥ २३ ॥

पञ्चेष्विति ॥ पञ्चेषुविजयाशक्तौ कामजयविषये अभिनिवेशाभावादशक्तौ सत्यां कुप्यतो महेश्वरस्य जयात्स्ववशीकरणाद्धेतोर्येन क्रोधेन परेण प्रारब्धविग्रहे शत्रौ स्वजयस्य समयः तत्पराभवारम्भसमयः स इत्येवंरूपो नीत्युपदेशोऽङ्गीकृतः । अन्यदा यो जेतुमशक्यः सो-

—त्वासम्भवेऽपि तथोक्तेः सैव । १ अत्रानुप्रासः, क्रोशेति यमकं च । २ अत्र रूपकम् ।

१ अत्र रूपकं समासोक्तिश्चेति व्याख्यातारः । तत्र हृदयस्य श्लेषमहिम्ना दुर्गत्वेन रूपणाद्रूपकम् । स्वभावोक्तिस्तु दुर्वासोहृदयस्य विनाऽपि कारणं तथाभूतत्वादिति विभाव्यम् । २ क्रोधस्य तमोरूपत्वमुक्त्वाऽपि ततो व्यतिरेकवचनात्ततोऽप्यस्य व्यतिरेको व्यज्यते ।

ऽन्येन विगृहीतो यदा भवति तदा जय्यो भवतीति नीत्युपदेशः । अन्यदा जेतुमशक्यस्य भवस्य स्मरेण सह विग्रहसमये जितत्वाच्छ्रित इवेत्युत्प्रेक्षा । महेश्वरोऽपि येन स्ववशीकृतः, तस्य क्रोधस्य माहात्म्यमशक्यवर्णनमिति भावः । विगृहीतारिजय इति सप्तमीसमासः । अरेर्जयकाल इति षष्ठीसमासो वा । पञ्चभिः कुलकम् ॥ २३ ॥

इतः परं कुलकम्—

हस्तौ विस्तारयन्निभ्ये
विभ्यदर्धपथस्थवाक् ।
सूचयन्काकुमाकूतै-
र्लोभस्तत्र व्यलोकि तैः ॥ २४ ॥

हस्ताविति ॥ इभ्ये धनिनि विषये द्वावपि पाणी लोभात्प्रसारयन्, दास्यति न वेति हेतोर्भयं प्राप्नुवन् अत एवार्धपथस्था वाक् हृदयान्निर्गत्य कण्ठमागत्य मुखादनिःसरन्ती वाणी यस्यैवंभूतः, तथा—आकूतैर्निजदैन्यज्ञापकैश्चेष्टितैः काकुं शोकभयादिजन्यं ध्वनिविकारं सूचयञ्ज्ञापयन् । खण्डोक्तिं वदन्निति यावत् । तथा—अङ्गुलीमुखनिक्षेपादिचेष्टितैर्देहि देहीत्यादिभयदैन्यादिवक्रितां वाणीं वदन्, एवंभूतो मूर्तो लोभस्तत्र जनौघे तैर्देवैर्दृष्टः । यत्तु—धनिनि बिभ्यदिति । तदव्याख्यानम् । 'भीत्रार्थानां भयहेतुः १।४।२५' इति पञ्चमीप्रसङ्गात् । 'इभ्य आढ्यो धनी स्वामी' 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इति चामरः । लुब्धस्येयं जातिः[२] ॥ २४ ॥

दैन्यस्तैन्यमया नित्य-
मत्याहारामयाविनः ।
भुञ्जानजनसाकूत-
पश्या यस्यानुजीविनः ॥ २५ ॥

दैन्योति ॥ नित्यं दैन्यस्तैन्यमया सदा दीनत्वचौरत्वे प्रचुरे येषु तादृशा दैन्यचौर्यरूपा वा, तथा—जाठरवह्न्यननुपाहारगौरवादजीर्णरसत्वान्नित्यं दीर्घरोगिणः, तथा—अयमेव सकलं भोक्ष्यते मह्यं भोक्तुं न दास्यति, कीदृग्घृतं दधि च मह्यं किं वितीर्यम्, असौ च किमित्यादिदुष्टदृष्याशयादिनाऽभ्यवहरतो लोकस्य साभिप्रायं विलोकका एवंभूता यस्य लोभस्य सेवकाः स व्यलोकीति पूर्वेण संबन्धः । इयमपि जातिः । स्तैन्येति 'स्तेनाद्यन्नलोपश्च ५।१।१२५' इत्यत्र 'स्तेनात्' इति योगविभागात्ष्यञ् । आमयावीति, 'सर्वत्रामयस्योपसंख्यानम्' इति दीर्घश्च ॥ २५ ॥

धनिदानाम्बुवृष्टेर्यः
पात्रपाणाववग्रहः ।
स्वान्दासानिव हा निःस्वा-
द्विक्रीणीतेऽर्थवस्तु यः ॥ २६ ॥

धनीति ॥ संप्रदानभूतब्राह्मणहस्ते विषये समृद्धधनानां नराणां संकल्पसंबन्धिजलवर्षणस्य यो लोभः प्रतिबन्धकः । वृष्टेश्चावग्रहः सम्भाव्यते । महाधनिकोऽपि यद्वशात्पात्रपाणौ जलं न वितरतीत्यर्थः । तथा—निःस्वान्निर्धनात् हेतोः स्वानात्मनः स्वीयान्पुत्रदारादीन्वा । धनिकेषु विषये निर्गतस्नेहाभिमानः कश्चन विनिमये स्ववशवर्तिनो दासीपुत्रानिव यो विक्रीणीते वितरति । हा खेदे । निःस्वेन च लोभवशादात्मनो दासा यथा स्वेच्छया धनार्थं विक्रीयन्ते, तथेत्यर्थः । अवग्रहः पूर्ववत् ॥ २६ ॥

एकद्विकरणे हेतू
महापातकपञ्चके ।
न तृणे मन्यते कोप-
कामौ यः पञ्च कारयन् ॥ २७ ॥

एकेति ॥ ब्रह्मवधादिपञ्चमहापातकसङ्घमध्ये एकस्य महापातकस्य द्वयोश्च करणे क्रमेण कारणभूतौ यस्माद् अत एव तयोरल्पकार्यकारित्वादुभौ कोपकामौ यो लोभस्तृणतुल्यावपि न मन्यते यतः—स्वयं पञ्चापि महापातकानि नरादिना कारयन् । कोपाच्च योऽपि ब्राह्मणो हन्यते, तस्यैकं ब्रह्मवधं प्रति हेतुत्वम्, कामात्—गुरुतल्पगमनम्, स्त्रीकामाच्च तद्भर्तुर्ब्राह्मणस्य वधश्चेति महापातकद्वयं प्रति तस्य हेतुत्वम् । धनादिलोभात्तु—ब्रह्मवधः, सुवर्णस्तेयं च । रसलोभात्सुरापानम् । कामलोभात्स्त्रीजातिप्रदर्शितधनलोभाद्वा गुरुतल्पगमनम्, इष्टसंग्रहलोभादेतैश्चतुर्भिरपि सह संसर्ग इत्येवं लोभस्य पञ्चापि

१ श्रित इवेति प्रतीतेरुत्प्रेक्षा गम्या प्रत्यनीकं च, 'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः ।' इति तल्लक्षणात् । २ ककारानुप्रासोऽत्र ।

१ अत्र दैन्यस्तैन्येत्यादावनुप्रासः, उपमा च । २ दासानिवेत्युत्प्रेक्षा ।

महापातकानि प्रति हेतुत्वादधिकत्वात्कोपकामावप्यार्किंचित्करौ मन्यते। ताभ्यामप्यधिको लोभ इति भावः। 'एकद्वि—' इति द्वन्द्वत्वाड्डजभावः। 'संख्याया अल्पीयस्याः' इत्येकशब्दस्य पूर्वनिपातः। यदा तु एकं वा द्वौ वा प्रमाणं येषामिति समासे 'बहुव्रीहौ संख्येये डजबहुगणात् ५।४।१३' इति डच्प्रसङ्गस्तदा 'एकद्व—' इति पाठो युक्तः। तृणे इति, 'मन्यकर्मण्यनादरे विभाषाप्राणिषु २।३।१७' इति चतुर्थ्या वैकल्पिकत्वात्पक्षे द्वितीया ॥ २७ ॥

> यः सर्वेन्द्रियसज्ञापि
> जिह्वां बह्ववलम्बते।
> तस्यामाचार्यकं याच्ञा-
> बटवे पाटवेऽर्जितुम् ॥ २८ ॥

यः सर्वेति ॥ यो लोभः सर्वेन्द्रियाणि षडिन्द्रियाणि सज्ञानि यस्य एवंविधः। घ्राणं गन्धलुब्धम्, चक्षू रूपलुब्धमित्यादिप्रकारेणेत्यर्थः। अपि बहु यथा भवति तथा जिह्वामवलम्बते। किं कर्तुम्—तस्यां जिह्वायां याच्ञाबटवे याच्ञावटुर्ब्रह्मचारी शिष्यस्तस्मै पाटवे पटुत्वविषये याच्ञाचाटूक्तिकौशले आचार्यकं गुरुत्वमर्जितुम्। लुब्धस्यैषा रीतिः। अयमत्र तात्पर्यार्थः—यो लोभो दुर्वाचे विप्रियवाक्यवचनाय यत्सामर्थ्यं नैपुण्यं तद्विषये गुरुतां विधातुमिवास्याः सकाशात्प्रियवचनसंभाषणाभ्यासं कर्तुमिव शिष्यभूतः तामातितरां सेवत इत्यर्थः। लोभवशात्सर्वोऽपि याच्ञाप्रियवाक्यानि ब्रूत इति भावः।'याच्ञाव टवे पटवे' इति पाठे पटुने दृढाय याच्ञाव ( च ) टव इत्यर्थः। याच्ञा चाटुपाटवे विषये स्वस्या गुरुतां विधातुमिवोत्प्रेक्षा। 'योपधाद्गुरूपोत्तमाद्वुञ् ५।१।१३२' इति वुञि 'आचार्यकम्' इति साधु। 'वटवे पटवे' इति भाषितपुंस्कम्। इति पञ्चभिः कुलकम् ॥ २८ ॥

> पथ्यां तथ्यामगृह्णन्त-
> मन्धं बन्धुप्रबोधनाम्।
> शून्यमाश्लिष्य नोज्झन्तं
> मोहमैक्षन्त हन्त ते ॥ २९ ॥

पथ्यामिति ॥ हितां सत्यां बन्धुना मातापित्रादिना कृतां प्रबोधनां सत्कर्म कुरु, असन्माकार्षीरित्यादिरूपां प्रवर्तनामङ्गीकुर्वाणम्। यतः—अन्धमज्ञानबहुलम्। तथा—शून्यम् अलीकमप्रामाणिकमिति यावत्, शुक्तिं रजतत्वेनेव। अनात्मभूतानि जडान्यपि देहेन्द्रियादीन्यविद्याविलासवशादात्मत्वेन आश्लिष्य प्रतिपद्य सहस्रशो बोध्यमानमपि न त्यजन्तम् एवंभूतं मोहं ते देवास्तत्र जनौघे ददृशुः। हितस्य प्रियस्य चानङ्गीकरणात्, आश्लिष्टशून्यापरित्यागाच्च। 'हन्त' इत्याश्चर्ये खेदे वा। मूढस्येयं प्रकृतिः ॥ २९ ॥

> श्वः श्वः प्राणप्रयाणेऽपि
> न स्मरन्ति स्मरद्विषः।
> मग्नाः कुटुम्बजम्बाले
> बालिशा यदुपासिनः ॥ ३० ॥

श्वः श्व इति ॥ यस्य मोहस्य सेवका बालिशा मूर्खाः। अथवा स्वयंप्रज्ञत्वाभिमानात्, परोपदेशानङ्गीकाराच्च शिशुभूताः। एवंभूता जनाः पुत्रकलत्रादिरूपकुटुम्बरूपे कर्दमे मग्ना ब्रुडिता अपि मृतोऽहम्, अयं पुत्रः किं करिष्यति, इदं कलत्रं वा किं करिष्यति, अस्य क्षेत्रादेः किं भविष्यतीत्यादिप्रकारेण पुत्रादियोगक्षेमविचारणामात्रपराः शिश्नोदरपरायणाः सन्तः परेद्यवि। अतिसंनिहित इति यावत्। 'जातस्य हि ध्रुवो मृत्युः' इत्यादिवचनप्रामाण्यादनातुरत्वेऽपि संनिहिते प्राणगमने ज्ञाते। संनिपातादिनातुरत्वेऽपि वा श्वः प्राणप्रयाणे निश्चिते सत्यपि संसारसमुद्रतारकं स्मरहरं न ध्यायन्ति। किंतूक्तप्रकारेण मरणसमयेऽपि कुटुम्बचिन्तामेव कुर्वन्तीत्यर्थः। इदमपि मूढलक्षणम्। जम्बाले निमग्नोऽन्योऽपि किमपि न स्मरति। 'श्वःश्वः' इति वीप्सायां द्विः। 'श्वः स्वप्राण—'इति पाठे स्वस्य प्राणानामित्यर्थः। स्मरद्विषः इति 'अधीगर्थदयेशां कर्मणि २।३।५२' इति कर्मणि षष्ठी। 'द्विषम्' इति पाठे कर्मत्वविवक्षया द्वितीया ॥ ३० ॥

> पुंसामलब्धनिर्वाण-
> ज्ञानदीपमयात्मनाम्।
> अन्तर्म्लापयति व्यक्तं
> यः कज्जलवदुज्ज्वलम् ॥ ३१ ॥

१ तृणे इत्युपमा गम्या। २ टवे इति यमकम्। यत्त्वाहुर्जीवातुकाराः—अत्रोपमोत्प्रेक्षाभ्यां संजातीयकाभ्यां वाक्यार्थयोः शब्दहेतुत्वाच्छब्दार्थहेतुकं काव्यलिङ्गमलङ्कारः सङ्कीर्यते इत्यलङ्कारत्रयस्य परस्परसम्बन्धेनाङ्गाङ्गिभावः इति तत्र नोपमा न वोत्प्रेक्षा वाच्या, किन्तु गम्ये एवेति बोध्यम्।

१ अत्रानुप्रासः। २ अत्रानुप्रासः। स्मरेति यमकं च।

पुंसामिति ॥ यो मोहो न लब्धं निर्वाणं विनाशो येन स ज्ञानरूपो दीपस्तन्मयस्तत्प्रचुर आत्मा मनो येषां वसिष्ठादीनां ज्ञानिनां पुंसामुज्ज्वलमप्यन्तर्निर्मलमप्यन्तःकरणं व्यक्तं प्रकटं म्लापयति मलसहितं करोति । मोहमोहिताः कामाधीनाः सन्तो ज्ञानिनोऽपि विश्वामित्रादयः स्वमनो मेनकादिदेवाङ्गनाप्रवणं चक्रुः । पूर्वमुज्ज्वलस्यापि मनसो मोहेन मालिन्यं कृतम् 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति ॥' इत्यादि मार्कण्डेयवचः प्रमाणम् । न लब्धः साक्षात्कृतो निर्वाणोपयोगी मोक्षोपयोगी ज्ञानदीपकरूपः स्वप्रकाशज्ञानरूप आत्मा यैस्तेषामद्वैतज्ञानरहितानामिति वा । किमिव—कज्जलवत् यथा मध्ये स्थापितस्य दीपस्य कज्जलं सुधाधवलितानां घटादीनां मध्यं मलिनयति ॥ ३१ ॥

ब्रह्मचारिवनस्थायि-
यतयो गृहिणं यथा ।
त्रयो यमुपजीवन्ति
क्रोधलोभमनोभवाः ॥ ३२ ॥

ब्रह्मेति ॥ ब्रह्मचारी, वनस्थायी वानप्रस्थः, यतिः संन्यासी, एते त्रयोऽपि आश्रमिणो गृहिणं गृहस्थं यथा-शनाच्छादनार्थमुपजीवन्ति सेवन्ते । 'यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् । गृहस्थैरेव धार्यन्ते तस्माज्ज्येष्ठो गृहाश्रमी ॥' इति स्मार्तवचनात् । तं लक्ष्यीकृत्य वा प्राणधारणं कुर्वन्ति, तथा—क्रोधलोभमनोभवा यं मोहं सेवन्ते यं लक्ष्यीकृत्य वा स्वरूपं लभन्ते । मूढ एव क्रुद्धो लुब्धः कामी च भवति ॥ ३२ ॥

जाग्रतामपि निद्रा यः
पश्यतामपि योऽन्धता ।
श्रुते सत्यपि जाड्यं यः
प्रकाशेऽपि च यस्तमः ॥ ३३ ॥

जाग्रतामिति ॥ यो मोहो जाग्रतां सावधानानामपि निद्राविवेकरूपं निश्चेतन्यम् । तथा—यः पश्यतां चाक्षुषज्ञानवतामप्यन्धता चक्षुराच्छादनाद्द्रष्टव्यदर्शनाभावरूपं सदसद्वस्त्वग्रहणम् । संसारस्यानित्यदुःखरूपतां जानतामपि तदपरित्यागहेतुत्वादज्ञानरूप इत्यर्थः । तथा—यः श्रुते शास्त्राधिगमे सत्यपि मूढत्वेन ज्ञेयानुरूपं जाड्यम् । विधिनिषेधाद्यनिर्णयरूप इत्यर्थः । तथा—यश्च प्रकाशे सौराग्नेयचाक्षुषाद्यालोके सत्यपि द्रष्टव्यघटपटाद्याच्छादनरूपतयान्धकाररूपः । प्रकटेऽप्यर्थे प्रतीतिप्रतिबन्धक इत्यर्थः ॥ ३३ ॥

कुरुसैन्यं हरेणेव
प्रागलज्जत नार्जुनः ।
हतं येन जयन्काम-
स्तमोगुणजुपा जगत् ॥ ३४ ॥

कुर्विति ॥ तमोगुणजुषाज्ञानरूपतमोगुणसेविना येन मोहेन हतं जगज्जयन्कामो नालज्जत । क इव—तमोगुणजुषा आश्रिततमोगुणेन हरेण संहारकारकेण रुद्रेण प्राप्तकालतया प्राक् हतं ग्रस्तं कुरुसैन्यं पश्चाद्विनाशयन्नर्जुन इव । मया हतमित्यभिमानेन लज्जां नाप । अन्येन हतस्य पश्चात्त्वेन हनने हि लज्जा युक्ता । सा तु कामस्य न जातेत्यर्थः । मूढ एव कामपरवशो भवतीत्यर्थः । ईश्वरः प्राक्कुरुसैन्यं शूलेन हन्ति, पश्चाच्छरेणार्जुन इति द्रोणपर्वकथा । इति कुलकम् ॥ ३४ ॥

चिह्निताः कतिचिद्देवैः
प्राचः परिचयादमी ।
अन्ये न केचनाचूड-
मेनःकञ्चुकमेचकाः ॥ ३५ ॥

चिह्निता इति ॥ अमी कामादयः कतिचित्कतिपयैर्देवैरिन्द्रादिभिः प्राचः पूर्वजातात्परिचयात्पटुतरात्संसर्गाच्चिह्निताः चिह्नैर्निश्चिताः । देवानामपि कामाद्यायत्तत्वात्प्राचीनः परिचयः । अन्ये तदुपजीविनो बौद्धादयः केचन विशेषेण न ज्ञाताः । यतः—आचूडं शिखामभिव्याप्य मर्यादीकृत्य वा एनसा पापरूपेण कञ्चुकेन मेचकाः श्यामवर्णाः । यो हि नीलवस्त्रादिना वृतदेहः स विशेषतो न लक्ष्यते । श्यामत्वान्न बुद्धा इत्यर्थः ॥ ३५ ॥

तत्रोद्घूर्ण इवार्णोधौ
सैन्येऽभ्यर्णमुपेयुषि ।
कस्याप्याकर्णयामासु-
स्ते वर्णान्कर्णकर्कशान् ॥ ३६ ॥

तत्रेति ॥ उद्घूर्णे त्यक्तमर्यादेऽर्णोधौ समुद्र इवातिगभीरे तत्र सैन्ये तस्मिन्कलिसैन्येऽभ्यर्णमुपेयुषि सामीप्यं

---

१ ज्ञानदीपेति रूपकम् । २ यथेत्युपमा ।

१ अत्र विरोधाभासानुप्राणितं रूपकम् । २ अर्जुन इवेत्युपमा । कालविचारापेक्षणं तु प्रकृतोपमाविरुद्धम् । ३ अत्रानुप्रासः ।

गते सति ते देवाः कस्याप्यनुपलक्षिताकारस्य चार्वाकस्य कर्णकर्कशान्वर्णानाकर्णयामासुः । अभ्यर्णम्, 'अभेश्चाविदूर्ये ७।२।२५' इति नेट् । 'गुरी उद्यमे' मर्यादाधारणे उद्यमत्यागिनीत्यर्थः ॥ ३६ ॥

तानेव वर्णानाह—

**ग्रावोन्मज्जनवद्यज्ञफलेति श्रुतिसत्यता ।**
**का श्रद्धा तत्र धीवृद्धाः कामाध्वा यत्खिलीकृतः ॥**

ग्रावेति ॥ ग्रावोन्मज्जनवत् 'ग्रावाणः प्लवन्ते' इति प्रतिपादितपाषाणतरणवज्ज्योतिष्टोमादियज्ञानां साध्ये स्वर्गादौ फलेऽपि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुतीनां सत्यता यथार्थता । ग्रावोन्मज्जनवाक्यस्य प्रत्यक्षबाधितत्वात्, यागानन्तरमेव स्वर्गादेरदृष्टत्वाज्ज्योतिष्टोमादियागप्रतिपादिका श्रुतिरपि प्रत्यक्षबाधिता । तथाच 'यागश्रुतिरप्रमाणम् प्रत्यक्षविरुद्धत्वाद्ग्रावोन्मज्जनश्रुतिवत्' इति प्रयोगाद्यागश्रुतेरपि स्वर्गादावसत्यतेति च व्याख्येयम् । अत्र विरुद्धलक्षणया सत्यतेत्यस्याऽसत्यतेत्यर्थः । एवमन्येषामपि वेदवाक्यानां श्रुतित्वाविशेषादप्रमाणत्वे हे धीवृद्धा बुद्धिमन्तो देवास्तत्र फले श्रुतौ वा युष्माकं का श्रद्धा कथमास्तिक्यम् । अपि त्वाप्रामाणिकेऽर्थे श्रद्धा न कार्या । यद्येन कारणेन यद्वशाद्वेदोक्तविध्यातिक्रमभिया कामाध्वा यदृच्छाचारमार्गः खिलीकृतो बद्धः । त्यक्त इत्यर्थः । श्रुतिमात्रस्याप्रमाणत्वाद्यज्ञे यजमानर्त्विजां कतिचिदहानि यद्ब्रह्मचर्यं तदप्यप्रामाणिकत्वात्त्यजतेति भावः । 'धीवृद्धाः' इत्युपहासे । अतिमूर्खा भवन्त इत्यर्थः ॥ ३७ ॥

**केनापि बोधिसत्त्वेन जातं सत्त्वेन हेतुना ।**
**यद्वेदमर्मभेदाय जगदे जगदस्थिरम् ॥ ३८ ॥**

केनेति ॥ केनाप्यज्ञातनाम्ना बोधिसत्त्वेनातिप्राज्ञेन जिनभट्टारकेण वेदस्य मर्मभेदाय रहस्यभङ्गाय जातमुत्पन्नम् । वेदमर्मभेदः कर्तुमारब्ध इति यावत् । कथमत आह—यद्यस्मात्सत्त्वेन हेतुना सत्त्वरूपेण लिङ्गेन यत्सत्तत्क्षणिकम्, यथा घट इत्यादिरूपेण जगदस्थिरं क्षणिकं जगदे प्रत्यपादि । सत्त्वलिङ्गेन विश्वस्य क्षणिकत्वसिद्धावुभयलोकगतं स्थिरमेकं कर्तारमधिकारिणमाश्रित्य वेदैर्विहितानां विधिनिषेधानां निराश्रयतया वेदस्याप्रामाण्यापादनाद्वेदमर्मभेदः कृत इत्यर्थः । बौद्धसिद्धान्तस्तु ग्रन्थान्तराद्बोद्धव्यः । विस्तरभयादत्र नोक्तः । अथ वक्ता पूर्वस्माद्भिन्नः । चार्वाक एव वा स्वमतं वेदाप्रामाण्यं बौद्धसंवादेन द्रढयति—केनेति । सत्त्वेन हेतुना यस्माज्जगदस्थिरं जगदे । तस्मात्केनापि लोकोत्तरप्रज्ञेन तेनैव चार्वाकेण वेदमर्मभेदाय बौद्धेन जातम् । तदीयमताङ्गीकरणात्तद्रूपेणैव जातमित्यर्थः । 'जगाद' इति पाठे यद्बोधिसत्त्वं जगदस्थिरं जगादेति व्याख्येयम् । क्षणिकत्वे सिद्धे येन पापं कृतं, स नष्ट एवेति किमिति पापाद्भयमित्यादि प्रकरणाज्ज्ञेयम् ॥ ३८ ॥

**अग्निहोत्रं त्रयी तन्त्रं त्रिदण्डं भस्मपुण्ड्रकम् ।**
**प्रज्ञापौरुषनिःस्वानां जीवो जल्पति जीविका ॥**

अग्नीति ॥ नित्यं काम्यं च सायंप्रातर्होमरूपमग्निहोत्राख्यं कर्म त्रयी च तन्त्रं मीमांसा, वेदत्रयसम्बन्धि वा यत्तन्त्रं वेदविहितोऽन्योऽपि कर्मकलापः, तथा—त्रयो दण्डा यत्र तत्पाशुपतव्रतम्, तथा—भस्मनः पुण्ड्रकः तिलको यत्रैवंविधं शैवादिव्रतम् एतत्सर्वं प्रज्ञाया बुद्धेः पौरुषेण सामर्थ्येन तीक्ष्णया प्रज्ञया निःस्वानां दरिद्राणां हीनानामित्यर्थः । प्रज्ञया पौरुषेण च वा हीनानां, वञ्चनेन चौर्येण च बलाद्वा ग्रहीतुमसमर्थानां पुरुषाणां जीविका जीवनोपायः । तद्वेषधारणाधर्मेण द्रव्यमर्जयितुमेव । न तु तात्त्विको धर्मः परलोकसाधनम् । एवं वेदप्रामाण्यवादिनां भवति । जीवो बृहस्पतिर्जल्पति वदति । वाक्यार्थः कर्म । तदुक्तं तेनैव—'अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मपुण्ड्रकम् । बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥' इति । तस्मादग्निहोत्राद्यप्रमाणमेवेति भावः । 'जीविका' इति धात्वर्थनिर्देशे ण्वुल् ॥ ३९ ॥

**शुद्धिर्वंशद्वयीशुद्धौ पित्रोः पित्रोर्यदेकशः ।**
**तदानन्तकुलादोषाददोषा जातिरस्ति का ॥ ४० ॥**

इदानीं ब्राह्मण्यादिजातिधर्मानसहमानो जातिं दूषयति—

शुद्धिरिति ॥ विशुद्धमातापितृजन्यत्वं ब्राह्मण्यादेर्लक्षणम् । सा शुद्धिर्दुर्निरूपा । यद्यस्मात्पित्रोर्मातापित्रोर्यौ पितरौ मातामहपितामहौ, मातामहीपितामह्यौ च, तयोरेकशः प्रत्येकं वंशद्वयीशुद्धौ सत्याम्, एवं तयोरपि पितृपितामहीमातृपितामह्यादिमातामहमातुः, पितामह्यादिमातामहीमातुः, पितामह्यादेश्चशुद्धौ सत्याम् । एवं ब्रह्माणं

1 अत्रानुप्रासः । 2 मज्जनवदित्युपमा ।

1 जातमित्यभेदाध्यवसायेनोक्तम् । 2 अत्र जीविकात्वेन रूपणाद्रूपकम् ।

यावत्प्रत्येकं शुद्धौ सत्यां शुद्धिः परीक्षणीया । तत्तस्मादनन्तकुला एवमपरिमितवंशभेदा अत एव—दोषादुर्विशेयशुद्धिसंतानस्त्रीपुंसपारम्पर्यतया शुद्धेः संदेहात्, इन्द्रचन्द्रादीनां च पुराणप्रामाण्येन व्यभिचारदर्शनादशुद्धेर्निश्चयाच्च, जातिसंकररूपाद्दोषात्का जातिर्निर्दोषास्ति । अपि तु न कापि । यदाहुः—'अप्येकपङ्क्त्यां नाश्नीयात्संयतैः स्वजनैरपि । को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥' इति । तथा—'अनादाविह संसारे दुर्वारे मकरध्वजे । कुले च कामिनीमूले का जातिपरिकल्पना ॥' इति । तस्मात्संकीर्णयोनित्वात्सर्वा अपि जातयो दुष्टा एवेति जातिधर्मान्विहाय स्वेच्छाचारं कुरुतेति भावः । यद्वा—तस्मादा ब्रह्माणमनन्तानां कुलानामदोषाद्दोषाभावाद्व्यभिचारादिदोषरहिता जातिः स्यात्, सा काप्यस्ति, अपि तु न कापि । पूर्वपूर्वपित्रादिव्यभिचारादिदोषात्सर्वापि जातिर्दुष्टेति व्याख्या । 'यदा तदा' इति पाठः सम्यक् । तयोः पित्रोरनन्तकुलानां दोषाभावेन कृत्वाऽदोषा जातिरस्ति । अपि तु महति कुले कस्यचिद्दोषसंभवात्सर्वापि जातिर्दुष्टैवेत्यर्थ इति व्याख्या । यच्छन्दसामर्थ्यात्तच्छब्दाध्याहारः । एकशः, 'संख्यैकवचनाच्च वीप्सायाम् ५ । ४ । ४३ ।' इति शस् ॥ ४० ॥

**कामिनीवर्गसंसर्गै—र्न कः संक्रान्तपातकः ।**
**नाश्नाति स्नाति हा मोहा—त्कामक्षामव्रतं जगत् ॥**

अन्यदप्याह—

कामिनीति ॥ यस्मात् 'आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा । षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥' इति वचनात्स्त्रीणां पुरुषापेक्षयाऽष्टगुणकामानां कामिनीनां नानाजातीयानां[1] वर्गः सङ्घस्तस्य संसर्गैर्योगैः संबन्धैः कृत्वा कः पुरुषः संक्रान्तं प्रविष्टं पातकं यत्र एवंविधो न । अपितु—'संवत्सरात्तु पतति पतितेन सहाचरन्' इति शास्त्रात्कृतपातकस्त्री संसर्गात्सर्वोऽपि प्राणी संक्रान्तपातक एव । तस्मात्काम्यते कामः फलम्, तेन क्षामं रहितमेकादश्युपवासादिव्रतं नियमो यस्य, मदनेन कृत्वा क्षीणं निष्फलं व्रतं यस्य वा । तज्जगत्सर्वोऽपि लोकः मोहाद्विचाराभावात् । वृथा इति यावत् । न अश्नाति न भुङ्क्ते एकादश्यादौ, वृथैव च स्नाति तीर्थादौ, हा कष्टम् । स्वयं शुचित्वेऽपि स्त्रीव्यभिचारादिदोषसंसर्गात्, स्त्रीणां शुचित्वेऽपि दुष्टसंसर्गात्, सर्वेषां पातकित्वादुपवासादि वृथैव करोति केवलं प्रयास एव तस्य भवतीत्यर्थः । तस्मात्स्वेच्छाचार एव कार्य इति भावः । चार्वाकमते विधिनिषेधाभावात्रेष दोष इत्यर्थः । तेषां सदोषत्वाज्जातिरपि सदोषैवेत्युक्तं भवति । अभिलाषेण कृत्वा नष्टं व्रतं यस्य। एकादश्यां भोजनाभिलाषे सत्यपि न भुङ्क्ते अभिलाषे सत्येवामावास्यादौ स्त्रीनिवृत्तिः, स्नाति च तीर्थादौ, वृथैव कामोपहतत्वादित्यर्थः । बहिः शोधयन्तु, अन्तरशुद्धम् । क्षामेति, 'क्षायो मः ८ । २।५३ ।' ॥४१॥

**ईर्ष्यया रक्षतो नारी-**
**र्धिक्कुलस्थितिदाम्भिकान् ।**
**स्मरान्धत्वाविशेषेऽपि**
**तथा नरमरक्षतः ॥ ४२ ॥**

ईर्ष्ययेति ॥ ईर्ष्ययाऽसहनत्वमात्रेण नारीः अबलाजनान् रक्षतस्तासां परपुरुषदर्शनमपि कर्तुमप्रयच्छतः कुलस्थितिः ब्राह्मण्यादिजातेरसांकर्येणावस्थानं तद्रूपेण दम्भेन चरन्ति ये तान्पुरुषान्स्त्रीरक्षण एव कुलस्थितिं मन्यमानान्धिक् ते निन्द्याः । निन्द्यत्वे दाम्भिकत्वमेव हेतुः । किंभूतान्—स्त्रियः पुरुषाश्च विवेकशून्या यतः, अतः स्मरान्धत्वस्याविशेषे साधारण्ये सत्यपि तथा नारीवन्निर्बन्धेन नरमरक्षतः परदारसङ्गादनिवारयतः । नहि जातिसंकरो नारीणामेव व्यभिचारेण यतः ता एव रक्षणीयाः। किन्तु पुरुषाणामपि व्यभिचारेण । यदि रक्षणीयम्, तर्हि द्वयमपि । न चैवं क्रियते । तस्मादन्यतरस्यैव रक्षणे जातिसंकरस्य तादवस्थ्यात्कुलस्थित्यभावान्नारीमात्ररक्षणं तेषां दम्भ एवेत्यर्थः । तस्मादीर्ष्यां त्यक्त्वा नरस्य वेदयान्तरादाविव, स्त्रीणामपि नरान्तरे प्रवृत्तिप्रातिषेधं मा कुरुवामिति भावः । ईर्ष्यया इत्यनेन ईर्ष्यैवात्र हेतुर्न तु धर्म इति सूचितम् । अथ च स्मरान्धत्वाविशेषेऽपि नारी रक्षतोऽनेकपतिभ्यः, किन्त्वेकमेकस्याः कुर्वतः नरं तु स्त्रीवदरक्षतः । स्त्रिया यथा एक एव पतिः तथा नरस्यैकैव स्त्रीति न, किं तु बह्वीः कुर्वन्ति । तस्मान्निन्द्यास्ते । अत्रापीर्ष्यैव हेतुः ॥ ४२ ॥

**परदारनिवृत्तिर्या**
**सोऽयं स्वयमनाहतः ।**

---

१ अत्रानुप्रासः ।

१ अत्रानुप्रासः । २ अत्र स्वपक्षं स्थापयितुं तथा हेतूपन्यास इति काव्यलिङ्गमित्याहुः ।

अहल्याकेलिलोलेन
दम्भो दम्भोलिपाणिना ॥ ४३ ॥

परेति ॥ परदारेभ्यो या निवृत्तिः, 'ताः सादरं न द्रष्टव्याः, किं पुनः स्प्रष्टव्याः' इत्येतदर्थप्रतिपादकं शास्त्रम्, सोऽयं परवञ्चनरूपो दम्भः, अहल्यया गौतमस्त्रिया सह केलिः कामक्रीडा तत्र लोलेन तत्परेण दम्भोलिपाणिनेन्द्रेण स्वयमात्मनैवानादृत उपेक्षितः । परदारगमनप्रायश्चित्तविभागोऽप्येतेन दूषितः । अन्यं प्रति तन्न कार्यमित्युपदिशन्ति, स्वयं तु तदेव कुर्वन्तीत्युपहासोऽपि सूचितः । अहल्यासंभोगलम्पट इन्द्र एवादाम्भिकः । अन्ये परदारपराङ्मुखाः सर्वेऽपि दाम्भिका एवेति भावः । वज्रहस्तत्वात्परदारमर्शनं कृतवान् । तस्मादयं शास्त्रीयनिषेधो न भवति । किं त्वशक्तत्वाद्दम्भ एवेत्यर्थोऽपि ॥ ४३ ॥

गुरुतल्पगतौ पाप-
कल्पनां त्यजत द्विजाः ।
येषां वः पत्युरत्युच्चै-
र्गुरुदारग्रहे ग्रहः ॥ ४४ ॥

अन्यच्चाह—

गुर्विति ॥ भो द्विजाः यूयं गुरुतल्पगतौ पित्रादिभार्यासंभोगे विषये पापकल्पनाम् 'ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः । एते महापातकिनः—' इत्यादिवचनानुरोधेन महापातकसंभावनां त्यजत । यस्माद्येषां वो युष्माकं पत्युः स्वामिनो द्विजराजस्य चन्द्रस्य देवानां गुरोः वेदादिपाठयितुः बृहस्पतेः दाराः तारा तेषां ग्रहे संभोगे अत्युच्चैरतितरां ग्रहोऽभिनिवेशः।श्रूयत इति शेषः।वेदादिपाठनाद्बृहस्पतेर्देवगुरुत्वम्। तस्मात्तद्भार्यागमने देवस्य चन्द्रस्य दोषलेशोऽपि न । तत्सेवका यूयमपि गुरुतल्पगमनं कामं कुरुतेति भावः । यथोक्तम्—'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥' इति । अयमप्युपहासः । गुरुशब्दच्छलेनैवमुक्तम् । 'महः' इति पाठे उत्सवः । अथ च—तेजःसमूहः गुरुतल्पगमनेऽपि प्रत्यहमुदेत्येव, न तु पतित इत्यर्थः । इन्द्रादिनिकटे वाल्मीकिप्रमुखा द्विजास्तिष्ठन्ति तेषां संबोधनम् । बृहस्पतिभार्यायां गर्भमुत्पाद्य तत्सुतस्वीकारार्थं सोद्यमानिन्द्रादीन्प्रति चन्द्रेण महारणारम्भसंरम्भेण तेजः प्रकटितम् । अनन्तरं ब्रह्मणा गुरुभार्यां त्याजितोऽपि गर्भजं पुत्रं गृहीतवानिति पुराणकथा । 'तल्पं च शयनीये स्यात्तल्पमट्टकलत्रयोः' इति विश्वः ॥ ४४ ॥

पापात्तापा मुदः पुण्यात्
परासोः स्युरिति श्रुतिः ।
वैपरीत्यं द्रुतं साक्षा-
त्तदाख्यात बलाबले ॥ ४५ ॥

'पुण्यो वै पुण्येन कर्मणा, पापः पापेन' इत्यादिश्रुतिं दूषयति—

पापादिति ॥ परागता असवः प्राणा यस्य । मृतस्येत्यर्थः । तस्य प्राणिनः इह कृतान्निषिद्धाचरणजात्पापात्तापाः दुःखानि, पुण्यादिह कृताद्विहिताचरणजाद्धर्मान्मुदः सुखानि स्युः भवन्तीति श्रुतिराह । साक्षात्प्रत्यक्षेण द्रुतं शीघ्रं वैपरीत्यम् । दृश्यत इति शेषः । प्रयागादौ प्रातर्माघस्नानं कुर्वतो भवदभिमतसुकृतकारिणः पुरुषस्य तदानीमेव दुःखं भवति । भवदनभिमतपरदारसंगमादिपापकारिणस्तदानीमेव सुखं भवतीति वैपरीत्यमनुभूयते । अथ च—एवं श्रुतिः श्रवणमात्रम्, न तु तत्र किंचित्प्रमाणम् । किं च मृतस्य किं वा भवतीति को वेद । जीवता तावद्वैपरीत्यमनुभूयते । तत्तस्माच्छ्रुतिप्रत्यक्षयोर्विषये यूयं बलाबले स्वयमेव आख्यात कथयत भवन्त एव विचारयन्त्वित्यर्थः । प्रमाणयोः परस्परविरोधे सबलत्वेन दुर्बलत्वेन च व्यवस्था क्रियते । ततश्च यथा—प्रत्यक्षानुमानविरोधे प्रत्यक्षं बलीयः, तथा—श्रुतिप्रत्यक्षविरोधे प्रत्यक्षमेव बलीय इति निश्चित्य पापात्सुखमनुभूयत इति पापं सर्वैः कार्यमिति भावः।प्रबलदुर्बलत्वव्यवस्थापकस्य न्यायस्याप्ययमुपहासः ॥ ४५ ॥

संदेहेऽप्यन्यदेहाप्ते-
र्विवर्ज्यं वृजिनं यदि ।
त्यजत श्रोत्रियाः सत्रं
हिंसादूषणसंशयात् ॥ ४६ ॥

'संदिग्धेऽपि परे लोके त्याज्यमेवाशुभं बुधैः' इत्यादि प्रतिबन्द्या दूषयति—

संदेह इति ॥ तत्र तत्र व्यभिचरितत्वाच्छ्रुतिप्रामाण्यानिश्चयात्, 'पापं न कार्यं जन्मान्तरे निरयादिदुः-

---

१ अत्राप्यनुप्रासः ।

१ अत्रानुप्रासः । २ अत्राप्यनुप्रासः ।

खभयात्' इत्येके वदन्ति, अन्ये च—येन कृतं स तु दग्धः, अन्यदेहप्राप्तिस्तस्य स्यादित्यत्र का प्रत्याशा, इति वादिविप्रतिपत्तेश्च, अन्यदेहाप्तेः देहान्तरप्राप्तेः संदेहे सत्यपि पाक्षिकोऽपि दोषः परिहर्तव्य इति न्यायेन यदि देहान्तरं स्यात् तर्हि पापफलं दुःखमनुभूयेतेति बुद्ध्या यदि वृजिनं पापं वर्ज्यं सर्वथा न कार्यं तर्हि हे श्रोत्रियाश्छन्दोध्यायिनो वसिष्ठादयो यूयं सत्त्रमनेककर्तृकं यागं मैव कुरुध्वम् । कुतः—पशुहिंसायाः संबन्धिनो दोषस्य संशयात्संदेहात् । ' न हिंस्यात्सर्वा भूतानि ' इति ' अहिंसा परमो धर्मः ' इत्यादि श्रुतिस्मृतिवशा-द्यागेऽपि हिंसा न कार्येत्येके । विधिबलादशङ्कितपापो-त्पत्तिः सा कार्यैवेत्यन्ये इति संदेहे यागीयपशुहिंसा चेत्पापहेतुः स्यात्,तदा नेष्टप्राप्तिः, किन्त्वनिष्टमेव स्यादिति 'पाक्षिकोऽपि दोषः परिहरणीयः' इत्यनेनैव न्यायेन यागमपि त्यजत । न चेदेवं पापमपि कुरुतेति भावः । 'संश्रयात्' इति पाठे संबन्धादित्यर्थः । 'कलुषं वृजिनै-नोऽघमंहो दुरितदुष्कृतम् ।' इत्यमरः ॥ ४६ ॥

यस्त्रिवेदीविदां वन्द्यः
स व्यासोऽपि जजल्प वः ।
रामाया जातकामायाः
प्रशस्ता हस्तधारणा ॥ ४७ ॥

'त्याज्यमेवाशुभं बुधैः' इत्यपि सव्यभिचारमाह—

य इति ॥ यः त्रिवेदीविदां वेदत्रयवेदिनां वो युष्माकं वन्द्यो नमस्करणीयः स व्यासोऽपि इति भार-तादौ जजल्प उक्तवान् । इति किम्—जातकामायाः कामार्तायाः रिरंसोः रामाया अज्ञातकुलशीलाया अपि रमण्या हस्तधारणा पाणिग्रहणमङ्गीकरणं च प्रशस्ता युक्तैव । न केवलं वाल्मीकिः, किन्तु व्यासोऽपीत्यपिश-ब्दार्थः । तद्वचनं पूज्यत्वाद्भवद्भिरङ्गीकर्तव्यमित्यपि सूच्यते । 'स्मरार्तां विह्वलां दीनां यो न कामयते स्त्रि-यम् । ब्रह्महा स तु विज्ञेयो व्यासो वचनमब्रवीत्॥' इत्याद्यर्जुनतीर्थयात्रायां नागाङ्गनासंबन्धावसरे उर्वश्यादि-प्रसङ्गे स्वर्गगमनावसरे च भारतादौ । रामायणे च शूर्पणखाद्युक्तौ प्रसिद्धम् । ततश्च पापं वर्ज्यम्, कार्यमि-त्यप्युच्यते । उभयथापि दोष इति भावः । वेदविदा-मिति, ' कृत्यानां कर्तरि२।३।७१ ' वा इति षष्ठी॥४७॥

१ अत्रहेतुमानित्याहुः । २ अत्रानुप्रासः ।

सुकृते वः कथं श्रद्धा सुरते च कथं न सा ।
तत्कर्म पुरुषः कुर्याद्येनान्ते सुखमेधते ॥ ४८ ॥

युक्त्यन्तरेण पूर्वोक्तमाह—

सुकृत इति ॥ सुकृते चान्द्रायणादौ वो युष्माकं कथं केन हेतुना श्रद्धा आस्तिकता । अपि त्वनुचित-मेतत् । सा च श्रद्धा सुरते कामिनीरतिविषये कथं न किमिति न । अपि तु तया तत्र भवितुं युक्तम् । यस्मात्पुरुषः तत्कर्म व्यापारं कुर्यात् येन कर्मणा कृत्वा अन्ते कर्मावसान एव सुखमेधते । अनुभूयते पुरुषेणेत्यर्थः । जन्मान्तरे व्रतादिजन्यं सुखं संदिग्धम्; सुरतजन्यं च सर्वस्य स्वानुभवसाक्षिकम् । तस्माच्चा-न्द्रायणादि सुकृतं त्यक्त्वा सुरतमेवाङ्गीकर्तव्यमिति भावः । एतेन 'मासैरष्टभिरह्ना च पूर्वेण वयसाऽऽयुषा । प्राज्ञस्तत्कर्म कुर्वीत येनान्ते सुखमेधते ॥' इत्यादि विड-म्बितम् । 'दुरिते च' इति पाठे परदारगमनादावित्य-र्थः । परदारगमनाद्यनन्तरमेव सुखं दृश्यते यतः॥४८॥

बलात्कुरुत पापानि सन्तु तान्यकृतानि वः ।
सर्वान्बलकृतान्दोषानकृतान्मनुरब्रवीत् ॥४९॥

बलादिति ॥ भो द्विजाः, यूयं पापानि परस्त्रीगम-नादीनि बलादनुमतौ असत्यामपि कुरुत । तानि पापानि वः युष्माकं संबन्धीनि कृतान्यप्यकृतानि सन्तु । फलदा यीनि मा भूवन्नित्यर्थः । यतः—मनुः बलेन कृतान्सर्वा-नर्थान्व्यापारानकृतानेवाब्रवीत् । 'बलाद्दत्तं बलाद्भुक्तं बलान्न्यासीकृतं च यत् ।' इत्यन्यार्थमपि मनुवचनं छले-नार्थान्तरपरिकल्पनया प्रकृते निदर्शयन्प्रतिबन्द्या विड-म्बयति ॥ ४९ ॥

स्वागमार्थेऽपि मा स्थाऽस्मि-
स्ती ( र्थे ) थिका विचिकित्सवः ।
तं तमाचरतानन्दं
स्वच्छन्दं यं यमिच्छथ ॥ ५० ॥

स्वागमेति ॥ भोस्तीर्थिकाः संप्रदायागतविद्याः, यूय-मस्मिन्पूर्वोक्तमनुवचनरूपस्वीयागमप्रतिपाद्येऽर्थे प्रमेये 'आत्मारामः स्यात्'इति श्रुत्यर्थे वा विषये विचिकित्सवः संशयालवः मा स्थ न भवथ इदं कार्यं न वेति संशयः परित्याज्य इत्यर्थः । मनुना श्रुत्या वा ईदृक् कथं प्रति-पादितमित्युभयत्राप्यनादरपरा वा मा भवत । तर्हि किं

१ अत्राप्यनुप्रासः । २ अत्र युक्तिमाहुः ।

कार्यमित्यत आह—यूयं यं यमानन्दं परदारगमनादीच्छथ, तं तं स्वच्छन्दं स्वेच्छया निःसंशयमादरेण चाऽऽचरत आत्मारामः स्यामिति श्रुतिप्रामाण्यात्पूर्वोक्तस्मृतिप्रमाण्याच्च संशयं परित्यज्यादरेण यदृच्छया सुखमुपभुङ्ग्ध्वमिति भावः । अस्मदागमे निन्दापराः, तथापि स्वागमे निन्दा न युक्तेत्यपिना सूचितम् । मा निरनुबन्धकः, ततो न लुङ् । ( तीर्थेन आगमेन चरन्तीति तैर्थिकाः 'चरति ४ । १४ । ८' इति ठक् । ) तीर्थसदुपाध्यायः । एषामस्तीति तीर्थिकाः । अस्मिन् पक्षे 'अत इनिठनौ ५। २। ११५' इत्यस्त्यर्थे ठन्[१] ॥५० ॥

**श्रुतिस्मृत्यर्थबोधेषु क्वैकमत्यं महाधियाम् ।**
**व्याख्याबुद्धिबलापेक्षासा नोपेक्ष्या सुखोन्मुखी**

पूर्वोक्तश्रुतिस्मृतीनामर्थमज्ञात्वा त्वयैवमुक्तं व्याख्यानमप्रमाणमित्याशङ्कयाह—

श्रुतीति ॥ श्रुतिस्मृत्यर्थबोधेषु महाधियामप्यैकमत्यमविसंवादः क्वास्ति, अपि तु—सर्वत्रापि विसंवाद एव। बुद्धिबलेन परस्परविजयात् । एवं सति व्याख्या पदार्थवाक्यार्थनिरूपणं बुद्धिबलं प्रज्ञाबलमपेक्षते एवंभूता । यस्य यथा स्फुरति, स तथा व्याख्याति । अत एवाद्वैतवादिनः श्रुतीरभेदपरत्वेन, द्वैतवादिनस्तु भेदपरत्वेन व्याचक्षते ।सा व्याख्या सुखोन्मुख्यनायाससाध्या । अथ च—सुखपर्यवसायिनी । नोपेक्ष्या नानादरणीया । सैवाङ्गीकार्येत्यर्थः । स्वेच्छाचारमेव कुरुतेति भावः । एका समाना अविसंवादिनी मतिः । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्[२] ॥ ५१ ॥

**यस्मिन्नस्मीति धीर्देहे तद्दाहे वः किमेनसा ।**
**क्वापि तत्किं फलं न स्यादात्मेतिपरसाक्षिके ॥**

त्वन्मताङ्गीकारे निरयादिप्राप्तिः स्यादित्याशङ्कयाह—

यस्मिन्निति ॥ यस्मिन्देहे'अहमस्मि' इति धीः गौरः कृश इत्याद्याकारः प्रत्ययस्तस्य शरीरस्य दाहे सति वो युष्माकमेव एनसा पापेन किम् । अपि तु पापेन निरयपातादि किंचिदपि न कार्यते । अयमाशयः—अयं देह एवात्मा, देहातिरिक्तो वा । यद्याद्यः कल्पस्तर्हि येन देहेन पापं कृतं तस्य विनष्टत्वाद्देहात्मवादिनां वः पापेन किं कर्तुं शक्यते। अपि तु—न किंचिदित्यर्थः । अथ देहातिरिक्त एव देहे विनष्टेऽपि देहान्तरे देशान्तरे कालान्तरे च पुण्यपापफलानां भोक्ताऽस्ति ।तत्राप्येवं वक्तव्यम् । स किं स्वसाक्षिकः परसाक्षिको वा । नाद्यः—अहंप्रत्ययस्य देहविषयत्वेनैव सिद्धेः, तदतिरिक्तालम्बनकल्पनानवकाशात् । ततश्च 'तद्दाहे वः किमेनसा' इति पुनरायातम् । द्वितीयं दूषयति—परो वेदादिः साक्षी यस्य तस्मिन्देहान्तरे देशान्तरे कालान्तरे च फलभोक्तरि देहातिरिक्ते वेदप्रतिपादित आत्मनि तस्य पापस्य निरयादि फलं चेत् । स चेत्फलस्य भोक्ता, तर्हि आत्मेति हेतोः । आत्मत्वाविशेषादिति यावत् । तस्मात्क्वाप्यात्मान्तरेऽपि तत्किं न स्यात् । अपि तु भवितव्यमेव । तेन देहेन पातके कृते तदतिरिक्तेनात्मना चेत्फलं भोक्ष्यते तर्हि देवदत्तेन पापे कृत आत्मत्वाविशेषाद्यज्ञदत्तेनापि तत्फलमुपभोक्तव्यमित्यप्यापद्यते । किं च पापफलदुःखानुभवे तस्य देहस्य नाशे तत्पातकफलं देहव्यतिरिक्ते परप्रत्ययवेद्य आत्मनि चेद्भवेत्, तथापि न दोषः । दुःखं ह्युपभुज्यमानं प्रतिकूलं भवति, उपभोक्ता चाहंकारास्पदं देहो विनष्टः, आत्मा तु नोपभोक्तेति फलसंबन्धेऽपि न दोषः । ततश्च पापकारिणो देहस्य विनष्टत्वान्मृत्योरेव चापवर्गत्वान्न कश्चित्फलभोक्तेति । स्वेच्छाचारमेव कुरुतेति भावः । यद्वा—परश्चासौ साक्षी च परसाक्षी स एव परसाक्षिक आत्मेत्यात्मलक्षणे परे देहातिरिक्ते साक्षिणि तटस्थे चेत्तत्फलम्, तर्हि क्वापि पाषाणादौ वा तत्फलं किं न स्यात् । अपि तु स्यादेवात्मत्वाविशेषात् । तस्माद्देहातिरिक्त आत्मा नास्त्येव, देहश्च नष्टः, कस्य पापफलं स्यादिति भावः । यद्वा—क्वापि जन्मान्तरीयदेहान्तरे आत्मास्तीति पापफलं चेत्स्यात्, तर्हि परो देवदत्ताद्यात्मा साक्षी यस्य तस्मिन्नात्मान्तराधिष्ठिते देवदत्तादिदेहेऽपि । परस्य वा देवदत्तादिदेहस्य साक्षिण्यात्मनि किं न स्यात् ? अपि त्वविशेषात्स्यादेवेति । अलमतिप्रसङ्गेन ॥ ५२ ॥

**मृतः स्मरति जन्मानि मृते कर्मफलोर्मयः ।**
**अन्यभुक्तैर्मृते तृप्तिरित्यलं धूर्तवार्तया ॥५३ ॥**

पुनरपि देहातिरिक्तात्मवादिनमुपहसति—

मृत इति ॥ गतप्राणो नष्टशरीरत्वान्निरन्वयध्वस्तपूर्वानुभवसंस्कारोद्बोधोऽपि पूर्वजन्मान्यनेकजन्मतत्कर्मजात्यादीनि पूर्वमहं ब्राह्मणोऽभूवमित्यादीनि स्मरति । मृते च कर्मणां सुकृतदुष्कृतकर्मणां फलानि सुखदुःखरू

१ अत्रानुप्रासः । २ अत्राप्यनुप्रासः ।

पाणि तेषामूर्म्मयः परम्परा भोगा वा भवन्ति । तदधिकरणा भवन्तीत्यर्थः । तथा—अन्येषां ब्राह्मणानां भुक्तैर्भोजनैः कृत्वा मृते ध्वस्तदेहे प्रेते तृप्तिर्भवतीति धूर्तानां परवञ्चनमात्रेण स्वोपजीविनां वार्तया अप्रामाणिकेन वार्तामात्रेणालम्, प्रयोजनं नास्ति । 'गम्यमानाऽपि क्रिया कारकविभक्तेः प्रयोजिका भवति' इति तृतीया। सा न कार्येत्यर्थः । सर्वमप्येतद्व्यधिकरणत्वादनुपपन्नम् । स्वभोजनादिलाभाय परं प्रतारयन्ति । तस्माद्देह एवात्मेति भावः । 'अन्यभुक्तानि तत्तृप्त्यै' इति पाठे तु अन्येषां ब्राह्मणानां भुक्तानि तत् कृतानि भोजनानि तस्य मृतस्य तृप्त्यै तृप्तये इत्यर्थः । 'अन्येषां भुक्तानि' इति शेषषष्ठीसमासः ॥ ५३ ॥

**जनेन जनताऽस्मीति कायं नायं त्वमित्यसौ ।**
**त्याज्यते ग्राह्यते चान्यदहो श्रुत्याऽतिधूर्तया ॥**

देहातिरिक्तात्मप्रतिपादिकां श्रुतिमप्युपहसति—

जनेनेति ॥ अतिधूर्तया नितरां परवञ्चनपरया 'तत्त्वमसि' इति 'स वा एष महानज आत्मा' इत्यादिश्रुत्या प्रयोजककर्त्र्या कायम् 'अस्मि' इति अहंप्रत्ययं जानता 'स्थूलोऽहम्, कृशोऽहम्' इत्याद्यहंप्रत्ययविषयो देह एव, न तु तदतिरिक्तः कश्चिदिति देहमेवात्मानं जानता जनेन प्रयोज्येन अयम् 'अस्मि' इति प्रत्ययविषयः देहः त्वं न भवसीति असौ देहः त्याज्यते अहंप्रत्ययविषयत्वेनेति शेषः । जनेन स्वयं देहः अहंप्रत्ययविषयत्वेन त्यज्यते, श्रुत्या तु तेन त्याज्यत इत्यर्थः । अन्यच्चानुभवविरुद्धमित्यंतया वक्तुमशक्यमप्रामाणिकमहंप्रत्ययविषयमात्मलक्षणं वस्तु ग्राह्यतेऽङ्गीकार्यते । अहो आश्चर्यम्, कष्टं वा । महदनुचितमेतदित्यर्थः । 'देह आत्मभावं परित्यज्य तदन्यस्मिन्नात्मनि नित्यतां गृहीत्वा दीक्षातपआदिभिर्देहं कर्शय, तदतिरिक्तात्मवेदनं कुरु' इति श्रुत्या लोक उपदिश्यत इत्यर्थः । विप्रलम्भकवाक्यत्वेन श्रुतिमात्रमप्रमाणम् । वार्तामात्रेणालम् । सा न कार्येत्यर्थः । अन्योऽपि धूर्तोऽन्येन रत्नादिं त्याजयति, काचादि ग्राहयति । कर्तृद्वयस्यानभिहितत्वादुभयत्र तृतीया ॥ ५४ ॥

**एकं संदिग्धयोस्तावद्भावि तत्रेष्टजन्मनि ।**
**हेतुमाहुः स्वमन्त्रादीनसङ्गानन्यथा विटाः॥५५॥**

१ अत्रानुप्रासः ।

ननु पुत्रेष्ट्या पुत्रस्य प्रत्यक्षोपलम्भाज्ज्योतिष्टोमादेरपि फलस्यानुमानाच्छ्रुतिमात्रप्रामाण्यात्कथं श्रुतेर्धूर्तत्वमित्याशङ्क्य दूषयति—

एकमिति ॥ भवनाभवनाभ्यां संदिग्धयोरर्थयोः पुत्रादिलाभालाभयोर्मध्ये एकमनिष्टं वा तावन्निश्चितं भावि भविष्यति । तत्र तयोर्मध्ये । तथा सति वा । इष्टस्य पुत्रादेर्जन्मनि लाभे सति विटा धूर्ताः परवञ्चनचतुराः स्वमन्त्रादीन्हेतुं कारणभूतानाहुः । अस्माभी रुद्रजपादि त्वदर्थं कृतम्, तेन त्वया पुत्रादि लब्धमिति वदन्तीत्यर्थः । अन्यथा पुत्राद्यलाभे तु तानेव मन्त्रानसङ्गानङ्गविकलतया फलस्यासाधकान्प्राचीनपुत्रवियोगादिविपरीतफलकारिणश्चाहुः । सामग्रीसाकल्याभावाद्यथोक्तदक्षिणाभावात्फलं न जातम्, विपरीतं च जातमित्यर्थः । तस्माद् दृष्टफलपुत्रेष्ट्यादिदृष्टान्तेनादृष्टफलेष्वपि फलकल्पना निरवकाशेति श्रुतिरप्रमाणमेवेति भावः ॥ ५५ ॥

**एकस्य विश्वपापेन तापेऽनन्ते निमज्जतः ।**
**कः श्रौतस्यात्मनो भीरो भारः स्याद्दुरितेन ते॥**

श्रुतिप्रामाण्यमभ्युपगमवादेनाङ्गीकृत्याप्येकात्मवादिमतमनिष्टापत्त्या दूषयति—

एकस्येति ॥ विश्वेषां सर्वेषां परदारगमनजनितेन पापेन हेतुनानन्तेऽक्षये तापे निरयादिदुःखे, 'तापेनान्ते' इति पाठे तु अन्ते प्रान्तावस्थायाम्, पापरूपाशुभकर्म्मफलभोगावसरे इत्यर्थः । तापेन पापरूपाशुभकर्म्मजनितेन दुःखेन हेतुनेति भावः । निमज्जतोऽनन्तदुःखमनुभवतः सतः श्रौतस्य 'एकमेवाद्वितीयं ब्रह्म' 'नेह नानास्ति किंचन' इत्यादिश्रुतिसिद्धस्यैकस्याद्वितीयस्यात्मनः हे भीरो पापाद्भयशील, ते तव एकस्य दुरितेन को भारो गौरवं स्यात्? अपि तु पूर्णस्य शकटस्य शूर्पेणेव न कश्चिद्भारो भवेत् । एकात्मवादिमते प्रामाणिकस्यैवात्मनो यदि सकलशरीरोपाधिकृतपापासंबन्धः, तदा तत्फलानन्त्यान्निरयादिदुःखानुभवावसरे तवैकपापेन कृत्वा पापाक्षयराशिभृतस्तस्य न कोऽपि भारः स्यात् । किं च तैर्यत्पुण्यं कृतम्, तत्त्वयैव कृतमिति पापे कृतेऽपि तव दोषो नेति यथेच्छं पापं कुर्वित्यर्थः । अपि चात्मैक्यात्स्वपरव्यवहाराभावे परदारत्वपरस्वत्वाद्यभावात्परदारगमनादौ पापलेशस्याप्यभावात्स्वेच्छाचारमेव कुर्वित्यर्थः।

भीरो तात्पर्यपर्यालोचनया विना भयशील, इत्युपहासः। तस्मादेकात्मश्रुतिरुपासनपरा ज्ञेया, न तु तात्त्विकीति भावः ॥ ५६ ॥

**किं ते वृन्तहतात्पुष्पात्तन्मात्रे हि फलत्यदः।**
**न्यस्य तन्मूर्ध्न्यनन्यस्यन्यास्यमेवाश्मनो यदि॥**

देवपूजादिबुद्धिं निराकरोति—

किमिति॥भो देवपूजक,वृन्तात्प्रसवबन्धनात्स्वकाशाद्धृतं भवच्चितं चम्पकादिपुष्पं तस्माद्धेतोस्ते तव किं प्रयोजनम्। प्रत्युत दोष एवेत्यर्थः। हि यस्माददः पुष्पं तन्मात्रे वृक्षाग्रवृन्त एव वर्तमानमेव फलति फलरूपेण परिणमते न तु तेन विना। पुष्पेऽवचिते फलोत्पत्तिप्रतिबन्ध एव भवति। नत्वन्यत्फलमित्यर्थः। अथ देवपूजादौ विनियोगात्साफल्यमिति चेत्। तदप्यसत्। अश्मनः शालग्रामशिवलिङ्गादेः पाषाणस्यैव मूर्ध्नि न्यास्यं यदि चेत्तत्र न्यस्तं सत्फलाय भविष्यतीत्याशयः, तर्ह्यनन्यस्य शिलातोऽभिन्नस्य पाषाणसदृशस्य स्वस्य मूर्ध्नि तत्पुष्पं न्यस्य निधेहि। अनन्यस्यैवेति वा। न्यास्यमेवेति वा। किं च भवन्मते भेदस्य प्रापञ्चिकत्वात्परमेश्वरस्य सर्वत्र सत्त्वाच्छालग्रामादेस्त्वच्छिरसश्चैक्याद्देवपूजापि पृथग्वृथेति स्वशिरस्येव पुष्पाणि क्षिपेत्युपहास इति भावः।न्यास्यं,हलन्तत्वाण्ण्यत् ॥ ५७ ॥

**तृणानीव घृणावादान्विधूनय वधूरनु।**
**तवापि तादृशस्यैव का चिरं जनवञ्चना५८**

वैराग्यजननार्थमन्यदप्याह—

तृणानीति॥हे पुरुष'मुखं श्लेष्मागारं,स्तनौ मांसग्रन्थी'-इत्यादीनि वधूरनु स्त्रीरुद्दिश्य घृणावादाञ्जुगुप्सावचनानि निःसारत्वेन तृणानीव विधूनय त्यज। यतः—तादृशस्य मांसादिमयस्यैव तवापि गर्हितस्यापि स्त्रियोऽनेन प्रकारेण निन्द्या इति चिरं जनवञ्चना लोकप्रतारणा का। अपि तु न कार्येति भावः। स्त्रियो व्यभिचारिण्यः पापनिरता इति निन्दावाक्यानि तवापि व्यभिचारिणो न युक्ता इति वा ५८

**कुरुध्वं कामदेवाज्ञांब्रह्माद्यैरप्यलङ्घिताम्।**
**वेदोऽपि देवकीत्राज्ञा तत्राज्ञाःकाऽधिकाऽर्हणा॥**

कुरुध्वमिति॥ हे अज्ञा मूर्खा ब्राह्मणाः, यूयम् 'अहल्यायै जारः सुरपतिरभूदात्मतनयां प्रजानाथोऽयासीत्' इत्यादिस्मरणाद्ब्रह्मविष्णुमहेशादिभिरप्यलङ्घित काम एव देवः, तस्य स्त्रीपारवश्यलक्षणामाज्ञां कुरुध्वम्। यस्माद्वेदोऽपि 'श्रुतिस्मृती ममैवाज्ञे' इति श्रीभगवद्वचनाद्देवकीया आज्ञा। अतः—तत्र वेदरूपायां देवाज्ञायां कामाज्ञातोऽधिका अर्हणा पूजा मान्यता का। अपि तु—देवत्वाविशेषाद्वेदाज्ञेव कामाज्ञापि माननीयैवेत्यर्थः। आज्ञाद्वयमपि समानम्, तस्मात्कामाज्ञामपि कुरुध्वम्, न त्वेकत्र पक्षपातः कार्य इति भावः। यद्वा—तत्र द्वयोराज्ञयोर्मध्येऽधिकमर्हणं यस्याः सा का आज्ञा। अपि तु पूर्ववदविशेषाद्द्वे अपि समे एवेत्यर्थः। द्वयोर्मध्ये अधिकार्हणा का इति यूयमेव कथयतेति ब्रह्मादिभिरप्यङ्गीकृतत्वाच्छिष्टपरिगृहीतत्वलक्षणप्रामाण्यात्, प्रत्यक्षसुखहेतुत्वाच्च कामदेवाज्ञैवाधिकार्हणा। वेदो हि ब्रह्मादीनामेवाज्ञा, ब्रह्मादयश्च कामदेवाज्ञाकारिणः, ततश्च यदीयाज्ञा भवद्भिरनुष्ठीयते, तैरपि याऽनुष्ठीयते सा भवता सुतरामनुष्ठेयेति भाव इति वा। पक्षपातात्तारतम्यज्ञानाच्च मूर्खत्वम्। 'वेदो हि' इति च पाठः। कामदेवाज्ञामेव कुरुध्वम्, यस्माद्वेदोऽपि देवाज्ञा। तत्र वेदे अधिका पूजा। अपि तु—कामदेवाज्ञैवानुष्ठेया ब्रह्मादिभिरप्यनुष्ठितत्वादिति वा। 'का विगर्हणा' इति पाठे तत्र कामाज्ञायां का निन्दा। कोऽनादर इत्यर्थः। देवकीया 'गहादिभ्यश्च ४।२।१३८' इति सूत्रे "कुग्जनस्य परस्य च" इत्यत्र 'देवस्य च' इति वार्तिकेन कुक् च५८

श्लोकत्रयेण मीमांसकान्परिहरति—

**प्रलापमपि वेदस्य भागं मन्यध्व एव चेत्।**
**केनाभाग्येन दुःखान्नविधीनापि तथेच्छथ ६०॥**

प्रलापमिति॥ महता प्रयासेन यस्य प्रामाण्यमुपपादितम्, तस्य वेदस्यैव कंचन भागसंज्ञं 'सोऽरोदीत्, यदरोदीत्'इत्याद्यर्थवादमन्त्रनामधेयात्मकं प्रलापमिवानर्थकवचोरूपं चेन्मन्यध्वे कुरुध्वे "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्यादिना पूर्वपक्षसूत्रेण प्रतिपादितस्यानर्थक्यस्य 'विधिना त्वेकवाक्यत्वात्' इत्यादिना सिद्धान्तसूत्रेण स्तुत्यर्थत्वादिनाऽर्थवादादेरुपयोगेऽभिहितेऽपि सार्थक्याभावादानिराकृतत्वादर्थवादादिवेदभागमनर्थकवचनप्रायं चेन्मन्यध्वे,तर्हि बहुधनव्ययायासंसाध्यत्वात्, दुःखजनकान् 'ज्योतिष्टोमेन स्वर्गकामो

१ निमज्जत इति निमज्जनौचित्याय तापस्य समुद्रत्वमध्यवसितं बोध्यम्। २ तृणानीवेत्युपमा।

१ अत्रानुप्रासः।

यजेत' इत्यादीन् विधिभागानपि केन भाग्याभावेन तथा प्रलापरूपान् इच्छत नाङ्गीकुरुथ । अपि तु तानपि प्रलापरूपानेव स्वीकुरुथ इत्यर्थः । सर्वोऽपि वेदो विधिरूपः प्रलापरूपो वा अस्तु । नत्वर्धजरतीयन्यायः समाश्रयितुं युक्त इति भावः । वेदत्वाविशेषेऽप्यभाग्यमेव वैषम्यहेतुरित्यर्थः । दुःखशब्दस्य नपुंसकत्वेऽपि दुःखं करोतीति ण्यन्तात्पचाद्यचि दुःखानिति ज्ञेयम् ॥ ६० ॥

**श्रुतिं श्रद्धत्थ विक्षिप्ताः प्रक्षिप्तां ब्रूथ च स्वयम्।**
**मीमांसामांसलप्रज्ञास्तां यूपद्विपदापिनीम् ॥**

प्रकारान्तरेणापि मीमांसकानुपहसति—

श्रुतिमिति ॥ हे मीमांसायां वेदविचारे मांसला परिपुष्टा प्रज्ञा बुद्धिर्येषां ते यूयं श्रुतिं वेदं प्रत्यक्षं श्रद्धत्थ आदरेण स्वीकुरुथ । अक्षरमात्रमपि सार्थकं मन्यध्वे । तथा—विक्षिप्ता वादिभिर्निराकृता भ्रान्तचित्ताः पूर्वापरानुसंधानविकलाः सन्तः तामेव श्रुतिं यूपसंबन्धिनो द्विपस्य दापिनीं दापयन्तीं 'दायिनीम्' इति पाठे तु यूपद्विपानां दायः दानं विद्यते यस्यामिति तामिति भावः । स्वयमात्मनैवाङ्गीकृतप्रामाण्यामपि प्रक्षिप्तां केनचिद्वञ्चकेन खिलरूपां निक्षिप्तां च ब्रूथ । चकारः पूर्वापरविरोधद्योतनार्थः । पूर्वापरानुसंधानविकलत्वाद्वेदविचारचतुरा साध्वी भवतां बुद्धिरित्युपहासार्थं 'मीमांसा—' इत्यादि संबोधनम् 'मांसला'—इत्यनेन च स्थूलदृष्टय आपातग्राहिणो यूयम्, न तु कुशाग्रबुद्धय इति सूचितम् । ऋत्विजो यज्ञमध्ये यजमानं यज्ञसमापनाग्रहशीलं समाप्त्युत्तरकालभावि स्वाच्छन्द्यं विदित्वा कार्यवत्ताविलायामेव स्वयं 'यूपे यूपे हस्तिनो बद्ध्वा ऋत्विग्भ्यो दद्यात्' इत्येतत्प्रतिपादकानि वेदवाक्यानि यजमानस्य श्रद्धाजननार्थं पठित्वा याचन्ते । प्रत्यक्षश्रुतिविहितदेयान्तरनिदर्शनव्यामोहितश्च स यजमानः श्रद्धानतया तथैव प्रतिपद्य तेभ्यः प्रयच्छतीति तैरेवैषा स्मृतिः प्रवर्तिता स्यादित्याशङ्क्य 'नेयं वेदमूला' इति 'लोभपूर्वकमेभिरुक्तम्' इति वेदवाक्यानामर्थवादत्वमङ्गीकरोति । ततश्च कानिचिद्वाक्यानि प्रधानानि, कानिचिदप्रधानानीत्यर्धजरतीयन्यायस्तदवस्थ एवेत्यर्थः । 'यूपहस्तिनो दानमाचरन्ति' इति स्मृतेर्मूलभूता श्रुतिरभिधीयते । कल्पितश्रुतिमूलत्वात्स्मृतिरेव वा श्रुतित्वेनोच्यते । यूपवद् अत्युच्चा द्विपा यूपद्विपाः तान् दापयतीति । वाजपेयादौ हि सप्तदश हस्तिनो रथा दास्यश्च दक्षिणाः । इत्युपलक्षणमेतदित्यन्ये ॥ ६१ ॥

**को हि वेदास्त्यमुष्मिन्वालोक इत्याह्याश्रुतिः।**
**तत्प्रामाण्यादमुं लोकंलोकः प्रत्येतु वा कथम्॥**

को हीति ॥ 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेति दिक्ष्वतीकाशान्करोति' इत्यादिर्या श्रुतिः, अमुष्मिँल्लोके परलोके विषये सुखादिकमस्ति वास्त्येव नास्त्येव इति वा हि निश्चितं को वेद। अपि तु न कोऽपि। इत्याह ब्रवीति । तस्याः श्रुतेः प्रामाण्यादमुं लोकं परलोकं लोकः परीक्षकोऽस्मदादिः कथं वा कथमिव प्रत्येतु विश्वासेन निश्चिनोतु । अपि तु न कोऽपि । यदीयास्तित्वनास्तित्वयोः श्रुतेरेव संदेहस्तत्प्रामाण्यात्मानरः प्रत्येति इति । 'श्रद्दधे' इति चापि पाठः । भवादृश एव परलोकं मन्यते, न तु प्रामाणिकः कश्चिदिति भावः ॥ ६२ ॥

**धर्माधर्मौ मनुर्जल्पन्नशक्यार्जनवर्जनौ ।**
**व्याजान्मण्डलदण्डार्थी श्रद्धायि मुधाऽबुधैः॥**

स्मृतिप्रामाण्यमपि दूषयति—

धर्मेति॥ बहुधनव्ययायाससाध्यत्वात्, शीतभयात्तीर्थस्नानाद्यशक्तत्वात्, अग्नौ चरणसंतापनादिरूपतया तत्तदिन्द्रियवेगस्य परिहर्तुमशक्यत्वात्, सुखानुभवमूलत्वाच्च, क्रमेणाशक्यमर्जनं करणं, वर्जनं च ययोस्तौ धर्माधर्मौ बुद्धिपूर्वं जल्पन्बहुधा प्रतिपादयन्मन्वन्तराधिपतिरादिराजो मनुर्मुख्यस्मृतिकर्ता ब्रह्मपुत्रः स्वायम्भुवः व्याजाद्धर्माधर्मोपदेशकस्मृतिप्रणयनमिषेण विधिनिषेधातिक्रमनिमित्तप्रायश्चित्तद्वारा मण्डलस्य राष्ट्रस्य लोकस्यापराधं निमित्तीकृत्य दंडार्थी द्रव्यमभिलाषुको यतः,तस्माद्बुधैः पण्डितंमन्यैर्मुधा वृथैव श्रद्धायि आदृता । अधर्माचरणं सुकरमित्यधर्ममेव सर्वः करोति । ततश्च येन केनाप्युपायेनार्थग्रहणोपाय एव दण्डो मनुनाऽभिहितः, न तु धर्म इत्यर्थः । अबुधैरिति वा । मनुवचनमूलत्वात्स्मृतिमात्रस्याप्रामाण्यमुक्तम् ॥ ६३ ॥

**व्यासस्यैव गिरा तस्मिञ्श्रद्धेत्यद्धा स्थ तान्त्रिकाः।**
**मत्स्यस्याप्युपदेश्यान्वः को मत्स्यानपि भाषताम्**

---

१ अत्रानुप्रासः ।

१ अनुप्रासः । २ अत्राप्यनुप्रासः ।

पुराणप्रामाण्यं दूषयति—

व्यासस्येति ॥ दाशदारिकाव्यभिचारजातस्य भ्रातृजायायां पुत्रोत्पादिन इत्यादिशीलस्य व्यासस्यैव कविस्वरूपया गिरा तस्मिन्धर्मे । परलोके वा । व्यास एव वा।श्रद्धा भावना आस्तिक्यबुद्धिरिति इत्येतस्माद्धेतोरद्धा निश्चितं यूयं तान्त्रिका युक्तिशा वाक्यविचारचतुराः स्थ भवथ । विरुद्धलक्षणया—एवं विगीतेन व्यासेन प्रतिपादिते धर्मे परलोके तस्मिन्वा येषामास्तिक्यबुद्धिः, ते यूयं मूर्खतमा इति भावः । अथ च—तान्त्रिकाः कुविन्दतुल्या मूर्खा इत्यर्थः । व्यासस्येत्येकवचनेन, एवकारेण च विगीतत्वं सूचितम् । मूलापरिशुद्ध्या भारतादीनां पुराणानां चोपहासः कृतः । मत्स्यपुराणं तु मत्स्यरूपधारिणा श्रीविष्णुना मनवे प्रोक्तमिति तत्पृथगुपहसति—मत्स्यस्य उपदेश्यान्वः युष्मान्मनुप्रभृतीन्को भाषतां युष्माभिः सह संवादं कः करोतु । यतः—मत्स्यानपि को भाषताम् । मत्स्या अपि संवादार्हा न भवन्ति । तदुपजीविनस्ताच्छिष्या भवन्तस्तु दूरे इति को भाषताम् । युष्मान्मन्वादीन्मत्स्यान्को वदतु । अपि तु न कोऽपि । यतो मत्स्यस्योपदेश्यान् । जलस्थलचारिभ्यो यो हीनो मत्स्यः, तस्यापि शिष्यास्तन्निदेशकारिणः । ततश्चोपदेशकापेक्षयोपदेश्यस्य हीनत्वान्मत्स्यशब्देनापि नाभिधेया इति भावः । एवं कूर्मपुराणादीनामुपहासः । अथ च मनुसंबन्धित्वेन सर्वेऽपि मानवशब्दवाच्या यथा, तथा मत्स्यसंबन्धिनां मात्स्यशब्दाभिधेयत्वमेव युक्तम्, न तु मत्स्यशब्दाभिधेयत्वमिति को मत्स्यानपि भाषतामिति युक्तमुक्तमिति व्याख्येयम् । तान्त्रिका इति, 'तन्त्रमधीते वेद वा' इत्यर्थे वसन्तादेराकृतिगणत्वाट्ठक् । मत्स्यस्येति 'कृत्यानां कर्तरि वा २।३।७१' इति कर्तरि षष्ठी ॥ ६४ ॥

**पण्डितः पाण्डवानां स व्यासश्चाटुपटुः कविः।**
**निनिन्द तेषु निन्दत्सु स्तुवत्सु स्तुतवान्न किम्॥**

पूर्वोक्तमेव व्यासस्याप्रमाणत्वं श्लोकद्वयेनाह—

पण्डित इति॥पण्डितो बुद्धिमान्, अत एव कविरौत्प्रेक्षिकस्यार्थस्य वर्णकः, तथा—पाण्डवानां युधिष्ठिरादीनां चाटुनि प्रियवचने पटुः एवंभूतः स भवद्भिराप्ततमत्वेनाङ्गीकृतो व्यासस्तेषु पाण्डवेषु दुर्योधनादीन्निन्दत्सु सत्सु न निनिन्द किम् । तथा—तेषु श्रीकृष्णादीन्स्तुवत्सु सत्सु न स्तुतवान्किम् । तेषु निन्दत्सु स्वयमपि निनिन्द, तेषु स्तुवत्सु स्वयमपि तुष्टावेति पूर्वविशेषणयुक्तस्यापि व्यासस्य पराधीनत्वादनाप्तत्वाच्च तत्प्रणीतं भारताद्यप्रमाणमेवेति भावः। अन्योऽपि पण्डितः प्रभुचित्तानुगुणमेव व्यवहरति तद्वदयमपीत्यर्थः ॥ ६५ ॥

**न भ्रातुः किल देव्यां स व्यासः कामात्समासजत्।**
**दासीरतस्तदाऽऽसीद्यन्मात्रा तत्राप्यदेशि किम्।**

नेति ॥ भवदीयो व्यासो भ्रातुर्विचित्रवीर्यस्य देव्यां महिष्यां कामात्स्मरपरवशत्वादनुरागान्न समासजद्व्यवहरति स । किलेत्युपहासे श्रुतौ वा । अस्मद्बुद्ध्यां तावत्कामादेव संगतः। पौराणिकास्तु—देवरात्सुतोत्पत्तेर्धर्म्यत्वात्तस्यां सुतोत्पादनार्थं मात्राऽऽज्ञप्तस्तस्यां सक्त इति वदन्ति । तस्मात्तथया, तथाऽस्त्वित्यर्थः । तदा पुत्रोत्पादनोपलक्षिते काले दास्यां रत आसीदिति यत्प्रसिद्धम् । तत्र दासीरतेऽपि मात्रा सत्यवत्या अदेशि आदिष्टः किम् । कथयतेति प्रश्नकाकुरुपहासार्था, अपि तु तत्र तावन्नादिष्टः, तस्मादुभयत्रापि स्मरपरवशत्वादेव प्रवृत्तः। एवंविधस्यानाप्तत्वात्तद्वचनमप्रमाणमेवेति भावः । समासजत्, 'दंशसञ्जस्वञ्जां शपि ६। ४। २५' इति नलोपः ॥ ६६ ॥

**देवैर्द्विजैः कृता ग्रन्थाः पन्था येषां तदादृतौ ।**
**गां नतैः किं न तैर्व्यक्तं ततोऽप्यात्माऽधरीकृतः॥**

इदानीं देवद्विजगोभजनं दूषयति—

देवैरिति ॥ देवैर्ब्रह्मादिभिः, द्विजैर्याज्ञवल्क्यादिभिश्च कृता ग्रन्थाः पुराणानि स्मृतयश्च तेनैव येषां भवादृशां वैदिकानां तदादृतौ तेषां देवानां द्विजानां चादृतावादरे विषये पन्थाः । देवा ब्राह्मणाश्चावश्यं भजनीया इत्युपदेशपराः प्रमाणमिति यावत् । स्वपूजार्थमेव तैर्ग्रन्था निर्मिताः, तद्वचनप्रामाण्याद्देवादीनाद्रियन्ते एवंभूता मूर्खा ये, तैर्युष्माभिस्तद्ग्रन्थप्रमाण्यादेव गां पशुरूपां सुरभिं नतैः सद्भिस्ततः पशोर्गोरपि सकाशादात्मा स्वरूपं व्यक्तं स्पष्टं नाधरीकृतः किम् । नम्रः अथ च—हीनः । न कृतः किम् । अपि तु—कृत एव नमस्कार्यापेक्षया नमस्कर्तुर्हीनत्वात्पशोरपि सकाशाद्भवन्तो

१ अत्र व्यासस्येत्युपन्यासः समयभेदास्मरणमूलः ।

१ पूर्ववदत्रापि पाण्डवानामित्युपन्यासः । अत्रानुप्रासः। २ व्यास इति पुनः पूर्ववत् ।

मूर्खतमा इत्यर्थः । व्यक्तं मन्ये इति यावदिति वा । स्वार्थपरपरवचनस्याप्रमाणत्वाद्देवब्राह्मणगुरुभिभजनं निर्मूलत्वात्त्याज्यमिति भावः । देवैर्द्विजैः कृता ग्रन्था येषां वः पन्थाः प्रमाणम्, तैर्भवद्भिस्तस्य पथस्तेषां देवादीनां वा, ग्रन्थादीनां वा, आदरणानिमित्तं गां नतेः । ततोऽप्यात्मेति पूर्ववत् ॥ ६७ ॥

**साधुकामुकताऽमुक्ताशान्तस्वान्तैर्मखोन्मुखैः ।**
**सारङ्गलोचनासारादिवं प्रेत्यापि लिप्सुभिः॥६८॥**

इदानीं परलोकमङ्गीकृत्यापि यज्वनां ब्रह्मचर्यादि परिहरति—

साध्विति ॥शान्तं विषयभोगपराङ्मुखं स्वान्तं चित्तं येषां तैर्मखोन्मुखैर्गृहीतदीक्षैरपि यज्ञेषु सोत्साहं प्रवृत्तैर्याज्ञिकैः कामुकता संभोगलोभिता यदमुक्ता न त्यक्ता, तत्साधु युक्तम् । यद्वा—साध्वी सुखकारिणी सा चासौ कामुकता च सा न मुक्ता शान्तस्वान्तैर्यज्वभिः कामुकता साधु मुक्ता त्यक्ता । साध्विति काक्वा विरुद्धलक्षणया नैव मुक्ता, किन्तु संभोगैकनिष्ठा एव त इति व्याख्येयम् । सर्वत्रापि हेतुगर्भं विशेषणमाह—किंभूतैः—सारङ्गलोचनाभिः सुन्दरीभिः सारां श्रेष्ठाम् । ता एव सारः श्रेष्ठः पदार्थो यस्यां तादृशीं वा । दिवं प्रेत्यापि मृत्वापि लिप्सुभिः । रम्भादिकाम्यर्थैव बहुधनव्ययायाससाध्यान्यज्ञान्ये कुर्वन्ति, तैः कामुकता नैव त्यक्ता । अन्येषां तु यावज्जीवमेव कामुकत्वम् । यज्वनां तु मरणानन्तरमपीति प्रेत्यापीत्यनेन सूचितम् । तस्माद्दीक्षासमयेऽपि ब्रह्मचर्याङ्गीकरणेनात्मा न वञ्चनीय इति भावः । दिवम्, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधाद्द्वितीया ॥ ६८ ॥

**कः शमः क्रियतां प्राज्ञाःप्रियाप्रीतौ परिश्रमः ।**
**भस्मीभूतस्य भूतस्य पुनरागमनं कुतः ॥६९॥**

एतदेवोपजीव्याह—

क इति ॥ हे प्राज्ञाः प्रकर्षेणाज्ञा भो मूर्खाः, तस्माच्छमः शान्तिः कः । अपि तु न कोऽपि । शमाङ्गीकरणेन परलोकसाधनेऽपि काम्यमानकमनीयकामिनीसंभोगफलत्वाद्यथैव शान्तिः । तस्माच्च कार्येत्यर्थः । तर्हि किं कार्यमित्यत आह—प्रियायास्तरुणरमणीयरमण्याः प्रीतौ प्रेम्णि तस्याः सुखोत्पादने विषये परिश्रमः भूयान्प्रयासः कार्यः क्रियतां कर्तव्यः । शान्तिः का, अपि तु न कापि । भोः प्राज्ञाः, बुद्धिमन्तस्तारतम्यविचारचतुराः, प्रियाप्रीतौ प्रयासः कार्यः सद्यः सुखहेतुत्वादिति वा । परस्त्रीगमने लोकान्तरे निरयादिभयं भविष्यतीत्याशङ्क्याह—भस्मीभूतस्य मृतस्य भूतस्य जातस्य । देहिनो वा । पुनरागमनं लोकान्तरे क्रिम्यादिदेहप्राप्तिरिति यत्, स भ्रमः परलोकस्थैवाभावात्, तत्सद्भावेऽपि च देहस्यैवात्मत्वात्, तस्य च भस्मीभूतत्वात्केन नरकादि भुज्यते । तस्माद्यावज्जीवं यथेच्छं सुखं भोक्तव्यमिति भावः । 'प्रियाप्राप्तौ' इति च पाठः ॥ ६९ ॥

**उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मनः ।**
**अपवर्गे तृतीयेति भणतः पाणिनेरपि ॥ ७० ॥**

मोक्षेऽधिकाराभावाद् ब्रह्मचर्यपरित्यागेन काम एव सेवनीय इति शब्दच्छलेन वृद्धसंमत्या स्वीयं मतं द्रढयति—

उभयीति ॥ 'अपवर्गे तृतीया २।३।६' इति भणतः पाणिनेरपि मुनेरुभयी प्रकृतिः स्त्रीपुंसलक्षणा द्वयी व्यक्तिः कामलक्षणे पुरुषार्थे मैथुने मिथुनधर्मे सज्जेदासक्ता भवेदिति मनोऽन्तःकरणाभिप्रायः लक्ष्यत इति शेषः । अयमाशयः—'अपवर्गे तृतीया' इति वदतः पाणिनेर्मैथुनधर्मेऽशक्तेन नपुंसकेन तीर्थयात्राब्रह्मचर्यादिद्वारा मोक्षे प्रयतितव्यम्, स्त्रीपुंसलक्षणा व्यक्तिर्मैथुने शक्तत्वात्कामभोगेऽधिकारिणी, न तु तीर्थयात्रादिद्वारा मोक्षे इति । तस्मात्कामाश्रैव कार्येत्यर्थः । न केवलमस्मदाचार्यस्यैव संमतम्, किन्तु भवदीयस्य पाणिनेरपीत्यपिशब्दार्थः । अथ चैवं वदतः पाणिनेरप्ययमाशयः—धर्मार्थलक्षणा व्यक्तिः । अथ च—पूर्वप्रयोज्यत्वात्प्रकृतिः कामे संबद्धा भवेत् । 'धर्मार्थकाममोक्षाः स्युः—' इत्यादौ कामादव्यवहितपूर्वत्वेन तस्या उक्तत्वात् । तृतीया तु कामलक्षणा व्यक्तिः । अथ च—पूर्वप्रयोज्यप्रकृतिरपवर्गे संबन्धुमर्हा । अपवर्गादव्यवहितपूर्वत्वेन तस्या उक्तत्वात् । तस्मादपवर्गे निमित्ते कामाख्या तृतीयैव व्यक्तिर्युक्तेत्युक्तत्वात् मोक्षमार्गं प्रति कामस्यैव हेतुत्वात्प्रियाप्रीतिरेव सुतरां कार्येति भावः । अपवर्गः फलप्राप्तिरितीमं सूत्रार्थं

१ अत्रानुप्रासः । २ सारङ्गेत्युपमा ।

१ भस्मीति लोकोक्तिः ।

शब्दच्छलेनान्यथोत्प्रेक्ष्य वृद्धसंमतिः स्वीयमतसमर्थनार्थं दर्शिता। 'तृतीयाप्रकृतिः षण्ढः' इत्यमरः। उभयीत्यत्रायचः स्थानिवत्त्वात्तयप्ग्रहणान्ङीप्। सजेत, 'अर्हे कृत्यतृचश्च ३। ३। १६९' इति चकारादर्हार्थे लिङ्॥ ७०॥

**विभ्रत्युपरियानाय जना जनितमज्जनाः।**
**विग्रहायाग्रतः पश्चाद्गत्वरोरभ्रविभ्रमम्॥ ७१॥**

गङ्गास्नायिनो दूषयति—

विभ्रतीति॥ उपरि यानाय स्वर्गं गन्तुम्। अथ च—उर्ध्वं देशं गन्तुम्। जनितमज्जनाः कृतगङ्गास्नानाः अथ च—कृताधोगमनाः जना अग्रतः विग्रहाय, युद्धाय पश्चाद्गत्वरः पश्चाद्गमनशील उरभ्रो मेषस्तस्य विभ्रमं सादृश्यं विभ्रति धारयन्ति। मज्जनादूर्ध्वं गमनं विरुद्धमिति विपरीतार्थकारित्वान्मेषवन्मूर्खा एवेति।गङ्गास्नानेन स्वर्गो भवतीति भ्रान्तिरेवेति भावः। 'विग्रहस्य' इति पाठे उपरियानाय कृतगङ्गास्नानां जना मार्गे गच्छतो मेषस्य भ्रान्ति सादृश्यं वा धारयन्ति। शीतबाधया नीचग्रीवतया गमनाच्छरीरस्याग्रतः शिरोदेशे पश्चात्कटिदेशे च हस्तयोर्धारणात्कृतगङ्गास्नानानां गङ्गास्नानसमयेऽपि मेषतुल्यत्वम्। तथा जलमध्येऽवमर्षणवशाद्दक्षिणकरेण घ्राणानायच्छतः पृष्ठस्थितवामहस्तस्य नीचग्रीवतया पुरःसादृश्यम्, पश्चात्स्थितहस्तस्य च पुच्छसादृश्यमिति मेषतुल्यास्ते जना उच्चैर्जिगमिषोर्नीचैर्भावस्य विरुद्धस्य करणादुपहास इति व्याख्येयम्। यानाय विग्रहायेति च 'तुमर्थाच्च भाववचनात् २।३। १५' इति चतुर्थी॥७१॥

**एनसाऽनेन तिर्यक्स्यादित्यादिःकाविभीषिका।**
**राजिलोऽपि हि राजेव स्वैः सुखी सुखहेतुभिः॥**

परलोकसद्भावेऽपि देहान्तरप्राप्तावपि च न किंचिदनिष्टमित्याह—

एनसेति॥ अनेन लोकैः क्रियमाणेन ब्रह्महत्याद्येनसा पातकेन तिर्यक्क्रिमिपक्ष्यादि स्याद्भवेदित्यादिरेवंप्रकारिका विभीषिका भयोपदर्शनं किम्। अपि त्वनिष्टहेतुत्वाभावान्न किंचिदेतत्। हि यस्माद्राजिलोऽपि तिर्यक्त्वविहीनः सर्पविशेषो जलव्यालोऽपि स्वैः स्वीयैः सुखहेतुभिर्भेकभक्षणजलाहारसजातीयतरुणीसंभोगादिभिः सुखकारणै राजेव सुखी। स्वजात्यनुगुणाहारविहारसंभोगादीनि विचित्राण्येव सर्वेषां सुखसाधनानि न तु नियतानि कानिचित्। ततश्च पापफलभूते तिर्यग्योनित्वे जातेऽपि सुखसद्भावान्न किंचिदनिष्टमित्यर्थः। 'समौ राजिलडुण्डुभौ' इत्यमरः। विभीषिका, 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इति ण्वुल्। 'भियो हेतुभये षुक् ७। ३। ४०' इति षुक्। 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ७।३।४४' इतीत्वम्॥ ७२॥

**हताश्चेद्दिवि दीव्यन्ति दैत्या दैत्यारिणा रणे।**
**तत्रापि तेन युध्यन्तां हता अपि तथैव ते॥७३॥**

युद्धे हतानां स्वर्गप्राप्तिरित्यादि भारतादिवचनं दूषयति—

हता इति॥ सङ्ग्रामे हताः संमुखं पतिता दिवि दीव्यन्ति क्रीडन्ति इति चेद्यदि तर्हि दैत्यारिणा श्रीविष्णुना रणे हता हिरण्यकशिपुप्रभृतयो दैत्यास्तत्रापि स्वर्गेऽपि तेन सह युध्यन्तां युद्धं कुर्वन्तु। यस्माद्धता मारिता अपि ते दैत्या भवदीयमते तथैव रणे संमुखपतनात्स्वर्गे जीवन्त एव। ततश्च 'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय' इत्यादिवचनप्रामाण्यान्मरणसमयेऽपि दैत्यैर्दैत्यारिणा सह विरोधस्य चित्ते धृतत्वात्स्वर्गप्राप्तावप्यसुरभावस्य तथैव वर्तमानत्वात्तत्राऽपि तेन सह योद्धव्यमेव। तत्रापि युध्यन्त एवेति कुत्रचित्पुराणादौ नाकर्ण्यते। तस्माद्रणे पतितानां मरणादधिकं किंचिदपि नास्तीति 'रणादपलायनात्स्वर्गः' इत्यादिक्षात्त्रधर्मप्रतिपादकं वाक्यजातमप्रमाणमेवेति भावः।हता अपीत्यत्र'हतौ, अपि'इति पदेन हतौ हिंसायां कृतायामपि मरणे प्राप्तेऽपि। अन्यत्पूर्ववत्। 'हतावपि' इति वा पाठः॥ ७३॥

**स्वं च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम्।**
**इति स्वोच्छित्तिमुक्त्युक्तिवैदग्धी वेदवादिनाम्॥**

इदानीं मायावेदान्तसिद्धान्तं दूषयति—

स्वमिति॥ संसारे संसरणावसरे स्वं जीवात्मस्वरूपः प्रपञ्चश्च, तथा—अनाद्यविद्याविलासवासनाविद्यमानभेदं

---

१ पाणिनेरित्यपि समयभेदात्स्मरणमूलं वचः।
२ अत्रानुप्रासः। 'उरभ्राणां (मेषाणां) विभ्रममिव विभ्रमं (चेष्टां) बिभ्रति' इति निदर्शना, असौ चोर्ध्वगमनायाधो गच्छतीति विचित्रानुप्राणिता, तया च तेषामाविमृश्यकर्तृत्वं व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिः।

१ राजेवेत्युपमा। २ अत्रानुप्रासो यमकं च।

ब्रह्म च, इति द्वयमप्यस्ति । चौ समप्राधान्यद्योतनार्थौ । मुक्तौ तु मोक्षे संजाते पुनरविद्यकजीवव्यवहारनिवृत्तेः केवलं स्वप्रपञ्चरहितं ब्रह्मैव वर्तते । घटोपाधिनिवृत्तेर्घटाकाशनिवृत्तावाकाशमात्रस्यावस्थानवत्संसारोपाधिनिवृत्तेः स्वनिवृत्तौ 'एकमेवाद्वितीयं ब्रह्म' इति ब्रह्मात्मना संपत्तिर्भवतीत्यर्थः । तथापि प्रपञ्चस्य शुक्तिरजतवन्मिथ्यात्वादद्वयत्वादित्येवं स्वस्योच्छित्तिरेव मुक्तिस्तस्या उक्तिर्वचनं तत्र वैदग्धी नानारूपोक्तिनिरूपणकौशलं वेदवादिनां वेदान्तमतानुसारिणाम् । आत्मार्थं सर्वम्, तस्योच्छेदः प्रतिपादित इति महत्कौशलम्, इति मायावेदान्तमतोपहासः । वेदवादिनामिति छान्दसास्ते किंचिदपि न जानन्तीति सूचितम् । अपि च संसारे द्वयम्, मुक्तौ त्वेकम्, ततश्च द्वयं परित्यज्यात्मोच्छेदपुरःसरमेकं मूर्खादन्यः कोऽपि नेहते । तस्मान्मूर्खा एव त इति भावः 'वेदवेदिनाम्' इति च पाठः । पूर्व एव भावः । 'वेदवेदिता' इति पाठे स्वोच्छित्तिमुक्त्युक्तिवैदग्धीरूपा वेदार्थज्ञातृता आत्मविनाशोक्तिर्वेदार्थपरिज्ञानं नामेत्युपहासः ॥ ७४ ॥

**मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।**
**गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः॥७५॥**

न्यायवैशेषिकसिद्धान्ताभिमतां मुक्तिं दूषयति—

मुक्तय इति ॥ यः सचेतसां चैतन्यवतां सुखदुःखाद्यनुभवाभावाच्छिलात्वाय पाषाणावस्थारूपायै मुक्तये मुक्तिं प्रतिपादयितुं शास्त्रमूचे न्यायदर्शनं निर्ममे 'तदत्यन्तविमोक्षोऽपवर्गः' इत्यनेन सकलविशेषगुणोच्छेदो मुक्तिरिति मुक्तस्य शिलातुल्यत्वं प्रत्यपादयत् । यूयं तं स्वयमेवावेक्ष्य विचार्यैव गोतममेतन्नामानं मुनिं यथा वित्थ जानीथ स एव तथा नान्य इत्यर्थः । एवं येनोक्तं स गोतम इति यथा युष्माकं संमतः, तथा ममापीत्यर्थः । वैशेषिकास्तु तदीयमतानुसारिण इति भावः । अथवा–नायं परं नाम्ना गोतमः । किं तु प्रकृष्टो गौर्गोतमः पशुरेव सचेतसां शिलारूपमुक्तिप्रतिपादनादित्यर्थतोऽपि गोतम एवेति भावः । आत्यन्तिकी दुःखनिवृत्तिर्मोक्ष इति, सुखमपि दुःखानुषङ्गित्वात्त्याज्यमेवेति वदताम् 'अशरीरं वा व सन्तं प्रियाप्रिये न स्पृशतः' इति श्रुतिश्च तत्र प्रमाणमुदाहरतां वैशेषिकाणामपीयमेव मुक्तिः संमतेति न्यायवैशेषिकसिद्धान्तोपहासोऽनेन कृत इति७५

१ अत्र गोतममिति वचनमपि समयभेदात्स्मरणमूढमिव ।

**दारा हरिहरादीनां तन्मग्नमनसो भृशम् ।**
**किं न मुक्ताः कुतः सन्ति कारागारे मनोभुवः ॥**

हरिहरादिध्यानान्मुक्तिरिति वचनानि दूषयति—

दारा इति ॥ हरिहरादीनां लक्ष्म्यादयो दाराः स्त्रियः भृशं निरन्तरं तेष्वेव मग्नं ध्याननिश्चलं मनो यासामेवंविधा अपि किं कस्माद्धेतोः न मुक्ताः । प्रत्युत कस्माद्धेतोः मनोभुवः कारागारे सन्ति । सदैव कामपरवशास्तिष्ठन्तीत्यर्थः । तस्मान्न मुक्ता इति भावः । एतेन 'सकृदुच्चरितं येन शिव इत्यक्षरद्वयम्', तथा—'मय्यर्पितमनोबुद्धिर्यः स मामेति पाण्डव' इत्यादिवचनैर्हर्यादिध्यानमात्रं मोक्षकारणमिति प्रतिपादयतः शैवादिशास्त्रस्य मुक्त्यभावेन सव्यभिचारत्वादप्रामाण्यम् ॥ ७६ ॥

**देवश्चेदस्ति सर्वज्ञः करुणाभागवन्ध्यवाक् ।**
**तत्किं वाग्व्ययमात्रान्नःकृतार्थयति नार्थिनः॥७७**

ईश्वरवादिनो नैयायिकान्दूषयति—

देव इति ॥ 'भूम्यादिकं सकर्तृकं कार्यत्वाद्घटवत्' इत्यादिना विचित्रस्य कार्यजातस्यास्मदादिविलक्षणेन कर्त्रा भवितव्यमिति सर्वज्ञस्य परमकारुणिकस्य सत्यवचसः सर्वकर्तुः प्रभोरीश्वरस्य साधितत्वात्सर्वज्ञः कालत्रयवर्तिवस्तुविज्ञानवान्, तथा–करुणाभाक्कृपावान्, तथा–अवन्ध्या सत्या वेदरूपा वाग् यस्य । नैयायिकादिमते ईश्वरप्रणीतत्वादाप्तवचनत्वाद्वेदानां प्रामाण्यात्स्वतःप्रामाण्यस्य दूषितत्वादित्यर्थः । अथ च— सफला यथोक्तार्थसाधिका वाग् यस्य स सत्यवाक् । भवत्सिद्धान्तेन देवश्चेदस्ति, तर्ह्यर्थिनो भुक्तिमुक्त्याद्यभिलाषिणो नोऽस्मान् भवन्तः प्राप्तमनोरथा भवन्त्विति वाग्व्ययमात्राद्वाङ्निर्गममात्रेणाव्ययेन किं कस्मान्न कृतार्थयति पूर्णमनोरथान्करोति ? । कथयतेत्यर्थः । सर्वज्ञादिविशेषणत्रयेण युक्तोऽपि चेन्न ददाति, तस्मान्नास्त्येव । यद्यभविष्यत्तर्ह्यकृतार्थयिष्यत्, न च कृतार्थयति तस्मान्नास्तीति भावः । अनेनाप्युपहासः सूचितः ॥ ७७ ॥

**भविनां भावयन् दुःखं स्वकर्मजमपीश्वरः ।**
**स्यादकारणवैरी नः कारणादपरे परे ॥ ७८ ॥**

इदानीं कर्ममीमांसकमतावलम्बेनायोग्योपलम्भनमाह—

१ अत्रार्थापत्तिः ।

भविनामिति ॥ भविनां संसारिणां स्वकर्मजं स्वकृतपापफलभूतं दुःखं भावयन्कुर्वन्स्वयं भवदपि भवने पुनः स्वयं प्रवर्तयन्नीश्वरो नोऽस्माकमकारणवैरी दायाद्त्वादिहेतुं विनैव शत्रुः स्यात्। अपरेऽन्ये पुनः कारणाद्दारक्षेत्राद्यपहारबन्धुवधादेर्वैरहेतोः परे वैरिणो भवन्ति भविनां न इति वा संबन्धः। 'ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा।' कर्मफलदातेश्वर इति मते कर्मानुगुणं फलं भवेत् तर्हीश्वरेण कर्तव्यं न किंचिदस्ति, तादृशः कर्मण एव दुःखोत्पत्तेः। एवं सति स चेदनुभावयति तर्ह्यस्मदादीनां द्वेष एव तेन कृतः स्यात्। तस्मात्तस्य दयालुत्वादयो गुणा गताः तस्मात्कर्मण एव प्राधान्यादीश्वरो नास्त्येवेति भावः। 'पञ्चमी भयेन २।१।३१' इति योगविभागात् 'कारणाद्वैरी' इति समासं कृत्वा पश्चान्नञ्समासः ॥ ७८ ॥

**तर्काप्रतिष्ठया साम्यादन्योन्यस्य व्यतिघ्नताम्।**
**नाप्रामाण्यं मतानां स्यात्केषां सत्प्रतिपक्षवत् ॥**

अन्यदप्याह—

तर्केति ॥ प्रमाणानुग्राहकयुक्तिसङ्घरूपस्य तर्कस्याप्रतिष्ठयाऽनन्ततयाऽपर्यवसानेन कृत्वा यत्साम्यं तुल्यत्वं तस्मात्तुल्यत्वाद्धेतोः सुन्दोपसुन्दन्यायेन विनिमयेनान्योन्यस्य परस्परं व्यतिघ्नतां दूषयतां केषां मतानां प्रमाणत्वेन समानानामनुमानादीनाम्। अथ च—सत्त्वासत्त्वैकात्म्यनानात्म्येश्वरत्वानीश्वरत्वादि प्रतिपादयतां दर्शनानामप्रामाण्यं स्यात्।अपि तु—तुल्यबलत्वेन परस्परविरोधादप्रमाणत्वमेव स्यात्। किं च—सन् प्रतिपक्षो विरुद्धसाध्यसाधको हेतुर्यस्य तदनुमानं सत्प्रतिपक्षं तद्वत्तस्येवाप्रामाण्यं स्यादिति संबन्धः। वैशेषिकादयो यथा कृतकत्वाद्घटवदनित्यं शब्दं वदन्ति। मीमांसका निरवयवत्वादात्मवन्नित्यं शब्दं वदन्ति। तत्रोत्तरेण पूर्वप्रदर्शिते दोषविशेषे पूर्वस्य यथाऽप्रामाण्यं तथेत्यर्थः।सत्प्रतिपक्षानुमाने यथाऽप्रामाण्यं द्वयोरपीत्यर्थः। सप्तम्यर्थे वतिः। तर्क्यते निश्चीयतेऽर्थो यैस्ते तर्का अनुमानानि तेषामप्रतिष्ठया समबलद्वितीयसद्भावेनानिश्चितस्वरूपतयेत्यर्थ इति वा व्याख्येयम्। गगनं नित्यममूर्तत्वादात्मवत्, गगनमनित्यमस्मदादिबाह्येन्द्रियग्राह्यगुणाधारभूतत्वाद्घटवदिति सत्प्रतिपक्षानुमानयोरिवेत्यर्थः ॥ ७९ ॥

१ पर इति यमकम्। २ सत्प्रतिपक्षवदित्युपमा।

**अक्रोधं शिक्षयन्त्यन्यैः क्रोधना ये तपोधनाः।**
**निर्धनास्ते धनायैव धातुवादोपदेशिनः ॥ ८० ॥**

अन्यचाह—

अक्रोधमिति ॥ क्रोधना अकारणरोषणा ये तपोधनाः तपःसर्वस्वा दुर्वासःप्रभृतयस्ते 'क्रोधो बह्वनर्थकारित्वात्सर्वथा त्याज्यः' इत्यक्रोधं क्रोधाभावमन्यैः प्रयोज्यैः शिक्षयन्ति। अन्ये क्रोधाभावं शिक्षन्ते, तान् क्रोधो न कार्य इति प्रयोजयन्त्युपदिशन्तीति यावत्। स्वयं तु क्रुद्धा यत्किंचिदाचरन्ति अन्यांस्त्वेतदुपदिशन्तीत्युपहासः। तथा—येऽतिनिर्धनास्ते धनायैव स्वस्य धनप्राप्त्यर्थमेव लोहादिधातूनां संबन्धिनं वादं स्पष्टं वचनमन्योन्यरिपुमित्रभावज्ञानेन धातूनां संयोगात्स्वर्णरूप्यादिं मया कर्तुं शक्यते, मदुपदेशात्त्वमपि कुर्वित्येवंरूपं धातुवादमुपदिशन्ति एवंशीला भवन्ति। परं तु स्वस्मै किंचित्तेन दातव्यमित्येवं परप्रतारणबुद्ध्यैव,न तु तत्त्वतः। यतः स्वयं निर्धनाः। इति हेतुः। तादृक्सामर्थ्यसद्भावे तेषामधनत्वं न युज्यते। ततश्च 'यः स्वयमतीर्णः स कथं परांस्तारयति' इत्यनेन धातुवादिनामप्युपहासः। अन्यैः, प्रयोज्यकर्तुरनभिहितत्वात्कर्तरि तृतीया। क्रोधनाः, 'क्रुधमण्डार्थेभ्यश्च ३।२।१५१' इति युच् ॥ ८० ॥

**किं वित्तं दत्त तुष्टेयमदातरि हरिप्रिया।**
**दत्त्वा सर्वं धनं मुग्धो बन्धनं लब्धवान्बलिः ॥ ८१ ॥**

इदानीं दानधर्मं दूषयति—

किमिति ॥ भो जनाः, यूयं वित्तं स्वर्णादि यज्ञादौ दक्षिणात्वेन पात्रेभ्यः किमिति दत्त। अपि तु—कस्मैचिदपि न देयम्। यस्माद् इयं हरिप्रिया विष्णोः प्रेयसी सम्पद्रूपा लक्ष्मीरदातरि अकृतदानोपभोगे कृपणे तुष्टा प्रीतिं प्राप्नोति। तत्रैव वसतीत्यर्थः। दाने बाधकमाह—यस्मात् मुग्धो मूर्खो दानव्यसनपरः, तथोदर्कविचारशून्यः स्मृतिपुराणादौ श्रद्धावांश्च बलिः सर्वं धनं श्रीवामनाय दत्त्वा बन्धनं लब्धवान्। वाक्पाशेन बद्धः सन्पातालप्रवेशरूपं बन्धनं प्राप्तवानिति पुराणकथा। दानं कर्तव्यमित्यत्र स्मृत्यादिकमेव प्रमाणम्, दानमशुभोदर्कं जातमित्यत्रापि तदेव प्रमाणम्। तथा च—कर्तृद्रव्यपात्रशुद्ध्यादियुक्तेऽपि दानविधौ सति विरुद्धफलदर्शनात् अदातरि च लक्ष्म्याः स्थैर्यदर्शनादन्वय-

व्यतिरेकाभ्यां दानधर्मः सर्वथा त्याज्य एवेत्युक्तमिति भावः। हरिप्रियेत्यनेन श्रीहरिणाऽपि याचकत्वाङ्गीकारात्लक्ष्मीमीत्यर्थमदातृत्वमेवाङ्गीकृतमिति च सूचितम्[१] ८१॥

**दोग्धा द्रोग्धा च सर्वोऽयं धनिनश्चेतसा जनः।**
**विसृज्य लोभसङ्क्षोभमेकद्वा यदुदासते ८२॥**

पात्राभावाद्दानं न कर्तव्यमित्याह—

दोग्धेति॥ अयं प्रत्यक्षग्रहणयोग्यः सर्वोऽपि जनो धनिन आढ्यात्परान्दोग्धा दोहनशीलः। स्वामिभक्तदानादिविष्णुपदेशादिना येन केनाप्युपायेन धनिकेभ्यो धनमाकर्षतीत्यर्थः। तथा—द्रोग्धा मनसा तद्विषये द्रोहकरणशीलश्च। कथमेनं हन्याम्, एतस्य धनादि च कथं गृहीयामित्यादिप्रकारेण तद्विषये द्रोहमेव चिन्तयतीत्यर्थः। ननु सर्वोऽप्येवमिति कथमुच्यत इत्यत आह—लोभसंक्षोभं द्रव्याद्यभिलाषजनितं मनसो नितरां क्षोभं कार्पण्यपारवश्यलक्षणं विकारमभिलाषातिरेकं वा विसृज्य यदुदासत उदासीना भवन्ति परस्वापकर्षणादेरुपरता भवन्ति तर्हि एकद्वा एको द्वौ वा, न तु तृतीयः। तादृशस्त्वल्पीयान् तस्मात्सुकर्मेवोक्तमित्यर्थः। तस्मात्परप्रतारणप्रयोजनक एव दानधर्मोपदेश इति भावः। परप्रतारकत्वात्पात्राभावाद्दानं न कर्तव्यमित्यर्थः। 'विगल्य' इति पाठे लोभातिरेकं बलान्निरुध्येत्यर्थः। दोग्धा, द्रोग्धा, ताच्छील्ये तृन्। तद्योगे च 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधाद्धनिन इति द्वितीया। एको द्वौ वा एकद्वाः, 'सङ्ख्ययाव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये २।२।२५' इति बहुव्रीहौ 'बहुव्रीहौ सङ्ख्येये डजबहुगणात् ५।४।७३' इति डच् समासान्तः॥ ८२॥

**दैन्यस्यायुष्यमस्तैन्यमभक्ष्यं कुक्षिवञ्चना।**
**स्वाच्छन्द्यमृच्छताऽऽनन्दकन्दलीकन्दमेककम्॥**

इदानीं विधिनिषेधजातं दूषयन्नुपसंहरति—

दैन्यस्येति॥ अस्तैन्यं चौर्याभावो दैन्यस्य निर्धनत्वस्यायुष्यम्। वर्धकमित्यर्थः। चौर्यं यावन्न क्रियते तावद्दैन्यं नापयाति। तस्मात्तत्कर्तव्यमेवेति भावः। तथा—अभक्ष्यं लशुनगृञ्जनग्राम्यसूकरादि तद्वर्जनमिति यावत्। तत्कुक्षिवञ्चना स्वोदरविप्रलम्भनमेवं स्वादुतममक्ष्यपरिहारे जठरवञ्चनैव भवति, न तु स धर्मः। तस्मात्किं बहुना—आनन्दस्य सकलसुखस्य कन्दलीकन्दं प्ररोहमूलभूतमेकमद्वितीयं केवलं स्वाच्छन्द्यं स्वेच्छाचारित्वमृच्छत आश्रयत। श्रौतस्मार्तसकलनिषेधान्परित्यज्य सर्वसुखहेतुत्वात्स्वेच्छाचारमेव कुरुतेत्युपदेशानन्तरमाकर्णयतेति भावः। आयुष्यं, 'तस्मै हितम् ५।१।५' इति यत्। अस्तैन्यं स्तेनशब्दात् 'स्तेनाद्यन्नलोपश्च ५।१।१२५' इत्यत्र 'स्तेनात्' इति योगविभागात्ष्यञि अर्थाभावेऽव्ययीभावः। एवमभक्ष्यमित्यत्रापि। 'विन्दत' इति वा पाठः। 'विद्लृ लाभे' लोट्॥ ८३॥

**इत्यमाकर्ण्य दुर्वर्णं शक्रः सक्रोधतां दधे।**
**आवोचदुच्चैःकस्कोऽयं धर्ममर्माणि कृन्तति ८४**

इत्थमिति॥ शक्र इत्थं पूर्वोक्तं दुर्वर्णं वेदादिदूषकं चार्वाकस्य दुष्टवर्णवाक्यमाकर्ण्य सक्रोधतां दधे। सकोपोऽभूदित्यर्थः। अनन्तरमुच्चैर्नितरां तारस्वरमित्यवोचत्। इति किम्—एतेषु मध्ये अनिश्चितरूपोऽयं कस्कः श्रुत्यादिमूलानि धर्मरहस्यभूतानि मर्माणि वेददूषणाक्रान्तानि छिनत्ति। कोऽयं कोऽयमेवं भाषत इति वक्तृविशेषनिश्चयाय कोपाभिव्यञ्जकसंभ्रमोक्तौ कस्कशब्दः। 'कस्कादिषु च ८।३।४८' इति साधुः॥ ८४॥

**लोकत्रयीं त्रयीनेत्रां वज्रवीर्यस्फुरत्करे।**
**क इत्थं भाषते पाकशासने मयि शासति८५**

क्रोधमेव द्योतयन्वेदप्रामाण्यं प्रतिजानीते—

लोकेति॥ पाकशासने पाकासुरमर्दने मयि त्रयीनेत्रां प्रसिद्धचक्षुर्द्वयागोचरार्थगोचरीकरणसमर्थवेदत्रयरूपनेत्रां वेदविहिताचरणवेदनिषिद्धवर्जनकारिणीं लोकत्रयीं धर्मस्थापनपूर्वं शासति परिपालयति सति क इत्थमेवं सकलधर्मदूषणप्रकारेण भाषते। किंभूते—वज्रवीर्येण स्फुरन्प्रकाशमानः करो यस्य तस्मिन्। वज्रेत्यादिना वेदादिनिन्दकस्य कण्ठच्छेदसामर्थ्यं स्वस्य सूचितम्। मयीति करेण हृदयस्पर्शनपूर्वं क्रोधाहंकाराविष्काराभिनयः। 'वज्रहस्तः पुरंदरः' इत्यादिवाक्यप्रतिपाद्ये मयि प्रत्यक्ष-

१ अत्र दाने बन्धनरूपदोषदर्शनाद्दाने गुणदर्शनमर्थतः प्राप्तमिति लेशः, 'लेशः स्याद् दोषगुणयोर्गुणदोषत्वकल्पनम्।' इति तल्लक्षणात्।

१ अत्रानुप्रासः। कन्देति यमकं च। २ अत्रानुप्रासः।

इत्थे सति श्रुतिप्रामाण्यं को वाऽन्यथाकर्तुं समर्थ इति 'वज्रवीर्य' इत्यनेन विग्रहवत्त्वं सूचितम्।'ग्रावोन्मज्जनवत्' 'अग्निहोत्रं त्रयी' इत्यादिवेदाप्रामाण्यप्रतिपादकं चार्वाकवाक्यं दूषितमिति ज्ञेयम् ।. शासति मयि, शासन्तं मामनादृत्येत्यनादरसप्तमी वा ॥ ८५ ॥

श्लोकद्वयेन 'शुद्धिर्वंशद्वयी' इत्यादि यत्रातिदूषणं कृतं तत्परिहरति—

**वर्णासंकीर्णतायां वा जात्यलोपेऽन्यथाऽपि वा ।**
**ब्रह्महाऽऽदेः परीक्षासु भङ्गमङ्ग प्रमाणय॥८६॥**

वर्णेति ॥ अङ्ग रे चार्वाक, ब्राह्मणादिवर्णानामसंकीर्णतायां सत्यामन्योन्ययोनिसंकराभावे सति यो जात्यलोपो ब्राह्मणादिजातेर्लोपाभावः सद्व्यवहारविषयत्वं तस्मिन्वा विषयेऽन्यथापि वर्णसंकराज्जात्यभावे वा विषये परीक्षासु शुद्धत्वादिज्ञापकेषु स्मृत्याद्युक्तेषु जलानलादिदिव्येषु विषये ब्रह्महादेर्ब्राह्मणक्षत्रियादिवधकारिणोऽभियोज्यस्य भङ्गं पराजयं प्रमाणय संदिग्धस्यार्थस्य कोट्यन्तरनिरासननिश्चायकं कुरु । यदि ब्राह्मणत्वादिशुद्धिर्न स्यात्, तर्हि ब्रह्मवधादौ कृतेऽपि ब्रह्महा नास्मीति प्रतिज्ञाते च लिङ्गभूतो भङ्गो न स्यात् । भवति च तावत्, तस्माद्भङ्गेनैव हन्यमानस्य तत्पित्रादिपरम्परायाश्चासंकीर्णत्वाद्ब्राह्मण्यादिजातेरस्तित्वं कथितम् । यत्र च संकराज्जातिशुद्धिर्नास्ति तस्य वधादौ कृतेऽपि ब्रह्महत्यादिप्रतिज्ञाकृतो भङ्गो नास्त्येवेति वर्णसंकराज्जातिलोपे व्यतिरेकमुखेन भङ्ग एव प्रमाणं धूम इव वह्न्यभावेऽपीत्यर्थः । अङ्गेति प्रातिकूल्यद्योति संबोधनम् । मिथ्यातत्त्वपरीक्षायामभियोक्तुर्भङ्गेऽभियोज्यस्य जातिशुद्धिः पातित्याभावश्च । अभियोज्यभङ्गे तु हन्यमानादेर्जातिशुद्धौ सत्यामप्यभियोज्यस्यैव संकीर्णजातित्वं पातित्यं चेति निश्चयसिद्धेर्भङ्गमेव प्रमाणयेत्यर्थ इति व्याख्येयम् । यथामति व्याख्या ज्ञातव्या ॥ ८६ ॥

**ब्राह्मण्यादिप्रसिद्धाया गन्ता यन्नेक्षते(ऽ)जयम् ।**
**तद्विशुद्धिमशेषस्य वर्णवंशस्य शंसति ॥ ८७ ॥**

पूर्वोक्तमेव द्रढयति—

ब्राह्मण्येति ॥ ब्राह्मण्यमादिर्यस्य क्षत्रियत्वादिजातिविशेषस्य तेन प्रसिद्धा । यद्वा—ब्राह्मणी आदिर्यस्याः क्षत्रियादिस्त्रियाः सा ब्राह्मण्यादिः सा चासौ प्रसिद्धा च तस्याः इयमुत्तमा ब्राह्मणी इत्यादिप्रकारेण रूढायाः स्त्रियाः गन्ता कामुकस्तां भुञ्जानो नरो दिव्ये जयं न ईक्षते पश्यतीति यत् । न प्राप्नोतीत्यर्थः।तज्जयानीक्षणमेव कर्त्रशेषस्य वर्णवंशस्य ब्राह्मणादिवर्णसङ्घस्य मातापित्रादिपरम्परया विशुद्धिं नितरां निर्दोषत्वं शंसति कथयति।ब्राह्मणीव्यभिचारी नरो ब्राह्मणोऽहं ब्राह्मणीं नागममिति प्रतिज्ञाय यदा दिव्यं करोति तदा स पराजयत एवेति तावत्प्रत्यक्षम्, तथा च गम्याया गन्तुश्च पारदार्यादिदोषदूषितत्वेऽपि तन्मातापित्रादिपरम्परयाः ब्राह्मण्यादिविशुद्धिस्तत्पराजयेनैव स्पष्टं कथिता । यदि जातेः शुद्धिर्नाभविष्यत्, तर्ह्येवं प्रतिज्ञायां कृतायामपि तयोर्ब्राह्मणत्वाभावाद्भङ्गो नाभविष्यत्, स तु दृश्यत इति भङ्ग एवान्यथानुपपत्त्या जातिशुद्धौ प्रमाणमित्यर्थः । ब्राह्मणादिव्यभिचारिण्यपि पराजयत एवेति तस्या अप्येतदुपलक्षणं ज्ञेयम्।प्रसिद्धाया इत्यनेन जातेरनपलापनीयत्वं सूचितम् । ब्राह्मण्यादिप्रसिद्धाया गन्ता ना पुरुषो यदजयं भङ्गमीक्षते तद्भङ्गेक्षणमिति वा व्याख्या । 'गन्तेति ण्वुल्तृचौ ३।१।१३३' इति तृच् । अन्यथा न 'लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठ्यभावः स्यात् । 'प्रसिद्धायाम्' इति पाठे विषयसप्तमी । अन्या व्याख्या क्लिष्टत्वादुपेक्ष्या ॥ ८७ ॥

**जलानलपरीक्षाऽऽदौ संवादो वेदवेदिते ।**
**गलहस्तितनास्तिक्यां धियं कुरुते(ऽ)न ते ॥ ८८ ॥**

इदानीं संवादादपि वेदस्य प्रामाण्यमित्याह—

जलेति ॥ हे चार्वाक, वेदेन वेदिते बोधिते वेदमूले जलानलयोः,ताभ्यां वा,या परीक्षा शुद्धत्वनिश्चयः स आदिर्यस्य । तुलादिव्यादेस्तादृशेऽर्थे संवादो यथोक्तदर्शनरूपः स ते तव धियं बुद्धिं गलहस्तितं बलान्निर्वासितं नास्तिक्यं यस्यास्तां न कुरुते धिक् । वाक्यार्थः कर्म । अनुचितमेतदित्यर्थः । जलदिव्ये हि जलमग्नः पुरुष आकर्णपूर्णपुरुषमुक्तशरप्रत्यानयनमपेक्षमाणो यद्यनानीते शरे उन्मज्जति, तर्ह्येवाऽशुद्धः । आनीते तु शुद्ध इति वेदोक्तजलदिव्यम् । तच्च तथैव दृश्यत इति संवादः । वह्निदिव्ये तु तप्तलोहादौ दाहादाहाभ्यामशुद्धिशुद्धी इत्य-

---

१ अत्र परिकरः, अनुप्रासश्च । २ अत्रानुप्रासः ।

१अत्र 'ईक्ष्यते जयन्' इति पाठान्तरम्,ब्राह्मण्यादिप्रसिद्धाया गन्ता जयन् जयशीलः नेक्ष्यते दृश्यते, यदिति व्याख्येयम् । अन्यत् पूर्ववत् ।

प्युक्तं वेदेन । तत्रापि संवादः । तस्मिन्प्रामाण्यहेतौ संवादे सत्यपि नास्तिक्यं न जहासीत्याश्चर्यम्। मूर्खतरोऽसीति भावः । तव धिग्धियं निन्द्यां बुद्धिं निराकृतनास्तिक्यां न कुरुते इति वा। तव धियं धिक् निन्द्यां न कुरुते- अपि तु करोत्येव । दूषयतीत्यर्थः । तव धियं न धिक्करोति, अपि तु धिक्करोत्येवेति वा। यतो निराकृतनास्तिक्यामित्युभयत्रापि हेतुगर्भम् । संवादेन नास्तिक्यापनयास्वरूपहानेधिकार एव कृत इत्यर्थः । जलानलपरीक्षादौ ते तथापि यतः संवादः संप्रतिपत्तिरस्ति, तेन कारणेन संजातगलहस्तमालिङ्गितकण्ठं नास्तिक्यं यस्यां तां स्वीकृतनास्तिक्यां स्वबुद्धिं त्वं धिक्कुर्वित्यर्थ इति वा।अत्र गलहस्तशब्दः परिरम्भपरः । यतस्तवापि संवादोऽस्ति । तेन स्वीयां धिग्धियं नास्तिक्यवादादुष्टां बुद्धिं निर्वासितनास्तिक्यां कुर्विति वा । कुत्सिता रतिः शब्दो यस्य तत्संबोधनं कुरुते । तथा —अविद्यमाननतेऽविनीत चार्वाक वैदिके जलानलपरीक्षादौ यस्मात्संवादोऽस्ति तस्मादाश्लिष्टनास्तिक्यां नास्तिकमतिं धिक् । सा निन्द्येत्यर्थ इति यत्तदोः संबन्धेन वा व्याख्येयम् । नास्ति मतिरस्येत्यर्थे 'अस्ति नास्ति दिष्टं मतिः ४ । ४ । ६ ।' इति ठकि नास्तिकः । मतिः परलोकविषया । तद्भावो नास्तिक्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च ५ । १ । १२४ ।' इति ब्राह्मणादित्वात्ष्यञ्[1] ॥ ८८ ॥

**सत्येव पतियोगादौ गर्भादेरध्रुवोदयात् ।**
**आक्षिप्तं नास्तिकाःकर्म न किमर्मभिनत्तिवः८९**

इदानीं 'मृते कर्मफलोर्मयः' इत्यादीनि वाक्यानि दूषयति—

सतीति ॥ पतियोग कृतौ क्रिया भर्तृसंबन्धः शुक्रशोणितसंनिपातलक्षणः, अयुग्मासु गमनं निषिद्धतिथ्यादिवर्जनमेतदादिर्यस्यैतादृशे बीजक्षेपादौ कर्षणजलसेकादौ च वर्तमान एव दृष्टकारणसामग्र्यां सर्वदा सत्यामपि गर्भादेरध्रुवोदयादनिश्चितात्पुद्भवात्कस्मिंश्चित्कालेऽनुत्पत्तेर्हेतोराक्षिप्तमलौकिकस्य परलोकसाधनस्याभावे दृष्टकारणसामग्रीत एव सदा स्यात्, न चैवमस्ति, तस्माद्धर्माधर्मरूपमदृष्टं कारणान्तरमप्यस्तीत्यर्थापत्तिप्रमाणकं कर्म शुभाशुभफलकमदृष्टं भो नास्तिका अवैदिकत्वाद्द्रष्टुमनर्हाः, वो युष्माकं मर्म हृदयं किं न भिनत्ति,[1] अपि तु विदारयत्येव । कुतो हेतोर्न भिनत्तीति वा । एतन्निदर्शनेन सचेतसो हृदयेन विदरितुं युक्तम् । तन्न जातमित्याश्चर्यम् । मूर्खतमा भवन्त इत्यर्थः । कर्म वो मर्मदर्शनरहस्यरूपं न किं दूषयति? किन्तु दूषयत्येवेति वा । सर्वोद्देशेन नास्तिका इति बहुवचनम् । गृहस्थाश्चिचतुरासु पत्नीषु सतीष्वपि पुत्राद्यसंभवे एवं वदन्ति—अस्माभिरपत्यप्राप्तिहेतुकं कर्म प्राक्न कृतम् । अजातसम्यक्प्रेतकृत्येनास्मद्वंश्येन केनचित्प्रेतेन प्रतिबन्धः कृतः, तस्मादपत्यं न भवतीत्यादि वा कथयन्ति । तस्माल्लोकप्रवादपारम्पर्यादर्थापत्तिरदृष्टं कारणान्तरमङ्गीकरणीयम् । आदिशब्दाभ्यां कृषिवाणिज्यस्वामिसेवादिव्यवसायास्तत्फलाभावास्तयश्च व्याख्यातौः ॥ ८९॥

**याचतः स्वगयाश्राद्धं प्रेतस्याविश्य कश्चन ।**
**नानादेशजनोपज्ञाःप्रत्येषि न कथाः कथम् ९०**

'मृतः स्मरति—''अन्यभुक्तैर्मृते तृप्तिः—''संदेहेऽप्यन्यदेहाप्तिः—' इत्यादेरुत्तरमाह—

याचत इति॥ पापवशादप्राप्तसद्गतेः पिशाचत्वादियोनिप्राप्तस्य स्वसंबन्धिनम्, उदासीनं वा, यं कंचनाविश्य सूक्ष्मरूपेण तच्छरीरमधिष्ठाय स्वसंबन्धि गयाश्राद्धं निजदुर्गतिपरिजिहीर्षया गयायां श्राद्धं प्रयागे माघस्नानादिजन्यं पुण्यविशेषं याचतो मम सद्गतिप्राप्त्यर्थमिदं करणीयमिति प्रार्थयमानस्य एवं कृते एनं मोक्ष्यामीति वदतः प्रेतस्य संबन्धिनीर्नानादेशेभ्य आगता जनास्तेभ्य उपज्ञाः श्रुताः, तैर्वा ज्ञाताः सत्यत्वेन सर्वेषां संमताः कथाः कथं न प्रत्येषि तासु कथं न विश्वसिषि, अपि तु नानाविधप्रामाणिकजनसंवादाद्धित्वात्पूर्वजन्मकथनात्पूर्वं मयार्पितावत्सुवर्णादि निक्षिप्तं तत्स्थानेति निध्यादिदर्शनसंवादाद्देशान्तरकालान्तरप्रवृत्तिकथनाद्गयाश्राद्धादौ कृते तस्य सद्गतेरनुमानाच्च ताः सर्वथा विश्वसितुं योग्या इत्यर्थः। एतेन तीर्थादिप्रभावविशेषपरलोकदेहान्तरप्राप्तिधर्माधर्ममूलस्वर्गनरकादिप्राप्तीनां प्रामाण्यं समर्थितम् । नानादेशजन उपज्ञोऽनुभविता यासां ताः सर्वसाक्षिका इत्यर्थः ॥ ९० ॥

**नीतानां यमदूतेन नामभ्रान्तेरुपागतौ ।**
**श्रद्धत्से संवदन्तीं न परलोककथां कथम् ९१॥**

'को हि वेद—' इत्यादेरुत्तरमाह—

[1] अत्र काव्यलिङ्गम् ।

[1] अत्रानुप्रासः । [2] अत्राप्यनुप्रासः ।

नीतानामिति॥प्राणापकर्षणार्थं यमेनैव प्रेषितेन यमदूतेन देवदत्तमानयेत्यादिष्टे समाननामतया भ्रान्तेर्हेतोः स्थूलशरीराल्लैङ्गिकं शरीरमाकृष्य यो देवेनानायितः सोऽयमानीत इति यमसाभीप्यं नीतानां मारणीयादन्येषां जनानामुपागतौ सत्यामानायितो यः सोऽयं न भवति पुनरयं मर्त्यलोकं नेय इति एतत्सदृशमन्यमानयेति यमाचित्रगुप्ताभ्यामुक्ते सति प्रत्यावृत्तौ भौतिकशरीरमध्ये लैङ्गिकशरीरे पुनः प्रविष्टे सति तद्बान्धवैरेतावत्पर्यन्तं किं जातम्, त्वं कुत्र गतः, किं वा तत्र दृष्टमित्यादि प्रश्ने कृते यमदूतैर्यमं प्रापितः तेन च पुनरायुःशेषादत्र पातितोऽहम्, स्वर्गो नरकश्चैवंविध इति प्रकाशकश्रुतिस्मृतिप्रमाणेषु यथा स्वर्गादिरूपं श्रुतम्, तादृशस्यैव तस्य कथनात्संवदन्तीं संवादं कुर्वतीं परलोकसंबन्धिनीमस्तित्वकथां कथं कुतो हेतोस्त्वं न श्रद्धत्से परलोकास्तित्वे प्रमाणरूपां न मन्यसे वद । न किंचिदविश्वासे कारणमस्ति । तस्मात्परलोकोऽस्त्येवेति भावः ॥ ९१ ॥

**जज्वाल ज्वलनः क्रोधादाचख्यौ चाक्षिपन्नमुम् ।**
**किमात्थ रे किमात्थेदमस्मदग्रे निरर्गलम् ॥ ९२ ॥**

जज्वालेति ॥ अथ ज्वलनोऽग्निः क्रोधाज्जज्वाल । अमुं चार्वाकमाक्षिपन्परुषभाषणैरधिक्षिपन्नित्याचख्यावूचे च । इति किम्—रे चार्वाक नीच, त्वमस्माकं वैदिकानामग्रे निरर्गलं निर्भयं यथा तथा इदं पूर्वोक्तप्रकारं किमात्थ किमात्थ किं ब्रूषे किं ब्रूष इति । क्रोधाविष्टस्य जातिरियम् । क्रोधावेशद्योतनार्थमेव वीप्सया पुनरुक्तिः ॥ ९२ ॥

**महापराकिणः श्रौतधर्मैकवलजीविनः ।**
**क्षणाभक्षणमूर्च्छालं स्मरन्विस्मयसे न किम् ॥ ९३ ॥**

इदानीं 'नाश्नाति स्नाति—' इत्यादेरुत्तरमाह—

महेति ॥ हे क्षणं क्षणमात्रमभक्षणेनाभोजनेन मूर्च्छालातिविह्वल रे नास्तिक, द्वादशादिबहुविधसोपवाससाध्यमहापराकाख्यव्रतवतस्तद्व्रतचारिणः श्रौतधर्मरूपेणैवैकेन बलेन जीविनः प्राणधारणशीलानेवंभूतान्मनुष्यान्स्मरंश्चिन्तयन्किं न विस्मयसे । एतावन्ति दिनान्येतेऽभोजनाः कथमासत इत्याश्चर्यं न प्राप्नोषि एतन्महच्चित्रम् । क्षणमात्रमप्यभोजने पीडायाः स्वेनैवानुभवे, मासोपवासादिकारिणां जीवितधारणस्य प्रत्यक्षदर्शने च सत्यपि भवादृश एव मूर्खो न विस्मयत इत्यर्थः । तस्माच्चिरमभोजनेऽपि जीवितधारणसामर्थ्याद्धर्मोऽस्त्येवेति । एकादश्युपवासादिकं धर्ममन्वयव्यतिरेकाभ्यां जानीहीति भावः । पराकिणः, शेषत्वाविवक्षायां द्वितीयाबहुवचनम् । शेषत्वविवक्षायाम् 'अधीगर्थदयेशां कर्मणि २।३।५२' इति षष्ठ्येकवचनं वा । मूर्च्छालः अस्त्यर्थे सिध्मादिषु 'क्षुद्रजन्तूपतापाभ्यां चेष्यते' इति वचनादुपतापकारित्वाल्लच् । 'विस्मयसेऽपि न' इति च पाठः ॥ ९३ ॥

**पुत्रेष्टिश्येनकारीरीमुखा दृष्टफला मखाः ।**
**न वः किं धर्मसन्देहमन्देहजयभानवः ॥ ९४ ॥**

इदानीं 'ग्रावोन्मज्जनवत्—' 'एकं संदिग्धयोस्तावत्—' इत्यादेरुत्तरमाह—

पुत्रेति ॥ भो नास्तिकाः, पुत्रप्राप्त्यर्थं विहितः पुत्रफलको यागः पुत्रेष्टिः, 'श्येनेनाभिचरन्यजेत' इति वेदवाक्यविहितः श्येनसाधनकोऽभिचारफलको यागः श्येनः, तथा—'कारीरीं निर्वपेद्वृष्टिकामः' इति वंशाङ्कुरसाधनको वृष्टिफलको यागः कारीरीत्युच्यते, एते यागा मुखमादिर्येषां ते, तथा दृष्टं प्रत्यक्षानुभूयमानसुतसंभूतिवैरिमारणजलवर्षणादिरूपं फलं प्रयोजनं येषां ते मखा वो नास्तिकानां युष्माकं धर्मोऽस्ति नास्ति वेति धर्मसम्बन्धी संदेहो वेदवाक्यविहितादृष्टफलकयागादिरूपो धर्मस्तत्संबन्धी वा, अदृष्टफलकयागादिविधायकवेदवाक्यान्येव वा धर्महेतुत्वाद्धर्मस्तत्सम्बन्धी वा यः प्रामाण्याप्रामाण्यसंदेह एव मन्देहाः संध्याद्वये सूर्यग्रासार्थमुत्पद्यमानाः षष्टिसहस्राधिकाः सार्धास्तिस्रः कोटयो राक्षसास्तेषां जये विनाशे भानवः सूर्यरूपा विनाशकाः किं न भवन्ति एवं दृष्ट्वापि धर्मं न मन्यसे चित्रमित्यर्थः । किं न अपि तु भवन्त्येवेति वा । 'तिस्रः कोटयोऽर्धकोटी च मन्देहा नाम राक्षसाः । उदयन्तं सहस्रांशुमभियुध्यन्ति ते सदा ॥ गायत्र्या चाभिमन्त्र्योर्ध्वं जलं त्रिः संध्ययोः क्षिपेत् । तेन शाम्यन्ति ते दैत्या वज्रीभूतेन वारिणा॥' इत्यादिवचनप्रामाण्याद्गायत्र्याभिमन्त्रितजलप्रक्षेपेण तन्नाशपुरःसरमेव सूर्योदयात्सूर्य एव तान्विना-

१ अत्रानुप्रासः । २ अत्राप्यनुप्रासः ।

१ अत्राप्यनुप्रासः ।

शयतीत्युच्यते । तथा च सूर्यो यथा तमोनाशयति, तथा मखैरपि भवदीयः संदेहो विनाश्य एवेति प्रामाणिकमेव सर्वं जानीहि ॥ ९४ ॥

**दण्डताण्डवनैः कुर्वन्स्फुलिङ्गालिङ्गितं नभः ।**
**निर्ममेऽथ गिरामूर्मीर्भिन्नमर्मैव धर्मराट् ॥९५॥**

दण्डेति ॥ अथाग्निवचनानन्तरं धर्मराड् यमः स्वायुधस्य दण्डस्य ताण्डवनैरितस्ततश्चालनैर्नभः स्फुलिङ्गालिङ्गितमग्निकणाकीर्णं कुर्वन्रचयन् चार्वाकवाक्छरैर्भिन्नमर्मैव विदारितजविस्थान इवासहमानो गिरामूर्मीर्वाक्यपरम्परा निर्ममे ऊच इत्यर्थः । ऊर्मिपदेन वाचामप्रतिहतप्रसरत्वं सूचितम् । 'अथ पीडायां वीचिवेगयोः । वस्त्रसूक्ष्मे च रेखायां चोर्मिः स्त्रीपुंसयोर्मतः ॥' इति त्रिकाण्डशेषकारोक्त्योर्मिशब्दः स्त्रीलिङ्गोऽपि ॥ ९५ ॥

**तिष्ठ भोस्तिष्ठ कण्ठोष्ठं कुण्ठयामि हठादयम् ।**
**अपष्ठु पठतः पाठमधिगोष्ठि शठस्य ते ९६॥**

तदेवाह—

'तिष्ठेति॥ भो नास्तिक, तिष्ठ तिष्ठ क्षणं सहस्व सहस्व। धर्मदूषणाद्विरम विरमेति वा । अयमहमधिगोष्ठि गोष्ठ्यामिन्द्रादिसभायामपष्ठु प्रतिकूलं पाठ्यं पठनार्हं वचनं पठतो भाषमाणस्य शठस्य, वाक्छलमात्रनिष्ठस्य नास्तिकाधमस्य ते तव कण्ठोष्ठं कण्ठनालमोष्ठौ च हठाद्बलात्कारेणेदानीमेव कुण्ठयामि वर्णोच्चारणाशक्तं करोमि । दण्डेन चूर्णयामीत्यर्थः । सर्वाणि विशेषणानि दण्डयत्वज्ञापने हेतवः । अथ च—एवंविधस्य तेऽधिगोष्ठि कथामधिकृत्य वाचोयुक्तौ कण्ठोष्ठं कुण्ठयामि युक्त्या प्रतिहतत्वाद्वक्तुमसमर्थं करोमि । सर्वमपि भवच्छास्त्रं दूषयिष्यामीत्यर्थः । इतः परमपि यदि वक्ष्यसि तदा तव कण्ठं हठाद् बलात् निपीडयिष्यामीति भावः । वाग्व्यापारं प्रति कण्ठोष्ठस्यैव दण्डो युक्तः । अयमिति क्रोधाहंकाराविष्कारः । तिष्ठतिष्ठेति क्रोधातिशयद्योतनार्था पुनरुक्तिः । कण्ठोष्ठं प्राण्यङ्गत्वादेकवत् । कुण्ठयामि, वर्तमानसामीप्ये भविष्यति लट् ॥ ९६

इदानीं श्लोकत्रयेण परलोकं धर्मं च साधयन् 'को हि वेद—' 'तर्काप्रतिष्ठया—' इत्यादेरुत्तरमाह—

१ भानव इति रूपकम् । २ अत्रानुप्रासः, मर्मैवेत्युत्प्रेक्षा । ३ अत्रानुप्रासः परुषा रचना चात्रानुगुणैवेत्यन्यत्र स्पष्टम् ।

**वेदैस्तद्वेदिभिस्तद्वत्स्थिरं मतशतैः कृतम् ।**
**परं करस्ते परं वाचा लोकं लोकायत त्यजेत् ९७**

वेदैरिति ॥ चतुर्भिर्ऋग्वेदादिवेदैर्यथा स्थिरीकृतम्, तद्वत्तस्य वेदस्य वेषच्छाया: तद्युक्तैस्तदंशोपजीविभिर्वेदानुसारिभिर्मतानां शतैः स्मृतिपुराणादिभिर्यादिग्रविवादिभेदैर्मीमांसाशास्त्रैश्च तथा स्थिरं कृतं निश्चयेन व्यवस्थापितं परं श्रेष्ठम्, अन्यं च स्वर्गादिलक्षणं लोकं हे लोकायत नास्तिकाधम । परं केवलं ते वाचा निर्युक्तिकेन वचनमात्रेण को विद्वांस्त्यजेत् । अपि तु—न कोऽपि । किन्तु सर्वैरपि तद्युक्तिभिः परलोकः स्वीकृत एवेत्यर्थः । तदस्तित्वसंदेहापादिनी 'को हि वेद—' इत्यादिश्रुतिस्त्वन्यपरेति भावः ॥ ९७ ॥

**समज्ञानाल्पभूयिष्ठपान्थवैमत्यमेत्य यम् ।**
**लोके प्रयासि पन्थानं परलोके न तं कुतः ९८॥**

समेति ॥ एकस्मिन्मार्गादावर्थे समज्ञानास्तुल्यमतयोऽल्पेऽल्पसंख्या भूयिष्ठा बहुतरसंख्याश्च पान्थास्तेषां वैमत्यं मार्गान्यत्वविरोधमेत्य प्राप्य ज्ञात्वा वा इह लोके यं पन्थानं त्वमेव प्रयासि परलोकेऽपि विषये तमेव तादृशमेव मार्गं कुतो हेतोर्न गच्छसीति प्रश्नः । अपि तु तमेव गच्छेत्युपदेशो वा । यथा—केनचित् 'वामो दक्षिणो वा काशीमार्गः' इति मध्येमार्गं पथिकेषु केषुचित्पृष्टेषु पञ्चभिर्वाममार्गे कथिते सति, पञ्चाशद्भिर्दक्षिणमार्गे कथिते 'द्वैधे बहूनां वचनं ग्राह्यम्' इत्यादिन्यायात्कुशलेन पञ्चाशदुक्तमार्गेणैव गम्यते । एवं परलोकेऽप्यल्पविमतिं निरस्य बहुनुगत एव मार्गः किमिति नाश्रीयत इत्यर्थः । परलोकमार्गश्च लक्षणया धर्मः, तं कथं न मन्यसे । अपि तु तमेवाङ्गीकुरु । परलोकसत्तानिश्चयमपि गन्तव्यग्रामवत्कुर्विति भावः । 'तर्काप्रतिष्ठया—' इत्यस्याप्येतदुत्तरं ज्ञेयम् ॥ ९८ ॥

**स्वकन्यामन्यसात्कर्तुं विश्वानुमतिदृश्वनः ।**
**लोके परत्र लोकस्य कस्य न स्याद्दृढं मनः ९९**

बहुसंमतिमेव दर्शयति—

स्वकन्यामिति ॥ स्वकन्यामात्मपुत्रीमन्यसात्कर्तुमन्यस्मै वरायाधीनां देयां कर्तुं विश्वेषां सर्वेषां श्रुतिस्मृतिपुराणादीनां लोकानां चानुमतिं दृष्टवतोऽनुभवतः, तथा

१ अत्राप्यनुप्रासः ।

कुर्वतश्च कस्य लोकस्य जनस्य परत्र लोके स्वर्गादौ मनो दृढं निःसंदेहं निश्चलं न स्यात् । अपि तु सर्वस्यापि स्यादेव । न केवलमन्यस्यैव, किन्तु चार्वाकस्य तवापीत्यर्थः । सर्वेऽपि परलोकबाधभिया स्वकन्यामन्यस्मै ददति । यदि परलोको नाभविष्यत्, तर्हि स्वपुत्रीमप्यन्यस्मै कथमदास्यत् । अयमाचारः सर्वेषां संमतः । स च त्वयाऽप्यन्यस्मै पुत्रीदानादङ्गीकृत एव । अन्यथा स्वपुत्र्याः स्वेनैव ग्रहणमापद्येत । तस्मादन्येषामनुमतिं गृहीत्वैव यथा कन्याऽन्यस्मै दीयते, तथा बहुसंमतिदर्शनात्परलोकमप्यङ्गीकुर्विति भावः । अन्यस्मात् 'दिये त्रा च५।४।५५' इति त्रातिः । दश्चेति पूर्ववत् ॥९९ ॥

**कस्मिन्नपि मते सत्ये हताः सर्वमतत्यजः ।**
**तद्दृष्ट्या व्यर्थतामात्रमनर्थस्तु न धर्मजः १००॥**

श्लोकद्वयेन 'श्रुतिस्मृत्यर्थबोधेषु—' 'तर्काप्रतिष्ठया—' इत्यादेरुत्तरमाह—

कस्मिन्निति ॥ धर्मपरलोकादिप्रतिपादनपराणां बहूनां मतानां मध्ये कस्मिन्नेकस्मिन्नपि मते सत्ये सत्यत्वेनाङ्गीकृते सति सर्वमतत्यजः सर्वमतत्यागिनः परस्परविरोधात्सर्वमतासत्यत्ववादिनो नास्तिका यूयं हताः मारिताः । तत्रायमभिसंधिः—मतानामसत्यत्ववादिभिः किंचिन्मतं सत्यमङ्गीक्रियते न वा । चेदङ्गीक्रियते तर्हि कस्यापि कन्यादानादिप्रतिपादकस्यान्यमतस्य स्वीयमतस्यैव वा सत्यत्वाङ्गीकारात् 'सर्वमप्रमाणम्' इति सर्वासत्यत्ववादिनो व्याघातापसिद्धान्ताभ्यां दूषिता एवेति वैदिकासिद्धान्तो निर्दोष इत्यायातं न वेति । पक्षे—नास्तिकमतस्याप्यसत्यत्वादसत्यभूतस्य दूषकत्वाभावान्निर्दोषो वैदिकः पक्षः सिद्ध एवेत्यपि नास्तिका दूषिताः। निर्दोषत्वेऽपि वैदिकपक्षानङ्गीकारे स्वपक्षोऽपि तैर्नाङ्गीकार्य इति ज्ञेयम् । एवं च तस्यैकस्य मतस्य दृष्ट्या सत्यताज्ञानेनोभयवादिसिद्धतया पुत्रेष्ट्यादौ पुत्रजन्मादिफलसिद्धौ सत्यां यत्र क्वचित्फलव्यभिचारः, तत्र कर्मणो वैकल्याद्व्यर्थतामात्रं वैयर्थ्यमात्रं फलसाधनत्वराहित्यमात्रम् । तु पुनः अधर्मः प्राचीनपुत्रवियोगादिरनर्थो दुःखराशिर्धर्मजो न पुत्रेष्ट्यादिधर्मजन्यो न भवति । विपरीतं तु धर्मेण न जन्यते, किन्तु प्राचीनदुष्कर्मनिमित्तमेव । केवलं तु काकतालीयन्यायेन तस्य पुत्रेष्ट्याद्यनन्तरभावित्वम् । न च तावतैव तत्कार्यत्वमतिव्याप्तेरित्यर्थ इत्यादि ज्ञातव्यम् । कस्मिन्नपि मातृगमनादिनिषेधे स्वकन्यादानादौ च विषये वैदिके मते सत्ये सति तस्मिन्नंशे सत्यत्वेऽङ्गीकृते सति सर्वमतमसंगतमिति वदन्तो नास्तिका हताः । मातृगमननिषेधादेरंशस्य भवद्भिरपि परिपालनादित्यर्थः। तथा च तद्दृष्ट्या कन्यादानमातृगमननिषेधरूपाणां सत्यानां विधिनिषेधांशानां दृष्टान्तेनान्यत्रांशे व्यर्थतामात्रं वचनमात्रेण व्यर्थमित्युच्यते । न तु धर्मजो वास्तवोऽनर्थः प्रयोजनाभावः । तद्दृष्टान्तेन व्यर्थतामात्रम्, अन्यत्राव्यर्थतैवेत्यलमतिप्रसङ्गेन ॥ १०० ॥

**क्वापि सर्वैरवैमत्यात्पातित्यादन्यथा क्वचित् ।**
**स्थातव्यं श्रौत एव स्याद्धर्मे शेषेऽपि तत्कृतेः॥**

उपसंहरति—

क्वापीति ॥ सर्वैर्नास्तिकैरपि क्वापि कस्मिन्नप्यहिंसाकन्यादानादौ श्रौते वेदोक्त एव धर्मे स्थातव्यं वर्तितव्यम् । कुतः—अवैमत्यात् । सर्वेषामिति शेषः । श्रौतानां बौद्धमाध्यमिकादीनामपि संप्रतिपत्तेः । अहिंसादेस्तैरप्यनिषिद्धत्वादङ्गीकृतत्वाच्चेत्यर्थः । स्थातव्यमेवेति वा । तथा—क्वचिद्वर्णाश्रमाधिकारविहितेऽन्यथाकरणे निषिद्धाचरणे पातित्यदोषाद्विहिताकरणनिषिद्धाचरणप्रत्यवायभयादपि श्रौत एव धर्मे स्थातव्यम् । अन्यथा वैमत्येऽपि श्रौत एव क्वचित्कस्मिंश्चिद्धर्मे स्थातव्यम् । कुतः—पातित्यात् । यत्र तु श्रौते धर्मे तेषां विप्रतिपत्तिस्तदनङ्गीकारेऽपि प्रत्यवायः स्यादित्यङ्गीकार्य एवेत्यर्थ इति वा । एवं शेषेऽपि नित्यनैमित्तिकाभ्यामतिरिक्ते काम्ये ज्योतिष्टोमादावपि स्थातव्यम् । कुतः—तत्कृतेस्तस्य वेदस्य कृतेः करणात् । वेदविहितत्वाविशेषादित्यर्थः । यद्वा—तत्कृतेर्वेदमूलत्वाच्छेषे स्मार्तेऽपि धर्मे स्थातव्यम् । तदाचारानुमितस्मृत्या श्रुतेरनुमानात्स्मार्तधर्मा अपि वेदमूला इति तेऽप्यङ्गीकर्तव्या इत्यर्थः । एतेन 'जनेन जानता—' 'एकस्य विश्वपापेन—' 'स्वं च ब्रह्म च—' इत्यादेः सर्वस्याप्युत्तरं दत्तम् । धातुवादादिकं प्रामाणिकमेव, असिद्धिस्तु साधनवैगुण्यादिति समर्थितमिति ज्ञेयम् । 'तत्कृते' इति पाठे हेतुगर्भविशेषणम् । तस्मान्न मतानामप्रामाण्यम् । श्रुतिस्मृत्योश्चैकमत्यमप्यविरुद्धमिति श्लोकद्वयतात्पर्यार्थः । अहिंसादयः स्मृत्युक्ताः सर्वसाधारणा धर्माः, तेषु क्वापि श्रौते च धर्मे स्थातव्यम् । पातित्यादित्युभयत्रापि हेतुः। सर्वेषामनुमते विहिते चेन्न

स्वीयते तर्हि 'विहितस्यानुष्ठानात्' इति स्मृतेः पातित्यम्। सर्वेषां विमते निषिद्धे चेत्स्वीयते तथापि 'निन्दितस्य च सेवनात्' इति स्मृतेः पातित्यमित्यर्थः। तथा च विहितानां केषांचिद्भवद्भिरप्यनुष्ठानात्, निषिद्धानां केषांचिद्भवद्भिरपि वर्जनात्तद्दृष्टान्तेनान्येष्वपि विधिनिषेधादिषु तत्कृतेः श्रौतत्वाविशेषादेव हेतोः स्मातव्यम्। तेऽपि प्रामाणिकत्वेन स्वीकार्या इत्यादि ज्ञातव्यम् १०१॥

बभाण वरुणः क्रोधादरुणः करुणोज्झितम्।
किं न प्रचण्डात्पाखण्डपाश पाशाद्बिभेषि नः॥

बभाणेति॥ क्रोधादरुणो रक्तकायकान्तिर्वरुणः करुणयोज्झितं वचो नितरां परुषं यथा तथा बभाण उक्तवान्। करुणोज्झितमिति क्रियाविशेषणम्। हे पाखण्डपाश नास्तिकाधम, नास्तिकेषु वेदनिन्दकेषु परलोकास्तित्वनिराकर्तृष्वपि जघन्येत्यर्थः। 'नास्तिको वेदनिन्दकः' इति मनुः। नास्ति परलोकः येषामिति वा नास्तिकः अत्यर्थे ठन्। त्वं नोऽस्माकं प्रचण्डाद्दुःसहात्पाशान्न बिभेषि किम्। कुत्सायां 'याप्ये पाशप् ५।३।४७' इति पाशप्प्रत्ययः॥ १०२॥

मानवाशक्यनिर्माणा कूर्माद्यङ्कबिला शिला।
न श्रद्धापयते मुग्धास्तीर्थिकाध्वनि वः कथम्॥

मानवेति॥ मानवैर्मनुष्यैरशक्यं निर्माणं यस्याः तथा—कूर्मवराहनरसिंहादयोऽङ्काश्चिह्नानि येषामेवंविधं बिलं विवरं यस्याः सा शिला गण्डकाख्यतीर्थविशेषसंभवा शालग्रामशिला भो मुग्धा मूर्खाः, तीर्थिकाध्वनि सेश्वरमार्गे वैदिकाध्वनि वा वो युष्मान्कथं न श्रद्धापयते आस्तिक्यं न प्रापयति। चित्रमेतत्। भवतां मूर्खतरत्वमित्यर्थः। मनुष्यैरशक्यरचनं सावयवत्वेन कार्यं शिलादि स्वनिर्माणसक्तमिच्छामात्रेण कर्तारं मनुष्यादिलक्षणमीश्वरमाक्षिपति। 'विमतं सकर्तृकं कार्यत्वाद् घटवत्' इत्यनुमानात्सर्वमतावलादिलक्षणे कर्तरीश्वरे सिद्धेऽपि कथमनाश्वास इत्याशयः। एतेन 'देवश्चेदस्ति सर्वज्ञः—' इत्यादेरुत्तरं दत्तमिति ज्ञेयम्॥ १०३॥

शतक्रतूरुजाद्याख्याविख्यातिर्नास्तिकाः कथम्।
श्रुतिवृत्तान्तसंवादैर्न वश्चमदचीकरत्॥१०४॥

शतेति॥ भो नास्तिकाः, शतक्रतुश्च श्रीविष्णोरूरुभ्यां जायत इत्यूरुजो वैश्यः स आदिराद्यो वा येषां ते ब्राह्मणादिवर्णाश्च तेषामाख्या शतक्रतुः, मुखजो बाहुज ऊरुज इत्यादीनि नामानि तेषां सर्वत्र विशेषेण ख्यातिः कर्त्री श्रुतिवृत्तान्तसंवादैर्वेदोक्तितिहासैः करणैर्वो युष्मान्कथं न चमदचीकरच्चमत्कारं नाकारयत्। अपि त्वाश्चर्यं भवतां तयोत्पाद्यम्। चमदित्यव्ययमाश्चर्यार्थे। 'शताश्वमेधक्रतुकारीन्द्रो भवति' इतीन्द्रस्यैव शतक्रतुत्वं वेदोनोक्तम्। लोकेनापीन्द्र एव शतक्रतुत्वेन व्यवह्रियते न तु वह्न्यादिरिति। तथा—ब्राह्मणोऽस्य 'मुखमासीत्—' इत्यादिश्रुत्या ब्राह्मणक्षत्रियादीनां मुखजत्वबाहुजत्वाद्युक्तम्। लोकेनापि ब्रह्मक्षत्रादय एव मुखजत्वबाहुजत्वादिभिर्व्यवह्रियन्ते, न तु विपर्ययेणेति वेदोक्तेन सह लोकस्यानुभूयमानात्संवादादपि वेदे यथोक्तं तथैव लोको व्यवहरत्याश्चर्यमेतदित्याश्चर्यपूर्वं वेदप्रामाण्यं कथं न विश्वसिथेति, अपि तु विश्वसनीयं तत्रेत्याशयः। ऊरुजपदं वृत्तानुरोधात्प्रायोजि। तथा च सर्वेऽपि वर्णाः संगृहीताः। विख्यातिः प्रयोजिका। संवादैः प्रयोज्यैर्वो युष्माकं चमदाश्चर्यं कथं न कारयामासेति वा। शतक्रतुश्च ऊरुजोर्वशी च तदादिर्वह्निर्मेनकेत्यादिराख्या येषां यागो च वह्न्यादीनां मेनकादीनां च तेषां प्रसिद्धिर्वेदवृत्तान्तसंवादैर्हेतुभिर्युष्माकं कथमाश्चर्यं नाचीकरत्। लोकवेदप्रसिद्धानिन्द्रादीनुर्वश्याद्यप्सरःश्रेतान्सर्वान्प्रत्यक्षेणात्रैव पश्यतेत्यर्थः। ततश्च वेदः, तन्मूलं परलोकादि च प्रामाणिकमेवेति भाव इति वा। प्रथमव्याख्याने व इति 'ह्रक्रोः—' इत्यणौ कर्तुर्णौ कर्मत्वम्, चमदिति च कर्मान्तरम्, संवादैरिति करणे तृतीया। पक्षान्तरे तु तेनैव सूत्रेणाणौ कर्तुः कर्मत्वस्य वैकल्पिकत्वेन कर्मत्वाभावादनभिहिते कर्तरि संवादैरिति तृतीया, व इति षष्ठी॥ १०४॥

तत्तज्जनकृतावेशान् गयाश्राद्धादियाचिनः।
भूताननुभवन्तोऽपि कथं श्रद्धत्थ न श्रुतीः॥

तदिति॥ तेषु तेषु जनेषु कृतावेशान्कृतसंचारान्, तथा—गयाश्राद्धादियाचिनो गयापिण्डदानादिपुण्यं याचतः प्राप्तप्रेतभावान्भूतान्प्राणिनोऽनुभवन्तोऽपि पश्यन्तोऽपि यूयं श्रुतीः कथं न श्रद्धत्थ सत्यत्वेन मन्यध्व इति। पौनरुक्त्यं न शङ्कनीयम्, भिन्नवक्तृत्वात्। एवमुत्तरत्रापि ज्ञेयम्॥ १०५॥

---

१ अत्रानुप्रासः। २ अत्राप्यनुप्रासः, अनुमानं च।

१ अत्रानुप्रासः।

नामभ्रमाद्यमं नीतानथ स्वतनुमागतान् ।
संवादवादिनो जीवान् वीक्ष्य मा त्यजत श्रुतीः॥

नामेति ॥ नामभ्रमाद्यमदूतैर्यमं नीतान्प्रापितानथ मुक्तत्वात्प्रत्यावृत्त्य स्वतनुमागतान्प्राप्तान्संवादं 'चन्द्रः क्षयी—' इत्यादिवेदसंवादं वदन्त्येवंशीलाञ्जीवान्वीक्ष्य श्रुतीर्वेदान्मा त्यजताप्रामाणिकान्मा ब्रूत । एवं वेदप्रामाण्योपसंहारात्स्मृत्यादेरपि वेदमूलत्वात्तदुक्तसर्वधर्माणां प्रामाण्यं व्यवस्थापितम् ॥ १०६ ॥

संरम्भैर्जम्भजैत्रादेः स्तभ्यमानाद्वलाद्वलन् ।
मूर्धबद्धाञ्जलिर्देवानथैवं कश्चिदूचिवान् १०७॥

संरम्भैरिति ॥ अथ देववचनानन्तरं जम्भजैत्रः शक्र आदिर्यस्य इन्द्रानलादीनां संरम्भैर्भ्रूभङ्गाद्याकारविकारैर्भीतेन कलिना पुरश्चलितुं स्तभ्यमानान्निषिध्यमानानिन्द्रादिसंरम्भान्दृष्ट्वा भयात्तत्संमुखं पदमपि चलितुमशक्ताद्वलात् कलिसैन्याद्वलन्पृथग्भवन्किंचिद्धाष्टर्यमवलम्ब्य द्वित्राणि पदानि संमुखमागच्छन्दीनत्वद्योतनपुरःसरं शक्रादिनमस्कारार्थं मूर्ध्नि बद्धाञ्जलिः कश्चिदज्ञातनामा पापरूपत्वेनाज्ञातनामा वा चार्वाको देवानेवं वक्ष्यमाणप्रकारेण ऊचे ॥ १०७ ॥

नापराधी पराधीनो जनोऽयं नाकनायकाः ।
कालस्याहं कलेर्बन्दी तच्चाटुचटुलाननः १०८

नेति ॥ हे नाकनायका इन्द्रादयः, अयं मल्लक्षणो जनोऽपराधी न यतः—पराधीनः । तदेवाह—कलेः कलिनाम्नः कालस्याहं बन्दी स्तुतिपाठकः । अत एव—तस्य चाटुनि प्रियवचनविषये चटुलं प्रियवादि वावदूकं वाऽऽननं यस्यैवंभूतः । अथ च—कालस्य कृतान्तरूपस्य। वन्दिनो हि यमाश्रयन्ति तत्प्रियं वदन्ति, न च दण्डार्हाः तस्मादेतत्प्रियं वेदादिदूषणं मया कृतम् । यदि न करोमि तर्ह्ययं दण्डयिष्यतीति परप्रयुक्तत्वान्नाहं दण्ड्यः श्रीमद्भिरिति ॥ १०८ ॥

इति तस्मिन्वदत्येवं देवाः स्यन्दनमन्दिरम् ।
कलिमाकलयांचक्रुर्द्वापरं चापरं पुरः ॥१०९॥

इतीति ॥ देवास्तस्मिंश्चार्वाके इति पूर्वोक्तप्रकारेण वदति भाषमाणे सत्येव स्यन्दनमन्दिरं रथस्थं कलिम्, अपरं द्वितीयं द्वापरं च पुरोऽग्र आकलयांचक्रुर्ददृशुः ॥ १०९ ॥

संददर्शोन्नमद्ग्रीवः श्रीबहुत्वकृताद्भुतान् ।
तत्तत्पापपरीतस्तान्नाकीयान्नारकीव सः ११०॥

समिति ॥ तैस्तैः प्रसिद्धैर्ब्रह्महत्यादिभिर्मूर्तैः पापैः, तत्कारिभिः पुरुषैर्वा परीतः समन्ताद्व्याप्तः, तथा—उन्नमन्ती दर्शनार्थमुच्चा ग्रीवा यस्यैवंभूतः स कलिः श्रीबहुत्वेन कायकान्तिबाहुल्येन संपद्बाहुल्येन वा कृताद्भुतान्कृताश्चर्यान्नाकीयान्स्वर्गहितान्स्वर्गभवान्वा तानिन्द्रादीन्संददर्श । क इव—नारकीव । यथा ब्रह्महत्यादिकारी आकण्ठं नरके मग्न ऊर्ध्वग्रीवो नरकस्थः पुरुष इव । पापकारित्वादहमेवंरूपः, पुण्यकृत्त्वाच्चैते दीप्तस्वरूपा इति ज्ञातवांश्च । नरकस्थोऽपि देवकायकान्तिदर्शनाज्जायमानसुखोऽनुष्ठितपापकृतपश्चात्तापः सुरानातततया पश्यतीत्युपमा । 'उन्नतग्रीवः' इत्यपि पाठः । नाकीयानिति हितार्थे 'तस्मै हितम् २ । १ । ५ ।' इति, वृद्धत्वाद्भवार्थे 'वृद्धाच्छः ४ । २ । १४४ ।' इति वा छः । नारकी, नारकशब्दात् 'अत इनिठनौ ५।२।११५' ॥ ११० ॥

गुरुरीढावलीढः प्रागभून्नमितमस्तकः ।
स त्रिशङ्कुरिवाक्रान्ततेजसेव बिडौजसः ॥१११॥

गुर्विति ॥ प्राग्दर्शनात्पूर्वम् इन्द्रादयः के नाम वराका इत्यादिरूपया गुर्व्या महत्या रीढयाऽवज्ञयाऽवलीढो व्याप्तस्तेषु कृतावज्ञोऽपि दर्शनानन्तरं बिडौजस इन्द्रस्य तेजसा आक्रान्तः पराभूतस्तिरस्कृततेजस्कः सन् अवज्ञां त्यक्त्वा स कलिरनमन्नपि बलात्त्वेनैव शक्रतेजसैव वा नमितो नम्रीकृतो मस्तको यस्यैवंभूतोऽभूत् इन्द्रादीन्नमश्चकारेत्यर्थः । क इव—त्रिशङ्कुनामा सूर्यवंश्यो नृप इव । स हि स्वयाजने प्रार्थितेन पुरोधसा वसिष्ठेन निरस्तो गुरोर्वसिष्ठस्यावज्ञया व्याप्तस्तस्मिन्कृतावज्ञः सन्नभिमानाद्विश्वामित्रेण सार्वकामिकं क्रतुं याजितस्तत्प्रभावात्सशरीर एव स्वर्गं गच्छन्निन्द्रेऽपि कृतावज्ञः संस्तत्तेजसा पराभूतः स्वर्गाद्भ्रंशित इत्येवं नमितमस्तकोऽभूदिति पुराणेतिहासः । 'रीढावमाननाऽवज्ञा—' इत्यमरः ॥ १११ ॥

---

१ अत्राप्यनुप्रासः । २ अत्रानुप्रासः, पराधीति यमकं च ।

१ स्यन्दनमन्दिरमित्युपमारूपकयोः सन्देहसङ्करः, परमिति यमकम्, अनुप्रासश्च । २नारकीवेत्युपमा, अनुप्रासश्चात्र । ३ त्रिशङ्कुरिवेत्यादावुपमे । अत्रापि त्रिशङ्कोर्वृत्तोक्तिः समयभेदास्मरणमूला ।

विमुखान्द्रष्टुमप्येनं जनंगम इव द्विजान् ।
एष मत्तः सहेलं तानुपेत्य समभाषत ॥११२॥

विमुखानिति ॥ मत्तः सगर्वोऽयं कलिः सहेलं सविलासमुपेत्य समीपमागत्य एवं तान्देवान्समभाषत । किंभूतान्—एनं कलिं द्रष्टुमपि न केवलं भाषितुं, स्प्रष्टुं वा किन्तु वीक्षितुमपि विमुखाननर्हान्सावज्ञान् । कः कानिव—मत्तो निरर्गलो मदिरामत्तो वा जनंगमश्चण्डालो द्विजानिव । किंभूतान्—एवं चण्डालं द्रष्टुमप्यनर्हान् । 'चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः' इत्यमरः । 'गमश्च' इति खच्, खित्वान्मुम् ॥ ११२ ॥

स्वस्ति वास्तोष्पते तुभ्यं शिखिन्नास्ति न खिन्नता।
सखे काल सुखेनासि पाशहस्त मुदस्तव११३

स्वस्तीति ॥ हे वास्तोष्पत इन्द्र, ते तुभ्यं स्वस्ति क्षेममस्ति कच्चित् । हे शिखिन्नग्ने, तव खिन्नता चित्तक्लेशो नास्ति कच्चित् । हे सखे काल यम, सुखेनाऽसि किम् । हे पाशहस्त वरुण, तव मुदः सन्ति कच्चित् । गृहमात्रस्याधिपत्यादसामर्थ्यम्, वृथैव ज्वालाजटिलत्वम्, कुत्सितरूपत्वम्, आयुधधारणवैयर्थ्यं च संबुद्धिभिः सूचितम् । उत्तमानां कुशलप्रश्नस्तैः सह साम्यं, तेभ्योऽधिकत्वं सूचयति । इन्द्राय स्वस्तिप्रयोगः स्वामिभावं, ब्राह्मण्यं वा कलेर्द्योतयति । वर्णसाम्येन यमे सखिशब्दप्रयोगः । अयमेव च गर्वोऽवज्ञा चेति ज्ञेयम् । 'स्वस्त्याशीःक्षेमपुण्यादौ' इत्यमरः । 'वास्तोष्पतिगृहमेधाच्छ च' इति लिङ्गाद्वास्तोष्पतिशब्दः साधुः । तुभ्यमिति 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च २ । ३ । १६' इति चतुर्थी । इतरत्र तवेति सम्बन्धनीयम् ॥ ११३ ॥

स्वयंवरमहे भैमीवरणाय त्वरामहे ।
तदस्माननुमन्यध्वमध्वने तत्र धाविने ॥११४॥

स्वयमिति ॥ हे देवाः, वयं स्वयंवररूपे मह उत्सवे भैमीवरणाय यस्मात्त्वरामहे सवेगाः स्मः तत्तस्मात्तत्र धाविने स्वयंवरस्थानं प्रति ऋजुगामिनेऽध्वनेऽस्माननुमन्यध्वमाज्ञापयत । त्वरावशादन्या गोष्ठी न क्रियते, आज्ञैव दीयतामित्यर्थः । अध्वने, तादर्थ्ये चतुर्थी ॥ ११४ ॥

तेऽवज्ञाय तमस्योच्चैरहंकारमकारणम् ।
ऊचिरेतिऽचिरेणैनं स्मित्वा दृष्टमुखा मिथः ॥

त इति ॥ ते देवाः पूर्वोक्तमकारणं निर्हेतुकमुच्चैरतिशयितमस्य कलेरहंकारं दर्पमवज्ञाय मिथोऽन्योन्यं दृष्टमुखाः सन्तः मूर्खोऽयं स्वयंवरवार्तां करोतीति स्मित्वा हास्यं कृत्वाऽतिचिरेण पापीयसाऽनेन सह कथं वा वक्तव्यमिति बुद्ध्या भूयांसं कालं विलम्ब्य एनं कलिं प्रत्यूचिरे वक्ष्यमाणं बभाषिरे ॥ ११५ ॥

पुनर्वक्ष्यसि मा मैवं कथमुद्वक्ष्यसे तु सः ।
सृष्टवान्परमेष्ठी यं नैष्ठिकब्रह्मचारिणम् ११६॥

पुनरिति ॥ हे कले, त्वं स्वयंवरार्थं गमिष्यामीत्येकवारमज्ञानाद्यदुक्तम्, तदिदमतः परं पुनर्मा मा एवं वक्ष्यसि मा मा वोचः । यस्मात्परमेष्ठी यं त्वामामरणं गुरुकुलनिवासिनं नैष्ठिकब्रह्मचारिणं सृष्टवान् । स तु पुनस्त्वं कथमुद्वक्ष्यसे परिणेष्यसि । कृतयुगादयो निष्कलत्रा एव सृष्टाः । तस्मात्तव स्वयंवरवार्ताऽनुचिता, अवकीर्णित्वापातात् । तस्मादेवं पुनर्मा स्म वोच इत्यर्थः । पापरूपं प्रत्युपहासवचनमेतत् । माङ्शब्दस्य निरनुबन्धकत्वाद्वक्ष्यसीति वचेर्लृट् । मामेति निषेधाशयार्थं वीप्सायां द्विरुक्तिः । परमे स्थाने तिष्ठतीति 'परमे स्थः कित्' इतीनिः, तत आलोपः । 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्याग्निभ्यः स्थः ८ । ३ । ९७' इति सूत्रेण षत्वम् । तत्रैव 'परमेबर्हिः—' इति निपातनादेदन्तत्वम् । 'नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ । तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥' इति स्मृतेः ॥ ११६ ॥

द्रौहिणं द्रुहिणो वेत्तु त्वामाकर्ण्यावकीर्णिनम् ।
त्वज्जनैरपि वा धातुः सेतुर्लङ्घ्यस्त्वया न किम्

द्रौहिणमिति ॥ द्रुहिणो ब्रह्मा त्वामवकीर्णिनं क्षतव्रतमाकर्ण्य निजाज्ञाभङ्गाद् द्रौहिणं गुरुद्रोहकारिणं वेत्तु । एवं त्वया कृते ब्रह्मा एवं ज्ञास्यतीति यावत् । वाऽथवा तेन ज्ञातेऽपि तव किं भयमिति सोपहासमाह—त्वज्जनैस्त्वदुपजीविभिः कामक्रोधादिभिरपि धातुः सेतुर्ब्रह्मकृता धर्ममर्यादा लङ्घ्यः।त्वया पुनः किं न लङ्घ्यः । त्वदीयाः

१ जनङ्गम इत्युपमा । २ अत्रानुप्रासः ।

१ कारेति यमकम् ।

सेवका अपि ब्रह्माज्ञां लङ्घयन्ति,त्वं लङ्घयसीति किमाश्चर्यमित्यर्थः । यद्वा—त्वज्जनैरपि सेतुर्न लङ्घ्यः, त्वया न लङ्घ्य इति किं वाच्यम्, तदाज्ञालङ्घनमनौचित्यान्न कार्यमित्यर्थ इति काका ।'धाताऽब्जयोनिर्द्रुहिणः—' इत्यमरः । द्रुह्यत्यसुरेभ्यः । औणादिकः किनः ॥ ११७ ॥

**अतिवृत्तः स वृत्तान्तस्त्रिजगद्युवगर्वनुत् ।**
**आगच्छतामपादानं स स्वयंवर एव नः॥११८॥**

स्वयं प्रत्यागमने हेत्वन्तरमपि ब्रुवते—

अतीति ॥ एकं विना सर्वपरित्यागात्त्रिजगत्सु वर्तमानानां तरुणानां सौन्दर्यादिविषयं गर्वं नुदतीति तन्नुत् तन्नाशकः स वृत्तान्तो भैमीस्वयंवरोऽतिवृत्तोऽतिक्रान्तः । संजात इत्यर्थः । भवद्भिः कथं ज्ञातमित्यत आहुः—स स्वयंवर एवागच्छतां नोऽस्माकमपादानं निश्चलोऽवधिभूतोऽर्थ इत्यर्थः । वयमपि तत्र गतास्तत एवागच्छाम इति सर्वोऽपि वृत्तान्तोऽस्माभिर्ज्ञायत इत्यतोऽपि त्वया न तत्र गन्तव्यमिति भावः । विश्लेषे चञ्चलं स्थिरं वा यदुदासीनं तदपादानमिति वैयाकरणाः ॥ ११८ ॥

**नागेषु सानुरागेषु पश्यत्सु दिविषत्सु च ।**
**भूमिपाल नरं भैमी वरं साऽववरद्वरम् ॥११९॥**

कथं यूनां गर्वनोदः, को वा तया वृत इत्याशङ्कायामाहुः—

नागेष्विति ॥ नागेषु वासुकिप्रभृतिषु सानुरागेष्वस्मदादिषु दिविषत्सु देवेषु च पश्यत्सु सानुरागं भैमीं स्वीयार्तिद्योतनपूर्वं विलोकयत्सु । अथवा—अस्मदन्येषु देवेषु सानुरागेष्वस्मदादिषु कौतुकवशादेव पश्यत्सु । तान्सर्वाननादृत्य सा भैमी नागाद्यपेक्षया वरं सर्वगुणाश्रयत्वाच्छ्रेष्ठं भूमिपालं सार्वभौमं नरं नृवरं वरं परिणेतारमववरद्वरयामास । सर्वानादरेण नलवरणात्सर्वेषां सौन्दर्यादिदर्पो गत इत्यर्थः । पश्यत्सु दिविषत्स्वित्यनेनास्माभिः कौतुकार्थं वरदानार्थमेव च गतम्, न तु तद्वरणार्थमिति च व्याख्यान्तरेण सूचितमिति ज्ञेयम् । नागेष्वित्यादौ 'षष्ठी चानादरे २।३।३८' इति सप्तमी । अववरत्, 'वर ईप्सायाम्' इति चुरादावदन्तपाठात्स्वार्थणिजन्ताद्वरयतेश्चङ्यग्लोपित्वात्सन्वद्भावाभावादित्वदीर्घत्वाभावः ॥ ११९ ॥

**भुजगेशानसद्वेशान् वानरानितरान्नरान् ।**
**अमरान्पामरान्भैमी नलं वेद गुणोज्ज्वलम्॥१२०॥**

किमिति ते परित्यक्ता इत्याशङ्कायां कारणमाहुः—

भुजगेशानिति ॥ भैमी भुजगेशान्वासुकिप्रमुखान्फणागणजिह्वालालनादिवैरूप्यादसद्वेशानमनोहाराकारान्वेद जानाति । तथा—इतरान्नलादन्यान्नरान्मनुजाधीशांश्चापल्यानिर्गुणत्वाभ्यां वानरान्वेद । तथा—अमरानचतुरत्वात्पामरान्नीचान्वेद । केवलं नलमेव गुणोज्ज्वलं श्रुतवीर्यौदार्यसौन्दर्यादिभिः प्रकाशमानं वेद । सर्वगुणाकरत्वान्नल एव तया वृतोऽन्ये तु परित्यक्ता इत्यर्थः । 'विवर्णः पामरो नीचः' इत्यमरः । वेदेतीदानीमपि तथैव प्रतीतेः सत्त्वाद्वर्तमानता, विभक्तिप्रतिरूपको निपातो वा । तथा चाज्ञासीदित्यर्थः ॥ १२० ॥

**इति श्रुत्वा स रोषान्धः परमश्चरमं युगम् ।**
**जगन्नाशनिशारुद्रमुद्रस्तानुक्तवानदः ॥१२१॥**

इतीति ॥ चरममन्त्यं युगं स कलिः इतीन्द्रादिवचनं श्रुत्वा परमोऽत्युत्कृष्टो रोषान्धो रोषान्नितरां निर्विचारतया पुरःस्थमपि वस्त्वजानन्, अत एव—जगन्नाशसंबन्धिनी निशा । यस्यां निशि जगन्नाशो भवतीति यावत् । तत्संबन्धी प्रलयकाले सकलभूतग्रासलालसासंपन्नो रुद्रस्तद्वन्मुद्रा आकारो यस्य । क्रोधवशान्नितरां विकृताकार इति यावत् । एवंभूतः संस्तान्सुरानदो वक्ष्यमाणमुक्तवान् ॥ १२१ ॥

**कयाऽपिक्रीडतुब्रह्मादिव्याःस्त्रीर्दीव्यतस्वयम् ।**
**कलिस्तु चरतु ब्रह्म मैतु वाऽतिप्रियाय वः॥१२२**

'पुनर्वक्ष्यसि मा मैवम्' इत्यादेरुत्तरमाह—

कयेति॥ हे देवाः, ब्रह्मा कयाऽप्यतिसुन्दर्या गायत्र्यादिपदवाच्यया । अज्ञातनामजातिगोत्रया वा । अथ च —अगम्यत्वाद्यस्या नामकथनेऽप्यस्माकं लज्जा भवति तया सुतया । सह सुखेन क्रीडतु । तथा—यूयं स्वयमात्मना दिव्याः स्त्रीः स्वर्गभवाः रम्भादीः । अहल्यामुख्या वा । रमणीर्दीव्यत स्वेच्छया ताभिः सह सुरतक्रीडां कुरुत । 'प्रजापतिः स्वां दुहितरमभ्यधावत्' इति श्रुत्या ब्रह्मणः स्वाच्छन्द्याद्भवतां सुतरां स्वाच्छन्द्यमिति स्वयमित्यनेनोक्तम् । कलिस्तु पुनर्ब्रह्मचर्याख्यं व्रतं याव-

---

१ अन्त्यानुप्रासः।

१ नरेति यमकम् । २ अन्त्यानुप्रासः, मुद्र इत्युपमा च।

त्वं चरतु । वा अथवा जीवन्कलिरस्मानुपहसिष्यतीत्यनेन न जीवितव्यमिति वो युष्माकमतिप्रियाय नितरां तुष्ट्यै प्रैतु म्रियताम् । स्वयं सर्वैः स्वेच्छाचारः क्रियते, मया तु स्वेच्छाचारो न कर्तव्यः, मर्तव्यमेवेति कीदृशीयं भवतां परप्रद्वेपरीतिरिति लोकरीत्योपहासः । अथ च—यूयं ब्रह्मादयः सर्वेऽपि स्वेच्छाचारिणः स्वाच्छन्द्यं कुरुत नाम, कलिस्तु न तादृगिति अत्रैव चतुरः, युष्माकमप्यतिप्रियाय भैमीलक्षणाय वस्तुने म्रियताम् । भवद्वत्स्वेच्छाचारं न करोमि, किंतु भैमीप्राप्तये प्रवृत्तस्य मम मरणं चेत्स्यात्, तदप्यस्त्विति भावः । अत्राप्युपहास एव तात्पर्यम् । क्रीडार्थत्वेऽपि 'दिवः कर्म च १।४।४३' इति करणस्यापि कर्मत्वात्त्रीभिरित्यर्थे द्वितीया ॥१२२॥

**चर्यैव कतमेयं वः परस्मै धर्मदेशिनाम् ।**
**स्वयं तत्कुर्वतां सर्वं श्रोतुं यद्बिभितः श्रुती॥१२३॥**

उपहासमेव प्रकटयति—

चर्येति ॥ हे देवाः परस्मा अन्यस्मै जनाय 'स्वसुतादिगमनं न कार्यम्' इति धर्मदेशिनां धर्ममुपदिशतां स्वयं तद्ब्रह्महत्यास्वसुतादिगमनं सर्वं निषिद्धं कर्म कुर्वतां वो युष्माकमियं कतमैव कैव चर्या आचाररीतिः अपि तु न कापीत्याक्षेपः अचेतने अपि श्रुती कर्णौ यद्भवदीयमहल्यादिगमनं कर्म श्रोतुं बिभितः त्रस्यतः स्वेच्छाचारिणां भवतां परपीडायामेव तात्पर्यमिति भावः। चर्या, भावे 'गदमदचरयमश्चानुपसर्गे ३।१।१००' इति यत् ॥ १२३ ॥

**तत्र स्वयंवरेऽलम्भि भुवः श्रीर्नैषधेन सा ।**
**जगतो ह्रीस्तु युष्माभिर्लाभस्तुल्याभ एव वः ॥**

तत्रेति ॥ तत्र स्वयंवरे नैषधेन भुवः श्रीः सौन्दर्यातिशयाद् भूलक्ष्मीः सा भैमी अलम्भि प्राप्ता । युष्माभिस्तु पुनर्जगतो ह्रीस्त्रैलोक्ये यावती वर्तते सा लज्जा, जगतः सकाशाद्वा, भैम्यनादृतत्वाद्या लज्जा सा लब्धा । इति वो नलस्य युष्माकं च लाभोऽपूर्ववस्तुप्राप्तिस्तुल्य एवाभासते तुल्याभ एव । शकारहकारमात्रवैरूप्यमित रत्तुल्यमेवेति । भवद्भिर्लज्जैव लब्धा, न तु भैमीति रूपदर्पो वृथैवेति भावः । अयं च यूयं च यूयं तेषां वः । एकशेषः ॥ १२४ ॥

**दूरान्नः प्रेक्ष्य यौष्माकी युक्तेयं वक्रवक्रणा ।**
**लज्जयैवासमर्थानां मुखमास्माकमीक्षितुम् ॥**

दूरादिति ॥ आगच्छतो नोऽस्मान्दूराद्दूरत एव प्रेक्ष्य यौष्माकीयं वक्रवक्रणा मुखकौटिल्यकरणं युक्तैव । किंभूतानां युष्माकम्—[ गुणीभूतस्य युष्मच्छब्दस्य विशेषणम् ]यतो भैम्यवृतत्वात्संजातया लज्जयैव हेतुना आस्माकं मुखमीक्षितुमसमर्थानाम् । लज्जाशीलो ह्यन्यं दूरादेव दृष्ट्वा लज्जया मुखं न दर्शयति । तस्मात्सलज्जा भवन्त इति । युक्तमेवैतदिति भावः । अयमप्युपहासः। 'लज्जयेव' इति पाठे उत्प्रेक्षा । प्रेक्ष्येति वक्रणापेक्षया समानकर्तृकत्वम् । यौष्माकीति 'तस्मिन्नणि च युष्माकास्माकौ ४।३।२' इति युष्माकादेशः । 'युष्माकम्' इति पाठः साधुः । एवमेवाऽऽस्माकमित्यत्रापि द्रष्टव्यम्। वक्रणेति नामधातोर्युच् ॥ १२५ ॥

**स्थितं भवद्भिः पश्यद्भिः कथं भोस्तदसाम्प्रतम्।**
**निर्दग्धा दुर्विदग्धा किं सा दृशा न ज्वलत्क्रुधा॥**

स्थितमिति ॥ हे देवाः, तन्नलवरणं पश्यद्भिर्भवद्भिः कथं स्थितम् । औदासीन्येनेति शेषः । असांप्रतम् अनुचितमेतदित्यर्थः । दुर्विदग्धा भवदवज्ञानचतुराचारा सा भैमी ज्वलन्ती देदीप्यमाना क्रुत्क्रोधो यस्यां तया दृशा कृत्वा किमर्थं न निर्दग्धा सुतरां न भस्मसात्कृता । अपि तु तादृक्सामर्थ्यसद्भावे तस्याश्च सापराधत्वे दग्धुमुचितम्, तदपि न कृतमित्येतदप्यनुचितमेवेत्यर्थः। 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । भोरिति प्रत्येकं सम्बुद्धिः ॥ १२६ ॥

**महावंशाननादृत्य महान्तमभिलाषुका ।**
**स्वीचकार कथंकारमहो सा तरलं नलम्॥१२७॥**

महेति ॥ कुलशीलादिना महान्तमत्युत्कृष्टं नलं वरम् अभिलाषुका सा भैमी कश्यपसुतत्वान्महावंशान्दिव्यवस्त्रादिभूषितान्युष्मान्परित्यज्य तरलं चलस्वभावमनिश्चितबुद्धिं नलं कथंकारं कथमिव स्वचिकार । अहो आश्चर्यम् । महान्तं कामयमानया देवपरित्यागेन मनुष्यवरणान्महच्चित्रमित्यर्थः।अथ च—या महापरिमाणं वाञ्छति सा अतिविशालान्दृढान्वेणून्परित्यज्य तरङ्गस्पर्शमात्रेणापि चञ्चलं ह्रस्वं नलाख्यं तृणमङ्गीकरोतीति चित्रमेव । अत एव सा किं न भवद्भिर्दग्धेति भावः । अभिलाषुका, 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ३।२।१५४' इत्युकञ् । महान्तमिति, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधाद्द्वितीया । कथंकारं पूर्ववत् ॥ १२७ ॥

१ अत्रानुप्रासः । २ दग्धेति यमकम् ।

भवादृशैर्दिशामीशैर्मृग्यमाणां मृगेक्षणाम् ।
स्वीकुर्वाणः कथं सोढः कृतरीढस्तृणं नलः ॥

इदानीं नलः कथं सोढ इत्याह—

भवादृशैरिति ॥ भो देवाः, दिशामीशैर्महासमृद्धिभिर्भवादृशैर्मृग्यमाणां काम्यमानां मृगेक्षणां भैमीं स्वीकुर्वाणः समुद्वहन्, अत एव भवत्सु कृतरीढः कृतावज्ञः, तृणतुल्योऽतिनिःसारः, अथ च—नलशब्दवाच्यत्वात्तृणभूतः, स नलो भवद्भिः कथं केन प्रकारेण सोढः क्षान्तः । सा भवद्भिरभिलषिता तथा भवन्तोऽनादृता इत्युपहासः । मृगेक्षणाम्, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९' इति षष्ठीनिषेधः । सोढः, 'तीषसहलुभरुषरिषः ७ ।२। ४८' इतीड्विकल्पाद् 'यस्य विभाषा ७।२।१५' इति निष्ठया नेट् ॥ १२८ ॥

दारुणः कूटमाश्रित्य शिखी साक्षीभवन्नपि ।
नावहत्किं तदुद्वाहे कूटसाक्षिक्रियामयम् ॥

दारुण इति ॥ अयं शिखी वह्निर्दारुणः कूटं काष्ठराशिमाश्रित्याग्निसाक्षिके विवाहे साक्षीभवन्नपि तत्र प्रकाशमानोऽपि तयोर्भैमीनलयोः तस्य तस्या वा उद्वाहे विवाहे विषये कूटसाक्षिणोऽलीकसाक्षिणः क्रियां सत्यापलापलक्षणां किं नावहत् । अपि तु—एतदप्यनुचितं कृतम् । कूटसाक्षी तु परकीयं वस्त्वन्यस्मै दापयाति । तदनेन प्रायशस्तत्र न स्थितमित्यनग्निसाक्षिको विवाह एव न भवतीति । भैमी नलेन नोढेति भैमी नलादन्यस्मै भवत्स्वेव मध्ये कस्मैचित्किमिति न दापितेत्यर्थः। अथ च—दारुणः । पापकारित्वादतिक्रूरः पुरुषः कपटमाश्रित्य व्यवहारे साक्षीभवन्नपि तस्य चित्ते धृतस्य कार्यस्योद्वाहे निर्वाहे कूटसाक्षित्वं धत्ते । अत्र तु नेत्याश्चर्यम् ॥ १२९ ॥

अहो महःसहायानां सम्भूता भवतामपि ।
क्षमैवास्मै कलङ्काय देवस्येवामृतद्युतेः॥१३०॥

अहो इति ॥ भो देवाः महःसहायानां तेजस्विनां दिव्यमूर्तीनां भवतामपि क्षमैवास्मै कलङ्काय इन्द्रादिषु सत्स्वपि भैमी नलं वृतवतीत्ययशसे । अथ च—नलकृतानादररूपाय । अथ च—लज्जावशादन्यवदनवीक्षणाशक्तिमुखमालिन्यरूपाय कलङ्काय संभूता । अहो महदाश्चर्यम् । गुणभूता क्षमा दोषाय जातेत्यर्थः। महःसहायस्य तेजस्विनोऽमृतद्युतेर्देवस्य दीप्यमानस्य चन्द्रस्येव । यथा चन्द्रस्य क्षमा भूमिः कलङ्काय जाता भवतामपीत्यपिशब्देन यत्र कलङ्कशङ्कापि नासीति सूचितम् । 'भूश्चन्द्रकलङ्कः' इति ज्योतिर्विदः । महःसहायानामपीति वा । चन्द्रस्य यथा तथा भवतामपीति समुच्चयार्थो वा । क्षमां परित्यज्य भवद्भिरन्यतमस्य चेद्दण्डोऽकरिष्य ततद्यशो नाभविष्यदिति भावः ॥१३०॥

सा वव्रे यं तमुत्सृज्य मह्यमीर्ष्याजुषःस्थ किम् ।
ब्रूतागःसद्मनस्तस्माच्छद्मनाऽद्याच्छिनद्मि ताम् ॥

सेति ॥ हे देवाः, सा भैमी यं वव्रे तं नलमुत्सृज्य यूयं मह्यं कलये किमितीर्ष्याजुषोऽक्षान्तिपराः स्थ भवथ। अपराधिनस्तस्यापकर्तुमशक्ताः सन्तोऽनपराधाय मह्यं किमितीर्ष्यायुक्ताः स्थेत्युपहासः, तस्माद्यूयं ब्रूत कथयत—अहं तस्मान्नलात्सकाशाच्छद्मना कपटेन कथमपि वञ्चयित्वा तामाच्छिनद्मि आहरामि । यतः—आगसो भवदनादररूपापराधस्य सद्माश्रयभूतः, तस्मादविलम्बेनैव तामाहरामि । गच्छेति मामनुमन्यध्वमित्यर्थः । अन्येनापराधे कृतेऽन्यस्मै द्रुह्यत इति युक्तमिति लोकरीत्योपहासः । ब्रूत नो युष्माकमस्माकं चागःसद्मानादरणादपराधिनीं तां नलादानयामीति वा। मह्यम्, 'क्रुधद्रुहेर्ष्याऽसूयाऽर्थानां यं प्रति कोपः १ । ४ ३७' इति चतुर्थी । आच्छिनद्मि, वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१' इति लट् ॥ १३१ ॥

यतध्वं सहकर्तुं मां पाञ्चाली पाण्डवैरिव ।
सापि पञ्चभिरस्माभिः संविभज्यैव भुज्यताम् ॥

यतध्वमिति ॥ यूयं मां सहकर्तुं यतध्वं यत्नं कुरुत । भैमीमानेतुमहं गच्छामि, यूयं मम सहायार्थमागच्छतेत्यर्थः । तव साहाय्यकेऽस्माकं किं फलमित्यत आह—अस्माभिरिन्द्राग्नियमवरुणैर्मया सह पञ्चभिः सा भैम्यपि संविभज्य संभोगकाले समानभागमेव कृत्वैवोपभुज्यताम् । तथा च भवतामपि फलमस्तीति भावः । कैः केव—पञ्चभिः पाण्डवैः पाञ्चाली द्रौपदीव । पाञ्चालीदृष्टान्तेनैकस्याः पतिव्रताया बहुभिरुपभोगो न दृष्टचर इत्यलौकिकत्वं परिहृतम् । पाण्डवानामग्रभावित्वात्तदानीं दृष्टान्तत्वेन कलेर्योगित्वाद्भविष्यदर्थज्ञानसामर्थ्याद्वचनं युक्तम् । वस्तुतस्तु इत्थं वचनं समयभेदं विस्मृतवत एव कवेः । जगत्प्रवाहानादितया पाण्डवपाञ्चालीवृत्तान्तानामतीतत्वात्तदुदाहरणीकृत्यैतदुक्तमिति वा ।पाञ्चाली,

१ देवस्येवेत्युपमा । २ अत्रानुमासः ।

जनपदवाचिनः क्षत्रियाभिधायिनः पाञ्चालशब्दात् 'जनपदशब्दात्क्षत्रियादञ् ४।१।१६८' इत्यपत्येऽञ् ॥ १३२ ॥

**अथापरिवृढा सोढुं मूर्खतां मुखरस्य ताम्।**
**चक्रे गिरा शराघातं भारती सारतीव्रया ॥ १३३ ॥**

अथेति ॥ अथ पूर्वोक्तकलिवचनाकर्णनानन्तरं तामुक्तप्रकारां मुखरस्यानुचितभाषणशीलस्य कलेर्मूर्खतां सोढुं क्षन्तुमपरिवृढाऽसमर्था भारती सरस्वती अर्थगाम्भीर्यात्सारया श्रेष्ठया, परुषत्वाच्च तीव्रया दुःसहया गिरा कलेः शराघातं बाणव्यधमिव चक्रे। बाणवत्पीडाकरं परुषं वचनमूच इत्यर्थः। 'भारतीव्रया' इति पाठे—अर्थगाम्भीर्येण दुःसहया ॥ १३३ ॥

**कीर्तिं भैमीं वरं चास्मै दातुमेवागमन्नमी।**
**न लीढे धीरवैदग्धीं धीरगम्भीरगाहिनी ॥ १३४ ॥**

कीर्तिमिति ॥ हे कले, अमी देवा अस्मै नलाय भैमीं दातुमेव, तथा—भैमीं कामयानोऽपीन्द्राद्यर्थं भैम्या एव दूत्यं कृतवान्, एवंविधोऽतिधीरः कोऽपि नास्तीति कीर्तिं यशः, तथा—भैमीं च प्रत्यक्षलभ्याम्, तथा—उक्तप्रकारान्वरांश्च अस्मै नलाय दातुमेवागमन्स्वयंवरं गतवन्तः। न तु भैमीं वरीतुमिति त्वं नो वेत्सीति शेषः। देवा हि केनापि प्रकारेण परीक्ष्य परितुष्टाः सन्तो वरं ददते। कुतोऽहं न वेद्मीत्यत आह—यस्मादगम्भीरस्योत्तानस्यार्थस्य गाहिनी स्पर्शिनी गम्भीरार्थग्राहिणी न भवतीत्यर्थः। एवंभूता मूढानां धीः बुद्धिर्धीराणां महाशयानां वैदग्धीं चातुरीं न लीढे न वेत्तीत्यर्थः। त्वं तु मूर्खत्वादेतेषामभिप्रायमज्ञात्वोपहसितवानिति भावः। अधीरेत्यकारप्रश्लेषेण संबोध्य, अगम्भीरगाहिनी ते धीः वैदग्धीम्। अर्थादेतेषां न लीढ इति वा। हे अधीर्बुद्धिरहित मन्दबुद्धे कले न धीः बुद्धिर्यस्येति सम्बुद्धौ अधीरिति। अगम्भीरगाहिनी ते धीरवैदग्धीमचातुर्यं नास्वादयति। अपि तु प्राप्नोत्येवेति काका वा व्याख्येयम्। लीढे, लिहेः स्वरितेत्त्वात्तङ्। क्वचित् 'लेढि' इति पाठः ॥ १३४ ॥

**वाग्मिनीं जडजिह्वस्तां प्रतिवक्तुमशक्तिमान्।**
**लीलावहेलितां कृत्वा देवानेवावदत्कलिः ॥ १३५ ॥**

वाग्मिनीमिति ॥ कलिर्वाग्मिनीं वाचोयुक्तिपरम्पराचतुरां तां देवीं प्रतिवक्तुं प्रत्युत्तरं दातुमशक्तिमानसमर्थो यतः—प्रत्युत्तरास्फुरणाज्जडजिह्वः कुण्ठितवदनशक्तिः, अत एव तां लीलया विलासव्याजेनावहेलितामवज्ञातां कृत्वा स्त्रियं त्वां प्रतिवक्तुमयुक्तमित्येवंप्रकारं परिहस्य देवानेवावदत् ॥ १३५ ॥

**प्रौञ्छि वाञ्छितमस्माभिरपि तां प्रति संप्रति।**
**तस्मिन्नले न लेशोऽपि कारुण्यस्यास्ति नः पुनः ॥ १३६ ॥**

प्रौञ्छीति ॥ हे देवाः, सम्प्रत्यस्माभिरपि तां भैमीं प्रति वाञ्छितमभिलाषः प्रौञ्छि परिमार्जितः। त्यक्तमित्यर्थः। नोऽस्माकं पुनः कारुण्यस्य लेशोऽपि तस्मिन्नले नास्ति। नलमपकर्तुं प्रवर्तामह इत्यर्थः। प्रौञ्छि, उञ्छेर्वर्जनार्थात्कर्मणि चिण् ॥ १३६ ॥

**वृत्ते कर्मणि कुर्मः किं तदा नाभूम तत्र यत्।**
**कालोचितमिदानीं यः शृणुतालोचितं पुनः ॥ १३७ ॥**

वृत्त इति ॥ हे देवाः, स्वयंवरलक्षणे कर्मणि वृत्ते जाते सति किं कार्यं कुर्मः, अपि तु किंचिदिदानीं कर्तुं न शक्यम्। पश्चात्तापमात्रं भवति, न तु तल्लाभः परदारत्वात्, गतशोको न कर्तव्य इति च। तस्मात्तां प्रति वाञ्छितं त्यक्तमित्यर्थः। यतो यस्मात्तदा स्वयंवरसमये वयं तत्र नाभूम स्थिताः। तदानीं चेत्तत्राभविष्याम, तर्हि तथैवाकरिष्याम, तन्नाभूदित्यर्थः। हे देवाः, यूयमिदानीं पुनर्भैम्या नले वृते सत्यापि कालोचितं, नोऽस्माकमालोचितं विचारं शृणुताकर्णयत। नले कृपालेशोऽपि नास्तीति मयोक्तम्, तत्प्रकारमाकर्णयतेत्यर्थः। नः, 'अस्मदो द्वयोश्च १।२।५९' इति बहुत्वम्। आलोचितं, 'नपुंसके भावे क्तः ३।३।११४' इति भावे क्तः ॥ १३७ ॥

तदेवाह—

**प्रतिज्ञेयं नले विज्ञाः कलेर्विज्ञायतां मम।**
**तेन भैमीं च भूमिं च त्याजयामि जयामि तम् ॥ १३८ ॥**

प्रतिज्ञेति ॥ हे विज्ञाः, कलेर्ममेयं प्रतिज्ञा विज्ञायताम्। भवद्भिरिति शेषः। इयमिति किम्—अहं तेन नलेन प्रयोज्येन भैमीं च भूमिं च त्याजयामि शीघ्रं मोचयामि। अत एव तं जयामीति प्रतिज्ञा मम चेत-

१ पाण्डवैरिवेत्युपमा। २ अत्रानुप्रासः। ३ अत्रानुप्रासः।

१ अत्रानुप्रासः। २ अत्राप्यनुप्रासः।

स्यैवं वर्तत इति भवद्भिर्ज्ञायत एव तथापि स्पष्टं मया कथ्यते तदाकर्ण्यतामित्यर्थः । कलेर्ममेत्यहंकारः सूचितः । तेन अनुक्ते कर्तरि तृतीया, त्याजयामि, जयामीति 'वर्तमानसामीप्ये 'वर्तमानवद्वा ३।३।१३१' इति भविष्यति लट् ॥ १३८ ॥

**नैषधेन विरोधं मे चण्डतामण्डितौजसः ।**
**जगन्ति हन्त गायन्तु रवेः कैरववैरवत् ॥१३९॥**

नैषधेनेति ॥ चण्डतया भूभैमीपरित्याजनद्वाराऽतिपीडाकारित्वान्निर्दयत्वेन मण्डितौजसोऽलंकृततेजसो मे मम नैषधेन सह विरोधं जगन्ति त्रयोऽपि लोका गायन्तु कीर्तयन्तु । कस्य किमिव—चण्डतामण्डितौजसो रवेः सूर्यस्य कैरवैः कुमुदैः सह वैरवद्विरोधमिव । हन्त खेदे । अयोग्येन हीनतेजसा नलेन सह विरोधारम्भात्त्रैलोक्ये यद्यप्ययशो भविष्यति, तथापि किं कुर्म इति खेदः । यद्वा हन्तेति हर्षे, तथा च आत्मनः सकाशादपि केन नैषधेन विरोधाल्लोके मम यशो भावीति हर्ष इति भावः । अयशःसमुदयेऽपि सूर्येण कैरववैरवन्मयापि नलवैरं करिष्यत एवेति भावः । एतेन दर्पः सूचितः ॥ १३९ ॥

**द्वापरः साधुकारेण तद्विकारमदीदिपत् ॥**
**प्रणीय श्रवणे पाणिमवोचन्नमुचे रिपुः॥१४०॥**

द्वापर इति ॥ द्वापरस्तृतीययुगरूपः सहचरस्तस्य कलेर्विकारं नलेन सह विरोधरूपं साधुकारेण साध्वितिशब्दोच्चारणेनादीदिपत्साधु उचितमेतत्त्वया विचारितमित्युद्दीपयामास । तस्य प्रोत्साहनं चकारेत्यर्थः । अथ नमुचेर्दैत्यस्य रिपुरिन्द्रो युष्माभिः साहाय्यं कर्तव्यमिति कलिनोक्तस्य वचस उत्तरत्वेनैतद्व्यापारमध्येऽस्माभिर्न स्थीयत इति लौकिकाभिनयव्यञ्जनवशाच्छ्रवणे पाणिं प्रणीय यत्त्वया विचारितं तदस्माभिः श्रोतुमप्यनर्हमिति वा पाणिभ्यां कर्णौ पिधाय कलिमवोचत् । अदीदिपत्, दीपेर्ण्यन्ताच्चङि 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् १।४।३' इत्यादिनोपधाह्रस्वविकल्पः ॥१४०॥

**विस्मेयमतिरस्मासु साधु वैलक्ष्यमीक्षसे ।**
**यद्दत्तेऽल्पमनल्पाय तद्दत्ते ह्रियमात्मनः ॥१४१॥**

विस्मेयेति ॥ हे कले, त्वं विस्मेयाऽऽश्चर्यहेतुर्मतिर्यस्यैवंविधोऽसि । यस्मात्त्वमस्मासु वर्तमानं वैलक्ष्यं सलज्जत्वं साधु सम्यक्प्रकारेणेक्षसे जानासि । पराशयवेदितया तव तीक्ष्णबुद्धित्वादयं विस्मिताः स्मेत्युपहासः । साधूचितं यद्वैलक्ष्यं तद्यस्मादीक्षस इति वा । कथं भवत्तु वैलक्ष्यस्यौचित्यमित्याशङ्क्य समर्थयते—यः पुरुषोऽनल्पाय महते पुरुषायाल्पमतितुच्छं वस्तु दत्त इति यत्, स पुरुषस्तदल्पवस्तुदानं कर्मात्मने स्वस्मै ह्रियमेव दत्ते । महते यदल्पं दीयते तदल्पदानमेव कर्तृ दात्रे पुरुषाय लज्जामेव दत्ते । तेन तस्य लज्जैव भवतीत्यर्थ इति वा । तथा च महते नलायास्माभिरल्पमेव दत्तमिति लज्जा युक्तैवेति भावः । अतितरां नलमाहात्म्यं सूचितम् । एतेन 'दूरान्नः प्रेक्ष्य—'इत्यस्योत्तरम् । यद्यादि, तत्तर्हीति वा योज्यम् । यद्वा—अनल्पाय न विद्यतेऽल्पो यस्मात्। अतिहीनायेत्यर्थः । यदस्मदादिरल्पं 'कस्कोऽयं' धर्ममर्माणि कृन्तति' इत्याद्युपालम्भवचनं दत्ते करोतीति तत्स्वस्मै ह्रियमेव दत्ते । अधमस्य महोपालम्भयोग्यस्य तवाल्प एवोपालम्भः कृत इति विषादादस्माकं वैलक्ष्यं युक्तमेवेति व्याख्येयम् । अधमायाल्पमप्युपालम्भादि यद्दत्ते तत्स्वस्मै ह्रियं दत्ते । अधमेन सह सम्भाषणनिषेधात्तस्योपालम्भोऽपि न कार्यः । स त्वस्माभिः कृतः। तथा च पापरूपेण भवता सह संभाषणमस्माभिरनुचितं कृतमिति विषादादस्मासु वैलक्ष्यं युक्तमेवेति वा। इयमपि वक्रोक्तिः ॥ १४१ ॥

**फलसीमां चतुर्वर्गं यच्छतांशोऽपि यच्छति।**
**नलस्यास्मदुपघ्ना सा भक्तिर्भूताऽवकेशिनी ॥**

दानाल्पत्वनलमहत्त्वप्रकटनपूर्वं वैलक्ष्यस्यौचित्यं समर्थयते—

फलेति ॥ यस्या नलभक्तेः शतांशोऽपि शततमो भागः फलस्य सीमां मर्यादाभूतं निरतिशयफलरूपं चतुर्वर्गं धर्मार्थकाममोक्षरूपं यच्छति नलाय दातुं शक्नोति, साऽस्मदुपघ्नाऽस्मदाश्रयाऽस्मद्विषया नलस्य भक्तिरवकेशिनी निष्फला भूता जाता । यस्याः शततमांशेन वशीकृतैरस्माभिः संतुष्य फलरूपत्वेन चतुर्वर्गोऽपि नलाय दातुं शक्यते, तस्या निरतिशयायाः परिपूर्णायाश्चतुर्वर्गादधिकतमस्य फलस्याभावादस्माकं दातुमसामर्थ्यात्सा निष्फलैव जातेत्यर्थः । निरतिशयभक्तेर्युक्तत्वान्महते नलाय चतुर्वर्गोऽप्यल्पतरफलत्वाद्दातुमयुक्तः ।

---

१ कैरववैरवदित्युपमा । २ अत्राप्यनुप्रासः ।

तादृशाय भैमीलक्षणाल्पतमफलदाने कृतेऽस्माकं लज्जा युक्तैवेति भावः । यच्छततमांशवशीकृतैरस्माभिर्दत्तसामर्थ्यो नलोऽप्यन्यस्मै जनाय फलावधि चतुर्वर्गं दातुं शक्नोतीति यावत्, सा भक्तिरपूर्णा निष्फला जातेति वा व्याख्येयम् । 'सोऽपि' इति पाठे चतुर्वर्गं ददतामस्माकं स नलोऽपि क्रियमाणकर्मफलमर्यादां ब्रह्मार्पणरूपेण ददाति तस्याः पुनः प्रत्यर्पणात्तस्यास्माकं च साम्यमेव । किन्तु नलस्यास्मद्विषया सा निरतिशया कर्ममात्रस्यापि ब्रह्मण्येवार्पणात्फलाभिसंधानरहिता भक्तिर्वन्ध्या जाता, तादृग्भक्तिफलादानेऽस्माकमसामर्थ्यात् । तथा च वैलक्ष्यं युक्तमेवेति व्याख्येयम् । यच्छताम्, सम्बन्धे षष्ठी । शतं चासावंशश्चेति विगृह्य लक्षणया शततमोऽश इति । 'उपघ्न आश्रये ३।३।८५' इति साधुः ॥ १४२ ॥

नलो वैरार्हो न भवतीत्याह—

**भव्यो न व्यवसायस्ते नले साधुमतौ कले।**
**लोकपालविशालोऽयं निषधानां सुधाकरः॥१४३॥**

भव्य इति ॥ हे कले, रागद्वेषादिराहित्येन साध्वी निर्मला मतिर्यस्य तस्मिन् नले विषये ते व्यवसायो वैरकरणोद्यमो भव्यः शुभोदर्को न । किं च निषधानां निषधदेशानामाह्लादकत्वात्सुधाकरश्चन्द्रोऽयं नलो लोकपाला दिक्पालास्तद्वद्विशेषेण शालते शोभते स्वाभाविकेन शौर्यादिना । तदंशत्वाद्वा लोकपालवन्महाशयः । अतस्तेन सह वैरं तव शुभोदर्कं न भवतीति न तत्कार्यमित्यर्थः । 'मते' इति पाठे असाध्वी मतिर्यस्येति कलिविशेषणम् । 'मतः कले' इति पाठे—असाधोर्द्वापरादेरनुमत इति व्यवसायविशेषणम् ॥ १४३ ॥

**न पश्यामः कलेस्तस्मिन्नवकाशं क्षमाभृति।**
**निचिताखिलधर्मे च द्वापरस्योदयं वयम्॥१४४॥**

एतदेव स्फुटयति—

नेति ॥ वयं तस्मिन्क्षमाभृति राज्ञि नले कलेस्तुर्ययुगस्य तवावकाशं प्रवेशावसरं न पश्यामः न संभावयामः। तथा-भवन्मित्रस्य द्वापरस्य चोदयं नलपराभवनसामर्थ्यं न सम्भावयामः। यतः—नितरां चिता अर्जिता अखिला धर्मा येन । श्रौतस्मार्तधर्मानुष्ठातरीत्युभयत्र हेतुः । तस्य धर्ममयत्वात्; युवयोः पापरूपत्वात्तत्रावकाशलेशोऽपि न सम्भाव्यत इत्यर्थः । यद्यपि देवा नलपराभवस्य भविष्यत्तां जानन्ति तथाप्युत्साहभङ्गद्वारा कलिनिषेध एव तात्पर्यादवकाशं न पश्याम इत्यूचुः । यद्वा—पश्याम इति वर्तमानसामीप्ये भविष्यति लट्प्रयोगात्प्रस्तुतोऽवकाशो नास्ति । विलम्बेन भविष्यतीति सूचितमिति ज्ञेयम् । अथ च—यथासंख्येन तितिक्षाशीले कलहावकाशो न, निश्चितसकलधर्मरहस्ये च संदेहस्योदयो न भवतीति युक्तम् ॥ १४४ ॥

**सा विनीततमा भैमी व्यर्थानर्थग्रहैरहो ।**
**कथं भवद्भिर्बाध्या प्रमितिर्विभ्रमैरिव १४५॥**

भैम्यापि न बाध्येत्याह—

सेति ॥ पातिव्रत्यादिधर्मनिष्ठत्वाद्विनीततमा सा भैमी व्यर्थो निर्हेतुको वैराचरणलक्षणोऽनर्थस्तत्र ग्रहोऽभिनिवेशो येषां तैर्भवद्भिः कथमिव बाध्या पीडनीया । अपि तु—अनुचितमेतत् । अहो कष्टं, संबुद्धिर्वा, आश्चर्ये वा । कैः केव—विशिष्टैर्भ्रमैर्विपर्ययज्ञानैर्विनीतं सुतरामपाकृतं तमोऽज्ञानं यथैवंभूता भ्रान्तिज्ञानविरोधिनी प्रमितिः सम्यगनुभूतिस्तात्त्विका रजतादिधीरिव । कथं बाध्येत्यर्थः । किंभूतैर्विभ्रमैः—व्यर्थो निष्फलोऽनर्थस्य शुक्तिरजतादेर्ग्रहो ज्ञानं येषां तैः । 'अविनीततम आः' इति पदच्छेदः । आः कोपे । नितरामविनीत अधम कले इति वा ॥ १४५ ॥

**तं नासत्ययुगं तां वा त्रेता स्पर्धितुमर्हति ।**
**एकप्रकाशधर्माणं न कलिद्वापरौ युवाम् १४६**

तमिति ॥ न असत्यं नासत्यं किन्तु सत्यमेव युगं सत्ययुगम् । कृतयुगमिति यावत् । तं नलं तां भैमीं वा स्पर्धितुं तुलयितुमर्हति । तथा—त्रेतायुगमपि स्पर्धितुमर्हति न तु जेतुमित्यर्थः। यथासंख्येन वा योज्यम् । यस्मादेको मुख्यः स चासौ प्रकाशधर्मा च तम् तां वा, प्रकाशः प्रसिद्धो धर्मो यस्य यस्याश्च । पश्चादेकशब्देन कर्मधारयः । लोकत्रयस्त्रीपुंसमध्ये तावेव धर्मप्रधानौ । यतः, तस्मात्सत्ययुगस्यापि चतुश्चरणधर्मत्वादेकप्रकाशधर्मत्वात्सत्ययुगं स्पर्धितुमर्हति त्रेतायास्तु त्रिचरणधर्मत्वेऽपि कलिद्वापरापेक्षया धर्मबाहुल्यात्कृतयुगसाधर्म्यादेकप्रकाशधर्मत्वसंभवात्सापि स्पर्धितुमर्हतीत्यर्थः । कलि-

---

१ यच्छेति यमकम् । २ः सुधाकर इति रूपकम् । साधुमताविति परिकरः ।

१ अत्र परिकरः, दयं वयमित्यनुप्रासः । ४ विभ्रमैरिवेत्युपमा ।

द्वापरौ युगे युवां पुनस्तौ स्पर्धितुं नार्हथ इति विभक्तिविपरिणामः कार्यः। तयोर्धर्मैकप्रधानत्वात्, युवयोश्चाधर्मबाहुल्याद्युवां तौ तोलयितुमप्यसमर्थौ, किं पुनर्जेतुमित्यर्थः। आ सामस्त्येन सत्यं यत्र तदासत्यम्। तच्च तद्युगं च, चतुश्चरणधर्मयुक्तं कृतयुगं तथा—त्रेतायुगं तौ स्पर्धितुं नार्हतः अपि त्वर्हत एवेति काकुः। उक्तादेव हेतोरासत्ययुगं, कृतयुगं तौ स्पर्धितुमर्हति तत्रैव तयोः सत्त्वाद्धर्मप्रधानत्वाच्च। त्रेतायुगं च नार्हति त्रयाणामप्यधर्मसंस्पर्शात्, तत्र तयोरसत्त्वाच्चेति वा। कलिद्वापरयोः पुरुषत्वान्नलेन सह, त्रेतायाश्च स्त्रीत्वाद्भैम्या सह, स्पर्धासम्भावनायां पार्थक्येन निषेधो युक्त इति वा। कृतयुगं तं स्पर्धितुं नार्हति। युवामपि नार्हतः सत्ययुगेऽधर्मलेशसंस्पर्शसम्भावनाऽपि सम्भवेत्, न तु नले तथा—त्रेतायामपि, न तु भैम्याम्। तथा चाद्यं युगद्वयं ताभ्यां स्पर्धितुमपि न शक्तम्, युवां पुनर्न शक्ताविति किं वाच्यमित्यर्थ इति वा। अथ च—दस्रयोर्युगं नलं स्पर्धितुमर्हति। गार्हपत्याहवनीयदक्षिणाग्नित्रयरूपा च भैमीं स्पर्धितुमर्हति। यतः—एकः केवलः प्रकाश उज्ज्वलः प्रसिद्धो वा धर्मः स्वभावः सौन्दर्यादिगुणो वा ययोर्भैमीनलयोः,प्रकाशः शोभालक्षणो धर्मो ययोरिति वा। अग्नित्रयपक्षेऽप्येकः केवलः प्रकाशस्तेज एव धर्मः स्वभावो यस्या इति सौन्दर्याद्दीप्तत्वात्पावित्र्याच्च दस्रयुगमग्नित्रयं च ताभ्यां तुल्यं भवितुमर्हतीत्यर्थः। कलिद्वापरौ युवां पुनर्न, असुन्दरत्वात्पापप्रधानत्वाच्चेत्यर्थः। अथ च—एको विरुद्धधर्मरहितः प्रकाशो निश्चितश्च धर्मो यत्र तं च तां च कलहसंदेहौ स्पर्धितुं नार्हतः।विरुद्धधर्मत्वे हि कलहसंभवो विशेषधर्माप्रकाशे च संदेहसम्भवः। अत्र त्वेकधर्मत्वात्प्रकाशमानधर्मत्वाच्च कलहसन्देहौ न सम्भवत इति युक्तमिति भावः। 'त्रेताऽग्नित्रितये युगे', 'प्रकाशश्च प्रसिद्धे स्यात्,' 'सन्देहद्वापरौ चाथ' इति चामरः। प्रकाशधर्मशब्दयोः पूर्वं बहुव्रीहौ 'धर्मादनिच् केवलात् ५।४।१२४' इति समासान्तः। पश्चात्पूर्वेण समासः॥ १४६॥

## करिष्येऽवश्यमित्युक्तिः करिष्यन्नपि दुष्यसि दृष्टाऽदृष्टा हि नायत्ताः कार्यीया हेतवस्तव१४७

करिष्य इति॥ हे कले, अवश्यं निश्चितं करिष्ये। अर्थान्नलपराभवमित्युक्तिः प्रतिज्ञावचो यस्यैवंभूतस्त्वं करिष्यन्नपि कर्तुकामोऽपि दुष्यसि दुष्टो भवसि। अपकारस्य भविष्यत्त्वादिदानीं साक्षात्कायव्यापाराभावेऽपि मनस्यपकारकरणवासनाया धृतत्वाद्वचनेन चानुवादाद्द्विविधपातकसद्भावात्। ब्रह्महत्याया अकरणेऽपि ब्रह्महत्यां करिष्यामीत्यादाविवेत्यर्थः। कुर्वाणो दुष्टो भविष्यसीति किं वाच्यमित्यपिशब्दार्थः। अथ च—अकर्ता दुष्यस्येव प्रतिज्ञाभङ्गादिति किं वाच्यम्। किन्तु यद्यपि नलस्य पराभवं करिष्यसि, तथापि दुष्यसि, प्रतिज्ञातार्थसम्पादनेऽप्येवंप्रतिज्ञाकरणस्यायुक्तत्वात्। हि यस्मात्कार्यीयाः कार्यसाधनसमर्था दृष्टाश्चक्रचीवरादयः, अदृष्टा देशकालेश्वरेच्छादयो हेतवः कारणानि तवायत्तास्त्वदधीना न भवन्ति। कार्यसाधिका दृष्टादृष्टसामग्री तावत्त्वया सम्पादयितुमशक्या। किन्तु सा तस्य तस्य तत्तत्कर्मवशात्स्वयमेव सम्पद्यत इत्यर्थान्तरन्यासः। तथाचैवं त्वया चित्ते धृतेऽनूदिते च द्विविधं पातकमेव भवति। न तु तं पराभवितुं शक्नोषीति। यद्यपि तं पराभवितुं शक्ष्यसे, तथापि नलीयदृष्टादृष्टसामग्र्येव तत्र प्रयोजिका, न तु त्वमिति। मयैवं करिष्यते, मयैवं कृतमित्यादिरूपां प्रतिज्ञां प्रति स्वमात्रस्य करणत्वाभावाद् दृष्टादृष्टकारणवैगुण्येन प्रतिज्ञाभङ्गस्यापि शङ्कितत्वादिन्द्रोऽपि कर्तुमशक्तः,त्वं तु को नाम वराक इति च भावः। यद्वा दृष्टाऽदृष्टरूपा हेतवः, तत्र दृष्टसामग्री यथाकथंचिद्यद्यपि संपादयितुं शक्यते, तथाप्यदृष्टसामग्री त्वया न शक्यते। तथा च नलेन यदि परमो धर्मः कृतः, तर्हि स त्वया पराभवितुमशक्यः। अथाधर्मः कृतः तदधर्मवशादेव तादृशी दशा भविष्यति त्वया किं क्रियत इत्युभयथापि दोषात् 'मयैवं करिष्यते, कृतम्' इत्यादि वल्गना न कार्येति भावः। 'इत्युक्त्वा' इति पाठे अवश्यं वश्यं वा करिष्ये इत्युक्त्वाऽकारप्रश्लेषेणाकरिष्यन्नपि दुष्यसि वाङ्मात्रेणापि पापसिद्धेः। किं पुनः करिष्यन्निति। अन्यत्पूर्ववत्। कार्यीयाः, 'तस्येदम् ४।३।१२०' इत्यर्थे 'वृद्धाच्छः ४।२।११४'। हितार्थे 'तस्मै हितम् ५।१।५' इति वा॥ १४७॥

## द्रोहं मोहेन यस्तस्मिन्नाचरेदचिरेण सः। तत्पापसंभवं तापमाप्नुयादनयात्ततः॥१४८॥

द्रोहमिति॥ यः पुरुषो मोहेनाज्ञानेनाऽपि तस्मिन्पुण्यश्लोकेऽनपकारिणि द्रोहमपकारमाचरेत्, स पुरुषः ततस्तस्मादनयादन्यायाद्धेतोरचिरेण तत्साचाद्द्रोहापकारेण

१ इह दृष्टेति काव्यलिङ्गम्।

जातात्पापात्सम्भवो यस्य तं तापं दुःखमाप्नुयात् । बुद्धिपूर्वकारी लभत इति किं वाच्यमित्यर्थः । नलद्रोहः तस्मात्त्वया सर्वथा त्याज्य इति भावः । अनेन शापोऽपि दत्त इति ज्ञेयम् । मोहेनेत्यत्रार्थादपिशब्दो योज्यः। मोहस्येन स्वामिन्नज्ञानाश्रय मूर्खतमेति वा सम्बोधनम् ॥ १४८ ॥

**युगशेष तव द्वेषस्तस्मिन्नेष न साम्प्रतम् ।**
**भविता न हितायैतद्वैरं ते वैरसेनिना ॥१४९॥**

युगेति ॥ हे युगेषु सत्यादिषु शेष कले, तस्मिन्नले तवैष द्वेषो न साम्प्रतमयुक्तः। यस्माद्वैरसेनिना नलेन सह एतत्प्रारब्धं वैरं ते तुभ्यं हिताय न भविता शुभोदर्कं न भविष्यति । युगेषु शेष इति 'न निर्धारणे २।२।१० ' इति निर्धारणार्थायाः षष्ठ्याः समासनिषेधात् 'सप्तमी शौण्डैः २।१।४० ' इत्यत्र ' सप्तमी ' इति योगविभागे निर्धारणसप्तमीसमासः । साम्प्रतम्, 'युक्ते द्वे साम्प्रतं स्थाने ' इत्यमरोक्त्या योग्यार्थमव्ययम् । 'हितयोगे च' इति चतुर्थी ॥ १४९ ॥

**तत्र यामीत्यसज्ज्ञानं राजसं सदिहास्यताम् ।**
**इति तत्र गतो मागा राजसंसदि हास्यताम् ॥१५०॥**

तत्रेति ॥ हे कले, तत्र नलसमीपे पराभवार्थं यामि गच्छामीत्येवंरूपं राजसं रजोगुणजनितं विचारासहम्। अत एवासदशोभनं सद्वर्तमानमिहास्मिन्काले देशे वाऽस्यतां त्यज्यतामिति । सद्भद्रमिति वा । इति विचार्येति यावत् । इति किम्—तत्र राजसंसदि तस्यां नलसभायां गतः सन् हास्यतां परिहास्यतां त्वं मा गाः । एवं विचार्य तत्र गतः सभ्यैरुपहास्य एव भविष्यसि । न तु नलं पराभवितुं शक्ष्यसीत्येवंविधो विचारः परित्यज्य एवेत्यर्थः । असत्सदिति च विरोधाभासः । तत्र यामीति ज्ञानमसदयुक्तम्—यतो राजसम् । तर्हि किं कर्तव्यं तत्राह—इहास्मिन्नेव देश आस्यतां स्थीयताम् । इत एव परावर्तनीयमित्यर्थः । इत्यसदीयं ज्ञानं सद्भद्रमितीतिशब्दमावर्त्य व्याख्येयम्। विपक्षे बाधकमाहोत्तरार्धेन—तत्र स्वयंवरे गतो राजसभायां स्वयंवरे वृत्ते किमर्थमागत इति हास्यतामेव गमिष्यसि ॥ १५० ॥

**गत्वाऽन्तरा नलं भैमीं नाकस्मात्त्वं प्रवेक्ष्यसि ।**
**षण्णां चक्रमसंयुक्तं पठ्यमानं डकारवत् ॥१५१॥**

गत्वेति ॥ हे कले, निषधदेशान्गत्वा प्राप्य नलं भैमीमन्तरा नलभैम्योर्मध्येऽकस्माच्छीघ्रं दुरितलक्षणकारणमन्तरेण वा त्वं न प्रवेक्ष्यसि । नलस्य पुण्यश्लोकत्वात्, भैम्याश्च पातिव्रत्यादिधर्मयुक्तत्वात्, तौ पराभवितुं न शक्नोषीत्यर्थः । क इव—असंयुक्तं पूर्वं विसंधितया पृथक्कृतप्रकृतिप्रत्ययविभागं पश्चात्पठ्यमानम्-संहितया प्रयोगार्हम् । उच्चार्यमाणमिति यावत् । एवंभूतं षण्णां चक्रं षण्णामिति शब्दरूपस्थवर्णवृन्दमन्तरा मध्ये डकारवत् । डकारो वर्णो यथाऽकस्माद्विधिमन्तरेण न प्रविशतीति साधर्म्योपमा । षष्शब्दात्षष्ठीबहुवचने 'षट्चतुर्भ्यश्च ७ । १ । ५५ ' इति नुटि तत्सहित आमि ' स्वादिष्वसर्वनामस्थाने १ । ४ । १७ ' इति पूर्वपदस्य पदत्वात् ' झलां जशोऽन्ते ८ । २ । ३९ ' इति जश्त्वेन षकारस्य डकारे ' न पदान्ताट्टोरनाम् इति निषेधस्य 'अनाम्नवतिनगरीणामिति वाच्यम् । इति निषेधात् 'ष्टुना ष्टुः ८ ।४ । ४१ ' इति ष्टुत्वेन नाम्नकारस्य णकारादेशे .' यरोऽनुनासिकेऽनुनासिको वा ८ ।४।४२' इति डकारस्याप्यनुनासिकस्य व्यवस्थितविकल्पत्वादनुनासिकस्यात्र नित्यत्वेन णकारे जाते सर्वथापि न स्वेन रूपेण 'षण्णाम् ' इति पदमध्ये डकारो यथा प्रवेशं लभते, तथा तयोर्मध्ये त्वमपीत्याशयः । अन्यथा विकल्पत्वात्पक्षे षड्णामिति स्यात् तन्मा भूदित्यत्र व्यवस्थितविभाषाऽङ्गीकरणीया । षण्णां चेति चकारो भैमीं चेति योज्यः । तथा च—क्रमेण परिपाट्यां संयुक्तं षण्णामिति कर्मभूतं शब्दरूपमन्तरा डकारो यथा न प्रविशति।असंयुक्तत्वावस्थायां यद्यपि स्वेन रूपेणावस्थानं वर्तते, तथापि संयुक्तावस्थायां नास्तीत्यर्थ इति वा । षण्णामित्यत्र प्रकृतिप्रत्ययदशायामकस्मादागन्तुकादेशरूपतया डकारो यथा प्रविशति, तथा त्वं न प्रविशसीति वैधर्म्योपमया वा व्याख्येयम् । ' टकारवत् ' इति पाठे—'वाऽवसाने ८ । ४ । ५६ ' इत्यवसान इव चर्त्वविकल्पात्, खरश्चाभावात् षट्, षट्स्वित्यादिवत् षण्णामित्यत्र खरवसानयोरभावाट्टकारो यथा न प्रविशतीति साधर्म्योपमैव । क्षेपकोऽयम् । नलं भैमीं ' अन्तरान्तरेण युक्ते २।३।४' इति द्वितीया ॥ १५१ ॥

**अपरेऽपि दिशामीशा वाचमेनां शचीपतेः ।**
**अन्वमन्यन्त किन्त्वेनां नादत्त युगयोर्युगम् ॥१५२॥**

१ चरे चिरे इत्यनुप्रासः। २ पादैनामनुप्रासः ।

१ 'प्रत्यये भाषायां नित्यवचनम्' इति वार्तिके नित्येतिपदोपादानादेवास्य सिद्धत्वे इदं चिन्त्यम्। २ उपमाऽलङ्कारः ।

अपरे इति ॥ अपरे दिशामीशा वह्न्यादयः शचीपतेरेनां पूर्वोक्तां वाचमन्वमन्यन्त । 'इन्द्रो युक्तमाशापयाति' इत्येवमभ्यनन्दन् । किन्तु पुनर्मूर्खे युगयोः कलिद्वापरयोर्युगमेनामिन्द्रगिरं नादत्त नाङ्गीचक्रे । दिगीशानामपि सम्मतायां वाचि तयोरसम्मतेः । किंतुशब्देन मूर्खतरत्वमाग्रहित्वं चोक्तम् । एनाम्, अन्वादेशे एनादेशः । आदत्त, 'आङो दोऽनास्यविहरणे १।३।२०' इति तङ् ॥ १५२ ॥

**कलिं प्रति कलिं देवा देवान्प्रत्येकशः कलिः।**
**सोपहासं समैर्वर्णैरित्थं व्यररचन्मिथः॥१५३॥**

कलिमिति ॥ देवाः कलिं युगं प्रति लक्षीकृत्य कलिर्देवान्प्रत्येकश एकैकमुद्दिश्य मिथोऽन्योन्यं समैर्वर्णैस्तुल्यैरक्षरैः श्लिष्टैः शब्दैः सोपहासमुपहासवाक्यसहितं कलिं कलहं वाग्युद्धमित्थं वक्ष्यमाणप्रकारेण व्यररचन् व्यररचच, कृतवन्तः कृतवांश्चेत्यर्थः । व्यररचत्, रचयतेश्चौरादिकस्यादन्तत्वादग्लोपित्वान्न सन्वद्भावः । व्यरचयादित्यपि पाठः ॥ १५३ ॥

**तवागमनमेवार्हं वैरसेनौ तया(ऽ)वृते ।**
**उद्वेगेन विमानेन किमनेनाऽपि धावता १५४**

इन्द्रः कलिं प्रत्याह—

तवेति ॥ हे कले, तया वैरसेनौ नले वृते सति तव अगमनं गमनाभावोऽर्हं युक्तम् । उद्वेगेनोत्कृष्टजवेन, अत एव—धावता शीघ्रगामिनाऽनेन प्रत्यक्षदृश्येन विमानेनाकाशगामिना रथेन किम्? अपि तु—न किंचित्प्रयोजनमस्ति । अन्यस्य वृतत्वादित्यर्थः । वैरसेनावुत्तरेण वा संबन्धनीयम् । अनया नलेऽवृते एव तव स्वपुराद्गमनं युक्तम् । नलवरणानन्तरमिदानीं सर्वथा गमनं न कार्यमित्यर्थ इति वा । एतावत्पर्यन्तं किं कृतम्, इदानीं किमर्थं गम्यत इत्युपहासः ॥

एतदेव वाक्यं कलिरिन्द्रं प्रत्याह—हे शक्र, भैम्या नले वृते सति तव यथागतमागमनमेवाकृतकार्यत्वादिदानीं स्वर्गं प्रत्यगमनमेव युक्तम् । निर्लज्जत्वमङ्गीकृत्येन्द्राण्यादीनामग्रे कथं मुखं दर्शयिष्यसि । अपि तु—अनुचितमेतत् । सर्वथा स्वर्गं प्रति नगमनमेव युक्तमित्यर्थ इति वा । विमानेनाहङ्काररहितेनापिधा तिरोधानं तद्युक्तेन नितरां गोपितेनानेन मुखदर्शनानुमितेनोद्वेगेन निर्वेदेन किम्, अपि तु—तद्गोपनं व्यर्थम् । धैर्यमवलम्ब्य निर्वेदो यद्यपि त्वया गोप्यते, तथापि मया ज्ञात एव । अथ च—भैमीनलाभ्यां वरदानार्थमेव मयागतमित्यादिव्याजेन निर्वेदगोपनं क्रियते, तथापि स निर्वेदो ज्ञात एव । अभिमानशून्यत्वान्न किंचिदनेन निर्वेदेन साधयितुं शक्यते, तस्मात्सर्वथा दुःखं मा कार्षीरित्युपहसितवानित्यर्थः । विमानेनान्यवरणादपमानेन हेतुना य उद्वेगस्तेन प्रकटेन किम्, अपि तु—तं गोपायेति वा । विगतमानानामिन स्वामिन्नितरामाभिमानशून्य इन्द्र, गोपितेन चानेन निर्वेदेन किमिति वा । उद्वेगेन किम्, अनेन धावता विमानेनापि किमिति वा । अपिधा, 'आतश्चोपसर्गे ३ । १ । १३६' इत्यङ् प्रत्ययः ॥ १५४ ॥

**पुरा यासि वरीतुं यामग्र एव तया वृते ।**
**अन्यस्मिन्भवतो हास्यं वृत्तमेतत्त्रपाकरम् १५५**

पुरेति ॥ हे कले, त्वं यां वरीतुमितोऽपि पुरा यासि गमिष्यसि तयाऽग्र एव त्वदागमनात्पूर्वमेवान्यस्मिन्वृत एतादिदानीं गमनं भवतस्त्रपाकरं हास्यं हास्यकरणं वृत्तं जातम् । वर्तिष्यमाणमपि वृत्तप्रायत्वाद्वृत्तमित्युक्तम् । सर्वोऽपि लोकस्त्वामुपहसिष्यतीत्यर्थः। एतत्तव वृत्तं गमनाचरणं हास्यहेतुभूतं त्रपाकारि च भविष्यतीति शेष इति वा । एतल्लोकैः क्रियमाणं हास्यं तव त्रपयाऽकं दुःखं राति एवंविधं वृत्तं जातप्रायमेवेति वा । अत्राप्युपहासः ॥

इदानीं कलिरग्निमाह—हे वह्ने, त्वं यां वरीतुं पुरा यास्ययासीः, तया तव समक्षमेव त्वामनादृत्याऽन्यस्मिन्नले वृते तवैतत्प्रत्यक्षदृश्यं वृत्तं वर्तुलमास्यं मुखं त्रपामा सामस्त्येन करोति नितरां लज्जावहं जातमिति शेषः । हा कष्टम् । त्रपयाऽकं दुःखं रात्यादत्ते लज्जास्पदं वृत्तं जातमिति वा । हे वह्ने, पुराऽस्मद्गमनात्पूर्वं यां वरीतुमयासि त्वया प्रयत्नोऽकारि स्वयंवरं प्रति गतम् । यद्वा—स्वस्य गमनात्पूर्वं दूतीहस्तेनोपदाप्रदानादिद्वारा यां वरीतुं प्रयत्नोऽकारि, तया तव समक्षमेव नले वृते एतत्स्वर्गं प्रत्यागमनलक्षणमाचरणं तव त्रपां न करोतीति त्रपाऽकरं लज्जां नावहति । एवं वृत्तेऽपि निर्लज्जः सन् स्वगृहं गच्छन् स्वां वनितां मुखं कथं दर्शयितास इति भाव इति । तया विनैतत्स्वर्गगमनाचरणं लज्जावहं

१ अत्रानुप्रासः, युगेति यमकं च । २ अत्र यमकम् ।

१ अत्र श्लेषः ।

सदहास्यं हास्ययोग्यं न, अपि तु—सर्वहास्यमेवेति काकुर्वा । मुखं लज्जाकरम्, वृत्तमाचरणमपि लज्जाकरमिति वा । पुरा यासीति 'यावत्पुरानिपातयोर्लट् । ३ । ३ । ४' इति भविष्यति लट् । पक्षे 'पुरि लुङ् चास्मे ३ । २ । १२२' इति भूते लट् । पक्षे 'यसु प्रयत्ने' भावे चिण् ॥ १५५ ॥

**पत्यौ तया वृतेऽन्यस्मिन्यदर्थं गतवानसि ।**
**भवतः कोऽपरोऽधस्तादक्षमस्य वृथारुषः ॥१५६॥**

यमः कलिमाह—

पत्याविति ॥ हे कले, त्वं यदर्थं यस्या निमित्तेन गतवान्नामनयुक्तोऽसि यां वरीतुमेव गच्छसि तया पूर्वमेवान्यस्मिन्पत्यौ वृते स्वभर्तृत्वेनाङ्गीकृते सति भवतः कोपस्य रोधो निवारणं स्तान्नवतु । यतोऽक्षमस्यासमर्थस्य अत एव—वृथा रुट् कोपो यस्य । तस्मादिदानीं कोपो रोद्धव्यः, न कार्य इत्यर्थः । नलद्वेषे कारणाभावाद्वा निष्कारणरोषस्य । यस्मादसहनस्यासमर्थस्य वा रुषो वृथा कोपा निष्फलाः, तस्मात्कोपो निवार्य इति वा ॥

कलिरेतदेव यममाह—हे यम, यां वरीतुं गतवानसि तया नले पत्यौ वृते भवतः सकाशादन्योऽधस्तादधरो हीनः कः, अपि तु त्वमेव । त्वत्सकाशादन्योऽधो हीनः कः स्यात्, अपि तु—त्वमेव हीन इति वा । अपरोऽर्थात्त्वदन्यो भवमुत्पत्तिं तस्यत्युपक्षयं प्रापयतीति भवतो निरर्थकजन्मा, अत एव—अधो हीनः कः स्यात्, अपि तु—त्वमेव हीन इति वा । संबुद्ध्यन्तं वा निरर्थकजन्मन्नित्यर्थः ।[1] अक्षमस्य भूस्पर्शरहितस्य देवस्य रुषो वृथा । अस्मादृशानामेव रोषाः सफलाः, न तु भवादृशानामित्यर्थ इति वा । अक्षमासहनासमर्थ यम वृथा निष्कारणमस्मान्प्रति रुषः कोपान् स्य मा कुर्वित्यर्थ इति वा । यस्यै यदर्थं 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६' इति समासः । गतवान्मतुप् । पक्षे भूते क्तवतुः । भवतः पष्ठी पञ्चमी च दिग्योगे । पक्षे प्रथमा 'अधातोः' इति प्रतिषेधात् 'अत्वसन्तस्य चाधातोः ६।४।१४' इति न दीर्घः । अधस्तादिति. दिक्शब्दत्वादधरशब्दादस्तातिः,' अस्ताति च ५।३।४०' इत्यधरस्याधादेशः । अध इति, तसादेव 'पूर्वाधराणामसिपुरधवश्चैषाम् ५।३।३८' इत्यसिरधरस्याधादेशश्च । स्येति 'षोऽन्तकर्मणि' ॥ १५६ ॥

[1] अत्र श्लेषः ।

**यासि स्मरञ्जयन्कान्त्या योजनौघं महाऽर्वता ।**
**समूढस्तं वृतेऽन्यस्मिन्किं न ह्रीस्तेऽत्रपामर ॥**

वरुणः कलिमाह—

यासीति ॥ हे कले, कायकान्त्या स्मरं जयान्विरुद्धलक्षणयाऽतिकुरूपस्त्वं महान्तोऽर्वन्तोऽश्वा यस्मिन् रथं तेन रथेन कृत्वा योजनौघं चतुःक्रोशरूपयोजनसमूहमतिदूरमिदानीमपि यासि स त्वं मूढो मूर्खः । यस्मात्—हे पामर नीच, भैम्याऽन्यस्मिन्नले वृते सति अत्रास्मिन्नर्थे वर्तमानस्य ते तव ह्रीः किं न ? अपि तु—भविष्यत्येव । भाविनीं वर्तमानां वा लज्जामवगणय्यापि गच्छसि, तस्मान्मूर्ख एवेत्यर्थः । सेनापुरःसरमतिगौरं कामं कज्जलतुल्यया स्वकायकान्त्या पराभावुकः । तथा—जनौघं स्वसेनासमूहमपि पराभावुकः प्रसरन्त्या श्यामकायकान्त्या सर्वसेनामग्रेसरं स्मरं च श्यामीकुर्वन्नीतिकुरूपः एवंभूतो रथेन समूढः सम्यग्वृतो यस्त्वं तयाऽन्यस्मिन्वृते सत्यपि यासि । अर्थात्स्वयंवरम् । तस्य तेऽत्रार्थे स्वयंवरे वा ह्रीः किं न भवेत् ? अपि तु—भवेदेवेति वा ॥

एतदेव कलिर्वरुणमाह—हे अमर देव वरुण ? कान्त्या दिव्यदेहदीप्त्या योजनौघं दूरं देशं रञ्जयन्दीप्तं कुर्वन् । जनौघं स्वयंवरस्थलोकसमूहं वा रञ्जयन्त्याश्चर्यदिव्यरूपदर्शनान्नलाकारधारणाद्वात्मनि सानुरागं कुर्वन्नतिजवनहययुतेन विमानेन महता श्यावकर्णादिनाऽर्वता हयेन वा समूढस्तमारूढो यस्त्वं यासि स्म स्वयंवरमयासीः, तस्य तवान्यस्मिंस्तया त्वत्समक्षं वृते ह्रीः किमिति न भवति । अत्रप निर्लज्जेति धिक्कारः । अहं तदा नाथं त्वं तु गतोऽपि न वृत इत्यपमानाल्लज्जया भवितुं युक्तम् । परं सा न जायत इति चित्रम् । अत एव चात्रपत्वमित्यर्थः । अत्रपः सन्न म्रियसे इत्यमरः । अन्योऽप्येवमनादरे कृते लज्जया म्रियते, त्वं तु निर्लज्जो न म्रियस इति चित्रमित्यर्थ इति वा । अत्रपया लज्जाभावेनामरेत्येकं पदं वा । त्रपायां सत्यामप्यमरेति वा । अत्रपया लज्जाभावेनामं रोगं पीडामस्मादृशां रासि ददासीत्यत्रपामर । तव निर्लज्जत्वेन वयमतिदुःखिनो भवाम इत्यर्थ इति वा । एते चत्वारोऽपि श्लोका यथाक्रममिन्द्रादिदेववचनत्वेन ज्ञेयाः कलिकलहस्तु सर्वत्रानुस्यूतः ।[2]

[2] अत्रापि श्लेषः ।

तत्रापि पूर्वं देववचः, पश्चात्कलिवचः । महार्वता 'अर्व-णस्त्रसावनञः ६ । ४ । १२७' इति त्रन्तादेशः, 'आन्महतः समानाधिकरणजातीययोः ६ । ३।४६' इत्याकारः । यासि स्मेति पक्षे 'लट् स्मे ३।२।११८' इति भूते लट् ॥ १५७ ॥

नलं प्रत्यनपेतार्त्तिं तार्तीयीकतुरीययोः ।
युगयोर्युगलं बुद्ध्वा दिवि देवा धियं दधुः १५८

नलमिति ॥ देवा इन्द्रादयस्तार्तीयीकतुरीययोस्तृतीयचतुर्थयोर्युगयोर्द्वापरस्य कलेश्च युगलं द्वयं नलं प्रत्युद्दिश्यानपेतार्त्यनपगतव्यथं 'सर्वथा नलः पीडनीयः' इति नलेऽनिवृत्तापकारवाञ्छं बुद्ध्वा दिवि धियं दधुः। 'युगद्वयमस्मद्वचनं न शृणोति इतः परं यत्किंचिद्भवतु, किमस्माकम्' इति विचार्य स्वर्गं गन्तुमीषुरित्यर्थः । तार्तीयीकः पूर्ववत् । तुरीयः 'चतुरश्छयतावाद्यक्षरलोपश्च' इति छश्च लोपश्चेति ॥ १५८ ॥

द्वापरैकपरीवारः कलिर्मत्सरमूर्च्छितः ।
नलनिग्राहिणीं यात्रां जग्राह ग्रहिलः किल॥

द्वापरैकेति ॥ कामादिसैन्यं परावर्त्य द्वापर एवैकः परीवारः सहायो यस्य । तथा—मत्सरेण नलशुभद्वेषेण मूर्छितो विनष्ट इव, अतिमत्सरेण प्रवृद्धो वा । तथा—ग्रहिलो निवारणस्यानाकर्णनादाग्रहवान्कलिरवश्यं नलं निग्रहीष्यामीत्येवंरूपां नलनिग्राहिणीं यात्रां जग्राह निपधान्प्रतस्थ इत्यर्थः । किल यस्मात्—ग्रहिलः, तस्मात्प्रतस्थे । उपहासे वा । एकः परीवारो यस्येति विग्रह्य द्वापरेणैकपरीवार इति समासः । परीवारः 'उपसर्गस्य घञ्यमनुष्ये बहुलम् ६।३।१२२' इति दीर्घत्वम् । निग्राहिणीमावश्यके णिनिः ॥ १५९ ॥

नलेष्टापूर्तसम्पूर्तेर्दूरं दुर्गानमुं प्रति ।
निषधान्निषधान्गन्तुं विघ्नः सञ्जघटे घनः१६०

नलेति ॥ नलस्य इष्टापूर्तानां यागतडागादिधर्माणां संपूर्तेः संपूर्णत्वाद्धेतोर्नितरां धर्मबाहुल्यात्पापरूपं प्रस्थितममुं प्रत्यनु दूरं दुर्गान्दुर्गमानेनेन प्रवेष्टुमशक्यान्निषधान् गन्तुं गमनायामुं निषेधन्वारयन्घनो महान्निरन्तरश्च विघ्नो वक्ष्यमाणप्रकारेण सञ्जघटे संजज्ञे । धर्मबाहुल्यं दृष्ट्वा सहसा तान्प्रवेष्टुं शङ्कित इत्यर्थः । अथ च—घनो मेघो जलपूर्तेर्दुर्गमं देशं गन्तुं विघ्नरूपो भवन्निषेधति । इष्टं च पूर्तं चेति द्वन्द्वे 'अन्येषामपि दृश्यते' ६।३।१३७' इति दीर्घः ॥ १६० ॥

मण्डलं निषधेन्द्रस्य चन्द्रस्येवामलं कलिः ।
प्राप म्लापयितुं पापः स्वर्भानुरिव संग्रहात्१६१

मण्डलमिति ॥ पापः कलिः, पापग्रहमध्ये गणितत्वात्पापः स्वर्भानुरिवामलं निष्पापं निषधेन्द्रस्य मण्डलं राष्ट्रम्, अमलं परिपूर्णप्रकाशं चन्द्रस्य मण्डलं बिम्बमिव सम्यग्ग्रहाद्धठाद् ग्रहणयोगवशाच्च म्लापयितुं विनाशयितुं ग्रसितुं च प्राप ॥ १६१ ॥

कियताऽपि च कालेन कालः कलिरुपेयिवान्।
भैमीभर्तुरहंमानी राजधानीं महीभुजः ॥१६२॥

कियतेति ॥ कालो युगलक्षणः समयरूपः । अथ च—पापरूपत्वाच्छ्यामवर्णः । अथ च—दारुणत्वात्कृतान्ततुल्यः । तथा—अहंमानी नलपीडनेऽहंकारवान्कलिः कियताऽपि भूयसा कालेन भैमीभर्तुर्महीभुजो नलस्य राजधानीं चोपेयिवान्प्राप्तवान्। पूर्वं देशं प्राविशत्, इदानीं तु राजधानीमिति वार्थः । भूमीभैमीत्याजने कलेरभिनिवेशाभिप्रायो विशेषणद्वयेन सूच्यते । कियताऽल्पीयसेति वा । अहमिति मननमहंमानः, सोऽस्याऽस्तीति विग्रहे 'अत इनिठनौ५।२।११५'इति इनिः । सर्वकार्येष्वहमेवेति मन्यते । तच्छील इति विग्रहे 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति णिनिर्वा ॥ १६२ ॥

वेदानुद्धरतां तत्र मुखादाकर्णयन्पदम् ।
न प्रसारयितुं कालः कलिः पदमपारयत् १६३

इदानीं पुरप्रवेशविघ्नानाह—

वेदानिति ॥ तत्र पुरे वेदानृगादीनुद्धरतां गुणनिकां कुर्वतां श्रोत्रियाणां मुखात्पदं पदकारकल्पितं संहिताविभागरूपं पदसंज्ञमाकर्णयञ्शृण्वन्कालः समयरूपः, अथ च—पापरूपः कलिः पदमेकमपि चरणन्यासं प्रसारयितुं नापारयत् । पापरूपत्वादित्यर्थः । एतेन नलपुरस्य धर्मपूर्णत्वमुक्तम् । वेदान्, शतृयोगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः ॥ १६३ ॥

---

१ अत्रापि श्लेषः । २ अत्र परिकरः, अनुप्रासश्च । १ अत्रानुप्रासः । २ चन्द्रस्येवेत्युपमा, स्वर्भानुरिवेत्युपमा । ३ अत्रानुप्रासः । ४ अत्रानुप्रासः ।

श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमम् ।
क्रमः सङ्कुचितस्तस्य पुरे दूरमवर्तत॥१६४॥

श्रुतीति ॥ तत्र पुरे श्रुतिपाठका वेदाध्यापयितारस्तेषां वक्त्रेभ्यः सकाशात्क्रमं पूर्वपदपरित्यागेनोत्तरपदग्रहणादिकं क्रमसंज्ञं ग्रन्थमाकर्णयतः शृण्वतस्तस्य कलेः क्रमश्चरणो गतिर्वा दूरं नितरां संकुचितोऽवर्तत । क्रमाकर्णनाद्भयेन पापः पदमपि पुरश्चलितुमशक्तस्ततो देशाद् द्रुतं न्यवृतदित्यर्थः ॥ १६४ ॥

तावद्गतिर्धृताटोपा पादयोस्तेन संहिता ।
न वेदपाठिकण्ठेभ्यो यावदश्रावि संहिता १६५

तावदिति ॥ तेन कलिना वेदपाठिनां कण्ठेभ्यो लक्षणया मुखेभ्य इत्यर्थः । यावत्संहिता पदक्रमरूपावस्थाद्वयविलक्षणा ऋगादिरूपा नाश्रावि नाकर्णिता, तावत्कालं तावद्देशपर्यन्तं च प्रतिबन्धराहित्याद्धृताटोपा धृतसंरम्भा सत्वरा पादयोर्गतिः संहिता संयोजिता । यावत्कालं यावति च देशे संहिता नाकर्णिता, तावत्कालं तावद्देशपर्यन्तं च प्रतिबन्धराहित्याच्छीघ्रगतिरभूत् । यदा यास्मिंश्च देशे सा श्रुता तदैव तस्य गतिभङ्गोऽभूदित्यर्थः । यावत्संहिताऽश्रावि, तावत्पदयोः सत्वरा गतिर्न योजिता, अपि तु तावदेव योजिता संहिताश्रवणपर्यन्तमेव सत्वरगतिः सोऽभूत्, नानन्तरमित्यर्थ इति वा ॥ १६५ ॥

तस्य होमाज्यगन्धेन नासा नाशमिवागमत् ।
तथाऽतत दृशौ नासौ क्रतुधूमकदर्थिते॥१६६॥

तस्येति ॥ तस्य नासा अग्निहोत्रादिहोमाज्यं होमसम्बन्धि घृतं तस्य गन्धेन परिमलेन हेतुना नाशमिव मरणवेदनामिवागमदन्वभूदित्युत्प्रेक्षा । इवशब्द एवकारार्थो वा । तथा तेनैव प्रकारेणासौ कलिः क्रतुधूमेन कदर्थिते पीडिते दृशौ नेत्रे अपि नातत न प्रसारितवान्, किंचिन्न ददर्शेत्यर्थः । आज्यगन्धक्रतुधूमसंबन्धमात्रेण विव्यथ इत्यर्थः । अततेति तनोतेर्लुङि थिंचि 'तनादिभ्यस्तथासोः २ । ४ । ७९ ' इति पाक्षिके सिच्लोपे तकारस्य झलादिङित्त्वाद् 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६ । ४ । ३७ ' इत्यनुनासिकलोपः ॥ १६६ ॥

अतिथीनां पदाम्भोभिरिमं प्रत्यातिपिच्छिले ।
अङ्गणे गृहिणां तत्र खलेनानेन चस्खले१६७॥

अतिथीनामिति ॥ तत्र पुरेऽनेन खलेन कलिना गृहिणामङ्गणे चस्खले । यस्मादतिथीनां पदाम्भोभिश्चरणक्षालनादेकैरिमं पापरूपं कलिं प्रत्युद्दिश्याऽतिपिच्छिलेऽतितरां कर्दमयुक्ते । एवंविधमतिपवित्रमङ्गणं प्रवेष्टुं नाशकदित्यर्थः । अन्योऽपि पिच्छिले देशे पतति ॥ १६७ ॥

पुटपाकमसौ प्राप क्रतुशुष्ममहोष्मभिः ।
तत्प्रत्यङ्गमिवाकर्तिं पूर्तोर्मिव्यजनानिलैः १६८

पुटेति ॥ असौ कलिः क्रतुशुष्मा यागसंबन्धी वह्निस्तस्य महोष्मभिः प्रकृष्टतापैः कृत्वा पुटाभ्यां पुटयोर्वा पाकमुभयपार्श्वयोः पात्रादिसान्तरमग्निसंयोगमिव प्राप । प्रतिगृहं यागबाहुल्याद्वामदक्षिणपार्श्वयोर्वह्नितापैर्नितरां पीडामन्वभूदित्यर्थः । तथा—पूर्तानां धार्मिकनिर्मितवापीकूपतडागादीनामूर्मयस्तरङ्गास्तद्रूपाणि व्यजनाति तेषामनिलैर्वायुभिस्तस्य प्रत्यङ्गं सर्वाङ्गमकर्तीव छिन्नमिवाभूदित्युत्प्रेक्षा । प्रत्यवयवकर्तनेन च पीडातिशयाद्वाप्यादितरङ्गवायुस्पर्शमात्रेण नितरां व्यथितोऽभूदित्यर्थः । 'वर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः ॥ १६८ ॥

पितॄणां तर्पणे वर्णैः कीर्णाद्वेश्मनि वेश्मनि ।
कालादिव तिलात्कालाद्दूरमत्रसदत्र सः॥१६९॥

पितॄणामिति ॥ अत्र पुरे वेश्मनि वेश्मनि प्रतिगृहं वर्णैः ब्राह्मणादिचतुर्वर्णैः पितॄणां तर्पणे जलसमर्पणे विषये कीर्णात्क्षिप्तात्पितृप्रियात्कालात्कृष्णवर्णात्तिलात्सकाशात्स कलिः कालात्कृतान्तादिव दूरं नितरामत्रसद्भयमाप । 'तर्पणैः' इति पाठे—तर्पयन्तीति तर्पणैरिति वर्णविशेषणम् । तिलादिति जातावेकवचनम् ॥ १६९ ॥

स्नातॄणां तिलकैर्मेने स्वमन्तर्दीर्णमेव सः ।
कृपाणीभूय हृदयं प्रविष्टैरिव तत्र तैः॥ १७०॥

स्नातॄणामिति ॥ स कलिः स्नातॄणां स्नानं कुर्वतां वैदिकानां तैस्तादृशैर्गोपीचन्दनादिरचितैर्ललाटादिस्थानस्थैर्द्वादशभिस्तिलकैः कृपाणीभूय खड्गतामङ्गीकृत्य

१ क्रमेति यमकम् । २ अत्र ठकारानुप्रासः । ३ नाशमिवेत्युत्प्रेक्षा ।

१ अकर्तीवेत्युत्प्रेक्षा । २ अत्र णकाराद्यनुप्रासः, कालादिवेत्युत्प्रेक्षा ।

तस्य कलेर्हृदयं विदार्य प्रविष्टैरिव स्वं स्वकीयमन्तः शरीरमध्यं दीर्णमेव शकलीभूतमेव मेने । कृपाणैर्हि विदारणं भवतीति युक्तम् । खड्गाकारांस्तिलकान्दृष्ट्वा विव्यर्थ इत्यर्थः ॥ १७० ॥

पुमांसं मुमुदे तत्र विदन्मिथ्यावदावदम् ।
स्त्रियं प्रति तथा वीक्ष्य तमथ म्लानवानयम् ॥

पुमांसमिति ॥ तत्र पुरेऽयं पुमांसं मिथ्यावदावदं मृषाभाषिणं विदञ्जानन्स्वमित्रलाभान्मुमुदे । अथ पश्चात्तं नरं स्वस्त्रियं प्रत्युद्दिश्य तथाऽलीकभाषिणं वीक्ष्य ज्ञात्वा मित्रनाशादिव दुःखवशान्म्लानवान्म्लानतां गतः । पत्नीं प्रति क्रीडायामसत्यदोषाभावाद्व्यथितोऽभूदित्यर्थः । 'न नर्मयुक्तं वचनं हिनस्ति स्त्रीपुंसयोः—'इति भारतादौ। विदन् 'विदेः शतुर्वसुः ७ । १ । ३६' इत्यत्र विकल्पानुवृत्तेर्वसोरभावः । एवं'चतुर्दशतयीं विद्यां विदद्भिः—' इत्यत्रापि ज्ञेयम् । वदावदम्, 'चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्' (वा. ) इति द्वित्वमभ्यासस्याक् । म्लानवान् क्तवतोस्तकारस्य 'संयोगादेरातो धातोर्यण्वतः८।२।४३'इति नः॥१७१॥

यज्ञयूपघनां जज्ञौ स पुरं शङ्कुसङ्कुलाम् ।
जनैर्धर्मघनैः कीर्णां व्यालक्रोडीकृतां च ताम्॥

यज्ञेति ॥ स यज्ञयूपैः खादिरौदुम्बरपशुबन्धस्तम्भैर्घनां नितरां व्याप्तां तां पुरं शङ्कुभिस्तीक्ष्णाग्रकीलैः संकुलां व्याप्तामिव जज्ञौ मेने । तथा—धर्मघनैर्जनैः कीर्णां तां पुरं व्यालैः सर्पैर्दुष्टश्वापदैर्वा दुष्टगजैर्वा क्रोडीकृतां सर्वत्र पूर्णां व्यालाः क्रोडे मध्ये यस्यास्तामेतादृशीं कृतामिव मेने । कीलसर्पादिभिर्व्याप्तं स्थानं यथा प्रवेष्टुमशक्यम्, तथा सा पुरी तस्य प्रवेष्टुमशक्या जातेत्यर्थः । 'व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि' इति विश्वः । रेफान्तः पूःशब्दः स्त्रीलिङ्गः ।चः समुच्चयार्थ इवार्थो वा ॥ १७२ ॥

स पार्श्वमशकद्गन्तुं न वराकः पराकिणाम् ।
मासोपवासिनां छायालङ्घने घनमस्खलत्

स इति ॥ वराकः क्वचिदपि स्थानालाभाद्दीनः स कलिः पराकिणां द्वादशरात्रोपवासरूपपराकाख्यकृच्छ्रविशेषव्रतचारिणां पार्श्वं गन्तुं नाशकत् । तथा—मासोपवासिनां छायायाः कायप्रतिच्छायाया अपि लङ्घनेऽतिक्रमणे तस्या अपि समीपे गन्तुं घनं नितरामस्खलत्स्खलत्पदोऽभूत् । तच्छायामपि द्रष्टुं नाशकदित्यर्थः । वराकः 'जल्पभिक्षकुट्टलुण्टवृङः षाकन् ३।२।१५५' इति षाकन् ॥ १७३ ॥

आवाहितां द्विजैस्तत्र गायत्रीमर्कमण्डलात् ।
स संनिदधतीं पश्यन्दृष्टनष्टोऽभवद्भिया १७४॥

आवाहितामिति ॥ तत्र पुरे स द्विजैस्त्रैवर्णिकैः 'आगच्छ वरदे—' इत्यादिमन्त्रैरावाहिताम् अनन्तरमर्कमण्डलाद्भक्त्यातिशयसामर्थ्यात्सूर्यबिम्बान्निर्गत्य दिव्यरूपेण संनिदधतीं तत्समीपमागच्छन्तीं प्रातःसंध्याधिदेवतां गायत्रीं पश्यन्गायत्र्याः सकाशाद्भिया भयेन गायत्र्यैवादौ दृष्टः पश्चात्तदानीमेव नष्टोऽदृश्योऽभवत् । संध्यावन्दनं कुर्वतो द्विजान्दृष्ट्वा गायत्री मां विनाशयिष्यतीति ततः स्थानात्पलाय्य गत इत्यर्थः । 'गायत्री सूर्यबिम्बस्था—' इति ध्यानम् । अर्कमण्डलादावाहितामिति वा । दृष्टनष्टः 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन२ । १ । ४९' इति समासः ॥ १७४ ॥

स गृहे गृहिभिः पूर्णे वने वैखानसैर्घने ।
यत्याधारेऽमरागारे क्वापि न स्थानमानशे१७५

स इति ॥ स गृहिभिर्गृहस्थैः पूर्णे गृहे, तथा—वैखानसैर्वानप्रस्थैर्घने व्याप्ते वने, तथा—यतीनां परमहंसानां संन्यासिनामाधार आश्रयभूते व्याप्तेऽमरागारे । क्वापि कस्मिन्नपीति सर्वत्र योज्यम् । देवालये स्थानं न आनश आश्रयं न प्राप । गृहिभिर्गृहे पूर्णे सतीति सतिसप्तमी वा सर्वत्र ॥ १७५ ॥

क्वापि नापश्यदन्विष्यन्हिंसामात्मप्रियामसौ ।
स्वमित्रं तत्र न प्रापोदपि मूर्खमुखे कलिम् ॥

क्वापीति ॥ असौ कलिस्तत्र पुर आत्मनः प्रियामिष्टां निषिद्धां हिंसाम् । अथ च—स्त्रियम् अन्विष्यन्नपि क्वापि कस्मिन्नपि देशे नापश्यत् । तथा—कलहप्रियत्वान्नामसाम्याच्च स्वस्य मित्रं कलिं कलहं मूर्खाणामपि मुखे संभाविते स्थले न प्राप्नोत् नाप्नोत् । मूर्खा अपि तत्र न

१ अत्राप्यनुप्रासः, प्रविष्टैरिवेत्युत्प्रेक्षा च । २ अत्राप्यनुप्रासः । ३ अत्र धर्मघनैरिति रूपकम् ।

१ अत्रानुप्रासः । २ अमरागार इत्यनुप्रासरूपकपरिकराणां सङ्करः ।

कुलहायन्ते हिंसाकलहयोरभावात्तत्र स्थितिं न लेभ इत्यर्थः । अन्योऽपि यत्र स्वस्त्रीमित्राद्यभावस्तत्र क्षणमपि न तिष्ठतीत्युक्तिः ॥ १७६ ॥

**हिंसागवीं मखे वीक्ष्य रिरंसुर्धावति स्म सः ।**
**सा तु सौम्यवृषासक्ता खरं दूरान्निरास तम् ॥ १७७ ॥**

हिंसेति ॥ मखे गोमेधाख्ये यज्ञे हिंसागवीं हिंसाया गौः हिंसागवी तां हिंसासम्बन्धिनीं गां वीक्ष्य रिरंसुर्हृष्टचित्तः स 'निषिद्धगोहिंसा मत्प्रिया ' इति धावति स्म । सा तु हन्यमाना गौः पुनः सौम्ये सोमदेवताकद्रव्यसाध्ये वृषे धर्मे आसक्ता तत्संबन्धिनी तत्साधिका सती । अभिचारादिदुष्टकर्मराहित्यात्सौम्यो रमणीयः पारलौकिको धर्मस्तत्साधिका वा । खरं पापरूपत्वाद्दुःसहम् । रलयोरभेदात्खलं वा । पापरूपं दूरादेव निरास निराचकार । अधर्मसाधनं गोहिंसादि दृष्ट्वा प्रवृत्तेः पश्चाद्धर्मसाधनमग्नीषोमीयवैदिकपशुहिंसादि दृष्ट्वा मत्प्रिया हिंसा न भवतीति दूरात्परावृत्त इत्यन्वयः । 'मुखे' इति पाठे—हिंसाप्रतिपादिकां गां वाणीं यज्वनां मुखे वीक्ष्य श्रुत्वेति यावत् । रिरंसुरधावत् । सा तु वाणी सौम्यप्रतिपादिका सती तमखरम् 'अग्नीषोमीयं पशुमालभेत ' इत्यादिवाक्याकर्णनमात्रेण दुःखवशान्निस्तेजस्कं दूरान्निरासेति वा । अथ च—कामातुरः सुरतेच्छुः खरो गर्दभो गां वीक्ष्य यद्यपि धावति, तथापि सा रमणीयवृषभानुरक्ता सती विजातीयत्वाद्गर्दभं दूरान्निराचकारेति । मुखे यज्ञप्रारम्भ इति वा । अथ च—गौर्यथा सौम्यं वृषभमनुसरन्ती क्रूरं वृषभं त्यजति । 'सुकृते वृषभे वृषः' इत्यमरः । हिंसागवीति 'गोरतद्धितलुकि ५।४।९२' इति टच् ॥ १७७ ॥

**मौनेन व्रतनिष्ठानां स्वाक्रोशं मन्यते स्म सः ।**
**वन्द्यवन्दारुभिर्जज्ञौ स्वशिरश्च पदाहतम् ॥ १७८ ॥**

मौनेनेति ॥ स कलिर्व्रतनिष्ठानां वाग्यमव्रतिनां संध्यादिजपमौनिनां वा मौनेन वाङ्नियमेन कृत्वा स्वस्यात्मन आक्रोशं गालीप्रदानमेव मन्यते स्म । तथा—वन्द्येषु नमस्कारार्हेषु गुर्वादिषु वन्दारुभिर्नमस्कुर्वद्भिर्नरैः स्वशिरश्च पदाहतं चरणताडितमिव जज्ञावेत् । च इवार्थो वा । वन्दारुः 'शृवन्द्योरारुः (औ.) इति ३।२।१७३' इत्यारुः । 'वन्द्यान्' इति पाठे—तद्योगे ' न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९' इति षष्ठीनिषेधाद्द्वितीया ॥ १७८ ॥

**ऋषीणां स वृसीः पाणौ पश्यन्नाचामतामपः ।**
**मेने घनैरमी हन्तुं शप्तुं मामद्भिरुद्यताः ॥ १७९ ॥**

ऋषीणामिति ॥ स कलिः ऋषीणां पाणौ हस्ते वृसीः कुशासनानि पश्यन् 'अमी ऋषयो घनैर्लोहमुद्गरैर्मां हन्तुमुद्यताः' इति मेने । तथा—आचामतां तेषामेव हस्ते आचमनार्थं गृहीता अपः पश्यन् अमी मामद्भिश्च 'त्वं भस्मसाद्भव' इति शप्तुमुद्यता इति मेने । ततोऽप्यतिभयेनापासरदित्यर्थः । केषांचिद्धस्ते वृसीः, केषांचिद्धस्तेऽपः पश्यन्निति वा । हन्तुमिव, शप्तुमिवेति प्रतीयमानोत्प्रेक्षा । 'स कुशान्' इति पाठे—कुशानपश्च पश्यन्नित्यर्थः । अत्र दैर्घ्यात्कुशा एव घनतुल्याः । आचामतां 'ष्ठिवुक्लमुचमां शिति ७।३। ७५' इति दीर्घः ॥ १७९ ॥

**मौञ्जीधृतो धृताषाढानाशशङ्के स वर्णिनः ।**
**रज्ज्वाऽमी बन्द्धुमायान्ति हन्तुं दण्डेन मां ततः ॥ १८० ॥**

मौञ्जीति ॥ स कलिर्मौञ्जीधृतो मुञ्जतृणमेखलाधारिणः तथा—धृत आषाढः पालाशदण्डो यैस्तान्वर्णिनो ब्रह्मचारिणः एवंभूतानाशशङ्के मेने । अमी पुरुषा रज्ज्वा मां बन्द्धुं ततो बन्धानन्तरं च दण्डेन मां हन्तुमायान्तीति । मौञ्जीधृतो धृताषाढा एते ब्रह्मचारिणो न भवन्ति, किन्तु मां रज्ज्वा बन्द्धुम्, दण्डेन हन्तुमायान्तीत्याशशङ्क इति वा । 'धृताषाढान्—' इति पाठे—एवंभूता ब्रह्मचारिण इति नाशशङ्के, किन्त्वित्युत्तरार्धम् । 'पालाशो दण्ड आषाढः', 'वर्णिनो ब्रह्मचारिणः' इत्यमरः । मौञ्जी मुञ्जाया विकार इत्यर्थे 'अनुदात्तादेश्च ४ । ३ । १४०' इत्यञ् वर्णोऽस्त्येषाम् 'वर्णाद्ब्रह्मचारिणि ५। २ । १३४' इतीनि ॥ १८० ॥

**दृष्ट्वा पुरः पुरोडाशमासीदुत्त्रासदुर्मनाः ।**
**मन्वानः फणिनस्तत्र स मुमोचास्रु च स्रुचः ॥ १८१ ॥**

दृष्ट्वेति ॥ स तत्र पुरि पुरोऽग्रेऽश्वशफमात्रं पुरोडाशमष्टादशकपालादिसंस्कृतं पशुशरीरावयवं दृष्ट्वा उत्त्रा-

१ अत्र मूर्खेत्यत्र मूर्खत्वरूपे हेतौ सत्यपि कलिरूपकार्यानुत्पत्तेर्विशेषोक्तिः ।२ अत्र खरमिवेति प्रतीतेः निदर्शना ।

१ अत्रापि स्वशिर इवेति प्रतीतेर्निदर्शना ।२अत्राऽऽशशङ्क इति भ्रान्तिमान् ।

सेनोत्कृष्टभयेन दुर्मना दुःखित आसीत् । तथा—स्रुचः सर्पफणाकारपुरोभागा वैकङ्कतादीर्जुहूः फणिनीः सर्पिणीर्मेन्वानोऽसु मुमोच । दंशनभिया स्रुवोदेस्त्यर्थः । 'पुरोडाशोऽकारान्तः । 'पुरोडाशभुजामिष्टम्' इति माघे ॥ १८१ ॥

**मुमुदे मदिरादानं विदन्नेष द्विजन्मनः ।**
**दृष्ट्वा सौत्रामणीमिष्टिं तं कुर्वन्तमदूयत १८२॥**

मुमुद इति ॥ एष द्विजन्मनो ब्राह्मणस्य मदिरादानं मदिरास्वीकारं विदञ्जानन्पश्यन् 'अयं महापातकी' इति बुद्ध्या मुमुदे । अनन्तरं च सौत्रामणीमिष्टिमिन्द्रदेवताकं यागं कुर्वन्तं तं द्विजं दृष्ट्वाऽदूयत ।'सौत्रामण्यां सोमग्रहान्सुराग्रहांश्च गृह्णन्ति' इति श्रुतेर्मदिरादानस्य वैधत्वाल्लुब्धाश्रयविनाशादिव विव्यथ इत्यर्थः । सौत्रामणी, देवतार्थे सम्बन्धमात्रे वाऽण् 'अन् ६।४।१३७' इति प्रकृतिभावः ॥ १८२ ॥

**अपश्यद्यावतो वेदविदां ब्रह्माञ्जलीनसौ ।**
**उदडीयन्त तावन्तस्तस्यास्राञ्जलयो हृदः ॥**

अपश्यदिति ॥ असौ वेदविदां यावतो यावत्संख्याकान्बहून्ब्रह्माञ्जलीन्ब्रह्मयज्ञसमये क्रियमाणान्, हस्तस्वरकल्पनार्थं संयोजितान्करपुटान्वा, सूर्योपस्थायिनां गायत्रीमन्त्रजपाञ्जलीन् 'व्रतारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा।संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः॥' इति मनूक्तलक्षणान्करसंपुटानपश्यत्। तावन्तस्तस्य कलेर्हृदः सकाशादस्राञ्जलयो रक्तपूर्णा अञ्जलय उदडीयन्त उत्पतिता निर्गताः । तद्दर्शनमात्रेण नितरां विदीर्णहृदयोऽभूदित्यर्थः । 'तदस्र—' इति पाठ उपेक्ष्यः ॥१८३॥

**स्नातकं घातकं जज्ञे जज्ञौ दान्तं कृतान्तवत् ।**
**वाचंयमस्य दृष्ट्यैव यमस्येव बिभाय सः ॥**

स्नातकमिति ॥ स विद्यास्नातकम्, व्रतस्नातकम्, उभयस्नातकं च स्वस्य घातकं विश्वासघातिनं जज्ञे मेने । तथा—दान्तं तपःक्लेशसहं जितेन्द्रियं नरं कृतान्तवद्यममिव भयहेतुं जज्ञौ ज्ञातवान् । तथा—वाचंयमस्य मौनिनो दृष्ट्यैव दर्शनमात्रेण मौनिकर्तृकस्वकर्मकेण स्वकर्तृकमौनिकर्मकेण वा दर्शनेनैव बिभायात्रसत् । कस्येव यमस्येव । यमकर्तृकस्वकर्मक—स्वकर्तृकयमकर्मकदर्शनेनैव । यमेन दृष्टे, यमे वा दृष्टे, यथा भयं तथा मौनिनि इत्यर्थः । 'स्नातकस्त्वाप्लुतो व्रती' तपःक्लेशसहो दान्तः' इति चामरः । 'गुरवे तु वरं दत्त्वा स्नायाच्च तदनुज्ञया । वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा' इति याज्ञवल्क्यः । स्नातीति स्नातकः । अस्य 'याजकादिभ्यश्च २।२।९' इति याजकादिगणपठितत्वेन आदन्ताद्धातोर्युकं बाधित्वा निपातनात्तुकि साधुत्वमिति बोद्धव्यम् । घातकं हन्तेर्ण्वुलि 'हनस्तोऽचिण्णलोः ७।३।३२' इति तः । जज्ञौ जज्ञ इति जानातेः कर्त्रभिप्रायक्रियाफलविवक्षया 'शेषात्कर्तरि परस्मैपदम्१।३।७८ इति परस्मैपदम् । तद्विवक्षया तु ' अनुपसर्गाज्ज्ञः १।३।७६' इति तङ् । दृष्ट्येति भयहेतुत्वाविवक्षयाऽनपादानत्वम् ॥ १८४ ॥

**स पाखण्डजनान्वेषी प्राप्नुवन्वेदपण्डितान् ।**
**जलार्थीवानलं प्राप्य पापस्तापादपासरत् ॥**

स इति ॥ स पाखण्डजनान्वेषी स्वपक्षीयान्वेदद्रूपकान्विचारयन्सन् वेदेषु पण्डितान्श्रौतस्मार्तकर्मठान्प्राप्नुवन्पश्यंस्तापादतिदुःखाद्धेतोरपासरत्पलायितः । यतः पापः पापरूपः । क इव—अनलं प्राप्य जलार्थीव । तृषितो जलं विचिन्वन्नग्निं प्राप्यौष्ण्याद् दूरं पलायते ॥ १८५ ॥

**तत्र ब्रह्महणं पश्यन्नतिसंतोषमानशे ।**
**निर्वर्ण्य सर्वमेधस्य यज्वानं ज्वरति स्म सः ॥**

तत्रेति॥स तत्र ब्रह्महणं नरं पश्यन्महापातकित्वादात्माश्रयादाति अतितरां सन्तोषमानशे प्राप।अनन्तरं सर्वमेधस्य सर्वमेधाख्यस्य यज्वानं तं प्रोक्षणावदानादिसंस्कारादिकर्मणा निर्वर्ण्य निर्धार्य ज्वराति स्म नितरां संतप्तोऽभूत् । सर्वमेधे हि तत्तज्जातीयैकैकप्राणिहिंसाधिकारात् 'ब्राह्मणो ब्राह्मणमालभेत' इति ब्रह्मवधस्य वैधत्वान्निराश्रयत्वात्संतप्त इत्यर्थः । ब्रह्महणम् 'ब्रह्मभ्रूणवृत्रेषु क्विप्३।२।७१' इति क्विप् । ज्वरतिर्भ्वादिः ॥ १८६ ॥

**यतिहस्तस्थितैस्तस्य राम्भैरारम्भि तर्जना ।**
**दुर्जनस्याजनि क्लिष्टिर्गृहिणां वेदयष्टिभिः ॥**

यतीति ॥ यतीनां संन्यासिनां हस्तस्थितै राम्भैर्वेणुदण्डैस्तस्य कलेस्तर्जना भर्त्सना आरम्भ्यकारि । तथा

१ अत्र स्रुचेति यमकम् । २ अत्रानुप्रासः ।

१ अत्रोत्प्रेक्षा भ्रान्तिमांश्च । २ अत्रानुप्रासः । जलार्थीवेत्युपमा ।

गृहिणां गृहस्थानां वेदैरेव यष्टिभिर्दण्डैर्वेदानां क्रमजटारूपाभिर्वा यष्टिभिस्तस्य दुर्जनस्य क्लिष्टिः क्लेशोऽजनि । राम्भयष्टीर्दृष्ट्वा भीत इत्यर्थः । 'राम्भस्तु वैणवः' इत्यमरः । रम्भो वेणुः 'तस्येदम् ४।२।१२०' इत्यण् । क्लिष्टिः 'तितुत्रतथसिसुसरकसेषु च ७।२।९८' इतीण्निषेधः ॥ १८७ ॥

**मण्डलत्यागमेवैच्छद्वीक्ष्य स्थण्डिलशायिनः ।**
**पवित्रालोकनादेष पवित्रासमविन्दत ॥१८८॥**

मण्डलेति ॥ एष स्थण्डिलशायिनो वेदिकाशयनव्रतचारिणो नरान्वीक्ष्य मण्डलस्य तद्राष्ट्रस्य त्यागमेवैच्छत् । तथा—पवित्राणां यज्ञाद्युपकरणादीनामालोकनात्पवैवेज्ञात्रासस्तमविन्दत प्राप । ततोऽपि महद्भयमापेत्यर्थः । 'अगर्भौ साग्रौ दर्भौ पवित्रम्' इति कात्यायनः । स्थण्डिल एव शेते व्रतवशात्स स्थण्डिलशायी । 'व्रते ३।२।८०' इतीणिः ॥ १८८ ॥

**अपश्यज्जिनमन्विष्यन्नजिनं ब्रह्मचारिणाम् ।**
**क्षपणार्थी सदीक्षस्य स चाक्षपणमैक्षत ॥**

अपश्यदिति॥स जिनं बौद्धविशेषं स्वमित्रमन्विष्यन्ब्रह्मचारिणामजिनं कृष्णमृगचर्मोत्तरासङ्गमपश्यत् । क्षपणेन दिगम्बरेण वेदबाह्येनार्थी प्रयोजनार्थी तमपि गवेषयन्यज्ञदीक्षासहितस्य यज्वनोऽक्षपणं दीक्षाङ्गधर्मपरित्यागाभावमैक्षत । यद्वा—अक्षाभ्यां पाशकाभ्यां पणं क्रीडां पाशकसंबन्धिजयपराजयदेयं राशीकृतं धनं ददर्श । 'राजसूये यजमानोऽक्षैर्दीव्यति' इति श्रुतेर्विहितत्वाद्द्यूतं युक्तम् । वैधं सर्वं दुःखदं स्वस्यामित्रमेव ज्ञातवान्, न तु मित्रमित्यर्थः।पणम् 'नित्यं पणः परिमाणे ३।३।६६' इत्यप् ॥ १८९ ॥

**जपतामक्षमालासु बीजाकर्षणदर्शनात् ।**
**स जीवाकृष्टिकष्टानि विपरीतदृगन्वभूत् १९०॥**

जपतामिति ॥ स जपतां नराणामक्षमालासु पद्माक्षरुद्राक्षादिमणिनिर्मितजपमालिकासु वर्तमानानां बीजानां पद्माक्षादिबीजानां जपगणनार्थमाकर्षणं तस्य दर्शनाद्धेतोर्जीवानां प्राणानामाकृष्टिराकर्षणं तया जातानि कष्टानि दुःखान्यन्वभूत् । यस्माद्विपरीतदृक् विरुद्धदर्शी सर्वहितं धर्ममहितत्वेन जानानस्तादृग्धर्मदर्शनमात्रेण महद्दुःखमन्वभूदित्यर्थः । अथ च—विपरीतदर्शनशीलत्वाद्बीजेत्यत्र व्यञ्जनमात्रव्यत्ययेन, बवयोः सावर्ण्येन च जीवेति भवतीति जीवाकृष्टिकष्टानुभवनं युक्तम् ॥१९०॥

**त्रिसन्ध्यं तत्र विप्राणां स पश्यन्नघमर्षणम् ।**
**वरमैच्छद्दृशोरेव निजयोरपकर्षणम् ॥ १९१ ॥**

त्रिसन्ध्यमिति ॥ स तत्र त्रिसन्ध्यं प्रातर्मध्याह्नसायाह्नरूपं सन्ध्यात्रयमभिव्याप्य विप्राणामघमर्षणम् 'ऋतं च-' इति ऋग्भिर्नासास्पर्शाभिमन्त्रितं चुलुकोदकं तत्प्रक्षेपोदकं वा पश्यन्निजयोर्दृशोरपकर्षणमुन्मूलनमेव वरं श्रेष्ठमित्यैच्छत् । मदीयनेत्रे यदि कोऽप्युदमूलयिष्यत् तर्ह्येतद्दुःखमूलं नाद्रक्ष्यत । तस्मान्नेत्रोन्मूलनमेव वरमिति मेन इत्यर्थः । तदपि दृष्ट्वा दुःखितोऽभूदिति भावः । अघमर्षणदर्शनव्यथा नेत्रापकर्षणव्यथातुल्या । त्रिसन्ध्यमत्यन्तसंयोगे द्वितीया ॥ १९१ ॥

**अद्राक्षीत्तत्र किञ्चिन्न कलिः परिचितं क्वचित् ।**
**भैमीनलव्यलीकाणुप्रश्नकामः परिभ्रमन् १९२॥**

अद्राक्षीदिति ॥ भैमीनलयोर्व्यलीकस्यानृतस्याणुदोषलेशमपि तस्य प्रश्नकामः प्रष्टुं वाञ्छन् । अत एव तत्र पुरे कयकस्वमित्रगवेषणार्थं परिभ्रमन्परितो विचरन्स कलिः क्वचिदपि स्थाने किञ्चिदपि स्वस्य परिचितं जिनक्षपणादिमित्रं नाद्राक्षीत् । नलेन भैम्या वा तत्रत्येन जनेन वा कृतेषु क्वचिदपि केषुचिदपि महापातकोपपातकादिषु मध्ये किञ्चिदपि परिचितपातकं नाद्राक्षीत् । 'त्वया भैमी नलोऽनृत्यलीको वा स्पृष्टः किम्' इति कलिर्यत्पृच्छति । तदेकमपि पापं नास्त्येवेति भाव इति वा ॥ १९२ ॥

**तपःस्वाध्याययज्ञानामकाण्डद्विष्टतापसः ।**
**स्वविद्विषां श्रियं तस्मिन्पश्यन्नुपततापसः ॥**

तप इति ॥ पञ्चाग्निसाधनादि तपः, वेदपाठरूपः स्वाध्यायः, देवतोद्देशेन द्रव्यत्यागो यागो यज्ञः, एषां स्वस्य पापरूपत्वाद्विद्विषां वैरिणां तस्मिन्पुरे श्रियं समृद्धिं बाहुल्यं पश्यन्नकाण्डं निष्कारणमेव द्विष्टास्तापसा येन स कलिरुपततापातिदाहमाप । अतिदुःखितोऽभूदित्यर्थः । अन्योऽपि स्ववैरिलक्ष्मीं पश्यन्नुपतप्यते । यज्ञापेक्षया स्वाध्यायस्याभ्यर्हितत्वात्पूर्वनिपातः ॥१९३॥

१ अत्रानुप्रासः । २ पवित्रेति यमकम्, पवित्रालोकनेन पवितस्त्रासप्राप्तिवचनाद्विषमम्, एतयोरेकाश्रयत्वेन सङ्करश्च । ३ अत्रानुप्रासः ।

१ अत्राप्यनुप्रासः । २ अत्राप्यनुप्रासः ।

**कम्रं तत्रोपनम्राया विश्वस्या वीक्ष्य तुष्टवान् ।**
**स मम्लौ तं विभाव्याथवामदेव्याऽभ्युपासकम्॥**

कम्रमिति ॥ स तत्र पुरे उपनम्राया उपासकस्य समीपमागत्य स्थिताया: स्वजातीयाया गम्याया अगम्याया वा विश्वस्याः सर्वस्याः स्त्रियाः कम्रं कामुकं तां संभुञ्जानं कंचन नरं वीक्ष्य अयं महापातकी ममाश्रयो भविष्यतीति बुद्ध्या तुष्टवान् । अथ पश्चाद्विचारणायां क्रियमाणायां तं कम्रं वामदेवेन मुनिना दृष्टं ब्रह्मसाम 'कयानश्चित्र-' इत्यादि वामदेव्यं नाम साम तस्य ब्रह्मविद्याया अभ्युपासकं विभाव्य मत्वा मम्लौ दुःखितोऽभूत् । 'वामदेव्योपासने सर्वाः स्त्रिय उपसीदन्ति' इति श्रुतिः । 'दृष्टं साम' इत्यर्थे 'वामदेवाड्ड्यड्ड्यौ ४।२।९' इति ड्यः ॥ १९४ ॥

**वैरिणी शुचिता तस्मै न प्रवेशं ददौ भुवि ।**
**न वेदध्वनिरालम्बमम्बरे विततार वा॥१९५॥**

वैरिणीति ॥ शुचिता लोकानां बाह्याभ्यन्तरशुचिता गात्रशुद्धिर्गोमयाद्यनुलेपनजनिता च शुचिता भुवि प्रवेशं तस्मै न ददौ । यस्मादशुचेस्तस्य वैरिणी । नगरमध्ये सर्वेषां जनानां भूमेश्च शुचित्वात्स्थातुं नाशकदित्यर्थः । तथा—वेदध्वनिरम्बरे शब्दाश्रये नगरसंबन्ध्युपरितनाकाशदेशे आलम्बमाश्रयं न विततार । अम्बरस्य वेदध्वन्याश्रयत्वात्तत्रापि स्थातुं नाशकदित्यर्थः। वा समुच्चये। अन्योऽपि वैरिणे स्थानं न ददाति ॥ १९५ ॥

**दर्शस्य दर्शनात्कष्टमग्निष्टोमस्य चानशे ।**
**जुघूर्णे पौर्णमासेक्षीसोमं सोऽमन्यतान्तकम्॥१९६॥**

दर्शस्येति ॥ स दर्शस्याग्निष्टोमस्यामावास्यायागस्य दर्शनात्कष्टं महद्दुःखमानशे प्राप । तथा—पौर्णमासं यागमीक्षते एवंशीलः सन् जुघूर्णे बभ्राम । तद्दर्शनेन मुमूर्च्छेत्यर्थः । सोमयागं त्वन्तकमेवामन्यत । तद्दर्शनान्मरणमेवान्वभूदित्यर्थः । अन्यस्यापि ज्वरादिपीडा, पश्चान्मूर्च्छा, अनन्तरं च मरणं भवेति ॥ १९६ ॥

**तेनादृश्यन्त वीरघ्ना न तु वीरहणो जनाः ।**
**नापश्यत्सोऽभिनिर्मुक्ताञ्जीवन्मुक्तानवैक्षत॥१९७॥**

तेनेति ॥ तेन कलिना वीराञ्शूरान्घ्नन्तीति क्षात्रधर्मजीविनो धार्मिका अदृश्यन्त । वीराञ्श्रेष्ठानाचारवतो घ्नन्तीति वीरहणो जना न दृष्टाः । शूरा एव येऽहन्यन्ते, न तु सदाचाराः । तादृशा महावीरा एव तत्र तेन दृष्टा इत्यर्थः । यद्वा—वीरयते शूरो भवति वीरोऽतितेजस्वी वह्निस्तं घ्नन्त्युपेक्षया नाशयन्तीति वीरहणो नष्टाग्नयस्ते पुनर्न दृष्टाः । सर्वोऽपि गृहस्थः साग्निक एव तत्रेत्यर्थः । तथा—सोऽभिनिर्मुक्तान् येषु सुप्तेषु सूर्योऽस्तमेति तादृशान्सूर्यास्तमयसमये निद्रितानना‌चारांस्तत्र नापश्यत् । किंतु—जीवन्तश्च ते मुक्ताश्च तान्विषयपरित्यागिनो ब्रह्मज्ञानिनोऽवैक्षत । वीरघ्ना वीरहननयोग्या दृष्टाः न तु ये वीरान्हतवन्तस्ते दृष्टाः । वीरमारणमपि तत्र राष्ट्रे न क्रियत इत्यर्थ इति वा । 'सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिर्मुक्ताभ्युदितौ तु यथाक्रमम्' इत्यमरः । वीरघ्नाः 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् इति' मूलविभुजादित्वात्कः ॥ १९७ ॥

**स तुतोषाश्नतो विप्रान्दृष्ट्वा स्पृष्टपरस्परान् ।**
**होमशेषीभवत्सोमभुजस्तान्वीक्ष्य दूनवान् ।**

स इति ॥ स विप्रान्स्पृष्टं परस्परं यैस्तानन्योन्यस्पर्शिनोऽश्नतो भुञ्जानान्दृष्ट्वा तुतोष । उच्छिष्टानां मिथः स्पर्शनिषेधात्तदतिक्रमकारिणः स्वाश्रयत्वेन संभाव्य हृष्ट इत्यर्थः । अनन्तरं होमशेषीभवन्होमावशिष्टसोमस्तं भुञ्जते सोमलताचूर्णं भुञ्जानांस्तान्वीक्ष्य विचार्य दूनवान्व्यथितोऽभूत् । 'न सोमेनोच्छिष्टो भवति' इति श्रुतेः । 'इक्षुदण्डे तिले सोमे नोच्छिष्टं मनुरब्रवीत्' इति स्मृतेश्च सोमभक्षणेऽनुच्छिष्टत्वादन्योन्यस्पर्शेऽपि पापाभावाद्दुःखितोऽभूदित्यर्थः ॥ १९८ ॥

**श्रुत्वा जनं रजोजुष्टं तुष्टिं प्राप्नोज्झटित्यसौ ।**
**तं पश्यन्पावनस्नानावस्थं दुःस्थस्ततोऽभवत् ॥**

श्रुत्वेति ॥ असौ कंचन जनं रजोजुष्टं धूलिमलिनं श्रुत्वा निषिद्धस्त्रीरजःस्पर्शबुद्ध्या खरादिनिषिद्धरजःस्पर्शबुद्ध्या वा दृष्ट्वा स्वाश्रयाशया झटिति शीघ्रं तुष्टिं प्राप्नोत् । ततोऽनन्तरं विचारावसरे पवनसंबन्धि पवित्रं च यद्गोरजःस्नानं तत्र तेन वाऽवस्था स्थितिर्यस्य तत्र वाऽवतिष्ठते तं पश्यन्दुःस्थो दूनोऽभवत् । 'वारुणं तु जलस्नानमापोहिष्ठेति मान्त्रिकम् । वायव्यं गोरजःस्नानमाग्नेयं भस्मनोदितम् । यत्तु सातपवर्षेण

1 अत्राप्यनुप्रासः । 2 अत्र दर्शेति यमकम्, रूपकं च।

1 अत्राप्यनुप्रासः ।

दिव्यं तदिति पञ्चधा' इति मनुः । पावमस्नानस्य धर्म्यत्वाद् दूनोऽभूदित्यर्थः प्राप्नोत् लङ् । 'प्राप्तः' इति च पाठः ॥ १९९ ॥

**अधावत्क्वापि गां वीक्ष्य हन्यमानामयं मुदा ।**
**अतिथिभ्यस्तथा बुद्ध्वा मन्दो मन्दं न्यवर्तत॥**

अधावदिति ॥ अयं क्वापि यज्ञशालायां गृहे वा हन्यमानां गां वीक्ष्य स्वाश्रयाशया मुदाऽधावत् अनन्तरं तु पुनरतां गामतिथिभ्योऽभ्यागतार्थं हन्यमानां बुद्ध्वा मन्दो मूर्खोऽसौ दुःखवशान्मन्दं शनैर्न्यवर्तत परावृत्तः । क्षणमपि तत्र स्थातुमशक्तः सन्नमन्दं शीघ्रं परावृत्त इति वा । 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ' इति स्मृतेः ॥ २०० ॥

**हृष्टवान्स द्विजं दृष्ट्वा नित्यनैमित्तिकत्यजम् ।**
**यजमानं निरूप्यैनं दूरं दीनमुखोऽद्रवत्॥२०१॥**

हृष्टवानिति ॥ स द्विजं नित्यानि संध्यास्नानादीनि नैमित्तिकानि ग्रहणस्नानादीनि त्यजति तमकुर्वाणं दृष्ट्वा हृष्टवान्स्वाश्रयाशया जहर्ष । अनन्तरमेनं यजमानं यागे कृतदीक्षं निरूप्य निश्चित्य निराशत्वाद्दीनमुखः सन् अद्रवत्तस्मात्प्रदेशाद्दूरं पलायांचक्रे । 'दीक्षितो न ददाति न जुहोति' इत्यादिश्रुतेर्नित्यनैमित्तिककर्मत्यागस्य वैधत्वाद्दोषाभावात्ततोऽपि पलायित इत्यर्थः । नैमित्तिकः, आगतार्थे भवार्थे वा ठक् ॥ २०१ ॥

**आननन्द निरीक्ष्यायं पुरे तत्रात्मघातिनम् ।**
**सर्वस्वारस्य यज्वानमेनं दृष्ट्वाऽथ विव्यथे२०२॥**

आननन्देति ॥ अयं तत्र पुर आत्मघातिनं कंचन निरीक्ष्याननन्द । 'सर्वत एवात्मानं गोपायेत् ' इति विध्यतिक्रमात्पापकार्ययं ममाश्रयः स्यादिति बुद्ध्या जहर्षेत्यर्थः । अथ विचारणायां सत्यामिनमात्मघातिनं नाम्ना सर्वस्वारस्य यज्ञस्य यज्वानं यजमानं दृष्ट्वा ज्ञात्वा विव्यथे।आसन्नमरणो ह्यविचिकित्स्यरोगादिस्तत्राधिकारी । 'सोऽन्त्येष्टौ सर्वस्वाराख्ये यज्ञे आत्मानमेव पशुमन्त्रैः संस्कृतं घातयित्वा यज्ञभागमर्पयति' इति श्रुतिः । वैधत्वादात्मघातदोषाभावाद्व्यथित इत्यर्थः । आत्मघातिनम्, 'सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८' इति ताच्छील्ये णिनिः ॥ २०२ ॥

**क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतम् ।**
**जज्ञे यज्ञक्रियामज्ञः स भण्डाकण्डताण्डवम् ॥**

क्रताविति ॥ स महाव्रताख्ये क्रतौ ब्रह्मचारी चेत्वरी च तयो रतं मैथुनं पश्यन्यज्ञक्रियां भण्डानामसत्यभाषणादिव्यापारशीलानामकाण्डताण्डवमसमयोद्धतनृत्तमिव जज्ञे मेने । यतोऽज्ञो मूर्खः । भण्डा यथा बहुजनसमक्षं गुह्यादि प्रकाशयन्ति, तथा—दिवैव बहुजनसमक्षमश्लीलव्यापारकरणाद्यागकर्म भण्डव्यापारतुल्यमिति यज्वानः सर्वेऽप्यसभ्या इति मेन इत्यर्थः । 'महाव्रते ब्रह्मचारिपुंश्चल्योः संप्रवादः' इत्युपनिषत् । एति तच्छीलेत्वरी स्वैरिणी, ' इणनश्जिसर्तिभ्यः–३ । २ । १६३ ' इति करपि तुकि च ' टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४ । १ । १५ ' इति ङीप् ॥२०३॥

**यज्वभार्याश्वमेधाश्वलिङ्गालिङ्गिवराङ्गताम् ।**
**दृष्ट्वाऽऽचष्ट स कर्तारं श्रुतेर्भण्डमपण्डितः २०४**

यज्वेति ॥ स यज्वनो यजमानस्य भार्याया अश्वमेधाख्यस्य यज्ञस्याश्वस्तस्य लिङ्गमालिङ्गत्येवंशीलं वराङ्गं गुह्यं यस्यास्तस्या भावस्तत्ता तां दृष्ट्वा श्रुतेर्वेदस्य कर्तारं भण्डमाचष्टाऽकथयत् । द्वापरस्याग्र इत्यर्थः। उन्मत्तत्वादात्मानं प्रत्येव वा । यतोऽपण्डितः शास्त्रानुसारिबुद्धिरहितः 'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हातव्यानि हेतुभिः । ' इति राजाज्ञावन्निर्विचारं वेदार्थोऽनुष्ठेयः । अश्वमेधप्रकरणे 'अश्वस्य शिश्नं महिष्या उपस्थे निधत्ते' इत्यादिश्रुतेः । 'कर्ता भण्डः' इति श्रुतिकर्तुर्भण्डत्वाभिधानान्मूर्खः ॥ २०४॥

**अथ भीमजया जुष्टं व्यलोकत कलिर्नलम् ।**
**दुष्टदृग्भिर्दुरालोकं प्रभयेव प्रभाप्रभुम्॥२०५॥**

अथेति ॥ अथैवं पुरपरिभ्रमक्रमवशात्सकलनगरे धर्मात्मनामेव दर्शनेन चित्तखेदादनन्तरं कलिर्भीमजया भैम्या जुष्टं प्रीत्या सेवितं नलं व्यलोकत, कमिव—प्रभया संज्ञादेव्या, अथ च—असह्यतेजसा,जुष्टं प्रभाप्रभुं सूर्यमिव । किंभूतमुभयम्—दुष्टा मत्सरादिदोषोपहता दृग् बुद्धिर्येषां तैः पापरूपैर्दुरालोकं पुण्य-

१ अत्र स्वभावोक्तिः । २ अत्रापि स्वभावोक्तिः । ३ अत्रापि स्वभावोक्तिः ।

१ अत्रानुप्रासो रूपकं च । २ अत्राप्यनुप्रासो रूपकभ्रान्तिमत्सङ्करश्च ।

श्लोकत्वात्पतिव्रतया तया च युक्तत्वात्कलिप्रभृतिभिः सुखेन द्रष्टुमशक्यम्, काचकामलादिदोषदृग्भिर्दुर्दर्शं च। प्रकृष्टा भा कायकान्तिर्यस्या इति भैमीविशेषणं च । प्रकृष्टया कायकान्त्या पापिभिर्दुरालोकं नलमिति वा । दुरालोकम् खल्, तद्योगे च 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' २ । ३ । ६९ ' इति षष्ठीनिषेधाद् दुष्टदृग्भिरिति तृतीया ॥ २०५ ॥

**तयोः सौहार्दसान्द्रत्वं पश्यञ्शल्यमिवानशे ।**
**मर्मच्छेदमिवानर्च्छे स तन्नर्मोर्मिभिर्मिथः २०६**

तयोरिति ॥ स तयोर्भैमीनलयोः सौहार्दसान्द्रत्वमन्योन्यानुरागोत्कर्षं पश्यञ्शल्यमिव हृदि नाराचव्यधमिवानशे प्राप । तत्तुल्यदुःखोऽभूदित्यर्थः । तथा-मिथोऽन्योन्यं तयोर्नर्मोर्मिभिः क्रीडाकल्लोलैः प्रीत्यालिङ्गनचुम्बनादिभिरनुभावैः कृत्वा मर्मच्छेदमिव प्राणहरणशरीरावयवकर्तनमिवानर्च्छ प्राप । सौहार्दसान्द्रत्वस्य कारणत्वादालिङ्गनादिनर्मणश्च कार्यत्वान्न पौनरुक्त्याशङ्का। सौहार्दम्, युवादित्वाद्भावेऽणि 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ७।३।१२' इत्युभयपदवृद्धिः ॥ २०६ ॥

**अमर्षादात्मनो दोषात् तयोस्तेजस्वितागुणात् ।**
**स्प्रष्टुं दृशाऽप्यनीशस्तौ तस्माद्प्यचलत्कलिः।**

अमर्षादिति ॥ कलिरमर्षाद्भैमीनलप्रीतिनर्मासहनशीलत्वरूपाद्रोषात्, तथा—आत्मनो महापातकादिरूपाद्दोषाद्धार्मिकाश्रयणाशक्तेः, तथा—तयोर्भैमीनलयोस्तेजस्वितागुणात्कायकान्तिरूपाद् गुणात्सौन्दर्यातिशयात्क्षात्रतेजसश्चाधर्षणीयत्वरूपाद् गुणादित्येवं हेतुत्रयात्तौ भैमीनलौ न परं मनसा किंतु दृशापि नयनरश्मिनापि स्प्रष्टुमनीशोऽसमर्थः । किं पुनर्हस्तादिना, एवंभूतो यतस्तस्मान्नलावासात्प्रासादादपि सकाशात्स कलिरचलन्निर्गतः । एवंविधौ तौ दृष्ट्वा तत्रापि प्रवेष्टुमशक्तस्ततोऽपि प्रस्थित इत्यर्थः । अन्योऽपि मलिनस्तेजस्विनं दृशा वीक्षितुमप्यशक्तस्ततः पलायते ॥ २०७ ॥

**अगच्छदाश्रयान्वेषी नलद्वेषी स निश्वसन्।**
**अभिरामं गृहारामं तस्य रामसमश्रियः २०८**

अगच्छदिति ॥ नलद्वेषी नलद्वेषपरः, अत एव तत्पराभवार्थमाश्रयान्वेषी निवासं मृगयमाणः कुत्रचिदपि तदलाभाद्दुःखादमर्षेण च निश्वसन्स कलिः रामेण श्रीरामेण समा तुल्या श्रीः शोभा संपद्वा यस्य तस्य नलस्याभिरामं वृक्षादिसमृद्धिमत्त्वाद्रमणीयं गृहारामं प्रासादसमीपवर्ति क्रीडावनमगच्छत् । समीपे स्थितौ क्रियमाणायां नलदोषविचारः सुशक इति गृहारामं प्राप्तवानित्यर्थः।श्रीरामसाम्येन नलस्य पावित्र्यं सौन्दर्यं संपदाधिक्यं भाविराज्यपरित्यागश्चेति सूचितम्।तदानीं रामस्य भावित्वेऽपि कल्पापेक्षया भूतत्वात्प्रवाहस्यानादितया वा भूतत्वादुपमा युक्तैवेति ज्ञेयम् ॥ २०८ ॥

**रक्षिलक्षवृतत्वेन बाधनं न तपोधनैः ।**
**मेनेमानी मनाक्तत्र स्वानुकूलं कलिः किल२०९**

रक्षीति॥कलिस्तत्र पुरे रक्षिणां रक्षकाणां लक्षं संघस्तेन यद्वृतत्वं परिवेष्टितत्वं तेन हेतुना प्रवेष्टुमप्यशक्यत्वात्तपोधनैः कृत्वा न बाधनं बाधयतीति बाधनमेवंविधं न भवति तापसानां तत्र प्रवेशाभावात्तापसनिमित्तस्वबाधारहितम्, अत एव—मनाक् ईषत्स्वानुकूलं स्वस्मै हितम्, एवंविधं मेने । विशेषणबलाद्विशेष्याक्षेपात्तमारामं स्वहितं मेन इत्यर्थः । यतो—मानी अभिमानवान् । नलपराभवार्थं तत्रैव निवासवाञ्छां दधारेत्यर्थः । किल प्रसिद्धौ । रक्षिलक्षवृतत्वेनैव बाधकम्, न पुनस्तपोधनैर्बाधकम् । अतस्तत्र पुरे तमाराममेव मनाक् स्वहितं मेन इत्यर्थः । रक्षकबाधने सत्यप्यदृश्यतयापि स्वस्य प्रवेष्टुं शक्यत्वान्न तु तपोधनबाधनमिति मनागित्युक्तम् । एवं संकटे किमित्यवात्सीदित्यत आह—यतो, मानी।अभिमानसाधनाय संकटमपि मानिनः सहन्त इत्यर्थ इति वा। रक्षकवृतत्वेन मुनिकर्तृकं बाधनं मनागपि तत्रारामे नास्तीति तं स्वानुकूलं मेन इति वा ॥ २०९ ॥

**दलपुष्पफलैर्देवद्विजपूजाऽभिसन्धिना ।**
**स नलेनार्जितान्प्राप तत्र नाक्रमितुं द्रुमान्२१०**

दलेति ॥ स कलिस्तत्रोद्यानवने दलैः पत्रैः पुष्पैः फलैश्च कृत्वा देवानां द्विजानामतिथीनां च पूजा तद्विषयेणाभिसंधिनाऽऽशयेन कृत्वा देवद्विजपूजैवाभिसंधिराशयो

---

१ अत्रानुप्रासः, प्रभयेवेत्युपमा च । २ शल्यमिवेत्युपमा । ३ अचलदित्यस्यानीशत्वादिहेतूक्तेः पदार्थहेतुककाव्यलिङ्गं परिकरानुप्राणितम् ।

१ अत्रानुप्रासः, रामसमेत्युपमा । २ अत्राप्यनुप्रासः, रूपकं च ।

यस्यैवंविधेन वा दलादिभिर्देवपूजां कर्तुकामेन नलेनार्जितानारोपितानाम्रादिद्रुमानाक्रमितुमारोढुमाश्रयितुं च न प्राप । तेषां धर्मोपयोगित्वात्, स्वस्य च पापरूपत्वात्तानाश्रयितुं नाशकदित्यर्थः ॥ २१० ॥

**अथ सर्वोद्भिदासत्तिपूरणाय स रोपितम् ।**
**विभीतकं ददर्शैकं कुटं धर्मेऽप्यकर्मठम् २११॥**

अथेति ॥ अथ स कलिर्धर्मे धर्मकार्ये विषयेऽकर्मठमकर्मशूरमपि पत्रादीनां देवाद्यनुपयोगाद्धर्मकार्यानर्हमपि सर्वेषामुद्भिदां वृक्षाणामासत्तेः सांनिध्यस्य पूरणाय वृक्षलतागुल्मादिजातमत्रास्तीति कीर्तिपूर्तिमात्राय तत्रोद्याने नलेनारोपितमेकं सर्ववृक्षासत्तिपूरणस्यैकेनैव कृतत्वादेकसंख्यं विभीतकं कुटं वृक्षं ददर्श । 'अनोकहः कुटः शालः' इत्यमरः । कर्मणि घटत इति 'कर्मणि घटोऽठच् ५।७।३५' । 'कर्मशूरस्तु कर्मठः', उद्भिदस्तरुगुल्माद्याः इति चामरः ॥ २११ ॥

**स तं नैषधसौधस्य निकटं निष्कुटध्वजम् ।**
**वहु मेने निजं तस्मिन्कलिरालम्बनं वने २१२**

स इति ॥ स तस्मिन्वने नैषधसौधस्य निकटं समीपवर्तिनं निष्कुटस्य गृहारामस्य ध्वजं लाञ्छनभूतम्, अथ च—उच्चोच्चतरत्वाद् ध्वजमिव तदग्रस्थित्या नलदर्शनवशात्तदीयदोषविचारोपायभूतं तं विभीतकं निजं स्वीयमालम्बनमाधारं वहु मेने । 'गृहारामास्तु निष्कुटाः' इत्यमरः ॥ २१२ ॥

**निष्पदस्य कलेस्तत्र स्थानदानाद्विभीतकः ।**
**कलिद्रुमः परं नासीदासीत्कल्पद्रुमोऽपि सः ॥**

निष्पदस्येति ॥ तत्र पुरे वने च निष्पदस्याश्रयरहितस्य कलेः स्थानदानात्स्वेनैव तदाधारभूतत्वात्स विभीतकः केवलनिवासभूतत्वात्कलिद्रुमःकलिसंबन्धी द्रुमः परं केवलमासीदिति न किंतु कलिं प्रत्यभिलापपूरणात्कल्पद्रुमोऽप्यासीत् । अन्योऽपि निराश्रयस्याश्रयदानात्कल्पद्रुमत्वेन व्यपदिश्यते । 'भूतावासः कलिद्रुमः' इत्यमरः ॥ २१३ ॥

**ददौ पदेन धर्मस्य स्थातुमेकेन यत्कलिः ।**
**एकः सोऽपि तदा तस्य पदं मन्येऽमिलत्ततः ॥**

पापिनापि कलिना विभीतकः स्थानं प्राप्तमित्यत्र हेतुमुत्प्रेक्षते—

ददाविति ॥ यद्यस्माद्धेतोः कलिः प्रवाहानादितयाऽतीते कलियुगसमये धर्मस्यैकेन चतुर्थांशेन पदेन स्थानं ददौ । ततस्तस्मात्तदा नलराज्यसमये कृतयुगे स विभीतकोऽप्येक एव तस्य कलेः पदं चरणः, अथ च—स्थानम्, अमिलत्संजात इत्यहं मन्ये । 'कृतं कर्म युज्यते' इति न्यायेन कालान्तरे यावद्दत्तं तावदेव तदानीं तेन लब्धमित्यहं मन्य इत्युत्प्रेक्षा । धर्मस्य, सम्बन्धमात्रविवक्षया षष्ठी ॥ २१४ ॥

**उद्भिद्विरचितावासः कपोतादिव तत्र सः ।**
**राज्ञः साग्नेर्द्विजादस्मात्संतापं प्राप(२)दीक्षितात् ॥**

उद्भिदिति ॥ तत्रोद्यान उद्भिदि वृक्षे विभीतके विरचित आवासः स्थितिर्येन स कलिः साग्नेरग्निहोत्रवतो द्विजात्क्षत्रियात् तथा—दीक्षितात्स्वीकृताग्निहोत्रदीक्षादस्माद्राज्ञोऽभिषेकादिगुणयुक्तान्नलात्सकाशात्सम्यक् तापं महाशापनिग्रहं प्राप । 'राज्ञो द्विजात्' इत्येताभ्यां स्वाभाविकं निग्रहे सामर्थ्यं सूचितम् । 'साग्नेर्दीक्षितात्' इत्येताभ्यां च तपोजनितं शापे सामर्थ्यं सूचितम् । एवंविधोऽयं समीपस्थितं मां निश्चयेन शास्यति,शापं च दास्यतीत्यन्तर्भयद्वयं प्रापेत्यर्थः । अग्निहोत्रिणो नलस्य संबन्धिनः कृतयज्ञदीक्षात्तत्सादातिप्रसिद्धाद्द्विजाद्ब्राह्मणाद्गौतमात्पुरोधसः सकाशाद्भयं प्राप । नलाग्निहोत्रपरिचर्यार्थं तत्र वर्तमानात्स्वयमप्यग्निहोत्रादिदीक्षायुक्ताच्च गौतमात्पुरोधसः सकाशाद्भीत इत्यर्थ इति वा । कस्मादिव—कपोतादिव । यथा अग्निसहिताङ्गारभक्षिणः, तथा—ईक्षितात्कपोतनाम्नो द्विजात्पक्षिणः सकाशाद्वृक्षे विरचितावासः काकादिः पक्षी पुरुषो वा वृक्षारूढो वृक्षाधःस्थायी वा भयं प्रापत् पूर्वं कदाचित्, तथेत्युपमा । स यथा प्राप्नोति, तथेत्यर्थः । अग्निः कपोतजठरं प्रविष्टोऽत एव तद्भक्षिता पाषाणकणिकापि जीर्यत इत्यैतिह्यम् । साग्नेरङ्गारभक्षिणः कपोतविशेषो ह्यङ्गारान्भक्षयति । उद्भिदा तृणकाष्ठादिना निर्मितगृहः पुरुषोऽप्युद्गारिरनेनात्स्वोपवेशमात्रेण गृहदाहाद्यनिष्टसूचकाद्गृहोपरि विलोकितात्कपोतात्पक्षिणः, सकाशाद्यथा भयं प्राप्नोति तथाऽसावपि । कपोतो हि गृहं प्रविष्टोऽनिष्टसूचकः । एवमद्भुतकर्मणोऽतिस्थूलाच्च वृक्षादिरोहिणो दृष्टात्कपोतात्तद्वृक्षवासी पक्षी

१ अत्रानुप्रासः, मेन इत्युत्प्रेक्षा, आलम्बनमिति रूपकम् ।

२ अत्राप्यनुप्रासः, मन्य इत्युत्प्रेक्षा च ।

नरो वा स्वस्यापि भक्षणशङ्कया शाखापतनशङ्कया वा यथा बिभेति तयेत्यर्थः । एवं यथामति व्याख्यातव्यम् ॥ २१५ ॥

**बिभीतकमधिष्ठाय तथाभूतेन तिष्ठता ।**
**तेन भीमभुवोऽभीकः स राजर्षिरधर्षि न॥२१६॥**

बिभीतकमिति ॥ बिभीतकमधिष्ठायाश्रित्य तथाभूतेन तिष्ठता तस्या धर्मोपयोगाभावाद्भयराहित्येन स्थितवता, अथ च तादृशनलदर्शनात्पूर्वोक्तप्रकारेण विस्मयता सता स्थितेन कलिना भीमभुवोऽभीकः भैम्याः कामुकः स राजा चासावृषिश्च राजत्वेऽपि धर्मप्रधानत्वान्मुनितुल्यो नलः नाधर्षि न पराभूतः । अपराभवे राजर्षित्वमेव हेतुः ।अथ च—विभीतकतुल्यं तरुमाश्रित्य तिष्ठता, तथा अतिमहता भूतेन भूतत्वं प्राप्तेन केनचित्प्रेतेन पिशाचेन भीमाया भयानकाया भूमे रणभूमे रुद्रभूमेर्वा हेतोरभीको भयरहितो राजर्षिर्धार्मिको न पराभूयत इत्युचितम् । भीमां भूमिमनादृत्य निर्भयः । 'षष्ठी चानादरे २।३।३८' इत्यनादरे षष्ठी ॥ २१६ ॥

**तमालम्बनमासाद्य वैदर्भीनिषधेशयोः ।**
**कलुषं कलिरन्विष्यन्नवात्सीद्वत्सरान्बहून् ॥**

तमिति ॥ कलिः तं विभीतकमालम्बनमाश्रयमासाद्य प्राप्य वैदर्भीनिषधेशयोः कलुषं पापाचरणमन्विष्यन्, गवेषयितुमित्यर्थः । बहून्वत्सरानवात्सीत् । दोषसंस्पर्शनेन विना तयोः पराभवेऽशक्तत्वाद्दोषपरीक्षार्थं बहुकालं तत्रैव स्थित इत्यर्थः । अन्विष्यन्, हेतौ शता । अवात्सीत्, । वसेर्लुङि सिचि 'वदव्रजहलन्तस्याचः ७।२।३' इति वृद्धौ 'सः स्यार्धधातुके ७।४।४९' इति तत्वम् । वत्सरान्, 'कालाध्वनोरत्यन्तसंयोगे २।३।५' इत्यत्यन्तसंयोगे द्वितीया ॥ २१७ ॥

**यथासीत्कानने तत्र विनिद्रकलिका लता ।**
**तथा नलच्छलासक्तिर्विनिद्रकलिकालता ॥**

यथेति ॥ तत्र कानने तस्मिन्नुद्याने यथा येन प्रकारेण विनिद्रकलिका विकसितकोरका लता वल्ली आसीत्, तथा तेन प्रकारेण नलस्य छले आसक्तिरभिनिवेशस्तद्वशाद्विगतनिद्रो जागरूकः सावधानः कलिलक्षणः कालः समयो यत्र तद्भावस्तत्ता सापि वने आसीत् । विकसितकोरकवल्लीसम्बन्धस्तस्योद्यानस्य यथाऽभूत्, तथा सदा जाग्रत्कलिसम्बन्धोऽप्यभूदित्येतावन्मात्रेण श्लेषमात्रेण वौपम्यम् । नलच्छलनार्थं, नलदोषान्वेषणार्थं च जागरूकः स कलिस्तत्रावात्सीदित्यर्थः ॥ २१८ ॥

**दोषं नलस्य जिज्ञासुर्बभ्राम द्वापरः क्षितौ ।**
**अदोषः कोऽपि लोकस्य मुखेऽस्तीति दुराशया॥**

एवं कलेरवस्थानं निरूप्य द्वापरस्यावस्थानमाह—

दोषमिति॥ लोकापवादरूपमभिशस्तिरूपं वा नलस्य दोषं जिज्ञासुर्द्वापर इत्यघटमानया दुराशया क्षितौ बभ्राम । इति किम्—लोकस्य मुखे जनवार्तायामदोषो दोषरहितः कोऽपि नरो नास्ति, सर्वो जनो यं निर्दोषमाह तादृशः पुरुष एव नास्तीति नलस्यापि कंचिद्दोषं कोऽपि वदिष्यतीति । 'न दोषः' इति पाठे—लोकोक्तावल्पोऽपि दोषो नास्ति, अपि तु प्रायेण भविष्यतीति दुराशयेति काक्वा सम्भावनपरत्वेन व्याख्येयम् । दोषं 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः ॥ २१९ ॥

**अमुष्मिन्नारामे सततनिपतद्दोहदतया**
**प्रसूनैरुन्निद्रैरनिशममृतांशुप्रतिभटे ।**
**असौ बद्धालम्बः कलिरजनि कादम्बविहग-**
**च्छदच्छायाभ्यङ्गोचितरुचितयालाञ्छनमृगः ।**

अमुष्मिन्निति ॥ असौ कलिः श्यामपक्षहंसजातीयाः कादम्बविहगाः कलहंसाख्याः पक्षिविशेषास्तेषां छदाः पक्षास्तेषां छायायाः कान्तेरभ्यङ्ग उचिता योग्या तैलाभ्यङ्गेनेव स्वसंस्पर्शमात्रेण स्नैग्ध्यातिशयकारिणी श्यामतरा रुचिः कान्तिर्यस्य तस्य भावस्तत्ता तया कृष्णवर्णतया च चन्द्रलाञ्छनमृगः कलङ्कमृगोऽभूत्।किंभूतः—सततं सदा निपतन्निक्षिप्यमाणो धूपादिर्दोहदो यत्र तस्य भावस्तत्ता तयाऽनिशं सदा उन्निद्रैर्विकासितैः प्रसूनैर्मालत्यादिसितपुष्पैः कृत्वोज्ज्वलत्वादानन्ददायित्वाच्चामृतांशोश्चन्द्रस्य प्रतिभटे प्रतिस्पर्धिनि चन्द्रतुल्येऽमुष्मिन्पूर्वोक्त आरामे नलोद्याने बद्धः कृत आलम्बो वासो येन सः । चन्द्रे हि कलङ्केन भवितव्यम् । तत्स्थाने कलिरेवाभूदिति । निर्दोषे नलोद्याने । एतेन कलिरेव दूषकोऽभूदित्युक्तम् । तत्र न्यवात्सीदित्यर्थः । पुष्पफलानामाकालिकसमृद्ध्ये

१ अत्रानुप्रासः । कपोताद्रिवेत्युपमा । २ अत्रानुप्रासः ।

१ अत्र यमकम् ।

वृक्षेषु वृक्षायुर्वेदोक्तो धूपादिर्दोहदः क्रियते । यथा—चम्पके पिण्याकादिजलक्षेपः, वकुले सुन्दरीगण्डूषजलमदिरासेकः, रक्ताशोके च तरुणीचरणप्रताडनमित्यादि:२०

स्फारे तादृशि वैरसेनिनगरे पुण्यैः प्रजानां घनं
विघ्नं लब्धवतश्चिरादुपनतिस्तस्मिन्किलाभूत्कलेः
एतस्मिन्पुनरन्तरेऽन्तरमितानन्दः स भैमीनला-
वाराद्धुं व्यधितस्मरःश्रुतिशिखावन्दारुचूडं धनुः

स्फार इति ॥ स्फारे विशालतरे तादृशि उक्तप्रकारेण धर्मबहुले स्फारत्वेऽपि सर्वत्र धर्मपूर्णे वैरसेनिर्नलस्तस्य नगरे प्रजानां पुण्यैर्हेतुभिर्घनं भूयांसं विघ्नं लब्धवतः प्राप्तवतो निराश्रयस्य कलेस्तस्मिन्नलोद्याने चिराद्बहुकालं नलदोषगवेषणार्थमुपनतिरवस्थितिः किलाभूत् । किलेति पुराणादौ श्रूयत इत्यर्थः । प्रजानां पुण्यैः स्फारे व्याप्त इति वा हेतुगर्भं विशेषणम् । एतस्मिन्नन्तरेऽवसरे पुनरन्योन्ययोग्यमेलनादन्तर्मनस्यमितानन्दः प्राप्तानिःसीमहर्षः स प्रसिद्धप्रभावः स्मरो भैमीनलावाराद्धुं सेवितुं सुतरां पीडयितुं वा धनुः श्रुतिशिखा कर्णोर्ध्वदेशस्तां वन्दारुः स्पर्शिनी चूडा अग्रभागो यस्यैवंविधमाकर्णपूर्णं व्यधित चकार । भैमीनलौ नगरं प्राप्तौ सुरेषु स्वर्गतेषु कलौ च वनालम्बिनि सतीतरेतरानुरागातिशयेन चिरविरहिणाविव सस्पृहौ स्मराराधनं चक्रतुरिति भावः । अनेनोत्तरसर्गे संभोगारम्भवर्णनरूपा संगतिः सूचिता । कलिकर्तृकपराभवस्य भविष्यत्वान्नायकापकर्षस्यावर्णनीयत्वाच्च स नोक्तः ॥ २२१ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्
यातःसप्तदशः स्वसुःसुसदृशिच्छिन्दप्रशस्तेर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः

श्रीहर्षमिति ॥ एककर्तृकत्वात्स्वसुर्भगिन्याश्छिन्दस्य राजविशेषस्य प्रशस्तेर्वर्णनग्रन्थस्य सुसदृशि तत्तुल्ये तद्भुवि श्रीहर्षरचिते सप्तदशानां पूरणः स्वभावसुन्दरः सर्गः समाप्तः । छिन्दप्रशस्तिरपि ग्रन्थो मया कृत इति सूचितम् । सोदर्याश्च तुल्या भवन्ति । 'छन्दःप्रशस्तेः' इति पाठे—छन्दोबन्धक्रमस्वरूपनिरूपणपरस्य ग्रन्थस्येत्यर्थः । सप्तदश इति 'तस्य पूरणे डट् ५।२।४८' तद्भुवि भाषितपुंस्कम् ॥ २२२ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणविरचिते नैषधीयप्रकाशे सप्तदशः सर्गः ॥

# अष्टादशः सर्गः ।

अथ नलदमयन्त्योर्विलासादि वर्णयितुमुपक्रमते—

सोऽयमित्यमथ भीमनन्दिनीं
दारसारमधिगम्य नैषधः ।
तां तृतीयपुरुषार्थवारिधेः
पारलम्भनतरीमरीरमत् ॥ १ ॥

सोऽयमिति ॥ सर्गसंगतिरुक्तैव । सोऽयमुक्तसौन्दर्यादिगुणप्रभावो नल इत्यमुक्तप्रकारेण त्रैलोक्यनायकसमक्षं दारसारं स्त्रीरत्नभूतां तामिन्द्रादिभिरप्यभिलष्यमाणां भीमनन्दिनीमधिगम्य तृतीयपुरुषार्थवारिधेः कामरूपदुरवगाहजलधेः संबन्धिनीं पारलम्भनतरीं परतीरप्रापणनौकारूपां तां भैमीमरीरमद्रमयामास । तादृश्या विना कामपुरुषार्थपारं कामशास्त्रोक्तनानारतपारं न प्राप्यत इत्यनेन सौन्दर्यातिशयः सूचितः । अन्यापि तरी वारिधेः पारं प्रापयति । 'तारणतरीम्' इत्यपि पाठः । अरीरमत्, रमेर्ण्यन्ताल्लुङि चङि सन्वद्भावादित्वादि ॥ १ ॥

आत्मवित्सह तया दिवानिशं
भोगभागपि न पापमाप सः ।
आहृता हि विषयैकतानता
ज्ञानधौतमनसं न लिम्पति ॥ २ ॥

अनुरागातिशयादहोरात्रं तत्संभोगे दोषमाशङ्क्य परिहरति—

आत्मविदिति ॥ स नलस्तया सह दिवानिशं भोगभाक् सन्नपि दिवामैथुननिषेधातिक्रमजनितं पापं नाप । यतः—आत्मविज्जीवब्रह्माभेदबुद्धिमान् । उक्त-

१ अत्र शिखरिणी छन्दः, अनुप्रासः । २ अत्राग्रिमे च पद्ये शार्दूलविक्रीडितं वृत्तम् ।

१ अत्र सर्गे समाप्तिं यावत्प्रायो रथोद्धता वृत्तम् । २ अत्रानुप्रासो रूपकं च ।

मर्थं युक्त्यन्तरेण द्रढयति—हि यस्मादाहृता कृत्रिमा विषयैकतानता स्रक्चन्दनादिविषयपरता ज्ञानेन परमात्मज्ञानेन धौतं क्षालितं कामक्रोधादिमलिनं मनो यस्य तं पुरुषं न लिम्पति पापसंस्पर्शिनं न करोति । स्वाभाविकी हि विषयपरता पापासङ्गिनी, परमात्मज्ञानवतश्च सा न भवति किंतु भोगात्पूर्वकर्मक्षयार्थमेव सा विषयपरतामङ्गीकरोति । आहार्या विषयपरता ब्रह्मज्ञानिनं पापिनं न करोतीत्यात्मवित्त्व पापं नापेति युक्तमेवोक्तमित्यर्थः । विषयपरताया आहार्यत्वे दोषाभावाद्दिवारात्रं तया सह चिक्रीडेत्यर्थः । दिवानिशम्, अत्यन्तसंयोगे द्वितीया[1] ॥ २ ॥

दिवानिशं भोगे राज्यरक्षणं कथं जातमित्याशङ्क्य सप्तविंशत्या श्लोकैः महाकुलकेनाह—

न्यस्य मन्त्रिषु स राज्यमादरा-
दारराध मदनं प्रियासखः ।
नैकवर्णमणिकोटिकुट्टिमे
हेमभूमिभृति सौधभूधरे ॥ ३ ॥

न्यस्येति ॥ स नलो मन्त्रिषु राज्यं न्यस्य नैकवर्णमणिकोटिकुट्टिमे नानावर्णरत्नसमूहबद्धभूमिके,तथा—हेमभूमिभृति सुवर्णभूमिधारिणि सौधभूधरे प्रासादरूपेऽत्युच्चे पर्वते प्रियासखः सन् मदनमादरादासक्त्या आरराध सिषेवे । प्रियासख इत्यालम्बनविभावः, कामस्य धर्मविषयत्वं च प्रस्तूयते । नैकवर्णेत्यादिविशेषणसामर्थ्याद् भूधरो हेमाद्रिः सौधभुवं धराति । नलप्रासादाकारेण परिणतेऽनेकवर्णमणिकुट्टिमे हेम्नः सुवर्णस्य भूमिभृति पर्वते हेमाद्रौ प्रासादसौन्दर्यमुच्चत्वं च सूचितम् । इत आरभ्य 'तत्र सौध' इति परेणैकोनत्रिंशेन पद्येनान्वयः ॥ ३ ॥

वीरसेनसुतकण्ठभूषणी-
भूतदिव्यमणिपङ्क्तिशक्तिभिः ।
कामनोपनमदर्थतागुणाद्
यस्तृणीकृतसुपर्वपर्वतः ॥ ४ ॥

वीरसेनेति ॥ यः सौधभूधरो वीरसेनसुतस्य नलस्य कण्ठभूषणीभूता दिव्या मणयस्तेषां पङ्क्तिर्यौतकलब्धोत्तमचिन्तामणिमाला तस्याः शक्तिभिरलौकिकसामर्थ्यैः कृत्वा कामनयाऽभिलाषमात्रेणोपनमन्तः संनिहितीभवन्तो नलेनान्येन वा लभ्यमाना इष्टा अर्थाः पदार्था यत्र तद्भावस्तत्ता सैव गुणस्तस्माद्धेतोस्तृणीकृतः सुपर्वणां देवानां पर्वतो मेरुर्येन सः । सर्वार्थदायिचिन्तामणिरत्नस्य मेरावत्र च विद्यमानत्वाद्यो मेरुतुल्य इत्युपमा । अत्र बहूनां चिन्तामणीनां सद्भावात्ततोऽप्याधिक्यं वा[2] ॥ ४ ॥

धूपितं यदुदरान्तरं चिरं
मेचकैरगरुसारदारुभिः ।
जालजालधृतचन्द्रचन्दन-
क्षोदमेदुरसमीरशीतलम् ॥ ५ ॥

धूपितमिति ॥ मेचकैः श्यामलैरगरुसंज्ञकैः सारैः श्रेष्ठैर्दारुभिः काष्ठैश्चिरं यदुदरान्तरं यदीयो गर्भभागः धूपितं वासितम् । यदुदरान्तरधूपार्थं दह्यमानैस्तैरर्पितपरिमलमित्यर्थः । तथा—धूपजसंतापत्याजनाय जालप्रकारेषु जालजालेषु सर्वेषु गवाक्षेषु जालानां वा जालेषु गवाक्षखण्डेषु धृतः स्थापितः चन्द्रचन्दनक्षोदः कर्पूरचन्दनचूर्णं तेन मेदुरः पुष्टस्तत्स्पर्शवशाच्छिशिरतरः परिमलबहुलश्च यः समीरो वायुस्तेन शीतलं शीततरम् । सर्वेऽप्येत उद्दीपनविभावाः जालजालेति प्रकारे द्विरुक्तिः, षष्ठीसमासो वा ॥ ५ ॥

कापि कामशरवृत्तवर्तयो
यं महासुरभितैलदीपिकाः ।
तेनिरे वितिमिरं स्मरस्फुर-
द्दोःप्रतापनिकराङ्कुरश्रियः ॥ ६ ॥

केति ॥ महासुरभि चम्पकादिद्रव्यसुगन्धि तैलं यासु एवंविधा दीपिका यं सौधभूधरं कापि भैमीनलालंकृते देशे वितिमिरं विगतान्धकारं तेनिरे प्रकाशमानगर्भं चक्रुः । किंभूताः——कामशरवृत्ताः कामबाणवर्तुलाः कामशरेण कर्पूरेण धूपविशेषेण वा वृत्ता निर्वृत्ता धूपकर्पूरगर्भा वर्तयस्तन्तुखण्डरचिता दीपाधारभूता दशा यासां ताः ।तथा—स्मरस्य भैमीनलव्यधार्थं स्फुरन्दोःप्रतापनिकरस्तस्याङ्कुराणां प्रथमोद्भेदानामिव श्रीः शोभा यासां ताः । एतादृग्दीपिकादर्शनमात्रेण कामोत्पत्तेस्तुल्यरूपत्वाच्च दीपिकाःकामप्रतापाङ्कुराः।

---

१ अत्रानुप्रासः, आहृता हीत्यादिना प्रागुक्तार्थसमर्थनादर्थान्तरन्यासः । २ अत्राप्यनुप्रासः, वदात्तं च ।

१ अत्रानुप्रासो यमकं च । पर्वपर्व इति रूपकं च ।
२ अत्रानुप्रासः, यमकं च ।

इवेत्युपमोत्प्रेक्षा । राजनिकटस्था दीपाः कर्पूरादिकृत्तवर्तयः क्रियन्ते । 'पुरसर्जाभयालाक्षानखाब्जादिजटागदैः । समैः समधुभिर्धूपो मतः कामशराभिधः' इति कामशरो धूपः ॥ ६ ॥

कुङ्कुमैणमदपङ्कलेपिताः
क्षालिताश्च हिमवालुकाम्बुभिः ।
रेजुरध्वततशैलजस्रजो
यस्य मुग्धमणिकुट्टिमा भुवः ॥ ७ ॥

कुङ्कुमैणेति ॥ यस्य मुग्धानि रमणीयानि मणिकुट्टिमानि यासु ता भुवो रेजुः । किंभूताः—कुङ्कुमं चैणमदः कस्तूरी च तयोः पङ्केन कर्दमेन लेपिताः । तथा—जलमध्ये निक्षेपाद्द्रवीभूतहिमवालुकाम्बुभिः कर्पूरवासितोदकैः क्षालिताश्च । तथा—अध्वनि नलागमनमार्गे तता विस्तारिताः शैलजा हिमवत्समुद्भूताः स्रजो मालत्यादिकुसुमग्रथिता माला यासु । अतिस्नैग्ध्यसौगन्ध्यार्थं पूर्वं कुङ्कुमकस्तूरीलेपः कृतः, अनन्तरं च तत्पङ्कस्पर्शभिया कर्पूरजलैः क्षालनं कृतम्, तेन पङ्को गतोऽधिकं च सौगन्ध्यं जातम्, अनन्तरं च भैमीनलचरणयोर्मृदुतरत्वान्मणिबद्धभूकाठिन्यपरिहारार्थं मृदुतरशैलजप्रक्षेप इति पाठक्रमादर्थक्रमो बलीयानिति पूर्वं कर्पूरोदकैः क्षालिताः पश्चाद्गोमयस्थानीयकुङ्कुमकस्तूरीपङ्केन कृताङ्गोद्वर्तनाः, अनन्तरं च धृतशैलेयमाला धृतसुन्दरमणिखचितमणिभूषणाः सत्यः शुशुभिर इति वा । 'यत्र' इति पाठः । 'सूनं प्रसवपुष्पयोः' इति विश्वः । 'वालुकांशुभिः' इति पाठे—शुभ्रकर्पूरचूर्णैः क्षालितास्छुरिताः कृतरङ्गमालिका इत्यर्थः । अत्र शाब्दोऽपि क्रमो घटते । लेपिताः, ण्यन्तान्निष्ठा ॥ ७ ॥

नैषधाङ्गपरिमर्दमेदुरा-
मोदमार्दवमनोज्ञवर्णया ।
यद्भुवः क्वचन सूनशय्यया-
ऽभाजि भालतिलकप्रगल्भता ॥ ८ ॥

नैषधेति ॥ क्वचन नलनिद्रास्थानदेशे सूनशय्यया पुष्परचितास्तरणेन यस्य सौधभूधरस्य संबन्धिन्या भुवो भूमेर्भालस्य ललाटस्य तिलकस्तस्य प्रगल्भता रमणीयता अभाजि धृता । पुष्पशय्या यद्भूमेर्ललाटतिलक इव रेजे इत्यर्थः। कीदृश्या—नलाङ्गस्य परिमर्देन संस्पर्शेन वरुणस्य वरदानसामर्थ्यान्मेदुरो नितरामधिकीभूत आमोदः सौरभं मार्दवं मनोज्ञः सदैवाम्लानत्वात्सुन्दरो वर्णश्च यस्यास्तया । तिलकोऽपि कस्तूर्यादिनिर्मितत्वात्सुगन्धिः सुवर्णश्च भवति । अथ च—यद्भूसंबन्धिनि क्वचन देशे नलाङ्गसंबन्धेनामोदादियुक्तया पुष्पशय्यातुल्ययाऽतिमृद्व्या भैम्या भालतिलकेन या प्रगल्भता प्रकाशमानता सा अभाजि भञ्जिता । संभोगवशात्तिलकस्य मृष्टत्वादित्यर्थ इति वा । अभाजि, पक्षे 'भञ्जेश्च चिणि ६।४।३३' इति नलोपः ॥ ८ ॥

क्वापि यन्निकटनिष्कुटस्फुट-
त्कोरकप्रकरसौरभोर्मिभिः ।
सान्द्रमाद्रियत भीमनन्दना-
नासिकापुटकुटीकुटुम्बिता ॥ ९ ॥

क्वापीति ॥ क्वापि कस्मिंश्चित्प्रदेशे यस्य सौधस्य निकटे निष्कुटे गृहारामे स्फुटन्तो विकसन्तः कोरकप्रकरा मल्लिकादिकलिकासमूहास्तेषां सौरभोर्मिभिः सौगन्ध्यपरम्पराभिर्भीमनन्दनाया नासिकापुटकुटी नासिकापुटरन्ध्ररूपमल्पगृहं तत्र कुटुम्बिता पुत्रकलत्रादिसद्भावस्थायिता सान्द्रं नितरामाद्रियताङ्गीकृता । अल्पगृहे बहुकुटुम्बो यथा संमर्देन वसति, तथा भैमीनासिकायां तैर्वसितमित्यर्थः । वनोपान्तेषु दत्तदृष्टिर्भैमी सकलपुष्पपरिमलं यत्र प्रत्यहमन्वभूदिति भावः । अथ च—भैमीनासापुटकुट्या कुटुम्बिता सादरं धृतम् । कुटुम्बिनो हि सजातीया भवन्ति । भैमीनासाश्वाससौरभतुल्यता यन्निकटवर्तिवनपुष्पसौरभैर्धृतेत्यर्थः ॥ ९ ॥

ऋद्धसर्वऋतुवृक्षवाटिका-
कीरकृत्तसहकारशीकरैः ।
यज्जुषः स्म कुलमुख्यमाशुगः
घ्राणवातमुपदाभिरश्चति ॥ १० ॥

ऋद्धेति ॥ आशुगो वायुः ऋद्धाः फलपल्लवादिसमृद्धिमन्तः सर्वऋतुवृक्षा वसन्तादिसकलर्तुसंबन्धिन आम्रादयो वृक्षा यस्यां सा, ऋद्धाः सर्वे ऋतवः सर्वे

१ प्रवापनिकरस्य संनिधत्वेनाङ्कुराणां निरूपणाद्व्रतास्य कुशत्वं व्यज्यते । २ अत्रानुप्रासः उदात्तं च ।

१ अनुप्रासः, उदात्तं चापि । २ अत्रानुप्रासः, पुटकुटीति रूपकं च ।

वृक्षाश्च यस्यां वा तस्यां वाटिकायां कीरैः शुकैश्चञ्चुपुटैः कृत्वा कृत्तानि खण्डितानि यानि सहकाराणामाम्रवृक्षाणां पुष्पाणि फलानि वा तेषां शीकरैर्मकरन्दबिन्दुभिर्निर्यासबिन्दुभिर्वोपदाभिस्तद्रूपैरुपहारैः कृत्वा यज्जुषो यत्सौधसेविनो नलस्य भैम्या वा यस्य कस्यापि वा प्राणवातं नासाश्वासरूपं प्राणाख्यं वायुं, यज्जुषो यत्संबन्धी वा वायुरर्थाद्भैमीनलयोरन्यतरस्य वाञ्छति स्मासपूपुजत् । उपहारैरुपतिष्ठते स्मेति वा । यस्मात्—कुलमुख्यं पञ्चवायुमध्ये प्राणस्यादिभूतत्वात्कुलवृद्धम् । कुलवृद्धश्च तदीयैः पूज्यते । आम्रशीकरानानयन्वायुर्यत्सेविनं जनं सुखयति स्मेत्यर्थः । सहकारशीकरैरित्यनेन वायोः शैत्यसौगन्ध्ये, अञ्चतीत्यनेन मान्द्यं च सूचितानि । सर्वेऽऋस्वित्यत्र 'ऋत्यकः ६।१।१२८' इति प्रकृतिभावः । सहकारेत्यत्र पुष्पे फले वा प्रत्ययस्य 'पुष्पमूलेषु बहुलम् ।' इति लुप् । 'फले लुक् ४ । ३ ।१६३' इति वा लुक् । यज्जुष इति क्विबन्तात्षष्ठी, पक्षे 'इगुपधज्ञाप्रीकिरः कः ३।१।१३५' इति कः ॥ १० ॥

कुत्रचित्कनकनिर्मिताखिलः
क्वापि यो विमलरत्नजः किल ।
कुत्रचिद्रचितचित्रशालिकः
क्वापि चास्थिरविधैन्द्रजालिकः ॥११॥

कुत्रेति ॥ यः सौधः कुत्रचित्क्वचित्प्रदेशे कनकेन निर्मितमखिलं मूर्धाधोभागादि यस्यैवंविधः क्वापि विमलै रत्नैर्जातो रचितः । तथा—कुत्रचिद्रचिताश्चित्रशाला उपरितनोत्तमगृहविशेषाः पुत्रिका वा यत्र । रचितेन चित्रेण शालते तच्छीलो वा । क्वापि चास्थिराभिरव्यवस्थिताभिर्विधाभिः प्रकाशान्धकारादिरूपैः प्रकारैः कृत्वा ऐन्द्रजालिकोऽनेकचमत्कारकारी । शालिकेति शालाशब्दात्स्वार्थे संज्ञायर्थे वा कनि 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७ । ३ । ४४ ।' इतीत्वम् । पक्षे—ताच्छील्यणिन्यन्तात्स्वार्थे कन् । ऐन्द्रजालिकः, 'शिल्पम्' ४ । ४ । ५५ ।' इति ठक् । 'विधा विधौ प्रकारे च' इत्यमरः ॥ ११ ॥

चित्रतत्तदनुकार्यविभ्रमा-
धाय्यनेकविधरूपरूपकम् ।
वीक्ष्य यं बहु धुवञ्शिरो जरा-
वातकी विधिरकल्पि शिल्पिराट् ॥१२॥

चित्रेति ॥ यं सौधं वीक्ष्याश्चर्यातिशयाद्बहु वारंवारं शिरः धुवन्कम्पयञ्छिल्पिनामतिचमत्कारिनानावस्तुनिर्माणनिपुणानां राट् राजा श्रेष्ठो विधिर्ब्रह्मा विश्वकर्मा वा जरया वृद्धत्वेन वातकी वातरोग्यकल्पि तर्कितो देवादिभिरिति शेषः । किंभूतम्—चित्र आलेख्ये, चित्राण्याश्चर्यरूपाणि वा तेषां तेषामनुकार्याणामभिनेयानां देवर्षिमनुष्यादीनां विभ्रमं विलासं, विशिष्टां तत्तद्भ्रान्तिं वाऽधायीन्युत्पादयन्त्येवंभूतानि शुक्लनीलपीतादिवर्णवशात्काष्ठपषिणरूप्यस्वर्णादिघटितत्वाद्वाऽनेकविधरूपाणि नानाप्रकारस्वरूपाणि रूपकाणि प्रतिमा यत्र ।चित्रमाश्चर्यं तन्वन्ति विस्तारयन्ति चित्रतन्ति तादृशानीति पूर्ववत् । अचेतनास्वलीकास्वपि प्रतिमासु चेतनत्वादिभ्रमोत्पादिनिर्माणनैपुण्याद्भुतभरकम्पिताशिराः शिल्पिराडपि ब्रह्मा विश्वकर्मा वा किमयं जरया निमित्तेनोद्भूतवाताधिक्यप्रचलितग्रीव इत्युत्प्रेक्षित इत्यर्थः । रमणीयतमोऽयमिति भावः । 'वातकी वातरोगी स्यात्' इत्यमरः । वातकी, मत्वर्थे 'वातातीसाराभ्यां कुक् ५ । २ । ११९ ।' इतीनिः कुक् ॥ १२ ॥

भित्तिगर्भगृहगोपितैर्जनै-
र्यः कृताद्भुतकथादिकौतुकः ।
सूत्रयन्त्रजविशिष्टचेष्टया-
ऽऽश्चर्यसञ्जिबहुशालभञ्जिकः ॥ १३ ॥

भित्तीति ॥ यः सौधो भित्तिगर्भे ये गृहा भित्तिभिराच्छादितान्यदृश्यमानविवराणि गर्भागाराणि तेषु तैर्वा गोपितैरदृश्यत्वेन स्थापितैर्जनैः कृत्वा कृतमद्भुतकथादिकौतुकमाश्चर्यजनकरमणीयगोष्ठीगीतनृत्तवादित्रादिसंबन्धि कौतूहलं येन सः । गर्भगृहस्थानामदृश्यमानत्वाद्भित्तय एव गोष्ठ्यादि कुर्वन्ति चित्रमेतदिति बहिर्वर्तमानानां जनानां कौतूहलं यः करोतीत्यर्थः । तथा सूत्राणां तत्तत्प्रतिमादिसंचारिततन्तूनां यन्त्रान्नियमनादनुपलक्षितस्थानरचनाविशेषात्सूत्ररूपाद्वा यन्त्राज्जातया विशिष्टयाऽद्भुतया चेष्टयाऽन्योन्यचुम्बनालिङ्गनतालवृन्तवालव्यजनादिचालनक्रियया कृत्वाऽऽश्चर्यसञ्जिन्योऽतिचमत्कारकारिण्यो बह्वयः शालभञ्जिकाः सुवर्णगजदन्तादिनिर्मिताः पुत्रिका यत्र सः । गोपितैः, ण्यन्तान्निष्ठा ॥ १३ ॥

१ अत्रानुप्रासो वदात्तं च ।

१ अत्रानुप्रासो यमकं च । २ अत्रानुप्रासः ।

तामसीष्वपि तमीषु भित्तिगै
रत्नरश्मिभिरमन्दचन्द्रिकः ।
यस्तपेऽपि जलयन्त्रपातुका-
सारदूरधुततापतन्द्रिकः ॥ १४ ॥

तामसीष्विति ॥ यः सौधस्तामसीष्वपि तमीषु तमोबहुलकृष्णपक्षरात्रिषु भित्तिगै रत्नरश्मिभिः कुड्यखचितरत्नकिरणैः सुवर्णादिषु प्रतिफलितैर्मणिबद्धभूमिकिरणैर्वाऽमन्दा भूयसी चन्द्रिका ज्योत्स्ना यत्र । तमोलेशस्याप्यभावात् । तथा—तपेऽप्युष्णबहुले ग्रीष्मर्तावपि जलधारासंचारिमण्डपस्तम्भादिरचितजलयन्त्रेभ्यः पातुकैर्निर्गमनशीलैरासारैर्धारासंपातैर्दूरं नितरां धुता निराकृता तापजनिता तन्द्रिका मूर्च्छा निःसंज्ञता येन सः। शीतत्वात्सुखकर इत्यर्थः । तामसी, मत्वर्थीयप्रकरणे 'ज्योत्स्नादिभ्य उपसंख्यानम्' इत्यण् । तन्द्रिका, तन्द्रीशब्दात्स्वार्थे कनि 'केऽणः ७।४।१३' इति ह्रस्वः ॥ १४ ॥

यत्र पुष्पशरशास्त्रकारिका
सारिकाऽध्युषितनागदन्तिका ।
भीमजानिषधसार्वभौमयोः
प्रत्यवैक्षत रते कृताकृते ॥ १५ ॥

यत्रेति ॥ यत्र सौधेऽध्युषितोऽधिष्ठितो नागदन्तः शयनस्थाने गृहावयवभूतगजदन्तनिर्मितः पञ्जरो यया सा । तथा—पुष्पशरस्य कामस्य वात्स्यायनादिप्रणीतं शास्त्रं तस्य कारिकाऽभ्यासबाहुल्यात्कामशास्त्रनिर्माणसमर्थशब्दं करोति एवंभूता सारिका पक्षिणी भीमजानिषधसार्वभौमयोर्भैमीनलयो रते विषये चुम्बनालिङ्गनादीनां कृताकृते विहिताविहिते कर्मभूते प्रत्यवैक्षतानुकारेणानुसंदधे । आलिङ्गनादीनां बहवो भेदाः कामशास्त्रे निरूपिताः । तत्र किंचिदालिङ्गनं कृतम्, किंचिन्न कृतमित्याद्यपश्यदित्यर्थः । अनुवदति स्म च । अनुचकार चेत्यर्थः । शास्त्रे श्लोकरूपाः कारिका भवन्ति । यज्ञादौ ब्रह्मापि कृताकृतावेक्षको भवति । नागदन्तिका, 'शेषाद्विभाषा ५ । ४ । १५४' इति कपि 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ७। ३ । ४४' इतीत्त्वम् ॥ १५ ॥

यत्र मत्तकलविङ्कशीलिताऽ-
श्लीलकेलिपुनरुक्तवत्तयोः ।
क्वापि दृष्टिभिरवापि वापिको-
त्तंसहंसमिथुनस्मरोत्सवः ॥ १६ ॥

यत्रेति ॥ यत्र सौधे मत्तैः कलविङ्कैर्गृहचटकैः शीलितानां मुहुः क्रियमाणानां चुम्बनादिराहित्याजनसमक्षकरणाच्चाश्लीलानां ग्राम्याणां केलीनां सुरतक्रीडानां पुनरुक्तं वर्तते यत्र, तैर्वा कृत्वा पुनरुक्तियुक्तं, यथा तथा क्वापि कस्मिंश्चित्प्रदेशे वापिकाया उत्तंसभूतानि भूषणीभूतानि तत्र वर्तमानानि हंसमिथुनानि तेषां स्मरोत्सवः सुरतक्रीडा तयोर्भैमीनलयोर्दृष्टिभिस्तद्व्यापारैर्वा अवाप्यलम्भि । अदर्शीत्यर्थः । आदौ कलविङ्ककेलिर्दृष्टा, अनन्तरं च हंसकेलिरिति पुनः पुनः सुरतदर्शनात्पुनरुक्तिः । 'रतान्ते श्लथीभूतगात्राणां कामिनां तिर्यगादिसंभोगदर्शनं पुनः कामोद्दीपकं भवति' इति कामशास्त्रात्तिर्यक्संभोगं पश्यतः स्मेति भावः ॥ १६॥

यत्र वैणरववैणवस्वरै
र्हुंकृतैरुपवनीपिकालिनाम् ।
कङ्कणालिकलहैश्च नृत्यतां
कुञ्जितं सुरतकूजितं तयोः ॥ १७ ॥

यत्रेति ॥ यत्र सौधे सम्भोगं कुर्वतोस्तयोः भैमीनलयोः सुरतकूजितं कण्ठमात्रस्थाव्यक्तमधुरस्वररूपं वैणरवैर्वीणाशब्दैः, तथा—वैणवस्वरैर्वेणुसंबन्धिभिर्गीतैः, तथा—उपवनीपिकालिनामारामवर्तिनां कोकिलषट्पदानां हुङ्कृतैः कूजितैः सम्भुञ्जानाभ्यां ताभ्यां नृत्यन्तो यत्र दृश्यन्ते तैश्च तौ न दृश्येते तादृशे देशे नृत्यतां स्त्रीपुरुषाणां कङ्कणादीनां केयूरनूपुरादिभूषणगणानां कलहैरन्योन्योपमर्दोदितशिञ्जितैश्च कुञ्जितं मन्दीकृतम् । आच्छादितमित्यर्थः । नृत्यन्त्यश्च नृत्यन्तश्च 'पुमान्स्त्रिया १ । २ । ६७' इत्येकशेषः । कुञ्जितं 'तत्करोति तदाचष्टे' इति ण्यन्तान्निष्ठा ॥ १७ ॥

सीत्कृतान्यशृणुतां विशङ्कयो-
र्यत्प्रतिष्ठितरतिस्मरार्चयोः ।
जालकैरपवरान्तरेऽपि तौ
त्याजितैः कपटकुड्यतां निशि ॥१८॥

---

१ अत्रानुप्रासः उदात्तं च । २ अत्राप्यनुप्रासः ।

१ अत्र वापीति यमकमनुप्रासश्च । २ अत्राप्यनुप्रासः ।

सीत्कृतानीति ॥ अपवरान्तरे गर्भगृहमध्ये रतिस्मरप्रतिमागृहापेक्षयाऽन्यस्मिन्वा गृहे स्थितावपि तौ भैमीनलौ दिवा जालकैः गवाक्षेष्वपि वातायनरन्ध्रेष्वपीत्यर्थः । भित्तिभ्रमादच्छिद्रगृहनिवासवशादन्यानाकर्णनबुद्ध्या विशङ्कयोः शङ्कारहितयोः ससंभ्रमं कूजनादि कुर्वतोर्यस्मिन्सौधे प्रतिष्ठितयोः पुरोधसा मन्त्रसामर्थ्याच्चैतन्यमवलम्ब्य प्रतिमायां कृताधिष्ठानयोः रतिस्मरयोर्ये अर्चे सुवर्णादिरचितप्रतिमे तयोः सीत्कृतानि नखदन्तजपीडानुभावसूचकानि सीच्छब्दाभिनेयानि शब्दितानि निशि रात्रौ कपटकुड्यतामलीकभित्तिभ्रमं त्याजितैर्जालकैर्गवाक्षैः कृत्वा अशृणुताम्।दिने रजतादिभित्तीनां मणीनां वा भाषा छादितानि जालानि भित्तितुल्यानि भवन्ति, रात्रौ तु रजतादिभित्तीनां तादृशप्रकाशाभःवात्ताभिरेव कपटकुड्यत्वं त्याजितानि जालरूपेणैव प्रतीयन्ते । ततश्च प्रतिष्ठासामर्थ्यात्सचेतनौ सुरतलोलुपौ रतिस्मरावपि गवाक्षेषु दिवा जातभित्तिभ्रमावुभावपि कुड्यभ्रमेणाविचार्यैव विशङ्कौ यत्र सुरतं चक्रतुः, जालमार्गेण शब्दसंचाराच तत्कूजितानि तौ शुश्रुवतुरिति भावः । पुरोधसो मन्त्रप्रभावश्च सूचितः । तण्डुलचूर्णादिमण्डलितं चित्रमयं वस्त्रं कपटकुड्यम् । दिवोष्मप्रवेशभिया गवाक्षेषु चित्रपटा ध्रियन्ते, रात्रौ च पवनागमनार्थमपनीयन्ते, तथा च दिनवद्रात्रावपि कुड्यबुद्ध्या विशङ्कं मणितानि चक्रतुरिति वा । अपवृणोत्याच्छादयतीत्यपवरो गृहगर्भम् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः३ ।१।१३४' इति पचाद्यच् ।'प्रतिकृतिरर्चा पुंसि' इत्याद्यमरः ॥ १८ ॥

कृष्णसारमृगशृङ्गभङ्गुरा
स्वादुरुज्ज्वलरसैकसारिणी ।
नानिशं त्रुटति यन्मुखे पुरा
किन्नरीविकटगीतिझङ्कृतः ॥ १९ ॥

कृष्णेति॥कृष्णो वर्णः सारः श्रेष्ठो यस्य तस्य मृगस्य शृङ्गवद्भङ्गुराऽतिवक्रा बहुभङ्गियुक्ता, तथा—स्वादुः श्रुतिमधुरा, अत एव उज्ज्वलाः प्रकाशमानाः शृङ्गारादयो रसास्तेषामुज्ज्वलस्य शृङ्गाररूपस्यैव वा रसस्य एकाऽद्वितीया मुख्या वा सारिणी कृत्रिमनदी शृङ्गाररसपरिपूर्णेत्यर्थः । एवंभूता गाननिपुणानां किन्नरीणां विकटा षड्जादिसप्तस्वराणामारोहावरोहरीत्या विषमा गीतिर्गानं तस्या झंकृतिर्ध्वनिविशेषः तस्य सौधस्य मुखे पुरोदेशेऽनिशं सर्वदा न त्रुटति कदाचिदपि विच्छिन्ना नाभूत्, भैम्याः सकाशाद्गानकलाशिक्षाहेतोरुच्चतरस्य तस्य सुन्दरे द्वारि आगत्य गन्धर्वकन्या अपि यत्र सर्वदा जगुरिति भावः । वक्त्रे च गानसद्भावाद्यः सर्वदा गायतीवत्युत्प्रेक्षा च मुखशब्देन सूच्यते । अथ च—मृगशृङ्गवद्वक्रगामिनी, तथा—स्वादूदका, तथा—किन्नर्य इव किन्नर्यो भ्रमर्यः कमलबाहुल्यात्तासां श्रेष्ठा गुञ्जनहुंकृतिर्यस्या एवंविधा विकसत्कमलभ्रमरीमञ्जुगुञ्जनयुता निर्मलजला एका कुल्या यस्य सौधस्य पुरोभागे कदाचिद् ग्रीष्मर्तावपि नात्रुटत् । बहुजलैव स्थितेत्यर्थः । एकविंशे सर्गे ( १४४ श्लो० ) 'तुङ्गप्रासादवासात्' इत्यनेन कुल्याया अपि वर्णयिष्यमाणत्वात्प्रकृते सौधवर्णनोपयोगित्वादयमर्थः कविना विवक्षित इति प्रतीयते । 'विकटः सुन्दरे प्रोक्तो विशालविकरालयोः' इति विश्वः । त्रुटति, भूते 'पुरि लुङ् चास्मे ३ । २। १२२ ।' इति लट् ॥ १९ ॥

भित्तिचित्रलिखिताखिलक्रमा
यत्र तस्थुरितिहाससंकथाः ।
पद्मनन्दनसुतारिरंसुता-
ऽमन्दसाहसहसन्मनोभुवः ॥ २० ॥

भित्तीति ॥ यत्र सौधे पद्मनन्दनस्य ब्रह्मणः सुतायां सरस्वत्यां रिरंसुता संभोगाभिलाषस्तद्रूपममन्दं महत्साहसम् अविचार्यकारित्वं तेन हसन्स्वसामर्थ्यदर्पेण सोल्लासो मनोभूर्यासु ताः, ब्रह्मणः सुतारिरंसुतायां भोगोत्पादने विषये तद्रूपे वा महत्साहसं कामस्यैव, तेन पौरुषदर्पेण सोल्लासस्य कामस्य सम्बन्धिन्यो वा इतिहाससंकथाः पुरावृत्ताख्यायिकाः भित्तिषु चित्ररूपेण चित्रकारलिखितोऽखिलः क्रमः परिपाटी यासामेवंभूताः सत्यः तस्थुः । ब्रह्मपराभवादिकामप्रभावाश्चित्ररूपेण यद्भित्तिषु लिखिता वर्तन्ते स्मेत्यर्थः । ब्रह्मणः सुतारिरंसुतादिकं मत्स्यपुराणादेरवगन्तव्यम् ॥ २० ॥

पुष्पकाण्डजयडिण्डिमायितं
यत्र गौतमकलत्रकामिनः ।
पारदारिकविलाससाहसं
देवभर्तुरुदटङ्कि भित्तिषु ॥ २१ ॥

---

१ अत्र शृङ्गभङ्गुरेत्यनुप्रासः,उपमा, झङ्कृतेःसारिणीत्वेन रूपणाद्रूपकं च । २ अत्रानुप्रासः ।

पुष्पेति ॥ यत्र सौधे गौतमकलत्रमहल्यां कामयते कामी तस्य संभुज्जानस्य देवभर्तुरिन्द्रस्य पुष्पकाण्डस्य कामस्य लोकत्रयजये टिण्टिमायितं वाद्यविशेषवदाचरितं पारदारिकस्य परस्त्रीगामिनो विलासवैभवं सुवर्णादिभित्तिषु रचितासु उदटङ्कि टङ्कैरुत्कीर्य लिखितम्। येनेन्द्रोऽपि पराभूतः तादृशस्य महाप्रभावस्य स्मरस्य सेवा युवाभ्यामपि नियतं कार्येति सुवर्णेष्टकचितभित्तिषु कामोद्दीपनार्थमिन्द्रपारदारिकविलासा यत्र टङ्कैर्लिखिता इत्यर्थः। डिण्डिमायितम्, उपमानात्कर्तुः क्यङन्तान्निष्ठा। परदारान्गच्छति पारदारिकः, 'गच्छती परदारादिभ्यष्ठग्वक्तव्यः' इति ठक्। उदटङ्कि, 'टकि बन्धे' इत्यस्मात्कर्मणि चिण् ॥२१॥

उच्चलत्कलरवालिकैतवा-
द्वैजयन्तविजयार्जिता जगत्।
यस्य कीर्तिरवदायति स्म सा
कार्तिकीतिथिनिशीथिनीस्वसा ॥२२॥

उच्चलदिति ॥ उच्चत्वसौन्दर्यादिना वैजयन्ताख्यस्येन्द्रप्रासादस्य विजयेन याऽर्जिता लब्धा सा कार्तिकी कृत्तिकानक्षत्रयुक्ता तिथिः पूर्णिमा तस्या निशीथिनी रात्रिस्तस्याः स्वसा तद्वदत्युज्ज्वला यस्य प्रासादस्य कीर्तिः कान्तिरुच्चलतामुड्डीयमानानां कलरवाणां पारावतानामालिः पङ्क्तिस्तस्याः कैतवाद्व्याजाज्जगदवदायति स्म शोधयति स्म। उज्ज्वलं चकारेत्यर्थः। एते कलरवा न भवन्ति, किंतु शरच्चन्द्रचन्द्रिकातुल्या कीर्तिरेवैतस्येत्यर्थः। 'पारावतः कलरवः' 'स्यात्प्रासादो वैजयन्तः' इति चामरः। दायति, 'दैप् शोधने' इति भ्वादिरवपूर्वः सकर्मकः 'लट् स्मे' इति लट्। कार्तिकी,'नक्षत्रेण युक्तः कालः४।२।३'इत्यणि ङीप्।'अत्र कृत्तिकायुक्तो दिवसः कार्तिक इति भाषितपुंस्कत्वसम्भवेऽपि 'तिथयो द्वयोः' इत्यभिधानात्पुंल्लिङ्गेन तिथिशब्देन समासे स्त्रीलिङ्गस्य समानाधिकरणस्योत्तरपदस्याभावात् 'पुंवत्कर्मधारयजातीयदेशीयेषु ६।३।४२' इति न पुंवत्। ततश्च कार्तिकी चासौ तिथिश्चेति समासः ॥ २२ ॥

१ 'तिथयो द्वयोः' इत्यमराद्यभिधानानुसारं तिथिशब्दस्य नित्यस्त्रीलिङ्गत्वाभावे 'पुंवत्कर्मधारयजातीयदेशीयेषु ६।३।४२' इति समानाधिकरणे नित्यस्त्रीलिङ्ग उत्तरपदे परे 'पुंवत्' इत्याद्यर्थस्वीकारेण पुंवद्भावप्रसक्त्यभावान्न पुंवत्। एवं व्याख्याकारप्रयासो व्यर्थ एवेति। २ अत्रानुप्रासः, कैतवादिति कैतवापह्नुतिः, स्वसेति रूपकोपमयोः सन्देहसङ्करः।

गौरभानुगुरुगेहिनीस्मरो-
द्वृत्तभावमितिवृत्तमाश्रिताः।
रेजिरे यदजिरेऽभिनीतिभि-
र्नाटिका भरतभारतीसुधा ॥ २३ ॥

गौरेति ॥ गौराः शुभ्रा भानवः किरणा यस्येति तस्य गौरभानोश्चन्द्रस्य।'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' इत्यमरः। गुरुगेहिन्यां बृहस्पतिभार्यायां तारायां विषये स्मरजनितो य उद्वृत्तभावो गुरुतल्पगामित्वादाचारत्यागित्वं, चन्द्रतारयोर्विषये स्मरस्योद्वृत्तभावः कामजनितसामर्थ्याविशयस्तल्लक्षणं वा, इतिवृत्तं पुरावृत्तमाश्रिताः प्रतिपादयन्त्यः, तथा—भरतेन मुनिना प्रणीता भारती भरताख्यो नाट्यवेदस्तस्मिन्सुधा अमृतरूपाः। भरतोक्तनाट्यरीत्याऽभिनीयमानाः सत्यः, सुधाप्राया इति यावत्। एवंभूता नाटिका दशरूपकान्तर्गतचतुरङ्कप्रबन्धविशेषा यस्य सौधस्याजिरेऽङ्गणेऽभिनीतिभिः सात्त्विकाङ्गिकवाचिकाहार्यभेदभिन्नैश्चतुर्विधैर्नटाभिनीयमानैरभिनयैः कृत्वा रेजिरे। तयोः स्मरोद्वृत्तभावस्य मितिः सम्यक्परिच्छित्तिः सैव वृत्तं व्यापारोऽतीतं वा प्रमेयं यत्रैवंविधनाटकादिप्रबन्धमाश्रिता इति वा ॥ २३ ॥

शम्भुदारुवनसम्भुजिक्रिया-
माधवव्रजवधूविलासयोः।
गुम्फितैरुशनसा सुभाषितै-
र्यस्य हाटकविटङ्कमङ्कितम् ॥ २४ ॥

शम्भ्विति॥ यस्य सौधस्य हाटकविटङ्कं सुवर्णघटितकपोतपालिका शम्भोर्दारुवने मन्दरकन्दरायां देवदारुवने गौर्या सह दिव्यसहस्रवर्षपर्यन्तं या सुरतक्रीडा, माधवस्य श्रीकृष्णस्य व्रजवधूभिर्गोपिकाभिः सह विलासो रासक्रीडादिः,तयोर्विषये उशनसा शुक्राचार्येण गुम्फितैः श्लोकरूपेण ग्रथितैः सुभाषितैरतिचमत्कारकारिनवीनार्थशब्दविशेषैः करणैः कर्तृभिर्वाऽङ्कितं चिह्नितम्। हरकृष्णकामविलासवर्णककाव्यरचितकाव्यश्लोका कामोद्दीपनार्थं यदीयहाटकविटङ्के टङ्कैरङ्किता इत्यर्थः। 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इत्यमरः। विशेषेण टङ्क्यते बध्यत इति विटङ्कं पक्षिविश्रमार्थं कुड्याद्बहिर्निर्गतं दारु ॥ २४॥

१ अत्रानुप्रासः, जिर इति यमकम्। २ माधवेत्याद्युक्तिः समयभेदासरणमूला।

अह्नि भानुभुवि दाशदारिकां
यच्चरः परिचरन्तमुज्जगौ।
कालदेशविषयासहात्स्मरा-
दुत्सुकं शुकपितामहं शुकः॥ २५॥

अह्नीति॥ यस्मिन्सौधे चरतीति यच्चरः शुकः पक्षी शुकपितामहं पराशरमुज्जगौ तारस्वरं गायति स्म। किंभूतम्—अह्नि दिने भानुभुवि सूर्यपुत्र्यां यमुनायां विषये दाशदारिकां कैवर्तकुमारीं योजनगन्धां परिचरन्तं संभुञ्जानम्। अत एव—यथाक्रमं कालस्य रात्र्यादेरनिषिद्धस्य, देशस्य तीर्थदेवस्थानादिव्यतिरिक्तस्यानिषिद्धस्य निजशयनागारादेः, विषयस्य परदारादिव्यतिरिक्तस्य स्वभार्यालक्षणस्य, असहात्कालादीनसहमानादधैर्यजनकात्स्मराद्धेतोरुत्सुकं कामातिरेकं सोढुमसमर्थमित्यर्थः। पौराणिककथ्यमानभारतादिकथाश्रवणमात्रेण प्राज्ञः शिक्षातिशयादतिमुखरो यद्विहारी कीरस्तादृशीं भारताद्युक्तां कथामुच्चैरनूदितवानिति भावः। अह्नीत्यादिना कामातुरस्य कालाद्यसहनत्वं समर्थितम्। अन्योऽपि साधुरेवंभूतं स्वपितामहमपि निन्दति। 'कैवर्ते दाशधीवरौ' इत्यमरः। यच्चरः, अधिकरणे 'चरेष्टः ३।२।१८'॥२५॥

नीतमेव करलभ्यपारता-
मप्रतीर्य मुनयस्तपोऽर्णवम्।
अप्सरःकुचघटावलम्बनात्
स्थायिनः क्वचन यत्र चित्रगाः॥२६॥

नीतमिति॥ मुनयः परमात्मज्ञानचतुरा ऋषयो यत्र सौधे क्वचन कस्मिन्नपि भित्तिभागे चित्रगाश्चित्रे लिखिता वर्तन्ते। किंभूताः—करलभ्यं पारं परतीरं यस्य तद्भावस्तत्ता तां नीतमेव लक्षणया संनिहितभाविफलत्वात्समाप्तिं प्रापितप्रायमेव। अथ च—संनिहितपरतीरमपि तपोरूपं दुस्तरमर्णवं समुद्रमप्रतीर्यापरिसमाप्यानुत्तीर्य च तपोविघ्नार्थमिन्द्रेण प्रेषितानामप्सरसां रम्भादीनामत्युच्चकठिनकुचलक्षणानां घटानामवलम्बनाद्धारणादाधाराद्धेतोः स्थायिनः स्थातुं शक्ताः। 'कुचमर्दनादिसंभोगकारिण' इत्यर्थः। योऽपि प्रतीर्यमाणं समुद्रं नद्यादिं वा तीरे संनिहितेऽपि श्रान्तिवशादुत्तरीतुमशक्तः स जलमध्य एव घटादिकमवलम्बनमासाद्य चित्रलिखित इव

निश्चलस्तिष्ठति। कुटेति पाठे—'कुटः कोटे घटे गेहे' इति विश्वः॥ २६॥

स्वामिना च वहता च तं मया
स स्मरः सुरतवर्जनाज्जितः।
योऽयमीदृगिति नृत्यते स्म य-
त्केकिना मुरजनिःस्वनैर्घनैः॥ २७॥

स्वामिनेति॥यस्य सौधस्य संबन्धिना केकिना क्रीडामयूरेणेति हेतोर्घनैर्निबिडैर्मुरजनिःस्वनैर्मृदङ्गध्वनिभिः, अथ च—तैरेव मेघैर्नृत्यते स्म। इति किम्—योऽयमीदृग्ब्रह्मादिवशीकारकारी स महाप्रभावः स्मरः स्वामिना कार्तिकेयेन प्रभुणा च तदीयविमानत्वेन तं वहता पृष्ठेन धारयता मया मयूरेण च सुरतवर्जनाज्जित इति। चावन्योन्यसमुच्चये। कुमारस्य नैष्ठिकब्रह्मचारित्वान्मयूराणां च वर्षर्तुकामभाजां नेत्रोपान्तरन्ध्रमार्गेण निर्गच्छतामश्रुमयशुक्रबिन्दूनां मयूरीमुखग्रहणमात्रेण गर्भसंभूतेर्लिङ्गसंघर्षणरूपरतपरित्यागो जयहेतुः। मयूराश्च मेघशब्दभ्रान्त्या मृदङ्गशब्दैर्नृत्यन्ति॥ २७॥

यत्र वीक्ष्य नलभीमसम्भवे
मुह्यतो रतिरतीशयोरपि।
स्पर्धयेव जयतोर्जयाय ते
कामकामरमणीबभूवतुः॥ २८॥

यत्रेति॥ यत्र सौधे संभोगपरे नलभीमसंभवे नलभैम्यौ वीक्ष्य मुह्यतोः सुरताभिलाषिणोः, अथ च—भ्रान्तिं प्राप्नुवतोः तथा—जयतोः सर्वोत्कर्षेण वर्तमानयोः अथ च—नलभैम्यौ स्ववशे कुर्वतोः, रतिरतीशयो रतिकामयोः स्पर्धयेव ईर्ष्ययेव जयाय तौ पराभवितुं ते नलभैम्यौ कामकामरमणीबभूवतुः स्मररती अभूताम्। संभोगयुक्तौ स्त्रीपुंसौ दृष्ट्वाऽन्यावपि स्त्रीपुंसावुद्दीप्तस्मरौ भवत इति तादृशौ भैमीनलौ दृष्ट्वा प्रतिष्ठावशात्तत्र कृतावासौ चेतनौ रतिकामौ संजातसुरतेच्छौ जातौ, तथा—सौन्दर्यातिशयाद्रतेर्नले काम इति, कामस्य च भैम्यां रतिरिति संजातभ्रमौ च जातौ। एवंभूतावतिशयितान्योन्यरागजननाद्वशीकृतभैमीनलौ यत्र मूर्तौ रतिकामावेवाभूतामिति रतिकामयोर्द्वन्द्वद्वयं जातमित्यर्थः। अयमेव च तयोर्जयः। अथ च—स्वसंभोगदर्शनात्तयो-

१ इयमप्युक्तिः पूर्ववत्।

१ अत्र भ्रान्तिमान्, निःस्वनैर्घनैरिति रूपकं च।

रपि संभोगवाञ्छोत्पादनाजयः तज्जयार्थं बुद्धिपूर्वव्यापाराभावात्स्पर्धयेवेत्युत्प्रेक्षा स्पर्धाकारणं तूक्तम्। अथ च—रतिकामसंनिधाने यथा स्त्रीपुंसयोः संभोगवाञ्छासमुदयः, तथाऽनयोरपि रतिकामसंनिधानमेव प्रेमरसातिशयादन्योन्यसंनिधानमात्रेणैव कामसंमोहः प्रादुरासीदिति भावः। नलभैम्यौ दृष्ट्वा मोहं भजतोः अत एव नलभैमीभ्यामावां जितावित्यपि ते जेतव्ये इति स्पर्धयेव जयतोरिति यथाश्रुत एव वा सम्बन्धः। अत्र सर्वत्राल्पाच्तरत्वान्न्यायप्राप्तोऽपि पूर्वनिपातो रतेर्नले कामभ्रमोदयान्नलरतिकामपदानां प्राक्प्रयोगस्य, रतीशस्य भैम्यां रतिभ्रमोदयाद्भीमसंभवारतीशकामरमणीपदानां पश्चात्प्रयोगस्य, औचितीं सूचयतीति ज्ञेयम्। रतिरतीशयोर्विषये स्पर्धयेति केचित्। ते प्रथमाद्विवचनान्तम्। कामकामरमणीबभूवतुरिति च्विः॥ २८॥

तत्र सौधसुरभूधरे तयो-
राविरासुरथ कामकेलयः।
ये महाकविभिरप्यवीक्षिताः
पांसुलाभिरपि ये न शिक्षिताः॥ २९॥

तत्रेति॥ अथ तत्रोक्तगुणे सौधरूपे सुरभूधरे मेरौ तयोस्ते कामकेलय आविरासुः स्पष्टं दिदीपिरे। ते के कामकेलयः—महाकविभिर्व्यासकालिदासादिभिर्निगूढभावदर्शिभिरप्यवीक्षिता न बुद्धिगोचरीकृताः तेषामपि न स्फुरिता इति यावत्। तथा—अनेकनरसंभोगचतुराभिः पांसुलाभिः स्वैरिणीभिरपि ये न शिक्षिता न अभ्यस्ता नानाजारशिक्षोपदेशादपि न ज्ञाताः। एतेनालौकिकाः कामविलासा वर्णयिष्यन्त इति सूचितम्। 'द्रवकेलिपरीहासाः' इति केलिशब्दः पुंलिङ्गोऽपि। इति महाकुलकर्म॥ २९॥

पौरुषं दधति योषिता नले
स्वामिनि श्रिततदीयभावया।
यूनि शैशवमतीर्णया कियत्
प्रापि भीमसुतया न साध्वसम्॥ ३०॥

पौरुषमिति॥ एवंभूतया भीमसुतया एवंभूते नले विषये कियत्किंपरिमाणं साध्वसं भयं न प्रापि, अपि तु बहु भयं प्राप्तम्। अधाष्टर्यं प्रापेत्यर्थः। किंभूते नले—पौरुषं दधति बलिनि। किंभूतया—स्वयं तु—योषिताऽबलया। तथा—स्वामिनि आत्मनः प्रभौ राजनि च। स्वयं तु—श्रितोऽङ्गीकृतस्तदीयभावस्तदीयत्वं यया नलदासीभूतया। तथा—यूनि तरुणे। स्वयं तु—शैशवं बाल्यमतीर्णयाऽनतिक्रान्तया वयःसंधौ वर्तमानया। बलिनः स्वामिनो राज्ञस्तरुणाच्चाबलया दासीभूतया बालया भयं प्राप्यत इति युक्तमिति। अत्र च प्रथमसंभोगे किं वा भावीति ईदृशे नले ईदृश्या तया महद्भयं प्रापीति भावः। सर्वाण्यपि विशेषणानि हेतुगर्भाणि। अथ च—श्रितो नलविषयो भावो रमणाभिलाषो ययैतादृश्यापि स्वामिनि भर्तरि नले महद्भयं प्रापि। यतः—पूर्वोक्तगुणविशिष्टे पूर्वोक्तगुणविशिष्टया चेति। एवंभूतेऽपि नले एवंभूतया तया साध्वसं कियदल्पमेव प्राप्तम्। बहु साध्वसं वर्तत एव, तथापि किंचित्साध्वसं परित्यक्तम्। यस्मात्—श्रितो नलविषयो रमणाभिलाषो ययेति वा। अथ च—श्रितः परिशीलितो ज्ञातो नलाशयो यया, बालाया मम कण्ठोपभोगं न करिष्यतीति निश्चितनलाभिप्राया भयं न प्रापेति भाव इति वा। श्रितोऽनुष्ठितो नलाशयो यया नलभावानुकूलवर्तिन्या प्रथमसंभोगे पौरुषमवलम्ब्य क्रीडाकौतुककारी भवति, कान्ता चानुत्तीर्णशैशवा किमत्र भावीति सभया किंचिदप्यजानानाऽल्पभयं विहाय प्रियभावानुकूलमाश्रयतीति। एतदनुभवसाक्षिकामिति भावः॥ ३०॥

दूत्यसङ्गतिगतं यदात्मनः
प्रागशिश्रवदियं प्रियं गिरः।
तं विचिन्त्य विनयव्ययं ह्रिया
न स्म वेद करवाणि कीदृशम्॥ ३१॥

इदानीं लज्जानुभावपूर्वं कामशास्त्रानुरोधेन प्रथमसंभोगक्रममाह—

दूत्येति॥ इयं प्राक् विवाहात्पूर्वं दूत्येन देवदूतव्यापारेण संगतिं गतं सम्बन्धं प्राप्तं साक्षाद्दृष्टं नलं प्रियमात्मनो विरहप्रकाशिनीर्नवमसर्गोक्ता गिरो वाणीराशिश्रवदाश्रावयामासेतियत्, तं प्रियस्य स्ववचनश्रावणलक्षणं विनयस्य व्ययं नाशं धाष्टर्यं विचिन्त्य विशेषेण स्मृत्वा ह्रिया कृत्वा कीदृशं करवाणीति न वेद स्म नाज्ञासीत्। तदानीं मया यदुक्तं तन्महदनुचितं कृतं, तत्प्रतिक्रिया कीदृशी, प्रकृते चार्थे किं कार्यमिति विनय-

१ अत्रानुप्रासः, यमकं च शब्दालङ्कारौ, स्पर्धयेवेत्युत्प्रेक्षा बभूवतुरिति रूपकं चार्थालङ्कारौ। २ अत्रानुप्रासः, एवं चात्र केलीनां लोकोत्तरत्वं सूचितम्।

व्ययस्मरणाज्जातया ह्रिया किंकर्तव्यतामूढाऽभूदित्यर्थः । उत्तमत्वं सूचितम् । उत्तमा हि पूर्वानुचितस्मरणाल्लज्जन्ते । अतीतस्मरणेनाऽपि सलज्जाऽभूत्, प्रारब्धसंभोगानुभवदशायां तु सलज्जत्वं किं वाच्यमिति भावः । अशिश्रवत्, शृणोतेर्णौ चङि द्विर्वचने उपधाह्रस्वत्वे 'सन्वल्लघुनि चङ्परेऽनग्लोपे ७ । ४ । ९३ ।' इति सन्वद्भावे 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ७ । ४ । ८१ ।' इत्यभ्यासस्येत्त्वम् । प्रियम्, शृणोतेः शब्दकर्मत्वाण्णौ कर्मत्वम् ॥ ३१ ॥

यत्तया सदसि नैषधः स्वयं
प्राग्वृतः सपदि वीतलज्जया ।
तन्निजं मनसिकृत्य चापलं
सा शशाक न विलोकितुं नलम् ॥ ३२ ॥

यदिति ॥ तया सदसि मिलितलोकत्रयसमक्षं वीतलज्जया निर्लज्जया सत्या सपदि स्वयं परप्रवर्तनाद्यभावेऽप्यात्मनैव वरणमालया कृत्वा प्राक् नैषधो वृत इति यत्, सा तत्तथानलवरणलक्षणं निजं चापलं धाष्टर्यं मनसिकृत्य विचार्य तदानीं लज्जां त्यक्त्वा मया महद्धाष्टर्यमवलम्बितमेतदनुचितमिति स्मृत्वा लज्जातिशयवशात्तदानीं नलं विलोकितुमपि न शशाक । अत्राऽप्युत्तमत्वं सूचितम् । तच्चापलं मनसिकृत्य विशेषेणेता प्राप्ता चासौ लज्जा च तया कृत्वा नलं वीक्षितुं नाशकदिति वा । मनसिकृत्य पूर्ववत् ॥ ३२ ॥

आसने मणिमरीचिमांसले
यां दिशं स परिरभ्य तस्थिवान् ।
तामसूयितवतीव मानिनी
न व्यलोकयदियं मनागपि ॥ ३३ ॥

आसन इति ॥ अनुरागातिशयादेकासने वर्तमानयोस्तयोर्मध्ये स नलो मणिमरीचिभिः खचितोत्तमरत्नप्रसारिकिरणैर्मांसले व्याप्तआसने सिंहासने यां दिशं परिरभ्य यं सिंहासनप्रदेशमाश्रित्य तस्थिवान्, इयं भैमी तां दिशं मनागपि न व्यलोकयत् । उत्प्रेक्षते— असूयितवतीव ईर्ष्यावतीव । दिशः स्त्रीत्वादियं मद्भर्त्राऽऽलिङ्गितेति सपत्नीबुद्ध्याऽसूयां कृतवतीव तां नापश्यदित्यर्थः । यतो मानिनी । लज्जाभयाभ्यां नापश्यत्, तत्रेयमुत्प्रेक्षा । असूयितवती 'कण्ड्वादिभ्यो यक् ३ । १ । २७ ।' इति यगन्तात् क्तवतुः, उगित्त्वान्ङीप् ॥ ३३ ॥

ह्रीसरिन्निजनिमज्जनोचितं
मौलिदूरनमनं दधानया ।
द्वारि चित्रयुवतिश्रिया तया
भर्तृहूतिशतमश्रुतीकृतम् ॥ ३४ ॥

ह्रीति ॥ निरन्तरप्रवाहरूपत्वाद्ध्रीरूपायां सरिति निजस्यात्मनो निमज्जनं तस्योचितं योग्यं मौलेः शिरसो दूरं नितरां नमनमानामेनैम्रीभावं दधानया, तथा— द्वारि गृहद्वारदेशे चित्रलिखितयुवतिवत् श्रीः शोभा यस्यास्तया लज्जाभयाभ्यामन्तः प्रवेष्टुमशक्ततयाऽतिनिश्चलया तत्रैव स्थितया भैम्याऽपि भैम्यागच्छेति भर्तुर्नलस्य हूतीनामाह्वानानां शतमश्रुतीकृतं श्रुतमश्रुतं कृतम् । श्रुतं लज्जाभयाभ्यामनुत्तरदानागमनाच्चाश्रुतमिव कृतमित्यर्थः । नवोढायाः प्रकृतिरियम् ॥ ३४ ॥

वेश्म पत्युरविशन्न साध्वसाद्
वेशिताऽपि शयनं न साऽभजत् ।
भाजिताऽपि सविधं न साऽस्वपत्
स्वापिताऽपि न च सम्मुखाऽभवत् ॥ ३५ ॥

वेश्मेति ॥ सा किमग्रे भविष्यतीति साध्वसाद्भयात्पत्युर्वेश्म न स्वयमविशत् । अनन्तरं सख्या नलेन वा वेशिताऽपि गृहमध्यं प्रापिताऽपि शयनं नाऽभजत् । ततोऽपि सख्या नलेन वा शयनं भाजिताऽपि सा सविधं नलसमीपं यथा तथा नास्वपत्, किंतु दूरत एव निद्राति स्म । ततोऽपि सख्या नलेनैव वाऽङ्कपाल्यादिना सविधं स्वापिताऽपि न च संमुखाऽभवत्, किंतु शय्यापार्श्वपट्टिकावलम्बिनी पराङ्मुख्येवाभूदित्यर्थः । प्रथमसंभोगे मुग्धाया जातिरियम् । साध्वसादिति सर्वत्र । अस्वपत्, 'अङ्गार्ग्यगालवयोः ७ । ३ । ९९ ' इति, लङ्यट् । संमुखा, ' स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४ । १ । ५४' इति विकल्पान्न ङीप् ॥ ३५ ॥

केवलं न खलु भीमनन्दिनी
दूरमत्रपत नैषधं प्रति ।
भीमजाहृदि जितः स्त्रिया ह्रिया
मन्मथोऽपि नियतं स लज्जितः ॥ ३६ ॥

---

१ गकारस्य यमित्यस्य चानुप्रासः ।

१ अत्रोत्प्रेक्षा । २ अत्रानुप्रासः । ३ अत्र नवोढाऽनुरूपचेष्टितोक्तेः स्वभावोक्तिः ।

केवलमिति ॥ भीमनन्दिनी केवलं नैषधं प्रत्युद्दिश्य दूरं नितरामत्रपत लज्जां प्रापेति न, किंतु भीमजाहृदि वर्तमानया ह्रिया लज्जारूपया स्त्रिया[1] जितः खलु जित एव सोऽतिप्रसिद्धपराक्रमः हृद्येव वर्तमानो मन्मथोऽपि नियतं बहुकालं लज्जितः । अथ च—मनो मथ्नाति पीडयतीति मन्मथः पृषोदरादिः । एवंविधोऽपि जितो लज्जितः संकुचितश्चेति चित्रम् । ह्रीवशात्नलविषयोऽतिपीडाकरोऽपि कामो बहुकालं तामभिभवति स्मेति भावः । अन्योऽपि स्त्रिया जितो लज्जते । इदं पद्यं केचित् प्रक्षिप्तं मन्यन्ते ॥ ३६ ॥

आत्मनाऽपि हरदारसुन्दरी
यत्किमप्यभिललाप चेष्टितुम् ।
स्वामिना यदि तदर्थमर्थिता
मुद्रितस्तदनया तदुद्यमः ॥ ३७ ॥

आत्मनेति ॥ हरदारवद्गौरीवत्सुन्दरी सा आत्मनापि स्वयमेव यत्किमपि यत्किंचिच्चेष्टितुं तदवसरोचितं कटाक्षवीक्षणताम्बूलदानतालवृन्तचालनाद्यभिललाप कर्तुमैच्छत् । तदर्थं तस्मै प्रयोजनाय तद्वस्तुदानाय इङ्गितज्ञेन स्वामिना नलेन ताम्बूलं देहीति यदि अर्थिता याचिता तर्ह्यनया भैम्या तस्य नलस्योद्यमो याचनप्रयत्नो मुद्रितः ताम्बूलादीनामदानाद्व्यर्थीकृतः । तेन याचिता सती न ददाविति भावः । अपिरेवार्थे । स्वामिनेत्यनेनावश्यकर्तव्यतायां सत्यामपीति सूचितम् । गौर्यपि प्रथमसम्भोगे हरेणार्थिता सत्येवमेवाकरोदिति ध्वनिः ॥ ३७ ॥[2]

ह्रीभराद्विमुखया तया भियं
सञ्जितामननुरागशङ्किनि ।
स स्वचेतसि लुलोप संस्मरन्
दूत्यकालकलितं तदाशयम् ॥ ३८ ॥

ह्रीभरादिति ॥ दूत्यकाले कलितं परीक्षितं तदाशयं भैम्यभिप्रायं सम्यग्दृढसंस्कारतया स्मरणपथारूढं स्मरन्विचारयन्स नलो ह्रीभराद्विमुखया तया विमुखत्वादेवाननुरागशङ्किनि किमस्या मय्यनुरागो नास्तीति शङ्काशीले स्वचेतसि सञ्जितां जनितामनुरागाभावसंभावनां भीतिं लुलोप निरस्यति स्म । दूत्यावसरे मय्यनुरागातिशयादिन्द्रादीनपि परित्यज्य मदलाभे कृतमरणनिश्चयेयमिदानीमनुरागं न त्यक्ष्यतीति निश्चित्य जातां शङ्कां तत्याज । मुग्धा लज्जाभरादेव विमुखीयं न त्वननुरागादिति निश्चिकायेत्यर्थः । तदाशयम्, ञोपत्वविनक्षया पाठान्तरभावः ॥ ३८ ॥

पार्श्वमागमि निजं सहालिभि-
स्तेन पूर्वमथ सा तयैकया ।
कापि तामपि नियुज्य मायिना
स्वात्ममात्रसचिवाऽवशेषिता ॥ ३९ ॥

पार्श्वमिति ॥ तेन नलेन भयवशादेकाकिनी नलस्य सविधमनागच्छन्ती सा आलिभिर्भूयसीभिः सह निजं पार्श्वमागमि प्रापिता । भवतीभिरपि किंचित्कालमनया सार्धमागन्तव्यमित्यादिष्टाभिस्ताभिस्तां स्वसंनिधिं प्रापितवानित्यर्थः । अथानन्तरं कियताऽपि कालेन किंचिद्विश्वासप्राप्त्यनन्तरमेकयैकाकिन्यैव तया सख्या सह सख्यन्तरपरिहारेण संनिधिं प्रापिता । अथानन्तरं कियताऽपि कालेन तामपि सखीं काऽपि गन्धमाल्यताम्बूलाद्याहरणे विषयेऽलीकं नियुज्य गन्धाद्यानयेति व्याजात्प्रेष्य यतो मायिना कामशास्त्रोक्तकन्याविस्रम्भणकपटपटुना चतुरेण तेन स्वात्ममात्रो नल एव सचिवः सखा यस्याः स्वसहायैवैकाकिनी अवशेषिता स्वसमीपे स्थापिता । विजनोचितं स्वीयमिङ्गितमदर्शयत्, तदीयं चापश्यदिति भावः । कन्याविस्रम्भणप्रकारोऽयम् । आगमि, ण्यन्तात्कर्मणि चिण् 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ६।४।९३' इति दीर्घविकल्पात् पक्षे ह्रस्वः ॥ ३९ ॥

सन्निधावपि निजे निवेशिता-
मालिभिः कुसुमशस्त्रशास्त्रवित् ।
आनयद्द्वयवधिमानिव प्रिया-
मङ्कपालिवलयेन सन्निधिम् ॥ ४० ॥

सन्निधाविति ॥ स नल आलिभिः स्वयमेव निजे सन्निधौ निवेशितां तेनैव प्रयोजकेन स्वसमीपे प्रयोज्याभिः सखीभिः स्थापितामपि प्रियामङ्कपालेर्भैमीपृष्ठभागस्पर्शिनः स्वीयैकभुजालिङ्गनविशेषस्य वलयाकारेण वेष्टनेन कृत्वा संनिनिमानयत् । यतः—कुसुमशस्त्रः कामस्तस्य वात्स्यायनादिप्रणीतं शास्त्रं वेत्तीति वित् ।

---

१ अत्रानुप्रासः । जित इति लज्जित इत्येवं हेतुहेतुमद्भावेन वचनात् काव्यलिङ्गम् । २ अत्रानुप्रासः ।

१ अत्राप्यनुप्रासः ।

उत्प्रेक्षते—व्यवधिमानिव दूरस्थो यथा 'प्रियां संनिधिमानयति । कामशास्त्रे—'आदौ रतं बाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनमेव पूर्वम्' इति । 'तथा सामीप्यगां भीरुं नवोढां संनिधापयेत् । विश्वासच्छद्मना गाढालिङ्गनात्याजयेद्भयम्' इत्यादि । संनिधिस्थापनव्याजेन गाढमालिङ्ग्य भयं त्याजितवानिति भावः ॥ ४० ॥

प्रागचुम्बदलिके ह्रियाऽऽनतां
तां क्रमाद्दरनतां कपोलयोः ।
तेन विश्वसितमानसां झटि-
त्यानने स परिचुम्ब्य सिष्मिये ॥४१॥

प्रागिति ॥ स ह्रिया आनतामतिनम्रां तां प्रागलिके ललाट एवाचुम्बत् । अतिनम्रत्वात्तदानीं कपोलादिचुम्बनस्याशक्यत्वादित्यर्थः । ततः—किंचिद्गतचुम्बनभयत्वात्पूर्वापेक्षया दरमीषन्नतां किंचिदुन्नतमुखीं क्रमात्परिपाट्या तदानीमेवान्यदा वा द्वयोरपि कपोलयोश्चुचुम्ब । तेन कपोलचुम्बनेन ततोऽपि विश्वसितं मानसं यस्यास्तां ततोऽप्युन्नतमुखीमानने झटिति मुखवक्रणाभयाच्छीघ्रं परिचुम्ब्य दुर्लभाधरचुम्बनलाभजनितानन्दवशात्सिष्मिय ईषदव्यक्तमहसत् । स्फुटहासे पुनर्लज्जा स्यादिति भयादीषज्जहासेत्यर्थः । अथ च यदेतावत्पर्यन्तं त्वया वञ्चितं तदपीदानीं मया लब्धमिति हासः । ललाटादीनि कामशास्त्रोक्तानि चुम्बनस्थानानि । इयमपि विस्रम्भणरीतिः ॥ ४१ ॥

लज्जया प्रथममेत्य हुंकृतः
साध्वसेन बलिनाऽथ तर्जितः ।
किंचिदुच्छ्वसित एव तद्धृदि
न्यग्बभूव पुनरर्भकः स्मरः ॥ ४२ ॥

लज्जयेति ॥ ललाटादिचुम्बनक्रमानुभवजातसुखविशेषोल्लसितकामोदयायास्तस्या हृदि मानसे किंचिदुच्छ्वसित एव विकासित एवार्भको मुग्धत्वादप्रौढः स्मरः प्रथमं चुम्बनजनितया लज्जया एत्यागत्य हुंकृतः हुंकारेण निषिद्धः । अथ पश्चाद्बलिना प्रबलेन चुम्बनजन्येन साध्वसेन सात्त्विकभयेन तर्जितो भर्त्सितोऽस्मदीयं भैमीहृदयलक्षणं स्थानं त्वया प्रविष्टं तिष्ठेत्याक्षेपपूर्वं लज्जाभयाभ्यां भर्त्सित इत्यर्थः । एवकारो विलम्बद्योतनार्थः । अर्भकोऽपि किंचिच्चेष्टितुमुद्युक्तो मात्रा पूर्वमागत्य हुंकृत्य पश्चात्प्रभुणाऽपि वाचा तर्जितः सन्संकुचितो भवति । हुंकृत इव तर्जित इवेति च प्रतीयमानोत्प्रेक्षा ॥ ४२ ॥

वल्लभस्य भुजयोः स्मरोत्सवे
दित्सतोः प्रसभमङ्कपालिकाम् ।
एककश्चिरमरोधि बालया
तल्पयन्त्रणनिरन्तरालया ॥ ४३ ॥

वल्लभस्येति ॥ स्मरोत्सवे सुरतोत्सवारम्भेऽङ्कपालिकां कृतपृष्ठवेष्टनबाहुवलयालिङ्गनं प्रसभं हठाद्दित्सतोः कर्तुमिच्छतोर्वल्लभस्य नलस्य भुजयोर्मध्ये एकको भुजः बालया सुरताप्रौढया तया चिरमरोधि प्रतिबद्धः । कीदृश्या—तल्पस्य शय्याया यन्त्रणेन स्वपृष्ठदृढपीडनेन निरन्तरालया निरवकाशया । आलिङ्गनार्थं पृष्ठदेशे नलभुजप्रवेशो यथा न भवति तथा दृढं शय्यासंलीनयन्त्रणेन निरवकाशत्वाद् भुजरोधनाच्चालिङ्गनविघ्नं समाचरदित्यर्थः । अबलत्वादेकदैव द्वयोर्भुजयोः प्रतिरोद्धुमशक्यत्वाद् द्वाभ्यामपि निजभुजाभ्यामेकैकस्य नलभुजस्य पर्यायेण रोधनादेकक इत्युक्तेऽपि द्वावपि भुजौ निरुद्धाविति ज्ञेयम् । एकक इति पर्यायाशयेनोक्तम् । द्वाभ्यामेकस्यैव निरोधेऽपि द्वितीयेन स्पर्शमात्रं कर्तुं शक्यते, न तु द्विभुजसाध्यमङ्कपाल्यालिङ्गनमित्येकक इत्युक्तमिति वा। अन्योन्याभिमुख्येन सुप्तयोस्तयोरधस्तनबाहू शय्यासंलग्नत्वाच्छय्ययैव नियन्त्रितौ । आलिङ्गनोद्युक्तः शय्यासंलग्नो नलबाहुस्तल्पयन्त्रणनिरवकाशत्वात्पृष्ठदेशे प्रवेष्टुमशक्यत्वादवरुद्धः । उपरितनस्तूपरितनेन भैमीबाहुना चिरं प्रतिरुद्ध इत्याशयः ॥ ४३ ॥

हारचारिमविलोकने मृषा-
कौतुकं किमपि नाटयन्नयम् ।
कण्ठमूलमदसीयमस्पृशत्
पाणिनोपकुचधाविना धवः ॥ ४४ ॥

हारेति ॥ हारस्य एकावल्यादिमुक्ताहारस्य चारिमा सौन्दर्यं तस्य विलोकने विषयेऽतिवृत्तस्थूलमुक्तायुक्तोऽत्यद्भुतोऽयं त्वदीयो हारो दर्शय दर्शयैनमित्यादि किमपि लोकोत्तरं मृषाकौतुकं नाटयन्नभिनयन्नयं धवो भर्ता नलः

१ अत्रोत्प्रेक्षा । २ अत्र स्वभावोक्तिः ।

१ स्मरोऽर्भक इति रूपकम् । २ अत्र लयेति यमकम् ।

स्पर्शलोभवशादुपकुचं स्तनसमीपं धावत्येवंशीलेन पाणिनाऽदसीयं भैम्याः संबन्धि कण्ठमूलं कण्ठाधोभागमस्पृशत्। सार्वभौमस्य तस्यापूर्वस्य वस्तुजातस्य दृष्टत्वात्कुचस्पर्श एव तात्पर्याच्च तात्त्विककौतुकाभावेऽपि साक्षात्करस्पर्शमसहमानायास्तस्या हारसौन्दर्यदर्शने मृषाकौतुकनाटनेन कण्ठमूलस्पर्शव्याजेन कुचावेव स्पृशति । मुग्धाविस्रम्भणजातिः ॥ ४४ ॥

**यत्त्वयाऽस्मि सदसि स्रजाऽञ्चित-**
**स्तन्मयाऽपि भवदर्हणाऽर्हति ।**
**इत्युदीर्य निजहारमर्पय-**
**न्नस्पृशत् स तदुरोजकोरकौ ॥ ४५ ॥**

पुनः स्तनस्पर्शे उपायान्तरमाह—

यदिति ॥ स इत्युदीर्योक्त्वा भैमीकण्ठे निजमुक्ताहारमर्पयन् सन् हारार्पणमिषेण तस्या उरोजावेव काठिन्यादिगुणत्वेन कोरकावस्पृशत् पस्पर्श । इति किम्—हे भैमि, सदसि सभामध्ये त्वयाऽहं स्रजा मधूकमालया कृत्वा यद्यस्मादञ्चितः सर्वेषां समक्षं पूजितोऽस्मि । तत्तस्मान्मयाऽपि मत्कर्तृका भवत्या अर्हणा पूजा अर्हति । उपकारस्य प्रत्युपकर्तव्यमिति न्याययुक्तेति।'अर्हणा कृता' इत्यपि पाठः ॥ ४५ ॥

**नीविसीम्नि निहितं स निद्रया**
**सुभ्रुवो निशि निषिद्धसंविदः ।**
**कम्पितं शयमपास यन्नयं**
**दोलनैर्जनितबोधयाऽनया ॥४६ ॥**

नीवीति ॥ जाग्रदवस्थायां करं निराकरिष्यतीति बुद्ध्या निशि निद्रया निषिद्धा वारिता संविज्ज्ञानं यस्यास्तस्याः सुभ्रुवो भैम्या नीविसीम्नि रसनाकलापमोचनार्थं वसनपट्टिकापरिसरे निहितं स्थापितमेव नीविस्पर्शमात्रेण कम्पितं सात्त्विककम्पयुक्तं शयं हस्तं स नलो दोलनैः समुद्भूतस्वगतसात्त्विककम्पनिमित्तहस्तचालनैर्जनितबोधया त्याजितनिद्रयाऽनया भैम्या करणभूतयाऽपास निराकृतवान् । कीदृशः—अयं शुभावहविधिम् । संभोगानन्दामिति यावत् । तं यन् प्राप्नुवन् । 'अपासयन्निजम्' इति पाठे—भैम्या प्रयोज्यया स प्रयोजको नलो निजं करमपासयदमोचयदित्यर्थः । कम्पमानकरसंस्पर्शमात्रेण जातबोधया तदीयः करो निराकृत इत्यर्थः । अनयेति करणे तृतीया । पाठान्तरे तु प्रयोज्यकर्तरि ॥ ४६ ॥

१ अत्रानुप्रासः । २ अत्र रूपकम् ।

**स प्रियोरुयुगकञ्चुकांशुके**
**न्यस्य दृष्टिमथ सिष्मिये नृपः ।**
**आववार तदथाम्बराञ्चलैः**
**सा निरावृतिरिव त्रपावृता ॥ ४७ ॥**

स इति ॥ स नृपः प्रियाया ऊरुयुगस्य कञ्चुकांशुके आवरणभूते वस्त्रे दृष्टिं न्यस्य अथानन्तरमेव सिष्मिये ईषदहसत् । सूक्ष्मवस्त्रावृतत्वात्स्वयं मया द्रष्टुं शक्यत एवेत्याशयेनेत्यर्थः । त्वया पूर्वकालत्वेऽभिहिते स्मितस्यानन्तर्येऽप्यव्यवहिततरत्वद्योतनार्थमथशब्दः । नीविस्थापितकरापासनानन्तरमिति वा । अथ नलस्मितानन्तरं निरावृतिरिवं वस्त्ररहितेव त्रपावृता सती सा तदूरुयुगवस्त्रं वस्त्रस्य तस्यैवाञ्चलैरग्रभागैरावववाराच्छादयामास । वस्त्रस्यातिसूक्ष्मत्वाद्व्यर्थसंभावितनिजगोप्याङ्गदर्शना सती घनावयवत्वसंपादनार्थं तद्वस्त्रं तदञ्चलैरेव प्रावृणोदिति भावः । कामिनीरियं जातिः । अञ्चलैरिति बहुत्वं पुनः पुनरावरणक्रियाभेदात् ॥ ४७ ॥

**बुद्धिमान् व्यधित तां क्रमादयं**
**किंचिदित्थमपनीतसाध्वसाम् ।**
**किंच तन्मनसि चित्तजन्मना**
**ह्रीरनामि धनुषा समं मनाक् ॥ ४८ ॥**

बुद्धिमानिति॥बुद्धिमान् कामशास्त्रोक्तकान्ताविस्रम्भणप्रकारचतुरोऽयमित्थं पूर्वोक्तरीत्या क्रमात्परिपाट्या तामपनीतसाध्वसां त्याजिताकस्मिकसंभोगभयां व्यधिताकृत । किंचेत्यधिकोक्तौ । न परमेतावदेव, किंत्वन्यच्च—तस्या मनसि वर्तमाना ह्रीस्तत्रैव स्थितेन चित्तजन्मना स्वधनुषा समं सह मनाक् अनामि शिथिलिता । कामेन धनुषि किंचिदारोप्यमाणे लज्जाप्यल्पा जातेत्यर्थः । पूर्वं कामो भयलज्जाभ्यां त्याजितः । इदानीं तु भैमीभयं नलेन निराकृतम्, एका स्त्रीव ह्रीरवशिष्टा, सा कामेन सुखेनाल्पितेति भयलज्जयोः किंचिदपासनेन पूर्वं मन्दी-

१ अत्रानुप्रासः । २ 'आवृतमप्यनावृतमिती-वावृणोदिति त्रपाऽतिशयोक्तिः' इति जीवातौ मल्लिनाथः । अत्र निरावृतिरिवेत्युपमा ।

भूतोऽपि कामः स्तोकं पुनरुल्लुलासेति भावः । अनामि, 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इति वार्तिकान्मित्त्वस्य पाक्षिकत्वान्मित्त्वाभावे ह्रस्वाभावः । मित्त्वेऽपि वा 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ६।४।९३' इति पाक्षिको दीर्घः ॥ ४८ ॥

सिष्मिये हसति न स्म तेन सा
प्रीणिताऽपि परिहासभाषणैः ।
स्वे हि दर्शयति ते परेण का-
नर्घ्यदन्तकुरुविन्दमालिके ॥४९ ॥

सिष्मिय इति॥ तेन परिहासभाषणैः परिहासप्रधानैः सप्रेमवचनैः प्रीणिता जनितप्रीतिरपि सा तस्मिन् हसत्यपि विकसत्कपोलनयनमलक्षितदन्तं सिष्मिये स्मितं चकार । दर्शितदन्तं प्रसरद्धास्यं तु न चकार । अन्या तु परिहासप्रीणिता हसति, इयं तु नेति चित्रमित्यपिशब्दार्थः । हि यस्मात्ते प्रसिद्धे अनर्घ्या निर्मूल्याः सुलक्षणा दन्तास्त एव ताम्बूलरागित्वात्कुरुविन्दानि माणिक्यानि तेषां मालिके अल्पे ह्रस्वे वा माले । स्वे आत्मीये सर्वस्वरूपे का कुलीना स्त्री परेणान्येन हास्येन येन केनचित्पुरुषेण च दर्शयति दर्शनवत्यौ करोति । अपि तु हास्यं स्त्रीणां दोषायेत्युत्तमस्त्रीत्वात्प्रकटितदशनं हास्यं न चकारेति युक्तम् । न ह्यनर्घ्यवस्त्वन्यस्मै प्रदर्श्यते । तेन स हसति स्मेति वा स्मितहसितविहसितोपहासाट्टहासप्रकारैर्हास्यरसो भरतेन पञ्चधा निरूपित इति स्मितहसितयोर्भेदः । 'अणौ यः कर्ता' इति कर्तृसंज्ञानुवादेन कर्मत्वविधानात्संज्ञापूर्वकविधेरनित्यत्वाद्वा परेणेत्यत्र दृशेर्बुद्ध्यर्थत्वाद् 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणिकर्त्ता स णौ १।४।५२' इति प्राप्तकर्मत्वाभावः । वस्तुतस्तु 'स्वे ह्यदर्शयत' इति पाठः साधुः । 'अभिवादिदृशोरात्मनेपदे वा' इति कर्मत्वाभावः ॥ ४९ ॥

वीक्ष्य भीमतनयास्तनद्वयं
मग्नहारमणिमुद्रयाऽङ्कितम् ।
सोढकान्तपरिरम्भगाढता
साऽन्वमायि सुमुखी सखीजनैः॥ ५०॥

वीक्ष्येति ॥ सखीजनैः सा सुमुखी सोढा कान्तस्य परिरम्भाणामालिङ्गनानां गाढता दृढपीडनं यया एवंभूताऽन्वमाय्यनुमिता । किं कृत्वा—भीमतनयायाः स्तनद्वयं स्तनद्वये मग्नानां हारमणीनां मुद्रया किंचिद्गम्भीररक्तीभूतस्थानश्रियाऽङ्कितं चिह्नितं वीक्ष्य । स्तनयोर्मग्नहारमणिदर्शनादन्यथानुपपत्त्या गाढालिङ्गनमनया सोढमिति सखीभिर्ज्ञातमित्यर्थः । सुमुखीत्यनेनालिङ्गनसंजातहर्षोऽपि सूचितः ॥ ५० ॥

1 अत्र सममित्यनेन कार्यकारणात्मनोर्नमनयोरेककालावच्छेदेन वचनात्सहोक्तिः।

याचते स्म परिधापिकाः सखीः
सा स्वनीविनिबिडक्रियां यदा ।
अन्वमिन्वत तदा विहस्य ता
वृत्तमत्र पतिपाणिचापलम् ॥ ५१ ॥

याचत इति ॥ सा यदा यस्मिन्समये परिधापयन्तीति परिधापिकाः सखीः स्वनीव्या आत्मीयवस्त्रमेखलाबन्धस्य निबिडक्रियां गाढबन्धनं याचते स्म प्रार्थितवती, तदा ताः सख्योऽन्योन्यविलोकनपूर्वं विहस्यात्र नीविबन्धश्लथीकरणार्थं वृत्तं जातं पत्युः पाणिचापलं बलादुन्मोचनव्यापारमन्वमिन्वत अनुमितिविषयान्यथानुपपत्त्यैवं प्रार्थनं युज्यत इति पूर्ववृत्तं निश्चितवत्य इत्यर्थः । याचिर्द्विकर्मा । अन्वमिन्वत, मिनोतिर्लिङन्तः । स चानुपूर्वो ज्ञानार्थः ॥ ५१ ॥

कुर्वती निचुलितं ह्रिया किय-
त्सौहृदाद्विवृतसौरभं कियत् ।
कुड्मलोन्मिषितसूनसेविनीं
पद्मिनीं जयति सा स्म पद्मिनी ॥५२॥

कुर्वतीति ॥ कामशास्त्रोक्तलक्षणा पद्मिनी सा भैमी पद्मिनीं कमलिनीं जयति स्म । किंभूता—कियत्किंचिच्चुम्बनादि संभोगकर्म ह्रिया निचुलितं स्थगितमप्रकटं कुर्वती तथा—कियदालिङ्गनादिकं सौहृदाच्चित्तसौख्यादिवृत्तं प्रकटितं सौरभं कामशास्त्रोक्तकौशलं यत्र एवंभूतं कुर्वाणा । किंभूतां पद्मिनीम्—कुड्मलोन्मिषितानि मुकुलान्येव प्रफुल्लानि सूनानि पुष्पाणि सेवते भजत्येवंशीलाम् । अर्धविकसितपुष्पवतीम् । निचुलितं कलिकास्थानीयम्, विवृतसौरभं विकसितपुष्पस्थानीयम्। कियत्कलिकारूपा कियद्विकसितकमला कमलिनीव साऽभूदित्यर्थः । विवृतं सौरभं मनोज्ञत्वं सौगन्ध्यं वा यस्येति वा ॥ ५२ ॥

1 वीक्षणस्यानुमाने हेतुत्वात् काव्यलिङ्गम् ।

नाविलोक्य नलमासितुं स्मरो
ह्रीर्न वीक्षितुमदत्त सुभ्रुवः ।
तद्दृशः पतिदिशाऽचलन्नथ
व्रीडिताः समकुचन्मुहुः पथः ॥ ५३ ॥

नेति ॥ स्मरः सुभ्रुवो भैम्या नलमविलोक्याऽऽसितुं स्थातुं नादत्त । ह्रीश्च तमीक्षितुं नादत्त । यस्मात्, तस्मात्तस्या दृशः कटाक्षविक्षेपा नेत्रव्यापाराः क्रमेण पतिदिशा नलाधिष्ठितदेशमुद्दिश्य वलितग्रीवं वारंवारमचलन् । अथ पश्चादभिमुखं नलनेत्रसंमेलने सत्यनन्तरं व्रीडिताः सत्यो नलमप्राप्य पथो मार्गादेव मुहुः पुनः पुनः समकुचन्परावृत्ताः कामप्रेरितत्वादीक्षितुमारेभे, लज्जया निषिद्धत्वाच्च तदीक्षणान्निवृत्तेति भावः । लज्जाकामयोः समबलत्वाद्भावसंधिः । दृशः व्यापारापेक्षया बहुत्वम् ५३

नाऽनया पतिरनायि नेत्रयो-
र्लक्ष्यतामपि परोक्षतामपि ।
वीक्ष्यते स खलु यद्विलोकने
तत्र तत्र नयने ददानया ॥ ५४ ॥

नेति ॥ अनया पतिः प्रियो नेत्रयोर्लक्ष्यतां गोचरत्वमपि नानायि, परोक्षतामगोचरत्वमपि न प्रापि । नन्वेकस्य वस्तुनः परोक्षता वा भवेदपरोक्षता वा भवेत्, न तूभयता विरोधादित्याशङ्क्योपपादयति–खलु यस्माद्धेतोर्यस्य हारमुकुरस्तम्भादेर्विलोकने सति स नलो वीक्ष्यते तत्र तत्र हारादिवस्तुनि विषये नयने ददानया प्रेरयन्त्या । मुकुरादेर्विलोकने तत्र तत्र प्रतिबिम्बितो नलोऽनुपलक्षितदर्शनेन दृष्टो मामियं पश्यतीति तेनाज्ञातत्वात्, उद्देश्यतया बिम्बरूपस्तु न दृष्ट इति विषयान्तरविलोकनव्याजेन प्रसङ्गात्संजातदर्शनस्य नलस्योभयरूपताकारेण वैचित्र्यादिकस्यापि विरुद्धोभयरूपसंभवे संस्कारेन्द्रियाभ्यां सहोत्पादनाच्छात्रे प्रत्यभिज्ञावत्, लोके च खरतुरगोभयोद्भूतत्वाद्वेसरवच्च युक्तेत्यर्थः । लज्जावशात्साक्षाद्यपि नापश्यत्, तथापि कामप्रेरितत्वाद्दर्पणादिद्वाराऽपश्यदिति भावः । 'वीक्ष्यते स्म' इति पाठः सुयोजः। यद्यस्माद्विलोकननिमित्तं तत्र तत्र वस्तुनि नेत्रे ददत्या स वीक्ष्यते स्मैव, तस्माल्लक्ष्यतां परोक्षतां च नानायीति ॥ ५४ ॥

वासरे विरहनिःसहा निशां
कान्तसङ्गसमयं समैहत ।
सा ह्रिया निशि पुनर्दिनोदयं
वाञ्छति स्म पतिकेलिलज्जिता ॥ ५५ ॥

वासर इति ॥ सा यस्माद्वासरे दिने विरहनिःसहा सम्भोगविच्छेदं सोढुमशक्ता, तस्मात्कान्तस्य सङ्गसमयं सम्भोगसमयरूपां निशां समैहत रात्रिः कदा वा समेष्यतीति । निशि प्राप्तायां पत्युः केलिभिर्नवनवकामक्रीडाभिर्लज्जिता, अत एव—ह्रिया कृत्वा पुनर्दिनोदयं वाञ्छति स्म प्रभातं कदा वा समेष्यतीति । हेतुहेतुमद्भावान्न पौनरुक्त्यम् । सहजया ह्रिया युक्ता ततोऽपि पतिकेलिभिर्विशेषेण लज्जितेति वाऽपौनरुक्त्यम् ॥ ५५ ॥

तत्करोमि परमभ्युपैषि य-
न्मा ह्रियं व्रज भियं परित्यज ।
आलिवर्ग इव तेऽहमित्यमूं
शश्वदाश्वसनमूचिवान्नलः ॥ ५६ ॥

तदिति ॥ नलोऽमूं भैमीं शश्वन्निरन्तरमित्याश्वसनं विश्वासहेतुं वच ऊचिवान् । इति किम्—हे भैमि, बहुविधेष्वालिङ्गनचुम्बनादिषु मध्ये यत्त्वमभ्युपैषि मन्यसे तत्परं केवलं करोमि, नान्यत् । तस्माद्ध्रियं मा व्रज पुमङ्गसङ्गेन किं वा भावीति चित्ते धृतां भियं परित्यज। यतोऽहं त आलिवर्ग इव सखीसमूहतुल्यः । तस्मात्तस्मिन्यथा विश्वसिषि तथा मय्यपि विश्वसिहि । भयं मा यासीरिति । इह त इति पाठे—इह चुम्बनादौ विषयेऽहं तवालिवर्ग इव । सखीकर्तृके चुम्बनादौ यथा कापि न भीतिस्तथाऽत्रापीत्यर्थः ॥ ५६ ॥

येन तन्मदनवह्निना स्थितं
ह्रीमहौषधिनिरुद्धशक्तिना ।
सिद्धिमद्भिरुदतेजि तैः पुनः
स प्रियप्रियवचोऽभिमन्त्रणैः ॥ ५७ ॥

येनेति ॥ येन तस्या मदनरूपेण वह्निना ह्रीरेव महौषधिर्दिव्यौषधिस्तया निरुद्धा शक्तिः सामर्थ्यं यस्य तेन लज्जया निलीनेन स्थितं स कामाग्निः पुनः सिद्धिमद्भिः प्रकृतार्थसाधनसमर्थैस्तैरुक्तरूपैः प्रियस्य प्रियवचांसि तद्रूपाण्यभिमन्त्रणानि रहस्यमन्त्रजपास्तै-

१ अत्र प्रथमपादस्याद्याक्षरमपहाय तुर्यपादस्यान्ते नयेति वर्णयोर्यमनाद् यमकम् अनुप्रासश्च ।

१ अत्राप्यनुप्रासः। २ इवेत्युपमा ।

रुदतेजि अदीपि, प्रकाशीकृतसामर्थ्योऽकारीत्यर्थः । पूर्वोक्ताश्वसनवचनैः पुनरुद्दीप्तकामा जातेति भावः । अन्योऽपि वह्निरौषधप्रतिबद्धशक्तिः सुसिद्धैरग्निप्रकाशकैर्मन्त्रैः पुनरुदतेजि उद्दीप्यते स्म । 'तिज निशाने' निशानमुद्दीप्तीकरणम् । अत्र क्षमार्थाभावान्न सन्॥५७॥

यद्विधूय दयिताऽर्पितं करं
दोर्द्वयेन पिदधे कुचौ दृढम् ।
पार्श्वगं प्रियमपास्य सा ह्रिया
तं हृदि स्थितमिवालिलिङ्ग तत् ॥५८॥

यदिति ॥ सा दयितेन मर्दनार्थं कुचयोरुपर्यर्पितं करं कराभ्यां विधूय निराकृत्य दोर्द्वयेन स्वकररूपेण दृढं कुचौ यत्पिदधे तत्तेन कुचपिधानप्रकारेण पार्श्वगं पुरः समीपे स्थितं प्रियं ह्रियाऽपास्य हृदि स्थितं तमेवालिलिङ्गेवेत्युत्प्रेक्षा । स्त्रीणां याचने यन्निवारणं तदेव कामस्य परमायुधम् । आलिङ्गनेन यथा कामः प्रदीप्तो भवति, तथा कुचमर्दननिषेधपरेण कुचपिधानेनापि नलः प्रदीप्तकामो जात इति भावः । मुग्धाजातिरियम्[२] ॥ ५८ ॥

अन्यदस्मि भवतीं न याचिता
वारमेकमधरं धयामि ते ।
इत्यसिस्वददुपांशुकाकुवाक्
सोपमर्दहठवृत्तिरेव तम् ॥ ५९ ॥

अन्यदिति ॥ इति एवंप्रकारा उपांशुर्मन्दा भीत्या प्रार्थनादैन्यवशात्, काकुर्ध्वनिविकारयुक्ता वाक् यस्य स नलो दीनप्रार्थनवशात्किंचिदनुमतौ सत्यामुपमर्दे दन्तदशनौष्ठपीडनगाढालिङ्गनादौ यो हठस्तेन सहिता वृत्तिरधरपानादिव्यापारो यस्य, सोपमर्दा करधूननादिना सविघ्नाऽधरपानहठवृत्तिर्यस्य वा एवंभूत एव सन् तमधरमस्विस्वददपात् । एवमालिङ्गनाद्यपि । इति किम्—हे भैमि, अहं भवतीं त्वामन्यदपरं किमपि कुचमर्दनादि न याचिताऽस्मि न याचिष्ये, किं तर्हि—अहमेकवारं तेऽधरं धयामि पिबामीति । आशया दीनवचनम्, पाने तु बलात्कारः । एकवाराधरपानानुमतेरुपमर्देन भङ्गेन सहिता हठवृत्तिरननुमतद्वितीयाद्यधरपानव्यापारो यस्येति वा एकवाराधरपानमात्रानुमतौ लब्धायामालिङ्गनाद्यपि द्वितीयाद्यधरपानमप्यकरोत्, अपराधमार्जनं त्वनन्तरं करिष्यामीति बुद्ध्येति भावः । 'पूर्वमोष्ठपानमात्रमकरोत्, अनन्तरं नखक्षताद्यपीति केचित् । 'अन्यदा'इति पाठे—क्षणान्तरे पुनरधरपानमपि न याचिष्य इत्यर्थः । 'सोऽयमर्ध'इति पाठे--सोऽयमर्धः किंचिन्मात्रो हठो यत्रैवंविधो व्यापारो यस्य । पूर्वपाठे स इति ज्ञेयम् । याचिता तृच् । वारं काले द्वितीया ॥ ५९ ॥

पीततावकमुखासवोऽधुना
भृत्य एष निजकृत्यमर्हति ।
तत्करोमि भवदूरुमित्यसौ
तत्र संन्यधित पाणिपल्लवम् ॥ ६० ॥

पीतेति ॥ असौ नल इत्युक्तिव्याजेन तत्रोरौ पाणिपल्लवं मृदुसुखस्पर्शतया पल्लवतुल्यं पाणिं संन्यधित स्प्रष्टुं संनिवेशितवान् । इति किम्—हे भैमि, एष भृत्यो मल्लक्षणो दासः । पीतस्तावकमुखमेवासवो मद्यं येन, अथ च—पीतस्त्वदीयमुखस्य सुरागण्डूषो येन[१] एवंभूतः सन्नधुना निजकृत्यं चरणसंवाहनादिरूपं भृत्यसंबन्धि कार्यं कर्तुमर्हत्युचितो भवति । तत्तस्माद् गृहारामपुष्पावचयादिना खिन्नं भवदूरुं त्वदीयमूरुं करोमि संवाहयामि । अथ च—सामर्थ्यादूर्ध्वं करोमीति । अनेकार्थत्वात्करोतिः संवाहनार्थः । अन्योऽपि भृत्यो भुक्तमुखोच्छिष्टश्चरणसंवाहनं करोति ॥ ६० ॥

चुम्बनादिषु बभूव नाम किं
तद्वृथा भियमिहापि मा कृथाः ।
इत्युदीर्य रसनावलिव्ययं
निर्ममे मृगदृशोऽयमादिमम् ॥ ६१ ॥

चुम्बनेति ॥ इत्युदीर्य अयं मृगदृशस्तदानीमतितमां चञ्चलदृशो भैम्या आदिमं कदाचिदप्यकृतपूर्वत्वात्प्रथमं रसनावलिव्ययं मेखलाकलापमोचनं निर्ममे चक्रे । ऊरुस्पर्शादौ वाम्यं भयं च भजन्त्या भैम्या एवं विस्रम्भणपूर्वकं वसनमाचकर्षेति भावः । इति किम्—हे भैमि, नामेत्यनुभूतविषयप्रश्नाभिनये । हे भैमि, चुम्बनालिङ्गनादिषु किं नाम विरुद्धं बभूव, अपि तु न किंचित् । तत्तस्मादिहाप्यस्मिन्क्रियमाणे सुरतारम्भेऽपि ऊरुपीडने वा, मेखलामोचने वा वृथा अकारणां भियं मा कृथाः ॥ ६१ ॥

---

१ अत्र रूपकम् । २ इवेत्युत्प्रेक्षा ।

१ अत्र रूपकम् ।

अस्तिवाम्यभरमस्तिकौतुकं
सास्तिघर्मजलमस्तिवेपथु ।
अस्तिभीति रतमस्तिवाञ्छितं
प्रापदस्तिसुखमस्तिपीडनम् ॥६२॥

अस्तीति ॥ सा एवंभूतं रतं प्रापत् । किंभूतम्—आरम्भसमयेऽस्ति वर्तमानो वाम्यभरो रतिप्रातिकूल्याचरणबाहुल्यं यत्र आरम्भानन्तरं चास्ति कौतुकमननुभूतचरत्वादस्त्याश्चर्यं यत्र । ततोऽपि—सात्त्विकोत्पत्तेः श्रान्तेश्चास्ति घर्मजलं यत्र । तथा—अस्ति वेपथुर्यत्र । ततः—संभोगे प्रारब्धे भये निवृत्तेऽपि किमन्ते भावीत्यस्ति भीतिर्यत्र । तथा—सुखहेतुत्वादस्ति वाञ्छितमभिलाषो यत्र । तथा—लिङ्गकमसंमर्दादस्ति सुखं यत्र । समरचतुरतावसानसंजातसुखभिनि यावत् । ततोऽप्यस्ति पीडनं संभोगावसाने सर्वाङ्गगाढालिङ्गनं यत्र । एवंभूतं प्रथमसंभोगमन्वभूदिति भावः । अस्तीति विभक्तिप्रतिरूपकमव्ययम् । 'अस्तिक्षीरादयश्च' इति समासः ॥ ६२ ॥

ह्रीस्तवेयमुचितैव यन्नव-
स्तावके मनसि मत्समागमः ।
तत्तु निस्त्रपमजस्रसंगमाद्
व्रीडमावहति मामकं मनः ॥ ६३ ॥
इत्युपालभत सम्भुजिक्रिया-
ऽऽरम्भविघ्नघनलज्जितेर्जिताम् ।
तां तथा स चतुरोऽथ सा यथा
त्रप्तुमेव तमनु त्रपामयात् ॥ ६४ ॥

ह्रीरिति इतीति ( युग्मम् )॥ चतुरः कामकलाकुशलः स नलः संभुजिक्रियायाः सुरतस्यारम्भे विघ्नभूतैर्घनैर्निबिडैर्लज्जितैर्लज्जानिर्मितैरङ्गसंकोचादिभिर्जितामतिलज्जितां तामिति पूर्वोक्तप्रकारेणोपालभत सोल्लुण्ठमूचे । सा भैमी यथा येन प्रकारेणाथोपालम्भनानन्तरं तमनु लक्षीकृत्य त्रप्तुमेव लज्जितुमेव त्रपामवाल्लज्जां प्राप । लज्जागुप्तिविषयेऽपि लज्जा यथा जायते तथैवमुपालब्धेत्यर्थः । मम लज्जावशादन्यथाऽस्य चेतसि स्फुरितमिति भिया लज्जां विहाय विस्रम्भेण तेन सह चिक्रीडेति भावः । इति किम्—हे भैमि, तवेयं वर्तमाना ह्रीर्युक्ता उचितैव । यद्यस्मान्मत्समागमस्तावके मनसि नवो नूतनो जातः । नवसंभोगे हि स्त्रिया लज्जा युक्तैवेत्यर्थः । तत्प्रसिद्धं विवाहात्पूर्वमप्यजस्रसंगमात्सदास्वप्नसंजातसंभोगवशान्निर्लज्जमपि मामकं मनस्तु पुनः व्रीडं लज्जामावहति धारयति यत्,सैवमनौचिती सामर्थ्याल्लभ्योऽर्थः । निर्लज्जस्य लज्जा विरोधादयुक्ता । बहुवारसंजातसंगमस्याप्यतिपरिचयालज्जा न युक्तेत्यर्थः । यद्वा—लज्जाया औचित्ये कारणान्तरमाह—तुरप्यर्थः । अजस्रसंगमान्निस्त्रपं मामकमपि मनो लज्जितां त्वां दृष्ट्वा यस्माल्लज्जते किंतु वक्तव्यं प्रथमसंभोगे ते मनो लज्जत इति व्याख्या ॥ ६३ ॥६४ ॥

बाहुवक्त्रजघनस्तनाङ्घ्रित-
द्बन्धगन्धरतसंगतानतीः ।
इच्छुरुत्सुकजने दिनेऽस्मिते
वीक्षितेति समकेति तेन सा ॥ ६५ ॥

बाह्विति ॥ तेन वीक्षिता सा भैमी इति पूर्वोक्तप्रकारेण समकेति संकेतिता । इति किम्—हे भैमि, उत्सुकाः स्वस्वकार्यसाधनोत्साहवन्तो जना यत्र रात्रिवृत्ताकर्णनार्थमुत्सुकः सखीजनो यत्रैवंविधे वा दिने दिवसेऽपि ते सम्बन्धिनीः बाहू च वक्त्रं च जघनं च स्तनौ चाङ्घ्री च तस्य बाह्वादेः कामशास्त्रप्रसिद्धा ये बन्धा नागपाशादीनि करणानि तेषां गन्धो लेशो विद्यते यत्र तादृशं रतं तेन संगता मिलिताश्च ता आनतयश्च नितरां नम्रत्वानि कौशलातिशयनिर्मितानवयवनम्रीभावान् । संगता इति पृथग्वा । नतीरिच्छुरभिलाषुकोऽस्मीति । स्मित इति भैमीसम्बोधनं वा । रात्रिकृतबन्धरतप्रत्यभिज्ञानं यथा भवति वक्षिणमात्रेणेङ्गितं कृत्वाऽनुरागातिशयादिनेऽपि स्वीयं तादृशाभिलाषं तां प्रति ज्ञापितवानिति भावः।यद्वा—बाह्वादेस्ताः प्रसिद्धाः क्रमेण बन्धश्च,गन्धश्च,रतं च,संगतं च,आनतिश्च, ताः बाह्वोर्नागपाशादिबन्धः, वक्त्रस्य गन्धः पद्मिनीत्वात्सौरभम्,जघनस्य रतम्, स्तनयोः संगतं श्लेषः, वक्त्रस्य गन्धः पत्यर्थः त्वत्संबन्धिनीस्ताः स्वस्वव्यापारकरणमात्रनिरता दुःखिता जना यत्रैवंभूते दिनेऽपि इच्छुरसीति वीक्षिता साऽनेन स्वाशयं ज्ञापितेति भावः । यद्वा—त्वां पश्यामि तदैव मर्मभं वाञ्छोदेति, त्वद्दर्शनमेव संभोगसमय इति च ज्ञापितेति भावः । 'उत्सुकसखीजनेऽस्मिते व्रीडिता' इति पाठे-रात्रिवृत्तप्रश्नवाञ्छागोपनाय

१ अत्रास्तीनामनेकार्थपरत्वेन विवक्षणाद् यमकम्' अनुप्रासश्च ।

तस्माल्लज्जा मा भूदित्यस्मिते स्मितरहित एवंविधे शातुमेवोत्सुके सखीजने सखीजनसंनिधौ पूर्वोक्तप्रकारेण सा तेन संकेतिता शब्दिता । यद्रात्रावाचरितं बाहुबन्धादि तदिदानीमिच्छुरस्मीति रात्रिवृत्तज्ञापनार्थं सखीसंनिधावेवमुवाचेत्यर्थः । अत एव सा व्रीडिता । उत्सुके सखीजने स्मिते प्रारब्धहास्ये सति व्रीडितेति वा । हे भैमि, ते बाहादिबन्धादीन् दिने वीक्षिता द्रष्टा एवंभूतोऽभिलाषुकोऽस्मि । रात्रौ यद्यपि कृताः, तथापि न दृष्टाः, तस्माद्दिने तद्दर्शनेच्छुरस्मीत्येवं सा तेन शब्दिता । न परमहमेव, किंतु त्वत्सखीजनोऽपीत्युत्सुकपदेन सूचितमिति वा । व्याख्यानान्तरं ग्रन्थगौरवभयान्नोक्तम् । नतीरित्यत्र इच्छुर्वीक्षितेत्येताभ्यां योगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः ॥ ६५ ॥

प्रातरात्मशयनाद्विनिर्यतीं
सन्निरुध्य यदसाध्यमन्यदा ।
तन्मुखार्पणमुखं सुखं भुवो
जम्भजित्क्षितिशचीमचीकरत् ॥ ६६॥

प्रातरिति ॥ भुवो जम्भजिद्भूमीन्द्रो नलः प्रातरात्मशयनादुत्थाय विनिर्यतीं शीघ्रं बहिर्निर्गन्तुकामां संनिरुध्य चेलाञ्चलादौ सम्यग्धृत्वा क्षितिशचीं भूमीन्द्राणीं सुन्दरीं सौभाग्यवतीं चान्यदाऽन्यस्मिन्काले रात्रौ प्रागेव ह्रीभयवशाद्यदसाध्यमप्राप्यं तत्तस्या मुखार्पणं मुखमादिर्यस्य तत्सुखं सुरतमचीकरत् । रात्रिप्रान्तसमये त्वं मदुक्तं चेत्करिष्यसि तर्हि दुष्करमप्राप्यं तुभ्यं दास्यामि नान्यथेति तां संनिरुध्यालिङ्गनादि कारितवान् । सा गन्तुकामाऽपि चेदेतदुक्तं न करिष्यामि, तर्ह्ययं गन्तुं न दास्यति, सखीनां चायमत्रागमनसमय इति विचार्य चुम्बनादि दत्त्वा शीघ्रं निर्गतेति भावः । सुखमनायासेनाचीकरदिति क्रियाविशेषणं वा । 'प्रभातप्रहरे पद्मिनी रन्तव्या' इति कामशास्त्रम् । क्षितिशचीमिति, 'ह्रक्रोरन्यतरस्याम् १।४।५३' इति कर्मत्वम् ॥ ६६ ॥

नायकस्य शयनादहर्मुखे
निर्गता मुदमुदीक्ष्य सुभ्रुवाम् ।

आत्मना निजनवस्मरोत्सव-
स्मारिणीयमहृणीयत स्वयम् ॥ ६७ ॥

नायकस्येति ॥ अहर्मुखे प्रातर्नायकस्य शयनान्निर्गता इयं भैमी सुभ्रुवां प्रौढानां सुन्दरीणां सख्यादीनां स्वस्वप्राणेशसुरतजनितां मुदमानन्दमुदीक्ष्यात्मनैव निजः स्वीयः नवः स्मरोत्सवः संभोगस्तस्य स्मारिणी स्मारणशीला सती स्वयमेवाहृणीयत लज्जिता । अनतिप्रौढोत्तमस्त्रीजातिः शयनान्निर्गता सखीनामोष्ठयात्रकपोलपत्रवल्लीमार्जनादि दृष्ट्वा स्वसंभोगचिह्नेन स्वस्वरूपेण कृत्वा निजनवस्मरोत्सवं सखीः स्मारयत्येवंशीला सती स्वयं ललज्जे । निजधवेत्यपि पाठः । हृणीङ् कण्ड्वादिः ॥ ६७ ॥

तां मिथोऽभिदधतीं सखीं प्रिय-
स्यात्मनश्च स निशाविचेष्टितम् ।
पार्श्वगः सुरवरातिपिधां दधद्
दृश्यतां श्रुतकथो हसन्मतः ॥ ६८ ॥

तामिति ॥ स नलस्तां भैमीं हसन् सन् दृश्यतां गतः । स्वेच्छयैव नयनगोचरत्वं प्राप्तः । किंभूताम्—प्रियस्य नलस्यात्मनः स्वस्य च स्वसखीं प्रति मिथो रहसि निशाविचेष्टितं संभोगादिरात्रिवृत्तान्तमभिदधतीं कथयन्तीम् । किंभूतः—सुराणां वरात्पिधामदृश्यत्वं दधत् । अत एव—पार्श्वगो निकटस्थः । अत एव—श्रुता भैम्याऽभिधीयमाना रात्रिवृत्तान्तकथा येन । अदृश्येन मयाऽत्रैव स्थित्वा सर्वं श्रुतमिति प्रत्यक्षो भूत्वा हसन्, न चाकथयदित्यर्थः । हसद्गत इति पाठे—श्रुतकथो दृश्यतां गतस्तामहसदित्यर्थः । पिधेति, 'आतश्चोपसर्गे ३।१।१३६' इत्यङ् ॥ ६८ ॥

चक्रदारविरहेक्षणक्षणे
बिभ्यती धवसवाय साऽभवत् ।
क्वापि वस्तुनि वदत्यनागतं
चित्तमुद्यदनिमित्तवैकृतम् ॥ ६९ ॥

चक्रेति ॥ सा भैमी चक्राणां चक्रवाकाणां दारैश्चक्रवाकीभिः सह विरहस्तस्येक्षणक्षणे दर्शनकाले संध्यायां ममापि प्रियेण सहैतद्वियोगो मा भूदिति क्षणमात्रमपि

१ अत्रानुप्रासः ।

१ अत्राप्यनुप्रासः ।

वियोगाद्बिभ्यती धवस्य नलस्य हसाय हास्यार्थमभवत् । संध्यावन्दनमात्रजन्येन वियोगेन चक्रवियोगदर्शनमात्रेण च किमिति बिभेषीत्येवं सा प्रियेण हसितेत्यर्थः । तावतैव वियोगेन तद्वियोगदर्शनमात्रेण च किमिति भीतेत्याशङ्क्याह—क्वापि कस्मिंश्चिद्वस्तुनि विषय उत्पद्यमानमनिमित्तमकारणं वैकृतं हर्षशोकभयादि यस्मिन्नेवंभूतं चित्तं कर्तृ अनागतं भाविनमर्थं शुभमशुभं वा वदति । तस्माद्भाविवियोगसूचिका साधारणी तस्या भीतिर्युक्तेत्यर्थः । भावी विरहः सूचितः । इयं ज्ञातृत्वादा मय्यनुरक्ता चेति संतोषवशात्सा तेन हसितेति भावः । बिभ्यतीं स परिरभ्य नामुचदिति पाठे—भयमोचनार्थं गाढमालिङ्गयैव तत्याजेत्यर्थः । विकृतिरेव वैकृतं, प्रज्ञादित्वादण् ॥ ६९ ॥

चुम्बितं न मुखमाचकर्ष यत्
पत्युरन्तरमृतं ववर्ष तत् ।
सा नुनोद न भुजं तदर्पितं
तेन तस्य किमभून्न तर्पितम् ॥ ७० ॥

चुम्बितमिति ॥ सा क्रमेण गतभीर्गतलज्जा च सती चुम्बितं प्रियेण चुम्बितुमारब्धं मुखं यन्नाचकर्ष न वक्रीचक्रे,तच्चुम्ब्यमानमुखानाकर्षणं कर्तृ पत्युरन्तश्चेतस्यमृतं ववर्ष । तदीयं मनः सुधावृष्ट्येव परितुष्टं चक्र इत्यर्थः । तथा—तेन स्तनादावर्पितं भुजं न नुनोद न निराचकार, तेन भुजस्वीकारेण प्रयोजकेन तस्य किमङ्गं तर्पितं नाभूदपि तु सर्वाङ्गं तेन प्रीणितमभूत् ॥ ७० ॥

नीतयोः स्तनपिधानतां तया
दातुमाप भुजयोः करं परम् ।
वीतवाहुनि ततो हृदंशुके
केवलेऽप्यथ स तत्कुचद्वये ॥ ७१ ॥

नीतयोरिति ॥ स नलस्तया भर्तृकृतपाणिपीडनभिया स्तनपिधानतां कुचाच्छादनतां नीतयोः प्रापितयोस्तदीयभुजयोः परं केवलं करं दातुं स्थापयितुं पूर्वमाप।शक्तोऽभूदित्यर्थः । ततोऽनन्तरं वीतबाहुन्यपनीतभैमीकरे हृदंशुके हृदयावरणवस्त्रे करं दातुमाप ।अथ ततोऽपि पश्चात्केवले निरंशुके तत्कुचद्वये करं दातुमाप । मुग्धाया इयं प्रकृतिः। लज्जापचयकामोपचयौ क्रमेणोक्तौ ॥ ७१ ॥

याचनान्न ददतीं नखक्षतं
तां विधाय कथयाऽन्यचेतसम् ।
वक्षसि न्यसितुमात्ततत्करः
स्वं बिभिद्य मुमुदे स तन्नखैः ॥ ७२ ॥

याचनादिति ॥ त्वमपि नखोल्लेखं कुर्विति प्रेमभरेण याचनादपि नखक्षतं न ददतीं कयाऽपि कथयाऽन्यस्मिन्गोष्ठीरस एव चेतो यस्यास्तां विचित्तां विधाय गोष्ठीसंवादमुखाभिनयव्याजेन स्ववक्षसि न्यसितुं स्थापयितुमात्तः स्वहस्तेन गृहीतस्तस्याः करो येनैवंभूतः सन् तस्याःस्वहस्तधृतहस्तनखैः स्वं स्वशरीरं विभिद्योल्लिख्य मुमुदे ॥ ७२ ॥

स प्रसह्य हृदयापवारकं
हर्तुमक्षमत सुभ्रुवो बहिः ।
ह्रीमयं तु न तदीयमान्तरं
तद्विनेतुमभवत्प्रभुः प्रभुः ॥ ७३ ॥

स इति ॥ स प्रभुः स्वामी सुभ्रुवो भैम्या बहिर्हृदयापवारकं वक्षःस्थलादिवसनं प्रसह्य हठाद्धर्तुमक्षमत।तु पुनः ह्रीमयमान्तरमन्तःस्थं भैमीसंबन्धितत्कामक्रीडानिवारकं कुलस्त्रीहृदयभूषणीभूतमपवारकमपनेतुं प्रभुः समर्थो नाभवत् । एवं विस्रम्भणक्रमेण यद्यपि लज्जां त्याजिता तथापि हृदयाच्छादिवस्त्रापाकरणपूर्वककुचस्पर्शादिना पुनरपि लज्जितैवेति भावः ॥ ७३ ॥

सा स्मरेण बलिनाऽप्यहापिता
ह्रीक्षमे भृशमशोभताऽबला ।
भाति चापि वसनं विना न तु
व्रीडधैर्यपरिवर्जनैर्जनः ॥ ७४ ॥

सेति ॥ बलिना प्रभाववता, अथ च—उद्दीप्तेनापि स्मरेण ह्रीक्षमे लज्जाधैर्ये अहापिताऽत्याजिता साऽबला स्त्री अथ च—स्त्रीत्वाद्दुर्बला भृशमशोभत । युक्तोऽयमर्थः—यतो जनो वसनं विनापि भाति च शोभत एव । तु पुनर्व्रीडधैर्ययोः परिवर्जने परित्यागेनैव शोभते तस्मा-

१ अत्राप्यनुप्रासः । २ अत्र परार्धे पादान्त्यं यमकम् ।

१ अत्र मुग्धाविहारचेष्टितानुबन्धनानां बहुविधानां क्रमेणानुरूप्येण वचनाद् यथासङ्ख्यम् । अत्रैकस्य करस्य क्रमादनेकेषु भुजांशुककुचेषु वृत्तिकथनात् 'क्रमेणैकमनेकस्मिन्' इत्याद्युक्तः पर्यायालङ्कारभेदः । २ अत्र समाधिरलङ्कारः । ३ प्रभुरिति यमकम् ।

चुक्तमर्थान्तरन्यासः । उद्दीप्तेति कामे लज्जाधैर्यापरित्यागान्नितरां नलस्य स्पृहणीयत्वाच्छुशुभ इति भावः ७४॥

आत्थ नेति रतयाचिनं न य-
न्मामतोऽनुमतवत्यसि स्फुटम् ।
इत्यमुं तदभिलापनोत्सुकं
धूनितेन शिरसा निरास सा ॥ ७५ ॥

आत्थेति ॥ सा इत्थेवं भङ्ग्या स्वनिषेधार्थमपि तस्या अभिलापने मञ्जुलवाणीश्रवण उत्सुकं कौतुकिनममुं धूनितेन कम्पितेन शिरसा कृत्वा निरास निषिषेध । इति किम्—हे भैमि, त्वं मह्यं सुरतं देहि प्रसीदेति रतयाचिनं मां यद्यस्मान्नेति न आत्थ अतो हेतोः 'अप्रतिषिद्धमनुमतं भवति' इति न्यायेन सुरतं कुर्विति मामनुमतवत्यसि अनुज्ञातवती त्वमसीति । इयं सुरतं नानुमन्यते परं मया सह न वदत्यपीत्येवं परिहासभाषणे क्रियमाणे निषेधार्थमपि किंचिद्वदिष्यतीत्याशया नलेन तद्वाचनार्थमेवं यत्ने कृतेऽपि कुशला लज्जाधैर्यवशाच्छिरोधूननेनैव तं न्यषेधत्, न तु साक्षादक्षरमप्युवाचेति भावः ॥ ७५ ॥

या शिरोविधुतिराह नेति ते
सा मया न किमियं समाकलि ।
तन्निषेधसमसङ्ख्यता विधिं
व्यक्तमेव तव वक्ति वाञ्छितम् ॥ ७६ ॥

येति ॥ हे भैमि, ते या शिरोविधुतिः शिरःकम्पः नेत्याह निषेधार्थं ब्रूते । मया सेयं किं न समाकलि न सम्यग्ज्ञाता ? अपि तु सम्यग्ज्ञातैव । कथमित्याह —तयोः शिरोविधुतियुगलरूपयोर्निषेधयोर्या समसंख्यता तुल्यता सा तव वाञ्छितं सुरतरूपं विधिं व्यक्तमेव वक्ति वदति । सुरतं तवेष्टमित्यादेत्यर्थः । द्वयोरेव निषेधयोः सुन्दोपसुन्दन्यायेनान्योन्यघातात् 'द्वौ नञौ प्रकृतमर्थं गमयतः' इति न्यायेन च सुरतं त्वया विधेयमेवेति मां प्रति विधावेव तात्पर्यमिति मया त्वदाशयो ज्ञात इति भावः । इति पुनरपि भैमीवादनार्थं वक्रोक्तिः ॥ ७६ ॥

नात्थ नात्थ शृणवानि ते न किं
तेन वाचमिति तां निगद्य सः ।

सा स्म दूत्यगतमाह तं यथा
तं जगाद मृदुभिस्तदुक्तिभिः ॥ ७७ ॥

नेति ॥ स नलः तामिति पूर्वोक्तं निगद्योक्त्वा सा दूत्यं गतं दूत्येन हेतुना वा भैमीसविधं गतं तं नलं 'तदत्र विश्रम्य वृणे—' इति यथा आह स्म ब्रूते स्म तदेव मृदुभिरतिमञ्जुलाभिस्तस्या भैम्या उक्तिभिस्तद्भाषणानुकारिणीभिः जगाद । तादृगेवानूदितवानित्यर्थः। इति किम्—हे भैमि, अहं ते वाचं न शृणवानि, तेन मदश्रवणेन हेतुना मया नाकर्णनीयमिति बुद्ध्या त्वं नात्थ नात्थ न ब्रूषे न ब्रूषे किम् त्वद्वाक्यानि मया पूर्वमेवाकर्णितानि, इदानीं तव भाषणं मया न श्रोतव्यमिति वृथैवेयं मुखमुद्रणेति त्वया वक्तव्यमित्यंवदादिति भावः । त्वं नात्थेति स्वरभङ्ग्या मा वादीरित्यर्थः । किमित्याक्षेपे वा ॥ ७७ ॥

नीविसीम्नि निविडं पुराऽरुणत्
पाणिनाऽथ शिथिलेन तत्करम् ।
सा क्रमेण ननन्नेतिवादिनी
विघ्नमाचरदमुष्य केवलम् ॥ ७८ ॥

नीवीति ॥ सा पुरा प्रथमसंभोगारम्भे नीविसीम्नि वर्तमानं तस्य करं स्वपाणिना निविडमतिगाढं यथा तथाऽरुणत् । अथानन्तरं क्रमेण भयभङ्गानन्तरं दिनान्तरे नितम्बजघनस्पर्शकारिणं नलकरं शिथिलेन पाणिना रुरोध । ततोऽपि लज्जाविजयानन्तरं न न नेतिवादिनी सती अमुष्य नलकरस्य नलस्यैव वा केवलं विघ्नमाचरत् । ननन्नेत्युक्ते यदि न निवर्तेत, तर्हि मा निवृतत्, वदामि तावदेवमिति वचोमात्रेण विघ्नमाचरत्, न तु कर्मणेति भावः । मुग्धायाः प्रकृतिरियम् । भयलज्जात्यागः सूचितः ॥ ७८ ॥

रूपवेषवसनाङ्गवासना-
भूषणादिषु पृथग्विदग्धताम् ।
साऽन्यदिव्ययुवतिभ्रमक्षमां
नित्यमेत्य तमगान्नवा नवा ॥७९॥

रूपेति ॥ सा रूपेषु देववरदानात् कायधारणानिर्मितेषु सौन्दर्यविशेषेषु, वेषेषु महाराष्ट्रलाटगुर्जरादिस्त्रीधृतवस्त्रालंकारादिश्रृङ्गारभङ्गीषु, वसनेषु नीलपीतदुकूलादिव-

---

१ अत्र स्वभावोक्तिः ।

१ अत्रैकस्मिन्नीविदेशे क्रमेणानेकव्यापारोक्तेः पर्यायः ।

त्रेषु, अङ्गवासनानु चन्दनकस्तूरीकर्पूराद्यङ्गरागैरगुरुचन्दनादिधूपैश्च कृतेषु देहामोदेषु भूषणेषु सौवर्णेषु मुक्तामाणिक्यहीरकादिखचितेष्वलंकारेषु, तदादिषु च भापान्तरेषु विषये पृथक् प्रत्येकं प्रतिदिनमन्यत्या दिव्ययुवते रम्भादिस्वर्गस्त्रिया भ्रमे क्षमां समर्थां रम्भेयमेवेत्यादिभ्रान्तिकारिणीं विदग्धतां चातुरीमेत्य प्राप्यात एव नवा नवा नूतना नूतना सती नित्यं तमगात् । संबुभुज इत्यर्थः । अन्वहमन्यैवेयमिति तस्य चेतसि स्फुरितेत्यर्थः । वा इवार्थः । नित्यं नवेव नागात्, अपि तु नवीनेव जगामेति काकुर्वा । अन्वहं नूतनत्वादनुरागातिशयादन्यावरोधाङ्गनासंभोगविमुखो नलो जात इति भावः । 'क्षमा' इति पाठे—भैमीविशेषणम् ॥ ७९ ॥

इङ्गितेन निजरागनीरधिं
संविभाव्य चटुभिर्गुणज्ञताम् ।
भक्ततां च परिचर्ययानिशं
साऽधिकाऽधिकवशं व्यधत्त तम् ॥ ८० ॥

इङ्गितेनेति ॥ सा अधिका सर्वगुणैरुत्कृष्टा चतुरा च तमधिकमातितरां वशमात्मन्यनुरागिणं व्यधत्त चकार । किंचित्प्रौढाऽभूदित्यर्थः । किं कृत्वा—इङ्गितेन सख्यादिषु भर्तृगुणवर्णनपूर्वं भाषणम्, तद्दोषापलापः, पश्चादाभिमुख्येन शयनम्, पूर्वमुत्थानम्, आगमने तुष्टिः, प्रवासे वैमनस्यम्, सदा समसुखदुःखता, इत्याद्यनुरागद्योतकेन चेष्टितेन निजम् अगाधत्वादनुरागमेव नीरधिं[1] नलं संविभाव्य सम्यग्ज्ञापयित्वा, तथा—चटुभिः 'भवादृशोऽतिसुन्दरोऽतितेजस्वी वदान्यः सर्वकलाकुशलः कः, अपि तु—न कोऽपि' इत्यादिप्रियभाषणैर्गुणज्ञतां च स्वीयगुणग्राहित्वं वैदग्ध्यं च ज्ञापयित्वा, तथा—अनिशं सर्वदा परिचर्यया चरणादिसंवाहनतालवृन्तचालनादिरूपया सेवया निजां भक्ततां भक्तियुक्ततां च ज्ञापयित्वा । आनिशं निशामभिव्याप्य मर्यादीकृत्य । अहोरात्रमित्यर्थं इति वा ॥ ८० ॥

सुस्मितेन परिशोभितास्यया
स्वस्वरस्य लघुतां दधानया ।
सङ्गमे प्रकटितप्रमोदया
प्रेयसो हृदयमेतया हृतम् ॥ ८१ ॥

सुस्मितेनेति ॥ सुस्मितेन मन्दहासेन परितः नितान्तं शोभितं मदनोद्रेकवर्धकत्वेन विहितशोभम् आस्यं मुखं यस्यास्तया स्वस्वरस्य स्वोच्चारणस्य लघुतां मन्दतां दधानया मधुरभाषिण्येति भावः । सङ्गमे प्रियसङ्गमावसरे प्रकटितः प्रमोदः यया तथाभूतया एतया दमयन्त्या प्रेयसः प्रियतमस्य नलस्य हृदयं मनः हृतम् वशीकृतमित्यर्थः ॥ ८१ ॥

स्वाङ्गमर्पयितुमेत्य वामतां
रोपितं प्रियमथानुनीय सा
आतदीयहठसम्बुभुक्षुतं
नान्वमन्यत पुनस्तमर्थिनम् ॥ ८२ ॥

स्वाङ्गमिति ॥ सा संभोगार्थिने नलाय स्वाङ्गं स्तनादिकं निजमङ्गमर्पयितुं दातुं किंचिद्वामतां प्रातिकूल्यमेत्य किंचिदङ्गमदत्त्वा, अथानन्तरं तेनैव व्यापारेण रोषितमुत्पादितरोषमौदासीन्यं प्राप्तं प्रियं नलं चुम्बनालिङ्गनाचरणपतनादिनाऽनुनीय प्रसादानन्तरमियं मां प्रसादयति चेत्तर्हि मदीप्सितं करिष्यतीति बुद्ध्या पुनरर्थिनं तदङ्गं याचमानं तं तदीयां नलीयां हठाद्बलात्कारेण संबुभुक्षुतां संभोगेच्छुताम् आ मर्यादीकृत्य नान्वमन्यत तावन्नानुमेने । पूर्वं याच्ञापूर्वं संभोगे प्रवृत्तः, अनन्तरं तदीयवामत्वाद्रोषवशादौदासीन्यं गतः इयन्तरं प्रति गमिष्यतीति बुद्ध्या तयाऽनन्तरमनुनीतः सन् पुनरर्थयमानोऽपि यावद्बलात्संभोगं करोति तावन्नानुमतः, अनन्तरं त्वनुमत इत्यर्थः । याच्ञानन्तरमेवानुमनने तादृशोऽनुरागो न वर्धते । तदीयमनुरागमात्मनि परां कोटिं प्रापयितुं हठसंभोगमेवैच्छीदिति भावः । अनुनयानन्तरं संभोगे कृतेऽप्यनुरागातिशयात्पुनः सुरतामिलाषिणं नानुमेन इति पुनःशब्दार्थो वा । रोषितं, ण्यन्तान्निष्ठा । आतदीयेत्यादि, मर्यादायामव्ययीभावो नपुंसकत्वाद्ह्रस्वत्वं च ॥ ८२ ॥

आद्यसंगमसमादराण्यधाद्
वल्लभाय ददती कथंचन ।
अङ्गकानि वनमानवामता-
व्रीडलम्भितदुरापतानि सा ॥ ८३ ॥

आद्येति ॥ सा अङ्गकानि ह्रस्वानि सौकुमार्यातिशयादनुकम्प्यानि निजान्यङ्गान्याद्यसंगमेन प्रथमसंभोगेन समस्तुल्य आदरः प्राप्त्युपायासक्तिर्येषु प्रथमसंभोगे भय-

[1] रागस्य नीरधित्वेन रूपणाद् रूपकम् ।

लज्जात्यागपूर्वं विश्वासार्थं यावान् प्रतारणाद्युपायः कृतः तावानेव पाश्चात्येष्वपि संभोगेषु यत्प्राप्तये नलेनोपायः कृतः, तादृशीं नीतिं यावदधाद्धार। यतः—वल्लभाय प्रेयसे नलाय कथंचन भूयसा प्रयासेन तान्येव ददती। तत्रापि हेतुः—यतः—घनैर्दढैर्मानवामताव्रीडैः मानः प्रीतिकलहजोदासीनता, वामता स्वाङ्गसमर्पणप्रातिकूल्यम्, व्रीडा लज्जा, तैः घनेन मानेन या वामता तया लज्जया च, लम्भिता प्रापिता दुरापता दुर्लभता येषां तानि। आदौ विवाहात्पूर्वं यः संगमस्तात्कालिकेनादरेण तुल्यादराणीति वा। मानादिना तदङ्गानां दुष्प्रापत्वादिच्छाविवृद्धेर्नलीयोऽनुरागः प्रत्यहं परां कोटिमध्यारोहदिति भावः। अङ्गकानि, 'ह्रस्वे ५।३।८६' 'अनुकम्पायाम् ५।३।७६' इति वा कन्। वामतायुक्तो व्रीड इति समासः॥ ८३॥

**पत्युरागिरिशमातरु क्रमात्**
**स्वस्य चागिरिजमालतं वपुः।**
**तस्य चार्हमखिलं पतिव्रता**
**क्रीडति स्म तपसा विधाय सा॥८४॥**

पत्युरिति॥ सा पतिव्रता धर्मेण कार्ये कारणोपचारात्तपसा तपःफलेनेन्द्रादिवरदानेन वा पत्युर्नलस्य वपुरागिरिशं हरमारभ्य आतरु वृक्षपर्यन्तं, तरुमारभ्य गिरिशपर्यन्तं वा तं, तथा—स्वस्य चात्मनः शरीरमागिरिजं गिरिजां पार्वतीमारभ्य आलतं लतापर्यन्तम्, लतामारभ्य पार्वतीपर्यन्तं वारोहावरोहक्रमेण प्रथमं प्रियस्य, पश्चादात्मन इत्येवंरूपेण, गिरिशरूपे गिरिजारूपं, तरुरूपे लतारूपमित्येवं वा क्रमेण विधाय तत्तद्रूपं विरचय्य तस्यावलम्बितशरीरान्तरस्य संबन्ध्यखिलं यद्वापादि क्रीडादि चार्हं योग्यं तदपि विधाय क्रीडति स्म। यतः—पतिव्रता। नहि पतिव्रतानां किंचिदसाध्यमस्ति। चोऽवधारणे। अखिलं भाषावेषादि तस्यैवार्हं यथा तथा रेमे इति वा॥ ८४॥

**न स्थली न जलधिर्न काननं**
**नाद्रिभूर्न विषयो न विष्टपम्[1]।**
**क्रीडिता न सह यत्र तेन सा**
**सा विधैव न यया यया न वा॥८५॥**

1 'विष्टपं भुवनं जगत्।' इत्यमरः।

नेति॥ सा तेन सह यत्र न क्रीडिता सम्भोगं नाकृत सा स्थली अकृत्रिमा भूरेव नास्ति। तथा—जलधिः कूपमारभ्य समुद्रपर्यन्तं स जलाशयो नास्ति। तथा—काननं तद्दुर्गमं वनं नास्ति। साऽद्रिभूर्नास्ति। स विषयः कर्णाटादिरूपो देशविशेष एव सुखहेतुः लक्ष्मन्दनादिर्वा नास्ति। तद्विष्टपं भूर्भुवःस्वराद्येव नास्ति। यस्यां यासिन्दा तेन सह न चिक्रीडेति प्रत्येकं योज्यम्। वा समुच्चये। तथा—सा विधैव पुरुषायितादिरूपः कामशास्त्रोक्तः प्रकार एव नास्ति। यया यया येन येन प्रकारेण सा न क्रीडिता। जलान्तः सम्भोगनिषेधे पूर्वश्लोके नानारूपधारणोक्तेर्मत्स्यादिरूपत्वान्निषेधो न मनुष्याधिकारत्वाच्छास्त्रस्येति ज्ञेयम्। क्रीडिता, 'गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च ३।४।७२' इति कर्तरि निष्ठा॥ ८५॥

**नम्रयांशुकविकर्षिणि प्रिये**
**वक्त्रवातहतदीप्रदीपया[1]।**
**भर्तृमौलिमणिदीपितास्तया**
**विस्मयेन ककुभो[2] निभालिताः॥ ८६॥**

नम्रयेति॥ प्रियेंऽशुकविकर्षिणि सति लज्जावशाद् गुह्यावयवानवलोकनार्थं नम्रया, अत एव वक्त्रवातेन निर्वापितो दीप्तः इतो प्रकाशमानो दीपो यया तया भर्तृमौलौ मणयो मुकुटरत्नानि तैर्दीपिताः प्रकाशिताः ककुभो दिशः विस्मयेन निर्वापितेऽपि दीपे कथमयं प्रकाश इत्याश्चर्येण निभालिता विलोकिताः। रत्नप्रकाशाज्ञानाद्विस्मयः, रत्नप्रभातिशयाद्वा॥ ८६॥

**कान्तमूर्ध्नि दधती पिधित्सया**
**तन्मणेः श्रवणपूरमुत्पलम्।**
**रन्तुमर्चनमिवाचरत्पुरः**
**सा स्ववल्लभतनोर्मनोभुवः॥ ८७॥**

कान्तेति॥ तस्य पूर्वोक्तस्य दिक्षु दीप्तस्य मुकुटमणेः पिधित्सया आच्छादितुमिच्छया श्रवणपूरं कर्णभूषणीकृतं नीलोत्पलं कान्तमूर्ध्नि दधती स्थापयन्ती वा रन्तुं स्ववल्लभस्यैव तनुः शरीरं यस्य नलदेहव्याजं धारयतो मनोभुवः पुर आदौ सुरतारम्भेऽर्चनमिवाचरत्पूजामिव

1 मुखस्य मारुतेनेत्यर्थः। 2 'दिशस्तु ककुभः काष्ठाः' इत्यमरः।

चकार । पुष्पपूजा शिरसि कर्तुमुचिता । सुरतारम्भे च स्मरः समुचितो देवतेति तत्पूजा युक्ता । प्रकाशाभावार्थं कर्णोत्पलेन मुकुटमणिं पिदधाविति भावः ॥ ८७ ॥

तं पिधाय मुदिताऽथ पार्श्वयो-
वीक्ष्य दीपमुभयत्र सा स्वयोः ।
चित्तमाप कुतुकाद्भुतत्रपाऽऽ-
तङ्कसंकटनिवेशितस्मरम् ॥ ८८ ॥

तमिति ॥ सा तं नलीयं मुकुटमणिं पिधाय कर्णोत्पलेनाच्छाद्य मुदिता सती अथ पश्चात्स्वयोर्निजयोरुभयत्र द्वयोर्वामदक्षिणयोः पार्श्वयोर्दीपं वीक्ष्यार्थाद् द्वौ दीपौ दृष्ट्वा स्वं चित्तमघटमानघटनात्कुतुकं तद्दर्शनजातमाः किमेतदिति चमत्करणमद्भुतमाश्चर्यं, लज्जा त्रपा, आकस्मिकदीपदर्शनादातङ्को भयं गोप्यान्यपि मदीयाङ्गानि प्रियेण दृष्टानीति शङ्कातिशये वातङ्कः, तेषां संकटे संमर्दे मध्ये निवेशितः स्मरो यत्र तदेवंभूतमाप । विशेषणविधौ तात्पर्यम् । दीपौ दृष्ट्वा कौतुकादिसहिताऽभूदिति भावः ॥ ८८ ॥

एककस्य शमने परं पुन-
र्जाग्रतं शमितमप्यवेक्ष्य तम् ।
जातवह्निवरसंस्मृतिः शिरः
सा विधूय निमिमील केवलम् ॥ ८९ ॥

एककस्येति ॥ द्वयोर्दीपयोर्मध्य एककस्य दीपस्य मुखचेलाञ्चलादिना शमने निर्वाणे क्रियमाणे सति पूर्वशमितमपि तं द्वितीयं दीपं नलेच्छामात्रेण पुनरपि जाग्रतं प्रदीप्तमवेक्ष्य जाता वह्निवरसंस्मृतिर्यस्याः सा स्मरणाभिनयवशाद्वा शिरो विधूय केवलं निमिमील निमीलितवती । लज्जाभिनयः । कौतुकवशात्तदीयगोप्यावयवविलोकनार्थं तस्या निरुपायत्वार्थं पुनः पुनः शमितानपि दीपानिच्छामात्रेणाजिज्वलदिति भावः । एकस्य शमने कृतेऽपरदीपं जाग्रतं दृष्ट्वा शमितमपि पुनर्जाग्रतं दृष्ट्वेति व्याख्येयम् । एककः पूर्ववत् ॥ ८९ ॥

पश्य भीरु न मयाऽपि दृश्यसे
यन्निमीलितवती दृशावसि ।
इत्यनेन परिहस्य सा तमः
संविधाय समभोजि लज्जिता ॥ ९० ॥

पश्येति ॥ अनेनेति परिहस्य सोपहासमुक्त्वा तदीयलज्जापाकरणार्थं दीपाभावेच्छामात्रेण तमः संविधायान्धकारं निर्माय सा समभोजि सम्भुक्ता । ततो लज्जिता । इति किम्—हे भीरु लज्जाभयकातरे, यद्यस्मात्त्वं दृशौ निमीलितवत्यसि तस्मात्त्वं मयाऽपि न दृश्यसे पश्य नेत्रनिमीलनात्त्वया यथा स्वीयमङ्गं न निरीक्ष्यते, तथा मयाऽपि त्वदङ्गमित्यर्थः । अथ च—त्वया नेत्रे निमीलिते, मया तु त्वं न दृश्यसे चित्रमेतत् । यस्मान्मया न द्रक्ष्यमिति हेतोस्त्वया नेत्रे निमीलिते, तावतैव मया न दृश्यसे, अपि तु दृश्यस एव । अन्या हि गोप्यमङ्गं वस्त्रादिनाऽऽच्छादयति, त्वया तु नेत्रे एव निमीलिते । तथा च मया त्वदीयं गोप्यमङ्गं कामं दृष्टमेवेति किं नेत्रनिमीलनेन पश्येति । अमुना नलेन लज्जिता सा तमः सम्यग्विधायानन्तरं चैवं परिहासपूर्वमुक्ता । भीरु, ऊरूत्तरपदादौपम्ये—इत्यूङ् । ह्रस्वः । तत्सामर्थ्यात्र गुणः ॥ ९० ॥

अथ युग्मम् ।

चुम्ब्यसेऽयमयमङ्क्यसे नखैः
श्लिष्यसेऽयमयमर्प्यसे हृदि ।
नो पुनर्न करवाणि ते गिरं
हुं त्यज त्यज तवास्मि किंकरा ॥ ९१ ॥
इत्यलीकरतकातरा प्रियं
विप्रलभ्य सुरते ह्रियं च सा ।
चुम्बनादि विततार मायिनी
किं विदग्धमनसामगोचरः ॥ ९२ ॥

चुम्ब्यसे इति ॥ इतीति ॥ हे प्रिय, मयाऽयं त्वं चुम्ब्यसे, अयं त्वं नखैरङ्क्यसे चिह्नयसे, अयं त्वं श्लिष्यस आलिङ्ग्यसे, अयं त्वं हृदि अर्प्यसे हृदयोपरि धार्यसे । ते तव पुनरहं गिरं नो करवाणीति न, अपि तु करोम्येव । यत्त्वया चुम्बनादि याचितं तत्सर्वं करोम्येव । यत इत्यर्थः । हुमिति सुरतसंमर्दासहत्वेन पूत्कारमित्यर्थः । त्यज त्यज इति पीडानटने । मुञ्च मुञ्च मामित्यर्थः । अहं तव किंकरास्मीति दैन्यनटने । इत्येवंप्रकारेणालीकरते मिथ्यैव सुरते कातरा भीरुः सुरते विषये बलात्कारभीता सती आत्मानं यथाकथंचिन्मोचयितुमेवेयं वदति, न तु हेलयेति । यथा—अद्यापीयमप्रौढेति प्रियं विप्रलभ्य प्रतार्य एतादृशीं वृथाबुद्धिं तस्योत्पाद्य तथा ह्रियमपि प्रतार्य मामियमद्यापि न मुञ्चति । बलात्कार-

भयाच्चुम्बनादि करोति, न तु स्वेच्छयेति लज्जात्यागमप्यप्रकटीकृत्य चुम्बनादि पूर्वोक्तं सकलमपि सुरतसंभारं प्रौढतयैव वितताार प्रियाय ददौ। यतो मायिनी मायावती उक्तप्रकारेण कपटेनाच्छादितनिजकामोन्मादप्रौढिरीति यावत्। यस्मात्—विदग्धं व्यवहारचतुरं मनो येषां मानवानां किं वस्तु अगोचरो विषयो न भवति, अपि तु—सर्वमपि साध्यमेव। चतुरा हि असाध्यमपि साधयन्ति। अलीकतरकातरेति पाठे—अलीकतरं कातरेति समासः।'त्यजत्यज' वीप्सायां द्विरुक्तिः। किंकरेति'दिवाविभा--३।२।२१'इति टच्प्राप्तावपि 'किंयत्तद्बहुषु कृञोऽज्विधानम्' इति वार्तिकेणाच् ततष्टाप् ॥ ९२ ॥

**स्वेप्सितोद्गमितमात्रलुप्तया**
**दीपिकाचपलया तमोघने।**
**निर्विशङ्करतजन्मतन्मुखा-**
**ऽऽकूतदर्शनसुखान्यभुङ्क्त सः ॥९३॥**

स्वेति ॥ स तमसा घने तस्मिन् सौधे, अथ च तमस्तुल्ये घने मेघे तमोरूपे मेघे स्वेप्सितेन स्वेच्छामात्रेणोद्गमितमात्रा प्रकाशिता चासौ तदानीमेव लुप्ता शमिता च, तथा–दीपिकयैव चपलया विद्युता दृष्टनष्टया निर्विशङ्कं यद्रतं तस्माज्जन्म येषां तानि च तानि तस्या मुखाकूतानि वदनेङ्गितानि तेषां दर्शनानि तज्जन्यानि सुखान्यभुङ्क्तान्वभूत्। अन्धकारवशाद्भैमी स्वेच्छाविरचितमुखाकूतदर्शनसुखानुभवार्थं वह्निवरदानवशात्तदानीमेव दीपिकां प्रकाशितवान् तदानीमेव च लज्जावती स्यादिति भिया पुनस्तां शमितवानिति भावः। विद्युदप्येवंभूता भवति। लुप्तेत्यन्तर्भावितण्यर्थे ञ्चेः ॥ ९३ ॥

**यद्भ्रुवौ कुटिलिते तया रते**
**मन्मथेन तदनामि कार्मुकम्।**
**यत्तु हुंहुमिति सा तदा व्यधा-**
**त्तत्स्मरस्य शरमुक्तिहुंकृतम् ॥ ९४ ॥**

यदिति ॥ तया रते भ्रुवौ कुटिलिते वक्रिते इति यत्, तन्मन्मथेन कार्मुकमेवानामि। यत्तु पुनः सा तदा सुरतसमये सुरतसंमर्दनिःसहतावारणव्याजेन हुंहुमिति रतिकूजितशब्दं व्यधात्, तत्स्मरस्य शरमुक्तिहुंकृतं बाणमोचनकालिकं हुंकारमेवाकृत हुंकार एवाभूत्। तस्या हुंकरणं कामस्य चापनमनमित्यर्थः। कामस्य वामत्वाद् भ्रूवक्रणादिना कामः पुनरुज्जृम्भित एवाभूदिति भावः ॥ ९४ ॥

**इङ्गितोपदिशतीव नर्तितुं**
**तत्क्षणोदितमुदं मनोभुवम्।**
**कान्तदन्तपरिपीडिताधरा**
**पाणिधूननमियं वितन्वती ॥ ९५ ॥**

इङ्गितेति ॥ चुम्बनरसात्कान्तदन्तैः परिपीडिताधरा दष्टाधरा, अत एव—पाणिधूननं वितन्वती इयं तत्क्षणे सुरतसमये उदितमुदं संजातहर्षं मनोभुवं नर्तितुमुपदिशतीव नृत्यं शिक्षयन्तीव प्रियेणेक्षिता। यापि नृत्यं शिक्षयति सापि हस्तकाभिनयवशात्करकम्पनं करोति। उपदिशती, 'आच्छीनद्योर्नुम् ७।१।८०' इति पाक्षिकत्वान्नुमभावः ॥ ९५ ॥

**सा शशाक परिरम्भदायिनी**
**गाहितुं बृहदुरः प्रियस्य न।**
**चक्षमे च स न भङ्गुरभ्रुव-**
**स्तुङ्गपीनकुचदूरतां गतम् ॥ ९६ ॥**

सेति ॥ परिरम्भदायिनी सा प्रियस्य बृहदुरो गाहितुं सामस्त्येन स्प्रष्टुं न शशाक। यतो बृहदतिविशालम्। सा च कृशाङ्गीत्यर्थः। स च नलोऽपि भङ्गुरे भ्रुवौ यस्यास्तस्या वक्षः सर्वमपि स्प्रष्टुं न चक्षमे। यतः—तुङ्गाभ्यां पीनाभ्यां कुचाभ्यां दूरतां व्यवहिततां गतं प्राप्तम्। कुचमात्रमेवालिङ्गितम्, न तु सर्वं वक्ष इत्यर्थः। उभावपि संपूर्णालिङ्गनाप्राप्तेर्नितरां सस्पृहत्वादुज्जृम्भितकामौ जाताविति भावः ॥ ९६ ॥

**बाहुवल्लिपरिरम्भमण्डली**
**या परस्परमपीडयत्तयोः।**
**आस्त हेमनलिनीमृणालजः**
**पाश एव हृदयेशयस्य सः ॥ ९७ ॥**

बाह्विति ॥ तयोर्बाहव एव दैर्घ्यकार्श्याभ्यां वल्लयो लतातुल्यास्तासां परिरम्भ आलिङ्गनविषये या मण्डली

---

१ अत्र किमित्यादिना प्रागुक्तसमर्थनादर्थान्तरन्यासः। २ अत्र दीपिकाचपलयेति तमोघन इति च रूपकम्।

१ अत्रापि हुंहुमित्यस्य शरमुक्तिहुङ्कृतित्वेन रूपणाद्रूपकम्। २ अत्रोत्प्रेक्षा स्वभावोक्तिरनुप्रासश्च।

वृत्ताकाराङ्कपाली परस्परमपीडयद्गाढमालिङ्गत्। स हृदयेशयस्य कामस्य हेमनलिनीमृणालजातस्तेन निर्मितः पाश एव आस्त बभूव। अतिगौरत्वान्मार्दववत्त्वाच्च बाहूनां सौवर्णमृणालतुल्यत्वम्। पाशबद्धो यथा वश्यो भवति, तथाऽङ्कपालीपाशेन दृढं बद्धौ कामवशं यातावितिं भावः॥ ९७॥

वल्लभेन परिरम्भपीडितौ
प्रेयसीहृदि कुचाववापतुः।
केलतीमदनयोरुपाश्रये
तत्र वृत्तमिलितोपधानताम्॥ ९८॥

वल्लभेनेति॥ प्रेयसीहृदि वल्लभेन परिरम्भपीडितौ गाढालिङ्गनेन वामनीकृतौ कुचौ केलतीमदनयो रतिकामयोरुपाश्रये विश्रान्तिस्थाने तत्र वक्षसि वृत्तमिलितोपधानतां वर्तुलसंगतोच्छीर्षकभावमवापतुः। प्रभोर्हि विश्रान्तिस्थाने शय्यादौ गण्डोपधानं वृत्तमुच्छीर्षकं भवति, रतिकामौ च प्रभू तत्र वर्तेते, अतस्तत्रैव वर्तमानौ, वृत्तौ वामनीभूतौ कुचौ द्वयोरुच्छीर्षके इव बभूवतुरित्यर्थः। इत्युत्प्रेक्षा। केलती रतिपर्यायः॥ ९८॥

भीमजोरुयुगलं नलार्पितैः
पाणिजस्य मृदुभिः पदैर्बभौ।
तत्प्रशस्तिरतिकामयोर्जय-
स्तम्भयुग्ममिव शातकुम्भजम्॥ ९९॥

भीमजेति॥ भीमजोरुयुगलं नलार्पितैर्मृदुभिः पाणिजस्य नखस्य पदैः स्तोकत्वङ्मात्रोल्लेखिभिर्नखक्षतैः कृत्वा रतिकामयोः शातकुम्भजं सौवर्णं तयोर्यशःप्रशस्तिर्लिपिरूपा यत्र, सैव नखक्षतरूपैव यशःप्रशस्तिर्यत्रैवंभूतं वा, निजजयप्रकाशकं स्तम्भयुग्ममिव बभौ। रतिकामयोरियमेव यशःप्रशस्तिर्यन्नखक्षतादिकरणं नाम। सुवर्णतुल्यत्वादूर्वोः सुवर्णस्तम्भत्वम्। अन्यस्यापि प्रभोर्यशःप्रशस्तिर्जयस्तम्भे लिख्यते॥ ९९॥

वह्निमानि विधिनाऽपि तावकं
नाभिमूरुयुगमन्तराङ्गऽकम्।

१ अत्र बाहुवल्लीति रूपकम्, यत्पदवाच्यायाः परिरम्भमण्डल्या हृदयेशयस्य पाशत्वेन रूपणाद् रूपकम्। २ अत्र कुचयोरुपधानतां प्रत्यवातत्वेन वचनाद्रूपकम्। ३ स्तम्भयुग्ममिवेत्युत्प्रेक्षा।

स व्यधादधिकैवर्णकैरिदं
काञ्चनैर्यदिति तां पुराऽऽह सः॥ १००॥

वह्निति॥ स तां पुरस्ताद् अवोचत्। इति किम्—हे भैमि, नाभिमूरुद्वयमन्तरा नाभ्यूरुयुगमध्येऽङ्गकं कोमलताऽतिशयान्मर्दनासहतयाऽल्पं ह्रस्वं वा मदनसदनाख्यं तावकमङ्गं न केवलं मया, किंतु वीतरागेण विधिना ब्रह्मणाऽपि बहु नितराममान्यादृतम्। यद्यस्मात्कारणात्स ब्रह्माऽधिको वर्णो येषां तैरतिगौरवर्णैरत्युत्तमैः काञ्चनैरिदं कामगृहं व्यधादकृत। निरंतरावृतत्वादुष्णशीतवातादिसंबन्धाभावादलोमत्वाच्चाङ्गान्तरापेक्षयाऽधिकवर्णं वराङ्गं दृष्ट्वा, प्रदीप्तकामः सन्नेवमुवाचेत्यर्थः। अश्लीलमप्येतन्मैथुनादन्यत्र निषेधाद्राज्ञदर्शनं युक्तमिति ज्ञेयम्। नाभिमित्यादौ, 'अन्तरान्तरेण युक्ते २।३।४' इति द्वितीया।अङ्गकम्, 'अल्पे५।३।८५''ह्रस्वे ५।३।८६' इति वा कन्। पुराहेति भूते 'पुरि लुङ् चास्मे ३।२।१२२' इति लट्॥ १००॥

पीडनाय मृदुनी विगाह्यतौ
कान्तपाणिनलिने स्पृहावती।
तत्कुचौ कलशपीननिष्ठुरौ
हारहासविहते वितेनतुः॥ १०१॥

पीडनायेति॥कलशवत्पीनौ पीवरौ निष्ठुरौ कठिनौ च तावतिप्रसिद्धगुणौ तस्याः कुचौ कर्तृभूतौ कान्तस्य पाणिनलिने करकमले कर्मभूते हारस्य हासः प्रकाशस्तेन विहते आच्छादिते वितेनतुश्चक्रतुः। स्पृशन्तावपि नलकरौ हारदीप्त्या पिहितावित्यर्थः। अथवा हार एव हासस्तेन पराभूते कृतोपहासे चक्रतुः। यतो—विगाह्य तावेवाभितः स्पृष्ट्वा पीडनाय मर्दनाय स्पृहावती साभिलाषे धृतेच्छे। यतो—मृदुनी मर्दयितुमसमर्थौ। स्वयं मृदुर्हि महतः कठिनस्य च पीडनाय न प्रभवतीति मृदुभ्यां युवाभ्यां विशालौ कठिनौ चावां मर्दयितुमशक्यावितीयं वाञ्छा वृथा धार्यते स्वपरतारतम्यं न ज्ञायते भवद्भ्यामिति तत्कुचाभ्यां नलकरौ हारहासेन विडम्बितावित्यर्थः। सर्वतः स्पृष्टावेव, न तु पीडिताविति भावः। 'अकर्मकठिनौ हस्तौ—' इति लक्षणात्काठिन्यमेव राजकरस्य गुणः; तथापि नलिनरूपणात्कठिनत्वेऽपि कुचापेक्षया मार्दवान्मृदुनी इत्युक्तम्। पीडनाय स्पृहावती ते

मृदुनी विशेषेण ज्ञात्वा हासविहृते चक्रतुरिति वा । अन्योऽपि निष्ठुरो मृदुमुपहसतीति ॥ १०१ ॥

यौ कुरङ्गमदकुङ्कुमाञ्चितौ
नीललोहितरुचौ वधूकुचौ ।
स प्रियोरसि तयोः स्वयंभुवो-
राचचार नखकिंशुकार्चनम् ॥ १०२ ॥

याविति ॥ यौ वधूकुचौ कुरङ्गमदेन कस्तूर्या कुङ्कुमेन चाञ्चितौ पूजितौ कृतविलेपनावत एव क्रमेण नीला लोहिता च रुक्कान्तिर्ययोः,अथ च—नीललोहितो हरस्तत्कान्ती एवंभूतौ स नलस्तयोर्यौवनारम्भे प्रियोरसि भैमीवक्षसि स्वयमेव भवतोः प्रादुर्भवतो रक्ततीक्ष्णाग्रत्वान्नखैरेव किंशुकैः पलाशपुष्पैरर्चनं पूजामाचचार । कृताङ्गरागयोः कुचयोर्नखपदानि रचितवानित्यर्थः । अल्पनखोल्लेखस्य व्यथाराहित्येन शोभामात्रहेतुत्वापादनामिवेत्युत्प्रेक्षा । कस्तूर्या अभ्यर्हितत्वात्पूर्वनिपातः ॥ १०२ ॥

अम्बुधेः कियदनुत्थितं विधुं
स्वानुबिम्बमिलितं व्यडम्बयत् ।
चुम्बदम्बुजमुखीमुखन्तदा
नैषधस्य वदनेन्दुमण्डलम् ॥ १०३ ॥

अम्बुधेरिति ॥ सुरतावसरेऽम्बुजमुख्या भैम्या मुखं चुम्बद्वदन्नैषधस्य वदनेन्दुमण्डलं कर्तृ प्रतिदिनमुदयसमयेऽम्बुधेः समुद्रात्कियत्स्तोकमनुत्थितम्, तथा—समुद्रजले जातेन स्वानुबिम्बेनात्मीयप्रतिबिम्बेन मिलितं निरन्तरसंबद्धं विधुं चन्द्रं व्यडम्बयदनुचकार । भैमीमुखं कर्तृ नलमुखं कर्मीभूतं चुम्बदिति वा । अनेन विपरीतरतं सूचितम् । बिम्बप्रतिबिम्बभावनिरूपणेनात्यन्तं तन्मुखयोः सादृश्यं सूचितम् । कामसुहृच्चन्द्रोदयनिरूपणाच्च कामोज्जृम्भणं व्यज्यते ॥ १०३ ॥

पूगभागबहुताकषायितै-
र्वासितैरुदयभास्करेण तौ ।
चक्रतुर्निधुवनेऽधरामृतै-
स्तत्र साधु मधुपानविभ्रमम् ॥ १०४ ॥

पूगेति ॥ पूगफलफालिकानां भागोऽशस्तस्य बहुतया कषायितैस्तुवररसं प्रापितैः, 'कषायः सुरभावपि—' इत्यभिधानात्सुरभितैर्वा । तथा पक्केनोदयभास्कराख्येन ताम्बूलमध्ये गृहीतेन कर्पूरेण वासितैः सुरभितैरन्योन्याधरामृतैर्वा, अधररसैरेवामृतैः कृत्वा तौ दमयन्तीनलौ तत्र निधुवने सुरते मधुपानस्य विभ्रमं मद्यपानरूपं विलासं साधु सम्यग्यथा तथा अथ च—मद्यपानजन्यं विभ्रमं चक्रतुः । मद्यपानस्थानेऽन्योन्याधरपानमेव चक्रतुस्तेनैव च नितरां सोन्मादौ जाताविति भावः । अन्योऽपि कषायरसं कर्पूरवासितं शीतलं मधु पिबति । साध्वनिषिद्धं मध्विति वा । सुरते मधुपानविभ्रममधरामृतैः साधु यथा तथा चक्रतुः । उपदंशस्थानेऽधरामृतानि जातानीत्यर्थः । भोगेति पाठे—अनुभवः । रागेति पाठे—बहुताम्बूलचर्वणक्रमविवर्धमानरक्तिमबाहुल्येनेत्यर्थः । कषायितैः, 'तत्करोति तदाचष्टे' इति ण्यन्तान्निष्ठा ॥ १०४ ॥

आह नाथवदनस्य चुम्बतः
सा स्म शीतकरतामनक्षरम् ।
सीत्कृतानि सुदती वितन्वती
सत्त्वदत्तपृथुवेपथुस्तदा ॥ १०५ ॥

आहेति ॥ तदा सुरतचुम्बनावसरे सीत्कृतानि वितन्वती कुर्वती, तथा कामावस्थाविकारविशेषेण सत्त्वेन दत्तः पृथुर्वेपथुः कम्पो यस्यास्तादृशी सती चुम्बने नाथवदनस्यानक्षरं वर्णैर्विना तत्कार्यकारित्वेन शीतकरतां चन्द्रतामाह स्म । चन्द्रस्पर्शाद्यथा सुखं भवति, तथा नलमुखस्पर्शात्तस्या अभूदित्यर्थः । शीतेऽपि सीत्कारः कम्पश्च भवति, मुखादक्षरं च न निर्गच्छति । शीतं कर्तुं शीलमस्य शीतकरः, 'कृञो हेतुताच्छील्यानुलोम्येषु ३।२।२०' इति टः ॥ १०५ ॥

चुम्बनाय कलितप्रियाकुचं
वीरसेनसुतवक्त्रमण्डलम् ।
प्राप भर्तुममृतैः सुधांशुना
सक्तहाटकघटेन मित्रताम् ॥ १०६ ॥

चुम्बनायेति ॥ चुम्बनाय कलितः स्पृष्टः प्रियाकुचो येन । वीरसेनसुतस्य वक्त्रमण्डलं सुधांशुना चन्द्रेण मित्रतां साम्यं प्राप । किंभूतेन चन्द्रेण—स्वैरेवामृतैरात्मानं भर्तुं पूरयितुं सक्तः संगतो हाटकघटः सुवर्णकलशो

१ पाणिनलिन इत्युपमा । २ अत्रानुप्रासः । ३ अत्रानुप्रासः । उपमा च ।

१ अत्राप्यनुप्रासः, विभ्रममिति भ्रान्तिमान् । २ शीतकरत्ववचनमुपमापरमित्युपमा । अनुप्रासश्च ।

येन । मुखं चन्द्रसममृतभरणार्थं चन्द्रसंबद्धस्वर्णघटसमो भैमीकुचः । मुखेन्दुना स्वीयममृतं कुचकलशे निक्षिप्तम्, न तु तत्रत्यं गृहीतमिति अनौचिती नाशङ्कनीया । मुखचुम्बनादमृतांशुयोगादिव भैमीकुचः शान्ततापो जातसुखश्चाभूदिति भावः । 'मुखनेत्रस्तनबाहुमूलकपोलौष्ठद्वयवराङ्गान्यष्टौ चुम्बनस्थानानि, रागतः सर्वाण्यपि च' इति वात्स्यायनः । नयनगल्लकपोलदन्तवासोमुखान्तस्तनयुगललाटं वा चुम्बनस्थानम् । स्तने चूचुकं परिहृत्येति विशेषः । मित्रशब्दस्य तुल्यार्थत्वात्सुधांशुनेति 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् २।३।७२' इति तृतीया ॥ १०६ ॥

वीक्ष्य वीक्ष्य पुनरैक्षि सा मुदा
पर्यरम्भि परिरभ्य चासकृत् ।
चुम्बिता पुनरचुम्बि चादरा-
त्तृप्तिरापि न कथंचनापि च ॥ १०७ ॥

वीक्ष्येति ॥ अमुना सा वीक्ष्य वीक्ष्य पुनरैक्षि । तथा असकृद्वारंवारं परिरभ्य च पुनः पर्यरम्भि पुनरालिङ्गि । तथा—आदराद्वारंवारं चुम्बिताऽपि पुनरचुम्बि च । तथाऽपि कथंचनापि केनापि प्रकारेणानेन तृप्तिकारणसद्भावेऽपि तृप्तिर्नापि न प्राप्ता ॥ १०७ ॥

छिन्नमप्यतनु हारमण्डलं
मुग्धया सुरतलास्यकेलिभिः ।
न व्यतर्कि सुदृशा चिरादपि
स्वेदबिन्दुकितवक्षसा हृदि ॥ १०८ ॥

छिन्नमिति ॥ सुदृशा निरीक्षणे नितरां चतुरयाऽपि मुग्धया सुन्दर्या, अथ च—बालया भैम्या सुरतलास्यकेलिभिः सुरतसंबन्धिभिर्नृत्तविलासैः करधूननाद्यङ्गविक्षेपविलासविशेषैः कृत्वा हृदि छिन्नं त्रुटितगुणमप्यतनु आनाभिलम्बित्वाद्विशालं हारमण्डलं मुक्ताहारदाम चिरादपि भूयसापि कालेन न व्यतर्कि । यतः—स्वेदबिन्दुकितं संजातस्वेदबिन्दुकं वक्षो यस्यास्तया । सुरतायासंजातस्वेदबिन्दुमण्डलस्य हारसादृश्यान्मौग्ध्याच्च त्रुटितोऽपि हारो नावोधीत्यर्थः । स्वार्थिककप्रत्ययान्तात्स्वेदबिन्दुकशब्दात् 'तदस्य संजातं तारकादिभ्य इतच् ५।२।३९' इतीतच् ॥ १०८ ॥

यत्तदीयहृदि हारमौक्तिकै-
रासि तत्र गुण एव कारणम् ।
अन्यथा कथममुत्र वर्तितुं
तैरशाकि न तदा गुणच्युतैः ॥ १०९ ॥

यदिति ॥ हारमौक्तिकैस्तदीये हृदि वक्षसि, अथ च—चित्ते, यदासि, क्षितं लग्नम्, तत्र गुणो दोरकस्तारत्वादिरेव कारणं हेतुः । अन्यथा न चेदेवं तर्हि तदा सुरतसमये गुणच्युतैः सूत्रभ्रष्टैस्तैर्मौक्तिकैरमुत्र तदीये हृदि वर्तितुं स्थातुं कथं कस्मान्नाशाकि समर्थैन जातम् । अथ च—तारत्वादिगुणहीनैर्मौक्तिकैस्तदीयहृदये न स्थीयेत किंतूत्तमैरेव । तस्मादुभयविधेऽपि भैमीहृदये स्थातुं मौक्तिकानामन्वयव्यतिरेकाभ्यां द्विविधोऽपि गुणो हेतुरित्यनुमानम् । सुरतसंमर्दान्मुक्ताहारस्त्रुटित इति भङ्ग्यन्तरेणोक्तम् । अन्यस्याऽपि विदग्धहृदयगामित्वे गुण एव हेतुः, गुणहीनेन तु चित्ते स्थातुं न शक्यते इति भङ्ग्या सूचितम् । गुणच्युतैः, 'पञ्चमी विभक्ते २।३।४२' इति योगविभागात्समासः ॥ १०९ ॥

एकवृत्तिरपि मौक्तिकावलि-
श्छिन्नहारविततौ तदा तयोः ।
छाययाऽन्यहृदये विभूषणं
भ्रान्तिवारिभरभाविवितेऽभवत् ॥ १०० ॥

एकेति ॥ तदा संभोगसमये तयोर्द्वयोर्मध्य एकस्मिन्नल एव वृत्तिर्यस्या एवंभूताऽपि मौक्तिकावलिरन्यस्या भैम्या हृदये छायया विभूषणमभवत् । किंभूतेऽन्यहृदये—छिन्ना हारस्य विततिर्विस्तारो यस्य । यतः—भ्रान्तिवारीणि स्वेदबिन्दवस्तेषां भरः पूरस्तेन भाविते व्याप्ते । द्वयोः समीपे संमुखस्थितयोर्मध्ये भैम्या हारे त्रुटितेऽपि स्वेदजलपूरिते हृदये प्रतिबिम्बितो नलस्य हार एवाभरणं बभूवेत्यर्थः । अन्यहृदय इति सर्वनामत्वात्पुंवद्भावः ॥ ११० ॥

---

१ अत्र मित्रताप्राप्त्युक्त्योपमा व्यज्यते । जीवातुकारास्तु 'अमृतांशुरिवेत्युत्प्रेक्षयाऽमृतकरत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः' इत्याहुः ।

१ चिरात्स्फुटितस्यापि तथात्वेन वितकर्णाभावे स्वेदबिन्दु कितत्वं हेतुः, अस्य च भ्रान्तिमूलत्वाद् भ्रान्तिमान्, हेतुहेतुमद्भाववचनात् काव्यलिङ्गं च । २ पूर्ववाक्यानुसारं छिन्नस्यापि हारस्य स्वेदबिन्दुरूपेण स्थितत्वभ्रमं साधयितुमियमुक्तिः, सा च श्लिष्टं गुणपदमुपजीव्येति श्लेषानुप्राणितमनुमानम् । ३ अत्रैकस्य हारस्योभयत्रासद्भावेऽपि सद्भावोक्तेरतिशयोक्तिः ।

वामपादतललुप्तमन्मथ-
श्रीमदेन मुखवीक्षिणाऽनिशम् ।
भुज्यमाननवयौवनाऽमुना
पारसीमनि चचार सा मुदाम् ॥ १११ ॥

वामेति ॥ वामपादतलेन लुप्तो मन्मथश्रीमदः कामसौन्दर्यगर्वो येनातिसुन्दरेणाप्यनिशं भैमीमुखवीक्षिणा केवलभैम्यधीनेनाऽमुना नलेन भुज्यमानं नवं नूतनं यौवनं तारुण्यं यस्याः सा भैमी मुदां संतोषाणां पारसीमनि परतीरमर्यादायां परमोत्कर्षे चचारावर्तत।भावावसानसमयं प्रापेत्यर्थः।वामपादतल—मुखवीक्षि—इति पदद्वयं लौकिकोक्तिः। एवंभूतेन च भुज्यमानत्वान्मुदां परमोत्कर्षं प्रापेति युक्तम्। मुखवीक्षणं दिने रात्रावपि वरदानप्रकाशितदीपवशाज्ज्ञेयम् ॥ १११ ॥

आन्तरानपि तदङ्गसंगमै-
स्तर्पितानवयवानमन्यत ।
नेत्रयोरमृतसारपारणां
तद्विलोकनमचिन्तयन्नलः ॥ ११२ ॥

आन्तरानिति॥नलः स्वीयानान्तराञ्शरीरमध्यवर्तिनोऽस्पृश्यमानानप्यवयवान् तदङ्गसंगमैः सुकुमारभैम्यवयवस्पर्शैरतिवेधकतया तर्पितान्सुखितानमन्यत । तथा— तद्विलोकनं च स्वीयनेत्रयोरमृतस्य सारेण श्रेष्ठभागेन पारणां तद्रूपं तृप्तीकरणमचिन्तयद् बुबुधे । पुनःपुनर्भैमीगाढालिङ्गनदर्शनादन्तर्बहिश्च प्रीणितोऽभूदित्यर्थः । अन्तरशब्दात् 'तत्र भवः ४।३।५३' इत्यण् । तर्पितान्, ण्यन्तात्कर्मणि क्तः ॥ ११२ ॥

भूषणैरतुषदाश्रितैः प्रियां
प्रागथ व्यपददेप भावयन् ।
तैरभावि कियदङ्गदर्शने
यत्पिधानमयविघ्नकारिभिः ॥ ११३ ॥

भूषणैरिति ॥ एप नलः प्रियामाश्रितैः प्रियाशरीरं मण्डयद्भिस्ताटङ्कादिभिर्भूषणैर्दृष्टैः प्रागतुषत्पूर्वं संतोषमगात् । अथ तोषानन्तरं भावयन्विचारयन्व्यपदद्विपण्णोऽभूत् । यद्यस्मात्तैर्भूषणैरस्याः कियतोऽलंकृतस्याल्पस्याङ्गस्य दर्शने विषये पिधानमयानामाच्छादनरूपाणां दर्शनान्तरायाणां कारिभिस्तद्धेतुभूतैरभावि जातम् । अनलंकृतं चेत्तर्हि सर्वं दर्शनगोचरोऽभविष्यत्, न त्वेवम्, तस्माद्यषददित्यर्थः । भैमीसौन्दर्यं तस्यां नलानुरागातिशयश्च सूचितः । रतसमये भूषणमोचनस्यैव युक्तत्वाद् भूषणसद्भाववर्णनं यदप्यनुचितम्, तथापि यावद् भूषणानि मोचयति, तावदपि विलम्बासहिष्णुतया हठसुरतसूचनाद् भूषणवर्णनौचिती न दोषायेति, तदात्यन्तापरिहार्यभूषणाभिप्रायेण वेति ज्ञेयम् । 'बहुमन्यत दृशा न चेतसां भूषणानि स विदर्भसुभ्रुवः' इति वा पाठः सुगमः । अतुषत्, 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु ३।१।५५' इत्यङ् ॥ ११३ ॥

योजनानि परिरम्भणेऽन्तरं
रोमहर्षजमपि स्म बोधतः ।
तौ निमेषमपि वीक्षणे मिथो
वत्सरव्यवधिमध्यगच्छताम् ॥ ११४ ॥

योजनानीति ॥ तौ रोमहर्षजं सात्त्विकभावोत्थरोमाञ्चजातमत्यल्पमप्यन्तरं परिरम्भण आलिङ्गने विषये बहूनि योजनानि बोधतः स्म अजानताम् । तथा— मिथो वीक्षणे प्रारब्धेऽन्योन्यविलोकनेऽत्यल्पं निमेषमक्षिपक्ष्मसंकोचसमयमपि वत्सरेण वर्षेण व्यवधिं व्यवधानं बहुवर्षदर्शनविच्छेदकालमध्यगच्छतामज्ञासिष्टाम् । अत्यल्पीयसाऽपि देशकालव्यवधानेन प्रेमभरादन्योन्यविच्छेदस्ताभ्याममानीत्यर्थः । बोधतः, 'बुध अवगमने' भौवादिकः । 'लट् स्मे ३ । २ । ११८' इति स्मयोगे लट् ॥ ११४ ॥

वीक्ष्य भावमधिगन्तुमुत्सुकां
पूर्वमच्छमणिकुट्टिमे मृदुम् ।
कोऽयमित्युदितसंभ्रमीकृतां
स्वानुबिम्बमदर्शयदेष ताम् ॥ ११५ ॥

वीक्ष्येति ॥ एष नलो मृदुं बालत्वात्सुरतभरासहां लघुद्रवां पद्मिनीम्, अत एव—स्वस्मात्पूर्वमेव बिन्दुपतनरयरूपं भावमधिगन्तुं प्राप्तुं नेत्रनिमीलनगाढालिङ्गनादिचिह्नैरुत्सुकां सत्वरां वीक्ष्य ज्ञात्वा तद्बिन्दुस्तम्भनार्थं कोऽयमपूर्वः पुरुष इति प्रश्नेन पूर्वमसंजातभयामपि नलरूपधारिणाऽन्येनाहमुक्तेति बुद्ध्या सुरतसमयसमागतजनान्तरदर्शनाद्वा उदितसंभ्रमीकृतां समुत्पादितभयां विमनस्क-

१ अत्र लोकोक्त्या वामपादतलस्य करणत्वेन वचनम्।

तया प्रतिबद्धभावोदयाम्, अनन्तरं का कुत्र तिष्ठतीति कृतप्रश्नां तां भैमीमच्छमणिकुट्टिमे निर्मले मणिबद्धभित्तिभागे स्वानुबिम्बं स्वप्रतिबिम्बमदर्शत दर्शयामास । नायमपूर्वः । कश्चित्, किंतु मदीयमेवेदं प्रतिबिम्बम् तत्र ममान्य इति भ्रान्तिर्जातेति स्वप्रतिबिम्बं तामदर्शयदित्यर्थः । अन्यतरस्य पूर्वं बिन्दुपतने विषमरतत्वाद्विरस्यं स्यादिति बिन्दुस्तम्भार्थम् ' अन्यचित्ततया संभ्रमजननेन च भावबन्धं कुर्यात् ' इति कामशास्त्रात्तस्या बिन्दुपातप्रतिबन्धमकरोदिति भावः । अदर्शत, ' णिचश्च १।३।७४ । ' इति तङ् । तामित्यत्र ' दृशेश्च ' इति कर्मत्वम् ॥ ११५ ॥

तत्क्षणावहितभावभावित-
द्वादशात्मसितदीधितिस्थितिः ।
स्वां प्रियामभिमतक्षणोदयां
भावलाभलघुतां नुनोद सः ॥ ११६ ॥

एवं भैम्या भावलाभवेगभङ्गोपायमुक्त्वा नलस्य भावलाभवेगभङ्गभङ्गीमाह—

तत्क्षणेति ॥ स प्रियाम् अभिमते क्षणे स्वेष्टसमये भैमीभावलाभौत्सुक्यात्पूर्वमेवोदय उत्पत्तिः समयो यस्यास्तां भावलाभे स्वां निजां बिन्दुच्युतौ लघुतां शीघ्रतां नुनोद । अन्यचित्तीकरणेन व्यलम्बयदित्यर्थः । तदेवाह—किंभूतः—तस्मिन्नेव क्षणे निजभावौत्सुक्यसमयेऽवहितभावैनैतस्या इव ममापि भावलाभश्चेत्स्यात्, तर्हि विषमरतत्वाद्विरस्यमेव स्यात्, अतस्तुल्यकालमेवोभयोर्भावलाभं करवाणीति सावधानतयोक्तप्रकारेणैव सावधाने वा भावे चित्ते भाविता ध्यानवासनादिभिश्चिन्तिता द्वादशात्मनः सूर्यस्य, सितदीधितेश्चन्द्रस्य स्थितिर्मर्यादा गगनगमनादिप्रकारो येन सः । तद्ध्यानेन निजवीजस्तम्भनार्थं स्वस्यैव संपादितवैचित्र्यः सन्निति यावत् । अथ च—सावधानतया कृता सूर्यचन्द्रापरपर्यायेडापिङ्गलाख्यदक्षिणवामनाडीस्थयोर्मरुतोः स्थितिः स्थैर्यं येन । कुम्भितपवन इत्यर्थः । अन्यचित्ततासंपादनेन नासावायुस्तम्भनेन चोपायेनैकसमयोभयभावप्राप्तिपर्यन्तं स्वीयं भावं स्थिरीचकारेति भावः । एतेन भङ्ग्या नलस्य योगाभ्यासोऽपि सूचितः, अन्येन तथा कर्तुमशक्यत्वात् । ' दक्षिणनासामुद्रणे पुरुषस्य, वामनासिकामुद्रणे योषितो बिन्दुस्तम्भो भवति ' इति कामशास्त्रात्स्वीयं तदीयं च भावं स्थिरीचकारेति वा । विस्तरेणालम् ॥ ११६ ॥

स्वेन भावजनने स तु प्रियां
बाहुमूलकुचनाभिचुम्बनैः ।
निर्ममे रतरहःसमापना-
शर्मसारसमसंविभागिनीम् ॥ ११७ ॥

इदानीं समरतमाह—

स्वेनेति ॥ स तु नलः पुनः स्वेन स्वयमेव भावजनन उभयोर्भावप्राप्तिसमये स्वेन सह वा स्वेनात्मनैव कर्त्रा यद्भावजननं तस्मिन्सति वा । स्वस्य भावजननसमय इति यावत् । तत्र बाहुमूलं कक्षा, कुचौ, नाभिश्च एतेषां चुम्बनैः कृत्वा रतस्य रहसि समापना तज्जनितं परमकाष्ठापन्नं शर्म सुखं, समापनाख्यो वा शर्मसारस्तस्य समस्तुल्यो यः संविभागोऽशस्तद्वतीं समरतप्रापणेन सुखिनीं निर्ममे चकार । स्वेनेत्यस्य प्रथमद्वितीयव्याख्ययोः कक्षादिचुम्बनं जातिः । तृतीयायां तु—कक्षादेर्निरन्तरं कामाधिष्ठानत्वात्तच्चुम्बनैरुपायैः स्वस्य भावप्राप्तिसमये तामपि भावमलम्भयदिति भावः । 'भावभजनेन तु—' इति पाठे—स्वीयेन भावभजनेन निमित्तेन बाह्वादिचुम्बनैरिति व्याख्या ॥ ११७ ॥

विश्लथैरवयवैर्निमीलया
लोमभिर्द्रुतमितैर्विनिद्रताम् ।
सूचितं श्वसितसीत्कृतैश्च तौ
भावमक्रमकमध्यगच्छताम् ॥ ११८ ॥

विश्लथैरिति ॥ तौ भावलाभश्रमवशात्स्वोद्वहनेऽपि विश्लथैः शिथिलीभूतैरवयवैरङ्गैः, तथा—निद्राभावेऽपि निमीलया श्रमजनितनयनसंकोचनया, तथा—तस्मिन् क्षणे द्रुतं शीघ्रं विनिद्रतामुल्लासमितैर्गतैर्लोमभी रोमाञ्चैः, तथा—श्वसितैः श्रमजमुखनासिकाश्वासैः सीत्कृतैश्च तैः सर्वैः सूचितमक्रमकं युगपत्संजातं बिन्दुच्युतिजन्यसुखरूपं भावमध्यगच्छताम् । समरतं प्राप्तावित्यर्थः । भोगिनोः संभोगान्ते श्लथावयवत्वादि जातिः । अक्रमकं,'क्रमादिभ्यो वुन् । ४ । २ । ६१ ।' इति वुन् ॥ ११८ ॥

---

१ अत्रानुप्रासः । २ अत्र न विद्यते क्रमः यस्येति 'शेषाद्विभाषा । ५ । ४ । १५४ ' इति कप् इति तूचितम् । ३ अत्राप्यनुप्रासः ।

कान्तचेतसि तदीयमाननं
तत्तदालभत लक्षमादरात् ॥१२३॥

ह्रीणमिति ॥ तदतिसुन्दरं तदीयमाननं तदा सुरतान्तसमये कान्तचेतसि विषय आदरातिशयाल्लक्षं लक्षसंख्यं द्रव्यमलभत । मूल्यरहितेऽत्युत्कृष्टे वस्तुनि 'एतल्लक्षं लभते' इति लोकोक्त्या परमोत्कर्षस्याभिव्यञ्जनात्परमत्युत्कर्षं प्रापेत्यर्थः । किंभूतम्—सुरतसुखानुभववेगसंजातस्वीयस्मरचापलस्मरणात्पुरुषायितस्मरणाद्वा बहुतरं ह्रीणं लज्जितमेव । तथा—पुनः सुरताभिलापधारणाक्रियदीप्तस्मरमुद्दीप्तकामम् । तथा—सौकुमार्यातिशयायासबाहुल्याद्बहु सुतरां क्लान्तं म्लानमेव । तथा—प्रलयाख्यया कामावस्थया साध्यसाधनभेदावगमराहित्यादेकीभावात्परब्रह्मानन्दानुभवादिव महासुखानुभवविषयसुखापलापान्मनाङ्निर्वृतमल्पं सुखितम् । विस्मृतानुभूतसुखमिति यावत् ।' रतान्तसमये योषिन्मुखमत्यादरकारि भवति ' इति कामशास्त्रम् । तदा तादृक्तदाननं दृष्ट्वा पुनः समदनोऽभूदिति भावः । अथ च—लक्षं विषयतामलभतेत्यर्थः ॥ १२३ ॥

स्वेदवारिपरिपूरितं प्रिया-
रोमकूपनिवहं यथा यथा ।
नैषधस्य दृगपात्तथा तथा
चित्रमापदपतृष्णतां न सा ॥ १२४ ॥

स्वेदेति ॥ नैषधस्य दृक्स्वेदवारिणा सुरतश्रमजलेन परिपूर्णं प्रियारोमकूपनिवहं यथा यथा यावदपात्सादरं व्यलोकयत्, सा नलदृक् तथा तथा तावत्तावदपतृष्णतां तृप्तिं नापदिति चित्रम् । पुनःपुनरवलोकने हि तृप्तिर्भवति अत्र तु न जातेत्याश्चर्यमित्यर्थः । अथ च—पिपासोरञ्जलिजलेनापि पिपासा शाम्यति, अस्यास्त्वाकण्ठवारिपूरितकूपसङ्घस्य पुनः पुनः पानेऽपि पिपासा न शान्तेति चित्रमित्यर्थः । एवंभूतभैमीरोमकूपदर्शनमात्रेण पुनः सकामोऽभूदिति भावः ॥ १२४ ॥

वीतमाल्यकचहस्तसंयम-
व्यस्तहस्तयुगया स्फुटीकृतम् ।
बाहुमूलमनया तदुज्ज्वलं
वीक्ष्य सौख्यजलधौ ममज्ज सः ॥ १२५ ॥

वीतेति ॥ स सुरतसंमर्दाद्वीतमाल्याश्च्युतकुसुमाः कचहस्तास्तेषां संयमाय ग्रन्थिबन्धनाय व्यस्तमूर्ध्वव्यापारितं हस्तयुगं यया तया भैम्या स्फुटीकृतं तदतिरमणीयं कामवसतिस्थानमुज्ज्वलमतिगौरं बाहुमूलं वीक्ष्य सौख्यजलधौ ममज्ज निरवधि सुखमन्वभूदित्यर्थः । वान्तेति वा पाठः । कचहस्त इति हस्तशब्दः प्रशंसावाची । सुखमेव सौख्यं चातुर्वर्ण्यादित्वात्ष्यञ् ॥ १२५ ॥

वीक्ष्य पत्युरधरं कृशोदरी
बन्धुजीवमिव भृङ्गसंगतम् ।
मञ्जुलं नयनकज्जलैर्निजैः
संवरीतुमशकत्स्मितं न सा ॥ १२६ ॥

वीक्ष्येति ॥ सा कृशोदरी नेत्रचुम्बनवशात्संलग्नैर्निजैर्नयनकज्जलैर्भिन्नवर्णतया मञ्जुलं शोभमानं पत्युरधरं भृङ्गेण भ्रमरेण संगतं मिलितं पीयमानमकरन्दं बन्धुजीवपुष्पमिव वीक्ष्य समुत्पद्यमानं स्मितमीषद्धास्यं संवरीतुं गोपायितुमुत्पद्यमानमेव निरोद्धुं वा नाशकत्समर्था नाभूत् । उत्तमस्त्रीत्वात्सलज्जत्वात्प्राणेशस्य सविधे स्मितं कर्तुमयुक्तं यद्यपि, तथापि स्वीयसंभोगसौभाग्यवशादुत्पन्नस्य स्मितस्य संवरीतुमशक्यत्वात्सपत्नीदर्शने च सलज्जत्वेऽपि प्रागल्भ्यागमनशङ्कया सिष्मिय इति ॥ १२६ ॥

तां विलोक्य विमुखश्रितस्मितां
पृच्छतो हसितहेतुमीशितुः ।
ह्रीमती व्यतरदुत्तरं वधूः
पाणिपङ्करुहि दर्पणार्पणाम् ॥ १२७ ॥

तामिति ॥ वधूर्भैमी विमुखं तिर्यङ्मुखं यथा तथा पराङ्मुखीभूय श्रितस्मिता कृतेषद्धास्या विमुखी चासौ श्रितस्मिता च तादृशीं बालां विलोक्य हसितहेतुं पृच्छत ईशितुर्नलस्य पाणिरेव पङ्करुट् कमलं तस्मिन्करकमले दर्पणस्यार्पणामेवोत्तरं व्यतरद्ददौ स्मितहेतुमाचष्ट । यतो—ह्रीमती । स्वनेत्रचुम्बनवशात्त्वौष्ठे नेत्रकज्जलं लग्नमिति लज्जावशात्साक्षादुत्तरं दातुमशक्ता कज्जलाङ्कितं स्वाधरं पश्येति भावेन दर्पणार्पणामेवोत्तरं ददावित्यर्थः ॥

१ अत्र रोम्णां कूपत्वेन रूपणनिर्वाहाय स्वेदवारिभिः परिपूर्त्युक्तिः । निरूपितस्य च कूपस्य पानं कृतवत्या अपि दृशोऽपतृष्णताऽभावोक्त्या कारणसत्त्वेऽपि कार्यानुत्पत्तिवचनरूपा विशेषोक्तिः ।

१ सौख्यस्य जलधित्वेन रूपणाद्रूपकम् । २ अत्रानुप्रासः उपमा च । ३ अत्राप्यनुप्रासः ।

लाक्षयाऽऽत्मचरणस्य चुम्बना-
च्चारुभालमवलोक्य तन्मुखम् ।
सा ह्रिया नतनताननाऽस्मर-
च्छेषरागमुदितं पतिं निशः ॥ १२८ ॥

लाक्षयेति ॥ कुपितभैमीप्रसादनार्थं चरणे पतनाद्भैम्याः पद्मिनीत्वात्पङ्कजासनबन्धेन सुरतारम्भवशाद्वात्मचरणस्य लाक्षया चुम्बनात्संबन्धाद्धेतोश्चारु भालं ललाटं यस्यैवंभूतं तस्य नलस्य मुखमवलोक्य निजसुरतधार्ष्ट्यस्मरणजातया ह्रिया हेतुना नतनतं नतप्रकारमाननं यस्याः सैवंभूता सती उदितं प्राप्तोदयम्, उदयानन्तरं च कालक्रमापचीयमानः शेषः कियदवशिष्टो रागो लौहित्यं यस्य तं निशो रात्र्याः पतिं चन्द्रमसमस्मरत् । तन्मुखं तादृगभूदित्यर्थः । ईषदवशिष्टरक्तिमचन्द्रदर्शने यथा प्रीतिर्भवति, तथा तादृङ्मुखदर्शनेऽपि तस्याः प्रीतिर्जातेति भावः । नतनतेति प्रकारे द्विरुक्तिः । पतिं कर्मत्वविवक्षया षष्ठ्यभावः ॥ १२८ ॥

स्वेदभाजि हृदयेऽनुबिम्बितं
वीक्ष्य मूर्तमिव हृद्गतं प्रियम् ।
निर्ममे धुतरतश्रमं निजै-
र्हीनताऽतिमृदुनासिकानिलैः ॥ १२९ ॥

स्वेदेति ॥ ललाटलाक्षादर्शनसंजातनिजसुरतधार्ष्ट्यस्मरणवशाद्ध्रिया नता सा स्वेदभाजि श्रमजलयुते स्वहृदयेऽनुबिम्बितं प्रियं नलं मूर्तं साकारं हृद्गतं चित्तस्थमिव वीक्ष्य निजैरतिमृदुभिर्विश्रान्तिक्लममन्दीभूतैर्नासिकानिलैः कृत्वा धुतोऽपनीतो रतश्रमो यस्यैतादृशं निर्ममे चकार । लज्जानम्रत्वान्नासाश्वासानां हृदयप्रतिबिम्बितप्रियसंबन्धाच्छ्रमापनोदनं युक्तम् । निर्ममे इवोत्प्रेक्षा वा । तादृशीं तां दृष्ट्वा स गतश्रमः सहर्षः संजातः, सापि तं तादृशं दृष्ट्वा हर्षवशान्मन्दतरान्नासाश्वासान्मुमोचेति भावः ॥ १२९

सूननायकनिदेशविभ्रमै-
रप्रतीतचरवेदनोदयम् ।
दन्तदंशमधरेऽधिगामुका
साऽस्पृशन्मृदु चमच्चकार च ॥ १३० ॥

सूनेति ॥ सूननायकस्य कामस्य निदेश आज्ञा तस्य विभ्रमैर्विलासैर्हेतुभिरप्रतीतचरः पूर्वं सम्भोगवेलायामज्ञातो वेदनोदयः पीडोद्भवो यस्मात्तं दन्तदंशमधरेऽधिगामुकाधुना पीडाकारिणं ज्ञातवती सा मृद्वनिष्ठुराङ्गुलीस्पर्शं यथा तथा दन्तदष्टाधरमेवास्पृशत् । अनन्तरं च स्पर्शजपीडानुभवाच्चमच्चकार ससीत्कारमङ्गकम्पमपि चकार । आकस्मिकतयैव किमेतत्कदा जातमिति साश्चर्या चाभूत् । दन्तदंशं, 'न लोकाव्ययनिष्ठाखलर्थतृनाम्२।३।६९' इति षष्ठीनिषेधः ॥ १३० ॥

वीक्ष्य वीक्ष्य करजस्य विभ्रमं
प्रेयसाऽर्जितमुरोजयोरियम् ।
कान्तमैक्षत हसस्पृशं कियत्
कोपकुञ्चितविलोचनाञ्चला ॥ १३१ ॥

वीक्ष्येति ॥ इयं प्रेयसा नलेन उरोजयोरुपरि बुद्धिपूर्वमर्जितं कृतं करजस्य नखस्य विभ्रमं कोपसंभ्रमवशाद्वीक्ष्य वीक्ष्य वारं वारं विलोक्य, अनन्तरमेव कियत्किंचित्कोपेन कुञ्चितावुन्मील्य मुकुलितौ पर्यायेण विलोचनाञ्चलौ नेत्रपल्लवौ यया एवंभूता सती स्वयंकृतत्वात्संभोगसमये तया ज्ञातत्वाच्च हसस्पृशं श्रितस्मितं कान्तमैक्षत । कोपेन वक्रमपश्यदित्यर्थः । कोपस्याल्पत्वेनोत्तमत्वं धीरत्वं च भैम्या व्यज्यते । वीक्ष्य संभ्रमे द्विरुक्तिः । हसस्पृशं,'स्पृशोऽनुदके क्विन्३।२।५८' इति क्विन् १३१

रोषरूषितमुखीमिव प्रियां
वीक्ष्य भीतिदरकम्पिताक्षराम् ।
तां जगाद स न वेद्मि तन्वि तं
कश्चकार तव कोपरोपणाम् ॥ १३२ ॥

रोषेति ॥ स रोषरूषितं कोपयुक्तं मुखं यस्यास्तामिव दन्तदंशादेः सुखकारित्वेन तत्त्वतः कोपरहितत्वेऽपि कृत्रिमकोपेन भ्रुकुटितमुखीं प्रियां वीक्ष्य भीत्या दरमीषत्कम्पितानि सगद्गदान्यक्षराणि यस्यां क्रियायां तद्यथा तामिति जगाद । इति किम्–हे तन्वि, अहं तं न वेद्मि, कस्तव कोपरोपणां चकार । 'ब्रूहि शास्मि तव कोपरोपिणम्' इति पाठे–कोपस्य रोपिणमाधायकम् । 'न वेद्मि' इत्यात्मनः कोपरोपित्वं गोपायेति ॥ १३२ ॥

---

१ अत्राप्यनुप्रासः, निशः पतित्वेन स्मरणोक्तेः स्मृतिमान् । २अत्र मूर्तमिवेत्युत्प्रेक्षा । अनिलद्वारा श्रमधूननोक्त्या मलयमारुताभिन्नत्वं गम्यते ।

१ अत्रानुप्रासः । २ अत्र रोषमुखीमिवेत्युत्प्रेक्षा ।

दीपलोपमफलं व्यधत्त य-
स्त्वत्पटाहृतिषु मच्छिखामणिः ।
नो तदागसि परं समर्थना
सोऽयमस्तु पदपातुकस्तव ॥ १३७ ॥

दीपेति ॥ हे भैमि, यो मच्छिखामणिस्त्वत्पटाहृतिषु त्वदीयवसनकर्षणेषु सतीषु लज्जावशान्मुखवाय्वादिना त्वया कृतं दीपलोपं स्वकिरणैरेव तिमिरानिराकरणादफलं व्यर्थं व्यधत्त । तस्य मणेरागस्यपराधे परं केवलं करादिवत्समर्थना परिहारो नो अस्ति, तस्मादुपायान्तराभावात्सोऽयं मौलिमणिस्तव पदयोः पातुको वन्दारुरस्तु । उपायान्तराभावे हि नमस्कारेणाप्यपराधमार्जनं क्रियते, तस्मादयमपि नमस्कारं करोत्वित्यर्थः ॥ १३७ ॥

इत्थमुक्तिमुपहृत्य कोमलां
तल्पचुम्बिचिकुरश्चकार सः ।
आत्ममौलिमणिकान्तिभङ्गिनीं
तत्पदारुणसरोजसङ्गिनीम् ॥ १३८ ॥

इत्थमिति ॥ स इत्थमुक्तप्रकारेण कोमलां सामयुक्तामुक्तिं वाचमुपहृत्योपहारीकृत्य प्रणामकरणवशात्तल्पचुम्बिनः शय्यास्पर्शिनश्चिकुराः केशा यस्य स आत्ममौलिमणिकान्तिर्निजशिखामणिद्युतिस्तद्रूपा भङ्गिनी नदी तां तत्पदे भैमीचरणौ तद्रूपे अरुणसरोजे तत्सङ्गिनीं संवद्धां चकार । प्रणनामेत्यर्थः । नद्याश्च रक्तोत्पलसंबन्धो युक्त एव । तल्पचुम्बीत्यनेन शय्यायामेव प्रणामः सूचितः । भङ्गास्तरङ्गाः सन्त्यस्यां सेति विग्रहः ॥ १३८ ॥

तत्पदाखिलनखानुबिम्बनैः
स्वैः समेत्य समतामियाय सः ।
रुद्रभूमविजिगीषया रति-
स्वामिनोपदशमूर्तिताभृता ॥ १३९ ॥

तदिति ॥ कृतप्रणामः स नलः स्वैर्निजैस्तस्याः पदयोरखिलेषु दशस्वपि नखेषु जातैरनुबिम्बनैः प्रतिबिम्बैः समेत्य मिलित्वा रुद्रस्य भूमा बहुत्वमेकादशत्वं तस्यापि स्पर्धावशाद्विजिगीषया जेतुमिच्छयोपदशमूर्तितां धारयता रतिस्वामिना कामेन समतां साम्यमियाय । मदीयः शत्रुर्यद्येकादशत्वं धारयति तर्हि मयापि तावत्संख्याकेन भवितुं युक्तमिति । एकादशत्वं यदि कामो धारयेत्, तर्हि भैमीदशनखसंजातस्वप्रतिबिम्बसंबन्धादेकादशमूर्तिधारी नलस्तेनोपमीयेतेत्यभूतोपमा । रुद्रभीतीति पाठे—एकादशभ्यो रुद्रेभ्यो भीतेर्विजिगीषया तदपाकरणाद्धेतोर्यद्येकादशमूर्तितां मदनो धारयेत्तर्हि, स्वप्रतिबिम्बयोगादेकादशमूर्तिस्तेनोपमीयेतेत्यर्थः । प्रणामवशात्तन्नखेषु प्रतिबिम्बित इति भावः । दशानां समीपे उपदशाः 'संख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये २।२।२५' इति समासः । 'बहुव्रीहौ संख्येये डजबहुगणात् ५।४।७३' इति डच् । उपदशा मूर्तयो यस्येति समासः ॥ १३९ ॥

आख्यतैष कुरु कोपलोपनं
पश्य नश्यति कृशा मधोर्निशा ।
एतमेव तु निशान्तरे वरं
रोषशेषमनुरोत्स्यसि क्षणम् ॥ १४० ॥

आख्यतेति ॥ एष तामित्याख्यतावोचत् । इति किम्—हे भैमि, त्वं कोपलोपनं कुरु । मधोर्वसन्तस्य कृशा दिनापेक्षया स्वभावत एवाल्पपरिमाणा । अथ च—प्रतिक्षणमपचीयमाना, निशा नश्यतीति पश्य । कोपापरित्यागे एवंप्रकारेणावशिष्टा रात्रिर्गमिष्यति, तस्मात्कोपं मुञ्चातु पुनस्त्वमेतमेव रोषशेषं निशान्तर आगामिरात्र्यन्तरे दिनापेक्षयाऽधिकपरिमाणायां शिशिरर्तुरात्रौ क्षणमात्रमनुरोत्स्यसि कामयिष्यसे वरमेतन्मनागिष्टम् । शिष्टं कोपं तदा कुर्विदानीं सम्भोगार्थं प्रसन्ना भव । सर्वं कोपमिदानीमेव चेत्करिष्यसि, तर्हि तदा किं करिष्यसि, तस्मादल्पं रोषं निशान्तरार्थं स्थापयेति लौकिकरीत्याऽधुना तावत्कोपं त्यजेति भैमीं प्रार्थयते स्मेत्यर्थः । आख्यत्, 'चक्षिङः ख्याञ् २।४।५४' इति ख्याञ् 'अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२' इत्यङ्, ङित्वात्तङ् ॥ १४० ॥

साऽथ नाथमनयत्कृतार्थतां
पाणिगोपितनिजङ्घ्रिपङ्कजा ।
तत्प्रणामधुतमानमाननं
स्मेरमेव सुदती वितन्वती ॥ १४१ ॥

सेति ॥ अथ प्रणामभाषणानन्तरं प्रणामं मा कार्षीरित्यादिवचनपूर्वं पाणिभ्यां गोपिते निजाङ्घ्रिपङ्कजे यया तया तस्य प्रणामेन धुतो निरस्तो मानः कोपजमौदासीन्यं यस्यैवंभूतमाननं प्रसादात्स्मेरं सस्मितमेव वितन्वती

---

१ अत्र यमकम् । २ अत्रानुप्रासः, परिकरश्च ।

कुर्वाणा सती सा सुदती नाथं कृतार्थतां कृतकृत्यतामनभ्यापयामास । तावन्मात्रेण प्रसन्नाऽभूदिति भावः॥१४१॥

तौ मिथो रतिरसायनात्पुनः
सम्बुभुक्षुमनसौ बभूवतुः ।
चक्षमे नतु तयोर्मनोरथं
दुर्जनी रजनिरल्पजीवना ॥ १४२ ॥

ताविति ॥ तौ मिथोऽन्योन्यं रतिरसस्यायनात्प्राप्तेः परस्परानुरागविवृद्धेर्हेतोः, अथ च—प्रीतिरेव रसायनं प्रथमान्तसुरतेच्छायाः पुनरुज्जीवनौषधं तस्माद्धेतोः, पुनः सम्बुभुक्षुमनसौ सुरताभिलाषिचित्तौ च बभूवतुः । द्वितीयसुरतेच्छू जातावित्यर्थः । तु पुनः रजनिस्तयोर्मनोरथं द्वितीयसुरतवाञ्छां न चक्षमे विषेहे । यतः—दुष्टा जनिर्जन्म यस्याः । तथा—अल्पं जीवितं सत्त्वं यस्यास्तादृशी संजातप्रभातसमया । अथ च—अल्पायुषो जन्म दुष्टमेवेति । यद्वा—प्रभातस्यासन्नत्वाद्विरहसंभावनावशाद्वा दुष्टा व्याकुला जन्यो नवोढा यस्यां सा दुर्जनी । संभोगेच्छा तु न निवृत्ता, परं प्रभातसमयस्य जातत्वात्संभोगं न चक्रतुरिति भावः । अन्योऽपि सुरतविषये यद्रसायनं वीर्यवृद्ध्यर्थमौषधं सेवमानः पुनः पुनः सुरतेच्छुर्भवति । अल्पचित्ताऽन्यापि दुष्टा वधूः सपत्न्यादिस्त्रीपुरुषयोः संभोगं न क्षमते । जननं जनिः ' जनिघसिभ्यामिण् । ' इत्यौणादिकादिण् ' जनिवध्योश्च ७।३।३५' इति वृद्धिर्न । 'ढ्लोपे पूर्वस्य दीर्घोऽणः ६।३।१११' इति दीर्घः । पक्षे—समासान्तविधेरनित्यत्वात्कबभावः ॥ १४२ ॥

स्वप्तुमाप्तशयनीययोस्तयोः
स्वैरमाख्यत वचः प्रियां प्रियः ।
उत्सवैरधरदानपानजैः
सान्तरायपदमन्तराऽन्तरा ॥ १४३ ॥

स्वप्तुमिति ॥ स्वप्तुमाप्तं शयनीयं शय्या याभ्यां तयोर्मध्ये प्रियः प्रियां प्रति स्वैरं रहसि स्थितत्वात्स्वच्छन्दं यथा तथा आख्यतावोचत् । किंभूतं वचः—परस्परमधरस्य दानं खण्डनं पानं च ताभ्यां जातैरुत्सवैः परमानन्दकारणैर्निमित्तैरन्तरान्तरा मध्ये मध्ये सान्तरायाणि सविघ्नानि कियन्तं कालमनुचारितानि सुप्तिङन्तानि पदानि यत्र तत् ॥ १४३ ॥

१ अत्रोपमा । २ अत्रानुप्रासः परिकरश्च, रजन्या दुर्जनि (नी) त्वेन रूपणाद् रूपकम्,अल्पजीवना त्वमुभयत्र श्लिष्टम् ।

'देवदूत्यमुपगम्य निर्दयं
धर्मभीतिकृततादृशागसः ।
अस्तु सेयमपराधमार्जना
जीवितावधि नलस्य वश्यता ॥१४४॥

किमुवाचेत्याह—

देवदूत्यमिति ॥ देवदूत्यमुपगम्याङ्गीकृत्य निर्दयं यथा तथा धर्माद्भीत्या चित्तशुद्ध्या दूत्यकरणे प्रतिश्रुतापरिपालनाद्धर्मो लुप्येतेति लुप्यमानाद्धर्माद्भीत्या धर्मस्यैव वा भीतिर्लोपलक्षणा तया हेतुभूतया कृतं तादृशमनिर्वाच्यं भवत्पीडनरूपमुक्तप्रकारमागोऽपराधो येन तस्यापराधिनो नलस्य मम जीवितावधि यावज्जीवं या वश्यता भवदधीनता सेयमपराधस्य मार्जना शोधयित्र्यस्तु । अद्यप्रभृति यावदहं जीवामि तावत्तव वश्यः किंकर एवेति प्रतिज्ञां तस्यां मत्वा तमपराधं क्षमस्वेत्यवोचदिति भावः । मार्जना ण्यन्ताद्भावे युच् ॥ १४४ ॥

स क्षणः सुमुखि यस्त्वदीक्षणं
तच्च राज्यमुरु येन रज्यसि ।
तन्नलस्य सुधयाऽभिषेचनं
यस्त्वदङ्गपरिरम्भविभ्रमः ॥ १४५ ॥

स इति ॥ हे सुमुखि, यस्त्वदीक्षणं स एव नलस्य क्षणो महानुत्सवः शोभनवदनत्वादेवेत्यर्थः । अथ च यत्र महत्यपि काले भवदीक्षणं स महानपि कालः सुखरूपत्वात्क्षणतुल्यः । सुखेनातिवाहितं क्षणम इत्यर्थः । तथा—येन त्वद्विषये मदीयेन मद्विषये त्वदीयेन व्यापारेण त्वं रज्यसे प्रीता भवसि तच्च तदेव मम उरु महद्राज्यं त्वदनुरागहेतुव्यापार एव साम्राज्यम्, नतु सकलभूमण्डलाधिपत्यमित्यर्थः । तथा—यस्त्वदङ्गस्य परिरम्भविभ्रम आलिङ्गनविलासस्त्वच्छरीरेण मदङ्गे कृतो वा परिरम्भविभ्रमस्तदेव नलस्य मम सुधयाऽमृतेनाभिषेचनमभितः स्नानम् । सुधाभिषेकादपि भवदङ्गसुखकर इत्यर्थः । सर्वथा त्वमेव मम सकलपुरुषार्थसर्वस्वभूतासीत्यर्थः ॥ १४५ ॥

१ अत्रानुप्रासः । २ अत्र रूपकम् ।

शर्म किं हृदि हरेः प्रियार्पणं
किं शिवार्धघटने शिवस्य वा ।
कामये तव महेषु तन्वि तं
नन्वयं सरिदुदन्वदन्वयम् ॥ १४६ ॥

शर्मेति ॥ हरेः श्रीविष्णोर्हृदि प्रियार्पणं लक्ष्म्याः स्थापनं किं नाम शर्म सुखम् । तथा—वाऽथवा शिवस्य शिवायाः पार्वत्या अर्धेन घटनं किं शर्म तदप्यल्पीयः । तर्हि किं नाम परमं सुखमित्याशङ्क्याह—ननु तन्वि भैमि, महेषु सुरतोत्सवेषु तव तमतिप्रसिद्धं सरिदुदन्वतोर्नदीसमुद्रयोरिवान्वयमभिन्नजलोपलम्भेन तादात्म्यलक्षणमयमहमयं वा शुभावहविधिरूपं संबन्धं कामये वाञ्छामि । इष्टदेवताभ्य इति शेषः । महेषूत्सवेषु मध्ये तव सरिदुदन्वदन्वयमेकं कामये नत्वन्यमिति वा । हरेर्हृदि प्रियार्पणे, शिवस्य च शिवार्धघटन आलिङ्गनादीनां पृथक्स्थितभिन्नदेहसाध्यत्वादालिङ्गनादिजन्यं सुखं तावन्नास्त्येव किंत्वेकदेशस्पर्शमात्रजन्यमेवास्ति, तस्मादावयोर्यदि पृथक्त्वम्, तर्हि तदा सुरतसमये क्षीरवदेकीभावोऽस्तु । यद्यपृथक्त्वमिष्टम्, तर्हि नदीसमुद्रजलवत्तादात्म्यमेव भवतु, नतु हरिलक्ष्म्यादिवद्देदोल्लेख इति भावः । नन्वहमित्यपि पाठः । 'तव मयेह—' इति पाठे—अयमहमिह भूलोके मया सह तव तं तादृशं सरिदुदन्वदन्वयं कामय इत्यर्थः ॥ १४६ ॥

धीयतां मयि दृढा ममेति धी-
र्वक्तुमेवमवकाश एव कः ।
यद्विधूय तृणवद्दिवस्पतिं
क्रीतवत्यसि दयापणेन माम् ॥१४७॥

धीयतामिति ॥ हे भैमि, मयि त्वं ममेति धीर्निश्चिता बुद्धिर्धीयतां न्यस्यताम् । मयि स्वत्वबुद्धिरासंसारं त्वया क्रियतामिति वक्तुमेवाभिधातुमप्यवकाशोऽवसर एव कः,अपि तु—तात्त्विकेऽर्थे एवं वक्तुमवकाशलेशोऽपि नास्ति, यस्माद्धेतोर्दिवस्पतिमिन्द्रं तृणवत्तृणेन तुल्यं वर्तते तृणवदेव यथा तथा तृणमिव परित्यज्य दयारूपेण पणेन मूल्येन मां क्रीतवत्यसि । उदासीने हि ममत्वबुद्धिः कार्येत्यारोपः प्रार्थ्यते।विक्रीय मूल्येन गृहीते वस्तुनि तु स्वत्वं न्याय्यमस्त्येवेति तदारोपो न प्रार्थ्यत इत्यर्थः। यदि मयि स्वत्वं नाभविष्यत्तर्हि इन्द्रं परित्यज्य मां नावरिष्यः । वृतवत्यसि तावत् तस्मादेवमपि मया याचितुमयुक्तमेवेति तव किंकरोऽस्मीति भावः । दिवस्पतिं, दयापणेनेत्येताभ्यामिन्द्रापेक्षया त्वदपेक्षया चाहमतितरां गुणवानिति वृत इति न, किंतु मद्वरणे तव कृपैव हेतुः, सा यावज्जीवं कार्येत्यर्थः ॥ १४७ ॥

शृण्वता निभृतमालिभिर्भव-
द्वाग्विलासमसकृन्मया किल ।
मोघराघवविवर्ज्यजानकी-
श्राविणी भयचलाऽसि वीक्षिता १४८॥

शृण्वतेति ॥ किल कदाचित्समये आलिभिः सह असकृद्भवत्या वाग्विलासं कथासंवादं निभृतं पश्चादागत्याज्ञातं तथातथा वरदानाददृश्यत्वेन वा गुप्तं यथातथा शृण्वता, निभृतं रहसि स्थितत्वान्मच्छ्रावणशङ्काभावात्स्पष्टं स्वच्छन्दं सखीभिः सह भवत्संवादं किल शनैः पश्चादागमनाद्दृष्टिकरणादिना कपटेन शृण्वता सता वा, मया त्वं वीक्षिता एवंभूता दृष्टाऽसि । किंभूता—मोघं वह्नौ परीक्ष्याप्यकारणं श्रीराघवेण विवर्ज्या त्यक्तां स्वस्मिन्नेवानुरक्तामपि जानकीं शृणोतीति तच्छीला, सीतेव भयेन स्वत्यागशङ्काभीत्या चला व्याकुला । यद्वा यस्माद्भीता दृष्टासि, तस्मादवश्यं मयि तवानुरागोऽस्तीति निश्चित्य 'धीयतां मयि—' इति वक्तुमयुक्तमिति भावः । राघवः गोत्रापत्ये बिदादेराकृतिगणत्वादञ् । बहुत्वे तु 'यञञोश्च ।४।१।१०१' इत्यञो लुक् । तेन 'रघूणामन्वयं वक्ष्ये' इति वत्साधुः ॥ १४८ ॥

अथ युग्मम्—

लुप्तपत्त्रविनिमीलिताक्षुपा-
त्कच्छपस्य धृतचापलात्पलात् ।
त्वत्सखीषु सरटाच्छिरोधुतः
स्वं भियोऽभिदधतीषु वैभवम् ॥१४९॥
त्वं मदीयविरहान्मया निजां
भीतिमीरितवती रहः श्रुता ।
नोज्झितास्मि भवतीं तादित्ययं
व्याहरद्दरमसत्यकातरः ॥ १४९ ॥

१ अत्रानुप्रासः ।

१ तृणवदित्युपमा, दयापणेनेति रूपकम् ।

छुप्तेति ॥ त्वमिति ॥ अयं नलस्तां प्रतीति परम-भीरुं व्याहरदुवाच । अभयदानं प्रादात् । इति किम्—हे भैमि, कदाचित्सखीसमूहेन सह गोष्ठ्यां प्रवृत्तायां प्रसङ्गात्का कस्माद्बिभेति, का कस्मादिति तथ्यं कथ्यता-मित्यन्योन्यं भयहेतुप्रश्ने कृते छुप्तानि स्पृष्टानि पत्राणि यस्यैवंभूतोऽङ्गुल्यादिना स्पृष्टमात्रः सन्विशेषेण निमीलितः संचितः तस्माल्लज्जालुसंज्ञकादोषधिविशेषात्सका-शादहं सुतरां बिभेमीति कयाचिदुक्तम्, एतं चापलं येन स्वभावत एव चलतः कच्छपस्य पलाश्नांशादहमि-त्यन्यया कथितम्, अनिशं शिरोधुतो नृपाणं कम्पयतः प्रतिक्षणमन्यवर्णात्स्वरटात्कृकलासात्सकाशादहमित्यपरया, इत्येवं त्वत्सखीषु स्वं निजं भियो भयस्य वैभवं हेतुम-भिदधतीषु भाषमाणासु सतीषु कयाचिदस्माभिर्निजभय-हेतुरुक्तस्त्वयापि कथ्यतामिति त्वां प्रत्युक्ते सति नलवि-योगाद्धेतोरहं बिभेमि क्षणमात्रमपि तेन न भाव्य-मिति तस्मादेव बिभेमि न त्वन्यस्मादिति. मदीयविरहा-त्रिजां भीतिं रहसि ईरितवती त्वं मया श्रुताऽसि यस्मात् तस्मान्ना भैषीरहं भवतीं कदाचिदपि नोज्झिताऽस्मीति । यतः—असत्ये नारीप्रलोभनवचनविषये कातरो भीरुः । भाविनस्त्यागस्य दैवाधीनत्वान्नाऽसत्यवादित्वमिति भावः। यद्वा—असतीष्वकातरः, सतीषु विषये भीरुरेव । तद्भयनिराकरणार्थमेवमवददित्यर्थः । छुप्तेति 'छुप स्पर्शे' इति तौदादिकादनिटो निष्ठा । शिरोधुत इति क्विबन्तम् ॥ १५० ॥

संगमय्य विरहेऽस्मि जीविका
यैव वामथ रताय तत्क्षणम् ।
हन्त दत्थ इति रुष्टयाऽऽवयो-
र्निद्रयाऽद्य किमु नोपसद्यते ॥१५१॥

संगमय्येति ॥ हे भैमि, इत्यतो हेतो रुष्टया कुपितयेव निद्रयाऽद्यास्यां रात्रावावयोर्नोपसद्यते आसन्नया न भूयते किम्विति वितर्के । इति किम्—हे भैमीनलौ, यैवाहं निद्रा विरहे विवाहात्पूर्वं वियोगसमये वां युवां स्वप्न-दर्शनादिवशात्संगमय्य संयोगं प्रापय्य युवयोर्जीविकाऽस्मि प्राणधारणहेतुरभूवमित्यर्थः । तत्क्षणं तस्या मम संबन्धिनं क्षणं. रात्रिलक्षणं समयमवसरं वा अथ विवा-हानन्तरं स्वकार्यार्थं रताय युवां दत्थः। रात्रिलक्षणे मदीय-समय एव सुरतस्य क्रियमाणत्वात् । हन्त कष्टमनुचितम्। कृतमुपकारं न स्मरथेत्यर्थः । आपदि कृतोपकारा हि तदीयेऽवसरेऽन्यस्मै दत्ते सति कोपात्समीपं नाग-च्छन्तीत्यापदि कृतोपकाराया मम रात्रिरूपोऽवसरः सुरताय दत्तो युवाभ्याम्, मह्यं तु मदीयावसरस्य लेशोऽपि न दत्तः, प्रभातपर्यन्तं सुरतस्यैव करणादिति कोपवशादिवावयोर्निद्रा नायातीति नलस्तामबोचदित्यर्थः। आप्रभातं ताभ्यां कामकेलयः कृता इति भावः । न क्षणमिति पाठे—यैव जीविका तस्या मम रताय प्रीतये क्षणमल्पमपि समयं न दत्थ इति रुष्टयेति व्याख्येयम् । संगमय्य 'ल्यपि लघुपूर्वात् ६।४।५६' इति णेरयादेशः । जीविका, कर्तरि ण्वुल् । वां,षष्ठीद्विती-याद्विवचने वामादेशः ॥ १५१ ॥

ईदृशं निगदति प्रिये दृशं
सम्मदात्कियदियं न्यमीलयत् ।
प्रातरालपति कोकिले कलं
जागरादिव निशः कुमुद्वती ॥ १५२ ॥

ईदृशमिति ॥ इयं प्रिये ईदृशमेवंप्रकारमन्यदपि निगदति सत्येव संमदाद्धर्षात् । सुरतानन्दजन्मनादिति, यावत् । तस्माद्धेतोर्दृशं नेत्रं कियत्किंचिन्न्यमीलयन्नि-मीलितवती । श्रमसंजातया निद्रया प्रयोगिकयेति शेषः । निदद्रावित्यर्थः । श्रान्तो हि निद्राति । संम-दादेवं निगदति सतीति वा । दृशं न्यमीलयत् । संमदा-दिव प्रियप्रियोक्तिश्रवणसंजातहर्षवशादिवेत्यर्थः । आन-न्दातिशयसुखमनुभवन् हि निमीलितदृग्भवतीति प्रती-यमानोत्प्रेक्षा वा । कियदित्यनेन दृशोऽर्धनिमीलनस्य सूचितत्वादन्यतमत्वमस्याः सूचितम्। केव—प्रातः कोकि-ले कलं मधुरास्फुटध्वनिं श्रोत्रसुखमालपति सति कुमुदि-नीव । कुमुदिनी यथा निमीलितोत्पला भवति तथेयमपि । कस्मादिव—निशो रात्रिसंबन्धिनो जागरादिव । रात्रावनिद्रो हि प्रातर्दृशं घूर्णनेन निमीलयति । कुमुदिन्यपि रात्राविनिद्रा-वशादिव प्रातर्निमीलयति, तस्मादियमपि प्रतीयमा-नोत्प्रेक्षा । न्यमीमिलदिति पाठे—णौ चङि 'भ्रा-जभासभाषदीपजीवमीलपीडामन्यतरस्याम् ७ । ४ । ३ ।' इति पाक्षिक उपधाह्रस्वः । जागराच्चाद्ये घञि 'जाग्रोऽविचिण्णल्ङित्सु ७ । ३ । ८५ ।' इति ह्रस्व-पवादो गुणः ॥ १५२ ॥

---

१ किमित्युत्प्रेक्षा । २ जागरादिवेत्युत्प्रेक्षा ।

मिश्रितोरु मिलिताधरं मिथः
स्वप्नवीक्षितपरस्परक्रियम् ।
तौ ततोऽनु परिरम्भसम्पुटे
पीडनां विदधतौ निदद्रतुः ॥ १५३ ॥

मिश्रितेति ॥ ततोऽनु तादृक्प्रियभाषणमध्य एव भैमीसंभोगरसानन्तरं परिरम्भरूपे संपुटे । संश्लेषपेटिकायामिति यावत् । तत्र पुनरपि पीडनां गाढालिङ्गनां विदधतौ कुर्वाणौ तौ मिश्रिते परस्परान्तरालघटिते ऊरू यस्यां क्रियायां तद्यथा तथा, मिथःपानवशादन्योन्यमिलितावधरौ यस्यां क्रियायां तद्यथातथा स्वप्ने वीक्षिता परस्परक्रियाऽन्योन्यचुम्बनादिव्यापारो यस्यां क्रियायां तद्यथा तथा निदद्रतुः क्षीरनीरालिङ्गनं कृत्वा निद्रितावित्यर्थः । पीडनां, ण्यन्तत्वाद्युच् ॥ १५३ ॥

तद्यातायातरंहश्छलकलितरतश्रान्तिनिश्वाससधारा-ऽजस्रव्यामिश्रभावस्फुटकथितमिथः-प्राणभेदव्युदासम् । बालावक्षोजपत्राङ्कुर-करिमकरीं मुद्रितोर्वीन्द्रवक्षश्चिह्नाख्यातैक-भावोभयहृदयमयाद्द्वन्द्वमानन्दनिद्राम् १५४ ॥

तदिति ॥ तद्द्वन्द्वं स्त्रीपुंसमिथुनमानन्देन संभोगसुखभरेण निद्रामयात्प्राप । किंभूतम्—निद्रासंबन्धिश्वासानां यातायातयोर्निर्गमप्रवेशयोः संबन्धिनो रंहसो वेगस्य छलेन व्याजेन कलिताऽङ्गीकृता या रतश्रान्तिनिश्वासधाराः सुरतश्रमसंजातनिश्वासपरम्परास्तासामन्योन्यमजस्रमनवरतं सुतरां यो व्यामिश्रभावः निद्रावशभैमीनासानिर्गतश्वासपरम्परासु निद्रावशनलनासानिर्गतनिश्वासपरम्पराः प्रविष्टाः, एवं वैपरीत्येनापि ज्ञातव्यम् । भैमीनिश्वासधारा निर्गत्य नलनिश्वासधारया सह मिलित्वा नलनासिकां प्रविशति, अत्रापि वैपरीत्यं ज्ञातव्यम् । इति मिश्रीभावार्थमिव यातायाते । तथा च—जले जलप्रवेशवदन्योन्यस्य निश्वासपरम्पराणामतितरामभेदोपलम्भ इति यावत् । तेन कर्तृभूतेन स्फुटं स्पष्टं कथितः मिथोऽन्योन्यस्य प्राणानां भेदव्युदासो भेदनाशः प्राणैक्यं यस्य तथा—बालाया वक्षोजौ स्तनौ तत्र पत्राङ्कुराः पत्रवल्लीभूताः, तत्पत्रवल्लीषु वर्तमानाः करिमकर्यः कस्तूर्यादिरचिता हस्तिमकर्यस्ताभिर्मुद्रितं चिह्नितं निद्रासमयकृतगाढालिङ्गनवशात्संलग्नप्रतिरूपकं कृतमुर्वीन्द्रवक्षस्तद्रूपं चिह्नं तेनाख्यातोऽतितरां स्पष्टं कथित एकभाव एकत्वमभेदो यस्यैवंभूतमुभयोर्भैमीनलयोर्हृदयं वक्षःस्थलम्, अथ च चित्तं यत्र । यातेत्यादि, बालेत्यादि च द्वयं क्रियाविशेषणत्वेन वा योज्यम् । आत्मैक्यं शरीरैक्यं च क्रमेण वर्णितमिति ज्ञेयम् । उभयोरपि मिश्रितश्वासत्वादेकप्राणशब्दश्लेषादुत्प्रेक्षितम् ॥ १५४ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । यातोऽस्मिञ्शिवशक्तिसिद्धिभगिनी-सौभ्रात्रभव्ये महा-काव्ये तस्य कृतौ नलीयचरिते सर्गोऽयमष्टादशः ॥ १५५ ॥

श्रीहर्षमिति ॥ शिवस्य शक्तेश्च सिद्धिर्यत्र ( शिवशक्तिसाधनं कृतं ) स शिवशक्तिसाधननामा ग्रन्थः। शिवभक्तीतिपाठे—शिवस्य भक्तेः सिद्धिर्यत्र शिवभक्तिप्रतिपादको ग्रन्थविशेषः । तस्य सैव भगिनी एककर्तृकत्वात्, तस्यां सौभ्रात्रेण शोभनभ्रातृभावेन भव्ये प्रशस्ते तत्तुल्यसरसशब्दार्थन्यासे नलीयचरितेऽष्टादशानां पूरणः सर्गः समाप्तः । शिवशक्तिसिद्धिरपि मया कृतेति सूचितम् । सौभ्रात्रमिति भावे युवादित्वादण् । अष्टादशः, 'तस्य पूरणे ५ । २ । ४८ ।' डट् ॥ १५५ ॥

इति श्रीवेदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणविरचिते नैषधीयप्रकाशेऽष्टादशः सर्गः समाप्तः ॥

---

## एकोनविंशः सर्गः ।

अथ नलस्य प्रातःप्रबोधनादि दैनिकं कृत्यं वर्णयति—

निशि दशमितामालिङ्गन्त्यां विबोधविधित्सुभि–र्निषधवसुधामीनाङ्कस्य प्रियाङ्कमुपेयुषः । श्रुतिमधुपदस्रग्वैदग्धीविभावितभाविक–स्फुटरसभृशाभ्यक्ता वैतालिकैर्जगिरे गिरः ॥ १ ॥

---

१ अत्र स्रग्धरा वृत्तम् । अनुप्रासः । २ शब्दालङ्कारः ।

निशीति ॥ सर्गसंगतिः स्पष्टा । वैतालिकैर्वन्दिभिर्गिरो जगिरे । किंभूतैः—निशि रात्रौ । 'वाल्यं वृद्धिर्वपुः पुष्टिः प्रज्ञोत्साहौ बलं महः । दशकेन निवर्तन्ते मनः पञ्चेन्द्रियाणि च' इति वचनाद्दशदशकस्य शतायुषः पुरुषस्यावसानोपलक्षकोऽवस्थाविशेषो दशमः स विद्यते येषां ते दशमिनो वृद्धास्तेषां भावो दशमिता तामालिङ्गन्त्यामवसानं प्राप्तायां संजातप्रायप्रभातायां सत्यां प्रियाङ्कं भैमीसमीपमुपेयुषः प्राप्तवतस्तया सह निद्रितस्य निषधदेशवसुधायां मीनाङ्कस्य कामस्य नलस्य विबोधं जागरां विधित्सुभिः कर्तुमिच्छुभिः । कीदृश्यो गिरः—श्रोतॄणां श्रुत्योः श्रवणयोर्मधु अमृतरूपाऽतिमधुरा पदस्रक् सुप्तिङन्तपदमाला तस्या वैदग्ध्या वक्रोक्त्यादिरचनाचातुर्येण विभाविता ध्वनिवृत्त्या व्यञ्जनाव्यापारेण प्रकाशिता भाविका रत्यादिस्थायिव्यभिचारिसहचारिरूपैर्भावैर्युक्ता । ज्ञापिता इति यावत् । तादृशाः स्फुटाः प्रसन्नतरत्वेन बालिशैरपि प्रतीता ये रसाः शृङ्गारादयस्तैर्भृशं नितरामभ्यक्ताः सर्वतः सिक्ताः एकमपि पदं नीरसं यासु नास्त्यतिरसिक्ताः । नलप्रबोधार्थं मागधैर्मधुरं प्रातर्वर्णनमारब्धमित्यर्थः । रत्यादयः स्थायिभावाः, निर्वेदादयस्त्रयस्त्रिंशद्भावाः । 'वैतालिका बोधकराः' इत्यमरः । दशमोऽवस्थाविशेषो विद्यते यस्यासौ दशमी वृद्धः । अत इनिः । योगरूढोऽयं शब्दः । दशमिन्या वृद्धाया भावो दशमितेति वा । विशिष्टस्तालो वितालः स शिल्पं येषां ते वैतालिकाः 'शिल्पम् ४ । ४ । ५५' इति ठक् । सौखशायिका इत्यर्थः । तदुक्तम्—'वैतालिकास्तु कथ्यन्ते कविभिः सौखशायिकाः।राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः ।' जगिरे 'गै शब्दे' कर्मणि तङ् । आसिन्सर्गे 'ब्रूमः–' ( १९–५६ ) इति यावद्धरिणीछन्दः ॥ १ ॥

**जय जय महाराज प्राभातिकीं सुषमामिमां सफलयतमां दानादक्ष्णोर्दरालसपक्ष्मणी । प्रथमशकुनं शय्योत्थायं तवास्तु विदर्भजा प्रियजनमुखाम्भोजात्तुङ्गं यदङ्ग न मङ्गलम् ॥ २ ॥**

जयेति ॥ भो महाराज, त्वं जय जय सर्वोत्कर्षेण वर्तस्व । त्वमिमां प्रत्यक्षदृश्यां प्राभातिकीं प्रातःकालसंध्यादिजनितां सुषमां परमां शोभां दरमीषदलसे तत्कालमेव निद्रात्यागादीषद् घूर्णनयुते अर्धोन्मिषिते पक्ष्मणी ययोरक्ष्णोर्नेत्रयोर्दानाद्विषयीकरणाद्धेतोः सफलयतमामतितरां सफलां कुरु । त्वत्कृतदर्शनेनेयं धन्या भविष्यति तस्माच्छीघ्रमुद्बुध्यस्वेति भावः । विदर्भजा शय्योत्थायं शय्यायाः सकाशादुत्थाय तव प्रथमं पूर्वं प्रातःकालभवं च शकुनं शुभसूचकं वस्त्वस्तु । तत्स्थाने भैम्येव भूयादुत्थितः सन् प्रथमोत्थितभैमीमुखमेव प्रथमं पश्येत्यर्थः । यद्यस्मात्—हे अङ्ग स्वामिन्, प्रियाजनस्य मुखाम्भोजादन्यत्तुङ्गमुत्कृष्टं मङ्गलं शुभावहं वस्तु नास्ति । प्रातरुत्थाय प्रथमं प्रियजनमुखं द्रष्टव्यमिति लौकिकी स्थितिः । त्वत्तः पूर्वं भैम्युत्तिष्ठत्विति भावः । दरालसपक्ष्मत्वं तत्कालमुद्बुद्धस्य जातिः । 'पश्चाच्छयनं पूर्वमुत्थानम्' इति स्मृतिः, उत्तमकुलस्त्रीजातिश्च । जय जयेति वीप्सायां द्विरुक्तिः । प्रभाते भवेति 'कालाट्ठञ् ४ । ३ । ११' सफलयतमाम् 'तत्करोति तदाचष्टे' इति ण्यन्ताल्लोटि तमपि 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५ । ४ । ११' इत्यामुः । शय्योत्थायम्, 'अपादाने परीप्सायाम् ३ । ३ । ५२' इति णमुल् । परीप्सा त्वरा।'तृतीयाप्रभृतीन्यन्यतरस्याम् २।२।२१' इति समासः ॥ २ ॥

**वरुणगृहिणीमाशामासादयन्तममुं रुचीनिचयसिचयांशांशभ्रंशक्रमेण निरंशुकम् । तुहिनमहसं पश्यन्तीव प्रसादमिषादसौ निजमुखमितः स्मेरं धत्ते हरेर्महिषी हरित् ॥**

वरुणेति ॥ हे राजन्, हरेरिन्द्रस्य महिषी राज्ञी असौ प्राची हरिदिक् इतः प्राग्भागेऽह्नः प्रारम्भभाग एव निजमुखं तिमिरत्यागे प्रसादमिषान्नैर्मल्यव्याजात्स्मेरं सहासं धत्ते बिभर्ति । उत्प्रेक्षते—कथंभूतेव—वरुणस्य गृहिणीं भार्यां प्रतीचीमाशामासादयन्तमभिगच्छन्तम् । अत एव—रुचीनिचयस्य कान्तिसमूहरूपस्य सिचयस्य वस्त्रस्यांशा भागास्तेषामंशस्य लेशेन भ्रंशस्तस्य क्रमेणैकैकभागापगमक्रमेण निर्गता अंशवो

---

१ अस्य च लक्षणं यथोक्तं'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ।' इति । अत्र वसुधामीनाङ्कस्येत्यनेन वसुधायामनन्यसुन्दरत्वमुक्तम्भवति । मधुपदानां स्वक्स्वेन रूपणाच्चेषां कुसुमत्वं व्यज्यते । अनुप्रासः शब्दालङ्कारः ।

१ प्राभातिक्याः सुषमायाः सफलीकरणौचित्यसम्भावनयाऽक्ष्णोर्दानस्य सूर्यप्रकाशनसाम्येन प्रार्थनं व्यज्यते । प्रियजनेत्यादिना समर्थनादर्थान्तरन्यासः ।

निशीति ॥ सर्गसंगतिः स्पष्टा । वैतालिकैर्वन्दिभिर्गिरो जगिरे । किंभूतैः—निशि रात्रौ । 'बाल्यं वृद्धिर्वपुः पुष्टिः प्रज्ञोत्साहौ बलं महः। दशकेन निवर्तन्ते मनः पञ्चेन्द्रियाणि च' इति वचनाद्दशदशकस्य शतायुषः पुरुषस्यावसानोपलक्षकोऽवस्थाविशेषो दशमः स विद्यते येषां ते दशमिनो वृद्धास्तेषां भावो दशमिता तामालिङ्गन्त्यामवसानं प्राप्तायां संजातप्रायप्रभातायां सत्यां प्रियाङ्कं भैमीसमीपमुपेयुषः प्राप्तवतस्तया सह निद्रितस्य निषधदेशवसुधायां मीनाङ्कस्य कामस्य नलस्य विबोधं जागरां विधित्सुभिः कर्तुमिच्छुभिः। कीदृश्यो गिरः—श्रोतॄणां श्रुत्योः श्रवणयोर्मधु अमृतरूपाऽतिमधुरा पदस्रक् सुप्तिङन्तपदमाला तस्या वैदग्ध्या वक्रोक्त्यादिरचनाचातुर्येण विभाविता ध्वनिवृत्त्या व्यञ्जनाव्यापारेण प्रकाशिता भाविका रत्यादिस्थायिव्यभिचारिसहचारिरूपैर्भावैर्युक्ता । ज्ञापिता इति यावत् । तादृशाः स्फुटाः प्रसन्नतरत्वेन बालिशैरपि प्रतीता ये रसाः शृङ्गारादयस्तैर्भृशं नितरामभ्यक्ताः सर्वतः सिक्ताः एकमपि पदं नीरसं यासु नास्त्यतिरसिकाः। नलप्रबोधार्थं मागधैर्मधुरं प्रातर्वर्णनमारब्धमित्यर्थः। रत्यादयः स्थायिभावाः, निर्वेदादयस्त्रयस्त्रिंशद्भावाः। 'वैतालिका बोधकराः' इत्यमरः। दशमोऽवस्थाविशेषो विद्यते यस्यासौ दशमी वृद्धः । अत इनिः। योगरूढोऽयं शब्दः। दशमिन्या वृद्धाया भावो दशमितेति वा। विशिष्टस्तालो वितालः स शिल्पं येषां ते वैतालिकाः 'शिल्पम् ४।४।५५' इति ठक् । सौखशायिका इत्यर्थः। तदुक्तम्—'वैतालिकास्तु कथ्यन्ते कविभिः सौखशायिकाः।राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः।' जगिरे 'गै शब्दे' कर्मणि तङ् । अस्मिन्सर्गे 'भ्रमः–' ( १९–५६ ) इति यावद्धरिणीछन्दः ॥ १ ॥

**जय जय महाराज प्राभातिकीं सुषमामिमां सफलयतमां दानादक्ष्णोर्दरालसपक्ष्मणोः। प्रथमशकुनं शय्योत्थायं तवास्तु विदर्भजा प्रियजनमुखाम्भोजात्तुङ्गं यदङ्ग न मङ्गलम् ॥ २ ॥**

जयेति ॥ भो महाराज, त्वं जय जय सर्वोत्कर्षेण वर्तस्व। त्वमिमां प्रत्यक्षदृश्यां प्राभातिकीं प्रातःकालसंध्यादिजनितां सुषमां परमां शोभां दरमीषदलसे तत्कालमेव निद्रात्यागादीषद् घूर्णनयुते अर्धोन्मिषिते पक्ष्मणी ययोरक्ष्णोर्नेत्रयोर्दानाद्विषयीकरणाद्धेतोः सफलयतमामतितरां सफलां कुरु । त्वत्कृतदर्शनेनेयं धन्या भविष्यति तस्माच्छीघ्रमुद्बुध्यस्वेति भावः । विदर्भजा शय्योत्थायं शय्यायाः सकाशादुत्थाय तव प्रथमं पूर्वं प्रातःकालभवं च शकुनं शुभसूचकं वस्त्वस्तु। तत्स्थाने भैम्येव भूयादुत्थितः सन् प्रथमोत्थितभैमीमुखमेव प्रथमं पश्येत्यर्थः। यद्यस्मात्—हे अङ्ग स्वामिन्, प्रियाजनस्य मुखाम्भोजादन्यत्तुङ्गमुत्कृष्टं मङ्गलं शुभावहं वस्तु नास्ति । प्रातरुत्थाय प्रथमं प्रियजनमुखं द्रष्टव्यमिति लौकिकी स्थितिः । त्वत्तः पूर्वं भैम्युत्तिष्ठत्विति भावः । दरालसपक्ष्मत्वं तत्कालमुद्बुद्धस्य जातिः । 'पश्चाच्छयनं पूर्वमुत्थानम्' इति स्मृतिः, उत्तमकुलस्त्रीजातिश्च। जय जयेति वीप्सायां द्विरुक्तिः । प्रभाते भवेति 'कालाट्ठञ् ४।३।११' सफलयतमाम् 'तत्करोति तदाचष्टे' इति ण्यन्ताल्लोटि तमपि 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५।४।११' इत्यामुः । शय्योत्थायम्, 'अपादाने परीप्सायाम् ३।३।५२' इति णमुल्। परीप्सा त्वरा।'तृतीयाप्रभृतीन्यन्यतरस्याम् २।२।२१' इति समासः ॥ २ ॥

**वरुणगृहिणीमाशामासादयन्तममुं रुचीनिचयसिचयांशांशभ्रंशक्रमेण निरंशुकम्। तुहिनमहसं पश्यन्तीव प्रसादमिषादसौ निजमुखमितः स्मेरं धत्ते हरेर्महिषी हरित् ॥**

वरुणेति ॥ हे राजन्, हरेरिन्द्रस्य महिषी राज्ञी असौ प्राची हरिद्दिक् इतः प्राग्भागेऽह्नः प्रारम्भभाग एव निजमुखं तिमिरत्यागे प्रसादमिषान्नैर्मल्यव्याजात्स्मेरं सहासं धत्ते बिभर्ति । उत्प्रेक्षते—कथंभूतेव—वरुणस्य गृहिणीं भार्यां प्रतीचीमाशामासादयन्तमभिगच्छन्तम्। अत एव—रुचीनिचयस्य कान्तिसमूहरूपस्य सिचयस्य वस्त्रस्यांशा भागास्तेषामप्यंशेन लेशेन भ्रंशस्तस्य क्रमेणैकैकभागापगमक्रमेण निर्गता अंशवो

---

१ अस्य च लक्षणं यथोक्तं 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा।' इति। अत्र वसुधामीनाङ्कस्येत्यनेन वसुधायामनन्यसुन्दरत्वमुक्तम्भवति। मधुपदानां स्वकत्वेन रूपणाच्चेषां कुसुमत्वं व्यज्यते। अनुप्रासः शब्दालङ्कारः।

१ प्राभातिक्याः सुषमायाः सफलीकरणौचित्यसम्भावनयाऽक्ष्णोर्दानस्य सूर्यप्रकाशनसाम्येन प्रार्थनं व्यज्यते । प्रियजनेत्यादिना समर्थनादर्थान्तरन्यासः।

यस्य तं निरंकुशम्, अथ च—विवस्त्रममुं तुहिनमहसं पश्यन्तीव । मय्यनुरक्तस्त्वमभ्युदयभागभूत् इदानीमन्यस्यामनुरक्त इमां दशामापन्नोऽयमितीव हसतीत्यर्थः । अन्यापि नार्यनुरागातिविह्वलं गलद्वस्त्रं परस्त्रीं सेवमानं विटं दृष्ट्वा मुखं स्मेरं करोति । प्राच्यामरुणोदयोऽभूत्, प्रतीच्यां त्वरुणकिरणप्रसरणवशाच्चन्द्रो निष्प्रभोऽस्तं जिगमिषुरस्ति, तस्माच्छीघ्रं बुध्यस्वेति । अंशेन भ्रंशः, 'तृतीया तत्कृतार्थेन गुणवचनेन २ । १ । ३०' इति योगविभागात्समासः, ततः पूर्वेण षष्ठीसमासः । इतः सप्तम्यर्थे तसिः । एवंभूतं चन्द्रं पश्यती इतोऽस्माद्धेतोरिवेति इतो दृश्यमानादस्मात्प्रसादमिषादिति वा संबन्धे पैञ्चम्येव ॥ ३ ॥

अमहतितरास्तादृक्तारा न लोचनगोचरास्तरणिकिरणा द्यामश्नन्ति क्रमादपरस्पराः। कथयति परिश्रान्ति रात्रीतमस्सहयुध्वनामयमपि दरिद्राणप्राणस्तमीदयितस्त्विषाम् ॥ ४ ॥

अमहतीति ॥ भो राजन्, अमहतितराः स्वरूपेणैव सूक्ष्मतरा ध्रुवारुन्धत्यादयस्तारा इदानीं तादृक् पूर्ववल्लोचनगोचरा न भवन्ति । स्वरूपेण सूक्ष्मत्वात्पूर्वमपि चक्षुष्मतामपि महता यत्नेन या दृश्यन्ते ता इदानीं सर्वथा न दृश्यन्त एवेत्यर्थः । तादृश्यो बहुसंख्याः पूर्वं प्रकाशमानाश्च यास्ताराः स्वात्याद्रीदयस्ताः सम्प्रति सुतरामल्पाः सूक्ष्माश्च सत्यो नेत्रगोचरा न भवन्तीति वा । यस्मात्तरणेः सूर्यस्य किरणा अपरस्परा अहमहमिकया सततमविच्छेदेन प्रवृत्ताः सन्तः क्रमाद्द्यां गगनमश्नन्ति गाहन्ते । सूर्यकरस्पर्शान्निष्प्रभत्वात्तारा न दृश्यन्त इत्यर्थः । तथा—दरिद्राणाः क्षीणाः प्राणा असवो यस्यैवंभूतोऽस्तं जिगमिषुरयं तमीदयितो निशानाथश्चन्द्रोऽपि रात्रीतमसा सहयुध्वनां संग्रामं कुर्वतीनां निजत्विषाम् परिश्रान्तिं सामस्त्येन म्लानिं रणपातं च कथयति न केवलं त्विष एव दरिद्राणप्राणाः, किंतु चन्द्रोऽपीत्यपिशब्दार्थः । अतिशयेन महत्यो महतितराः 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६।३।४३' इति ह्रस्वः, ततो नञ्समासः । गोचरः पुमान् । अपरे च परे च 'अपरस्पराः क्रियासातत्ये ६।१।१४४' इति सुट् । द्यां सततमविच्छेदेनाश्नन्तीत्यर्थः । सहयुध्वनां, 'सहे च ३।२।९६' इति युधेः क्वनिपि 'वनो र च ४।१।७' इति प्राप्तौ ङीब्रौ 'वनो न हशः' इति निषेधान्न भवतः । दरिद्राणेति, 'दरिद्रातेरार्धधातुके विवक्षित आलोपो वाच्यः' इति प्राप्तोऽप्यालोपो 'न दरिद्रायके लोपो दरिद्राणे च नेष्यते' इत्यादिनिषेधान्न भवति ॥ ४ ॥

स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैःपुरुसितगरुच्चञ्चच्चञ्चूपुटस्फुटचुम्बितः । अपि मधुकरी कालिम्मन्या विराजति धूमलच्छविरिव रवेर्लाक्षालक्ष्मीं करैरतिपातुकैः ॥ ५ ॥

स्फुरतीति ॥ हे राजन्, तिमिरस्य स्तोमः समूहः लाक्षालक्ष्मीमतिपातुकैरतिक्रामद्भिरततोऽप्यधिकं रक्ततरै रवेः करैः कृत्वा पुरूणां बहूनां सितगरुतां श्वेतपक्षाणां चञ्चद्भिश्चपलैः, अरुणिम्ना विलसद्भिर्वा चञ्चूपुटैः स्फुटं यथा तथा चुम्बितः स्पृष्टः पङ्कस्य प्रपञ्चः समूह इवोच्चकैरतितरां स्फुरति शोभते । तिमिरस्तोमोऽन्तराप्रविष्टसूर्यकिरणस्पर्शाद्बिसखननार्थं पङ्कप्रविष्टहंसारुणचपलचञ्चूपुटशबलपङ्कवच्छोभतेतरामित्यर्थः । तथा—आत्मानं कालीं मन्यते कालिंमन्या अतिकृष्णा भ्रमर्यप्यरुणतरैः सूर्यकिरणैर्धूमलच्छविरिव च कृष्णारुणकान्तिरिव शोभतेतराम् । सूर्यकराः प्रसृताः तिमिरं चाल्पीभूतमिति भावः । 'धूमली कृष्णलोहिते' इत्यमरः । उच्चकैः, अव्ययत्वादकच् । मधुकरी, जातिवाचित्वान्ङीष् । कालिंमन्या, 'आत्ममाने खश्च ३।२।८३।' इति खश्, दिवादित्वाच्छ्यन्, 'खित्यनव्ययस्य ६।३।६६' इति ह्रस्वः 'अरुर्द्विषदजन्तस्य मुम् ६ । ३। ६७।' इति मुम् । लाक्षालक्ष्मीं, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३। ६९ ।' इति षष्ठीनिषेधः ॥ ५ ॥

---

१ अत्रानुप्रासः, पश्यन्तीवेत्युत्प्रेक्षा, प्रसादमिषादिति प्रसादमपह्नुत्य पराङ्गनासक्तजनदर्शनजन्यस्मेरवचनादपह्नुतिश्च ।

१ अत्रानुप्रासः, ताराणां किरणानां च तमीदयितस्य च निषेधात्मनाञ्चनकारित्वे समुच्चयनात् समुच्चयः । २ अत्रानुप्रासः, पङ्कप्रपञ्च इवेति च्छाविरिवेति चोपमा, तिमिरस्तोमस्य स्फुरत्वोक्त्या कमनीयत्वं व्यज्यते, अत एव पङ्कप्रपञ्चेन साम्येऽपि पुरुसितेत्यादिवैशिष्ट्यं तस्य सङ्गच्छते कालिम्मन्येति–

**रजनिवमथुप्रालेयाम्भःकणक्रमसम्भृतैः**
**कुशकिसलयस्याच्छैरग्रेशयैरुदबिन्दुभिः ।**
**सुषिरकुशलेनायःसूचीशिखाङ्कुरसङ्करं**
**किमपि गमितान्यन्तर्मुक्ताफलान्यवमेनिरे ६**

रजनीति ॥ रजन्याः वमथुवत्करिणीवदननिर्गतजलवत्प्रालेयाम्भसां हिमजलस्य कणा लेशास्तेषां गलनक्रमेण संभृतैः संचितैः कुशकिसलयस्याग्रेशयैरग्रस्थितैः सूचीतीक्ष्णाग्रभागे स्थितैरच्छैर्निर्मलतरैरुदबिन्दुभिर्हिमजलकणैः कर्तृभिर्मुक्ताफलान्यवमेनिरेऽवगणितानि मौक्तिकतुल्यैर्जातमित्यर्थः । किंभूतानि मुक्ताफलानि—सुषिरे विवरकरणे कुशलेन मणिकारेण मध्ये किमपि लोकोत्तरं स्तोकं वा अयःसूच्या लोहसूच्या वेधनशलाकायाः शिखेव सूक्ष्मत्वादङ्कुरस्तेन संकरं संयोगं गमितानि प्रापितान्यर्धविद्धानि । 'वमथुः करिशीकरः' इत्यमरः । 'ट्वितोऽथुच् ३।३।८९' अग्रेशयैः, 'अधिकरणे शेतेः ३।२।१५' इत्यजन्ते शयशब्दे 'शयवासवासिष्वकालात् ६।३।१५' इति सप्तम्या अलुक् । सूची, 'कृदिकारादक्तिनः' इति ङीष् । संकरम्, 'ऋदोरप् ३।३।५७' ॥ ६ ॥

**रविरुचिरृचामोंकारेषु स्फुटामलबिन्दुतां**
**गमयितुममूरुच्चीयन्ते विहायसि तारकाः ।**
**स्वरविरचनायासामुच्चैरुदात्ततया हृताः**
**शिशिरमहसो बिम्बादस्मादसंशयमंशवः ॥७॥**

रवीति ॥ रवेः पौर्वाह्णिक्यो रुचय एव ऋचस्तासां [ प्रातःकाले रविकिरणानामृग्रूपत्वात् । 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः' इत्यादिश्रुतेः ] ऋग्वेदवाक्यानामोंकारेषु प्रारम्भप्रणवेषु अथ च—लक्षणया प्रारम्भेषूदयसमयेषु स्फुटां प्रकटाममलां स्वरोच्चारणादिदोषरहितां बिन्दुतामनुस्वारतां गमयितुममूर्विहायसि स्थितास्तारकाः केनाप्युच्चीयन्तेऽवचयेन संगृह्यन्त एव । वृत्तामलत्वायोग्यत्वाच्च ऋक्प्रणवबिन्दुनिर्माणार्थमेता गृह्यन्त इव ततो न दृश्यन्त इत्यर्थः । प्रत्यृचमोंकारसद्भावात्तद्बाहुल्याच्चाराबिन्दूनामपि बहुत्वम् । अथ च—उद् ऊर्ध्वं चीयन्ते, नीयन्त इति यावत् । सूर्यप्रभोदय एव तारका नश्यन्तीति भावः । तथा—अस्तमयोन्मुखादस्माच्छिशिरमहसश्चन्द्रस्य बिम्बात्सकाशादंशवोऽप्यासामृचामुच्चैर्नितरामुदूर्ध्वमात्ततया गृहीततया, अथ च—लक्षणावशाद्विशालतयोपरिस्थिततया वा, अथ च—'उच्चैरुदात्तः १।२।२९ ।' इत्युदात्तलक्षणयोगादुच्चैरुदात्तत्वेन योग्यत्वादुदात्तस्य विरचनाय निर्माणाय असंशयं निश्चितं केनापि हृता इव । उदात्तस्य शिरस्युपलभ्यमानत्वव्यञ्जिकोर्ध्वा रेखा लिख्यते । यजुर्वेदे चरकशाखायामुपनिषदि 'उच्चैरुदात्तः १।२।२९ ।' 'नीचैरनुदात्तः १।२।३० ।' 'समाहारः स्वरितः १।२।३१ ।' इति लक्षणं द्रष्टव्यम् । चन्द्रकिरणानामप्यस्तमये उपरिगामित्वात्सूक्ष्मोपरितनरेखातुल्यत्वादेवमुत्प्रेक्षितम् । सूर्यप्रभोद्गमक्रमेण चन्द्रकिरणा अपि कृशीभूता इति भावः । हृता इति पाठे—स्वीकृताः । असंशयमुभयत्रापि योज्यम् । रुचिऋचाम्, 'ऋत्यकः ६।१।१२८ ।' इति प्रकृतिभावः ॥ ७ ॥

**व्रजति कुमुदे दृष्ट्वा मोहं दृशोरपिधायके**
**भवति च नले दूरं तारापतौ च हतौजसि ।**
**लघु रघुपतेर्जायां मायामयीमिव रावणि-**
**स्तिमिरचिकुरग्राहं रात्रिं हिनस्ति गभस्तिराट्**

व्रजतीति ॥ गभस्तिराट् सूर्यः तिमिरमेव चिकुरास्तिमिरतुल्याः केशास्तेषु गृहीत्वेति तद्ग्राहं रात्रिं हिनस्ति लघु शीघ्रं विनाशयति । कः कामिव—रावणिरिन्द्रजिन्मायामयीं मायानिर्मितां रघुपतेर्जायां सीता-

—लुप्तोपमारवेर्लाक्षालक्ष्मीमतिपातुकैः करैर्धूमलच्छाविलाम्यावहत्वेन मधुकर्युक्त्या मधुकर्यन्तरापेक्षया वैलक्षण्यं द्योतते, वैलक्षण्यं च रक्तत्वसितत्वयोरेकत्र सम्भवात् । मधुकर्या अधितत्वस्यानपायत्वेऽपि तथाऽपेतत्वेन वचनादतिशयोक्तिर्व्यज्यते च । तिमिरस्तोमस्य मधुकर्याश्च स्फुरणरूपधर्मैक्योक्तेः समुच्चयः, लिङ्गवैशिष्ट्येन कविप्रौढोक्तिसिद्धा दम्पतिव्यवहारस्फूर्तिमूला समासोक्तिश्च ।

१ अत्र दर्भाग्रबिन्दूनां सूच्यग्रलग्नमौक्तिकैरुपमा, प्रालेयाम्भःकणेषु वमथुत्वेन रूपणाद् रजनेः करिणीत्वेन रूपणसिद्धेरेकदेशविवर्ति रूपकं च ।

१ रुचीनामृक्त्वेन रूपणाद्रूपकं, तारकाः स्फुटामलबिन्दुतां गमयितुमुच्चीयन्त इवेति प्रतीयोत्प्रेक्षा व्यङ्ग्या, शिशिरमहोंऽशूनामुदात्तत्वेन हृतत्वोत्प्रेक्षणादुत्प्रेक्षा च, द्योतकाभावादियमपि व्यङ्ग्या । यदि च हृता उच्चीयन्ते इवेति विवक्ष्यते, तदा तारकादीनामुच्चीयमानत्वेन समुच्चयनात्समुच्चयः प्रतीयमानोत्प्रेक्षाऽनुप्राणितः

मिव । कस्मिन्सति—वाक्यार्थस्य कर्मत्वात्तदीयं रात्रिहिंसनरूपं कर्म दृष्ट्वा कुमुदे कैरवे मोहं संकोचं व्रजति सति । अथ च—सीताहिंसनरूपं कर्म दृष्ट्वा कुमुदाख्ये वानरे मूर्च्छां गच्छति । तथा—नले च भवति त्वयि दृष्ट्वा सूर्योदयसमयं ज्ञात्वा दृशोरपिधायके उन्मीलितनेत्रे सति । यद्वा—नले त्वयि नेत्रयोराच्छादके भवति सति । अथ च—नले वानरसेनापतौ दारुणं तदीयं कर्म दृष्ट्वा किमपि कर्तुमशक्यत्वाद्दुःखवशाद्वा तारापतौ च सुग्रीवे दृशोरपिधायके हतौजसि च निस्तेजस्के म्लानवदने च सति । रात्रिर्गता, रविरुदितः, कुमुदं च निमीलितम्, कमलं चोन्मीलितम्, चन्द्रश्च निष्प्रभो जात इत्यर्थः । मायाम्यां सीताया वध इन्द्रजिता कृत इति रामायणे । मायामयीं, प्राचुर्ये मयट् ङीप् । रावणिः, अपत्यार्थे बाह्वादित्वादिञ् । चिकुरग्राहं, सप्तम्यन्त उपपदे' समासत्तौ ३ । ४ । ५० । ' इति ग्रहेर्णमुल् । गभस्तिभी राजते गभस्तिराट्, 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामनुपसर्गेऽपि क्विप् ३ । २ । ६१ ।' इति क्विप् ॥ ८ ॥

**त्रिदशमिथुनक्रीडातल्पे विहायसि गाहते**
**निधुवनधुतस्रग्भागश्रीभरं ग्रहसंग्रहः ।**
**मृदुतरकराकारैस्तूलोत्करैरुदरम्भरिः**
**परिहरति नाखण्डो गण्डोपधानविधां विधुः ९**

त्रिदशेति ॥ ग्रहसंग्रहः शुक्रादिस्थूलतारासमूहः त्रिदशा देवास्तेषां मिथुनं तस्य क्रीडासंबन्धिनि तल्पे मञ्चरूपे विहायसि गगने निधुवनं सुरतसंमर्दस्तेन धुता विकीर्णाः स्रजः पुष्पमालास्तासां भाग एकदेशस्तस्य श्रीभरं शोभातिशयं गाहते । तथा—विधुरखण्डः पूर्णो वृत्तश्चन्द्रो गण्डोपधानविधां कपोलतलाधःस्थाप्यमानवृत्तं शुभ्रतरोच्छीर्षकप्रकारं न परिहरति न त्यजति, अङ्गीकरोत्येव, तद्वच्छोभत इत्यर्थः । किंभूतो विधुः—मृदुतरकराकारैरतिमृदुरश्मिरूपैस्तूलोत्करैः कार्पाससमूहैरुदरंभरिः परिपूरितमध्यः । गण्डोपधानं मृदुतरकार्पासपूरितमध्यं वृत्तं शुभ्रं च भवति।स्थूलतरास्तारास्तल्पविकीर्यमाणकुसुमतुल्या इतस्ततो दृश्यन्ते ।चन्द्रोऽपि सौरप्रकाशस्यासन्नत्वेन संकुचिताभिः स्वकान्तिभिर्मध्यमेव पूरयन्मार्दितगण्डोपधानवान्निःशोभोऽस्तमयोन्मुखो जात इति भावः । संग्रहः,'ग्रहवृदृनिश्चिगमश्च३।३।५८' इत्यप् । उत्करः, 'ऋदोरप् ३।३।५७' । उदरंभरिः, 'फलेग्रहिरात्मंभरिश्च ।३।२।२६' इति चकारस्यानुक्तसमुच्चयार्थकत्वादिन् नुमागमश्च ॥ ९ ॥

**दशशतचतुर्वेदीशाखाविवर्तनमूर्तयः**
**सविधमधुनाऽलंकुर्वन्ति ध्रुवं रवि रश्मयः ।**
**वदनकुहरेऽप्यध्येतॄणामयं तदुदञ्चति**
**श्रुतिपदमयस्तेषामेव प्रतिध्वनिरध्वनि १० ॥**

दशेति॥दश शतानि यासां ता एकसहस्रसंख्याश्चतुर्णामृग्वेदादिवेदानां समाहारश्चतुर्वेदी तस्याः शाखानामाश्वलायनतैत्तिरीयकादिसंज्ञानां तत्तद्वेदभागानां विवर्तनरूपा अतात्त्विका अन्यथाभावरूपाः शाखारूपतां प्राप्ता मूर्तयः स्वरूपाणि येषां तादृशा रविरश्मयो ध्रुवं यस्मादधुना प्रातःसमये सविधमस्मदादिसमीपदेशं भूषयन्ति सर्वेऽपि समीपदेशमागच्छन्ति । ततस्मादयमध्येतॄणां वेदं पठतां वदनलक्षणेषु कुहरेषु दरीषु विषय आकर्ण्यमानवर्णानुरूपस्तेषां वेदशाखीभवन्मूर्तीनां सूर्यकराणामेव श्रुतिपदमयो वेदपदरूपः प्रतिध्वानिः प्रतिशब्दोऽध्वनि गगन उदञ्चत्यूर्ध्वं प्रसरति । दरीषु प्रतिशब्दो युक्तः । अध्वानि मध्यतारध्वनिरहितं यथा तथेति । अध्येतारो हि प्रातर्मन्द्रध्वानिना वेदानधीयते । ध्रुवमुत्प्रेक्षायां वा । सूर्योदयो जातः, अध्येतारश्च वेदानधीयत इत्यर्थः । दशशतेति मूर्तिविशेषणम् । चतुर्वेदी,समाहारे द्विगोर्ङीप् । पदमयः, ताद्रूप्ये मयट्॥ १० ॥

**नयति भगवानम्भोजस्यानिबन्धनबान्धवः**
**किमपि मघवप्रासादस्य प्रघाणमुपघ्नताम् ।**
**अपसरदरिध्वान्तप्रत्याग्वियत्पथमण्डली-**
**लगनफलदश्रान्तस्वर्णाचलभ्रमविभ्रमः ११॥**

नयतीति ॥ अम्भोजस्य कमलकुलस्यानिबन्धनबान्धवोऽकारणमित्रं तदानन्दकारी भगवान् षड्गुणैश्वर्य-

---

१ मायामयीमिवेत्युपमा,सा च कुमुदादिपदानां श्लिष्टत्वादिना साङ्गत्वात्पूर्णा, तिमिरचिकुरेत्यत्र तु रूपकोपमयोः सन्देहरूपः सङ्करः, एकाश्रयात्सा वा ।

१ अत्र श्रियामिव श्रियम्, विभामिव विभामिति सादृश्याक्षेपादुभयत्र निदर्शना। विहायसः क्रीडातल्पत्वेन रूपणाद् विधोरुदरम्भरित्वेन रूपणाच रूपकम्, कराकारैरित्युपमा । स्वभावोक्तिश्च । २ अत्रानुप्रासः, रश्मीनां विवर्त्तनमूर्तित्वेन वदनस्य कुहरत्वेन च रूपणाद्रूपकम्, उदञ्चतीवेति प्रतीत्या प्रतीयमानोत्प्रेक्षा च ।

संपन्नः श्रीसूर्यो मघवत इन्द्रस्य वैजयन्ताख्यस्य प्रासादस्य प्रघाणमलिन्दं द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिपिण्डाकारं वस्तु, तद्रूप इति भावः। तथा किमपि स्तोकं यथा तथोपन्नतामाश्रयतां नयति प्रापयत्याश्रयति । तावत्पर्यन्तमूर्ध्वमागत इत्यर्थः । अथ च—तं श्लिष्यति । पराङ्मुखशत्रोः शूरस्य परस्पराश्लेषो युक्तः । किंभूतः—अपसरत्पुरः पलायमानमरिरूपं ध्वान्तं तस्य प्रतीचः पश्चिमाशायाः संबन्धिनि वियत्पथे गगनमार्गे मण्डल्या संधिभावेन यल्लगनं संश्लेषः प्रत्यग्दिगन्तगामित्वम्, लयनमिति पाठे—संधिभावेन यत्तिरोधानं सामस्त्येनादर्शनं तेन फलन्सफलो भवन्नश्रान्तो निरन्तरः स्वर्णाचलस्य मेरोः प्रदक्षिणलक्षणो भ्रमः स एव विभ्रमो विलासो यस्य । सद्वस्तुपरिपालनाय रात्रौ भ्रमतो यामिकस्य चौरपलायनेन यथा साफल्यं भवति तथा स्वर्णाचलरक्षणाय सूर्यस्य भ्रमणविलाससाफल्यं युक्तमित्यर्थः । अत एव स्वर्णाचलपदं प्रायोजि। अत्रापि पूर्वोत्तरार्धविपर्यासो ज्ञातव्यः । 'प्रघाणप्रघणालिन्दाः' इत्यमरः । वान्धवः, प्रज्ञादित्वात्स्वार्थेऽण् । मघवप्रासादस्य प्रातिपदिकान्तत्वान्नलोपः । 'अगारैकदेशे प्रघणः प्रघाणश्च'३।३।७९'उपघ्न आश्रये ३।३।८५' इति च प्रघाणोपघ्नशब्दौ साधू । प्रत्यक्, 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ५।३।२७' इत्यस्तातेः 'अञ्चेर्लुक् ५।३।३०' इति लुक् । 'तसिलादिस्तद्धितः' इत्यव्ययत्वम्[1] ॥ ११ ॥

**नभसि महसां ध्वान्तध्वाङ्क्षप्रमापणपत्त्रिणा-मिह विहरणैः श्यैनंपातां रवेरवधारयन्। शशविशसनत्रासादाशामयाच्चरमां शशी तदधिगमनात्तारापारावतैरुदडीयत ॥१२॥**

नभसीति ॥ शशी निजाङ्कवर्तिशशाख्यपशुविशेषस्य विशसनं मारणं तस्मात्त्रासो भयं तस्माच्चरमामाशां पश्चिमां दिशमयासीत् । तथा तारा नक्षत्राणि तद्रूपैः परावतैः पक्षिविशेषैस्तस्य चन्द्रपलायनवृत्तान्तस्य सूर्यस्य मृगयारम्भवृत्तान्तस्य चाधिगमनात्परिज्ञानादुदडीयत पलायितम् । किंविधः शशी—नभसि गगने ध्वान्तमन्धकारस्तद्रूपाणां ध्वाङ्क्षाणां काकानां प्रमापणे मारणे विषये पत्त्रिणां श्येनाख्यपक्षिरूपाणां महसां सूर्यतेजसामिह प्राग्भागे विहरणैः क्रीडनैः रवेः श्रीसूर्यस्य श्यैनंपातां मृगयामवधारयन्निर्धारयन् । अन्यस्मिन्नपि राज्ञि मृगयाश्येनपातेन काकादीन् हिंसति सति शशयुक्तः पुरुषो मदीयं शशमपि मांसार्थमेतदीयाः श्येना हनिष्यन्तीति भिया पलाय्य गच्छति । पारावता अप्युड्डीय यान्ति । सूर्यकिरणा गगने खेलन्ति, चन्द्रः प्रतीचीं गतः, ताराश्च न दृश्यन्त इति भावः । इह नभसीति वा । शशेन नित्ययुक्तः शशी । त्रासादिव[1], तदधिगमनादिवेति च प्रतीयमानोत्प्रेक्षा 'अथ शशादनः । पत्त्री श्येनः' 'श्यैनंपाता च मृगया' 'पारावतः कलरवः' इत्यमरः । पतनं पातः । भावे घञ्, श्येनानां पातः श्येनपातः सोऽस्यां क्रियायां वर्तते श्यैनंपाता मृगयेति 'घञः सास्यां क्रियेति ञः ४।२।५८' इति ञः, 'श्येनतिलस्य पाते ञे ६।३।७१ इति मुम् ॥ १२ ॥

**भृशमभिरुस्तारा हाराच्च्युता इव मौक्तिकाः—सुरसुरतजक्रीडालूनाद्युसद्वियदङ्गणम् । बहुकरकृतात्प्रातःसंमार्जनादधुना पुन-र्निरुपधिनिजावस्थालक्ष्मीविलक्षणमीक्ष्यते ॥ १३ ॥**

भृशमिति ॥ सुरसुरतं देवमिथुनरतं तस्माज्जाता क्रीडा विलाससंमर्दः, अथ च—सुरतुल्यराजादिसुरतक्रीडासम्मर्दः, तेन लूनात्त्रुटिताद्धाराच्च्युता मुक्ता इव वृत्ततरास्तारा द्युसद्वियदङ्गणं सुराणामजिरभूतं यद्गगनं भृशं नितरामविभरपूपुरन् । तद्गगनमधुना पुनः बहवः सहस्रं करा यस्य स सूर्यस्तेन, अथ च—रजःशोधकेन खलप्वा कृतात्प्रातःसंमार्जनात्प्राभातिकात्सम्यङ्मार्जनात्तिमिरनिराकरणद्वारा शोधनात्, अथ च—शोधन्या रजोपनयनेन शोधनान्निरुपधिरुपधिरहिता

---

1 अत्र सूर्यस्य प्रासादप्रघाणात्मना ध्वान्तस्यारित्वेन वियतः पथित्वेन भ्रमस्य विभ्रमत्वेन च रूपणाद्रूपकम्, भ्रम इति यमकम्, अनुप्रासश्च जकारादीनां साम्यात् ।

1 त्रासादिवेति प्रतीत्या प्रतीयमानोत्प्रेक्षा, स्वाभाविकमयनमपह्नुत्य विशसनत्रासमूलत्वेन स्थापनादपह्नुतिश्चापि प्रतीयमाना । ताराणां पारावतपक्षित्वेन, ध्वान्तस्य काकत्वेन च रूपणाद्रूपकम्, विहरणैर्मृगयाऽवधारणस्य तारापारावतानां चोड्डयनस्योत्प्रेक्षणमात्रत्वादुत्प्रेक्षा प्रतीयते, तथावधारण एव चरमाशां प्रत्ययनस्य समर्थनात् काव्यलिङ्गम्, तथाविधसङ्ग्रामवृत्तपरिस्फूर्त्या समासोक्तिश्चार्थालङ्कारः । अनुप्रासश्च शब्दालङ्कारः ।

ग्रहराजो यत्रैवंभूतान्युदयाचलसानूनि बालातपसंतापविलीनशिलाजतुलवप्रवाहानेव कियत्कालविलम्बधूमलीभूतरुधिरप्रवाहान्धारयन्ति । रणभूमिषु हि कालविलम्बेन धूमला रुधिरप्रवाहा भवन्ति । अत एव—उदयन्नुदयं प्राप्नुवन्नरुणोऽग्रजस्तत्संबन्धिनि प्रह्वीभावे नमस्कारे विषये य आदरो भक्त्यतिशयस्तस्माद्धेतोररुणानुजे मिलति संगमं प्राप्नुवति सति तयोररुणगरुडयोः सङ्गान्मेलनाद्धेतोः रक्तप्रदीप्त्या नवास्तत्कालमापाकादाकृष्टा इष्टका यत्र तादृशी नूतनेष्टकानिर्मिता वेष्टना, नवा इष्टका यत्र शिल्पे तन्नवेष्टकं तेन वा वेष्टना प्राकारः किमु न शङ्क्या न तर्क्या, अपि तु सैव तर्क्येत्यर्थः । परिवारभूते दिनप्रकाशे युध्यमाने तद्दर्शिनो लीलाविहारिणो ग्रहराजस्य स्वामिनो महाराजोचितगैरिकसुवर्णभूषितनवेष्टकानिर्मितप्राकारोर्ध्वस्थितिरुचिता संभाव्यते । अथ च दिनरात्र्योः सेनानीभूतयोः सङ्ग्रामे उदयाचलसानूनि तद्भटतुल्यानि रुधिरं धारयन्ति । भटाः प्रहारवशाद्रक्तसिक्ता भवन्ति । तत्र च दिनपक्षीयप्रस्थानां जयित्वात्सुवर्णमयगरुडसंपर्काद्वेष्टकस्य वेष्टना सुवर्णपट्टिकाया धारणा न तर्क्या किमु, अपि तु जयिनां तया भवितव्यमेवेति । गरुडस्तेषां सुवर्णमयवीर ( विरुद ) पट्टिकास्थाने जात इत्युचितमित्यर्थः । नवेष्टकवेष्टनेति, 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६ । ३ । ३४' इति पुंवत् । वेष्टकः, कर्तरि 'ण्वुल्तृचौ ३ । १ । १३३' इति ण्वुल् ॥ १६ ॥

**रविरथहयानश्वस्यन्ति ध्रुवं वडवा बलप्रतिबलबलावस्थायिन्यः समीक्ष्य समीपगान् । निजपरिवृढं गाढप्रेमा रथाङ्गविहंगमी स्मरशरपराधीनस्वान्ता वृषस्यति सम्प्रति ॥ १७ ॥**

रवीति ॥ भो राजन्, संप्रति प्रातःकाले बलस्य दैत्यस्य प्रतिबलः शत्रुः प्राचीवर्तीन्द्रस्तस्य बलं सैन्यं तत्रावस्थायिन्यो मध्यवर्तिन्यो वडवास्तुरङ्ग्यो गाढप्रेमाः सूर्याश्वेषु दृढानुरागाः सत्यो रविरथहयान्समीपगान्समीक्ष्य मैथुनार्थमात्मनोऽश्वानिच्छन्ति ध्रुवमुत्प्रेक्षायाम्, निश्चितं वा । इच्छन्तीवेत्यर्थः । यतः—स्मरशरपराधीनं स्वान्तं चित्तं यासाम् । तथा—रथाङ्गविहङ्गमी चक्रवाक्यपि निजं स्वीयं परिवृढं चक्रवाकमिदानीं प्रातः, समीपमागतं दृष्ट्वा कामबाणवशचित्ता, अत एव—रात्रियोगेन दृढानुरागा सती मैथुनवाञ्छया वृषस्यति । वृषवद्बलवन्तं तं मैथुनार्थं कामयत इत्यर्थः । सूर्याश्वाः पूर्वस्यामागताः, चक्रवाकयोश्च संगमो जात इति भावः । अश्वस्यन्ति वृषस्यति आत्मनोऽश्वानिच्छन्ति वृषमिच्छति च, क्यचि 'अश्ववृषयोर्मैथुनेच्छायाम्' इति मैथुनेच्छायामसुगागमः । व्युत्पत्तिमात्रं चैतत् । रूढ्या तु मैथुनार्थमिच्छन्तीत्येवार्थः । तथा च—'वृषस्यन्ती तु कामुकी' इत्यमरः । 'इति रामो वृषस्यन्तीम्' इति च कालिदासः । 'प्रभौ परिवृढः ७।२।२१' इति निपातः । गाढप्रेमेति, 'डाबुभाभ्यामन्यतरस्याम् ४ । १ । १३' इति पक्षद्वयेऽपि डाप् । डापो वैकल्पिकत्वादेकत्र नान्ततापि । विहङ्गमी, जातित्वान्ङीप् । रथाङ्गं चासौ विहंगमी चेति समासः ॥ १७ ॥

**निशि निरशनाः क्षीरस्यन्तः क्षुधाऽश्वकिशोरका-मधुरमधुरं हेषन्ते ते विलोलितवालधि । तुरगसमजः स्थानोत्थायं क्वणन्मणिमन्थभूधरभवशिलालेहायेहाचणो लवणस्यति १८॥**

निशीति ॥ भो राजन् निशि रात्रौ निरशना निराहाराः, अत एव—क्षुधा क्षीरस्यन्त आत्मनोऽत्यर्थं क्षीरं दुग्धमिच्छन्तः ते अश्वकिशोरका अतिप्रसिद्धा अश्वबालकाः मधुरमधुरम् अतिमधुरः शब्दो यथा स्यात्तथा, विलोलिताः पुनःपुनश्चालिता बालधयः पुच्छानि यस्यां क्रियायां तद्यथा तथा हेषन्ते हेषारवं कुर्वन्ति । तथा—तव मन्दुरायां स्थितस्तुरगाणां समजः समूहः स्थानोत्थायं शय्यास्थानाच्छीघ्रमुत्थाय क्वणन् हेषमाणः मणिमन्थनामके भूधरे भवानां जातानां शिलानां सैन्धवशिलानां लेहायास्वादनाय ईहया इच्छया पुनःपुनर्मुखादिचालनचेष्टया वा चणः ख्यातः सन् लवणस्यत्यात्मनो लोलुपत्वेन लवणमिच्छति । अश्वकिशोरकाः प्रातः क्षीरपानार्थं हेषन्ते, अश्वास्तु प्रातः सैन्धवास्वादनाय हेषन्त इति जातिः । सूर्योदयो जात इत्यर्थः । क्षीरस्यन्तो, लवणस्यतीत्यत्र चात्मेच्छायां क्यचि ' अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ७।१।५१' इति 'क्षीरलवणयोर्लालसायाम्' इति वार्तिकवचनाल्लालसायामसुक् । किशोरकाः, 'अल्पे ५।

१ अत्राप्यनुप्रासः, रूपकमुत्प्रेक्षा च ।

१ अत्राप्यनुप्रासः, यमकं च । उत्प्रेक्षा, समीक्ष्य वृषस्यतीति हेतुहेतुमद्भावोक्तेः काव्यलिङ्गं च ।

अपि विरचितो विघ्नः पुण्यद्रुहः खलु नर्मणः
परुषमरुषे नैकस्यै वामुदेतु मुदेऽपि तत्॥२१॥

रतीति ॥ रतिरतिपत्यो रतिकामयोर्द्वितैव द्वैतम्।रतिद्वैतं कामद्वैतं चेति यावत् । तस्यैव श्रीर्ययोस्तत्संबोधनं हे भैमीनलौ, नग्नानां बन्दिनामाचार्या वैतालिका वयं प्रियेऽनुकूले वचसि यद्यस्माद्धुरं भारं बिभृमस्तरां चाटुवचनेषु वयमेव प्रगल्भतरास्ततस्तस्माद्वदामतमामतितमां ब्रुवाम। सूर्योदयो जातः, तस्मात्क्रीडां त्यक्त्वा शीघ्रं शय्याया उत्तिष्ठतमिति वचनेऽस्माकं प्राप्तः काल इति धाष्टर्येन ब्रूम इत्यर्थः । यद्यूयं प्रियवचनचतुरास्तर्ह्येवं परुषं किमिति वदथेत्याशङ्क्याह—तदस्मदुक्तं परुषं वच एव पुण्यद्रुहः प्रातःकालिकस्नानसंध्यादिधर्मविरोधिनः नर्मणः प्रातःकालिकालिङ्गनचुम्बनादिविलासस्य पुनः प्रबोधपूर्वमुत्थापनाद्विरचितः परुषरूपो विघ्नोऽपि वां युवयोरेकस्यै अरुषे केवलाय क्रोधाभावाय उदेत्विति न, किंतु खलु निश्चितं मुदेऽपि हर्षायाप्युदेतु । यद्यप्येतत्परुषमुक्तम्, तथापि रोषो न कार्यः परुषस्यापि पुण्यहेतुत्वाद्धर्षोऽपि यस्माद्भविष्यति । तथा च हितवादित्व एव तात्पर्यात्प्रियवचनचातुर्यमव्याहतमेवेत्यर्थः । क्रीडां विहाय शीघ्रमुत्तिष्ठतमिति भावः । रतीत्यादिविशेषणेन द्वयोरौचिती सूचिता । वां युवयोर्मध्येऽरुषे रोषहीनायै एकस्यै भैम्यै मुदे नोदेतु । भैम्याः सम्भोगप्रियत्वान्नर्मविघ्ने यद्यपि सन्तोषो न भवेत्, तथापि तव पुण्यप्रियत्वादेवास्माभिरुच्यत इत्यर्थ इति वा । भैम्यै कोपाभावायापि नोदेतु मुदेऽपि नोदेतु । भैम्या रोषो वास्तु हर्षोऽपि वा मा भूत्, तथापि समयोचितमुच्यत एवेति वा । तत्तस्मादवसरोचितभाषित्वात्पुण्यद्रुहो नर्मणः परुषं यथा तथा विरचितो विघ्नोऽपि निश्चितमकोपाय केवलमुदेत्विति न, किंतु मुदेऽप्युदेतु । सदा स्वोपजीविनाऽभिहितेऽपि परुषे रोषो न भवति, किंतु हर्ष एव भवतीत्यर्थ इति वा । किंच प्रियवचःप्रवीणा अपि वयं यतो नग्नाचार्या जितलज्जाः, अतः स्वच्छन्दं वदाम इति भावः । 'नग्नो वन्दिक्षपणयोर्विवस्त्रे तु' इति विश्वः । द्वैतं पूर्ववत् । 'शेषाद्विभाषा ५।४।१५४' इति कप् । वदामतमां, 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३।३।१६३' इति प्राप्तकाले लोट् । 'तिङश्च ५।३।५६' इत्यतिशये तमप् । पुण्यद्रुहः 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ३।२।६१' इति क्विप् । उदेतीति पाठे—'वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१' इति लट् । एकस्यै, तादर्थ्यमात्रविवक्षया चतुर्थी ॥ २१ ॥

भव लघु युताकान्तः सन्ध्यामुपास्स्व तपोऽमल
त्वरयति कथं संध्येयं त्वां न नाम निशाऽनुजा।
द्युतिपतिरथावश्यंकारी दिनोदयमासिता
हरिपतिहरित्पूर्णभ्रूणायिता कियतः क्षणान् २२

भवेति ॥ हे राजन्, त्वं तस्माल्लघु शीघ्रं युता पृथग्भूता कान्ता यस्मादेवंभूतो भव । इदानीं भैम्या सह क्रीडां त्यज, ततः संध्यां नित्यकृत्योपासनामुपास्स्व कुरु। हे तपसा नित्यकर्माद्यनुष्ठानरूपेणामलोज्ज्वल निर्दोष, निशानुजा रात्र्यनन्तरजाता प्राभातिकीयं संध्या त्वां कथं नाम न त्वरयति, अपि तु त्वरयत्येव । अथ मुहूर्तानन्तरक्षणे द्युतिपतिः सूर्यो दिनोदयं दिवसप्रारम्भमवश्यकारी अवश्यं करिष्यति । उदेष्यतीत्यर्थः । यतः—हरिरिन्द्रः पतिर्यस्यास्तस्या हरितो दिशः प्राच्याः पूर्णभ्रूणो दशमासगर्भ इवाचरितो रक्ततरः कियतस्त्रिचतुरानेव क्षणानाधिता स्थाता । प्रातःसंध्यायाः सूर्योदयात्प्रागेव विधानाच्छीघ्रमुत्थाय प्रातःसंध्यामुपास्स्वेत्यर्थः । युतेति, 'यु मिश्रणामिश्रणयोः' क्तः।त्यक्तादिपदत्यागेनामङ्गलप्रतीतिपरिहारार्थं युतेति श्लिष्टपदं प्रायोजि । संध्यापदेन कर्मानुष्ठानपर्यन्तमेव कान्तारहितो भव, तदनन्तरं पुनरपि युता संयुक्ता कान्ता येनेति मिश्रणमपि विवक्षितम्, एतदर्थमेतत्प्रायोजि वा । कान्ताशब्दस्य प्रियादित्वाद्युतेत्यस्य न पुंवत् । त्वरयति । हेतुमण्णिच् । कारीति भविष्यत्यावश्यके णिनिः तद्योगे च 'अकेनोर्भविष्यदाधमर्ण्ययोः २।३।७०' इति निषेधाद्दिनोदयमिति षष्ठ्यभावः । आसिता, लुट् । भ्रूणायितः, आचारक्यङन्तात् क्तः । क्षणान् कालवाचित्वाद्द्वितीया ॥ २२ ॥

मुषितमनसश्चित्रं भैमि त्वयाऽद्य कलागृहैर्निषधवसुधानाथस्यापि श्लथश्लथता विधौ ।

१ अत्रानुप्रासो यमकं च,उत्प्रेक्षोपमा, काव्यलिङ्गं च
२ अत्राप्यनुप्रासः, यमकं च शब्दालङ्कारौ । द्युतिपतेर्हरिपतिहरित्पूर्णभ्रूणायितेत्युपमाऽप्युत्प्रेक्षाऽङ्गम् । यथ कस्यचिद् गृहिणो गृहे सन्ततिजन्मावसरे प्राप्तेऽपि गृहपतेरन्यामाश्लिष्य प्रमत्तत्वे धृतगर्भासन्नप्रसवबन्धिन्यास्तदर्थं गृहपतिप्रबोधनचेष्टितस्य व्यञ्जनात्समासोक्तिश्च ।

पूर्ववत् । स्तोकान्मुक्तैः 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २।१।३९' इति पञ्चमीसमासः । अत एव पञ्चमी । 'पञ्चम्याः स्तोकादिभ्यः ६।३।८' इत्यलुक् । निरयत्, 'इण् गतौ' इत्यस्माच्छता । उदकुम्भः, 'एकहलादौ पूरयितव्येऽन्यतरस्याम् ६। ३ ।५९' इत्युदकलोपादेशः । दिदृक्षुरित्युप्रत्ययान्तत्वात् 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९ ।' इति षष्ठीनिषेधाद्द्वितीया, 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः२।१।२४'इति योगविभागात्समासः ॥ २५ ॥

प्रथमककुभः पान्थत्वेन स्फुटेक्षितवृत्रहा-
ण्यनुपदमिह द्रक्ष्यन्ति त्वां महांसि महस्पतेः ।
पटिमवहनादूहापोहक्षमाणि वितन्वता-
महह युवयोस्तावल्लक्ष्मीविवेचनचातुरीम् ॥२६॥

प्रथमेति ॥ हे राजन्, महस्पतेः सूर्यस्य महांसि तेजांसि प्रथमककुभः प्राच्याः पान्थत्वेन पथिकतया तेनैव मार्गेण गमनवशात्स्फुटं सविशेषमीक्षितो वृत्रहा यैस्तादृशानि सन्त्यनुपदमनन्तरं सविधमागत्य इह प्रासादे वर्तमानं त्वां द्रक्ष्यन्ति विलोकयिष्यन्ति । अनन्तरं पटिम्नोऽतितैक्ष्ण्यस्य, अथ च—प्रज्ञातिशयस्य वहनाद्धारणादसतः प्रकाशादेः प्रकटीकरणमूहा, सतश्च तिमिरादेरपोहो निराकरणं, तयोः क्षमाणि समर्थानि सामान्यविशेषभावादिनिर्णयनिपुणानि तानि रवितेजांसि युवयोरिन्द्रनलयोस्तावतीनामनेकप्रकाराणां शोभासंपद्रूपाणां लक्ष्मीणां विवेचनचातुरीं तारतम्यविचारकौशलं वितन्वतां विस्तारयन्तु । अहह चित्रम् । अन्यत्रैवंविधस्य चातुर्यस्यादर्शनादाश्चर्यम् । इन्द्रोऽतिशयशोभासंपत्तिमान्नलो वेति संशये प्रथममिन्द्रदर्शनादिन्द्रे शोभासंपत्तिमत्त्वसामान्यबुद्धिः अनन्तरं च नलदर्शनान्नले शोभासंपत्तिमत्त्वविशेषबुद्धिरिति सामान्यापेक्षया विशेषस्य बलवत्तरत्वादुभयदर्शिभिः सूर्यकिरणैरिन्द्रापेक्षया शोभासंपत्तिभ्यां नल एवाधिक इति निर्णीयतामिति भावः । अन्योऽपि प्राज्ञ ऊहापोहक्षमः सामान्यविशेषभावादिचातुरीं तनोति । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः । पटिमा, 'पृथ्वादिभ्य इमनिज् वा ५।१।१२२।' इतीमनिच् । ऊहा स्त्रीत्वविवक्षयां 'गुरोश्च हलः ३।३।१०३' इत्यप्रत्ययः ॥ २६ ॥

१ अत्रापि णकारादेरनेकवारं साम्यादनुप्रासः, मुदेति यमकं च । भास्वतः स्वर्णोदकुम्भत्वेन रूपणाद्रूपकम् । कुमुदालिनं प्रस्थापयन्त्य इत्युक्त्या श्रियां जारगृहान्निर्गत्य पतिगृहं प्रति प्रस्थानचेष्टितं व्यज्यत इति समासोक्तिश्च ।

अनतिशिथिले पुम्भावेन प्रगल्भबलाः खलु
प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः ।
किमपि मुखतः कृत्वानीतं वितीर्य सरोजिनी-
मधुरसमुषायोगे जायां नवान्नमचीकरन् ॥२७॥

अनतीति ॥ हे राजन्, यस्मात्पुम्भावेन पौरुषेण प्रगल्भबला उत्कटशक्तयोऽतिधृष्टाः, अत एव—अनतिशिथिले विकासोन्मुखेऽत्यक्तकलिकाबन्धकाठिन्येऽपि पाथोजास्ये कमलमुखे मकरन्दग्रहणार्थं प्रसभं हठान्निविश्य प्रविश्य निरित्वरा निर्गमनशीला एवंभूता अलयो भ्रमराः किमपि कियदर्धं मुखतो मुखे कृत्वाऽऽनीतं किमप्यपूर्वरसं स्वादुतरं सरोजिनीमधुरसं कमलिनीमकरन्दरूपं रसमास्वाद्यं वस्तु उषोयोगे प्रभातकाले वितीर्य दत्त्वा नवान्नं नूतनमपूर्वम्, अथ च—प्रेमभरात्स्वयमभुक्तमनुच्छिष्टम्, अन्नं जायां मधुकर्यौ अचीकरन्कारयामासुः । अविकसिते कठिने कमलेऽबलत्वात्प्रवेष्टुमशक्ता एता इति कृत्वा पौरुषेण स्वयं तत्र प्रविश्य मकरन्दं मुखे कृत्वा समानीय मधुकरीभ्यो दत्त्वा ताभिस्तद्भोजयामासुरित्यर्थः । किंचिद्दाससर्शैरप्रकाशत्वात्कमलानि विकासोन्मुखानि जातानीति भावः । अन्येनापि प्रातः शुभयोगे बालप्राशनं कार्यते । उषायोगेति पाठे—'विभावरी नक्तमुषा च शर्वरी—' इति हलायुधः । उषाया अर्थाद्दिनेन सह योगे । प्रातरित्यर्थः । निरित्वराः, 'इण्नशजिसर्तिभ्यः क्वरप् ३ । २ । १६३' इति क्वरपि तुक् । मुखतः कृत्वेति 'स्वाङ्गे तस्प्रत्यये कृभ्वोः—' इति क्त्वा । जायाम्, 'हृक्रोरन्यतरस्याम् १।४।५३' इति कर्मत्वम् । जाया इत्यपि पाठः ॥ २७ ॥

१ अत्राप्यनुप्रासः । महस्पतेरित्यनेन सूर्यस्यासह्यापराधत्वं, महसामीक्षितवृत्रहत्वोक्त्या तैः वृत्रहणोऽप्यनुमतिस्त्वच्चेष्टितदर्शने लब्धेति प्रतीयते, तेन राज्ञा मन्त्रिणा चानुज्ञातानां सैनिकानां कस्याप्यपराधिविषये यद्विधेयं चेष्टितं तद् व्यज्यते इति तेन वस्तुना समासोक्तिर्व्यज्यत इति बोध्यम् । २ अत्रानुप्रासः, ललितोत्प्रेक्षा । पाथोजास्य इति पाथोजानां निवेशनत्वं, सरोजिनीमधुरसमिति च सरोजिन्या नायिकाविशेषत्वं

'ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम्'इति शास्त्रार्थः सहचरपदेन सूचितः । निगडबद्धोऽपि कारागृहेषु भिन्नेपूत्मोचितः समागच्छन्स्वस्य बन्धनवशान्निराहारैर्ज्ञातिभिः सह मधुरैरन्नैः पारणां करोति । क्रोडादिति तं परित्यज्य इत्यर्थे हेतौ 'ल्यब्लोपे कर्मण्यधिकरणे च' इति ल्यब्लोपे पञ्चमी । समायताम्, इणः शता सहचरैः, 'पुमान्स्त्रिया १।२।६९ 'इत्येकशेषः ॥ ३० ॥

**तिमिरविरहात्पाण्डूयन्ते दिशः कृशतारकाः**
**कमलहसितैः श्वेनीवोन्नीयते सरसी न का।**
**शरणमिलितध्वान्तध्वंसिप्रभाऽऽदरधारणाद्**
**गगनशिखरं नीलत्येकं निजैरयशोभरैः॥३१॥**

तिमिरेति ॥ प्राच्यादयो दिशस्तिमिरस्य विरहान्नाशात्पाण्डूयन्ते शुभ्रा इवाचरन्ति । अत एव—कृशा अप्रकाशाः किंचिद्दृश्यास्तारकाः कतिपयनक्षत्राणि यासु । अन्यापि प्रियवियोगात्पाण्डुरा निमग्नातिकृशनेत्रकनीनिका च भवति । तथा—का सरसी कमलानां हसितैर्विकासैः कृत्वा श्वेनीव श्वेतवर्णेव नोन्नीयते न तर्क्यते, अपि तु—सर्वा अपि सरस्यस्तैः शुभ्रायन्ते । अन्यापि प्रियप्राप्तेः कमलतुल्यमुखहसितैः श्वेता भवति।एकं गगनशिखरं गगनमध्यभागः शरणार्थं स्वपरित्राणार्थं गगनं प्रति मिलितस्य प्रत्यागतस्य ध्वान्तस्य ध्वंसिनी विनाशिनी या सूर्यप्रभा आदरधारणाद्धेतोर्निजैरयशोभरैः स्वीयैरकीर्तिसमूहैर्नीलति श्याम इवाचरति, अन्योऽपि शरणागतं परित्यज्य तद्वैरिणमादरेणाङ्गीकुर्वन्दुर्यशसा श्यामो भवति । दिशः सरांसि च प्रसेदुः, गगनं च नक्षत्राहार्यशोभापगमान्निजं नीलिमानं प्राप्तमिति भावः ।

पाण्डूयन्ते, उपमानादाचारेऽर्थे 'कर्तुः क्यङ्—सलोपश्च ३।१।११' इति क्यङ् 'अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५'इति दीर्घः । श्वेनी, श्वेतशब्दाद्वर्णवाचिनो 'वर्णादनुदात्तात्तोपधात्तो नः ४।१।३९' इति ङीप् तस्य नश्च। नीलति, 'नील वर्णे ' इति धातुः । आचारक्विबन्तान्नीलशब्दात्तिब्वा ॥ ३१ ॥

**सरसिजवनान्युद्यत्पक्षार्यमाणि हसन्तु न**
**क्षतरुचिसुहृच्चन्द्रं तन्द्रामुपैतु न कैरवम् ।**
**हिमगिरिदृषद्दायादश्रि प्रतीतमदः स्मितं**
**कुमुदविपिनस्यायो पाथोरुहैर्निजनिद्रया॥३२॥**

सरसिजेति ॥ सरसिजवनानि न हसन्तु, अपि तु—विकसन्त्वेव । यद्यस्मादुद्यन्नुदित्वरः पक्षः सहायभूतः अर्यमा सूर्यो येषाम् । विकस्वराणीत्यर्थः । अथ च—यदि मित्रस्योदयो भवति, तदा सर्वोऽपि हर्षवशाद्विहसत्येव । तथा—कैरवं कुमुदं तन्द्रां संकोचं नोपैतु, अपि तु—प्राप्नोत्वेव। यतः—क्षतरुचिर्गतलक्ष्मीकः सुहृच्चन्द्रो यस्य तादृशम्।चन्द्रोदयविकासिनः कुमुदस्य चन्द्रक्षये संकोचो युक्त एवेत्यर्थः । अन्योऽपि सुहृत्क्षये मूर्च्छावशान्निमीलति । अथो अथवा पाथोरुहैर्विकसितकमलैः रात्रिसम्बन्धिन्या निद्रया कृत्वा कुमुदवनस्यादः प्रत्यक्षदृश्यं स्मितं विकसितं प्रतीतं विनिमयेन गृहीतम् । किंभूतं स्मितम्—हिमगिरेर्हिमाचलस्य दृषदां शिलानां दायादांशभागिनी सदृशी श्रीः शोभा यस्य । शुभ्रतरमित्यर्थः । कमलानां रात्रौ निद्राऽभूत्, कुमुदानां विकासः । प्रातस्तु कमलानां विकासः, कुमुदानां च संकोचो दृश्यते, ततः स्वीयां निद्रां कुमुदेभ्यो दत्त्वा कमलैस्तद्विकासः परिवर्त्य गृहीत इति संभाव्यत इत्यर्थः । सूर्ये उदितः , कमलानि विकसितानि, कुमुदानि च संकुचितानीति भावः । प्रती-

---

१ अत्रानुप्रासः, सायं कमलानां सङ्कोचे दयोदयस्य हेतुत्वेनोत्प्रेक्षणात्, कमलानां च तेषामभ्यन्तरत उत्पततां मधुकराणां वशिष्टयेन कमलानां निष्प्राणीभवत्त्वं, भ्रमराणां च प्राणत्वं व्यज्यते, यद्वा तथाविधानां कमलानां मृतप्रायत्वे मुकुलानां तदायतनत्वं, तत्क्रोडात् नीडप्रवेशेच्छूनां च तत्रत्यानां सुहृदामितस्ततोऽन्तिमसंस्कारार्थं धावनचेष्टितं केषांचिदन्येषां स्वं स्वं गृहं प्रति प्रस्थानं च व्यज्यते । अम्भोरुहाणां भिन्नत्वे ( विकासे ) पुनस्तत्रैव मधुपारणालाभावधारणोक्त्या मधुकराणां स्वार्थपरत्वं, तेषां चाम्भोरुहाणां मरणासन्नतां प्राप्य लब्धजीवितत्वं तेन पुनस्तथैव दयोदयस्वाभाव्येन वितरणपरत्वं च व्यज्यते ।

१ अत्रानुप्रासः । पूर्वार्धे तिमिरविरहात् पाण्डूयन्ते दिश इत्युक्त्या तिमिरस्य प्रियवैशिष्ट्यं व्यज्यते । कृशतारका इति विशेषणवैशिष्ट्यं चापि तत्रैवानुगुणं, श्लेषेण तारकाणां कनीनिकापरत्वाभिमननात् । सरस्यां विकासोत्प्रेक्षणेन सपत्न्यास्तापे प्रसादौचित्यं व्यज्यते, तदनुगुणा श्वेनीवेत्युत्प्रेक्षा । परार्द्धे पुनः गगनशिखरस्याकिञ्चित्करत्वेन क्लीवत्वं, ध्वान्तस्य शरणार्थित्वेऽप्यप्राप्तशरणत्वं, प्रत्युत शरणार्थिप्रतिद्वन्द्विभूतप्रबलान्तरादरणमित्ययशोभरमाजनत्वं समर्थितं च व्यज्यते ।

तम्, प्रतिपूर्वादिणो निष्ठा । 'प्रतीष्टम्' इति च पाठः । अर्थः पूर्वोक्त एव ॥ ३२ ॥

धयतु नलिने माध्वीकं वा न वाऽभिनवागतः
कुमुदमकरन्दौघैः कुक्षिंभरिर्भ्रमरोत्करः।
इह तु लिहते रात्रीतर्षं रथाङ्गविहङ्गमा
मधु निजवधूवक्त्राम्भोजेऽधुनाऽधरनामकम्

धयत्विति ॥ अभिनवो नूतनः प्रभात आगतो भ्रमरोत्करो नलिने वर्तमानं माध्वीकं मकरन्दं धयतु पिबतु वा न वा । यतः—रात्रौ कुमुदमकरन्दौघैः कुक्षिम्भरिः परिपूर्णोदर आकण्ठतृप्तः । रात्रौ कुमुदमकरन्दवृन्दैः पूरितोदरत्वात्प्रातर्मधु पिबतु वा मा पिबतु वा। न तत्रास्माकमाग्रह इत्यर्थः। अन्योऽप्याकण्ठतृप्तोऽतिथिर्भुङ्क्ते न वा, न तत्रादरः । रथाङ्गविहङ्गमास्तु रात्रीतर्षं सकलां रात्रिं तर्षित्वा वियुक्तत्वात्कुमुदमकरन्दं परित्यज्य पिपासयैव स्थित्वा इह प्रत्यक्षदृश्ये निजवधूवक्त्रलक्षणेऽम्भोजे वर्तमानमधरनामकमोष्ठसंज्ञं मधु अधुना प्रातःसमये लिहत आस्वादयन्ति । एतदुक्तम् । तावतैव चाम्भोजस्यापि कृतार्थत्वं जातमित्यर्थः । अन्यत्रापि तृप्तापेक्षयोपोषितभोजनं युक्ततरं भवति । भ्रमरा मकरन्दमास्वादयन्ति, चक्रवाकाश्च प्रातर्वियोगापगमात्कमलमकरन्दमनादृत्य निजसहचरीश्चुम्बन्तीति भावः । 'फलेग्रहिरात्मंभरिश्च ३ । २ । २६ ।' इति चात्कुक्षिंभरिः । रात्रीतर्षम्, 'अस्यतितृषोः क्रियान्तरे कालेषु ३ । ४ । ५७ ।' इति णमुल्। 'तृतीयाप्रभृतीन्यन्यतरस्याम् २ । २ । २१ ।' इति समासः ॥ ३३ ॥

जगति मिथुने चक्रावेव स्मरागमपारगौ
नवमिव मिथः सम्भुञ्जाते वियुज्य वियुज्य यौ
सततममृतादेवाहाराद्यदापदरोचकं
तदमृतभुजां भर्ता शंभुर्विषं बुभुजे विभुः ३४॥

जगतीति ॥ जगति त्रैलोक्यमध्ये चक्रावेव मिथुने स्त्रीपुंसौ सरागमपारगौ कामशास्त्रपारगामिनौ तद्रहस्यवेदिनौ नान्यौ । यद्वा—सरागमपारगौ चक्रवाकावेव जगति मिथुने नान्ये एतादृशे चतुरे मिथुने स्त इत्यर्थः। कुत एतज्ज्ञातमित्यत आह-यौ चक्रवाकस्त्रीपुंसौ कौवा वियुज्य वियुज्य पुनः पुनरन्योन्येन सह रात्रौ दिवा वा वियोगं प्राप्य मिथोऽन्योन्यं नवमिवातिपरिच्चियजन्यावज्ञाशून्यं सातिस्पृहमिव संभुञ्जाते समयान्तरे सुरतसुखमनुभवतः । अजस्रकामसेवनाद्विरागो भवेदिति वियुज्य संभोगः प्रत्यग्रसंभोगवद्रसातिशयचमत्कारकारी भवति, कामशास्त्ररहस्यं ज्ञात्वैव तावेवं कुरुत इत्यर्थः । अत्र दृष्टान्तः— यद्यस्मादमृतभुजां केवलपीयूषाहाराणां सुराणां भर्ता स्वामी । सुलभतरामृत इति यावत् । विभुर्व्यापकः समर्थः । विषभक्षणेऽप्यसंभावितोपद्रव इति यावत् । स शंभुर्नीरोगकरणद्वारा सर्वेषामारोग्यसुखकार्यसंभावितरोगोऽपीश्वरः सततममृतलक्षणादेवाहाराद्भक्ष्याद-रोचकममृतात्यन्तानभिलाषरूपं रोगमापत्प्राप । तत्तस्मात्तत्परिहारार्थं विषं बुभुजे । सततमधुरतरास्वादजन्यारुचिपरिहारार्थमेव स कालकूटं भक्षितवान्। अनन्तरं च पुनरमृतभक्षणे प्रत्यग्रैव रुचिर्यथा जायते तथा वियोगपूर्वः संभोगो नितरां रुचिमुत्पादयतीति बुद्ध्वा चक्रवाकाभ्यां क्रियत इति तावेव कामशास्त्ररहस्यज्ञाविति भावः । पारगौ, 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ३।२।४८' इति डः । संभुञ्जाते, 'भुजोऽनवने १।३। ६६' इति तङ् । अनेन संभोगस्य वियोगादेव नूतनत्वं भवतीति सूच्यते ॥ ३४ ॥

विशति युवतित्यागे रात्रीमुचं मिहिकारुचं
दिनमणिमणिं तापे चित्ताग्निजाच्च यियासति।
विरहतरलजिह्वा बह्वाह्वयन्त्यतिविह्वला-
मिह सहचरीं नामग्राहं रथाङ्गविहङ्गमाः॥३५॥

विशतीति॥युवतित्यागे चक्रवाकनिष्ठे स्त्रीवियोगे मिहिकारुचं शीतांशुं विशति सति, यतो—रात्रीमुचं रात्रलिक्षणाप्रियात्यागिनम्, तथा—वियोगजन्ये तापे परितापे औष्ण्ये च निजाच्चित्ताच्चक्रवाकहृदयात्सकाशाद्दिनमणिमणिं सूर्यकान्तं यियासति जिगमिषति सति विरहेण तरलन्ती

१ अत्र विशेषणानां साभिप्रायत्वात् परिकरः । २ अत्र भवेति यमकं, ककारादिसाम्यादनुप्रासश्च । धयतु न वा धयत्वित्युक्त्या कुक्षिम्भरिरिति विशेषणवैशिष्ट्येन च भ्रमरोत्करस्य लुब्धत्वमात्रं तदुपेक्षणे हेतुरिति व्यज्यते, तेन पदार्थहेतुकं काव्यलिङ्गम् । इह त्वित्यादौ पुनस्तुपदस्य पूर्वतो वैलक्षण्यद्योतकतया रात्रितर्षमित्युक्तिवैशिष्ट्येन च रथाङ्गानामनुरक्तनायकत्वं व्यज्यते ।

१ अत्र चक्रयोः प्रस्तावे स्त्रीपुंसयोः प्रतीतेरुपमा व्यज्यते, यथा-'अधिगम्य, जगत्यधीश्वरात्' इत्यादौ । परार्धे दृष्टान्त इति व्याख्यातारः।

तरलेवाचरन्ती विह्वलीभवन्ती स्खलन्ती जिह्वा येषां ते रथाङ्गविहङ्गमाः विरहेणातिविह्वलां सहचरीं चक्रवाकीं नामग्राहं स्वसंकेतेन नाम गृहीत्वेह प्रभाते क्रीडासरखि वा बहु वारं वारम् आह्वयन्त्याकारयन्ति । अन्योऽप्यतिविशृङ्खलो वारं वारमाकार्यते । श्वसिति न वेति संदेहात् । प्रातश्चक्रवाकानां संयोगः परितापत्यागः परस्पराह्वानम्, चन्द्रे धूसरत्वम्, सूर्यकान्ते तापश्च । 'प्रालेयं मिहिका' इत्यमरः । रात्रीमुञ्चम्, 'क्विप्च' इति क्विप्, रुगिति संपदादित्वात् । मिंहिका रुग्यस्येति समासः । तरलजिह्वाः तरलेवाचरन्तीत्याचारक्विबन्ताच्छतरि ङीप्यपि पुंवत् । आह्वयन्ति, स्पर्धाभावात्तङभावः ॥ ३५ ॥

**स्वमुकुलमयैर्नेत्रैरन्धम्भविष्णुतया जनः**
**किमु कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकाम् ।**
**लिखितपठिता राज्ञो दाराः कविप्रतिभासु ये**
**शृणुतशृणुतासूर्यंपश्या न सा किल भाविनी॥**

स्वेति ॥ जनो लोकः स्वमुकुलमयैरात्मीयकलिकारूपैर्नेत्रैः कृत्वाऽन्धम्भविष्णुतया अनन्धाया अप्यन्धत्वाङ्गीकाराद्धेतोः रवेरनवेक्षिकामनवलोकिकां कुमुदिनीं किमु किमर्थं दुर्व्याचष्टे दुष्टां कथयति । अवश्यदर्शननियमादियं मित्रोदयं न सहत इति लोकः किमिति निन्दति, अपि त्वयुक्तेयं निन्देत्याक्षेपः । नु अहो किं निन्दतीति वा । अन्धम्भविष्णुतयाऽविचारितया रहस्यमजानन्नेव किमिति निन्दतीति जनविशेषणं वा । कथमयुक्तमित्यत आह—हे श्रोतारः, यूयं शृणुत तस्याः सूर्यादर्शने हेतुमाकर्णयत। ये राज्ञो नृपस्य दाराः कवीनां पाणिन्यादीनां प्रतिभासमुत्पन्नेषु व्याकरणादिग्रन्थेषु विषये लिखितास्तच्छिष्यैः पठिताश्च, अतोऽवश्यदर्शनीयं सूर्यमपि न पश्यन्तीत्यसूर्यंपश्या राजदारा इत्येव लिखिताः, तच्छिष्यैश्च तथैव पठिताः । ननु प्रकृते किमित्याशङ्क्याह—सा कुमुदिनी किल प्रसिद्धं न भाविनी भविष्यति, अर्थाद्राज्ञो दाराः, अपि तु राज्ञश्चन्द्रस्य, अथ च—नृपस्य दारा भवत्येव । राजमहिष्यो ह्यतिसुरक्षितत्वादसूर्यंपश्याः, इयमपि तथा । तस्मादेतस्या अप्यसूर्यंपश्यता युक्तेति रहस्यानभिज्ञो जनो वृथैवैतां निन्दतीत्यर्थः । किलशब्दः किमर्थो वा । अत्र य इति कुमुदिनीपरामर्शेऽपि दारैः सामानाधिकरण्याद्बहुवचनम् । येति पाठः समीचीनः । पठिता, एकवचनं बहुवचनं वा । सूर्योदयवशात्कुमुदिनी संकुचितेति भावः । अन्धंभविष्णुतया, 'कर्तरि भुवः खिष्णुच्खुकञौ ३ । २ । ५७ ।' इति च्व्यर्थेऽन्धशब्द उपपदे भुवः खिष्णुच् । खित्त्वान्मुम् । अवेक्षिका, ण्वुलि 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ७ । ३ । ४४ ।' इति कात्पूर्वस्येत्त्वम् । लिखितपठिताः, कर्मधारयो द्वन्द्वो वा । असूर्यंपश्याः, 'असूर्यललाटयोर्दृशितपोः ३ । २ । ३६ ।' इति खश्, खित्त्वान्मुम् । अत एव ज्ञापकात्क्रियायोगिनोऽपि नञः समासः ॥ ३६ ॥

**चुलुकिततमःसिन्धोर्भृङ्गैः करादिव शुभ्यते**
**नभसि बिसिनीबन्धो रन्ध्रच्युतैरुदबिन्दुभिः।**
**शतदलमधुस्रोतःकच्छद्वयीपरिरम्भणा-**
**दनुपदमदःपङ्काशङ्काममीं मम तन्वते ३७॥**

चुलुकितेति ॥ गगने गच्छद्भिर्भृङ्गैरुदबिन्दुभिरिव नभसि शुभ्यते दीप्यते । किंभूतैरुदबिन्दुभिः—चुलुकः कृतश्चुलुके धृत्वा पीतस्तमःसिन्धुस्तिमिरसमुद्रो येन तस्य बिसिनीबन्धोः पद्मिनीमित्रस्य सूर्यस्य करात्किरणादेव हस्ताद्रन्ध्रेभ्योऽङ्गुल्यन्तरालविवरेभ्यश्च्युतैर्गलितैः । चुलुकेन पीततमःसिन्धोरुपरि वर्तमानस्य रवेः विवरेभ्योऽधो गलिताः कृत्वा जलबिन्दव इव भृङ्गा गगने शोभन्त इत्यर्थः । चुलुकितेति करविशेषणं वा । अनुपदं गगनात्सकाशात्कमलानि प्रतिपातानन्तरं शतदलाख्यान्यतिस्थूलानि कमलानि तेषां मधुस्रोतसो मकरन्दप्रवाहस्य कच्छद्वयी मकरन्दार्द्रभागद्वयं यत्तद्द्वयं तस्याः परिरम्भणात्संश्लेषादुभयतस्तत्र लगनाद्धेतोरमी भृङ्गा अदः पङ्काशङ्काममुष्य पीतस्य तमःसिन्धोरधःस्थितावशिष्टकर्दमसंभावनां मम वैतालिकस्य तन्वते

१ सूर्योदये सम्पद्यमानस्य तापस्य स्त्रीवियोगजन्यत्वेन सम्भावनं प्रौढोक्तिमात्रसिद्धम् । अभेदाध्यवसायश्च रूपकातिशयोक्तिमूल इति प्रौढोक्तिसिद्धया तयाऽतिशयोक्त्या युवतित्यागे तापो न चिरं सोढुं क्षमः, अतो रात्रीरूपां प्रियां मुञ्चन्तमेव मिहिकारूपनायिकान्तराभिलाषिणमपि प्रति तापः प्रविशतीति रथाङ्गानां रथाङ्गीवियोगजन्यस्य तापस्य रथाङ्गीलाभे परत्र प्रधावनमिति वचनं च सङ्गच्छते एवं च यथा संसारे यदैकस्य दुःखं, तदैव परस्य सुखं तथैवचन्द्रस्य यदा तापस्तदैव रथाङ्गानामाह्लाद इति व्यवहारप्रतीत्या समासोक्तिः ।

१ अत्र प्रागुक्तस्यार्थस्य परार्धेन समर्थनादर्थान्तरन्यासः ।

विस्तारयन्ति । सकलेऽपि तमोजले पीतेऽवशिष्टतदीयपङ्क इव भृङ्गाः शोभन्त इत्यर्थः । अमुष्या मकरन्दप्रवाहकच्छद्वय्याः पङ्क इति वा । प्रवाहतटद्वये पङ्को युक्तः । भृङ्गाश्च मकरन्दस्योपरि नोपविशन्ति, किंतु अभित इति तेषां जातिः । प्रातःकालो जातः, अन्धकारः साकल्येन विनष्टः, भ्रमरास्तरुनीडेभ्यो निर्गत्य गगनमुड्डीय मधुपानार्थं कमलान्युद्दिश्यायान्तीति भावः । चुलुकित इति 'तत्करोति तदाचष्टे' इति ण्यन्तात् क्तः । शुभ्यते, 'शुभ दीप्तौ' भावे यक् ॥ ३७ ॥

घुसृणसुमनःश्रेणीश्रीणामनादरिभिः सरः-
परिसरचरैर्भासां भर्तुः कुमारतरैः करैः ।
अजनि जलजामोदानन्दोत्पतिष्णुमधुव्रता-
वलिशवलनाद्गुञ्जापुञ्जश्रियं गृहयालुभिः ॥

घुसृणेति ॥ घुसृणसुमनसः कुङ्कुमकुसुमानि तासां श्रेणिस्तस्याः श्रीणां कान्तीनामनादरिभिरनादरणशीलैस्ताभ्योऽपि रक्ततरैः सरसः परिसरचरैस्तीरसंचरणशीलैः कुमारतरैरतिबालैर्भासां भर्तुः करैः सूर्यकिरणैर्जलजामोदो गगनावगाही कमलपरिमलस्तद्विषय आनन्दस्तेनोत्पतिष्णुरुत्पतनशीला मधुव्रतावलिस्तया शबलनान्मिश्रणाद्धेतोर्गुञ्जापुञ्जश्रियमर्धरक्तार्धकृष्णगुञ्जाराशिशोभां गृहयालुभिर्ग्रहणशीलैरजनि । तत्सदृशैर्जातमित्यर्थः । बाला अपि सुमनसां धीराणामप्यनादरिणो भवन्ति, बाला अपि रक्तकरा भवन्तीति केचित् । अजनि, भावे चिण् । उत्पतिष्णुः, 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ३ । २। १३६' इतीष्णुच् । शबलनं, 'तत्करोति तदाचष्टे' इति ण्यन्तान्नपुंसके 'ल्युट् च ३।३।११५' इति भावे ल्युट् ॥ ३८ ॥

रचयति रुचिः शोणीमेतां कुमारितरा रवेर्यदलिपटली नीलीकर्तुं व्यवस्यति पातुका ।
अजनि सरसी कल्माषी तद् ध्रुवं धवलस्फुटत्- कमलकलिकाषण्डैः पाण्डूकृतोदरमण्डला ॥ ३९ ॥

रचयतीति ॥ यद्यस्माद्रवेः कुमारितराऽतिबाला रुचिरेतां सरसीं शोणीं रक्तवर्णां रचयति । यस्माच्च कमलमकरन्दस्वादार्थं पातुका अलिपटली भृङ्गश्रेणी स्वसम्बन्धादेतां नीलीकर्तुं व्यवस्यति । यतश्चेयं धवलानां स्फुटन्तीनां विकसन्तीनां कमलकलिकानां पण्डैः समूहैः पाण्डूकृतमुदरमण्डलं मध्यदेशो यस्याः सैतादृशी, तत्तस्माद् ध्रुवं सरसी निश्चितमियं कल्माषी कर्बुरैवाजनि जाता । रक्तकृष्णश्वेतवर्णमिश्रणात्कर्बुरत्वोत्प्रेक्षा । ध्रुवमुत्प्रेक्षायाम् । बालातपो जातः, भ्रमराः परितो भ्रमन्ति, कमलानि विकसितानीति भावः । 'चित्रं किर्मीरकल्माष—' इत्यमरः । शोणीम् 'शोणात्प्राचाम् ४।१।४३' इति ङीप् । कुमारितरा, 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६।३।४३' इति ह्रस्वः । पटलकल्माषी गौरादी इति षिद्गौरादिभ्यश्च ४।१।४१' ॥ ३९ ॥

कमलकुशलाधाने भानोरहो पुरुषव्रतं
यदुपकुरुते नेत्राणि श्रीगृहत्वविवक्षुभिः ।
कविभिरुपमानादप्यम्भोजतां गमितान्यसावपि यदतथाभावान्मुञ्चत्युलूकविलोचने ॥

कमलेति ॥ कमलमात्रस्य कुशलाधाने आनुकूल्याचरणे भानोरहो अत्याश्चर्यरूपं पुरुषसम्बन्धि व्रतं नियमः । अङ्गीकृतपरिपालनशीलत्वमिति यावत् । यं दृष्ट्वाऽहो आश्चर्यरूपः पुरुष इति सर्वे वदन्ति । कुतो ज्ञातमत आह—यद्यस्मात्तास्विकानि कमलानि विकासयतीति किं वाच्यम् । किंतु श्रियोः कान्तिलक्ष्म्योर्गृहत्वं स्थानतां विवक्षुभिर्वक्तुमिच्छुभिर्व्यासवाल्मीकिकालिदासादिभिः कविभिरुपमानात्किंचिच्छ्रीगृहत्वादिगुणसादृश्यादप्यम्भोजतां कमलत्वं गमितानि प्रापितान्यारोपितकमलत्वान्यपि नेत्रकमलानीति निर्दिष्टानि लोकनेत्राण्यसौ रविरुपकुरुते उन्मीलयति । उदित्वरे हि सूर्ये लोकनेत्राण्युन्मीलन्ति । अथ च—घटाद्यर्थग्रहणसमर्थानि करोति । यत आलोकसहकृतमेव चक्षुः पदार्थग्रहणसमर्थम् । यदप्यतथाभावाच्छ्रीगृहत्वाभावात्कविभिः कमलत्वेनानुक्तत्वादुलूकविलोचने नोन्मीलयति, न च पदार्थान्ग्राहयति । यत्रोलूकस्य दृष्टिस्तत्रा-

१ अत्र बिन्दुभिरिवेत्युपमा, चुलुकिततमःसिन्धुत्वेन विसिनीबन्धो रूपणाल्लोपामुद्राप्रियत्वं व्यज्यते । पङ्काशङ्कामित्युत्प्रेक्षा च । २ अत्रानुप्रासः। सरेति यमकम्, मोदानन्देति पुनरुक्तवदाभासश्च । कराणां घुसृणसुमनःश्रीणामनादरोक्त्या गृहयालुत्वे गुञ्जापुञ्जश्रीजनकत्वोक्त्या चोपमाऽवसीयते ।

१ अत्राप्यनुप्रासः, ध्रुवमित्युत्प्रेक्षा, स्वभावोक्तिश्च ।

लक्ष्मीरिति लोकप्रसिद्धेस्तन्नेत्रयोः श्रीगृहत्वं दूरं निरस्तम् । सूर्येण कमलानि कमलतुल्यानि लोकनेत्राणि च विकास्यो- लूकनेत्राणि कमलगुणयोगाभावादविकास्यान्वयव्यतिरे- काभ्यां स्वप्रतिज्ञा सत्या कृता । एवंविधः सत्यप्रतिज्ञः कोऽपि नास्तीत्यर्थः । कमलानि विकसितानि, सर्वोऽपि लोकः प्रबुद्धः, कौशिकनेत्रे च निमीलिते । प्रातःकालो जात इति भावः । श्रीगृहत्वाविवक्षुभिः, 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २ । १ । २४' इति योगविभागात्समासः । उपमितिरुपमानम् । नपुंसके भावे ल्युट् । उपमीयतेऽनेनेत्युपमानं सादृश्यमिति वा ॥ ४० ॥

यदतिमहतीभक्तिर्भानौ तदेनमुदित्वरं
त्वरितमुपतिष्ठस्वाध्वन्य त्वमध्वरपद्धतेः ।
इह हि समये मन्देहेषु व्रजन्त्युदवज्रता-
मभि रविमुपस्थानोत्क्षिप्ता जलाञ्जलयः किल

यदिति ॥ यद्यदि त्वं भानावतिमहती भक्ति- र्यस्यैवंभूतो वर्तसे तत्तर्हि हे अध्वरपद्धतेर्यज्ञमार्गेत्या- ध्वन्य महायाज्ञिक नल, उदित्वरमुदयशीलमेनं सूर्यं त्वरितमुपतिष्ठस्व पूजय । शीघ्रमुपस्थाने हेतुमाह—हि यस्मादिह समये प्रभाते किल प्रसिद्धं रविमभिलक्षीकृ- त्योपस्थानमन्त्रेणोर्ध्वं क्षिप्ता जलाञ्जलयो मन्देहाख्येषु राक्ष- सेषूदवज्रतां जलरूपाशनिभावं व्रजन्ति वज्रीभूय तान्भ- स्मीकुर्वन्तीति श्रुतावुक्तमित्यर्थः । 'तिस्रः कोट्योऽर्ध- कोटी च मन्देहा नाम राक्षसाः' इति पुराणं च । तस्मादुदयात्पूर्वं शीघ्रमुपतिष्ठस्वेत्यर्थः । 'अध्वन्यम्' इति पाठे-अध्वरपद्धतेरध्वानमलंगामिनम् । भक्तिश- ब्दस्य प्रियादित्वात्पुंवद्भावाभावः । अध्वन्य(म्), अलंगा- म्यर्थे 'अध्वनो यत्खौ ५ । २ । १६' इति यत् । उदवज्रेति, 'मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे- षु च ६।३।६०' इत्युदकस्योदादेशः । 'अभिरभागे १।४।९१' इत्यभेः कर्मप्रवचनीयत्वाद्द्वितीया ॥ ४१ ॥

उदयशिखरिप्रस्थावस्थायिनी खनिरक्षया
शिशुतरमहोमाणिक्यानामहर्मणिमण्डली ।
रजनिदृषदं ध्वान्तश्यामां विधूय पिधायिकां
न खलु कतमेनेयं जाने जनेन विमुद्रिता ४२

उदयेति ॥ इयमहर्मणेः सूर्यस्तस्य मण्डली उदय- शिखरिण उदयाचलस्य प्रस्थे सान्वस्थायिनी वर्तमा० नाऽक्षया भूयसी शिशुतराणि महांसि तेजांसि तान्येव माणिक्यानि तेषां खनिरुत्पत्तिभूमिर्ध्वान्तेन तिमिरेण ध्वान्तवच्च श्यामां पिधायिकामाकरद्वाराच्छादिकां रजनि- रूपां दृषदं शिलां विधूयापनीय कतमेन केन जनेन विमुद्रितोद्घाटितेति न खलु नैव जाने । रात्रिविगमे यतो दृश्यत इत्यर्थः । वाक्यार्थः कर्म । न जाने । अर्थात्तं जनमित्यर्थ इति वा । अन्यापि माणि- क्यादिखनिः पर्वतप्रस्थावस्थायिनी कृष्णतरशिलापिहिता केनापि भाग्यवतोद्घाट्यते । अतिशयितः कः कतमो ब्रह्मा तेन विमुद्रितेत्यहं न जाने,अपि त्वेवमेव जानामि । कालपरिवर्तनकारिणा ब्रह्मणैवोद्घाटितेत्यर्थ इति काकुर्वा । खनिः खलु खनिरेवेत्युत्प्रेक्षा वा । कतमः, डतमच् अतिशये स्वार्थे वा, तमब्वा ॥ ४२ ॥

सुरपरिवृढः कर्णात्प्रत्यग्रहीत्किल कुण्डल-
द्वयमथ खलु प्राच्यै प्रादान्मुदा स हि तत्पतिः ।
विधुरुदयभागेकं तत्र व्यलोकि विलोक्यते
नवतरकरस्वर्णस्रावि द्वितीयमहर्मणिः ॥ ४३ ॥

सुरेति ॥ सुरपरिवृढः शक्रः कर्णात्कुण्डलद्वयं कर्ण- भूषणयुगं ब्राह्मणवेषं धृत्वा प्रतिग्रहरूपेणाग्रहीत् । किले- ति पुराणादौ । अथ प्रतिग्रहानन्तरं मुदा तत्कुण्डल- द्वयं खलु निश्चितं प्राच्यै दिशे प्रादात् । हि यस्मा- त्स शक्रस्तस्याः प्राच्याः पतिर्धवो रक्षिता च । प्रेया- न्प्रियायै प्रीत्या निजकर्णादिभूषणं प्रयच्छति । तस्यै दत्तमिति कुतो ज्ञातमत आह—तत्र प्राच्यां तयोर्द्व- योर्मध्ये वा सायमुदयभागुदित्वरो विधुरारक्तकिरणरूपमेकं कुण्डलं व्यलोकि दृष्टम् । प्रातरहर्मणिर्नवतरास्तत्काल- निर्गताः करा रक्ततरकिरणास्तद्रूपस्वर्णस्रावि सुवर्णस्र- वणशीलं तादृशमेव द्वितीयं कुण्डलं विलोक्यते । तस्मात्तस्यै तद्द्वयं तेन प्रत्तमित्यहं शङ्क इत्यर्थः । सूर्य- स्य कुण्डलसमत्वमवश्यं वक्तव्यम्, प्रसङ्गाच्चन्द्रस्य कुण्डलसमत्वम् । बालतरकिरणः सूर्य उत्तमसुवर्णस्रावि कर्ण-

१ अत्रानुप्रासः, अनुमानं च । २ अत्रानुप्रासः, किले- त्युत्प्रेक्षा काव्यलिङ्गं च ।

१ अत्रानुप्रासः, मण्डलादीनां खनित्वाद्यारोपणाद्रू- पकम् । जाने इत्युत्प्रेक्षा च ।

कुण्डलमिव शोभत इति भावः । कर्णेनेन्द्राय कुण्डलद्वयं दत्तमित्यारण्यके पर्वणि कथा ॥ ४३ ॥

**दहनमविशद्दीप्तिर्याऽस्तं गते गतवासर-
प्रशमसमयप्राप्ते पत्यौ विवस्वति रागिणी ।
अधरभुवनात्सोद्धृत्यैषा हठात्तरणेः कृताऽ-
मरपतिपुरप्राप्तिर्धत्ते सतीव्रतमूर्तिताम् ॥४४॥**

दहनमिति ॥ या दीप्ती रागिण्यारक्ता सती विवस्वति सूर्यलक्षणे पत्यौ गतवासरप्रशमे पूर्वदिनावसाने सायंकाले प्रशमसमयमस्तमयकालं प्राप्ते, अत एव—अस्तं विनाशमस्ताचलं वा गते प्राप्ते सति । 'अग्निर्ज्योतिः—' इत्याद्यग्निहोत्रमन्त्रादिप्रामाण्याद्दहनमविशत् । सैषा दीप्तिरधरभुवनात्पातालात्सकाशाद्धठाद्बलात्कारेणार्थात्तरणिमेवोद्धृत्योदयं प्रापय्य तरणेरग्रे कृतामरपतिपुरस्य स्वर्गस्य प्राच्या वा प्राप्तिर्यया एवंभूता तीव्रतया तीक्ष्णतया सह वर्तमाना मूर्तिर्यस्यास्तत्तां धत्ते । सूर्ये ऊर्ध्वदेशं प्राप्ते दीप्तिः खरतरा जातेति भावः । या नारी भर्तरि विनाशसमयं प्राप्ते विनष्टे सति तस्मिन्ननुरागिणी सती जन्मान्तरेऽपि तत्प्राप्त्यर्थमग्निप्रवेशं कुरुते सा दुष्कृतैः पातालप्राप्तमपि निरयपतितं 'व्यालग्राही यथा व्यालम्—'इत्यादिवचनप्रामाण्यान्निरयाद्बलादुद्धृत्य तस्य कृतस्वर्गप्राप्तिः सती सतीनां पतिव्रतानां व्रतमेव मूर्तिः शरीरं यस्याः, सती गौरी तस्या व्रतयुक्ता मूर्तिर्यस्यास्तां धत्ते । गौरीवादियमपीत्यर्थः । समयप्राप्ते 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः२।१।२४।' इति समासः। न तु'प्राप्तापन्ने च द्वितीयया २।२।४।' इति, प्राप्तशब्दस्य पूर्वनिपातापत्तेः ॥ ४४ ॥

**बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः
पितृशितिहरिद्वर्णाद्याहारजः किल कालिमा
शमनयमुनाक्रोडैः कालैरितस्तमसां पिता-
दपि यदमलच्छायात्कायादभूयत भास्वतः॥**

बुधेति ॥ तनुजन्मनोऽपत्यस्य तनौ वर्तमानः कालिमा श्यामत्वं किल प्रसिद्धं निश्चितं वा पितुः पित्रोर्वा शितिहरिद्वर्णादीनां कृष्णनीलवर्णपत्रशाकादीनां य आहारो भक्षणम् । शितिहरिद्वर्णं यदाद्यमदनीयं पत्रशाकादि वा । तस्माज्जातः 'स श्यामो मित्रातनयत्वात्' इत्यादि बुधानामुदयनाचार्यादीनामियं कथा गोष्ठी तथ्यैव सत्यैव । यद्यस्माद्धेतोर्भास्वत इतः प्रत्यक्षदृश्यादमलच्छायादुज्ज्वलकान्तेः शुक्लभास्वरादपि तमसां पितास्तामिस्रैकाहारात्कायाच्छमनयमुनाक्रोडैर्यमयमुनाशनैश्चरैः कालैः श्यामैरभूयतोत्पन्नम् । सूर्यकायस्योज्ज्वलत्वेऽपि श्यामतमतमीतामिस्राहारपरिणतिवशाद्यमादिभिरपत्यैः श्यामैर्यतो जातम् । तस्मादियं पण्डितकथा सत्यैवेत्यर्थः' । सर्वमपि तमः सूर्येण नाशितमिति भावः । आद्यम्, अदेः 'ऋहलोर्ण्यत् ३।१।१२४'।कालैः, काली च कालौ चेति 'पुमान्स्त्रिया' १।२।६१' इत्येकशेषः। तमसां कर्मणि षष्ठी । अभूयत भावे तङ् । क्रोडः,'क्रोडः कालोऽसितः पङ्गुर्मन्दश्छायासुतः शनिः' इत्यमरशेषः ॥ ४५ ॥

**अभजत चिराभ्यासं देवः प्रतिक्षणदात्यये
दिनमयमयं कालं भूयः प्रसूय तथा रविः।
न खलु शकिता शीलं कालप्रसूतिरसौ पुरा
यमयमुनयोर्जन्माधानेऽप्यनेन यथोज्झितुम्॥**

अभजतेति ॥ अयं रविर्देवः प्रति क्षणदात्यये प्रत्यूषं प्रति । रात्र्यवसानेषु इत्यर्थः । दिनरूपं कालं त्रुट्यादिलक्षणं समयम्, अथ च—तद्रूपं श्यामं वस्तु भूयो बहुतरं यथा तथा पौनःपुन्येन वा प्रसूयोत्पाद्य चिरं बहुकालमभ्यासं तथा तेन प्रकारेणाभजताशिश्रियत् यथा येन प्रकारेण पुरा पूर्वं कालः प्रसूतिर्यस्य, अथ च—काली श्यामा प्रसूतिर्यस्यैवंभूतोऽसौ सूर्यः । यमयमुनयोरपि प्रसविष्यतोर्जन्माधाने जन्मार्थं बीजक्षेपसमयेऽप्यनेन चिराभ्यासेन हेतुना शीलं काल-

१ अत्र विधो रवेश्च कर्णकुण्डलत्वेन रूपणाद्रूपकम्, प्राच्याः कान्तात्वं सुरपरिवृढस्य तत्कान्तत्वं च व्यज्यते, तेन तथारूपणमूलेन रूपकेण समासोक्तिर्ध्वन्यत इति बोध्यम् । कर्णादित्यादिवचनं समयभेदास्मरणमूलम् ।
२ अत्र दीप्तेः स्त्रीत्वेन विवस्वतः पतित्वेन च रूपणाद्रूपकम्, रागादिपदानां श्लिष्टत्वात् श्लिष्टं चायत्तूक्तं जीवातुकारैः-'अत्र प्रस्तुतदीप्तिविशेषणसाम्यादप्रस्तुतसतीप्रतीतिः समासोक्तिरलङ्कारः' इति, तत्तु 'सतीव्रतमूर्तितां धत्ते' इत्युक्त्वा कविना व्यङ्ग्यत्वतश्च्यावितत्वात् गतार्थम् ।

१ अत्र शमनादिकालिम्नस्तत्पितृग्रस्ततिमिरपरिणामत्वेनोत्प्रेक्षणादुत्प्रेक्षा, यत्तद्भ्यां हेतुहेतुमद्भावेन विवक्षितार्थसमर्थनात् काव्यलिङ्गं च ।

त्पादनस्वभावमुज्झितुं खलु निश्चितं न शकिता न समर्थो भविता । कालप्रसूतिस्वभावः सूर्यः स्वभावस्य दुरतिक्रमत्वात्तावपि कालावुदपादयदित्यर्थः । उदयमानेन सूर्येण दिवसः कृत इति भावः । प्रातःकाले क्रियमाणोऽभ्यासः पटुतरो भवति । चिराभ्यासम्, मयूरव्यंसकादित्वात्समासः । यद्वा—अकारान्तस्य चिरशब्दस्य 'अत्यन्तसंयोगे च २।१।२९' इति समासः । प्रतिक्षणदात्यये, वीप्सायामव्ययीभावे 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः २।४।८३' इति सुपो न लुक् । 'अत्ययम्' इति पाठे पक्षे 'तृतीयासप्तम्योर्बहुलम् २।४।८७' इत्यम् । कालप्रसूतिः पुंवत् ॥ ४६ ॥

**रुचिरचरणः सूतोरुश्रीसनाथरथः शनिं**
**शमनमपि स त्रातुं लोकानसूत सुताविति ।**
**रथपदकृपासिन्धुर्बन्धुर्दृशामपि दुर्जनै-**
**र्यदुपहसितो भास्वान्नास्मान्हसिष्यति कः खलः**

रुचिरेति ॥ दुर्जनैरेवंभूतो यो भास्वानिति संस्तुतः दुर्जनैर्यस्मादेवमुपहसितः, तस्माद तितुच्छान्परवर्णनोपजीविनः अस्मान् कः खलो नोपहसति, अपि तु—सर्वोऽप्युपहसत्येव । यथा—उदिते सूर्ये सद्भिः सूर्यस्यार्हणा क्रियते, तथा खलैर्न । एवं तुच्छा एते स्वोदरभरणार्थं यत्किंचिद्वदन्तीत्यस्माकं खलैर्निन्दायां कृतायां भवादृशैं राजशिरोमणिभिरस्माकमर्हणा क्रियत एवेत्यर्थः । एवं कथं स्तुतः कथमुपहसित इत्यत आह—स सूर्यः रुचिराश्चरणा लक्षितलक्षणया किरणा यस्य, तथा—सूतस्यारुणस्योर्व्या महत्या श्रिया, सूता सूर्येणैव प्रसूता उर्वी श्रीस्तया सनाथोऽलंकृतो रथो यस्य सः । तथा—शनिं शमनमपि शनैश्वरदण्डधरौ सुतौ लोकांस्त्रातुमसूत शनिर्हि श्रुत्यादिविद्या ग्रहेषु लोकपालतया लोकात्रक्षति, यमोऽपि दुष्टादुष्टयोर्निग्रहानुग्रहौ कुर्वन् धर्माधर्माचरणप्रवृत्तिनिवृत्तिजननद्वारा रक्षति । एतादृशौ परोपकारपरौ पुत्रौ प्रासूत । तथा—रथपदानामनाथानां चक्रवाकानां कृपासिन्धुर्दयासमुद्रः, रथस्य पदेन व्यवसायेन गत्या जगतो दयासमुद्रो वा । तथा—सकलपदार्थग्रहणसहकार्यालोकसंपादनद्वारा दृशां सर्वजननेत्राणां बन्धुर्मित्रम् । एवंभूतः सुन्दरः परोपकारकरणैकस्वभावोऽपीति स्तुतिपक्षः ॥

रुचिरेति ॥ रुचिस्तेजोरूपः तापकर इति यावत् । तथा-अचरणश्चरणरहितः, यद्वा-विपरीतलक्षणया रुचिरौ चरणौ यस्य, पुराणादौ चरणाङ्गुल्यादिध्याने कुष्ठादिदुष्टफलश्रवणात् । ध्यानेऽप्यचरण एव सूर्यः, विश्वकर्मणा कुन्द आरोपितस्य सूर्यस्य तेजसां दुःसहत्वाच्चरणाकारो न निर्मित इति वा । अन्धं प्रति सुनेत्रत्ववचनवदचरणस्यापि रुचिरचरणत्वोक्त्योपहासः। तथा—सूतस्यानूरोः सारथेरूरुशोभया सनाथो रथो यस्य स इत्यपि विरुद्धलक्षणा । तथा—शनेः क्रूरग्रहत्वाच्चिरकालभोग्यदुःखदत्वात्, यमस्यापि जगत्प्राणहरणशीलत्वात्, परपीडाहरणैकस्वभावौ शनियमनौ पुत्रौ लोकांस्त्रातुमसूतेत्यपि विरुद्धलक्षणा । तथा—तिर्यग्योनिपक्षिविशेषचक्रवाकाणामेव दयासिन्धुः, नान्येषां तापकरत्वात् । तथा—दृशामेव बन्धुः, नान्येषाम् । यद्वा—तेजोभरेण दृष्टिं प्रति घातकारित्वादबन्धुरपि दृशां बन्धुरित्यपि विरुद्धलक्षणेत्युपहासपक्षः । एवंभूतः सूर्यः समुदेतीति भावः ॥ ४७ ॥

**शिशिरजरुजां वर्म शर्मोदयाय तनूभृता-**
**मथ खरकरश्यानास्यानां प्रयच्छति यः पयः ।**
**जलभयजुषां तापं तापस्पृशां हिममित्ययं**
**परहितमिलत्कृत्यावृत्तिः स भानुरुदञ्चति ४८॥**

शिशिरेति ॥ सोऽयं भानुरुदञ्चत्युदेति । स कः—यः शिशिरर्तौ शिशिरं हिमं तस्माज्जाता रुक् पीडा येषां तेषां तनूभृतां जनानां शर्मणः सुखस्योदयाय प्राप्तये वसन्तनिदाघसम्बन्धिनं घर्ममुष्णं क्रमेण प्रयच्छति, अथानन्तरं च वसन्तनिदाघसंबन्धिनः खरास्तीक्ष्णतराः कराः सूर्यकिरणास्तैः श्यानं शुष्कं म्लानमास्यं मुखं येषां तेषां देहिनां सुखाय पयो वर्षासम्बन्ध्युदकं दत्ते, ततो जलभयजुषां वर्षासम्बन्धिजलभीतानां तापं दत्ते, ततः—तापस्पृशां शारदतापवतां देहिनां हेमन्ते हिमं दत्ते, एवम्प्रकारेण परेभ्यो वह्नितं तस्मिन्विषये मिलन्ती पौनःपुन्येन घटमाना कृतेः शीततापहिमदानरूपपुरुषव्यापारस्यावृत्तिः

१ अत्रानुप्रासः, कालशब्दे वाच्यव्यङ्ग्यार्थयोरभेदाध्यवसायेन भगवतो भानोः प्रतिदिनं कालप्रसूत्यभ्यासादपत्येषु यमयमुनाऽऽदिष्वपि कालप्रसवितृत्वोत्प्रेक्षणादुत्प्रेक्षा, कालयोस्तया वाच्यव्यङ्ग्यत्वाभ्यां भेदेऽपि अभेदाध्यवसायेन वचनाद्रूपकातिशयोक्तिश्च ।

१ अत्रानुप्रासः, श्लेषश्च ।

रावर्तनं यस्य । यद्वा—कृत्यानां शीतादिदानरूपाणां कार्याणामावृत्तिर्यस्यैवंभूतः । परोपकारपरः सूर्य उदेतीत्यर्थः । श्यानेति द्रवमूर्तिस्पर्शवाचित्वाभावात्संप्रसारणाभावः । 'श्योऽस्पर्शे ८।२।४७' इति निष्ठानत्वम् । परहितेति, 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६' इति समासः । 'कृञः श च ३।३।१००' इति योगविभागात् क्तिनि कृतिः, चकारात्क्यपि तुकि च कृत्या । पक्षे—अर्हार्थे 'विभाषा कृवृषोः ३।१।१२०' इति क्यपि 'ह्रस्वस्य पिति कृति तुक् ६ । १ । ७१' इति तुक् ॥ ४८ ॥

**इह न कतमश्चित्रं धत्ते तमिस्रततीर्दिशामपि चतसृणामुत्सङ्गेषु श्रिता धयतां क्षणात् । तरुशरणतामेत्य च्छायामयं निवसत्तमः-शमयितुमभूदानैश्वर्यं यदर्यमरोचिषाम् ॥ ४९ ॥**

इहेति ॥ पूर्वादीनां चतसृणाम् दिशामुत्सङ्गेषु प्रान्तदेशेषु श्रिता वर्तमानास्तमिस्रततीस्तिमिरपरम्पराः क्षणाद्धयतां विनाशयतामप्यर्यम्णः सूर्यस्य रोचिषां तेजसां तरवः शरणं यस्य तद्भावं वृक्षतलवासित्वमेत्य प्राप्य निवसद्वर्तमानं छायामयं छायारूपं तमः शमयितुं विनाशयितुमनैश्वर्यमसामर्थ्यमभूदिति यत्, इहात्रासामर्थ्यविषये कतमः को नाम जनश्चित्रं विस्मयं न धत्ते । अपि तु सर्वोऽप्याश्चर्यं प्राप्नोत्येव । दिगन्तगताया अपि तिमिरपरम्परायाः संहारे येषां शक्तिस्तेषां रवितेजसां तरुतलमात्रस्थितं छायारूपं समीपवर्त्यपि तमः शमयितुमपि शक्तिर्नाभूदित्याश्चर्यमित्यर्थः । 'तनु' इति पाठे—तनुरल्पः शरीरं वा शरणं यस्य तद्भावं प्राप्य निवसत् । महदाश्रयेण स्थितमपि यो विनाशयितुं शक्नोति सोऽल्पाश्रयेण वर्तमानं शमयितुमपि न शक्नोतीत्याश्चर्यमेव । तरुच्छायामयं देहच्छायामयं वा तमो विहाय सर्वमपि तमः सूर्येण विनाशितमिति भावः । आनैश्वर्यम्, अनीश्वरस्य भाव इत्यर्थे 'न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः ५।१।१२१।' इति भावप्रत्ययनिषेधेऽपि ब्राह्मणादिष्वनीश्वरशब्दस्य पाठात्ष्यञि 'नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ७ । ३ । ३० ।' इति पक्षे उभयपदवृद्धिः ॥ ४९ ॥

**जगति तिमिरं मूर्च्छामब्जव्रजेऽपि चिकित्सतः पितुरिव निजादस्त्रावस्मादधीत्य भिषज्यतः । अपि च शमनस्यासौ तातस्ततः किमु नौचिती यदयमदयः कह्लाराणामुदेत्यपमृत्यवे ॥५०॥**

जगतीति ॥ दस्रौ नासत्यौ निजात्स्वीयादस्मात्पितुः सूर्यादधीत्यैवायुर्वेदं पठित्वेव भिषज्यतः स्वलोकचिकित्सां कुरुतः । किं-भूतात्पितुः—जगति वर्तमानं तिमिरम्, अथ च—वस्तुदर्शनासामर्थ्यजनकं नेत्ररोगविशेषं चिकित्सतो नाशयतः । आयुर्वेदोक्तप्रतीकारेण शमयतः । तथा—अब्जव्रजे कमलषण्डे वर्तमानां मूर्च्छां संकोचमपि नाशयतः । अथ च—'अप एव ससर्जादौ—' इति वचनादपां मूलभूतत्वादब्जव्रजे लोकसमूहे वर्तमानां मूर्च्छां वैचित्यध्वस्तचैतन्यभावरूपं मोहमपाकुर्वतः । उपचारचतुरात्कल्याणपाणेर्वैद्यादधीत्यैव हि राजवैद्यो भवति, तस्माद्वैद्यात्स्वपितुरेव वैद्यकमधीत्य ताभ्यामिन्द्रवैद्यत्वं प्राप्तमित्यर्थः । अपि च किंच सर्वभूतानि शमयति नाशयतीति शमनो यमस्तस्यासौ सूर्यो यस्मात्तातः पिताऽतस्तस्मात्कह्लाराणां कुमुदानामपमृत्यवे संकोचाय, अथ च-अकालमरणायोदेति।यतोऽयं सूर्योऽदयो निष्कृपः,सा ऽस्य सूर्यस्य नौचिती किमु अपि त्वेषाऽस्यौचित्येव । कारणगुणप्रक्रमेणैव कार्ये गुणारम्भाददयताऽपमृत्युदायिता च यमेनाप्यस्मात्स्वपितुरेव सकाशात्पठितेत्यर्थः । उदयता सूर्येण तमो नाशितम्, कमलान्युन्मीलितानि, कुमुदानि मुकुलितानीति भावः । पितुः, 'आख्यातोपयोगे१ । ४। २९ ।' इत्यपादानत्वम् । भिषज्यतः कण्ड्वादिः । 'तपति' इति वा पाठः ॥ ५० ॥

**उडुपरिवृढः पत्या मुक्तामयं यदपीडयद्यदपि बिसिनीं भानोर्जायां जहास कुमु-**

---

१ अत्र शिशिरजरुजां खरकरश्यानास्यादीनां च शर्मोदयाय तापादीनां प्रदानोक्त्या प्रदानरूप क्रियाणां समुच्चयः ।

१ अत्रोत्सङ्गेषु श्रितानां तमिस्रततीनामतिभीतस्त्रीत्वं व्यज्यतातादृशीरपि विनाशयतां रोचिषामातिक्रूरत्वं तेन निन्दाऽभिधीयते । निन्दया च तथाऽन्धकारनिराकरणपरत्वोक्तिर्व्यज्यत इति व्याजस्तुतिः ।२ अत्रानुप्रासः दयेति यमकं च अधीत्येवेत्युत्प्रेक्षा । कमलकैरवव्रजयोः सञ्जीवनमारणौचित्यसमर्थनात् काव्यलिङ्गं च ।

द्रुती। तदुभयमतः शङ्के सङ्कोचितं निजशङ्कया—प्रसरति नवार्के कर्कन्धूफलारुणरोचिषि ॥ ५१ ॥

उद्गीति ॥ अयमिदानीमस्तं जिगमिषुरुडुपरिवृढश्चन्द्रः सायमुदितः सन् अस्तं गतेन पत्या सूर्येण मुक्तां वियोगिनीं भानोर्भार्यां विसिनीं पद्मिनीं यद्यस्माद्गतरावमपीडयत्संकोचितवान् । अथ च—करैर्दूषितवान् । यदापि यस्माच्चन्द्रे पद्मिनीं पीडयति सति कुमुद्वती कुमुदविकासव्याजेन रात्रौ जहास । अत एव हेतोस्तदुभयं चन्द्रकुमुदिनीरूपं द्वयमिदानीं कर्कन्धूफलवत्पक्वबदरवत्कोपादिवारुणरोचिषि रक्तकान्तौ नवार्के तरुणादित्ये प्रसरति प्रकर्षेणागच्छत्युदयति सति निजशङ्कया स्वकृतानाचारनिमित्तभयेनेव प्रयोजकेन संकोचितं संकोचं प्रापितम् । निष्प्रभीकृतमित्यर्थः । इत्यहं शङ्के मन्ये । सूर्य उदितः, पद्मिनी च विकसिता, चन्द्रो निष्प्रभोऽस्तमेति, कुमुदिनी संकुचितेति भावः । अन्यत्राप्युक्तं प्रमेयं बोद्धव्यम् । संकोचितमिति ण्यन्तात्कर्मणि निष्ठा । अन्यथा व्याख्याने संकुचितमित्येव स्यात् । तदुभयं निजशङ्कया करणभूतया स्वयमेव संकुचितुं कृतारम्भमिति वा व्याख्येयम् । कर्कन्धूकुणेति पाठश्चिन्त्यः । ग्रन्थविस्तरभयात्साधानादि नोक्तम् । सुबुद्धिभिर्विविच्य बोद्धव्यम् ॥ ५१ ॥

श्रुतिमयतनोर्भानोर्जानेऽवनेरधराध्वना विहरणकृतः शाखाः साक्षाच्छतानि दश त्विषाम् । निशि निशि सहस्राभ्यां दृग्भिः शृणोति सहस्वराः—पृथगहिपतिः पश्यत्यस्याक्रमेण च भास्वराः ॥ ५२ ॥

श्रुतीति ॥ अहिपतिः शेषो ज्योतिःशास्त्रानुसारेणावनेर्भूमेरधराध्वनाऽधस्तनेन मार्गेण पातालमार्गेण रात्रौ विहरणकृतः परिभ्रमतः, तथा—श्रुतिमयी वेदरूपा तनुर्देहो यस्यास्य भानोस्त्विषां दश शतानि एकसहस्रमेव दश शतानि कठकण्वादिशाखाः निशि रात्रौ सहस्रफणत्वात्प्रतिफणं च नेत्रद्वयसद्भावाद्द्वाभ्यां सहस्राभ्यां दृग्भिः सहस्रद्वयपरिमिताभिर्दृग्भिरक्रमेण युगपत्पृथक्चक्षुःश्रवस्त्वात्साक्षाच्छृणोति पश्यति चेत्यहं जाने । क्रियाद्वये क्रमेण हेतुद्वयम् । यतः सहस्वराः स्वरूपेणोदात्तयोदात्तादिस्वरैः सह वर्तमानाः । स्वराणां शब्दरूपत्वाच्छृणोति । तथा—भास्वराः शुक्लभास्वररूपाः ततः साक्षात्पश्यति च रात्रौ पातालगामित्वात्तत्र च शेषस्य वर्तमानत्वाद्वेदमयशरीरस्य किरणसहस्ररूपं शाखासहस्रं शेषो नेत्रसहस्रद्वयस्य सत्त्वाद्युगपत्पृथगेकेन नेत्रसहस्रेण शृणोति, द्वितीयेन च पश्यतीति युगपत्पृथक् श्रवणदर्शनाभ्यामेव शेषनेत्रसहस्रद्वयस्य सार्थक्यमभूदित्यर्थः । 'श्रुतिमयतरोः' इति पाठे—वेदरूपस्य वृक्षस्य शाखा युक्ताः । अध्वना बलिसद्मनेति पाठे—'बलिसद्म रसातलम्' इत्यमराभिधानात्स एवार्थः । दशशतानीति काकाक्षिवदुभयत्रापि संबध्यते । सहस्वरा, 'वोपसर्जनस्य ६।३।८२' इति पाक्षिकत्वात्सभावाभावः ॥ ५२ ॥

बहुनखरता येषामग्रे खलु प्रतिभासते कमलसुहृदस्तेऽमी भानोः प्रवालरुचः कराः । उचितमुचितं जालेष्वन्तः प्रवेशिभिरायतैः कियदवयवैरेषामालिङ्गिताङ्गुलिलङ्गिमा ॥ ५३ ॥

बह्विति ॥ येषां कराणां खरता तीक्ष्णताग्रे पूर्वं पूर्वाह्णसमये बहुतितरां न प्रतिभासते स्फुरति । सर्वथा नोपलक्ष्यत इत्यर्थः । यद्वा—नञ्समासेन नखरताऽतीक्ष्णता । पूर्वाह्णे येषामतितरां तीक्ष्णत्वाभाव उपलभ्यते । खलु निश्चितम् । अथ च—येषामुपरिभागे बहवो नखरा नखा येषां तत्तोपलभ्यते । तेऽमी प्रत्यक्षदृश्या विकासहेतुत्वात्कमलानां सुहृदो बन्धोर्भानोः कमलबन्धवो वा कराः किरणा एव पाणयः प्रवालरुचो विद्रुमवद्रक्तकान्तयः, अथ च—प्रकृष्टबालकान्तयोऽतिबालाः, अथ च—बालपल्लववद्रक्तकान्तयः । दृश्यन्त इति शेषः । तथा—जालेष्वन्तः प्रवेशिभिर्गवाक्षादिविवरमध्यप्रविष्टैः, अत एव—आयतैस्तद्द्वारादेव दण्डाद्दीर्घीभूतैरेषामेष कियदवयवैः कतिपयैरवयवैः करणैरेषां किरणानां पाणीनां च य आलिङ्गितः सम्बद्धश्चासावङ्गुलिलङ्गिमा च, अङ्गुलिवल्लङ्गिमा सङ्गिमा, अथ च—अङ्गुलिभिर्लङ्गिमा आलिङ्गिताङ्गुलिलङ्गिमा तदुचितमुचितम्

---

१ अत्र चन्द्रस्य पद्मिन्याः पीडकत्वेन, पीड्यमानां च पद्मिनीं वीक्ष्य प्रसीदन्त्याः कैरविण्याः, पद्मिनीनायकोपगमे कृततदपराधफलभोगदशोत्प्रेक्षणादुत्प्रेक्षा ।

१ अत्रानुप्रासः, सर्वाभिरेव दृग्भिः सर्वाः शाखा युगपत्पश्यति शृणोति चेति जाने इत्युत्प्रेक्षणादुत्प्रेक्षा ।

इयमतिशयेनौचिती । गवाक्षविवरप्रविष्टैः किरणावयवैः किरणानामङ्गुलितुल्यत्वादाश्रिताङ्गुलिवचारुता युक्तैव । पाणीनामपि दीर्घैः कतिपयैरङ्गुलिकृता चारुता भवतीत्यापि युक्तमेवेत्यर्थः।जालेष्वन्तः प्रवेशिभिरायतैरेषां कियदवयवैः कर्तृभिरङ्गुलिलक्ष्मिा आलिङ्गिता गवाक्षविवरप्रवेशानन्तरं समालिङ्गिष्यत इत्युचितम् । 'अङ्गुलिचारुता' इति पाठः स्पष्टार्थः।'नखोऽस्त्री नखरः' इत्यमरः । उचितमुचितम्, वीप्सायां द्विरुक्तिः । प्रवेशिभिः, ताच्छील्य आवश्यके वा णिनिः । आलिङ्गिता, लिगिधातोः पक्षे कर्मणि लुट्, पक्षे निष्ठा।लाङ्गिमा,लङ्गति रमणीयतया चित्तं प्राप्नोतीति गत्यर्थाल्लुगिधातोः पचाद्यचि पृथ्व्यादेराकृतिगणत्वादिमनिच् कथमपि समर्थनीयः ५३॥

**नय नयनयोर्द्राक्पेयत्वं प्रविष्टवतीरमूर्भवनवलभीजालान्नाला इवार्ककराङ्गुलीः । भ्रमदणुगणक्रान्ता भान्ति भ्रमन्त्य इवाशु याः पुनरपि धृता कुन्दे किंवा न वर्धकिना दिवः५४**

नयेति ॥ भो राजन्, त्वं भवनस्याधोगृहस्योपरि वर्तमानानां वलभीनां गृहविशेषाणां जालाद्गवाक्षविवरादेतोर्वलभीमेवार्थात्प्रविष्टवतीरमूरर्ककररूपा अङ्गुलीर्जालप्रवेशादङ्गुलितुल्यान्सूर्यकरान् अथ च—करेष्वङ्गुलीनां युक्तत्वादर्ककराणामङ्गुलीर्नाला इव कमलदण्डसदृशीर्नयनयोः पेयत्वं गोचरत्वं द्राक् शीघ्रम् नय प्रापय सादरं पश्य। त्वन्नेत्रयोः कमलत्वाज्जालमार्गप्रविष्टास्त्वया विलोक्यमाना एतास्त्वन्नेत्रकमलनाला इव जनैर्द्रक्ष्यन्त इत्यर्थः । जालानां वा कमलतुल्यत्वात्तन्नाला इव त्वं पश्येति वा । अमूः काः—या भ्रमतां जालप्रविष्टकिरणमध्ये परिभ्रमतामणूनां त्रसरेण्वादिरूपरजःकणानां गणेन समूहेनाक्रान्ता व्याप्ताः, अत एव दिवोवर्धकिना स्वर्लोकतक्ष्णा श्वशुरेण विश्वकर्मणा पुनरपि कुन्दे शाणचक्रे धृता आरोपिताः सत्य आशु भ्रमन्त्य इव किंवा न भान्ति, अपि तु—तथैव शोभन्ते । यद्वा—भ्रमन्तः शाणघर्षणवशात्परितः पतन्तो येऽणवः शातिततेजसः कणास्तेषां गणैराक्रान्तत्वं युक्तम् । विश्वकर्मणा सूर्यः शाणमारोपित इति पुराणम् । ( 'नयनयोराधेयत्वम्' इति पाठे—गुणेन वशेनेत्यर्थः ।१ ) जालात्, जातावेकवचनम् ॥ ५४ ॥

१ अत्रानुप्रासः प्रवालरुच इत्युपमा ।'विशेषणसङ्कीर्णो निदर्शनाभेदः' इति तु जीवातुकाराः । २ करपदस्य श्लिष्टत्वात् करा इव करा इति श्लिष्टं रूपकम्, भ्रमन्त्य इव भान्तीत्युत्प्रेक्षा च ।

**दिनमिव दिवाकीर्तिस्तीक्ष्णैः क्षुरैः सवितुः करैस्तिमिरकबरीं लूनां कृत्वा निशो निरदीधरत् । स्फुरति परितः केशस्तोमैस्ततः पतयालुभिर्ध्रुवमधवलं तत्तच्छायच्छलादवनीतलम् ॥५५॥**

दिनमिति ॥दिवाकीर्तिरिव नापित इव दिनं दिवसस्तीक्ष्णैः सवितुः करैरेव क्षुरैर्निशां तिमिरकबरीं तमोरूपां वेणीं लूनां छिन्नमूलां कृत्वा निरदीधरन्निर्धारितवान् । मुण्डयित्वा क्वाऽपि कश्चित्केशोऽवशिष्टः स्यादिति गवेषितवानित्यर्थः । अथ च बहिर्निष्कासयामास । नापितोऽपि व्यभिचारादिदुष्टां स्वीयां परकीयां वा स्त्रियं क्षुरैर्मुण्डयित्वा देशाद्बहिर्निष्कासयति । ततोऽनन्तरं, तस्मान्मुण्डनाद्वा परितस्तत्र तत्र पतयालुभिरधःपतनशीलैः केशस्तोमैः कृत्वाऽवनीतलं तेषां तेषां वृक्षादिपदार्थानां छाया प्रतिबिम्बं तस्य छलाद्व्याजेन ध्रुवं निश्चितमधवलं श्यामं स्फुरति शोभते । वृक्षाद्यधोभागे कृष्णत्वं मुण्डितकबरीपतयालुकेशसंबन्धकृतम्, न तु प्रतिबिम्बकृतमित्यर्थः। छायाव्यतिरिक्तं सर्वमपि तमो दिवसेन सूर्यकरैर्नाशितमिति भावः । 'दिवाकीर्तिस्तु नापितः' इत्यमरः । कबरी 'जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ४।१।४२' इति ङीप् । लूनाम्, ल्वादित्वान्निष्ठानत्वम् । निरदीधरत्, धारेर्णौ चङ्युपधाया ह्रस्वः ७।४।१' इत्युपधाह्रस्वत्वेऽभ्यासस्य सन्वद्भावादित्वम्, 'दीर्घो लघोः ७।४।९४' इति दीर्घः । तत्तच्छायेति, 'विभाषा सेनासुराच्छायाशालानिशानाम् २ । ४ । २५' इति वा नपुंसकत्वम् ॥ ५५ ॥

**ब्रूमः शङ्खं तव नल यशः श्रेयसे सृष्टशब्दं यत्सोदर्यः स दिवि लिखितः स्पष्टमस्ति द्विजेन्द्रः । अद्धा श्रद्धाकरमिह करच्छेदमप्यस्य पश्य-म्लानिस्थानं तदपि नितरां हारिणो यः कलङ्कः ॥ ५६ ॥**

इदानीं शाङ्खिकाना शङ्खशब्दं श्रुत्वा तद्व्याजेन नलयशोवर्णनं कुर्वन्ति—

१ दिवाकीर्तिरिवेत्युपमा,कराणां क्षुरत्वेन निशायास्तिमिरस्य कबरीत्वेन रूपणाद्रूपकम्, छलादित्यपह्नुतिः, ध्रुवमित्युत्प्रेक्षा च ।

ब्रूम इति ॥ हे नल, वयं श्रेयसे मङ्गलाय सृष्टः कृतः शब्दो यस्य तं शङ्खं तव यश एव ब्रूमः त्वत्कीर्तिमेव शङ्खरूपतया वर्णयामः । शाङ्खिकैर्यः शङ्खो वाद्यते तत्त्वद्यश एव । तद्वदुज्ज्वलतरं तव यश इत्यर्थः । शङ्खस्वनो हि मङ्गलदायकः । त्वद्यशोऽपि लोकानां शुभाय तव पुण्यश्लोकत्वाद्भवति । यस्य शङ्खस्य यशसश्च समुद्रप्रभवत्वाच्छुभ्रतरत्वाच्च सोदर्यः समानोदर्यो भ्राता स प्रसिद्धो द्विजेन्द्रश्चन्द्रो दिवि स्पष्टं लिखितोऽस्ति । निष्प्रभत्वाच्चित्रलिखित इव निर्व्यापारः स्फुटो दृश्यत इत्यर्थः । त्वमिह गगने प्रत्यूषसमये वास्य चन्द्रस्याद्धा निश्चितं श्रद्धाकरं शङ्खसहोदरत्वदास्तिक्यबुद्धिजनकम् करच्छेदं किरणविनाशमपि पश्य । शङ्खेऽपि किरणा न सन्ति, अस्यापीदानीं न सन्ति । किंच—अस्य हरिणसंबन्धी हारिणो यः कलङ्कस्तद्रूपं नितरामतिशयितं म्लानेः श्यामतायाः स्थानमपि पश्य । शङ्खस्याप्युदरभागे नितरां श्यामताऽस्ति सा चन्द्रेऽपि । तस्मादपि चन्द्रस्य शङ्खसोदर्यत्वं निश्चितं, तया चन्द्रमपि तव यशो ब्रूम इत्यर्थः । उक्तप्रकारेण शङ्खसोदर्यत्वं चन्द्रस्य यद्यप्यस्ति तथापि हरिणसंबन्धी यः कलङ्कस्तदस्य सुतरां म्लानिस्थानं पश्य । चन्द्रस्य श्रद्धेयशङ्खभ्रातृत्वेऽपि निष्कलङ्कं शङ्खमेव तव यशो ब्रूमो, नतु सकलङ्कं चन्द्रमिति भाव इति वा । अथ च—हे राजन्, तव यशःश्रेयसे यशोविवृद्धये सृष्टशब्दं विरचितस्मृतिवाक्यं शङ्खनामानं मुनिं ब्रूमः । शङ्खस्तव यशोविवृद्धये स्मृतिं चकारेत्यर्थः । यस्य शङ्खमुनेः सोदर्यो भ्राता स लिखितनामा द्विजेन्द्रो ब्राह्मणश्रेष्ठो दिवि स्पष्टमस्ति । इह लिखिते श्रद्धाकरं सत्यविश्वासकारकमद्धा साक्षान्निश्चितं वा करयोः पाण्योश्छेदं कर्तनमपि पश्य । अथ च—श्रेयसे लोकानां कल्याणाय सृष्टः पुण्य ( श्लोको ) नल इति शब्दो यस्मिन्नेवंभूतं तव यशः शङ्खनामानमृषिं ब्रूमः समानधर्मत्वात्, न तु तद्भ्रातरं कलङ्कित्वात् । सोऽपि धर्मार्थस्मृतिवाक्यानि सृष्टवान् । यस्य भ्रातेति पूर्ववत् । लिखितस्य चौर्यं हस्तच्छेदश्च भारते ज्ञातव्यः । शाङ्खिकास्त्वप्रबोधार्थं शङ्खं वादयन्ति तस्माच्छीघ्रमुत्तिष्ठेति भावः । लिखितमुनिरेव दिवि ताराशङ्खो जात इति केचित् । समानोदरे शयित इत्यर्थे 'सोदराद्यत् ४।४।१०९' इति यत् । अस्मादेव निर्देशाद्यत्प्रत्ययविवक्षायामेव 'विभाषोदरे ६।३।८८' इति पाक्षिकः समानस्य सः । हारिणः, 'तस्यापत्यम् ४।१।९२'इत्यत्र 'तस्य' इति योगविभागात् सम्बन्धेऽण् । पक्षान्तरे तु आवश्यकाधमर्ण्ययोर्णिनिः ३।३।१७४' इत्यावश्यके णिनिः ॥ ५६ ॥

ताराशङ्खविलोपकस्य जलजं तीक्ष्णत्विषो भिन्दतः—सारम्भं चलता करेण निबिडां निष्पीडनां लम्भितः । छेदार्थोपहृताम्बुकम्बुजरजोजम्बालपाण्डूभवच्छङ्खच्छित्क-रपत्रतामिह वहन्नस्तंगतार्धो विधुः ॥ ५७ ॥

तारेति ॥ तारायाः विशाखाभस्य मातृमण्डलसंज्ञस्य शङ्खाकारत्वाच्छङ्खस्य विलोपकः स्वप्रभया विनाशकस्तस्य, तथा—जलजं कमलानि भिन्दतो विकासयतः । अथ च—यतस्ताराशङ्खविलोपकस्य, अत एव जलजं शङ्खं खण्डयतः । तीक्ष्णत्विषः सूर्यस्यैव शाङ्खिकशिल्पिना सारम्भं सोद्योगं चलता प्रसरता । अथ च—वर्षणवशात्साटोपं गमनागमने कुर्वता । करेण रश्मिना पाणिना च निबिडां निष्पीडनां बाधां दृढां यन्त्रणां च लम्भितः प्रापितः । अस्तं गतमर्धं यस्य स विधुश्चन्द्रः । शङ्खच्छेदसौकर्यार्थमुपहृतमानीतं यदम्बु जलं तस्य कम्बुजरजोजम्बालश्छिद्यमानशङ्खसंजातरजश्चयकर्दमः । उदकसंबन्धाद्रजः कर्दमीभवति । तेन पाण्डूभवल्लोहमयत्वादधवलमपि धवलपङ्कवशाद्धवलं भवच्छङ्खच्छेदकारि करपत्रं तद्भावमिह प्रातःसमये वहति । शाङ्खिकशिल्पिनो हि छेदसौकर्यार्थं छिद्यमानशङ्खादिदेशे जलं क्षिपन्ति । दृढतरग्रन्थिच्छेदादौ च करपत्रं करेण निबिडं पीडयन्ति । शङ्खादिच्छेदककरपत्रं चार्धचन्द्राकारं संजातरजःपङ्कपाण्डुरं च भवति । अस्तमितार्धश्चन्द्रस्तादृक्करपत्रतुल्यो दृश्यत इत्यर्थः । सूर्योदयो जातः, तारा लुप्ताः, कमलानि विकसितानि ।

१ अत्र मन्दाक्रान्ता छन्दः । अत्रानुप्रासः, यशसः शङ्खाभेदोक्तेः रूपकम्, एवं लिखितायमानचन्द्रसोदर्यत्वेन रूपणादपि रूपकम् । शङ्खलिखितादिपदानां श्लिष्टत्वाच्छ्लेषश्च । निन्दया स्तुतेरभिव्यञ्जकः श्लेष इति श्लेषोत्था व्याजस्तुतिश्च ।

चन्द्रश्चार्धेनास्तमित इति भावः । जलजं, करेणेति च पक्षे जात्येकवचनम् । पाण्डुभवदिति च्विः ॥ ५७ ॥

[ जलजभिदुरीभावं प्रेप्सुः करेण निपीडय-
त्यशिशिरकरस्ताराशङ्खप्रपञ्चविलोपकृत्।
रजनिरमणस्यास्तक्षोणीधरार्धपिधावशा-
द्दधतमधुना बिम्बं कम्बुच्छिदः करपत्रताम् ॥

जलजेति ॥ जलजं कमलं शङ्खश्च । करेणांशुना पाणिना च।अयं श्लोकः पूर्वेण समानार्थत्वात्क्षेपकः॥५७॥]

यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशु-
मान्--दृष्टीः पूर्णयति स्म यज्जलरुहामक्ष्णां
सहस्रं हरिः । साजात्यं सरसीरुहामपि
दृशामप्यर्हति ,तद्वास्तवं-यन्मूलाद्रियतेतरां
कविनृभिः पद्मोपमा चक्षुषः ॥ ५८ ॥

यदिति ॥ अंशुमान्पाथोजानां कमलानां विमुद्रणप्रकरण उन्मीलनप्रस्ताव एव यद्यस्माद्दृष्टीर्लोकनेत्राणि निर्निद्रयति विगतनिद्राणि करोत्युन्मीलयति । यस्माच्च हरिः श्रीविष्णुः शिवपूजासमये एककमलन्यूनं जलरुहां कमलानां सहस्रं स्वीयेनाक्ष्णा पूर्णयति स्म । तत्तस्मात्सरसीरुहां दृशामपि वास्तवमबाधितं साजात्यं तुल्यजातीयत्वमस्ति । यत्साजात्यं मूलमारोपकारणं यस्यास्तादृशी यन्निबन्धना चक्षुषः पद्मेन सह उपमा सादृश्यं कविनृभिः कालिदासादिभिः कविभिराद्रियतेतरामत्यादरेणोपनिबध्यते । यदि नेत्राणि कमलसजातीयानि नाभविष्यन् तर्हि रविः कमलोन्मीलनप्रस्तावे तानि नोदमीलयिष्यत्, श्रीविष्णुश्च कमलसहस्रं नेत्रेण नापूरयिष्यत् । न ह्यन्यप्रस्तावेऽन्यस्य योग्यतास्ति । तस्माद्दृशां कमलानां च साजात्यं वास्तवमस्त्येवेत्यर्थः । उदितः सूर्यः, कमलानि विकसितानि, सर्वोऽपि जनः प्रबुद्धः तस्मात्त्वमपि प्रबुध्यस्वेति भावः । विष्णुः स्वचक्षुषा कमलसहस्रं पूरितवानिति लिङ्गपुराणादौ द्रष्टव्यम् । विमुद्रणेति, विगतमुद्रां करोतीति ण्यन्ताद्भावे ल्युट् । निर्निद्रयति, 'तत्करोति तदाचष्टे' इति णिच् । एवं पूर्णयतीत्यत्रापि।समाना जातिः साजात्यमिति विग्रहे चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । 'समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु ६।३।८४।

१ अत्राग्रिमे च पद्ये शार्दूलविक्रीडितं वृत्तम् । अत्र रूपकं श्लेषश्च ।

इत्यत्र 'समानस्य' इति योगविभागात्समानस्य सः।वास्तवम्, आगतार्थे सम्बन्धे वाऽण् । तत्त्वपर्यायाव्ययवस्तुशब्दात्प्रज्ञादित्वात्स्वार्थे वा । पद्मोपमा, षष्ठीसमासः ॥ ५८ ॥

अवैमि कमलाकरे निखिलयामिनीयामिक-
श्रियं श्रयति यत्पुरा विततपत्रनेत्रोदरम् ।
तदेव कुमुदं पुनर्दिनमवाप्य गर्भभ्रम-
द्द्विरेफरवघोरणाघनमुपैति निद्रामुदम् ॥५९॥

अवैमीति ॥ यत्कुमुदं कमलानामाकरे षण्डे सरसि वा । अथ च—कमलायाः सम्पद्रूपाया लक्ष्म्या वाकरे गृहे कोशागारे, विततं विस्तारितं पत्ररूपनेत्राणामुदरं येन, विततानि पत्राण्येव नेत्रमध्यानि येन, तद्विकस्वरम्। अथ च—प्रसारितपक्ष्मनेत्रोदरम् उन्मीलितनेत्रम् सत् निखिलयामिन्याः सकलरात्रिसम्बन्धिनो यामिकस्य रात्रिचतुःप्रहरप्राहरिकस्य सकलरात्रिजागरूकस्य श्रियं शोभां पुरा श्रयत्यशिश्रियत् । सायमारभ्य सूर्योदयावधि यद्विकसितमभूत् । अथ च—सकलां रात्रिं जजागार, तदेव कैरवं पुनरिदानीं दिनमवाप्य गर्भे भ्रमन्तः सूर्यकिरणसंबन्धसंजातशीघ्रसंकोचवशान्निर्गन्तुमशक्तेरन्तःसंचारिणो द्विरेफास्तेषां निर्बन्धसंजातो रवस्तद्रूपा या घोरणा प्रसुप्तघर्घरारवाडम्बरस्तस्या घनं निबिडं यथा तथा निद्रामुदं निद्रासम्बन्धिसुखमुपैति । अन्तर्गतभ्रमरः सन् संकुचतीत्यर्थः । अथ च—यः कोशागारे सकलां रात्रिं जागर्ति स दिवसे घोरणाघनं यथा तथा निद्रातीत्यर्थः । इत्यहमवैमि । पुरा श्रयतीति,'पुरि लुङ् चास्मे ३।२।१२२' इति भूते लट्।भीमशब्दार्थाद्घुरेर्णिजन्तात् 'ण्यासश्रन्थो युच् ३ । ३ । १०७' इति युच् ॥ ५९ ॥

१ समानयोरेकस्य प्रबुद्धत्वम् अपरस्याप्रबुद्धत्वं न शोभते, समानत्वतस्तादृशभेदस्य च्यावकत्वात्।प्रबुद्धस्य सुत्कृष्टत्वं तदितरस्य पराहतत्वं च विदितचरम्भवति।प्रकृते नेत्रकमलयोः समानता सर्वत्र प्रसिद्धा, अथ कमलानि प्रबुद्धानि, तव नेत्रे तु न प्रबुद्धे तेन कथं साम्यं भावीति त्वयैव अवधार्यमिति भावः।भङ्गिविशेषेण तव नेत्रे पद्मोपमे, ते च त्वया सूर्येणेव प्रबोधनीये इति तादृशेन वस्तुना वस्तु व्यज्यते।२ अत्र पृथ्वी छन्दः, जसौ 'जसयला वसुग्रहयतिश्च पृथ्वी गुरुः।'इति तल्लक्षणात् अत्रावैमीत्युत्प्रेक्षा एकस्मिन् कुमुदे प्रबोधनाप्रबोधनयोरनेकयोर्धर्मयोः क्रमेण निरूपणात्पर्यायः ।

इह किमुपसि पृच्छाशंसिकिंशब्दरूप-प्रति-
नियमितवाचा वायसेनैष पृष्टः । भण
फणिभवशास्त्रे तातङः स्थानिनौ काविति
विहिततुहीवागुत्तरः कोकिलोऽभूत् ॥६०॥

इहेति ॥ इह प्रभाते पृच्छाशंसिनः प्रश्नवाचिनः किंशब्दस्य प्रथमान्तं रूपं तेनैव प्रतिनियमिता प्रतिक्षणं शब्दान्तरभाषणाद्व्यावर्तिता वाग्येन कौ कौ इति नियतभाषिणा वायसेन काकेन फणिनः शेषाद्भवमुत्पन्नं महाभाष्यलक्षणं शास्त्रम् । पाणिनीयमिति यावत् । तत्र तातङ्लक्षणादेशस्य स्थानिनौ आदेशिनौ कौ भण कथयेति पृष्टः कृतप्रश्न एष कोकिलो विहिता कृता या तुहीति वाक् सैवोत्तरं यस्यैवंभूतोऽभूत् किम् । काकः प्रातः स्वभावतः 'कौ कौ' इति वदति।कोकिलश्च 'तुही तुही'इति।काकः स्वभावात्'कौ कौ'इति प्रथमाद्विवचनान्तं प्रश्न शब्दं ब्रूते,कोकिलश्च'तुही तुही' इति तत्रोत्प्रेक्षा। तुश्च हिश्च तुही,'तुह्योस्तातङाशिष्यन्यतरस्याम् ७।१।३५'इति पाणिनिसूत्रस्मरणशीलः सन् तुहिस्थाने तातङो विधानात्तुहीति तातङः स्थानिनावित्युत्तरं कोकिलो दत्तवान् किम् । प्रभातं जातं,काकादयः शब्दायन्ते इति भावः। सूत्रवार्तिकयोर्महाभाष्येणैवार्थसम्पादनात्फणिभवेत्युक्तम् । स्थानं प्रसङ्गः सोऽस्त्यनयोरिति स्थानिनौ,अत इनिः ६०॥

दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत्कोऽप्यधीती
कपोतः-कण्ठे शब्दौघसिद्धिक्षतबहुकठिनी-
शेषभूषाऽनुयातः । सर्वं विस्मृत्य दैवात्स्मृ-
तिमुषसि गतां घोषयन्यो घुसंज्ञां-प्राक्सं-
स्कारेण सम्प्रत्यपि धुवति शिरः पट्टिकापा-
ठजेन ॥ ६१ ॥

दाक्षीति ॥ अयमाकर्ण्यमानशब्दः कोऽपि कश्चित्कपोतो घूकलक्षः पक्षी दाक्षीपुत्रस्य दक्षगोत्रसंजातमातृकस्य पाणिनेस्तन्त्रे पाणिनीयव्याकरणेऽधीतं पठनमस्यास्तीति पठितपाणिनीयव्याकरणोऽभवत् । अनेकेषु पाणिनिशिष्येषु मध्ये कोऽपि कपोतरूपः शिष्योऽभूत् । ध्रुवमित्यहमुत्प्रेक्षे । किंभूतः—तदध्ययनवशादेव कण्ठे देवादिशब्दौघानां सिद्धये उदाहरणसाधनाय क्षता घृष्टा बह्वी कठिनी खटिका तस्याः शेषोऽङ्गुलीलग्नोऽवशिष्टभागस्तद्रूपया भूषयानुयातः संबद्धः खटिकाशेषरेखया कण्ठेऽलंकृत इत्यर्थः । बाला हि पट्टिकादौ खटिकया लिखितं पठित्वा सरस्वतीबुद्ध्या सायं लिपिप्रोञ्छनाङ्गुलिलग्नखटिकादिरजसा कण्ठे रचयन्तीति । कपोतस्य धूसरे कण्ठे स्वभावेनैव धवला रेखा भवति । यः कपोतः सर्वमपि शास्त्रं विस्मृत्य दैवात्स्मृतिं गतमुषसि प्रातः स्मृतां'दा धा घ्वदाप् १।१।२०'इति पाणिनिकृतघुसंज्ञां पुनर्विस्मरणभिया घोषयन्पुनः पुनः पठन्सन भूयसि कालेऽतीतेऽपि संप्रत्यपि प्राक् काष्ठघटितपट्टिकालिखितसूत्रपाठादिपाठजेन संस्कारेण पटुतराभ्यासाहितवासनया शिरो धुवति । विस्मृतस्य प्रातः स्मृतिर्भवति । कपोताश्च प्रातर्घुशब्दं कुर्वन्ति, शिरश्च कम्पयन्ति । तस्मादियमुत्प्रेक्षा । बालाश्च श्यामासु काष्ठघटितपट्टिकासु खटिकादिलिखितं धवलाक्षरं सूत्रपाठाद्यावेशेन घोषयन्तः शिरः कम्पयन्ति । योऽपि विस्मृतं पुनः स्मरति सोऽपि शिरः कम्पयति ।दाक्षीति दक्षस्यापत्यम्, 'अत इञ् ४ । १ । ९५' इतीञि 'इतो मनुष्यजातेः ४।१।६५' इति ङीप् । तन्त्रे 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्'इति कर्मणि सप्तमी।अधीतमनेनेत्यधीती इष्टादेराकृतिगणत्वादिनिः।घोषयन् चौरादिकाद्घुषेः शता। धुवति, दीर्घान्तौदादिकात् 'धू कम्पने' इत्यस्माच्छस्य ङित्वाद् गुणनिषेधे उवङ् ॥ ६१ ॥

पौरस्त्यायां घुसृणमसृणश्रीजुषो वैजयन्त्याः
स्तोमैश्छित्त्वं हरिति हराति क्षीरकण्ठैर्मयूखैः ।
भानुर्जाम्बूनदतनुरसौ शक्रसौधस्य कुम्भः
स्थाने पानं तिमिरजलधेर्भाभिरेतद्भवाभिः ६२

पौरस्त्यायामिति ॥ जाम्बूनदतनुरुत्तमस्वर्णतुल्यस्वरूपोऽत एव शक्रसौधस्य वैजयन्ताख्यस्योपरिवर्ती कुम्भः कलशरूपोऽसौ भानुः पौरस्त्यायां हरिति प्राच्यां दिशि कुङ्कुमेन घुसृणेन मसृणा स्निग्धरक्ता या श्रीः शोभा तां जुषो भजन्त्या वैजयन्त्याः पताकायाः स्तोमः सङ्घरूपैः क्षीरयुक्तकण्ठैर्लक्षणयातिबालैर्मयूखैः कृत्वा

---

२ अत्र मालिनी छन्दः । इयमप्युक्तिः समयभेदास्मरणमूला । कोकिलस्य 'तुहि' इति ध्वनिसम्भावनमयुक्तं 'कुहू' इत्यात्मनैव तत्प्रसिद्धेः । अत्र श्लेषः । वायसकोकिलध्वन्योः प्रश्नोत्तरत्वाभ्यां सम्भावनाद्रूपकम् ।

१ अत्र स्रग्धरा वृत्तम् । इदमपि वचनं समयभेदविस्मरणमूलम् । अत्र ध्रुवमित्युत्प्रेक्षा ।

चित्तं हरति । इन्द्रसौधस्योपरिवर्तमाना, बालतराः सूर्यकिरणास्तदीयरक्तपताकासमूहा इव सूर्यश्च स्वर्णकलश इव शोभत इत्यर्थः । राजादिप्रासादेषु हि रक्ता भूयस्यः पताकाः सुवर्णकलशाश्च वर्तन्ते । यतोऽयमिन्द्रसौधस्य स्वर्णकुम्भरूपः, अत एव–एतस्माद्भवाभिरुत्पन्नाभिर्भाभिः कर्त्रीभिः तिमिररूपोऽतिश्यामो जलधिस्तस्य पानं ग्रासेन तिरोधापनं तत्स्थाने नितरामुचितम् । कुम्भोद्भवो ह्यगस्त्यः पूर्वं समुद्रमधात् । अत एतासामपि भानुरूपकुम्भोद्भवत्वात्समुद्रपानं युक्तमित्यर्थः । सूर्यं ऊर्ध्वमागतः, तिमिरं च सर्वं निरस्तमिति भावः । 'घुसृणसुमनः–' इति पाठे—कुङ्कुमकेसरश्रीजुष इत्यर्थः । 'तोकैः' इति पाठे—तोकैरपत्यैः, पताकाया अपत्यरूपैस्तत्सदृशैरित्यर्थः । पुरोदेशे भवा, 'दक्षिणापश्चात्पुरसस्त्यक् ४ । २ । ९८' 'किति च ७ । २ । ११८' इति वृद्धिः । 'कर्तृकर्मणोः कृति २ । ३ । ६५' इति कर्तरि प्राप्तापि षष्ठी 'उभयप्राप्तौ कर्मणि २ । ३ । ६६' इति नियमेन व्यावर्तितत्वात्तिमिरजलधेरित्यत्रैव भवति, भाभिरित्यत्र तु कर्तरि तृतीयैव ॥ ६२ ॥

**द्वित्रैरेव तमस्तमालगहनग्रासे दवीभावुकै-**
**रुस्रैरस्य सहस्रपत्रसदसि व्यश्राणि घस्रो-**
**त्सवः । घर्माणां रयचुम्बितं वितनुते ततपि-**
**ष्टपिष्टीकृत-क्ष्मादिग्व्योमतमोघमोघमधुना**
**मोघं निदाघद्युतिः ॥ ६३ ॥**

द्वित्रैरिति ॥ तमस्तमालानां तिमिररूपातिश्यामलतरूणां गहनस्य गाम्भीर्यस्यैव वनस्य वा ग्रासे विनाशे दवीभावुकैर्वनवह्नितां व्रजद्भिर्द्वित्रैरल्पसंख्यैरेवास्य सूर्यस्योस्रैः किरणैः सहस्रपत्राणां सदस्याकरे घस्रोत्सवो दिनसम्बन्धी हर्षो विकासो यस्माद्व्यश्राणि वितीर्णः । तत्तस्मात्कारणान्निदाघद्युतिः सूर्यः घर्माणामुष्णानां किरणानामोघं समूहमधुना द्वित्रैरेव करैस्तमोविनाशे पद्मविकासे च जाते रयचुम्बितं वेगवत्तरं मोघं निष्फलं वितनुते विस्तारयति । किंभूतम्–अत एवपिष्टस्य पिष्टं पिष्टपिष्टमतत्तत्कृतं पिष्टपिष्टीकृतमत्यन्तचूर्णीकृतं क्ष्मादिग्व्योम्नां भूदिग्गगनानां तम एवाघं मालिन्यात्पातकं येन । तिमिरविनाशस्य कमलविकासस्य च द्वित्रैरेव किरणैः कृतत्वादन्यकिरणैस्तत्करणे पिष्टपेषणात्तद्वैयर्थ्यमित्यर्थः । 'दवदावौ वनारण्यवह्नी' 'किरणोऽस्रमयूख–' इत्यादि, घस्रो दिनाहनी–' इत्यादि चामरः । द्वौ वा त्रयो वा द्वित्राः, 'संख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये २।२।२५' इति बहुव्रीहौ 'बहुव्रीहौ संख्येये डजबहुगणात् ५।४।१३' इति डच् । दवीभावुकैः, भुवः 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ३।२।१५४' इति ताच्छील्यादावुकञि, अदवा दवा भावुका इत्यर्थे च्विः । व्यश्राणि दानार्थाच्छ्रणतेः चौरादिकाच्छ्राणयतेर्वा कर्मणि चिण् । चुम्बितम्, पिष्टीकृतमिति च कर्मणि भावे च निष्ठा ॥ ६३ ॥

**दूरारूढस्तिमिरजलधेर्वाडवश्चित्रभानु-**
**र्भानुस्ताम्यद्वनरुहवनीकेलिवैहासिकोऽयम् ।**
**न स्वात्मीयं किमिति दधते भास्वरश्वेति-**
**मानं द्यामद्यापि द्युमणिकिरणश्रेणयः शोण-**
**यन्ति ॥ ६४ ॥**

दूरेति ॥ अयं भानुस्तिमिरजलधेस्तमःसमुद्रस्य शोषकत्वाद्वाडवो वडवानलः चित्रभानुर्विभावसुः।तथा–ताम्यन्त्याः खिद्यन्त्या वनरुहवन्याः कमलवन्याः एव कान्तायाः केल्या क्रीडया वैहासिकः परिहासकः क्रीडानर्मकारी हेलामात्रेण विकासकश्च । तथा–दूरं गगनमार्गमारूढ ऊर्ध्वमागतः,एवंभूतः सन् स्वात्मीयं स्वीयं तेजोरूपत्वात्सहजं भास्वरश्वेतिमानं स्वपरप्रकाशशुक्लभास्वररूपत्वमद्यापि दूरारूढत्वेऽपि किमिति कुतो न दधते धारयति।तथा-द्युमणेः सूर्यस्य किरणश्रेणयश्चाद्यापि द्यां गगनं किमिति शोणयन्ति रक्तीकुर्वन्तीति प्रश्नद्वयम् । यद्वा—स्वीयं रूपं रविर्न धत्त इति कुतो ज्ञातमित्याशङ्क्य प्रत्यक्षं प्रमाणयति—यद्यस्माद्द्यापि सूर्यकिरणपङ्क्तयो द्यां शोणयन्ति,तस्माद्भास्वरश्वेतिमा सूर्येण न धृत इति ज्ञायत इत्यर्थः । एवंविशिष्टः सूर्यो दूरारूढः संजातः, तस्माद्द्यापि सूर्यकिरणाः स्वीयं शुक्लभास्वरत्वं किमिति न दधते

---

१ अत्र मन्दाक्रान्ता छन्दः। जाम्बूनदतनुरित्युपमा।कुम्भ इति रूपकम्। घुसृणश्रीजोषित्वस्य वैजयन्त्यामसम्भवेऽपि तयोक्तिः सादृश्यनिबन्धनार्थेति तदंशे निदर्शना। तादृशकुम्भस्य तिमिरजलधिपानकर्तृत्वे तदुद्भवस्यागस्त्यस्य जलध्यन्तरपानकर्तृत्वसम्भावनादुत्प्रेक्षा, अन्यथा काव्यलिङ्गम् ।

१ अत्र शार्दूलविक्रीडितं वृत्तम् । अत्र तमस्तमालेति दवीति तमोघेति च रूपकम्, अनुप्रासस्तावत्स्फुटश्च ।

न धारयन्ति। ऊर्ध्वमागतः सूर्यः, कमलानि च विकसितानि, तस्माच्छीघ्रमुत्तिष्ठेति भावः। 'चित्रभानुर्विभावसुः' इत्यमरः। दूरारूढः, गम्यादिदर्शनात्समासः। शिल्पे नियुक्तः, स प्रयोजनम्, शिल्पं वास्येति 'तत्र नियुक्तः ४।४।६९' इति 'शिल्पम् ४।४।५५' इति वा ठक्। 'प्रयोजनम् ५।१।१०९' इति वा ठञ्। स्वात्मीयम् 'वृद्धाच्छः ४।२।११४' दधते 'दध धारणे' एतस्यैकवचनान्तम्, धाञश्च बहुवचनान्तम्। श्वेतिमा पृथ्व्यादिः। शोणिकुर्वन्तीति 'तत्करोति तदाचष्टे' इति ण्यन्तात् 'णाविष्ठवत्' इति पुंवद्भावष्टिलोपो वा ॥ ६४ ॥

प्रातर्वर्णनयाऽनया निजवपुर्भूषाप्रसादानदा-
द्देवी वः परितोषितेति निहितामान्तःपुरीभिः पुरः।
सूता मण्डनमण्डलीं परिदधुर्माणिक्यरोचिर्मय-
क्रोधावेगसरागलोचनरुचा दारिद्र्यविद्राविणीम् ॥ ६५ ॥

प्रातरिति ॥ सूता मागधा मण्डनमण्डलीं भूषणश्रेणीं परिदधुः तत्तद्धस्तकर्णाद्यवयवेषु धारयामासुः। किंभूताम्—आन्तःपुरीभिरवरोधसंचारिणीभिः सखीभिरित्युक्त्वा पुरो मागधानामग्रे निहितां स्थापिताम्। इति किम्—हे मागधाः, अनया प्रातर्वर्णनया प्रयोजिकया परितोषिता नितरां संतोषं प्रापिता देवी कृताभिषेका राज्ञी भैमी निजवपुर्भूषाः स्वीयशरीरालंकारभूता अनेकविधसुवर्णमणिप्रभृतीनि भूषणान्येव प्रसादान्पारितोषिकाणि वो युष्मभ्यमदादिति। पुनः किंभूताम्—माणिक्यरोचिर्मय्या पद्मरागप्रभारूपया क्रोधस्यावेग आडम्बरस्तेन सरागलोचनरुचाऽरुणनेत्ररुचा कृत्वा दारिद्र्यस्य विद्राविणीं पलायनकारिणीम्। मयि स्थितायामप्यत्र दारिद्र्य, त्वं कथं नाम स्थातुमिच्छसीति क्रुद्धया यया माणिक्यप्रभारूपनेत्रारुणकान्त्या कृत्वा दारिद्र्यं दूरादपसारितम्। एवं प्रभातवर्णने क्रियमाणे भैम्या निजशरीरभूषणैस्ते संमानिता इत्यर्थः। अन्योऽपि रोषारुणलोचनरुचा किंचिद्विद्रावयति। आन्तःपुरीभिरिति बहुत्वेन, माणिक्येत्यादिना च भूषणानां बहुत्वममूल्यत्वं च सूचितम्। देवी प्रादादित्यनेन च नलः स्नानार्थं गतः, प्रासादे नास्तीति सूचितम्। प्रातर्भृशषष्ठीकमव्ययम्। परितोषिता, ण्यन्तान्निष्ठा। आन्तःपुरीभिः, संबन्धेऽण्। 'आन्तःपुरिक्या' इति पाठे—अन्तःपुरशब्दात् 'अन्तःपूर्वपदाट्ठञ् ४।३।६०' इति भवार्थे ठञ्। रोचिर्मयेति, 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६।३।३४' इति पुंवत्त्वं ॥ ६५ ॥

आगच्छन्भणतामुषःक्षणमथातिथ्यं दृशो-
रानशे स्वर्गङ्गाम्बुनि वन्दिनां कृतदिना-
रम्भाप्लुतिर्भूपतिः। आनन्दादतिपुष्पकं
रथमधिष्ठाय प्रियायौतके प्राप्तं तैरवराग-
तैरविदितप्रासादतो निर्गमः ॥ ६६ ॥

आगच्छन्निति ॥ अथ भूपतिर्नलो वन्दिनां दृशोरातिथ्यं प्रेक्षणविशेषप्रयोतितप्रेमभक्तिबाहुल्यनेत्रगोचरत्वमानशे लेभे। किंभूतानाम्—क्षणमात्रमुषः प्रभातसमयं भणतां वर्णयताम्। किंभूतः—स्वर्गङ्गाम्बुनि मन्दाकिनीजले कृतदिनारम्भाप्लुतिः कृतप्रातःस्नानः। तथा—अवरागतैर्नलस्य निर्गमनानन्तरमागतैस्तैर्मागधैरविदितोऽज्ञातः प्रासादतो निर्गमो राजगृहाद्बहिर्निर्गमो यस्य। तथा—प्रियायौतके भैमीपाणिग्रहणसमये कन्यादानप्रतिष्ठाङ्गतया दीयमाने वस्तुनि मध्ये प्राप्तमतिपुष्पकमतिक्रान्तपुष्पकाख्यकुबेरविमानमतिरमणीयवेगवत्तरं सर्वत्राप्रतिहतगमनं च रथमधिष्ठायारुह्यानन्दात्तज्जवातिशयसंजातहर्षादागच्छन्। मागधागमनात्पूर्वम्, न तु वर्णनानन्तरं प्रबुद्धः प्रासादान्निर्गच्छन्नित्यर्थः। अत एव भैम्यैव ते संभाविता इति पूर्वश्लोक उक्तम्। तस्य परमधार्मिकत्वं सूचितम्। कृतदिनारम्भाप्लुतिरागच्छन्नित्यनेन वक्ष्यमाणभैमीप्रत्युद्गमनम्, उत्तरसर्गसंगतिश्च सूचिता। नलस्य पुण्यश्लोकत्वात्सर्वत्राप्रतिहतगतित्वात्तस्य च रथस्य पूर्वमेव 'सुलङ्घ्याद्रिसमुद्रकापथम्' इत्यादिना सर्वत्राप्रतिहतगतित्वोक्तेश्चातिपुष्पकत्वोक्तेश्च स्वर्गगमनोक्तिर्युक्तैव। आनशे, 'अश्नोतेश्च ७।४।७२' इति नुट्। अतिपुष्पकम्, 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। रथम्, 'अधिशीङ्स्थासां कर्म १।४।४६' इत्याधारस्य कर्मत्वम्। 'यौतकप्राप्तम्' इति पाठे—'कर्तृकरणे कृता बहुलम् २।१।३२' इति समासः। अवरागतैः, 'कालाः २।१।२८' इति द्वितीया-

१ अत्र मन्दाक्रान्ता छन्दः। अत्र 'भानु' इति यमकम्, किमितीत्युत्प्रेक्षा, रूपकं तु पूर्ववदेव।

१ इदमारभ्य शार्दूलविक्रीडितं वृत्तम्। अत्रानुप्रासः। रोचिर्मयक्रोधेति रूपणेन रोचिरपह्नवनादपह्नुतिर्व्यज्यते तेन रूपकेणापह्नुतिध्वनिः; रुचा दारिद्र्येत्यादौ हेतुहेतुमद्भावात् काव्यलिङ्गम्।

यासमासः । प्रासादतो निर्गमः 'पञ्चमी भयेन २।१।३७' इत्यत्र 'पञ्चमी' इति योगविभागात् समासः, पश्चाद्बहुव्रीहिः ॥ ६६ ॥

श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । एकामत्यजतो नवार्थघटनामेकान्नविंशो महा-काव्ये तस्य कृतौ नलीयचरिते सर्गोऽयमस्मिन्नगात् ॥ ६७ ॥

श्रीहर्षमिति ॥ मुख्यां नवार्थघटनामपूर्वार्थनिर्मितिमत्यजतोऽमुञ्चतो नूतनमेव प्रमेयं सर्वत्र वदतः श्रीहर्षस्य । एकान्नविंशः विंशतेः पूरण इत्यर्थे डटि 'ति विंशतेर्डिति ६ । ४ । १४२ ।' इति तिलोपे च विंशः । तत एकेन न विंश इति 'तृतीया तत्कृतार्थेन गुणवचनेन २।१।३०।' इत्यत्र तृतीयेति योगविभागात्समासे 'एकादिश्चैकस्य चादुक् ६ । ४ । ७६ ।' इति नञः प्रकृतिभावः, एकशब्दस्यादुगागमः॥६७॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे एकान्नविंशः सर्गः ॥

---

## विंशः सर्गः ।

सौधाद्रिकुट्टिमानेकधातुकाधित्यकातटम् । स प्राप रथपाथोभृद्वातजातजवो दिवः ॥१॥

सौधेति ॥ सर्गसंगतिरुक्तैव । स रथ एव पाथोभृन्मेघः दिवः स्वर्गाद्गगनाच्च सौधो राजसदनमेवाद्रिस्तस्य कुट्टिमो नानावर्णानेकमणिवद्धभूमिः सैवानेकधातुका नानाविधगैरिकादिधातुयुक्ता अधित्यकोर्ध्वभूमिस्तस्यास्तटं पर्यन्तप्रदेशं प्राप । किंभूतः—वातात्सकाशाद् ( अर्थादधिको ) जातो जवो वेगो यस्य । यद्वा—जातो जवो यस्य स जातजवः, वातो जातजवो यस्माद्वेतोः, तेनापि यस्माद्रथात्सकाशाद्वेगः शिक्षितः । अथवा—वातेन जातः । मेघोऽप्युक्तविशेषणविशिष्टः पर्वतोर्ध्वदेशं गगनात्पतति । धातुकेति 'शेषाद्विभाषा ५।४।१५४' इति कप् ॥ १ ॥

ततः प्रत्युदगाद्भैमी कान्तमायान्तमन्तिकम् । प्रतीचीसिन्धुवीचीव दिनोंकारे सुधाकरम् २

तत इति ॥ ततः सौधोपरिभूमिप्राप्त्यनन्तरं दिनोंकारे दिनप्रारम्भे प्रभातेऽन्तिकमायान्तं सुधाकरं चन्द्रं प्रतीचीसिन्धुवीचीव पश्चिमदिक्समुद्रलहरीव भैमी रथादवतीर्यान्तिकं गृहपरिसरप्रदेशमागच्छन्तं कान्तं नलं प्रति लक्षीकृत्योदगात्प्रत्युज्जगाम । एतेन भैम्या नल आदरातिशयः सूचितः । 'अन्तिके' इत्यपि पाठः । 'सप्तम्यधिकरणे च २ । ३ । ३६ ।' इति चात्सप्तमी । वीची, 'कृदिकारादक्तिनः' इति ङीप् । दिनोंकारे, 'ओमाङोश्च ६ । १२ । ९५ ।' इति पररूपम् ॥ २॥

स दूरमादरं तस्या वदने मदनैकदृक् । दृष्टमन्दाकिनीहेमारविन्दश्रीरविन्दत ॥ ३ ॥

स इति ॥ दृष्टा मन्दाकिन्या हेमारविन्दश्रीर्येन यस्य वा नलस्तस्या वदने दूरं स्वर्णकमलादपि नितरामादरमाविन्दत लेभे । अत एव मदने एका केवला मुख्या वा दृग्यस्य सः स्वर्णकमलादप्यधिकं तद्दृष्ट्वा सम्भोगवासनयाऽपश्यदित्यर्थः । एका दृग्यस्येति एकदृक्, मदने एकदृक् । 'सप्तमी' इति योगविभागात्समासः । माद्यति सहर्षो भवति मदना, नन्द्यादित्वाल्ल्युः, ततः समानाधिकरणो वा बहुव्रीहिः[3] ॥ ३ ॥

तेन स्वर्देशसन्देशमर्पितं सा करोदरे । बभ्राजे बिभ्रती पद्मं पद्मेवोन्निद्रपद्मदृक् ४॥

---

१ अत्रानुप्रासः । आगमनेनैव निर्गमस्य ज्ञातत्वोक्त्या त्वराऽतिशयो द्योतितः । २ अस्मिन् सर्गे प्रायः समाप्त्यन्तं श्लोकः छन्दः ।

१ अत्रानुप्रासः, सौधस्याद्रित्वेन,रथस्य पाथोभृत्त्वेन च रूपणाद्रूपकम्,वातजातजवत्वस्य द्युः सकाशादागमनौचित्यप्रत्यायकत्वेन परिकरश्च । २ कान्तेत्यादावनुप्रासः, वीचीवेत्युपमा । ३ अत्राप्यनुप्रासः । हेमारविन्दापेक्षयाऽपि वदनेऽत्यन्तादरवेदनोक्त्या वदनस्यातिसौरभत्वं तेन हेमारविन्दरूपोपमानापेक्षया तद्रूपोपमेयस्यातिशयाद् व्यतिरेकश्च व्यज्यते । 'दृष्टा येन' इति विग्रहविवक्षणे वदनस्य तादृशस्मारकत्वेऽपि पर्यन्ततोऽन्वेषणे व्यतिरेकप्रत्ययः, 'दृष्टा यस्य' इति विवक्षणे पुनर्नलस्यापि हेमारविन्दसदृशश्रीकत्वमुक्तम्भवतीति तदंश उपमा, तादृशोऽपि नलस्य वक्त्रे आदरानिबन्धनोक्त्यै व्यतिरेकध्वनिस्तु निर्बाध एवेत्यूह्यम् ।

तेनेति ॥ सा पद्मेव श्रीरिव बभ्राजे। किंभूता—स्वर्देशस्य स्वर्गदेशस्य गमनसमये मन्दाकिनीस्वर्णकमलं मम क्रीडार्थमानेयमिति संदेशरूपं तेन नलेनार्पितं दत्तं पद्मं करोदरे बिभ्रती। तया—हर्षोद्बुधिद्रपद्मदृग्विकसितकमलतुल्यनेत्रा। लक्ष्मीरपि करे पद्मं धारयति, प्रसादाद्विकसितपद्मदृग्भवति। संदेशः कर्मणि घञ्॥ ४॥

**प्रियेणाल्पमपि प्रत्तं बहु मेनेतरामसौ।**
**एकलक्षतया दध्यौ यत्तमेकवराटकम्॥ ५॥**

प्रियेणेति॥ असौ भैमी प्रियेण प्रेम्णा प्रत्तं दत्तमेककमलरूपत्वादल्पमपि बहु मेनेतरां नितरां बहुमन्यत। यद्यस्माद्धेतोरेको मुख्यः श्रेष्ठो वराटको बीजकोशो यस्य तं पद्ममेकमेव लक्षं नयनविषयो यस्य यस्या वा तद्भावेनान्यवस्तुविलोकनपरित्यागेन तदेकपरतयाऽत्यादरेण दध्यावचिन्तयत्। शोभां पुनः पुनरपश्यादित्यर्थः। अथ च—यदल्पमपि प्रत्तं बहुतरं दध्यौ मन्यते स्म तदेको हैमत्वेनातिरमणीयः (तत एव मुख्यः) असौ वराटकः तदुत्थत्वात्तथाभूतं कमलं हेमकमलमिति यावत् तम् एकलक्षसंख्यापरिमितद्रव्यत्वेन दध्यावित्यथतः सिद्धम्, इति श्लेषप्रतिभोत्थार्थापत्तिः। तेन प्रेम्णा स्वर्णकमलदानात् 'वसन्ति हि प्रेम्णि गुणा न वस्तुनि' इति न्यायेन तत्स्वर्णकमलं लक्षकोटिपरार्धद्रव्यादपि नितरामधिकं मेन इति भावः। प्रियपदेन प्रेमभरः सूचितः। पद्मस्य पुंलिङ्गत्वान्तमिति पुन्निर्देशः॥ ५॥

**प्रेयसाऽवादि सा तन्वि त्वदालिङ्गनविघ्नकृत्।**
**समाप्यतां विधिः शेषः क्लेशश्चेतसि चेन्न ते॥**

प्रेयसेति॥ प्रेयसा नलेन सा भैमी इत्यवादुक्ता। इति किम्—हे तन्वि कृशाङ्गि, तवालिङ्गनविघ्नं करोतीति कृत् शेषः स्नानसंध्यानन्तरकरणीयत्वेनावशिष्टः श्रुतिस्मृत्युक्तोऽनतिक्रमणीयो नित्याग्निहोत्रादिरूपो विधिर्मया समाप्यतां परिपूर्णीक्रियतां वदेति सामप्रश्नः। परं यदि ते चेतस्याश्लेषविलम्बवशात्क्लेशः खेदश्चेन्न भवेत्। समागतेनाश्लेषलोलुपेन मया भवदाश्लेषः कर्तव्यः, परमन्तरायस्तपःशेषो विधिरस्ति। स पुनः प्रसन्नचित्तत्वेन यद्यनुजानासि तर्ह्येव समाप्तिं नेष्यते नान्यथेत्यर्थः। भैमीकर्मकालिङ्गनविषयमेतत्। भैमीकर्तृकालिङ्गनविषये अनालिङ्गनखिन्नां तां प्रत्येव तेन प्रार्थना कृतेति भावः। 'विधेः शेषः' इत्यपि पाठः॥ ६॥

**क्वैतावान्नर्ममर्माविद्वियते विधिरद्य ते।**
**इति तं मनसा रोषादवोचद्वचसा न सा॥ ७॥**

क्वेति॥ सा भैमी इति रोषादीर्ष्यया तं मनसैवावोचन्मनस्येवैवमचिन्तयत्, न वचसा साक्षान्न वाचा। इति किम्—हे प्रिय, नर्ममर्मविदालिङ्गनादिकेलिरहस्यभेदी एतावानतिबहुरद्यापि ते तव विधिः क्व कुवः, कियति वा काले विद्यते, अपि तु नास्त्येव सर्वोऽपि विधिस्त्वया कृत एव केवलं ममानालिङ्गनार्थम्। जात्युत्तरमेतत्। यद्वा—अद्यैतावान्क विद्यते, अपि तु नास्त्येव। पूर्वं कदाप्येतावतो विधेरदर्शनात्। इदमपि जात्युत्तरमेवेत्यर्थः। रोषवशाल्लज्जावशाद्वा साक्षान्न बभाष इत्यर्थः। प्रतारणमेव मम करोषीति रुष्टाभूदिति भावः। नर्ममर्म विध्यतीति व्यधेः क्विपि संप्रसारणे च 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६।३।११६' इति पूर्वपदस्य दीर्घः॥ ७॥

**क्षणविच्छेदकादेव विधेर्मुग्धे विरज्यसि।**
**विच्छेत्ता न चिरं त्वेति हृदाऽऽह स्म तदा कलिः॥**

क्षणेति॥ तदा भैमीचिन्तावसरे गृहारामस्थविभीतकनिवासी कलिः हृदा मनसा इत्याह स्मावोचत्। इति किम्—हे मुग्धे मूढे भैमि, क्षणविच्छेदकात्क्षणमात्रमेव वियोगकारिणो विधेर्नित्यकर्मण एव हेतोस्त्वं विरज्यस्युद्विग्ना भवसीति काकुप्रश्नः। एतावतैवोद्वेगो न कार्य इत्यर्थः। यतोऽहं कलिस्त्वा चिरं न विच्छेत्ता विच्छेदनशीलो भवामि, अपि तु वियोजयिष्याम्येवेति, एवमहं करिष्यामि न जानासीति सप्रतिभं मनोरथमकरोदित्यर्थः। भावी वियोगः सूचितः। विच्छेत्ता ताच्छील्ये तृन्। त्वेति, 'त्वामौ द्वितीयायाः ८।१।२३' इति त्वादेशः॥ ८॥

१ अत्रानुप्रासः, पद्मेवेत्युपमा पूर्णा, पद्मदृगिति लुप्तोपमा च। २ पूर्वोक्तस्य समर्थनायैव परार्धोक्तिरवतारणमिति काव्यलिङ्गम्।

१ अत्र नर्मस्यावावनुप्रासः।

**सावज्ञेवाथ सा राज्ञः सखीं पद्ममुखीमगात् ।
लक्ष्मीः कुमुदकेदारादारादम्भोजिनीमिव ॥९॥**

सावज्ञेति ॥ अथैवं नलवाक्यश्रवणोद्वेगानन्तरं सा भैमी नलेनानालिङ्गनात्स्वयमारब्धालिङ्गनानङ्गीकाराद्वा सावज्ञेव सापमानेव सती पद्ममुखीं नलात्सकाशाद्भैम्यागमनसंजातहर्षत्वाद्विकसितकमलतुल्यवदनां सखीमगात्प्रतिजगाम । का कस्मात्कामिव—लक्ष्मीः कुमुदानां केदारात्क्षेत्रादारान्निकटे पद्मरूपवदनामम्भोजिनीं कमलिनीमिवेत्युपमा । लक्ष्मीनिर्गमे च कुमुदक्षेत्रस्य यथा म्लानत्वं तथा भैमीनिर्गमे नलस्य, अम्भोजिन्याश्च लक्ष्म्यागमनानन्तरं यथा हर्षः तथा भैम्यागमनानन्तरं सख्याः, इति सूचितमुपमया ॥ ९ ॥

**ममासावपि मा सम्भूत्कलिद्वापरवत्परः ।
इतीव नित्यसत्रे तां स त्रेतां पर्यतूतुषत् १०**

ममेति ॥ स नल इतीव हेतोर्नित्यसत्रे नित्याग्निहोत्रविषये तामाहवनीयगार्हपत्यदक्षिणाग्निरूपेण प्रसिद्धां त्रेताम् । अथ च—त्रेतारूपं द्वितीयं युगम् । आज्यादिना पर्यतूतुषत्परितोषितवान्पूजितवांश्च । इति किम्—असौ त्रेतापि कलिद्वापरवन्मम परः शत्रुर्मा संभूदिति । अमित्रयमप्यपूजनेऽहितकारित्वाच्छत्रुरेव भवति । एतेन चाकरणे प्रत्यवायभियेव नित्याग्निहोत्रमकरोत्, तत्त्वतस्तु भैमीपर ( वश ) एवाभूदिति भावः । 'त्रेता त्वग्नित्रये युगे' इत्यमरः । अतूतुषत्, 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इत्युपधाह्रस्वः ॥ १० ॥

**क्रियां प्राह्णेतनीं कृत्वा निषेधन् पाणिना सखीम् ।
कराभ्यां पृष्ठगस्तस्या न्यमिमीलदसौ दृशौ ॥
दमयन्त्या वयस्याभिः सहास्याभिः समीक्षितः ।
प्रसृतिभ्यामिवायामं मापयन्प्रेयसीदृशोः १२॥**

क्रियामिति ॥ युग्मम् । असौ नलः पृष्ठगः सन् कराभ्यां तस्या दृशौ न्यमीमिलत्पिदधौ । किं कृत्वा प्राह्णेतनीं प्राभातिकीमग्निहोत्रादिक्रियां कृत्वा । किं कुर्वन्—पाणिनाहमागत इति तस्या अग्रे न कथनीयमिति करसंज्ञयैव सखीं निषेधन् । तथा—अत एव सहासाभिर्नलस्य संमुखीभिर्दमयन्त्या वयस्याभिः समीक्षितः । तथा किं कुर्वन्निव—प्रसृतिभ्यां करद्वयचुलुकाभ्यां प्रेयसीदृशोरियत्परिमाणमेतयोर्दैर्घ्यमायामं मापयन्निव । क्रीडाकारिणामियं जातिः । प्रसृतिप्रमाणे दृशाविति सूचितम् । प्राह्णेतनीं, 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४।३।२३' इति ट्युट्तुट् च, टित्वान्ङीप् । भैलिरकर्मकत्वात् 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ १।४।५२' इत्याणौ कर्तुर्णौ कर्मत्वाद् दृशाविति द्वितीया । मापयन्, 'मा माने' अस्माद्धेतुमण्णिचि रूपम् ॥ ११॥१२ ॥

**तर्किताऽलि त्वमित्यर्धवाणीका पाणिमोचनात् ।
ज्ञातस्पर्शान्तरा मौनमानशे मानसेविनी १३॥**

तर्कितेति ॥ हे आलि सखि, मया नेत्रपिधायिनी त्वं तर्किता ज्ञाताऽसीत्येवंरूपाऽर्धा मां मुञ्चेत्याद्यवचनादपरिपूर्णपदा वाणी यस्याः सा, तथा—स्वकराभ्यां नलपाण्योर्मोचनाद्धेतोः ज्ञातं स्पर्शान्तरं स्वीयस्पर्शाद्विलक्षणो नलस्पर्श इति यया, ज्ञातस्पर्शमान्तरं चेतो यस्या इति वा । सा मौनमानशे प्राप, यतो मानसेविनी मानिनी । स्पर्शेन नलं ज्ञात्वा मामवज्ञाय त्रेतायामनुरक्तोऽधुना वृथैव किमित्यागत इत्यभिमानात्किमपि नावददित्यर्थः । वाणीकेति, नद्यन्तत्वात्कप् ॥ १३ ॥

**साऽवादि सुतनुस्तेन कोपस्ते नायमौचिती ।
त्वां प्रापं यत्प्रसादेन प्रिये तन्नाद्रिये तपः १४॥**

सेति ॥ तेन नलेन सुतनुः शुभाङ्गी सा इत्यवादुक्ता । इति किम्—अयि प्रिये भैमि, ते तवायं मयि कोपो नौचिती । औचितीशब्दस्याविष्टलिङ्गत्वादुचितोऽयं नेत्यर्थः । अहं यस्य तपसः प्रसादेन त्वां प्रापं प्राप्तवानस्मि, तत्तपोऽग्निहोत्रादि नाद्रिय आदरेण न कुर्यामित्याक्षेपकाकुप्रश्नः । एवंविधमहाफलस्य तपसोऽत्यादरो युक्त एवेत्यर्थः । त्वत्प्रापकत्वादेवास्यादरः क्रियते, न त्वन्यथा, तस्मात्कोपं मा कार्षीरिति भावः ॥ १४ ॥

**निशि दास्यं गतोऽपि त्वां स्नात्वायन्नाभ्यवीवदम् ।
तं मवृत्ताऽसि मन्तुं चेन्मन्तु तद्वद वन्द्यसे १५॥**

---

१ सावज्ञेवेत्युत्प्रेक्षा, पद्ममुखीमिति अम्भोजिनीमिवेति चोपमा । २ अत्रोपमोत्प्रेक्षे ।

१ अत्रोत्प्रेक्षा । २ अत्रानुप्रासः, मानेति यमकं च । ३ प्रिये द्रिये इत्युनुप्रासः । तपसः फलत्वेन भैम्या वचनात्तदपेक्षयाऽऽदरौचित्यं प्रतीयते, तेन ततोऽस्या व्यतिरेको व्यज्यते ।

निशीति ॥ हे भैमि, अहं निशि तव दास्यमालिङ्गनचुम्बनादिचरणपर्यन्तसेवाकारित्वं गतोऽपि सन् प्रातः स्नात्वा त्वां नाभ्यवीवदं न नमस्कृतवानिति यत्, तं मन्तुमपराधं मन्तुमङ्गीकर्तुं त्वं प्रवृत्ताऽसि चेत्, तत्तर्हि वद तदपराधमार्जनायेदानीमेव वन्द्यसे नमस्क्रियसे । रात्रौ दास्यं प्राप्त इत्यनेन सखीषु भैमीरात्रिवृत्तमपि सूचितम् । अभ्यवीवदम्, अभिपूर्वान्नमस्कारार्थाच्चौरादिकाद्वदेः स्वार्थणिचि चङि च 'णौ चङ्युपधाया ह्रस्वः ७।४।१' इत्युपधाह्रस्वः ॥ १५ ॥

**इत्येतस्याः पदासत्त्यै पत्यैषा प्रेरितौ करौ ।**
**रुद्ध्वा सकोपं सातङ्कं तं कटाक्षैरमूमुहत् १६**

इतीति ॥ एषा इत्येवमुक्तप्रकारेणैतस्याः भैम्याः पदासत्त्यै चरणनिकटीभावाय प्रणामार्थं पत्या प्रेरितौ करौ नमस्कारारम्भानौचित्याद्रात्रिवृत्तस्य प्रकटनेन वा सकोपं पतित्वात्स्वीयचरणयोः पतिकरस्पर्शस्यानौचित्याद्वा आतङ्को भयं तेन च सह यथा तथा चरणस्पर्शात्पूर्वमेव स्वकराभ्यां रुद्ध्वा निवार्य तं कटाक्षैरमूमुहत्कामाधीनं चकार । एवं तया विलोकित एव कामवशो जात इति भावः । पदासत्त्यै, तादर्थ्यमात्रे चतुर्थी । मुहेरकर्मकत्वात् 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ १।४।५२' इत्यणौ कर्तुर्णौ कर्मत्वात्तामिति द्वितीया । अमूमुहत्, हेतुमण्णिचि चङ्युपधाह्रस्वादि १६॥

**अवोचत ततस्तन्वीं निषधानामधीश्वरः ।**
**तदपाङ्गचलत्तारझलत्कारवशीकृतः ॥१७॥**

अवोचतेति ॥ ततस्तस्यास्तद्दृशकटाक्षविलोकनानन्तरं निषधानामधीश्वरस्तन्वीं वक्ष्यमाणमवोचत । किंभूतः—तारशब्दस्य कनीनिकावाचित्वे नपुंसकलिङ्गत्वात्तस्या अपाङ्गे चलतस्तारस्य कनीनिकायाः किरणोल्लासलक्षणदर्शनचमत्काररूपो झलत्कारस्तेन वशीकृतः । यद्वा—चलन्ती तरला तारा यत्र तादृशश्चासौ झलत्कारश्च ततः पूर्वेण षष्ठीसमासः । झलत्कार इति देश्यपदम् ॥ १७ ॥

**कटाक्षकपटारब्धदूरलङ्घनरंहसा ।**
**दृशा भीत्या निवृत्तं ते कर्णकूपं निरूप्य किमू**

कटाक्षेति ॥ हे प्रिये, कटाक्षकपटेन नेत्रप्रान्तवक्रविलोकनव्याजेनारब्धं कर्तुं व्यवसितं दूरलङ्घनेऽतिदूरदेशातिक्रमणे रंहो वेगो यस्याः एतादृश्या ते दृशा कर्णरूपं कूपमग्रे निरूप्य विलोक्य भीत्या पुनर्निवृत्तं परावृत्तं किमित्युत्प्रेक्षा । दूरं गन्तुमुपक्रान्ता हि महान्तं कूपं पुरो दृष्ट्वा भयेन शीघ्रं परावर्तन्त एव । दृशेत्यनेन स्त्रीत्वं युज्यते । स्त्रिया हि भीतियुक्ता ॥ १८ ॥

**सरोपापि सरोजाक्षि त्वमुदेपि मुदे मम ।**
**तमापि शतपत्रस्य सौरभायैव सौरभा ॥ १९ ॥**

सरोपेति ॥ हे सरोजाक्षि, सरोषापि त्वं मम मुदे हर्षायैवोदेषि भवसि । अङ्गानामालिङ्गनाद्यर्थं दुरापत्वेन स्पृहणीयतरत्वात्सौन्दर्यातिशयाच्चेत्यर्थः । यस्मात्तप्ताप्युष्णस्पर्शापि सूरः सूर्यस्तत्संबन्धिनी सौरी भा दीप्तिः शतपत्रस्य कमलस्य विकासपूर्वं सौरभायैव भवति, न तु म्लान्यै । सौरभेत्यत्र 'पुंवत्कर्मधारयजातीयदेशीयेषु ६।३।४२' इति पुंवत् ॥ १९ ॥

**छेत्तुमिन्दौ भवद्वक्त्रबिम्बविभ्रमविभ्रमम् ।**
**शङ्के शशाङ्कमानङ्क भिन्नभिन्नविधिर्विधिः ॥२०**

छेत्तुमिति ॥ हे भैमि विधिर्ब्रह्मा पूर्वं निष्कलङ्केऽपीन्दौ विषयेऽतिसादृश्यात्प्रतिक्षणं भवन्नुत्पद्यमानो भवत्या वा वक्त्रबिम्बस्य विभ्रमो विशिष्टा भ्रान्तिस्तस्य विभ्रमं विलासं छेत्तुं शशाङ्कमानङ्के शशरूपेण कलङ्केन चिह्नितवानित्यहं शङ्के । यतो भिन्नभिन्नो भिन्नप्रकारः किंचिद्भेदयुक्तो विधिर्घटपटादिविधानं यस्य तादृशः । तस्माद्भवन्मुखमृगाङ्कयोरुत्पद्यमानसादृश्यभ्रान्तिनिरासाय चन्द्रं कलङ्केन चिह्नितवानित्यर्थः । इत्यहं मन्ये । निष्कलङ्कं भवन्मुखं चन्द्रादप्यधिकमिति भावः । आनङ्के, चौरादिकाल्लक्षणार्थादङ्केर्लिट्, भिन्नभिन्नेति प्रकारे द्विरुक्तिः ॥ २० ॥

**ताम्रपर्णीतटोत्पन्नैर्मौक्तिकैरिन्दुकुक्षिजैः ।**
**बद्धस्पर्धतरा वर्णाः प्रसन्नाः स्वादवस्तव॥२१॥**

ताम्रपर्णीति ॥ तव वर्णास्त्वद्वदननिर्गता वर्णाः प्रसन्नाः स्पष्टतरा निर्दोषत्वादुज्ज्वलाश्च, तथा—स्वादवो मधुराः सुश्राव्याः क्रमेण मलयनिर्गतदक्षिणसमुद्रगामि-

१ मन्तुमिति यमकम् । २ अत्रानुप्रासः ।

१ कटाक्षकपटेत्यपह्नुतिः । किमित्युत्प्रेक्षा । २ अत्र सरो इति मुदे इति सौरभा इति च यमकम् । ३ विभ्रमेति यमकम्, अनुप्रासः, शङ्क इत्युत्प्रेक्षा च ।

ताम्रपर्ण्याख्यनद्यास्तटे उत्पन्नैः, तथा—अमृतमयस्येन्दोः कुक्षौ जातैर्मौक्तिकैः सह बद्धा धृता स्पर्धा सादृश्यदर्पो यैस्तेऽतिशयेन बद्धस्पर्धतराः। 'इक्षुकुक्षिजैः' इति पाठे—इक्षुकुक्षेर्जातैर्मौक्तिकैः। ताम्रपर्णीजातस्य मौक्तिकस्य सौन्दर्यम्, न माधुर्यम्। इक्षुकुक्षौ यदि मौक्तिकानि जायेरन्, तदा माधुर्यातिशयात्तैः सह बद्धस्पर्धतरा इत्यभूतोपमा। इक्षुर्वंशविशेषः, तत्रोत्पन्नस्य मौक्तिकस्य वैद्यकनिघण्टौ शैत्यं माधुर्यं पित्तोपशमकत्वं चोक्तम्। वंशान्मौक्तिकोत्पत्तिः प्रसिद्धा पूर्वमुक्ता च ॥ २१ ॥

**त्वद्गिरः क्षीरपाथोधेः सुधयैव सहोत्थिताः।**
**अद्ययावदहो धावद्दुग्धलेपलवस्मिताः ॥२२॥**

त्वदिति ॥ तव गिरः क्षीरपाथोधेः क्षीरसमुद्रात्सकाशात्सुधयैव सहोत्थिता उत्पन्ना इवेति भावः। यस्माद्—अद्ययावदद्यतनदिनमवधीकृत्याद्याप्यहो चित्रं धावत्प्रसरद् दुग्धलेपलवरूपं स्मितं हास्यं यासु तादृशः। अमृतेन सह निर्गतत्वादमृतवन्मधुराः, क्षीरसमुद्राच्च निर्गतत्वात्स्मितव्याजेन तद्दुग्धलेपलेश एवाद्याप्यनुवर्तते। तद्वद्धवलस्मिताश्चेति भावः। धावत्, 'धावु गतिशुद्ध्योः' इत्यस्माच्छतो ॥ २२ ॥

**पूर्वपर्वतमाश्लिष्टचन्द्रिकश्चन्द्रमा इव।**
**अलंचक्रे स पर्यङ्कमङ्कसङ्क्रमितप्रियः ॥२३॥**

पूर्वेति ॥ स नलः पर्यङ्कमलंचक्रे। किंभूतः—अङ्के संक्रमिता समारोपिता प्रिया येन सः। कः कमिव—आश्लिष्टा चन्द्रिका कौमुदी येन स चन्द्रमाः पूर्वपर्वतमिव ॥ २३ ॥

**प्रावृडारम्भणाम्भोदः स्निग्धो द्यामिव स प्रियाम्।**
**परिरभ्य चिरायास विश्लेषायासमुक्तये ॥२४॥**

प्रावृडिति ॥ स प्रियां विश्लेषः प्रातःस्नानादिनित्यकर्मानुष्ठानवशेन तावन्मात्रभिन्नदेशावस्थायितया वा वियोगस्तज्जनितो य आयासः खेदस्तस्योभयोर्वा मुक्तये निवृत्तये परिरभ्य चिरायास तस्थौ शुशुभे वा। कः कामिव—प्रावृडारम्भणे वर्षारम्भेऽम्भोदो मेघो द्यामिव। किंभूतो मेघः—स्निग्धः सजलत्वादरूक्षः श्यामः। मेघो यथा वीनां श्लेषो योगः शरदादौ सदा गगनक्रीडद्भिः पक्षिभिर्यः श्लेषः संबन्धस्तज्जनितदुःखपरिहाराय जलभिया पक्षिणां नीडनिवेशत्वात्तद्योगे क्लेशमुक्तये दिवमालिङ्ग्य चिरं तिष्ठति। किंभूतः सः—स्निग्धोऽतिप्रीतिमान्। 'आस, अस गतिदीप्त्यादानेषु' ॥ २४ ॥

**चुचुम्बास्यमसौ तस्या रसमग्नः श्रितस्मितम्।**
**नभोमणिरिवाम्भोजं मधुमध्यानुबिम्बितः २५**

चुचुम्बेति॥असौ रसमग्नः प्रेमभरपरवशः सन् तस्या गतरोषत्वादालिङ्गनसुखाच्च श्रितस्मितमास्यं चुचुम्ब। कः किमिव—मधुमध्येऽनुबिम्बितः प्रतिफलितः, अत एव रसमग्नो नभोमणिः सूर्योऽम्भोजमिव। तदपि श्रितविकासम्। सूर्यपद्मयोर्दूरदेशत्वात्कथं चुम्बनमिति प्रश्ने मधुमध्यानुबिम्बित इत्युत्तरम् ॥ २५ ॥

**अथाहूय कलां नाम पाणिना स प्रियासखीम्।**
**पुरस्ताद्देशितामूचे कर्तुं नर्मणि साक्षिणीम् २६**

अथेति ॥ अथ चुम्बनानन्तरं स पाणिना हस्तसंज्ञया कलां नाम प्रियायाः सखीमाहूय ऊचे। किंभूताम्—नर्मण्यन्योन्यरहःक्रीडाहासे साक्षिणीं कर्तुं पुरस्तादग्रे वेशितां स्थापिताम्। वेशिताम्, ण्यन्तान्निष्ठा२६

**कस्मादस्माकमब्जास्या वयस्या दयते न ते।**
**आसक्ता भवतीष्वन्यं मन्ये न बहु मन्यते२७॥**

कस्मादिति ॥ हे कले, अब्जास्या पद्ममुखी ते वयस्या भैमी कस्मात्कारणादस्माकं न दयते कृपां न करोति, कथय पृच्छ वेति शेषः।स्वयमेव कारणमाशङ्कते—भवतीषु सखीषु मध्ये आसक्ता सामस्त्येनानुरक्ता सती हितकारिणमप्यन्यं मादृशं बहु यथा तथा नितरां न मन्यत इत्यहं मन्ये। तेन मयि कृपां न करोतीत्यर्थः। रात्रावात्मानं मम हस्तेन स्प्रष्टुमपि नाददादिति तां प्रति सूच्यते। भवदासक्तेरस्माकमियं दशाऽनया कृतेति कलां प्रत्यपि सोल्लुण्ठम्। अथ च—नवपरिचयेऽप्यस्माकं दयते, चिरपरिचयेऽपि ते तुभ्यं न दयते। कुतः—भवतीषु नासक्ता सती अन्यं मल्लक्षणं बहु मन्यते यत इत्युत्तरानुरोधेन व्याख्येयम्। अस्माकम्, 'अधीगर्थदयेशां कर्मणि २।३।५२' इति षष्ठी।'असदो द्वयोश्च१।२।५९' इत्येकत्वेऽपि बहुवचनम् ॥ २७ ॥

१ बद्धेत्युपमा। २ उत्थिता इवेति प्रतीत्या प्रतीयमानोत्प्रेक्षा। लवस्मितेति रूपकम्। ३ अत्रानुप्रासः, उपमा च।

१ अत्राप्युपमा। २ अत्राप्युपमा। ३ अत्रानुप्रास उपमोत्प्रेक्षा च।

अन्वग्राहि मया प्रेयान्निशिस्वोपनयादिति ।
न विप्रलभते तावदालीरियमलीकवाक् ॥ २८॥

अन्विति॥अलीकाऽसत्या वाग्यस्याः सेयम् इत्युक्त्वातिविश्वासस्थानभूता भवादृशीरालीः सखीस्तावन्न विप्रलभते प्रतारयाति । इति किम्—मया निशि आलिङ्गनचुम्बनादिना स्वस्यात्मशरीरस्योपनयादानुकूल्येन रमणात् प्रेयान्नलोऽन्वग्राहि अन्वकम्पीति विप्रलभते प्रतारयति माहशान्यद्यपि वञ्चयति,तथापि भवादृशीः कथं वञ्चयेदिति तावच्छब्दार्थः । अलीकवाङ् न प्रतारयतीति विपरीतलक्षणया सोल्लुण्ठभाषणाद्विप्रमलत एवेत्यर्थः । आलीस्तावन्न विप्रलभते, अपि तु ता अपि वञ्चयत्येव, अस्मादृशां तु का कथेति काकुर्वा । तस्मादियमस्माकं न दयत इत्येव तथ्यं जानीत, सर्वथा वाऽस्या वचसि भवतीभिर्न विश्वसनीयमिति भावः । एतेन भेदोपायप्रयोगः कृत इति सूचितम् ॥ २८ ॥

आह स्मैषा नलादन्यं न जुषे मनसेति यत् ।
यौवनानुमितेनास्यास्तन्मृषाऽभून्मनोभुवा २९

पुनरप्यलीकतामेवाह—

आहेति ॥ एषा भवादृशीनां पुर इति यदाह स्म । इति किम्—अहं नलादन्यं मनसापि न जुषे भज इति । तदेतस्याः प्रतिज्ञावाक्यं यौवने प्रस्तुते सत्यनुमितेन प्रकटीभूतेन मन एव भूः स्थानं यस्य तेन कामेन कृत्वा मृषा मिथ्याऽभूत् । मदन्यस्य कामस्य मनसि धारणादसत्यप्रतिज्ञेयमिति निन्दा । वस्तुतस्तु तारुण्यमारभ्य मय्येवानुरक्तेति स्तुतिरेवास्याः कृता । व्याजस्तुतिः ॥ २९ ॥

आस्यसौन्दर्यमेतस्याः शृणुमो यदि भाषसे ।
तद्धि लज्जानमन्मौलेः परोक्षमधुनाऽपि नः३०

आस्येति ॥ हे कले, त्वमेतस्या आस्यसौन्दर्यं चिरपरिशीलनज्ञाताशेषविशेषत्वाद्यदि भाषसे तर्हि वयं शृणुमः। आदर्शे हस्तकङ्कणदर्शनवदसंगतमेतादित्याशङ्क्य हेतुनाह—हि यस्मात्तदेतदास्यसौन्दर्यमधुनापि विवाहमारभ्याद्यतनक्षणपर्यन्तं नोऽस्माकं परोक्षमप्रत्यक्षम् । नेत्रविषयो न जात इत्यर्थः । यतः—लज्जया नमन्मौलेर्नम्रमस्तकायाः । नम्रमौलित्वादेतन्मुखं कदाऽपि मया न दृष्टम् । तस्मादेतदास्यसौन्दर्यं त्वं कथयेत्यर्थः एतस्या मुखमपि न दृष्टं सम्भोगकथा तु दूरापास्ता । तस्मादेतदीयवचने सर्वथा न विश्वसनीयमिति भावः । अधुनेत्यस्य वर्तमानार्थत्वात्परोक्षस्य भूतार्थत्वाद्वर्तमानस्य भूतत्वविरोधात्परोक्षाधुनाशब्दयोरर्थान्तरपरिग्रहाद्विरोधाभासोऽपि ॥ ३० ॥

पूर्णयैव द्विलोचन्या सैषाऽलीरवलोकते ।
द्राग्दृगन्ताणुना मां तु मन्तुमन्तमिवेक्षते३१॥

पूर्णयेति ॥ सैषा आलीर्भवादृशीः पूर्णयैव द्विलोचन्या नेत्रद्वयेनावलोकते, मां तु पुनः मन्तुमन्तमिव सापराधमिव एकस्या अपि दृशोऽन्तः प्रान्तदेशस्तस्याप्यणुर्लेशस्तेनापि द्राक् झटिति क्षणमात्रमेवेक्षते पूर्णद्विलोचन्या चिरकालविलोकनस्य का कथेत्यर्थः । सापराधोऽपि सरोषया दृशा विलोक्यते । प्रियया च प्रेयान्दृगन्तेनैव विलोक्यते । सख्यादिवान्धवजनस्तु सरलैः सकलैर्नेत्रैः द्विलोचन्या,। समाहारद्विगौ'द्विगोः४।१।२१' इति ङीप् ॥ ३१ ॥

न लोकते यथेदानीं मामियं तेन कल्पये।
योऽहं दूत्येऽनया दृष्टः सोऽपि व्यस्मारिषीदृशा॥

नेति ॥ हे सखि, यथा येन प्रकारेण । यत इति यावत् । यस्मादिदानीमियं मां न लोकते तेन हेतुना योऽहं दूत्यावसरेऽनया दृष्टोऽप्यहमीदृशा सर्वथानवलोकिन्याऽनयैव व्यस्मारिषि विस्मृत इति कल्पये सम्भावयामि । सम्प्रति जिज्ञासिताशेषविशेषं मां द्रक्ष्यतीति तु कथा दूरे । किन्तु सर्वथा नावलोकयत्यपीत्यर्थः । स एवायमिति प्रत्यभिज्ञानं यद्यभविष्यत्, तर्हि तादृगेव व्यलोकयिष्यदपि, न त्वेवं तस्माद्विस्मृत एवाहमनयेति कल्पना युक्तेति सोल्लुण्ठम् । पूर्ववद्वक्रोक्तिः । कल्पये चिन्तार्थाच्चौरादिकात्क्लृपेः 'णिचश्च १।३।७४' इति तङ्। व्यस्मारिषि, स्मरतेः कर्मणि लुङुत्तमैकवचन इटि 'स्यसिचसीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ६।४।६२'.इति सिच इडागमे तस्य चिण्वद्भावे 'अचोऽञ्णिति १ । २ । ११५' इति वृद्धिः ॥ ३२ ॥

---

१ अप्राप्यनुप्रासः ।२ अत्र व्याजस्तुतिरिति व्याख्यातारः। अनुप्रासश्च ।

१ आस्यसौन्दर्यस्य प्रत्यक्षत्वेऽपि परोऽक्षत्वोक्त्याऽन्यत्र तदुपमानत्वेनादृष्टत्वं सम्भाव्यते तेन व्यतिरेको ध्वन्यते। २ इवेत्युत्प्रेक्षा ।

सक्तपयोः, अत एव युक्ताचारयोर्विशिष्टमत्युन्नतं मुखमग्रं ययोस्तादृक्त्वं प्रसन्नमुखत्वं च जानीम एवेति । इत्यादि ज्ञातव्यम् ॥ ३६ ॥

**इति मुद्रितकण्ठेऽस्मिन्सोल्लुण्ठमभिधाय ताम्।**
**दमयन्तीमुखाधीतस्मितयाऽसौ तया जगे ३७**

इतीति ॥ अस्मिन्नले इत्युक्तप्रकारेण सोल्लुण्ठं वक्रोक्त्यादिसहितं यथा तथा तां भैमीं कलां वाऽभिधायोक्त्वा मुद्रितकण्ठे मौनिनि सति दमयन्तीमुखादधीतं स्मितं यया नलवक्रोक्तिमाकर्ण्य हसद्भैमीमुखं दृष्ट्वा संजातहासया । यद्वा भैमीमुखेनाधीतं स्मितं यस्याः सकाशात् । नलीयसोप्रासवचनात्स्वयं हसन्ती भैमीमपि हासयति सेत्यर्थः । तादृश्या वा तया कलया असौ नलो जगेऽभाणि । 'सोल्लुण्ठनं तु सोत्प्रासम्' इत्यमरः । उल्लुण्ठनमुल्लुण्ठः, भावे घञ् । तेन सह यथा स्यादिति क्रियाविशेषणम् । मुखाधीतेति 'पञ्चमी भयेन २।१। ३७' इत्यत्र योगविभागात्समासः।'स्मितयाऽस्मै तया' इति पाठे—'क्रियया यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानत्वम् ॥ ३७ ॥

**भावितेयं त्वया साधु नवरागा खलु त्वयि ।**
**चिरंतनानुरागार्हं वर्तते न सखीः प्रति:३८॥**

'कस्मादस्माकम्—' ( २०।२७ ) इत्यस्योत्तरमाह—

भावितेति ॥ हे राजन्, त्वयेयं साधु सम्यग्भाविता तर्किता । या त्वयि विषये खलु निश्चितं नवरागा नवप्रीतिर्वर्तते । नवोढत्वाद्धार्ष्ट्येन सलज्जा वर्तत इत्यर्थः । त्वयि नवरागा सती नः सखीः प्रति चिरंतनो योऽनुरागस्तस्यार्हं योग्यं यथा तथा वर्तते । बहुकालिकस्नेहवशान्निःशङ्कं वर्तते इत्यर्थः। त्वयि नवरागा सती नः प्रति चिरंतनानुरागार्हमतिदृढप्रीति ( यथा तथा ) वर्तते,न तु त्वयीत्येकवाक्यता वा । तस्माल्लज्जावशादधाष्ट्र्यान्मय्युदासीना,भवतीषु तु प्रीतिमतीति तव बुद्धिरुत्पन्नेत्यर्थः । अथ च—त्वयेयं साधु तर्किता । साध्विति काक्वा विपरीतलक्षणया वा साध्वेव विपरीतमेव तर्कितेत्यर्थः । यद्वाऽकारप्रश्लेषेणासाधु तर्किता । खलु यस्मात्त्वयीयं नूतनानुरागाऽतिदृढप्रीतिर्वर्तते, अस्मासु तु जीर्णानुरागयोग्यं यथा तथाऽतिशिथिलप्रीतिर्वर्तते, न तु त्वयि । 'अतिपरिचयादवज्ञा' इति न्यायादित्यर्थः । यतो मह्यं दयते तुभ्यं न दयते इति वदता त्वया सत्यमुक्तमित्यर्थः । यद्वा—सम्यग्भाविता भावं प्रापिता । द्रावितेत्यर्थः । यस्मात्त्वयि नवरागत्वाद्दृढप्रीतिः सती अस्मान्प्रति पुराणप्रीतिसदृशमतिशिथिलप्रीति (यथा तथा)वर्तते, न तु त्वयि ।तथा सम्यग्भाविता यथा त्वय्येव दृढप्रीतिः सत्यस्मान्सर्वथा न गणयत्यपीत्यर्थः।तस्मादस्मान्वृथैवोपहससीति भावः । इति सोल्लुण्ठम् ॥ ३८ ॥

**स्मरशास्त्रविदा सेयं नवोढा नस्त्वया सखी ।**
**कथं सम्भुज्यते वाला कथमस्मासु भाषताम् ॥**

'अन्वग्रहि—' ( २०।२८ ) इत्यादेरुत्तरमाह—

स्मरेति ॥ 'बालां वलान्न भुञ्जीत विरागोत्पत्तिशङ्कया। भुञ्जीत चेन्नपाभीतित्याजनक्रमसंगताम् ॥' इत्यादिस्मरशास्त्रविदा कामशास्त्ररहस्यज्ञेन त्वया नवोढा नवपरिणीता सेयं बाला नोऽस्माकं सखी कथं सम्भुज्यते । अपि तु विरागोत्पत्तिभिया बलादुपमर्दं न कथंचिद्रम्यते, अत एव त्वया सम्भुक्तत्वादेवाऽस्मासु कथं केन प्रकारेण भाषतां कथयतु, अपि तु—त्वत्कृतरतत्वादेव किंचिदपि न कथयतीति स्पष्टोऽर्थः।अथ चैवं वक्रोक्तिः । कामशास्त्रज्ञेन त्वयेयं नवोढा बाला कथं किंवा सम्भुज्यते, अपि तु सामस्त्येन भोगो न क्रियत एव, किन्तु स्मरशास्त्रवित्त्वात्स्वल्पमेव भुक्त्वा मुच्यत इत्यर्थः । अत एवास्मासु किं भाषताम्, अपि तु—अतिपीडनाभावान्न किंचिदप्यस्मासु भाषते । या हि बाला सुरते नितरां पीड्यते, सैव सखीषु ममातिपीडा भवति मया सोढुं न शक्यते इत्यादि वदति, न तु सामिभुक्तमुक्तेत्यर्थः । अथ च—कामशास्त्रज्ञेन त्वया बालापीयमेतन्मनोनुकूलमेव भुक्ता, अतः कथमस्मासु भाषताम्, अपि तु न कथंचिद्भाषते । बाला हि कामशास्त्रकौशलवशाद्यथानुरागं भुक्ता यद्यपि भोगं सहते, तथाप्यतीव लज्जावशात्संभोगरहस्यं कस्याप्यग्रे न कथयतीत्यर्थः । तस्मादुभावपि वञ्चकौ युवामस्मान्वञ्चयथ इति भावः। अथ च—सामर्थ्याच्छास्त्रविदा कामशास्त्रज्ञेन त्वया नवोढेयं बाला केन प्रकारेण संभुज्यते स्मर चिन्तय । तं प्रकारमित्यर्थात् । रात्रौ कृतमेव संभोगमकृतमेव कथयति । संभोगः प्रायेण विस्मृतः, अतः स्मरेति काकूक्तिः । कथं चेयमस्मासु भाषताम्, अपि तु नास्मासु कथयतीत्यर्थः । अथ च

१ तयेति यमकम्।

विपरीतलक्षणया त्वयेयं भुक्ता, अनया रहस्यमस्मासु कथितम्, किमिति नः प्रतारयसीत्यर्थः । अथ च— त्वयेयं बाला नवपरिणीता कथं समन्ताद् भुज्यते, अपि त्वनुचितमेतत् विदुषापि त्वया क्रियते । अस्मासु कथं नाभाषत एवेत्यादि ज्ञातव्यम् ॥ ३९ ॥

**नासत्यवदनं देव त्वां गायन्ति जगन्ति यम् ।**
**प्रिया तस्य सरूपा स्यादन्यथालपना न ते४०॥**

'आलीरियमलीकवाक्—' (२०।२८) इत्यंशस्य 'आह स्म—' इत्यत्र 'तन्मृषाभूत्—' (२०।२९) इत्यंशस्य चोत्तरमाह—

नासत्येति ॥ हे देव राजन्, जगन्ति त्रयोऽपि लोका यं त्वामसत्यं वदनं भाषणं यस्य तादृशं न गायन्ति, किंतु सत्यवादिनमेव वदन्ति । यद्वा—न असत्यं नासत्यं सत्यमेव भाषणं यस्य तम् । वदन्ति तस्य तादृशस्य सत्यभाषिणस्ते तव प्रिया अन्यथा विपरीतार्थमलीकमालपनं भाषणं यस्यास्तादृश्यसत्यवादिनी सरूपा तुल्यस्वभावा योग्या न स्यात् किंतु सत्यवादिन्येव प्रिया तव योग्या स्यादित्यर्थः । तस्मादस्मासु यदनया कथितं तत्सत्यमेवेति भावः । अथ च— वक्रोक्तिः । त्रयो लोका यं त्वामसत्यं भाषणं यस्य तं सदानृतवादिनं त्वां वदन्ति तस्यानृतवादिनस्तवान्यथाल्पनाऽसत्यवादिनी सदृशी योग्या न स्यात् किंत्वसत्यवादिन्येवोचिता । कृतमपि संभोगमहं न कृतवानिति वदसि,तथेयमपि रात्रौ कृतमपि संभोगं नेति वदति।'योग्यं योग्येन संबध्यते' इति न्यायो युक्तः । इति द्वावपि प्रति सोल्लुण्ठम्।भो राजन् त्रयोऽपि लोका नासत्यवदश्विनीकुमारवन्मुखं यस्य तमतिसुन्दरमुखं वदन्ति तस्य तव प्रियाऽन्यथा कुरूपं लपनं मुखं यस्यास्तादृशी तुल्यरूपा न स्यात्, किंतु सुन्दरतरवदनैव योग्या स्यात्।तथा च त्वन्मुखवदेवैतस्या अपि मुखं सुन्दरमिति जानीहीति भावः ॥ ४० ॥

'आह स्म—' (२०।२९) इत्यादेः श्लोकत्रयेणोत्तरमाह—

**मनोभूरस्ति चित्तेऽस्याः किंतु देव त्वमेव सः।**
**त्वदवस्थितिभूर्यस्मान्मनः सख्या दिवानिशम्॥**

मनोभूरिति॥अस्याश्चित्ते मनोभूः कामोऽस्ति सत्यम्। हे देव, किंतु त्वमेव स मनोभूः । न तु त्वदन्यः कश्चिदित्यर्थः । कुतः—यस्मात्कारणात् सख्या भैम्या मनो दिवानिशं तवावस्थितेर्भूः स्थानम् । कामपरत्वे मनसि भवति, नलपरत्वे मनो भूः स्थानं यस्य । अस्याश्चेतसि सुन्दरतरो मनोभूस्त्वमेव वर्तसे नान्य इति ॥ ४१ ॥

**सतस्तेऽथ सखीचित्ते प्रतिच्छाया स मन्मथः ।**
**त्वयाऽस्य समरूपत्वमतनोरन्यथा कथम् ४२॥**

यद्यहमेव कामस्तर्हि मद्विषयेऽस्याः कामो नास्तीति नलीयावान्तरच्छलाशङ्कानिराकरणव्याजेन प्रकारान्तरेण तस्यैवोत्तरमाह—

सत इति ॥ अथाऽथवा स मन्मथः सख्या भैम्याश्चित्ते सतो वर्तमानस्य तव प्रतिच्छाया प्रतिबिम्ब एव न तु स्वतन्त्रो बिम्बरूपः । प्रतिबिम्बश्च स्वच्छ एव मुकुरादौ भवतीति भैमीमनसः स्वच्छतरत्वं द्योतितम् । कुत एतदित्याशङ्क्यान्यथानुपपत्तिं प्रमाणयति—अन्यथा यदि प्रतिच्छाया न भवेत्,तर्ह्यतनोरशरीरस्यास्य कामस्य त्वया सह समरूपत्वं कथं स्यात्, अपि तु न कथंचित् । एतेन नासत्यादीनां सशरीरत्वात्त्वया सह सारूप्यं युज्यते । अयं त्वतनुः तस्मादस्य प्रतिबिम्बत्व एव त्वत्सारूप्यं युज्यते प्रतिबिम्बमेव ह्यशरीरमपि तुल्यरूपं भवति तस्मात्प्रतिबिम्बस्य बिम्बं विना स्थातुमशक्यत्वान्मनसि तव धारणात्सारूप्यम् । त्वत्प्रतिबिम्बभूतं त्वदेकविषयं कामं नान्तरीयकतया धारयतीत्यर्थः । बिम्बत्वेऽनङ्गत्वेन सारूप्यानुपपत्तेः प्रतिबिम्ब एवायमित्यनुमानम् ॥ ४२ ॥

**कः स्मरः कस्त्वमत्रेति सन्देहे शोभयोभयोः ।**
**त्वय्येवार्थितया सेयं धत्ते चित्तेऽथवा युवाम्४३**

क इति ॥ अथवोभयोर्द्वयोर्भवतोस्तुल्यया शोभया कृत्वात्र द्वयोर्मध्ये स्मरः कः, त्वं नलश्च कः, इति सादृश्यात्संदेहे सति अत्रास्मिन्संदेहे सति वा त्वय्येव विषयेऽर्थितया साभिलाषतया सेयं भैमी युवां द्वावपि स्मरनलौ चित्ते धत्ते । सर्वो ह्यतिसदृशयोः काचमण्यादिपदार्थयोः संदेहे एकतरपरित्यागे मणिरेव परित्यक्तः स्यात्, तन्मा भूदिति मण्यर्थित्वेनैव यावन्निर्णयं काचमपि न मुञ्चति, तथा तुल्यशोभत्वेन निश्चेतुमशक्यत्वात्स्मरपरित्यागे भवानेव परित्यक्तः स्यात्तन्मा भूदिति त्वय्येव साभिलाषतया द्वावपि न मुञ्चतीत्यर्थः । त्वदर्थमेव

---

१ मन्मथस्य प्रतिच्छायत्वेन वचमाद् व्यतिरेकः ।

कामं धारयति, न तु कामार्थं त्वामिति भावः। त्वयेति पाठे—त्वया हेतुना याऽर्थिता तयेत्यर्थः ॥४३॥

**त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वदर्शनात्।
शङ्कया पङ्कजाक्षी त्वां दृगंशेन स्पृशत्यसौ ॥**

'पूर्णया–' ( २० । ३१ ) इत्यादेरुत्तरमाह—

त्वयीति ॥ पङ्कजाक्षी असौ त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वस्याप्रत्यावर्तमानत्वस्य दर्शनाद्धेतोः शङ्कया चित्तवत् पुनरप्रत्यावृत्तिभिया त्वां दृगंशेन नेत्रप्रान्तेन स्पृशति पश्यति, न तु पूर्णया द्विलोचन्या। त्वयि न्यस्तस्येति अनुरागातिशयः, पङ्कजाक्षीति च दृशोरतिसौन्दर्यं सूचितम्। सुन्दरस्य वस्तुनः पुनरप्रत्यावृत्तौ महद्भयमिति च सूचितम्। शङ्कयेवेति प्रतीयमानोत्प्रेक्षा ॥ ४४ ॥

**विलोकनात्प्रभृत्यस्या लग्न एवासि चक्षुषोः।
स्वेनालोकय शङ्का चेत्प्रत्ययः परवाचि कः॥**

'नालोकते–' ( २० । ३२ ) इत्यादेरुत्तरमाह—

विलोकनादिति ॥ विलोकनात्प्रभृति अनया त्वं यदा दृष्टोऽसि तदारभ्य त्वमस्याश्चक्षुषोः लग्न एवासि। त्वामेवेयं सदा पश्यति नान्यत्किंचिदपीत्यस्यास्त्वयि महती नेत्रप्रीतिरित्यर्थः। एवं सति मद्वचने इयं मिथ्या वदतीति शङ्काऽविश्वासश्चेत्, तर्हि एतदीयचक्षुषोर्मध्येऽहं वर्ते न वेति निश्चेतुं स्वेनात्मनैवालोकय। एतदीयचक्षुषी पश्य, अहमत्र वर्ते इत्यनुभवेनैव निर्धारयिष्यसीत्यर्थः। स्वेनालोकने हेतुमाह—परवाचि को नाम प्रत्ययो विश्वासः, अपि त्वनुभवयोग्येऽर्थे परवचनमप्रमाणमेवेत्यर्थः। दृश्यकनीनिकायां संमुखं द्रष्टुरवश्यं प्रतिबिम्बो भवत्येवेति छलोक्तिः। अथ च—नेत्रलग्नत्वादेव नेत्रकज्जलवदीक्षितुमसामर्थ्यान्नालोकत इति त्वया सत्यमेवोक्तमित्यर्थः। अथ चेत् शङ्का तर्हि स्वनेत्रगतमेव गोलकादि स्वयमालोकय तदा ज्ञास्यसि, परवाचि कः प्रत्ययः विलोकनात्, 'आरम्भार्थयोगेऽपि' इति पञ्चमी ॥ ४५ ॥

**परीरम्भेऽनयारभ्य कुचकुङ्कुमसङ्क्रमम्।
त्वयि मे हृदयस्यैवं राग इत्युदितैव वाक्॥४६**

'रागं दर्शयते–' ( २० । ३३ ) इत्यादेरुत्तरमाह—

परीति ॥ अनया परीरम्भे गाढालिङ्गने क्रियमाणे तव हृदये कुचकुङ्कुमस्य संक्रममारभ्योपक्रम्य तद्व्याजेन मे हृदयस्य मनसः। अथ च—वक्षसः। त्वय्येवमनेन प्रकारेण रागः। अथ च—रक्तिमा। एतादृशी वागुदितैव। साक्षाद्यद्यपि नोक्तं तथाप्युक्तप्रायमेवेत्यर्थः। गाढालिङ्गनं ह्यनुरागं विना न घटत इति गाढालिङ्गने कुचकुङ्कुमाङ्गरागलेपनव्याजेन मम त्वय्येवमनुरागो वर्तत इत्यन्तर्गतोऽनुरागभर एव प्रकटीकृत इति भावः। 'हृदयस्यैव' इति पाठे त्वय्येवेति योजना। त्वयि मे हृदयस्यैव रागो न तु वाचिकः, सख्यादौ तु वाङ्मात्रेणैव रागो न तु हृदयस्येति वा। 'उदितेव' इति पाठे—उत्प्रेक्षा। अनया गाढालिङ्गनेन तव हृदये लग्नमिदं परिदृश्यमानं कुचकुङ्कुमादिकमेव सर्वमपि रात्रिवृत्तान्तमस्मान्बोधयतीति वृथैव वञ्चयसीति सूचितम् ॥ ४६ ॥

**मनसाऽयं भवन्नामकामसूक्तजपव्रती।
अक्षसूत्रं सखीकण्ठश्चुम्बत्येकावलिच्छलात्॥**

'कां नामन्त्रयते–' ( २०।३४ ) इत्यादेरुत्तरमाह—

मनसेति ॥ अयं सख्या भैम्याः कण्ठः मनसैव भवतो नलेति नाम तदेव कामसूक्तं स्मररहस्यप्रकाशको मन्त्रस्तस्य जपः स एव व्रतमस्यास्तीति तादृशः सन् एकावलिच्छलादेकयष्टिकमुक्ताहारविशेषव्याजादक्षसूत्रं पद्माक्षादिरचितां जपमालां चुम्बति। भर्तृनामग्रहणनिषेधात् 'साहस्रो मनसो जपः' इति मानसजपे फलविशेषश्रवणाच्च मुक्ताहारजपमालिकया त्वन्नामैव मनसा जपतीति भावः। नलेति स्मरणमात्रेणैव कामोद्रेकान्नाम्नः कामसूक्तत्वम् ॥ ४७ ॥

**अध्यासिते वयस्याया भवता महता हृदि।
स्तनावन्तरसम्मान्तौ निष्क्रान्तौ ब्रूमहे बहिः॥**

'अस्याः पीनस्तन–' ( २० ।३५ ) इत्यादेरुत्तरमाह—

अध्यासित इति ॥ महता नितरां गौरवयुक्तेन। अथ च—महापरिमाणेन भवता त्वया वयस्याया भैम्या हृदि अध्यासिते समावृते सति अन्तर्हृदयमध्येऽसंमान्तौ स्थातुमशक्तौ स्तनौ हृदयाद्बहिर्देशे निष्क्रान्तौ इति वयं ब्रूमहे संभावयामः। यदा प्रभृति त्वं चित्ते लग्नः, तदा-

---

१ अत्र लुप्तोपमा। २ 'प्रत्ययः परवाचि कः' इत्यनेन प्रागुक्तार्थसमर्थनादर्थान्तरन्यासः।

१ अत्रानुप्रासः। २ अत्रानुप्रासः, छलादित्यपह्नुतिश्च।

भैमी निशीव रात्राविव नोऽस्माकं 'णिशि चुम्बने' इति पठितस्य धातोरर्थमत्र दिने नाचराति । रात्रौ यथा निःशङ्कं मां चुम्बति तथा भवतीभ्यो लज्जया दिने नेति दिनस्यैवापराधः, तस्मात्तस्यापराधं क्षमस्वेति प्रार्थ्यत इत्यर्थः । 'व्यवस्यताम्' इति पाठे आत्मनेपदं चिन्त्यम् ॥ ५४ ॥

**दिनेनास्या मुखस्येन्दुः सखा यदि तिरस्कृतः।**
**तत्कृताः शतपत्राणां तन्मित्राणामपि श्रियः॥५५॥**

दिनेनेति ॥ दिनेनास्या मुखस्य सखा इन्दुर्यदि तिरस्कृतः निष्प्रभीकृत्य पराभूतः । एनमपराधं चेन्मन्येत तर्हि तस्य भैमीमुखस्य सादृश्यान्मित्रभूतानां बहूनां शतपत्राणां कमलानां श्रियो विकासलक्ष्म्यः, अथ च—संपदोऽपि, कृताः । अनेकापकारकारिण्येकस्मिन्पराभूते यदि बहूनां क्षेमं भवति तदा महानुपकार एवेति । त्वन्मुखमित्रभूतानां कमलानां प्रकाशकरत्वाद्दिनेनोपकार एव कृतः, न त्वपकारः।तस्मादेतस्यापराधो नास्तीति मन्मुखचुम्बनं दिनेऽपि कुर्वीति भावः । 'एकस्मिन्धर्षिते पापे बहूनामपकारिणि । बहूनां भवति क्षेमं तस्य पुण्यप्रदो वधः ॥' इत्याद्युक्तेः । 'कृत्ता' इति पाठे—दिनस्य मित्रभूतानां तत्संबन्धात्सलक्ष्मीकाणां कमलानाम्, अथ च—शतसङ्ख्याकानि बहूनि पत्राणि वाहनानि येषां मित्राणां तेषां श्रियोऽपि तेन चन्द्रेण कृत्ताश्छिन्नाः रात्रौ संकोचकरणात् । दिनेन तु त्वन्मुखमित्रं चन्द्रो धर्षितः, चन्द्रेण तु दिनमित्राणि बहूनि कमलानि धर्षितानीति चन्द्रेण स्वयं वैरनिर्यातनं कृतमेवेति दिनस्यापराधोऽनया न गणनीय इत्यर्थः । त्वन्मुखामित्राणां कमलानां श्रियोऽपि छिन्नाः, अपि तु—न । किंत्वभिवृद्धिमेव प्रापिताः । तस्मात्पूर्ववदेवापराधो नास्तीति काकुर्वा । त्वन्मुखमित्रं चन्द्रो यदि तिरस्कृतः, तर्हि दिनमित्राणां कमलानामपि श्रियस्तेन त्वन्मुखेन छिन्नाः स्वकान्त्या तेषां निष्प्रभीकरणात् । वैरं निर्यातितमेवेति दिनस्यापराधो न गणनीय इति भाव इति वा ॥ ५५ ॥

**लज्जितानि जितान्येव मयि क्रीडितयाऽनया।**
**प्रत्यावृत्तानि तत्तानि पृच्छ सम्प्रति कं प्रति॥५६॥**

लज्जितानीति ॥ हे कले, अनया मयि विषये तावल्लज्जितानि लज्जाविशेषा जितान्येव । यतो रात्रौ क्रीडितया कृतसुरतक्रीडया मयि प्रदर्शितबहुविधसुरतचातुर्यया तत् तस्मात्संप्रति तानि लज्जितानि यत्पुनः प्रत्यावृत्तानि तत्कं प्रत्युद्दिश्येति त्वमेनां पृच्छ । मयाऽस्याः सुरतचातुर्यधाष्टर्यं बहु बहुवारं दृष्टमेव त्वामेव प्रतीयं लज्जत इति जानीहीति भावः ॥ ५६ ॥

इदानीं श्लोकचतुष्टयेन स्वापराधमाशङ्क्य परिहरति—

**निशि दष्टाधरायापि सैषा मह्यं न रुष्यतु।**
**क्व फलं दशते बिम्बीलता कीराय कुप्यति॥५७॥**

निशीति ॥ सैषा निशि दष्टोऽधरो येन तस्मा अपि मह्यं न रुष्यतु कुप्यतु। यस्मात् बिम्बीफलं पक्वं बिम्ब्याः फलं दशते आस्वादितवते कीराय क्व कुप्यति, अपि तु न कुतोऽपि । किंतु स्वसंबन्धेन शोभाहेतवे तस्मै स्निह्यत्येवेत्यर्थः।दन्तक्षते कृतेऽपि व्रणसंबन्धवशान्नितरामधरशोभाकारित्वेन मह्यं प्रसाद एव युक्तः न तु कोप इति भावः। 'रुष्याति' इति पाठे—सिद्धवत्कारेणोक्तिः। । मह्यं कीराय च, 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः १।४। ३७' इति संप्रदानत्वे चतुर्थी ॥ ५७ ॥

**सृणीपदसुचिह्ना श्रीश्चोरिता कुम्भिकुम्भयोः।**
**पश्यैतस्याः कुचाभ्यां तन्नृपस्तौ पीडयानि न॥५८॥**

सृणीति ॥ एतस्याः सृणीपदमङ्कुशाघातक्षतमेव शोभनं चिह्नं यस्याः, अथ च—अङ्कुशाकारनखपदविशेष एव शोभनं चिह्नं यस्याः सा कुम्भिनः करिणः कुम्भयोः श्रीः शोभा संपच्च यस्माच्चोरिता । पश्य एतत्कुचयोरङ्कुशाकारं नखं नास्ति तर्हि त्वमेव विलोकय । तत्तस्मान्नृपो दण्ड्यदण्डकरणाधिकारी अहं तौ स्तेयकारिणावेतत्कुचौ न पीडयानि, अपि तु—पीडयाम्येव । 'पीडयामि' इति पाठान्तरम् । तयोः पीडनं दण्डरूपं नखक्षतादिरूपं चोचितमित्यर्थः । राज्ञा हि चोरस्य दण्डः क्रियते,ममत्वपराधो नास्तीति भावः। 'अङ्कुशोऽस्त्री सृणिर्द्वयोः' इत्यमरः । सृणी, 'कृदिकारादक्तिनः' ङीष् ॥ ५८ ॥

---

१ निशीवेत्युपमा । २ अत्र परस्परसमानस्पर्धित्वमुक्तम् । प्रत्युतापिना दिनस्य श्रियस्तिरस्कृता इति किं वाच्यं, किंतु तन्मित्राणामपीत्येवं प्रत्यायितत्वादिन्दारेविषयः सूचितः । अत एवास्या मुखस्य सखेति सम्भावनं व्यज्यते ।

१ अत्र जितानीति प्रतीति च यमकम् ।२ अत्र केस्यादौ दृष्टान्तः ।

अधरामृतपानेन ममास्यमपराध्यतु ।
मूर्ध्ना किमपराद्धं यः पादौ नाप्नोति चुम्बितुम् ॥ ५९ ॥

अधरेति ॥ ममास्यं मुखमेतस्या अधरामृतस्य पानेन कृत्वाऽपराध्यतु । अयं मुखस्यापराधोऽङ्गीकृत इत्यर्थः । मम मूर्ध्ना पुनः किमपराद्धम्, यो मस्तकः प्रणामहेतुनास्याः पादौ चुम्बितुं स्प्रष्टुमपि नाप्नोति नमस्कर्तुमपि न लभते । कोऽपराधोऽनेन कृतः, पृच्छेत्यर्थः ॥५९॥

अपराद्धं भवद्वाणीश्राविणा पृच्छ किम्मया ।
वीणाऽद्य परुषं यन्मां कलकण्ठी च निष्ठुरम् ॥

अपराद्धमिति ॥ भवद्वाणीश्राविणा त्वद्वचनाकर्णनशीलेन मया वीणायाः कोकिलायाश्च तव वा किमपराद्धम्, को वाऽपराधः कृत इति कले, त्वं भैमीमनेन किमपराद्धमिति पृच्छ । यद्यस्माद्वीणा साम्प्रतं परुषमाह कलकण्ठी कोकिला च मां प्रति निष्ठुरं ब्रूते । तस्मादपराधः सम्भाव्यते । येन हि यस्याः कश्चिदपराधः क्रियते तं प्रति सा तदीयो वा तत्सदृशः कश्चित्परुषं भाषते । अथ च—वीणाकोकिलयोः स्वरे यस्मान्माधुर्यं नास्ति तस्मात्पश्चादागत्य निभृतं मयाऽसमक्षं भाषमाणाया भवत्या भारती श्रुता, न त्वन्येन केनाप्याशयेनेति सोऽप्यपराधो न भवतीत्यर्थः । वीणाकोकिलालापापेक्षया भैमीवाणी मधुरतरा, रात्रौ एतद्वाणीमाधुर्यं मया बहुनुभूतम् । इदानीं तु त्वां दृष्ट्वा मां प्रति तूष्णीमास्ते इति । परुषं निष्ठुरं च क्रियाविशेषणम् । परुषं निःस्नेहम्, निष्ठुरं सतिरस्कारम् । कलकण्ठी, 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीष् ६०

सेयमालिजने स्वस्य त्वयि विश्वस्य भाषताम् ।
ममताऽनुमताऽस्मासु पुनः प्रस्मर्यते कुतः ॥ ६१ ॥

सेति ॥ हे कले, सेयं स्वस्यालिजने त्वयि विषये विश्वस्य विश्वासमधिगम्य भाषतां कथयतु । अस्मासु विषयेऽनुमताङ्गीकृता ममता स्वीयतामतिः पुनः कुतः प्रस्मर्यते विस्मर्यते इति त्वं पृच्छ, इयं च त्वयि विश्वस्य कथयत्वित्यर्थः । रात्रौ रतानुकूल्यमाचरितमनया, इदानीं तु तव समक्षं प्रातिकूल्यं किमित्याचरतीति भावः । इत्युपालम्भनभङ्गिः । प्रशब्दस्य गतार्थतया विस्मरणार्थता ॥ ६१ ॥

१ ममतेति यमकम् ।

अथोपवदने भैम्याः स्वकर्णोपनयच्छलात् ।
संनिधाप्य श्रुतौ तस्या निजास्यं सा जगाद ताम् ॥

अथेति ॥ अथैवं नलोक्त्यनन्तरं सा कला भैम्या उपवदने वदनसमीपे स्वकर्णस्य उपनयच्छलात्समीपनयनव्याजात् तस्या भैम्याः श्रुतौ कर्णे निजास्यं संनिधाप्य संनिहितं कृत्वा तां जगाद । अवदन्त्या अपि भैम्या वचनं शृण्वतीव स्वकर्णं भैमीमुखसमीपे कृत्वाऽनन्तरं च तद्वचःप्रतिवचनमेकान्ते वितरन्तीव भैमीकर्णसमीपे निजमुखं कृत्वा भैमीं जगादेत्यर्थः । कथकानुकथकप्रकृतिः । उपवदने, अव्ययीभावे 'तृतीयासप्तम्योर्बहुलम् २।४।८४' इति सप्तम्या अम्भावाभावः । संनिधाप्य, हेतुमण्ण्यन्ताल्ल्यप् ॥ ६२ ॥

अहो मयि रहोवृत्तं धूर्ते किमपि नाभ्यधाः ।
आस्स्व सभ्यमिमं तत्ते भूपमेवाभिधापये ॥ ६३ ॥

अहो इति ॥ हे धूर्ते वचनचतुरे, त्वं मयि विषये रहोवृत्तमेकान्ते निष्पन्नमालिङ्गनादि किमप्येकमप्यल्पमपि च नाभ्यधाः । अहो आश्चर्यम् । एतादृशी धूर्ता कापि न दृष्टेत्यर्थः । त्वम् आस्स्व तिष्ठ । यद्यपि त्वं नाचकथः, तथापि ते तव तद्रहोवृत्तं सभ्यं मध्यस्थं सत्यवादिनमिमं भूपं नलमेवाभिधापये वादयामि । अहमपि त्वया यतो वञ्चिता तथा किंचिद्वञ्चयिष्यामि यथा नल एव स्वयं त्वदीयसुरतप्रागल्भ्यं प्रकटयति मां वञ्चयित्वा कथंकारं स्थास्यति क्व यास्यति क्षणमात्रं स्थिरा भवेति सरोषोक्तिः । 'सत्यम्' इति पाठे—अभिधापये सत्यं जानीहीत्यर्थः । 'आश्वसभ्यम्' इति पाठे—इमं भूपमेव तवेदमसभ्यम् सभायां जनसमक्षं वक्तुमनर्हं तद्रहोवृत्तमाश्विदानीमेवाभिधापये तिष्ठ तिष्ठेत्यर्थः । भूपम्, 'अकथितं च १ । ४ । ५१' इति कर्मत्वं ब्रू इत्यर्थग्रहणात् । अभिधापये, अभिपूर्वाद्धापणार्थाद्धातेर्हेतुमण्णिचि 'णिचश्च १ । ३ । ७४' इति तङ् ॥ ६३ ॥

स्मरशास्त्रमधीयाना शिक्षिताऽसि मयैव यम् ।
अगोपिसोऽपि कृत्वा किं दाम्पत्यव्यत्ययस्त्वया ॥

स्मरेति ॥ स्मरशास्त्रं वात्स्यायनादिप्रणीतमधीयाना पठन्ती त्वं तत्र प्रतिपादितं यं दाम्पत्यव्यत्ययं

१ छलादित्यपह्नुतिः ।

वैपरीतसंभोगं मयैव शिक्षिताऽसि स दाम्पत्यव्यत्यय-स्त्वया कृत्वाऽपि निष्पाद्यापि मम पुरस्तात्किमर्थ-मगोपि गोपितः कथयेति प्रश्नः । नितरां धार्ष्ट्यमव-लम्ब्य मया शिक्षितं विपरीतसुरतं कृत्वापि ममैव पुरस्तादकृतमेव कथयसीति नितरां वञ्चनचतुरासीति भावः । स्मरशास्त्रं, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः । दाम्पत्यम्, दम्पत्योर्भावः सम्भोग इति यावत् । 'पत्यन्तपुरोहितादिभ्यो यक् ५।१।१२८' इति यक् ॥ ६४ ॥

**मौनिन्यामेव सा तस्यां तदुक्तीरिव शृण्वती ।**
**वादं वादम्मुहुश्चक्रे हुंहुमित्यन्तराऽन्तरा ॥६५॥**

मौनिन्यामिति ॥ सा कला तस्यां भैम्यां मौनि-न्यामवदन्त्यामेव सत्यां तदुक्तीर्भैमीवचनानि शृण्वतीव भैम्यामवदन्त्यामपि भैमी मां प्रति किमपि वदति अहं शृणोमीति नलं प्रति प्रकटयन्ती वादं वादं भैमी-वचनप्रतिवचनव्याजेन स्वयमेव किंचिदुक्त्वोक्त्वा अन्त-रान्तरा मध्ये मध्ये हुंहुमिति शब्दं चक्रे ।'वदत्यचिह्नि-' (२०।६८) इत्यादेर्वक्ष्यमाणस्य सत्यत्वबुद्धिजननार्थं पूर्वरङ्गमलीकमेव श्रवणोत्तरदानरीतिप्रकटनमकरोदिति भावः । वादं वादम्, 'आभीक्ष्ण्ये णमुल्च ३।४।२२' इत्याभीक्ष्ण्ये णमुल्, ' सर्वस्य द्वे ८।१।१' इत्यनेना-भीक्ष्ण्य एव द्विर्वचनम् ॥ ६५ ॥

**अथासावभिसृत्यास्या रतिप्रागल्भ्यशंसिनी ।**
**सख्या लीलाम्बुजाघातमनुभूयालपन्नृपम् ६६**

अथेति ॥ अथ श्रवणप्रकारप्रकटनानन्तरमसौ कला नृपमभिसृत्य भैम्याः सकाशान्नलं प्रति गत्वा वक्ष्यमाण-मवोचत् । किंभूता—अस्या भैम्या रतिप्रागल्भ्यं शंसति वर्णयति तच्छीला । विपरीतसुरतमपि करोषि सांप्रतं नितरां धृष्टा जातासीति भैमीकर्णे प्रेमभाषणं कुर्वाणा । अत एव—किं कृत्वा—सख्या भैम्या लीलाम्बुजेनाघात-मनुभूय प्राप्य । रतिप्रागल्भ्यं नलेन शंसयति तच्छीलेति वा शंसिनी । केवलाद्धेतुमण्ण्यन्ताद्वा शंसेस्ताच्छील्ये णिनिः ॥ ६६ ॥

**दृष्टं दृष्टं महाराज त्वदर्थाभ्यर्थनक्रुधा ।**
**यत्ताडयति मामेवं यद्वा तर्जयति भ्रुवा ॥ ६७॥**

दृष्टमिति ॥ हे महाराज सार्वभौम, इयं नलाय संभोगं वितरेति त्वदर्थं त्वत्संभोगसंबन्धि मया क्रियमा-णमभ्यर्थनं तस्माज्जातया क्रुधा कोपेन हेतुना मामेवं लीलाकमलाघातप्रकारेण यत्ताडयति, यद्वा यच्च भ्रुवा कटाक्षेण तर्जयति भीषयते तत्त्वया दृष्टं दृष्टं त्वं पश्य पश्येत्यर्थः । त्वयि परपुरुषबुद्धिं कृत्वा तत्र मां कथं प्रव-र्तयसीति मां ताडयति, भ्रूक्षेपेण च इतः परं मा वादीरिति तर्जयति च, तत्त्वं पश्येति भावः । दृष्टं दृष्टं, संभ्रमे द्विरुक्तिः ॥ ६७ ॥

**वदत्यचिह्नि चिह्नेन त्वया केनैष नैषधः ।**
**शङ्के शक्रः स्वयं कृत्वा मायामायातवानियम् ॥**

वदतीति ॥ हे राजन्, इयमिति वदति । इति किम्—हे कले, यदर्थमर्थनां त्वं करोषि एष नैषधः त्वया केन चिह्नेनाचिह्नि निर्धारितः । तर्हि कः—अयं शक्रः स्वयंवरणकाल इव मायां नलरूपां कृत्वा स्वयमायात-वानित्यहं शङ्के । त्वदर्थमर्थनां कुर्वत्या मम कर्णे इति वदति। चिह्नवान्कृत इति, णिचि मतुब्लुक् ॥ ६८ ॥

**स्वर्णदीस्वर्णपद्मिन्याः पद्मदानं निदानताम् ।**
**नयतीयं त्वदिन्द्रत्वे दिवश्चागमनं च ते ॥६९॥**

भैमी त्वदिन्द्रत्व इदं प्रमाणमाह—

स्वर्णदीति ॥ इयं स्वर्णद्यां मन्दाकिन्यां स्वर्णप-द्मिन्याः पद्मस्यात्मने दानं, दिवः स्वर्गात्ते भूमिं प्रति आगमनं च, तवेन्द्रत्वे निदानतां प्रथमकारणतां नयति । नहि मनुष्यस्य स्वर्णदीस्वर्णपद्मिनीसुवर्णकमलानयने स्वर्गादागमने च सामर्थ्यं दृष्टम् । तस्मान्नलरूपं धृत्वा पूर्ववदिन्द्र एवायमागत इति एतदर्थं प्रत्यर्थना त्वया कर्तुमयुक्तेतीयं मत्कर्णे कथयतीति भावः । स्वर्णदीति, 'पूर्वपदात्सञ्ज्ञायामगः ८।४।३' इति णत्वम् ॥ ६९॥

**भाषते नैषधच्छायामायाऽमाथि मया हरेः ।**
**आह चाहमहल्यायां तस्याकर्णिततदुर्नया॥७०॥**

भाषत इति ॥ हरेरिन्द्रस्य नैषधस्य छायायाः कान्ते-र्माया कापट्यं मया स्वयंवरकालेऽमाथि ज्ञातेतीयं मां भाषते । स्वयंवरकाले तव परस्त्रीत्वाभावान्नलरूपं धृतम्, इदानीं तु परस्त्रीत्वभियैवं न करिष्यतीति मया प्रत्युक्ता सतीयं भैमी अहल्यायां गौतमपत्न्यां तस्येन्द्रस्याकर्णितो

१ अत्रानुप्रासः । २ अत्रानुप्रासः । शृण्वतीवेत्युत्प्रेक्षा । १ मायेति यमकम् । शङ्क इत्युत्प्रेक्षा । २ अत्रानुप्रासः ।

स्मरेति ॥ हे भैमि, आजि सङ्ग्रामं जित्वा त्वामा साम्मुख्येनेतः प्राप्तोऽहं नमस्कारार्थं क्षालनार्थं वा मत्पदधाविनि मच्चरणस्पर्शिनि तव करेऽङ्गुलीयुगयोगेन मदीयचरणाङ्गुलीद्वयसंवन्धेन दर्शनार्थं समागते घने भूयसि जने मध्ये यदाश्लिक्षमालिङ्गितवान् तत्स्मर। जनसमक्षं साक्षादालिङ्गनस्यानौचित्यात्प्रवासोत्कण्ठाभरतरलतया चरणाङ्गुलिद्वयेन त्वत्पाणिपीडनवशात्त्वदालिङ्गनवाञ्छां त्वां प्रति द्योतितवांस्तत्स्मरेत्यर्थः। आश्लिक्षम् 'श्लिष आलिङ्गने'इति लुङुत्तमैकवचने च्लेः क्सः। 'विभाषा साकाङ्क्षे ३।२।११४' इति वैकल्पिकत्वात् लृडभावः ॥ ७६ ॥

**वेत्थ मानेऽपि मत्त्यागदूना स्वं मां च यन्मिथः।**
**मद्दृष्टाऽऽलिख्यपश्यन्ती व्यवाधा रेखयाऽन्तरा ॥७७॥**

वेत्थेति ॥ हे भैमि, माने प्रीतिकलहे सत्यपि रोषात्त्वया कृतेन मत्कर्मकत्यागेन दूना खिन्ना क्षणमात्रमपि मद्विरहं सोढुमशक्ता सती मिथ एकान्ते स्त्रीरूपं स्वं, पुंरूपं मां चालेख्ये आलिख्य पश्यन्ती संयुक्तपरस्परदर्शनसुखमनुभवन्ती त्वं मया दृष्टा सती यच्चित्रलिखितयोरावयोरन्तरा मध्ये तूलिकादिलिखितया रेखया व्यवाधा व्यवधानं कृतवत्यसि तत् वेत्थ जानासि। तत्स्मरेत्यर्थः। व्यवाधाः, व्यवपूर्वाद्धाञो लुङ्मध्यमः ॥ ७७ ॥

**प्रस्मृतं न त्वया तावद्यन्मोहनविमोहितः।**
**अतृप्तोऽधरपानेषु रसनामपिवं तव ॥ ७८ ॥**

प्रस्मृतमिति ॥ हे भैमि, मोहनेन सुरतेन विशेषेण मोहितः सुरतपरवशः, अथ च—मोहनकारिणा कामबाणेन मोहितो निरस्तविवेकोऽहं तवाधरपानेषु अतृप्तः संस्तव रसनां जिह्वामपि यदपिवं तत्तावत्तत्कालेन त्वया न प्रस्मृतम्। जिह्वाग्रलेहनमपि कामशास्त्रोक्तम्। प्रशब्दः प्रगतार्थः। 'अधरपानानाम्' इति पाठे तृप्त्यर्थानां करणे षष्ठी वा ॥ ७८ ॥

**त्वत्कुचार्द्रनखाङ्कस्य मुद्रामालिङ्गनोत्थिताम्।**
**स्मरेः स्वहृदि यत् स्मेरसखीः शिल्पं तवाब्रवम्॥७९॥**

त्वदिति ॥ अहं स्वहृदये तवालिङ्गनोत्थितां तव कुचे तात्कालिकत्वादार्द्रस्याशुष्करुधिरस्य मया कृतस्य नखाङ्कस्य मुद्रां नखक्षतदर्शनादेव स्मेरसखीः हास्यपरास्तव सखीः प्रति तव शिल्पं भवत्सख्या भैम्येदं नखक्षतं कृतं पश्यतेति त्वन्निर्माणं यदब्रवं तत्स्मरेश्चिन्तयेः। 'स्मेरः' इति पाठे—स्मेरः सानन्दमित्यर्थः। सखीः, मुख्यं कर्म। शिल्पमिति, 'अकथितं च १।४।५१' इति कर्मत्वम् ॥ ७९ ॥

**त्वयाऽन्याः क्रीडयन्मध्येमधुगोष्ठि रुपेक्षितः।**
**वेत्सि तासां पुरो मूर्ध्ना त्वत्पादे यत्किलास्खलम् ॥८०॥**

त्वयेति ॥ मधुगोष्ठ्या मद्यशालाया मध्ये मद्यसहपानावसरे अन्याः सपत्नीः क्रीडयन् त्वया रुषा रोपरूपितया दृशा ईक्षितोऽहं तासां सपत्नीनां पुरः समक्षमेव किल मद्यमत्तत्वात्स्खलनव्याजेन त्वत्पादे मूर्ध्ना यदस्खलं स्खलित्वा यदपतं तद्वेत्सि जानासि। स्खलनव्याजेन प्रणामेन त्वां प्रसादितवानस्मि तत्स्मरेति भावः। मध्येमधुगोष्ठि, 'पारेमध्ये षष्ठ्या वा २।१।१८' इति समासः ॥ ८० ॥

**वेत्थ मय्यागते प्रोष्य यत्त्वां पश्यति हार्दिनि।**
**अचुम्बीरालिमालिङ्ग्य तस्यां केलिमुदा किल ॥८१॥**

वेत्थेति ॥ मयि प्रोष्य विजययात्रां कृत्वा आगते अत एव हार्दिनि प्रेमभरतरले त्वां पश्यति सति आलिं स्वसखीमालिङ्ग्य अन्याः प्रति तस्यां केलिमुदा क्रीडाहर्षेण किल विलासप्रकटनव्याजेन यत्तामचुम्बीः तद्वेत्थ स्मरसि। कामशास्त्राभ्यासकौशलवशात्सख्यालिङ्गनचुम्बनव्याजेन मां प्रत्यालिङ्गनचुम्बनद्वारा स्वप्रेमभरं यत्सूचितवत्यसि तत्स्मरेति भावः। हे हार्दिनीति भैमीसंबुद्धिर्वा। प्रोष्य, प्रपूर्वाद्वसेः क्त्वो ल्यपि यजादित्वात्संप्रसारणम्। हार्दिनि युवादित्वादणि 'हृदयस्य हृल्लेखयदण्लासेषु ६।३।५' इति हृद्भावे च 'अत इनिठनौ ६।२।५०' ॥ ८१ ॥

**जागर्ति तत्र संस्कारः स्वमुखाद्भवदानने।**
**निक्षिप्यायाचिषं यत्तान्यायात्ताम्बूलफालिकाः ॥८२॥**

जागर्तीति ॥ अहं ताम्बूलस्य चर्वितपूगफलनागवल्लीदलस्य फालिकाः शकलानि स्वमुखात्स्वकाशाद्भवत्या आनने निक्षिप्य निधाय 'यदीयो निक्षेपः स तस्मै दातव्योऽन्यथा दण्ड्यः'इति न्यायाच्छास्त्रोक्तयुक्तेर्यत्तास्ताम्बूलफालिकाः अहमयाचिषं पुनर्मह्यं देहीति याचि-

---

१ भन्त्रानुप्रासः।

१ भन्त्राप्यनुप्रासः।

तवान्, तत्र विषये स्मरणभूतो भावनाख्यः संस्कारो जागर्ति स्फुरद्रूपो वर्तते तत्स्मरसि किमित्यर्थ इति प्रश्नः ॥ ८२ ॥

**चित्ते तदस्ति कच्चित्ते नखजं यत्क्रुधा क्षतम् ।**
**प्राग्भावाधिगमागःस्थे त्वया शम्बाकृतं क्षतम् ॥**

चित्त इति ॥ मयि प्राक् त्वय्यप्राप्तसुरतान्तसुखायामेव सत्यां यो भावाधिगमः सुरतान्तसुखप्राप्तिस्तद्रूपे आगस्यपराधे तिष्ठति एवंभूते सति, मयि विषये वा समरतस्यैव सुखहेतुत्वाद्विपरतस्यासुखहेतुत्वात्क्रुधा मध्य एव असुखजन्याद्रोषादेतोर्नखजं क्षतं त्वया शम्बाकृतं प्रथमं फालकृष्टे क्षेत्रे पुनरपि सीराक्दारणवत्प्रथमकृतनखक्षतमध्य एव पुनरपि गाढतरं नखक्षतं यदारोपितं तत्ते चित्तेऽस्ति कच्चित् । तत्स्मरेत्यर्थः । 'शम्बाकृतं द्वितीयं स्यात्' इति निघण्टुः । शम्बाकृतं, 'कृञो द्वितीयशम्बबीजात् कृषौ ५।४।५८' इति डाच् । लक्षणया प्रयोगः ॥ ८३ ॥

**स्वदिग्विनिमयेनैव निशि पार्श्वविवर्तिनोः ।**
**स्वप्नेष्वप्यस्तवैमुख्ये सख्ये सौख्यं स्मरावयोः॥**

स्वेति॥स्वदिशोः स्वीयस्वीयदिशोः विनिमयेनैव परिवर्तनेनैव निशि पार्श्वविवर्तिनोर्वामदक्षिणकुक्षिपरिवर्तनशीलयोः न तु यथावस्थितयोः संमुखयोरेवैवंभूतयोरावयोस्तव मम च स्वप्नेष्वपि निद्रास्वपि मध्ये अस्तं त्यक्तं वैमुख्यं पराङ्मुखत्वं यत्र तादृशे सख्ये मैत्रे यत्सौख्यं सुखं सुखित्वं वा तत्स्मर । संमुखयोर्हि यथावस्थितयोरेव पार्श्वपरिवर्तने द्वयोरपि पृष्ठभागघटनात्पराङ्मुखत्वमेव स्यादिति स्वस्वदिग्विनिमयपूर्वकमेकदैव पार्श्वपरिवर्तने वैमुख्याभावान्निद्रासमयेऽपि सांमुख्येन यदावयोर्मैत्रीसौख्यं तत्स्मरेत्यर्थः । स्वस्वदिग्विनिमयेन पार्श्वपरिवर्तने चान्योन्यं सांमुख्यमेव भवतीति सर्वसाक्षिकम् । सौख्यम्, स्वार्थे भावे वा ष्यञ् ॥ ८४ ॥

**क्षणं प्राप्य सदस्येव नृणां विमनितेक्षणम् ।**
**दर्शिताधरमद्दंशा ध्याय यन्मामतर्जयः ॥८५॥**

क्षणमिति ॥ सदस्येव सभायामेव वर्तमानाऽपि त्वं सभास्थानां नृणां विमनितानि कार्यान्तरदर्शनपराणि कृतानीक्षणानि यत्र येन वा तादृशं क्षणमवसरं नृत्तसुरसवं वा प्राप्य मध्यमाङ्गुल्यादिना दर्शितोऽधरे वर्तमानो मद्दंशो मत्कृतो दन्तव्रणो ययैवंभूता सती तर्जन्यादिना मां यदतर्जयः, तद्ध्याय स्मर । विमनितेति, 'तत्करोति तदाचष्टे' इति णिचि 'णाविष्ठवत्' इति टिलोपः ॥ ८५ ॥

**तथाऽवलोक्य लीलाऽब्जनालभ्रमणविभ्रमात् ।**
**करौ योजयताऽधीहि यन्मयाऽसि प्रसादिता ॥**

तथेति ॥ तथा अधरदन्तक्षतदर्शनपूर्वं तर्जनीतर्जनाप्रकारमवलोक्य लीलाब्जनालस्य कराभ्यां भ्रमणरूपाद्विभ्रमात्तद्व्याजात्प्रणामसादाञ्जलिबन्धनरूपेण करौ योजयता संयुक्तौ कुर्वता मया कोपत्याजनपूर्वं यत्प्रसादिताऽसि तदधीहि स्मरेत्यर्थः । 'इक् स्मरणे' ॥ ८६ ॥

**ताम्बूलदानमन्यस्तकरजं करपङ्कजे ।**
**मम न स्मरसि प्रायस्तव नैव स्मरामि तत् ८७**

ताम्बूलेति ॥ त्वं त्वदीयकरपङ्कजे मम ताम्बूलदानमन्यस्तकरजमक्षिप्तनखक्षतं प्रायो बाहुल्येन न स्मरसि । अहमपि मदीयपाणिपद्मे त्वत्कृतं ( तृषाच्छेदकं यथा ? ) ताम्बूलदानमक्षिप्तनखक्षतं बाहुल्येन नैव स्मरामि । किंतु—अन्योन्यवीटिकादानक्षणे प्रेमभरात्पाणिपद्मगर्भारोपितनखक्षतमेव सदा ताम्बूलदानमावयोः, तत्स्मरेति भावः ॥ ८७ ॥

**तदधीहि मृषोद्यं मां हित्वा यत्त्वं गता सखीः ।**
**तत्रापि मे गतस्याग्रे लीलयैवाच्छिनस्तृणम् ८८**

तदिति ॥ कमप्यपराधं कृत्वाऽप्यहमेतन्नाकार्षमित्यादिमृषोद्यमलीकभाषिणं मां कोपेन हित्वा सखीः प्रति गता त्वं तत्रापि सखीसमीपे भवदीयपृष्ठदेशानुवर्तित्वेन गतस्य मेऽग्रे लीलयैव स्वभावेनैव यत्तृणमच्छिनश्छिच्छेदिथ, तदधीहि स्मर इति यावत् । अद्य प्रभृत्यलीकभाषिणस्तवाहं न काऽपि, त्वं मम न कोऽपीति मैत्रीविच्छेदसूचकं तृणच्छेदं यथा बालकाः कुर्वन्ति, तद्वत्त्वयाऽपि कृतमिति स्मरेत्यर्थः । मृषोद्यम्, 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ३ । १ । ११४ ।' इति निपातः ॥ ८८ ॥

**स्मरसि प्रेयसि प्रायो यद्द्वितीयरतासहा ।**
**शुचिरात्रीत्युपालब्धा त्वं मयापिकनादिनी ८९**

१ अत्रानुप्रासो यमकं च । २ अत्राप्यनुप्रासः ।

१ अत्राप्यनुप्रासः शब्दालङ्कारः ।

स्मरसीति॥ हे प्रेयसि, बालत्वात्स्त्रीकुमार्यविशेषाच्च द्वितीयरताभिलाषिणो मम द्वितीयस्य रतस्याशहा, तथा—पिकवन्नदति तच्छीला कोकिलतुल्यकूजना त्वं मया शुचिरात्री ग्रीष्मर्तुसंबन्धिनी रात्रीत्युपालब्धा सोपालम्भमामन्त्रितासि तदभिप्रायः स्मरसि कथयेत्यर्थः। शुचिरात्रिरपि स्वल्पप्रमाणत्वादेकवारसुरतनिर्माणेनैव जातप्रभातत्वाद्द्वितीयसुरतनिर्माणाशहा वसन्तनैकट्याच्च पिकनादोऽस्यां वर्तत इति। तत्रापि प्रभाते कोकिलालापो भवतीत्यर्थः। यद्वा—वसन्तस्यातीतत्वात्कोकिलानामभावात्पिकव्यतिरिक्ताः पक्षिणोऽपिकाः, तन्नादयुक्ता[1] ॥ ८९ ॥

**भुञ्जानस्य नवं निम्बं परिवेविषती मधा।**
**सपत्नीष्वपि मे रागं सम्भाव्य स्वरुषः स्मरेः॥**

भुञ्जानस्येति॥ मधौ वसन्ते नवं नूतनसमागतपत्रपुष्पादिकं निम्बं भुञ्जानस्य मे सपत्नीष्वपि रागं प्रीतिं सम्भाव्यानुमाय कोपवशात् पुनःपुनः निम्बमेव मम भोजनार्थं परिवेविषती पात्रे परितः क्षिपन्ती त्वं स्वरुषः स्वीयान्कोपान् स्वकोपस्य वा स्मरेः। मधुरतरशर्करादिपरित्यागेनातिकटुरसेऽपि चेदस्यैवं रुचिस्तर्हि मदीयापेक्षयाऽतिहीनासु मत्सपत्नीष्वप्यस्य रुचिः स्यादिति सम्भाव्य बहुतरं निम्बमेव भुङ्क्ष्वेति वारं वारमतिकटुनिम्बादिदानेन यत्कोपान्मां प्रति व्यञ्जितवत्यसि तत्स्मरेति भावः। वसन्ते च जना निम्बं भुञ्जते। परिवेविषती, परिवेषणार्थात्परिपूर्वाद्विषेः शता।'श्लौ ६।१।१०।' इति द्विर्वचनम्। स्वरुषः 'अधीगर्थदयेशां कर्मणि २।३।५२।' इति षष्ठी, कर्मत्वविवक्षया द्वितीया वा॥ ९०॥

**स्मर शार्करमास्वाद्य त्वया राद्धमिति स्तुवन्।**
**स्वनिन्दारोषरक्तात्तु यदभैषं तवाधरात्॥९१॥**

स्मरेति॥ शार्करं शर्कराविकारभूतं शर्करासंस्कृतं वा किमपि भक्ष्यमास्वाद्य एतत्सर्वातिशायिरसामृतस्त्वाविहस्तया त्वया राद्धं साधितं किमिति स्वादातिशयादतिस्तुवन् वारं वारं तदेव वर्णयन्नहं सर्वातिशायिरसमेतच्छार्करमिति स्तुतौ अधरस्यापि सर्वमधुरवर्गान्तःपातितया निन्दापर्यवसानान्मदपेक्षयाऽप्येतदधिकरसमित्ययं वर्णयति, ननु तर्हि अद्य प्रभृति अयमेतदेव रसयतु मम तु कथाप्यनेन न कार्येति स्वनिन्दया रोषस्तेन रक्तात्तवाधरात्पुनर्यदभैषं भीतवानस्मि तत्स्मर। कोपेन लौहित्यं युक्तम्। त्वदधरकल्पशार्करवर्णनया कुपितया त्वयाऽधरस्फुरणादिना व्यञ्जितात्कोपाद्यदभैषं तत्स्मरेति भावः। शार्करम्, विकारे संस्कृतार्थे वाऽण्। अधरात्, 'भीत्रार्थानां भयहेतुः।१।४।२५।' इत्यपादानत्वम्॥ ९१॥

**मुखादारभ्य नाभ्यन्तं चुम्बं चुम्बमतृप्तवान्।**
**न प्रापं चुम्बितुं यत्ते धन्या तच्चुम्बतु स्मृतिः९२**

मुखादिति॥ मुखादारभ्य नाभ्यन्तं नाभिपर्यन्तं त्वदङ्गं चुम्बं चुम्बं चुम्बित्वा चुम्बित्वा अतृप्तवान असमाप्तचुम्बनेच्छः सन्नहं स्मरमन्दिरं यत्त्वदङ्गं पाण्यादिना प्रतिबन्धाल्लज्जातिशयाद्वा गोपितत्वाच्चुम्बितुं न प्रापं तत्स्मरमन्दिरं धन्या स्मृतिश्चुम्बतु। तत्स्मरमन्दिरं स्मृतिविषयीभवतु। अतिरागात्स्मरमन्दिरमपि चुम्बितुं प्रवृत्तस्य मम तत्र दत्तवती तत्स्मरेति भावः। चक्रवर्तिनापि मया यच्चुम्बितुं न प्राप्तं तत्स्मृत्या प्राप्तम्, अत एव सा धन्येति भावः। मुखाक्षिकक्षाकुचनाभिमूलवराङ्गभागाश्चुम्बनस्थानानि॥ ९२॥

**कमपि स्मरकेलिं तं स्मर यत्र भवन्निति।**
**मया विहितसम्बुद्धिर्व्रीडिता स्मितवत्यसि९३**

कमिति॥ त्वं कमपि तमनिर्वचनीयं लोकोत्तरपुरुषायिताख्यं स्मरकेलिं स्मर। तं कम्—यत्र कामकेलौ पुंस्त्वारोपेण भवन्नित्येवं पुंलिङ्गोचितसंबुद्ध्या मया विहिता संबुद्धिर्यस्याः सा त्वं व्रीडिता स्मितवत्यसि। कामशास्त्राभ्यासकौशलाद्विपरीतसुरतमकार्षीः, तत्स्मरेत्यर्थः। केलेः पुंस्त्वं पूर्वं दर्शितम्॥ ९३॥

**नीलदाचिबुकं तत्र मदाक्तेन श्रमाम्बुना।**
**स्मर हारमणौ दृष्टं स्वमास्यं तत्क्षणोचितम्९४**

नीलदिति॥ तत्रोक्तरूपे पुरुषायिते ललाटकपोललिखितपत्रवल्लीसम्बन्धिना मदेन कस्तूर्याऽक्तेन मिश्रितेन कलुषितेन गच्छता श्रमाम्बुना आचिबुकं हनुभागमभिव्याप्य नीलन्नीलवर्णं भवदुपरिस्थितत्वादधोविलोकयतो मुखस्य कस्तूरीमिलितेन गलता श्रमजलेन चिबुकसम्बन्धस्यौचित्यान्नीलं भवत् एवम्भूतम् अधोभागे वर्तमानस्य मम हृदि वर्तमाने मुक्ताहारमध्यमणौ तत्क्षणे विपरीतरताचरणसमये तल्लक्षणे

---

1 अत्र पिकनादिनीत्युपमा।

1 अत्रानुप्रासः।

उत्सवे वोचितमुक्तरीत्या योग्यम्, अथ च—पुरुषायितक्षणे, तादृशस्य श्रमजलस्य कूर्चकान्तिदायित्वेनोचितम्, इष्टं स्वमास्यं स्मर । 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः', इत्यभिधानान्मदशब्द एकदेशलक्षणया मृगमदवाची । नीलद्, आचारक्विबन्ताच्छता । 'नील वर्णे' धातुरिति केचित् ॥ ९४ ॥

**स्मर तन्नखमन्त्रोरौ कस्तेऽदादिति ते मृषा ।**
**ह्रीदैवतमलुम्पं यद्व्रतं रतपरोक्षणम् ॥ ९५ ॥**

स्मरेति ॥ अहम् अत्रास्मिंस्ते तवोरौ को नखमदाद्दत्तवानिति मृषा असत्यभाषी सन् ह्रीरेव दैवतं यस्य तत्, अत एव रतस्य परोक्षणं परोक्षकरणं ब्रह्मचर्यरूपं सुरतप्रतिबन्धकं व्रतं नियमं यदलुम्पं निवर्तितवान् तत्स्मर । परपुरुषसम्बन्धशङ्कोत्पादनार्थं मृषाभाषणेन रसान्तरमुत्पाद्य लज्जाकृतं सुरतप्रतिबन्धकमनुद्योगं यन्निवर्तितवांस्तत्स्मरेत्यर्थः । व्रतं सदैवतं भवतीति ह्रीदैवतमित्युक्तम् ॥ ९५ ॥

**वनकेलौ स्मराश्वत्थदलं भूपतितं प्रति ।**
**देहि मह्यमुदस्येति मद्गिरा व्रीडिताऽसि यत् ९६**

वनेति ॥ त्वम् इति मद्गिरा यद्व्रीडिताऽसि तत्स्मर । इति किम्—हे भैमि, त्वं वनकेलौ आरामविहारसमये भुवि पतितमश्वत्थदलं प्रति उद्दिश्य इदम् उदस्य पाणिनोत्क्षिप्य मह्यं देहीति । 'अश्वत्थपत्रसदृशं विपुलं च गुह्यम्' इति कामशास्त्रवचनाद्भूपतिताश्वत्थदलयाचनेन वराङ्गयाचनस्य सूचितत्वाद्व्रीडिताऽसि तत्स्मरेति भावः ॥ ९६ ॥

**इति तस्या रहस्यानि प्रिये शंसति साऽन्तरा ।**
**पाणिभ्यां पिदधे सख्याः श्रवसी ह्रीवशीकृता ॥**

इतीति ॥ सा भैमी प्रिये इति पूर्वोक्तप्रकारेण तस्या भैम्या रहस्यानि एकान्तरतवृत्तानि शंसति सति ह्रीवशीकृता लज्जिता सती अन्तरा मध्य एवासमाप्त एव वचने पाणिभ्यां सख्याः कलायाः श्रवसी कर्णौ पिदधे आच्छादितवती । इतः परमप्यतिसंगुप्तमपि रहस्यमस्यै कथयिष्यति, तदनया नाकर्णनीयमिति बुद्ध्या तस्याः कर्णौ प्यधत्तेत्यर्थः ॥ ९७ ॥

**कर्णौ पीडयती सख्या वीक्ष्य नेत्रासितोत्पले ।**
**अप्यपीडयतां भैमीकरकोकनदे नु तौ ॥ ९८ ॥**

कर्णपिधानमेवोत्प्रेक्षते—

कर्णाविति ॥ भैमीकरावेव कोकनदे रक्तोत्पले अपि कर्तृणी सख्याः कलाया नेत्रे एवासितोत्पले तस्या एव कर्णौ पीडयती यन्त्रयन्ती वीक्ष्य तौ कलाकर्णौ कर्मभूतौ अपीडयतां नु कलानेत्रनीलोत्पलयोराकर्णपूर्णतया कर्णाक्रमणात्पीडाकरणमिव भैमीकररक्तोत्पले अपि साजात्यान्नेत्रनीलोत्पलसाहायकाचरणबुद्ध्येव स्पर्धयेव वा तत्कर्णौ पीडयामासतुः किमिति भावः । सवर्णयोः साहायकं स्पर्धा च युक्ता । पीडयती, 'वा नपुंसकस्य ७ । १ । ७९' इति नुमभावः ॥ ९८ ॥

**तत्प्रविष्टं सखीकर्णौ पत्युरालपितं ह्रिया ।**
**पिदधाविव वैदर्भी स्वरहस्याभिसंधिना ॥ ९९ ॥**

पुनरप्यन्यथोत्प्रेक्षते—

तदिति ॥ वैदर्भी सखीकर्णौ प्रविष्टं तत्पूर्वोक्तं रहस्यरूपं पत्युरालपितं स्वरहस्यमेतत्कर्णाभ्यां सकाशाद्वाहिर्मा गादित्यभिसंधिनाऽभिप्रायेणेव ह्रिया पिदधौ आच्छादितवती । अन्यदपि गोप्यं वस्तु भाण्डे निक्षिप्यान्यो मा स ज्ञासीदिति तद्द्वारं विधीयते ॥ ९९ ॥

**तमालोक्य प्रियाकेलिं नले सोत्प्रासहासिनि ।**
**आरात्तत्त्वमबुद्ध्वाऽपि सख्यः सिष्मियिरेऽपराः ॥**

तमिति ॥ आराद्दूरे स्थिता अप्यपराः सख्यस्तत्त्वं नलहासकारणमबुद्ध्वापि सिष्मियिरे जहसुः । कस्मिन्सति—नले तं पूर्वोक्तं प्रियायाः केलिमालोक्य सोत्प्रासहासिनि उत्प्रासेनोच्चैस्त्वेन सह यथा तथा हसति सति । नलाट्टहासश्रवणमात्रेण सिष्मियिर इत्यर्थः ॥ १०० ॥

**दम्पत्योरुपरि प्रीत्या ता धराऽप्सरसस्तयोः ।**
**ववृषुः स्मितपुष्पाणि सुरभीणि मुखानिलैः ॥**

दम्पत्योरिति ॥ ताः सख्य एव धरायामुर्वश्याद्यप्सरसस्तयोर्दम्पत्योरुपरि प्रीत्या प्रेमातिशयेन सुरभीणि स्मितान्येव पुष्पाणि ववृषुः । सर्वा अपि सख्यस्तावुभौ क्रीडावशाज्जहसुरित्यर्थः । मुखानिलसुरभित्वेन तासां पद्मिनीत्वं सूचितम् । तयोः, 'षष्ठ्यतसर्थप्रत्ययेन २ । ३।३० ।' इति षष्ठी ॥ १०१ ॥

**तदास्यहसिताज्जातं स्मितमासामभासत ।**
**आलोकादिव शीतांशोः कुमुदश्रेणिजृम्भणम् ॥**

१ अत्र नेत्रेत्यादौ करेत्यादौ चोपमा। २ अभिसन्धिनेवेत्युत्प्रेक्षा। ३ धराऽप्सरस इति स्मितपुष्पाणीति च रूपकम् ।

तदिति ॥ तस्य नलस्यास्यहसिताज्जातमासां सखीनां स्मितं शीतांशोरालोकात्प्रकाशाज्जातं कुमुदश्रेण्या जृम्भणं विकासनमिवाभासत ।'तदस्य' इति क्वचित्पाठः॥१०२॥

**प्रत्यभिज्ञाय विज्ञाऽथ स्वरं हासविकस्वरम् ।**
**सख्यास्तासु स्वपक्षायाः कला जातबलाऽजनि॥**

प्रतीति ॥ अथ सखीसमूहहासानन्तरं विज्ञाऽतिचतुरा कला तासु सखीषु मध्ये स्वपक्षाया निजामित्रभूतायाः कस्याश्चित्सख्याः स्वरं हासेन विकस्वरं सुव्यक्तम्, अत एव—सोऽयं मत्सख्या एव स्वर इति प्रत्यभिज्ञाय परोक्षप्रत्यक्षोभयांशात्मकज्ञानविषयं कृत्वा जातं बलं यस्यास्तदृशी, भैमीप्रतारणार्थं ससहायोत्साहशक्तियुक्ता वाऽजनि । मत्पक्षीयाऽत्र विद्यतेऽतोऽस्याः सकाशान्मां मोचयिष्यति, शिष्टं वाऽऽकर्णयिष्यतीति साश्वासाऽभूदिति भावः । अन्योऽपि केनचित्प्रतिबद्धः स्वपक्षीयं दृष्ट्वा जातबलो भवति । सखीस्वरश्रवणं तु कर्णपिधानात्पूर्वमेव ज्ञातव्यम् । अन्यथा स्वरश्रवणानुपपत्तेः । भैमीकरयोः कोमलतरतया कर्णनिबिडपीडने सामर्थ्याभावेन वा श्रवणोपपत्तिः ॥ १०३ ॥

**साहूयोच्चैरथोचे तामेहि स्वर्गेण वञ्चिते ।**
**पिब वाणीः सुधावेणीर्नृपचन्द्रस्य सुन्दरि १०४**

सेति ॥ अथ स्वपक्षीयस्वरप्रत्यभिज्ञानानन्तरं सा कला तां स्वसखीमुच्चैस्तारस्वरं यथा तथाऽहूय इति ऊचे ।इति किम्—दूरस्थत्वात् हे स्वर्गसुखेन वञ्चिते सुन्दरि, एहि समीपमागच्छ, आगत्य त्वं नृप एवाह्लादकत्वाच्चन्द्रस्तस्य सुधावेणीरमृतप्रवाहरूपा वाणीः पिब सादरमाकर्णयेति स्वर्गेऽपि चन्द्रामृतपानमेव विशिष्टं नलपरिहासाकर्णनसुखं स्वर्गसुखमेव तदनुभवेत्यर्थः ॥ १०४ ॥

**साऽशृणोत्तस्य वाग्भागमनत्यासत्तिमत्यपि ।**
**कल्पग्रामाल्पनिर्घोषं बदरीव कृशोदरी१०५॥**

सेति ॥ कलया आहूता अनत्यासत्तिमत्यपि अत्यन्तनैकट्यरहिताऽपि यत्र स्थितौ किंचिच्छ्रूयते किंचिन्नेति तत्र स्थिता कृशोदरी सा कलासखी तस्य वाचो भागं शिष्टमंशमशृणोत् । कलाकर्णयोर्भैम्या पिहितत्वादाहूता सखी नलकथ्यमानरहस्यकथाशेषमशृणोदित्यर्थः । कामिव—कृशोदरी कृशमध्या । अल्पजनेति यावत् । एवंभूता बदरी कल्पनाम्नो ग्रामस्याल्पनिर्घोषं लोककलकलं तत्र पठतां वेदध्वनिं वा तमिव । बदरिकाश्रमस्थो लोकः मुनिजनस्थानभूतकल्पग्रामनिवासिनो जनस्य कोलाहलं शृणोतीति तैर्थिकप्रसिद्धिः १०५

**अथ स्वपृष्ठनिष्ठायाः शृण्वत्या निषधाभिधाः ।**
**नलमौलिमणौ तस्या भावमाकलयत्कला १०६**

अथेति ॥ अथ कलासख्या नलवाक्यशेषश्रवणानन्तरं कला स्वपृष्ठे निष्ठा स्थितिर्यस्याः कर्णपिधानपरतया कलापश्चाद्भागे स्थितायाः, तया—कला सखीं प्रति रहस्यं ब्रुवतो नैषधस्याभिधा वचनानि शृण्वत्यास्तस्या भैम्या भावं रहस्यकथनाद्धासकोपाद्यभिव्यञ्जकमुखचेष्टाविशेषं नलस्य मौलिमणौ शिरोरत्ने प्रतिबिम्बवशादाकलयदज्ञासीत् । ददर्शेत्यर्थः । नलेन कलासखीं प्रति रहस्ये उक्ते भैम्या हास्यकोपादिचेष्टां नलमौलिरत्ने प्रतिबिम्बितं सा कला ददर्श नल्यशृणोदित्यर्थः॥

**प्रतिबिम्बेक्षितैः सख्या मुखाकूतैः कृतानुमाः।**
**तद्व्रीडाद्यनुकुर्वाणा शृण्वतीवान्वमायि सा१०७**

प्रतिबिम्बेति ॥ प्रतिबिम्बेति ईक्षितैः सख्या पृष्ठस्थितया भैम्याः स्वपक्षसख्या मुखाकूतैर्व्रीडाहास्यादिसूचकमुखसंकोचविकासादिचेष्टितैः कृत्वा कृताऽनुमितिर्यया तादृङ्मुखविकारदर्शनात्प्रायेण नलेनैवमुक्तं स्यादित्येवं कृता नलवाक्यार्थसम्भावना यया सा, तथा—तस्या भैम्याः स्वपक्षसख्या वा नलवाक्यानुरूपं व्रीडाद्यनुकुर्वती प्रतिबिम्बदर्शनोदवाङ्गसंकोचाद्यभिनयेनानुकुर्वाणा दर्शयन्ती सा कला भैमीपाणिपिहितकर्णाऽपि तद्व्रीडाद्यनुकरणादेव भैमीवत्, सखीवद्वा नलवचनं शृण्वतीवान्वमायि भैमीनिलाभ्यां सम्भाविता । तद्व्रीडादि, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९ ' इति निषेधाद्द्वितीया । अनुकुर्वाणा, ' अनुपराभ्यां कृञः १ । ३ । ७९ ' इति परस्मैपदविधानाच्छानजभावे ' ताच्छील्यवयोवचनशक्तिषु चानश् ३।२।१२९' इति ताच्छील्ये शक्तौ वा चानश् ॥ १०७ ॥

**कारं कारं तथाऽऽकारमूचे साऽशृणवंतमाम् ।**
**मिथ्या वेत्थ गिरश्चैतद्द्वयर्थाः स्युर्मम देवताः॥**

---

१ जृम्भणमिवेत्युत्प्रेक्षा । अत्रानुप्रासः ।२अत्रानुप्रासः। २ निर्घोषमिवेत्युपमा । २ कलेतिरूपकम् । ३ शृण्वतीवेत्युत्प्रेक्षा।

कारामिति ॥ सा कला तथा पूर्वोक्तं भैम्याः स्वपक्षसख्या वा नलमौलिमणिदृष्टं मुखव्रीडाहर्षाद्याकारं कारं कारं कृत्वा कृत्वा अनया सर्वं श्रुतमिति यथा प्रतीतिर्भवति तथाऽभिनयं कृत्वा इति ऊचे । इति किम्—अहं भवदीयं सर्वं वृत्तान्तमश्रृणवंतमां नितरामाकर्णितवत्यस्मि । हे भैमि, त्वं भवद्वचनश्रवणसूचिका मम गिरो मिथ्या चेदित्थं जानीषे । अनाकर्णितमप्याकर्णितमियं वदतीति मन्यसे चेत्तर्हि अभीष्टसिद्ध्यर्थं प्रत्यहं पूज्यमाना मम गीर्यादीष्टदेवता निष्फलाः स्युरिष्टदायिन्यो मा भूवन्निति मया शपथः क्रियत इति नलं प्रत्यवोचद्वा । अश्रृणवंतमाम्, 'तिङश्च ५।३।५६' इति तमप् ॥ १०८ ॥

मत्कर्णभूषणानां तु राजन्निबिडपीडनात् ।
व्यथिष्यमाणपाणिस्ते निषेद्धुमुचिता प्रिया १०९
इति सा मोचयांचक्रे कर्णौ सख्याः करग्रहात् ।
पत्युराश्रवतां यान्त्या मुधाऽऽयासनिषेधिनः ११०

मदिति ॥ इतीति ॥ युग्मम् सा कला इति पूर्वोक्तं नलं प्रत्युक्त्वा सख्या भैम्याः करग्रहात् पाणिभ्यां पीडनात्सकाशात्कर्णौ मोचयांचक्रे । अर्थाद्भैम्यैव प्रयोज्यया । तृतीयान्तपाठस्तु स्पष्टार्थः । किंभूतायाः—कर्णपिधानरूपान्मुधायासाद्वृथाप्रयासान्निषेधिनो निवारयितुः पत्युराश्रवतां वचनकारित्वं यान्त्या गच्छन्त्याः । तद्वचनकारिण्या इत्यर्थः । शपथरूपं कलावचनमाकर्ण्य कर्णपिधानप्रयासो व्यर्थ इति निबिडपीडनात्तव पाणिपीडैव भविष्यतीति तत्कर्णौ मुञ्चेति नलवचनाद्भैमी तत्कर्णावमुञ्चदित्यर्थः । इति किम् । हे राजन्, मत्कर्णपिधानवशान्मत्कर्णभूषणानां निबिडपीडनाद्धेतोस्तु पुनः सौकुमार्यातिशयादितः परमपि व्यथिष्यमाणौ पीडां प्राप्स्यन्तौ पाणी यस्यास्तादृशी ते तव प्रिया निषेद्धुमुचितेति । कर्णपिधानफलं नास्ति, पिधानप्रयासो व्यर्थः, प्रत्युतास्याः पाणिपीडा भविष्यतीतीयं त्वया निषेध्येत्यर्थः ॥ १०९ ॥ ११० ॥

श्रुतिसंरोधजध्वानसंततिच्छेदतालताम् ।
जगाम झटिति त्यागस्वनस्तत्कर्णयोस्ततः १११

श्रुतीति ॥ ततः कर्णमोचनानन्तरं ततो विस्तृतो घा तस्याः कलायाः कर्णयोः झटिति शीघ्रं त्यागस्तस्माच्छीघ्रहस्तमोचनाज्जातो थद्यादिस्वनः स श्रुत्योः संरोधान्निबिडपीडनाज्जातो यो ध्वानः शब्दस्तस्य संततिरविच्छिन्नता निरन्तरसमुत्पन्नो गुमुगुमारव इति यावत्, तस्य च्छेदे विरतौ तालतां हस्ततालद्वयवाद्यपरिच्छेद्यगीतादिक्रियामानभूतकालतां जगाम । झटितिमुद्रितकर्णमोचनादनुभूयमानथद्यादिशब्दः, कर्णपिधानसमयेऽनुभूयमानगुमुगुमारवविरामज्ञापकोऽभूदित्यर्थः । एतच्च स्वप्रत्यक्षसिद्धम् ॥ १११ ॥

साऽपसृत्य कियद्दूरं मुमुदे सिष्मिये ततः ।
इदं च तां सखीमेत्य ययाचे काकुभिः कला ॥

सेति ॥ सा कला ततोऽनन्तरं तस्माद्भैम्युपवेशनस्थानाद्वा सकाशात्कियत्किंचिद्दूरमपसृत्य गत्वा मुमुदे सिष्मिये । प्रतारणकौशलवशाज्जहास च । तां स्वसखीं श्रुतनलवचनामेत्येदं वक्ष्यमाणं काकुभिरर्थविशेषव्यञ्जकैरुच्चनीचैर्ध्वनिविकारैः कृपणभाषणैर्ययाचे च । अवोचदिति यावत् ॥ ११२ ॥

अभिधास्ये रहस्यं ते यदश्रावि मयाऽनयोः ।
वर्णयाकर्णितं मह्यमेह्यालि विनिमीयताम् ११३

अभिधास्य इति ॥ हे सखि, मयाऽनयोर्यद्रहस्यमश्रावि, अहं तद्रहस्यं तुभ्यमभिधास्ये, मत्कर्णपिधानानन्तरमनयो रहस्यं त्वया आकर्णितं तत्त्वं मह्यं वर्णय कथय एहि शीघ्रमागच्छ विनिमीयतां परिवृत्तिः क्रियताम् । मह्यम्, 'क्रियया यमभिप्रैति' इति संप्रदानत्वम् । भिन्नवाक्यत्वादन्वादेशाभावान्न मयादेशः ॥ ११३ ॥

वयस्याभ्यर्थनेनास्याः प्राक्कूटश्रुतिनाटने ।
विस्मितौ कुरुतः स्मैतौ दम्पती कम्पितं शिरः

वयस्येति ॥ अश्रुतरहस्यश्रवणार्थमाहूताया वयस्याया अभ्यर्थनेन स्वाश्रुतश्रवणप्रार्थनेन हेतुनास्याः कलायाः 'अशृणवंतमाम्' इत्यादि प्राक्कूटश्रुतिः पूर्वं कृतं मिथ्याशिरःकम्पादिपूर्वं श्रवणं तस्या नाटनेऽभिनये विस्मितौ । अनया कथमावां प्रतारितौ स्वः । दृष्टं दृष्टमिति मिथोवचनपूर्वं साश्चर्यौ तौ दम्पती शिरः कम्पितं कुरुतः स्म । नाटने, चौरादिकान्नाटेर्नपुंसके भावे 'ल्युट् च ३।३।११५।' इति ल्युट् ॥ ११४ ॥

---

१ अत्रानुप्रासः ।

१ अत्र मुमुद इत्यादीनां क्रियाणां प्रकृतत्वे योगात्तुल्ययोगिता । २ अत्रानुप्रासः

तथाऽऽलिमालपन्तीं तामभ्यधान्निषधाधिपः।
आस्स्व तद्वञ्चितौ स्वश्रेन्मिथ्याशपथसाहसात् ॥

तथेति ॥ निषधाधिपः तथा रहस्याविनिमयकथनप्रार्थनरूपेण स्वपक्षभूतामालिं प्रत्यालपन्तीं तां कलामभ्यधादवोचत् । हे कले, मिथ्याशपथरूपात्साहसादविचारितकारित्वाद्धेतोश्चेदावां कर्णमोचनार्थमेव तयालीकवचनोक्त्या वञ्चितौ प्रतारितौ स्वो भवावस्तर्हि आस्स्व तिष्ठ। तत्तर्हि आस्स्वेति भिन्नं वा । प्रतारणनिमित्तां तर्जनोक्तिमूचे इत्यर्थः ॥ ११५ ॥

प्रत्यालापत्कलापीमं कलङ्कः शङ्कितः कुतः ।
प्रियापरिजनोक्तस्य त्वयैवाद्य मृषोद्यता ॥ ११६ ॥

प्रतीति ॥ कलापीमं नलं प्रति उद्दिश्यालापीदवोचत् । हे राजन्, त्वया प्रियाया भैम्याः परिजनस्य सेवकभूतायां ममोक्तस्य वचनस्यैतावत्सु दिनेषु मध्येऽद्यैवमृषोद्यता मिथ्याभाषणतारूपः कलङ्को दोषः कुतः कस्माद्धेतोः शङ्कितः सम्भावितः, तत्कारणं कथयेति । सत्यवादिन्या भैम्याः परिचारिकाया ममालीकभाषित्वं संभावयितुमप्यशक्यमित्यर्थः । भैमी रात्रिवृत्तमपि सुरतमसदग्रेऽवृत्तमिति कथयति । परिजनश्च प्रभुसदृशो युक्तः । तथाऽलीकभाषणं मम गुण एव, नतु कलङ्क इत्यपि । 'परिजनस्योक्तौ' इति च पाठः ॥ ११६ ॥

सत्यं खलु तदाऽश्रौषं परं गुमुगुमाररम् ।
शृणोमीत्येव चावोचं नतु त्वद्वाचमित्यपि ॥ ११७ ॥

स्ववचनस्य सत्यतां प्रतिपादयति—

सत्यमिति ॥ अहं तदा श्रवणपिधानकाले खलु निश्चितमश्रौषमिति सत्यम्, परं केवलं गुमुगुमारवं नतु तद्वचनम् । तथाच—श्रवणमात्रं सत्यमेवेत्यर्थः । शपथकरणसमये धातोः सकर्मकत्वेऽपि कर्माविवक्षयाहं शृणोमीत्येव चावोचम्, न तु त्वद्वाचमिति विशेषणमप्यवोचम्। शपथोऽपि साधारणश्रवणमात्रविषयत्वात्सत्य एवेति न कथंचिदपि ममालीकभाषित्वं त्वया शङ्कनीयमित्यर्थः । अशृणवंतमामिति तत्रोक्तत्वादत्र शृणोमीति श्रवणमात्रोपलक्षणपरं नतु भूतवर्तमानपरमिति ज्ञातव्यम् ॥ ११७ ॥

आमन्त्र्य येन देव त्वां तद्वैयर्थ्यं समर्थये ।
शपथः कर्कशोदर्कः सत्यं सत्योऽपि दैवतः ॥ [1]

'व्यर्थाः स्युर्मम देवताः' ( २०।१०८ ) इत्यत्र देवताशब्दस्यान्यार्थत्वेन 'शपथो मया न कृत एव' इति समर्थयते—

आमन्त्र्येति ॥ हे राजन्, अहं तेन 'व्यर्थाः स्युः—' ( २०।१०८ )इत्यादिवाक्येन देवेति त्वामामन्त्र्य संबोध्य ताः श्रवणप्रतिपादका अशृणवंतमामित्यादयो मम गिरो व्यर्था अलीकाः स्युः, यथा त्वं मिथ्याभूता वेत्थ तादृश्य एव कामं स्युरिति अशृवर्णतमामित्यादीनां त्वद्वचनप्रतिपादिकानामपि गिरां वैयर्थ्यमेव समर्थये सिद्धान्तत्वेन प्रतिपादयामि । अथ च—या गुमुगुमारवरूपा अश्रौषम्, याश्च त्वं मिथ्या वेत्थ तासां गिरामनुकरणशब्दत्वादर्थशून्यत्वान्निरर्थकत्वाद्वैयर्थ्यं समर्थये । पूर्वं कृतस्य शपथस्यान्यमर्थं कृत्वा कथमपलपसीत्यत आह—' सत्येनापि शपेद्यस्तु देवाग्निगुरुसंनिधौ । तस्य वैवस्वतो राजा धर्मस्यार्धं निकृन्तति ॥ ' इत्यादिमन्वादिवचनप्रामाण्याद्देवतासंबन्धी सत्योऽपि शपथः सत्यं निश्चितं यस्मात्कर्कशोदर्कः दारुणपरिणामः, किं पुनरसत्यः।तस्मादिति ज्ञात्वा मया शपथो न कृत एव परं देवस्यैव शपथभ्रान्तिर्जातेत्यर्थः । अत एव त्वां देवेत्यामन्त्रितवती । दैवतस्य सत्योऽपि शपथः कर्कशोदर्क इति यन्मन्वादिभिरुक्तं तत्सत्यं यस्माच्छपथभ्रान्त्या संप्रत्येव त्वया मयि कलङ्क आरोपित इत्यर्थ इति वा ॥ ११८ ॥

असम्भोगकथाऽऽरम्भैर्वञ्चयेथे कथं नु माम् ।
हन्त सेयमनर्हन्ती यन्न विप्रलभे युवाम् ॥ ११९ ॥

इदानीम् ' आर्जवं हि कुटिलेषु न नीतिः ' इति न्यायादलीकभाषणेऽप्यदोषत्वमाह—

असंभोगेति ॥ हे भैमीनलौ, युवां ' भैमी मह्यं स्प्रष्टुमपि न ददाति, नलेनाहं कदाचिदपि न स्पृष्टापि ' इत्यसम्भोगकथाऽऽरम्भैरन्योन्यसम्भोगाभावविषयवृत्तान्तारम्भैर्मिथोऽनुभूतसुरतभरानिह्नवैः कृत्वा मां कथं नु कथमिव वञ्चयेथे प्रतारयथः।यत् तु पुनः अहं कर्मभूतौ युवां विप्रलभे प्रतारयामि सेयमनर्हन्ती अयोग्या अनुचितकारिणी हन्त कष्टं चित्रं वेति काकुः।भवद्भ्यामहं वञ्चनीया मया तु भवन्तौ न वञ्चनीयौ का वा रीतिरियम्, वञ्चनकरणसाम्यात्समदोषगुणौ ' युवामहं' चेति भावः । अर्हन्तीति ' अर्हः प्रशंसायाम्' इति शतरि उगित्वान्ङीपि नुम् । युवां 'कर्तृत्वेन कर्मत्वेन चावृत्त्या योज्यम् ॥ ११९ ॥

१ अत्राप्यनुप्रासः ।

कर्णे कर्णे ततः सख्यौ श्रुतमाचख्यतुर्मिथः ।
मुहुर्विस्मयमाने च स्मयमाने च ते बहु॥१२०॥

कर्ण इति ॥ ततः स्ववञ्चकत्वदोषपरिहारानन्तरं भैमीसुरतप्रागल्भ्ये मुहुर्विस्मयमाने आश्चर्यं कुर्वाणे च बहु नितरां स्मयमाने हसन्त्यौ च ते कलाकलासखीलक्षणे सख्यौ मिथो भैम्या वा सहचर्यौ मिथोऽन्योन्यस्य कर्णे कर्णे स्वस्वश्रुतं स्वरहस्यमाचख्यतुः। चावन्योऽन्यसमुच्चये। अन्योन्यकर्णापेक्षया वीप्सायां द्विर्वचनम् ॥ १२० ॥

अथाख्यायिकलासख्या कुप्यमेदमयन्तिमा।
कर्णाद्द्वितीयतोऽप्यस्याः संगोप्यैव यदत्रवम्

अथेति ॥ अथान्योन्यकर्णे तद्रहस्यकथनानन्तरं कलायाः सख्या कलयैव सख्या वा भैमी आख्यायि इति उक्ता। हे दमयन्ति, त्वं मे मह्यं मा कुप्य । अहं यदव्रवं तदस्याः द्वितीयतोऽपि कर्णात्संगोप्यैवाव्रवम् । अस्या एकेन कर्णेन श्रुतं, नतु द्वितीयेनेति लौकिकादाभाणकात्परिहासोऽपि । 'एवम्' इति पाठे—एवंप्रकारेण संगोप्येति । कुप्य मे, 'क्रुधद्रुहेर्ष्याऽसूयाऽर्थानां यं प्रति कोपः १।४।३७' इति संप्रदानत्वम् । मा निरनुबन्धकः । अव्रवम्, लङ् ॥ १२१ ॥

प्रियः प्रियामथाचष्ट दृष्टं कपटपाटवम् ।
वयस्ययोरिदं तेऽस्मान् मा सखीष्वेव विश्वसीः॥

प्रिय इति ॥ अथ सख्युक्त्यनन्तरं प्रियः प्रियामाचष्ट इत्यूचे । इति किम्—हे भैमि, त्वं वयस्ययोः कपटपाटवमिदं वचनचातुर्यं दृष्टमनुभूतं यतः, तस्मात्सखीष्वेव मा विश्वसीः, किंतु मयि कदाचिद्विश्वसिहि । सखीषु मैव विश्वसीः, किंतु मय्येवेति वा । यद्वा—मा विश्वसीरेव ॥ १२२ ॥

आलापि कलयाऽपीयं पतिर्नालपति क्वचित् ।
रहस्येऽसौ रहस्यं तत्सभ्ये विस्रभ्यमीदृशि१२३

आलापीति ॥ कलयापीयं भैमी मधुरकाक्वा आलापि इत्युक्ता । इति किम्—हे वयस्ये, असौ तव पतिः क्वचिदपि देशे जने वा त्वद्रहस्यं नालपति, किंतु गोपायत्येव । तत्तस्मादीदृशि एतत्सदृशेऽन्यस्मिन्नापि सभ्ये साधौ विस्रम्यं विश्वसनीयं त्वया किं पुनरेतस्मिन्निति विरुद्धलक्षणया—अयं सर्वस्याग्रे त्वद्रहस्यं प्रकटयत्येव, असभ्यश्चायमित्यस्मिन्नेतत्तुल्येऽन्यस्मिन्नपि मैव विश्वसीरिति । नालपति, अपि त्वालपति । विस्रम्यमपि तु नेति काक्वा।'अलापि' इत्यपि क्वचित्पाठः ॥ १२३॥

इति व्युत्तिष्ठमानायां तस्यामूचे नलः प्रियाम् ।
भण भैमि बहिः कुर्वे दुर्विनीते गृहादमू ॥

इतीति ॥ नलः तस्यां कलायां इत्युक्तप्रकारेण प्रतिवन्द्या व्युत्तिष्ठमानायां प्रतिरोधकारिण्यां सत्यां प्रियां प्रतीत्यूचे । इति किम्—हे भैमि, अहं दुर्विनीते दुष्टे नितरां विश्वासघातिन्यौ अमू सख्यौ गृहाद्बहिः कुर्वे निष्कासयामि भणाज्ञापय । एतेन नलस्य संभोगेच्छुता व्यज्यते । तदर्थमेव कुर्व इति लट् । 'व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च' इत्यभिधानादूर्ध्वकर्मत्वाभावात् 'उदोऽनूर्ध्वकर्मणि । १ । ३ । २४ ।' इति तङ् । व्युत्तिष्ठमानायां विरोधाचरणे कृतोद्यमायां वा ॥ १२४ ॥

शिरःकम्पाऽनुमत्याऽथ सुदत्या प्रीणितः प्रियः।
चुलुकं तुच्छमुत्सर्प्य सख्योः सलिलमक्षिपत्॥

शिर इति ॥ अथोक्तविषयप्रश्नानन्तरं सुदत्या भैम्या शिरःकम्पेन यां सखीनिष्कासनस्यानुमतिरनुज्ञा तया कृत्वा प्रीणितो जनितानन्दः प्रियः सख्योर्विषये तुच्छं रिक्तं चुलुकमुत्सर्प्योद्यम्य वरुणवरेण प्राप्तं सलिलं तन्निष्कासनार्थमक्षिपत् । सख्योर्दुष्टत्वाच्छिरःकम्पेन भैम्या तद्बहिःकरणमङ्गीकृतम् । नलस्तु स्वाशयानुसारेण भैम्यापि संभोगेच्छयैवैता बहिः कर्तुमिच्छति मत्संभोगोऽनुमतोऽस्या इति संतुष्टः, अत एव तन्निर्गमनार्थं जलं निक्षिप्तवानिति भावः । शिरःकम्प एवानुमतिर्यस्यास्तया सुदत्येति वा ॥ १२५ ॥

तच्चित्रदत्तचित्ताभ्यामुच्चैः सिचयसेचनम् ।
ताभ्यामलम्भि दूरेऽपि नलेच्छापूरिभिर्जलैः ॥

तदिति ॥ तुच्छचुलुकमोचनमात्रेण जलसेचनात् तेन नलेन चित्रे आश्चर्ये दत्तं स्थापितं चित्तं ययोस्ताभ्यां सखीभ्यां तुच्छं चुलुकं नलेच्छामात्रेण पूरयन्ति सर्वमाप्लावयन्ति तच्छीलैः परिपूर्णतरैर्जलैः कृत्वा उच्चैर्नितरां सिचयस्य वस्त्रस्य सेचनमार्द्रीभावः अलम्भि प्रापि ॥ १२६ ॥

---

१ स्मयमाने चेति यमकम् ।

१ अत्रानुप्रासः । २ अत्रानुप्रासः ।

वरेण वरुणस्यार्थं सुलभैरम्भसां भरैः।
एतयोः स्तिमितीचक्रे हृदयं विस्मयैरपि१२७॥

वरेणेति ॥ अयं नलः वरुणस्य वरेण सुलभैरनायासलभ्यैरम्भसां भरैः पूरैः, तथाकस्मिकतद्दर्शनप्रभवैर्विस्मयैराश्चर्यैरपि कृत्वा एतयोः सख्योः क्रमेण हृदयमुरःस्थलमान्तरं च स्तिमितीचक्रे पूर्वमनार्द्रमप्यार्द्रं चक्रे, तथा—अनिश्चलमपि निश्चलीचक्रे । नीरपूरसेकेनातितरां साश्चर्ये जाते इत्यर्थः । 'तिम ष्टिम आर्द्रीभावे' ॥ १२७ ॥

तेनापि नापसर्पन्त्यौ दमयन्तीमयं ततः।
हर्षेणादर्शयत्पश्य नन्विमे तन्वि मे पुरः॥१२८॥
क्लिन्नीकृत्याम्भसा वस्त्रं जैनप्रव्रजितीकृते।
सख्यौ सक्षौमभावेऽपि निर्विघ्नस्तनदर्शने१२९

तेनेति॥क्लिन्नीकृत्येति॥( युग्मम् ) ततो जलसेकानन्तरमयं नलस्तेन तावता जलसेकेनापि गृहाद्बहिर्नापसर्पन्त्यौ निर्गच्छन्त्यौ ते सख्यौ कुचदर्शनाज्जातेन हर्षेण दमयन्तीमदर्शयत् । ननु तन्वि, त्वं मे पुरः इमे सख्यौ पश्य । किंभूते सख्यौ अम्भसा कर्तृभूतेन,करणभूतेन कर्तृभूतेन मया वा वसनं क्लिन्नीकृत्यार्द्रीकृत्य जैनप्रव्रजितीकृते दिगम्बरपरिव्राजिकात्वं प्रापिते । यतः—सक्षौमभावे दुकूलसाहित्ये सत्यपि निर्विघ्नमन्तरायरहितं स्तनदर्शनं ययोस्ते । सूक्ष्मतरे वस्त्रे जलसिक्ते निरन्तरमङ्गदर्शनं भवति । नग्नप्राये एते सख्यौ ममाग्रे विलोकयेति तयोर्लज्जात्याजनद्वारा बहिर्निर्गमनार्थं कुचदर्शनोपलक्षकपाणिचेष्टाभिनयेनादर्शयदित्यर्थः । दृशेर्बुद्ध्यर्थत्वाद्दमयन्तीमित्यणौ कर्तुर्णौ कर्मत्वम् । जैनानां दिगम्बराणां प्रव्रजिता प्रव्राजिका अतादृश्यौ तादृश्यौ कृते इति च्विः ॥१२८।१२९॥

अम्बुनः शम्बरत्वेन मायैवाविरभूदियम् ।
यत्पटावृतमप्यङ्गमनयोः कथयत्यदः ॥१३०॥

अम्बुन इति ॥ अदो जलं कर्तृ अनयोः सख्योः पटावृतमप्यङ्गं स्तनजघनादि कर्म यत्कथयति प्रकटयति सेयं अम्बुनः 'नीरक्षीराम्बुशम्बरम्' इत्यभिधानाच्छंवरसंज्ञत्वेन, अथ च शम्बराख्यदैत्यभावेन मायैवाविरभूत् प्रकटा अजनि । शाम्बरी हि मायाऽविद्यमानमपि वस्तु प्रकाशयति । अत्रापि निर्मले जलदर्शनादनग्ने नग्नीकरणाचेयं शाम्बरी मायैव प्रकटाभूदिति नलवचः । कविवचो वा । एवमुत्तरश्लोकेऽपि ज्ञेयम् ॥ १३० ॥

वाससो वाऽम्बरत्वेन दृश्यतेयमुपागमत् ।
चारुहारमणिश्रेणितारवीक्षणलक्षणा ॥१३१॥

अत्रैव पक्षान्तरमाह—

वासस इति ॥ वाऽथवा स्तनाद्यङ्गानामियं दृश्यता प्रत्यक्षगोचरता वाससोऽम्बरत्वेनातिसूक्ष्मवस्त्रविशेषपरत्वेन, अथ चाम्बरशब्दवाच्यत्वशादृश्यादाकाशत्वेनोपागमत्समागता जाता । निरावरणमम्बरे स्थितं वस्तु यथा प्रकटं दृश्यते तथैव वस्त्रावृतमपि चेद्दृश्यते तर्हि तत्राम्बरत्वमेव हेतुरित्यर्थः । किंभूता—चारवः स्थूलतरनिर्मलमनोहरा हारमणयः मौक्तिकानि तेषां श्रेणयः पङ्क्तय एव तारा नक्षत्राणि तेषां वीक्षणमेव लक्षणं स्वरूपं चिह्नं वा यस्याः सा । अम्बरे हि नक्षत्रदर्शनं भवति । तदेव चास्य लक्षणं तद्वदत्रापि वस्त्रावृतत्वेऽपि जलसेकद्वारा मुक्ताफलानि स्फुटानि दृश्यन्ते । तस्मादम्बरत्वमेव हेतुर्युक्त इत्यर्थः । तारशब्दस्य नक्षत्रवाचित्वं बहुधा दर्शितम् ॥ १३१ ॥

ते निरीक्ष्य निजावस्थां ह्रीणे निर्ययतुस्ततः ।
तयोर्वीक्षारसात्सख्यः सर्वा निश्चक्रमुः क्रमात्॥

ते इति ॥ ते सख्यौ नितरां जलसेकाद्रोप्याङ्गदर्शनरूपां निजावस्थां निरीक्ष्य ह्रीणे लज्जिते सत्यौ ततस्तस्माद्रतिगृहान्निर्ययतुर्बहिर्निर्जग्मतुः । अन्या अपि सर्वाः सख्यस्तयोर्जलार्द्रीकृतवस्त्रयोः सख्योर्वीक्षारसाद्दर्शनकौतुकातिशयात्तयोः पश्चात्क्रमान्निश्चक्रमुः ॥ १३२ ॥

ता बहिर्भूय वैदर्भीमूचुर्नीतावधीतिनि ।
उपेक्ष्ये ते पुनः सख्यौ मर्मज्ञे नाधुनाप्यमू ॥

ता इति ॥ ताः सख्यो बहिर्भूय गृहाद्बहिः स्थित्वा वैदर्भीमूचुः । हे नीतौ नीतिशास्त्रे अधीतिनि सुतरां कृताभ्यासे भैमि, ते तव मर्मज्ञे रहस्यवेदिन्यावमू सख्यौ अधुनापि पूर्वं यत्कृतं तत्कृतमेव, इतः परमपि यावद्दूरं न गमिष्यतः, तावत्पुनर्नोपेक्ष्ये । 'विरोधयेन

१ अत्राप्यनुप्रासः शब्दालङ्कारः ।

१ अत्रानुप्रासः । २ अत्राप्यनुप्रासः ।

सर्वज्ञं नोपेक्षेत विरोधिनम्।प्रसादयेदशक्यं तु-'इत्याद्युशनःस्मरणान्मर्मज्ञयोरेतयोस्त्वया नीतिशास्त्रप्रवीणयोपेक्षा नैव कार्या किंत्वेते पुनः प्रसादनीये आकारणीये चेत्यर्थः । 'मर्मज्ञो ह्युपेक्षितो विकरोति' इति नीतिशास्त्रम् । तस्मादेते आकारय प्रसादय चेत्यर्थः । नीतौ, 'क्तस्येन्विषयस्य कर्म्मण्युपसङ्ख्यानम्' इति कर्मणि सप्तमी । ते, 'क्तस्य च वर्त्तमाने २।३।६७' इति षष्ठी ॥ १३३ ॥

**उच्चैरूचेऽथ ता राजा सखीयमिदमाह वः ।**
**श्रुतं मर्म ममैताभ्यां दृष्टं तत्तु मयानयोः॥१३४॥**

उच्चैरिति ॥ अथ राजा ताः सखीरुच्चैर्दूरादाकर्णनयोग्यं तारस्वरं वक्ष्यमाणप्रकारेणोचे–हे सख्यः,वो युष्माकमियं सखी युष्मानिदं वक्ष्यमाणमाह । एताभ्यां मम मर्म रहस्यं श्रुतमित्येतावत्, मया तु पुनरनयोः सख्योस्तन्मर्म गुह्यमङ्गं दृष्टम् । 'श्रुताद् दृष्टं बलवत्' इति न्यायादेताभ्यामहमेव बलवतीति न क्वापि मे भीतिरिति वक्ष्यमाणभैमीवचनानुवादरूपेण नलोऽवोचदित्यर्थः । 'राज्ञा' इति पाठे—ताः प्रति राज्ञा ऊचे इत्यर्थः । व इत्यावृत्त्या षष्ठीद्वितीयान्तम् ॥ १३४ ॥

**मद्विरोधितयोर्वाचि न श्रद्धातव्यमेतयोः ।**
**अभ्यषिञ्चदिमे मायामिथ्यासिंहासने विधिः ॥**

मदिति॥ हे सख्यः,बहिर्निष्कासनाद्यनुमतिद्वारा मया विरोधितयोः कृतवैरयोरेतयोः सख्योर्वाचि न श्रद्धातव्यं सत्यत्वबुद्धिर्न कार्या।विरोधिनो हि प्रायेणासत्यमेव वदन्तीत्यर्थः । विधिर्ब्रह्मा इमे सख्यौ मायानां कपटानां मिथ्या असत्यानां च सिंहासने कपटासत्यसर्वाधिपत्येऽभ्यषिञ्चत्। योऽनयोर्जलसेको दृश्यते स ब्रह्मकृतो मायामिथ्यासिंहासनाभिषेक एवेति भैमी मन्यत इत्यर्थः । तस्माद्भवतीभिरेतयोर्वचसि न विश्वसनीयमिति भावः । श्रद्धातव्यम्, अपितु न कथंचिदिति वार्थः ॥ १३५ ॥

**धौतेऽपि कीर्तिधाराभिश्चरिते चारुणि द्विषः ।**
**मृषामषीलवैर्लक्ष्म लेखितुं के न शिल्पिनः ॥**

शत्रुवचसि न विश्वसनीयमित्येतदेवार्थान्तरन्यासेन समर्थयते—

धौतेऽपीति ॥ कीर्तिधाराभिः कीर्तिपूरैर्धौते अत एव चारुणि मनोज्ञे धवले एवंविधेऽपि द्विषश्चरिते मृषामषीलवैरसत्यलक्षणमषीलेशैः कृत्वा लक्ष्म कलङ्कं लेखितुं के जनाः शिल्पिनश्चतुरा न भवन्ति । अपि तु सर्वेऽप्यलीकदोषारोपं कुर्वन्त्येवेति मद्विरोधितयोरेतयोर्वचसि न विश्वसनीयमित्यर्थः । अन्येऽपि शिल्पिनो जलधाराक्षालिते रमणीये कुड्यादौ मष्यादिवर्णकैश्चित्रं लिखन्ति । के द्विषः शिल्पिनो नेति वा ॥ १३६ ॥

**ते सख्यावाचचक्षाते न किंचिद्ब्रूवहे बहु ।**
**वक्ष्यावस्तत्परं यस्मै सर्वा निर्वासिता वयम् १३७**

ते इति ॥ ततस्ते सख्यौ इति आचचक्षाते ऊचतुः। इति किम्—आवामन्यत्किंचिद्बह्वधिकं न ब्रूवहे । किंतु यस्मै प्रयोजाय सर्वा वयं युवाभ्यां गृहाद्बहिर्निष्कासितास्तदेव परं केवलमावां वक्ष्यावो वदिष्यावः। सर्वेषामग्रे 'सुरतार्थं वयं निष्कासिताः' इति कथयिष्यावो न त्वन्यत्किंचिदिति ॥ १३७ ॥

**स्थापत्यैर्न स्म वित्तस्ते वर्षीयस्त्वचलत्करैः ।**
**कृतामपि तथा वाचि करकम्पेन वारणाम् १३८**

स्थापत्यैरिति ॥ ते सख्यौ तथावाचि सुरतार्थं वयं निष्कासिता इति वचने विषये स्थापत्यैः सौविदल्लैर्नपुंसकैः करकम्पेन कृतामपि वारणां निषेधं न वित्तः स्म न जानीतः स्म । यस्माद्वर्षीयस्त्वेनातिवार्धकेन चलन्तः करा येषां तैः । वार्धकातिशयजनितवातदोषवशेन स्वाभाविककरकम्पनभ्रान्त्या कृतमपि निषेधं न वित्तः स्मेत्यर्थः । 'सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते।' इत्यमरः । अतिशयेन वृद्धो वर्षीयान् । ईयसुनि 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ६ । ४ । १५७ । इति वर्षादेशः ॥ १३८ ॥

**अपयातमितो धृष्टे धिग्वामश्लीलशीलताम् ।**
**इत्युक्ते चोक्तवन्तश्च व्यतिद्रान्ति स्म ते भिया ॥**

अपेति ॥ हे धृष्टे अतिनिर्लज्जे सख्यौ, युवामितो गृहादपयातं निर्गच्छतम् । यस्माद्वां युवयोरश्लीलशीलतां ग्राम्यभाषणस्वभावत्वं धिक् निन्द्यमिति तैः स्थापत्यैरुक्ते गदिते ते सख्यौ तेभ्यो मारणभिया व्यतिद्रान्ति स्म पला-

१ अत्रानुप्रासः । २ इदम्पदवाच्ययोः सिंहासनत्वेन रूपणाद्रूपकम् ।

१ अत्र प्रागुक्तार्थस्य समर्थनाय परार्थवचनमित्यर्थान्तरन्यासः ।

यांचक्रतुः। एवमुक्तवन्तस्ते कञ्चुकिनश्च व्यतिद्राते स्म पलायांचक्रुः। तयोः पलायमानयोः पश्चाल्लगन्ति स्म। तयोः संभोगेच्छुतां ज्ञात्वा सखीतर्जनव्याजेन तेऽपि निर्गता इति भावः। ते इति, व्यतिद्राते इति च द्विवचनबहुवचनश्लेषः। इत्युक्ते सतीति वा। व्यतिद्राते वचनत्रयेऽपि तुल्यं रूपम्। द्रातेः परस्मैपदित्वादात्मनेपदं चिन्त्यम्। व्यतिद्रान्ति स्मेति पठनीयम्। इत्युक्ते ते ते उक्तवन्तश्च सर्वे व्यतिद्रान्ति स्मेत्यर्थः॥ १३९॥

**आह स्म तद्गिरा ह्रीणां प्रियां नतमुखीं नलः।**
**ईदृग्भण्डसखीकाऽपि निस्त्रपा न मनागपि॥**

आहेति॥ नलः सुरतार्थं सर्वे वयं निर्वासिता इति सख्योर्गिरा ह्रीणां लज्जिताम्, अत एव—नतमुखीं प्रियामित्याह स्म। इति किम्—ईदृश्योऽश्लीलभाषणशीला भण्डा निर्लज्जाः सख्यो यस्यास्तादृश्यपि का मनागपि निस्त्रपा निर्लज्जा न अपि तु सखीयुक्ता त्वमेव। 'समानशीलव्यसनेषु सख्यम्' इति न्यायादनुरूपयोर्हि सख्यं युक्तमिति त्वमपि लज्जां मुञ्चेति सकामस्य नलस्य वचः। भण्डसखी कापि ईदृक् कलासदृशी न। त्वं तु मनागपि निस्त्रपा नासीति वा। भण्डस्य निर्लज्जत्वं भवत्येव। सखीका, नद्यन्तत्वात्कप्। मनागसीति पाठस्तत्तदावृत्त्याऽपिशब्दो योज्यः॥ १४०॥

**अहो नापत्रपाकं ते जातरूपमिदं मुखम्।**
**नातितापार्जनेऽपि स्यादितो दुर्वर्णनिर्गमः॥१४१**

अहो इति॥ अहो भैमि, ते इदं मुखं जातं रूपं सौन्दर्यं यस्यैवंविधं सदपत्रपाकं गतलज्जं न भवति किंतु सलज्जमेव। स्त्रीणां तु लज्जैव महद्भूषणमित्यर्थः। नापत्रपाकमिति नसमासेनैकपद्यं वा। अथ च—पत्राणां नागवल्लीदलानां पाकः फलभूतः पूगादियोगसंजातो रागः स नास्ति यस्य तदपत्रपाकं तादृशं न भवति ताम्बूलरागसहितमिति यावत्। अत एव—नितरां जातलावण्यम्। अथ च—सुन्दरमपि नापत्रपाकं सलज्जम्। अहो चित्रम्। असुन्दरं हि सलज्जं भवति। स्वं न दर्शयति, इदं तु सुन्दरमपि स्वं न दर्शयतीत्याश्चर्यम्। अथ च—त्रपैवाकं दुःखम्, अपगतं त्रपाकं यस्मात्तदपत्रपाकं तादृग् न भवति लज्जारूपदुःखसहितम्। अत एव न जातं रूपं यस्य। सुरतार्थं सर्वनिर्वासने ताभ्यामुक्ते लज्जातिशयान्मुखं नितरां मलिनं जातं चित्रमेतदित्यर्थः। अथ च—पत्रयोर्मृत्पुटयोर्मध्ये यः पाकः स नास्ति यस्य तादृशमपि न भवति यत्तन्नापत्रपाकम्। कृतपुटपाकमिति यावत्। एवंभूतं सुवर्णमेव तव मुखमहो चित्रम्। मुखस्य सुवर्णत्वमाश्चर्यकारीत्यर्थः। यतः सलज्जम्, अत एवातितरां तापस्य क्रोधाग्नेरर्जने संपादने सत्यपि समक्षमश्लीलभाषणादिना सखीभिः कोपे समुत्पादिते सत्यपीतो मुखात्सकाशाद्दुर्वर्णानां परुषाक्षराणां निर्गमो न स्यात्। कोपे सत्यपि लज्जाबाहुल्यात्सखीः प्रत्यक्षरमपि परुषं न भाषसे,एतदपि चित्रमित्यर्थः। अथ च—कृतपुटपाकसुवर्णसुरूपं यतोऽत एव पुटरहितम्। नितरामग्निदाहे सत्यप्यस्मात्सुवर्णाद्दुर्वर्णस्य रजतस्य निर्गमो न स्यात्। पुटपाकादेव मिश्रितरजतनिर्गमे सति निर्दुष्टस्य शुद्धतरस्य सुवर्णस्य पश्चात्सुतरामग्निदाहे कृतेऽपि दुष्टांशस्य पूर्वमेव गतत्वात्तस्माद्रजतनिर्गमो न भवत्येव। तथातितापार्जनेऽपि ते मुखं दुर्वर्णनिर्गमो नास्त्येवेत्याश्चर्यमित्यर्थः। अत्युत्तमषोडशवर्णकसुवर्णवर्णा परुषभाषिणी चासीति भावः। अपत्रपाकम्, पक्षे 'न कपि १।४।१४।' इति ह्रस्वनिषेधः॥ १४१॥

**तामथैष हृदि न्यस्य ददौ तल्पतले तनुम्।**
**निमिष्य च तदीयाङ्गसौकुमार्यमसिस्वदत्॥**

तामिति॥ अथैष नलः तां हृदि न्यस्य तल्पतले शय्यायां तनुं शरीरं ददौ। पृष्ठेन शय्यां पस्पर्शेत्यर्थः। तदालिङ्गनसुखवशादेव निमिष्य नेत्रे निमील्य तदीयाङ्गसौकुमार्यमसिस्वददनुबभूव च॥ १४२॥

**न्यस्य तस्याः कुचद्वन्द्वे मध्येनीवि निवेश्य च।**
**स पाणेः सफलं चक्रे तत्करग्रहणश्रमम्॥१४३**

न्यस्येति॥ स तस्याः कुचद्वन्द्वे स्वकरं न्यस्य निक्षिप्य, तथा नीवीनां मध्ये नाभिमूले च निवेश्य स्थापयित्वा पाणेः स्वकरस्य तस्याः करग्रहणे विवाहने विषये जातं श्रमं सफलं चक्रे। स्तनजघनादिस्पर्शसुखानुभवादित्यर्थः। एतदेव विवाहफलं यत्स्तनादिस्पर्शसुखानुभवनम्। अथ च—तत्प्रसिद्धं करस्य राजोपदायाः ग्रहणं तज्जनितं स्वपाणेः श्रमं सफलं चक्रे। स्तनादिमर्दनं राजदण्ड इत्यर्थः। अथ च—स्वपाणेर्भैम्याः करेण यद्ग्रहणं निरोधनं तज्जनितं श्रमं सफलं चक्रे। कुचनीविस्पर्शमात्रेण निर्वृत्तो, न त्वङ्गान्तरे करं निवे-

१ अत्रानुप्रासः श्लेषश्च, त्रपैवाकमिति रूपकं च।

शितवान् न च सम्बुभुजे । एतच्चोत्तरत्र सम्भोगनिषेधाल्लभ्यते ॥ १४३ ॥

**स्थापितामुपरि स्वस्य तां हृदा स मुदा वहन् ।**
**तदुद्वहनकर्तृत्वमाचष्ट स्पष्टमात्मनः ॥ १४४ ॥**

स्थापितामिति ॥ स मुदा कामाभिलाषेण स्वस्योपरि स्थापितां वक्षसि निवेशितां तां वहन् ( सुखातिशयाज्जहर्ष इति स्पष्टमुत्प्रेक्षते ।) आत्मनस्तस्या भैम्या उद्वहनं विवाहं प्रति, अथ च—ऊर्ध्वधारणं प्रति कर्तृत्वं स्पष्टमाचष्टे इति शब्दच्छलेनोत्प्रेक्षा ॥ १४४ ॥

**स्विद्यत्कराङ्गुलीलुप्तकस्तूरीलेपमुद्रया ।**
**पूत्कार्यपीडनौ चक्रे स सखीषु प्रियास्तनौ ॥**

स्विद्यदिति ॥ स प्रियास्तनौ स्विद्यन्तीभिः संजातसात्त्विकस्वेदाभिः कराङ्गुलीभिर्लुप्तया कस्तूरीलेपसंबन्धिन्या मुद्रया पत्रवल्लीरचनाविशेषेण कृत्वा सखीषु विषये पूत्कार्यं महाकलकलकथनीयं पीडनं मर्दनं ययोर्याभ्यां वा तथा चक्रे । भैमीकुचयुगले स्वरचितां कस्तूरीपत्रवल्लीरचनां प्रोञ्छितां दृष्ट्वा प्रियेण गाढमेतौ पीडिताविति अन्योन्यमुच्चैः कलकलं सख्यो यथा कुर्वन्ति वृत्तं कुचमर्दनं स्वयमेव जानन्ति तथा तत्कुचौ ममर्देति भावः । लोकेऽपि स्वकृतां मुद्रां लुप्तां दृष्ट्वान्यथाभावशङ्कयोच्चैः पूत्कारं कुर्वन्तीति ॥ १४५ ॥

**तत्कुचे नखमारोप्य चमत्कुर्वंस्तयेक्षितः ।**
**सोऽवादीत्तां हृदिस्थं ते किं मामभिनदेष न ॥**

तदिति ॥ तस्याः कुचे नखमारोप्य निखाय स्वयमेव चमत्कुर्वन्नङ्गसंकोचाभिनयपूर्वं शङ्कमानः नखक्षतपीडाविशेषादेव तया किंचित्कोपेनेक्षितः स तामवादीत्—हे भैमि, एष नखस्ते हृदिस्थं मां किं नाभिनद्, अपि तु—मामपि व्यदारयदेव । अन्यथा कथं त्वदीये हृदि नखे क्षिप्ते ममाङ्गचमत्कार इति ॥ १४६ ॥

**अहो अनौचितीयं ते हृदि शुद्धेऽप्यशुद्धवत् ।**
**अङ्कः खलैरिवाकल्पि नखैस्तीक्ष्णमुखैर्मम ॥**

अहो इति ॥हे भैमि, तीक्ष्णमुखैर्नापितकल्पितशिताग्रैर्मम नखैः शुद्धे निष्कपटे हृदि अशुद्धं रुधिरं वर्तते त्र तद्यथा तथाऽङ्को मयूरपदादिचिह्नमकल्पि अकारीति यत्, सेयं महती अनौचिती अहो चित्रम् । कैरेव—दोषारोपरूपपरुषभाषणवशात्तीक्ष्णमुखैर्दुःसहवदनैः खलैरिव । यथा—खलैः शुद्धेऽपि पुरुषे अशुद्धवत्सदोषपुरुष इवाङ्को दोषारोपः कल्प्यते, सा यथानौचिती । नखक्षतेन रुष्टायाः स्वेनैव नखानामनौचित्यप्रकटनव्याजेन प्रसादनामकरोदित्यर्थः । अशुद्धवदिति पक्षे सप्तमीसमर्थाद्वतिः ॥ १४७ ॥

**यच्चुम्बति नितम्बोरु यदालिङ्गति च स्तनौ ।**
**भुङ्क्ते गुणमयं तत्ते वासः शुभदशोचितम् ॥**

यदिति ॥ हे भैमि, गुणमयं सूक्ष्मश्लक्ष्णतरतन्तुकं ते वासः नितम्बोरु जघनमूरू च यद्यस्माच्चुम्बति स्पृशति, तथा यस्माच्च ते स्तनौ आलिङ्गति तत्तस्मात्कारणाच्छुभानां रमणीयानां दशानां प्रान्ततन्तूनां यद्योग्यमुचितं तद्भुङ्क्ते तादृशं भोगमनुभवतीत्यर्थः।यत्तदौ वासोविशेषणे वा। अथ च—यो गुणमयः शौर्यौदार्यादिगुणपूर्णः निर्दोषश्च शुभाया दशायाः पूर्वाचरितपुण्यपाकोपनतशुभग्रहयोगानुकूलसमयविशेषस्योचितं भोगं लभते स एव सुन्दरतररमणीनितम्बोरुचुम्बनं तत्कुचालिङ्गनं च लभते नान्य इति । त्वन्नितम्बादिचुम्बनकारिणो मत्तोऽपि वसनमेव धन्यमिति । नितम्बोरु, प्राण्यङ्गत्वादेकवद्भावः ॥ १४८ ॥

**लीनचीनांशुकं स्वेदि दरालोक्यं विलोकयन् ।**
**तन्नितम्बं स निश्वस्य निनिन्द दिनदीर्घताम् ॥**

लीनेति ॥ सात्त्विकस्वेदवशादतिसूक्ष्मत्वात्स्वच्छीभूय लीनं संलग्नं चीनं नेत्राख्यमंशुकं यत्र, तथा—स्वेदि सात्त्विकस्वेदयुक्तम्, अत एव—दरालोक्यमीषद्दृश्यं तस्या नितम्बं विलोकयन् स कामोन्मत्तो भूत्वा निश्वस्य दिने सुरतनिषेधान्निराशतया निश्वासमोचनेन दुःखमभिव्यज्य दिनस्य दीर्घतां कथं वा दिनं शीघ्रं गमिष्यतीति निनिन्द । सुरतार्थं दिनावसानमभिललाषेत्यर्थः। कामपरवशत्वात्संभोगेच्छुरभूत्, दिवा तन्निषेधाच्च सुरते सहसा न प्रवृत्त इति भावः ॥ १४९ ॥

---

१ स्पष्टमित्युत्प्रेक्षा । २ अत्रानुप्रासः ।

१ खलैरिवेत्युपमा । २ एकस्य वाससोऽनेकेषां प्रकृतानांचुम्बनादीनां कर्तृत्वेन निबन्धनात्तुल्ययोगिता । यत्तद्भ्यां हेतुहेतुमद्भावोपन्यासोक्तेः काव्यलिङ्गं,वाससोश्चुम्बनादिक्रियाकारित्वेन साम्यात्समासोक्तिः । ३ इदं च व्याख्यानं 'आत्मवित्सह तया दिवानिशं भोगभागपि न पापमाप सः । आहता हि विषयैकतानता ज्ञानधौ-

**देशमेव ददंशासौ प्रियादन्तच्छदान्तिकम् ।**
**चकाराधरपानस्य तत्रैवालीकचापलम् १५० ॥**

देशमिति ॥ असौ प्रियाया दन्तच्छदोऽधरस्तस्यान्तिकं समीपवर्तिनं देशं कपोलचिबुकादिभागमेव पूर्वं दशनैर्ददंश । अनन्तरं तत्रैवाधरसमीपदेश एव अधरोपान्तस्थापितमुख एवाधरपानस्यालीकमेव चापलं पुनः पुनरोष्ठचालनचुंकारादित्वरां चकार । चापलस्यालीकत्वं च तादृगभिनयमात्रकरणात्तात्त्विकचापलकरणेऽप्यधरसंबन्धाभावाज्ज्ञेयम् । सम्भुमुक्षातिशयाद्यावता क्षणेनाधरश्चुम्बितुं प्राप्यते तावन्तमपि विलम्बं सोढुमशक्तः सन्नयमधर एवेति भ्रान्त्या वाऽधरोपान्तदेश एव दंशादि चकारेति भावः । अतिरिंसोरियं जातिः ॥ १५० ॥

**न क्षमे चपलापाङ्गि सोढुं स्मरशरव्यथाम् ।**
**तत्प्रसीद प्रसीदेति स तां प्रीतामकोपयत् ॥**

नेति ॥ स परिहासादिवशादालिङ्गनादिवशाच्च पूर्वं प्रीतां प्रसन्नामपि तामित्युक्त्वाऽकोपयत् । इति किम्—हे चपलापाङ्गि, अहं स्मरशरव्यथां सोढुं न क्षमे न शक्तोऽस्मि यतः, तत्तस्मात्त्वं मम प्रसीद प्रसीद मह्यं सुरतं देहि देहि । दिने रन्तुमनुचितत्वात्कोपव्याजेनापि दिनं गमयितुं तामकोपयदित्यर्थः । प्रसादनमपि कोपं विना न संभवतीति कोपसंपादनम् । शरव्यतामिति च पाठः । चपलापाङ्गि 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीष् ॥ १५१ ॥

**नेत्रे निषधनाथस्य प्रियाया वदनाम्बुजम् ।**
**ततः स्तनतटौ ताभ्यां जघनं घनमीयतुः १५२**

नेत्रे इति ॥ निषधनाथस्य नेत्रे पूर्वं प्रियाया वदनाम्बुजम्, ततोऽनन्तरं स्तनतटौ, ततोऽनन्तरं च ताभ्यां स्तनतटाभ्यां सकाशात् घनं पीवरं जघनमीयतुः प्रापतुः । सुरतौत्सुक्यात्सादरं वदनादिक्रमेणालोकयदिति भावः । अम्बुजतटघनपदैः सादरावलोकनार्हत्वं सूचितम् । घनपदं सादरावलोकनद्योतनार्थं क्रियाविशेषणत्वेन सर्वत्र वा योज्यम् ॥ १५२ ॥

**इत्यधीरतया तस्य हठवृत्तिविशङ्किनी ।**
**झटित्युत्थाय सोत्कण्ठमसावन्वसरत्सखीः १५३**

इतीति ॥ इत्येवं वदनादिविलोकनपूर्वं जघने चिरकालं सादरदृष्टिस्थापनद्वाराऽधीरतया रतौत्सुकतया हठवृत्तौ बलात्सुरतारम्भे विशङ्किनी विशेषतः शङ्कमाना संभावयन्ती असौ झटिति मञ्चादुत्थाय चिरनिर्गतसखीगवेषणाय सोत्कण्ठं यथातथा कलाद्याः सखीरन्वसरत् । सख्यनुसरणोत्कण्ठाव्याजेन प्रियसुरतारम्भं पर्यहार्षीदिति भावः । अतितरां रसपरवशता दोषाय, रसत्यागश्च नायकस्य नीरसतामेवापादयतीति तदुभयपरिजिहीर्षया रसान्तरद्वारेण संभोगशृङ्गारं परां काष्ठां प्रापयितुं श्रीहर्षेण भैमीनलयोर्भिन्नदेशावस्थायित्वकथनोपक्रमः कृतः ॥ १५३ ॥

**न्यवारीव यथाशक्ति स्पन्दं मन्दं वितन्वता ।**
**भैमीकुचनितम्बेन नलसम्भोगलोभिना १५४**

न्यवारीति ॥ नलसम्भोगलोभिना भैमीकुचनितम्बेन मन्दं शनैः स्पन्दं गमनं वितन्वता स्वीयपीवरतातिशयेन शीघ्रं गन्तुमददता सता भैमी,यथाशक्ति शक्तिमनतिक्रम्य शीघ्रगमनप्रतिबन्धकत्वरूपनिजशक्त्यनुसारेणेतो रतिगृहाद्बहिस्त्वया न निर्गन्तव्यमिति न्यवारीव न्यषेधीव । निर्गताऽपि स्तननितम्बभराक्रान्तत्वाच्छीघ्रं गन्तुं न शशाकेति भावः । कुचनितम्बेन, प्राण्यङ्गत्वादेकवद्भावः । लोभिना, अत इनिः ॥ १५४ ॥

**अपि श्रोणिभरस्वैरां धर्तुं तामशकन्न सः ।**
**तदङ्गसङ्गजस्तम्भो गजस्तम्भोरुदोरपि १५५॥**

अपीति ॥ स श्रोणिभरेण नितम्बभराक्रान्तत्वेन स्वैरां मन्दगामिनीमपि समीपे गच्छन्तीमपि तां स्वयं गजबन्धनस्तम्भवदुरू दीर्घौ पीवरौ च दोषौ बाहू यस्यैवंभूतोऽपि सन्नङ्कपाल्या धर्तुं नाशकत् । यतः—तस्या अङ्गसङ्गाज्जघनाद्यङ्गस्पर्शाज्जातो निष्क्रियत्वरूपसात्त्विकभावः स्तम्भो यस्य सः । सात्त्विकस्तम्भवशात्तां धर्तुं नाशकदित्यर्थः ।

—तमनसं न लिम्पति' (१८सर्गे २) इति प्रागुक्तविरोधाच्चिन्त्यम् । तस्मादस्य ग्रीष्मर्तुपरतया व्याख्यानं कल्पयित्वा यथाकथंचिद्योजना कार्या इति दाधिमथाः अत्रानुप्रासः । निन्दने हेतुः स्वेदादिदर्शनमिति काव्यलिङ्गं च । १ प्रीतायाः कुपितत्वासम्भवेऽपि सत्योक्तिर्विरुद्धैवेति विरोधाभासः ।

१ वदनाम्बुजमित्युपमा । २ अत्रानुप्रासः, नलसम्भोगलोभित्वेऽपि साक्षात्सम्भोगनिवारणासम्भवान्न्यवारीवेत्युत्प्रेक्षा ।

भरास्वैरामिति पाठे—श्रोणिभरनिमित्तमस्वैरा स्वाधीना न भवति तदधीनैव तादृशीमित्यर्थः १५५ ॥

**आलिङ्ग्यालिङ्ग्य तन्वङ्गि मामित्यर्धगिरं प्रियम्।**
**स्मित्वा निवृत्य पश्यन्ती द्वारपारमगादसौ ॥**

आलिङ्ग्येति ॥ असौ भैमी इति पूर्वोक्तप्रकारेणार्धगिरं वाक्यशेषं वक्तुमसमर्थं प्रियं नलं स्मित्वाऽधीरतरत्वेन हसित्वा निवृत्य परावृत्य वलितग्रीवं पश्यन्ती सती द्वारस्य पारं देहलीबहिःप्रदेशमगात्। इति किम्—हे तन्वाङ्गि, प्रियं मामालिङ्ग्यालिङ्ग्येत्यपरिपूर्णा वाणी यस्य तमित्यर्थः।कामोन्मादबाहुल्येन गद्गदभिन्नस्वरतया आलिङ्ग्यालिङ्ग्य मां सुखय पश्चाद्गच्छेति वाक्यशेषः। स्मितादयःसंभोगश्रृङ्गाररसाङ्गीभूततयाऽलंकाराः॥१५६॥

**प्रियस्याप्रियमारभ्य तमन्तर्दूनयाऽनया।**
**शेके शालीनयाऽऽलिभ्यो न गन्तुं न निवर्तितुम्॥**

प्रियस्येति ॥ प्रियस्य तत्संभोगप्रातिकूल्यलक्षणमप्रियमारभ्य कृत्वा तद्वशादेवान्तर्हृदये दूनयोपतप्तया। प्राप्तपश्चात्तापयेति यावत्। द्वारबहिर्देशं प्राप्तयाऽप्यनया प्रियस्यानभीप्सिताचरणानन्तरं तस्य प्रसादमकृत्वैव सखीः प्रति गन्तुमयुक्तमिति विचार्याऽऽलीभ्यः सखीः प्रति गन्तुं न शेके न समर्थीभूतम्। तत्रैव तस्थावित्यर्थः। सखीभ्यः सकाशान्निवर्तितुं नलं प्रति परावर्तितुमपि न शेके। यतः—शालीनयाऽधृष्टयाऽतिसलज्जया अस्मदुद्देशेनागताऽपि सुरतार्थं प्रियं प्रति पुनर्गतेति सख्यो वदिष्यन्ति, तथा च लज्जा स्यादिति प्रिया पुनर्न निवृत्तेत्यर्थः। नलविषयैव वा लज्जा क्षणमात्रं मार्गमध्ये चिन्तावशात्तूष्णीं स्थितेति भावः। आलीभ्यः, 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि २।३।१२।' इति चतुर्थी, निवृत्तिं प्रत्यपादानत्वात्पञ्चमी च ॥ १५७ ॥

**अचकथदथ बन्दिसुन्दरी द्वाः-**
**सविधमुपेत्य नलाय मध्यमह्नः।**
**जय नृप दिनयौवनोष्मतप्ता-**
**ऽऽप्लवनजलानि पिपासति क्षितिस्ते॥१५८**

अचकथदिति ॥ अथ परिहासपूर्वं भैमीबहिर्निर्गमनानन्तरं पुरुषस्यान्तः प्रवेष्टुमशक्तत्वादवसरज्ञापकवचनस्यावश्यं श्रावणीयत्वाद्बन्दिसुन्दरी विदग्धमागधवनिता द्वाःसविधं द्वारदेशसमीपमुपेत्य इति अह्नो मध्यं मध्याह्नमचकथत्। व्यज्ञापयदित्यर्थः। इति किम्—हे नृप, जय सर्वोत्कर्षेण वर्तस्व। दिनस्य यौवनं मध्याह्नस्तत्संबन्धिनोष्मणा तप्ता आतपसन्तापेन कृत्वा संतापवती क्षितिस्ते आप्लवनजलानि माध्याह्निकस्नानजलानि पिपासति पातुमिच्छति। अचकथत्, ण्यन्ताच्चङ्। अकथयदिति पाठे—लङ्। नलाय 'क्रियया यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानत्वम् ॥ १५८ ॥

**उपहृतमधिगङ्गमम्बु कम्बु-**
**च्छवि तव वाञ्छति केशभङ्गिसङ्गात्।**
**अनुभवितुमनन्तरं तरङ्गा-**
**समशमनस्वसृमिश्रभावशोभाम् १५९॥**

उपेति ॥ अधिगङ्गं गङ्गामधिकृत्य वर्तमानमुपहृतं भागीरथ्याः सकाशादानीतं कम्बुच्छवि शङ्खधवलमम्बु तव कृष्णतरकुटिलकेशपाशस्य भङ्गिभिः कुटिलभावैः सह सङ्गात्संबन्धादनन्तरं सम्बन्धे जाते तरङ्गैः कृत्वाऽसमा अतुल्यरूपा विषमा वाऽतिकृष्णा शमनस्वसा यमभगिनी यमुना तया सह मिश्रभावेन मिलितत्वेन संगमे या शोभा तां गङ्गायमुनासंभूतप्रयागकामनीयकमनुभवितुं प्राप्तुं वाञ्छति। शुभ्रतरजलस्य कृष्णतरकेशपाशसङ्गे सति प्रयागजलशोभा भविष्यतीति गङ्गाजलेच्छां पूरय। माध्याह्निकस्नानं कुर्विति भावः। अधिगङ्गम्, विभक्त्यर्थेऽव्ययीभावः ॥ १५९ ॥

**तपति जगत एव मूर्ध्नि भूत्वा**
**रविरधुना त्वमिवाद्भुतप्रतापः।**
**पुरमथनमुपास्य पश्य पुण्यै-**
**र्धारितमेनमनन्तरं त्वदीयैः॥ १६०॥**

तद्वतीति ॥ हे राजन्, अद्भुतोऽसह्यः प्रकृष्टस्तापः करौष्ण्यं यस्य स रविरधुना मध्याह्नसमये जगत एव

---

१ अत्रानुप्रासः, स्तम्भो इति यमकं च। २ अत्रानुप्रासः। ३ अत्रानुप्रासः।

१ इतः प्रभृति श्लोकत्रये पुष्पिताग्राछन्दः, तल्लक्षणं चोक्तं प्राक्। अत्रानुप्रासः। क्षितेः पिपासेव भैम्याः पिपासेतिप्रतीते निदर्शना। २ अत्रानुप्रासः। निदर्शनाचार्थालङ्कारः।

तस्य चीनसिचयैरपि बद्धा
पद्धतिः पदयुगात्कठिनेति ।
तां व्यधत्त शिरसां खलु माल्यै
राजराजिरभितः प्रणमन्ती ॥ २ ॥

तस्येति ॥ खल्वितीव हेतोरभितः पार्श्वद्वयेऽपि प्रणमन्ती राजराजिर्नृपपरम्परा तां चीनसिचयैर्बद्धामपि पद्धतिं शिरसां माल्यैः शिरसि धृताभिः पुष्पमालाभिः व्यधत्त आच्छादयति स्म । इति किम्—चीनसिचयैर्देशविशेषोद्भवैः सूक्ष्ममृदुभिर्वस्त्रैर्बद्धा सज्जिता छादितापि सती पद्धतिस्तस्य नलस्य पदयुगात्सकाशात्कठिनेति । मृदुतरयोर्हि चरणयोर्मृदुतरपुष्पवद्धायां भुवि गमनं युक्तम् । शिरोधृतपुष्पस्रंसनं यावद्भवति तावत्पर्यन्तं तस्य सादरं दण्डवत्प्रणामं सर्वेऽपि चक्रुरित्यर्थः ॥ २ ॥

द्रागुपाहियत तस्य नृपैस्त-
द्दृष्टिदानबहुमानकृतार्थैः ।
स्वस्य दिश्यमथ रत्नमपूर्वं
यत्नकल्पितगुणाधिकचित्रम् ॥ ३ ॥

द्रागिति ॥ अथ प्रणामानन्तरं तेन कृतं दृष्टिदानं नेत्रनिरीक्षणं तल्लक्षणेन बहुमानेन कृतार्थैः सफलश्रमैर्नृपैर्दिशि भवं दिश्यं स्वस्य दिश्यं स्वीयदेशभवं तत्रान्यत्र वा पूर्वं दुर्लभमत्युत्तमम्, तथा—यत्नेन बुद्धिपूर्वं शिक्षावशेन कल्पितैरारोपितैर्वृत्तत्वोज्ज्वलत्वातिरमणीयकत्वादिगुणविशेषैरधिकं नितरां चित्रमाश्चर्यरूपं सहजैराहितैश्च गुणैरतितरामाश्चर्यकारिमणिमुक्ताकारितुरगादिरत्नं वस्तु तस्य द्राक् शीघ्रं प्रणामानन्तरमव्यवहितमेवोपाह्रियतोपदीकृतम् । तत्रोपदीकृते रत्नजाते दृष्टिदानमेव बहुमान इति वा । केनेदमानीतमित्यादरप्रश्नपूर्वं तेषु राजस्वपि दृष्टिदानमेवेति वा । स्वस्वेतिपाठे—स्वं स्वं च तद्दिश्यं चेत्यर्थः । यत्रेति पाठे—यत्कल्पितगुणाधिकचित्रं न भवति, किन्तु स्वाभाविकगुणाधिकचित्रमेव, तद्रत्नमिति सम्बन्धः, दिश्यम् । भवार्थे दिगादित्वाद्यत् । देश्यमिति पाठेऽपि । रत्नं जातावेकवचनम् । एवमुत्तरश्लोकेऽपि ॥ ३ ॥

अङ्गुलीचलनलोचनभङ्गि-
भ्रूतरङ्गविनिवेदितदानम् ।
रत्नमन्यनृपढौकितमन्ये
तत्प्रसादमलभन्त नृपास्तत् ॥ ४ ॥

अङ्गुलीति ॥ अन्ये चिरकालसेविनस्तदानीमेवागता वा नृपा अन्यनृपैर्ढौकितमुपदीकृतं तत्पूर्वोक्तं मणिमुक्तादिरत्नजातमेव तस्य नलस्य प्रसादं पारितोषिकं दानमलभन्त । किंभूतम्—अङ्गुलीचलनेन लोचनभङ्ग्या प्रसादसूचकनेत्रवीक्षणविशेषेण भ्रूतरङ्गेण च एतस्मै एतत्, एतस्मै एतद्देहीति सेवकान् प्रति एतत्त्वं गृहाण, एतत्त्वं गृहाणेति राज्ञः प्रत्येव वा विशेषेण निवेदितं दानं यस्य । अन्यैरानीतमन्येभ्यो दत्तवान्, न तु कोशागारे निवेशितवानित्यनेनौदार्यातिशयश्चातुर्यं च सूच्यते । चतुरो हि तदीयमेव तस्मै न ददाति अङ्गुल्यादिचालनेन दाननिवेदनमीश्वरजातिः ॥ ४ ॥

तानसौ कुशलसूनृतसेकै-
स्तर्पितानथ पितेव विसृज्य ।
अस्त्रशस्त्रखुरलीषु विनिन्ये
शैष्यकोपनमितानमितौजाः ॥ ५ ॥

तानिति ॥ अथ नूतनागतराजकृतोपदादानानन्तरं चिरागतराजभ्यो वितरणानन्तरमसौ अमितौजा अतुल्यपराक्रमो नलो नूतनागतान्राज्ञः कुशलसूनृतसेकैः कुशलप्रश्नसंबन्धिसत्यप्रियवचनामृतसेचनैः 'भवतां राष्ट्रे देहे च कुशलं, भवतां कार्यं करिष्यामि' इत्येवंरूपैः कृत्वा तर्पितान् प्रीणितान् सबहुमानं स्वशिबिरं प्रति विसृज्य शैष्यकेण शिष्यभावेन प्रयोजकेनोपनमितान्समीपमागतानस्त्रादिशिक्षार्थं समीपमागतानन्यान्नृपानस्त्राण्याग्नेयादीनि, शस्त्राणि बाणादीनि तेषां खुरलीषु हस्तचरणादिसंस्थानचातुरीविशेषेषु विनिन्ये । तद्विषयकौशलमशिक्षयदित्यर्थः । क इव—पितेव । शैष्यकेति भावे 'योपधाद्गुरूपोत्तमाद्वुञ् ५।१।१३२।' इति वुञ् । शिष्यतेति च पाठः ॥ ५ ॥

मर्त्यदुष्प्रचरमस्त्रविचारं
चारुशिष्यजनतामनुशिष्य ।

---

१ अत्रानुप्रासः । खल्वित्युत्प्रेक्षा च । २ अत्रानुप्रासः । दृष्टिदानस्यैव बहुमानत्वेन रूपणाद्रूपकम् ।

१ अत्रानुप्रासः । पूर्ववच्च ढौकितस्यैव प्रसादत्वेन रूपणाद्रूपकम् । २ सेककर्तृत्वौचित्या सूनृतानाममृतत्वं नलस्य तद्दर्पित्वं च व्यज्यते ।

स्वेदविन्दुकितगोधिरधीरं
स श्वसन्नभवदाप्लवनेच्छुः ॥ ६ ॥

मर्त्येति॥स नळ आप्लवनेच्छुः जलावगाहनाय साभिलाषोऽभवत् । किंभूतः-मर्त्येषु दुष्प्रचरमविद्यमानप्रसरं मर्त्यैर्दुःप्रचर्यतेदुःप्रचरंनलव्यातिरिक्तैर्मर्त्यमात्रैरज्ञाताशेषविशेषमाग्नेयाद्यास्त्रणां विचारं मोक्षोपसंहारोपायप्रकारविशेषं चारु: प्रौढप्रतिभः शिष्यजनस्तत्समूहं, चारु सम्यग्वाऽनुशिष्य शिक्षयित्वा स्थितः, अनन्तरं श्रमवशाज्जाता ये स्वेदविन्दुकास्ते संजाता यस्य तादृशो गोधिर्ललाटं यस्य, अत एव—धीरं दीर्घं न धीरमधीरमल्पं श्वसन् । विन्दुकेत्यल्पार्थे कन् । 'तदस्य सञ्जातं तारकादिभ्य इतच् । ५ । २ । ३६' इतीतच् । 'ललाटमलिकं गोधिः' इत्यमरः ॥ ६ ॥

यक्षकर्दममृदून्मृदिताङ्गं
प्राक्कुरङ्गमदमीलितमौलिम् ।
गन्धवारिभिरनुबन्धितभृङ्गै-
रङ्गनाः सिषिचुरुच्चकुचास्तम् ॥ ७ ॥

यक्षेति ॥ उच्चकुचा अङ्गनास्तं बहलपरिमलेन अनुबन्धिता मिलन्तो भृङ्गा येषु तैर्गन्धवारिभिः कर्पूरवासितजलैः सिषिचुः । अभ्यङ्गस्नानमकारयन्नित्यर्थः । किंभूतम्—प्राक् पूर्वं कर्पूरागरुकस्तूरीचन्दनकक्कोलचूर्णरूपेण यक्षकर्दमेन सुगन्धिद्रव्येण कृत्वा मृदु यथा तथा शनैर्मृदितमङ्गं यस्य पश्चात्कुरङ्गमदेन कस्तूरिकया मीलितः संबन्धं प्रापितो मौलिर्यस्य । कस्तूरिकानिर्वासिततैलशिरसमिति यावत् । 'तथा कर्पूरमगुरुः कस्तूरी चन्दनं तथा । कक्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः ॥' इति गरुडपुराणम् ॥ ७ ॥

भूभृतं पृथुतपोघनमाप्त-
स्तं शुचिः स्नपयति स्म पुरोधाः ।
संदधज्जलधरस्खलदोघ-
स्तीर्थवारिलहरीरुपरिष्टात् ॥ ८ ॥

भूभृतमिति ॥ अभ्यङ्गस्नानानन्तरं शुचिः साचारः आप्तो हितः परम्परायातः पुरोधाः जलधराज्जलपूर्णात्स्वर्णकलशात्स्खलन् पतन् ओघः सन्ततधारापरम्परा यासां ताः प्रयागादितीर्थवारीणां लहरीस्तरङ्गानुपरिष्टात्संदधत् प्रक्षिपन्त्सन् पृथुना तपसा चान्द्रायणादिजन्येन पुण्येन घनं पूर्णं तं भूभृतं नलं स्नपयति स्म । पूर्वमुष्णोदकस्नानेन शरीरशुद्धिं कारयित्वा संकल्पपूर्वं शीतलोदकेन वेदोक्तमन्त्रस्नानमकारयदिति भावः । शुचिराषाढः । पृथुना तपसा माघमासेनाघनं माघमारभ्य वृक्षाणां गलितपत्रत्वादगहनम् , एवंभूतं पर्वतमभिषिञ्चतीति वा । 'तपा माघे इति 'शुचिस्त्वयम् । आषाढे' इति चामरः ॥ ८ ॥

प्रेयसीकुचवियोगहविर्भु-
ग्जन्मधूमविततीरिव बिभ्रत् ।
स्नायिनः करसरोरुहयुग्मं
तस्य गर्भधृतदर्भमराजत् ॥ ९ ॥

स्नानक्रममाह—

प्रेयसीति ॥ स्नायिनो मन्त्रवत्तीर्थजलावगाहनस्नानविधिना स्नानं कुर्वाणस्य तस्य करसरोरुहयुग्मं गर्भयोस्तर्जनीकनिष्ठान्तरालयोर्धृतौ दर्भौ येनैवंभूतमराजत् शुशुभे । किंभूतमिव—उत्प्रेक्षते—प्रेयस्याः कुचवियोग एव हविर्भुक् तस्माज्जन्म यासां ता धूमवितती-र्बिभ्रदिव । दर्भाणां श्यामत्वाद्धूमतातित्वं युक्तम् ॥ ९ ॥

कल्प्यमानममुनाऽऽचमनार्थं
गाङ्गमम्बु चुलुकोदरचुम्बि ।
निर्मलत्वमिलितप्रतिबिम्ब-
द्यामयच्छदुपनीय करे नु ॥ १० ॥

कल्प्येति ॥ अमुना आचमनमर्थः प्रयोजनं यस्य आचमनं कर्तुं वा कल्प्यमानं स्वीक्रियमाणं चुलुकोदरचुम्बि चुलुकमध्यवर्ति गाङ्गमम्बु कर्तृ निर्मलत्वेन मिलितः स्वस्मिञ्जातः प्रतिबिम्बो यस्यास्तां द्यां स्वर्गमुपनीय समीपां कृत्वा हस्तप्राप्यां कृत्वा करेऽयच्छत् । 'दाण् दाने' । नु उत्प्रेक्षायाम् । स्नानप्रारम्भाचमनं चचारेत्यर्थः । अन्यदपि दुर्लभं वस्तु हस्ते आनीय दीयते ॥ १० ॥

---

१ अत्रानुप्रासः । स्वेदित्वस्य स्नाने च्छाऽऽधायकत्वेन स्वेदेत्यादौ परिकरः । २ अत्राप्यनुप्रासः, परिकरश्च ।

१ अत्राप्यनुप्रासः परिकरश्च । २ अत्राप्यनुप्रासः । बिभ्रदिवेत्युत्प्रेक्षा । ३ अत्राप्यनुप्रासः, न्वित्युत्प्रेक्षा, परिकरश्च ।

मुक्तमाप्य दमनस्य भगिन्या
　भूमिरात्मदयितं धृतरागा ।
अङ्गमङ्गमनुकं परिरेभे
　तं मृदो जलमृदूर्गृहयालुम् ॥ ११ ॥

मुक्तमिति ॥ भूमिरात्मनो भूपतित्वाद्दयितं प्रियं भर्तारं नलं स्नानकाले दमनस्य भगिन्या भैम्या मुक्तं विरहितमाप्य लब्ध्वा धृतो रागो, लौहित्यं यया, अथ च—सानुरागा सती ऊषरादिमृत्तिकानिषेधात्तत्परिहाराय जलस्पर्शमात्रेण मृदूः शिथिलावयवाः मृदुतरस्पर्शाः स्नानार्थमानीता मृदो गङ्गादिमृत्तिका ग्रहयालुं गृह्णन्तमनुकमात्मनः कामुकं तमङ्गमङ्गं परिरेभे आलिलिङ्ग । श्रौतमार्गेण ललाटाद्यङ्गेषु रक्तमृत्तिकालगनव्याजेनान्यदा दुष्प्रापं स्ववल्लभं भूमिरालिलिङ्गेति भावः । प्रतीयमानोत्प्रेक्षा । अन्यापि सपत्नीमुक्तं वल्लभं चिरात्प्राप्य सानुरागा सती प्रत्यङ्गमालिङ्गति । कं सुखम् अनु लक्ष्यीकृत्य सुखोद्देशेनालिलिङ्गेति वा । 'शुक्ला विप्रस्य, रक्ता क्षत्रियस्य, मिश्रा विशः, कृष्णा शूद्रस्य' इति स्मृतिः । अनुकम्, 'अनुकाभिकाभीकः कमिता । ५ । २ । ७४ ।' इति साधुः । 'अनु किम्' इति पाठे—सर्वाण्यङ्गानि लक्ष्यीकृत्य परिरेभे किमित्यर्थः ॥ ११ ॥

मूलमध्यशिखरस्थितवेधः-
　शौरिशम्भुकरकाङ्घ्रिशिरःस्थैः ।
तस्य मूर्ध्नि चकरे शुचि दर्भै-
　र्वारिवान्तमिव गाङ्गतरङ्गैः ॥ १२ ॥

मूलेति ॥ साग्रमूलैस्त्रिभिरगर्भैर्दर्भैस्तस्य मूर्ध्नि शुचि निर्मलं कुत्राप्यसम्बन्धात्पवित्रतरं च मार्जनमन्त्रं तत्सम्बन्धि वारि चकरे विक्षिप्तम् । 'कॄ विक्षेपे' । किम्भूतैः ( किम्भूतमिव )—'कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः । कुशाग्रे शंकरं विद्यात्त्रयो देवाः कुशस्थिताः ॥' इति वचनान्मूले मध्ये शिखरेऽग्रे च स्थितानां वेधःशौरिशम्भूनां ब्रह्मविष्णुहराणां क्रमेण करके कमण्डलौ, अङ्घ्रौ पादाम्बुजे, शिरसि च गङ्गा सर्वदेति पुराणप्रामाण्यात्स्थितैरेवंप्रकारेण दर्भेषु संभवद्भिर्गङ्गासंबन्धिभिस्तरङ्गैर्वान्तमिवोद्गीर्णमिव । कुशमूलादिस्थितब्रह्मादिदेवत्रयकरकादीनिष्ठगङ्गातरङ्गभ्रष्टैरिव पवित्रैर्दर्भाग्रजलैः स्नानाङ्गभूतमार्जनमकरोदित्यर्थः । 'कमण्डलौ च करकः' इत्यमरः । वान्तम्, उदित्त्वात् क्त्वायां वेट् इति 'यस्य विभाषा । ७ । २ । १५ ।' इति निष्ठाया इण्निषेधः ॥ १२ ॥

प्राणमायतवतो जलमध्ये
　मञ्जिमानमभजन्मुखमस्य ।
आपगापरिवृढोदरपूरे
　पूर्वकालमुषितस्य सितांशोः ॥ १३ ॥

प्राणमिति ॥ सुवर्णघटितमहापात्रस्थतीर्थत्वोपकल्पितसमन्त्रककरकृतावगाहनजलमध्ये 'गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् । प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः' इति याज्ञवल्क्योक्तलक्षणलक्षितं प्राणमायतवतः प्राणायामं कृतवतः । जलमध्ये मुखं नम्रीकृत्य कनिष्ठाङ्गुष्ठनासामुखश्वासनिरोधपूर्वमघमर्षणं कृतवत इति यावत् । एवंभूतस्य नलस्य जलान्तर्वर्तिमुखमापगानां परिवृढस्य स्वामिनः समुद्रस्योदरपूरे गर्भप्रवाहमध्ये मन्थनात्पूर्वकालमुषितस्य कृतवासस्य सितांशोश्चन्द्रस्य मञ्जिमानं सौन्दर्यमभजत् । सागरोदरस्थचन्द्रसदृशमभूदित्यर्थः । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरोक्तेः प्राणशब्दस्य बहुवचनान्तत्वनियमादेकवचनं कथमिति चेत् 'हृदि प्राणो गुदेऽपानः' इत्यादावेकवचनान्तत्वमपि इति शिष्टाचारेणावधेयम् । आयतवतः, यमेः क्तवतुः । पूर्वकालम् 'कालाध्वनोरत्यन्तसंयोगे २ । ३ । ५ ।' इत्यत्यन्तसंयोगे द्वितीया ॥ १३ ॥

मर्त्यलोकमदनः सदृशत्वं
　बिभ्रदभ्रविशदद्युतितारम् ।
अम्बरं परिदधे विधुमौलेः
　स्पर्धयेव दशदिग्वसनस्य ॥ १४ ॥

मर्त्येति ॥ मर्त्यलोके मदनो नलः दश दिश एव वसनं यस्य दिगम्बरस्य विधुमौलेश्चन्द्रशेखरस्य स्पर्धयेवाम्बरं वस्त्रम्, अथ च—गगनं परिदधे । अत्र कृतदशदिग्रूपविभागं गगनमुच्यते, तेन गगनवसनस्येत्यर्थः ।

१ अत्राप्यनुप्रासः ।

१ अत्रानुप्रासः, वान्तमिवेत्युत्प्रेक्षा । २ अत्र मुखस्य तथाविधसितांशुमञ्जिमभजनायोगेऽपि तथोक्तेः साम्यपर्यवसायित्वान्निदर्शना ।

किंभूतम्—सदशत्वं दशाभिर्दीर्घप्रान्ततन्तुभिः सह वर्तते तद्भावम्, अथ च—दशाभिः सह वर्तमानं तद्भावं दशत्वसंख्यायोगिदिग्विभागोपाधिभिरेव दशत्वसंख्यायोगित्वं बिभ्रत् । सदशत्वमुदितभाग्यत्वं बिभ्रदिति नलविशेषणं वा । तथा—अभ्रवदौंचित्याच्छरन्मेघस्येव, अभ्रकापरपर्यायस्य शुभ्रतरद्रव्यविशेषस्यैव वा विशदा शुभ्रतरा द्युतिर्यस्य । अत एव—तारं सूक्ष्मतरम् । धवलद्युति च तत्तारं चेत्येकपद्यं वा । अभ्रवद्विशदा द्युतिर्यस्य तद्भावस्तत्ता तामारात्यादत्ते तद्धवलतरं वा । शरन्मेघवदभ्रकद्रव्यवद्वा निर्मला द्युतिर्यासां तादृश्यस्तारका यत्र तद्वा । अभ्राणि मेघान्विशन्ति, अत एव मेघाच्छादितत्वाद् अद्युतयः कान्तिराहितास्तारका यत्रेति वा । अच्छिन्नं धौतं वस्त्रं परिदधे इत्यर्थः । ईश्वरोऽपि विशिष्टमाकाशमेव वस्ते । शिवकामयोर्विरोधात्स्पर्धा युक्ता । अभ्राणि विशन्तीति पक्षे 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २ । १ । २४ ।' इति योगविभागात्समासः । आरातीत्यादन्तत्वात्कः ॥ १४ ॥

भीमजामनु चलत्प्रतिवेलं
संयियंसुरिव राजऋषीन्द्रः ।
आववार हृदयं न समन्ता-
दुत्तरीयपरिवेषमिषेण ॥ १५ ॥

भीमजामिति ॥ राजर्षीणां सदाचारनृपाणां मध्ये इन्द्रो नल उत्तरीयस्योपरितनवस्त्रस्य परिवेषमिषेण वेष्टनव्याजेन हृदयं मनः, अथ च—वक्षःस्थलं, समन्तात् नाववार न ववन्ध पिदधे वा, अपि तु ववन्ध पिदधे वा । किंभूतम्—यतः प्रतिवेलं वारंवारं भीमजामनु लक्ष्यीकृत्यानुरागातिशयाच्चलदभिमुखं धावत्, अत एव—किंभूत इव—तद्धृदयं संयियंसुरिव सम्यक् नितरां नियन्तुमिच्छुरिव । क्षणमात्रं त्वया न गन्तव्यमिति गाढं संयतं कर्तुमिच्छन्निव । स्मृत्यादावेकवाससः कर्मानधिकारोक्तेरुत्तरीयवस्त्रधारणमुक्तम् । अन्योऽप्यन्यत्र गमनोत्सुको बलाद्रज्ज्वादिना बद्ध्वा स्थाप्यते । स समन्तादिति च पाठः । राजऋषिः, 'ऋत्यकः ६ । १ । १२८ ।' इति प्रकृतिभावः ॥ १५ ॥

१मदनत्वेन रूपणाद्रूपकं, स्पर्धयेवेत्युत्प्रेक्षा श्लेषमूला । संयियंसुरिवेत्युत्प्रेक्षा, मिषेणेत्यपह्नुतिश्च ।

स्नानवारिघटराजदुरोजा
गौरमृत्तिलकबिन्दुमुखेन्दुः ।
केशशेषजलमौक्तिकदन्ता
तं बभाज सुभगाप्लवनश्रीः ॥ १६ ॥

स्नानेति ॥ सुभगा मनोहरा, अथ च—सौभाग्यवती-आप्लवनश्रीः स्नानलक्ष्मीस्तं बभाज सिषेवे । स्नानेन नितरां शुशुभे इत्यर्थः । किंभूता—स्नानार्थं वारि तद्युक्ताः सुवर्णघटास्त एव राजन्तावुरोजौ कुचौ यस्याः सा । तथा—'ऊर्ध्ववृत्ततिर्यगर्धचन्द्राकारा वर्णानां क्रमात्तिलकाः' इति दक्षवचनाल्ललाटे धृतो गौरमृत्तिलकबिन्दुर्गङ्गातीरगोपीचन्दनादिरचितो वर्तुलस्तिलकः स एव गौरवृत्तत्वान्मुखेन्दुर्यस्याः सा । तथा—'हस्तवस्त्रैर्न मार्जयेत्' इति व्यासवचनेन विधस्नानानन्तरं वस्त्रादिना केशपरिमार्जनस्य निषेधात्केशेषु शेषं जलं केशप्रान्तेभ्यो गलज्जलं जलबिन्दवस्त एव मौक्तिकानि दन्ताश्च यस्याः सा । यद्वा—जलमौक्तिकानि मुक्तावत्स्थूलजलबिन्दवस्त एव दन्ता यस्याः सा । एवंभूता रमणीयदशना । तिलकं दधारेति भावः । अन्याप्येवंविधा तरुणी कंचिद्भजत इति ॥ १६ ॥

श्वैत्यशैत्यजलदैवतमन्त्र-
स्वादुताप्रमुदितां चतुरक्षीम् ।
वीक्ष्य मोघधृतसौरभलोभं
घ्राणमस्य सलिलग्रमिवासीत् ॥ १७ ॥

श्वैत्येति ॥ श्वैत्येन शैत्येन च जलं दैवतं येषां तैराप्यैः, जलं दैवतं वरुणस्तत्संबन्धिभिर्वा वारुणैः मन्त्रैः शब्दात्मकैः स्वादुतया मधुररसतया च जलगतविशिष्टरूपस्पर्शशब्दरसलक्षणस्वीयस्वीयविषयलाभेन प्रमुदितामतितरां संतुष्टां चतुरक्षीं क्रमेण चक्षुस्त्वक्श्रोत्ररसनासमाहाररूपां नेत्रादिचतुष्टयीं वीक्ष्य अस्य घ्राणमिन्द्रियं सहजगन्धस्य पृथिव्यसाधारणगुणत्वाज्जले तदसंभवात्कर्पूरादिवासितस्य च जलस्य देवस्नपनादिधर्मकर्मसु प्रति-

१ अत्राप्लवनश्रियाः सुभगात्वं रूपयितुम्, स्नानवारिघटस्योरोजत्वेन, तिलकबिन्दोर्मुखेन्दुत्वेन, शेषजलस्य मौक्तिकदन्तत्वेन च रूपणमिति साङ्गं रूपकम् । मुखेन्दुरित्युपमा, तं बभाजेति चापि तदौचित्यापादनाय । अत एव व्याख्यात्राऽपि ध्वनितं, यथा 'अन्याऽप्येवम्' इत्यादिनेति बोध्यम् ।

पेयाद्यौपाधिकस्याप्यसम्भवान्मोघो निष्फल एव धृतः सौरभे शोभनगन्धे लोभो येन, लोभसजातीयस्पर्धाविगलितविवेकं सत् 'ऋतं च—' इत्यादिसन्ध्याऽघमर्षणचुलुकोदकस्पर्शमिषेण सलिलं जिघ्रतीति सलिलघ्रं जलाघ्राणं कुर्वदिवाभूत् ।लोभस्पर्धाभ्यां विगलितविवेको ह्यविषयेऽपि प्रवर्तते । सन्ध्याघमर्षणं चकारेति भावः । श्वैत्यं, वर्णवाचित्वात्ष्यञ् । चतुरक्षीं, समाहारद्विगौ 'द्विगोः' ४ । १ । २१' इति ङीप् । सलिलघ्रम्, 'आतोऽनुपसर्गे कः ३।२।३' इति कः ॥ १७ ॥

राज्ञि भानुमदुपस्थितयेऽस्मि-
न्नात्तमम्बु किरति स्वकरेण ।
भ्रान्तयः स्फुरति तेजसि चक्रु-
स्त्वष्टृतर्कुचलदर्कवितर्कम् ॥ १८ ॥

राज्ञीति ॥ अस्मिन् राज्ञि भानुमतः सूर्यस्योपस्थितये उपस्थानार्थमात्तं गृहीतमर्घ्यदानसम्बन्धि अर्घ्यदानानन्तरं वा । 'असावादित्यः—' इत्यादिमन्त्रपूर्वं जलं शिरः परितः स्वपाणिना स्फुरति प्रकाशमाने तेजसि सौरप्रभाप्रसरे मध्ये गलद्बिन्दुक्रमेण किरति सति भ्रान्तयः क्षिप्तोदकस्येव प्रादक्षिण्यपरिभ्रमणानि लोकस्य त्वष्टुर्विश्वकर्मणः तर्कुः शाणचक्रं तत्र घर्षणवशाच्चलतो भ्राम्यतो विष्वक्पतनशीलतेजःकणस्यार्कस्य वितर्कं तद्विषयं विशिष्टमूहं चक्रुः । प्रकाशमानसौरप्रभाप्रदक्षिणप्रक्षिप्तगलद्बिन्दुजलभ्रमणदर्शनेन विश्वकर्मणा सूर्यः पुनरपि शाणचक्रे धृतः किम्, अत एवैतेऽणवः कणाः पतन्तीति लोकस्य तदानीं बुद्धिरभूदित्यर्थः । भानुमदुपस्थितये गृहीतमम्बु स्वकरेण विक्षिपत्यस्मिन् राज्ञि विषये लोकस्य भ्रान्तयो नलाङ्गप्रभाप्रसरे प्रकाशमाने सति शाणचक्रपरिभ्रमत्सूर्यसंभावनां लोकस्य चक्रुरिति वा । राज्ञा यदम्बु गृहीतं तस्मिन्नुत्क्षिप्ते जले स्फुरति प्रतिफलति रवितेजसि जायमाना भ्रान्तयो भ्रमणानि त्वष्टृतर्कुचलदर्कवितर्कं चक्रुः । उत्क्षिप्ता आपो वियति भ्रमन्त्यः पतन्ति, तत्प्रतिबिम्बिते तेजस्यपि भ्रमणानि जायन्ते, तत्रोत्प्रेक्षेति वा । अर्घ्यदानं सूर्योपस्थानं च कृतवानिति भावः । स्फुरिततेजसीति पाठे नलविशेषणम् ॥ १८ ॥

सम्यगस्य जपतः श्रुतिमन्त्राः
संनिधानमभजन्त कराब्जे ।
शुद्धबीजविशदस्फुटवर्णाः
स्फाटिकाक्षवलयच्छलभाजः ॥ १९ ॥

सम्यगिति ॥ श्रुतिमन्त्राः सम्यग्जपतः सावित्र्यादिमन्त्रमावृत्त्योपांशूच्चारयतोऽस्य कराब्जे संनिधानमलभन्त। किंभूताः—शुद्धैरागमोक्तक्रमोच्चारणनिर्मलैर्वह्निवारुणादिबीजैः कृत्वा विशदाः स्फुटा मात्रादिसाकल्योच्चारणेनासंदिग्धा वर्णा अक्षराणि येषु, । अथ च—शुद्धेषु ह्रासादिदोषरहितेषु बीजेषु स्फटिकगुटिकासु विशदो धवलः प्रकटो वर्णः कान्तिर्येषाम् । यद्वा—निर्दोषस्फाटिकबीजान्येव धवलाः प्रकटा वर्णा अक्षराणि येषु । तथा— स्फाटिकाक्षाणां वलयस्य मालायाश्छलं भजन्ति ते, तदाकारेण परिणताः । भक्त्यतिशयान्मूर्तीभूय तत्पाणिपद्मे वसन्ति स्मेत्यर्थः । उपस्थानानन्तरं सावित्रीजपं च कृतवानिति भावः ॥ १९ ॥

पाणिपर्वणि यवः पुनराख्य-
द्देवतर्पणयवार्पणमस्य ।
न्युप्यमानजलयोगितिलौघैः
स द्विरुक्तकरकालतिलोऽभूत् ॥ २० ॥

पाणीति ॥ अस्य पाणिपर्वणि हस्ताङ्गुलीनां ग्रन्थौ काण्डे वर्तमानो यवाकारः सामुद्रिकलक्षणभूतशुभरेखाविन्यासरूपो यवो देवतर्पणजले यवार्पणं कर्मीभूतं पुनरुक्तमाख्यत् । अकरोदित्यर्थः । देवतर्पणं हि यवैः क्रियते, ते चाङ्गुलीपर्वसु पूर्वमेव वर्तन्ते,एतावतैव पौनरुक्त्यम् । तथा न्युप्यमानेन पितृभ्यो दीयमानेन जलेन योगिभिः सह क्षिप्यमाणैः कृष्णतिलौघैः कृत्वा स नलो द्विरुक्तः पुनरुक्तः, करकालतिलः करकमलमध्यवर्ती सामुद्रिकलक्षणभूतः सूक्ष्मकालतिलाकारोऽङ्को यस्य तादृशोऽभूत् ।

१ सलिलघ्रमिवेत्युत्प्रेक्षा, श्वैत्यादिना क्रमेण चक्षुरादेः स्वादुतालाभेन प्रमुदितात्वोक्त्या यथासङ्ख्यम् ।

१ चतुर्थपादेऽत्रानुप्रासः, वितर्करूपा भ्रान्तय आसन्निकत्वानुक्त्वा भ्रान्तयो वितर्कं चक्रुरितिवचनाद्वात्मगोपनादपह्नुतेरभिव्यक्तिः । यद्वा—लोका वितर्करूपा भ्रान्तीश्चक्रुरित्यनुक्त्वा लोकानां वितर्कं भ्रान्तयश्चक्रुरिति तथ्यापह्नुवनादपह्नुतिर्व्यज्यत इति बोध्यम् । २ छलभाज इत्यपह्नुतिः । कराब्ज इत्युपमा रूपकं वा ।

पितृतर्पणं हि तिलैः क्रियते । स च तिलो हस्तमध्ये वर्तत एवेति पौनरुक्त्यम् । वह्नयज्ञोऽपि तेनाकारीति भावः । आद्यन्तयोर्देवपितृतर्पणोक्तेर्मध्येऽपि वर्तमानमृषितर्पणं कृतमिति ज्ञेयम् । न्युष्यमानं, वचिस्वपियजादीनां किति ६।१।१५' इति यजादित्वात्सम्प्रसारणम् ॥ २० ॥

पूतपाणिचरणः शुचिनोच्चै-
रध्वनाऽनितरपादहतेन ।
ब्रह्मचारिपरिचारि सुरार्चा-
वेश्म राजऋषिरेष विवेश ॥ २१ ॥

पूतेति ॥ एष राजा चासौ ऋषिर्मुनिधर्माचरणशीलो नलो देवपूजागृहप्रवेशौचित्यार्थं पूतं जलक्षालितं पाणिचरणं येनैवंभूतः सन् शुचिना गोमयोपलिप्तेन पवित्रेण, तथा—न इतरस्य नलातिरिक्तस्य पादेन हतेन, अन्यचरणस्पर्शाददूषितेनेत्यर्थः । उच्चैरूर्ध्वमध्वना सोपानबद्धमार्गेण, यद्वा —अनितरपादहतेन, अत एवोच्चैर्नितरां शुचिना, ब्रह्मचारिण उपनीता द्विजाः परिचारिणो देवसेवाकारिणो यत्रैवंभूतं सुरार्चावेश्म सुवर्णादिनिर्मितमन्त्रसंस्कृतप्रतिमागृहं देवपूजासम्बन्धि वा गृहं विवेश ॥ २१ ॥

इतः प्रभृति श्लोकदशकेन कुलकेनाह—

क्वापि यन्नभसि धूपजधूमै-
र्मेचकागुरुभवैर्भ्रमराणाम् ।
भूयते स्म सुमनःसुमनःस्र-
ग्दामधामपटले पटलेन ॥२२ ॥

क्वेति ॥ यस्य देवपूजागृहस्य नभसि अन्तरावकाशे क्वापि कस्मिन्नपि प्रदेशे सुमनसां देवानां पूजार्थमानीताः सुमनसः पुष्पाणि तासां स्रग्दामानि मालापरम्पराः, यद्वा—स्रजः कण्ठमालाः, दामानि शिरोमाल्यानि, तेषां धामानि स्थानानि मध्यस्थापितपुष्पवेणुसुवर्णादिपात्राणि तेषां पटले समूहे विषये तेषामुपरिष्टान्मेचकागुरुभवैः कृष्णागुरुसमुद्भवैर्धूपजैः सौगन्ध्यार्थं रचितैर्धूपोत्पन्नैर्धूमैरेव भ्रमराणां पटलेन गुणेन भूयते स्म जातम् । पुष्पाणामुपरि भ्रमरैर्भाव्यम्, तथा च—धूपजधूमा एव तत्स्थाने जाता इत्यर्थः । सुमनसो मालत्याः पुष्पाणां माला परम्पराः, तासां स्थानं । तद्रचितमिति यावत् एवम्भूतं पटलं वितानं यत्र तादृशो वा । देवानामुपरि पुष्पवितानमपि यत्रेत्यर्थः । देवपूजार्थमुपहृतपुष्पमालापरम्पराणां स्थानभूतं पटलं गृहप्रान्तच्छदिर्यत्र तादृशे यदन्तरप्रदेशे । देवतागारे हि छदिःप्रान्ते सौरभरामणीयकार्थं पुष्पमाला बध्यन्ते, तासामुपरि धूमा एव भृङ्गा जाता इत्यर्थ इति वा । बहुतरा धूपाः पुष्पमालाश्च यत्र सन्तीति भावः । 'सुमना मालती जातिः 'पटलं छदिः'इति चामरः। अस्य दशमेन ' नैकवर्ण–' इत्यनेनान्वयः ॥ २२ ॥

साङ्कुरेव रुचिपीततमा यै-
र्यैः पुरास्ति रजनी रजनीव ।
ते धृता वितरितुं त्रिदशेभ्यो
यत्र हेमतिलका इव दीपाः ॥ २३ ॥

साङ्कुरेति॥यत्र गृहे ते दीपा हेमतिलका इव त्रिदशेभ्यो वितरितुं समर्पयितुं धृताः स्थापिताः सन्ति । ते के—यैर्दीपै रुच्या दीप्त्या पीतं ग्रस्तं तमो यस्यास्तादृशी सती सा भूता भविष्यन्ती वा रजनी रात्रिः साङ्कुरेवोद्भिन्नप्रत्यग्रतेजोऽङ्कुरसहितेव पुराऽस्ति अभूत् भविष्यति वा । तथा—यैः कृत्वा कान्त्या पीततमा अतितरां पीतवर्णाऽत्यन्तगौरी रात्रिरुद्भिन्नप्रत्यग्राङ्कुरा रजनीव हरिद्रेवाभूद्भविष्यति वा । रात्रिः पीतीभूततया हरिद्रेव, प्रदीपकलिकाश्च तदङ्कुरा इवेत्युत्प्रेक्षोपमा वा । 'निशाख्या काञ्चनी पीता' इत्यमरः । पीततमा पक्षे सान्तम्, पक्षे तमबन्तम् । पुरास्तीति 'पुरि लुङ् चास्मे' ३ । २ । १२२ ।' इति भूते 'यावत्पुरानिपातयोर्लट्' ३ । ३ । ४ । इति भविष्यति वा लट् ॥ २३ ॥

यत्र मौक्तिकमणेर्विरहेण
प्रीतिकामधृतवह्निपदेन ।
कुङ्कुमेन परिपूरितमन्तः
शुक्तयः शुशुभिरेऽनुभवन्त्यः ॥ २४ ॥

यत्रेति यत्र देवागारे मौक्तिकमणेः प्रियतमस्य विरहेण कर्त्रा कुङ्कुमस्य स्वोद्दीपनहेतुतया प्रीतिस्तया कामं दत्तं कामेन कर्त्रा वा दत्तं वह्नेः पदं दाहकत्वादि-

१ अत्रानुप्रासः, तिलयोर्भेदेऽप्यभेदाध्यवसानाय पुनरुक्तत्वोक्त्या भेदापह्नवनमितितदंशेऽपह्नुतिश्च । २ अत्र देवप्रासादगमनोचितक्रियायाः स्वाभाविकत्वेन वचनात्स्वभावोक्तिः ।

१ अत्रानुप्रासो यमकं च । २ अत्राप्यनुप्रासः । साङ्कुरेवेत्युत्प्रेक्षा रजनीव रजनीत्युपमोपमाच, अनन्वयोऽप्यङ्गश्च, तिलका इवेत्युपमा ।

रूपोऽधिकारस्तद्रूपं चिह्नं वा यस्य तेन कुङ्कुमकेसरेण परिपूरितमन्तर्मध्यभागमनुभवन्त्यो बिभ्राणाः शुक्तयः शुशुभिरे । वियोगिन्यो हि विरहाग्नितप्तं हृदयमनुभवन्ति । कुङ्कुमपूर्णाः शुक्तयो वियोगिनीत्वरूपेण वर्ण्यन्ते । यद्वा—मौक्तिकमणिविरहेणोपलक्षिताः शुक्तयः कुङ्कुमस्य कामोद्दीपनहेतुतया या प्रीतिस्तया युक्तेन कामेन । अन्यत्पूर्ववत् । प्रीतो हि किंचित्पदं ददाति शुक्तयो विशिष्टेन कुङ्कुमेनोपलक्षिताः सत्यो मौक्तिकमणिविरहेण पूर्णं मध्यमनुभवन्त्य इव शुशुभिर इति प्रतीयमानोत्प्रेक्षा वा । प्रीतेतिपाठे—स्वोद्दीपकत्वेन प्रीतात्कामाद्धूतं वरेण लब्धं वह्निपदं येनेत्यर्थः। मुक्ताफलोत्पत्तिहेतुभूताः शुक्तयः पुत्रविरहेण मातरो यथा हृदयान्तर्दहन्ति, तथा कुङ्कुमरूपमन्तर्दाहं वहन्त्यः शुशुभिर इति वा ॥ २४ ॥

अङ्कचुम्बिघनचन्दनपङ्कं
यत्र गारुडशिलाजममत्रम् ।
प्राप केलिकवलीभवदिन्दोः
सिंहिकासुतमुखस्य सुखानि ॥ २५ ॥

अङ्केति ॥ यत्र देवागारे अङ्कचुम्बी मध्यवर्ती घनश्चन्दनपङ्को यस्य तत् गारुडशिलाजमतिनीलस्थूलगरुडोद्गारमणिघटितममत्रं पात्रं केल्या लीलामात्रेण कवलीभवन् ग्रासीभवन् मुखमध्यवर्त्यर्धभाग इन्दुर्यस्य सिंहिकासुतमुखस्य राहुवदनस्य शीतान्नभोजनसुखानि प्राप । तत्सममभूदित्यर्थः । गारुडमणिपात्राणि यत्र चन्दनभृतानि सन्तीति भावः । अमत्रमिति जात्येकवचनम् । भवदिन्दोः भाषितपुंस्कम् ॥ २५ ॥

गर्भमैणमदकर्दमसान्द्रं
भाजनानि रजतस्य भजन्ति ।
यत्र साम्यमगमन्नमृतांशो-
रङ्करङ्ककलुषीकृतकुक्षेः ॥ २६ ॥

गर्भमिति ॥ यत्र देवागारे एणमदः कस्तूरी तस्य कर्दमस्तेन सान्द्रं पूर्णं गर्भं मध्यं भजन्ति बिभ्राणानि रजतघटितानि भाजनानि अङ्करङ्कुः कलङ्कमृगस्तेन कलुषीकृतो मलिनीकृतः कुक्षिर्यस्य तस्यामृतांशोश्चन्द्रस्य साम्यमगमन् देवपूजार्थं रजतपात्राणि कस्तूरीपूर्णानि यत्र सन्तीति भावः ॥ २६ ॥

उज्जिहानसुकृताङ्कुरशङ्का
यत्र धर्मगहने खलु तेने ।
भूरिशर्करकरम्भबलीना-
मालिभिः सुगतसौधसखानाम् ॥२७॥

उज्जिहानेति॥धर्मेण गहने निबिडे, अथ च—पुण्यकाननरूपे; यत्रोच्चवर्तुलधवलतराणां सुगतसौधानां बौद्धदेवालयानां सखायः सदृशास्तेषां भूरिः शर्करा येषु तेषां करम्भबलीनां दधिसक्तूपहाराणां दध्योदनोपहाराणां वा आलिभिः पङ्क्तिभिरुज्जिहान उद्गच्छन् सुकृताङ्कुरस्तस्य शङ्का सम्भावना खलु निश्चितं तेने व्यरचि आम्रादिवने ह्याम्राद्यङ्कुरा एवोद्गच्छन्ति, तथा धर्मकानने धर्माङ्कुरा एवेति । यत्र शर्करामिश्रदध्योदनबलिश्रेणय उपकल्पिताः सन्तीति भावः । सखानां,'राजाहस्सखिभ्यष्टच् ५।४।९१' इति टच् ॥ २७ ॥

खर्वमाख्यदमरौघनिवासं
पर्वतं क्वचन चम्पकसम्पत् ।
मल्लिकाकुसुमराशिरकार्षी-
द्यत्र च स्फटिकसानुमनुच्चम् ॥ २८ ॥

खर्वमिति ॥ यत्र क्वचन प्रदेशे विकसितचम्पककुसुमानां सम्पदुच्चतरपुञ्जोऽमरौघाणां निवासभूतं पर्वतं मेरुं खर्वं ह्रस्वमाख्यत् । सुवर्णमेरुवर्णश्चम्पकराशिर्मेरोरप्युच्चतरो यत्रास्तीत्यर्थः। तथा मल्लिकाकुसुमराशिः स्फटिका एव शिलाः यस्य तं कैलासपर्वतमनुच्चं खर्वमकार्षीत्। शुभ्रतरस्फटिकवर्णमल्लिकापुष्पराशिः कैलासादप्युच्चतरो यत्रास्तीत्यर्थः । पृथगन्वयात्खर्वानुच्चपदद्वयं भिन्नमिति ज्ञेयम् ॥ २८ ॥

---

१ अत्रानुप्रासः,मौक्तिकमणेः कान्तत्वं,शुक्तीनां कान्तात्वं च व्यज्यत इति समासोक्तिः ।२ अत्राप्यनुप्रासः,अमत्रस्य सैंहिकेयमुखसुखानुभवायोगेऽपि तथोक्तिः सादृश्यार्थेति निदर्शना च ।

१ अत्राप्यनुप्रासः । उपमा च ।२ अत्रानुप्रासः, श्लेषः, उत्प्रेक्षा च ।३चम्पकसम्पदः स्वापेक्षया सुवर्णगिरेर्ह्रस्वत्वाख्यानौचित्यासम्भवेऽपि तथोक्तेरतिशयोक्तिः । एवं मल्लिकाराशेरपि स्वापेक्षया स्फटिकसानोरनुच्चत्वकरणौचित्यासम्भवेऽपि तथोक्तिरित्यतिशयोक्तिश्च । आख्यदिति अकार्षीदिति क्रियायाश्च धर्मैक्येन प्रकृतत्वेन च योग इति तुल्ययोगिता ।

स्वात्मनः प्रियमपि प्रति गुप्तिं
कुर्वती कुलवधूमवजज्ञौ ।
हृद्यदैवतनिवेद्यनिवेशाद्
यत्र भूमिरवकाशदरिद्रा ॥[1] २९ ॥

स्वात्मन इति ॥ यत्र हृद्यानां वर्णरसादीनां मनोहारिणां देवतासम्बन्धिनां निवेद्यानां पक्वखाद्याद्युपहाराणां निवेद्यादवस्थापनाद्धेतोस्तिलमात्रावकाशेनापि दरिद्रा रहिता भूमिः स्वात्मनः प्रियं प्रत्यापि लक्ष्यीकृत्य गुप्तिं सर्वाङ्गसंवरणरूपं गोपनं कुर्वती शोभनस्य स्वस्य वा देहस्य गोपनं कुर्वती वा तिलमात्रमपि प्रदेशं द्रष्टुमददाना सती कुलवधूमवजज्ञौ अवमेने । कुलस्त्रीतुल्याऽभूदित्यर्थः ॥ २९ ॥

यत्र कान्तकरपीडितनील-
ग्रावरश्मिचिकुरासु विरेजुः ।
गातृमूर्धविधुतेरनुबिम्बात्
कुट्टिमाक्षितिषु कुट्टिमितानि ॥ ३० ॥

यत्रेति ॥ यत्र वर्तमानासु कुट्टिमक्षितिषु चन्द्रकान्तादिमणिबद्धभूमिषु देवपूजावसरे गातॄणां गायकानां गानवशान्मूर्धविधुतेः शिरःकम्पस्यानुबिम्बात्प्रतिबिम्बाद्धेतोस्तद्व्याजेन कुट्टिमितानि हठक्रियमाणचुम्बनादिपरिहारार्थं कामिनीशिरःकम्पविलसितानीव विरेजुः । किंभूतासु—भीम इत्यनेन भीमसेनवत् कान्ताः सूर्यकान्ताश्चन्द्रकान्ता वा तेषां करैः किरणैः पीडिताः पुरस्ताद्गन्तुं प्रतिबद्धाः । तत्रैव घनीभूता इति यावत् । नीलग्रावरश्मयो नीलमणिकिरणा एव चिकुराः सुनीलाः केशा यासां तासु । कामिन्यो हठपरिचुम्ब्यमानाः प्रियपाणिगृहीता नीलमणिरश्मितुल्याः सुनीलाः केशा यासां कृतकचग्रहाः सत्यश्चुम्बनादिपरिहाराय शिरःकम्पनरूपान् विलासान् कुर्वन्ति । नानामणिबद्धा भूमयो देवसेवका गायकाश्च यत्र सन्तीति भावः ॥ ३० ॥

नैकवर्णमणिभूषणपूर्णे
स क्षितीन्दुरनवद्यनिवेद्ये ।
अध्यतिष्ठदमलं मणिपीठं
तत्र चित्रसिचयोच्चयचारौ ॥[1] ३१ ॥

नैकेति ॥ स क्षितीन्दुर्भूचन्द्रो नलस्तत्रोक्तरूपे देवपूजागृहे अमलं मणिभी रत्नैः खचितं पीठमध्यतिष्ठत् । किंभूते—नैकवर्णा मणयो येषु देवार्थं कल्पितैर्नानावर्णैर्भूषणैः पूर्णे । तथा—अनवद्यानि मोदकादिनिवेद्यानि यस्मिन् । तथा—चित्राणां नानावर्णानामाश्चर्यकारिणां वा देवार्थमानीतानां सिचयानां वस्त्राणामुच्चयेन राशिना चारौ रमणीये पूर्णे । मणिपठिम्, 'अधिशीङ्स्थासां कर्म्म १।४।४६' इति कर्मत्वम् । चार्विति पाठे—पीठविशेषणम् ॥ ३१ ॥

सम्यगर्चति नलेऽर्कमतूर्णं
भक्तिगन्धिरमुनाऽकलि कर्णः ।
श्रद्दधानहृदयप्रति चान्तः
साम्बमम्बरमणिर्निरचैषीत् ॥ ३२ ॥

पञ्चायतनपूजायां प्राथम्येन सूर्यपूजाया विहितत्वात् प्रथमं सूर्यपूजामाह—

सम्यगिति ॥ नले सूर्यकान्तमणिरूपं सुवर्णादिघटितप्रतिमारूपं वाऽर्कं सम्यक् श्रौतस्मार्तमार्गेण अतूर्णं त्वरारहितं सावधानतया चिरकालमर्चति सति अमुना सूर्येण कर्णो राधेयो भक्तिगन्धिः अल्पा भक्तिर्यस्य तादृशोऽकलि व्यज्ञापि । सूर्यभक्तोऽपि कर्णो नलापेक्षयाऽतिहीन एवेति सूर्येणान्तर्निश्चित इत्यर्थः । तथा—नलेऽर्कं शनैरर्चति सति अम्बरमणिः सूर्यः श्रीकृष्णपुत्रं साम्बमन्तःकरणे श्रद्दधानहृदयप्रति श्रद्दधानहृदयमात्रं निरचैषीन्निश्चितवान् । साम्बोऽपि भक्ततया प्रसिद्धोऽप्यल्पश्रद्धावान्, न तु नलवदत्यन्तं भक्त इति निश्चिकायेत्यर्थः । उभाभ्यामपि सकाशान्नलस्य सूर्ये महती भक्तिरभूदिति भावः । अर्चतीत्यचौरादिकादर्चतेः शता । भक्तिगन्धिः, अल्पाख्यायां गन्धस्येत् । हृदयप्रतीति 'सुप् प्रतिना मात्रार्थे २ । १ । ९' इत्यव्ययीभावः ॥ ३२ ॥

---

१ अत्र भूमेः कुलवध्ववज्ञाकर्तृत्वोक्त्या उपनायिकात्वं ध्वज्यते।परिकरश्चार्थालङ्कारः।२ अत्र कुट्टिमानामसत्त्वेऽपि सत्त्वोक्तिः सम्भावनमात्रमूलेति इवादेरभावेऽपि तथा प्रतीतेरुत्प्रेक्षा व्यङ्ग्या ।

१ अत्रानुप्रासः, नलस्य क्षितीन्दुत्वेन रूपणाद्रूपकम् ।
२ अत्र कर्णापेक्षया नलस्य सूर्योपासनपरत्वाधिक्योक्त्या नलस्य कर्णरूपोपमानापेक्षयाऽतिरेकात्माऽव्यतिरेकः कर्णस्य तदवाधि अजातत्वेऽपि तथा निश्चयोक्तिस्तु कवेः समयभेदविस्मरणं सूचयतीत्यन्यत् ।

तत्तदर्यमरहस्यजपेषु
स्रङ्मयः शयममुष्य बभाज ।
रक्तिमानमिव शिक्षितुमुच्चै
रक्तचन्दनजबीजसमाजः ॥ ३३ ॥

तत्तदिति ॥ तेषां तेषामर्यम्णः । सूर्यस्य संवन्धिनां रहस्यानां श्रौतस्मार्तमन्त्राणां जपेषु उपांश्वावृत्तिषु विषये स्रङ्मयो जपमालिकारूपः रक्तचन्दनकाष्ठजानां बीजानां कृतच्छिद्रमणीनां फलमध्यवर्तिबीजानां वा समाजः समूहो जपतोऽमुष्य शयं हस्तं बभाज सिषेवे । उत्प्रेक्षते—तत्करे वर्तमानमुच्चैरतिशयितं रक्तिमानं रक्तत्वं शिक्षितुमिव । अन्योऽपि शिष्य उपाध्यायं सेवत एव । रक्तचन्दनबीजजपमालिकाजपेन सौरमन्त्राणां शीघ्रफलत्वात्सौरमन्त्रान्रक्तचन्दनमालिकया जजापेत्यर्थः । स्रङ्मयः, एकाच्त्वात् 'एकाचो नित्यम्' इति मयट्[1] ॥ ३३ ॥

इदानीं श्लोकाष्टकेन हरपूजामाह—

हेमनामकतरुप्रसवेन
त्र्यम्बकस्तदुपकल्पितपूजः ।
आत्तया युधि विजित्य रतीशं
राजितः कुसुमकाहलयेव ॥ ३४ ॥

हेमेति ॥ हेमनामकस्य धत्तूरस्य तरोः प्रसवेन विकसितकुसुमेन कृत्वा तेन नलेनोपकल्पिता पूजा यस्य स त्र्यम्बको राजितः शुशुभे । उत्प्रेक्षते—रतीशं युधि विजित्य बलादात्तया गृहीतया कुसुमरूपकाहलया धत्तूरपुष्पाकारवाद्यविशेषेणेव । कुसुमकाहलयोपलक्षित इवेति वा । शराणां कौसुमत्वाद्वादित्राणामपि कौसुमताया युक्तत्वात्कामकाहलायाः कौसुमत्वमुचितमेव । पराभूतात्कामाद्बलाद् गृहीतया कुसुमकाहलयेव धत्तूरपुष्पेण राजित इत्यर्थः । अन्योऽपि शत्रुं जित्वा बलाद् गृहीतेन तच्छत्रवादित्रादिना शोभते सौन्दर्येण स्वस्पर्धितया स्वस्य शिवभक्तत्वात्कामस्य च शिवविरोधित्वात्स्वविरोधिनं स्वस्वामिविरोधिनं च स्मरं रणे जित्वा तस्माद्बलान्नलेनैव गृहीतया कुसुमकाहलयेव धत्तूरपुष्पेण कृत्वा नलेन कृतोपदः, अथ च—कृतपूजः शुशुभे । सेवको हि स्वविरोधिनं स्वस्वामिविरोधिनं वा रणे जित्वा तच्छत्रवादित्रादि बलाद् गृहीत्वा स्वामिन उपदीकरोति । तेन च स्वामी शोभते इति वा । प्रियतरेण धत्तूरपुष्पेण स नलः शिवमपूपुजदिति भावः । 'धत्तूरः कनकाह्वयः' इत्यमरः । 'वाद्यभाण्डविशेषे तु काहला' इति विश्वः ॥ ३४ ॥

अर्चयन्हरकरं स्मितभाजा
नागकेसरतरोः प्रसवेन ।
सोऽयमापयदतिर्यगवाग्दिक्-
पालपाण्डुरकपालविभूषाम् ॥ ३५ ॥

अर्चयन्निति ॥ स्मितं विकासं भजते स्मितभाक् तेन विकसितेन नागकेसराख्यस्य तरोः प्रसवेन पुष्पेण कृत्वा हरकरं सुवर्णादिघटितदक्षिणामूर्त्यादिशिवप्रतिमापाणिमर्चयन् पूजार्थं स्थूलतरं शुभ्रतरं केसरतरुकुसुमं तत्पाणौ स्थापयन् सोऽयं नलस्तिरश्च्या दिशः प्राच्यादिदिगष्टकाद् अवाच्या अधोदिशः सकाशादन्याऽतिर्यगवाग्दिक् ऊर्ध्वा दिक् तस्याः पालो रक्षको ब्रह्मा तस्य चिरकालघर्षणाद्गतकान्ति पाण्डुरं धवलतरं कपालं शिरस्तेन ब्रह्मकपालेन कृत्वा विभूषामलंकृतिं कपालरूपां विभूषामापयदलम्भयत् । हरेण ब्रह्मणः पञ्चमं शिरश्छिन्नं प्रायश्चित्तं कुर्वतो हरस्य भिक्षार्थं करे तिष्ठति । ततश्च तत्प्रतिमायामपि तेन भवितुं युक्तमिति केसरपुष्परूपेण ब्रह्मकपालेन तत्करमलंचकारेत्यर्थः । 'चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः' इत्यमरः । हरकरम्, अर्चनापेक्षया कर्मत्वम् । पक्षे आप्नोतेर्गत्यर्थत्वादणौ कर्तुर्णौ कर्मत्वम् । तिर्यगवागिति वाऽव्ययम्, अतिर्यगवाक् चासौ दिक् चेति समासः ॥ ३५ ॥

नीलनीररुहमाल्यमयीं स
न्यस्य तस्य गलनालविभूषाम् ।
स्फाटिकीमपि तनुं निरमासी-
न्नीलकण्ठपदसान्वयतायै ॥ ३६ ॥

---

१ अत्र समाजस्य रक्तचन्दनबीजसम्बन्धित्वेन वचनेन बीजानां जनगोष्ठीरूपत्वं व्यज्यते, समाजस्य च तस्य स्रङ्मयत्वोक्त्या परितः स्थितत्वं व्यज्यते । शयस्य चैवमुपास्यत्वं, बीजसमाजस्य चोपासकत्वं व्यज्यत इति बोध्यम् । समाजशब्दो हि जनगोष्ठ्यां रूढः । रक्तिमानं शिक्षितुमिवेत्युत्प्रेक्षा ।

१ अत्र काहलयेवेत्युत्प्रेक्षा । २ नागकेसरतरोः प्रसवेन कपालविभूषामापयदित्युक्तेस्तयोरैक्यमारोप्यत इति निदर्शना ।

नीलेति ॥ स नलस्तस्य हरस्य स्फटिकनिर्मितामपि तनुं हरप्रतिमां नीलनीररुहाणां माल्यं माला तन्मयीं गलनालः कण्ठस्तस्य विभूषां भूषणं न्यस्य आवध्य नीलकण्ठवाचकं पदं तस्य सान्वयतायै अन्वयसादित्याय नीलः कण्ठोऽस्येति सम्बन्धसार्थक्याय निरमासीन्निर्मितवान् । नीलोत्पलमालां कण्ठे बद्ध्वा स्फाटिकीमपि शिवप्रतिमां नीलकण्ठपदसहितामकरोदित्यर्थः । कण्ठे एव नीलोत्पलपूजां चकार, अन्यत्र तु चन्दनश्वेतपुष्पादिभिः पूजितवानिति भावः ॥ ३६ ॥

**प्रीतिमेष्यति कृतेन ममेह-**
**कर्मणा पुररिपुर्मदनारिः ।**
**तत्पुरः पुरमतोऽयमधाक्षी-**
**द्धूपरूपमथ कामशरं च ॥ ३७ ॥**

प्रीतिमिति ॥ पुराणां दैत्यविशेषाणां रिपुः, तथा—मदनस्यारिः शिवो मम कृतेन ईदृशा कर्मणा पुरकामशरदाहरूपव्यापारेण प्रीतिमेष्यति प्रसन्नो भविष्यति । अतो हेतोरिव इति बुद्ध्या वाऽयं नलस्तस्य पुरारिपोः कामारेः पुरो धूपरूपं धूपस्वरूपम्, अथ च—धूपवेषधारिणं पुरं गुग्गुलुमधाक्षीत् ददाह । अथ तद्दाहानन्तरं धूपविशेषरूपं कामशरं कामवाणं च ददाह । यस्यारिर्यद्रिपुशरश्च यदग्रे येन दह्यते स तस्मिन् प्रीत एव । शिवभयेन वेषान्तरधारिणं पुरं दैत्यं कामवाणं च मोहनाख्यं ददाहेत्यर्थः । धूपसमर्पणान्तां शिवपूजामकरोदिति भावः । ईदृशा पुष्पपूजान्तेन भक्तियुक्तेनापि कर्मणा पुररिपुः कामारिः शिवो मम कृते मदर्थं मयि विषये प्रीतिं न यास्यति एतावताऽपि संतुष्टो न भविष्यति, अतः कारणादिव तदग्रे पुरं कामशरं च ददाह । एवं कृते शंकरस्तुष्टो भविष्यतीति भाव इति वा । पुररिपुर्मदनारिरिति च योगस्यैवात्र प्राधान्यान्न पौनरुक्त्यम् । 'गुग्गुलौ कथितः पुरः' इति विश्वः । तत्पुरः शेषषष्ठीसमासः । अन्यथा—अव्ययेन सह षष्ठीसमासनिषेधः स्यात् । तदिति लुप्तषष्ठीकं विभक्तिप्रतिरूपकमव्ययं पृथक्पदं वा ॥ ३७ ॥

**तन्मुहूर्तमपि भीमतनूजा-**
**विप्रयोगमसहिष्णुरिवायम् ।**
**शूलिमौलिशशिभीततयाऽभूद्**
**ध्यानमूर्च्छननिमीलितनेत्रः ॥ ३८ ॥**

तदिति ॥ स चासौ मुहूर्तश्च तमपि तस्मिन्देवपूजाक्षणेऽपीत्यर्थः। भीमतनूजाया विप्रयोगं वियोगमसहिष्णुरयं नलः शूलिमौलौ वर्तमानाच्छशिनो भीततयेव नेत्रध्यानेन यन्मूर्च्छनमेकाग्रतालक्षणः प्रलयस्तेन हेतुना निमीलिते संकोचितपक्ष्मीकृते नेत्रे येनैवंभूतोऽभूत् । विरहित्वाद्धरशिरश्चन्द्रदर्शनस्य नितरां संतापकारित्वभिया ध्यानमूर्च्छनव्याजेन नेत्रे निमीलितवानित्यर्थः । पूजानन्तरं शिवस्य ध्यानं चकारेति भावः । शूलधारिणाऽपि यः शिरसि धृतः,तस्मादाधिकं भयं युक्तमिति सूचयितुं शूलिपदं प्रायोजि । तन्मुहूर्तम्, अत्यन्तसंयोगे द्वितीया । विप्रयोगं, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२।३।६९।' इति षष्ठीनिषेधाद्द्वितीया॥ ३८ ॥

**दण्डवद्भुवि लुठन् स ननाम**
**त्र्यम्बकं शरणभागिव कामः ।**
**आत्मशस्त्रविशिखासनबाणान्**
**न्यस्य तत्पदयुगे कुसुमानि ॥ ३९ ॥**

दण्डवदिति ॥ स नलो दण्डेन तुल्यं साष्टाङ्गपातेन भुवि लुठन् सन् त्र्यम्बकं ननाम । किं कृत्वा—तस्य हरस्य पदयुगे पुष्पाञ्जलिदानार्थमञ्जलिदानाय धृतानि कुसुमानि न्यस्य समर्प्य । तत्रोत्प्रेक्षते—तान्येव कुसुमानि आत्मनः खड्गादि शस्त्रं विशिखासनं धनुः, बाणान् स्वशस्त्रभूतानि पुष्पाणि हरपदयुगे समर्प्य 'अद्यप्रभृति शस्त्रं न धारयामि दासोऽस्मि मां रक्ष' इत्यादि वदन् शरणं रक्षितारं शिवमेव भजमानो रूपसाम्यात्काम इव ध्यानानन्तरं पुष्पाञ्जलिदानपूर्वकं भक्त्यतिशयेन दण्डवत्प्रणाममप्यकरोदित्यर्थः । विशिखासनं तूणीरं वा । अन्योऽपि शरणागत एवमेव करोति[2] ॥ ३९ ॥

---

१ अत्र स्फटिकप्रतिमाया नीलनीररुहमयीभवनोक्त्या तद्गुणः । २ अत्र पुरं पुरमिवेति श्लिष्टं रूपकम् । गुग्गुलस्य धूपरूपत्वेऽपि प्रकृते तथा वचनं दैत्यापरपर्यायपुराभेदेन पुरपदवाच्यगुग्गुलपदार्थबोधनार्थमिति तदपह्नवनादपह्नुतिर्व्यङ्ग्या ।

१ अत्रोत्प्रेक्षा । एतया चाकृत्रिमस्यापि ध्यानमूर्छननिमीलितनेत्रत्वस्यापह्नवनादपह्नुतिर्व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । २ काम इवेत्युत्प्रेक्षा । महादेवं जेतुं प्रहतानि हि कुसुमानि ततः प्रभृति पूजार्हतालक्ष्याविताशीति बाणभूतानां कुसुमानां पादसमर्पणमुत्प्रेक्षणार्हमेव न तूपमार्हमित्यवसेयम् ।

त्र्यम्बकस्य पदयोः कुसुमानि
न्यस्य सैष निजशस्त्रनिभानि ।
दण्डवद्भुवि लुठन् किमु काम-
स्तं शरण्यमुपगम्य ननाम ॥ ४० ॥

त्र्यम्बकस्येति ॥ त्रीणि अम्बकानि नेत्राण्यस्येति तस्य भगवतो महेश्वरस्य पदयोः चरणयोः । 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ।' इत्यमरः। निजस्य पुष्पेषोः शस्त्राणि तन्निभानि तत्समानि, संभोगोत्पादनक्षमाणीति भावः । कुसुमानि पुष्पाणि न्यस्य समर्प्य । स एष सोऽयम् । 'सोऽचि लोपे चेत्पादपूरणम् ।६ १। १३४।' इति सुलोपः ।दण्डेन तुल्यमिति दण्डवत् । भुवि धरणीतले लुठन् किमु । इदमुत्प्रेक्षणम् । तं महेश्वरम् । शरणे साधुस्तं शरण्यम् उपगम्य प्राप्य ननाम प्रणतवान् । पूर्वपद्येन गतार्थत्वादिदं प्रक्षिप्तं पद्यं प्राहुः ॥ ४० ॥

व्यापृतस्य शतरुद्रियजप्तौ
पाणिमस्य नवपल्लवलीलम् ।
भृङ्गभङ्गिरिव रुद्रपराक्ष-
श्रेणिरश्रयत रुद्रपरस्य ॥ ४१ ॥

व्यापृतस्येति ॥ रुद्रशब्दात्परेषां पश्चादुच्चार्यमाणानामक्षाणां रुद्राक्षाणामित्यर्थः । रुद्रः परः परं दैवतं येषां वा रुद्रपराः शिवभक्तास्तत्संबन्धिनां तैर्धार्यमाणानामिति यावत् । तादृशानां वा मणीनां श्रेणिर्माला भृङ्गभङ्गिर्भ्रमरपङ्क्तिरिवास्य नलस्य नवपल्लववल्लीला यस्य तत्सदृशमित्यर्थः । एवंविधं पाणिं करमश्रयत सिषेवे । किंभूतस्य—रुद्रपरस्य शिवभक्तस्य, अत एव शतं रुद्रा देवता अस्य शतरुद्रसंबन्धिनः शतरुद्रियसंज्ञकस्य 'नमस्ते—' इत्यादिशिवसूक्तस्य जप्तौ जपे विषये व्यापृतस्य सव्यापारस्य रुद्राक्षाणां रुद्रपरत्वात् 'नमस्ते—' इत्यादिषडङ्गजपं रुद्राक्षजपमालया चकारेत्यर्थः । भृङ्गमालाऽपि नवपल्लवं सेवते । 'शतरुद्राद्घश्च'इति वक्तव्याद्घः । जप्तौ, 'तितुत्रतथसिसुसरकसेषु च। ७। २।९।' इतीण्निषेधः'पद्माक्षैश्चैव रुद्राक्षैः—' इत्यादिहारीतोक्तो हरोक्तश्च जपमालाविधिर्द्रष्टव्यः। आणिमादिसिद्धये पाद्मो रौद्राक्षश्चेति ज्ञातव्यः ॥ ४१ ॥

उत्तमं स महति स्म महीभृत्
पूरुषं पुरुषसूक्तविधानैः ।
द्वादशापि च स केशवमूर्ती-
र्द्वादशाक्षरमुदीर्य ववन्दे ॥ ४२ ॥

उत्तममिति ॥ स महीभृन्नल उत्तमं परमं पूरुषं पुरुषोत्तमं पुरुषसूक्तस्य 'सहस्रशीर्षा पुरुषः ।' इत्यादिषोडशर्चस्य सूक्तस्य विधानैरनुष्ठानप्रकारविशेषैः । 'दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥ आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता । पुरुषो यो जगद्बीजमृषिर्नारायणःस्मृतः॥' तथा—'ॐकारपूर्वकैश्चैव षोडशर्चैः पृथक्पृथक् । आवाहनासनं पाद्यमर्घ्यमाचमनीयकम् ॥ स्नानं वस्त्रोपवीतं च गन्धमाल्यानि च क्रमात् । धूपं दीपं च नैवेद्यं नमस्कारं प्रदक्षिणम् । षोडश्योद्वासनं कुर्यादेष नारायणो विधिः ॥' इति स्मृतिवाक्यविहितप्रत्यृचक्रमनिर्दिष्टैः षोडशोपचारैर्महति स्मापूपुजत् । स नलः 'यवादेसुवा तेवगभ मोन ओम्' इति व्युत्क्रमोक्तद्वादशाक्षरं वासुदेवमन्त्रं वैष्णवागमोक्तक्रमेणोदीर्य सम्यगुच्चार्य द्वादशापि केशवसंबन्धिनीर्मूर्तीर्वैष्णवीर्द्वादशशालग्रामशिलामूर्तीर्ववन्दे तुष्टाव प्रणनाम वा । ता अप्यपूजयदिति भावः । 'शिला द्वादश भो वैश्य शालग्रामसमुद्भवाः । विधिवत्पूजिता येन तस्य पुण्यं वदामि ते ॥ कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः । यत्स्याद्द्वादशकल्पेषु दिनेनैकेन तद्भवेत्॥' इति पाद्मपुराणमिति भावः। पूर्वोक्तद्वादशाक्षरमुच्चार्य द्वादशसंख्याका अपि केशवसंबन्धिनीर्मूर्तीः सामर्थ्यादेतन्मन्त्राक्षरसूचिताः 'ॐ केशवाय धात्रे नमः' इति प्रकारेण 'द्वादशादित्यसहिता मूर्तीर्द्वादश विन्यसेत् । केशवाद्याः क्रमाद्देहे वक्ष्यमाणविधानतः ॥ ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः । अर्यम्णा हृदि मित्रेण माधवः कण्ठदेशतः ॥ वरुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके । अंशुना विष्णुमंसस्थं भगेन मधुसूदनम् ॥ गले विवस्वता युक्तं त्रिविक्रममनन्तरम् । वामपार्श्वस्थमिन्द्रेण वामनाख्यमथांसके ॥ पूष्णा श्रीधरनामानं गले पर्जन्यसंयुतम् । हृषीकेशाह्वयं पृष्ठे पद्मनाभं ततः परम् ॥ त्वष्ट्रा दामोदरं पश्चाद्विष्णुना ककुदि न्यसेत् । द्वादशार्णं महामन्त्रं ततो मूर्ध्नि प्रविन्यसेत् ॥' इति द्वादशाक्षरगर्भितामिति ज्ञातव्यम् । प्रकारान्तरमागमोक्तं द्रष्टव्यम् । महीयानिति पाठे—नितरा-

१ अत्र नवेत्युपमा, भङ्गिरिवेत्युत्प्रेक्षा चार्थालङ्कारौ, अनुप्रासश्च शब्दालङ्कारः ।

मागमशास्त्रकोविदः परमभक्तश्चेत्यर्थः । 'पुरुषाः पूरुषा नरः' इत्यमरः ॥ ४२ ॥

मल्लिकाकुसुमदुण्डुभकेन
स भ्रमीवलयितेन कृते तम् ।
आसने निहितमैक्षत साक्षात्
कुण्डलीन्द्रतनुकुण्डलभाजम् ॥ ४३ ॥

कथमपूपुजदित्याह—

मल्लिकेति ॥ स नलो भ्रमीभिर्भ्रमणैर्वेष्टनैर्वलयितेन मल्लिकाकुसुमसंबन्धिना दुण्डुभकेन निर्विषविफणस्थूलराजिलतुल्येन घनस्थूलतरदाम्ना कृत्वा नलेनैव कृते रचिते आसने निहितं स्थापितं तं पुरुषोत्तमं साक्षात्तत्त्वतः कुण्डलिनां चक्षुःश्रवसामिन्द्रः शेषस्तस्य तनुः शरीरं तस्य कुण्डलं पुच्छवेष्टितवलयाकारशरीरभागं तद्भजते इति कुण्डलाकारशेषशरीरे वर्तमानमिव ऐक्षत । दुण्डुभस्य विफणतया साम्यात्स्थूलघनतरे पुष्पदाम्नि दुण्डुभपदं लाक्षणिकम् । दुण्डुभप्रतिकृतिर्दुण्डुभकः 'इवे प्रतिकृतौ५।३।९६।' इति कन् । 'दुडि निमज्जने' दुण्डतीति दुन्डुभ इत्यौणादिकः ' पृषोदरादीनि यथोपदिष्टम् ६।३।१०९' इति वा साधुः ॥ ४३ ॥

मेचकोत्पलमयी बलिबन्धु-
स्तद्बलिस्रगुरसि स्फुरति स्म ।
कौस्तुभाख्यमणिकुट्टिमवास्तु-
श्रीकटाक्षविकटायितकोटिः ॥ ४४ ॥

मेचकेति ॥ मेचकोत्पलानि नीलोत्पलानि तन्मयी तद्बलिस्रक् तेन नलेन समर्पिता बलिस्रक् पूजामाला बलिबन्धुर्बलेर्बन्धनकारिणः श्रीविष्णोरुरसि स्फुरति स्माशोभत । उत्प्रेक्षते—कौस्तुभाख्यमणेः सम्बन्धि कुट्टिमं कौस्तुभमणिबद्धा भूर्वक्षोलक्षणा तद्वास्तु वसतिस्थानं यस्यास्तस्याः श्रियः कटाक्षाणां विकटायितानि विस्तारान्नीलतरनेत्रगोलकवक्रविस्फुरितकिरणास्तेषां कोटिः परम्परेव । नीलोत्पलमालाया वक्षस्येव वर्तमानत्वात्तत्रैव च लक्ष्म्या अपि वर्तमानत्वात्साम्यात्कटाक्षविकटायितकोटिरिवाशोभतेति प्रतीयमानोत्प्रेक्षा । बलिबन्धुः, तृनि पूर्वेण 'द्वितीया' इति योगविभागात्समासः।विकटायितेति, आचारक्यङन्ताद्भावे निष्ठा ॥ ४४ ॥

स्वर्णकेतकशतानि स हेम्नः
पुण्डरीकवटनां रजतस्य ।
मालयाऽरुणमणेः करवीरं
तस्य मूर्ध्नि पुनरुक्तमकार्षीत् ॥ ४५ ॥

स्वर्णेति ॥ स नलस्तस्य पुरुषोत्तमस्य मूर्ध्नि हेम्नः सुवर्णघटितपुष्पाणां मालया कृत्वा स्वर्णकेतकीपुष्पाणां शतानि, तथा—रजतस्य रूप्यघटितपुष्पाणां मालया कृत्वा पुण्डरीकाणां सिताम्भोजानां वटनां समर्पणां तथा—अरुणमणेः समर्पितमाणिक्यपद्मरागादिरक्तवर्णमणीनां मालया च कृत्वा करवीरपुष्पाणि, एतत्सर्वं पुनरुक्तमकार्षीत् । सवर्णेनान्येनैव पूजायाः सिद्धत्वात्स्वर्णकेतकादि निरर्थकं चकारेत्यर्थः । स्वर्णकेतकादिभिः सुवर्णघटितपुष्पादिभिश्च श्रीपुरुषोत्तममपूपुजदिति भावः। विष्णुपूजायां कमलकरवीरजपापाषाणपुष्पव्यतिरिक्तानां रक्तपुष्पाणां निषेधः, गृहारोपितकरवीरकुसुमपूजानिषेधः, इत्यविरोधः। पुनरुक्तं, 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १।२।६९' इत्येकशेषैकवद्भावौ ॥ ४५ ॥

नाल्पभक्तबलिरन्ननिवेद्यै-
स्तस्य हारिणमदेन स कृष्णः ।
शङ्खचक्रजलजातवदर्चः
शङ्खचक्रजलपूजनयाऽभूत् ॥ ४६ ॥

नाल्पेति ॥ स ,पुरुषोत्तमस्तस्य नलस्यान्ननिवेद्यैस्तेन समर्पितैर्नानाविधौदनानामुपहारैः कृत्वा नाल्पोऽतिमहान् भक्तबलिरोदनोपहारो यस्य अथ च—अतिमहान् भक्तः श्रद्धापरो बलिर्वैरोचनिर्यस्य, एवम्भूतोऽभूत् । तथा—नलसमर्पितेन हारिणमदेन कस्तूर्या कृष्णवर्णः, अथ च—कृष्णनामा, अभूत् । तथा हेमरूप्यादिबद्धदक्षिणावर्तादिशङ्खानां चक्रं समूहस्तत्र स्थितेन जलेन कृत्वा या पूजा अभिषेकार्घदानादिरूपा तया कृत्वा शङ्खचक्रजलेन जातवती सम्पन्नाऽर्चा पूजा यस्य, अथ

१ अत्र पूरुषं पुरुषेति पुनरुक्तवदाभासः। २ मण्डलाकारीकृतस्य मल्लिकाकुसुमनिचयस्य कुण्डलीन्द्रतनुशोभाप्रत्यायकत्वेन तथोत्प्रेक्षणमित्युत्प्रेक्षा ।

१ मेचकोत्पलमय्याः स्रजो यथोक्तकोटिस्फुरणसाम्येन सम्भावनादुत्प्रेक्षा । द्योतकाप्रयोगाच्चेयं प्रतीयमाना । २ अत्र पुनरुक्तत्वकरणमुत्प्रेक्षणमयमितीवादेरप्रयोगात्प्रतीयमानोत्प्रेक्षा । हेमरजतमालयोः स्वानुरूपकेतकीकमलविशेषमालाभ्यां सारूप्यात्सामान्यालङ्कारश्च ।

च—शङ्खः पाञ्चजन्यः, चक्रं सुदर्शनः, जलजातं पद्मं, तानि विद्यन्ते यस्यास्तादृशी शङ्खचक्रपद्मयुक्ता अर्चा प्रतिमा यस्यैवंविधोऽभूत् । पुरुषोत्तमसम्बन्धिना-मेतेषां शब्दानामन्वर्थत्वमेव तत्कृतान्ननैवेद्यादिसमर्पणेनेदानीमभूदित्यर्थः । एतन्निबन्धना एवास्यैताः सञ्ज्ञा इति वा । अत्र प्रतीयमानोत्प्रेक्षा । 'प्रतिकृतिरर्चा पुंसि—'इत्यमरः । नाल्पेति नशब्दसमासः । हारिणेति संबन्धेऽण् ॥ ४६ ॥

राज्ञि कृष्णलघुधूपनधूमाः
पूजयत्यहिरिपुध्वजमस्मिन् ।
निर्ययुर्भवधृता भुजगा भी-
दुर्यशोमलिनिता इव जालैः ॥ ४७ ॥

राज्ञीति ॥ कृष्णलघुः कृष्णागुरुस्तस्य धूपनधूमा धूपकरणसंबन्धिनो धूमा अस्मिन् राज्ञि नले अहिरिपुर्गरुडो ध्वजे यस्य तं गरुडध्वजं पुरुषोत्तमं धूपोपचारेण पूजयति सति जालैर्गवाक्षैर्बहिर्निर्ययुः । उत्प्रेक्षते—भीरेव दुर्यशो गरुडासक्तिभयजन्येनायशसा स्वतो धवलतरा अपि मलिनिताः श्यामीकृताः देवतागारस्थितेन भवेन हरेण स्वदेहे भूषणत्वेन धृता वासुकिप्रमुखा भुजगा इव । अयमस्मद्रिपुकेतुं पूजयति, अतो रिपुनिकटे स्थातुमशक्यामिति हराश्रिताः शबला अपि सर्पा भीदुर्यशोमलिनिता इव दण्डायमानकृष्णधूमव्याजेन जालैर्निर्ययुरित्यर्थः । अन्योऽपि भीतिमलिनो जालादिद्वारेण बहिर्निर्गच्छति । ' धूपज धूपा' इत्यपि पाठः । अगुरुपर्यायो लघुशब्दः । तेन कृष्णागुरुरित्यर्थः ॥ ४७ ॥

अर्घनिःस्वमणिमाल्यविमिश्रैः
स्मेरजातिमयदामसहस्रैः ।
तं पिधाय विदधे बहुरत्न-
क्षीरनीरनिधिमग्नमिवैषः ॥ ४८ ॥

अर्घेति ॥ एष नलः अर्घेण मूल्येन निःस्वा दरिद्रास्तेषामत्युत्तमानां मणीनां माल्यैर्मालाभिर्विमिश्रैः स्मेरजातिमयदामसहस्रैर्विकसितमालतीकुसुममालासहस्रैस्तं पुरुषोत्तमं पिधायाच्छाद्यैव बहूनि रत्नानि यस्मिन्नेवंभूतो यः क्षीरनीरनिधिर्दुग्धसमुद्रस्तत्र मग्नमिव विदधे चकार । मध्ये मध्ये मणिमालाभिर्मध्ये मध्ये पुष्पमालाभिः संवेश्य बहुरत्नक्षीरसमुद्रशायिनमिव चकारेत्यर्थः । रत्नस्थाने रत्नान्येव क्षीरस्थाने च तानि दामानि, तैराशिखं पर्यपूपुजदिति भावः । समृद्ध्यतिशयो भक्त्यतिशयश्च सूचितः । बहूनि रत्नानि क्षीराणि च यस्मिन् स चासौ नीरनिधिश्चेति वा ॥ ४८ ॥

अक्षसूत्रगतपुष्करबीज-
श्रेणिरस्य करसङ्करमेत्य ।
शौरिसूक्तजपितुः पुनरापत्
पद्मसद्मचिरवासविलासम् ॥ ४९ ॥

अक्षेति ॥ अक्षसूत्रं जपमालां गतानि प्राप्तानि तत्र वर्तमानानि पुष्करबीजानि कमलबीजानि तेषां श्रेणिः पद्माक्षराचिता जपमालिका शौरिसूक्तजपितुः 'विष्णोर्नु कम्—' इत्यादिविष्णुसूक्तजपशीलस्यास्य नलस्य करसंकरं पाणिपद्मसम्बन्धमेत्य प्राप्य पुनरपि पद्मरूपे सद्मनि स्वगृहे चिरं वासः स्थितिस्तेन कृत्वा यो विलासः शोभा तमापत्प्राप। विष्णुमन्त्रा हि पद्माक्षमालया जप्यन्ते, नलकरश्च पद्मसदृशः तत्सम्बन्धात्पद्माक्षमाला पुनरपि पद्मसद्मनिवासं प्राप्तेवेति प्रतीयमानोत्प्रेक्षा । 'पुष्कराम्भोरुहाणि च'इत्यमरः। जपितुः,'तृन्३।२।१३५' इति ताच्छील्ये तृनि 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः२।१।२४'इत्यत्र 'द्वितीया' इति योगविभागात्पूर्वेण समासः ॥ ४९ ॥

कैटभारिपदयोर्नतमूर्ध्ना
सञ्जिता विचकिलस्रगनेन ।
जह्नुजेव भुवनप्रभुणाऽभात्
सेविताऽनुनयतायतमाना ॥ ५० ॥

कैटभेति ॥ अनुनयता अर्थान्मालामेव चरणसमीपं प्रापयता भुवनप्रभुणा लोकनाथेन नतमूर्ध्ना नम्रशिरसा प्रणामलक्षणं षोडशमुपचारं कुर्वताऽनेन नलेन कैटभारेः

१ अत्र भक्तादेरोदनादिवाच्यतायाः प्रकृतत्वात् वैरोचन्यादिवाच्यताया अप्रकृतत्वादभिधायाश्च प्रकृत एव नियन्त्रितत्वादप्रकृतार्थो व्यज्यमानोऽनुपयुक्तो मा भूदित्युपमानोपमेयत्वाभ्यां कल्पने उपमा ध्वन्यत इति बोध्यम्। २ अत्र मलिनिता इवेत्युत्प्रेक्षा ।

१ अत्र दाम्नां स्मेरजातिमयत्वेन वचनं दामापह्नुत्य स्मेरत्वस्थापनार्थमित्यपह्नुतिः । २ अत्र करेति यमकम् । पद्मसद्मेत्यनुप्रासो रूपकं च ।

श्रीविष्णोः पदयोः सञ्जिता पुष्पाञ्जलित्वेन समर्पिता आयतमानाऽतिदीर्घा विचकिलस्रक् मल्लिकामाला जह्नुजा गङ्गेवाभात्। चरणसम्बन्धादतिदैर्घ्याद्धवलतरत्वाच्च गङ्गेव शुशुभ इत्यर्थः । साऽप्येवंविधा । अथ च— अन्यापि मानिनी नायिका एवंविधा प्रियेणैवमनुनीयते, अथ च—भूलोकं प्रति गमनार्थं यतमाना सप्रयत्ना, अत एव—अनु पश्चान्नयता परावर्त्य पुनरपि ब्रह्मलोकं प्रापयता पुनरत्रागन्तव्यमिति प्रार्थयमानेन नतमूर्धा लोकनाथेन ब्रह्मणा सेविता जाह्नवीव । भुवनप्रभुणा रुद्रेण वा। उक्तविशेषणविशिष्टेन जलप्रभुणा वरुणेन समुद्रेण वा सेवितेति वा। प्रणामान्तां षोडशोपचारपूजां समापयदिति भावः । 'स्मृतो विचकिलो मल्लीप्रभेदे मदनेऽपि च' इति विश्वः ॥ ५० ॥

युग्मेनाह—

स्वानुरागमनघः कमलायां
सूचयन्नपि हृदि न्यसनेन ।
गौरवं व्यधित वागधिदेव्याः
श्रीगृहोर्ध्वनिजकण्ठनिवेशात् ॥ ५१ ॥
इत्यवेत्य वसुना बहुनाऽपि
प्राप्नुवन्न मुदमर्चनया सः ।
सूक्तिमौक्तिकमयैरथ हारै-
र्भक्तिमैहत हरेरुपहारैः ॥ ५२ ॥

स्वेति ॥ इतीति च ॥ स नल इति पूर्वोक्तं श्रीविष्णोरभिप्रायमवेत्य ज्ञात्वा बहुनापि वसुना स्वर्णमणिवसनादिना लक्ष्मीस्थानीयेन समर्पितेन कृतयाऽर्चनया मुदं न प्राप्नुवन् हर्षमलभमानः सन्, अथ पश्चात्सूक्तयः सरसशोभनपदबन्धास्तद्रूपाणि मौक्तिकानि तन्मयैर्हारैरेकावल्यादिहारैरेवोपहारैः पूजनैः कृत्वा हरेर्भक्तिमैहताकृतेत्यर्थः । सम्यग्वैदिकं पूजनं कृत्वा श्रीपुरुषोत्तमदशावतारादिस्तुतिं प्रारेभ इति भावः । इति किम्—न विद्यते अघं दुःखं पापं दारिद्र्यं च यस्माद्धेतोः सोऽनघः पुण्यश्लोकः श्रीविष्णुः हृदि न्यसनेन स्थापनेन कृत्वा कमलायां लक्ष्म्यां विषये स्वस्यानुरागं प्रेमभरं तां प्रति लोकं प्रति वा सूचयन्नपि श्रीगृहान्निजहृदयादूर्ध्वं उपरिभागे वर्तमानो निजकण्ठस्तत्र निवेशात्स्थापनाद्धेतोर्वागधिदेव्याः सरस्वत्या गौरवं व्यधित बहु संमानमकृत । अन्योऽपि राजादिरेकां प्रियामधोभागे स्थापयन्नालिङ्गनादिना सम्भावयन्नन्यां तत्सपत्नीं प्रियतमां तदीयगृहस्योर्ध्वदेशे स्थापयन् कण्ठाश्लेषं च कुर्वंस्तस्या गौरवं करोति । तथा विष्णोर्वक्षसि लक्ष्मीस्तिष्ठति, तदुपरिभागे कण्ठे सरस्वतीति विष्णोः सरस्वत्यां गौरवमधिकमिति ज्ञात्वा सरस्वत्या कृत्वा स्तुतिं चक्र इत्यर्थः । मौक्तिकत्वरूपणेन सूक्तेर्नैर्मल्यं सूच्यते । स्तुत्या नलस्य भक्त्यतिशयश्च ॥ ५१ ॥ ५२ ॥

दूरतः स्तुतिरवाग्विषयस्ते
रूपमस्मदभिधा तव निन्दा ।
तत्क्षमस्व यदहं प्रलपामी-
त्युक्तिपूर्वमयमेतदवोचत् ॥ ५३ ॥

स्वमौद्धत्यं परिहरन्स्तुतिमाह—

दूरत इति ॥ अयं नल इति उक्तिः पूर्वं यथा तथा पूर्वमेवमुक्त्वा एतद्वक्ष्यमाणमवोचत् । इति किम्—हे स्वामिन्, ते तव स्तुतिर्दूरतो, नितरामवाग्विषयो वाचामगोचरो यतस्तव रूपम् 'यतो वाचो निवर्तन्ते'—इत्यादिश्रुतेः । अर्थाद्गोचरो नेति त्वदीया स्तुतिः कथंकारं कर्तुं शक्या । स्वरूपकथनेऽप्यशक्यत्वात्तव स्तुतिरप्यशक्यकरणैवेत्यर्थः । अत एव अस्माभिः कृता अभिधा भवद्गुणवर्णनविषया वाणी तव निन्दैव । अत्यन्तात्वकस्तावकत्वात् अवाग्गोचरस्यापि वाग्गोचरकरणाच्चेत्यर्थः । एवं सत्यपि मूर्खतया यदहं प्रलपामि स्वरूपाज्ञानान्निरर्थकं वदामि तत् क्षमस्वेति । प्रलपामीत्यनेन नितरामनौद्धत्यं सूचितम् ॥ ५३ ॥

स्वप्रकाश जड एष जनस्ते
वर्णनं यदभिलष्यति कर्तुम् ।
नन्वहर्पतिमहः प्रति स स्यात्
न प्रकाशनरसस्तमसः किम् ॥ ५४ ॥

स्वेति ॥ हे स्वप्रकाश सूर्यादिवत्प्रकाशान्तरनिरपेक्ष परमात्मन्, एष मल्लक्षणो जडोऽविद्याच्छादितचैतन्यो जनस्ते वर्णनं कर्तुं यदभिलष्यति सोऽहर्पतेः

१ अत्र जह्नुजेवेत्युत्प्रेक्षा । अनुप्रासश्च ।

१ अत्रानुप्रासः, हारैरिति यमकं चासूक्तीनां मौक्तिकत्वेन रूपणमुपहाराणां हारत्वेन रूपणस्य समर्थनार्थमिति समस्तवस्तुविषयं रूपकम्। २ अत्र पूर्वोत्तरवाक्ययोर्यत्तद्भ्यां वाक्यपल्लवनाभावे हेतु मवलम्बत इति काव्यलिङ्गम् ।

सूर्यस्य महस्तेजः। प्रति लक्षकृत्य सूर्यतेजोऽहं प्रकाशयिष्यामीति तमसोऽन्धकारस्य प्रकाशने रसोऽनुरागः किं न स्यात्[1], अपि तु स्वप्रकाशस्य तव वर्णने जडस्य ममाभिलाषः सूर्यतेजःप्रकाशने तमसोऽभिलाष इवात्यन्तमनुचित एवेत्यर्थः । आत्मा स्वप्रकाश इति वेदान्तसिद्धान्तः ॥ ५४ ॥

**मैव वाङ्मनसयोर्विषयो भू-**
**स्त्वां पुनर्न कथमुद्दिशतां ते ।**
**उत्कचातकयुगस्य घनः स्यात्**
**तृप्तये घनमनाप्नुवतोऽपि ॥ ५५ ॥**

ननु यदि त्वं जडो मदीयस्वरूपं न जानासि, तर्हि त्वदीये वाङ्मनसे कथं मत्परायणे इत्याशङ्कां परिहरन् स्तुत्यवसरं दातुमाह—

मैवेति ॥ हे भगवन्, त्वं 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुतिप्रामाण्याद्वाङ्मनसयोर्विषयो गोचरो मैव भूः ताभ्यां ग्रहीतुं न शक्यः स एव यद्यपि, तथाऽपि ते वाङ्मनसे पुनस्त्वां कथं नोद्दिशताम्, अपि तु अविषयमपि त्वामुद्दिश्य प्रवर्तेतामित्यर्थः । दृष्टान्तमाह—अतिदूरवर्तित्वात् घनं मेघमनाप्नुवतोऽलभमानस्याप्युत्कस्योत्कण्ठितस्य चातकस्त्रीपुंसयुगस्य घनो मेघो जलदानेन तृप्तये स्यादेवेति दृष्टान्तेनाविषयोऽपि भवान् स्तुतो ध्यातश्च मोक्षहेतुः । स्वयमेवानुग्रहीष्यतीति तव स्तुतिः कर्तुं युक्तैवेति भावः । वाङ्मनसयोः, 'अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ५ । ४ । ७७' इति साधुः ॥ ५५ ॥

**छद्ममत्स्यवपुषस्तव पुच्छा-**
**स्फालनाज्जलमिवोद्धतमब्धेः ।**
**श्वैत्यमेत्य गगनाङ्गणसङ्गा-**
**दाविरस्ति विबुधालयगङ्गा ॥ ५६ ॥**

इदानीं प्रथमं मत्स्यावतारं स्तोतुमाह—

छद्मेति ॥ हे हरे शङ्खासुरापहृतवेदोद्धरणरूपच्छद्मना मत्स्य एव वपुर्यस्य तस्य तव पुच्छेनास्फालनादाघातादूर्ध्वमुद्धतं क्षिप्तमुच्छलितं सागरजलमिव गगनाङ्गणस्य सङ्गात्संबन्धात् श्वैत्यं धवलतामेत्य प्राप्य विबुधालयस्य स्वर्गस्य गङ्गा मन्दाकिनी आविरस्ति प्रकटीभवति । तदेव जलं मन्दाकिनीभूय गगने स्फुरतीत्यर्थः । वेदसंरक्षणद्वारा लोकानुग्रहार्थमेव त्वया तत्तच्छरीरं धार्यते इति भावः । एवमुत्तरत्रापि ज्ञेयम् । श्वैत्यमेत्येवेति वाऽन्वयः । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत' इत्यादि श्रीकृष्णवचनमेव छद्मपदेन सूचितम् । सागरोदकस्याश्रयौपाधिकतया प्रतिभासमानस्यापि गगने क्षिप्ततया निरुपाधिकं शुक्लमेवापां रूपं प्रकटितमित्यनेनातिस्थूलतरशरीरवत्त्वं सूचितम् । नदी चाद्यापि तथैव तिष्ठति, न त्वधः पततीति सामर्थ्यातिशयः सूच्यते । यद्यपि नलः शैव इति प्रथा, तथापि शिवस्य विष्णुभक्तत्वाद्विष्णुस्तुत्यैव शिवस्य प्रीतिसंभवादेकरूप्याच्च नलस्य विष्णुस्तुतिकरणम् । श्रीहर्षस्य च परमवैष्णवत्वात्पुरुषोत्तमस्तुतिनिबन्धनं युक्तमेवेति न काचिदनुपपत्तिः । अत एवोपसंहारेऽपि 'हरिहरं परिपूज्य' इत्युक्तम् ॥ ५६ ॥

**भूरिसृष्टिधृतभूवलयानां**
**पृष्ठसीमनि किणैरिव चक्रैः ।**
**चुम्बिताऽवतु जगत्क्षितिरक्षा-**
**कर्मठस्य कमठस्तव मूर्तिः ॥ ५७ ॥**

कूर्मं वर्णयति—

भूरीति ॥ हे भगवन्, तव कमठसंज्ञा मूर्तिर्जगद् अवतु । किंभूता—भूरिषु प्रतिसर्गं धृतानां भूवलयानां किणैरतिघर्षणनिष्ठुरीभूतसंजातवैवर्ण्यत्वग्व्रणैरिव चक्रैश्चक्राकाररेखाविन्यासविशेषैः पृष्ठस्य सीमनि स्थले चुम्बिता स्पृष्टा किंभूतस्य क्षितौ क्षये प्रलये रक्षायां च कर्मठस्य कर्मशूरस्य पृष्ठे धारणेन क्षितिरक्षणक्षमस्य । पृथ्वीधारणद्वारा लोकानुग्रहार्थमेव कमठरूपं त्वया धृतमिति भावः । सप्तपातालान्तेऽधस्तात्फणामण्डले शेषो भुवं बिभर्ति, ततोऽप्यधो ब्रह्माण्डाधःकटाहस्य भारं पृष्ठे वहन् ब्रह्माण्डावरणरूपे जले कूर्मराजो वर्तत इति पुराणम् । एतेन प्रतिसर्गमनन्तभूमण्डलधारणेना-

1 अत्रोत्प्रेक्षा । वर्णनाभिलषणस्य तमःप्रकाशनस्य च भिन्नत्वेऽपि एकवाक्यतोपमां परिकल्पयतीति निदर्शना ।
2 अत्र दृष्टान्त इति व्याख्यातारः

1 अत्रानुप्रासः, उत्प्रेक्षा च ।

निर्वाच्यमहिमत्वं सूचितम्। कमठपृष्ठे च स्वभावतश्चक्राणि भवन्ति ॥ ५७ ॥

श्लोकद्वयेन वराहं वर्णयति—

दिक्षु यत्खुरचतुष्टयमुद्रा-
मभ्यवैमि चतुरोऽपि समुद्रान्।
तस्य पोत्रिवपुषस्तव दंष्ट्रा
तुष्टयेऽस्तु मम वास्तु जगत्याः ॥५८॥

दिक्ष्विति ॥ अहं चतसृषु प्राच्यादिदिक्षु चतुरोऽपि समुद्रान् यस्य वराहस्य खुराणां चतुष्टयस्य मुद्रां विन्यासं स्थापितचरणातिभारसंजातभूगर्तमेवाभ्यवैमि जाने, तस्य पोत्रिवपुषो महावराहदेहस्य तव दंष्ट्रा मम तुष्टये। कामपूर्त्यानन्दायास्तु। किंभूता दंष्ट्रा—जगत्याः पातालादुद्धरणाद् भूमेर्वास्तु वसतिगृहम्। धृतभूमिरित्यर्थः। 'कोलः पोत्री किरिः किटिः' इत्यमरः। षित्त्वप्राप्तस्य ङीषोऽनित्यत्वाद्दंष्ट्रा ॥ ५८ ॥

उद्धृतिस्खलदिलापरिरम्भा-
ल्लोमभिर्बहिरितैर्बहुहृष्टैः।
ब्राह्ममण्डमभवद्बलिनीपं
केलिकोल तव तत्र न मातः ॥ ५९ ॥

उद्धृतीति ॥ हे केल्या क्रीडामात्रेण कोल धृतवराहरूप भगवन्, हिरण्याक्षं दैत्यं हत्वा पातालात्सकाशादुद्धृतावुद्धरणसमये स्खलन्त्याः पतन्त्या इलाया भुवः परिरम्भात्समारम्भेण धारणादालिङ्गनाच्च हेतोर्बहु नितरां हृष्टैरुन्नतीभूतैः, अत एव—ब्रह्माण्डं निर्भिद्य बहिरितैर्निर्गतैर्लोमभिः कृत्वा ब्राह्ममण्डं तव बलेः पूजायाः सम्बन्धि नीपं तत्कालविकसितकदम्बकुसुममिवाभवत्। किंभूतस्य—तत्र ब्रह्माण्डे स्थूलतरदेहत्वान्न मातः संमातुमशक्तस्य। एवंविधकुसुमपूजायोग्यस्त्वमेव भवसीत्यर्थः। अन्योऽपि योषिदालिङ्गनादुदितरोमाञ्चो भवति। 'ब्राह्मोऽजातौ ६।४।१७१' इति साधुः। मातः, 'मा माने' इत्यस्माच्छतॄ ॥ ५९ ॥

१ अत्रानुप्रासः, किंणैरिवेत्युत्प्रेक्षा। २ अवैमीत्युत्प्रेक्षा। ३ अत्रानुप्रासः अण्डस्य नपित्वेन सम्भावनं प्रतयित इति प्रतीयमानोत्प्रेक्षा।

श्लोकद्वयेन श्रीनृसिंहं वर्णयति—

दानवाद्यगहनप्रभवस्त्वं
सिंह मामव रवैर्घनघोरैः।
वैरिदारिदिविषत्सुकृतास्त्र-
ग्रामसम्भवभवन्मनुजार्धः ॥ ६० ॥

दानवेति ॥ हे सिंह, दानवानामाद्यस्य प्रथमस्य हिरण्यकशिपोर्गहनं मरणरूपं संकटं तदर्थं प्रभव उत्पत्तिः प्राकट्यं यस्य तन्मारणार्थं कृतावतारः, अथ च—दानवो हिरण्यकशिपुस्तद्रूपमाद्यं पुरातनं यद्गहनं वनं तत्र प्रभवो यस्य। पुरातने हि वने सिंहसम्भवो युक्तः, अथच—दानवानामाद्यः श्रीहरिभक्तत्वान्मुख्यः प्रह्लादस्तस्य गहने पितृकारितताडनादिदुःखनिमित्ते हिरण्यकशिपुविदारणद्वारा भक्तप्रह्लादसंरक्षणार्थं धृतोत्पत्तिर्येन तादृशस्त्वं घनवन्मेघवद्घोरैर्गम्भीरैर्निविडैर्भीषणैश्च वा रवैः सिंहनादैर्मामव। किंभूतः—वैरिणः शत्रून् दारयन्ति तच्छीलानि दिविषदां मुनीनां देवानां च सुकृतानि अस्त्राणि च तेषां ग्रामः समूहस्तस्मात् संभव उत्पत्तिर्यस्य तादृशो भवन् संपद्यमानो मनुजो मनुष्य एवार्धं एकदेशो यस्य। 'दानवाद्य–' इति पाठे—दानवानां पापानि तेषां गहनं लक्षणया बाहुल्यं तेन प्रभवो यस्य। दानवदुरितोद्रेकात्तिर्यग्योनिसिंहरूपत्वं दिविषत्पुण्योद्रेकाच्चोत्तमयोनिमनुष्यरूपत्वामित्यर्थः। दानवानामाद्यस्य हिरण्यकशिपोर्गहने सभामहोद्याने प्रभवः प्रकटनं यस्य वा। एतेन स्वर्गवासिनां पुण्यैरस्त्रैश्च कृतमनुष्यार्धदेहः स्वतेजोनिर्मितसिंहार्धश्च नरहरिर्हिरण्यकशिपोर्महासभोपवने एवावततारेति सकलपुराणसंवादः प्रकटितः स्तम्भादिति तु प्रवादमात्रमिति भागवतविरोधादुपेक्ष्यम् ॥ ६० ॥

दैत्यभर्तुरुदरान्धुनिविष्टां
शक्रसंपदमिवोद्धरतस्ते।
पातु पाणिसृणिपञ्चकमस्मा-
न्छिन्नरज्जुनिभलग्नतदन्त्रम् ॥ ६१ ॥

दैत्येति ॥ हे श्रीनृसिंह, ते पाणिसंबन्धिनां सृणीनां तीक्ष्णतरनखरूपाणामङ्कुशानां पञ्चकमस्मान्पातु। किंभूतस्येव तव—दैत्यभर्तुर्हिरण्यकशिपोरुदरलक्षणेऽन्धौ कूपे

१ अत्रानुप्रासः, भवेति यमकं च आद्यदानवस्य मृगत्वं व्यज्यते, घनघोरैरित्युपमा।

निर्विष्टां पतितां शक्रसंपदमुद्धरत इव तस्माद्वाहिर्निर्गमयत इव । किंभूतं पञ्चकम्—छिन्नरज्जुनिभानि मध्यत्रुटितपूर्वपतितदोरकतुल्यानि लग्नानि तस्य दैत्यरिपोरुदरस्थं चान्त्राणि यत्र यस्य वा । यथा कूपपातितं वस्तु समुद्धर्तुं लोहनिर्मिताङ्कुशपञ्चकं कूपमध्ये निक्षिप्य चालयित्वा पूर्वनिमग्नरज्जुखण्डसहितं तदादाय निर्गच्छति तथा तव रज्जुस्थानीयभुजदण्डकपाणिजश्रेणिपञ्चकं दैत्यराजोदरकूपपतितामिन्द्रसंपदमुद्धरच्छिन्नरज्जुनिभलग्नतदन्त्रं सन्मामवत्वित्यर्थः । शृणाति हिनस्ति श्रेणिरौणादिकः । 'असदो द्वयोश्च ।१।२।५९।' इति बहुत्वम् ॥ ६१ ॥

श्लोकचतुष्टयेन वामनं वर्णयति—

**स्वेन पूर्यत इयं सकलाशा**
**भो बले न मम किं भवतीति ।**
**त्वं बटुः कपटवाचि पटीयान्**
**देहि वामन मनःप्रमदं नः ॥ ६२ ॥**

स्वेनेति ॥ हे वामन, इति पूर्वार्धोक्ता कपटवाक् तस्यां विषये पटीयानतिनिपुणो बटुर्ब्रह्मचारिवेषधारी चपलस्त्वं नोऽस्मदादीनां मम वा मनसः प्रमदं हर्षं देहि सर्वाभिलाषपूरणं कुर्वित्यर्थः । बटवश्च कपटवाचो भवन्ति । इति किम्—पादत्रयमात्रस्थलयाचिनि वामने 'किमेतदल्पीयस्त्वया याचितं सकलमेतद् भुवनं गृहाण, अहं ददामि' इति दानशूरत्वाद्बलिचक्रवर्तिनि भाषमाणे श्लेषवक्रोक्तिच्छलेन वामनस्य प्रत्युत्तरमेतत्—भो बले चक्रवर्तिन्, भवता स्वेनाऽऽत्मना हेमरत्नादिना द्रव्येण वा इयं मदीया सकलाशा सर्वोऽप्यभिलाषो न पूर्यते, अपि तु परिपूर्णा करिष्यत एव। परं मम (यतिनः) भिक्षोः निःस्पृहस्य वा किं प्रयोजनमिति शेषः । त्वं समर्थ एव परं तावता मम प्रयोजनं नास्ति । कुटीनिर्माणार्थं पदत्रयमितं स्थलमेव देहीत्यर्थः । स्वेनात्मीयेन बलेन च सैन्येन च निजशक्त्या वा सकला दिक् भवता पूर्यते पूर्णाक्रियत एव, तथाऽपि मम किं तेन यो याचते तस्मै तद्ददासीति प्रत्यक्षदर्शनाद्धस्ताभिनयदर्शनीयेयं सकलानां जनानां तृष्णा भो बले ! त्वया परिपूर्णा क्रियते यतः, अतो मम कलया लेशेन सहिता । अल्पीयसीति यावत् । एवंभूता पदत्रयमिता तृष्णा किं न पूर्यते अपि तु पूरयिष्यत एव । अथ च—भो बले, इयं सकलाऽपि दिशा मम स्वेनात्मना न पूर्यते, अपि त्वावरिष्यत एव । भवता किं कर्तुं शक्यते, अपि तु न किंचिदित्यर्थ इति । वा मया सकलाऽप्याशा सकला दिगात्मना पूर्यते, भवता बलिना मम किं कर्तुं शक्यत इति वा । अथ च—भो बले, पादत्रययाचनविषया मम सकला तृष्णा भवत स्वेनात्मस्वरूपेण स्वदेहेन किं न पूर्यते अपि तु पूरयिष्यत एव । महीयः शरीरधारणेन लोकद्वये पदद्वयेन मया व्याप्ते प्रतिश्रुतं तृतीयं पादमदातुर्निरयो भविष्यतीति भिया शिष्टपदस्थापनार्थं स्वशरीरमेव त्वया दास्यते इत्यर्थः । त्वां पाताले पातयिष्यामीति भावः । भूस्वर्गरूपं लोकद्वयमेव बलेः स्वम् । नरकपतनभिया स्वशरीरमेव तृतीयपदत्वेन दत्तमिति श्रीभागवते 'पदं तृतीयं कुरु शीर्ष्णि मे निजम्' इति वचनात् । इत्यादिकपटवाग्ज्ञेया । 'प्रमदसंमदौ हर्षे ३।३।६८' इति साधुः ॥ ६२ ॥

**दानवारिरसिकाय विभूते-**
**र्वश्मि तेऽस्मि सुतरां प्रतिपत्तिम् ।**
**इत्युदग्रपुलकं बलिनोक्तं**
**त्वां नमामि कृतवामनमायम् ॥ ६३ ॥**

एवं वामनेनोक्ते बलिरुत्तरमाह—

दानेति ॥ अहं कृता वामनस्य ह्रस्वपुरुषस्य माया येन यथाऽहमनेन ज्ञात इति ज्ञात्वा जाताश्चर्यवशादुदग्रपुलकं सञ्जातरोमाञ्चं बलिना इति पूर्वार्धोक्तप्रकारेण बलिचक्रवर्तिनोक्तं भाषितं त्वां नमामि । इति किम्—हे ब्रह्मन्, अस्मि अहं दानवारिणि रसिकाय कृताभिलाषाय ते तुभ्यं विभूतेः स्वीयसंपदः सुतरां प्रतिपत्तिं संकल्पेन दानं वश्मि इच्छामि सर्वां संपदं तुभ्यं दातुमिच्छामि । अथ च—त्वं दानवानामरिः शत्रुरसि ते तव कायविभूतेः शरीरवैभवस्य प्रतिपत्तिं ज्ञानं नितरामहमिच्छामि । कीदृशं महच्छरीरं धारयिष्यसि, तद्द्रष्टुमिच्छामीत्यर्थः । यद्वा तव कायवैभवस्य प्रतिपत्तिं रूपान्तरप्राप्तिं वश्मि । रूपान्तरं धारयिष्यामीति त्वया सूचितम् । तत्सुखेन धारणीयमित्यहं कामय इत्यर्थः । अस्मीत्यहमर्थेऽव्ययम् ॥ ६३ ॥

---

१ अत्रानुप्रासः । इवेत्युत्प्रेक्षा निभेत्युपमा च ।

१ अत्राप्यनुप्रासः, 'मन' इति यमकं च । २ अत्राप्यनुप्रासः ।

भोगिभिः क्षितितले दिवि वासं
बन्धमेष्यसि चिरं ध्रियमाणः।
पाणिरेष भुवनं वितरेति
छद्मवाग्भिरव वामन विश्वम् ॥ ६४ ॥

एवं बलिनोक्ते वामनः प्राह—

भोगिभिरिति ॥ हे वामन, इति एवंरूपाभिश्छद्मवाग्भिः कपटवचनैरुपलक्षितस्त्वं विश्वमव रक्ष । इति किम्—बले, चिरं चिरायुषेण बहुकालं क्षितितले भूलोके दिवि वा ध्रियमाणोऽवतिष्ठमानस्त्वं भोगिभिर्मित्रभ्रात्रातिथिभिः सह संयोगं प्राप्स्यसि यदि । यदि भूलोकेऽवस्थितिमिच्छसि तर्हि तत्र, यदि दिवि तर्हि तत्र वा, मित्रादिभिः सह सुखेन चिरकालमत्रस्थितिं प्राप्स्यसीत्यर्थः । इत्याशीः । एष प्रतिग्रहार्थं प्रसार्यमाणः प्रत्यक्षदृश्यो मम करोऽस्ति तस्मादत्र पाणौ पदत्रयदानसम्बन्धि भुवनं जलं वितर देहीति । अथच—क्षित्यास्तले पाताललक्षणे दिवि रमणीयत्वात् स्वर्गे भोगिभिः सर्पैर्ध्रियमणो बध्यमानः सन् चिरकालं वासं दुःखबहुलत्वाद्वसतिरूपं बन्धं बन्धनं प्राप्स्यसि।यद्वा–चिरं जीवन् पाताले सर्पैः सह वासं बन्धनं चैष्यसि । यद्वा–सर्पैः क्रियमाणं बन्धनं ध्रियमाणो धारयन्सन् पाताले वासमेष्यसि वा । इवार्थो वा दिवि वेत्यर्थः। यथा सुखिभिः सह स्वर्गे तिष्ठन् संबन्धं प्राप्नोषि तथेदानीमेव पाताले सर्पैः सह संबन्धमेष्यसि । यद्वा—अदिविं स्वर्गव्यतिरिक्ते पाताल तृतीयपादार्थं स्वर्गात्सकाशात्त्वामस्वर्गरूपे पाताले पातयिष्यामीत्यर्थः । एष चक्रविक्षेपतत्परो ममकरोऽस्ति, इन्द्राद्गृहीतं भुवनं त्रैलोक्यं देहि पुनस्तस्मै समर्पयेति । भुवनं वितरेत्यवतारप्रयोजनं सूच्यते । 'जीवनं भुवनं वनम्' 'विष्टपं भुवनम्-' इति चामरः ॥ ६४ ॥

आशयस्य विवृतिः क्रियते किं
दित्सुरस्मि हि भवच्चरणेभ्यः ।
विश्वमित्यभिहितो बलिनाऽस्मान्
वामन प्रणतपावन पायाः ॥ ६५ ॥

एवं वामनेनोक्ते बलिः पुनराह—

आशयस्येति ॥ हे वामन, प्रणतपावन, बलिना इति पूर्वोक्तप्रकारेणाभिहित उक्तस्त्वमस्मान् पाया रक्ष । इति किम्—भो वामन, त्वया शयस्य पाणेर्विवृतिः प्रसारणं किं क्रियते,अपि तु तन्न कर्तव्यम् ।आशब्दोऽयोग्यतया शिरःकम्पपूर्ववारणाभिनये । अनुचितमेतन्न कर्तव्यमित्यर्थः । आ सामस्त्येन नितरां शयस्य विवरणं किं क्रियते अपि तु तन्न कर्तव्यमिति वा । वाक्यपूरणे वा । हि यस्माद्भवच्चरणेभ्यः पूज्येभ्यो भवद्भ्यो विश्वं सकलं हेमरत्नादि वा दित्सुर्दातुमिच्छुरस्मि। चरणशब्दः पूज्यार्थः । अहं सर्वमिदानीमेव ददामि किमिति पाणिप्रसारणेनैतदधैर्यं प्रकटीक्रियत इत्यर्थः । अथ च—सहसपात्वाद्बहुभ्यो भवदीयपादेभ्यः सर्वं दित्सुरस्मि सर्वस्वदानेन भवच्चरणान् पूजयिष्यामि । तस्मात्करप्रसारणं किं क्रियते ॥ ६५ ॥

१ अत्रानुप्रासः ।

श्लोकत्रयेण परशुरामं स्तौति—

क्षत्रजातिरुदियाय भुजाभ्यां
या तवैव भुवनं सृजतः प्राक् ।
जामदग्न्यवपुषस्तव तस्या-
स्तौ लयार्थमुचितौ विजयेताम् ॥६६॥

क्षत्रेति ॥ हे भगवन्, तव तौ भुजौ विजयेतां सर्वोत्कर्षेण वर्तेताम् । तौ कौ–प्राक् सृष्ट्यादौ भुवनं सृजतो ब्रह्मरूपिणस्तवैव 'बाहू राजन्यः कृतः' इति श्रुतिप्रामाण्याद्भुजाभ्यां सकाशाद्या क्षत्रजातिः क्षत्रियमात्रमुदियायोत्पन्नम् । तस्याः क्षत्रजातेर्लयार्थं क्षयार्थं जामदग्न्यवपुषस्तव तौ भुजौ उचितौ । कारणे कार्यलयस्यौचित्यात् । 'अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् । एषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति । ' इति भारतवचनाच्च । अवतारप्रयोजनमुक्तम् ।जातेर्नित्यत्वादुत्पत्तिविनाशावयुक्ताविति ये आक्षिपन्ति, ते आविर्भावतिरोभावयोर्विवक्षितत्वेनोत्तरणीयाः । वेदान्तसिद्धान्ते जातेर्नित्यत्वाभाव इत्यपि । जामदग्न्येति गर्गादिषु पाठसामर्थ्याद्यञिति ज्ञेयम् । विजयेतां, 'विपराभ्यां जेः ।१।३।१९।' इति तङ् ॥ ६६ ॥

पांसुला बहुपतिर्नियतं या
वेधसाऽरचि रुषा नवखण्डा ।
तां भुवं कृतवतो द्विजभुक्तां
युक्तकारितरता तव जीयात् ॥६७॥

१ अत्राप्यनुप्रासः । २ 'श्लोकद्वयेन' इति पाठान्तरम् ।
३ अत्राप्यनुप्रासः ।

पांसुलेति ॥ नियतं सर्वदा पांसुला धूलिबहुला बहवो मन्वादयः पतयो यस्याः सा मन्वादिभिः पालिता च या भूर्वेधसा रुषेव नवखण्डा भरतादिनवसंख्याविभागा अरचि निर्मिता, तां नवखण्डामपि सकलां भुवं द्विजभुक्तां काकादिपक्षिभिः कृतोपभोगां व्याप्ताम्। अथ च—ब्राह्मणैर्गृहीतफलां कृतवतस्त्रिःसप्तकृत्वः क्षात्रीयमाभ्रं हत्वा निष्कण्टकीकृत्य प्रतिवारं ब्राह्मणेभ्यो ददतस्तव युक्तकारितरता नितरामुचितकरणशीलता जीयात् सर्वोत्कर्षेण वर्तताम् । एवंविधमतिशूरं दानशूरं च त्वां प्रति प्रणतोऽस्मीत्यर्थः । नियतमित्युत्प्रेक्षायां वा। रुषा नियतं रुषेवेत्यर्थ इति वा । अथ च—या स्वैरिणी अत एव बहुभिर्जारैर्भुक्ता सती तद्भर्त्रा कोपेन करचरणादिसंधिषु पृथक्छेदेन तत्कालं नवानि प्रत्यङ्गाणि खण्डितानि यस्यास्तादृशी कृतानां खण्डानामग्निसंस्कारनिवारणाद्धेतोः काकादिभिः पक्षिभिर्भक्षितां कुर्वतो भर्तुर्युक्तकारिता सर्वैः कीर्त्यते। 'स्वैरिणी पांसुला समा' इत्यमरः ॥ ६७ ॥

कार्तवीर्यभिदुरेण दशास्ये
रैणुकेय भवता सुखनाश्ये ।
कालभेदविरहादसमाधिं
नौमि रामपुनरुक्तिमहं ते ॥ ६८ ॥

कार्तवीर्येति ॥ हे रैणुकेय रेणुकापुत्र, कार्तवीर्यभिदुरेण यदीयकारागारे निबद्धो रावणोऽपि बहूनि वर्षाणि अतिष्ठत्, तं कार्तवीर्यं सहस्रार्जुनं हतवता भवता दशास्ये सुखेन क्लेशरहितमनायासेन नाश्ये हन्तुं शक्ये सति कालभेदस्य विरहादुभयोरवतारयोरेककालावस्थानत्वादसमाधिं परिहाररहितां मनुष्यावतारेण क्षत्रियेण रावणे हन्तुं शक्ये सति मनुष्यावतारेण क्षत्रियेण दाशरथिना रामेण विधेयान्तराभावादहं तास्मिन्नेव काले किमर्थमवतीर्णमिति वक्तुमशक्यत्वात्प्रयोजनाभावादहं ते रामपुनरुक्तिं दाशरथिरूपां वा जामदग्न्यरूपां वा नौमि स्तौमि । अन्यत्र तु पुनरुक्तेः कार्यभेदात्कालभेदाद्वा परिहारः कर्तुं शक्यते । वीप्सायामप्येककालप्रयुक्तस्यापशब्दस्य भयादरसंभ्रमादिना परिहारोऽस्त्येव । अत्र तु पूर्वेणैवोत्तरावतारकार्यस्यापि कर्तुं शक्यत्वात्कार्यभेदाभावाच्च परिहारो नास्तीत्यर्थः । स्वतन्त्रस्य तव केनाप्यनुपयोगः कर्तुं न शक्यत इति भावः । जामदग्न्यस्य मानुषत्वेऽपि दैवज्ञानस्य तथैव तद्भावात्, देवाद्यावध्यत्वस्य रावणेन वृतत्वात्, तस्य तेन हन्तुमशक्यत्वात् रावणवधपर्यन्तं च श्रीरामस्य दैवज्ञानाभावान्मानुषत्वेन तेनैव हन्तुं शक्यत्वात्कार्यभेदादेकस्मिन्नपि कालेऽवतारान्तरस्य युक्तत्वात्सूक्ष्मः परिहारोऽस्त्येव, तथापि स्थूलदृष्ट्या परिहाराभाव उक्त इति ज्ञेयम् । नर्मदायां जलक्रीडां कुर्वता सहस्रार्जुनेन रावणः कारागारे निक्षिप्त इतीतिहासः । रैणुकेयेति क्षत्रियत्वसूचनम् । अपत्यार्थे 'स्त्रीभ्यो ढक् ४ । १ । १२०' इति ढक् ॥ ६८ ॥

1 अत्राप्यनुप्रासः।

अथैकादशभिः श्लोकैर्दाशरथिं रामं स्तौति—

हस्तलेखमसृजत्खलु जन्म-
स्थानरेणुकमसौ भवदर्थम् ।
राम राममधरीकृततत्त-
ल्लेखकः प्रथममेव विधाता ॥ ६९ ॥

हस्तेति ॥ भो राम दाशरथे, असौ विधाता भवदर्थं त्वादृशोत्तमशिल्पनिर्माणार्थं जन्मस्थानं रेणुका एकवीरा यस्य तादृशं रामं प्रथमं त्वदपेक्षया आद्यं जामदग्न्यं खलु निश्चितं हस्तलेखमेवासृजत् चक्रे । त्वन्निर्माणार्थं जामदग्न्यं हस्ताक्षराभ्यासमेवाकरोदित्यर्थः । खल्विवार्थो वा हस्तलेखमिव चक्रे । किंभूतः—अधरीकृता एतादृशनिर्माणासमर्थत्वान्निहीनाः कृतास्ते ते प्रसिद्धा लेखा देवा इन्द्रादयो दक्षप्रभृतयोऽष्टौ प्रजापतयो वा येन तादृशः । अथवा—अनधराः स्वर्गस्था अप्यधराः कृता भूमाववतारितास्ते ते हनुमत्सुग्रीवादिरूपा इन्द्रादयो देवा येन सः । प्रथमस्यैव हस्तलेखरूपेण निहीनत्वं, न तु द्वितीयस्येत्यत्रोक्तम् । प्रथममेवाद्यमेव रामं, न तु द्वितीयं त्वामिति वा । उत्तमशिल्पनिर्माणार्थं हि हस्तलेखः पूर्वं क्रियते । निहीनाः कृतास्ते तेऽतिप्रसिद्धा लेखका लिपिकरा येन स इति वा । अक्षराभ्यासेऽप्येवं क्रियते । जन्मस्थाने रेणुघृष्टेष्टकादिचूर्णरूपः पांसुर्यस्यैतादृशं हस्तलेखम् । अधरीकृततत्तल्लेखकः 'शेषाद्विभाषा ५।४।१५४' इति कप् ॥ ६९ ॥

1 अत्र रामेति यमकम्, रामापेक्षया रामातिशयबोधनार्थंभवदर्थमसृजदितिसम्भावनम्, अस्य चाधरीकृतेत्यादिना सामान्येन समर्थनादर्थान्तरन्यासः ।

उद्भवाजतनुजादज कामं
विश्वभूषण न दूषणमत्र ।
दूषणप्रशमनाय समर्थं
येन देव तव वैभवमेव ॥ ७० ॥

उद्भवेति ॥ हे अज जन्मरहित श्रीरामचन्द्र, अजस्य रघुपुत्रस्य तनुजाद्दशरथात्सकाशात् कामं स्वेच्छया उद्भवोत्पद्यस्व । भो विश्वभूषण जगदलंकारभूत, अत्र दशरथादपि जन्मविषये, अजस्यापि जन्मविषये दूषणं दोषलेशोऽपि नास्ति । यस्य पितामहोऽप्यजो नोत्पन्नः, तत्पुत्रः स्वपिता कुतस्तरामुत्पन्नः, तत्पुत्रपुत्रः स्वयं कुतस्तमामुत्पत्स्यते, तथा स्वयमप्यजः कथं जायते इत्याशङ्कायां स्वेच्छामात्रविलसितमित्याशङ्कापरिहारः । 'अहैव हि स्वाविद्यया संसरति, मुच्यते च' इति न्यायात् । विश्वभूषणस्य तव दूषणरूपत्वाभावादपि दूषणलेशोऽपि तव नास्तीत्यर्थः । अथ च—अजतनुजादजस्योत्पत्तिर्युक्तैव । अजो हि छगलस्तस्य पुत्रोऽप्यज एव जातिनामत्वादजशब्दस्येत्यपि दूषणाभावः । दूषणाभावे हेत्वन्तरमप्याह—येन कारणेन हे देव श्रीराम, तव वैभवमेव प्रभाव एव दोषाणां प्रकर्षेण शमनाय नाशाय समर्थम् । यत्स्मरणादिवैभवाद्यन्येषामपि भक्तानां दोषा नश्यन्ति, तत्स्वरूपे दोषलेशसंस्पर्शोऽपि कथंकारं स्यात्, अपि तु न कथंचिदित्यर्थः । अथ च—दूषणाख्यराक्षसविनाशाय तवैव सामर्थ्यं यतः, तस्मादत्र तवैवोत्पत्तौ सत्यां दूषणाभावो युक्त एवेति छलम् । अथ च—परशुरामे सत्यपि तस्मिन्नेव काले त्वं दशरथात्सुखेनोत्पद्यस्व, अत्र तवोत्पत्तौ विषये दूषणं पुनरुक्तदोषो नास्ति यतो दूषणादिरावणान्तराक्षसविनाशाय तवैव सामर्थ्यं,न तु परशुरामस्येत्यत्र दूषणशब्द उपलक्षणपरः । तस्मादेककालिकत्वेऽपि कार्यभेदान्न पुनरुक्तिदोष इत्यर्थः । एतेनावतारप्रयोजनमुक्तम् । 'अनुकामम्' इति पाठे—कामं लक्षीकृत्य यथेच्छमित्यर्थः ॥ ७० ॥

नो ददासि यदि तत्त्वधियं मे
यच्छ मोहमपि तं रघुवीर ।
येन रावणचमूर्युधि मूढा
त्वन्मयं जगदपश्यदशेषम् ॥ ७१ ॥

नो ददासीति ॥ हे रघुवंश्यानां मध्ये वीर ईश्वरतम श्रीरघुनाथ, त्वं तत्त्वधियं मोक्षोपयोगिनमात्मतत्त्वसाक्षात्कारं यदि मे मह्यं नो ददासि तर्हि तं मोहमपि तां विशिष्टां भ्रान्तिमेव यच्छ देहि । तं कम्—येन मोहेन भयेन संजातभ्रान्तिविलासेन बुद्धिमूढा रावणचमूरशेषं सकलं जगत् त्वन्मयं श्रीरामचन्द्ररूपमपश्यत् । रावणसेनया च मोहेन जगद्रामात्मकं दृष्टमिति सर्वपुराणे॥७१॥

आज्ञया च पितुरङ्गभिया च
श्रीरहीयत महीप्रभवा द्विः ।
लङ्घितश्च भवता किमु न द्वि-
र्वारिराशिरुदकाङ्कगलङ्कः ॥ ७२ ॥

आज्ञयेति ॥ हे श्रीरामचन्द्र, भवता महीप्रभवा कृष्याद्युपायैर्भूलोकोत्पन्ना श्री राज्यलक्ष्मीः, अथ च—भूमेरुत्पन्ना लक्ष्म्यवताररूपा जानकी, क्रमेण पितुराज्ञया च अङ्गेभ्यो भिया च मूर्खजनापवादभयेन च द्विर्द्विवारमहीयत त्यक्ता । वनवासाङ्गीकाराद्राज्यलक्ष्मीः, जनापवादभयाच्च वह्नौ विशुद्धाऽपि सीता त्यक्तेत्येवं द्विप्रकारं त्यक्तेत्यर्थः । एवं पितुराज्ञाकारी लोकापवादभीरुश्च कोऽपि नास्तीति भावः । चावन्योन्यसमुच्चये । तथा—वारिराशिः, अरिराशिर्वा द्विर्द्विवारं द्विधा च न लङ्घितः किमु, सेतुं बद्ध्वा समुद्रोऽपि लङ्घित एव, तथा—रावणादिः शत्रुसमूहोऽपि पराभूत एव । वा चार्थ इवार्थो वा,अरिराशिश्चारिराशिरिव वा । गन्धनार्थाद्वातेः किपि वातीति वाः, स चासावरिराशिश्च सकलो वैरिसंघ इत्यर्थः । किं भूतः—उदकाङ्कगा जलमध्यगा लङ्का यस्य । यदीयजलमध्ये लङ्कास्तीत्यर्थः । अरिराशिरपि—समुद्रजलमध्यवर्तिनी लङ्का यस्य । समुद्रपक्षे यस्येत्यस्योदकेन संबन्धः, अरिपक्षे तु लङ्कायाः एतावान्विशेषः । उत्कृष्टमकं दुःखं यस्यास्तादृशी अङ्कगा लङ्का यस्येति वा । सागरस्यापि बन्धनाद्रावणस्यापि वधाच्चैतादृशो महाप्रभावः शूरतरश्च त्वदन्यः कोऽपि नास्तीति भावः ॥ ७२ ॥

---

१अत्रानुप्रासः, पणेति यमकं च । न दूषणमिति वाक्यार्थस्य समर्थनाय परार्धोपन्यासादर्थान्तरन्यासः ।

१ अत्र मोहस्याप्रार्थनीयत्वेऽपि प्रार्थनार्हत्वेन सम्भावनादनुज्ञा, 'दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात् ।' इति तल्लक्षणात् ।२ अत्रानुप्रासः, आज्ञया च भिया चाहीयतेति समुच्चयः, किरिवत्युत्प्रेक्षा च ।

कामदेवविशिखैः खलु नेशं
मार्पयज्जनकजामिति रक्षः ।
दैवतादमरणे वरवाक्यं
तथ्ययत्स्वमपुनाद्भवदस्त्रैः ॥ ७३ ॥

कामेति ॥ रक्षो रावण इतीव हेतोर्दैवतादमरणे मरणाभावविषये दैवाद्धेतोर्न मरिष्यसीति ब्रह्मणो वरवाक्यं तथ्ययत् सत्यं कुर्वत् स्वमात्मानं भवदस्त्रैरपुनाद् धुतकल्मषं चकार।इति किम्—जनकजां सीतां रामायार्पयद्ददहं रक्षः कामदेवस्य मोहनशोषणादिभिर्विशिखैः खलु निश्चितं मा नेशं तद्विरहसंतापवशान्मृतो मा भूवमिति । सीताप्रत्यर्पणे कामस्य देवत्वात्तद्बाणैर्मरणे वरवाक्यमसत्यं स्यादितीव तामददद्वरवाक्यसत्यत्वार्थम् । मानुषावतारकामरूपभवद्बाणैरात्मानं नाशितवानित्यर्थः । कामबाणाच्छरीरविनाशमात्रं, त्वद्बाणात्तु मरणे संसारहेतुनिःशेषकल्मषक्षय इति महान्विशेषः 'अपुनात्' इत्यनेन सूच्यते । नेशम्, माङ्योगादडभावः । तथ्ययत्, 'तत्करोति तदाचष्टे' इति (वा.) ण्यन्ताच्छतां ॥ ७३ ॥

तद्यशो हसति कम्बुकदम्बं
शम्बुकस्य न किमम्बुधिचुम्बि ।
नामशेषितससैन्यदशास्या-
दस्तमाप यदसौ तव हस्तात् ॥ ७४ ॥

तदिति ॥ हे रघुनाथ, नामशेषितः कथाशेषीकृतो हतः सेनया सहितो दशास्यो येन तस्मात्तव हस्तात् असौ शम्बुको यदस्तं विनाशमाप।तच्छम्बुकनाम्नः शूद्रस्य अम्बुधिचुम्बि समुद्रमध्यवर्ति यशः कम्बुकदम्बं शङ्खवृन्दं धवलतया किं न हसति, अपितु—हसत्येव, तत्तुल्यं भवतीत्यर्थः । येन त्वत्करेणातिशूरो रावणो हतस्तेनैवान्त्यवर्णोऽधमो दुर्बलः शम्बुकोऽपि हत इति महत्तस्य भाग्यमित्यर्थः । यो ह्युत्कृष्टं बलिनं हन्ति तेनैव हीने दुर्बले हते दुर्बलस्य महद्यशो भवति । ब्राह्मणपुत्रमरणनिमित्तं शूद्राणामविहितं धूम्रपानं कुर्वन्तं शम्बुकशूद्रं श्रीरघुनाथो हतवानितीतिहासः । अथ च— शम्बुकस्य जलशुक्तेः श्वेत्यरूपं यशः समुद्रमध्यस्थं शङ्खवृन्दं हसति तत्तुल्यं भवतीति युक्तमेव । नामशेषितेति, 'तत्करोति तदाचष्टे' इति ण्यन्तान्निष्ठा ॥ ७४ ॥

मृत्युभीतिकरपुण्यजनेन्द्र-
त्रासदानजमुपार्ज्य यशस्तत् ।
ह्रीणवानसि कथं न विहाय
क्षुद्रदुर्जनभिया निजदारान् ॥ ७५ ॥

मृत्युभीतीति ॥ यस्मान्मृत्योर्यमादन्येषां भीतिः, मृत्योर्भीतिकरः पुण्यजनेन्द्रो राक्षसेन्द्रो रावणस्तस्यापि मरणपर्यन्तं त्रासदानाद्भयोत्पादनाद्धेतोर्जातं तदतिप्रसिद्धं लोकत्रये गीयमानं यश उपार्ज्य क्षुद्रोऽत्यल्पको दुर्जनस्तस्माद्भिया भयेन पामरलोकापवादभिया निजदारानात्मनः प्रियां सीतां विहाय परित्यज्य कथं न ह्रीणवान् लज्जितवानसि लज्जितव्यं तावत्त्वयेत्यर्थः। यो रावणाय भयं दत्तवांस्तस्य दुर्जनभीत्या निर्दुष्टजनप्रियापरित्यागे हि लज्जैव युक्ता। अतिमानी निजस्त्रीहर्ता रावणो नाशितो लोकापवादभयाच्च साऽपि परित्यक्तेति । एतादृशः शूरोऽभिमानी लोकापवादभीरुश्च कोऽपि नास्तीति भावः । 'यातुधानः पुण्यजनः—'इत्यमरः । भीतिं करोतीति ताच्छील्ये टः ॥ ७५ ॥

इष्टदारविरहौर्वपयोधि-
स्त्वं शरण्य शरणं स ममैधि ।
लक्ष्मणक्षणवियोगकृशानौ
यः स्वजीविततृणाहुतियज्वा ॥ ७६ ॥

इष्टेति ॥ हे शरण्य शरणागतभक्तरक्षक रघुनाथ स त्वं मम शरणं रक्षकः एधि भव । स कः—यस्त्वम् इष्टदाराणां सीतायाः विरह एव दुःसहत्वादौर्वो वडवानलस्तस्य पयोधिराश्रयः एवंविधः सन् लक्ष्मणस्य क्षणमात्रमपि वियोगः स एव दुःसहतरत्वात्कृशानुस्तत्र स्वजीवितानामात्मप्राणानामेव तृणानामाहुतेस्तद्रूपहोमद्रव्यस्य यज्वा होता, यो हि लक्ष्मणवियोगं क्षणमात्रं सोढुमशक्तस्तृणवद्धेलामात्रेण स्वप्राणांस्तत्याज, स यावज्जीवं सीताविरहानलं कथं सोढवानिति क्रिययोर्विरोधादाश्चर्यम् । यज्वना त्वाहुतिरग्नौ हूयते । सीताविरहसहनेन जितेन्द्रियधुर्यत्वमुक्तम् । इन्द्रजिता शक्त्या मूर्च्छिते

१ अत्राप्यनुप्रासः, खल्विति चोत्प्रेक्षा ।

१ अत्रानुप्रासः । २ भयङ्करस्यापि भयमगणय्य क्षुद्रस्य भयं गणयत्त्वेन द्योतनं विरुद्धमिवेति विरोधाभासः । स चापेरभावाद् व्यङ्ग्य एव ।

लक्ष्मणे स्वयमपि मुमूर्च्छ, तथा मुनिरूपकालकृतसमय-भङ्गभग्नप्रतिज्ञे लक्ष्मणे रघुनाथाज्ञया सरयूजलप्रवेशेन कृतदेहत्यागे सति तद्वियोगमसहमानस्तत्क्षणमेव रघुनाथोऽपि गोप्रतारतीर्थे जलप्रवेशेन स्वयमपि स्वस्थानं प्रापेति युद्धकाण्डोत्तरकाण्डरामायणकथा । एतेन स्त्रीवियोगदुःखादपि भ्रातृवियोगदुःखं दुःसहमिति सूचितम् । परमकारुणिकस्त्वं शरणागतं मामपि रक्षेति सूचितम् ७६

**क्रौञ्चदुःखमपि वीक्ष्य शुचा यः**
**श्लोकमेकमसृजत्कविराद्यः ।**
**स त्वदुत्थकरुणः खलु काव्यं**
**श्लोकसिन्धुमुचितं प्रबबन्ध ॥ ७७ ॥**

क्रौञ्चेति ॥ दैवी वाक् येन भुवं प्रति प्रथममानीता स आद्यः प्रथमः कविर्वर्णको यो वाल्मीकिः क्रौञ्चयोः पक्षिविशेषयोर्मध्ये रिरंसावेकस्मिन् व्याधेन हतेऽन्यस्य दुःखं वीक्ष्य तिर्यग्योनेरपि तस्य दुःखं दृष्ट्वा उत्पन्नया शुचा शोकेन हेतुना ' मा निषाद प्रतिष्ठां त्वम्—' इत्यादिकमेकं श्लोकमसृजत्।स कविस्त्वयि उत्पन्नः करुणारसो यस्य सीताविरहविह्वलमहानुभावभवद्दर्शनोत्पन्नशोक इव श्लोकानां सिन्धुं सागरभूतं चतुर्विंशतिसहस्रमितं रामायणाख्यं काव्यमुचितं योग्यं प्रबबन्ध । तिर्यग्योनिविषये शोकेन येन श्लोकः कृतः, तस्य उत्तमपुरुषविषये महाकाव्यनिर्माणमुचितमेव । अथ च—त्वया सिन्धुर्बद्धः, अयमपि त्वदेकचित्तः सिन्धुं बबन्धेत्युचितम् । परित्यक्तसर्वसङ्गो मुनिरपि त्वद्वर्णनां कृतवानेतादृशः परपुरुषोऽसीति खल्वर्थः ॥ ७७ ॥

**विश्रवःपितृकयाऽऽत्ममनर्हं**
**सश्रवस्त्वमनयेत्युचितज्ञः ।**
**किं चकर्तिथ न शूर्पणखाया**
**लक्ष्मणेन वपुषा श्रवसी वा ॥ ७८ ॥**

विश्रव इति ॥ हे रघुनाथ, इति हेतोरुचितं जानाति स उचितकारी त्वं चतुर्धाऽवतीर्णत्वाल्लक्ष्मणलक्षणेन स्वीयेनैव वपुषा शूर्पणखायाः श्रवसी कर्णौ किं वा न चकर्तिथ कर्तितवान्, अपि तु कर्तितवानेव । इति किम्—विश्रवा मुनिः पिता यस्याः, अथ च—कर्णरहितः पिता यस्यास्तस्याः शूर्पणखायाः सश्रवस्त्वं सकर्णत्वमात्ममनर्हमयोग्यमिति । स्त्रीवधस्यानौचित्यात्कर्णच्छेद एवोचितो यतः, अकर्णपितृकाया अकर्णत्वस्यौचित्यात्कर्णौ लक्ष्मणेन कर्तयामासिथेत्येवीवधसमुचितकारी महाप्रभावोऽसीति भावः।वा इवार्थो वा। इतीव हेतोरिति योजना । विश्रवःपितृकया,'नद्यृतश्च ५ ।४।१५३' इति कप् । शूर्पणखा,'पूर्वपदात्संज्ञायामगः ८। ४ । ३' इति णत्वम् । नखस्य स्वाङ्गत्वेऽपि'नखमुखात्संज्ञायाम् ४।१।५८' इति ङीपभावः । अन्वर्था चेयं संज्ञा ॥ ७८ ॥

नवभिः श्लोकैः श्रीकृष्णं वर्णयति—

**ते हरन्तु दुरितव्रततिं मे**
**यैः स कल्पविटपी तव दोर्भिः ।**
**छद्मयादवतनोरुदपाटि**
**स्पर्धमान इव दानमदेन ॥ ७९ ॥**

त इति ॥ कंसादितत्तद्दैत्यमारणरूपच्छद्मना यादवसंज्ञा तनुर्यस्य, अथ च—छद्म याति छद्मयाः एवंभूतश्चासौ दवतनुश्च मायावान् कंसादिवंशवनवह्निरूपशरीरश्च, श्रीकृष्णरूपस्य तव यैर्दोर्भिर्भुक्तिमुक्तिप्रदैश्चतुर्भिर्हस्तैः सोऽतिप्रसिद्धः कल्पविटपी कल्पितफलदानसमर्थः पारिजातवृक्ष उदपाटि उन्मूलितः । किं कुर्वन्निव—मादृशः कल्पितदानसमर्थः कोऽपि नास्त्येवेति दानस्य मदेन दर्पेण तैर्भुजैः सह स्पर्धमान इव ते बाहवो मे दुरितानां व्रततिं लतां दैन्यसंततिं हरन्तु उन्मूलयन्तु । ये पारिजातलक्षणमहावृक्षोन्मूलने समर्थास्तेषां लतोन्मूलने सुतरां सामर्थ्यम् । कपटदावानलदेहस्य च भुजानां वृक्षलताद्युन्मूलने सामर्थ्यं युक्तमेवेत्यर्थः । दानशूरो महाप्रभावश्च त्वादृशः कोऽपि नास्तीति भावः । सत्यभामया याचितः पारिजात इन्द्रं जित्वोन्मूल्य सत्यभामाङ्गणे श्रीकृष्णेन स्थापित इति हरिवंशोक्तिः । निर्ऋतिव्रततिमिति पाठे—'स्यादलक्ष्मीस्तु निर्ऋतिः' इत्यमरः ॥ ७९ ॥

---

१ अत्रानुप्रासः, रूपकं च । २ इदं समयभेदाविस्मरणमूलम् । न चावतारकथैवास्यापि सदासिद्धत्वमिति वाच्यम्, अवताराणां कलाविशेषेण विद्यमानत्वेऽपि युगानुसारमवतरणात्रयम्भावित्वानपायात्, रामायणादिरचनानिमित्तादेः सदासिद्धत्वाद्यभावाच्च न तथा समाधिर्युज्यते वक्तुम् । आद्यस्य कवेरेकश्लोकसर्जनमेक (अद्वितीय) यशः सर्जन ( सम्पादन ) मित्यभेदप्रतीत्या रूपकातिशयोक्तिर्व्यज्यते । काव्यस्य श्लोकानां सिन्धुत्वेन रूपणाद्रूपकम्' तेन च श्लोकानां रत्नत्वं व्यज्यत इति ।

१ अत्र लक्ष्मणेन वपुषेति रूपकं, किमित्युत्प्रेक्षा । श्रवेति यमकमित्यपि बोध्यम् । २ अत्रानुप्रासः, इवेत्युत्प्रेक्षा, परिकरश्च।

बालकेलिषु तदा यदलावीः
कर्परीभिरभिहत्य तरङ्गान् ।
भाविबाणभुजभेदनलीला-
सूत्रपात इव पातु तदस्मान् ॥ ८० ॥

बालेति ॥ हे कृष्ण, त्वं तदा कृष्णावतारसमये भूयसीषु बालकेलिषु मध्ये कर्परीभिः स्फुटितघटशकलैः कृत्वा यमुनाजलतरङ्गान् अभिहत्य तेषामभिघातं कृत्वा तानेकप्रयत्नेनालावीश्छैत्सीरिति यत्, तत्कर्परीभिस्तरङ्गलवनं कर्तृ उषाहरणावसरे भावि करिष्यमाणं बाणासुरभुजभेदनं तल्लक्षणा लीला विलासस्तत्संबन्धी सूत्रपात इव प्रथमार्जवच्छेदनाभ्यासरूपमिवास्मान्रक्षतु । अक्षरपङ्क्त्यृजुत्वार्थं प्रथमं खटिकादिम्रक्षितसूत्रपातनं क्रियते । तक्षादिभिरपि काष्ठस्यार्जवच्छेदनार्थं गैरिकादिम्रक्षितसूत्रपातनं क्रियते । तद्वद्बाणासुरभुजार्जवच्छेदनार्थं कर्परीभिरभिहत्य तरङ्गलवनं यदकारि तत्तव बालक्रीडनमस्मानवत्वित्यर्थः । कर्पर्याघातेन तरङ्गच्छेदनं बालजातिः । अवतारप्रयोजनं चोक्तम्[1] ॥ ८० ॥

कर्णशक्तिमफलां खलु कर्तुं
सज्जितार्जुनरथाय नमस्ते ।
केतनेन कपिनोरसिशक्ति
लक्ष्मणं कृतवता हृतशल्यम् ॥ ८१ ॥

कर्णेति ॥ हे श्रीकृष्ण, ते नमोऽस्तु । किंभूताय ते—उरसि लग्ना इन्द्रजिन्मुक्ता शक्तिर्यस्य तं लक्ष्मणं द्रोणपर्वतानीतविशल्यौषधिप्रक्षेपेण हृतं निष्कासितं शक्तिलक्षणं शल्यं यस्य तादृशं कृतवता केतनेन ध्वजस्तम्भपताकारूपेण कपिना हनूमता कृत्वा कर्णस्य शक्तिमाङ्गिकं बलं, अथ च—इन्द्रदत्तां शक्तिम्, अफलां कर्तुमिव सज्जीकृतो योजितोऽर्जुनरथो येन तस्मै । नरनारायणरूपाय । यो हि यत्र कर्मणि दृष्टशक्तिः स एव तत्र नियोक्तुमुचितः । हनूमांश्च शक्तिविफलीकरणे दृष्टप्रभावस्तस्मात्कर्णशक्तिविफलीकरणार्थमिवार्जुनरथे तं स्थापितवानसीति भक्तवत्सलाय तुभ्यं नम इत्यर्थः । यो मर्मभूतामुरःस्थां शक्तिं विफलीकरोति स श्रवणस्थां शक्तिं सुतरां विफलीकरोत्येवेति च्छलेनोक्तिः । खलु इवार्थः । उरसिशक्तिः 'अमूर्धमस्तकात् स्वाङ्गादकामे ६।३।१२' इत्यलुक्[1] ॥ ८१ ॥

नापगेयमनयः सशरीरं
द्यां वरेण नितरामपि भक्तम् ।
मा स भूत्सुरवधूसुरतज्ञो
दिव्यपि व्रतविलोपभियेति ॥ ८२ ॥

नेति ॥ हे कृष्ण, त्वं नितरां भक्तमपि आपगेयं भीष्मं सशरीरं वरेण प्रसादेन कृत्वा इति विचार्य कारणाद्वा द्यां स्वर्गं नानयः न प्रापितवानसि । इति किम्—स भीष्मः अनेन शरीरेण सुरतं न करिष्यामि, अद्य प्रभृति मम ब्रह्मचर्यमेवेति व्रतविलोपाद्भिया हेतुना दिव्यपि स्वर्गेऽपि सुरवधूनां रम्भादीनां सुरतज्ञो मा भूत् इति । भक्ततमस्य वरदानेन यद्यपि तेनैव शरीरेण स्वर्गप्रयाणमुचितम्, तथापि तस्य शरीरस्य स्वर्गप्रयाणेऽपि न कोऽप्युपयोगः, तेन तच्छरीरस्यातितुच्छत्वात्तच्छरीरं विनाश्य तं स्वर्गमनयो न तु तच्छरीरसहितस्य प्रापणे तवाशक्तिरिति भावः । यद्वा मुक्त्यपेक्षया स्वर्गभुक्तेरप्यतितुच्छत्वात्तच्छरीरं विनाश्य तं मुक्तिमेव प्रापितवानिति हेतुः । आपगेयम्, अपत्यार्थे 'स्त्रीभ्यो ढक् ४।१।१२०' इति ढक्[2] ॥ ८२ ॥

घातितार्कसुतकर्णदयालु-
र्जैत्रितेन्दुकुलपार्थकृतार्थः ।
अर्धदुःखसुखमभ्यनयस्त्वं
सास्रुभानुविहसद्विधुनेत्र ॥ ८३ ॥

घातितेति ॥ अर्जुनेन प्रयोज्येन समरे घातितोऽर्कसुतः कर्णस्तस्मिन्विषये दयालुः सकरुणः । तथा—स्वसामर्थ्येन जैत्रितो जेता कृतो दत्तजय इन्दुकुले सोमवंशे भूतः पार्थोऽर्जुनस्तेन कृत्वा कृतार्थः सम्पादितावतारप्रयोजनः कृतकृत्यत्वात्सहर्षः । अत एव क्रमेण पुत्रशोकवशात् सास्रुः सबाष्पो रुदन् यः भानुः सूर्यः, पुत्रवि-

1 अत्राप्यनुप्रासः । इवेत्युत्प्रेक्षा च । कर्परीभिस्तरङ्गाभिहननं बालानां स्वभावजं चेष्टितमिति तथोत्प्रेक्षा स्वभावोक्तिमूला ।

1 अत्राप्यनुप्रासः, खल्वित्युत्प्रेक्षा, एवं रामकृष्णयोरवतारभेदेन भेदेऽपि वास्तविकभेदाभावो द्योत्यते ।

2 अत्राप्यनुप्रासः, सुरेति यमकम्, भियेत्युत्प्रेक्षा, मर्त्यशरीरस्यागमाभावे दिव्यशरीरत्वं नियमविरुद्धमिति तादृशनियमपालनावश्यकत्वमपह्नुत्य व्रतविलोपभीनिमित्तत्वेन वचनादपह्नुतिरित्यपह्नुतिमूलैव सोत्प्रेक्षेत्यपि बोध्यम् ।

जयाच विशेषेण हसन् हर्षानुभवं कुर्वन् विधुश्चन्द्रस्तावेव दक्षिणवामे नेत्रे यस्य तादृशस्त्वं यथाक्रमम् अर्धदुःखं अर्धसुखं च अभ्यनयः अभिनयन् युगपद्दर्शितवानसि । परमार्थतोऽविद्यमानमप्यविद्याविलासाद्‌दर्शितवानसी-त्यर्थः । सूर्यचन्द्रयोर्विष्णुनेत्रत्वात्कर्णस्य च सूर्यपुत्रत्वा-त्तन्नाशे शोकात्सूर्यस्य साश्रुत्वात् अर्जुनस्य च सोमवंशत्व-त्वाद्विजये चन्द्रस्य हर्षेण विहसितत्वात्, ताभ्यामर्धदुः-खसुखाभिनयादद्भुतरूपोऽसीति भावः । घातितेति, हेतुम-ण्ण्यन्तान्निष्ठा । जैत्रितेति, 'तत्करोति तदाचष्टे' इति ण्यन्तान्निष्ठा । पार्थेति कुवत्वात् 'ऋष्यन्धककृष्णिकुरु-भ्यश्च ४।१।११४' इत्यण् । अर्धं च तद्दुःखसुखं चेति द्वन्द्वगर्भः कर्मधारयः ॥ ८३ ॥

**प्राणवत्प्रणयिराध न राधा-**
**पुत्रशत्रुसखिता सदृशी ते ।**
**श्रीप्रियस्य सदृगेव तव श्री-**
**वत्समात्महृदि धर्तुमजस्रम् ॥ ८४ ॥**

प्राणेति ॥ प्राणवत् प्राण इव प्रणयिनी निरुपाधिपर-प्रेमास्पदं राधाख्या गोपिका यस्य, तत्सम्बुद्धौ प्रणयिराध, राधाप्रणयिन् श्रीकृष्णेत्यर्थः, ते तव राधापुत्रः कर्ण-स्तस्य शत्रुरर्जुनस्तस्य सखिता मैत्री सदृशी योग्या न । राधावल्लभस्य हि राधापुत्रशत्रुमैत्री कथंकारमुचिता, अपि त्वयुक्तैव विरोधादित्यर्थः । एकत्र राधा गोपिका, अन्यत्र तु कर्णपालनकारिणी कैवर्तवधूरिति परिहारः । श्रियः प्रियस्य श्रीर्वल्लभा यस्य तस्य तव श्रीवत्सं ब्राह्मणपदन्यासरूपं लाञ्छनम्, अथ च श्रियो वत्सं पुत्रम्, अजस्रमात्महृदि धर्तुं सदृगेव उचि-तमेव यस्य हि श्रीर्वल्लभा, स तत्पुत्रं स्ववक्षसि मुदा विभर्तीति युक्तमेवेत्यर्थः । एतादृशः स्वपक्षपातदक्षो लोकशिक्षार्थं ब्राह्मणभक्तिपरश्च कोऽपि नास्तीति भावः । प्रणयिराधेति 'स्त्रियाः पुंवत्—। ६। ३ । ३४ ।' इत्यादिना पुंवत्त्वम् ॥ ८४ ॥

**तावकापरतनोः सितकेश-**
**स्त्वं हली किल स एव च शेषः ।**
**साध्वसाववतरस्तव धत्ते**
**तज्जरश्चिकुरनालविलासः ॥ ८५ ॥**

तावकेति ॥ हे कृष्ण, हली लाङ्गलधरो बलभद्रः स एव च शेषोऽनन्तस्त्वमेव । शेषावताररूपोऽपि बल-भद्रो भवानेव, न तु स त्वत्तो भिन्न इत्यर्थः । त्वं बल-भद्रः स एव शेषः । त्वत्तो हली न भिद्यते, हलिनश्च शेषो न भिद्यते इति वा । यतः—कायस्य सम्बन्धा-ज्जरसा सितकेशो धवलितकचः किलेत्यागमे । विष्णुपुरा-णादौ च यदुक्तम्—'उज्जहारात्मनः केशौ सितकृष्णौ ततः प्रभुः' इति । न विद्यते परोत्कृष्टाऽन्या यस्याः सा तावकी अपरा तनुस्त्वत्सम्बन्धिनी सर्वोत्कृष्टा. सत्त्व-मूर्तिस्तस्याः सितकेशः श्वेतकेशरूपो हली, तदावतारो-ऽशावताररूपोऽसौ हली त्वं किल । त्वदवयवभूतके-शरूपत्वात्तस्य । स च हल्येव शेष इति वा । शेषरू-पबलदेवलक्षणोऽसाववतरो मूर्तिः । अत एव तस्या भवदीयापरतनोर्जरतो जरसा धवलीकृतस्य चिकु-रनालस्य केशदण्डस्य विलासं वर्णसारूप्यं साधु यथा तथा धत्ते । अतिगौरो बलदेव-स्त्वदीयापरतनुधवलकेश इव भातीत्यर्थः । शेषस्यापि दीर्घत्वधवलत्वाभ्यां जराधवलदीर्घकेशसारूप्यधारणं युक्त-मेव । 'कारणगुणा हि कार्ये गुणानारभन्ते' इति न्यायाच्च युक्तमेव 'अंशावतारो बलभद्रः' इति चोक्तम् । अत्र श्वेतकेशः सहज एव, न तु जरायोगात् इति वा । यतो हरिर्नित्यतरुण इति पुराणादिप्रसिद्धिः । वस्तुतस्तु—कस्य ब्रह्मसुखस्येशौ सुखरूपावित्यर्थः । प्रकाशकत्वेन सत्त्वस्य सितशब्दवाच्यत्वात्, मोहकत्वेन न तमसः कृष्णश-ब्दवाच्यत्वात् सितकृष्णौ सत्त्वतमोगुणद्वयात्मकावेतावव-तारौ भूभारोत्तारणार्थं प्रभुरादिनारायणः स्वस्मात्प्रकटीच-कारेति विष्णुपुराणस्थसितकृष्णपदस्यार्थः । 'कृष्णस्तु भगवान्स्वयम्' इति भागवतवचनेन कृष्णस्तु लीलावि-ग्रहधारी परब्रह्मैव 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः' इति भगवद्वचनात् । बलभद्रस्त्ववतारः 'रामो रामश्च रामश्च' इति वचनात् । अन्यथा बल-भद्रस्य सत्त्वमूर्तित्वम्, कृष्णस्य तमोगुणमूर्तित्वमापद्येत, न च तथाऽस्तीति बलभद्रस्य तमःप्रधानत्वदर्शनादि-त्याशयः 'शितिकेशः—' इति पाठे—' शिती धवल-

१ अत्राप्यनुप्रासः । कर्णं मारयित्वाऽर्जुनं विजितवन्तं च विधायापि भगवत उदासीनत्वमेव स्थितमित्यर्थ-स्याऽर्धदुःखेत्याद्यात्मनोत्प्रेक्षणादुपेक्षाऽपह्नुत्यनुप्राणिता प्रतीयते । २ अत्रानुप्रासः, प्रणयिराधत्वेऽपि राधापुत्रशत्रुसखित्वं ( प्रणयित्वं ) विरुद्धमिवेति विरोधाभासोऽपेरप्रयोगेऽपि भासत इति भासमानो विरोधाभासो राधापदश्लेषमूलः ।

मेचकौ' इत्यभिधानात्त्वदीयपुराणतनोः सम्बन्धी शितिकेशः श्यामकेशरूपस्त्वं, हली च धवलकेशरूपः, स एव च हली शेषः बलभद्रः शेषावतारः, इति पुराणादौ । स त्वदीयधवलकेशविलासं धत्ते तत्साधु । कृष्णस्य कृष्णवर्णत्वाद्धलिनश्चातिगौरत्वाद्यथाक्रमं श्यामसितकेशत्वमौत्प्रेक्षिकत्वेनैव व्याख्येयमित्यलमतिविस्तरेण। 'तावकापर-' इत्येव पाठः साधीयान् । यतः 'युष्मदस्मदोरन्यतरस्यां खञ् च ४।३।२'—इत्याणि तवकादेशे वृद्धौ च 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ६।३।३९' इति पुंवद्भावप्रतिषेधे प्रसक्तेऽपि कर्मधारयत्वात् 'पुंवत्कर्मधारयजातीयदेशीयेषु ६।३।४२' इति प्रतिप्रसवात्पुंवद्भावः । अवतरः पूर्ववत् ॥ ८५ ॥

**हृद्यगन्धवहभोगवतीशः**
**शेषरूपमपि बिभ्रदशेषः ।**
**भोगभूतिमदिरारुचिरश्री-**
**रुल्लसत्कुमुदबन्धुरुचिस्त्वम् ॥ ८६ ॥**

हृद्येति ॥ हे हृद्यो हृदयानन्दकारी गन्धश्चन्दनादिसौरभं तं वहसि धारयस्येवंविध सौरभधारिन् श्रीकृष्ण, त्वं शेषरूपं बलभद्ररूपम्, अथ च—नागाधीशरूपं बिभ्रद्धारयन्नप्यशेष उभयविधोऽप्यशेषः शेषो न भवसीति विरोधः । अथ च—न विद्यते शेषः शिष्टं भिन्नं यस्मादसावशेषः सकलजगदात्मकस्त्वमिति परिहारः। अथ च बलभद्रोऽप्यतिशृङ्गारित्वाद्धृद्यगन्धवहः। अतएव भोगवतीनां सुखिनीनां गोपिकादीनामीशः प्राणप्रियः,अथ च-भोगवत्या अतितरां सुखिन्या रेवत्या ईशः पतिः। श्रीकृष्णोऽपि हृद्यं गन्धं शारीरं स्वाभाविकं चन्दनादिजन्यं च गन्धं वहन्तीनां सुखिनीनां भोगवतीनां गोपिकादीनामीशः शेषोऽपि, जलक्रीडाक्षालितचन्दनकर्पूराद्यङ्गरागसंबन्धिहृद्यसौरभधारिण्या भोगवत्याः पातालनद्याः पतिः।कर्पूरादिबहुलसौरभयुक्ताया नागनगर्या वा । तृप्तिहेतुत्वाद्धृद्यो गन्धवहो वायुर्यस्य स चासौ नागपुर्यास्तया वा पतिः। तथा कृष्णरूपस्त्वं भोगस्य सुखस्य भूतेर्हेतोर्मदिरावद्रुचिं सुखं राति जनयति तादृशी श्रीःकायकान्तिर्यस्य सः भोगः शेषफणः,तत्कायो वा स एव भूः स्थानं तस्या ऊतिरवनं स्वाधिष्ठानेन रक्षणं तेन माद्यति हृष्यतीति भोगभूतिमत् । तथा--इराया भूमेरिव रुचिरा रमणीया कान्तिर्यस्मादिति वा । तयोरुभयोः सपत्न्योरपि प्रीतिं ददाना समवर्तिनी श्रीर्हृदिस्था लक्ष्मीर्यस्येति वा । भोगानां कालीयफणानां भूतिरैश्वर्यजनितो दर्पस्तं मथ्नाति तादृशो वा। पृथग्वा पदम् ।गोपिकादिसंभोगसुखसमृद्धिर्भोगभूतिस्तद्वां श्चासावुक्तरीत्या इरारुचिरश्रीश्चेति वा । अथ च बलभद्ररूपस्त्वं भोगस्य सुखस्य भूतिरुत्पत्तिहेतुस्तादृशी मदिरा तया कृत्वा रमणीया सरागा कान्तिः शोभा यस्य । बलदेवो हि सर्वदा मदिरामत्तः । अथ च—शेषरूपस्त्वं भोगस्य स्वकायस्य फणानां वा भूतिः समृद्धिस्तद्वानतिदीर्घमहाकायः सहस्रफणो वा तेन माद्यति वा । स चासौ स्वशिरःसुधारणाद्भूमे रुचिं ददानो कायकान्तिर्यस्य सः । तथा—कृष्णरूपस्त्वम् उल्लसन्ती कुमुदबन्धोश्चन्द्रस्य संबन्धिनी रुचिः प्रीतिर्यस्मिन् सर्वाह्लादकारित्वाच्चन्द्र इव सर्वप्रेमास्पदभूतमित्यर्थः । कुमुद् श्वेतं कैरवं तस्य बन्धुस्तद्विरोधिनी कृष्णा रुचिः श्रीर्यस्य जलदश्याम इत्यर्थ इति वा। उल्लसन्ती कुमुदाख्ये वानररूपे सुहृदि प्रीतिर्यस्य रामावतारे इति वा । उल्लसन्ती पृष्ठे दंष्ट्रायां वा कुः पृथ्वी यस्मिन्, मोदत इति मुदः, स चासौ स च तथा—बन्धुषु बन्धौ बलभद्रे वा प्रीतिर्यस्येति वा । उल्लसन्ती कुमुदतुल्ये अतिगौरे बन्धौ बले प्रीतिर्यस्य वा । उल्लसन्ति कुमुदानि येन स चन्द्र एवोद्दीपकत्वाद्बन्धुर्यस्य, अथ च—प्रद्युम्नावतारः कामस्तत्र प्रीतिर्यस्मिन्पुत्रत्वादिति वा । अथ च—बलभद्ररूपस्त्वम् उल्लसन्ती कुमुदस्यावन्धुः कैरवसदृशी गौरतरा, कुमुदबन्धोश्चन्द्रस्येव वा गौरतरा, कान्तिर्यस्य। उल्लसन्ती कुः पृथ्वी यस्मात्तस्मिन् मुदे सहर्षे बन्धावनुजे श्रीकृष्णे प्रीतिर्यस्य वा । उल्लसत्कुमुदबन्धावुक्तप्रकारेण प्रद्युम्ने प्रीतिर्यस्य वा । अथच शेषरूपस्त्वम् उल्लसन्ती कुमुदनाम्नि सर्पे सुहृदि प्रीतिर्यस्य । उल्लसन्ती चन्द्रस्येव धवला कान्तिर्यस्य वा । उल्लसन्ती कुमुदस्य चन्द्रस्य बन्धुः सदृशी कान्तिर्यस्य वा उल्लसत्पृथ्वीकः सहर्षः सुहृत्सु प्रीतिर्यस्य वा । 'कुमुदेऽपि कुमुत्प्रोक्तम्' इति विश्वः । 'गोत्रा कुः पृथिवी' इत्यमरः । 'भोगः सुखे वधे चाहेः शरीरफणयोर्मतः' इति 'इरा वारिसुराभूमिभारतीषु' इति च विश्वः । ऊतिः, अवतेः क्तिनि 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च ६।४।२०' इति वस्योपधायाश्चोठ् ।

१ अत्राप्यनुप्रासः । साधित्वत्प्रेक्षा च ।

मदिति माद्यतेर्मन्नातेश्च क्विप् । पक्षे मतुप् । मुदः, इगुपधात्कः ॥ ८६ ॥

रेवतीश(!)सुषमा किल नील-
स्याम्बरस्य रुचिरा तनुभासा ।
कामपाल भवतः कुमुदावि-
र्भावभावितरुचेरुचितैव ॥ ८७ ॥

रेवेति ॥ हे रेवतीनाम्न्याः प्रियाया ईश, तथा हे कामपाल कामपूरक, कुः पृथ्वी तस्या मुदो हर्षस्याविर्भावेन प्रादुर्भावेन भाविता सञ्चारिता रुचिः प्रीतिरिच्छा वा यस्य तस्य भवतः श्रीकृष्णस्य तनुभासा कायकान्त्या कृत्वा नीलस्याम्बरस्य । तत्तुल्यस्येत्यर्थः । तव रुचिरा शोभना, लोकानां रुचिं प्रीतिं ददाना वा । रेवतीश-सुषमा चंद्रसंबन्धिनी परमा शोभा उचितैव किल । आकाशस्य चन्द्रशोभोचितैव । अथच-बलभद्रस्वरूप-त्वाद्रेवतीशसुषमा बलभद्रस्य परमा शोभोचितैव । किंभूतस्य—कुः पृथ्वी तस्या मुदो हर्षस्याविर्भावेन प्रकटनेन भाविता त्रिलोकानां रुचिः प्रीतिर्येन । कुमुदस्य चन्द्रस्याविर्भावेन वा । अथच—रेवतीनाम्नी प्रिया सदृशी । तथा—हे कामपाल बलभद्र, कुः पृथ्वी तस्या मुदो हर्षस्याविर्भावेन प्रादुर्भावेन भाविता सञ्चारिता रुचिः प्रीतिरिच्छा वा यस्य तस्य भवतस्तव तनुभासा कायकान्त्या नीलस्याम्बरस्य वस्त्रस्य रुचिं दीप्तिं राति ददाति एवंविधा सुषमोत्कृष्टा शोभोचिता योग्यैव किल । धवलवस्तुसम्पर्कान्नीलमतिशयेन शोभते । अथच—हे कामपाल कन्दर्पपोषक रेवतीश चन्द्र, कैरवविकासस्फुटितकान्तेस्तव बिम्बतेजसा नीलस्य नभसः परमा शोभा युक्तैवेति ध्वनिः ॥ ८७ ॥

चतुर्भिः श्लोकैर्बुद्धं वर्णयति—

एकचित्ततितिरद्वयवादि-
न्नत्रयीपरिचितोऽथ बुधस्त्वम् ।
पाहि मां विधुतकोटिचतुष्कः
पञ्चबाणविजयी षडभिज्ञः ॥ ८८ ॥

एकेति॥हे अद्वयवादिन् द्वैतवाह्यघटपटादिभेदानामसत्यताप्रतिपादनेनैकस्या ज्ञानाकारताया एव सत्यताङ्गीकारादद्वैतवादिन्, त्वं मां पाहि । किंभूतः—एकैव चित्ततितिर्ज्ञानसंततिर्यस्य दीपकलिकान्यायेन क्षणिकज्ञानप्रवाह एवैको यस्य मते नतु तदतिरिक्तं किंचिदप्यस्ति, तादृशः, अत एव—अद्वयवादिन् इति योजना । तथा—त्रय्या परिचितो ज्ञातस्तादृशो न भवसीत्यत्रयीपरिचितः । नसमासो वा । नेति पृथग्वा । वेदत्रयीगम्योऽपि न भवसीत्यर्थः। अथच—वेदत्रय्यां परिचितः कृतपरिचया वेदत्रयी परिचिताभ्यस्ता येन तादृशो वा न भवति । सर्वस्य क्षणिकताङ्गीकाराद्धर्माधर्मभोगव्यवस्थाया निरासादनङ्गीकृतवेदप्रामाण्य इत्यर्थः । अत एव बुधः पण्डितः नहि पण्डितं विना वेदादिसर्वदूषणसमर्थोऽन्यस्य बुद्धिः संभवति । अथच—अत्रयीपरिचितोऽपि बुधं इति विरोधाभासः । नहि वेदत्रयमजानानस्यापि पण्डितत्वं संभवति । अथच—यः पण्डितः 'एकमेवाद्वितीयं ब्रह्म' इति मन्यमानो वेदान्ती स वेदत्रयीं न मन्यत इति विरोधः । वेदान्तिना हि वेदप्रामाण्यस्य स्वीकृतत्वात्, अथच— अद्वयवादाद्वित्वसंख्यामपि नाङ्गीकरोति । स त्रित्वसंख्यां न मन्यत इति युक्तमेवेत्यर्थः । तथा—माध्यमिकानामपि कियन्मात्रमतभेदेन बौद्धसिद्धान्तान्तःपातित्वात् । 'न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् । चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥' इति अनिर्वचनीयप्रपञ्चवादित्वाद्विधुतं निराकृतं सदसत्सदसद्वैलक्षण्यलक्षणं कोटिचतुष्कं प्रकारचतुष्टयं येन, अथच—त्रित्वनिषेधान्निरस्तचतुष्टयः । तथा—विरक्तत्वाद्दिगम्बरत्वात्पञ्चबाणः कामस्तद्विजयी मारजित् । अथच-'वण शब्दे' इत्यस्माद्धञि वाणः शब्दस्तं पञ्चसंख्यावाचिनं पञ्चशब्दं न सहत इत्यर्थः।यो हि चतुष्टयं न सहते स पञ्चापि न सहते इति युक्तमेवेत्यर्थः।तथा—देशादिव्यवहितवस्तुदर्शनम्,देशादिव्यवहितशब्दश्रवणम्, अतीतजन्मस्थितिस्मरणम् परचित्तज्ञानम्, अविद्यास्मितारागद्वेषाभिनिवेशाख्यपञ्चक्लेशक्षयः, अणिमादिसिद्धिश्चेति षडभिज्ञा ज्ञानप्रकारा यस्य । वेदानुसारिभिर्दैत्यैः पराभूता देवा ब्रह्माणं शरणं गताः, ब्रह्मणा प्रसादितो नारायणो बुद्धरूपेणावतीर्य दैत्यबुद्धिं वेदार्थेभ्यश्च्यावयित्वा बौद्धमतमुपदिदेश, अतस्ते देवानां जय्याः संपन्ना इति । अतएव चैतदीयमतपरिमापयैव स्तुतिरकारि । 'परिचिताथ बुधस्त्वम्—' इति पाठे—नेति पदं भित्त्वा त्वया वेदत्रयी न परिचिता न स्वीकृतप्रामाण्या । अथ विरोधे । तथापि बुध-

१ अत्राप्यनुप्रासः, विरोधाभासश्च । २ अत्राप्यनुप्रासः, श्लिष्टेत्युत्प्रेक्षा श्लेषश्च ।

स्त्वमित्यर्थः । 'परिचिताध्वबुधः—' इति पाठे—त्रयीपरिचितानां वैदिकानां मार्गे पण्डितो न भवति । अवैदिकमार्गमेव जानान इत्यर्थः ॥ ८८ ॥

**तत्र मारजयिनि त्वयि साक्षात्**
**कुर्वति क्षणिकताऽऽत्मनिषेधौ ।**
**पुष्पवृष्टिरपतत्सुरहस्तात्**
**पुष्पशस्त्रशरसन्ततिरेव ॥ ८९ ॥**

तत्रेति ॥ तत्र तस्मिन् बुद्धावताररूपे सौन्दर्याजितेन्द्रियत्वाच्च मारजयिनि कामस्य जैत्रे त्वयि क्षणिकता सर्वं क्षणिकं सत्त्वात्, तथा—आत्मनिषेधश्च 'समनस्केन्द्रियजन्यनीलपीताद्याकारसविकल्पकनिर्विकल्पकवासनोपबृंहितचित्संततिरेवात्मा, भूतान्येव चेतयन्ते, मनसा संयोगे ज्ञानमुत्पद्यते, तस्माद्देह एवात्मा, न तु नित्योऽन्यः कश्चित्' इत्यादिप्रकारेण सर्वभावानां क्षणमात्रावस्थायिता नैरात्म्यं च स्वदर्शनोक्तं समाधिना साक्षात्कुर्वति सति पुष्पशस्त्रस्य कामस्य शरसंततिर्बाणपरम्परारूपा सुरहस्तात् पुष्पवृष्टिरेवापतत् । अतिबले हि शत्रौ करादायुधानि पतन्ति । कामोऽपि त्वत्तो भीतः पुष्पशरश्च । तथाच-तस्य करात्त्वद्भयेन पतिता पुष्परूपबाणपरम्परा क्षणिकतात्मनिषेधौ साक्षात्कुर्वति त्वयि विषये सुरमुक्ता पुष्पवृष्टिरिवापतदित्युत्प्रेक्षा । कामेऽपि देवत्वमेव पुष्पवृष्टिमोचने हेतुः।यो हि लोकोत्तरं वस्तु प्रत्यक्षगोचरं करोति यश्च कञ्चन विजहते, तयोरुपरि देवैः पुष्पवृष्टिः क्रियते इत्यादि ज्ञातव्यम् ॥ ८९ ॥

**तावके हृदि निपात्य कृतेयं**
**मन्मथेन दृढधैर्यतनुत्रे ।**
**कुण्ठनादतितमां कुसुमानां**
**छत्रमित्रमुखतैव शराणाम् ॥ ९० ॥**

तावक इति ॥ मन्मथेन दृढमभेद्यं धैर्यमेव तनुत्रं कवचं यस्य तस्मिंस्तावके हृदि मनसि, अथच—वक्षसि अर्थाच्छरान्निपात्य नितरां दृढाघातपूर्वं यथातथा पातयित्वा दृढतनुत्रत्वादेवातितमां कण्ठनात्तैक्ष्ण्यकत्यागाद्धेतोः कुसुमरूपाणां स्वीयशराणां छत्रं मित्रं येषां तानि, छत्रस्य वा मित्राणि, मुखानि येषां तेषां भावस्तत्ता सूचीमुखतापरित्याजनेन छत्रतुल्यवृत्तमुखेनेयं प्रत्यक्षदृशा कृता । दृढतनुत्रे हि पातितो बाणः कुण्ठितत्वाद्वृत्तमुखो भवति । स्मरशराः शरत्वात्पूर्वं सूचीमुखा आसन्, इदानीं तु धर्यकञ्चुके त्वदीये हृदि निपत्य नितरां कुण्ठनादिव तेषां पुष्परूपाणां छत्राकारमुखता जातेत्युत्प्रेक्षोपमे । विकसितानि पुष्पाणि छत्रतुल्यानि भवन्ति।अथच—छत्रं छायाकारित्वात्सुखदमेव यथा न तु दुःखदम्, तथा कामशरा अपि त्वद्धृदयस्यानिर्वापका एव जाता न तु त्वां जेतुमशकन्नित्यर्थः । एतादृशो जितेन्द्रियः कोऽपि नास्तीति भावः । निपात्य, ण्यन्तात्क्त्वो ल्यप् ॥ ९० ॥

**यत्तव स्तवविधौ विधिरास्ये**
**चातुरीं चरति तच्चतुरास्यः ।**
**त्वय्यशेषविदि जाग्रति शर्वः**
**सर्वविद्ब्रुवतया शितिकण्ठः ॥ ९१ ॥**

यदिति ॥ विधिस्तव स्तुतिविधौ बहुभिर्मुखैश्चातुरीं वैदग्ध्यं यद्यदि चरति प्राप्नोति नानाप्रकारैर्यदि त्वद्वर्णनं करोति तत्तर्ह्येव चतुराणि वर्णननिपुणान्यास्यानि यस्यैतादृशो भवेत् नान्यथा ।अथ च—त्वद्वर्णनविधौ यस्माच्चातुरीं प्राप्नोति तस्मादेव हेतोश्चतुराण्यास्यानि यस्येति चतुरास्यो, न तु चत्वार्यास्यानि यस्येति विग्रहेण चतुरास्यः । आस्यानां चतुष्ट्वे सत्यपि तत्रार्थे गौरवाभावात् अत्र तु गौरवसद्भावात्तथैवोच्यत इत्यर्थः । त्वदीयस्तुतिपरत्वाद्ब्रह्मणो लोकत्रयेऽप्येवं कीर्तिरजनीति भावः । तथा—शर्वो हरस्त्वयि बुद्ध एवाशेषविदि सर्वज्ञे जाग्रति सति सर्वविदं सर्वज्ञमात्मानं ब्रूते स सर्वविद्ब्रुवस्तत्तयेव परगुणस्यात्मन्यारोपणेन हेतुना कलङ्केन शितिकण्ठो नीलकण्ठः, नतु कालकूटभक्षणेन नीलकण्ठः त्वत्स्पर्धितया लोकत्रयेऽपि महेशस्यैवमयशो जातमित्यर्थः । ब्रह्ममहेशाभ्यामपि सकाशात् त्वमेव परमपुरुषः सर्वज्ञश्चेति भावः । अन्यस्याप्यात्मस्तुत्या सर्वसंनिधौ लज्जया मालिन्यं भवति । सर्वविद्ब्रुवेति विदुषिब्रुवेतिवत् ॥ ९१ ॥

---

१ अत्र विरोधाभासः । २ अत्र शस्त्रशरसन्ततिः पुष्पवृष्टिरिवाभवदितिप्रतीतेरुत्प्रेक्षा प्रतीयमाना । तुर्यपादे पुष्पपदमप्रयुज्य 'शत्रु' इति पदं प्रयोज्यं कथितपदत्वस्यान्यथाऽनपायात् शत्रोः शस्त्रसम्पातोऽपि तथाविधे पुष्पवृष्टिरिवाकिञ्चित्करः, प्रत्युताहंणोपयोगाय भवतीति चमत्कारोल्लसकत्वाच्च ।

१ अत्रानुप्रासः, धैर्यस्य तनुत्रात्मनारूपणाद्रूपकम्, छत्रमित्रमुखतैवेत्युत्प्रेक्षोपमा च । २ अत्रानुप्रासः, चतुरास्यत्वस्यान्यथासिद्धस्यापि स्तवविधौ आस्ये चातु-

श्लोकद्वयेन कल्किनं स्तौति—

धूमवत्कलयता युधि कालं
म्लेच्छकल्पशिखिनां करवालम् ।
कल्किना दशतयं मम कल्कं
त्वं व्युदस्य दशमावतरेण ॥ ९२ ॥

धूमवदिति ॥ त्वं धूमवत् कालं करवालं खड्गं युधि म्लेच्छैः सह युद्धे कलयता धारयता, मृत्युरूपं खड्गं धूममिव धारयता वा, अत एव—म्लेच्छानां कल्पशिखिना प्रलयकालानलरूपेण, म्लेच्छा इव म्लेच्छाः पापिनस्तेषां वा, म्लेच्छप्रायाणां वा, एवंभूतेन काल्कि-संज्ञेन दशमावतरेण कृत्वा मम दशतयं दशावयवं कल्कं पापं व्युदस्य निराकुरु । समूलमुन्मूलयेत्यर्थः । अथ च—यः स्वयं कल्की, सोऽन्यकल्कं विनाशयतीति विरोधः । कल्किशब्दस्य विष्णुनामत्वात्परिहारः । म्लेच्छकल्पशिखिनेत्यवतारप्रयोजनमुक्तम् । अदत्तस्य वस्तुनः स्वयं ग्रहणम्, यागीयातिरिक्ता हिंसा, परस्त्री-गमनं च, त्रिविधं कायिकम् । पारुष्यम्, अनृतम्, पैशुन्यम्, असम्बद्धप्रलापश्चेति चतुर्विधं वाचिकम् । पर-द्रव्यग्रहणेच्छा, परानिष्टचिन्ता, वृथैव परेषु दोषाभि-ध्यानं, चेति त्रिविधं मानसम् । इति दशविधं पापम् । चक्षुस्त्वक्श्रोत्रघ्राणजिह्वापाणिपादपायूपस्थमनोजन्यं वा । दशसु मासेषु भवत्वाद्गर्भवासलक्षणं दुःखमिति वा । 'कल्कः पापाशये पापे' इति विश्वः ॥ ९२ ॥

देहिनेव यशसा भ्रमतोर्व्यां
पाण्डुरेण रणरेणुभिरुच्चैः ।
विष्णुना जनयितुर्भवताऽभू-
न्नाम विष्णुयशसश्च सदर्थम् ॥ ९३ ॥

देहिनेति ॥ विष्णुयशस्तन्नामकस्य जनयितुः पितुः विष्णुरिति नाम भवता च त्वयैव कृत्वा सदर्थं सान्वय-मभूत् । किंभूतेन भवता—रणरेणुभिरुच्चैः पाण्डुरेण धवलतरेण, तथा—दुष्टगवेषणार्थमुर्व्यां भ्रमता विष्णुना व्यापकेन विष्णुसंज्ञकेन च पाण्डुरत्वाद्व्यापित्वाच्च देहिना शरीरधारिणा यशसेव यशोरूपेण विष्णुं व्यापकं यशो यस्य त्वया पुत्रेणेति यावत् । तस्य तव पितुर्नाम सान्व-यमभूत्, जातप्रायमेवेति भाविन्यपि भूतवदुपचारः । अतीतकलियुगान्तावतारापेक्षयाऽभूदिति निर्देशो वा । पूर्वं तु डित्थादिवत्तन्नामाभूत्, त्वय्युत्पन्ने तु तत्सार्थकम-भूदित्यर्थः ॥ ९३ ॥

सन्तमद्वयमयेऽध्वनि दत्ता-
त्रेयमर्जुनयशोऽर्जनबीजम् ।
नौमि योगजयितानघसञ्ज्ञं
त्वामलर्कभवमोहतमोऽर्कम् ॥ ९४ ॥

दत्तात्रेयं स्तौति—

सन्तमिति॥अहं दत्तात्रेयं—दत्तश्चासावात्रेयः—दत्ता-त्रेयःअत्रेर्गृहे जातत्वेनापत्यमिवेति तं तथोक्तं त्वां नौमि । किम्भूतम्—अद्वयमयेऽध्वनि अद्वैतमार्गे ऐकात्म्यवादे सन्तं वर्तमानं, तथा—अर्जुनस्य कार्तवीर्यार्जुनस्य यशसो यदर्जनं तस्य बीजं मूलम् । कार्तवीर्येणाराधितो दत्तात्रेय-स्तव यशो लोकव्यापि भविष्यतीति वरं दत्तवान् । 'अर्जुन-' इति पाठे—अर्जुनयश एवार्जुनो वृक्षः, तस्य बीजम् । वृक्षस्योत्पत्तिर्बीजादेव युक्ता । अथ च—अर्जुनं धवलं यशो यस्यैवंविधोऽर्जुनः कार्तवीर्यस्तस्य बीजम् । तथा-अष्टाङ्गयोगेन जनितोत्पादिता पापादिराहित्यादनघ इत्यपरा संज्ञा यस्य । तदा हि देवैर्योगबाहुल्यादनघेति संज्ञा कृता । तथा—अलर्कनाम्नः शत्रुध्वजमदालसा-पुत्रस्य राज्ञो भवमोहो ममतादिरूपः संसारमोहः स एव तमोऽन्धकारः तस्य विनाशहेतुत्वादर्कस्तम् । योगमार्गो-पदेशेन तस्य मोहं चिच्छेदेति पुराणकथा ॥९४॥

एवं दशावतारान्निर्वर्ण्य भक्त्यतिशयेन पुनरपि किय-तस्तानेवावतारांस्त्रिविक्रमं हरिहरौ बालमुकुन्दं च संक्षेपेण चतुर्विंशत्या श्लोकैर्वर्णयति—

भानुसूनुमनुगृह्य जय त्वं
राममूर्तिहतवृत्रहपुत्रः ।

---

-येणैव सम्भावनादिवादेरभावाच्च प्रतीयमानोत्प्रेक्षा' हेतुहेतुमद्भावकल्पनया काव्यलिङ्गं च । १ अत्रानुप्रासः । धूमवदित्युपमा, धूमवत् कालं करवालमिति रूपकम् । स्वयं कल्किनः कल्कव्युदसनवचनं विरुद्धमिवेति विरोधाभासोऽपरप्रयोगाद् व्यङ्ग्यश्च ।

१ अत्र देहिनेत्युत्प्रेक्षा, रणरेणुभिरिति सा हेतुरूपा, विष्णुयशस्त्वस्यान्यथासिद्धस्यापि यथोक्तप्रकारेण सम्भा-वनाच्च काव्यलिङ्गम् । २ अत्रानुप्रासः, बीजत्वेन रूपणा-द्रूपकम्, अर्जुनबीजमिति पाठान्तरे तु यमकं, रूपकान्तरं च, यशसोऽप्यर्जुनत्वेन रूपणात् । एवम्मोहतमोऽर्कमि-त्यत्रापि रूपकमेव ।

इन्द्रनन्दनसपक्षमपि त्वां
नौमि कृष्ण निहतार्कतनूजम् ॥ ९५ ॥

भानुसूनुमिति ॥ हे कृष्ण, भानुसूनुं सूर्यपुत्रं सुग्रीवमनुगृह्य वालिहृतां तद्वधूं तारां तस्मै राज्याभिषेकद्वारा कृतार्थीकृत्य राममूर्त्या रामावतारेण हतो मारितो वृत्रघ्न इन्द्रस्य पुत्रो वाली येन स त्वं रामो जय सर्वोत्कर्षेण वर्तस्व । नमस्योऽसीत्यर्थः । तथा—भोः कृष्णावतार, अहम् इन्द्रनन्दनस्यार्जुनस्य सपक्षं मित्रभूतम्, अत एव—निहतो मारितोऽर्कतनूजो येनेति वा । यो भानुसूनुमनुगृह्णाति स निहतार्कतनूजः कथम् । तथा—यो हतेन्द्रपुत्रः स इन्द्रपुत्रमित्रं कथमिति विरोधार्थोऽपिशब्दः । निग्राह्यानुग्राह्ययोस्तत्पुत्रयो रामकृष्णावतारयोश्च भेदात्तु विरोधपरिहारः। एतादृग्विरुद्धचरितत्वाद्दुर्विज्ञेयः परमपुरुषोऽसीति भावः ॥ ९५ ॥

वामनादणुतमादनुजीया-
स्त्वं त्रिविक्रमतनूभृतदिक्कः ।
वीतहिंसनकथादथ बुद्धात्
कल्किना हतसमस्त नमस्ते ॥ ९६ ॥

वामनादिति ॥ हे विष्णो, अणुतमाद् ह्रस्वतमशरीराद्वामनावतारादनु पश्चात्त्रिविक्रमावतारस्य तन्वा भृता शरीरेण त्रिविक्रमावताररूपया वा तन्वा भृता व्याप्ता दिशो येन स त्वं जीयाः सर्वोत्कर्षेण वर्तस्व । तथा—वीता निवृत्ता हिंसनकथा प्राणिवधवार्ताऽपि यस्मात् एवंभूताद् बुद्धावतारात्, अथ पश्चात् कल्किना दशमावतारेण कृत्वा हतं मारितं कलिमलदूषितं समस्तं प्राणिजातं येन तादृश विष्णो, ते तुभ्यं नमः । यो ह्यणुतमः स एव तनूभृतदिक्को व्यापकदेहः कथम् । तथा—यश्च वीतहिंसनकथः स एव हतसमस्त इति विरोधः, अवतारभेदेन परिहारः । दुर्विज्ञेयचरितोऽसीति भावः । वामनत्रिविक्रमौ वर्णितौ ॥ ९६ ॥

---

१ अत्राप्यनुप्रासः, इन्द्रपुत्रस्य सपक्षत्वं विपक्षत्वं च विरुद्धमिवेति विरोधाभासः प्रतीयमानः । एवं निहतार्कतनूजस्यानुगृहीतार्कतनूजत्वमपि विरुद्धमिवेत्यसावपेरप्रयोगात् प्रतीयमानो विरोधाभासः ।
२ अत्रापि विरोधाभासः प्रतीयते, वामनस्य त्रिविक्रमतनूभृतदिक्कतायाः, वीतहिंसनकथस्य हतसमस्ततायाश्चात्यन्तं विरुद्धायमानत्वात् । अपरभावादुभयोरपि प्रतीयमानत्वम् ।

मां त्रिविक्रम पुनीहि पदे ते
किं लगन्नजनि राहुरुपानत् ।
किं प्रदक्षिणनकृद्भ्रमिपाशं
जाम्बवानदित ते बलिबन्धे ॥ ९७ ॥

मामिति ॥ हे त्रिविक्रम, त्वं मां पुनीहि । तथा—गगनव्यापिन्यूर्ध्वीकृते ते पदे विष्णुपदे लगन् नक्षत्रमालामध्यवर्ती श्यामरूपो राहुरुपानद् अजनि किं पादरक्षिकैव जाता किम् । एतावदतिमहच्छरीरं धृतम्,यस्य चरणस्थाने गगनस्थो राहुरुपानदिव जात इत्यर्थः । सापि हि श्यामा, चरणे च लगति । तथा—प्रदक्षिणनं प्रदक्षिणाख्यं पञ्चदशमुपचारं कुर्वन् जाम्बवान् ऋक्षराजो ब्रह्मावतारो बलिनिबन्धननिमित्तं ते तुभ्यं भ्रमिपाशं परिभ्रमणरूपं वलयाकारवेष्टनमेव पाशं बन्धनरज्जुमेवादित दत्तवान् किम् । यो हि कंचिद्बन्द्धुमुपक्रमते तस्मै केनचित्पाशो दीयते । यद्यपि देवेन बलिर्वाग्बन्धमेव प्रापितः, नतु रज्ज्वादिबन्धम् । तथापि लोके बद्ध इति प्रसिद्धिवशाद्बन्धशब्दच्छलेन कविः पाशशब्दं प्रायुङ्क्त । जाम्बवान् किल तदा त्रिविक्रमस्य षोडशोपचारपूजामकृतेति प्रवादः । अत्रापि त्रिविक्रमो वर्णितः । 'बन्द्धे' इति पाठे तृन्नन्ताद्बन्धेश्चतुर्थी 'ते' इत्यस्य विशेषणम् । 'बन्द्धः' इति तस्मादेव सम्बुद्धिः ॥ ९७ ॥

अर्धचक्रवपुषाऽर्जुनबाहून्
योऽलुनात्परशुनाऽथ सहस्रम् ।
तेन किं सकलचक्रविलूने
बाणबाहुनिचयेऽश्नाति चित्रम् ॥ ९८॥

अर्धेति ॥ यो जामदग्न्यो भवान् चक्रस्यार्धं समभागस्तस्यैव वपुः स्वरूपं यस्य तदाकारेण परशुना कृत्वा सहस्रम् अर्जुनबाहून् शीघ्रमेवालुनात् चिच्छेद । तेनैव भवता सकलेन सुदर्शनचक्रेण विलूने बाणासुरस्य बाहुनिचये विषये लोकश्चित्रमाश्चर्यमश्नाति किम्, अपि तु न प्राप्नोति । अथ च—किमिति प्राप्नोति, अपि तु वृथैव तत् । येन पूर्वमेकस्य बाहुसहस्रं छिन्नं तेनैवान्यस्य बाहुसहस्रे छिन्ने न किंचिच्चित्रम्, तत्र क्लृप्तशक्तित्वादित्यर्थः । येन चार्धेन चक्रेण बाहुसहस्रं छिन्नम्, तेनैव

---

१ अत्रोत्प्रेक्षा रूपकाश्रिता ।

समग्रेण चक्रेण बाहुसहस्रे छिन्ने सुतरां न चित्रमित्यर्थः। परशुरामकृष्णौ वर्णितौ ॥ ९८ ॥

पाञ्चजन्यमधिगत्य करेणा-
पाञ्चजन्यमसुरानिति वक्षि ।
चेतनाः स्थ किल पश्यत किं ना-
चेतनोऽपि मयि मुक्तविरोधः ॥ ९९॥

पाञ्चजन्यमिति ॥ हे विष्णो, त्वं वामकरेण पाञ्चजन्यनामानं शङ्खमधिगत्य धृत्वा, तथा—अपां जलानां च जन्यमुत्पाद्यं कमलं च दक्षिणकरेण धृत्वाऽसुरान् दैत्यानिति वक्षीव प्रतिवदसीव । इति किम्—हे दैत्याः, अचेतनोऽप्ययं शङ्खो मयि मुक्तविरोधः किं न, अपि तु त्यक्तविरोध एव । किल यस्मात्पाञ्चजन्यत्वे सत्यपि अपाञ्चजन्यत्वमङ्गीकरोति । यूयं पश्यत, यतः सचेतनाः स्थ चैतन्ययुक्ता वर्तध्वे, कस्मान्मयि विपर्यं विरोधं कुरुथेति अचेतना अपि मयि विरोधं नाचरन्ति, किमुत मरणभीताः सर्वज्ञाः । तस्मान्मयि विरोधं मा स्म कुरुध्वम् । शब्दत एव विरोधः । अर्थद्वयेन तत्परिहारः । अथवा—अचेतन एव मयि मुक्तविरोधः शङ्खवत् । यूयं तु सचेतनाः स्थ, तस्मान्मयि विरोधमाचरथेति शङ्खवद्भवतोऽपि यावदचेतनान्न कुर्वे, तावद्विरोधो न त्यज्यत इति, अथवा—अचेतनोऽपि शङ्खो मयापि न मोच्यते, सचेतनास्तु शङ्खादयो भवन्तः कथं वा मया मोच्येरन् । अपि तु मारयिष्याम्येवेति वक्षीत्यर्थः । अधिगत्य च अधिगत्यैवेति वा पक्षे संबन्धः । अचेतनोऽपि मयि मुक्तविरोधः किं न पश्यतेति वा । अपामिति कर्तरि 'कृत्यानां कर्तरि वा २ । ३ । ७१' इति षष्ठी ॥ ९९ ॥

तावकोरसि लसद्वनमाले
श्रीफलद्विफलशाखिकयेव ।
स्थीयते कमलया त्वदजस्र-
स्पर्शकण्टकितयोत्कुचया च ॥१००॥

तावकोरे ॥ कमलया लक्ष्म्या लसन्ती पत्रपुष्पफलमयी वनमाला यस्मिंस्तस्मिंस्तावकोरसि श्रीफलस्य बिल्ववृक्षस्य द्विफलशाखिकयेव फलद्वययुक्तया ह्रस्वकोमलशाखयेव स्थीयते । किंभूतया श्रिया—तवाजस्रमनवरतं स्पर्श आश्लेषस्तेन कण्टकितया संजातसात्त्विकरोमाञ्चया, तथा—उत्कुचया चोन्नतपीवरस्तनया च । यत्र हि वनानां माला पङ्क्तिर्विलसति तत्र सकण्टकया फलसहितया च बिल्वशाखया स्थीयते, तथाऽत्रापि लसद्वनमालत्वाद्विशिष्टया लक्ष्म्या विशिष्टबिल्वशाखयेव स्थीयते इत्युपमोत्प्रेक्षा वा । शाखिका, अल्पत्वे ह्रस्वत्वे वा कन् ॥ १०० ॥

त्यज्यते न जलजेन करस्ते
शिक्षितुं सुभगभूयमिवोच्चैः ।
आननं च नयनायितबिम्बः
सेवते कुमुदहासकरांशुः ॥ १०१ ॥

त्यज्यत इति॥ जलजेन शङ्खेन, अथ च—पद्मेन, ते करः कदाचिदपि न त्यज्यते, सशङ्खचक्रगदापद्मत्वात्तवेत्यर्थः । तत्रोत्प्रेक्षते—उच्चैरत्यन्तं सुभगभूयं त्वत्करकमलरक्तिमादिसौभाग्यं शिक्षितुमिव । गुरुशुश्रूषा हि विद्याप्राप्तिहेतुः । तथा—कुमुदहासकराः कैरवाविकासकारिणोंऽशवो यस्य स चन्द्रः नयनायितं नेत्रमिवाचरितं बिम्बं यस्य तथाभूतः सन् त्वदीयवामनयनभवंश्चन्द्रः परमं निष्कलङ्कत्वादि त्वन्मुखसौभाग्यं शिक्षितुमिव त्वदाननं गुरुं च सेवते । त्यज्यते सेवते इति लटा—अनयोः सौभाग्यं पद्मचन्द्रयोरद्यापि नागतमिति सूच्यते । 'पाञ्चजन्य—' इत्यादिश्लोकत्रयेण मूलप्रकृतिरेव वर्णिता । नयनायितेति आचारक्य (ङ) जन्तान्निष्ठा । 'हासकर—इति ताच्छील्ये टः ॥ १०१ ॥

---

१ अत्र परशोरर्धचक्रत्वेन रूपणाद्रूपकम्, यथोक्तेन परशुना सहस्रबाहुलवनोक्तिरसम्भवस्याप्यर्थस्य सम्भवित्वद्योतनायेति तदंशे विरोधाभासो व्यङ्ग्यः, एवं तथाकृतवतोऽपि ते साङ्गमपि चक्रं बाणबाहुलवने कुण्ठितमिव न सर्वथा कृतार्थमित्युद्भावितोऽर्थोऽपि विरुद्ध इवेत्यपि स एवेति बोध्यम्। २ अत्र पाञ्चजन्येति यमकम् । विरोधाभासश्च पूर्ववत् पूर्वत्र व्यङ्ग्यः, परत्र पुनर्वाच्यः । उत्प्रेक्षापि वाच्या ।

१ अत्रेवेत्युत्प्रेक्षोपमयोः सन्देहसङ्करः । लिङ्गवैशिष्ट्येन मालाया अपि सुन्दरीत्वम्, तथाभूताया उरसि स्थितात्वेऽपि तत्सपत्नीभूतायाः कमलायाः सप्रसादत्ववचनं विरुद्धमिवेति विरोधाभासो व्यङ्ग्यः । २ अत्र जलजेनेति श्लेषः, शिक्षितुमिवेत्युत्प्रेक्षा, नयनायितेत्युपमा, अत्यागसेवनयोः क्रिययोरेकत्वेऽपि यथाप्रयोगात्प्रतिवस्तूपमा, 'वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता ।' इति तल्लक्षणात् ।

ये हिरण्यकशिपुं रिपुमुच्चै
रावणं च कुरुवीरचयं च ।
हन्त हन्तुमभवंस्तव योगा-
स्ते नरस्य च हरेश्च जयन्ति ॥ १०२ ॥

य इति ॥ हे विष्णो, ये तव क्रमेण नरस्य मनुष्यस्य च हरेः सिंहस्य च । तथा—नरस्य श्रीरामचन्द्रस्य, हरेः सुग्रीवस्य । तथा—नरस्य अर्जुनस्य, हरेः श्रीकृष्णस्य च संयोगा उच्चैरधिकं रिपुं हिरण्यकशिपुं हन्तुम्, तथा रावणं च हन्तुम्, तथा कुरुवीराणां भीष्मादीनां चयं च हन्तुमभवन् । ते तव नरस्य हरेश्च योगा जयन्ति सर्वोत्कर्षेण वर्तन्ते । हन्ताश्चर्यम्, अवतारत्रयमपि नरहरियोगावलम्बनात् । योगः संश्लेषो मैत्री च ॥ १०२ ॥

केयमर्धभवता भवतोहे
मायिना ननु भवः सकलस्त्वम् ।
शेषतामपि भजन्तमशेषं
वेद वेदनयनो हि जनस्त्वाम् ॥१०३॥

केति ॥ हे विष्णो, तव इयं पुराणादिषु दृश्यमाना अर्धं भवो महेशो यस्य तादृशोऽर्धभवस्तत्ता हरिहरमूर्तिता काऽप्यपूर्वाश्चर्यकारिणी मायिना भवता ऊहे ऊढा । मुखात्प्रभृति चरणपर्यन्तं श्यामत्वादितत्तदसाधारणचिह्न उक्ततार्धस्य अर्धस्य च धवलत्वाद्यसाधारणचिह्न उक्तता एतादृशी लोकोत्तरा तव मायाऽऽश्चर्यकारिणीत्यर्थः । अथ च केयमर्धभवताऽपि भवता सकलभवरूपता त्वयोढेति भावः। अथ च केयम्, आदित्वनुचितैव । ननु अहो यस्मात्त्वं सकलः समग्रो भवो महेशः, अथ च—चन्द्रकलासहितो यो महेशः स्वतन्त्रमूर्तिः स त्वमेव । तथा च सकलभवरूपस्यार्धभवरूपता विरोधादयुक्ता । आश्चर्यकारित्वेऽप्ययमेव हेतुः । हरिहरात्मकता चावतारान्तरामित्यवतारभेदेन तु विरोधपरिहारः । भवतेयमर्धभवता का ऊहे ऊढेत्यर्थ इति वा । अथ च—तवेयमर्धसंसारता का, अपि तु—विरुद्धा चित्ररूपा वा । यतः—समग्रः कलाभिरवयवैः सह वर्तमानश्च संसार उत्पत्तिधर्मा त्वमेवेति वा । हि यस्माद्वेदा एव नयनानि यस्य सकलवेदार्थनिश्चयदृढप्रत्ययो जनो लोकस्त्वां शेषतामेकदेशभूततां पृथग्भूततां भजन्तमपि अशेषं चराचरजगद्रूपं च वेद जानाति । 'सर्वं विष्णुमयं जगत्' इत्यादिश्रुतिस्मृतिभिस्तव चराचररूपत्वप्रतिपादनात्त्वयि सकलभवत्वं युक्तमेवेत्यर्थः । किं पुनर्हरिहरादिविचित्ररूपसाधारणम् । अथ च शेषोऽपि विष्णोरेव मूर्तिरनन्ततां भजति, स एव कथमशेषोऽनन्तो न भवतीति च विरोधः । व्याख्यान्तरेण तत्परिहारः ॥ १०३ ॥

प्राग्भवैरुदगुदग्भवगुम्फान्
मुक्तियुक्तिविहताविह तावत् ।
नापरः स्फुरति कस्यचनापि
त्वत्समाधिमवधूय समाधिः ॥ १०४ ॥

प्राग्भवेति ॥ प्राग्भवैः प्राक्तनैः पूर्वजन्मोपार्जितैः कर्मभिर्हेतुभिरुदगुदग्भवस्योत्तरोत्तरस्य संसारस्य जन्मनो वा गुम्फाद् ग्रथनाद्धेतोः 'आत्यन्तिकी दुःखनिवृत्तिः, अविद्यास्तमयो वा मोक्षः' इत्येवंलक्षणाया मुक्तेर्युक्तियोगः प्राप्तिरिति यावत् । तस्या विहतावनेकजन्मसु तत्तत्सुकृतदुष्कृतरूपकर्मार्जनान्मूलसद्भावात्संसारानिवृत्तौ कथं नाम मुक्तिः सम्भवतीत्यादिभिर्युक्तिभिरनुपपद्यमानतायां तावन्निश्चयेन सत्यामिहैवं पूर्वपक्षे विषये कस्यचनापि वादिनस्त्वयि समाधिश्चित्तैकाग्र्यं ध्यानं सन्ततानुचिन्तनमवधूय परिहृत्यापरोऽन्यः समाधिः परिहारः सिद्धान्तरूपो न स्फुरति प्रकाशते । उक्तरीत्या यद्यपि मुक्तिविहतिस्तथाऽपि तव ध्यानादिद्वारा प्राप्तपरमात्मरूपसाक्षात्कारेणैव प्राचीनतत्तज्जन्मार्जितकर्मणां समुन्मूलनादिदानीमन्यकर्मारम्भे प्रारब्धकर्मणां भोगादेव क्षयान्नैष्कर्म्ये संपन्ने मुक्तिर्युज्यत एवेति सर्वेषामपि वादिनां त्वत्समाधिरेव सिद्धान्त इत्यर्थः । मुक्तिहेतुस्त्वमेवेति भावः । न तावत् स्फुरतीति वा ॥ १०४ ॥

---

१ नरस्य च हरेश्चेत्यत्र चकारयोः समुच्चयार्थत्वे नरहरिरूपत्वं, विकल्पार्थत्वे तु नररूपत्वं हरिरूपत्वं चेत्यवतारत्रयमुक्तं, तेन क्रमेणैव हिरण्येत्याद्युक्तं, तस्मात् यथासङ्ख्यम् ।

१ अत्र भवेति वेदेति च यमकम्, अर्धभवतायां भवता(सकलभवता) ऊह इति विरोधाभासो व्यङ्ग्यः । अर्धभवताया अन्यथात्वेऽपि नन्वित्यादिना समर्थनात् काव्यलिङ्गं व्याजोक्त्यनुप्राणितम् । शेषतामपीति विरोधाभासो वाच्यः । वेदेतिकाव्यलिङ्गं च । २ अत्रानुप्रासः, समाधीति यमकं च ।

ऊर्ध्वादिक्कदलनां द्विरकार्षीः
किं तनुं हरिहरीभवनाय ।
किं च तिर्यगभिनो नृहरित्वे
कः स्वतन्त्रमनु नन्वनुयोगः ॥ १०५ ॥

ऊर्ध्वेति ॥ हे विष्णो, त्वं हरिहरीभवनाय हरेर्हरस्यापि भवनाय हरिहरमूर्तीभवितुमूर्ध्वा दिग्यस्मिन्दलने तदूर्ध्वदिक्कमेवंभूतं दलनं विभागो यस्यास्तादृशीं तनुं द्विःप्रकारां किमकार्षीः । हरिहरमूर्तौ चरणादिकमूर्ध्वपर्यन्तं तत्तद्विसदृशवर्णादिधारणादधोभागमारभ्योर्ध्वभागपर्यन्तं किमकार्षीः। नृहरित्व इव तिर्यग्विभागामेव किमिति नाकार्षीरित्यर्थः । चरणादेवारभ्य देवतावर्णनस्य कर्तुं युक्तत्वादूर्ध्वदिकेत्युक्तम् । यदि च हरिहरत्वे तनुमूर्ध्वदिक्कविभागामकार्षीस्तर्हि नृहरित्वे नरहरीभवितुं तनुं तिर्यग्यथातथा किमिति अभिनः विभक्तवानसि । कण्ठादधोभागे नरत्वेन, ऊर्ध्वभागे सिंहत्वेनैव तिर्यग्दिक्कविभागं किमित्यकार्षीः । हरिहरत्व इवोर्ध्वदिक्कविभागमेव किमिति नाकार्षीरित्यर्थः । एवमाक्षेपद्वयं स्वयमेव परिहरति—ननु विष्णो, स्वतन्त्रं त्वामनु प्रति अनुयोगः प्रश्नः कः, अपि तु—न युक्तोऽयं प्रश्नद्वारक आक्षेपः । समर्थो हि स्वेच्छया यत्किंचित्करोति, परं किमर्थमेवं करोषीत्याक्षेपार्हः स न भवतीत्यर्थः । 'न खलु परतन्त्राः प्रभुधियः' इति न्यायेन स्वेच्छामात्रेण तथा तथा रूपं करोषीति भावः । अत्र हरिहरनरहरिवर्णनम् । ऊर्ध्वदिक्केति बहुव्रीहौ कप् ॥ १०५ ॥

आप्तकाम सृजसि त्रिजगत्किं
किं भिनत्सि यदि निर्मितमेव ।
पासि चेदमवतीर्य मुहुः किं
स्वात्मनाऽपि यदवश्यविनाश्यम् ॥ १०६ ॥

आप्तेति ॥ हे आप्तकाम अवाप्तसकलाभिलाप विष्णो, त्वं त्रिजगत् किं सृजसि । यदीदं निर्मितमेव, तर्हि निष्प्रयोजनमेव किं भिनत्सि । यदि चेदं स्वयमात्मनापि निश्चयेन संहरणीयमेव तर्हि मुहुर्वारंवारं तेन तेन प्रकारेणावतीर्य जन्मादिक्लेशमनुभूयेदं जगत् किमर्थं पासि च । यदवश्यं विनाश्यम्,तत्कोऽपि नाहि स्वात्मना स्वयमेव पालयति । प्रयोजनाभावात् सृष्टिपालनसंहारान्किमर्थं करोषीत्यर्थः । अत्रापि 'कः स्वतन्त्रम्-' इत्यादिः पूर्व एव परिहारः । ब्रह्मादिरूपत्वमेवेति भावः । इष्टप्राप्तिरनिष्टनिवृत्तिश्चेति द्वयं प्रयोजनं सर्वस्य । ततश्च—इष्टप्राप्तावनिष्टनिवृत्तेरन्तर्भावं मन्यमानः श्रीहर्षः 'आप्तकाम' इत्येव संबुद्धिमकृतेति ज्ञेयम् ॥ १०६ ॥

जाह्नवीजलजकौस्तुभचन्द्रान्
पादपाणिहृदयेक्षणवृत्तीन् ।
उत्थिताब्धिसलिलात्त्वयि लोला
श्रीः स्थिता परिचितान्परिचिन्त्य ॥ १०७ ॥

जाह्नवीति ॥ अब्धिसलिलात् उत्थिता निर्गता लोला स्वभावतश्चपलाऽपि लक्ष्मीः यथाक्रमं जाह्नवी च जलजं पाञ्चजन्यश्च कौस्तुभश्च चन्द्रश्च तान् पादे पाणौ हृदये ईक्षणे वामनेत्रे च वृत्तिरवस्थानं येषामेवंभूतान्परिचितान्समुद्रैकाश्रयतासहवाससंजातस्नेहान् सुहृदस्त्वयि विष्णौ परिचिन्त्य विचार्य दृष्ट्वैव त्वयि स्थिता किम् । चाञ्चल्यं परित्यज्य त्वयि नित्यावस्थितिरभूत् किम् । जाह्नव्यादयो लक्ष्मीश्च तव सेवां कुर्वन्ति, एतादृशः परमपुरुषोऽसीति भावः ॥१०७॥

वस्तु वास्तु घटते न भिदानां
यौक्तनैकविधबाधविरोधैः ।
तत्त्वदीहितविजृम्भिततत्त-
द्भेदमेतदिति तत्त्वनिरुक्तिः ॥ १०८ ॥

वस्त्विति ॥ हे विष्णो, घटपटादिवस्तुजातं यौक्तैर्युक्तिसंबन्धिभिर्युक्तिकृतैर्न्यायोक्तैर्नैकविधैर्बहुप्रकारैर्बाधैः साधारणदूषणैः, तथा—विरोधैर्ब्रह्माद्वैतप्रतिपादकसर्वोपनिषद्वाक्यवैपरीत्यरूपैरसाधारणदूषणैः, यद्वा—नैकविधान् भिन्नान् घटपटादीन् बाधन्ते इति नैकविधबाधास्तथाभूतैर्विरोधैर्हेतुभिरिदमस्माद्भिन्नमित्येवं विशेषणत्वेन प्रतीयमानानां भिदानां वास्तु आधारो वस्तु पदार्थो न घटते न प्रयुज्यते । किंत्वभिन्नं ब्रह्माद्वैतमेव घटत इत्यर्थः । तर्हि भेदप्रतीतेः का गतिरित्यत आह—तदिति । तस्मादुक्तहेतुभिर्भेदस्तद्विशिष्टं वस्तु वा न घटते, तस्मादनिर्वाच्यानाद्यविद्यारूपेण त्वदीहितेन आनिर्वचनीय-

१ अत्रोत्प्रेक्षा । कः स्वतन्त्रमित्यर्थान्तरन्यासश्च ।

१ अत्र सापेक्षो विरोधाभासः । २ अत्र लक्ष्म्यादीनां पादादौ क्रमेण स्थितत्वोत्प्रेक्षणाद् यथासङ्ख्यानुप्राणितोत्प्रेक्षा ।

त्वादिनातिप्रसिद्धेन त्वदीहितेन वा करणेन कर्तृणा वा विजृम्भितः प्रकटीभूतः कृतो वाऽविद्यमानोऽप्यारोप्यत्वेन प्रत्यायितः स स घटादिरूपो भेदो यस्य तादृशमेतद्वस्तुजातमित्येवं तत्त्वस्य प्रामाणिकस्यार्थस्य निरुक्तिर्निर्वचनं निश्चितोक्तिः। अभेददर्शनोक्तयुक्तिशतबाधात्तत्छ्रुतिविरोधाच्च तत्त्वतो वस्तुभेदाभावे प्रतिभासमानस्य च भेदस्य द्विचन्द्रबुद्धिवदप्रामाणिकत्वे सकलमिदं जगदभिन्नमिति श्रवणमननादिक्रमेण संजातभवत्साक्षात्कारस्य सच्चिदानन्दघनस्त्वमेकः, न तु त्वदतिरिक्तं किंचिदिति बोधः समुदेतीति तत्त्वनिर्णय इति भावः। एतेन 'तत्त्वमसि' इत्याद्युपनिषदर्थोऽपि संगृहीत इति ज्ञेयम्। यौक्तीति संबन्धेऽण्। युक्त्यन्तरं ग्रन्थान्तरात्सुधिया बोद्धव्यम्। विस्तरभयादत्र न लिखितम् ॥ १०८ ॥

**वस्तु विश्वमुदरे तव दृष्ट्वा**
**बाह्यवत्किल मृकण्डुतनूजः।**
**स्वं विमिश्रमुभयं न विविञ्चन्**
**निर्ययौ स कतमस्त्वमवैषि ॥ १०९ ॥**

वस्त्विति ॥ किलेत्यागमे हे विष्णो, मृकण्डुतनूजो मार्कण्डेयः बाह्यवत् बाह्ये त्रिजगति यथा वर्तते तथैव तवोदरे वर्तमानं विश्वं त्रैलोक्यसंबन्धि घटपटादि सर्वं वस्तु दृष्ट्वा विशेषेण मिश्रमेकत्रैवोदरे द्वयोरपि स्थितत्वादविविक्तमुभयं पूर्वं बहिरन्तश्च वर्तमानत्वाद्द्विविधं स्वमात्मानं न विविञ्चन् अनिश्चिन्वन्। 'बहिश्चरो योऽहमुदरं प्रविष्टः स कः, यश्च पूर्वमेवोदरे वर्तते स कः' इति भवन्मायोपबृंहितत्वाद्विशेषेणाजानन् स कतमो द्वयोरन्तर्बहिश्चरयोर्मध्ये क इति विवेक्तुमशक्नुवन् निर्ययौ। मायाबालको भवन्निश्वासेन सहोदरं प्रवेश्य तत्र च लोकत्रयं प्रदर्श्य मार्कण्डेयस्तस्य वक्त्राच्छनैर्विनिर्ग--(मि) तः स कतम इति त्वमेवावैषि जानीषे नान्य इत्यर्थः। अयमितिहासो हरिवंशादवसेय इत्यलम्। बालमुकुन्दरूपोऽपि त्वमेवासीति भावः। यद्वा यस्य तवोदरे बाह्यं सर्वं वस्तु दृष्ट्वा मार्कण्डेयो जठरस्थेन स्वेनैव विमिश्रमुभयं स्वमजानन्सन्निर्ययौ स कतमोऽनेकेष्ववतारेषु मध्ये स को वा विशिष्टस्तवावतार इति त्वमेव जानीषे, नान्यः कश्चित्त्वां जानाति स्व-

१ पूर्वोत्तरवाक्यार्थयोर्हेतुहेतुमत्त्वेन काव्यलिङ्गम्।

प्रकाशत्वादित्यर्थं इति व्याख्येयम्। अत्र बहुजातिपरिप्रश्नविषयत्वाद्भुतमर्थं ॥ १०९ ॥

**ब्रह्मणोऽस्तु तव शक्तिलतायां**
**मूर्ध्नि विश्वमथ पत्युरहीनाम्।**
**बालतां कलयतो जठरे वा**
**सर्वथाऽसि जगतामवलम्बः ॥ ११० ॥**

ब्रह्मण इति ॥ भो विष्णो, स्थावरजङ्गमात्मकं विश्वं ब्रह्मणः परमात्मस्वरूपस्य तव शक्तिरूपायां सामर्थ्यरूपायां लतायां सृष्टेः प्राक् अस्तु वर्तताम्। 'सृष्टेः प्रागमूर्ते ब्रह्मणि विश्वं लीयते' इति पुराणोक्तिः। तथा च त्वन्मायालतायां विश्वं वर्तते। अथ सृष्ट्यनन्तरं सृष्टं विश्वं त्वदंशस्य अहीनां पत्युः शेषस्य मूर्ध्नि वर्तताम्। प्रलये च संहारार्थं बालतां मायाशिशुत्वं कलयतोऽङ्गीकुर्वतस्तवैव जठरे चास्तु। समस्तमास्तामित्येव सर्वथा सर्वप्रकारेण त्वं जगतामवलम्बोऽसि। वा समुच्चयार्थः। एतेन सृष्टिस्थितिलयकर्ता त्वमेवेति सूचितम्। 'अस्ति' इत्यपि क्वचित्पाठः ॥ ११० ॥

**धर्मबीजसलिला सरिदङ्घ्रा-**
**वर्थमूलमुरसि स्फुरति श्रीः।**
**कामदैवतमपि प्रसवस्ते**
**ब्रह्म मुक्तिदमसि स्वयमेव ॥ १११ ॥**

धर्मेति ॥ हे विष्णो, धर्मस्य प्रथमपुरुषार्थस्य बीजं प्ररोहकारणं सलिलं यस्याः सा सरिद्गङ्गा तवाङ्घ्रौ चरणे स्फुरति शोभते। तथा--अर्थस्य द्वितीयपुरुषार्थस्य मूलमादिकारणं श्रीस्तवोरसि स्फुरति। तथा—कामरूपं दैवतं कामरूपस्तृतीयपुरुषार्थोऽपि ते प्रसवः कृष्णरूपस्य तव प्रद्युम्नरूपतया पुत्र एव। सोऽपि पुत्रत्वादधीन एवेत्यर्थः। तथा—मुक्तिदं चतुर्थपुरुषार्थभूतमोक्षदानसमर्थं ब्रह्म परमात्मरूपं स्वयमेव स्वरूपेणैव त्वमसि। चतुर्विधपुरुषार्थहेतुतया धर्मार्थकाममोक्षार्थिनां त्वदुपासनैवोचितेति भावः ॥ १११ ॥

१ अत्रोदात्तम्। २ शक्तिलतायामिति रूपकम्, तेन च विश्वस्य फलरूपत्वं व्यज्यते। एवं परत्रापि रूपकम्। शक्तिलतास्थस्य शेषमूर्धस्थस्य च विश्वस्य स्वरूपतो भेदेऽपि अभेदाध्यवसायेनेदं वचनम्। उदात्तं चालङ्कारः। ३ अत्र रूपकम्। मुक्तिदत्वसमर्थनायाङ्घ्र्यादौ गङ्गादेः स्फुरणोक्तिरिति काव्यलिङ्गम्।

इदानीं कतिचिद्भिः श्लोकैर्भगवन्नामसंकीर्तनमाहात्म्यं वर्णयति—

लीलयाऽपि तव नाम जना ये
गृह्णते नरकनाशकरस्य ।
तेभ्य एव नरकैरुचिता भी-
स्ते तु बिभ्यतु कथं नरकेभ्यः॥११२॥

लीलयेति॥ हे विष्णो, ये जना नरकस्य भौमासुरस्य नाशकरस्तस्य, अथ च—पुण्यश्लोकत्वान्निरयनाशकारिणस्तव नाम राम, विष्णो, इत्यादि संज्ञाः सङ्केतपरिहासादिप्रसङ्गान्तररूपया लीलया विलासमात्रेणापि गृह्णते उच्चारयन्ति तेभ्य एव त्वन्नामग्राहिभ्यो नरेभ्य एव सकाशात् पातकियातनास्थानभूतैर्महारौरवादिनरकैर्भीस्तत्कर्तृका तदधिकरणिका वा भीतिरुचिता योग्या। तेभ्य एव तैर्भयं प्राप्तुमुचितमित्यर्थः।ते तु नरकनाशकारिभवन्नामग्राहिणः क्षीणपापा नराः पुनः कथं नाम बिभ्यतु भयं प्राप्नुवन्तु, अपि तु न कथंचित्। तदुक्तं श्रीभागवते—'साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा। वैकुण्ठनामग्रहणमशेषाघहरं विदुः॥' इति। लीलयाऽपीत्यपिशब्देन ये तु बुद्धिपूर्वमेव भवन्नामजपमेव कुर्वन्ति तेभ्यो नरका बिभ्यतीति किमु वक्तव्यमिति सूचितम्। नरकैर्भीरिति 'कर्तृकर्मणोः कृति २।३।६५' इति षष्ठीप्राप्तावपि संपदादित्वात्क्विपः ह्यधिकारविहितत्वात्स्त्रीप्रत्ययत्वे 'शेषे स्त्रीप्रत्यये वा' इति वार्तिकात्पक्षे 'कर्तृकरणयोः कृति २।३।६५' इति तृतीया॥ ११२॥

मृत्युहेतुषु न वज्रनिपाताद्
भीतिमर्हति जनस्त्वयि भक्तः।
यत्तदोच्चरति वैष्णवकण्ठा-
न्निष्प्रयत्नमपि नाम तव द्राक्॥११३॥

मृत्युहेतुष्विति॥ हे विष्णो, त्वयि विषये भक्तो जनः अनेकेषु मृत्युहेतुषु मध्ये वज्रनिपातरूपान्मृत्युकारणात्सकाशाद्भीतिं नार्हति भयं प्राप्तुं योग्यो न भवति। यद्यस्मात्कारणात्तदा वज्रपातसमये तस्य वैष्णवस्य कण्ठान्निष्प्रयत्नं निरन्तरहरिस्मरणाभ्यासबलेन तस्मिन्काले विशिष्टमुद्यमं विनापि तव श्रीरामकृष्णादिनाम द्राक् शीघ्रमुच्चरति निर्गच्छति। वज्रनिपातान्मरणे संजातेऽपि तस्मिन्समये उक्तरीत्या नामोच्चारणसद्भावात्तावन्मात्रेण मोक्षप्राप्तेः पुनर्जन्माभावान्मृत्योर्भयं वैष्णवस्य नास्तीति भावः। मृत्युहेतुषु मध्येऽन्यापेक्षया दारुणान्मृत्युहेतोर्वज्रनिपातादपि सकाशाद्वैष्णवो भयं नार्हतीति किं वाच्यमित्यर्थः। तस्मान्मृत्युसमये वैष्णवकण्ठान्निष्प्रयत्नमपि तव नाम द्राङ्निर्गच्छति। व्याघ्राद्यनेकमृत्युहेतुषु हरिस्मरणादेव मृत्युभयं नास्तीति ज्ञातव्यम्। उच्चरति, सकर्मकत्वाभावात् 'उदश्चरः सकर्मकात् ५।३।५३' इति न तङ्॥ ११३॥

सर्वथाऽपि शुचिनि क्रियमाणे
मन्दिरोदर इवावकरा ये।
उद्भवन्ति भविनां हृदि तेषां
शोधनी भवदनुस्मृतिधारा॥ ११४॥

अथ स्मरणमाहात्म्यमाह—

सर्वथेति॥ हे विष्णो, सर्वथा मनोवाक्कायनियमनाद्यनेकप्रकारैर्निर्धूतपापतया शुचिनि शुद्धे ब्रह्मार्पितफलत्वेन बन्धककर्मरहिते वा क्रियमाणेऽपि भविनां संसारिणां हृदि मनसि येऽज्ञानप्रमादकृता अवकरा रागादिदोषा उद्भवन्ति तेषां दोषाणां भवतोऽनुस्मृतिर्ध्यानं तस्या धारा परम्परा शोधनी प्रक्षालनहेतुः, नान्यः कश्चित्। कस्मिन्निव—मन्दिरोदरे गृहमध्य इव। यथा पुनःपुनर्मार्जनेन विरजस्त्वे क्रियमाणे गृहमध्ये ये तृणरजःपुञ्जा नवा नवा उद्भवन्ति तेषां शोधनी संमार्जनी भवति तथेत्यर्थः। भवदनुस्मृतिरेव चित्तशुद्धिसंपादनद्वारा नैष्कर्म्यसंपादनेन मोक्षहेतुरिति भावः। 'भुवि' इति पाठे—चेतस्येव भुवि स्थाने इत्यर्थः। 'सम्मार्जनी शोधनी स्यात्संकरोऽवकरस्तथा। क्षिप्ते'इत्यमरः॥११४॥

अस्मदाद्यविषयेऽपि विशेषे
रामनाम तव धाम गुणानाम्।
अन्वबन्धि भवतैव तु कस्मा-
दन्यथा ननु जनुस्त्रितयेऽपि॥ ११५॥

पुनरपि नामान्तरापेक्षया रामनाम्नो माहात्म्यमाह—

अस्मादिति॥ अत्रैते गुणाः सन्तीति विशेषाकारेण विशेषेऽस्मदादीनामज्ञानामविषये बुद्ध्यगोचरे सत्यपि

१ अत्र परिकरः, काव्यलिङ्गं च।

१ अत्र त्वेतिदं समस्तश्लेषैकभञ्जमपरतया परिणतं निवारितभीतितां सूचयति। २ अत्रोपमा, भवदनुस्मृतिधारायाः शोधनीत्वेन रूपणाद्रूपकम्।

तव सहस्रनामसु मध्ये रामेतिनाम गुणानां धाम स्थानम् । यद्वा—हे राम, तव नाम गुणानां स्थानम् । अज्ञातेऽपि विशेषे कुत एतन्निर्णीतमित्याशङ्क्यार्थापत्तिं प्रमाणयति—अन्यथा तु पुनर्यद्येवं न स्यात्तर्हि ननु अनुत्रितयेऽपि जामदग्न्य-दाशरथि-बलभद्ररूपजन्मत्रयेऽपि भवतैव कस्माद्धेतोराग्रहेण पौनःपुन्येन रामेत्येव नाम अन्वबन्धि अङ्गीकृतम् । अनेकजन्मस्वेतस्य त्वयैव स्वीकारात्तवाप्येतत्प्रियतममिति ज्ञायते । तस्माद्रामनाम गुणगणस्थानमित्यर्थापत्तिः । तथा च शिवेनापि 'राम रामेति रामेति–'इत्यादि पार्वतीं प्रत्युक्तम् ॥ ११५ ॥

भक्तिभाजमनुगृह्य दृशा मां
भास्करेण कुरु वीततमस्कम् ।
अर्पितेन मम नाथ न तापं
लोचनेन विधुना विधुनासि ॥ ११६ ॥

भक्तीति ॥ हे नाथ, त्वं भास्करेण सूर्यरूपया दक्षिणदृशा त्वयि भक्तिभाजं मामनुगृह्य मयि प्रसाददृष्टिपातं कृत्वा वीततमस्कं गताज्ञानं कुरु । प्रसाददृष्टिपातान्मम सकलामप्यविद्यां विनाशयेत्यर्थः । सूर्येण च तिमिरं निरस्यते तथा मयि अर्पितेन प्रसादनिहितेन विधुना चन्द्ररूपेण वामलोचनेन कृत्वा मम त्रिविधमपि तापं न विधुनासि न दूरीकरोषि, अपि तु निराकुर्विति काकुः। चन्द्रेण च शीतत्वात्तापशान्तिः क्रियते । एवं स्तुवन्तं मां प्रसाददृष्ट्या विलोक्य कृतार्थीकुर्विति भावः ॥११६॥

लङ्घयन्नहरहर्भवदाज्ञा-
मस्मि हा विधिनिषेधमयीं यः ।
दुर्लभं स तपसाऽपि गिरैव
त्वत्प्रसादमहमिच्छुरलज्जः ॥११७॥

लङ्घयन्निति ॥ हे स्वामिन्, योऽहं 'सन्ध्यावन्दनादि कुर्यात्' इति विधिः, 'ब्रह्महननादि न कुर्यात्, इति निषेधः, तन्मयीं तद्रूपां भवदाज्ञां 'श्रुतिस्मृती ममैवाज्ञे' इति वचनाच्छ्रुतिस्मृतिरूपामहरहः प्रतिदिनं लङ्घयन्नतिक्रामन् यत् कर्तव्यतया त्वयोपदिष्टं तन्न करोमि, यच्च न कर्तव्यमित्युपदिष्टं तत्करोम्येवेति त्वदाज्ञां लङ्घयन्सन् अस्मि वर्ते । हा कष्टमनुचितकारी । सोऽहं महीयसाऽपि तपसा दुर्लभं त्वत्प्रसादमिच्छुः'प्रसीद' इति गिरैव प्रार्थयमानः सन्नलज्जो निर्लज्जोऽस्मि । यो हि एकदाऽपि प्रभोराज्ञां करोति सोऽपि कथंचित्स्वामिप्रसादं लभते । यस्तु कदाऽपि स्वाम्याज्ञां न करोति स दण्ड्योऽपि वाङ्मात्रेण प्रसादमिच्छन्निर्लज्ज एव प्रसीदेति भावः । त्वत्प्रसादमिति 'न लोकाव्ययनिष्ठाखलर्थतृनाम् । २।३।६८' इति षष्ठीनिषेधः ॥ ११७ ॥

विश्वरूप कृतविश्व कियत्ते
वैभवाद्भुतमणौ हृदि कुर्वे ।
हेम नह्यति कियन्निजचीरे
काञ्चनाद्रिमधिगत्य दरिद्रः ॥ ११८ ॥

विश्वेति ॥ हे विश्वरूप स्थावरजङ्गमात्मक, तथा–कृतविश्व स्थावरजङ्गमकारिन् विष्णो,अहं ते तव वैभवाद्भुतं सामर्थ्यातिशयजन्यं तद्रूपं वाऽऽश्चर्यमणौ परमाणुरूपे हृदि मनसि कियत् किंपरिमाणं कुर्वे । अपि तु–आधारस्याल्पीयस्त्वात्, आधेयस्य च महीयस्त्वात्त्वद्वैभवाद्भुतमणौ हृदि धारयितुं न शक्नोमीत्यर्थः। यद्यपि ते सामर्थ्यं महत्, तथाऽपि कियदल्पमेव धारयामीति वा । युक्तमेतत् । यस्माद्दरिद्रोऽकिंचनो जनः काञ्चनाद्रिं सुमेरुमधिगत्य प्राप्य स्फुरदुरुसुवर्णग्रहणाभिलाषोऽपि सन् शतधा शकलीभूतेऽत्यन्तजीर्णे निजचीरे स्वीये वस्त्रे कियत्किंपरिमाणं हेम नह्यति बध्नाति, अपि त्वल्पमेव ग्रन्थौ बध्नात्यसामर्थ्यात्, तथा सकलगुणवर्णनाभिलाषे सत्यपि सामर्थ्याभावात्कियन्मात्रगुणवर्णना कृतेति भावः। इति स्तुत्युपसंहारः ॥ ११८ ॥

इत्युदीर्य स हरिं प्रति संप्र-
ज्ञातवासिततमः समपादि ।
भावनाबलविलोकितविष्णौ
प्रीतिभक्तिसदृशानि चरिष्णुः ॥११९॥

इतीति ॥ स नलः हरिं प्रति इत्युक्तप्रकारेणोदीर्य प्रसादं संप्रार्थ्य द्विविधसमाधिमध्ये सम्प्रज्ञाताख्येन समाधिना तत्र वासिततमः अतितरां सम्भावितमनास्तदेकतानः समपादि जातः। अत एव भावनाबलेन सम्प्रज्ञातध्यानबलेन विलोकिते साक्षात्कृते विष्णौ विषये प्रीतेः सहजप्रेम्णः भक्तेश्च सदृशानि योग्यानि कर्माणि आनन्दबाष्पगीतनृत्यादीनि चरितुं कर्तुं शीलमस्य सः । तदुक्तं

१ अत्र काव्यलिङ्गम् । २ अत्रानुप्रासः,विधुनेति यमकं च भास्करेण लोचनेनेति विधुना लोचनेनेति च रूपकम्।

१ अत्र स्वस्यालज्जत्वसमर्थनाय यथोक्तमिति काव्यलिङ्गम्। २ अत्रापि काव्यलिङ्गम् ।

श्रीभागवते–'श्रृण्वन्सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके। गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः ॥' इति। एवं संप्रार्थ्य प्रतिमादिसाकारध्यानेन विष्णुं साक्षादकृतेति भावः। 'विष्णुः' इति पाठे—भावनाबलेन विलोकितो विष्णुर्येन सः। अत एव—प्रीतिभक्तिसहयानि चरिष्णुः। ऐकपद्यम्। विष्णुप्रीत्यर्थं भक्तियोग्यान्युपहारादीनि। ध्यानसमाधिर्द्विविधः—सम्प्रज्ञातोऽसम्प्रज्ञातश्च। तत्र ध्येयध्यातृभावयुक्तः साकारध्यानसमाधिः संप्रज्ञातः, संवित्संवेद्यविलोपेन निराकारस्वप्रकाशपरमानन्दलक्षणात्साम्राज्यध्यानसमाधिरसंप्रज्ञात इति योगशास्त्रम्॥ ११९॥

विप्रपाणिषु भृशं वसुवर्षी
पात्रसात्कृतपितृक्रतुकव्यः।
श्रेयसा हरिहरं परिपूज्य
प्रह्व एष शरणं प्रविवेश ॥ १२०॥

विप्रेति॥ एष नलः प्रह्वः सन् शरणं भोजनगृहं प्रविवेश। नम्रत्वं गृहप्रवेशिनो जातिः। किंभूतः—विप्रपाणिषु भृशं नित्यदानसंबन्धि वसु गोभूहिरण्यादि वर्षत्येवंशीलः, तथा—पात्रसात्कृतं विद्यातपोवृत्तयुक्तपात्रभूतब्राह्मणाधीनं देयं कृतं पितृक्रतुकव्यं नित्यश्राद्धपितृयज्ञसंबन्धि कव्यं येन। तथा—श्रेयसा स्नानदेवपूजादिनित्यदाननित्यश्राद्धान्तकर्मानुष्ठानजन्येन पुण्येन पुष्पादिना च हरिहरमभेदबुद्ध्या विष्णुशिवरूपं नारायणं परिपूज्य तस्मिंस्तदर्पणेन तं परितोष्य भक्तिनम्रः सन्नमस्कारं कृत्वा नित्यश्राद्धान्तं ब्रह्मार्पणं कृत्वा भोजनार्थं गृहं प्राविशदिति भावः। 'हव्यकव्ये दैवपित्र्ये' इत्यमरः। पात्रसात्, 'देये त्रा च ५।४।५५' इति सातिः॥१२०॥

माध्यन्दिनादनु विधेर्वसुधासुधांशु-
रास्वादितामृतमयौदनमोदमानः।
प्राञ्चं स चित्रमविदूरितवैजयन्तं
वेश्माचलं निजरुचीभिरलंचकार १२१

माध्यन्दिनादिति॥ स वसुधासुधांशुर्भूचन्द्रो नलो माध्यंदिनान्मध्यंदिने विधेयाद्विधेरनु पश्चात्पञ्चमहायज्ञनिर्वपणानन्तरमास्वादितोऽमृतमयः शाकसूपादिव्यञ्जनादिनामृतरूप ओदनः, तेन शालितण्डुलप्रभवेणौदनेन कृत्वा मोदमानः आस्वादितोऽमृतमय ओदनो येन अत एव मोदमानो हृष्यत्तमः। एवंभूतः सन् प्राञ्चं यत्र भैम्या सह परिहासविलासं कृतवांस्तं पूर्वम्। अथ च—वास्तुशास्त्रे–'शयनस्थानं प्राच्यां कर्तव्यम्' इत्युक्तत्वान्मुख्यराजप्रासादात्पूर्वदिक्स्थम्, चित्रं चित्रलेख्ययुक्तमद्भुततरूपं वा। तथा अत्युच्चत्वाच्छोभासाम्याच्चाविदूरीकृतो निकटीकृतो महेन्द्रप्रासादो येन वैजयन्ततुल्यं वेश्माचलं प्रासादरूपं पर्वतं निजरुचीभिः स्वीयकायकान्तिभिरलंचकार। भोजनं कृत्वा तं प्रासादमारूढवानित्यर्थः। चन्द्रोऽपि उदयन्नास्वादितामृतरूपेणौदनेन मोदमानः सुधापूर्णोऽद्भुतरूपं प्राच्यां वर्तमानस्त्वादुच्चत्वाच्च संनिहितवैजयन्तं प्राच्यां वर्तमानमुदयाचलं निजकिरणैरलंकरोति। अथ च—चित्रमिति विरोधादाश्चर्यम्। चन्द्रो हि मध्यंदिने वर्तमानं मध्यंदिनसमयानन्तरमस्ताचलमेव रुचिभिरलंकरोति, न तु प्राच्यमचलम्। अयं तु चन्द्रोऽपि मध्याह्नानन्तरमपि प्राञ्चमचलमलंचकारेत्याश्चर्यमित्यर्थः। 'विवस्वान्–' इति पाठे—पूर्ववदन्यत्। आस्वादितं सर्वेभ्यो गृहीतं यदमृतं जलं तद्रूपेणौदनेन मोदमानः सूर्योऽप्येवंभूतमुदयाचलं निजदीप्तिभिरलंकरोति। अथ च—सूर्योऽपि मध्याह्नानन्तरमस्ताचलमेवालंकरोति, नतु प्राञ्चमचलम्। अयं तु सूर्यः प्राञ्चमचलमलंकृतवानिति चित्रमित्यर्थः। प्राञ्चम्, 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३।२।५९' इति क्विनि 'उगिदचां सर्वनामस्थाने धातोः ७।१।७०' इति नुमि रुत्वम्॥१२१॥

भीमात्मजाऽपि कृतदैवतभक्तिपूजा
पत्यौ च भुक्तवति भुक्तवती ततोऽनु।
तस्याङ्कमङ्कुरिततत्पारिरिप्सम्ध्य-
मध्यास्त भूषणभरातिभरालसाङ्गी॥

भीमेति॥ ततोऽनु नलप्रासादारोहणानन्तरं भीमात्मजापि तस्याङ्कमध्यास्त। कीदृशी—कृता गौर्यादिदेवतानां भक्त्या षोडशोपचारपूजा यया। तथा—पत्यौ च भुक्तवति सति स्वयमपि भुक्तवती। अनन्तरं च भूषणभरेण अलंकारबाहुल्येन योऽतिभरो गौरवं तेनालसमङ्गं यस्याः सा। भूषणबाहुल्येनातिभरं यथा तथा वा

१ अत्रानुप्रासः परिकरश्च। २ अत्रानुप्रासः।

१ अनुस्वारदृष्ट्याऽरुत्वमसिद्धमिति व्याख्याकृतामिदमभिधानं चिन्त्यम्। इतः प्रभृति एकाधिकविंशसङ्ख्याकेषु पद्येषु वसन्ततिलकाच्छन्दः। अत्रानुप्रासः। सुधांशुर्नल इति रूपकं, तत्साङ्गत्वसमर्थनाय विशेषणादि।

भूषणभरमपि वोढुमसमर्थाऽतिमृद्वी तद्वशान्मन्दगतिर्वा । कीदृशमङ्कम्—अङ्कुरिता समुदिता तत्परिरिप्सा भैम्यालिङ्गनवाञ्छा यस्य तादृशो मध्यदेशो यस्य । उक्तविशेषणविशिष्टा सती नलाज्ञया तदङ्के समुपाविशदिति भावः। अपिर्नलदेवपूजापेक्षया समुच्चयार्थः । पत्यौ भुक्तवतीति पतिव्रताजातिः । 'परिरिप्सुमध्यम्' इति पाठे भैमीस्पर्शसंजातसात्त्विकरोमाञ्चं तदालिङ्गनेच्छु मध्यं यस्य । 'भरातिभरा' इत्येव पाठः साधीयान् । पाठान्तरं चिन्त्यम् । अङ्कम्, 'अधिशीङ्स्थासां कर्म १।४।४६' इति कर्मत्वम् ॥ १२२ ॥

**तामन्वगादशितबिम्बविपाकचञ्चोः**
**स्पष्टं शलाटुपरिणत्युचितच्छदस्य ।**
**कीरस्य कापि करवारिरुहे वहन्ती**
**सौन्दर्यपुञ्जमिव पञ्जरमेकमाली १२३**

तामिति॥काप्यनिर्दिष्टनामातिसुन्दरी आली सखी तां भैमीमनु लक्ष्यीकृत्य पश्चादगात् जगाम । कीदृशी—कीरस्य शुकस्यैकं पञ्जरं करवारिरुहे पाणिपद्मे वहन्ती । उत्प्रेक्षते—शुकस्यात्मनो वा सुवर्णादिघटितत्वात्पञ्जरस्यैव वा मूर्तं सौन्दर्यपुञ्जमिव पृथक्करे पञ्जररूपेण वहन्तीति संबन्धः । किंभूतस्य कीरस्य—अशितस्य भक्षितस्य पक्वस्य बिम्बस्य बिम्बीफलस्य विपाकः परिणामस्तद्रूपा चञ्चुर्यस्य । अतिप्रियभुक्तपक्वबिम्बफलमेव यदीयचञ्च्वाकारेण परिणतमिति यावत् । तादृशस्यातिरक्तचञ्चोः । तथा स्पष्टं सर्वथापि शलाटुरपक्वं यत्किंचित्फलं भुक्तं बिम्बीफलमेव वा, तस्य परिणतिरतिनीलता तस्या उचितास्तद्योग्या अतिनीलाश्छदाः पक्षा यस्य । अपक्वानि श्यामानि भक्षितानि फलान्तराणि बिम्बीफलान्येव वा यदीयच्छदाकारेण परिणतानीति यावत् । तादृशस्यातिहरितपक्षस्य कीरस्य रक्तचञ्चुत्वं जातिः । पाठितशुकादिपञ्जरादिधारिण्याः सख्या अपि नायिकानुगमनं जातिः । भोजनानन्तरं पाठितशुकसारिकादि शब्दानां गीतस्य च श्रवणेन नृत्तादिवीक्षणेन च क्रीडनं राज्ञामपि जातिः। 'आमे फले शलाटुः स्यात्' इत्यमरः ॥१२३॥

**कूजायुजा बहुलपक्षशितिम्नि सीम्ना**
**स्पष्टं कुहूपदपदार्थमिथोऽन्वयेन ।**

१ अत्रानुप्रासः, स्वभावोक्तिः, परिकरश्च ।२ अत्राप्युनुप्रासः, उत्प्रेक्षा, उपमा च ।

**तिर्यग्धृतस्फटिकदण्डकवर्तिनैका**
**तामन्ववर्तत पिकेन मदाधिकेन॥१२४॥**

कूजेति ॥ एका सखी पिकेन कोकिलेन सहोपलक्षिता वा तां भैमीमन्ववर्तत लक्ष्यीकृत्य जगाम । किंभूतेन पिकेन—कूजया मधुराव्यक्तेन शब्देन सहात्मानं युनक्ति युक्, तेन । कुहूशब्दं कुर्वता । तथा—बहुलो भूयान् यः पक्षाणां शितिमा कृष्णत्वं तस्मिन् सीम्नाऽवधिभूतेन।अत एव विशेषक्रमेण'कुहूः' इति पदस्य शब्दस्य, तथा पदार्थस्य तत्पदवाच्यस्यामावास्यारूपस्य च मिथोऽन्वयोऽन्योन्यसंबन्धो यत्र तादृशेन च स्पष्टमुत्प्रेक्षायाम्।कुहूपदयोगित्वात् कृष्णतमत्वाच्च अमावास्यावाचिनि विषये कुहूपदपदार्थयोस्तादात्म्यरूपेणेति यावत् । अमावास्यापि कृष्णपक्षसंबन्धिनी मर्यादा भवति, अत एव कुहूशब्दवाच्या च । तथा—तिर्यक् तिरश्चीनं यथा तथा करे धृतः स्फटिकदण्डकस्तत्र वर्तिना स्थितेन । तथा—मदाधिकेन मदोन्मत्तेन । दण्डकेति, ह्रस्वे'।५।३।८६।इति कन्। ह्रस्वे दण्डे इत्यर्थः॥१२४॥

**शिष्याः कलाविधिषु भीमभुवो वयस्या**
**वीणामृदुक्वणनकर्मणि याः प्रवीणाः ।**
**आसीनमेनमुपवीणयितुं ययुस्ता**
**गन्धर्वराजतनुजा मनुजाधिराजम्॥१२५॥**

शिष्या इति ॥ या भीमभुवो भैम्या वयस्याः सख्यः कलाविधिषु चतुःषष्टिकलाकर्मसु विषये भैम्या एव शिष्याः, तथा—वीणायाः मृदुक्वणनकर्मणि मधुरशब्दरूपे व्यापारे प्रवीणास्ताः गन्धर्वराजो विश्वावसुस्तस्य तनुजाः कन्यास्तत्तुल्या वा प्रासादे आसीनमेनं मनुजाधिराजमुपवीणयितुं वीणयोपगातुं ययुः प्रापुः । उपवीणयितुं पूर्ववत् ॥ १२५ ॥

**तासामभासत कुरङ्गदृशां विपञ्ची**
**किंचित्पुरः कलितनिष्कलकाकलीका ।**
**भैमीतथामधुरकण्ठलतोपकण्ठे**
**शब्दायितुं प्रथममप्रतिभावतीव ॥ १२६ ॥**

तासामिति ॥ तासां कुरङ्गदृशां विश्वावसुकन्यानां विपञ्ची वीणा अभासत शुशुभे । किंभूता—किंचित् पुरः ईषत्पूर्वं प्रारम्भसमये कलिताऽङ्गीकृता निष्कला

१ अत्र सीम्नेति रूपकम् ।स्पष्टमित्युत्प्रेक्षा।२अत्रानुप्रासः।

गम्भीरमन्दस्वरश्रुतिवर्णविशेषाभिव्यक्तिरहिता काकली सूक्ष्ममधुराव्यक्तरागविशेषो यया । अत एव-उत्प्रेक्षते-भैम्यास्तथानिर्वचनीयमधुरस्वरयुक्तायाः कण्ठलताया उपकण्ठे निकटे शब्दायितुं तस्याः पुरस्ताच्छन्दमपि कर्तुं प्रथमं प्रारम्भेऽप्रतिभावतीव प्रतिभारहितेवाधृष्टेव । अन्योऽप्यधिकविद्यस्य पुरस्ताच्छब्दायितुं गातुं वाऽधृष्टः सन् प्रथमं मन्दमेव भाषते गायति चेति । संगीतविद्याविदामियं जातिः । प्रथमं गायनाः गानप्रारम्भे काकलीमारचयन्ति । काकल्यादि संगीतशास्त्रादवगन्तव्यम् । काकलीकेति 'नद्यृतश्च । ५ । ४ । १५३ । इति कप् । शब्दायितुं, 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ।३।१। १७।' इति क्यङ् ॥ १२६ ॥

सा यद्धृताखिलकलागुणभूमभूमी-
भैमीतुलाधिगतये स्वरसंगताऽऽसीत् ।
तं प्रागसावविनयं परिवादमेत्य
लोकेऽधुनाऽपि विदिता परिवादिनीति॥

सेति ॥ सा विपञ्ची धृतानामखिलानां गीतनृत्तादिचतुःषष्टिकलानां सौन्दर्यादिगुणानां च भूम्नो बाहुल्यस्य भूमी स्थानभूता भैमी तस्यास्तुलाधिगतये साम्यप्राप्तये स्वयमपि पूर्वोक्तप्रकारेण तादृशी सती भैमीस्वरतुल्यत्वप्राप्तये यत् स्वरैः षड्जादिभिः संगता संबद्धा आसीत् । अथ च—भैम्या सार्धं साम्यप्राप्तये स्वरसं स्वाच्छन्द्याभिलापं गताभूत् । असौ विपञ्ची तं भैमीसाम्यस्वाच्छन्द्याभिलापलक्षणमविनयमत्युत्तमावमाननामेव परिवादं स्फुटं दोषं प्राक् पूर्वमेत्य प्राप्य, अथ च परिवादं वीणावादनसाधनं तद्रूपमविनयं प्राप्य अधुनापि अद्ययावदपि लोके परिवादिनीति विदिता ख्याता । परिवादयोगात्परिवादिनीत्यद्यापि गीयत इत्यर्थः । अथ च—वीणावादनसाधनयुक्ता । यद्वा—सप्ततन्त्रीयुक्ता वीणा परिवादिनी । 'भीतो भयानि पश्यति' इति न्यायेन पूर्वमपि लोके दुष्टतां प्राप्ता पुनरपि चोत्तमस्य पुरस्तात्प्रागल्भ्ये दोषान्तरं शङ्कमानेवाप्रतिभावतीति प्राचीनश्लोकार्थहेतुतया योज्यम् । 'परिवादः कलङ्के स्याद्वीणावादनवस्तुनि' इति विश्वः ॥ १२७ ॥

नादं निषादमधुरं ततमुज्जगार
साभ्यासभागवनिभृत्कुलकुञ्जरस्य ।
स्तम्बेरमीव कृतसश्रुतिमूर्धकम्पा
वीणा विचित्रकरचापलमाभजन्ती१२८

नादमिति ॥ अवनिभृतां राज्ञां कुलं वंशस्तत्र कुञ्जरः श्रेष्ठस्तस्य नलस्याभ्यासभाक् समीपवर्तिनी सा तन्त्री वीणावाद्यरूपा निषादस्वरेण मधुरं श्रव्यं ततमत्युच्चं नादमुज्जगारोद्गीर्णवती । किंभूता—कृतः सश्रुतीनां द्वाविंशतिश्रुतियुतानां षड्जादीनां मूर्धनि नादप्रान्ते कम्पः कम्पितस्वरो यया कृतः सह श्रुतिभिर्यथातथा मूर्धनि वीणाया एवोपरितनभागे कम्पितस्वरो यया । वीणोर्ध्वं समग्राङ्गुलीसंयोगाद्धि निषादस्वरो जायते तादृशी वा । कृतः सश्रुतीनां द्वाविंशतिविदां संगीतशास्त्रविदां मूर्धकम्पो यया वा । तथा—विचित्रं करचापलं नानारूपमारोहावरोहादिक्रमेणाङ्गुलीप्रान्तस्पर्शवशेन वादकपाणिचाञ्चल्यं तत्क्षणमेवानेकस्थानावस्थानलक्षणामासामस्त्येन भजन्ती निषादप्रधानं ललितादिमङ्गलगीतं प्रकटीचकारेत्यर्थः । केव—स्तम्बेरमी हस्तिनीव । सापि अवनिभृत् पर्वतः कुलं वंशः उत्पत्तिस्थानं यस्य तादृशस्य पर्वतभवस्य हस्तिश्रेष्ठस्य राजसंबन्धिनो वा हस्तिनः समीपवर्तिनी सकामा । तथा—जातिस्वभावात्कृतसकर्णशिरःकम्पा कृतसशब्दशिरःकम्पा वा । तथा नानाप्रकारं शुण्डादण्डताण्डवं भजमाना सती ततमत्युच्चं 'निषादं च गजो ब्रूते' इति शास्त्रप्रामाण्यान्निषादस्वरेण मञ्जुलं नादमुद्गिरन्ती । 'चापलमाभवन्ती' इत्यपि पाठः । स्तम्बेरमी'स्तम्बकर्णयो रमिजपोः३।२।१३'इत्यचि 'हलदन्तात् सप्तम्याः सञ्ज्ञायाम् ।६।३।९' इत्यलुकि जातिवाचित्वान्ङीप् ॥ १२८ ॥

आकृष्य सारमखिलं किमु वल्लकीनां
तस्या मृदुस्वरमसर्जि न कण्ठनालम् ।
तेनान्तरं तरलभावमवाप्य वीणा
क्षीणा न कोणममुचत्किमु वा(ऽ)लयेषु१२९

आकृष्येति ॥ ब्रह्मणा वल्लकीनां वीणानामखिलमान्तरं सारं श्रेष्ठं भागमाकृष्य तस्या भैम्याः कण्ठनालं ग्रीवादण्डः किमु नासर्जि सृष्टम्? अपि तु तमेव सारमा-

---

१ अत्रानुप्रासः इवेत्युत्प्रेक्षा च । २ अत्रानुप्रासः । मुद्राऽलङ्कारः । परिवादिनीति सञ्ज्ञासमर्थनाय तथावचनमिति पदार्थहेतुकं काव्यलिङ्गम् ।

१ अत्राप्यनुप्रासः, उत्प्रेक्षा, स्वभावोक्तिश्च ।

हृत्य तदीयं कण्ठनालं सृष्टम् । यतो मृदुस्वरसकलवीणासारनिर्मितत्वादेव भैमीकण्ठस्य मधुरतमत्वं जातमित्यर्थः। यस्मादेवं तेनैव हेतुना हृतसारतयैवान्तरं वीणादण्डमध्यगतं तरलभावं लक्षणया मन्दशब्दत्वमवाप्य ह्रीणा किमु लज्जितेव वीणालयेषु स्वरविश्रान्तिरूपासु मूर्च्छनासु विषये कोणं वा लीलाधनुःसदृशाकारं वीणावादनसाधनं नामुचत् । गृहीतसारोऽन्योऽपि निःसारतयैवागम्भीरान्तःकरणतां प्राप्य ह्रीणः सन्नालयेषु गृहेषु कोणं कुड्यभागद्वयसंयोगस्थानं न मुञ्चति पुष्कलच्छिद्रस्य वीणादण्डस्य स्वरोऽतिगम्भीरः प्रशस्ततरो भवति । मधुरतरं वीणा क्वणाति स्मेति भावः। वीणास्वरापेक्षया भैमीस्वरस्याधिक्यमेतेन सूचितम् । वीणादण्डस्य सच्छिद्रत्वेन निःसारत्वोत्प्रेक्षा । 'वीणादिवादने कोणोऽप्येकदेशे गृहस्य च' इति विश्वः ॥ १२९ ॥

तद्दम्पतिश्रुतिमधून्यथ चाटुगाथा
वीणास्तथा जगुरतिस्फुटवर्णबन्धम् ।
इत्थं यथा वसुमतीरतिगृह्यकस्ताः
कीरः किरन्मुदमुदीरयति स्म विश्वाः १३०

तदिति ॥ अथ काकल्युद्गिरणानन्तरं गन्धर्वराजकन्यानां वीणाः तयोर्दम्पत्योः श्रुतीनां कर्णानां मधूनि अमृततुल्या भैमीनलप्रियस्तुतिकारिणीश्चाटुगाथाः श्लोकान् तथा तेन प्रकारेणातिस्फुटो वर्णबन्धस्तन्त्रीनिबद्धाक्षरविन्यासो यस्मिंस्तद्यथा तथा जगुः । यथा येन प्रकारेण वसुमत्यां भूमौ रतिरूपाया भैम्या गृह्यकः पञ्जरेऽवरुद्धः शुकः मुदं किरन् श्रोतॄणां हर्षमुत्पादयन् विश्वाः सर्वास्तत्तद्वर्णमात्रादिसहितास्तास्ता गाथा इत्थं वक्ष्यमाणरीत्या उदीरयति स्म । तिर्यग्योनिः शुकोऽपि यथा श्रवणमात्रेण सर्वा अपि गाथा अनुवदितुं शक्नोति तथा तन्त्रीषु स्फुटतराक्षरबन्धान्भैमीनलस्तावकश्लोकान् वीणाः स्फुटं गायन्ति स्मेति भावः । एतेन गन्धर्वराजकन्यानां वीणाप्रावीण्यम्, शुकस्यापि प्रज्ञातिशयश्च सूच्यते । 'गृह्यासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इत्यमरः ॥ १३० ॥

अस्माकमुक्तिभिरवैष्यथ एव बुद्धे-
र्गाधं युवामतिमती स्तुमहे तथाऽपि ।
ज्ञानं हि वागवसरावचनाद्भवद्भ्या-
मेतावदप्यनवधारितमेव न स्यात् ॥१३१॥

'इत्थम्' इति यदुक्तं तदेवाह—

अस्माकमिति ॥ यद्यपि अतिशयिता मतिर्ययोस्तौ युवामस्माकमुक्तिभिर्गाथारूपाभिरेवास्मद्वाग्रचनाभिरस्माकं बुद्धेर्गाधमुत्तानार्थं त्वमवैष्यथ एव ज्ञास्यथ एव तथापि वयं युवां स्तुमहे स्तुम एव । हि यस्माद्भवद्भ्यां वागवसरे स्तावकादिवचनावसरे सत्यपि अवचनादभाषणाद्धेतोरेतावदत्युन्नतार्थमत्यल्पमप्यस्मदीयं ज्ञानमनवधारितमेव न स्यात्, अज्ञातमेव न स्यात् तन्मास्तु इत्यर्थः । तस्मात्स्तुमह एव । वर्णनायां क्रियमाणायामयमल्पज्ञानो बहुज्ञान इति वा ज्ञातुरग्रे प्रसिद्धो भवति । तस्माद्वर्णयाम इति भावः । इत्येवंवीणानिबद्धगन्धर्वपुत्रीवचनं शुकोऽन्ववददित्यर्थः । एवमुत्तरत्रापि ज्ञेयम् । एतेन गन्धर्वपुत्रीभिः स्वमौद्धत्यं परिहृतम् ॥ १३१ ॥

भूभृद्भवाङ्कभुवि राजशिखामणेः सा
त्वं चास्यभोगसुभगस्य समः क्रमोऽयम् ।
यन्नाकपालकलनाकलितस्य भर्तु-
रत्रापि जन्मनि सती भवती स भेदः१३२

भूभृदिति ॥ सा भूभृद्भवा हिमाचलसुता पार्वती भोगैर्वासुक्यादिसर्पशरीरैः सुभगस्य भूषितस्य राजा चन्द्रः शिखामणिर्यस्य चन्द्रमौलेरङ्कभुवि उत्सङ्गदेशे, वर्तत इति शेषः, प्रियतमत्वात् । त्वं च त्वमपि भीमपुत्री चन्दनादिभोगैर्मनोहरस्य राज्ञां शिखामणेः मुकुटमणेः श्रेष्ठतमस्यास्य नलस्योत्सङ्गदेशेवर्तस इत्ययं क्रमः समः परिपाटी उचिता। पार्वत्या महेशस्य च, तव नलस्य च, राजकन्याया राजश्रेष्ठस्यन्योन्यसंबन्धः समुचित एवेत्यर्थः । अथच—समस्तुल्यः । यथा तयोः संबन्धस्तथा युवयोरपीत्यर्थः । अथच—अयं शब्दश्लेषरूपः सम्बन्धस्तुल्यः । एवं यद्यपि क्रमः समः, तथापि स पुनर्भेदो विसदृशत्वम्, यत् नाकपालस्येन्द्रस्य कलनाऽशत्वेनैकीभवनं तया कलितस्य व्याख्यातस्य राजत्वादिन्द्रांशत्वेन प्रसिद्धस्य भर्तुर्नलस्य संबन्धिनी अत्राप्यस्मिन्नपि जन्मनि भवती सती पतिव्रता । अपिशब्दान्न केवलमत्रैव, किंतु जन्मान्तरेऽपि त्वं सत्येव अन्यथाऽत्रापि सतीत्वानुपपत्तेः, पार्वती तु ब्रह्मकपालस्य कलनया करेण धारणया कलितो विदितो न भवति

१ अत्राप्यनुप्रासः, उत्प्रेक्षा । २ अत्रानुप्रासः, मधुत्वादिना रूपणाद्रूपकं च ।

१ अत्रानुप्रासः, अतिमती इति परिकरश्च ।

अकपालकलनाकलितः तादृशोऽपि न भवति कपालित्वेन ख्यातस्य भर्तुर्महेशस्य संबन्धिनी पूर्वजन्मनि दक्षापत्यत्व एव सती, नतु हिमवदपत्यत्वेऽपीति महद्वैपम्यम्। हरस्य नलस्य चोक्तसकलश्लेषसाम्येऽपि पार्वत्यास्तद च किञ्चिदेव शब्दश्लेषसाम्यं, नतु सर्वमुक्तरीत्या तवाधिकत्वादित्यर्थः। हिमवदपत्यत्वे पार्वत्या असतीत्वोक्तेर्निन्दा नाशङ्कनीया, भैमीस्तुतिपरस्य सतीशब्दस्य पार्वत्या नामपरत्वमात्रव्यावर्तकत्वेनोक्तेर्निन्दापर्यवसानाभावात्॥

**एषा रतिः स्फुरति चेतसि कस्य यस्याः**
**सूते रतिं द्युतिरिय त्वयि वा तनोति।**
**त्रैयक्षवीक्षणखिलीकृतनिर्जरत्व-**
**सिद्धायुरध्वमकरध्वजसंशयं कः॥१३३॥**

एषेति॥एषा भैमी कस्य वा चेतसि रतिः कामप्रियेति स्फुरति अपितु-न कस्यापि। यतः-यस्या एतस्या द्युतिः कामस्य कान्तिः रतिं कमाप्रियां सूते। अथच—अनुरागं प्रसूते, अर्थात्त्वयि। अङ्गजत्वात्कान्तिः पुत्री, रतिश्च तत्पुत्री, सा यस्या नप्त्री, सेयं स्वयं रतिरिति कस्य वा चेतसि मतिः स्यात्, न कस्यापीत्यर्थः। अथवा— त्वय्यपि विषये त्रैयक्षेण हरसंबन्धिना वीक्षणेन तृतीयनेत्रेण खिलीकृतो न्यूनीकृतो निर्जरत्वेन देवत्वेन सिद्धोऽमरत्वरूप आयुषोऽध्वा मार्गो यस्य तादृशस्य मकरध्वजस्य कामस्य संशयं रूपसादृश्यात् किमयं काम इति संदेहं को वा तनोति, अपितु न कोऽपि तनोति। कामस्य हरेण दग्धत्वात्संदेहनिवृत्तेरित्यर्थः। आ इत्याश्चर्ये। यस्य तवाङ्गजा कान्तिर्यतो रतिं सूते ततो रतिस्तवापि नप्त्री, सा कामस्य स्त्री। तस्मात् त्वयि कामसंशयं कोऽपि न करोतीत्यर्थः। इति नलं प्रति तद्वचनं शुकेनान्ववादि इति वा। रतिकामाभ्यामपि युवामातितमां सुन्दराविति भावः। त्रैयक्षेति संबन्धेऽणि 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ७।३।३। इति वृद्धिनिषेधे पूर्वमैजागमः॥ १३३॥

**एतां धरामिव सरिच्छविहारिहारा-**
**मुल्लासितस्त्वमिदमाननचन्द्रभासा।**
**बिभ्रद्विभासि पयसामिव राशिरन्त-**
**र्वेदिश्रियं जनमनः प्रियमध्यदेशाम्॥**

एतामिमि॥ हे नल, त्वं विभासि। किंभूतः—एतां भैमीं बिभ्रत् अङ्के धारयन्। किंभूताम्—सरितां नदीनां छविं कान्तिं हरन्ति तच्छील उज्ज्वलतरा मौक्तिकहारा यस्यास्ताम्। तथा—वेद्यामन्तर्वेदि वेदिकामध्यं तद्वदतिकृशा श्रीः शोभा यस्याः अन्तर्मध्ये वेदिवदतिकृशाश्रीर्यस्या वा। तथा—जनमनसां प्रिय आनन्ददायी मध्यदेशः शरीरमध्यभागो यस्यास्ताम्। किंभूतः—अस्या भैम्या आननमिदमाननं तल्लक्षणश्चन्द्रस्तस्य भासा कान्त्या उल्लासितो हर्षं प्रापितः। क इव—चन्द्रभासा वृद्धिं प्रापितः पयसां राशिः समुद्र इव। कामिव—धरां भूमिमिव। यथा पृथ्वीमङ्के धारयन् समुद्रः शोभते। किंभूतां धराम्—सरितो नद्य एव छव्या कान्त्या हारिणो मनोहरा हारा यस्यास्ताम्। तथा अन्तर्वेद्याख्यया गङ्गायमुनामध्यभुवा श्रीर्यस्यास्ताम्। तथा—जनमनसां प्रियो मध्यदेशो विन्ध्यहिमाचलान्तरभूभागरूप आर्यावर्तापरपर्यायः पुण्यभूतो मध्यदेशो यस्यास्ताम्। 'हिमवद्विन्ध्ययोर्मध्यं यत्प्राक्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः॥' इति मनुः। इदमाननम्, पष्ठीसमासः॥ १३४॥

**दत्ते जयं जनितपत्त्रनिवेशनेयं**
**साक्षीकृतेन्दुवदना मदनाय तन्वी।**
**मध्यस्थदुर्बलतमत्वफलं किमेत-**
**द्भुक्तिर्यदत्र तव भर्त्सितमत्स्यकेतोः॥**

दत्त इति॥ जनितानि सखीभिः कस्तूर्यादिविरचितानि पत्त्रनिवेशनानि मकराद्याकारपत्त्रवल्लीलेखनानि यस्याः सा, पत्त्रवल्लीभूषिता। तथा—अक्षिभ्यां सह वर्तमानः साक्षः असाक्षः साक्षः कृतः सनेत्रतां प्रापितः साक्षीकृतः स चासाविन्दुश्च स एव वदनं यस्याः सा, चन्द्राधिकवदना। तन्वी कृशाङ्गी भैमी मदनाय जयं दत्ते। एवंविधभैमीदर्शनेन कामो नितरामुल्लसतीत्यर्थः। अथ च-कामाय जयं दत्ते। एवंविधभैमीदर्शनवशीकृतस्त्वं कामेन जीयस इत्यर्थः। यच्च कायकान्त्या भर्त्सितो जितो मत्स्यकेतुः कामो येन तस्य तवात्र भैम्या विषये भुक्तिरेव तच्छरीरोपभोग एतन्मध्य उदरभागे स्थितस्य वर्तमानस्य दुर्बलतमत्वस्यातिकार्श्यस्य फलं परिपाकः किमिति प्रश्नः, संभावना वा।

१ अत्र मकारादीनामनुप्रासः, भूभृदादिपदानामनेकार्थत्वाच्छ्लेषः व्यतिरेकश्च। २ अत्रानुप्रासः, रतीति यमकं, व्यतिरेकश्च।

१ धरामिवेत्युपमा, राशिरिवेति चोपमा,।

अतिसुन्दरस्य तवैवैतच्छरीरभोगेऽतिकृशैतदुदररामणीयकमेव प्रयोजकमित्यर्थः । अथ च—मध्यदेशवर्तिनोऽतिकार्श्यस्य फलमेतदेव, यदतिसुन्दरस्य तवात्र भुक्तिर्नामेत्यर्थः । कामेन तव विजये एतन्मुखचन्द्रस्य च साक्षाद् द्रष्टृत्वात् साक्षित्वं युक्तम् । अथ च—कामेन जितमिति कामस्य जयदाने साक्षीकृता इन्दुवदनाः स्वसख्यो यया। ता अपि हि कामेन नलो भैमीवशः कृत इति जानन्ति। एवं सत्यपि क्रूरोक्त्यादिना तर्जितः कामो येन तस्य तवान्यस्मिन्भैमीविषये वा विवादविषये यो भोगः। लब्धजयं कामं क्रूरोक्त्या संतर्ज्य तदीयमपि विषयं बलादन्यायेनैव भुङ्क्त इत्यर्थः। अथ च—मध्यस्थानां सभ्यानां दुर्बलतमत्वस्य ज्ञानदौर्बल्यस्य नियन्तुमसामर्थ्यस्य स्वदत्तजयनिर्वहणाशक्तत्वस्य वा फलं परिपाकः किमयमिति संभावना । अन्यत्रापि विवादपदे साक्षिवादनं कृत्वा जयमानदानपुरःसरमेकस्मै जयपत्रं दीयते, तत्र निर्णये कृते मध्यस्थाश्चेद् दुर्बला भवन्ति, तर्हि पराजितोऽप्येको लब्धजयमपि द्वितीयं तिरस्कृत्य तदीयं विवादपदं क्षेत्रादिकं बलाद् भुङ्क्ते । कथमन्यथा ससाक्षिकजयपत्रहस्तं निर्भर्त्स्यान्योऽन्यदीयभुक्तिं करोतीत्यर्थापत्तिः। साक्षीकृतेति 'तेन सहेति तुल्ययोगे २ । २ । २८' इति बहुव्रीहिः 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ५।४।११३' इति षचि ङीषः । पक्षे 'साक्षाद् द्रष्टरि संज्ञायाम् ५।२।९१' इतीनौ च्विः ॥ १३५ ॥

**चेतोभवस्य भवती कुचपत्रराज-**
**धानीयकेतुमकरा ननु राजधानी ।**
**अस्यां महोदयमहस्पृशि मनिकेतोः**
**के तोरणं तरुणि न ब्रुवते भ्रुवौ ते ॥**

चेत इति ॥ ननु भैमि, भवती चेतोभवस्य राजधानी नगरी । कीदृशी—कुचपत्रेषु राजानः श्रेष्ठाः पत्रवल्लय इत्यर्थः । तेषु धानीयः स्थापनीयः । यद्वा—कुचपत्रमेव राजधानीयो राजधानीसंबन्धी केतुर्ध्वजश्चिह्नभूतो मकरो मत्स्यो यस्यां सा । राज्ञो मुख्यावस्थाननगर्यां राजधान्यां साभिज्ञानश्चिह्नरूपः पताकादिध्वजो भवति । तथा च केतुभूतस्य मकरस्य त्वत्कुचयोर्वर्तमानत्वात्त्वं कामराजस्य राजधानी । साक्षान्मदनस्त्वय्येव वर्तत इत्यर्थः । अत एव हे तरुणि आरूढयौवने भैमि, के जना मीनकेतोर्मकरध्वजस्य संबन्धिनं महोदयरूपं महमुत्सवं महान्भ्युदयो यस्मिंस्तादृशं वोत्सवं स्पृशन्त्यां स्वस्वामिकामोदयोत्सववत्यामस्यां भवद्रूपायां राजधान्यां ते तव भ्रुवौ तोरणं न ब्रुवते । अपितु—सर्वेऽपि जनास्त्वद्भ्रूयुगं कामाभ्युदयोत्थितवक्रितशिखं वंशद्वयनिबद्धमाम्रादिमाङ्गलिकसुनीलपल्लवरूपं तोरणमेव वदन्ति । कामस्त्वदेकाश्रयः सन्सर्वोत्कर्षेण वर्तत इति भावः । 'पत्त्रराजी-' इत्यपि पाठः स्पष्टार्थः । राजेति पाठो मुख्यः । 'राजाहः सखिभ्यष्टच् ५।४।९१' इति समासान्तष्टच् १३६ ॥

**अस्या भवन्तमनिशं भवतस्तथैनां**
**कामः श्रमं न कथमृच्छति नाम गच्छन् ।**
**छायैव वामथ गतागतमाचरिष्णो-**
**स्तस्याध्वजश्रमहरा मकरध्वजस्य १३७**

अस्या इति ॥ हे नल, अस्या भैम्याः सकाशाद्भवन्तं गच्छन् । तथा—भवतः सकाशादेनां भैमीं गच्छन् प्राप्नुवन् कामः कथं नाम श्रमं न ऋच्छतु गच्छतु, अपितु सदा यातायाते कुर्वन् श्रमं गच्छत्येव । अथवा यस्माद्वा युवयोश्छाया कायकान्तिरेवोक्तरीत्या गतागतमाचरिष्णोस्तस्य मकरध्वजस्याध्वनि जातं श्रमं हरति, एवंभूता भवतीति शेषः । दृश्यमानभवच्छोभालोभादेव यातायातश्रमं न वेत्तीत्यर्थः । अथच—वृक्षच्छत्रादिनिर्मिता छाया मार्गे गतागते कुर्वतः पुरुषस्य श्रमं हरत्येव । भैम्यास्त्वय्येव कामः, तव च भैम्यामेव नान्यत्रेत्येवं परस्परानुरागः । कुत्रापि नास्तीति भावः ॥ १३७ ॥

**स्वेदाप्लवप्रणयिनी नवरोमराजी**
**रत्यै यदाचरति जागरितव्रतानि ।**
**आभासितेन नरनाथ मधूत्थसान्द्र-**
**मग्नासमेषुशरकेशरदन्तुराङ्गः ॥ १३८॥**

स्वेदेति ॥ हे नरनाथ, स्वेदो घर्मजलं तस्मिंस्तेन वा आप्लवः स्नानं तत्र प्रणयिनी प्रीतिमती सात्त्विकसंजातस्वेदपूरव्याप्ता तव रोमराजी रत्यै सुरतार्थं जागरितस्योद्बुद्धस्य व्रतानि उद्गतरोमाञ्चनियमान् यदाचरति उन्निद्रा भवतीति यावत् । तेन कारणेन रोमाञ्चेन वा त्वं मधुनः पुष्परसस्योत्थानेनोदयेन सान्द्राः पुष्परसपूरेण निरन्तरव्याप्ताः मग्ना त्वच्छरीरान्तःप्रविष्टा असमेषोः कामस्य पुष्परूपाः शरास्तेषां केसरैः पिच्छप्रायैर्दन्तुरमु-

१ अत्रानुप्रासः व्यतिरेकश्च।

१ अत्रानुप्रासः, भवेति यमकम्, रूपकमुत्प्रेक्षा च ।
२ अत्राप्यनुप्रासः, उत्प्रेक्षा च ।

च्चावच्चीकृतमङ्गं यस्य, स्वेदरोमाञ्चो भययुक्तत्वात्प्रत्यङ्ग-मन्तर्मग्नसमधुकामवाणसम्बन्धिवहिरवस्थितपतत्रपत्रराग-व्याप्ताङ्ग इवाभाधि । भैमीयोगात्सस्वेदरोमाञ्चो रिरंसुः कामशास्त्रे योजितः सुतरां शोभस इत्यर्थः। अथच—रोमराजिर्दूतीस्थानीया, तथाच—तव दूतीव रोमराजिः कृततीर्थस्नाना रत्यै कामाप्रियां त्वदधीनां कर्तुं यस्माज्जागरणादिनियमान् करोति तेन कारणेन विशिष्टनिमग्नकामवाणा पिच्छसंभृताङ्गवच्छोभसे । अन्यापि तरुणी कृतस्नाना रत्यर्थं कान्तेन सह सहस्वेदा सकलां रात्रिं जागर्ति ॥ १३८ ॥

प्राप्ता तवापि नृप जीवितदेवतेयं
घर्माम्बुशीकरकरम्बनमम्बुजाक्षी ।
ते ते यथा रतिपतेः कुसुमानि वाणाः
स्वेदस्तथैव किमु तस्य शरक्षतास्रम् १३९

प्राप्तेति ॥ हे नृप, अम्बुजाक्षी तव जीवितदेवता प्राणेश्वरी इयं भैम्यपि घर्माम्बुशीकरकरम्बनं स्वेदजलविन्दुमिश्रणं प्राप्ता । इयमपि त्वदीयस्पर्शवशात्सात्विकस्वेदयुक्ताभूदित्यर्थः । न केवलं त्वमेव स्विन्नः, अपि त्वियमपीत्यपेरर्थः । अथच—देवतायाः स्वेदो नास्ति, इयं तु देवतापि सस्वेदेति विचित्रमित्यपिशब्दार्थः । अतश्च कुसुमान्येव यथा येन प्रकारेण ते ते भैमीकरचरणादिरूपेण प्रसिद्धपराक्रमा मोहनशोषणादिकामवाणास्तथैव तेनैव प्रकारेणायं स्वेदस्तस्य कामस्य संबन्धि कामेन रचितं शरक्षतास्रं स्वीयवाणव्रणरुधिरं किमु । एतस्याः कामवाणविद्धत्वात्स्वेदस्तज्जन्यव्रणरुधिरत्वेनैव संभावयितुं युक्तः । 'यादृशो वक्षस्तादृशो वलिः' इति न्यायेन पुष्पवाणानां धवलत्वात्तज्जन्यं रुधिरमपि तादृगेव युक्तम् । स्वेदजलस्य रुधिरत्वं युक्तमित्यर्थः । कुङ्कुमाङ्गरागलगनाद्वा रक्तत्वात्स्वेदजलस्य रुधिरत्वं युक्तम् । इयमपि कामविद्धा रिरंसुरस्तीति भावः ॥ १३९ ॥

रागं प्रतीत्य युवयोस्तमिमं प्रतीची
भानुश्च किं द्वयमजायत रक्तमेतत् ।
तद्वीक्ष्य वां किमिह केलिसरित्सरोजैः
कामेषुतोचितमुखत्वमधीयमानम् १४०॥

१ अत्रानुप्रासः, शरेति यमकं च, दन्तुराङ्ग इवेति प्रतीत्या प्रतीयमानोत्प्रेक्षा च।२अत्रानुप्रासः,करेति यमकं, देवतेयमिति रूपकम्, अम्बुजाक्षीत्युपमा, उत्प्रेक्षा च।

रागमिति ॥ प्रतीची दिक् भानुश्चेतद्द्वयं युवयोस्तं सात्त्विकस्वेदरोमाञ्चसूचितमिमं प्रत्यक्षदृश्यमिवानुरागं प्रतीत्य किं ज्ञात्वेव रक्तमजायत लोहितवर्णमभूत् । भैमीनलाविदानीं रिरंसू अपि दिवा मैथुननिषेधभिया साशङ्कौ वर्तेते । तस्माद्रात्रिं करिष्यामीति सूर्यमस्तं प्रापयितुमिव प्रतीची रक्तवर्णाऽभूत् । इदानीं मयाऽप्यस्तं गन्तुं योग्यमितीव सूर्योऽपि रक्तवर्णोऽभूदित्यर्थः । अथ च—युवयोरेव केलिसरितः सरोजैः कमलैस्तद्भानुप्रतीचीरूपं रक्तं मिथुनं वीक्ष्य वां भैमीनलौ च रक्तौ वीक्ष्य किं दृष्ट्वेह संध्यासमये कामस्य इषुतोचितं शरत्वयोग्यं मुखमग्रं येषां तद्भावस्तीक्ष्णाग्रत्वमधीयमानमभ्यस्यमानं, 'विद्यते' इति शेषः । तद्वां च सानुरागौ दृष्ट्वा कमलैर्मुकुलीभवनव्याजेन पुष्पवाणतीक्ष्णाग्रत्वमनुभूयते किम् । कामो हि रिरंसू स्त्रीपुंसौ दृष्ट्वा तीक्ष्णमुखैः शरैर्विध्यतीत्यर्थः । अथ च—एतौ भैमीनलौ प्रतीचीभास्करौ च यदि सरागौ जातौ तर्हीदानीं रात्रिः संनिहिताऽस्तीत्यस्माभिर्मुकुलीभावः प्राप्तुमुचित इति तैरपि मुकुलीभूतम् । पद्मानां संकुचितमुखत्वं कामशरयोग्यतीक्ष्णमुखीभाविनोत्प्रेक्षितम् । संध्याकालो जातः, कमलानि मुकुलितानीति भावः॥१४०

अन्योऽन्यरागवशयोर्युवयोर्विलास-
स्वच्छन्दताच्छिदपयातु तदालिवर्गः ।
अत्याजयन्सिचयमाजिमकारयन्वा
दन्तैर्नखैश्च मदनो मदनः कथं स्यात्१४१

अन्योऽन्येति ॥ आलिवर्गः अन्योऽन्यरागेण परस्परानुरागेण रमणाभिलाषेण वशयोर्वश्ययोः रिरंसयाऽन्योन्याधीनयोर्युवयोर्विलासस्य कामविलासस्य स्वच्छन्दतां निःशङ्कप्रवृत्तिं छिनत्ति । कामक्रीडाविघ्नकारी यस्मात्, तस्मादपयातु गृहाद्बहिर्निर्गच्छतु । यस्मान्मदनः कामः सिचयं वसनमत्याजयन्नपरिहारयन्नयोःस्त्रीपुंसाभ्याम्, तथा दन्तैर्नखैश्च करणभूतैराजिं संग्रामम्, एतैरुपलक्षितां वा नानाबन्धसुरतमल्लयुद्धं च स्त्रीपुंसावकारयन् सन् माद्यतीति मदनः मदकारी कथं वा स्यात्, अपित्वेवमेव कारयन्मदनो हर्षकारी भवेदेव । तस्मात्सखीवर्गो गृहाद्बहिर्गच्छत्वित्यर्थः । मदनः, 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३।१।१३४'इति नन्द्यादित्वाल्ल्युः॥१४१॥

१ अत्रोत्प्रेक्षा । २ अत्रानुप्रासः ।

इति पठति शुके मृषा ययुस्ता
बहुनृपकृत्यमवेत्य सान्धिवेलम् ।
कुपितनिजसखीदृशाऽर्धदृष्टाः
कमलतयेव तदा निकोचवत्यः १४२

इतीति ॥ ता गन्धर्वपुत्र्यः सख्यश्च शुके इति पठति व्यक्तं भाषमाणे सति गन्धर्वपुत्रीवीणानिबद्धा गाथाः स्पष्टमनुवदति सति सान्धिवेलं दिनरात्रिसन्धिवेलाभवं बहु नृपकृत्यं संध्यावन्दनसायंहोमादिकं नलस्य नित्यं कर्मावेत्य ज्ञात्वा मृषालीकमेवात्रेदानीं भवतीभिर्न स्थातव्यमिति शुकोऽस्मान्निष्काशयति तर्हि वयं याम इति मिषमात्रेण ययुः गृहाद्बहिर्निर्जग्मुः । रिरंसुरपि नलः संध्यासमये नित्यकर्मातिक्रम्य संभोगं न करोति, रिरंसुर्भैम्यपि स्वयं ग्रहं न करोतीति यद्यपि ता जानन्ति, तथापि भैमीपरिहासार्थं तादृशं शुकवचनमेव व्याजीकृत्य बहिर्निर्गता इत्यर्थः । किम्भूतास्ताः—कमलतयेव कमलरूपत्वेनेव तदा संध्यासमये निकोचवत्यः संकुचन्त्यः । कमलानि सन्ध्यायां संकुचन्ति । तादृश्यः वृथागमनारम्भेण व्रीडाश्लीलासंजननात्कुपिताया निजसख्या भैम्या दृशा अर्धेनैकदेशेन दृष्टा विलोकिताः । सकोपत्वान्नेत्रतृतीयभागतिर्यग्व्यापारेणेपद्दृष्टाः । कुपिता हि मानिनी दृगन्तेन पश्यति । निकोचः, 'भावे ३ । ३ । १८' इति घञ् ॥ १४२ ॥

अकृत परभृतः स्तुहिस्तुहीति-
श्रुतवचनस्रगनूक्तिचुञ्चुचञ्चुः ।
पठितनलनुतिं प्रतीव कीरं
तमिव नृपं प्रति जातनेत्ररागः॥१४३॥

अकृतेति ॥ सख्या पूर्वमानीतः परभृतः कोकिलोऽप्युन्मत्तत्वात्स्वभावाच्च जातो नेत्रयो रागो लौहित्यं यस्यैवंविधः सन् स्तुहि स्तुहि इत्येवंरूपं शब्दमकृत । पिकः स्वभावादेव स्तुहि स्तुहीत्येवंरूपं शब्दं चुकूजेत्यर्थः । तत्रोत्प्रेक्षते—पठिता समाप्तिं प्रापिता नलस्य नुतिः स्तुतिर्येन तं स्तुतिं कृत्वा तूष्णींभूतं तं कीरं शुकं प्रतीवोद्दिश्येव स्तुहि स्तुहीत्यकृत । रे कीर, किमिति तूष्णींभूतोऽसीतः परमपि नलस्य स्तुतिं कुर्विति नलस्तुतौ बुद्धिप्रकारं प्रावर्तयदिवेत्यर्थः । एवंवचने पिकस्य कथं सामर्थ्यमित्याशङ्क्याह—श्रुता वीणानिबद्धशुकानूदितवचनस्रक् तस्या अनूक्तिः सर्वानुवादः तया वित्ता प्रसिद्धा प्रवीणा चञ्चूर्यस्य । तादृशं शुकानूदितं सर्वमप्यनूद्येतः परमपि स्तुहि स्तुहीत्याहेत्यर्थः । नेत्ररागेऽप्युत्प्रेक्षते—तं नृपं प्रतीव लक्ष्यीकृत्येव जातनेत्रप्रीतिः सुन्दरतरनयनानन्दकारिणं नलं दृष्ट्वा जातनेत्रप्रीतिः स्तुहीत्यकृतेत्यर्थ इति रागशब्देनोत्प्रेक्षा । अनूक्तिचुञ्चुरिति, 'तेन वित्तश्चुञ्चुप्चणपौ ५।२।२६।' इति चुञ्चुप् ॥ १४३॥

तुङ्गप्रासादवासादथ भृशकृशतामायतीं केलिकुल्या—मद्राक्षीदर्कबिम्बप्रतिकृतिमणिना भीमजा राजमानाम् । वक्रं वक्रं व्रजन्तीं फणियुवतिरिति त्रस्नुभिर्व्यक्तमुक्ता—न्योऽन्यं विद्रुत्य तीरे रथपदमिथुनैःसूचितामार्तिरुत्या॥

तुङ्गेति ॥ अथैवं वीणाक्वाणानुवादिशुकालापानन्तरं भीमजा केलिकुल्यां क्रीडाकृत्रिमनदीमद्राक्षीत् । किंभूताम्—भैम्यास्तुङ्गे उच्चतरे प्रासादे वासात्स्थितेर्हेतोर्भृशकृशतामायतीं प्राप्नुवतीम्, अधोदेशे स्थिता स्वयं महीयस्युच्चतरदेशे स्थितां भैमीं प्रत्यणीयस्त्वेन प्रतिभासमाना ताम् । तथा—अस्तगामिनोऽर्कबिम्बस्य प्रतिकृत्या प्रतिबिम्बरूपेण महाप्रकाशेन मणिना राजमानां प्रतिबिम्बितास्तगामिसूर्यबिम्बाम् । तथा—वक्रं वक्रं स्वभावकुटिलं व्रजन्तीं गच्छन्तीम् । अत एव—फणियुवतिः कृष्णसर्पिणीयमिति त्रस्नुभिस्त्रासशीलै रथपदमिथुनैश्चक्रवाकस्त्रीपुंसयुगलैर्व्यक्तं स्पष्टं मुक्तं त्यक्तमन्योऽन्यं परस्परं यथातथा तीरे विषये विद्रुत्य पलाय्य कर्मभूते वा द्वे तीरे प्रति गत्वा आर्तिरुत्या विरहपीडासंबन्धिना रुतेन कृत्वा सूचितां प्रकटीकृताम् । सांध्यतमसावृतत्वाच्च स्पष्टतरमदृश्यमानामपि नदीयमिति चक्रवाकशब्देन ज्ञापितां फणियुवतिरिति सूचितामिति वा । कृष्णसर्पिण्यपि कृशा भवति सूर्यबिम्बतुल्येन शिरःस्थेन मणिना शोभते । वक्रं वक्रं च व्रजति । तां च दृष्ट्वा जनाः पक्षिणो वा पलाय्य दीनस्वरोपलक्षिताः परस्परं सहवासं मुञ्चन्ति । सूर्यमस्तं जिगमिषुं दृष्ट्वा चक्रवाकमिथुनानि सांध्यविरहपीडया रुतं कृत्वान्योन्यं मुक्त्वा पलाय्य केलिकुल्याः पारावारे तीरे तिष्ठन्तीति भैमी ददर्शेत्यर्थः । उष्यतेऽस्मिन्निति वासः । तुङ्ग-

---

१ अत्राग्रिमे च पद्ये पुष्पिताग्रा छन्दः । पर्यायोक्तमलङ्कारः कमलतयेवेत्युत्प्रेक्षा ।

१ अत्र यमकम्, उत्प्रेक्षा च ।

प्रासादवासमारुह्यादाक्षीदिति, 'ल्यब्लोपे कर्मण्यधिकरणे च' इति (वा०) पञ्चमी ॥ १४४ ॥

अथ रथचरणौ विलोक्य रक्ता-
वतिविरहासहताहताविवास्रैः।
अपि तमकृत पद्मसुप्तिकालं
श्वसनविकीर्णसरोजसौरभं सा ॥१४५॥

अथेति ॥ केलिकुल्यादर्शनानन्तरं सा भैमी रक्तौ परस्परानुरक्तौ स्वभावेन रक्तवर्णौ च अतिविरहासहतया नितरां वियोगासहिष्णुतया हतौ कामशरविद्धौ स्मरशराघाते सति अस्रैः रुधिरैरिव रक्तौ रथचरणौ चक्रवाकौ विलोक्य तं पद्मानां सुप्तिकालं संकोचसमयं सायंसंध्यासमयमपि विरहपीडितकोकदर्शनाद्दुःखसंजातः श्वसनो निःश्वासभरस्तन्निर्गमनेन कृत्वा विकीर्णं सरोजसौरभं यस्मिंस्तादृशमकृत । संध्यासमये पद्मसंकोचात्सौरभासंभवेऽपि निश्वाससोचनेन पद्मिनीत्वात्त्वत्पद्मसौगन्ध्यं तदानीमपि विस्तारयति स्मेत्यर्थः । अन्योकोकौ तादृशौ दृष्ट्वा भृशं निशश्वासेत्यर्थः । अन्यो-ऽप्यत्रक्षतं रक्तव्याप्तं दृष्ट्वा भृशं निश्वसिति । 'विरहासहनौ हताविवास्रैः' इति पाठः सुयोजनः । अस्त्रैः कामस्य । रथजरणौ, 'पुमान्स्त्रिया । १ । २ । ६७ ।' इत्येकशेषः ॥ १४५ ॥

अभिलपति पतिं प्रति स्म भैमी
सदय विलोकय कोकयोरवस्थाम्।
मम हृदयमिमौ च भिन्दतीं हा
क इव विलोक्य नरो न रोदितीमाम् १४६

अभीति ॥ भैमी पतिं प्रति इति अभिलपति स्म अवोचत् । इति किम्—हे सदय सकरुण, त्वं कोकयोरवस्थां विरहविह्वलत्वं विलोकय । हा कथमिमौ कोकौ भिन्दन्तीं पृथग्देशावस्थितौ कुर्वतीम्, अत एव—मम भैम्या अपि हृदयं च एतच्छ्लोकेन विदारयन्तीमिमां कोकयोरवस्थां विरहविह्वलत्वं विलोक्य क इव नरः सचेता मनुष्यो न रोदिति, अपि तु सर्वोऽपि परिदेवनं करोत्येव । सदयत्वात्तव दुःखं भविष्यतीति किं पुनर्वक्तव्यमित्यर्थः ॥ १४६ ॥

कुमुदमुदमुदेष्यतीमसोढा
रविरविलम्बितुकामतामतानीत्।
प्रतितरु विरुवन्ति किं शकुन्ताः
स्वहृदि निवेशितकोककाकुकुन्ताः ॥१४७॥

कुमुदेति ॥ हे प्रिय, रविरुदेष्यतीमुत्पत्स्यमानां कुमुदानां मुदं विकासरूपं हर्षमसोढेवाशक्नुवन्निवाविलम्बितुं सत्वरं गन्तुं कामो यस्य तद्भावस्तत्तामतानीत् विस्तारितवान्। आसन्नास्तमयो वर्तत इत्यर्थः । तथा—शकुन्ताः पक्षिणः प्रतितरु विरुवन्ति विशेषेण रुतं कुर्वन्ति। आसन्ननेत्रनिमीलना वासार्थिनो विरुवन्तः सन्तः स्वस्वनिवासवृक्षं प्रति गच्छन्तीत्यर्थः । तत्रोत्प्रेक्षते—स्वहृदि निवेशिताः कोकानां काकवः शोकविकृता विरावा एवातिपीडाकारित्वात्कुन्ता भल्ला यैस्तादृशाः किम्। चक्रवाकशोकपीडिता इव पक्षिणः क्रन्दन्तीत्युत्प्रेक्षा । अन्योऽपि वैरिणामुदेष्यतीमभिवृद्धिमसहमानः सत्वरं कुत्रचिद्गच्छति । तथा—अपरः सकृपः कञ्चिद्दुःखितं कंचिद्दृष्ट्वा क्रन्दति । सोढा, तृन्। मुदम्, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९' इति षष्ठीनिषेधः । उदेष्यतीम्, 'आच्छीनद्योर्नुम् ७ । १ । ८०' इति वैकल्पिकत्वान्नुमभावः ॥ १६७ ॥

अपि विरहमनिष्टमाचरन्ता-
वधिगमपूर्वकपूर्वसर्वचेष्टौ।
इदमहह निदर्शनं विहङ्गौ
विधिवशचेतनचेष्टनानुमाने ॥ १४८ ॥

अपीति ॥ हे प्रिय, स्वस्यानिष्टमपि विरहमाचरन्तौ स्वयमेव कुर्वाणौ । तर्हि सदा स्वानिष्टाचरणस्वभावाद्वै भविष्यत इत्यत आह—अधिगमो ज्ञानं तत्पूर्विकाः पूर्वा विरहाचरणात्प्राचीनाः सर्वाश्चेष्टाः कर्तव्यता ययोस्तौ वा । अधिगमो लाभो हितमिति यावत् । तत्पूर्विकास्त-

---

१ अत्र स्रग्धरावृत्तम् । उच्चतरदेशस्थापेक्षयाऽतिनीचस्थस्य पदार्थस्य सूक्ष्मतरत्वप्रतीतेः स्वाभाविकत्वमिति तथोक्तेः स्वभावोक्तिः, नद्यां नायिकाव्यवहारस्फूर्त्या समासोक्तिश्च । २ इतः प्रभृति पद्यचतुष्टये पुनः पुष्पिताऽग्रा वृत्तम्। अत्रानुप्रासः, हतेति यमकम्, इवेत्युत्प्रेक्षा च । सायमपि सरोजसौरभविकरणवचनेन भैम्याः शाश्वतिकसौरभत्वं, तेन च सरोजापेक्षयाऽतिशयश्च व्यज्यते।

१ अत्रानुप्रासः, परिकरश्च । २ अत्र मुदेति रवीति मतेति च यमकम्, अत्रानुप्रासः, उत्प्रेक्षा च ।

दुद्देश्याः पूर्वाः सर्वाश्रेष्ठा ययोस्तादृशौ वा बुद्धिपूर्वकारी हि स्वाहिते न प्रवर्तते । कोकयोश्च दिने भोजनादयः सकलाश्चेष्टा ज्ञानपूर्विकाः स्वहिताश्च । एवं सत्यनेनैवंस्वभावावप्येतौ संध्यायामकस्मादेवान्योन्यविरहं स्वयमेव यस्मादाचरतस्तस्माद् विधिवशं दैवाधीनं चेतनानां प्राणिनां चेष्टितं पूर्वकर्माधीनं प्राणिनामाचरणमित्येवंरूपेऽनुमाने कार्यात्कारणविशेषज्ञाने विषये यावेतौ विशिष्टौ विहङ्गौ कोकौ इदमेव निदर्शनमयमेव दृष्टान्तः । अहह अद्भुते खेदे वा । तस्मात्प्राचीनकर्मानुसारेणैव प्राणी कदाचिद्धितं कदाचिच्चाहितमाचरतीति भावः । 'प्राणिनो दैवाधीनचेष्टिताः, प्रतिकूलतया ज्ञातेऽपि प्रवर्तमानत्वात्, चक्रवाकवत्' इत्यनुमानम् ॥ १४८ ॥

**अङ्ग्रिस्थारुणिमेष्टकाविसरणैः शोणे कृपाणः स्फुटं—कालोऽयं विधिना रथाङ्गमिथुनं विच्छेत्तुमन्विच्छता । रश्मिग्राहिगरुत्मदग्रजसमारब्धाविरामभ्रमौ—दण्डभ्राजिनि भानुशाणवलये संसज्य किं निज्यते ॥ १४९ ॥**

अङ्ग्रीति ॥ स्फुटमुत्प्रेक्षते—हे प्रिये, रथाङ्गमिथुनं विच्छेत्तुं वियोक्तुम्, अथ च—विशेषेण विदारयितुमन्विच्छता विधिना ब्रह्मणा दैवेन वाऽयं कालः सायंसंध्यासमय एव स्फुटं खड्गगुणयोगात्कालः कृष्णः लोहमयः कृपाणः भानुशाणवलये सूर्यरूपे शाणचक्रे संसज्य संयोज्य निज्यते किम्, तीक्ष्णीक्रियते किमित्यर्थः । किंभूते वलये—अस्तमयकालसांनिध्यादङ्ग्रिस्थः किरणस्थोऽरुणिमा स एव इष्टकाविसरणानि इष्टकाचूर्णप्रसारणानि तैः शोणे रक्तवर्णे । तथा—रश्मिग्राहिणा गरुत्मतोऽग्रजेनारुणेन समारब्धाऽविरामा निरन्तरा भ्रमिर्भ्रमणं यस्य तस्मिन् , सदाऽरुणेन कृतभ्रमणे । अथ च—आकर्षणरज्जुग्राहिभिररुणसमैस्तद्वत्तेजस्विभिर्वलिभिः पुरुषैरारब्धनिरन्तरभ्रमणे । तथा—दण्डसंज्ञकेन पारिपार्श्विकेन भ्राजिनि शोभमानेऽपि, अथ च—शाणचक्राधारभूतेनाकर्षणरज्जुसंयुक्तेन दारुमयेन दण्डेन शोभमाने । संनिहितास्तमयसूर्यसायंसंध्यासमयसांनिध्याच्चक्रवाकयुगं तीक्ष्णतरखड्गविदारितमिव विधिवशाद्वियुक्तं सद्व्यथत इति भावः । अन्योऽपि किंचिच्छेत्तुं खड्गमुक्तविशेषणविशिष्टे शाणचक्रे तीक्ष्णं करोति । 'किरणप्रग्रहौ रश्मी','माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः' इति चामरः । भ्रमाविति भावितपुंस्कम् । निज्यते, 'णिजिर् शौचे' इत्यस्मात्कर्मणि यक् । तिज्यत इति पाठे तु 'तिज निशाने' इत्यस्मात् कर्मणि यक् ॥ १४९ ॥

**इति स विधुमुखीमुखेन मुग्धालपितसुधासवमर्पितं निपीय । स्मितशबलवलन्मुखोऽवदत्तां स्फुटमिदमीदृशमीदृशं यथाऽऽत्थ १५०**

इतीति ॥ स नलोऽपि तां भैमीमिति अवदत् । इति किम्—हे प्रिये, त्वं यथाऽऽत्थ, तदिदं स्फुटं निश्चितमीदृशमीदृशं सत्यमेवेत्यर्थः । किंभूतः—इति पूर्वोक्तरीत्या विधुमुख्या भैम्या मुखेनार्पितं दत्तं मुग्धं मनोहारि आलपितं तज्जभाषितमेव सुधासवं स्वबाहुल्यादमृतं उन्मादकत्वाच्च मद्यं निपीयास्वाद्य सादरमाकर्ण्य च स्मितेन शबलं मिश्रितम् वलत् भैमीमुखं यस्य सः । कामिनो हि कामिनीमुखार्पितमद्यं सानुरागं पिबन्ति, अनन्तरं वलितमुखाः सहासं किंचिद्वदन्ति च ॥ १५० ॥

**स्त्रीपुंसौ प्रविभज्य जेतुमखिलावालोचितौचित्ययो—र्नम्रां वेद्मि रतिप्रसूनशरयोश्चापद्वयीं त्वद्भ्रुवौ । त्वन्नासाच्छलनिह्नुतां द्विनलिकीं नालीकमुक्त्येषिणो—स्त्वन्निश्वासलते मधुश्वसनजं वायव्यमस्त्रं तयोः ॥**

स्त्रीति ॥ अयि प्रिये, अहं वक्रतरे त्वद्भ्रुवौ रतिश्च प्रसूनशरः कामश्च तयोः नम्रां स्त्रीजयाय रत्या पुंजयाय च कामेनाकर्णमाकृष्य वक्रितां चापद्वयीं वेद्मि, त्वद्भ्रुवावेव द्वयोर्धनुषी इत्यर्थः । किं भूतयोः—अखिलौ त्रिजगति वर्तमानौ तत्तज्जातीयौ स्त्रीपुंसौ प्रविभज्य विभागं कृत्वा पृथक्पृथक् जेतुमालोचितं विचारितमौचित्यं याभ्यां तयोः । स्त्रियाः रत्यैव जेतुं योग्या पुंसश्च पुमानेवेत्यालोचितौचित्ययोरित्यर्थः । तथा—नालीकानां

1 अत्र दृष्टान्तः ।

1 अत्र शार्दूलविक्रीडितं वृत्तम्, अत्रानुप्रासः,उत्प्रेक्षा, रूपकं च । 2 अत्रपुष्पिताग्रा वृत्तम्, विधुमुखीति रूपकं न तूपमा, आलपितस्य सुधात्वेन रूपणस्यान्यथाऽनुचितत्वापत्तेः ।

वितस्तिमात्रनालीकाख्यशरविशेषाणां मुक्तिं मोक्षणमिच्छतः एवंशीलयो रतिकामयोः संबन्धिनीं द्विनलिकीं नालीकमोचनोपायभूतसरन्ध्रवंशपर्वद्वयं त्वन्नासाच्छलेन त्वदीयवामदक्षिणनासापुटद्वयव्याजेन निह्नुतां गोपितां जानामि । त्वन्नासापुटद्वयमेतन्न भवति, किंतु नालीकद्वयमुक्त्युपायभूता द्विनलिकीत्येवाहं शङ्क इत्यर्थः। तथा–त्वन्निश्वासलते तव वामदक्षिणनासानिश्वासधाराद्वयं तयो रतिकामयोः प्रत्येकं मधुश्वसनजं वसन्तकालिकमलयानिलप्रभवं वायव्यं वायुदेवताकमस्त्रमेव वेद्मि । सुन्दरत्वद्भूनासाद्यवयवदर्शनमात्रेण कामवशत्वं भवतीति भावः। द्विनलिकी, *समाहारद्विगौ ङीप्* । वायव्यम्, 'साऽस्य देवता' इत्यर्थे 'वाय्वृतुपित्रुषसो यत् ४।२।३१' इति यत् ॥ १५१ ॥

**पीतो वर्णगुणः स चातिमधुरः कायेऽपि तेऽयं यथा–यं बिभ्रत्कनकं सुवर्णमिति कैरादृत्य नोत्कीर्त्यते । का वर्णान्तरवर्णना धवलिमा राजैव रूपेषु य–स्तद्योगादपि यावदेति रजतं दुर्वर्णतादुर्यशः॥१५२॥**

पीत इति ॥ हे भैमि, वर्णेषु शुक्लादिरूपेषु मध्ये गुणो वैशेषिकादिभिर्गुणपदार्थत्वेन निर्दिष्टः पीतो हरिद्राभो वर्णः स च स एवातिमधुरो रमणीयतरो, न तु वर्णान्तरं मधुरमित्यर्थः। यथा येन कारणेनायं पीतो वर्णस्तेऽपि काये देहे वर्तते। अत्युत्तमया त्वयापि शरीरे धार्यते तस्मादयमत्युत्तम इत्यर्थः। अथ च—रूपान्तरापेक्षया शुक्लरूपस्यैव प्रधानत्वादन्येषां चाप्रधानत्वाद्वर्णेषु मध्ये गुणोऽप्रधानभूतोऽपि यो हरिद्राभो वर्णः स एवातिमधुरः। प्रधानभूत इत्यर्थः। यस्मादयं ते काये वर्तते अप्रधानस्यापि केनचिदत्युत्तमेनाङ्गीकृतत्वाद्धि प्राधान्यं भवति, तथा त्वयाङ्गीकृतत्वादप्रधानस्याप्यस्य प्राधान्यं युक्तमेवेत्यर्थः । अथ च—गुणः पीत एव, नान्ये गुणाः, पीतवर्ण एव गुणरूपोऽन्ये तु दोषरूपा इत्यर्थः । स एव चातिमधुरः उभयत्रापि हेतुः–यतोऽयं तव काये वर्तते तस्माद्गुणोऽतिमधुरश्चेत्यर्थः । अथ च—ते तव काये वर्तमानोऽयं प्रत्यक्षगम्योऽतिमधुरो रसो यथा मयां पीतस्तत्तच्चुम्बनस्थानचुम्बनवशेनास्वादितः, तथा तव काये सोऽतिप्रसिद्धो वर्णगुणो गौरिमापि पीतः सादरं निरीक्षितः। अथ च—हरिद्राभ इत्यर्थः । चः, अन्यैश्चान्योसमुच्चये । सोऽतिमधुरो रसो यथा मया पीतः तथायं वर्णगुणोऽपि पीत एवेति वा संबन्धः। अथ च तवातिमधुरो वर्णगुणो वर्णात्मकशब्दलक्षणो गुणो यथा पीत आस्वादितः, अतिमधुरा तव वाणी यथा पीतेत्यादि ज्ञातव्यम् । एवं छलेनोक्त्वा प्रकृतपीतरूपवर्ण एव युक्तिमाह—त्वच्छरीराश्रयं पीतवर्णं बिभ्रत् कनकं चम्पकं शोभनो वर्णोऽस्य तत्सुवर्णमिति कैर्जनैरादृत्यादरेण नोत्कीर्त्यते नोद्घोष्यते, अपि तु—त्वदङ्गधृतवर्णतुल्यवर्णधारणादेव चम्पकं सुवर्णमित्युच्चैः कीर्त्यते। अथ च त्वच्छरीराश्रयं पीतवर्णं धारयच्चामीकरं शोभनो वर्णोऽस्येति व्युत्पत्त्या सुवर्णमिति कैर्जनैरादरेण नोद्घोष्यते, अपि तु—त्वच्छरीराश्रितपीतवर्णतुल्यवर्णधारणादेव सुवर्णमिति कीर्तिं लेभे इत्यर्थः । अथ च—शोभनो वर्णः स्तुतिर्यस्य । त्वदङ्गवर्णं बिभ्रदतितरां स्तुत्यं, नतु स्वत इति । मुख्यया वृत्त्या सुवर्णमिति त्वदीयमङ्गम्, कनकं तु त्वद्वृत्तिवर्णसाम्यधारणाद्गौण्या वृत्त्या लोकेन कथ्यत इत्यर्थः। अत एव पीतवर्णस्य पुरस्तादप्रधानानां वर्णान्तराणां नीलरक्तादीनां वर्णानां वर्णना का, अपि तु—सा नैव कुत्राप्युपयुज्यते तत्कथा न कार्यैव । यावत् यतः कारणाद् यो धवलिमा शुक्लगुणः षड्विधेषु रूपेषु मध्ये राजैव श्रेष्ठतम एव। निर्मलत्वादभ्यर्हितत्वाद्रूपविभागवेलायां वैशेषिकैः प्रथमोच्चारितत्वाच्च प्रधानभूत एव। तस्य प्रधानभूतस्यापि योगात्संबन्धाद्रजतं दुष्टोऽसमीचीनो वर्णो यस्य तस्य भावस्तत्ता दुर्वर्णशब्दवाच्यता तद्रूपं दुर्यशोऽकीर्तिमेति। नीलादि वर्णान्तरयुक्तं तु दुर्वर्णतां प्राप्नोतीति किं वाच्यमित्यर्थः। यावत्सकले रजतमिति वा। अप्रधानस्यापि पीतरूपस्य भैमीशरीरेणाङ्गीकृतत्वादेवोत्तमत्वम् । तद्योगात्काञ्चने सुवर्णमिति कीर्तिः। भैमीशरीरेणाङ्गीकृतत्वादेव चोत्तमस्यापि धवलिम्नोऽनुत्तमत्व। धवलिमा, वर्णवाचित्वात् 'वर्णदृढादिभ्यः ष्यञ्च ५ । १ । १२३' इतीमनिच् ॥ १५२ ॥

इदानीं नवभिः श्लोकैर्भैमीवाणीं वर्णयति—

**खण्डक्षोदमृदि स्थले मधुपयःकादम्बिनीतर्पणात्–कृष्टे रोहति दोहदेन पयसां**

१ इतः प्रभृति पद्यषट्के शार्दूलविक्रीडितं वृत्तम्। अत्रानुप्रासो रूपकं छलेत्यपह्नुतिश्च ।

१ अत्राप्यनुप्रासः, उत्प्रेक्षा, काव्यलिङ्गं च ।

पिण्डेन चेत्पुण्ड्रकः । स द्राक्षाद्रवसेचनैर्यदि फलं धत्ते तदा त्वद्गिरामुद्देशाय ततोऽप्युदेति मधुराधारस्तमप्प्रत्ययः १५३॥

खण्डेति॥हे भैमि, पुण्ड्रकः स्थूलेक्षुविशेषः पयसां पिण्डेन दुग्धानामत्यन्ताग्निपाकघनीभूतेन गोलकेनैव दोहदेन एवंभूते स्थले क्षेत्रे चेद्रोहति साङ्कुरो भवति । किंभूते स्थले खण्डः शर्कराचूर्णमेव मृन्मृत्तिका यस्मिन् । तया—मधु अमृतं माक्षिकमेव वा पयो यस्यास्तया कादम्बिन्या मेघमालया तर्पणात् पूर्णजलत्वकरणाद्धेतोर्द्विगुणाकृष्टे । मेघमालावृष्टजलं हि क्षेत्रं पुनः कृष्यते, तादृशे समीकृते उप्तं हि बीजमङ्कुरार्थं पुनः पयोऽपेक्षते । तत्स्थानेऽत्र दुग्धगोलकः । दोहदेनेत्यनेन निरातङ्कमभिवृद्धिः सूचिता । अनन्तरं च प्ररूढाङ्कुरः सन् पुण्ड्रकः फलोत्पत्तिसमयपर्यन्तं द्राक्षाणां द्रवः पक्वफलनिष्पीडितरसस्तस्य सेचनैः कृत्वा इक्षुदण्डादपि परिणतमाधुर्यातिशयफलं यदि धत्ते तदा तर्हि ततोऽपि विशिष्टेक्षुफलादपि सकाशात्त्वद्गिरां तव वाणीनामुद्देशाय निर्देशार्थं मधुरशब्द आधारो मूलप्रकृतिर्यस्य तादृशस्तमप्प्रत्यय उदेति उत्पद्यते । कीदृग्भैम्या वाणीति पृष्टे उक्तविशेषणविशिष्टादिक्षुफलादपि मधुरतमेति तदा निर्देष्टुं शक्येत इत्यतिशयने तमप् तदैव संगच्छत इत्यर्थः । एवंविशिष्टं फलं यदि भवेत्, तर्हि तदेव तावदतिमधुरं तस्मादप्यतिमधुरं वस्तु विद्यते किमिति पृष्टे निःसीममधुरतमस्यान्यस्याभावात्तमप्प्रत्ययान्तमधुरशब्देन भवद्वाण्येवोत्तरत्वेन दातुं योग्या न तु विशिष्टमपीक्षुफलम्, निःसीममाधुर्याभावात्तमप्प्रत्ययानुपपत्तेः, किमुत मधुराणि द्रव्यान्तराणीति भवद्वाणीधन्मधुरतमं वस्तु किंचिदपि न दृष्टमिति भावः । एवंविधे क्षेत्रे यदि पुण्ड्रको रोहति, स च पयसां पिण्डेन दोहदेन, द्राक्षाद्रवसेचनैश्च दोहदेन यदि फलं धत्त इति वा । 'कादम्बिनी मेघमाला' इत्यमरः । 'पुण्ड्रो दैत्यविशेषेक्षुभेदयोः' इति विश्वः । ततः स्वार्थे कन् ॥ १५३ ॥

उन्मीलद्गुडपाकतन्तुलतया रज्ज्वा भ्रमीरर्जयन् दानान्तःश्रुतशर्कराचलमयःस्वेनामृतान्धाः स्मरः । नव्यामिक्षुरसोदधेर्यदि सुधामुत्थापयेत्सा भव-जिह्वायाः कृतिमाह्वयेत परमां मत्कर्णयोः पारणाम् ॥ १५४ ॥

उन्मीलदिति ॥ अमृतमेवान्धोऽन्नं यस्य देवत्वात्, तादृशो भवन्स्मरो यदि इक्षुरस एवोदधिस्तस्मात्सकाशान्नव्यां नूतनां देवासुरोत्थापितपूर्वसुधाया अन्यादृशीं सुधामात्मनैवोत्थापयेन्निर्गमयेत्, तर्हि सा मधुरतमा सुधा मत्कर्णयोः परमां पारणामद्वितीयतृप्तिहेतुं भवत्या जिह्वायाः कृतिं त्वद्रसनानिर्मितां वाणीमाह्वयेत स्पर्धापूर्वमाकारयेत् । किंभूतः स्मरः—उन्मीलन्नतिप्रकाशमानोऽतिशयितो गुडस्येक्षुरसविकारस्य पाकस्तज्जन्या ये तन्तव इव तन्तव ऊर्ध्वोर्ध्वप्रसारितगुडनिर्गतदोरकास्त एव दैर्घ्याल्लता तयैव रज्ज्वा मन्थभ्रमणदोरकेण कृत्वा दानान्तस्तुलापुरुषदानादिमध्ये आयुरारोग्यादिफलकः श्रुतः शर्कराचलः स एव मन्था मन्दरस्तस्य भ्रमीर्भ्रमणानि अर्जयन् कुर्वन् । तया रज्ज्वा शर्कराचलरूपं मन्थानं चालयन् । अतिमधुरसामग्रीसंपादितं हि मधुरतमं भवतीत्येवंविधमधुरसामग्रीकत्वान्मधुरतमापि सुधा भवद्वाणीतुल्या भवेन्नवा अन्या तु नैवेत्यर्थः । 'अथातः सम्प्रवक्ष्यामि शर्कराचलमुत्तमम् । यस्य प्रदानाद्विष्णवर्करुद्राः तुष्यन्ति सर्वदा ॥' इति दानखण्डे । आह्वयेत, 'स्पर्धायामाङः १।३।३१ इति तङ् ॥ १५४ ॥

आस्ये या तव भारती वसति तल्लीलारविन्दोल्लसद्वासे तत्कलवैणनिक्वणमिलद्वाणीविलासामृते । तत्केलिभ्रमणार्हगैरिकसुधानिर्माणहर्म्याधरे-तन्मुक्तामणिहार एव किमयं दन्तस्रजौ राजतः ॥ १५५ ॥

आस्य इति॥अयि प्रिये, तवास्ये या भारती सरस्वती वसति । किंभूते आस्ये—तस्यां भारत्या एव हस्तस्थितस्य लीलारविन्दस्यैवोल्लसन् प्रसरन् वासो गन्धो यस्मिन् । पद्मिनीत्वात्पद्मतुल्यपरिमले । तथा—तस्या एव कलो वैणो निक्वणः मधुरास्फुटो वीणासंबन्धी नादस्तद्रूपं मिलत्संबध्यमानं वाणीविलासरूपं वक्रोक्त्यादिनानाविधवाग्विलासरूपममृतं यस्मिन् । तथा—तस्या

१ अत्रानुप्रासः, अतिशयोक्तिश्च ।

१ अत्राप्यनुप्रासः, अतिशयोक्तिश्च ।

एव केलिभ्रमणार्हं लीलागमनयोग्यं गैरिकेण रक्तधातुविशेषेण रञ्जितया सुधया धवलनसाधनचूर्णद्रव्येण च चित्रादिनिर्माणं यत्र तादृशं यद्धर्म्यं गृहं तद्रूपस्तत्तुल्योऽधरोष्ठो यस्मिन् तादृशे आस्ये पुरोदृश्यमाने ये दन्तस्रजौ द्वे दन्तमाले राजतः शोभेते, तद्रूपोऽयं पुरो दृश्यमानः तस्या भारत्या मुक्तामणिरचितो हार एव किम्, तद्वत्ते रेजाते इत्यर्थः। सरस्वतीवीणाक्वणिततुल्या तव वाणीत्यर्थः। अत्र प्राधान्येन वाणीवर्णनम्, अन्यत्राङ्गिकम्। पद्मगन्धादिभिर्मुखे भारतीवासोऽनुमीयते। ईश्वराणां गृहं गैरिकादिविचित्रं भवति गैरिकयुक्ता सुधेति वा ॥ १५५ ॥

वाणी मन्मथतीर्थमुज्ज्वलरसस्रोतस्वती[1] कापि ते-खण्डः खण्ड इतीदमीयपुलिनस्यालप्यते वालुका। एतत्तीरमृदैव किं विरचिताः पूताः सिताश्रक्रिकाः-किं पीयूषमिदंपयांसि किमिदंतीरे तवैवाधरौ॥१५६॥

वाणीति ॥ हे भैमि, ते वाणी कापि वर्णयितुमशक्यत्वाल्लोकोत्तरा, अथ च--अनिर्दिष्टनामा, उज्ज्वलरसस्रोतस्वती शृङ्गाररससंबन्धिनी नदी, अथ च निर्मलजला निर्मलजलसंबन्धिनी वा नदी। अत एव--मन्मथस्य तीर्थं कामोद्दीपिका। तथा-इदमीयस्य अस्या नद्याः संबन्धिनः पुलिनस्य संबन्धिनी वालुकैव इक्षुविकाररूपः खण्डं खण्डमित्यालप्यते गीयते। तथा--पूता निर्मलाः शुचिताः शुभ्राश्रक्रिकाः शर्कराकृतचक्राणि एतस्यास्तीरस्य मृदैव धवलमृत्तिकयैव विरचिताः किम्। तथा--पीयूषममृतमस्याः संबन्धीनि पयांसि इदंपयांसि किम्। अस्या जलान्येवामृतत्वेनालप्यन्ते किमित्यर्थः। तथा--तवाधरावेव इदंतीरे अस्या नद्यास्तीरे उभौ तटौ किम्। शृङ्गाररसप्रधाना कामोद्दीपिका भवद्वाणी मधुरतमेति भावः॥ १५६ ॥

परभृतयुवतीनां सम्यगायाति गातुं
न तव तरुणि वाणीयं सुधासिन्धुवेणी।
कति न रसिककण्ठे कर्तुमभ्यस्यतेऽसौ
भवदुपविपिनाम्रे ताभिराम्रेडितेन १५७

परेति ॥ हे तरुणि, प्रादुर्भूतयौवने, सुधासिन्धुवेणी सुधानदीप्रवाहरूपा तवेयं वाणी परभृतयुवतीनां सम्यग्यायात्म्येन गातुं भाषितुं नायाति, यस्माद्धेतोस्ताभिः कोकिलाभिरसौ त्वद्वाणी भवत्या उपवविपिने स्थितो य आम्रवृक्षस्तस्मिन्स्थित्वा रसालाङ्कुरास्वादेन रसिकेऽतिमधुरे, अथच—ममाप्येवंवाणी भवत्वेवंसाभिलापे, कण्ठे कर्तुं कण्ठस्थां कर्तुमाम्रेडितेन पुनःपुनर्घोषणेन कति वारान्नाभ्यस्यते, अपितु बहुवारमभ्यस्यत एव। तस्माद्यापि तासां भवद्वाणी सम्यङ्नायातीति ज्ञायत इत्यर्थः। कोकिलालापादपि त्वद्वाणी मधुरतमेति भावः। भिक्षाटनेन विद्याभ्यासः सुकर इति सूचनार्थं परभृतपदम्। पुमपेक्षया स्त्रीणां विशेषतस्तरुणीनामिति सूचनार्थं युवतिपदम् ॥ १५७ ॥

ऊर्ध्वस्ते रदनच्छदः स्मरधनुर्बन्धूकमालामयं मौर्वी तत्र तवाधराधरतटाधःसीमलेखालता। एषा वागपि तावकी ननु धनुर्वेदः प्रिये मान्मथः-सोऽयं कोणधनुष्मतीभिरुचितं वीणाभिरभ्यस्यते॥ १५८ ॥

ऊर्ध्व इति ॥ हे प्रिये, ते ऊर्ध्वो रदनच्छद ओष्ठ एव बन्धूकमालामयं स्मरधनुः। तवाधराधरतटस्याधस्तनीष्ठभागस्याधःसीमायां पर्यन्तमर्यादायां वर्तमाना लेखा सैव दैर्घ्याल्लता तत्र कामचापे मौर्वी। एषा तावकी वागपि मान्मथः कामसंबन्धी कामाद्वैतप्रतिपादको धनुर्वेद एव। सोऽयं विशिष्टस्त्वद्वाणीरूपो मान्मथो धनुर्वेद उचितं योग्यं यथा तथा कोणधनुष्मतीभिर्वीणावादनधनुर्युक्ताभिर्वीणाभिरभ्यस्यते परमद्यापि नायातीत्यर्थः। त्वद्वाणी वीणाक्वणितादपि मधुरतमेति भावः। धनुर्वेदश्च धनुर्धरैरेवाभ्यस्यते इत्यौचित्यम्। अभ्यस्यत, एतदुचितमिति वा। यत्स्वस्य नायाति तदागमनार्थमभ्यासो ह्युचित एवेत्यर्थः॥ १५८ ॥

स ग्राम्यः स विदग्धसंसदि सदा गच्छत्यपाङ्क्तेयतां-तं च स्प्रष्टुमपि स्मरस्य विशिखा मुग्धे विगानोन्मुखाः। यः किं मधिवति नाधरं

---

१ अत्राप्यनुप्रासः; उत्प्रेक्षा रूपकं च २ अत्राप्यनुप्रासः, रूपकं चोत्प्रेक्षा च।

१ अत्र मालिनीवृत्तम्। अत्रानुप्रासः, रूपकं, कति नाभ्यस्यतइत्युत्प्रेक्षा व्यतिरेकश्च। २ अत्राग्रिमेच पद्ये शार्दूलविक्रीडितं वृत्तम्। अत्रानुप्रासो रूपकं चोत्प्रेक्षा च।

**तव कथं हेमेति न त्वद्वपुः—कीदृङ्नाम सुधेति पृच्छति न ते दत्ते गिरं चोत्तरम् ॥ १५९ ॥**

स इति ॥ हे मुग्धे सुन्दरि, यः पुरुषः मधु किंनामेति पृच्छति प्रश्नं कुर्वाणे जने विषये तवाधरमेवोत्तरं न दत्ते, स ग्राम्यः पामरोऽचतुरः, नतु नगरनिवासयोग्य इत्यर्थः । तथा—हेम किं प्रकारकमिति प्रश्नं कुर्वाणे यस्त्वद्वपुरेवोत्तरं न दत्ते, स विदग्धानां चतुराणां संसदि सभायां सदाऽपाङ्क्तेयतां पङ्क्तिबहिर्भूतत्वं पातित्यं गच्छति । तेषां पङ्क्तौ नोपवेश्यते सोऽप्यचतुर इत्यर्थः। तथा—सुधा नाम कीदृक् इति च प्रश्नं कुर्वाणे ते गिरं चोत्तरं न दत्ते, स्मरस्य विशिखास्तं च पुरुषं स्प्रष्टुमपि विगानोन्मुखा जुगुप्सायै कृतोद्यमाः, 'नीरसोऽयम्' इति जुगुप्सयां तं न स्पृशन्ति न निन्दन्तीति किं वाच्यम्, सोऽप्यचतुर इत्यर्थः । त्वद्वाणी सुधाया अपि मधुरतमेति भावः। अधरादिवर्णनं तु प्रासङ्गिकम् । ग्राम्यः, 'ग्रामाद्यखञौ ४।२।९४'इति भवार्थे यः। पाङ्क्तेयः, नद्यादिभ्यो ढक् ४२।९७'इति नद्यादित्वाड्ढक् ॥१५९ ॥

**मध्ये बद्धाणिमा यत्सगरिममहिमश्रोणिवक्षोजयुग्मा—जाग्रच्चेतोवशित्वा स्मितधृतलघिमा मां प्रतीशित्वमेपि । सूक्तौ प्राकाम्यरम्या-दिशि विदिशि यशोलब्धकामावसाया—भूतीरष्टावपीशस्तदर्दित मुदितः स्वस्य शिल्पाय तुभ्यम् ॥ १६० ॥**

मध्ये इति ॥ हे प्रिये, त्वं यस्माद्धेतोर्मध्ये उदरभागे बद्धो धृतः अणिमा सौक्ष्म्यातिशयो यया सा कृशोदरी, तथा—गरिममहिमभ्यां गुरुत्वमहत्त्वाभ्यां सह वर्तमानं श्रोणिर्नितम्बः वक्षोजयुग्मं च यस्याः सा गुरुस्थूलनितम्बा महोच्चकुचा च । तथा—जाग्रत् स्फुरद्रूपं चेतसि वशित्वं जितेन्द्रियता यस्याः सा पतिव्रता । तथा-स्मिते ईषद्धासेऽपि धृतो लघिमाल्पत्वं यया सा, अल्पहासा । तथा-मां प्रत्युद्दिश्य ईशित्वं स्वामितामेपि मम प्राणेश्वरा । तथा सूक्तौ वचनचातुर्ये विषये प्राकाम्येन प्रकारबाहुल्येन रम्या वक्रोक्त्यादिनानाप्रकारां वाणीं वक्तुं यो यथा वाञ्छति तं प्रति तथा वक्तुं त्वमेव जानासि नान्या । तथा दिशि प्राच्यादौ विदिशि आग्नेय्यादौ च यशसः सौन्दर्यादिविषये कीर्तेः कीर्त्या वा कृत्वा लब्धः कामेन स्वेच्छयाऽप्रतिहतप्रसरोऽवसायो गतिर्यया सा त्रैलोक्यप्रसरकीर्तिरेवंविधा. यस्मात्, तत्तस्मात्कारणान्मुदितो हृष्ट ईश ईश्वरस्त्वां निर्माय सौन्दर्यादिना परितुष्टः सन् अणिमादीरष्टावपि भूतीर्महासिद्धीस्तुभ्यं स्वस्य शिल्पाय त्वद्रूपाय निजनिर्माणाय अदित प्रायच्छत् । संतुष्टो हि पित्रादिरपत्यादेः स्वयंधृतमलंकारादि ददाति । तथेश्वरेण संतुष्य स्वयं धृतम् 'अणिमा, महिमा, गरिमा, लघिमा, ईशित्वम्, वशित्वम्, प्राकाम्यम्, कामावसायिता च' इत्येवमष्टविधमैश्वर्यं तुभ्यं दत्तम् । अन्यथैतत्त्वयि कथं स्यादित्यर्थः । एवं सूक्तिः कस्याश्चिदपि नास्तीति भावः । शब्दश्लेषश्चकिञ्चिच्छलेनैतत्सर्वमुक्तमिति ज्ञेयम् । वाणीवर्णन एव तात्पर्यम् , मध्यादिवर्णनं प्रासङ्गिकम् । अणिमादौ, 'पृथ्वादिभ्य इमनिज् वा । ५ ।१। १२२' इतीमनिच् । वश इन्द्रियाणां स्वाधीनत्वम्, तदस्यास्तीति वशी, तद्भावो वशित्वं जितेन्द्रियत्वम् । ईशनमीशः ऐश्वर्यं तदस्यास्ति ईशी तद्भावः ॥ १६० ॥

**त्वद्वाचः स्तुतये वयं न पटवः पीयूषमेव स्तुमस्तस्यार्थे गरुडामरेन्द्रसमरः स्थाने स जानेऽजानि । द्राक्षापानकमानमर्दनसृजा क्षीरे दृढावज्ञया—यस्मिन्नाम धृतोऽनया निजपदप्रक्षालनानुग्रहः ॥ १६१ ॥**

त्वदिति ॥ हे प्रिये, वयं त्वद्वाचः स्तुतये न पटवः, तस्मात्पीयूषममृतमेव स्तुमः । तस्यामृतस्यार्थेऽमृतनिमित्तं स पुराणादिप्रसिद्धो गरुडस्यामरेन्द्रस्य च समरः अजनि स्थाने युक्तं तदित्यहं जाने मन्ये। नाम यस्माद्धेतोरनया तव वाण्या यस्मिन्नमृते निजपदयोः प्रक्षालनैव अनुग्रहो धृतः कृतः । किंभूतया—द्राक्षापानकस्य पक्वद्राक्षासंबन्धिनः संस्कृतरसविशेषस्य मानोऽहंकारः तस्य मर्दनं खण्डनं सृजति तया । तथा—क्षीरे दुग्धे विषये दृढा अन्येन त्याजयितुमशक्यावज्ञा यस्यास्तया।अथ च—यस्मिन्पीयूषे भवद्वाक्यभूतया वाण्या स्वीयसुप्तिङन्तरूपाणां पदानां प्रक्षालनादनुपश्चाद्ग्रहणं ग्रहः कृतोऽस्त्येव । अमृतक्षालिततयेव निर्दोषं मधुरं च त्वं वदसीत्यर्थः ।

१ अत्रोत्प्रेक्षा तया च व्यतिरेको ध्वन्यते ।

१ अत्र स्रग्धरा वृत्तम्, अनुप्रासः, शब्दालङ्कारः; काव्यलिङ्गं स्वर्थालङ्कारः ।

द्राक्षाक्षीरे तिष्ठतां, पीयूषादपि त्वद्वाणी मधुरतमेति भावः। प्रभोर्यस्मिन्ननुग्रहातिशयः स एव चरणक्षालनादि करोति ॥ १६१ ॥

**शोकश्चेत्कोकयोस्त्वां सुदति तुदति तद्वाचहराज्ञाकरस्ते–गत्वा कुल्यामनस्तं व्राजितुमनुनये भानुमेतज्जलस्थम् । बद्धे यद्यञ्जलावप्यनुनयविमुखः स्यान्ममैकग्रहोऽयं दत्त्वैवाभ्यां तदम्भोञ्जलिमिह भवतीं पश्यमामेष्यमाणम् ॥ १६२ ॥**

शोक इति ॥ हे सुदति, कोकयोर्विरहजनितः शोकः सदयत्वात्त्वां चेत्तुदति तर्त्तहि व्याहर आज्ञापय । ते आज्ञाकरोऽहं कुल्यां गत्वा एतस्याः कुल्याया जलस्थमुदकप्रतिबिम्बितं भानुं सूर्यमनस्तमस्तभावं व्रजितुं प्राप्तुम् अस्तमगन्तुम्, यद्वा—अनस्तमस्ताचलप्रतियोगिभूतमुदयाचलं गन्तुमनुनये प्रार्थये । इदानीं त्वयास्तो न प्राप्तव्यः पुनरुदयाचलो वा गन्तव्य इत्येवं सूर्यं करसंपुटयोजनपूर्वं सम्प्रार्थय्य पुनः प्राचीं नेष्यामीति यावत् । यदि मयाञ्जलौ बद्धेऽप्ययं सूर्यो ममानुनये प्रार्थनायां विमुखः स्यात्, । यतः—एकः केवलो ग्रहोऽभिनिवेशो यस्य, अथ च—मुख्यो ग्रहो ग्रहराजः तर्त्तहि सूर्यार्घ्यदानसम्बन्धिनमम्भोञ्जलिमाभ्यां कोकाभ्यामेव दत्त्वा इह प्रासादे भवतीं प्रति पुनरेष्यमाणमागमिष्यन्तं मां पश्य । एवं कोकशोकापनोदनव्याजेन 'बहिः संध्यामुपासीत' इति वचनात्सायंसंध्योपासनानिमित्तं बहिर्निर्गमनार्थमनुज्ञां याचितवानिति भावः । सुदतीत्यनेनोक्त्यनन्तरमीषद्दशनाकिरणप्रकाशेन मम महानानन्दो जनिष्यते तदर्थं व्याहरेति प्रार्थ्यस इति सूच्यते । दत्त्वेवेति पाठे–उत्प्रेक्षा । एष्यमाणम्, गत्यर्थादीङो लटः शानच् ॥ १६२ ॥

**तदानन्दाय त्वत्परिहसितकन्दाय भवती निजालीनां लीनां स्थितिमिह मुहूर्तं मृगयताम् । इति व्याजात्कृत्वाऽऽलिपु चलिताचित्तां सहचरीं–स्वयं सोऽयं सायंतनविधिविधित्सुर्बहिरभूत् ॥ १६३ ॥**

तदिति ॥ सोऽयं नलः स्वयं सायंतनं विधिं संध्याग्निहोत्रादिकं कर्म विधित्सुः कर्तुकामः सन् प्रासादाद्बहिरभूत्, निरगादित्यर्थः । किं कृत्वा—इतिव्याजादेवंप्रकारेण सूर्यानुनयसखीगवेषणामिषेण सहचरीं भैमीमालिपु सखीपु चलितं गवेषणोत्सुकं चित्तं यस्यास्तादृशीं कृत्वा । इति किम्—हे प्रिये, अहं सूर्यानुनयार्थं नदीं प्रति गमिष्यामि, भवती च निजालीनां निजसखीनामिहात्रैव कस्मिंश्चित्प्रदेशे त्वया न द्रष्टव्यमिति लीनां गुप्तां स्थितिं त्वत्कर्तृकं त्वत्कर्मकं वा परिहसितं परिहासक्रीडैव कन्दो मूलमुत्पत्तिहेतुर्यस्य तादृशं यत्तज्जनिताय तासां सखीनामानन्दाय मुहूर्तं मृगयतां गवेषयत्विति । एवं तद्वचनाद्भैमी क्वचिल्लीनाःसखीर्गवेषयितुं निर्गता,नलोऽपि सायंसंध्यां कर्तुं बहिर्निरगादित्यर्थः । सायंतनेत्यादिनोत्तरसर्गसंगतिः सूचिता । विधिविधित्सुः, 'द्वितीया' इति योगविभागात्समासः ॥ १६३ ॥

**श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । तस्यागादयमेकविंशगणनः काव्येऽतिनव्ये कृतौ भैमीभर्तृचरित्रवर्णनमये सर्गो निसर्गोज्ज्वलः ॥ १६४ ॥**

श्रीहर्षमिति ॥ तस्य कृतौ श्रीहर्षकृते अतिशयेन नव्येऽपूर्वतरप्रेमपरिपूर्णे भैमीभर्तुश्चरित्रवर्णनं प्राचुर्येण प्रस्तुतं यत्र तादृशे काव्ये एकविंशतेः पूरणं एकविंशं गणनं संख्यानं यस्य, यद्वा—एकविंशतेः पूरणी एकविंशी गणना संख्या यस्य स सर्गोऽगात् समाप्तः। अन्यत् पूर्ववत् ॥ १६४ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे एकविंशः सर्गः ॥

---

१ अत्र शार्दूलविक्रीडितं वृत्तम् । अत्रोत्प्रेक्षा रूपकं च । अत्रस्रग्धरा वृत्तम्, अत्रानुप्रासो यमकं च शब्दालङ्कारौ

१ अत्र शिखरिणी वृत्तम्, अत्रानुप्रासः,यमकं,व्याजादित्यपह्नुतिश्च ।

## द्वाविंशः सर्गः ।

इदानीं पूर्वसर्गान्तप्रस्तावितं सायंकालं वर्णयिष्यन्कविर्द्वाविंशं सर्गमुपक्रमते—

उपास्य सांध्यं विधिमान्तिमाशा-
रागेण कान्ताधरचुम्बिचेताः ।
अवाप्तवान् सप्तमभूमिभागे
भैमीधरं सौधमसौ धरेन्द्रः ॥१॥

उपास्येति ॥ असौ धरेन्द्रो नलः सायंसंध्याप्रान्तभवेनान्तिमाशायाः प्रतीच्या आशाया दिशो रागेण रक्तवर्णेन हेतुना कान्ताया अधरचुम्बि अधरोष्ठस्मारि चेतो यस्य तादृशः संध्यारागसदृशभैम्यधरस्मारी सन् तद्विरहासहिष्णुतया बहिरवस्थातुमशक्तो यत्र सा विद्यते तं सप्तमे भूमिभागे कक्षायां स्थितं भैम्याः धरं पर्वतरूपं सौधं हर्म्यं प्रासादस्य सप्तमीमुपकारिकामवाप्तवान् । किं कृत्वा—सान्ध्यं सन्ध्यासम्बन्धिनं सन्ध्याजपादिविधिमुपास्य कृत्वा ॥ १ ॥

प्रत्युद्व्रजन्त्या प्रियया विमुक्तं
पर्यङ्कमङ्कस्थितसज्जशय्यम् ।
अध्यास्य तामप्यधिवास्य सोऽयं
सन्ध्यामुपश्लोकयति स्म सायम् ॥२॥

प्रतीति ॥ सोऽयं नलः सायंकालसंबन्धिनीं संध्यां रात्रिदिनसंबन्धिनं मुहूर्तं भैम्याः पुर उपश्लोकयति स्म श्लोकैः स्तौति स्म । किं कृत्वा—प्रत्युद्व्रजन्त्या संमुखमागच्छन्त्या प्रियया विमुक्तम् । अङ्के मध्ये स्थिता सज्जा आस्तृता शय्या तूलिका यत्र तं पर्यङ्कमध्यास्य स्वयमधिष्ठाय तां भैमीमप्यधिवास्य तत्रोपवेश्य । पर्यङ्कम्, 'अधिशीङ्स्थासां कर्म १।४।४६' इति कर्मत्वम् । अधिवास्य, ण्यन्ताद्वस्तेर्ल्यप् । तस्य धात्वन्तरत्वात् 'उपान्वध्याङ्वसः १।४।४८' इति कर्मत्वाप्राप्तेस्तामधिवास्येत्यत्र सामर्थ्यात्तत्रैवेति ज्ञेयम् । उपश्लोकयति, 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३।१।२५' इति णिच् । 'स्मोत्तरे लङ् च ३।३।१७६' इति स्मयोगे भूते लट् ॥ २ ॥

विलोकनेनानुगृहाण ताव-
द्दिशं जलानामधिपस्य दारान् ।
अक्षालि लाक्षापयसेव येय-
मपूरि पङ्कैरिव कुङ्कुमस्य ॥ ३ ॥

विलोकनेनेति ॥ हे प्रिये, त्वं जलानामधिपस्य वरुणस्य दारान् भार्यां पश्चिमां दिशं विलोकनेनानुगृहाण कृतार्थीकुरु, तावदादौ विलोकनेनानुगृहाण, वर्णनया तु पश्चादित्यर्थः । यावच्चन्द्रोदयादिना प्राच्यां रामणीयकं भवति तावत्संध्यारागेण कृतरामणीयकां पश्चिमां दिशं विलोकयेति वा तावच्छब्दार्थः । जलाधिपस्य च भार्या दुःखिता विलोकनादिनानुग्रहीतुमर्हा भवतीत्युक्तिः । येयं पश्चिमा दिक् लाक्षापयसालक्तकरसेन कृत्वा केनाप्यक्षालीव क्षालितेव । तथा—कुङ्कुमस्य पङ्कैः कृत्वा केनाप्यपूरीव पूरितेव । एवंविधा रक्ता दृश्यते, यतस्तस्माद्रमणीयामेतां विलोकयेत्यर्थः ॥ ३ ॥

उच्चैस्तरादम्बरशैलमौले-
श्च्युतो रविर्गैरिकगण्डशैलः ।
तस्यैव पातेन विचूर्णितस्य
सन्ध्यारजोराजिरिहोज्जिहीते ॥ ४ ॥

उच्चैरिति ॥ हे प्रिये, रविरेव गैरिकाख्यधातुविशेषसंबन्धी गण्डशैलः उच्चतरादत्युन्नतादम्बरशैलस्य गगनगिरेर्मौलेः शिखरात्तकाशाच्च्युतः पतितः स्थूलपाषाण एवाधः पतितः, अथच—संनिहितः, पातेनोच्चतरगिरिशिखरादधः पतनेन हेतुना विचूर्णितस्य विशेषेण सूक्ष्मचूर्णीकृतस्य तस्यैव गैरिकगण्डशैलस्य संबन्धिनी संध्यैव रजोराजिः । संध्यासंबन्धी राग इत्यर्थः । इह सायंकाले पश्चिमदिशि वा उज्जिहीते उपरिष्टात्प्रसरति । अस्तसमये सूर्यस्य रक्तत्वाद्गगनगिरिशिखराच्च्युतत्वाच्च गैरिकगण्डशैलत्वम् । उच्चतरात्प्रदेशात्पतितो गण्डशैलश्चूर्णीभवति चूर्णीभूतस्य च रजोराजिरूर्ध्वं प्रसरति तद्रजोराजिरेव सन्ध्यारागः प्रायेणोर्ध्वं प्रसरतीत्यर्थः ॥ ४ ॥

---

१ इतः प्रभृति सर्गे प्रायः समाप्यन्त्युपेन्द्रवज्रेन्द्रवज्रावृत्तयोर्मेलनात्तयोरुपजातिश्छन्दः । २ अत्रानुप्रासः परिकरश्च ।

१ अत्रानुप्रासः, स्वभावोक्तिश्च । २ अत्रानुप्रासः, उत्प्रेक्षा च । ३ अत्रोत्प्रेक्षा रूपकं च ।

अस्ताद्रिचूडालयपक्कणालि-
च्छेकस्य किं कुक्कुटपेटकस्य ।
यामान्तकूजोल्लसितैः शिखौघै-
र्दिग्वारुणी द्रागरुणीकृतेयम् ॥ ५ ॥

अस्तेति ॥ हे प्रिये, कुक्कुटानां पेटकस्य समूहस्य यामान्ते प्रहरान्ते या कूजा शब्दितं तद्वशादुल्लसितैः प्रकाशमानैः किंचिदुच्चीभूतैरुत्फुल्लजपाकुसुमतुल्यैः शिखानां शिरसि रक्तचर्ममयकेसराणामोघैर्वृन्दैः किमियं वारुणी दिक् द्राक् अकस्मादरुणीकृता रक्तीकृता । उत्प्रेक्षा । किंभूतस्य—अस्ताद्रेश्चूडा शिखरं सैवालयः स्थानं यस्य स पक्कणः शबरगृहं तस्यालिः समूहस्तत्र च्छेकस्यासक्तस्य शबरैर्गृहेषु संगृहीतस्य । कुक्कुटानां कूजनेनोन्नमितशिखत्वं जातिः । ते च यामान्ते कूजन्ति सायंसमये कूजनादुत्फुल्लशिखावृन्दसंबन्धादरुणभवनसंभवार्थं यामान्तेत्याद्युक्तम् । 'पक्कणः शबरालयः' 'गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इति चामरः । 'पेटकं पुस्तकादीनां मञ्जूषायां कदम्बके' इति विश्वः॥५॥

पश्य द्रुतास्तंगतसूर्यनिर्य-
त्करावलीहैङ्गुलवेत्रयाऽत्र ।
निषिध्यमानाहनि सन्ध्ययाऽपि
रात्रिप्रतीहारपदेऽधिकारम् ॥६॥

पश्येति ॥ संध्यया अत्र सायंसमये चन्द्रस्य नायिकाया रात्रेः सम्बन्धिनः प्रतीहारस्य दौवारिकस्य पदे अधिकारमास्पदमपि पश्य विलोकय । किंभूतया—द्रुतं शीघ्रमस्तं गतस्य सूर्यस्य निर्यती बहिर्निर्गच्छन्ती करावली किरणपरम्परैव हैङ्गुलं हिङ्गुलाख्येन रक्तकरक्तद्रव्यविशेषेण रक्तं वेत्रं दण्डविशेषो यस्यास्तया । किंभूते पदे—निषिध्यमानं निवार्यमाणप्रवेशमहो दिनं यस्मिन् । स्त्रिया हि दौवारिकी स्त्र्येव युक्तेति संध्यैव रात्रेर्दौवारिकी जातेत्यर्थः । सूर्योऽस्तमितः, दिनं गतम्, रात्रिरागतेति सायंसंध्यया ज्ञाप्यत इति भावः । दौवारिकोऽपि हैङ्गुलवेत्रपाणिः सदी प्रविशन्तं कमपि प्रतिषेधयति । 'तिर्यक्करा—' इति पाठे—तिर्यञ्चस्तिरःप्रसारिणश्च ते कराश्चेति । अहनीत्यत्र तत्पुरुषत्वाभावाट्टजभावः ॥६॥

१ अत्राप्युत्प्रेक्षा । २ अत्रोत्प्रेक्षा, रूपकं च ।

महानटः किं नु सभानुरागे
संध्याय संध्यां कुनटीमपीशाम् ।
तनोति तन्वावियताऽपि तार-
श्रेणिस्रजा साम्प्रतमङ्गहारम् ॥ ७ ॥

इदानीं सन्ध्यानक्षत्रसंयोगं वर्णयति—

महानट इति ॥ अत्र हे भैमि, महान् सन्ध्योपासनादिविषयेऽतिप्रशस्तः, तथा—अटति गच्छतीत्येवम्भूतः कालः स प्रकृतः सायंतनः, यद्वा—महान्परमेश्वरो नटो नर्तको यस्मिन् । संध्याकाले हीश्वरो नृत्यति । स प्रकृतः सायंसंध्यासमयः भानोः सूर्यस्य रागे लोहितिमनि सति अस्तमयानन्तरं सूर्यस्य रागमात्रेऽवशिष्टे सति संध्यां संध्याकान्ति किंचित्पीतरक्तवर्णत्वात्कुनटीं 'नेपाली कुनटी गोला' इत्याद्यभिधानात् मनःशिलारूपाम्, —तथा ईशामपि स्वकालस्वामिनीं च, अथ च—समृद्धिमतीं संध्याय सम्यग्विचिन्त्य सांप्रतमिदानीं तन्वा पितृप्रसूरूपत्वाद्ब्रह्मतनुत्वाद्देवतारूपाम्, किंचिदुद्गततया सन्ध्यारागतिरोहितकान्तितया वा कृशया किंचिद्दृश्यया । तथा—वियताऽपि गगनरूपया लक्षणया यावद्गगनं विस्तीर्णया, यद्वा—आ सामस्त्येन व्याप्तं वियद्यया गगनव्यापिन्या च, तारश्रेण्या नक्षत्रपरम्परारूपया स्रजा पुष्पादिमालया हारं तनोति विरचयति किं नु । यद्वा—ताराणां शुद्धमौक्तिकानां श्रेणिर्यत्र तादृश्या ग्रथितमौक्तिकया मालया हारविरचनं युक्तमिति संध्याकालः संध्यामेवंविधां संचिन्त्य नक्षत्रपरम्परामेव हारं विरचयति किमित्यर्थः । संध्यारागः कियानवशिष्टोऽस्ति,मुक्तातुल्यानि नक्षत्राणि च किंचिद्दृश्यानि जातानीति भावः । तन्वा तारश्रेणिस्रजोपलक्षितेन तद्युक्तेन वियता गगनेनैव हारं तनोतीति वा । संध्यामेवंविधां विज्ञाय तूष्णींभूत इति न, किंत्वौचित्यादिविशिष्टया तारश्रेणिस्रजा हारमपि विरचयतीत्यर्थ इति वापिशब्दार्थः । अथ च—स प्रसिद्धो महानटस्ताण्डवनृत्तकर्ता शिवो भानोः सूर्यस्य रागे सति । अस्तमितार्धे सूर्ये सतीति यावत् । तत्र संध्यासमये मनःशिलातुल्यवर्णामचिरस्थास्नुत्वात्कुत्सितनर्तकीरूपां वा ईशां देवीं संध्यां सम्यग्ध्यात्वा सायंसंध्यावन्दनं कृत्वाष्टासु मूर्तिषु मध्ये तारापरम्परैव माला यस्यां तया गगनरूपयापि अमूर्तयापि मूर्त्या कृत्वा इदानीं संध्यावन्दनानन्तरमङ्गहारं मुखकरपार्श्वाङ्गानां समतालमानं विक्षेपं करोति किंस्विति वितर्कः । अमूर्तस्याङ्गहारकरणं चित्रमिति विरोधार्थोऽपिशब्दः । न

केवलं चन्द्रसर्पभोगादिभूषितयैव तन्वाङ्गहारं करोति किंतु वियतापि तन्वेति समुच्चयार्थो वा। ईश्वरो हि सायंसमये नृत्यति । भानुरागे मनःशिलातुल्यवर्णां संध्यामपीशां स्वसहचरीं पार्वतीं विचिन्त्य विशिष्टया वियद्रूपयापि तन्वाङ्गहारं तनोति । पार्वतीसमीपेऽपीश्वरो नृत्यति ॥

यद्वा—महेति ॥ महानतिप्रवीणो नटः कुत्सितां नटीं नृत्तेऽनतिचतुरामपि संध्यां वयःसंधौ वर्तमानां तरुणीं रसभावसंधौ वर्तमानां वा रसभावज्ञाम्, अत एव— सभाया अनुरागे ईशां सभ्यानुरागजनने समर्थां संचिन्त्य वियत्तुल्ययातिविशालया शुद्धमौक्तिकपरम्परारूपया मालयोपलक्षितया तन्वाङ्गहारं तनोति तदसांप्रतं किम्, अपितु—रसभावादि जनयन्त्या तया सभ्यानुरागे समुत्पादितेऽपि नृत्तकर्मकौशलेनापि सभ्यानुरागार्थं स्वयमङ्गहारं तनोतीति युक्तमेवेत्यर्थः ॥

यद्वा—महेति ॥ महान्नर्तको वयःसंधौ रसादिसंधौ वा वर्तमानां तथा समृद्धिमतीमपि स्त्रियं कुत्सितां नटीं नृत्तानभिज्ञां ज्ञात्वा सभानुरागे निमित्ते विशिष्टया तन्वा स्वयमङ्गहारं तनोति तदसांप्रतं किं नु, अपितु तस्या नृत्यकौशलाभावान्नृत्तेन सभानुरञ्जने सामर्थ्याभावात्सभानुरञ्जनार्थं स्वयमेव निपुणं नृत्यतीति युक्तमेवेत्यर्थः ॥

यद्वा—महेति ॥ अन्योऽपि महानतिसमृद्धोऽटति सर्वत्र गच्छति तादृशोऽतिचञ्चलोऽतिप्रसिद्धो विटः कुनटीमपि नृत्तविद्यायामचतुरामपि मया कायकान्त्या कृत्वा योऽनुरागस्तद्विषये ईशां सौन्दर्यातिशयेनैव रागमुत्पादयन्तीम्, तथा—शैशवतारुण्ययोः संधौ वर्तमानां प्रादुर्भूतयौवनां रसभावसंधिस्थत्वाद्रसभावज्ञां वा संचिन्त्य कायकान्त्यानुरागे सति कुनटीमपि तरुणीं रसभावज्ञां वा तथेशां संपन्नां च विचिन्त्य तदीयशरीरस्यातिविस्तृततया शुद्धमौक्तिकमालया हारं विरचयति । तत्रानुरक्तः संस्तस्यै मुक्ताहारं वितरतीत्यर्थः । एवमन्या अपि योजनाः सुधियोहनीयाः । 'सभानुरागैः सभाय' इति पाठो बहुषु पुस्तकेष्वदृष्टत्वादुपेक्ष्यः । अटः, 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४' इति पचाद्यच् । संध्याम्, 'दिगादिभ्यो यत् ४ । ३ । ५४' इति यत् । तारशब्दस्य नक्षत्रकनीनिकाभिधायित्वं दशमसर्गे एवोक्तम् ॥ ७ ॥

१ अत्रानुप्रासः, उत्प्रेक्षा, श्लेषश्च ।

भूषास्थिदाम्नस्त्रुटितस्य नाट्यात्
पश्योडुकोटीकपटं वहद्भिः ।
दिङ्मण्डलं मण्डयतीह खण्डैः
सायंनटस्तारकराट्किरीटः ॥ ८ ॥

भूषेति ॥ हे भैमि, तारकराट् चन्द्रः किरीटो यस्य स शंभुः सायं नटतीति सायंनटो नर्तक उद्धतान्नाट्यान्नृत्ताद्धेतोस्त्रुटितस्य भूषास्थ्नां दाम्नो मालाया उच्छलितैः खण्डैः शकलैस्तैरेव उडुकोटीकपटं कोटिसंख्यनक्षत्रव्याजं वहद्भिर्धारयद्भिः सद्भिरिह सायंसमये दिङ्मण्डलं मण्डयति पश्य । एतानि नक्षत्राणि न, किंतु ताण्डवत्रुटितास्थिमालोच्छलच्छकलान्येव दिक्षु शोभन्त इत्यर्थः । अन्योऽपि चन्द्रतुल्यकिरीटो नृत्यंस्त्रुटितहारखण्डैः स्त्रीवन्दं मण्डयति । 'मण्डयतीव' इति पाठे—उत्प्रेक्षा ॥ ८ ॥

कालः किरातः स्फुटपद्मकस्य
वधं व्यधाद्यस्य दिनद्विपस्य ।
तस्यैव संध्या रुचिरास्रधारा
ताराश्च कुम्भस्थलमौक्तिकानि ॥ ९ ॥

कालइति ॥ हे प्रिये, कालः संध्यासमय एव किरातः, अथच—कृष्णवर्णो हिंसकत्वान्मृत्युरूपो वा कालो गिरिमहारण्यसंचारी शबरः स्फुटानि विकसितानि पद्मानि यस्मिन् । यद्वा—विकसितकमलं कं जलं यस्मिन्, अथ च—प्रकटीभूतं शुण्डादण्डाग्रे प्रकाशमानं पद्मकं रक्तबिन्दुवृन्दं यस्मिंस्तादृशस्य दिनरूपस्य द्विपस्य वधं व्यधादकरोत् । तस्यैव हतस्य करिणो रुचिराः रम्या संध्यास्रधारा रुधिरधारा ताराश्च नक्षत्राणि विदारिततदीयकुम्भस्थलमौक्तिकानि । संध्यारागो रक्तधारा ताराश्च स्थूलमुक्ता इव शोभन्त इत्यर्थः । स्फुटपद्मकस्येति बहुव्रीहौ कप् ॥ ९ ॥

सन्ध्यासरागः ककुभो विभागः
शिवाविवाहे विभुनाऽयमेव ।
दिग्वाससा पूर्वमवैमि पुष्प-
सिन्दूरिकापर्वणि पर्यधायि ॥ १० ॥

१ अत्रोत्प्रेक्षा, अपह्नुतिश्च । २ अत्र रूपकम्, उत्प्रेक्षा च ।

सन्ध्येति ॥ विभुना प्रभुणा हरेण पूर्वं शिवायाः पार्वत्या विवाहावसरे संध्यया सरागो रक्तवर्णोऽयमेव ककुभः पश्चिमाशाया विभागः प्रदेशः पुष्पवर्णयुक्ता सिन्दूरिका रक्तवस्त्रं तत्सम्बन्धिनि तद्योगात् पुष्पसिन्दूरिकाख्ये पर्वण्युत्सवे पर्यधायि परिहितः । यतो दिग्वलयमेव वासो यस्य तेन रक्तवस्त्रपरिधानावसरेऽपि दिग्वासस औचित्याद्रक्तदिग्भाग एव परिहित इत्यवैमि शङ्के । विवाहस्य चतुर्थे दिने प्रथमदिनपरिहितानि वस्त्राणि प्रक्षालनार्थं परित्यज्य पुष्पसिन्दूरिकाख्यपर्वणि कौसुम्भादिरक्तवस्त्राणि वधूवरेण परिधीयन्त इति वृद्धाचारः । तत्रेशस्य दिग्वसनत्वाद्रक्तपश्चिमभाग एवानेन परिहित इत्यर्थः । वर्णकभूतपुष्पस्थाने ताराः, सिन्दूरिकास्थाने संध्यासरागः पश्चिमदिग्भाग इति भावः॥१०॥

सतीमुमामुद्वहता च पुष्प-
सिन्दूरिकार्थं वसने सुनेत्रे ।
दिशौ द्विसन्धीमभि रागशोभे
दिग्वाससोभे किमलम्भिषाताम्॥११॥

प्रातःसायंसन्ध्ययोः प्राचीप्रतीच्योर्द्वयोरपि तुल्यवर्णत्वात्सायंसंध्यारक्तपश्चिमदिश एव पुष्पसिन्दूरिकात्वं कथं वर्ण्यत इत्याक्षेपे तत्परिहारार्थं प्राच्य अपि तद्भावमाह—

सतीमिति ॥ हे सुनेत्रे, सतीं दाक्षायणीमुमां पार्वतीं चोद्वहता परिणयता दिग्वाससा हरेण पूर्वोक्तपुष्पसिन्दूरिकार्थं द्विसंधीम् अभि द्वे अपि प्रातःसायंसंध्ये लक्ष्यीकृत्य द्वे प्राचीप्रतीच्यौ दिशावेव रागेण रक्तवर्णेन शोभा ययोस्ते, रक्तवर्णेन शोभते इति वा, तादृशे रक्ते उभे द्वे वसने अलम्भिषातां प्रापिते किम् । विवाहद्वये संध्याद्वयरक्तदिग्द्वयमेव दिग्वसनत्वाद्रक्तवस्त्रद्वयं शिवेन लम्भमित्यहं मन्य इत्यर्थः । शिवेन द्वे दिशावेव वस्त्रे द्वे संध्ये लक्ष्यीकृत्य रागेण रञ्जकद्रव्येण कृत्वा ये शोभे कर्मभूते ते प्रापिते किम् । विवाहे वस्त्रं रञ्जनाय कस्यचित्करे समर्प्यते, तस्माच्छिवेन दिग्वलयरूपे मम द्वे वस्त्रे भवतीभ्यां रक्तशोभे प्रापणीये इति संध्याद्वयमाज्ञप्तं सद्दिग्द्वयं रक्तशोभं चकारेत्यर्थ इति वा । सुनेत्रीति पाठे—'असंयोगोपधात्' इति निषेधान्ङीप् चिन्त्यः । द्विसंधीम्, समाहारद्विगोरेकत्वे 'आवन्तो वा' इति (वा) स्त्रीत्वे च द्विगोः ४।१।२१' इति ङीपि संध्याशब्दस्य तद्धितयदन्तत्वात् 'हलस्तद्धितस्य' ६।४।१५०' इति यलोपः । 'द्विसन्ध्याम्' इति पाठे तु सप्तम्येकवचनं बोध्यम् 'अभिरभागे । १।४।९१' इत्यभेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । गत्यर्थत्वादणौ कर्तुर्णौ कर्मत्वं पक्षे ॥ ११ ॥

आदाय दण्डं सकलासु दिक्षु
योऽयं परिभ्राम्यति भानुभिक्षुः ।
अब्धौ निमज्जन्निव तापसोऽयं
संध्याभ्रकाषायमधत्त सायम् ॥ १२ ॥

आदायेति ॥ योऽयं भानुरेव भिक्षुः परिव्राट् दण्डं पारिपार्श्विकमेव वैणवयष्टिमादाय सकलासु दिक्षु परिभ्राम्यति, सोऽयं तापसः परिव्राट् सायंकाले अब्धौ निमज्जन् पातालं प्रविशन्, अथ च—बहुजले जलाशये स्नानं कुर्वन् संध्यायामभ्रं गगनं तदेव कषायरक्तं वस्त्रमधत्तेव उपरि स्वस्योर्ध्वभागे, अथ च—उच्चतटस्योपरि दण्डस्योपरि वा निजमस्तकोपरि वा धृतवानिव ।) एवं यतिरापि बहुकालावस्थानस्य निषिद्धत्वादुक्तलक्षणः सन् परिभ्रमणे काषायं वस्त्रं धारयति । काषायमिव संध्या शोभत इत्यर्थः । 'माठरः पिङ्गलो दण्डः चण्डांशोः पारिपार्श्विकाः' 'भिक्षुः परिव्राट् कर्मन्दी' इति चामरः । काषायम्, 'तेन रक्तं रागात् ४।२।१' इत्यण् ॥ १२ ॥

अस्ताचलेऽस्मिन्निकषोपलाभे
संध्याकषोल्लेखपरीक्षितो यः ।
विक्रीय तं हेलिहिरण्यपिण्डं
तारावराटानियमादित द्यौः ॥ १३ ॥

अस्तेति ॥ यः सूर्यः अस्मिन्प्रतीच्यां वर्तमाने निकषोपलाभे सुवर्णपरीक्षापाषाणतुल्येऽस्ताचले संध्याराग एव कषोल्लेखः घर्षणोल्लेखस्तेन परीक्षितः । इयं द्यौस्तं हेलिं सूर्यमेव हिरण्यपिण्डं विक्रीय विनिमयेन कस्मैचिद्दत्त्वा ताररूपान्वराटान् कपर्दकानादित जग्राह । उत्तमं सुवर्णं रक्तपीतं भवति । तथाच रक्तपीतसुवर्णगोलकस्य निकषपरीक्षितसुवर्णरेखेव संध्या दृश्यते, ताराश्च वराटा इव दृश्यन्त इत्यर्थः । द्यौरिति

१ अत्रोत्प्रेक्षा ।

अत्रोत्प्रेक्षा । २ अत्र रूपकमुत्प्रेक्षा च ।

लोकव्यवहारानभिज्ञत्वद्योतनार्थं स्त्रीलिङ्गनिर्देशः । स्त्री हि सुवर्णं दत्त्वा मूर्खतया वराटकान्गृह्णाति, धूर्तैन वञ्च्यते च । वराटकव्यवहारे देशे सुवर्णमपि दत्त्वा वराटका एव गृह्यन्ते ॥ १३ ॥

पचेलिमं दाडिममर्कबिम्ब-
मुत्तार्य संध्या त्वगिवोज्झितास्य ।
तारामयं बीजभुजादसीयं
कालेन निष्ठ्यूतमिवास्थियूथम् ॥१४॥

पचेलिममिति ॥ दाडिमबीजभुजा कालेन रक्तमर्कबिम्बमेव पचेलिमं तरोरुपर्येव स्वयं पक्कं दाडिमं फलमुत्तार्य गगनतरोस्त्रोटयित्वा बीजग्रहणार्थं भित्त्वा वा संध्यारुचिस्त्वगिव अस्य दाडिमस्य पक्वत्वाद्रक्तकान्तिरिवोज्झिता परित्यक्ता । तद्बीजभक्षणार्थमुपरितनबीजकोशवत्संध्या पृथक्कृता । तथा—बीजभक्षणानन्तरं तारामयं ताराहूपमदसीयममुष्य दाडिमस्य अमीषां बीजानां वा, संबन्धि अस्थ्नां बीजमध्यस्थश्वेतकणानां यूथं वृन्दं निष्ठ्यूतमिवोद्गीर्णमिव बीजानि भक्षयित्वा गृहीतरसं तदन्तर्गतश्वेतकणवृन्दं पुनस्त्यक्तमिव । नहि कालादन्यः सूर्यदाडिमं भक्षितुं समर्थः। अन्योऽपि दाडिममुत्तार्य तत्त्वचं परित्यज्य बीजान्यास्वाद्य गृहीतरसान्बीजकणांस्त्यक्त्वा त्यजति ॥ १४ ॥

ताराततिर्बीजमिवादमाद-
मियं निरष्ठेवि यदस्थियूथम् ।
तन्निष्कुलाकृत्य रविं त्वगेषा
संध्योज्झिता पाकिमदाडिमं वा ॥१५॥

तारेति ॥ सामर्थ्यात्कालेन कर्त्रा रविमेव तत् पक्रिमं दाडिमं निष्कुलाकृत्य निर्गतबीजकुलं कृत्वा बीजरूपं सारं गृहीत्वा तदीया त्वगेवैषा संध्या उज्झिता । वा शब्दः संभावनायाम् । उज्झिता किमित्याशङ्क्याह —बीजानि आदमादं भक्षयित्वा भक्षयित्वा यस्य सूर्यरूपस्य पक्वदाडिमस्य संबन्धि अस्थियूथमिवेयं ताराततिर्निरष्ठेवि निष्ठ्यूता । जग्ध्वा जग्ध्वा इत्यादमादम्, अदेराभीक्ष्ण्ये णमुल् द्विर्वचनं च । निरष्ठेवि, कर्मणि चिण् । निष्कुलाकृत्य, 'निष्कुलान्निष्कोषणे' इति डाच् । क्षेपकोऽयं श्लोकः ॥ १५ ॥

१ अत्र निकषोपलाभ इत्युपमा परिवृत्तिश्च 'परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः।' इति तल्लक्षणात् । २ अत्र रूपकमुत्प्रेक्षा च । ३ उत्प्रेक्षा काव्यलिङ्गं च ।

सन्ध्याऽवशेषे धृततांडवस्य
चण्डीपतेः पत्पतनाभिघातात् ।
कैलासशैलस्फटिकाश्मखण्डै-
रमण्डि पश्योत्पतयालुभिर्द्यौः ॥ १६ ॥

संध्येति ॥ हे प्रिये, संध्यावशेषे संध्यावन्दनान्ते धृतं ताण्डवनृत्यं येन तस्य चण्डीपतेः पदोश्चरणयोर्द्वंद्वं यत्पतनं तेनाभिघाताद्धेतोरुत्पतयालुभिरुत्पतनशीलैरुच्छलितः कैलासशैलसंबन्धिस्फटिकाश्मनां खण्डैः शकलैर्द्यौरमण्डि अलंकृता पश्य । कैलासस्फटिकखण्डा एव गगने ताराहूपेण शोभन्ते । उत्पतयालुभिः 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ।३।२।१५८।' इत्यालुच् ॥ १६ ॥

इत्थं ह्रिया वर्णनजन्मनेव
संध्यामपक्रान्तवतीं प्रतीत्य ।
तारातमोदन्तुरमन्तरिक्षं
निरीक्षमाणः स पुनर्बभाषे ॥ १७ ॥

इत्थमिति ॥ स नलः पुनर्भैमीं बभाषे । किंभूतः—इत्थमुक्तप्रकारेण वर्णनजन्मना स्तुतिजातया ह्रियेवापक्रान्तवतीं निर्गतां संध्यां प्रतीत्य निश्चित्यान्तरिक्षं गगनं तारातमोभ्यां दन्तुरं मिश्रितं निरीक्षमाणः । अन्योऽप्युत्तमो निजवर्णनजातलज्जयापक्रामति ॥१७॥

रामेषुमर्मव्रणनार्तिवेगा-
द्रत्नाकरः प्रागयमुत्पपात ।
ग्राहौघकिर्मीरितमीनकम्बु
नभो न भोः कामशरासनभ्रूः ॥ १८ ॥

रामेति ॥ हे कामशरासनमेव भ्रुवौ यस्याः, भ्रूदर्शनमात्रेण कामोदयकारिणि भैमि, रामस्य राघवस्य जामदग्न्यस्य वा इषुणा मर्मणो व्रणनाद्भेदनाद्धेतोरुत्पन्ना वा आर्तिः पीडा तस्या वेगादाधिक्याद्धेतोर्निजस्थाने स्थातुमशक्तः सन् भीत्या रत्नाकर एवायं प्राक् तस्मिन्नवसरे उत्पपातोर्ध्वमगात् । नेदं नभः । यः पूर्वमुत्पतितः स श्यामजलः स्फुटरत्नगर्भो रत्नाकर एवायं न त्वेतन्नभ इत्यर्थः । कीदृशः—ग्राहाणां जलचारिणां जन्तूनां वीघस्तेन किर्मीरिता मिश्रिता मीनाः कम्बवः

१ अमण्डीवेति प्रतीतेः प्रतीयमानोत्प्रेक्षा । २ अत्रोत्प्रेक्षा ।

शङ्खाश्च यस्मिन् । नभस्तु ग्रहसंबन्धी ओघः शुक्र-बृहस्पत्याख्यताराग्रहसमूहः ध्रुवमण्डलग्रहसंबन्धी समूहो वा तेन मिश्रितो मीनाख्यो राशिः कम्बुः शङ्खा-कारविशाखानक्षत्रं च यस्मिन् । रघुनाथेन किल सेतु-बन्धसमये शरेण समुद्रो भेत्तुमारब्ध इति तावन्मात्रेण पीडातिशयादुत्पतित इत्युच्यते । परशुरामेणापि निज-वसत्यर्थं समुद्रो बाणेन परास्तः सन्नुत्पतितः । समु-द्रजलस्यैवायं कालिमा, न तु गगनस्य । उत्पतितस्य समुद्रस्याधोदेशे स्थितानि रत्नग्राहादीनि अधःस्थितेन जनेन सुखेन द्रष्टुं शक्यन्ते । मकरकर्कटादयः साक्षा-न्मीनादय एव न तु राश्यादिभूताः, शिष्टाश्च ताराः सामुद्रिकमौक्तिकान्येव, नतु तारा इत्यादि ज्ञातव्यम् । शरासनभ्रूरिति उवङ्स्थानत्वान्नदीत्वाभावाद्ध्रस्वत्वाभावः। ह्रस्वपाठस्तु 'सहैकवंशप्रभवभ्रु' इतिवत्समर्थनीयः । यद्वा शिष्टकविप्रयोगदर्शनाज्ज्ञातव्यः ॥ १८ ॥

मोहाय देवाप्सरसां विमुक्ता-
स्ता राः शराः पुष्पशरेण शङ्के ।
पञ्चास्यवत्पञ्चशरस्य नाम्नि
प्रपञ्चवाची खलु पञ्चशब्दः ॥ १९ ॥

मोहायेति ॥ हे भैमि, पुष्पशरेण कामेन देवानामप्सरसां च मोहायान्योन्यमनुरागसंजननार्थं देवादीनामुपरि वर्तमानत्वाद्विमुक्ता ऊर्ध्वं क्षिप्ताः शुभ्रपुष्परूपाः शरा एव तारा इत्यहं शङ्के । ननु कामस्य पुष्पशरत्वेऽपि पञ्चबाणत्वात्ताराणां बहुतरत्वात्कथं कामबाणत्वमित्याशङ्क्य समर्थयते—खलु यस्मात् पञ्चशरस्य नाम्नि पूर्वपदत्वेन वर्तमानः पञ्चशब्दः प्रपञ्चवाची प्रकृष्टः पञ्चो विस्तारस्तद्वाचकः, न तु संख्यावाचकः 'पचि विस्तारवचने' इति स्वार्थणिजन्ताद्धातोः पचाद्यचि पञ्चयन्ति विस्तृता भवन्ति पञ्चाः शरा यस्येति विग्रहः,न तु पञ्च-संख्याकाः शरा यस्येति । तस्मात्पुष्पबाणत्वं ताराणां युक्तमेवेत्यर्थः । कस्येव—पञ्चास्यवत् 'सिंहो मृगेन्द्रः पञ्चास्यः' इति सिंहाभिधायिनि पञ्चास्यशब्दे सिंहस्य पञ्चसंख्यमुखत्वाभावात् पञ्चयति पञ्चं विस्तृतं भवति विस्तृतमास्यं यस्यासौ पञ्चास्य इति व्युत्पत्त्या पञ्चशब्दो यथा विस्तारवाची तथेति । 'व्यासः प्रपञ्चो विस्तारः' इति हलायुधः ॥ १९ ॥

१ अत्र 'नभो' इति यमकम्,'कामशरासनभ्रूः' इति रूपकं, नभोऽपह्नुत्य रत्नाकरत्वेन रूपणादपह्नुतिश्च । २ अत्रोत्प्रेक्षा, तारा अपह्नुत्य शरत्वेनोत्प्रेक्षणाच्च सा सापह्नवा ।

नभोनदीकूलकुलायचक्री-
कुलस्य नक्तं विरहाकुलस्य ।
दृशोरपां सन्ति पृषन्ति ताराः
पतन्ति तत्संक्रमणानि धाराः ॥ २० ॥

नभ इति ॥ नक्तं विरहेणाकुलस्य पीडितस्य नभोनद्या मन्दाकिन्याः कूलमेव कुलायः स्थानं यस्य तस्य चक्रीकुलस्य चक्रवाकीसमूहस्य दृशोर्नेत्रयोरपामश्रुजलानां पृषन्ति ये बिन्दवः सन्ति त एव तारका अधःस्थितैर्जनैर्दृश्यन्ते । तथा—तासां ताराणां संक्रमणानि पुण्यक्षयवशाद्भूमिं प्रत्यागमनानि गलद्बाष्पजलानां धारा एव पतन्ति । दृशोः सन्ति चिरस्थितिमन्ति यानि बाष्पपृषन्ति तानि तारा इति वा । तत्संक्रमणानि स्थिततराप्रतिबिम्बभूतानि तत्तुल्यानि पतन्ति अधःपातीनि यानि पृषन्ति तानि धारा अश्रुप्रवाहाः । तासां ताराणां संक्रमणानि वीथयो मेषादिसंक्रान्तयो वा धारा अश्रूणां प्रवाहा इति वा । स्त्रियो हि विरहमसहमाना रुदन्ति । सन्ति पतन्तीति च तिङन्तम्, पृषद्विशेषणं वा ॥ २० ॥

अमूनि मन्येऽमरनिर्झरिण्या
यादांसि गोधा मकरः कुलीरः ।
तत्पूरखेलत्सुरभीतिदूरो
मग्नान्यधः स्पष्टमितः प्रतीमः ॥ २१ ॥

अमूनीति ॥ हे प्रिये, गोधाख्यास्तारा गोधा, मकरराशिसंबन्धिन्यस्तारा मकरः, कुलीरः कर्कराशिस्तत्संबन्धिन्यस्ताराः कुलीरः, अमूनि प्रत्यक्षदृश्यान्यमरनिर्झरिण्या मन्दाकिन्या यादांसि जलजन्तव इत्यहं मन्ये । गोधा मत्स्याः कर्कटका अपि जले वर्तन्ते उपरि च दृश्यन्ते । तस्माद्देवनद्या यादांस्येवैतानीत्यर्थः । तर्ह्युपरि वर्तमानेन द्रष्टुं योग्याः, नत्वधः स्थितेनेत्यत आह—तस्या नाकनद्याः पूरे खेलन्तः क्रीडन्तः सुरास्तेभ्यः सकाशाद्भीत्या दूरं तलपर्यन्तं मग्नानि अत एव जलतलगामित्वादधोभागे इतो भूदेशादपि स्पष्टं सुखेन जानीमः । भूभागे स्थिता अपि जलतलगामित्वाद्गोधादियादांसि व्यक्तं पश्याम इत्यर्थः । गोधाकारं ध्रुवमण्डलं, गोधा ज्येष्ठा वा ॥ २१ ॥

१ अत्र रूपकमुत्प्रेक्षा च । २ अत्राप्युत्प्रेक्षा, रूपकं च ।

स्मरस्य कम्बुः किमयं चकास्ति
दिवि त्रिलोकीजयवादनीयः ।
कस्यापरस्योडुमयैः प्रसूनै-
र्वादित्रशक्तिर्घटते भटस्य ॥ २२ ॥

स्मरस्येति॥ त्रिलोकीजये वादनीयो वादनार्हः स्मरस्य संबन्धी अयं प्रत्यक्षदृश्यो विशाखानक्षत्ररूपः कम्बुः शङ्खः दिवि चकास्ति किम् । उच्चतरप्रदेशे वादितं वाद्यं सर्वत्राकर्ण्यत इति गगने स्थापितो लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः किमित्यर्थः । यस्मादपरस्य कस्य भटस्योडुमयैस्ताराभूपैः प्रसूनैः कृत्वा वादित्रशक्तिर्वाद्यनिर्माणं घटतेऽपि । स्मरस्यैव धनुर्बाणानां पुष्परूपत्वदर्शनात्तदीयस्यैव वाद्यस्य पुष्परूपत्वसंभावनाया युक्तत्वात् ताराकुसुमरूपः कामशङ्ख एवायं गगने शोभते, न त्वन्यदीय इत्यर्थः ॥ २२ ॥

किं योगिनीयं रजनी रतीशं
याऽजीजिवत्पद्ममभूमुहच्च ।
योगर्द्धिमस्या महतमिलग्न-
मिदं वदत्यम्बरचुम्बि कम्बु ॥ २३ ॥

किमिति ॥ येयं रजनी योगिनी स्त्रीपुंसयोगवती, अथ च–शाक्तमन्त्रसिद्धा मारणोच्चाटनाद्यभिज्ञा स्त्री किम्। या रतीशं दिवा निर्जीवमिव निजसंनिधेः अजीजिवत् सजीवं चक्रे । पद्ममभूमुहत् पद्मानि च समकोचयत् । रात्रौ हि स्त्रीपुंसयोगे काम उद्दीप्तो भवति, पद्मानि च संकुचन्ति।अलग्नं निराधारमम्बरचुम्बि आकाशवर्ति तारामात्रात्मकत्वादलग्नमराशिभूतं वा इदं प्रत्यक्षदृश्यं कम्बु ताराहूपः शङ्खोऽस्या रात्रियोगिन्या महतीं योगर्द्धिं योगसमृद्धिं वदति । दिवादर्शनाभावादिदानीं दृश्यमानः शङ्खो रात्रिर्जातेति कथयति । योगशक्तिं विना निराधारं वस्तु कथं स्थापयेत् । योगिन्यपि हि मृतमपि कंचिज्जीवयति, कंचिच्च मोहयति मूर्च्छां प्रापयति भ्रान्तं करोति वा तस्माद्योगिनी किमित्युत्प्रेक्षा । कम्बुशब्दस्य नपुंसकत्वमप्यस्तीति पूर्वमेवोक्तं स्मर्तव्यम् । अजीजिवत्, अमूमुहदिति, 'णौ चङ्युपधाया ह्रस्वः ७ । ४ । १ ' इत्युपधाह्रस्वः ॥ २३ ॥

१ अत्रोत्प्रेक्षा रूपकं च । २ अत्रानुप्रासः, रजनीमपह्नुत्य योगिनीत्वेन तत्सम्भावनात्सापह्नवोत्प्रेक्षा च ।

प्रबोधकालेऽहनि बाधितानि
ताराः खपुष्पाणि निदर्शयन्ती ।
निशाह शून्याध्वनि योगिनीयं
मृषा जगद्दृष्टमपि स्फुटाभम् ॥ २४ ॥

प्रबोधेति ॥ हे प्रिये, प्रबोधकाले जागरणसमये, अथ च—सम्यग्ज्ञानोत्पत्तिसमये, अहनि दिने बाधितानि सूर्यदीप्तिध्वस्तकान्तीनि, अथ च—भ्रान्तिकारणनाशानिरुपपत्तीनि, तारा नक्षत्ररूपाणि खपुष्पाणि गगनसंबन्धीनि कुसुमानि नितरां दर्शयन्ती, अथ च—दृष्टान्ती कुर्वती, शून्याध्वनि बौद्धादिशून्यवादिदर्शने विषये योगिनी तद्दर्शनरहस्यं जानती काचित्प्रव्रजितेवेयं निशा स्फुटमाभातिताहशं दृष्टमपि प्रत्यक्षेण प्रतीयमानमपि स्थावरजङ्गमात्मकं सकलं जगन्मृषाऽसत्यमाह ब्रूते । बौद्धादिदर्शनेहि ज्ञानस्यैव बहिर्घटाद्याकारत्वाज्ज्ञानातिरिक्तं सर्वं मिथ्येति तज्ज्ञा योगिन्यपि प्रपञ्चो मिथ्येति दर्शयति, तथेयमपि रात्रिरहन्यदृष्टान्यपि पुष्पतुल्यानि नक्षत्राणि निजयोगाद्गगने दर्शयतीति भावः । निदर्शनं करोतीवेति प्रतीयमानोत्प्रेक्षा ॥ २४ ॥

एणः स्मरेणाङ्कमयः सपत्रा-
कृतो भवद्भ्रूयुगधन्वना यः ।
मुखे तवेन्दौ लसता स तारा
पुष्पालिबाणानुगतो गतोऽयम् ॥२५॥

एण इति ॥ हे भैमि, तव मुख एवेन्दावाह्लादकत्वादिगुणयोगाच्चन्द्रे लसता प्रकाशमानेन, तथा–भवद्भ्रूयुगमेव धनुर्यस्य तेन स्मरेण तव मुखेन्दौ 'विमत मृगवांश्चन्द्रत्वात्संप्रतिपन्नवत्' इत्यनुमानप्रसिद्धो योऽङ्कमयः कलङ्करूप एणो मृगः सपत्राकृतः । मुखे तच्चापदर्शनाज्जठरावस्थितपत्रस्यैव बाणस्यापरपार्श्वे निर्गमनं यथा भवति तथा व्यथितः स एव मृगस्तारापुष्पालिर्नक्षत्ररूपपुष्पपङ्क्तिस्तल्लक्षणो बाणस्तेनानुगतः सन् सहित एव पलाय्य गतोऽयं गगने दृश्यते किम् । चन्द्रे मृगेण भाव्यम्, स चात्र नास्ति, स चापः कामश्च मुखे लसति, गगने मृगशिरो नक्षत्रं मृगाख्यं बाणाकारपुष्पतुल्यताराऽनुगतं दृश्यते । तर्हि कामेन विद्धोऽन्तर्गतपत्रपार्श्वबहिर्निर्गतबाणसहितो व्यथितः पलाय्य गतः स एवायं मृगो

१ अत्र रात्रेर्योगिनीत्वसमर्थनात् तन्मूलोत्प्रेक्षा प्रतीयते ।

दृश्यते किमिति प्रतीयमानोत्प्रेक्षा । 'सपत्रनिष्पत्रादति व्यथने ५।४।६१' इति डाच् ॥ २५ ॥

लोकाश्रयो मण्डपमादिसृष्टि-
ब्रह्माण्डमाभात्यनुकाष्ठमस्य ।
स्वकान्तिरेणूत्करवान्तिमन्ति
घुणव्रणद्वारनिभानि भानि ॥ २६ ॥

लोकेति ॥ हे भैमि, ब्रह्माण्डमादौ सर्वस्मादपि पूर्वं सृष्टिर्निर्माणं यस्य, अथ च—चिरकालनिर्मितं पुराणम् मण्डपमिति आभाति तदिव शोभत इत्यर्थः । यतो—लोकानां त्रयाणामपि आश्रयः ब्रह्माण्डाधारत्वाज्जगताम् । मण्डपोऽपि लोकानामाश्रयः, तच्छायानिवासित्वाल्लोकानाम् । आश्रयनामत्वाच्च । अत एव—अस्य ब्रह्माण्डमण्डपस्य अनुकाष्ठं दिशि दिशि एतत्संबन्धिनीषु सर्वासु दिक्षु, अथ च—एतत्संबन्धीनि काष्ठानि दारूणि लक्ष्यीकृत्य तेषु भानि नक्षत्राणि स्वकान्तिरूपस्योत्वातरेणूत्करस्य संबन्धिनी वान्तिरुद्गारस्तद्वन्ति घुणाख्यकीटनिर्मितो व्रणश्छिद्रं तस्य द्वारं मुखं तन्निभानि तत्तुल्यानि घुणोत्कीर्णदारुरजोयुक्तानि दारुच्छिद्रमुखानीव दृश्यन्त इत्यर्थः । जनाश्रयनामा मण्डपोऽप्यतिजीर्णो यदा भवति तदा तदीयकाष्ठेषु घुणाः पतन्ति, घुणोत्कीर्णगलद्रजोयुक्तानि घुणकृतच्छिद्रमुखानि वृत्तानि श्वेतानि च दृश्यन्ते, तानीव भानि भान्तीति भावः । 'मण्डपोऽस्त्री जनाश्रयः' इत्यमरः । अनुकाष्ठम्, वीप्सायाम्, पक्षान्तरे तु विभक्त्यर्थे, 'अव्ययं विभक्तिसमीपसमृद्धि—२।१।६।' इत्यादिना विभक्त्यर्थेऽव्ययीभावः ॥ २६ ॥

शचीसपत्न्यां दिशि पश्य भैमि
शक्रेभदानद्रवनिर्झरस्य ।
पोप्लूयते वासरसेतुनाशा-
दुच्छृङ्खलः पूर इवान्धकारः ॥ २७ ॥

इदानीं सर्वदिग्व्यापितमोवर्णनं प्राच्यादिक्रमेणोपक्रमते—

शचीति ॥ हे भैमि, अन्धकारः शच्याः सपत्नी दिक् प्राची तस्यां वासररूपस्य सेतोः सूर्यप्रभामर्यादाया नाशात् उच्छृङ्खलो निरर्गलः शक्रेभस्य दानद्रवो दानोदकं तस्य निर्झरः प्रवाहस्तस्य श्यामः पूर इव पोप्लूयते भृशं प्रसरति । प्राच्यां व्याप्नोतीत्यर्थः । त्वं पश्य । प्राच्यामेव चैरावतदानजलप्रवाहपूरसम्भवः । जलपूरोऽपि बन्धापगमादप्रतिहतप्रसरः सन्नतितरां प्रसरति, 'प्लुङ् सर्पणे' इत्यस्माद्भृशार्थे यङ्, द्विर्वचनम् ॥ २७ ॥

रामालिरोमावलिदिग्विगाहि
ध्वान्तायते वाहनमन्तकस्य ।
यद्वीक्ष्य दूरादिव बिभ्यतः स्वा-
नश्वान्गृहीत्वापसृतो विवस्वान् ॥ २८ ॥

दक्षिणदिग्व्यापि तमो वर्णयति—

रामेति ॥ श्रीरामस्यालिः सेतुः सेतुबन्ध एव श्यामत्वाद्रोमावलिर्यस्यास्तस्या दक्षिणस्या दिशो विगाहि नितरां व्यापकम् अन्तकस्य दिक्पतित्वाद्दक्षिणदिक्स्थं तद्वाहनं महिष एव ध्वान्तायते कज्जलनीलोऽन्धकार इवाचरति । विवस्वान् सूर्यः यद्यमवाहनं दूराद्वीक्ष्य सहजाश्वमहिषवैरस्मरणाद्बिभ्यतः सभयान् स्वानश्वान् गृहीत्वापसृतः पलायित इव । दक्षिणदिशि तिमिरं यममहिषवच्छोभत इत्यर्थः । अन्तकपदेन तद्वाहनस्य दारुणत्वं सूचितम्, अत एव ततोऽप्यश्वानां भयं युक्तम् । ध्वान्तायते, 'उपमानादाचारे ३।१।१०' 'कर्तुः क्यङ् सलोपश्च ३।१।११' इति क्यङन्तात्तङ् । 'सेतुरालौ स्त्रियां पुमान्' इत्यमरः ॥ २८ ॥

पक्वं महाकालफलं किलासीत्
प्रत्यग्गिरेः सानुनि भानुबिम्बम् ।
भिन्नस्य तस्यैव दृषन्निपाता-
द्बीजानि जानामितमां तमांसि ॥ २९ ॥

प्रतीचीव्यापितमो वर्णयति—

पक्वमिति ॥ भानुबिम्बं प्रत्यग्गिरेः प्रतीच्यां वर्तमानस्यास्ताचलस्य सानुनि कालवशात्पक्वं महाकालस्यैन्द्रवारुण्याः फलमासीत् किलाहं मन्य इत्यर्थः । तथा—अहमतिपक्वत्वाद्वृन्तश्लथत्वादुच्चतरप्रदेशादधस्ताद् दृषदि शिलायां निपातात्तदभिघाताद्धेतोर्भिन्नस्य विदी-

---

१ अत्र रूपकं प्रतीयमानोत्प्रेक्षा च इति व्या०। २ अत्र भानीति यमकम्, अनुप्रासः, आभातीवेति प्रतीत्या प्रतीयमानोत्प्रेक्षा च ।

१ अत्राप्युत्प्रेक्षा । २ अत्र रामालिरेव रोमावलिरिति रूपकं, ध्वान्तमिवाचरतीत्युपमा, गृहीत्वेवेत्युत्प्रेक्षा च । यत्तद्भ्यां पूर्वोत्तरवाक्यार्थयोः समर्थनात् काव्यलिङ्गं च ।

र्णस्य तस्य भानुबिम्बरूपस्य महाकालफलस्य कृष्णतमानि बीजान्येव तमांसीति जानामितमां नितरां मन्ये । पर्वतादिकठिनभूसमुद्भवं जम्बीरवर्तुलं पक्वं सदतिरक्तं कृष्णबीजं महाकालफलं ग्रहोपसर्गनिवारणार्थं गृहद्वारे वृद्धैर्बध्यते । अस्तमयसमयसंबन्धात्परिणतकालं रक्तं महतः कालस्य फलभूतं च भानुबिम्बं महाकालफलमिव, तमांसि च विदीर्णस्य तस्य कृष्णतमानि बीजानीव प्रसरन्तीत्यर्थः । अन्यदिगपेक्षया प्रतच्यां सायंसमये सूर्यसन्ध्यासम्बन्धिनः प्रकाशस्यासन्नत्वादल्पान्धकारसूचनार्थं तमसां बीजत्वेन निरूपणम् ॥ २९ ॥

पत्युर्गिरीणामयशः सुमेरु-
प्रदक्षिणाद्भास्वदनादृतस्य ।
दिशस्तमश्चैत्ररथान्यनाम-
पत्रच्छटाया मृगनाभिशोभि ॥ ३० ॥

उदीचीव्यापि तमो वर्णयति—

पत्युरिति ॥ चैत्ररथं कुबेरवनं तदेवान्यन्नाम यस्यास्तादृशी पत्रच्छटा पत्रवल्ली यस्याश्चैत्ररथाख्यवनरूपपत्रवल्लीकाया उत्तरस्या दिशो मृगनाभिः पत्रवल्लिरचनासाधनभूता कस्तूरी तद्वच्छोभते एवंशीलं कृष्णतमं तमो गिरीणां पत्युर्हिमाचलस्य अयश एव । यतः—सुमेरोःप्रदक्षिणीकरणाद्भास्वता सूर्येणानादृतस्यावज्ञातस्य । हिमाद्रिर्यद्यपि गिरीणां पतिः, तथापि सूर्यानादृतत्वाद्धीन एव, मेरुरेव महान् । 'अस्योद्यानं चैत्ररथम्' इत्यमरः ॥ ३० ॥

ऊर्ध्वदिग्व्यापितमो वर्णयति—

ऊर्ध्वं धृतं व्योम सहस्ररश्मे-
र्दिवा सहस्रेण करैरिवासीत् ।
पतत्तदेवांशुमता विनेदं
नेदिष्ठतामेति कुतस्तमिस्रम् ॥ ३१ ॥

ऊर्ध्वमिति॥तमालश्यामलं यद्व्योम दिवा सहस्ररश्मेः सहस्रेण सहस्रसंख्यैः करैः किरणैः, अथ च—हस्तैः ऊर्ध्वं दूरोच्चप्रदेशे धृतमिवासीत् तन्नभ एवेदं तमालश्यामलमंशुमता विना सायंसमये सूर्यविनाशाद् धारकेण, तेन विनाधःपतत्सत् नेदिष्ठतामतितमां निकटत्वमेति । तमिस्रं कुतः कस्मादागतम्, अपि तु तिमिरं नाम किमपि नास्ति, किंतु निकटीभवद्गगनमेव तमिस्रमित्यर्थः । पतद्व्योमैव तमिस्रं कुतो भूमौ निकटतामेति न तु तदतिरिक्तं तमोऽस्तीति वा, अन्यदपि तत्कस्यचित्कराभ्यामूर्ध्वं धार्यते, तदभावेऽधः पतत्येव । नेदिष्ठताम्, अतिशायने इष्ठनि 'अन्तिकबाढयोर्नेदसाधौ ५।३।६३' इति नेदादेशः । कुतः, पक्षे सार्वविभक्तिकस्तसिः ॥ ३१ ॥

ऊर्ध्वार्पितन्युब्जकटाहकल्पे
यद्व्योम्नि दीपेन दिनाधिपेन ।
न्यधायि तद्भूममिलद्गुरुत्वं
भूमौ तमः कज्जलमस्खलत्किम् ॥ ३२ ॥

अधोदिग्व्यापि तमो वर्णयति—

ऊर्ध्वेति ॥ समर्थ्याद्विधिना ऊर्ध्वं सूर्यदीपस्यैवोपरि भागे अर्पितो न्युब्जः कज्जलधारणार्थमधोमुखो महान् कटाहः कर्परं तत्कल्पे तत्तुल्ये कृष्णतमे व्योम्नि अधिकरणे प्रकाशकारिणा कज्जलधारणार्थेन दिनाधिपेनैव दीपेन करणेन यत्कज्जलं न्यधायि न्यस्तम्, तत्कज्जलमेव तमो भूम्ना क्रमसंजातबाहुल्येन कृत्वा मिलद् युक्तं पतनाख्यकर्मकारणं गुरुत्वं यस्य तादृशं सद् भूमावस्खलत्वत् किम् । अतिभारेण पतितं किम्, गुरुत्वाद्धि पतनं युक्तम्, तत्कज्जलमेव भूमौ पतितं किम्, अपि तु तमो नाम न किंचिदित्यर्थ इति वा । कज्जलमपि कर्परे धृतं क्रमेण बहु भवद् गुरुत्वादधः पतति । ' कटाहः कर्परे तथा ' इति निघण्टुः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५।३।६७' इति कल्पप् ॥ ३२ ॥

ध्वान्तैणनाभ्या शितिनाऽम्बरेण
दिशः शरैः सूनशरस्य तारैः ।
मन्दाक्षलक्ष्या निशि मामनिन्दौ
सेर्ष्या भवायान्त्यभिसारिकाभाः ॥ ३३ ॥

ध्वान्तेति ॥ ध्वान्तेनैवैणनाभ्या कस्तूर्या । तथा शितिना नीलेनाम्बरेण गगनेन, अथ च—वस्त्रेण, यद्वा—ध्वान्तैणनाभ्या कृत्वा नीलेन गगनेनोपलक्षिताः । तथा—निशितत्वात्पुष्पतुल्यरूपत्वाच्चोज्ज्वलैः तारैर्नक्षत्रै-

---

१ भानुरेव बिम्बमिति विवक्षणात् रूपकम्, पक्वं फलं भानुबिम्बमित्यपि रूपकं च । तमसां च तद्बीजत्वेन रूपणात्साङ्गं तत्, जानामीत्युत्प्रेक्षा च । २ अत्र मृगनाभिशोभीत्युपमा, तसमश्चायशस्त्वेन रूपणाद्रूपकं, तथा रूपणस्य सम्भाव्यमानत्वादुत्प्रेक्षा च ।

१ करैरिति श्लिष्टं, व्योम्न ऊर्ध्वं धृतत्वेनोत्प्रेक्षणादुत्प्रेक्षा पतार्धे च काव्यलिङ्गम् । २ अत्रानुप्रासः, उत्प्रेक्षा च ।

रेव सूनशरस्य कामस्य शरैरुपलक्षिताः, अथ च—तारैरुज्ज्वलैः पुष्पैरुपलक्षिताः । तथा प्रकाशाभावान्मन्दाक्षैर्मन्दनयनैर्नरैर्लक्ष्या लक्षणीयाः, अथ च—मन्दाक्षस्य लज्जाया विषयभूताः सलज्जाः । अत एवाभिसारिकाभाः स्वैरिणीतुल्या दिशोऽनिन्दौ चन्द्ररहितायामनुदितचन्द्रत्वाच्छ्यामायां निशि मामायान्ति प्रत्यागच्छन्ति । तस्मात्त्वपत्नीभ्रान्त्या त्वं सेर्ष्या भव । अभिसारिका अपि शुभ्रायां रात्रौ शुभ्रवस्त्राद्याभरणाः, कृष्णायां च रात्रौ कृष्णवस्त्राद्याभरणाः समायान्ति, ता अपि कस्तूरिकृताङ्गरागा नीलवसनाः प्रच्छन्नधृतपुष्पाः कामबाणपीडिताः सलज्जाः सत्यः कामुकं प्रति समायान्ति, तदीयनायिका च सेर्ष्या भवति तथा दिशोऽपीत्यर्थः । सर्वा अपि दिश एकत्र मिलिता इति प्रतीतिः । तिर्यग्व्यापि तमो वर्णितमनेन । 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिका' इति । 'मन्दाक्षमन्दाः।' इति पाठे मन्दनयनानामलक्ष्यास्तमोबाहुल्यात् । अथ च—तमोबाहुल्यान्मन्दाक्षः, अत एव मन्दगमना इत्यर्थः । तारशब्दः पूर्ववत् । मन्दाक्षेति पुंवद्भावः ॥ ३३ ॥

भास्वन्मयीं मीलयतो दृशं द्राग्
मिथोमिलद्द्व्यञ्चलमादिपुंसः ।
आचक्ष्महे तन्वि तमांसि पक्ष्म
श्यामत्वलक्ष्मीविजितेन्दुलक्ष्म ॥३४॥

भास्वदिति ॥ हे तन्वि कृशाङ्गि, भास्वन्मयीं रविरूपां दक्षिणां दृशमस्तमयव्याजेन द्राक् शीघ्रं मीलयतः संकोचयतः आदिपुंसः श्रीविष्णोर्मिथोऽन्योन्यं मिलन्तौ द्वावप्यञ्चलावूर्ध्वाधः पुटे यस्य निमीलनवशादन्योन्यसंलग्नपुटत्वान्निबिडरोमकम्, अत एव श्यामत्वलक्ष्म्या विजितं नितरां पराभूतमिन्दुलक्ष्म येन तादृशं पक्ष्म नेत्रसंबन्ध्यूर्ध्वाधःपुटपत्त्रीभूतरोमाण्येव तमांसि वयमाचक्ष्महे ब्रूमः, न तु ततोऽन्यानि तमांसीत्यर्थः । तिमिरव्याप्तत्वात्किमपि न दृश्यत इति भावः । पक्ष्मेति जातावेकवचनम् ॥ ३४ ॥

विवस्वताऽनायिषतेव मिश्राः
स्वगोसहस्रेण समं जनानाम् ।
गावोऽपि नेत्रापरनामधेया-
स्तेनेदमान्ध्यं खलु नान्धकारैः ॥३५॥

विवस्वतेति ॥ विवस्वता नेत्रमित्यपरं नामधेयं यासां ताश्चक्षूरूपा जनानां गावोऽपि स्वस्य गवां किरणानां सहस्रेण समं सह मिश्रा दिने मिलिताः सत्योऽनायिषतेव नीता इव । यस्मात्तेन खलु तेनैवेदमान्ध्यं प्रकाशाभावान्नेत्रापगमाच्च रूपाग्रहणं, न त्वन्धकारैः कृतेदमान्ध्यम् । तमोवशात्किमपि न दृश्यत इति भावः । अन्येनापि गोपालेन स्वगोसहस्रेण मिश्रिताः परेषामपि गावो नीयन्त इति ॥ ३५ ॥

ध्वान्तस्य वामोरु विचारणायां
वैशेषिकं चारु मतं मतं मे ।
औलूकमाहुः खलु दर्शनं तत्
क्षमं तमस्तत्त्वनिरूपणाय ॥ ३६ ॥

ध्वान्तस्येति ॥ हे वामोरु, अतिसुन्दरोरु, ध्वान्तस्य विचारणायां तमःस्वरूपनिरूपणविषये वैशेषिकं मतं षट्पदार्थसाधर्म्यवैधर्म्यनिरूपणात्मकं काणादं दर्शनं चारु सदुपपत्तिकं, नत्वन्यदिति मे मतं संमतम् । खलु यस्मात्कारणात् संप्रदायविदस्तद्दर्शनं वैशेषिकं शास्त्रं औलूकमाहुर्वदन्ति । अत एव तमसस्तत्त्वनिरूपणायानारोपितस्वरूपनिरूपणाय क्षमं समर्थम् । उलूकस्य घूकस्य संबन्धि दृश्यतेऽनेनेति दर्शनं नेत्रं हि तमस्यपि घटपटादिस्वरूपाणां याथात्म्यदर्शनसमर्थं भवति । वैशेषिकमप्युलूकापरनाम्ना कणादमुनिना प्रोक्तमित्यौलूकं दर्शनम् । अतदोष तमस्तत्त्वनिरूपणाय समर्थमिति युक्तमित्यर्थ इति शब्दच्छलम् । वैशेषिकदर्शने च किमिदं तमो भावरूपम् अभावरूपं वेति संदेहे 'भासामभाव एव तमः' इति सूत्राविरोधेन व्योमशिवाचार्यादयः षट्पदार्थवैधर्म्येणाभावरूपमेव तमो न्यरूपयन् । श्रीधराचार्यास्त्वारोपितं भूरूपमेव तम इति निर्वर्ण्य भासामभावे सत्येव तमः प्रतीतेर्भासामभाव एव तम इत्युक्तमिति सूत्रविरोधं पर्यहार्षुः । एतदसहमाना श्रीमदुदयनाचार्यादयः पुनर्भासामभावमेव तमस्त्वेन निरणैषुः । यस्मात्तदौलूकं दर्शनं वैशेषिकादिशास्त्रं तमस्तत्त्वनिरूपणायां क्षमं समर्थमाहुरिति वान्वयः । महत्यन्धकारे सत्यपि घटादिपदार्थजातं को वा पश्यतीति ध्वान्तनिरूपणायां क्रियमाणायां घूकनेत्रमेव चारु सर्वेभ्योऽप्यधिकमिति मम मतं मतं पुनः

१ अत्रोत्प्रेक्षा रूपकं च। २ अत्राप्युत्प्रेक्षा तमांसि, इत्यत्र रूपकं च।

१ अत्रोत्प्रेक्षा सापह्नवा, अन्धकारापह्नवपूर्वं तथोत्प्रेक्षणात्।

पुनः संमतमित्यर्थः । उलूकनेत्रमेव महान्धकारे घटादि विलोकयितुं समर्थम् । अन्यदीयनेत्राणां त्वान्ध्यमेव जातमिति भावः । यतो वैशेषिकं घटादीन्विशेषान्वेत्ति तादृशम् । महान्धकारे घूकनेत्रमेव घटादीन्भेदेन जानाति, न त्वन्यदीयं नेत्रम्, तस्मात्तदेव चार्विति । तत्र वृद्धसंमतत्वार्थमुत्तरार्धम् । उलूकवृत्त्या कणानत्तीति कणादः, तस्य कणादस्यैवोलूक इति नाम तेन प्रोक्तत्वादौलूकम् । 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वः । वामोरु, 'संहितशफलक्षणवामादेश्च । ४ । १ । ७० ।' इत्यूङि नदीत्वाद्ध्रस्वः । औलूकम्, 'तेन प्रोक्तम् ।४।३।१०१।' इत्यण् । पक्षे 'तस्येदम् । ४।३।१२०।' इति ॥ ३६ ॥

**म्लानिस्पृशः स्पर्शनिषेधभूमेः**
**सेयं त्रिशङ्कोरिव सम्पदस्य ।**
**न किंचिदन्यत्प्रति कौशिकीये**
**दृशौ विहाय प्रियमातनोति ॥ ३७ ॥**

म्लानीति ॥ म्लानिस्पृशः कालिमस्पर्शिनः श्यामस्य, अथ च—चण्डालत्वान्मालिन्ययुक्तस्य निःश्रीकस्य । तथा—अभावरूपत्वात्स्पर्शगुणनिषेधस्य भूमेः स्थानस्य, अथ च—चण्डालत्वादेवास्पृश्यस्यास्य तमसः राज्ञस्त्रिशङ्कोरिव सेयं प्रसिद्धा प्रत्यक्षेण गृह्यमाणा च संपत् बाहुल्येन स्वरूपलाभः,अथ च—राज्यसमृद्धिः कौशिकीये औलूके,अथ च—वैश्वामित्रे दृशौ नेत्रे विहायान्यत्किंचित्प्रति अपरं किमपि वस्तु लक्ष्यीकृत्य प्रियं हितं नातनोति करोति किन्तु तदीये एव नेत्रे लक्ष्यीकृत्य हितं करोति । अन्यप्रति किंचिदल्पमपि प्रियं नातनोतीति वा । अन्धकारे ह्युलूकनेत्रे एव पदार्थान्पश्यत इति तत्संपत्तयोः प्रिया । त्रिशङ्कोश्च संपद्विश्वामित्रस्यैव नेत्रयोः प्रिया, नान्यस्य । एतदुपाख्यानं रामायणादौ प्रसिद्धम् । कौशिकीये, 'वृद्धाच्छः ४।२।१४४' इति छः॥३७॥

**मूर्धाभिषिक्तः खलु यो ग्रहाणां**
**तद्भासमास्कन्दितऋक्षशोभम् ।**
**दिवाऽन्धकारं स्फुटलब्धरूप-**
**मालोकतालोकमूलूकलोकः ॥३८॥**

मूर्धेति ॥ यो रविः नवानां ग्रहाणां मध्ये खलु निश्चितं मूर्धाभिषिक्तो राजा । उलूकानां लोकः सङ्घस्तस्य रवेर्भया दीप्त्या समास्कन्दिता नितरां पराभूता ऋक्षशोभा नक्षत्रकान्तिर्यस्मिंस्तत् । तथा—स्फुटमुपलब्धानि अन्येन जनेन दृष्टानि घटादिस्वरूपाणि यस्मिंस्तादृशमपि दिवा कर्मीभूतं दिनमन्धकारमेवालोकत । दिने तस्य दर्शनाशक्तेर्दिनमन्धकाररूपत्वेनैव मेने इत्यर्थः । तथा—व्यक्तं लब्धानि घटादिरूपाणि यत्र तादृशमन्धकारमेवालोकमपश्यद्दर्शनसहकारिप्रकाशरूपत्वेनैव मेने । अथाद्रात्राविवत्यर्थः । अन्धकारं स्फुटलब्धरूपमित्यावृत्त्या योज्यम् । तेन तमसा विपरीतदृश एव भवन्तीति व्यज्यते । एवंविधमन्धकारं च स्फुटमतिप्रसिद्धं शुक्लभास्वरात्मकं लब्धं रूपं येन तादृशमालोकमेवापश्यत् । कृष्णरूपमपि तमः शुक्लभास्वरालोकत्वेनापश्यदिति विरुद्धमित्यर्थः । अथ च—यो ग्रहराजः सूर्यः, आक्रान्तनक्षत्रलक्ष्मीकां तद्भासं सूर्यदीप्तिमेवायमुलूकलोको दिवा दिनेऽन्धकारमपश्यत् । रात्रौ चान्धकारमालोकमपश्यत् । दिने सूर्यालोक एव तमः, रात्रौ च तम एव सूर्यालोक इति ददर्शेत्यर्थः । कीदृशीं तद्भासम्—कीदृशमन्धकारम्—स्फुटमुपलब्धानि घटादिरूपाणि यस्यामन्यजनेन तादृशीम्, स्फुटं संजातस्वरूपलाभं चेत्यन्धकारस्य नपुंसकत्वान्नपुंसकैकशेपैकवद्भावेन वा व्याख्येयम् । सूर्यदीप्त्याऽसमास्कन्दिताऽपराभूता नक्षत्रलक्ष्मीर्यत्र तमन्धकारविशेषणं वा । रात्रौ सूर्यदीप्तेरभावादतिरस्कृतनक्षत्रशोभमित्यर्थः । सूर्यदीप्तेरेव समास्कन्दनसामर्थ्यात्तमसैव रात्रौ यत्तिरस्करणं तेन नक्षत्रशोभा यस्मिन्निति वा इत्यादिव्याख्यानानि ज्ञातव्यानि । 'लक्ष्मीम्' इति पाठे—नदीत्वेऽपि समासान्तविधेरनित्यत्वात्कबभावः । 'मूर्धाभिषिक्तो राजन्यः' 'अन्धकारोऽस्त्रियाम्' इति चामरः॥३८॥

**दिने मम द्वेषिणि कीदृगेषां**
**प्रचार इत्याकलनाय चारीः ।**
**छाया विधाय प्रतिवस्तुलग्नाः**
**प्रावेशयत्प्रष्टुमिवान्धकारः ॥ ३९ ॥**

दिन इति ॥ अन्धकार इत्याकलनाय साकल्येन ज्ञानार्थं प्रतिवस्तुलग्नाः पदार्थमात्रसंबद्धाः प्रति-

१ अत्रानुप्रासः, उत्प्रेक्षा, काव्यलिङ्गं च । २ अत्र त्रिशङ्कोरिवेत्युपमा, कौशिकीये इति श्लिष्टम्, उत्प्रेक्षा च ।

१ अत्रानुप्रासः, लोक इति यमकं, खलित्युत्प्रेक्षा च ।

च्छाया एव चारीर्गूढार्थवेदिकाश्चारनारीः विधाय चारपदं ताभ्यो दत्त्वा दिनं प्रति संप्रेष्य समागतास्तास्तत्रत्यवृत्तान्तं प्रष्टुमिव पुनः प्रावेशयत् । निजनैकट्यमित्यर्थात् । इति किम्—ममान्धकारस्य द्वेषिणि मामसहमाने दिने विषये एषां वस्तूनां कीदृक् प्रचारो विहरणम्, स्नेहादिव्यवहारश्चेति । दिवा प्रतिपदार्थसंबद्धारछाया एव रात्रौ समागत्य मिलिता निजस्वामिनमन्धकारं प्राविशन् । रात्रौ हि प्रकाशाभावे छाया अन्धकारेण सहैकीभवतीति तत्संबन्धादेव महानन्धकारः प्रतीयत इति भावः । एतेन प्रतिच्छायापि तम एवेति वर्णितम् । अन्योऽपि रात्रौ लोकस्थितिं ज्ञातुकामः स्त्रीणां सर्वत्र प्रवेष्टुं शक्यत्वाच्चारनारीः संप्रेष्य तत्रत्यं वृत्तान्तं विचार्य समागतास्ताः प्रष्टुमात्मसविधं प्रवेशयति । छाया एव चारीः प्रतिवस्तुलग्ना विधायेति वा । चारपदं दत्त्वा यद्दिनं प्रत्येव प्रेषयामास, अत एव ता दिने प्रतिवस्तुलग्ना दृश्यन्त इति वा । चारीः, पुंयोगान्ङीष् ॥ ३९ ॥

ध्वान्तस्य तेन क्रियमाणयेत्थं
द्विषः शशी वर्णनयाऽथ रुष्टः ।
उद्यन्नुपाश्लोकि जपारुणश्री-
र्नराधिपेनानुनयेच्छयेव ॥ ४० ॥

इदानीं चन्द्रोदयं वर्णयितुमुपक्रमते—

ध्वान्तस्येति ॥ तेन नराधिपेन नलेन इत्थं क्रियमाणया द्विषः शत्रुभूतस्य ध्वान्तस्य वर्णनया रुष्टः क्रुद्ध इव जपाकुसुमवदरुणा श्रीर्यस्य स उद्यन्नुदयं प्राप्नुवन् शशी तेनैव राज्ञाथानन्तरमनुनयेच्छयेव प्रसादनवाञ्छयेवोपाश्लोकि श्लोकैः स्तोतुमारम्भि।अन्योऽपि वैरिवर्णनया रुष्टः सन्नरुणो भवति तत्परिहारार्थमुदितः सन् वर्णकेन प्रसादनार्थं स्तूयते । प्रतीयमानोत्प्रेक्षा । इवशब्दस्योभयत्र योजना वा । उपाश्लोकि, 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्म्मवर्णचूर्णचुरादिभ्यो णिच्' ३।१।२५' इति णिजन्तात्कर्मणि चिण् ॥ ४० ॥

पश्यावृतोऽप्येष निमेषमद्रे-
रधित्यकाभूमितिरस्कारिण्या ।
प्रवर्षति प्रेयसि चन्द्रिकाभि-
श्चकोरचञ्चूचुलुकप्रमिन्दुः ॥ ४१ ॥

पश्येति ॥ हे प्रेयसि प्राणप्रिये, एष इन्दुश्चन्द्रिकाभिश्चकोराणां चन्द्रिकालवदमृतपायिनां पक्षिणां चञ्चव एव चुलुकास्तान्पूरयित्वा प्रकर्षेण वर्षति सुधामित्यर्थात् । यावता चकोरचञ्चुपूरणं भवति तावत्प्रमाणं वर्षतीत्यर्थः। त्वं पश्य । किंभूतः—अद्रेरुदयाचलस्याधित्यकाभूम्योर्ध्वशिखरेणैव तिरस्करिण्या जवनिकया निमेषलक्षणमत्यल्पकालमावृतोऽपि सन् । संपूर्णानुदितोऽपि प्रथमचन्द्रिकाभिरेव चकोराणामानन्दं करोति, किं पुनरुदितः सन्निति भावः । अन्योऽप्युपकारी दूरस्थोऽप्युदयोन्मुखोऽन्येषामुपकरोति । चुलुकप्रम्, 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' ३ । ४ । ३२' इति पूरेर्णमुल्, उकारलोपश्च ॥ ४१ ॥

ध्वान्ते द्रुमान्तानभिसारिकास्त्वं
शङ्कस्व सङ्केतनिकेतमाप्ताः ।
छायाच्छलादुज्झितनीलचेला
ज्योत्स्नानुकूलैश्चलिता दुकूलैः ॥४२॥

ध्वान्त इति ॥ हे प्रिये, त्वं चन्द्रोदयात्पूर्वं ध्वान्ते सति द्रुमान्तान् तरुनिकटदेशानेव वृक्षाधोभागानेव सम्भोगार्थं कामुकदत्तं संकेतनिकेतमाप्ताः प्राप्ता अभिसारिकाः स्वैरिणीः शङ्कस्व सम्भावय । तथा इदानीं चन्द्रोदये सति वृक्षाधोभागवर्तिच्छायाच्छलादुज्झितं पूर्वं धृतं तमोऽनुकूलं नीलं चेलं वस्त्रं याभिस्तादृशीः सतीः सवर्णत्वाज्ज्योत्स्नानुकूलैश्चन्द्रिकानुगुणैर्धवलतरैर्दुकूलैरुपलक्षिताः सतीश्चलिताः सम्भोगं कृत्वा स्वगृहं प्रति पुनः परावृत्तास्त्वं सम्भावय । तमसि सत्येव केनापि न ज्ञातव्यामिति बुद्ध्या नीलं वस्त्रं परिधाय संकेतस्थानमागताः चन्द्रोदये पुनर्नीलवस्त्रपरिधाने पूर्ववद्भीत्या तत्तत्रैव विहाय श्वेतं दुकूलं सवर्णत्वात्परिधाय परावृत्ताः केनापि न ज्ञाताः । 'नीलचोलाः—' इति पाठे—चोलः कूर्पासः ॥ ४२ ॥

त्वदास्यलक्ष्मीमुकुरं चकोरैः
स्वकौमुदीमादयमानमिन्दुम् ।
दृशा निशेन्दीवरचारुभासा
पिबोरु रम्भातरुपीवरोरु ॥ ४३ ॥

त्वदिति ॥ हे रम्भातरुवदतिपीवरावूरू यस्यास्तत्सम्बुद्धिः त्वं निशायामिन्दीवरं नीलोत्पलं तद्वच्चार्वी भा

१ अत्रोत्प्रेक्षा । २ अत्रोत्प्रेक्षा हेतुमूला ।

१ अत्रानुप्रासः,उत्प्रेक्षा च । २ अत्रोत्प्रेक्षा रूपकानुगृहम् ।

यस्यास्तया दृशा उरु सादरमिन्दुबिम्बं विलोकय । किम्भूत तवास्यलक्ष्म्या मुखशोभाया अवलोकनार्थं धृतं मुकुरं दर्पणमिव । तथा—चकोरैः प्रयोज्यैः कौमुदीमादयमानं निजकौमुदीं चकोरान् पाययमानम् । उदिते चन्द्रे चकोराः सानन्दा जाताः, नीलोत्पलानि च विकसितानीति भावः । एतेनेन्दोः परोपकारित्वं सूचितम् । विकसितेन्दीवरतुल्यया दृशा पिबेत्यनेन चन्द्रोदये हीन्दीवरं विकसति, त्वं चैवंभूतया दृशा यदा चन्द्रमवलोकयिष्यसि, तदा, जनस्त्वद्दृशं चन्द्रावलोकनविकसितमिन्दीवरमेवैतदिति ज्ञास्यतीति सूचितम् । दिवा संकोचाद्सादृश्यमितीन्दीवरस्य विकसितत्वद्योतनार्थं निशापदम् चकोरैः 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणि कर्त्ता स णौ१।४।५२'इति कर्मत्वप्राप्तावपि'आदिखाद्योर्न' इति प्रतिषेधात्कर्तरि तृतीया । आदयमानं, निगरणार्थत्वात्परस्मैपदप्राप्तावपि 'अदेः प्रतिषेधो' वक्तव्यः' इति निषेधात् ' णिचश्च१।३।७४' इति तङ् ॥ ४३ ॥

असंशयं सागरभागुदस्था-
त्पृथ्वीधरादेव मथः पुरायम् ।
अमुष्य यस्मादधुनापि सिन्धौ
स्थितस्य शैलादुदयं प्रतीमः ॥ ४४ ॥

असंशयमिति ॥ पुरा पूर्वं सागरभाक् समुद्रगर्भस्थोऽयं चन्द्रः मथो दण्डभूतात्पृथ्वीधरात्पर्वतान्मन्दराद्रेरेव हेतोरुदस्थादुत्पन्न इति असंशयं निश्चितम् । पुराणादौ यदेवं श्रूयते तत्सत्यमित्यर्थः । पुरा उदस्थात्प्रथमसंभवावसरे तस्मादेव समुत्थित इति वा । तत्र हेतुमाह—यस्माद्धेतोरधुनापि संभवान्तरावसरेऽपि सिन्धौ स्थितस्य सागरगर्भस्थस्याप्यमुष्य चन्द्रस्य शैलादुदयाचलादेवोदयमुत्पत्तिं प्रतीमो जानीमः प्रत्यहं सागरस्थस्याप्यस्याचलोत्पत्तिशीलत्वरूपलिङ्गदर्शनात्समुद्रमथने प्रथमसम्भवावसरेऽप्ययमचलादेवोत्पन्न इति निश्चिनुम इत्यर्थः।उदयाचल शिखरं चन्द्रोऽतिक्रामतीति भावः ॥ ४४ ॥

निजानुजेनातिथितामुपेतः
प्राचीपतेर्वाहनवारणेन ।
सिन्दूरसान्द्रे किमकारि मूर्ध्नि
तेनारुणश्रीरयमुज्जिहीते ॥४५ ॥

निजेति ॥ निजानुजेन एककमात्सिन्धोरुत्पन्नतयास्माचन्द्रात्पश्चाज्जातेन कनीयसा भ्रात्रा प्राचीपतेरिन्द्रस्य वाहनवारणेन प्राच्यां स्थितेनैरावतेनातिथितामुपेतः प्राप्तः। प्राच्यामुदितत्वात्तत्सविधं प्राप्तः सन्नयं चन्द्रोऽग्रजत्वात्सिन्दूरेण सान्द्रे मूर्ध्नि अकारि कृतः किम् । गौरवान्नमस्कारपूर्वं शिरस्यारोपितः किमित्यर्थः। तेन सान्द्रसिन्दूरशिरःस्थापनेन हेतुना लग्नसिन्दूरवशादयमरुणश्रीरारक्तशोभः उज्जिहीते उदेति।उज्जिहीते किमिति वा । उदितश्चन्द्रः सिन्दूररक्तो दृश्यत इत्यर्थः ॥ ४५ ॥

यत्प्रीतिमद्भिर्वदनैः स्वसाम्या-
दचुम्बि नाकाधिपनायिकानाम् ।
ततस्तदीयाधरयावयोगा-
दुदेति बिम्बारुणबिम्ब एषः ॥ ४६ ॥

यदिति ॥ वृत्तत्वादिगुणयोगेन स्वसाम्यात्प्रीतिमद्भिर्नाकाधिपस्येन्द्रस्य नायिकानां वदनैर्यद्यस्मात्स्वसविधमागत एष चन्द्रोऽचुम्बि चुम्बितः, तस्माद्धेतोस्तस्माच्चुम्बनाद्वा तदीयानां देवेन्द्रनायिकानामधरेषु न्यस्तो यावोऽलक्तकस्तस्य योगात्संबन्धाद्धेतोर्बिम्बवत्पक्वबिम्बीफलवदरुणं बिम्बं मण्डलं यस्य तादृश उदेति । अन्योऽपि समानः सखा सविधमागतः सन् सख्या प्रीत्या चुम्ब्यते। मुखैरिति बहुवचनेन तत्र प्रदेशे युगपदेव चुम्बनाद्बहुलयावकयोगात्सकलस्यापि चन्द्रबिम्बस्य रक्तत्वं युक्तमिति सूचितम् ॥ ४६ ॥

विलोमिताङ्कोत्किरणाद्दुरूह-
दृगादिना दृश्यविलोचनादि ।
विधिर्विधत्ते विधुना वधूनां
किमाननं काञ्चनसञ्चकेन ॥ ४७ ॥

विलोमितेति ॥ विधिर्ब्रह्मा विधुना चन्द्रेणैव काञ्चनस्य सञ्चकेन बिम्बकेन कृत्वा वधूनामतिरमणीयमाननं विधत्ते किम् । यतः—किंभूतेन ।विलोमितः पराङ्मुखः कृतः स्वप्रभया जितः अङ्कः कलङ्को येन तादृशादुत्किरणादतितेजस्विनः किरणाद्धेतोर्दुरूहो दुस्तर्क्यो दृगादिर्नेत्राद्यवयवो यस्य, अथ च विपरीतीकृतानामङ्कानां नेत्रादिनिर्माणार्थं निम्नोन्नतांशचिह्नस्थानानामुत्किरणं संघटनं तस्माद्धेतोः साक्षादलक्ष्यनेत्रकर्णनासिकाद्यवयवेन ।

1 अत्रानुप्रासः, लुप्तोपमा, समासोक्तिः, व्यतिरेकः, रूपकं च । 2 अत्रोत्प्रेक्षा ।

1 अत्राप्युत्प्रेक्षा । 2 अत्रानुप्रास उत्प्रेक्षा च ।

आननं तु साक्षाद्‌दृश्या विलोचनादयो नासाकर्णाद्यवयवा यस्य तादृशम् । तस्माद्ब्रह्मा स्त्रीमुखं चन्द्ररूपेण महाराष्ट्र-भाषया ठसाख्येन स्वर्णस्य सञ्चकेन निर्ममे । सञ्चके हि निष्पाद्यस्य वस्तुनो निम्नोन्नतभागा विपरीता एवोत्कीर्यन्ते । तत्र च नेत्राद्यवयवा दुर्ज्ञेया भवन्ति तन्निर्मिते मुखादौ च दृश्या भवन्ति, तस्मादेवं तर्क्यत इत्यर्थः । उदितमात्रश्चन्द्रोऽप्युत्तमसुवर्णसञ्चकवद्रक्तो दृश्यत इति भावः । उत्तमं सुवर्णं रक्तवर्णं भवति । आननमिति जातावेकवचनम्[१] ॥ ४७ ॥

अनेन वेधा विपरीतरूप-
विनिर्मिताङ्कोत्किरणाङ्कनेन ।
त्वदाननं दृश्यदृगाद्यलक्ष्य-
दृगादिनैवाकृत सञ्चकेन ॥ ४८ ॥

अनेनेति ॥ वेधाः विपरीतरूपं यथा तथा विनिर्मितमुक्तविधमङ्कोत्किरणं यत्र तादृशमङ्कं यस्य तेन । तथा—अलक्ष्यदृगादिनानेन चन्द्रेणैव सञ्चकेन दृश्यं सुन्दरतरम्, अथ च—प्रत्यक्षदर्शनयोग्यं दृगादि यस्य तादृशं त्वदाननमकृत त्वदाननमेवाकृत न त्वन्याननमिति वा । अयमेवात्र श्लोके विशेषः । अयं श्लोकः क्षेपकः ॥ ४८ ॥

अस्याः सुराधीशदिशः पुराऽऽसी-
द्यदम्बरं पीतमिदं रजन्या ।
चन्द्रांशुचूर्णव्यतिचुम्बितेन
तेनाधुना नूनमलोहितायि ॥ ४९ ॥

अस्या इति ॥ हे भैमि, अस्याः सुराधीशस्येन्द्रस्य दिशः यदिदमम्बरं गगनं वस्त्रं च पुरा चन्द्रोदयात् पूर्वं रजन्या रात्र्या हरिद्रया च पीतं तमोव्याप्तत्वाददृश्यं पीतवर्णं चासीत्, तेनाम्बरेण गगनेन वस्त्रेण चाधुना चन्द्रोदये चन्द्रांशूनां चूर्णैः श्लक्ष्णसूक्ष्मतेजोलेशैः कर्तृभिर्व्यतिचुम्बितेनातितरां स्पृष्टेन सता चन्द्रांशुवच्छुभ्रतरेण चूर्णेन ताम्बूलसाधनचूर्णद्रव्येण स्पृष्टेन सता नूनमलोहितायि आरक्तीभूतम् । यत्तमसा पूर्वं नीलमभूत्तदेवेदानीमुद्यच्चन्द्रलोहितकरसंस्पर्शाद्रक्तं जातमित्यर्थः । हरिद्रया पीतवर्णं वस्त्रं चूर्णेन युक्तं सद्रक्तं भवति । देवेन्द्रस्त्रियाश्च वस्त्राणि नानावर्णानि युक्तानि । चन्द्रांशव एव चूर्णमिति वा । अलोहितायि, लोहितादिक्यपन्ताद्भावे चिण्[२] ॥ ४९ ॥

तानीव गत्वा पितृलोकमेन-
मरञ्जयन् यानि स जामदग्न्यः ।
छित्त्वा शिरोऽस्त्राणि सहस्रबाहो-
र्विस्त्राणि विश्राणितवान् पितृभ्यः ॥ ५० ॥

तानीति ॥ सोऽतिवीरो जामदग्न्यः सहस्रबाहोः शिरश्छित्त्वा विस्त्राण्यामगन्धीनि यान्यस्त्राणि रक्तानि पितृभ्यो जमदग्न्यादिभ्यो विश्राणितवान्दत्तवान् । यै रक्तैः प्रतिज्ञातं पितृतर्पणं कृतवान् । तान्येव रक्तानि मन्त्रबलात्पितृलोकं गत्वा प्राप्य पितृलोकाधीशमेनं चन्द्रमरञ्जयन् रक्तं चक्रुरिव । 'चन्द्रो वै पितृलोकः' इति श्रुतेः चन्द्रो रक्तवर्णो दृश्यत इति भावः । परशुरामः सहस्रार्जुनं हत्वा तदीयैः रक्तैः पितृतर्पणं कृतवानितीतिहासः । 'विस्रं स्यादामगन्धि यत्' इत्यमरः ॥ ५० ॥

अकर्णनासस्त्रपते मुखं ते
पश्यन्नसीतास्यमिवाभिरामम् ।
रक्तोस्रवर्षी बत लक्ष्मणाभि-
भूतः शशी शूर्पणखामुखाभः ॥ ५१ ॥

अकर्णेति ॥ हे प्रिये, शशी सीतास्यमिवाभिरामं कर्णादिकृतशोभं ते मुखं पश्यन्सन् न त्रपते न लज्जते बत चित्रम् । किंभूतः—न विद्यते कर्णनासं स्वभावादेव यस्य सः । तथा रक्ता आरक्ता उस्राः किरणास्तद्वर्षणशीलः, शोणश्चासौ किरणवर्षी च तादृशो वा । तथा—लक्ष्मणा कलङ्केनाभिभूत आक्रान्तमध्यः, अतएव शूर्पणखाया रावणभगिन्या मुखवदाभा यस्य स तद्वदनतुल्यः । एषु लज्जाकारणेषु सत्स्वपि न लज्जते तच्चित्रमित्यर्थः । त्वन्मुखं पश्यन्नप्युदयत्येव, स्वं प्रकाशयति च, तस्मादेव न लज्जते इति ज्ञायते । अन्यो ह्यकर्णनासो लज्जते, अयं तु तादृशोऽपि न लज्जत इत्यपि चित्रमेव । शूर्पणखामुखमपि लक्ष्मणेन पराभूतं छिन्नकर्णनासत्वाद्रुधिरवर्षि सद्राममभिलक्ष्यीकृत्य वर्तमानम्,

१ अत्रोत्प्रेक्षाऽपह्नुतिश्चार्थालङ्कारौ, अनुप्रासः पुनः शब्दालङ्कारः । २ अत्रोत्प्रेक्षा ।

१ अत्र नायिकानायकव्यवहारप्रतीतेः समासोक्तिः, उत्प्रेक्षा च । २ जामदग्न्यस्य तावदनवतारादिदं वचनमयुक्तमिव, अवतारचरितानां सदासिद्धत्वे तु कथंचित्समाधिः । उत्प्रेक्षाऽत्राप्यलङ्कारः ।

अत एवाभि भयरहितं च, सीतामुखं पश्यदपि न लज्जते, तदनन्तरमपि प्रौढिवादप्रकटनात्। अभि-शब्दस्यावृत्तिः कार्या। लक्ष्मशब्दो मान्तः, पक्षे लक्ष्मणोऽकारान्तः॥ ५१॥

आदत्त दीप्रं मणिमम्बरस्य
दत्त्वा यदस्मै खलु सायधूर्तः।
रज्यत्तुषारद्युतिकूटहेम
तत्पाण्डु जातं रजतं क्षणेन॥ ५२॥

आदत्तेति॥ हे भैमि, सायंकालरूपो धूर्तो यद् रज्यन्नुदयकाले रक्तीभवंस्तुषारद्युतिश्चन्द्र एव लेपवशाद्रज्यत् कूटहेम कृत्रिमं सुवर्णमस्मै गगनाय मूल्यरूपेण दत्त्वा दीप्रं प्रकाशमानमम्बरस्य मणिं सूर्यमादत्त जग्राह। तदलीकं हेम क्षणमात्रेण पाण्डु शुभ्रं रजतं खलु रूप्यमिव जातम्। धूर्तो हि रूप्यं लेपादिभिरुपलिप्तं सुवर्णीकृत्य ददाति, वस्त्रान्तरस्थमपि प्रसरद्दीप्तिकं रत्नं च गृह्णाति उदयानन्तरमतिक्रान्तकियत्कालत्वाद्रक्तिमानं परित्यज्य चन्द्रो रूप्यवद्धवलो जात इति भावः। घञन्तोऽत्र सायशब्दः सायंशब्दसमानार्थः॥ ५२॥

बालेन नक्तंसमयेन मुक्तं
रौप्यं लसड्डिम्बमिवेन्दुबिम्बम्।
भ्रमिक्रमादुज्झितपट्टसूत्र-
नेत्रावृतिं मुञ्चति शोणिमानम्॥५३॥

बालेनेति॥ हे प्रिये, रौप्यं राजतं लसद्विलसमानं डिम्बं बालक्रीडासाधनं भ्रमरकमिवेन्दुबिम्बं कर्तृ भ्रमिक्रमाद् भ्रमण परिपाट्या, अथ च—ऊर्ध्वदेशगमनक्रमेणोज्झिता त्यक्ता या पट्टसूत्रस्य नेत्रं दोरकस्ता आवृतिर्वेष्टनं तद्रूपम्, अथ च—पट्टसूत्रजालिकावत् चन्द्रावरणं येन तं शोणिमानं रक्तिमानं मुञ्चति। किंभूतमुभयम्-नक्तंसमयरूपेण बालेन, अथ च-बालेन प्रदोषरूपेण, रात्रिसमयेन मुक्तं भ्रमणार्थं करात् कृतमोचनम्, अथ च-उद्गीर्णं जनितोदयम्। शिशुक्रीडासाधनं हि भ्रमरकं काष्ठमयं भवति। ईश्वराणां च डिम्बं समृद्ध्यतिशयाद्राजतं पट्टसूत्रवलितदोरकलंबनात्तत्संबन्धजातं रक्तिमान मुञ्चति। तथेदं चन्द्रबिम्बमपीत्यर्थः। इदानीं चन्द्रो धवलो जात इति भावः। 'नेत्रावृतेः—'इति पाठे—भ्रमिक्रमाद्धेतोरुज्झिता या पट्टसूत्रनेत्रावृतिस्तस्या हेतोः शोणिमानं मुञ्चति। उज्झिता बिम्बेनैव पट्टसूत्रनेत्रावृतिर्यत्र तादृशाद्भ्रमिक्रमाद्धेतोरिति वा, डिम्बं ललडिम्बामिति वा गौडदेशभाषायां भ्रमरकस्य संज्ञा। महाराष्ट्रभाषायां कान्यकुब्जभाषायां च 'भवरा' इति संज्ञा। रौप्यं, संबन्धे विकारे वाण्। 'नेत्रं मन्थगुणे वस्त्रे' इत्यभिधानान्नेत्रशब्दो यद्यपि मन्थवेष्टनगुणे मुख्यःतथाप्यत्र गुणमात्रपर इति ज्ञेयम्॥

ताराक्षरैर्व्योमसिते कठिन्या
निशालिखच्चद्व्योम्नि तमःप्रशस्तिम्।
विलुप्य तामल्पयतोऽरुणेऽपि
जातः करे पाण्डुरिमा हिमांशोः॥५४॥

तारेति॥ निशाऽसिते श्यामे व्योम्नि गगन एव कज्जलादिलिप्तश्यामलपट्टिकायां कठिन्याः शुभ्रधातुविशेषस्य संबन्धिभिस्ताराक्षरैः शुभ्रैरक्षरैरिव नक्षत्ररूपैरक्षरैः कृत्वा यां तमःप्रशस्तिं तमोवर्णनश्लोकादिलिपिमलिखत्। ताराक्षैरुपलक्षितां यां तमःप्रशस्तिं रात्रिः कठिन्यालिखदिति वा। तां लिपिं विलुप्य प्रोञ्छ्याल्पयतः परिमेयताराक्षरां कुर्वतो हिमांशोररुणेऽपि करे किरणे,अथ च-पाणौ,पाण्डुरिमा जातः। प्ररूढकिरणे हि चन्द्रे नक्षत्राणामल्पता भवतीति खटिकालिखिताक्षराणि मार्जयतश्चारक्तोऽपि करः खटिकासङ्गाद्धवलो भवतीति तमसि नक्षत्राणि बहून्युज्ज्वलतराणि च दृष्टानि, चन्द्रे तूदितेऽल्पानि निष्प्रभाणि च जातानि, चन्द्रश्च धवलो जात इति भावः॥ ५४॥

सितो यदाऽत्रैष तदाऽन्यदेशे
चकास्ति रज्यच्छविरुज्जिहानः।
तदित्थमेतस्य निधेः कलानां
को वेद वा रागविरागतत्त्वम्॥ ५५॥

सित इति॥ एष चन्द्रो यदा यस्मिन्काले अत्र देशे सितो धवलश्चकास्ति, तदा तस्मिन्नेव काले अन्यदेशे राज्यच्छवी रक्तकान्तिरुज्जिहान उदयन् शोभते एवमत्रोदयत्रक्तः, अन्यत्र च श्वेत इत्यपि सामर्थ्यालभ्यम्, एतद्देशस्तं प्रतीदानीं सितो दृश्यते, द्वीपान्तरस्थं प्रति तूदयन्निदानीमेव दृश्यते यस्मात्, तस्मात्क-

१ अत्रापि पूर्ववदुत्प्रेक्षा। २ अत्र परिवृत्तिः तुषारअनेन तद्रजत्वेनोक्तौ तद्गुणः, उत्प्रेक्षा च।

१ अत्रानुप्रासः, उत्प्रेक्षा च। २ अत्र रूपकमुपमोत्प्रेक्षा च।

लानां निधेः पूर्णस्य चन्द्रस्य रागविरागयोर्लोहितत्वालोहितत्वयोस्तत्त्वं याथात्म्यमित्थममुना प्रकारेण को वा वेद, अपितु—कोऽपि निश्चेतुं न शक्नोतीत्यर्थः। उदयास्तमययोरतात्त्विकत्वाद्व्यवहितस्य यत्र यदा प्रथमदर्शनं तदा तत्रोदय इति दूरस्थस्य प्रथमं रक्तत्वप्रत्ययः, क्रमसामीप्यात्तु धावल्यप्रत्यय इति तत्त्वम्। अन्यस्यापिचतुःषष्टिकलाभिज्ञस्यानुरागानानुरागयोर्याथात्म्यं कुत्रानुरक्तः कुत्र वा नेति कोऽपि न जानाति ॥ ५५ ॥

काश्मीरजै रश्मिभिरौपसंध्यै-
मृष्टं धृतध्वान्तकुरङ्गनाभि।
चन्द्रांशुना चन्दनचारुणाङ्गं
क्रमात्समालम्भि दिगङ्गनाभिः ॥५६॥

काश्मीरजैरिति ॥ दिग्भिरेवाङ्गनाभिः संध्यायाः समीपमुपसंध्यं तत्र जातैररुणै रश्मिभिरेव काश्मीरजैः कुङ्कुमैः कृत्वा मृष्टं पूर्वं कृतोद्वर्तनं ततः संध्यायामपगतायां धृता ध्वान्तरूपा मृगनाभिः कस्तूरी येन तादृशमङ्गं क्रमात्कस्तूरीलेपानन्तरं चन्द्रांशुनैव चन्दनेषु मध्ये चारुणोत्तमेन चन्दनेन कृत्वा समालम्भि अलेपि। अन्या अपि ह्यङ्गना कुङ्कुमादिभिः क्रमेणाङ्गमनुलिम्पन्ति। चन्द्रनधवलैश्चन्द्रकरैः सर्वा अपि दिशो वितमस्काः कृता इति भावः। औपसंध्यैः सामीप्ये 'अव्ययं विभक्तिसमीपसमृद्धि—२।१।६' इत्यादिनाऽव्ययीभावाद्भवार्थेऽण् ॥ ५६ ॥

विधिस्तुषारर्तुदिनानि कर्तं-
कर्तं विनिर्माति तदन्तभित्तैः।
ज्यौत्स्नीर्निचेत्तत्प्रतिमा इमा वा
कथं कथं तानि च वामनानि ॥ ५७ ॥

विधिरिति ॥ विधिस्तुषारर्तोः शिशिरर्तोर्दिनानि कर्तं कर्तं छित्त्वा छित्त्वा तेषां दिनानामन्तभित्तैर्मध्यस्थैर्वान्धिभिः सारभूतैः शकलैः शुभ्रैः खण्डैः कृत्वा ज्योत्स्नीर्निशा विनिर्माति। नचेदेवं यदि नाङ्गीक्रियते, तदेमा रात्रयश्चन्द्रिकायुक्तास्तत्प्रतिमास्तैर्दिनैस्तुल्याः शीतलत्वप्रकाशवत्त्वाभ्यां तत्सदृश्यः कथम्। तानि च दिनानि वामनानि न्यूनपरिमाणानि न्यूनशीतत्वादिगुणानि कथं वा। अपि तु—दिनवामनता रात्रिदीर्घतान्यथानुपपत्तेः शिशिरर्तुदिनापेक्षया च ज्यौत्स्नीनामतितमां शीतत्वप्रकाशवत्त्वानुपपत्तेश्च शिशिरर्तुदिनानि छित्त्वा छित्त्वैव तत्सारभूतैश्च शकलैश्चन्द्रिकान्विता रात्रयो ब्रह्मणा वर्धिता इत्यर्थः। चन्द्रचन्द्रिकया रात्रिः शीतला धवलतरा च कृतेति भावः। कर्तं कर्तम्, 'कृती छेदने' इत्यस्माद्भीक्ष्ण्ये णमुल् द्विर्वचनं च। ज्यौत्स्नीः, ज्योतिरस्यामस्तीत्यर्थे 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ५।२।११४' इति साधुकृताज्ज्योत्स्नाशब्दाद् 'अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम्' इत्यस्त्यर्थेऽणि ङीप् ॥ ५७ ॥

इत्युक्तिशेषे स वधूं बभाषे
सूक्तिश्रुतासक्तिनिबद्धमौनाम्।
मुखाभ्यसूयानुशयादिवेन्दौ
कैवं तव प्रेयसि मूकमुद्रा ॥ ५८ ॥

इतीति ॥ स नलः इत्युक्तिशेषे एवं चन्द्रवर्णनावसाने सूक्तीनां प्रसादादिगुणयुक्तानां शोभनवचनानां श्रुते श्रवणे विषये आसक्त्या रसातिशयात्तदेकतानतया बद्धं स्वीकृतं मौनं यया तां तूष्णींभावमास्थितां वधूं भैमीं प्रतीदं बभाषे। इति किम्—हे प्रेयसि, इन्दौ विषये तवेयं मूकस्येव मुद्रा वाग्निरोधरीतिः का किंकारणिका। त्वमपि किमिति न चन्द्रं वर्णयसीत्यर्थः। मौने स्वयमेव हेतुमुत्प्रेक्षते—मुखस्य चन्द्रकृतवदनसाम्यस्याभ्यसूया स्पर्धा तजन्यान्मनोद्वेषादिव। स्वस्पर्धाकारिणो हि वर्णनेऽन्येन क्रियमाणेऽन्योऽपि कोपात्तूष्णीं तिष्ठति, नानुमोदते, स्वयं च न तं वर्णयति। तथा—त्वन्मुखस्पर्धाकरणसंजातकोपादिवेन्दुं न वर्णयसि नानुमोदसे च किमिति प्रश्नः। नलसूक्तिश्रवणादरकृतं मौनं कोपादिवेत्युत्प्रेक्षितम् ॥ ५८ ॥

शृङ्गारभृङ्गारसुधाकरेण
वर्णस्रजाऽनूपय कर्णकूपौ।
त्वच्चारुवाणीरसवेणितीरं
तृणाऽनुकारः खलु कोपकारः ॥ ५९ ॥

१ अत्रानुप्रासः, असम्भवोऽलङ्कारश्च, 'असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम्।' इति तल्लक्षणादित्येके, अनुमानमेवेदमित्यपरे, काव्यलिङ्गमित्यपि केचित्। २ अत्र साङ्गं रूपकम्।

१ अत्रानुप्रासः, अनुमानं, त्वर्थालङ्कारः। २ अत्राप्यनुप्रासः शब्दालङ्कारः, उत्प्रेक्षा त्वर्थालङ्कारः।

शृङ्गारेति ॥ हे प्रिये, त्वं शृङ्गाररससम्बन्धी भृङ्गारः स्वर्णकलशस्तद्रूपेण सुधाकरेण चन्द्रेण हेतुना वर्णस्रजा कृत्वा मम कर्णकूपौ अनूपय जलपूर्णौ कुरु । वर्णस्रजः सरसत्वात्कर्णकूपयोर्जलपूर्णत्वकरणं युक्तम् । अथ च—शृङ्गाररससम्बन्धिस्वर्णकलशस्य भवन्मुखस्य संबन्धि यत्पीयूषं तस्याकरेण खनिभूतया सरसया वर्णस्रजा कर्णकूपावनूपय । खलु यस्मात् कोपकार इक्षुविशेषस्तव चारुवाण्या वक्रोक्त्यादिरूपाया वाचः संबन्धिनः शृङ्गारादयो रसास्तेषां वेणिः प्रवाहस्तस्यास्तीरे समुद्गच्छत्तृणं तस्यानुकारस्तत्सदृशः । अतिस्वादुरसोऽपीक्षुविशेषो यदीयवरसवाणीतीरतृणमनुकरोति, न तु समो जातः । तां वाणीं श्रावय, चन्द्रं वर्णयेति भावः । 'कोपकाराद्या इक्षुविशेषाः' इति क्षीरस्वामी । अनूपय, अनूपशब्दात्, 'तत्करोति तदाचष्टे' इति णिचि लोट् ॥ ५९ ॥

अत्रैव वाणीमधुना तवापि
श्रोतुं समीहे मधुनः सनाभिम् ।
इति प्रियप्रेरितया तयाऽथ
प्रस्तोतुमारम्भि शशिप्रशस्तिः ॥६०॥

अत्रैवेति ॥ इति प्रियेण प्रेरितया तया भैम्याऽथानन्तरं शशिनः प्रशस्तिर्माहात्म्यं प्रस्तोतुमारम्भि प्रारब्धा । इति किम्—हे भैमि, अहमत्रैव चन्द्रवर्णन एव विषये मधुनोऽमृतस्य सनाभिं तुल्यां तवापि वाणीमधुना श्रोतुं समीहे इच्छामीति ॥ ६० ॥

पूरं विधुर्वर्धयितुं पयोधेः
शङ्केऽयमेणाङ्कमणिं कियन्ति ।
पयांसि दोग्धि प्रियविप्रयोग-
सशोककोकीनयने कियन्ति ॥ ६१ ॥

पूरमिति ॥ हे प्रिय, अयं विधुः पयोधेः पूरमागन्तुकजलप्रवाहं वर्धयितुमेणाङ्कमणिं चन्द्रकान्तं कियन्ति पयांसि दोग्धि तस्माद् गृह्णाति । तथा—प्रियस्य चक्रवाकस्य विप्रयोगेन सशोकायाः कोक्या नयने अपि कियन्ति जलानि दोग्धि, ताभ्यामपि सकाशाज्जलं कियद् गृह्णातीत्यहं शङ्के मन्ये । इति भैमी प्रियमवदत् । उदिते चन्द्रे सागरपूरो वृद्धिं प्राप्तः, चन्द्रकान्ताः स्रवन्ति, चक्रवाकी भृशं रोदितीति भावः । दुहिर्द्विकर्मा ॥६१॥

ज्योत्स्नामयं रात्रिकलिन्दकन्या
पूरानुकारेऽपसृतेऽन्धकारे ।
परिस्फुरन्निर्मलदीप्तिदीपं
व्यक्तायते सैकतमन्तरीपम् ॥ ६२ ॥

ज्योत्स्नेति ॥ हे प्राणेश, तमोऽवसरेऽतिश्यामा रात्रिरेव कलिन्दकन्या यमुना तस्याः पूर आगन्तुकातिनीलजलप्रवाहस्तदनुकारेतत्सदृशे तद्वदतिकृष्णेऽन्धकारेऽपसृते गते सति परिस्फुरन्ती निर्मला दीप्तिर्यस्य । प्रकाशमानश्चासौ धवलद्युतिश्च तादृशो वा यश्चन्द्रः स एव दीपो यत्र तादृशं ज्योत्स्नामयं चन्द्रिकारूपं सैकतं धवलतरवालुकामयं रात्रियमुनाया एव जलमध्यस्थितमन्तरीपं द्वीपं व्यक्तायते स्फुटमिव भवति प्रकटं दृश्यते । पूरावसरेऽस्फुटमपीदानीं स्फुटीभवतीति शङ्के । चन्द्रचन्द्रिकया सकलं धवलीकृतमिति भावः । व्यक्तायते व्यक्तमिव भवति, 'कर्तुः क्यङ् सलोपश्च ३।१।११' इति क्यङ् । अव्यक्तं व्यक्तं भवतीत्यर्थः । सैकतम्, 'सिकताशर्कराभ्यां च ५।२।१४' इत्यस्त्यर्थेऽण् ॥ ६२ ॥

हासत्विषैवाखिलकैरवाणां
विश्वं विशङ्केऽजनि दुग्धमुग्धम् ।
यतो दिवा बद्धमुखेषु तेषु
स्थितेऽपि चन्द्रे न तथा चकास्ति ॥६३॥

हासेति ॥ अखिलकैरवाणां सकलकुमुदानां हासत्विषैव विकासदीप्त्यैव विश्वं सकलं जगत्, दुग्धवत् मुग्धं धवलं शीतलं चाजनि जातम्, न तु चन्द्रेणेत्यहं विशङ्के विशेषेण मन्ये । यतो हेतोर्दिवा तेषु सकलकैरवेषु बद्धमुखेषु संकुचितेष्वविकस्वरेषु च सत्सु चन्द्रे स्थिते विद्यमानेऽपि सकलकुमुदविकासाभावात्सकलं जगत्तथा रात्राविव शीतलधवलतया न चकास्ति । तस्मादिदं जगत्कुमुदहासत्विषैव शीतलं धवलं च कृतम्, न तु चन्द्रेणेत्यर्थः । कुमुदवद् दुग्धवच्च शीतला धवला चन्द्रचन्द्रिकास्तीति भावः ॥ ६३ ॥

---

१ अत्रानुप्रासः, शृङ्गारेति यमकं च शब्दालङ्कारौ, सुधाकरादेः शृङ्गारभृङ्गारादिना रूपणाद्रूपकं साङ्गं, खल्वित्युत्प्रेक्षा चार्थालङ्कारौ । २ अत्र तयेति यमकम्, मधुनः सनाभिमित्युपमा ।

१ अत्रानुप्रासः, शङ्के इत्युत्प्रेक्षा, एणाङ्कमणिप्रभृतित्वेन रूपणाद्रूपकं च । २ अत्रानुप्रासः, पूरानुकार इत्यादावुपमा, ज्योत्स्नामयमित्यादौ रूपकं, व्यक्तायत इत्युत्प्रेक्षा च । ३ अत्र हेतूत्प्रेक्षा, काव्यलिङ्गञ्च ।

मृत्युञ्जयस्यैष वसञ्जटायां
न क्षीयते तद्भयदूरमृत्युः ।
न वर्धते च स्वसुधाप्तजीव-
स्रग्मुण्डराहूद्भवभीरतीव ॥ ६४ ॥

मृत्युमिति ॥ मृत्युञ्जयस्य मृत्युं जितवतः शिवस्य जटायां वसन्नेष चन्द्रः षोडशांशभूतो न क्षीयते नाल्पपरिमाणो भवति कलामात्रस्वरूपेणैव तत्र सदा वसंस्ततोऽपि न्यूनपरिमाणो न भवतीत्यर्थः । अथ च—न क्षियते न म्रियते यस्मात्, तस्मान्मृत्युंजयात्सकाशाद्भयेन दूरो मृत्युर्मरणहेतुर्देवता यस्य सः, मृत्युंजयजटाजूटनिवासान्मृत्युना स्प्रष्टुमपि न शक्यते तस्मान्न क्षीयतेऽयमित्यथः । तर्हि तत्र वसन्वर्धते किमिति नेत्याशङ्क्याह—वर्धते च न । उपचितोऽपि न भवतीत्यर्थः। यतः—स्वस्य सुधया आप्तो जीवश्चैतन्यं यैस्तानि स्रजो मुण्डानि शिरोमालायाः शिरःकपालानि तान्येव राहवस्तभ्य उद्भवा समुत्पन्ना भीर्यस्य । कथम्—अतीव । नितरां भीत इत्यर्थः । सजीवमुण्डेषु बहवो राहव एवैते इति धिया भिया न वर्धते । भीतो हि सौख्याभावात्कृशतर एव भवति । अथच—पूर्णस्य राहोः सकाशाद्भयम् । अतः कारणद्वयान्न क्षीयते, न च वर्धते, इत्येककल एव शिवशिरश्चन्द्र इत्यर्थः । एतेन चन्द्रस्य षोडशी कला वर्णिता-शिवशिरसि वर्तमानत्वादस्य माहात्म्यमपि वर्णितम् । मृत्युंजयेति, 'संज्ञायां भृतॄवृजिधारिसहितपिदमः । ३ । २ । ४६।' इति खश्, 'अरुर्द्विषदजन्तस्य मुम् ।६ ।३। ६७।' इति मुम् ॥ ६४ ॥

त्विषं चकोराय सुधां सुराय
कलामपि स्वावयवं हराय ।
ददज्जयत्येष समस्तमस्य
कल्पद्रुमभ्रातुरथाल्पमेतत् ॥ ६५ ॥

त्विषमिति ॥ एष चन्द्रो जयति सर्वोत्कर्षेण प्रकाशते । यतः किंभूतः—चकोराय स्वावयवं त्विषं निजांशभूतां चन्द्रिकां ददत् । तथा—सुराय अग्न्यादिदेवेभ्यो निजांशभूतां सुधां ददत् । तथा हराय निजांशभूतां कलां ददत्।अथापि अस्य चन्द्रस्यैतत्समस्तं परोपकारकरणमल्पमेव । अतिचमत्कारकारि न भवतीत्यर्थः । यतः—समुद्रोत्पन्नत्वात्कल्पद्रुमस्य भ्रातुः । कल्पद्रुमस्तु कल्पितं सर्वं सर्वेभ्यो ददाति, अयं तु न तथेत्यल्पमेवेत्यर्थः । एवंविधः परोपकारी कोऽपि नास्तीति भावः । चकोरायेति सुरायेति च जातावेकवचनम् ॥ ६५ ॥

अङ्केणनाभेर्विषकृष्णकण्ठः
सुधाप्तशुद्धेः कटभस्मपाण्डुः ।
अर्हन्नपीन्दोर्निजमौलिधाना-
न्मृडः कलामर्हति षोडशीं न ॥ ६६ ॥

अङ्केति ॥ मृडः शिवो निजमौलौ धानात्स्थापनाद्धेतोरिन्दोः षोडशीं कलामर्हन्प्राप्नुवन्, अथच—पूजयन् अपि षोडशीं कलां नार्हति न प्राप्नोति न पूजयति च । निजशिरसि धारणादेव तस्याः प्राप्तिः पूजा च सम्भविनी यो ह्यतितरां पूज्यते स शिरसि धार्यते । तथा चैतस्य षोडशीं कलां मृडः प्राप्नुवन्पूजयन्नपि च तां प्राप्नोतीति विरोधपरिहारः । यतः—किंभूतस्येन्दोः—किंभूतश्च मृडः अङ्कभूतो य एणो हरिणस्तद्युक्ता नाभिर्मध्यभागो यस्य अथ च—अङ्करूपा कलङ्करूपा एणनाभिः कस्तूरी यत्र । मृडस्तु—विषेण कृष्णकण्ठः । तथा—सुधयामृतेनाप्ता शुद्धिर्धावल्यं येन । मृडस्तु—कटभस्मना चिताभस्मना पाण्डुः । तस्माच्चन्द्रस्याल्पमपि साम्यं शिवो न प्राप्नोति । किंच चन्द्रादधिकः शिवश्चेदभविष्यत् तर्हि तदीयकलां मौलौ नाधारयिष्यत्, सा मौलौ धृता, तेन तस्माच्चन्द्र एव तदधिक इत्यर्थः । शुभस्याशुभस्य च महदन्तरमिति भावः । षोडशीमपि कलां नार्हतीत्यनेन पूर्णचन्द्रं नार्हतीति किं वाच्यमित्यपि सूचितम् । हरस्यापकर्षे विषं, चिताभस्म च हेतुः, चन्द्रोत्कर्षे मृगमदोऽमृतं च ॥ ६६ ॥

पुष्पायुधस्यास्थिभिरर्धदग्धैः
सितासितश्रीरघटि द्विजेन्द्रः ।
स्मरारिणा मूर्धनि यद्धृतोऽपि
तनोति तत्तौष्टिकपौष्टिकानि ॥ ६७ ॥

---

१ अत्र परिकरः, उत्प्रेक्षा, भ्रान्तिमान, अनुमानं च ।

१ अत्र अल्पमिति निन्दया चन्द्रस्य स्तुत्या व्याजस्तुतिः, 'उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ।' इति तल्लक्षणात् । २ अत्र मृड इन्दुरिवेति इन्दुरिव मृड इति वा प्रत्याययितुं प्रवृत्तयापि मृडादिन्दुरतिशयित इति प्रत्यायनाद् व्यतिरेकः, मृडश्चेन्दुं शिरसि निधाय तत्साम्यं लब्धुकामोऽपि न तल्लभत इत्यनेन व्यतिरेकस्य स्फुटीकरणाद्विवृतोक्तिश्च ।

पुष्पेति ॥ ब्रह्मणा द्विजेन्द्रश्चन्द्रः पुष्पायुधस्य कामस्यार्धदग्धैरस्थिभिः कृत्वाऽघाटि निर्मितः । अतएव सितासितश्रीरुपान्तधवलमध्यश्यामलकान्तिः । स्मरास्थिभिरेव निर्मित इत्यत्र हेतुमाह—स्मरारिणा मूर्धनि धृतोऽपि, अथ च—कृतसम्मानोऽपि तस्य स्मरस्यैव तौष्टिकानि हर्षकारीणि, पौष्टिकानि अभिवृद्धिकारीणि च यद्यस्मात्तनोति । कामारिणा पूज्यमानोऽपि कामहितमेव यस्मात्करोति, तस्मात्तदस्थिभिरेव घटित इत्यर्थः । एतादृक्कामोद्दीपकं किमपि नास्तीति भावः । अस्थिभिरिवेति प्रतीयमानोत्प्रेक्षा । अन्याश्रितोऽपि तदीयशत्रुहितं यः करोति स तदस्थिभिर्घटित इति लौकिक्युक्तिः । तौष्टिकपौष्टिकानि, 'प्रयोजनम् ।५।१।१०९।' इति ठञ् ॥ ६७ ॥

मृगस्य लोभात्खलु सिंहिकायाः
सूनुर्मृगाङ्कं कवलीकरोति ।
स्वस्यापि दानादमुमङ्कसुप्तं
नोज्झन्मुदा तेन च मुच्यतेऽयम्॥६८॥

मृगस्येति ॥ सिंहिकायाः सुतो राहुर्मृगाङ्कं चन्द्रं यत्कवलीकरोति तदङ्कमृगस्य लोभात् खलु मांसाभिलाषादिव । सिंहिकासुतः सिंहो मृगैरङ्कितं स्थलं मृगग्रासाभिलाषादेव स्वाधीनं करोति । तर्हि किमर्थं मुञ्चतीत्यत आह—अङ्कसुप्तं मध्यवर्तिनम्, अथ च—उत्सङ्गे विश्वासात्सुखेन निद्रितम्, अमुं मृगं स्वस्यापि दानाद्राहुदन्तकृतखण्डनादपि नोज्झन्न त्यजन्, अथ च—स्वशरीरस्यापि वितरणादत्यजन्, अयं चन्द्रस्तेन राहुणा तेन पुण्येन च हेतुना मुदा शरणागतरक्षणानिमित्तहर्षेण कृत्वा मुच्यते त्यज्यते । अन्योऽपि शरणागतं मृगं जिघांसोः सिंहाद्रक्षितुमात्मानमपि ददानो हि तेन पुण्येन सिंहान्मुच्यत एव । 'नौज्झत्' इति पाठे—स्वस्यापि दानादङ्कसुप्तममुं यतो नामुञ्चत्तेन हेतुनाऽयं विमुच्यते, अर्थाद्राहुणेत्यर्थः ॥ ६८ ॥

सुधाभुजो यत्परिपीय तुच्छ-
मेतं वितन्वन्ति तदर्हमेव ।

१ अत्रोत्प्रेक्षाऽस्थिभिरिवेति प्रतीत्या प्रतीयमाना । २ अत्रोत्प्रेक्षा, सर्वोऽपि शरण्यः शरणागतं यथातथं रक्षितुमेव यतत इतिप्रतीत्याऽर्थान्तरन्यासो ध्वन्यते ।

पुरा निपीयास्य पिताऽपि सिन्धु-
रकारि तुच्छः कलशोद्भवेन ॥ ६९ ॥

सुधेति ॥ सुधाभुजो देवा एनं चन्द्रं परिपीय साकल्येन पीत्वा तुच्छं रिक्तं यद्वितन्वन्ति कुर्वन्ति तदर्हमुचितमेव, यतोऽस्य पिता सिन्धुरपि कलशोद्भवेनागस्त्येन पुरा निपीय तुच्छो रिक्त अकारि, तस्मात्कुलक्रमागतं तुच्छत्वमित्यर्थः।एतस्य पूर्वेऽपि परोपकारनिरताः, तस्मादयमपि तथैवेति भावः । कलशादुत्पन्नेनापि सागरस्य पानमित्याश्चर्यम् ॥ ६९ ॥

चतुर्दिगन्तीं परिपूरयन्ती
ज्योत्स्नैव कृत्स्ना सुरसिन्धुबन्धुः ।
क्षीरोदपूरोदरवासहाना-
द्वैरस्यमेतस्य निरस्यतीयम् ॥ ७० ॥

चतुरिति ॥ चतुर्णां दिगन्तानां समाहारस्ताम् । चतुर्दिक्प्रान्तानित्यर्थः तां परिपूरयन्ती सामस्त्येन व्याप्नुवती, तथा—श्वेतत्वात्सुरसिन्धोर्मन्दाकिन्या बन्धुः सदृशी।तथा कृत्स्ना पूर्णा इयं ज्योत्स्नैवैका क्षीरोदपूरोदरे वासः स्थितिस्तस्य हानाद्बहुकालपरित्यागाद्धेतोरेतस्य चन्द्रस्य वैरस्यं क्षीरसागरविरहजनितं दुःखं निरस्यति नाशयति । असौ चन्द्रिकायामेव क्षीरसागरबुद्ध्या पितृवियोगदुःखं परित्यजतीत्यर्थः । सकलदिगन्तव्यापिधवलचन्द्रिकामध्यवर्ती चन्द्रः क्षीरसागरमध्यस्थ इव शोभत इति भावः । गङ्गावद्दुग्धवच्चेयं कौमुदीति चतुर्दिगन्ती, समहारे द्विगोर्ङीप् ॥ ७० ॥

पुत्री विधोस्ताण्डविका तु सिन्धो-
रश्या चकोरस्य दृशोर्वयस्या ।
तथाऽपि सेयं कुमुदस्य काऽपि
ब्रवीति नामैव हि कौमुदीति ॥ ७१ ॥

पुत्रीति ॥ इयं चन्द्रिका यद्यपि चन्द्रात्प्रसूतत्वाद्विधोः पुत्री अस्तु । सिन्धोः समुद्रस्य ताण्डविका नृत्तोपदेशिका नाटयित्री वा अस्तु । चन्द्रिकया हि सिन्धुरुल्लास्यते, सा च तस्य नप्त्री भवति । यद्वा—इयं विधोः पुत्री सिन्धोस्ताण्डविका भवतु । तथा चकोरस्य अश्या पेया भवतु । तथा—सकललोकस्य दृशोः

१ अत्र काव्यलिङ्गम् ।२अत्रानुप्रासः, रूपकमुत्प्रेक्षा च ।

प्रेमपात्रतया वयस्या सखी भवतु । तथाऽपि सेयं चन्द्रिका कुमुदस्य कापि अनिर्वचनीया संबन्धिनी भवतु । पूर्वनिर्दिष्टसर्वापेक्षया कुमुदस्यैव निरतिशयानन्दकारित्वात्केनाप्यनिर्वचनीयेन संबन्धिनी भवत्वित्यर्थः । हि यस्मात्कौमुदीति, नामैव कर्तृ ब्रवीति । सर्वेषां तत्तत्सम्बन्धसंभवेऽपि कुमुदानामियं कौमुदीति, 'तस्येदम् । ४ । ३ । १२० ।' इति सम्बन्धेऽण् । कुमुदानामेव प्रीत्यतिशयेन संबन्धं वदतीत्यर्थः । कौमुदीति नामैव हि स्पष्टं ब्रवीतीति वा । चन्द्रिकया सर्वेषामप्यानन्दः कृतः । कुमुदानां तु विशेषत इति भावः । कार्येण कारणानुमानम् । ताण्डविका, अर्शआद्यजन्तान्मतुबन्ताद्वा ताण्डवशब्दात् 'तत्करोतितदाचष्टे' इति ण्यन्ताण्ण्वुल् । अशनमाशिः, 'इक्कृष्यादिभ्यः' इतीकि अशिमर्हतीति 'दण्डादिभ्यो यत् ।५।४।२।' इति यत् । 'आश्या' इति च पाठः ॥ ७१ ॥

**ज्योत्स्नापयःक्ष्मातटवास्तुवस्तु-**
**च्छायाछलच्छिद्रधरा धरायाम् ।**
**शुभ्रांशुशुभ्रांशकराः कलङ्क-**
**नीलप्रभामिश्रनिभा विभान्ति ॥७२॥**

ज्योत्स्नेति ॥ शुभ्रांशोश्चन्द्रस्य शुभ्रांशा धवलभागाश्च ते कराश्च किरणास्ते धरायां भूम्यां कलङ्कस्य नीलिभिः प्रभाभिर्मिश्रा निभा कान्तिर्येषां ते कलङ्कनीलकान्तिच्छुरिता इव विभान्ति । यतः कीदृशाः—ज्योत्स्नैव पयो जलं दुग्धं वा यस्मिंस्तादृशं क्ष्मातटं दुग्धधवलचन्द्रिकाधवलीकृतं भूतलं तदेव वास्तु वसतिगृहं येषां तानि वस्तूनि वृक्षादिपदार्थास्तेषां छाया छलं येषां तादृशानि छिद्राणि प्रकाशेन रिक्तत्वाद्बिलानि पदार्थप्रतिच्छायारूपाणि तानि धरन्तीति तादृशाः चन्द्रिकाधवलिताः पदार्थाश्चन्द्ररश्मय एव, वृक्षादिप्रतिच्छायाश्चन्द्रकलङ्कनीलरश्मय एवेति धरायामपि निपतिताश्चन्द्रकिरणा नीलधवला एव शोभन्त इत्यर्थः । अन्यस्य करा हस्ताः कलङ्कवन्नीलस्य नीलमणेः प्रभया मिश्रकान्तयो नीलमणियुक्ताङ्गुलीयकप्रभामिश्रा विभान्ति । 'शुभ्रांशुशुभ्रांशु—' इति पाठेऽपि 'अंशुर्लेशे रवे रश्मौ' इत्यभिधानादंशुशब्दस्य लेशवाचित्वात्स एवार्थः । ज्योत्स्नैव पयो जलं तस्य क्ष्मा भूमिस्तत्स्यास्तटं तदेव वास्तु निवासस्थानं तेषां वस्तूनां छायाया व्याजेन छिद्राणि धरन्तीति वा ॥ ७२ ॥

**कियान् यथानेन वियद्विभाग-**
**स्तमोनिरासाद्विशदीकृतोऽयम् ।**
**अद्भिस्तथा लावणसैन्धवीभि-**
**रुल्लासिताभिः शितिरप्यकारि ॥७३॥**

कियानिति ॥ उदितमात्रेणानेन चन्द्रेण तमोनिरासहेतोः कियान् किंचिन्मात्रोऽयं वियद्विभागः पूर्वाकाशदेशो यथा विशदीकृतः तथा चन्द्रकिरणैरुल्लासिताभिर्वृद्धिं प्रापिताभिर्लावणसैन्धवीभिरद्भिः कियानयं वियद्विभागः शितिः श्यामोऽप्यकारि । अप्रौढप्रभे चन्द्रे पूर्वाकाशदेशस्तिमिरनिरासाद्धवलो भवति, ततो निरस्तस्य च तमसः प्रतीच्यां घनीभूतत्वात्पश्चिमाकाशदेशः श्यामलो भवतीति । तत्रेयमुत्प्रेक्षा । समुद्रजलं च नीलं, पूर्वाकाशदेश एव नीलसमुद्रजलैः पुनर्नीलोऽप्यकारीति वा । लावणसैन्धवीभिः लवणसिन्धोरिमाः 'तस्येदम् ३।३।१२।' इत्यणि 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' ७।३।१९' इत्युभयपदवृद्धिः ॥ ७३ ॥

**गुणौ पयोधेर्निजकारणस्य**
**न हानिवृद्धी कथमेतु चन्द्रः ।**
**चिरेण सोऽयं भजते तु यत्ते**
**न नित्यमम्भोधिरिवात्र चित्रम् ॥७४॥**

गुणाविति ॥ चन्द्रो निजकारणस्य पयोधेर्हानिवृद्धिरूपौ गुणौ कथं नैतु प्राप्नोतु, अपितु, कार्यगुणानां कारणगुणपूर्वकत्वनियमादवश्यमपचयोपचयौ चन्द्रं प्राप्नुत इति युक्तमेवेत्यत्र न किंचिच्चित्रमित्यर्थः । तर्हि कुत्र चित्रमित्याशङ्क्याह—सोऽयं चन्द्रस्ते हानिवृद्धी यच्चिरेण पक्षान्तपरिमितेन बहुना कालेन भजते, नतु अम्भोधिरिव नित्यं प्रत्यहं भजते, अत्र विषये चित्रमित्याश्चर्यम् । समुद्रो यथा प्रत्यहं हानिवृद्धी भजते, तथा पुत्रोऽपि चन्द्रो नेत्याश्चर्यमित्यर्थः ॥ ७४ ॥

---

१ अत्र कौमुद्या सिन्ध्वपेक्षयाऽपि कुमुदानामाह्लादातिशयवर्धकत्ववचनं तेषां प्राणप्रियात्वं व्याजेन सूचयतीति व्याजोक्तिः, 'व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ।' इति तल्लक्षणात् ।

१ अत्रानुप्रासः, छलेत्यपह्नुतिः, उत्प्रेक्षा, रूपकं च । २ अत्रोत्प्रेक्षेति व्याख्यातारः, पितृपुत्रयोरपि परस्परप्रतिद्वन्द्वित्वमिदं किमिवेति स्वाश्चर्यनिवेदनं तया व्यज्यते च । ३ कारणगुणाः कार्यमारभन्त इति न्यायेन यथा पुत्रः पितृगुणानवलम्बते न तथा पिता पुत्रगुणानिति वस्तुस्थितिः, अत्र परार्धे पुनस्तद्वैपरीत्यमिति विरोधः, तत्परिहारश्च नित्यं तथा क्षीयमाणत्ववर्धमानत्वयो-

आदर्शदृश्यत्वमपि श्रितोऽय-
मादर्शदृश्यां न बिभर्ति मूर्तिम् ।
त्रिनेत्रभूरप्ययमत्रिनेत्रा-
दुत्पादमासादयति स्म चित्रम् ॥७५॥

आदर्शेति ॥ अयं चन्द्र आदर्शवद्दृश्यत्ववृत्तत्वादिना रमणीयत्वं श्रितो भजमानोऽप्यादर्शवद्दृश्यां रमणीयां मूर्तिं न बिभर्ति, इति चित्रम् । यो ह्यादर्शवद्दृश्यो भवति स एवादर्शवद्दृश्यां मूर्तिं न बिभर्ति तद्दृश्यो न भवतीति विरोधाश्चर्यमित्यर्थः । अथच—दर्पणवद्दृश्यत्वं श्रितोऽप्यादर्शं दर्शमभिव्याप्य दृश्याममावास्यायां दर्शनयोग्यां मूर्तिं न बिभर्ति । इदानीं पूर्णत्वेन दृश्यमानोऽपि दर्शे लेशेनापि न दृश्यते इत्यर्थ इति विरोधपरिहारः । दर्पणवद्दृश्यत्वं श्रितोऽपि आदर्शं दर्शमर्यादीकृत्य कृष्णचतुर्दशीमभिव्याप्य दृश्यां मूर्तिं न बिभर्ति, अपितु तावत्पर्यन्तं दृश्यो भवत्येवेति वा । तथा—अयं चन्द्रस्त्रिनेत्राद्भवति तादृशत्रिनेत्रादुत्पन्नोऽपि न त्रिनेत्रोऽत्रिनेत्रः । तस्मात्त्रिनेत्रव्यतिरिक्तात्तत्काशादुत्पादमुत्पत्तिमासादयति स्म प्रापेत्येतदपि चित्रम् । त्रिनेत्रादुत्पन्नोऽपि त्रिनेत्रादुत्पन्नो न भवतीत्याश्चर्यमित्यर्थः । अथ च—त्रिनेत्रादुत्पन्नोऽप्यत्रेर्नेत्रादुत्पत्तिमापेत्येतदपि विरुद्धम् । अथ च—त्रिनेत्रो भूरुत्पत्तिस्थानं यस्य तादृशः, तथा—अत्रेर्मुनेर्नेत्राच्चित्रमाश्चर्यरूपमुत्पादं प्रापेति विरोधपरिहारः । सहजसौन्दर्यमाश्रयमाहात्म्यं कुलस्य माहात्म्यं चानेन चन्द्रस्य वर्णितम् । चन्द्रस्यात्रिनेत्रसमुद्भूतत्वं पुराणप्रसिद्धम् ॥ ७५ ॥

इज्येव देवव्रजभोज्यऋद्धिः
शुद्धा सुधादीधितिमण्डलीयम् ।
हिंसां यया सैव तथाऽङ्गमेषा
कलङ्कमेकं मलिनं बिभर्ति ॥ ७६ ॥

इज्येति ॥ देवानां व्रजैः समूहैर्भोज्या पेया ऋद्धिः समृद्धिर्यस्याः सा शुद्धा धवला इयं सुधादीधितेरमृतकरस्य चन्द्रस्य मण्डली इज्येव याग इव शोभत इति शेषः । इज्याऽपि देवव्रजभोज्यपुरोडाशादिसमृद्धिः शुद्धा पवित्रा च भवति । तथैषा चन्द्रमण्डली कलङ्काख्यमेकं मध्यवर्तिनमङ्गमवयवं मलिनाकारं तथा बिभर्ति यथा सैव इज्यैव पूर्वोक्तगुणविशिष्टा सत्यप्येकं पशुहिंसात्मकमङ्गं कर्मसाधनं मलिनं पापहेतुं बिभर्ति । परोपकारशीलायाः सर्वात्मना शुद्धाया अपि चन्द्रमण्डल्या दैवादेकमङ्गं मलिनं जातमित्यर्थः । यागे हि हिंसामात्रमेव मालिन्यम् । 'मुधाऽङ्गम्—' इति पाठे—कलङ्करूपमेकमङ्गं मलिनं वृथैव बिभर्ति । शुद्धाया मालिन्ययोगस्यानौचित्यादित्यर्थः । शुद्धस्यापि श्रीतधर्मस्य सांख्यैर्दोषारोपणान्मालिन्यं मुधैवेत्यर्थः । इज्या, 'व्रजयजोर्भावे क्यप् ३ । ३ । ९८' इति क्यप् ॥ ७६ ॥

एकः पिपासुः प्रवहानिलस्य
च्युतो रथाद्वाहनरङ्कुरेषः ।
अस्त्यम्बरेऽनम्बुनि लेलिहास्यः
पिबन्नमुष्यामृतबिन्दुवृन्दम् ॥ ७७ ॥

एक इति ॥ एष मृगाङ्के दृश्यमानः प्रसिद्धः एकः पिपासुस्तृषाक्रान्तः सप्तवायुस्कन्धमध्यवर्तिनः प्रवहाख्यस्यानिलस्य मृगवाहनस्य गगनचारिणो रथाच्च्युतो वाहनभूतो रङ्कुर्मृगोऽनम्बुनि निर्जलेऽम्बरे लेलिहास्यो नितरां पौनःपुन्येन वास्वादनकारि मुखं यस्य तादृशो भवन्नमुष्य चन्द्रस्यामृतबिन्दुवृन्दं पिबन्सन्नस्ति । तृषाक्रान्तो रथं परित्यज्य पतितो निर्जलेऽपि गगने चन्द्रोऽमृतबिन्दुवृन्दमास्वादयन्वायुवाहनमृग एवायम्, नतु कश्चित्कलङ्कमृगो नामेत्यर्थः । अस्तीति वर्तमानप्रत्ययेनामृतास्वादनेन चन्द्रं परित्यज्य गन्तुमशक्तोऽद्यापि वर्तत इति सूचितम् । एवमन्योऽपि तृषाक्रान्तो निर्जले देशे प्रस्रवणादेः पतज्जलबिन्दुवृन्दं पिबन्ननुपशान्तापिपासो लेलिहास्यः संस्तत्रैव चिरं तिष्ठति । सप्तवायुस्कन्धाः पुराणप्रसिद्धाः । लेलिहेति, नितरां पुनःपुनर्वा लेढीत्यर्थे यङि पचादेराकृतिगणत्वादाचि 'यङोऽचि च २।४।१४' इति यङो लुक् ॥ ७७ ॥

---

–रभावेऽपि क्षीयमाणत्वादेरनुगमात्र वैपरीत्यमिति स्पष्ट एवेति विरोधाभासः प्रतीयते, पूर्वार्द्धे तु यथाब्धोऽम्भोधिरिव क्षीयते वर्धते च तत्तस्वारम्भकगुणयोगादुत्पन्नमेवेति काव्यार्थोक्तम् । १ अत्र विरोधाभासः ।

१ अत्रोपमा, इज्येव मण्डली, किंतु मण्डल्यां कलङ्कः, न पुनस्तत्र, इतीज्याया उपमानभूताया एवोत्कर्षात्तयोपमेयापकर्षद्योतनपर्यवसायी व्यतिरेक इत्येके, इज्या निरङ्का, मण्डली तु साङ्केति साङ्कत्वाधिक्यबोधनमेव. कवेर्विवक्षितमित्युपमेयोत्कर्षद्योतनपर्यवसायमेवायमपि व्यतिरेक इति परे । २ अत्रोत्प्रेक्षा ।

अस्मिञ्शिशौ न स्थित एव रङ्कु-
र्यूनि प्रियाभिर्विहितोपदाऽयम् ।
आरण्यसन्देश इवौषधीभि-
रङ्के स शङ्के विधुना न्यधायि ॥७८॥

अस्मिन्निति ॥ शिशौ बाले एककलात्मकेऽस्मिंश्चन्द्रे रङ्कुर्मृगो न स्थितो नासीदेव तस्यां दशायामदर्शनात् । किंतु प्रियाभिरोषधीभिर्यूनि तरुणे पूर्णावयवेऽस्मिंश्चन्द्रेऽयं रङ्कुरुपदेव विहिता प्रेषिता । कीदृशी—अरण्ये भवः संदिश्यते प्रस्थाप्यते संदेशस्तद्रूपा । अरण्यभवानां संदेशरूपा वा । वयं भवत्प्रिया निर्जने वने मृगैः सह वसामः, त्वं तु स्वर्गे विजयी सुखेन वर्तसे इति गूढार्थोप ( पा ) लम्भसूचिकेति यावत् । अनन्तरं विधुना प्रेयसीसंदेशरूपः स रङ्कुरङ्के मध्ये, अथ च-उत्सङ्गे, प्रियाप्रेमभरेण न्यधायि स्थापित इत्यहं शङ्के । अन्यापि प्रिया तरुणं प्रियं प्रति कंचित्संदेशमुपदारूपेण प्रेषयति स च तं हृदयादौ धारयति । ओषध्यो हि वनवासिन्यस्तदनुरूपमेव संदेशमृगं स्वप्रिये चन्द्रे प्रेषितवत्यः । आरण्यसंदेश इवायमुपदा प्रहितेति वा । 'यदा-' इति पाठे—यदाप्रभृति प्रेषितः, तदाप्रभृति तारुण्यदशायां च चन्द्रेणायमङ्के न्यधायि, नतु पूर्वमित्यर्थः । आरण्यः, 'तत्र भवः ४।३।५३' इति भवार्थेऽण् ॥ ७८ ॥

अस्यैव सेवार्थमुपागताना-
मास्वादयन्पल्लवमोषधीनाम् ।
धयन्नमुष्यैव सुधाजलानि
सुखं वसत्येष कलङ्करङ्कुः ॥ ७९ ॥

अस्येति ॥ एष कलङ्करङ्कुर्विरहपीडितत्वादस्यैव चन्द्रस्य सेवार्थमुपागतानामोषधीनां पल्लवमास्वादयन् । तथा—अमुष्यैव सुधारूपाणि जलानि धयन् पिबन् सुखमनायासलब्धवृत्तिरिव वसति । आहारलोभादत्रैव वसतीत्यर्थः । अन्योऽपि मृगो जलकिसलययुते देशे सुखेन वसति कदाचिदपि न त्यजति । पल्लवम्, जात्येकवचनम् ॥ ७९ ॥

रुद्रेषुविद्रावितमार्तमारा-
त्तारामृगं व्योमनि वीक्ष्य विभ्यत् ।
मन्येऽयमन्यः शरणं विवेश
मत्वेशचूडामणिमिन्दुमेणः ॥ ८० ॥

रुद्रेति ॥ दक्षयज्ञे वीरभद्रावतारस्य रुद्रस्येषुणा विद्रावितम् । अत एव—आर्तं तारारूपं मृगं व्योमनि आरात्समीपे दूरे वा वीक्ष्य बिभ्यत् त्रस्यन् अयमन्योऽपर एण इन्दुमीशस्य चूडामणिं ज्ञात्वा शरणं विवेश । शिवेन शिरसि स्थापितत्वादयं मान्य इत्येतदाश्रयेण रुद्रान्मामयं रक्षिष्यत्येवेत्याशयेनान्यो मृगश्चन्द्रं शरणं प्रविष्ट इत्यर्थः इत्यहं मन्ये । अन्योऽपि सजातीयं कस्माचिद्भीतं दृष्ट्वा स्वयमपि भीतः सन्कमपि शरणं याति । 'गत्वा' इत्यपि पाठः । तारामृगस्य रुद्रेषुविद्रवणं काशीखण्डादौ ज्ञातव्यम् ॥ ८० ॥

पृष्ठेऽपि किं तिष्ठति नाथ नाथ
रङ्कुर्विधोरङ्क इवेति शङ्का ।
तत्त्वाय तिष्ठस्व मुखे स्व एवं
यद्वैरथे पृष्ठमपश्यदस्य ॥ ८१ ॥

पृष्ठ इति ॥ हे नाथ, विधोरङ्क इव यथा चन्द्रस्योत्सङ्गे कलङ्कमृगो वर्तते तथा रङ्कुः पृष्ठेऽपि पश्चाद्भागे किं तिष्ठति अथ न तिष्ठति इति तवाशङ्का चेद्वर्तते इति शेषः । तर्हि त्वं तत्त्वाय याथात्म्यज्ञानार्थं स्वे निजे मुखे एव विषये तिष्ठस्व । निजमुखमेव निर्णयं पृच्छेत्यर्थः । यत्त्वन्मुखं द्वैरथे समानशोभाभिलाषाद्द्वैरथसंबन्धिनि द्वन्द्वयुद्धेऽस्य त्वन्मुखाद्भज्यमानत्वात्पलायमानस्य चन्द्रस्य पृष्ठं पश्चाद्भागमपश्यत् । तस्मात्तत्स्वमुखमेव निर्णेतृत्वेन पृच्छेत्यर्थः । त्वन्मुखं चन्द्रादधिकमिति भङ्ग्या नलमुखवर्णनं मेकृतम् । तत्त्वाय तत्त्वं ज्ञातुं, 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी, तादर्थ्यमात्रे वा । तिष्ठस्व, स्थेयाख्यायां तङ् । स्वे, वैकल्पिकत्वात्स्मिन्नभावः ॥ ८१ ॥

उत्तानमेवास्य वलक्षकुक्षि
देवस्य युक्तिः शशमङ्कमाह ।
तेनाधिकं देवगवेष्वपि स्यां
श्रद्धालुरुत्तानगतौ श्रुतायाम् ॥ ८२ ॥

उत्तानमिति ॥ युक्तिरर्थापत्तिरनुमानं वाऽस्य देवस्य चन्द्रस्य मध्यवर्तिनमङ्कं कलङ्करूपं शशमुत्तानं स्वर्गसम्मु-

१ अत्रानुप्रासः, उत्प्रेक्षोपमा च । २ अत्रोत्प्रेक्षा, रूपकं च ।

१ अत्राप्युत्प्रेक्षा, रूपकं च । २ अत्रोत्प्रेक्षा ।

खमरमदादिदृश्यमानपृष्ठभागमाह ब्रूते । यतो वलक्षकुक्षि धवलोदरम् । यद्ययं शशकोऽस्मत्सम्मुखोदरोऽनुत्तानोऽभविष्यत्, तर्हि मध्यवर्तिशशकोदरस्य धवलत्वाच्चान्द्रमध्यभागोऽपि धवलोऽभविष्यत्, नच तथा दृश्यते, किंतु मलिनः । तस्मादुत्तान एव शशकश्चन्द्रेऽस्तीति युक्तिरित्यर्थः । तेन चन्द्रशशकनिश्चितोत्तानत्वेनैव हेतुनाहं देवगवेष्वपि सुरभीप्रभृतिषु विषये वेदे श्रुतायामुत्तानगवी सुरलोकसम्मुखचरणतया गमने विषये पूर्वापेक्षयाधिकमतितरां श्रद्धालुरास्तिक्ययुक्ता स्याम् । 'उत्ताना वै देवगवाश्चरन्ति' इति श्रुतिर्न्यायोपपन्नार्थतया सत्यैवेत्यहमिदानीमधिकं मन्य इत्यर्थः । देवगवेषु 'गोरतद्धितलुकि ५।४।९२' इति टच् । 'देवगवीषु' इति पाठे टित्वान्ङीप्[1] ॥ ८२ ॥

दूरस्थितैर्वस्तुनि रक्तनीले
विलोक्यते केवलनीलिमा यत् ।
शशस्य तिष्ठन्नपि पृष्ठलोम्नां
तन्नः परोक्षः खलु रागभागः ॥ ८३ ॥

उक्तरीत्योत्तानगतौ सिद्धायामपि शशकस्य रक्तपृष्ठत्वान्नीलत्वेन प्रतीतिः कथमित्यत आह—

दूरेति ॥ दूरस्थितैर्द्रष्टृभी रक्तनीलमिश्रितोभयवर्णे वस्तुनि केवलस्त्यक्तरागभागो नीलिमैव यद्यस्माद्विलोक्यते तत्तस्मात्कारणाच्छशस्य पृष्ठवर्तिरोम्णां तिष्ठन्नपि रागभागो रक्तिमांशः नोऽस्माकमतिदूरस्थितानां खलु निश्चितं परोक्षो दृग्गोचरो न भवति, किंतु नीलिमैव दृश्यत इत्यर्थः । तिष्ठन्वर्तमानोऽपि परोक्ष इति विरोधाभासः । दूरस्थत्वान्न दृश्यत इति तत्परिहारः । सन्देहप्रश्नार्थौ वा[2] ॥ ८३ ॥

भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं
पदप्रयोगाध्वनि लोक एषः ।
शशो यदस्यास्ति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति नोक्तः ॥ ८४ ॥

भङ्क्तुमिति ॥ एष काविर्लोकः पदानां सुप्तिङन्तानां प्रयोगाध्वनि विषये व्याकरणस्य प्रकृतिप्रत्ययविभागपूर्वं शब्दव्युत्पादनकारिणः शास्त्रस्य मदधीन एव सकलशब्दप्रयोग इति दर्पं गर्वं, यद्वा—लक्षणया वैयाकरणस्य व्याकरणाधीन एव सकलशब्दप्रयोग इति गर्वं भङ्क्तुं त्याजयितुं प्रभुः समर्थः । यद्यस्माद्धेतोरयं चन्द्रः शशोऽस्यास्ति ततो हेतोः शशी यथोक्तो लोकेनेति शेषः । एवममुनैव प्रकारेण मृगोऽस्यास्ति मृगीति नोक्तः । शशोऽस्यास्तीति मतुबर्थे 'अत इनिठनौ' इतीनौ यथायं शशीत्युच्यते, तथा तेनैव सूत्रेण मृगोऽस्यास्तीत्यत्रेनेः प्राप्तौ सत्यामपि मृगीति नोक्तः । तस्मादतिव्याप्त्यादिदोषाद्व्याकरणमूल एव लोकप्रयोग इति नियमो न युक्तः किंतु कृत्तद्धितसमासानामभिधानं नियामकम् । लक्ष्यमुद्दिश्य लक्षणप्रवृत्तिः, नतु लक्षणमुद्दिश्य लक्ष्यप्रवृत्तिरिति । तस्मात्प्रयोगमूलं व्याकरणमिति व्याकरणाल्लोक एव प्रयोगे बलीयानिति भावः । अप्रस्तुतप्रशंसा ॥ ८४ ॥

यावन्तमिन्दुं प्रतिपत्प्रसूते
प्रासावि तावानयमब्धिनाऽपि ।
तत्कालमीशेन धृतस्य मूर्ध्नि
विधोरणीयस्त्वमिहास्ति लिङ्गम् ॥ ८५ ॥

यावन्तमिति ॥ शुक्लप्रतिपद्यावन्तं यत्प्रमाणमेककलमिन्दुं प्रसूते, अब्धिनापि तावांस्तत्प्रमाण एककल एवायं प्रासावि, नतु पूर्ण इत्यर्थः । एतत्कथं ज्ञातमित्यत आह—तत्कालं तस्मिन्काले समुद्रादुत्पत्तेरवसर एव ईशेन मूर्ध्नि धृतस्य विधोरणीयस्त्वं नितरां कार्श्यमेवैककलत्वे लिङ्गं ज्ञापकमनुमापको हेतुरस्ति । यदि समुद्रेण संपूर्णोऽयमजनिष्यत, तर्हि शिवेनापि तदानीमेव शिरसि तावानेवाधास्यत, नतु तथा, तस्मात्प्रतिपदैककलः प्रसूतः, तावान्स समुद्रेणापीति प्रतिपदुत्पन्नोऽप्ययमेककलत्वादेव न दृश्यत इति भावः[1] ॥ ८५ ॥

आरोप्यते चेदिह केतकत्व-
मिन्दौ दलाकारकलाकलापे ।
तत्संवदत्यङ्कमृगस्य नाभि-
कस्तूरिका सौरभवासनाभिः ॥ ८६ ॥

आरोप्यत इति ॥ केतकत्वमिहेन्दौ चेद्यदि आरोप्यते यतो दलाकारः केतकीपत्रसदृशः धवलः कलानां कलापः समूहो यस्य तस्मिन् । तत्तस्मात्केतकदलवच्छुभ्रकलाकलापत्वाच्चन्द्रः केतकमेवेति रूप्यत इत्यर्थः ।

---

१ अत्रानुमानानुप्राणितोत्प्रेक्षा । २ अत्रोत्प्रेक्षा, काव्यलिङ्गं च ।

१ अत्रानुमानानुप्राणितोत्प्रेक्षा । २ अत्रापि पूर्ववदनुमानानुप्राणितोत्प्रेक्षैव ।

तत्तर्हि अङ्कमृगस्य मृगत्वेन नाभिकस्तूरिका कर्त्री आरोपितं तत्केतकत्वं कर्मभूतं सौरभवासनाभिः कृत्वा संवदति । चन्द्रे केतकत्वं युक्तमित्यनुमन्यत इत्यर्थः । 'नाभिः' इति पाठे—अङ्कमृगस्य नाभिः कर्त्री कस्तूरिकासंबन्धिसौरभवासनाभिः कृत्वा संवदतीति वा । केतक्यां कस्तूरीपरिमलो वर्तते, चन्द्रे कलङ्कमृगनाभिरूपा कस्तूरी वर्तते । तस्माच्चन्द्रे केतकत्वमारोपयितुं युक्तमित्यर्थः । तत्केतकत्वमङ्कमृगस्य नाभिकस्तूरिकायाः परिमलस्य वासनाभिः संक्रमणैः कृत्वा संवदति, युक्त्या संवादं प्राप्नोत्येवेति वा । 'ताभिः' इति पाठे—अतिप्रसिद्धाभिर्वासनाभिः ॥ ८६ ॥

> आसीद्यथाज्यौतिषमेष गोलः
> शशी समक्षं चिपिटस्ततोऽभूत् ।
> स्वर्भानुदंष्ट्रायुगयन्त्रकृष्ट-
> पीयूषपिण्याकदशावशेषः ॥ ८७ ॥

आसीदिति ॥ एष शशी यथाज्यौतिषं गर्गादिमुनिप्रणीतग्रहगणितशास्त्रानतिक्रमेण गोलः कपित्थफलवद्वर्तुलोपरितनभाग एव पूर्वमासीत् । तर्हीदानीं कथमन्यथा दृश्यत इत्याशङ्क्याह—ततोऽनन्तरं कालक्रमेण स्वर्भानो राहोरूर्ध्वाधोभागस्थितदंष्ट्रायुगमेव यन्त्रं निष्पीडनचक्रं तेन कृष्टं निष्कृष्य गृहीतं पीयूषममृतं यस्य, यस्माद्वा, स चासौ पिण्याकश्च तस्य दशा गृहीतस्नेहरसतिलादिपिण्डीमात्ररूपतावशेष उद्धृतो भागो यस्यैवंभूतः सन् चिपिटः । पर्पटप्रायोऽभूदिति समक्षमिदानीं प्रत्यक्षेणानुभूयत एवेत्यर्थः । ज्योतिरधिकृत्य कृतो ग्रन्थो ज्यौतिषम्, 'अधिकृत्य कृते ग्रन्थे ४ । ३ । ८१' इत्यण् । ततो यथार्थेऽव्ययीभावः । ज्योतिःशास्त्रादौ त्रयोदशाङ्गुलश्चन्द्रः षोडशाङ्गुलस्य सूर्यस्याधोभागस्थो जलपूर्णकाचकूपिकाप्रायो यथोदितः, तथैव पूर्वमासीदित्युक्तम् ॥ ८७ ॥

> असावसाम्याद्वितनोः सखा नो
> कर्पूरमिन्दुः खलु तस्य मित्रम् ।
> दग्धौ हि तौ द्वावपि पूर्वरूपाद्
> यद्वीर्यवत्तामधिकां दधाते ॥ ८८ ॥

१ अत्र कलेतियमकम्, वृत्ताकारेत्युपमा, चेदिति यद्यर्थातिशयोक्तिः । २ अत्रोत्प्रेक्षा ।

असाविति ॥ असौ चन्द्रो वितनोरनङ्गस्य सखा न भवति । कुतः—असाम्यादसादृश्यात् । 'विवाहमैत्रीवैराणि भवन्ति समशीलयोः' इति शास्त्रादनयोः साङ्गानङ्गयोः सादृश्याभावान्मैत्री न संगच्छत इत्यर्थः । तर्ह्यनयोर्लोकप्रसिद्धा मैत्री कथमित्यत आह—खलु निश्चितं कर्पूरापरनामधेन्दुरनङ्गस्य मित्रम्, तावतैव लोकप्रसिद्धिरिति विरोधाभाव इत्यर्थः । तत्र हेतुमाह—यद्यस्मात्तौ द्वावपि कामकर्पूरौ दग्धौ सन्तौ पूर्वरूपाददग्धदशायाः सकाशादधिकां वीर्यवत्तां हि स्फुटं दधाते । पक्वो हि कर्पूरो वीर्यवत्तरो भवति, कामोऽपि दाहानन्तरमधिकं वीर्यवाननुभूयते । तदुक्तम्—'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने । नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥' इति । तस्मात्कामकर्पूरयोर्मैत्री युक्ता । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः' इत्यमरः । अस्त्रियामित्यमरवचनात्कर्पूरशब्दो नपुंसकोऽपि । असमयुक्तत्वं पुनर्दोषं इति लभ्यते ॥ ८८ ॥

> स्थाने विधोर्वा मदनस्य सख्यं
> स शम्भुनेत्रे ज्वलति प्रलीनः ।
> अयं लयं गच्छति दर्शभाजि
> भास्वन्मये चक्षुषि चादिपुंसः ॥ ८९ ॥

स्थान इति ॥ वाथवा विधोर्मदनस्य सख्यं स्थाने । युक्तमेवेत्यर्थः । तत्र हेतुः—स कामः ज्वलति देदीप्यमाने शंभुनेत्रे प्रलीनः प्रकर्षेण लीन एकतां प्रलयं गतः । विनष्ट इत्यर्थः । अयं चन्द्रश्च दर्शभाजि दर्शने दर्शसंज्ञयापारयुक्ते, अथ च—अमावास्यां गते, भास्वन्मये सूर्यरूपे आदिपुंसो विष्णोश्चक्षुषि लयमेकतां गच्छति । दर्शे हि चन्द्रः सूर्यं गच्छति, अतएव दर्शस्य सूर्येन्दुसंगम इति नाम । सूर्यो विष्णोर्दक्षिणं चक्षुः । तथा च तुल्ययोर्हरिहरयोर्नेत्रयोर्द्वयोरपि चन्द्रकामयोः प्रलीनत्वाद्दर्शे चन्द्रस्याप्यनङ्गतया च समशीलत्वादुचितैव मैत्रीत्यर्थः । तथा च कामस्य चन्द्रसखित्वप्रसिद्धिर्मुख्यैव युक्तेति भावः ॥ ८९ ॥

> नेत्रारविन्दत्वमगान्मृगाङ्कः
> पुरा पुराणस्य यदेष पुंसः ।
> अस्याङ्क एवायमदात्तदानीं
> कनीनिकेन्दिन्दिरसुन्दरत्वम् ॥ ९० ॥

१ अत्राप्युत्प्रेक्षा । २ अत्रानुमानानुप्राणितोत्प्रेक्षा ।

युक्त इत्यर्थः। जगच्छाये, 'विभाषा सेनासुराच्छायाशाला निशानाम् २।४।२५' इति पक्षे षण्ढत्वम् ॥ ९४ ॥

मावापदुन्निद्रसरोजपूजा-
श्रियं शशी पद्मनिमीलितेजाः ।
अक्षिद्वयेनैव निजाङ्करङ्को-
रलङ्कृतस्तामयमेति मन्ये ॥ ९५ ॥

मेति ॥ शशी उन्निद्रैर्विकसितैः सरोजैः कृत्वा या पूजा तज्जनितां श्रियं मा अवापत् मास्म लभत । यतः—पद्मनिमीलि कमलसंकोचकं तेजो यस्य सः । विकसितानामपि कमलानां पूजार्थं चन्द्रसविधे क्रियमाणानां चन्द्रतेजसा सङ्कोचस्यैव सम्भवादुन्निद्रसरोजपूजाश्रियं कथं प्राप्नोति । प्रकारान्तरेण प्राप्नोतीत्याह—निजाङ्कभूतस्य रङ्कोर्मृगस्याक्षिद्वयेनैवालङ्कृतोऽयं चन्द्रस्तामुन्निद्रसरोजपूजाश्रियमेति प्राप्नोति तन्नयनयोरुन्निद्रकमलरूपत्वादित्यर्थ इत्यहं मन्ये । अङ्कमृगनेत्राभ्यां कृत्वायं चन्द्रो विकसितकमलाभ्यां पूजामिव शोभां प्राप्नोतीति भावः । एत्येवेति वा ॥ ९५ ॥

य एष जागर्ति शशः शशाङ्के
बुधो विधत्ते क इवात्र चित्रम् ।
अन्तः किलैतत्पितुरम्बुराशे-
रासीत्तुरङ्गोऽपि मतङ्गजोऽपि ॥ ९६ ॥

य इति ॥ एष प्रत्यक्षदृश्यः शशः शशाङ्के जागर्ति स्फुरति अत्र विषये क इव बुधश्चित्रमाश्चर्यं विधत्ते, अपितु न कोऽपि । किल यस्मादेतत्पितुरम्बुराशेरन्तर्मध्येउच्चैःश्रवःसंज्ञकस्तुरङ्गोऽप्यासीत्, ऐरावताख्यो मतङ्गजोऽप्यासीत । यदीयपितुर्मध्येऽश्वगजादिकं भवति, तदीयपुत्रमध्ये शशमात्रसंभवे किमाश्चर्यमित्यर्थः ॥ ९६ ॥

गौरे प्रिये भातितमां तमिस्रा
ज्यौत्स्नी च नीले दयिता यदस्मिन् ।
शोभाभिलोभादुभयोस्तयोर्वा
सितासिताम्मूर्तिमयं बिभर्ति ॥ ९७ ॥

गौर इति ॥ तमिस्रा तमोबहुलाऽस्य दयिता रात्रिर्गौरे प्रिये चन्द्रे विषये भातितमाम् । तथा—ज्यौत्स्नी च चन्द्रिकायुक्ता धवलाऽस्य दयिता रात्रिर्नीले श्यामेऽस्मिंश्चन्द्रे नितरां शोभते । भिन्नवर्णे हि शोभेते इत्यर्थः । तस्माद्धेतोस्तयोस्तमिस्राज्यौत्स्न्योरुभयोरपि विषये स्वस्य शोभाप्राप्तेर्लोभादभिलाषात्तयोरेव वा पत्न्योर्या शोभाप्राप्तिस्तदभिलाषाद्धवलश्यामलवत्सम्बन्धात्तमिस्राज्यौत्स्न्योः शोभया भवितव्यमिति । अयं चन्द्रः सितासितां धवलां श्यामलां च मूर्तिं बिभर्ति । वा इवार्थः । शोभाभिलोभादिवेत्यन्वयः । नीलभागे ज्यौत्स्नीं प्रियां धारयितुं धवले च तामसीमिति यथासंख्यम् ॥ ९७ ॥

वर्षाऽऽतपानावरणं चिराय
काष्ठौघमालम्ब्य समुत्थितेषु ।
बालेषु ताराकवकेष्विहैकं
विकस्वरीभूतमवैमि चन्द्रम् ॥ ९८ ॥

वर्षेति ॥ अहं बालेषु तनुषु सूक्ष्मरूपेष्वविकसितेषु चेह प्रत्यक्षदृश्येषु तारासु नक्षत्रेष्वेव कवकेषु छत्राकेषु मध्ये चिरकालोत्पन्नत्वाद्विकस्वरीभूतं विकसितमेकं छत्राकमेव चन्द्रमवैमि मन्ये । किंभूतेषु ताराकवकेषु—चिराय बहुकालं वर्षास्वृतौ तपे ग्रीष्मर्तौ च वर्षेषु जलवृष्टिषु आतपेपूष्णेषु च सत्सु अनावरणमनाच्छादितं काष्ठौघं दिक्समूहमेव दारुसमूहमालम्ब्य समुत्थितेषूत्पन्नेषु । वर्षाकाले ह्यनावृतेषु जलस्तिमितेषु पश्चादुष्णतप्तेषु च काष्ठेषु सूक्ष्मस्थूलानि च्छत्राकाणि भवन्ति । तथा च तारा अल्पकवकानि, चन्द्रस्तु स्थूलकवकमिवेत्युत्प्रेक्षा ॥ ९८ ॥

दिनावसाने तरणेरकस्मा-
न्निमज्जनाद्विश्वविलोचनानि ।
अस्य प्रसादादुडुपस्य नक्तं
तमोविपद्वीपवती तरन्ति ॥ ९९ ॥

---

१ अत्रानुप्रासः, उत्प्रेक्षा, अर्थान्तरन्यासश्च । २ अत्रोत्प्रेक्षा । ३ उत्प्रेक्षाऽत्रापि ।

१ अत्र सितेति यमकम् । तमिस्रा, ज्यौत्स्नी चेत्युभे चन्द्रस्य समे प्रिये । चन्द्रोऽपि तयोर्दक्षिणो नायको न विषमानुरागः, अत एवायं कदाचित्पूर्वां भजते कदाचित्पराम् । नचैतावन्मात्रस्योभयत्रानुरागित्वसाधारण्यं, किंतु तयोरासक्त्या तदाकार एव संवृत्तः, अत्यन्तासक्तो हि तन्मयो भवतीति न्यायात् इति चन्द्रस्य तयोश्च गाढानुरागित्वमुत्प्रेक्षितमित्येवम्भूतोत्प्रेक्षा । २ तराणां कवकत्वेन रूपणाद्रूपकं, चन्द्रस्यापि कवकैकतमत्वमित्यपि रूपकं, तथोत्प्रेक्षणाच्चोत्प्रेक्षा चेति व्याख्याकारा अप्याहुः ।

दिनेति ॥ विश्वस्य जगतो विलोचनानि दिनावसाने तरणेः सूर्यस्याकस्मादसम्भावितहेतोर्निमज्जनात्प्रतीचीसागरनीरप्रवेशाद्धेतोर्नक्तं रात्रौ तमोनिमित्तां स्खलनादिरूपां विपदमेव द्वीपवर्ती महानदीमस्योडुपस्य चन्द्रस्य प्रकाशरूपात्प्रसादात्तरन्ति । चन्द्रेण तमो निरस्य सर्वं प्रकाशितमिति भावः । अन्येऽपि रात्रौ तरणेर्नौकाया अकस्मान्मज्जनाद्धेतोर्ब्रुडनरूपामापन्नदीमुडुपस्याकस्मादागतस्याल्पयानपात्रस्य प्रसादात्तरन्ति ॥ ९९ ॥

किं नाक्ष्णि नोऽपि क्षणिकोऽणुकोऽयं
भानस्ति तेजोमयबिन्दुरिन्दुः ।
अत्रेस्तु नेत्रे घटते यदासीन्
मासेन नाशी महतो महीयान् ॥१००॥

किमिति॥नोऽस्माकममहतां(पामराणाम्) अपि अक्ष्णि नेत्रविषये तेजोमयस्तेजोरूपो बिन्दुरेवायमिन्दुरङ्गुल्या नयनप्रान्तचिपिटीकरणे धवलवर्तुलाकारेण भान् शोभमानः किं नास्ति, अपि त्वस्मदादिनेत्रेऽपीन्दुर्वर्तत एव, परम्—अणुकोऽल्पीयान्, तथा क्षणिकः क्षणमात्रावस्थायी । यावच्चिपिटीकरणमेव दृश्यत इत्यर्थः । तर्ह्यस्माच्चन्द्रात्तस्य वैलक्षण्यं कथमत आह—अत्रेर्मुनेर्नेत्रे तु पुनस्तेजोमयबिन्दुरयमिन्दुर्महीयानितरापेक्षया नितरां महापरिमाण आसीत् । तथा मासेन कृत्वा नाशी प्राप्तविनाशश्चाभूदिति यत्, तद्घटते । एतद्युज्यत इत्यर्थः । यतः—कीदृशस्यात्रेः—महतो महानुभावस्य । 'सर्वं हि महतां महत्' इति न्यायेन महतोऽत्रेस्तेजोमयबिन्दुरप्ययमिन्दुर्महापरिमाणश्चिरकालस्थायी चेत्यस्मन्नेत्रवर्तितेजोमयबिन्दोरिन्दोर्वैलक्षण्यं युक्तमेवेति भावः । अणुकः, 'अल्पे ५ । ३ । ८५' इति कन् । नाशीति, 'अत इनिठनौ ५ । २ । ११५' इति अस्त्यर्थे इनिः ॥ १०० ॥

त्रातुं पतिं नौषधयः स्वशक्त्या
मन्त्रेण विप्राः क्षयिणं न शेकुः ।
एनं पयोधिर्मणिभिर्न पुत्रं
सुधा प्रभावैर्न निजाश्रयं वा ॥१०१॥

त्रातुमिति ॥ मृतसंजीविन्यादय ओषधयः स्वशक्त्या स्वसामर्थ्येन निजरसवीर्यविपाकाभ्यां कृत्वा ओषधीशत्वात्पतिमेनं चन्द्रं क्षयिणं प्रतिदिनं कलाक्षयवन्तम्, अथ च—क्षयरोगिणं सन्तं त्रातुं न शेकुः तथा—विप्रा द्विजराजत्वान्निजस्वामिनं क्षयिणं मन्त्रेण श्रुतिसामर्थ्येन कृत्वा रक्षितुं न शेकुः । तथा—पयोधिरपि पुत्रं क्षयिणमेनं मणिभिरनेकप्रकारैरन्तःस्थैः रत्नैः कृत्वा रक्षितुं न शशाकेति वचनविपरिणामः । तथा—सुधापि स्वाधारभूतं क्षयिणमेनमजरामरत्वजनकैः प्रभावैः कृत्वा त्रातुं न शशाक । वा समुच्चये । ओषध्यादयः स्वशक्त्यादिरक्षणसाधने सत्यपि पतित्वात् पुत्रत्वान्निजाश्रयत्वाच्च क्षयाद्रक्षितुं समर्था न बभूवुरिति विशेषोक्त्या पूर्वकर्मजो रोगो महानुभावैरप्यपनेतुं न शक्यत इति व्यज्यते । अचिन्त्यो हि मणिमहौषधीनां प्रभाव इत्योषध्यादीनां सामर्थ्यं प्रसिद्धम् ॥ १०१ ॥

मृषा निशानाथमहः सुधा वा
हरेदसौ वा न जराविनाशौ ।
पीत्वा कथं नापरथा चकोरा
विधोर्मरीचीनजरामराः स्युः ॥१०२॥

मृषेति ॥ निशानाथस्य चन्द्रस्य महस्तेजः सुधा वा पीयूषमेवेति लोकवादो मृषा असत्य एव वा भवेत् । वा अथवा । यदि चन्द्रतेजः सुधेवेति लौकिकप्रवादः सत्य एव, तर्ह्यसौ चन्द्रतेजोरूपा सुधा जराविनाशौ जरामरणे न हरेद्विनाशयेदित्यङ्गीकार्यम् । चन्द्रतेजः सुधा नैवेति वाङ्गीकार्यम् । अथ चैतद्रूपा सुधापि जरामरणे न नाशयतीत्यङ्गीकार्यमित्यर्थः । अपरथान्यथा यदि चन्द्रतेजः सुधेति प्रवादः सत्यः, तद्रूपा सुधा जरामरणे विनाशयेत्, तर्हि चकोराख्याः पक्षिणो विधोर्मरीचीन्पीत्वापि कथं किमिति न अजरामरा स्युर्जरामरणरहिता भवेयुः । चन्द्रतेजसः सुधात्वे, एतस्याश्च सुधाया जरामरणयविनाशे सामर्थ्यसद्भावे, तत्पाने चकोरैरप्यजरामरैर्भाव्यम्, न चेन् तथा, तस्मात्तत्तेजसः सुधात्वं वा मृषा भवेत्, सुधाभूतस्यापि वा जरामरणापहारे सामर्थ्यं नास्तीत्यन्यतरदङ्गीकार्यम् । तथा—'सुधाप्रभावैर्न निजाश्रयं वा' इति पूर्वश्लोकांशसमाधानमित्याशयः । 'अजरामरीस्युः—' इति पाठे—च्विः ॥ १०२ ॥

---

१ अत्र विपदो द्वीपवर्तीत्वेन रूपणाद्रूपकम्, उत्प्रेक्षा च । २ अत्रानुप्रासः, उत्प्रेक्षा च ।

१ विशेषोक्तिरत्र, तया च 'नाभुक्तं क्षीयते कर्म' इति वस्तु प्रतीयत इत्यलङ्काराद्वस्तुध्वनिः । २ निशानाथमहसःसुधाभूतत्वेऽपि तदपह्नवनादपह्नुतिमूलोत्प्रेक्षा।

वाणीभिराभिः परिपक्त्रिमाभि-
नरेन्द्रमानन्दजडं चकार ।
मुहूर्तमाश्चर्यरसेन भैमी
हैमीव वृष्टिः स्तिमितं च तं सा १०३॥

वाणीभिरिति ॥ सा भैमी आभिः पूर्वोक्ताभिः परिपाकेन निर्वृत्ताभिः परिणतकवित्वशक्तितया प्रसादादिगुणयुताभिर्वाणीभिः कृत्वा तं नरेन्द्रमानन्दजडं हर्षपरवशं चकार । तथा—मुहूर्तमद्भुतापरनाम्नाश्चर्येण रसेन, अथ च—तद्द्रवेण जलेन, हैमी तुषारसंबन्धिनी वृष्टिरिव भैमी स्तिमितमीतस्नेहाद्याप्ततन्मं च, अथ च—आर्द्रं चकार । हिमवृष्टिर्यथान्यं जडमार्द्रं च करोति, तथेयमप्यानन्दजडं सातिस्नेहं च चकारेत्यर्थः । परिपाक्त्रिमाभिः, ड्वित्वान्निर्वृत्तेऽर्थे क्त्रिः, क्त्रेर्मप् ॥१०३॥

इतो मुखाद्वागियमाविरासीत्
पीयूषधारामधुरेति जल्पन् ।
अचुम्बदस्याः स मुखेन्दुबिम्बं
संवावदूकश्रियमम्बुजानाम् ॥ १०४ ॥

इत इति ॥ इत्येवं जल्पन् वदन् स नलोऽम्बुजानां संवावदूका नितरां संवादिनी श्रीः शोभा यस्य तादृशं कमलतुल्यशोभमस्या मुखेन्दुबिम्बमचुम्बत् । चन्द्रकमलतुल्यं भैमीमुखं प्रीत्यतिशयादचुम्बदित्यर्थः । इति किम्—हे भैमि, इयमुक्तप्रकारा पीयूषधारावन्मधुरा वाक् इतः प्रत्यक्षदृश्यात्त्वन्मुखादाविरासीत् निःसृतेति । इत इत्यनेन सामीप्याभिनयकारिणा करेण भैमीमुखं चिबुके धृतमीति व्यज्यते । मुखस्येन्दुबिम्बत्वेन च पीयूषधारासंबन्धोचितेति सूच्यते । तथा च. पीयूषधारया मधुरेत्यापि व्याख्येयम् । संवावदूकेत्यादिना च भैम्याः पद्मिनीत्वं प्रसिद्धम् । चन्द्रबिम्बस्य कमलैः सह विसंवादो विरोधित्वात्, एतन्मुखचन्द्रबिम्बस्य तु कमलैः सह संवादः कमलसौभाग्यमाक्त्वादिति प्रसिद्धचन्द्रबिम्बादेतन्मुखबिम्बमधिकमिति सूच्यते । अत्यर्थं संवदति संवावदूका, संपूर्वोऽयं वदतिर्भैम्यां वर्तते ॥ १०४ ॥

प्रियेण साऽथ प्रियमेवमुक्ता
विदर्भभूमीपतिवंशमुक्ता ।
स्मितांशुजालं विततार तारा
दिवः स्फुरन्तीव कृतावतारा ॥ १०५॥

१ अत्रोपमा । २ अत्राप्युपमा ।

प्रियेणेति ॥ प्रियेण एवम् 'इतो मुखात्—' इत्यादिरूपं प्रियं वचनमुक्ता भाषिता विदर्भभूमीपतेर्वंशेन कुलेन मुक्ता जनिता । तथा—स्फुरन्ती दीप्यमानकान्तिः सोल्लासा सा भैमी अथ नलवचनानन्तरं स्मितांशुजालं विततार । तदेव नलाय प्रीतिदानमिव ददावित्यर्थः । केव—दिवः सकाशात् क्षीणपुण्यतया स्वेच्छया वा कृतावतारा भूलोकमागता रोहिणी तारेव स्फुरन्ती किरणजालं वितताररेवेति उत्प्रेक्षोपमा। या वंशः कुलमेव वंशो वेणुस्तत्र जाता देवधार्या मुक्ता मौक्तिकरूपा । कृतावतारेत्यत्र तरणं तरः, 'ऋदोरप् ३ । ३ । ५७' तदन्तात्प्रशादित्वात्स्वार्थेऽणि पश्चादवशब्देन सह 'सह सुपा २ । १ । ४' इति समासः ॥ १०५ ॥

स्ववर्णना न स्वयमर्हतीति
नियुज्य मां त्वन्मुखमिन्दुरूपम् ।
स्थानेऽत्युदास्ते शशिनः प्रशस्तौ
धरातुरासाहमिति स्म साऽऽह ॥१०६॥

स्वेति ॥ सा धरातुरासाहं भूमीन्द्रमित्याह स्म । इति किम्—हे प्रिय, इन्दुरूपं त्वन्मुखमिति हेतोश्चन्द्ररूपात्मस्तुतौ मां नियुज्याग्राप्य शशिनः प्रशस्तौ वर्णनविषयेऽत्युदास्तेऽतितरामुदासीनं भवति । एतत्स्थाने युक्तम् । हेतुमेवाह—इति किम्—'सतामेतदकर्तव्यं परानिन्दात्मनः स्तुतिः' इत्यादिवचनात्स्वयमात्मनैव स्वस्य वर्णना स्तुतिर्नार्हति न युक्तेति । इत्येतत्पर्यन्तं मया चन्द्रो वर्णितः, इदानीं त्वया वर्णनीयः तूष्णींभावो वा युक्त इत्याशयेन भैमी चन्द्रस्तुतौ तं सोत्प्रासं प्रावर्तयदिति भावः । तुरासाहमित्यत्र तृतीयसर्गे 'धरातुरासाहि' इत्येतच्छ्लोकस्था शङ्का ज्ञातव्या, तत्रोत्तरम्—इन्दुरूपं त्वन्मुखं, चन्द्ररूपात्मस्तुतौ मां नियुज्य शशिनः प्रशस्तौ अत्युदास्ते । साहं धरावद्वराऽनुत्तालाऽवेगा वा । पृथ्वीवद्गम्भीरेत्यर्थः । अर्थात्तमाह स्मेति ज्ञातव्यम् १०६

तयेरितः प्राणसमः सुमुख्या
गिरं परीहासरसोत्किरां सः ।

१ अत्र वंशमुक्तेति वंश इव वंश इति श्लिष्टं रूपकं भैम्यास्ताराताररूपणायेति परम्परितम्, 'नियतारोपणोपायः स्यादारोपः परस्य यः। तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥' इति तल्लक्षणात् । २ अत्रार्हतीति हेतूत्प्रेक्षा; इन्दुरूपमिति धरातुरासाहमिति च रूपकम् ।

भूलोकसारः स्मितवाक् तुषार-
भानुं भणिष्यन्सुभगां बभाण ॥१०७॥

तयेति ॥ स भूलोके सारः श्रेष्ठतमो नलः स्मितवाक् तुषारभानुं चन्द्रं भणिष्यन् वर्णयिष्यन् सन् सुभगां सौभाग्यवतीं भैमीं बभाण । किंभूतः—तया सुमुख्या भैम्या परिहासरसस्योत्किरामुद्धावयित्रीं गिरमीरित उक्तः। तथा—प्राणसमोऽतिप्रेयान् । तया चन्द्रवर्णने ईरितः प्रेरितः सन्परिहासरसोत्किरां गिरं बभाणेति वा । उत्किराम्, 'इगुपधज्ञाप्रीकिरःकः ३ । १ । १३५' इति कः । पूर्वेण षष्ठीसमासः । भणिष्यन्, हेतौ लृटः शतो ॥ १०७ ॥

तवानने जातचरीं निपीय
गीतिं तदाकर्णनलोलुपोऽयम् ।
हातुं न जातु स्पृहयत्यवैमि
विधुं मृगस्त्वद्वदनभ्रमेण ॥ १०८ ॥

तवेति ॥ हे प्रिये, अयं मृगः तवानने जातचरीं भूतपूर्वां गीतिं स्वरमाधुरीं निपीय सादरमाकर्ण्येदानीमपि तस्या भवद्गीतेराकर्णनलोलुपोऽतितरां लुब्धोऽतिसादृश्यात्त्वद्वदनभ्रमेण विधुं हातुं जातु कदाचिदपि न स्पृहयतीत्यहमवैमि । मृगा हि गानप्रिया भवन्तीति चन्द्रं त्वन्मुखभ्रान्त्या त्यक्तुं नेच्छतीत्यहं शङ्क इत्यर्थः । जातचरीं, 'भूतपूर्वे चरट्५।३।५३'इति चरट् । लोलुपः, यङन्तात्पचाद्यचि 'यङोऽचि च' २ । ४ । ७४' इति यङो लुक् ॥ १०८ ॥

इन्दोर्भ्रमेणोपगमाय योग्ये
जिह्वा तवास्ये विधुवास्तुमन्तम् ।
गीत्या मृगं कर्षतु भन्त्स्यता किं
पाशीबभूवे श्रवणद्वयेन ॥ १०९ ॥

इन्दोरिति ॥ अतिसादृश्यादिन्दुरेवेदमितीन्दोर्भ्रमेण मृगस्योपगमाय योग्ये प्राप्तुमर्हे तवास्ये वर्तमाना जिह्वा कर्त्री गीत्या वर्णस्वरमाधुर्या कृत्वा विधुरूपं वास्तु वसतिगृहं तद्विद्यते यस्य तं विधुवास्तुमन्तं चन्द्रमध्यस्थायिनमपि मृगं कर्षतु । गीतेर्मधुरतमत्वान्मृगस्य च प्रियगानत्वात्त्वत्समीपमानयत्वित्यर्थः । तदाकर्षणसाधनमुत्प्रेक्षते—भन्त्स्यता आगमिष्यतो मृगस्यात्रैव निवासार्थं बन्धनं करिष्यता श्रवणद्वयेन पाशीबभूवे किम् । तद्रूपया बन्धनरज्ज्वा समाकर्षत्वित्यर्थः । अन्यापि शबरी गीत्या मृगमाकृष्य पाशेन बध्नाति । भवन्मुखं निष्कलङ्कममृताधिकगीतियुक्तं च, चन्द्रस्तु सकलङ्क इति भावः । चन्द्रवर्णनावसरेऽपि मध्ये मध्ये भैमीमुखवर्णनानुरागातिशयसूचनार्थो । अयं श्लोकः क्षेपक इति केचित् ॥ १०९ ॥

आप्यायनाद्वा रुचिभिः सुधांशोः
शैत्यात्तमःकाननजन्मनो वा ।
यावन्निशायामथ घर्मदुःस्थ-
स्तावद्व्रजत्यह्नि न शब्दपान्थः ॥११०॥

गगनस्थोऽपि मृगो भैमीमुखगीतिं कथमशृणोदित्याशङ्क्याह—

आप्यायनादिति ॥ शब्दरूपः पान्थो नित्यपथिको निशायां यावद्व्रजति तावदथ पश्चात्साकल्येन वा अह्नि न गच्छति, यस्माद्दिने घर्मेणातपेन दुःस्थः संततः तस्माद्दिनेऽल्पमेव गच्छतीत्यर्थः । रात्रौ दूरागमने हेतुमाह—सुधांशोरमृतरूपाभी रुचिभिराप्यायनादुज्जीवितत्वाद्वा तम एव काननं वनं तस्माज्जन्म यस्य गाढान्धकारजाताच्छैत्याद्वा तेजसोऽभावे तमसः संभवादौष्ण्याभावाच्छैत्यम् । अत एव रात्रौ बहु गच्छति दिने चोष्णेन श्रान्त इव बहु न गच्छति । शब्दो हि रात्रौ स्वभावादतिदूरेऽपि श्रूयते । दिवा तु न तथा । पथिकोऽपि रात्रौ शैत्याद्दूरं गच्छति, दिने चाल्पम्॥११०

दूरेऽपि तत्तावकगानपाना-
लुब्धावधिः स्वादुरसोपभोगे ।
अवज्ञयेव क्षिपति क्षपायाः
पतिः खलु स्वान्यमृतानि भासः॥१११॥

दूरेऽपीति ॥ हे प्रिये, खलु निश्चितं क्षपायाः पतिश्चन्द्रो भासश्चन्द्रिका एव स्वान्यमृतानि क्षिपति अधो मुञ्चति । किं भूतः—दूरेऽप्यतितरां देशव्यवधानेऽपि

---

१ अत्रानुप्रासः, प्राणसम इत्युपमा, परिहासरसोत्किरामिति रूपकं च । २ अत्रोत्प्रेक्षा ।

१ अत्राप्युत्प्रेक्षा । २ शब्दपान्थ इति रूपकम्, उत्प्रेक्षा च।

तत्प्रसिद्धं मधुरतरं तावकं गानं तस्य पानात्सादरश्रवणाद्धेतोः स्वादुरसोपभोगे माधुर्यातिशयानुभवे विषये लब्धावधिः प्राप्तमर्यादः । उत्प्रेक्षते—अवश्यमेव अनुभूतभवद्गीतमाधुर्यापेक्षयाल्पमाधुर्यत्तयावमाननयेवेत्यर्थः ॥ १११ ॥

अस्मिन्न विस्मापयतेऽयमस्मां-
श्चक्षुर्बभूवैष यदादिपुंसः ।
तदत्रिनेत्रादुदितस्य तन्वि
कुलानुरूपं किल रूपमस्य ॥११२॥

अस्मिन्निति ॥ हे तन्वि, एप चन्द्रः आदिपुंसः श्रीविष्णोर्वामं चक्षुर्बभूवेति यत् । अस्मिन्नेत्रभवनविषयेऽयं नेत्रभूतश्चन्द्रोऽस्मान्न विस्मापयते आश्चर्यं न प्रापयति । अत्रार्थेऽस्माकमाश्चर्यं न भवतीत्यर्थः । किल यस्माद्धेतोरत्रिनेत्रादुदितस्योत्पन्नस्यास्य तच्चक्षुर्भवनं कुलानुरूपं कुलोचितं स्वरूपम् । नेत्ररूपात्कारणाज्जातस्य नेत्रीभवनमुचितमेव । तस्मादस्य पुराणपुरुषनेत्रभवने न किंचिदस्माकं चित्रमित्यर्थः । विस्मापयते, 'नित्यं स्मयतेः' इत्यात्वम्, 'भीस्म्योर्हेतुभये १ । ३ । ६८ ' इति तङ् । अस्मान्, जनान्तरापेक्षया बहुत्वम्[1] ॥ ११२ ॥

आभिर्मृगेन्द्रोदरि कौमुदीभिः
क्षीरस्य धाराभिरिव क्षणेन ।
अक्षालि नीली रुचिरम्बरस्था
तमोमयीयं रजनीरजक्या ॥ ११३ ॥

आभिरिति ॥ हे मृगेन्द्रोदरवत्कृशमुदरं यस्यास्तादृशि, रजन्येव रजकी तया क्षीरस्य दुग्धस्य धाराभिरिव दृश्यमानाभिर्धवलतराभिराभिः कौमुदीभिः कृत्वाऽम्बरस्था गगनस्था तमोमयीयं नीली कज्जलवत्काली रुचिः क्षणमात्रेणाक्षालि निरस्ता । यथा रजक्या वसनस्था काली कान्तिर्दुग्धधाराभिः क्षणेन क्षाल्यते । तदुक्तं कलाकोषे—'तैलं घृतेन तच्चोष्णजलैर्दुग्धेन कज्जलम् । नाशयेदम्बरस्थं तु मलं क्षारेण सोष्मणा ।'इति । चन्द्रिकाभिर्गगनं निर्मलीकृतमिति भावः । मृगेन्द्रोदरि, 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ४।१।५५' इति ङीप् । ओषधिप्राणिवाचित्वाभावान्नीलीव नीलीति ङीप् समर्थनीयः । रजकी, ष्वुनः पित्वान्ङीप्[2] ॥ ११३ ॥

पयोमुचां मेचकिमानमुच्चै-
रुच्चाटयामास ऋतुः शरद्या ।
अपारि वामोरु तयापि किंचि-
न्न प्रोञ्छितुं लाञ्छनकालिमास्य ॥११४॥

पय इति ॥ हे वामोरु, या शरदृतुः पयोमुचां मेघानां वर्षाकालिकमुच्चकैरतिशयितमपि मेचकिमानं कालिमानमुच्चाटयामास । तया कालिमापनयने दृष्टसामर्थ्यया शरदाप्यस्य चन्द्रस्य लाञ्छनरूपः कालिमा किंचिदल्पमपि प्रोञ्छितुं स्फोटयितुं नापारि । शरदच्छे चन्द्रे मलिनः कलङ्कोऽतितरां शोभत इति भावः । मेचकिमानम्, 'वर्णदृढादिभ्यः ष्यञ्च ५।१।२२३' इति वर्णवाचित्वादिमनिच्[3] ॥ ११४ ॥

एकादशैकादशरुद्रमौली-
नस्तं यतो यान्ति कलाः किमस्य ।
प्रविश्य शेषास्तु भवन्ति पञ्च
पञ्चेषुतूणीमिषवोऽर्धचन्द्राः ॥ ११५ ॥

एकेति ॥ अस्तं यतो गच्छतोऽस्य चन्द्रस्यैकादश कला एकादशानां रुद्राणां मौलीन् प्रति यान्ति किल गच्छन्तीव । शेषाः पञ्चकलास्तु पुनः पञ्चेषोः कामस्य तूणीमल्पमिषुधिं प्रविश्यार्धचन्द्राकारत्वादर्धचन्द्राख्या इषवो भवन्ति । विनाशसमयेऽप्ययं परोपकारनिरत इति ध्वन्यते । तूणीम्, अल्पत्वविवक्षया स्त्रीत्वे गौरादित्वान्ङीप् । अर्धचन्द्रशब्दो रूढेः ॥ ११५ ॥

निरन्तरत्वेन निधाय तन्वि
तारासहस्राणि यदि क्रियेत ।
सुधांशुरन्यः स कलङ्कमुक्त-
स्तदा त्वदास्यश्रियमाश्रयेत ॥ ११६ ॥

निरन्तरेति ॥ हे तन्वि, ताराणां नक्षत्राणां सहस्राणि निरन्तरत्वेनान्योन्यसम्बन्धितया निधायैकीकृत्य यदि अन्यः सुधांशुः क्रियेत निर्मीयेत तदा तर्हि स चन्द्रस्ताराणामकलङ्कत्वात्तन्मयत्वात्कलङ्केन मुक्तः संस्त्वदास्यस्य श्रियं शोभामाश्रयेत । क्रियातिपत्तेरविवक्षितत्वाल्लृङभावः ॥ ११६ ॥

---

१ अत्रोत्प्रेक्षा । २ अत्राप्युत्प्रेक्षा । ३ अत्राप्युत्प्रेक्षा ।

१ अत्रोत्प्रेक्षा । २ उत्प्रेक्षा । ३ अत्र यद्यर्थातिशयोक्तिमूलोत्प्रेक्षा ।

यत्पद्ममादित्सु तवाननीयां
कुरङ्गलक्ष्मा च मृगाक्षि लक्ष्मीम् ।
एकार्थलिप्साकृत एष शङ्के
शशाङ्कपङ्केरुहयोर्विरोधः ॥११७॥

यदिति ॥ हे मृगाक्षि, यत्पद्मं तवाननीयां मुखसम्बन्धिनीं लक्ष्मीमादित्सु ग्रहीतुकामम्, कुरङ्गलक्ष्मा चन्द्रश्च तव मुखशोभां ग्रहीतुकामः, तयोः शशाङ्कपङ्केरुहयोरेप विरोधस्त्वन्मुखशोभालक्षण एकोऽर्थस्तस्य लिप्साकृतः प्राप्तिवाञ्छानिमित्त एवेत्यहं शङ्के । एकद्रव्याभिलाषित्वेन विरोधः सुप्रसिद्धः । चन्द्रपद्मयोरपि विरोधः प्रसिद्ध एव । चन्द्रपद्माभ्यां सकाशात्ते मुखमधिकमिति भावः । आदित्सु, चन्द्रपक्षे लिङ्गविपरिणामः । लक्ष्मीम्; 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठीनिषेधः ॥ ११७ ॥

लब्धं न लेखप्रभुणाऽपि पातुं
पीत्वा मुखेन्दोरधरामृतं ते ।
निपीय देवैर्विघसीकृतायां
घृणां विधोरस्य दधे सुधायाम् ॥११८॥

लब्धमिति ॥ हे प्रिये, अहं सर्वैरपि देवैर्विघसीकृतायां निःशेषं पीत्वा भुक्तशेषीकृतायाम्, अस्य विधोः सुधायां घृणां जुगुप्सां दधे धारयामि । किं कृत्वा—देवानां लेखानां प्रभुणेन्द्रेणापि पातुं न लब्धं कृतप्रयत्नस्यापि तस्यावरणात्तेन दुष्प्रापं केनाप्यनुच्छिष्टं ते मुखेन्दोरधररूपममृतं निपीय पीत्वा । चन्द्रसुधायाः सकाशात्त्वदधरामृतं स्वादुतरमिति भावः । अन्योऽप्युच्छिष्टभोजने जुगुप्सां धारयेति ॥ ११८ ॥

एनं स बिभ्रद्विधुमुत्तमाङ्गे
गिरीन्द्रपुत्रीपतिरोषधीशम् ।
अश्नाति घोरं विषमब्धिजन्म
धत्ते भुजङ्गं च विमुक्तशङ्कः ॥११९॥

एनमिति ॥ स गिरीन्द्रपुत्रीपतिः शम्भुरेनमोषधीशं विधुमुत्तमाङ्गे शिरसि बिभ्रद्धारयन् सन्नब्धिजन्म समुद्रोत्पन्नं घोरं दारुणमपि विषमश्नाति, विमुक्तशङ्की भुजङ्गं सर्पराजं वासुकिं च धत्ते । शम्भोरप्युपकारकत्वेन पूज्यः श्रेष्ठोऽयमिति भावः । ओषधिस्वामिनोऽस्य शिरसि धारणादिव निःशङ्कं विषं भक्षयति सर्पांश्च धारयतीत्युत्प्रेक्षा । भुजङ्गम्, जात्यभिप्रायेणैकवचनं वा ॥ ११९ ॥

नास्य द्विजेन्द्रस्य बभूव पश्य
दारान्गुरोर्यातवतोऽपि पातः ।
प्रवृत्तयोऽप्यात्ममयप्रकाशान्
नघ्नन्ति न घ्नन्तिमदेहमाप्तान् ॥१२०॥

नेति ॥ हे प्रिये, द्विजेन्द्रस्य अस्य चन्द्रस्य गुरोर्बृहस्पतेर्दारान् भार्यां यातवतो गच्छतोऽपि गुरुतल्पगामिनोऽपि पातः स्वर्गाद्भ्रंशः, अथ च—पातित्यम्, न बभूव पश्य। चित्रमेतद्विलोकयेत्यर्थः। अथवा युक्तमेतत् । प्रवृत्तयो धर्माधर्महेतुकर्मारम्भा अपि आत्ममय आत्मस्वरूपमेव प्रकाशो येषां तान्प्रकाशान्तरनिरपेक्षान्प्रकाशरूपान्, अथ च—परमात्मैव प्रकाशो येषां तान् परमात्मस्वरूपातिरिक्तप्रकाशानभिज्ञान्स्वप्रकाशात्मवादिनो ब्रह्मज्ञानिनोऽन्तिमदेहं तेजोरूपशरीरं पूर्णतां वा प्राप्तान्, अथ च—अनन्तरभाविमोक्षत्वात्प्राचीनशरीरप्रवाहापेक्षया शेषं शरीरं प्राप्तान् जीवन्मुक्तान्पुरुषान्हि यस्मान्न नघ्नन्ति शुभाशुभफलबन्धेन न संबध्नन्तीत्यर्थः । 'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते' इति प्रामाणिकवचनात्तेजोरूपस्यास्य चन्द्रस्य पातो नाभूदिति युक्तमेव, नात्र चित्रमिति भावः । चन्द्रोऽप्यात्ममयप्रकाशः अन्तिमदेहं सम्पूर्णतां प्राप्तश्च ॥ १२० ॥

स्वधाकृतं यत्तनयैः पितृभ्यः
श्रद्धापवित्रं तिलचित्रमम्भः ।
चन्द्रं पितृस्थानतयोपतस्थे
तदङ्करोचिः खचिता सुधैव ॥ १२१ ॥

स्वधेति ॥ तनयैः पुत्रैः श्रद्धया परलोकास्तित्वबुद्ध्या वितीर्णत्वात्पवित्रं कृष्णतिलैश्चित्रं मिश्रितं पितृभ्यः स्वधाकृतं यदम्भः पितृस्थानतया 'चन्द्रो वै पितृलोकः' इति श्रुतेः पितृलोकतया चन्द्रमुपतस्थे चन्द्रेण संगतमभूत् । तत्कृष्णतिलमिश्रं जलमेवाङ्कस्य कलङ्कस्य यद्रोचिः

१ अत्रोत्प्रेक्षा । २ अत्राधरामृतस्य चन्द्रामृतापेक्षयाऽतिशयसम्भावनाद् व्यतिरेकः ।

१ यन्महेशो विषमभुङ्क्ते भुजङ्गं च धत्ते, स पुनस्तद्विषादिभेतीत्यत्र सुधांशोः सन्निधानमेव हेतुरिति अनुमानानुप्राणितोत्प्रेक्षा । २ अत्रार्थान्तरन्यासः ।

कान्तिस्तया खचिता मिश्रिता सुधा पीयूषम्¹। कृष्णतिला एव कलङ्कः, तत्संलग्नं जलमेव पीयूषम्, नत्वन्यः कलङ्को न चान्यत्पीयूषमित्यर्थः। श्रद्धेति, पितृलोकप्राप्तौ हेतुगर्भम्। उपतस्थे, संगतकरणे तङ् ॥ १२१ ॥

पश्योच्चसौधस्थितिसौख्यलक्ष्ये
त्वत्केलिकुल्याम्बुनि बिम्बमिन्दोः।
चिरं निमज्ज्येह सतः प्रियस्य
भ्रमेण यच्चुम्बति राजहंसी ॥१२२॥

पश्येति ॥ हे प्रिये, त्वमुच्चसौधे स्थित्या कृत्वा सौख्येन निरन्तराय लक्ष्ये त्वत्केलिकुल्याया अम्बुनि तादिन्दोर्बिम्बं पश्य। तत्किम्—राजहंसी इह कुल्याजले निमज्ज्य चिरं सतोऽन्तर्वर्तमानस्य प्रियस्य राजहंसस्य भ्रमेण यच्चन्द्रबिम्बं चुम्बति सौख्यम्, स्वार्थे सुखिनो भाव इति भावे वा ष्यञ्। 'सौक्ष्म्य-' इति पाठे—सूक्ष्मत्वेन लक्ष्ये। उच्चतरप्रदेशस्थितं प्रति ह्यधोदेशस्थितं वस्तु सूक्ष्मं प्रतिभाति ॥ १२२ ॥

सौवर्गवर्गैरमृतं निपीय
कृतोऽह्नि तुच्छः शशलाञ्छनोऽयम्।
पूर्णोऽमृतानां निशि तत्र नद्यां
मग्नः पुनः स्यात्प्रतिमाच्छलेन ॥१२३॥

सौवर्गेति ॥ स्वर्गे भवाः सौवर्गा देवास्तेषां वर्गैर्वृन्दैरमृतं निपीयाह्नि तुच्छो रिक्तः कृतोऽयं शशलाञ्छनो निशि ते तवात्र क्रीडानद्यां प्रतिमाच्छलेन प्रतिबिम्बव्याजेन मग्नः सन्पुनरमृतानां जलैः, अथ च—पीयूषैः पूर्णः स्याद्भवेदित्यहं संभावयामीत्यर्थः। एतेन नदीजलस्यामृतत्वं सूचितम्। अह्नि तुच्छः कृतोऽपि पुनः क्रमेणामृतैः पूर्णः सन्रात्रौ तव क्रीडानद्यां प्रतिमाव्याजेन मग्नः स्यात्, पुनः पानभयादिव पलाय्य निलीनः स्यादित्यहं शङ्के इत्यर्थ इति वा। पूर्णोऽमृतानाम्। तृप्त्यर्थत्वात्करणे षष्ठी ॥ १२३ ॥

समं समेते शशिनः करेण
प्रसूनपाणाविह कैरविण्याः।
विवाहलीलामनयोरिवाह
मधुच्छलत्यागजलाभिषेकः ॥१२४॥

सममिति ॥ इह तव क्रीडानद्यां कैरविण्याः कुमुदिन्याः प्रसूनरूपे पाणौ शशिनः करेण रश्मिना, अथ च—पाणिना, समं सह समेते संगते सति मधु पुष्परस एव छलं यस्य स तद्व्याजस्त्यागजलस्य कन्यादानसंकल्पोदकस्याभिषेकः कर्ता, अनयोश्चन्द्रकुमुदिन्योर्विवाहलीलामाहेव सूचयतीव। चन्द्रकरस्पर्शमात्रेण कुमुदानि विकसितानि, मकरन्दपूर्णानि च जातानीति भावः। विवाहे उभयोः पाणिमेलनं, पाणौ दानजलाभिषेकोऽपि भवति ॥ १२४ ॥

विकासिनीलायतपुष्पनेत्रा
मृगीयमिन्दीवरिणी वनस्था।
विलोकते कान्तमिहोपरिष्टान्मृ-
गं तवैषाऽऽननचन्द्रभाजम् ॥ १२५ ॥

विकासीति ॥ हे प्रिये, इह तव केलिनद्यां वनस्था जलनिवासिनी, अथ च—काननस्था, तथा—विकासिनीलमायतं विस्तृतं च पुष्पमेव नेत्रं यस्यास्तत्तुल्यनेत्रा चेयं प्रत्यक्षदृश्या इन्दीवरिणी, यस्मान्मृगी वनस्थत्वाद्विकासिनीलायतपुष्पनेत्रत्वाच्च हरिणी, तत्तस्मादिन्दीवरिणीरूपा मृगी, आननमिव यश्चन्द्रः सामर्थ्यात्त्वदाननतुल्यो यश्चन्द्रस्तद्भाजं तत्स्थं कान्तं सुन्दरम्, अथ च—तुल्यजातीयं स्वप्रियं, मृगमुपरिष्टाद्विलोकते। विकसितकुसुमनेत्राणि ऊर्ध्वं प्रसारितानि दृश्यन्ते तर्हि प्रायेण चन्द्रस्थमुपरिवर्तमानं निजभर्तारं मृगं मृगी पश्यतीत्यर्थः। त्वदाननमेव यश्चन्द्रस्तत्रस्थं चन्द्रत्वादनुमेयं मृगमुपरिष्टात्पश्यति। त्वं प्रासादोपरि वर्तसे, इयं चाधोदेशे वर्तते। 'न न' इति पदच्छेदं कृत्वा चन्द्रभाजं निजप्राणेशं मृगमुपरिष्टान्न पश्यतीति न, किंतु पश्यत्येवेति वा व्याख्येयम्। वनस्था मृगी हि प्रसारितनीलायतनेत्रा सती स्वकान्तं मृगमितस्ततो विलोकयति। 'शशम्' इत्यपपाठः। मृगपर एव वा व्याख्येयः ॥१२५॥

तपस्यतामम्बुनि कैरवाणां
समाधिभङ्गे विबुधाङ्गनायाः।
अवैमि रात्रेरमताधरोष्ठं
मुखं मयूखस्मितचारुचन्द्रम् ॥१२६॥

तपस्यतामिति ॥ हे प्रिये, अम्बुनि सदा निवासात्तत्र तपस्यतां कैरवाणां कुमुदानां समाधेर्दिवा संकोच-

¹ अत्रोत्प्रेक्षा । ² अत्र भ्रान्तिमान्, उत्प्रेक्षा च । ³ अत्रपह्नुतिः ।

¹ अत्रोत्प्रेक्षोपमापह्नुतिश्च । ² अत्र पुष्पनेत्रेत्यादौ रूपकमुत्प्रेक्षा च ।

स्यैव ध्यानस्य भङ्गे त्याजने विषये निमित्ते वा विबुधाङ्गनाया अप्सरोरूपाया रात्रेश्चन्द्रं मुखमेवाहमवैमि मन्ये। किंभूतं मुखम्—अमृतमेवाधरोऽनूर्ध्व ओष्ठो यस्य, अथ च—अमृततुल्योऽधरोष्ठो यस्य, यद्वा—अमृतमधरं यस्मात्पीयूषादधिकरस ओष्ठो यस्य। तथा—मयूखाः किरणा एव स्मितम्, अथ च—तत्समाधिभङ्गादेव चन्द्रकरवदुज्ज्वलं यत् स्मितं,तेन चारु। चन्द्रविशेषणे लिङ्गविपरिणामः। देवाङ्गनानामप्येवंविधं मुखं रात्रौ जले तपस्यतां दुश्चरं तपश्चरतामपि मुनीनां समाधिभङ्गं करोति। तपस्यतामिति तपश्चरतीत्यर्थे 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ३।१।१५, इति क्यङ्, 'तपसः परस्मैपदं च' इति शतॄ ॥ १२६ ॥

अल्पाङ्कपङ्का विधुमण्डलीयं
पीयूषनीरा सरसी स्मरस्य।
पानात्सुधानामजलेऽप्यमृत्युं
चिह्नं बिभर्त्यत्रभवं स मीनम् ॥ १२७॥

अल्पेति॥ अल्पोऽङ्क एव पङ्को यस्यां, तथा—पीयूषमेव नीरं यस्यां सेयं विधुमण्डली स्मरस्य सरसी विशालं सर एव। अत एव—स स्मरः अत्र भवमस्यां चन्द्रसरस्यां समुत्पन्नं सुधानामेतदीयामृतानां पानादजले जलरहितेऽपि स्थले जलाभावेऽपि वाऽमृत्युं मरणरहितं मीनं चिह्नम्, अथ च—सुधासरोजातत्वानुमापकं लिङ्गं बिभर्ति। मीना हि जलाद्बहिर्भूता म्रियन्त एव, अयं तु न म्रियेत, तस्माच्चन्द्रामृतसरसीभवत्वात्सदामृतपानाज्जलाभावेऽपि मृत्युरहित इति सर्वं युक्तमित्यर्थः ॥ १२७ ॥

तारास्थिभूषा शशिजह्नुजाभृ-
च्चन्द्रांशुपांशुच्छुरितद्युतिर्द्यौः।
छायापथच्छद्मफणीन्द्रहारा
स्वं मूर्तिमाह स्फुटमष्टमूर्तेः ॥ १२८ ॥

तारेति॥ द्यौः स्वमात्मानमष्टमूर्तेर्हरस्य मूर्तिं शरीरं स्फुटं व्यक्तमाह ब्रवीति। यतः—किंभूता—तारा एवास्थीनि भूषा यस्याः। तथा—शशिनमेव जह्नुजां, चन्द्रं गङ्गां च बिभर्तीति भृत्। तथा—चन्द्रांशव एव पांसवो भस्मानि तैश्छुरिता कृताङ्गरागा द्युतिर्यस्याः। तथा—छायापथे गगने दण्डाकारा दक्षिणोत्तरस्था धवला रेखा छद्म यस्य छायापथच्छद्मरूपः फणीन्द्रो वासुकिः स एव मुक्ताहारो यस्याः सा। हरमूर्तिरप्युक्तविशेषणविशिष्टा। द्यौरप्येतादृशीति मूर्त्यन्तरापेक्षया व्यक्तमेव महेशस्य मूर्तिं गगनं कथयतीत्यर्थः ॥ १२८ ॥

एकैव तारा मुनिलोचनस्य
जाता किलैतज्जनकस्य तस्य।
ताताधिका सम्पदभूदियं तु
सप्तान्विता विंशतिरस्य यत्ताः॥१२९॥

एकेति॥ एतस्य चन्द्रस्य जनकस्य तस्य प्रसिद्धस्यात्रिमुनिलोचनस्य तारा कनीनिका किलैकैव जाताभूत् किल पुराणादौ। अस्य तत्पुत्रस्य तु पुनरियं दृश्यमाना सम्पत् तातान्निजपितुरत्रिनेत्रात्सकाशादधिका। यद्यस्मादस्य चन्द्रस्य ताः कनीनिकाः, अथ च—नक्षत्राणि, सप्तभिरन्विता विंशतिरभूदितिच्छलम्। पितुः सकाशादधिकसंपत्तित्वात्सभाग्योऽयमिति भावः। 'सप्तविंशतिमिन्दवे' इति, दक्षः सप्तविंशतिकन्याः अश्विन्यादिकाश्चन्द्राय ददौ इति पुराणम् ॥ १२९ ॥

मृगाक्षि यन्मण्डलमेतदिन्दोः
स्मरस्य तत्पाण्डुरमातपत्रम्।
यः पूर्णिमानन्तरमस्य भङ्गः
सच्छत्रभङ्गः खलु मन्मथस्य ॥१३०॥

मृगाक्षीति॥ हे मृगाक्षि हरिणनेत्रे, यदेतत्प्रत्यक्षदृश्यमिन्दोर्मण्डलं तत्स्मरस्य पाण्डुरं श्वेतं साम्राज्यसूचकमातपत्रमेव। श्वेतच्छत्रदर्शने सति सम्राजो वश्या भवन्ति। पूर्णधवलचन्द्रमण्डलस्य चोद्दीपकत्वात्तद्दर्शने सर्वेऽपि कामस्य वश्या भवन्ति। तस्मादेतत्कामस्य श्वेतातपत्रमेवेति भावः। यश्च पूर्णिमानन्तरस्य च्छत्रभूतस्येन्दुमण्डलस्य भङ्गो मोटनं कलाक्षयश्च स मन्मथस्य च्छत्रभङ्गः खलु। छत्रस्य मोटनं राजक्षयं सूचयति। कृष्णपक्षे चोद्दीपकमित्रचन्द्रक्षये कामः क्षीण एव भवति, तस्मात्कृष्णपक्षे योऽस्य भङ्गः स कामस्य छत्रभङ्ग एव स एव वेति भावः। खलूत्प्रेक्षायां निश्चये वा ॥ १३० ॥

१ अत्रानुप्रासः, रूपकमुत्प्रेक्षा च। २ अत्रानुप्रासः, रूपकमुत्प्रेक्षा च।

१ अत्र रूपकमुत्प्रेक्षा। २ अत्राप्युत्प्रेक्षा। ३ अत्राप्युत्प्रेक्षा।

दशाननेनापि जगन्ति जित्वा
योऽयं पुराऽपारि न जातु जेतुम् ।
म्लानिर्विधोर्मानिनि संगतेयं
तस्य त्वदेकानननिर्जितस्य ॥ १३१ ॥

दशेति ॥ दिग्विजयोद्यतेन दशाननेनापि जगन्ति जित्वापि योऽयं चन्द्रः पुरा पूर्वं जातु कदाचिदपि जेतुं नापारि । हे मानिनि स्वमुखस्पर्धिनं चन्द्रमसहमाने भैमि, तस्य विधोरियं प्रत्यक्षदृश्या कलङ्करूपा म्लानिर्लज्जा संगता लग्ना, अथ च युक्तैव । यतस्त्वदेकेनाननेन नितरां जितस्य । यो हि दशाननेन दशभिर्मुखैर्जेतुं नाशाकि, तस्य स्त्रियास्त्वदेकेन मुखेन विजितत्वेन लज्जया मालिन्यमुचितमेवेत्यर्थः । त्वन्मुखमेतस्मादधिकमिति भावः । प्रतीयमानोत्प्रेक्षा । लज्जयापि म्लानिर्भवति । रावणश्चन्द्रं जेतुं प्रवृत्तस्तत्तुषाराग्निना दह्यमानः कम्पमानतनुस्तमजित्वैव परावृत्त इत्युत्तरकाण्डे कथा ॥ १३१ ॥

दृष्टो निजां ताव-
जयन्नयं पूर्वदशां शशाङ्कः ।
पूर्णस्त्वदास्येन तुलां गतश्चे-
दनन्तरं द्रक्ष्यसि भङ्गमस्य ॥ १३२ ॥

दृष्ट इति ॥ अयं शशाङ्क इयन्त्येतावन्ति अहानि शुक्लपक्षदिनानि तावदवधीकृत्य निजां पूर्वदशां पूर्वपूर्वदिनावस्थां जयन् निकाममुत्तरोत्तरादिनेषु कलावृद्ध्याधिकीभवंस्त्वया दृष्टः । इयन्ति दिनानि जयंस्तावत् जयन्नेव दृष्ट इत्यवधारणार्थो वा तावच्छब्दः । अनयैव परिपाट्या पूर्णबिम्बोऽयं त्वदास्येन सह तुलां साम्यम्, अथ च—तोलकाष्ठं, प्राप्त आरूढश्चेत्, तर्ह्यनन्तरं निकटं त्वमेव श्वःप्रभृत्येवास्य भङ्गं पराजयं कलाक्षयं च द्रक्ष्यसि । उत्तमेन सह स्पर्धमानो हि भङ्गं प्राप्नोत्येव । तुलादिव्ये हि हीनस्य पराजयः सर्वैर्दृश्यते । अहानि, अत्यन्तसंयोगे द्वितीया । त्वदास्येन, 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् । २ । ३ । ७२।' इत्यत्र 'अतुलोपमाभ्याम्' इति निषेधेऽपि 'सहयुक्तेऽप्रधाने । २ । ३ । १९ ।' इति सहयोगे तृतीया । तथा च कालिदासोऽपि—'तुलां यदारोहति दन्तवाससा' इत्यादि प्रयुयोजे ॥ १३२ ॥

क्षत्राणि रामः परिभूय रामात्
क्षत्रायथयाऽभज्यत स द्विजेन्द्रः ।
तथैव पद्मानभिभूय सर्वा-
स्त्वद्वक्त्रपद्मात्परिभूतिमेति ॥ १३३ ॥

क्षत्राणीति ॥ द्विजेन्द्रो जमदग्न्यपत्यत्वात्ख्योऽतिप्रसिद्धपराक्रमो रामः परशुरामः सर्वाणि क्षत्राणि परिभूयापि क्षत्रादेव रामाद्दाशरथेः सकाशाद्यथाभज्यत पराभवं प्राप, तथा तेनैव प्रकारेणायमपि द्विजराजः सर्वान्पद्मानभिभूय संकोचकरणात्पराभूयापि त्वद्वक्त्रपद्मात्सकाशात्परिभूतिं पराभवमेति।सकलक्षत्रियाधिक्यं यथा श्रीरामस्य तथा सर्वपद्माधिक्यं त्वन्मुखपद्मस्येति भावः । 'वा पुंसि पद्मम्' इत्यमरः ॥ १३३ ॥

अन्तः सलक्ष्मीक्रियते सुधांशो
रूपेण पश्ये हरिणेन पश्य ।
इत्येष भैमीमददर्शदस्य
कदाचिदन्तं स कदाचिदन्तः ॥१३४॥

अन्तरिति॥ हे पश्ये चन्द्रदर्शनप्रवृत्ते भैमि, हरिणेन पाण्डुरेण रूपेण वर्णेन कर्त्रा सुधांशोरन्तः प्रान्तभागः पूर्वमश्रीकोऽपीदानीं सलक्ष्मीक्रियते सश्रीः क्रियते त्वं पश्य । अथ च—चन्द्रस्य मध्यं हरिणेन मृगेण कर्त्रा रूपेण स्वीयनीलवर्णेन कृत्वा अलक्ष्म सलक्ष्म क्रियते सलक्ष्मीक्रियते सकलङ्कं क्रियत इत्यर्थः।पश्य।एष स नल इत्यमुना प्रकारेणास्य चन्द्रस्यान्तं पर्यन्तभागं कदाचित्क्षणमात्रं भैमीमददर्शत् दर्शयामास,कदाचिच्चान्तर्मध्यभागं दर्शयामास।अङ्गुल्यादिना चन्द्रश्वेतनीलप्रान्तमध्यभागप्रदर्शनपूर्वं श्लिष्टपदैस्तया सह क्रीडां चकारेति भाव इति मध्ये कवेरुक्तिः । 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः । अन्त इत्यकारान्तमेकत्र, अन्तरित्यव्ययमपरत्र मध्यवाचि । लक्ष्मीशब्दस्य समासान्तविधेरनित्यत्वात्कवभावे सलक्ष्मीशब्दाच्चिवः ।

१ अत्रानुप्रासः, त्वदेकानननिर्जितत्वेन चन्द्रस्य रूपणाद व्यतिरेकः ।

१ अत्र न चन्द्रोऽन्यदा त्वदाननसाम्यं वोढुं प्रभवति, अथ यत्पूर्णिमायां वहेत्तदपि तस्य साहसमात्रम् । अत एवानन्तरमेव भङ्गस्तस्येति महद्भ्यः स्पर्धमानो हि न सुखं लभत इति वस्तुव्यतिरेकेण व्यज्यते।२अत्र दृष्टान्तः।

पक्षे सलक्षमशब्दाद्येषः । पक्षे, 'पाघ्राध्माधेट्दृशः शः ३।१।१३७ इति कर्तर्येव शः । दृशेर्बुद्ध्यर्थत्वात् 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता सणौ१।४।५२' इत्यणौ कर्तुर्णौ कर्मत्वाद्वद्रमीति द्वितीया ॥ १३४ ॥

सागरान्मुनिविलोचनोदराद्
यद्द्वयादजनि तेन किं द्विजः ।
एवमेव च भवन्नयं द्विजः
पर्यवस्यति विधुः किमत्रिजः ॥ १३५॥

सागरादिति ॥ अयं चन्द्रः सागरात् मुनिविलोचनोदराच्चैतद्रूपाद्द्वयात्सकाशाद्यस्मादजनि उत्पन्नः, तेन कारणेन द्वाभ्यां जातत्वाद्द्विजः किम् । एवमेव चानयैव रीत्या द्वाभ्यां जातत्वादेव द्विजो भवन्नप्ययं विधुरत्रेर्मुनेर्जातः किं कथं पर्यवस्यति । द्वाभ्यां जातत्वे सत्यपि अत्रिमुनेरेव जात इति तात्पर्यवृत्त्या कथमुच्यत इत्यर्थः । अथ च—एवमेव यथानेन प्रकारेण द्विजत्वं, तथैवात्रिमुनिजो भवन्नयं द्विजः पर्यवस्यति किम् । द्वाभ्यां जातत्वाद्यथा द्विज उच्यते, तथा द्विजादात्रिमुनेर्जातत्वादपि द्विज उच्यते किम् । द्विजोत्पन्नो हि द्विज एव भवतीत्यर्थः । अथ च–द्वाभ्यां जातत्वाद्द्विजो भवन्नेव न त्रिभ्यो जायत इत्यत्रिज इत्येवं तात्पर्यवृत्त्या कथ्यते किम् । यो हि द्वाभ्यां जायते स त्रिजो न भवति, एवमेवायमत्रिजः कथ्यते किमित्यर्थः । अन्योऽपि द्विजत्रिजो न भवत्येवं ॥ १३५ ॥

ताराविहारभुवि चन्द्रमयीं चकार
यन्मण्डलीं हिमभुवं मृगनाभिवासम् ।
तेनैव तन्वि सुकृतेन मते जिनस्य
स्वर्लोकलोकतिलकत्वमवाप धाता १३६

तारेति ॥ हे तन्वि कृशाङ्गि, धाता ताराणां नक्षत्राणां विहारभुवि गगने चन्द्रमयीं मण्डलीं बिम्बं जिनस्य पुराणपुरुषस्य श्रीविष्णोर्मतेऽनुमतौ सत्यां तदादिष्टः सन् यच्चकार निर्ममे तेनैव सुकृतेन शोभनेन लोकोत्तरव्यापारेण कृत्वा स्वर्लोकः स्वर्गभुवनं तत्संबन्धिनां लोकानां सुराणां मध्ये तिलकत्वं श्रेष्ठ्यमवाप । किंभूतां मण्डलीम्—हिमस्य तुषारस्य भुवं स्थानभूतामतिशीतलाम् । तथा-मृगस्य नाभौ मध्ये वासो यस्यास्तां यस्यामध्ये मृगोऽस्तीति यावत्, तादृशीम् । अन्येषां सुराणामेतादृग्व्यापारकरणे सामर्थ्याभावाद्ब्रह्मैव श्रेष्ठोऽभूदित्यर्थः । अथ च–तारायाः बुद्धदेव्या विहारस्थाने पूजास्थाने हिमभुवं शीतलां, शुभ्रत्वाद्धिमाचलरूपां वा, तथा—मृगनाभेः कस्तूर्या वासः परिमलोऽवस्थानं वा यस्यां तां, कस्तूरीमिश्रितां चन्द्रमयीं मण्डलीं राशिं यच्चकार तेनैव पुण्येन जिनस्य मते बौद्धदर्शने ब्रह्मा सुरश्रेष्ठत्वमधत्त । बौद्धा हि बुद्धदेवप्रासादे यस्तत्पूजार्थं कर्पूरकस्तूरीराशिं करोति स सर्वलोकमध्ये श्रेष्ठो भवतीति स्वदर्शने प्रत्यपादयन् । ब्रह्मा चैवमकृत, तस्मादेव सर्वश्रेष्ठो जात इत्यर्थः । 'तेनैव' इति पाठे—उत्प्रेक्षा । 'बुद्धदेव्यां मता तारा' ॥ १३६ ॥

इन्दुं मुखाद्बहुतृणं तव यद्गृणन्ति
नैनं मृगस्त्यजति तन्मृगतृष्णयैव ।
अत्येति मोहमहिमा न हिमांशुबिम्ब-
लक्ष्मीविडम्बिमुखि वित्तिषु पाशवीषु ॥

इन्दुमिति ॥ हे हिमांशुबिम्बस्य लक्ष्म्याः शोभाया विडम्बि स्वस्मान्न्यूनत्वात्परिहासकारि ततोऽप्यधिकशोभं मुखं यस्यास्तादृशि भैमि, पण्डिता इन्दुं तव मुखात्सकाशात्त्वन्मुखमपेक्ष्य वा बहुतृणमीषदसमाप्तं तृणं तृणत्वमपि यस्य पूर्णं न संपन्नं, तृणादपि निःसारमिति यावत्, अथ च—बह्वधिकं तृणं यस्मात् तृणादपि निःसारं यद्यस्माद् गृणन्ति । तत्तस्माद्धेतोर्मृग एनं चन्द्रं मृगसंबन्धिन्या तृष्णया कोमलतृणकवलनाभिलाषेणेव, अथवा चन्द्रे प्रत्युक्तस्य बहुतृणशब्दस्य बहु च तत्तृणं च, बहूनि तृणानि यस्मिंस्तादृशमिति वेत्त्येवंरूपार्थग्रहेणरूपया भ्रान्त्यैव न त्यजति । मृगो हि बहु यत्तृणं बहुतृणं देशं न मुञ्चति । नन्वनुभवे सत्यप्यासंसारं कथं भ्रान्तिरित्याशङ्क्यार्थान्तरन्यासमाह—पाशवीषु पशुसम्बन्धिनीषु वित्तिषु ज्ञानेषु विषये मोहमहिमा भ्रान्तिबाहुल्यं नात्येति बहुकालातिक्रमेऽपि नापयाति । पशवो हि सर्वदा मूढा एवेत्यद्यापि मृगस्य भ्रान्तिर्नापयाति, तस्मादेनं न त्यजतीति युक्तमित्यर्थः । 'वृत्तिषु' इति पाठे—व्यापारेषु । मुखात्, 'ल्यब्लोपे कर्मण्यधिकरणे च' इति पञ्चमी । बहुतृणम्, पक्षे ईषदसमाप्तौ 'विभाषा सुपो, बहुच् पुरस्तात्तु ५ । ३ । ६८' इति बहुच् ॥ १३७ ॥

१ अत्रोत्प्रेक्षा २ अत्र रथोद्धता वृत्तम्, उत्प्रेक्षाऽलङ्कारः

१ इतः प्रभृति पद्यत्रये वसन्ततिलका वृत्तम्, उत्प्रेक्षाऽर्थालङ्कारः । २ अत्रानुप्रासः, उत्प्रेक्षा, अत्येतीत्यर्थान्तरन्यासः ।

स्वर्भानुना प्रसभपानविभीषिकाभि-
र्दुःखाकृतैनमवधूय सुधा सुधांशुम् ।
स्वं निह्नुते शितिमचिह्नमसुष्य रागैस्ता-
म्बूलताम्रमवलम्ब्य तवाधरोष्ठम् ॥ १३८ ॥

स्वर्भानुनेति ॥ हे प्रिये, सुधा एनं सुधांशुमवधूय त्यक्त्वा तवाधरोष्ठमवलम्ब्यामुष्य रक्तस्यौष्ठस्य रागै रक्तवर्णैः कृत्वा सितस्य भावः सितिमा धावल्यमेव चिह्नं यस्य तादृशं धवलरूपमपि स्वमात्मानं निह्नुते पुनः पुनः स्वर्भानुपानभिया तिरोदधाति। यतः—स्वर्भानुना वारं वारं प्रसभपानेन विभीषिकाभिर्भयोत्पादनैः कृत्वा दुःखाकृता प्रातिलोम्याचरणेनोत्पादितदुःखा। किं भूतमधरोष्ठम्—प्रसिद्धस्य ताम्बूलस्येव ताम्रो वर्णो यस्य, ताम्बूलेनैव वा ताम्रं रक्तवर्णम्। पुना राहुपानभिया त्वदधरमेव स्थानान्तरमाश्रित्य रूपान्तरेणात्मानं गोपायतीत्यर्थः। अन्योऽपि सभयं स्थानं हित्वा स्थानान्तरमाश्रित्य तत्रापि रूपान्तरं धृत्वा स्वं निह्नुते। सुधया चन्द्रस्य परित्यागात्त्वन्मुखाश्रयणात्त्वन्मुखं चन्द्रादधिकमिति भावः। ताम्बूलताम्रमित्युक्तरीत्योपमोत्प्रेक्षा वा। दुःखाकृता 'दुःखात्प्रातिलोम्ये ५।४।६४' इति डाच् ॥ १३८ ॥

हर्यक्षीभवतः कुरङ्गमुदरे प्रक्षिप्य यद्वा शशं
जातस्फीततनोरमुष्य हरिता सूतस्य पत्न्या हरेः ।
भङ्गस्त्वद्वदनाम्बुजादजनि यत्पद्मात्तदेकाकिनः
स्यादेकः पुनरस्य स प्रतिभटो यः सिंहिकायाः सुतः ॥ १३९ ॥

हर्यक्षीति ॥ हे प्रिये, मतभेदेन कलङ्करूपं कुरङ्गम्, यद्वा—शशमुदरे मध्ये प्रक्षिप्य जाता स्फीता पूर्णा तनुर्यस्य, हरेरिन्द्रस्य पत्न्या हरिता प्राच्या दिशा सूतस्य तत्रोदितस्य पूर्णस्य, अत एव हरेः श्रीविष्णोर्वामाक्षीभवतः, यद्वा—संजातपूर्णशरीरस्य मृगं, यद्वा—शशं कलङ्कं मध्ये निक्षिप्य मध्यस्थितकलङ्कस्य कनीनिकातुल्यत्वाच्छ्रीविष्णोर्वामनेत्रीभवतोऽमुष्य चन्द्रस्य त्वद्वदनाम्बुजात्सकाशाद्भङ्गः पराजयोऽजनि तदेकाकिनः सर्वदाऽसहायादेकस्मात्पद्मात्, नत्वन्यस्मात्कमलात्, नह्यन्यैः पद्मैरयं पराजीयते यत्पुनरयमेव पद्मान्पराभवतीत्यर्थः। अथवा—अम्बुजतुल्यात्त्वद्वदनादेव पद्मात्,अथ च—पद्मसंख्याकात्त्वद्वदनरूपादम्बुजाद्यदस्य भङ्गो जातः, तदेकाकिनोऽसहायस्य स्याद्भवेत्। बहुभिरेकः पराजीयत इति युक्तमेवेत्यर्थः। यः सिंहिकायाः सुतो राहुः स पुनरेकोऽन्योऽस्य प्रतिभटः प्रतिमल्लः पराभावुको राहुरेव न त्वन्य इति।'संप्रति' इति पाठे—अयं पुनरस्यैकः भटः प्रतिभटः यः सिंहिकायाः सुतः स्यात्। एकाकिनोऽस्य त्वन्मुखपद्मः प्रतिद्वन्द्वी न भवति, अतुल्यत्वात् किं त्वेकाकी राहुरेवास्य प्रतिभटो युक्त इत्यर्थः। किंच स्वशत्रुभूताद्राहोरप्यस्यान्यः पराजय इति महदस्य कष्टं प्राप्तमित्यर्थः। अथ च—हरिद्वर्णया हरेः सिंहस्य पत्न्या सिंहिकया प्रसूतस्य, तथा—मृगं शशं वा यं कंचन पशुं जठरे निक्षिप्य भक्षयित्वा स्थितस्य, अत एव संजातपुष्टशरीरस्य, अत एव हर्यक्षीभवतः सिंहतां प्राप्नुवतोऽस्य त्वन्मुखाद्यः पराजयोऽजनि स एकाकिनः केवलात्पद्माद्गजादेव पराजयः सिंहस्य गजाद्भङ्गो यथा तद्वदेतन्महाचित्रमित्यर्थः। अथ च—पद्मसंख्याकादेकस्य पराजयः। सिंहोऽप्येको बहुसंख्यैः पराजीयत एवेत्यर्थः। अथ च—पद्माच्छरभादष्टापदादेव भङ्गः सिंहस्य केवलमष्टापदादेव भङ्गः। पद्मचन्द्राभ्यां सकाशात्त्वन्मुखमधिकमिति भावः।'हर्यक्षः केसरी हरिः' इत्यमरः।'गजाब्जशरभाः पद्माः' इत्यनेकार्थे भोजः। प्रथमपक्षे हर्यक्षिशब्दाच्विः, द्वितीयपक्षे हर्यक्षशब्दादेव ॥ १३९ ॥

यत्पूजां नयनद्वयोत्पलमयीं वेधा व्यधात्पद्मभूर्वाक्पारीणरुचिः स चेन्मुखमयं पद्मः प्रिये तावकम्।
अकः शीतांशुरसौ तदा मखमृगव्याधोत्तमाङ्गस्थलस्यास्नुस्वस्तटिनीतटावनिवनीवानीरवासी बकः ॥ १४० ॥

यदिति ॥ हे प्रिये, वेधा नयनद्वयमेवोत्पलं तन्मयीं तद्रूपां तद्रचितां यस्य पद्मस्य पूजां व्यधाद्रचयत्। यतः श्रीविष्णोर्नाभौ वर्तमानात्पद्माद्भवतीति पद्मभूः। स्वजनकस्य यस्य पद्मस्य पितृभक्त्या नेत्रद्वयेनैव नीलोत्पलयुगेन महतीं पूजामकृत। वाक्पारीणा वाचः परतीरे भवा वाचा वर्णयितुमशक्या रुचिर्यस्य सोऽयं

१ अत्रानुप्रासः, उत्प्रेक्षा च।

१ अत्राग्रिमे च पद्ये शार्दूलविक्रीडितं वृत्तम्। अत्रोत्प्रेक्षाऽर्थालङ्कारः।

पद्मश्चेत्तावकं मुखं स एव भवन्मुखरूपो जातः। अनन्तरं ब्रह्मणा स्वपितृबुद्ध्या नेत्रनीलोत्पलाभ्यां कृतपूजत्वादत्र तव मुखे नेत्रनीलोत्पले दृश्येते इत्यर्थ इति चेत्, तदा तर्हि असौ शीतांशुः को नाम, अपि तु न कश्चित् । त्वन्मुखस्य पुरस्तादयं कः । स्मरणार्होऽपि नेत्यर्थः । तर्ह्यसौ क इति चेत्तत्राह—अयं बकः । किंभूतः—दक्षमख एव मृगस्तस्य व्याधो हरस्तस्योत्तमाङ्गं शिरस्तल्लक्षणे स्थले स्थास्नुः स्थितिशीला स्रवन्ती गङ्गा तस्यास्तटावन्यां तीरभूम्यां या वनी महदल्पं वा यत्काननं तत्र ये वानीरा वेतसास्तन्मध्यवासी । चन्द्रश्च हरजटाजूटवासीति प्रसिद्धम् । वाक्पारीणरुचिरिति ब्रह्मविशेषणं वा । अत्र यदपत्यस्य ब्रह्मणोऽपि सौन्दर्यं वागगोचरः, तत्पितुः पद्मस्य सौन्दर्यं मनसोऽपि गोचरो न भवतीत्यर्थः । त्वन्मुखस्य चन्द्रस्य,च महदन्तरम्, साम्यसंभावनापि नास्तीति भावः । एतेन चन्द्रादिसुन्दरवृन्दं ब्रह्मणा सृष्टम्, भवदीयमुखपद्मं तु ब्रह्मणोऽपि स्रष्टृत्वात्सर्वाधिकमिति सूचितम् । मखमृगेत्यादिना चन्द्रस्यातिदैन्यं सूचितम्, त्वन्मुखसाम्यप्राप्त्यर्थं तपश्चरणं च सूचितम् । अन्योऽपि विशिष्टवस्तुप्राप्तये शिवस्थानयुक्तनदीतीरवानीरवासी तपस्यति । नदीतीरवानीरवासित्वं बकजातिः । वाक्पारीणा, भवार्थे 'राष्ट्रावारपाराद्घखौ४।२।८३' इत्यत्र 'अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्' इति वचनात्खः॥१४०॥

**जातं शातक्रतव्यां हरिति विहरतः काकतालीयमस्या-मश्यामत्वैकमत्यास्थितसकलकलानिर्मितेर्निर्मलस्य । इन्दोरिन्दीवराभं बलविजयिगजग्रामणीगण्डपिण्ड-द्वन्द्वापादानदानद्रवलवलगनादङ्कमङ्के विशङ्के ॥१४१॥**

जातमिति ॥ अहमिन्दोरङ्के बलविजयिन इन्द्रस्य गजग्रामणीर्हस्तिपु मध्ये प्रधानं प्राच्यामेव वर्तमानो य ऐरावतस्तस्य गण्डयोः कपोलयोः पिण्डयोः शिरःस्थितकुम्भस्थलयोश्च ये द्वन्द्वे गण्डद्वन्द्वं पिण्डद्वन्द्वं च ते एवापादानं निर्गमनस्थानं येषां ते च ते दानद्रवलवा मदजललेशास्तेषां लग्नात्संपर्कात्काकतालीयमाकस्मिकं दैवात्सिद्धमिन्दीवराभं नीलोत्पलतुल्यं जातमङ्कं कलङ्कं विशङ्के मन्ये । किंभूतस्येन्दोः—अस्यामङ्गुलीनिर्दिष्टायां पुरोदृश्यायां शतक्रतोरियं शातक्रतवी तस्यां हरिति दिशि विहरत उद्गच्छतः । तथा—अश्यामत्वे विषये ऐकमत्यं सर्वसंवादस्तेन तत्र वा स्थिताभिर्वर्तमानाभिः सकलाभिः पञ्चदशभिरपि कलाभिः कृत्वा निर्मितिर्यस्य । अश्यामत्वैकमत्येन स्थिता सकलकलानिर्मितिर्यस्य तादृशस्य वा। अत एव—निर्मलस्य प्रत्येकं कलानां धावल्यस्य दृष्टत्वाद्धवलसकलकलानिर्मितत्वात्कारणधावल्याद्धवलस्य, अश्यामत्वैकमत्ये स्थिता याः सकलाः कलास्ताभिर्या निर्मितिस्तस्या वा हेतोर्धवलस्य । पूर्वं कारणधावल्यात्सकलोऽप्ययं धवल एवाभूत्, पश्चात्तु पूर्वदिग्भ्रमणवशात्तत्रैव भ्रमत ऐरावतस्य कपोलकुम्भस्थलगलन्मदजलं दैववशाल्लग्नं तेनायं मध्ये कालः प्रतिभातीत्यर्थः । तालतरुतले यदैव काकस्योपवेशनम्, तदैव दैवात्काकस्योपरि तालफलपात इति काकतालमिव, 'समासाच्च तद्विषयात्' इति छः । निर्मितेः, पक्षे हेतौ पञ्चमी ॥ १४१ ॥

**अंशं षोडशमामनन्ति रजनीभर्तुः कलां वृत्तयन्त्येनं पञ्चदशैव ताः प्रतिपदाद्याराकवर्धिष्णवः । या शेषा पुनरुद्धृता तिथिमृते सा किं हरालंकृति-स्तस्याः स्थानबिलं कलङ्कमिह किं पश्यामि सश्यामिकम्॥१४२॥**

अंशमिति ॥ हे प्रिये, लोकाः रजनीभर्तुः षोडशमंशं कलामामनन्ति सत्यं कथयन्ति, ताश्च षोडशांशरूपाः प्रतिपदादिर्यस्मिन्कर्मणि राकां पूर्णिमामभिव्याप्य वर्धिष्णवः प्रतितिथि एकैककलाभिवृद्ध्या वर्धमानाः पञ्चदशसंख्याका एव कला एनं चन्द्रं वृत्तयन्ति वर्तुलं कुर्वन्ति । तिथिसंख्यासाम्यात्पूर्णमण्डलं कुर्वन्तीत्यर्थः । या पुनः कला षोडशीतिथिमृते उद्धृता प्रयोजनाभावाच्चन्द्राद्बहिः कृता सा षोडशी कला शेषा पञ्चदशकलाभ्योऽवशिष्टा सती, यद्वा षोडशीं तिथिं विना प्रयोजनाभावाद्यावशिष्टा सा निष्प्रयोजनत्वादुद्धृता चन्द्राद्बहिर्निष्कासिता सती हरालंकृतिः शिवशिरोभूषणं जाता किम् । चन्द्रे प्रयोजनाभावाद्धरालंकृतिरिवाभूत्किमित्यर्थः । अहं तस्याश्चोद्धृतायाः षोडश्याः कलायाः सश्यामिकं नभो नीलिम्ना सह वर्तमानं स्थानस्य पूर्वावस्थितेः

१ अत्राननस्य चन्द्रापेक्षयाऽतिशयं बोधयितुम् चन्द्रसपत्नस्य बकत्वेन रूपणमिति सापह्नवं रूपकं व्यतिरेकश्च ।

१ अत्र स्रग्धरावृत्तम्,अत्रानुप्रासः,शब्दालङ्कारः,उत्प्रेक्षाऽर्थालङ्कारश्च ।

सवीन्ध विलं विवरं तत्कलानवारिशत्या कृत्वा शून्यं नीलं नभोभागमेवेह चन्द्रमण्डलमध्ये कलङ्कं पश्यामि किम् । मध्यवर्तिनीलं तत्स्थानं बिलमेवाहं कलङ्कत्वेन शङ्के इत्यर्थः । शेषशब्दस्याभिधेयलिङ्गत्वं पूर्वमेव दर्शितम् । 'पूर्णे राका निशाकरे' इत्यमरः । वृत्तयन्ति, 'तत्करोति तदाचष्टे' इति णिच् । वर्धिष्णवः, 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ३।२।१३६' इतीष्णुच् । तिथिमृते, 'ऋते नलाशाम्' इतिवत् । श्यामिका, मनोज्ञादेराकृतिगणत्वाद्भावे वुञ् ॥ १४२ ॥

ज्योत्स्नामादयते चकोरशिशुना द्राघीयसी
लोचने–लिप्सुर्मूलमिवोपजीवितुमितः संतर्पणात्मीकृतात् । अङ्के रङ्कुमयं करोति च
परिस्रष्टुं तदेवादृतस्त्वद्वक्त्रं नयनश्रिया-
ऽप्यनधिकं मुग्धे विधित्सुर्विधुः ॥ १४३ ॥

ज्योत्स्नामिति ॥ हे मुग्धे सुन्दरि, त्वद्वक्त्रं वृत्तत्वादिगुणैः समानमपि नयनश्रियापि कृत्वानधिकं समानमेव विधित्सुः, अत एव—स्वस्य द्राघीयसी अतिदीर्घे लोचने लिप्सुर्लब्धुमिच्छुर्विधुश्चकोरशिशुना प्रयोज्येन स्वीयां ज्योत्स्नामादयते भक्षयति । तत्रोत्प्रेक्षते—चान्द्रिकामृतपायनकृतसम्यक्तर्पणेनात्मीकृतात्स्ववशीकृतादितश्चकोरबालकात्सकाशान्मूलं स्वचन्द्रिकापायनहेतुभूतमेतदीयातिदीर्घनेत्रद्वयमुपजीवितुमादातुमिव। यद्वा—यत्किंचित्स्वस्य चन्द्रिकां पाययित्वा ततो नेत्रद्वयलक्ष्मीप्राप्त्या मूलं चन्द्रिकारूपधनं वर्धयितुमिव । अन्योऽप्युत्तमर्णोऽधमर्णस्य किंचिद्दत्त्वा तं वशीकृत्योत्तममिष्टं वस्तु ततो गृह्णाति । तथा—अयं चन्द्र आदृत आदरयुक्तः सन्नङ्के मध्ये, अथ च—उत्सङ्गे, च रङ्कुं करोति । उत्सङ्गधारणेन लालयतीत्यर्थः । किमर्थमित्याशङ्क्याह—तन्मूलभूतमतिविशालं तदीयनयनयुगलं परिस्रष्टुमिव स्वलग्नं कर्तुमिव । त्वन्मुखसाम्यनिमित्तरमणीयनेत्रद्वयसंपादनायायं चन्द्रश्चकोरहरिणौ वञ्चयतीत्यर्थः । चन्द्रादुत्कृष्टं त्वन्मुखमिति भावः । 'परिम्रष्टुम्' इति पाठे एतन्नेत्ररामणीयकप्राप्त्युपायं प्रष्टुमिवेत्यर्थः । शिशुः सुप्रतार्य इति सूचयितुं शिशुपदम् ।

आदयते, अदेर्निगरणार्थत्वेऽपि 'अदेः प्रतिषेधो वक्तव्यः' इति वक्तव्यात् 'निगरणचलनार्थेभ्यश्च १ । ३ । ८७' इति परस्मैपदाभावे, 'णिचश्च १ । ३ । ७४' इति तङ् । शिशुना, 'आदिखाद्योर्न' इत्यणौ कर्तुर्णौ कर्मत्वाभावः । द्राघीयसी, अतिशायने ईयसुनि, 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ६ । ४ । १५७' इति द्राघादेशः । लिप्सुः, विधित्सुरिति च, 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९' इति षष्ठीनिषेधः ॥ १४३ ॥

लावण्येन तवास्यमेव बहुना तत्पात्रमात्र-
स्पृशा–चन्द्रः प्रोञ्छनलब्धताऽर्धमलिनेना-
रम्भि शेषेण तु । निर्माय द्वयमेतदप्सु
विधिना पाणी खलु क्षालितौ–तल्लेशैरधु-
नाऽपि नीरनिलयैरम्भोजमारभ्यते ॥१४४॥

लावण्येनेति ॥ हे प्रिये, बहुना क्वचित्पात्रे संचितेनाखिलेन लावण्येन कृत्वा तवास्यमेवारम्भि निर्मितम् । चन्द्रस्तु पुनस्तस्य लावण्यस्याधारपात्रं स्पृशतीति स्पृक् तेन लावण्यस्थापनपात्रमात्रलग्नेन, अत एव प्रोञ्छनेन पात्रनिघर्षणेन कृत्वा या लब्धतोपार्जितत्वं तेनार्धं कियत्खण्डं मलिनं यस्य तेन किंचिन्मलिनेन शेषेण भवन्मुखनिर्माणावशिष्टेनांशेन कृत्वारम्भि निर्मितः। अत एव शबलमण्डलोऽयं शोभत इत्यर्थः। शेषेण तु निर्मित इति वा । विधिना एतत्त्वन्मुखमृगाङ्कलक्षणं द्वयं निर्माय स्रष्ट्राऽप्सु पाणी क्षालितौ खलु लावण्यलेपकृतजलक्षालनाविव । तस्मात्तस्य क्षालनरजोमिलितलावण्यलेपस्य लेशैरल्पैरंशैरेव कर्तृभिरधुनाऽपि नीरनिलयैर्जलस्थायिभिः सद्भिरम्भोजमारभ्यते निर्मीयते । कमलनिर्माणे ब्रह्मणः कोऽपि प्रयासो नेत्यर्थः । कमलाच्चन्द्रोऽधिकः, तस्मादपि त्वन्मुखं लावण्यसाकल्येन निर्मितत्वादधिकमिति भावः । अम्भोजम्, जात्येकत्वम् ॥ १४४ ॥

लावण्येन तवाखिलेन वदनं तत्पात्रमात्र-
स्पृशा-चन्द्रः प्रोञ्छनलब्धताऽर्धमलिनेनार-

१ इतः प्रभृति पद्यचतुष्टये शार्दूलविक्रीडितं वृत्तम्, उत्प्रेक्षाऽन्त्रार्थालङ्कारश्च ।

१अत्रोत्प्रेक्षा । २ अत्रोत्प्रेक्षयाऽऽननस्य चन्द्रापेक्षयाऽतिशयद्योतनाद् व्यतिरेको व्यज्यत इत्यलङ्कारादलङ्कारध्वनिः कविविवद्धप्रौढोक्तिसिद्धात्मा, कमलं तु न चन्द्रवदपि तस्याननस्यांशेऽपि साम्यं वोढुं क्षममिति कमलापेक्षयाऽपि आननस्य तस्यातिशयसम्भावनादर्थापत्तिमूलो व्यतिरेको व्यज्यते ।

म्भि शेषेण यः । तल्लेखाऽपि शिखामणिः सुषमयाऽहंकृत्य शम्भोरभू-दब्जं तस्य पदं यदस्पृशदतः पद्मं च सद्म श्रियाः ॥१४५॥

लावण्येनेति ॥ अखिलेन लावण्येन तव वदनमारम्भि । ततो भवद्वदनकामनीयकवर्णनाऽतिचिन्ताऽपि दूरे तिष्ठतु, अशक्यकरणत्वादित्यर्थः । उक्तरीत्या तत्पात्रमात्रस्पृशा प्रोञ्छनलब्धतार्धमलिनेन शेषेण तु यश्चन्द्रो विधिना निरमायि तस्य लेखाऽपि लावण्यपात्रमात्रस्थलावण्यनिर्मितस्य चन्द्रस्य षोडशांशरूपा कलाऽपि कलामात्रत्वादेव निष्कलङ्कत्वात् सुषमया परमया शोभया कृत्वा अहंकृत्य अस्यापेक्षयाऽहमेव रमणीयेति दर्पमवलम्ब्य शम्भोः शिखामणिः शिरोभूषणमभूच्छिवशिरोऽध्यरोहत्। अन्यदपि सदर्पमुत्तमशिरोऽधिरोहति । अब्जं कुमुदं कर्तृ यद्यस्मात्तस्य चन्द्रस्य पदं प्रतिबिम्बस्थानं जलमस्पृशत् । अतः श्रियः सद्माभूत् । चन्द्रकरस्पर्शादेव हि कुमुदं सश्रीकं भवति । पद्मं च श्रियः सद्माभूत् । जलस्य चन्द्रकिरणसंस्पर्शात् पद्मस्य च तत्रोत्पन्नत्वाद्वर्तमानत्वात्कुमुदसाहचर्याच्च पद्ममपि लक्ष्म्याः स्थानमभूत् । यद्वा—पद्मं चातः कुमुदाद्धेतोः श्रियः सद्माभूत् । अब्जत्वजातियोगात्कुमदाधारजलयोगाच्च कुमुदादेव परम्परया पद्मानां लक्ष्मीगृहत्वमभूदित्यर्थः । यद्वा—या तल्लेखा शंभोः शिखामणिरभूत्, तस्य शिखामणेश्चन्द्रस्य पदं स्थानं शिवमस्तकं पूजासमये यस्मात्कुमुदं पद्मं चास्पृशत्, अतस्तदुभयं श्रियः सद्माभूत् । चन्द्रसम्बद्धशिरःसम्बन्धादुभयं श्रीगृहमभूदित्यर्थः । यद्वा—तस्य शम्भोः पदं चरणं पूजावशाद्यस्मात्कुमुदं पद्मं चास्पृशत् तस्मादुभयं श्रीसद्माभूत् । तस्य लावण्यस्य स्थानं विधिहस्तलेपक्षालनजलं यस्मात्कुमुदं पद्मं चास्पृशत् । यद्वा पद्ममेवास्पृशत् । यतोऽब्जं तस्मात्कुमुदम्, पद्मं च पद्ममेव वा श्रीसद्माभूदिति वा । त्वन्मुखलावण्यलेशपरम्परासंस्पर्शप्राप्तशोभानि चन्द्रादीनीति त्वन्मुखलावण्यं वाङ्मनसगोचरो न भवतीति भावः । अर्थान्तरस्य स्पष्टत्वात् , पूर्वार्धस्य त्वर्थान्तरप्रतिपादनार्थमनुवादरूपत्वान्नायं श्लोकः पुनरुक्तः।अहमिति विभक्तिप्रतिरूपकमव्ययम् तस्य क्त्वान्तेन 'सह सुपा २।१।४' इति समासे क्त्वो ल्यप् ॥ १४५ ॥

सपीतेः सम्प्रीतेरजनि रजनीशः परिषदा परीतस्ताराणां दिनमणिमणिग्रावमणिकः । प्रिये पश्योत्प्रेक्षाकविभिरभिधानाय सुशकः सुधामभ्युद्धर्तुं धृतशशकनीलाश्मचषकः१४६

सपीतेरिति ॥ हे प्रिये, सम्प्रीतेस्ताराणामेवान्योऽन्यं सम्यग्या प्रीतिः सौहार्दं तस्माद्धेतोर्या सपीतिः सह पानं, सुहृदो हि सह पानं कुर्वन्ति तस्माद्धेतोः, यद्वा सहपानाद्धेतोर्या सम्यक् प्रीती रुच्यभिवृद्धिः, तस्माद्धेतोस्ताराणां परिषदा सङ्घेन परीतः समन्ताद्व्याप्तोऽयं रजनीशो दिनमणिमणिः सूर्यकान्तमणिस्तस्य ग्रावा शिला तया घटितोऽतिधवलः स्थूलः पेयद्रव्याधारभूतो मणिकोऽलिंजर एवाजनि संभूतः, विधिना तारापरिषदा वा व्यरचीति पश्य। कीदृशः—सादृश्येन वस्त्वन्तरसंभावनारूपायामुत्प्रेक्षायां विषये कविभिर्विशिष्टसंभावनाचतुरैः श्रीहर्षादिभिर्महाकविभिस्तारापरिषदैव सुधामभ्युद्धर्तुं धृतो यो मध्यस्थितः शशकः कलङ्कः स एव नीलाश्मा नीलमणिस्तेन घटितं चषकं पानपात्रं यस्मिन्नेवंभूत इवायमिति अभिधानाय वर्णनाय वर्णयितुं सुशकः सुखेन शक्यः । चन्द्रो धावल्याद्वृत्तत्वाच्च पीयूषपूर्णः सूर्यकान्तमणिक इव कलङ्कश्च नीलमणिघटितं चषकमिव दृश्यते पश्येत्यर्थः । यथा माणिकस्थोदकाद्युद्धरणाय मणिकमुखे चषकः स्थाप्यते तथ ताराभिः परस्परं मिलित्वा सुधापानं कर्तुं परिवेष्टितस्य सुधापूरितस्यास्यापि चन्द्रमणिकस्य मुखे सुधोद्धरणाय शशनामा नीलमणिचषको निक्षिप्त इत्युत्प्रेक्षितुं शक्यत इत्यर्थः । ' चषकोऽस्त्री पानपात्रम् ' इत्यमरः । सपीतेः, ' वोपसर्जनस्य ६।३।८२ ' इति, वा ' सहस्य स संज्ञायाम् ६।३।७८ ' इत्यत्र ' सहस्य सः ' इति योगविभागाद्वा सहस्य सः । कविभिः, खलर्थयोगात् 'न लोकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९' इति षष्ठ्या निषेधान्न षष्ठी सुशक इति खल् ॥ १४६ ॥

आस्यं शीतमयूखमण्डलगुणानाकृष्य ते निर्मितं शङ्के सुन्दरि शर्वरीपरिवृढस्तेनैष दोषाकरः । आदायेन्दुमृगादपीह निहिते पश्यामि सारं दृशौ त्वद्धक्रेसति वा विधौ धृतिमयं दध्यादनन्धः कुतः॥

---

१ अत्रापि पूर्ववदुत्प्रेक्षा, तया च व्यतिरेको ध्वन्यते, चन्द्रस्य पद्मस्य च शङ्करलक्ष्म्योः शिखामणिसद्मत्वाभ्यां-स्थितौ हेतूत्प्रेक्षणेनाननापेक्षया तयोस्साम्याविषये तिरस्कारद्योतनात् प्रतीपं व्यज्यत इति व्यतिरेकवत्प्रतीपमपि व्यज्यते।१अत्र शिखरिणी वृत्तम्,अनुप्रासः शब्दालङ्कारः, उत्प्रेक्षाऽर्थालङ्कारश्च ।

आस्यमिति ॥ हे सुन्दरि, विधिना शीतमयूखस्य मण्डलं बिम्बं तस्य वृत्तत्वाह्लादकत्वादिगुणानाकृष्य गृहीत्वा ते आस्यं यतो निर्मितं तेन गुणगणोत्कर्षेण हेतुना शर्वर्याः परिवृढः प्रभुश्चन्द्रो दोषाणामाकर उत्पत्तिस्थानं, न तु दोषा रात्रिस्तत्कारित्वाद्दोषाकर इत्यर्थ इत्यहं शङ्के। तथा—इन्दोर्मृगात्तस्य कायात्सारंदृशावादाय अतिश्रेष्ठे नेत्रे गृहीत्वा इह भवन्मुखे निहिते इत्यहं पश्यामि जाने । कुतो ज्ञातमित्यत आह–सुन्दरतरे त्वद्दृक्के जागरूके सति अनन्यश्चक्षुष्मानुभवतारतम्यविचारचतुरोऽयं मृगो विधौ चन्द्रे धृतिं स्थितिम्, अथ च—समीचीनाधारपरितोषं कुतो वा दध्याद्धारयेत्, अपि तु न कथंचित्, तस्मान्नेत्रोद्धरणादन्धत्वेनैव त्वन्मुखरामणीयकादर्शनादन्यत्र गन्तुमशक्तेश्च त्वन्मुखं त्यक्त्वात्रैवायं स्थित इत्यर्थः । त्वन्मुखं चन्द्रादधिकम्, नेत्रे च मृगनेत्राभ्यामधिके इति भावः । 'सारे' इति क्वचित्पाठः ॥ १४७ ॥

शुचिरुचिमुडुगणमगणनममुमति-
कलयसि कृशतनु न गगनतटमनु ।
प्रतिनिशशशितलविगलदमृतभृत-
रविरथहयचयखुरबिलकुलमिव १४८॥

शुचीति ॥ हे कृशतनु, त्वं गगनतटं नभःस्थलमनु लक्ष्यीकृत्य शुचिरुचिं श्वेतकान्ति, तथा—बहुत्वादगणनं संख्यातुमशक्यममुमङ्गुल्या निर्देश्यं प्रत्यक्षगम्यमुडुगणं प्रतिनिशं रात्रौ रात्रौ शशितलाच्चन्द्रशोभाभागाद्विगलता स्रवताऽमृतेन भृतं पूर्णं रविरथस्य हयचयस्तस्य खुराणां यानि बिलानि न्यासस्थानविवराणि तेषां कुलं वृन्दमिव नातिशयेन कलयसि, अपि तु तदिवातितरां जानीहीत्यर्थः । प्रतिनिशं चन्द्राद्गलता धवलेनामृतेन पूर्णाः सूर्याश्वखुरगर्ता इव तारकाः शोभन्त इति भावः । गगनतटम्, कर्मप्रवचनीययोगाद्द्वितीया । प्रतिनिशम्, वीप्सायामव्ययीभावः । सर्वलघुः ॥ १४८ ॥

उपनतमुडुपुष्पजातमास्ते
भवतु जनः परिचारकस्तवायम् ।
तिलतिलकितपर्पटाभमिन्दुं
वितर निवेद्यमुपास्स्व पञ्चबाणम् १४९

उपनतमिति ॥ हे प्रिये, 'रक्तो भौमः शनिः कृष्णो गुरुः पीतः सितः कविः' इत्यादिज्योतिःशास्त्रादिप्रामाण्यान्नानावर्णाकृतीन्युडूनि नक्षत्राण्येव पुष्पजातमुपनतमुपसंपन्नमास्ते अयं मल्लक्षणो जनः प्रारब्धकामदेवपूजायास्तव परिचारकश्चन्दनाद्युपचारोपनायकः, अथ च—संभोगकारी भवतु । त्वं तिलैः संजाततिलकः तिलैरेव तिलकवान्कृतो वा यः पर्पटः शालितण्डुलपिष्टरचितश्चिपिटस्तिलसंकुलीसंज्ञ उपदंशविशेषस्तद्वदाभा यस्य तत्तुल्यं सकलङ्कमध्यत्वाद्विशिष्टपर्पटसदृशमिन्दुमेव निवेद्यं कामाय वितर एवं पञ्चबाणं कामदेवमुपास्स्व पूजय । अन्योऽपि देवपूजकः पुष्पादिसामग्र्या देवं पूजयति, कश्चित्परिचारकोऽपि तस्य भवति । एवमत्रापि। सर्वाणि नक्षत्राण्युदितानि, कामोद्दीपकश्चन्द्रोऽप्युदितः, सुरतान्तरायकारी निषिद्धः संध्यासमयोऽतिक्रान्तः, तस्मात्काममुपास्स्व, सुरतेच्छुरस्मीति भावः । पञ्चबाणमित्यनेन कामस्यातिपीडाकारित्वं सूच्यते । 'जातिर्जातं च सामान्यम्' इत्यभिधानाज्जातशब्दः सामान्यवाची पुष्पमात्रे पर्यवस्यति । तिलकितेति तारकादिः, मतुबन्तात् 'तत्करोति तदाचष्टे' इति ण्यन्तान्निष्ठा वा ॥ १४९ ॥

स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भवश्वभ्रालीपतयालुदीधितिसुधासारस्तुषारद्युतिः । पुष्पेष्वासनतत्प्रियापरिणयानन्दाभिषेकोत्सवे–देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ १५० ॥

इदानीं काव्यसमाप्तिं चिकीर्षुः श्रीहर्षो नायकमुखेनाशिषमाशास्ते—

स्वर्भानुरिति ॥ हे प्रिये, देवः प्रकाशमानस्तुषारद्युतिर्हिमकरः, अथ च–हिमकर एव देवः, वर्णनां पूजां च कुर्वतां नोऽस्मदादीनाम्, आवयोर्वा तुष्ट्ये परमानन्दायास्तु । किं भूतः—स्वर्भानो राहोः प्रतिवारं पौनःपुन्येन यत्पारणं चन्द्रस्यैव गिलनं तेन तत्र वा मिलन् संलग्नो यो दन्तौघस्तद्रूपं यन्त्रं छिद्रकरणसाधनं तस्मा-

---

१अत्र शार्दूलविक्रीडितं वृत्तम्। अतिशयोक्त्यनुप्राणितोत्प्रेक्षाऽर्थालङ्कारः। २ अत्र अचलधृतिर्नाम छन्दः, 'द्विकगुणितवसुलघुरचलधृतिरिति' इति तल्लक्षणात् । अत्रोत्प्रेक्षाऽर्थालङ्कारः' अनुप्रासश्च शब्दालङ्कारः।

१ अत्र पुष्पिताग्रा छन्दः। पञ्चबाणस्योपास्यत्वसमर्थनायोडुप्रभृतेः पुष्पादित्वेन रूपणाद्रूपकम्।

दुद्भवो यस्याः सा श्वभ्राली दन्तदशनकृतविवरपरम्परा तया तस्याः सकाशाद्वा पतयालुः पतनशीला दीधितिसुधा किरणामृतं तद्रूपः, दीधितिसुधाया वा सारः श्रेष्ठभागो यस्य, दीधितिसुधाया आसारो धारासंपातो दीधितिसुधारूपो वा आसारो यस्य सः । अत एव—पुष्पमेवेष्वासनं धनुर्यस्य तस्य कामस्य तत्प्रियाया रत्याश्चानयोर्यः परिणयो विवाहो लक्षणया परस्परसंमेलनं तद्रूपो य आनन्दः संतोषस्तत्संबन्धिनि 'समुद्रज्येष्ठा–' इत्यादि श्रौतेऽभिषेकाख्ये उत्सवे महाभिषेकार्थं सहस्रसंख्या धारा लोहशलाकानिर्मितजलप्रवाहमार्गा यस्य स तादृशो यः कलशस्तस्य श्रीः प्राप्ता सहस्रच्छिद्रगलज्जलधारकलशस्येव श्रीः शोभा येन सः । महोत्सवे हि सहस्रधारेण सुवर्णकलशेन महाभिषेकः क्रियते । तथा च राहुदन्तकृतच्छिद्रपरम्परागलदमृतधारश्चन्द्रो गलज्जलधारसहस्रच्छिद्रसुवर्णकलश इव शोभमानः पूर्वोक्तवर्णनयोक्तविधत्वत्कृतपूजया च सुरतप्रवृत्तयोरावयोरुद्दीपकतया परमानन्दं कुर्यादिति भावः । एतेन तत्समयोचितरतिकामविवाहोत्सवाभिधानेन 'चन्द्रोऽस्तु नस्तुष्टये' इत्यनेन च विलासिना नलेन स्वनिर्वर्त्यतृतीयपुरुषार्थपयोधिपीयूषरसास्वादनलालसाभिव्यज्यते । 'सुधाधार–' इत्यपि पाठे—दीधितिसुधाया धारा यस्य सुधाया आधार इति वा । आनन्दपदेन 'तुष्टयेऽस्तु' इत्याशिषा च ग्रन्थसमाप्तिं द्योतयति । महाभारतादौ वर्णितस्याप्युत्तरनलचरित्रस्य नीरसत्वान्नायकानुदयवर्णनेन रसभङ्गसद्भावाच्च काव्यस्य च सहृदयाह्लादनफलत्वाच्चान्नोत्तरचरित्रं श्रीहर्षेण न वर्णितमित्यादि ज्ञातव्यम् । न इति पक्षे 'अस्मदो द्वयोश्च ।१।२।५९ इति द्वित्वेऽपि बहुवचनम् ॥ १५० ॥

**श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । द्वाविंशो नवसाहसाङ्कचरिते चम्पूकृतोऽयं महाकाव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १५१ ॥**

श्रीहर्षमिति ॥ द्वाविंशतेः पूरणः सर्गो गतः समाप्तिं प्राप । किंभूतस्य श्रीहर्षस्य—नवो यः साहसाङ्को नाम राजा तस्य चरिते विषये चम्पूं गद्यपद्यमयीं कथां करोतीति कृत् तस्य निर्मितवतः । सोऽपि ग्रन्थो येन कृत इति सूच्यते । 'नृपसाहसाङ्क–' इति पाठे—नृपश्चासौ साहसाङ्कश्च तस्य गौडेन्द्रस्य चरिते विषये चम्पूकृतः भोजराजस्य विक्रमार्कस्य वेति केचित् । द्वाविंश इति पूरणे डटि 'ति विंशतेर्डिति ६।४।१४२' इति तिलोपः ॥ १५१ ॥

**यथा यूनस्तद्वत्परमरमणीयाऽपि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते । मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः किमस्या नाम स्यादरसपुरुषानादरभरैः ॥**

यथेति ॥ यथा परमरमणीयापि रमणी यूनस्तरुणस्य कामिनोऽन्तःकरणहरणं कुरुते, तद्वत्तथा कुमाराणां बालिशानां क्षीरलाभमात्रेण परमपुरुषार्थप्राप्तिमभिमन्यमानानामननुभूतकामसुखानां चित्तं स्ववशं कैव कुरुते, अपि तु—न कापि । तथेयं काव्यरचनारूपा परमरमणीया मदुक्तिरपि श्रवणमननादिवशात्सुधीभूयामृतत्वं प्राप्य सुधियः सकलदर्शनरहस्यवेदिनोऽतिसरसस्य पण्डितस्य चेतश्चेद्यदि मदयति आनन्दयति, तर्ह्यस्याः सुधियाऽत्यादृताया मदुक्ते रसानां नीरसानां सर्वथैवासंस्पृष्टरसशब्दार्थानामपि चलदुपलप्रायाणामतृणादापुच्छपशूनामनादरभरैस्तत्कृतावज्ञासमूहैः किं नाम स्यात्, अपि तु न किंचिदप्यस्यास्तैरपकर्तुं शक्यते । सुधीभिरादृते सति नीरसैरकृते कृते वाप्यादरे न किंचिदित्यर्थः । सुधीभिरादृतत्वात्सकलगुणपूर्णातिसरसेयं मदुक्तिरिति भावः । मदुक्तेः सुधारूपत्वाभावात्क्षोदानन्तरं च सरसत्वप्रतीतेः सुधात्वात्सुधीभूयेति च्विः । सुधिय इति जात्यभिप्रायेण । एकेनापि सुधियादरे कृते महद्गौरवम्, बहुभिरप्यशैरनादरेषु कृतेष्वपि न किंचिल्लाघवमित्यभिप्रायेण वा । यून इति प्रतियोगिन एकवचनान्तत्वाच्चैकवचनम् । कवेः स्वग्रन्थमुद्दिश्येयमुक्तिः ॥ १ ॥

**दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं—तुलयतु मिथस्तामापातःस्फुरद्ध-**

१ अत्राग्रिमे च पद्ये शार्दूलविक्रीडितं वृत्तम् । अनुप्रासः शब्दालङ्कारः, उत्प्रेक्षोपमारूपकाणां साङ्कर्यम् ।

१ अत्र शिखरिणी छन्दः । अनुप्रासः शब्दालङ्कारः, उपमाऽर्थालङ्कारश्च ।

निडम्बराम् । स परमपरः क्षीरोदन्वान्यदीयमुदीयते—मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम् ॥ २ ॥

कविरर्थान्तरोक्त्या स्वीयामुक्तिं वर्णयति—

दिशीति ॥ गिरिग्रावाणोऽद्रिपाषाणा दिशि दिशि स्वां निजां सरस्वतीं नदीमन्तर्गतजलप्रस्रवणं वमन्तु मुञ्चन्तु । आपातः सामस्त्येन पतनं स्फुरन्प्रकाशमानो ध्वनिडम्बरः शब्दाडम्बरो यस्यां तां च नदीं मिथस्तुलयतु मिथोऽन्यनद्या समीकरोतु । अविसर्गान्तपाठे—आपातेन समन्तादूर्ध्वदेशादधःपतनेन प्रकाशमानः शब्दाडम्बरो यस्यां तामन्यनद्या समं समीकरोतु । जन इत्यर्थः । अथ च—आपाते प्रथमारम्भ एव स्फुरत्प्रपातघोषां तां जनो मिथस्तुलयतु । उभयव्याख्यानेऽपि परिणामे तु न नदी न च तस्याः शब्दाडम्बरश्चिरंतन इत्यर्थः। स क्षीरोदन्वान् परं केवलम्, अपरः न विद्यते पर उत्कृष्टो यस्मादत्युत्कृष्टः, अथ च—अन्य एव । यतो यस्य क्षीरोदस्येदं यदीयममृतमेतादृशमुदीयत उत्पद्यते । कीदृशम्—मथितुर्देवादेः खेदच्छेदि मथनजनितक्लेशापहम् । तथा—प्रमोदनं नितरामानन्ददायि । तथा—ओदनं भक्तमास्वाद्यं सिद्धान्नरूपम् । अथ च—एवंभूतं परमुत्कृष्टममृतं यदीयमुदीयते स क्षीरोदन्वानपरः परोऽन्यो नास्ति किं त्वेक एव । अथ च—प्रतिदिशं सर्वदेशेषु गिरिं वाण्यां विषये पाषाणतुल्या जडा अन्ये कवयः स्वीयां वाणीमुद्गिरन्तु । आपातेन प्रतिभामात्रेण स्फुरन्ध्वन्याख्यकाव्यविशेषस्याडम्बरो यस्यां, प्रथमारम्भ एव स्फुरन् शब्दाडम्बरोऽनुप्रासो यत्र तां वा, वाणीमन्योन्यं जनः समीकरोतु यस्य कवेरुक्तिरस्यैव, अस्य च तस्यैव इत्येवं तुलयतु । 'आपातः' इति विसर्जनीयान्तपाठे—आपातःप्रतिभासस्तां तुलयत्वित्यर्थः। एवंविधं परं काव्यामृतं यदीयमुत्पद्यते स क्षीरसमुद्रतुल्यः श्रीहर्षकविरपरो नास्ति, किं त्वेक एव । अन्ये कवयः पर्वतग्रावतुल्याः, अहं श्रीहर्षस्तु क्षीरसमुद्रतुल्य इत्यर्थः । यथा क्षीरसागरो नीरार्थिनोऽपि तीरमात्रस्थान्क्षीरेण तर्पयति । लक्ष्मीकौस्तुभामृतादिभिः परमानन्ददायिभिः कृतार्थयति, तथा मदीयकाव्यविचारकस्यैव खेदच्छेदि प्रमोदनं वचनामृतमुत्पद्यते, नान्यकाव्यविचारकस्येति, अन्ये ग्रावतुल्याः क्षीरोदतुल्यश्चाहमिति भावः ॥ २ ॥

ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया—प्राज्ञम्मन्यमना हठेन पठिती मास्मिन्खलः खेलतु । श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादयत्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ॥ ३ ॥

इदानीं प्रसादरूपमुख्यगुणाभावादतिदुर्बोधत्वादकाव्यमिति ये वदन्ति, तच्छङ्कामपनुदन् खलदर्पदलनार्थं गुरुसंप्रदायेन विना दुर्बोधमित्यतिगाम्भीर्यप्रतिपादनार्थं च बुद्धिपूर्वमेव मयेदं काव्यं तत्र तत्र दुर्बोधं व्यरचीत्याह—

ग्रन्थेति [१]। आत्मानं प्राज्ञं मन्यन्ते प्राज्ञंमन्यं मनो स्वरूपं यस्य विधोऽस्मिन्काव्ये हठेन स्वीयप्रज्ञाबलेन पठितमस्यास्तीति पठिती इदंकाव्यस्य पाठकः खलो मा खेलतु 'किमत्रास्ति, अश्रुतमेव व्याकर्तुं शक्यते' इत्यवज्ञापूर्वां दर्पाभिव्यक्तिं मा कार्षीदित्येवमर्थमिह काव्ये क्वचित्क्वचिदपि तत्र तत्र स्थले मया प्रयत्नाद् बुद्धिपूर्वं ग्रन्थग्रन्थिर्ग्रथ्यमानशब्दार्थकुटिलिका न्यासि विन्यस्ता । खलमुखभङ्गार्थं बुद्धिपूर्वमेवेदं काव्यं मया दुर्बोधं व्यरचि न तु प्रसन्नकाव्यकरणाशक्त्येत्यर्थः । क्वचित्क्वचिदपीत्यनेन तत्र तत्र प्रसन्नताप्यस्तीति न काव्यत्वहानिरिति सूच्यते । सज्जनस्य तु ग्रन्थविवेचनोपायमाह—श्रद्धेति । श्रद्धया गुरौ दैवतैकबुद्ध्या आराध्येन पूजितेन गुरुणा पूर्वमश्लथा अपि श्लथाः कृता व्याख्यया सुबोधाः कृता दृढा स्वरूपतो दुर्बोधा ग्रन्थयो यस्य स गुरुसंप्रदायावगतार्थः, अत एव दर्पराहित्यात्सज्जनः साधुरेतत्काव्यस्य रसोर्मिरमृतलहरी तस्यां मज्जनमवस्नानं समासादयतु प्राप्नोतु । गुरुपरम्परया विनैकस्यापि पद्यस्यार्थो बोद्धुं न शक्यते, तस्माद् गुरुपरम्पराया एवाध्येयमिदं काव्यमित्यर्थः । यश्चेदं गुरुपरम्पराया अधीते स सततं सुखी भवत्विति महाकविस्तस्मा आशिषं ददाति । अस्मिन्पठिती, 'क्तस्येन्विषयस्य कर्मण्युप-

१ अत्र हरिणी छन्दः । उपमानान्तरनिराकरणात् प्रतीपम् ।

सङ्ख्यानम्' इति कर्मणि सप्तमी । आराद्धेति राधेरनुदात्तत्वादिडभावः ॥ ३ ॥

**ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा-द्यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् । यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः—श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥ ४ ॥**

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते—

ताम्बूलेति॥यः कान्यकुब्जेश्वरात्सकाशात्सकलपण्डिताधिक्यव्यञ्जनं ताम्बूलद्वयं विद्वद्योग्यमासनं च लभते। न केवलं राजपूज्य एव, किंतु—यः समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रामोदार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षात्कुरुते । न परं पूर्वोक्तगुणविशिष्टो ब्रह्मविदेव, किंतु—यदीयं काव्यं मधुवर्षि अतिसरसत्वादमृतवर्षि । न परं पूर्वविशेषणविशिष्टोऽतिसरसो महाकाविरेव, किंतु—तर्कशास्त्रेष्वपि यस्योक्तयः धर्षिताः पराभूताः परे प्रतिवादिनो याभिस्ताद्दश्यः।तस्य विद्वच्चक्रचूडामणेः श्रीहर्षकवेरियं काव्यरचनारूपा कृतिः कृतिनां सुधियां मुदे आनन्दायाभ्युदीयात्, कृतिनामानन्दं कुर्वती सत्याकल्पमतिवृद्धिं प्राप्नुयादित्याशीः । सर्वत्र यच्छब्दनिर्वाहो गुण एव । अभ्युदीयादिति 'ई गतौ' इत्यस्य रूपम् ॥ ४ ॥

सन्तः सन्तु परप्रयोजनकृतः कल्पद्रुमन्तः सदा
स्वस्मिन्नेव पथि प्रवर्तनपराः सत्कीर्तयश्चापरे ।
अन्ये निस्पृहणाः श्रितश्रुतिपथा दीव्यन्तु भव्याशयाः
काकन्तः कलहप्रियाः खलजना जायन्तु जीवन्तु वा॥

वासनामस्य राम स्य किंकरस्य जगत्पते ।
नो चेत्पूरय कल्पेशकल्पस्य तव किंकरः ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपाण्डितात्मजनारायणकृते नैषधीयप्रकाशे द्वाविंशः सर्गः समाप्तः ॥

समाप्तश्चायं ग्रन्थः ॥

शुभम्.

---

१ अत्रग्रिमे च पद्ये शार्दूलविक्रीडितं वृत्तम् ।अनुमासः शब्दालङ्कारः, काव्यस्य रसनदीत्वं व्यङ्ग्यम् ।

१ अत्र ताम्बूलादिलाभोक्त्या स्वस्य राजमान्यत्वं ब्रह्मसाक्षात्कर्तृत्वोक्त्या जितमदनादित्वं धर्षितपरतर्कत्वोक्त्या ऽसमपाण्डित्यं च काव्यस्य मधुवर्षित्वोक्त्या चन्द्रोपमत्वं च प्रत्यायितम्। इति श्रीशिवदत्तकविरत्नविरचिता नैषधीयचरितस्यालङ्कारादिसमीक्षिका विवृतिः समाप्ता इति शम् ।

